(तत्त्वप्रदीपिका)

आञस्येनैकमप्यर्थं लेशतो वक्तुमुत्सहे ।
सहस्रार्थस्य भाष्यस्य प्रसन्नास्सन्तु सद्गुणाः ।। २५ ।।

नारायणं गुणैस्सर्वैरुदीर्णं दोषवर्जितम् । ज्ञेयं गम्यं गुरूंश्चापि नत्वा सूत्रार्थ उच्यते ।। इत्यनेन श्लोकेनेष्टदेवतागुरुनमस्कारं करोति । मङ्गलाचरणार्थं, शिष्टाचारपरिपालनायाविघ्नेन ग्रन्थपरिसमाप्त्यै, देवतागुरुभक्त्योर्विद्यान्तरङ्गत्वख्यापनाय च वस्तुनिर्देशं करोति । अनेन चाधिकारिविषयप्रयोजन-सम्बन्धाञ्छास्त्रस्यारम्भ एवापेक्षितान्दर्शयति । अधिकारस्य साधनान्तर्भूतत्वात् 'अध्ययनमात्रवत' इत्यादिना साधनाध्याये प्रतिपादितोऽधिकार्यत्राप्यथशब्दाक्षिप्त एव भाष्यकारेण 'नारायणं नत्वा' इति सूचितः । अध्ययनवान्भक्तिमांश्चेति नमस्कारस्य भक्तिपूर्वकत्वात् । भक्तेश्च विष्णुनिष्ठाया अध्ययनवत एव प्रायेण सम्भवात् । नारायणो विषयः । नारायणप्राप्तिरूपो निर्दुःखानन्दलक्षणो मोक्षः प्रयोजनमुक्तं 'गम्य'मिति । सम्बन्धो दातृदेयलक्षणादिकः ।

तद्भावमोक्षपक्षे दातृदेयग्रहीत्रभावान्न सम्बन्धः सम्भवी । प्रतिपाद्यप्रतिपादकलक्षणः सम्बन्ध इति चेन्न । अविषयत्वेनाप्रतिपाद्यत्वात् । ब्रह्मणोऽविषयत्वमनपनोद्यैव प्रतिपादयति शास्त्रमिति च विरुद्धम् । वन्ध्यात्वमनपनोद्यैव मातुर्जातः पुत्र इतिवत् । न चाविषयस्य लक्ष्यत्वम् । वाच्यस्यैव लक्ष्यत्वादिति वक्ष्यत्याचार्यः । न च शारीरः शास्त्रस्य विषयः । प्रमाणान्तरसिद्धत्वाद्धेयत्वाच्च । शारीरत्वमेव हेयं न तद्गतचैतन्यमिति चेन्न तद्गतत्वस्यापि हेयत्वात् । चैतन्यं त्वविषय इत्युक्तम् । ''आत्मैकत्वविद्याप्रतिपत्तय'' इति तदुक्तत्वादैक्यं शास्त्रस्य विषय इति चेत्तदप्यसारम् । जीवब्रह्मैक्यस्यानिरूप्यत्वात् । तत्किं तद्वतो भिन्नमुताभिन्नम् । भिन्नं चेत्सत्यं मिथ्या वा । सत्यत्वेऽद्वैतहानिः । मिथ्यात्वे भेदस्य सत्यता स्यात् । अभिन्नं चेज्जीवत्वे ब्रह्मत्वेऽपि स्वयंप्रकाशत्वेन नित्यसिद्धमिति नोपदेष्टव्यम् । अज्ञानं तु तत्पक्षे स्वयंप्रकाशस्य कस्मिंश्च न सम्भवतीति भावः । अत एवाधिकारी दूरतो निरस्तः । ब्रह्मात्मैक्यापरोक्षलक्षणं मोक्षफलमपि प्रत्याख्यातम् । ऐक्याभावादज्ञानाभावाच्च । एवमधिकारिविषयप्रयोजनाद्यभावान्न तत्पक्षः श्रेयोऽर्थिभिः श्लाघनीयः ।

नारायणस्य सर्वोत्तमतया सर्वश्रुतिवाच्यत्वाद्भिन्नानां च जीवानां स्वयंप्रकाशत्वेऽपि सविशेषत्वेन तत्राज्ञानसम्भवात्स्वयोग्यतानुरोधेनाधिकारादिसम्भवादत्रायमेव पक्षः श्रेयान् । समन्वयाविरोधसाधनफलानि चाध्यायचतुष्टयेन प्रतिपादनीयान्यनेन श्लोकेन सूचयति । श्रुतीनां ब्रह्मवाचकत्वेन सम्यगन्वयः समन्वयः । स च वाक्यपदादीनां प्रत्येकमस्ति । तेन चानन्तगुणं ब्रह्म प्रतिपाद्यते । तत्र च प्रमाणाविरोधं साधयति द्वितीयाध्याये । एवं वस्तुनिर्णयार्थमध्यायद्वयम् । तत्र पुरुषेण किं कर्तव्यमित्याकाङ्क्षायां दृढनिर्णीतपूर्णगुणब्रह्मप्राप्तिसाधनमधिकारिणो विधीयते तृतीये । चतुर्थे तु तद्दर्शनात्तस्य संसारमोक्ष

(तत्त्वप्रदीपिका)

आनन्दभोगश्च फलम् । तत्र सर्वगुणसम्पन्नो नारायणो निर्दोषस्समाधिकरहितोऽत एवावश्यं द्रष्टव्यः । दृष्ट्वा च तं परमसुखं विन्दते पुरुष इत्यभिप्रायः । नारायणपदेन चैतत्समन्वयाद्यर्थचतुष्टयं विशेषणपदचतुष्टयोपदिष्टमभिप्रैति । अराणां दोषाणां विरुद्धत्वान्नारा गुणाः, तेषामयनत्वात्तैः सहेयत इति वा नारायणः । अतो नारायणशब्देन गुणोदीर्णत्वं वक्ति । उदीर्ण उदार उत्कृष्टः पूर्ण इत्यर्थः । अराणामयनं न भवतीति योजनायां दोषवर्जितत्वम् । नारं चेतनविशेषसम्बन्धित्वाज्ज्ञानं, तेन नारेण ईयत इति च नारायणत्वम् । ज्ञानविषयत्वमेव च ज्ञेयत्वम् । न रीयन्त इति नरा मुक्ताः, तेषां समुदायो नारः, तेनेयत इति च नारायणत्वम् । तदेव गम्यत्वं च । एवम्भूतः समुद्रशायी नारायणः । अथ वासुदेवाख्यो गुणोदीर्णशब्दोक्तः सर्ववसनोत्कर्षक्रीडाज्ञानादिगुणैरुच्चत्वात् । सम्यग्दोषकर्षणात्सङ्कर्षणो दोषवर्जित इत्युक्तः । प्रकृष्टद्युतिमेयत्वात्प्रद्युम्नो ज्ञेयः । ज्ञानिनः प्रति प्राप्तिनिरोधरहितत्वादनिरुद्धो गम्यशब्दार्थः । एवं पञ्चमूर्तित्वमपि सूचयति । तथा प्रतिपिपादयिषितत्वादस्मिञ्छास्त्रे । तमेतं गुरूंश्च ज्ञानाश्रयत्वेन नारायणशब्दवाच्यत्वान्नत्वा सूत्रार्थ उच्यते । बहुवचनं बहुमानार्थम् । चशब्दः पृथङ्नमस्कारार्थः । 'अपि'शब्दात्सूत्रकारमपि । यद्यपि शास्त्रप्रतिपाद्या परदेवतैव भाष्यकारस्य गुरुः, स एव सूत्रकर्ताऽपि, तथाऽपि देवताभक्त्या, स्वगुरुभक्त्या, शास्त्रगुरुभक्त्या च तमेव नारायणं पृथङ्नमस्करोतीति गम्यते । नारायणपदेनैव गुरुनाम चोवाच । आ समन्ताद्विशिष्टः स एव हि व्यासोऽपि । नराणामुत्तमगतित्वेन विशिष्टत्वात् । नारायणस्य नमस्कारोऽप्यष्टाङ्गः कृतो नत्वेत्युच्यते, तथा कार्यत्वज्ञापनार्थम् । तं नत्वा स एव सूत्रार्थ उच्यत इत्यर्थः । अयं हि तावत्प्रणवार्थः । अकारोऽन्याभावविरुद्धवाची कारणत्वेन सर्वजगतोऽन्यत्वं, सर्वदोषाभावं सर्वगुणसम्पन्नत्वेन जगद्विरुद्धलक्षणत्वं च ब्रह्मणो वदति । तथाच भगवती श्रुतिः "अः इति ब्रह्म" इति सर्वतो विलक्षणमकारार्थं ब्रह्म ब्रवीति । उकारमकाराभ्यामुत्कृष्टतया मितत्वमुच्यते । व्याहृतीनामपि भूमत्वाद्भवन-शीलत्वेन वर्तमानत्वात्सुत्वेन वृत्तेः स्वातन्त्र्याच्चायमेव वाच्यः । त्रिपदया च गायत्र्या त्रिवर्गात्मकेन पुरुषसूक्तेन च । सोऽयं विष्णुर्वेदैरेक एवोद्गीतस्तदर्थनिर्णायकैस्सूत्रैः प्रतिपाद्यते । अतः सूत्रार्थ उच्यत इति समस्तवेदोपबृंहकेतिहासपुराणादिशब्दराश्यर्थभूतः सूत्रार्थो भाष्यत इति प्रतिज्ञा क्रियते ।

## श्रीजयतीर्थविरचिता तत्त्वप्रकाशिका

श्री गुरुभ्यो नमः । श्रीमदानन्दतीर्थभगवत्पादाचार्येभ्यो नमः ।। हरिः ॐ ।

शुद्धानन्दोरुसंविद्द्युतिबलबहुलौदार्यवीर्यादिदेहं
चिन्तासन्तापलेपोद्भवमृतिमुखराशेषदोषातिदूरम् ।
सद्भिर्वैराग्यभक्तिश्रुतिमतिनियतध्यानजज्ञानयोगाद्
गम्यं वन्दे मुकुन्दाभिधममलमलं ब्रह्म वेदान्तवेद्यम् ।। १ ।।

(तत्त्वप्रकाशिका)

याश्वामन्दरलोलितायत उदेद्धियेन्दिरा निर्जरै-
र्जातो भारतपारिजातसुतरुः सद्ब्रह्मसूत्रामृतम् ।
आसीत्तन्त्रपुराणसन्मणिगणो जातः शुकेन्दुः सदा
सोऽयं व्याससुधानिधिर्भवतु मे भूत्यै सतां भूतिदः ।। २ ।।

स्वान्ताध्वान्तनिकृन्तने जितमहावैकर्तनांशुव्रजं
निर्दोषं जितचन्द्रचन्द्रिकमलं तापत्रयोन्मूलने ।
गाम्भीर्ये जितसिन्धुराजममितं भाष्यं यदास्याम्बुजा-
दाविर्भूतममन्दबोधभगवत्पादान् प्रपद्येऽथ तान् ।। ३ ।।

श्रीमध्वसंसेवनलब्धशुद्धविद्यासुधाम्भोनिधयोऽमला ये ।
कृपालवः पद्मनाभतीर्थाः कृपालवः स्यान्मयि नित्यमेषाम् ।। ४ ।।

श्रीमद्रमारमणसद्गिरिपादसङ्गिव्याख्यानिनाददलिताखिलदुष्टदर्पम् ।
दुर्वादिवारणविदारणदक्षदीक्षमक्षोभ्यतीर्थमृगराजमहं नमामि ।। ५ ।।

अथ तत्कृपया ब्रह्मसूत्रभाष्यं यथामति ।
व्याकुर्वे श्रीमदानन्दतीर्थार्यमुखनिःसृतम् ।। ६ ।।

गङ्गासङ्गेन नैर्मल्यं रथ्याद्भिर्लभ्यते यथा ।
वाचो विशुद्धिसिद्ध्यर्थं सङ्गम्यन्ते गुरोर्गिरः ।। ७ ।।

अथाविद्यापटलपिहितनयनैरन्यैरन्यथा व्याख्यातानि ब्रह्मसूत्राणि यथावद् व्याचिख्यासुर्भगवानाचार्यवर्यः प्रारिप्सितभाष्यस्य कैवल्याद्यखिलफलसाधनतादिसिद्ध्यर्थं निरन्तरायपरिसमाप्त्याद्यर्थं च नारायणनमस्कारं ग्रथयति ग्रन्थारम्भं च प्रतिजानीते ।। **नारायणमिति** ।। अत्र निरुपपदसूत्रशब्देन ब्रह्मसूत्रमुच्यते । तस्य मुख्यार्थाभिधायकत्वात् । तेषां च तादृशत्वात् । वक्ष्यमाणमेव सूत्रार्थं श्रोतृशेमुषीमनुकूलयिष्यन्नादौ प्रस्तावयितुं विशेषणचतुष्टयेनेष्टदेवतां विशिनष्टि । तथा हि आदिसूत्रे भगवतः प्रसत्त्या पुरुषार्थो भवतीति सूचितेऽधिकारिणः शङ्कोन्मिषति पुरुषान्तरेऽनुपलभ्यमानं पुरुषार्थप्रदत्वं तस्य चेत्कीदृशोऽसाविति । तां निवारयदाद्याध्यायस्यार्थो ।। **गुणैः सर्वैरुदीर्णमिति** ।। तत्र ह्यपर्यायानन्तशब्दानां महायोगवृत्त्या हरौ समन्वयसमर्थनद्वारा सर्वगुणोदीर्णतैव वर्ण्यते । स च युक्त्यादिभिरुक्तसमन्वये निरोधिते दोषवानपि स्यादित्याशङ्कां परिहरतो द्वितीयाध्यायस्यार्थो ।। **दोषवर्जितमिति** ।। तत्र युक्त्यादीनामाभासत्ववर्णनेन निर्दोषत्वस्यैव भाषितत्वात् । एवंविधस्य च प्रसादः कया विधया भविष्यतीत्याकाङ्क्षां पूरयतस्तृतीयस्यार्थो ।। **ज्ञेयमिति** ।। तत्र विरक्त्यादिभिस्तत्प्रसत्त्यर्थं तस्य ज्ञेयतायाः कथितत्वात् । प्रसन्नश्च कीदृशं पुमर्थं प्रयच्छतीत्याकाङ्क्षां पूरयतस्तुरीयस्यार्थो ।। **गम्यमिति** ।। तत्र ज्ञानिनो भगवत्प्राप्तिलक्षणमोक्षस्योदितत्वात् ।

(तत्त्वप्रकाशिका)

अथवा नैतन्नारायणपदं देवदत्तादिपदवत्साङ्केतिकं भवति किन्तु विशिष्टगुणानप्याचष्ट इत्याशयवान्पदचतुष्टयेन तन्निर्वक्ति । तथा हि । दोषारशब्दयोरभिन्नार्थत्वान्नञश्च विरुद्धार्थ-वाचित्वाद्दोषविरुद्धा गुणा नारास्तदाश्रयो नारायणः । नञोऽभावार्थत्वादराश्रयो न भवतीति वा नारायणः । नरसम्बन्धित्वान्न रीयतेऽनेनेति वा नारमणं येनेति वा निर्दोषवेदोत्पन्नत्वाद्वा नारं ज्ञानं विषयतया तदाश्रयत्वाच्च नारायणः । अरविधुरत्वादरतिरहितत्वात्क्षयरहितत्वाद्वा नारा मुक्तास्तदाश्रयो नारायणः । नगनाकादिशब्दवदयं शब्दो ज्ञातव्यः । अथ वा नारायणस्यैव नम्यत्वोपपादकमेतत् । यो हि वहुगुणो निर्दोषः शास्त्रज्ञेयोऽधीतशास्त्रगम्यः स हि वन्द्यो भवति । देवतानतिसमनन्तरं गुरूनपि नमति ।। गुरूंश्चेति ।। 'गुरोर्नाम न गृह्णीयाच्छिष्यो भार्या पतेरपि' इत्यतो न तन्नाम जग्राह । स्वस्य गुरुदेवताभेदेऽरुचिं सूचयत्यपिपदेन । यद्यपि गुरुर्न देवताभिन्नस्तथापि विशेषानुग्रहार्थं पृथङ्नतिरिति । अनेनैव शास्त्रस्याधिकारिविषयप्रयोजनसम्बन्धाश्च श्रोतृप्रवृत्त्यङ्गभूताः सूचिता ज्ञातव्याः । तत्स्मरणस्य महाफलहेतुत्वाच्च । तदुक्तम् । 'अधिकारं फलं चैव प्रतिपाद्यं च वस्तु यत् । स्मृत्वा प्रारभतो ग्रन्थं करोतीशो महत्फलम्' इति ।। नमस्काराधिकार्यादिग्रथनसूचने शिष्यशिक्षार्थम् । तथाहि । ज्ञेयत्वगम्यत्वयोर्ज्ञातृगन्तृसापेक्षत्वात्तद्योग्यस्तदिच्छुरेवाधिकारी सूचितः । नारायण एव विषयः । तज्ज्ञानगमने प्रयोजनम् । यथायोग्यं सम्बन्ध इति ।

## श्री वादिराजतीर्थविरचिता गुर्वर्थदीपिका

ॐ ।। नत्वा नारायणं व्यासं हयास्यं मध्वमादरात् ।
वाणीं गुरूंश्च सकलान् कुर्वे गुर्वर्थदीपिकाम् ।

नारायणं गुणैः सर्वैरुदीर्णमिति भाष्यकृतोक्तमङ्गलश्लोके भगवद्वाचकपदान्तरं विना नारायणपदस्यैवोपादानं ''सङ्क्षेपविस्तराभ्यां हि कथयन्ति मनीषिण'' इति वचनात् अरविरुद्धा गुणाः नाराः तेषामयनो नारायणः, अरायणो न भवतीति नारायणः, नराणां योग्यं ज्ञानं नारं विषयतया तदाश्रयत्वात् नारायणः न विद्यते अरं अरमणं येषां ते नारा मुक्ताः गम्यतया तदाश्रयत्वान्नारायणः इति सङ्क्षेपतश्चतुरध्यायार्थसङ्ग्रहार्थम्, उक्तविधया शास्त्रार्थस्य नारायणपदार्थस्य चैकविध्यात्स एव शास्त्रार्थ इति युक्तिसूचनार्थं च । दोषवर्जितपदार्थपर्यालोचनया दुःखाद्यसद्गुणाभावस्याप्यर्थतः प्राप्तेस्सद्गुणैरिति नोक्तम् । क्वचित्सदादिविशेषणोपादानं मन्दानामपि बोधार्थम् । उदीर्णपदमहिम्नैव गुणानामपि पूर्णत्वसिद्धेर्न गुणेषु पूर्णता पृथगुक्ता । मणिकनकादिधनपूर्णता हि मणिकनकादिधनानामपि प्रत्येकं वहुत्वे सत्येव स्यात् । दोषा वर्जिता येन स दोषवर्जितः । यद्यपि युक्ति समय श्रुति युक्तिसहितश्रुतिविरोधपरिहाराय

(गुर्वर्थदीपिका)

द्वितीयाध्यायस्य प्रवृत्तिः तथाऽपि युक्तिविरोधेन स्वातन्त्र्यसार्वज्ञ्यसर्वकर्तृत्वादिगुणनिरोधे कृते सति अस्वातन्त्र्यासर्वज्ञत्वाल्पज्ञत्वाल्पकर्तृत्वादिदोषाणामेव प्राप्तेस्तद्विरोधपरिहारस्यापि दोषवर्जितत्व एव तात्पर्यमिति भावो भाष्यकारस्य । निरीश्वरसाङ्ख्यचार्वाकादिसमयविरोधपरिहारेऽपि भगवतो रूपहान्याख्यदोषस्यैव परिहृतत्वेन दोषवर्जितत्व एव तात्पर्यम् । भगवतो जनन मरण निर्गुणत्व नीचैक्यादिदोषाभावप्रतिपादकश्रुतीनां परस्परं विरोधपरिहारे स्पष्टं दोषवर्जितत्व एव तात्पर्यमिति भावेन दोषवर्जितमित्येवोक्तम् । विस्तरस्त्वस्योत्तरत्र वक्ष्यते । ज्ञेयं गम्यमिति पदाभ्यां ज्ञेयत्वगम्यत्वयोरसहोक्त्या ज्ञानसाध्यवैकुण्ठादिस्थभगवत्प्राप्तिरूपगमनविशेषस्य तत्साधनीभूतापरोक्षज्ञानस्य च लाभात्सामान्यत एव तदुभयवचनम् । तर्हि कीदृशं ज्ञानं भगवद्गमनसाधनमित्याशङ्क्य तद्विषयविवेचनायाद्यं विशेषणद्वयम् ।

तथा प्रथमाध्याये पादचतुष्टयेऽपि यथायोग्यगुणपूर्तेरेवोक्तत्वादाद्यं विशेषणमपि प्रथमाध्यायपाद-चतुष्टयार्थसङ्ग्राहकम् । अत एव सर्वैरित्युक्तम् । द्वितीयाध्यायेऽप्यस्मदुक्तरीत्या पादचतुष्टयेऽप्यन्ततो दोषवर्जितत्वस्यैवोक्तत्वाद्द्वितीयं विशेषणमपि द्वितीयाध्यायपादचतुष्टयार्थसङ्ग्राहकम् । असारे संसारे वैराग्याय सारतया ज्ञेयं, भक्त्युत्पादनाय महामहिमतया ज्ञेयं, शास्त्राभ्यासध्यानरूपोपासनायां च विषयतया ज्ञेयं, अपरोक्षज्ञाने च साक्षाद्विषयतया ज्ञेयं चेति तृतीयं विशेषणमपि तृतीयाध्यायपादचतुष्टयार्थसङ्ग्राहकम् । प्रक्षीणसकलकर्मतया ब्रह्मनाड्योत्क्रमणे सत्यर्चिरादिमार्गेण गतस्य मौक्तभोगानुभवार्थं वैकुण्ठस्थो भगवान् गमनयोग्यो भवति नान्यथा । तेन योग्यतार्थकप्रत्ययबलाद्गम्यपदेनापि चतुर्थाध्यायपादचतुष्टयार्थस्सूचितः । फलाध्यायेऽपि ''सम्पद्याविहाय स्वेन शब्दा''दिति भोगादीनां मूलकारणतया भगवत्सम्पत्तेरेव सूत्रकृता मुख्यतः कथनाद्भाष्यकृताऽपि गम्यमित्येवोक्तम् । भोगेभ्योऽपि भगवदङ्गसङ्ग एव श्रद्धातिशयवता-मेकान्तिनां सङ्ग्रहार्थं च । एवं च विशेषणचतुष्टयमप्युक्तविधयाऽन्योन्यसङ्गतं तत्तदध्यायपादचतुष्टयार्थ-सङ्ग्राहकं चेति द्वेधाऽप्यतिकौशलं भाष्यकारस्य । बहुगुरुसद्भावे सर्वेषामपि नमनसूचनाय स्वगुरोरेकत्वेऽपि गुरूनिति बहुवचनम् । अत एव टीकाकारैर्बहुगुरुनमस्कारोऽपि कृतः । अन्यकृतसूत्रभाष्येषु सत्स्वपि मया सूत्रार्थ उच्यत इति वदता तेषामुत्सूत्रभाष्यता च सूचिता ।

टीकायां चाऽऽनन्दादेः शुद्धत्वं प्राकृतत्वादिदोषराहित्यम्, उरुत्वं पूर्णत्वं, बहुलत्वं बहुसङ्ख्यावत्त्वम् । गुणानामन्योन्यं भेदाभावादेकत्रोक्तमपि विशेषणं सर्वत्राप्यनुसन्धेयम् । इदं च भाष्ये प्रथमविशेषणोक्त-गुणबाहुल्यस्य शृङ्गग्राहकतया प्रदर्शनार्थम् । ''दोषा रागादयश्च ते'' इति कैश्चिद्रागादीनामेव दोषत्वोक्तेः दूष्यतेऽनेन पुरुष इति व्युत्पत्त्या दुःखादीनामपि दोषत्वाद्द्वितीयविशेषणोक्तभाष्यकाराभिमतदोषाणां

(गुर्वर्थदीपिका)

प्रपञ्चनसूचनाय चिन्तासन्तापेत्यादिकमुक्तम् । दोषाणामतिदूर इति दोषातिदूरवचनं दोषा वर्जिता येनेति समाससूचनेन भगवतस्स्वातन्त्र्यज्ञापनार्थम् । ज्ञेयमित्यत्रोक्तज्ञेयपदेनापरोक्षज्ञेयत्वमेवाभिप्रेत्य तत्कारणत्रयप्रतिपादकपादत्रयार्थस्पष्टीकरणाय सद्भिरित्यादिकमुक्तम् । भाष्यकृता तु कार्यस्योक्तौ कारण-मप्युक्तप्रायमेवेति न पृथगुक्तमिति भावष्टीकाकारस्य । मतिर्मननम् । योग उपायः । तृतीयचतुर्थाध्याययोः हेतुहेतुमद्भावरूपसङ्गतिसूचनार्थं ज्ञानयोगादिति निमित्तपञ्चमी । दोषदूरत्वं शुद्धस्यैव ब्रह्मणो न शबलस्येति शङ्कां वारयितुं परमपवित्रगङ्गाजनको भगवानेव शुद्धं ब्रह्म नान्यदिति भावेन अमलं ब्रह्मेत्युक्तम् । अपवित्रप्रकृत्याख्यमलरहितममलम् । तच्च सदेति सूचनाय अलमित्युक्तम् । इदं च प्राकृतभौतिक-देहयोगाख्यसंसारातिदूरतया जीवेभ्योऽप्यत्यन्तवैलक्षण्यज्ञापनार्थम् । मुक्तिदायकत्वाच्चास्यैव शुद्धत्वमिति भावेन मुकुन्दाभिधमित्युक्तम् । "लक्षणप्रमाणाभ्यां हि वस्तुसिद्धि"रित्यतो लक्षणान्युक्त्वा प्रमाणमपि सूचयितुं वेदान्तवेद्यमित्युक्तम् । वेदनं च मुख्यवृत्त्यैव न लक्षणयेति सूचनाय अभिधापदम् । गङ्गायां गङ्गात्ववन्मुक्तिदायकत्वरूपमुकुन्दत्वस्य भगवत्येव सत्त्वादभिधयैव मुकुन्दो न लक्षणया । इदं च "एष सर्वेश्वर एष सर्वज्ञ" इत्यादिश्रुत्युक्तसर्वेश्वरसर्वज्ञादिसकलवैदिकपदोपलक्षणम् । सर्वेश्वरत्व-सर्वज्ञत्वसर्वान्तर्यामित्वादितत्तत्पदार्थभूतधर्माणां भगवदेकनिष्ठत्वेन तत्तत्पदाभिधेयत्वस्यापि युक्तिबलादेव प्राप्तेः । किं बहुना "वेदैश्च सर्वैरहमेव वेद्य" इति सावधारणगीतोक्तेः महायोगवृत्त्या भगवानेव सकलवैदिकपदाभिधेय इत्यर्थस्यापि सिद्धेर्न कुत्रापि केष्वपि वैदिकपदेषु लक्षणा । गङ्गापदस्य तीरे लक्षणायां मुख्यार्थस्यान्यस्याऽऽवश्यकत्वदर्शनेन भगवतोऽपि वैदिकपदलक्ष्यत्वे मुख्यार्थस्यान्यस्यापेक्षितत्वेन "अहमेवे"त्यवधारणायोगादिति भावष्टीकाकारस्य । "नावेदविन्मनुते तं बृहन्त"मिति श्रुतेर्ज्ञेयत्वोक्त्या भाष्यकृताऽपि सूचितमेतत् । वन्द इत्यभिवादनस्तुत्यर्थकधातुग्रहणेन नत्वेति भाष्यपदोक्तप्रह्वीभाव-शब्दयोरप्यभिवादनस्तुतिरूपत्वं सूचितम् । एवं च टीकास्थनान्दीपद्यमेव मूलस्थनान्दीपद्यस्य टीकारूपमिति महत्कौशलं टीकाकारस्य ॥

द्वितीयपद्ये उदैदिति पदमहिम्ना इन्दिरासाम्येनेतरविद्यानां पृथगुक्तेश्च वेदविद्यैव विद्या । तन्त्रशब्देन मूलपञ्चरात्रतन्त्रात् व्यासेनोद्धृतब्रह्मतर्काख्यतन्त्रशास्त्रमुच्यते । तृतीयपद्येऽपि आविर्भूतपदेन श्रुतिस्मृति-प्रचुरतां भाष्यस्याभिप्रैति । अथाविद्यापटलपिहितनयनैरित्यत्राथेत्यस्य चार्वाकबौद्धतार्किककपिलसाङ्ख्याख्य-पञ्चमतप्रवृत्त्यनन्तरमित्यर्थः । अन्यैरेकविंशतिदुर्भाष्यकारैः । प्रारिप्सितभाष्यस्येत्यादेर्वाचनिक-परममङ्गलभगवन्नमस्कारोपबृंहितत्वात्स्वकृतभाष्यं पठतां कैवल्यादिफलं निर्विघ्नपरिसमाप्त्यादिफलं च भवति । निरन्तरायस्य स्वस्य तु भगवत्प्रीतिरेव फलमिति भावः । चेत्यादेरयमर्थः स परमात्मा

(गुर्वर्थदीपिका)

युक्त्यादिभिस्समन्वयनिरोधिनीभिर्यक्तिपादोक्तयुक्तिभिः समन्वयनिरोधिभिस्समयैः श्रुतिप्रामाण्यविघटनद्वारा समन्वयघातकैस्तृतीयपादोक्तैः श्रुतीनां मिथो विरोधैश्चतुर्थपादोक्तसयुक्तिकश्रुतिविरोधैश्च समन्वये प्रथमाध्यायोक्तश्रुतिसमन्वये निरोधिते सति दोषवान्स्यात् । अपिपदेन समन्वयसाध्यगुणनिरोधवानपि स्यादिति सूचितम् । तथा हि युक्तिपादे स्मृत्यधिकरणोक्तपाशुपतादिस्मृतिविरोधेन भगवाननीशत्व-पराधीनत्वादिदोषवान्स्यात् वेदप्रामाण्यविरोधित्वेनोक्तयुक्त्याऽप्रामाणिकत्वाख्यदोषवान्स्यात् उत्तराधिकरण-त्रयोक्ताकर्तृकत्वाचेतनकर्तृकत्वाचेतनकर्तृकत्वजीवकर्तृकत्वप्रतिपादकयुक्तिविरोधेन भगवानकिञ्चित्करत्वा-समर्थत्वादिदोषवान्स्यात् तदनन्तराधिकरणे च जीवैक्यप्रतिपादकयुक्त्या नीचत्वादिदोषवान्स्यात् तदुत्तराधिकरणत्रये च स्वतन्त्रसाधनान्तरसापेक्षत्वादियुक्त्या सृष्टेः प्रयोजनवत्वयुक्त्या कस्यचित्सुखदानेन कस्यचिद्दुःखदानेन च निरुपचरितस्वातन्त्र्याभावादपूर्णत्ववैषम्यनैर्घृण्यादिदोषवान् स्यात् । समयपादे च निरीश्वरसाङ्ख्यचार्वाकबौद्धजैनानामधिकरणचतुष्टयेनोक्तकुयुक्तिभिर्भगवान्स्वरूपेणैवात्यन्ताभावाख्य-दोषवान्स्यात् । तार्किकपाशुपतशाक्तानामधिकरणत्रयरीत्या अल्पगुणकत्वाप्रयोजककर्तृत्व-पराधीनत्वजगदकर्तृत्वाख्यदोषवान्स्यात् । तृतीयचतुर्थपादाधिकरणपूर्वपक्षप्रापकयुक्त्या वियन्मातरिश्वजीव-मुख्यप्राणाद्यकर्तृतया किञ्चित्कर्तृत्वाख्यदोषवान्स्यात् । ''असम्भवस्तु सतोऽनुपपत्ते''रित्या-द्यधिकरणोक्तकुयुक्त्यादिभिर्जननमरणादिदोषवान् स्यादिति भावः ।

न रीयतेऽनेनेत्यत्र धातोराङ्पूर्वकत्वमपि ज्ञेयम् । अन्यथा नरमिति स्यात् । न तु नारमिति । न अरमरमणं येनेत्यत्र ''रमु क्रीडाया''मिति धातोर्भावार्थे औणादिकडप्रत्यये कृते रं रमणं तन्न भवतीत्यरं अरमणम् । निर्दोषवेदोत्पन्नत्वादित्यत्र न विद्यते अरं दोषो यस्येति निर्दोषं यथार्थज्ञानमेव नारम् । निर्दोषवेदोत्पन्नत्वादिति तत्र हेतुकथनायोक्तमित्यर्थः । यद्यपि नञ्लोपरहितनगनाकादिशब्दगणसङ्ग्राहके न भ्राडिति सूत्रे नारशब्दो नास्ति । तथाऽप्याकृतिगणत्वान्नारशब्दोऽपि सङ्ग्राह्यः ।

## श्री रघूत्तमतीर्थविरचितः तत्त्वप्रकाशिकाभावबोधः

प्रणम्य कल्याणगुणं रमेशमगाधबोधं जययोगिवर्यम् ।
गुरोर्गुरुं गुरुमार्यांश्च तत्त्वप्रकाशिकाभावमहं प्रवक्ष्ये ।।

अथ 'ग्रन्थोऽयमपि बह्वर्थो भाष्यं चात्यर्थविस्तरम् ।
बहुज्ञा एव जानन्ति विशेषेणार्थमेतयोः' ।।

(भावबोधः)

इत्याचार्योक्तौ लोकानां विश्वासमुपजनयंस्तत्कृतसूत्रभाष्यस्य व्याख्यानं चिकीर्षुः श्रीमज्जयतीर्थचरणो भाष्याद्यपद्यस्थविशेषणपदार्थप्रपञ्चनपूर्वकं मङ्गलमाचरति– **शुद्धेति** । अत्र शुद्धत्वमानन्दस्य, उरुत्वं संविद्द्युतिबलानां, बहुलत्वमौदार्यवीर्यादिर्विशेषणम् । तत्र शुद्धत्वमानन्दस्य दुःखासम्भिन्नत्वादि । संविद उरुत्वम्, ईश्वरादिगताशेषविशेषविषयत्वम् । द्युतेरुरुत्वं 'तमेव भान्तम्' इति श्रुत्युक्तप्रकारेण सकलप्रकाशकत्वमन्यनिष्ठप्रकाशनियामकत्वञ्च । बलस्य त्वप्रतिबद्धत्वम् । औदार्यस्य बहुलत्वं मोक्षादिसमस्तपुरुषार्थसम्बन्धित्वम् । वीर्यस्य त्वारब्धसकलकार्यनिष्पत्तिहेतुत्वमिति द्रष्टव्यम् । 'गुणैरुदीर्णम्' इत्युक्त्या प्राप्तगुणगुणिभेदशङ्कानिरासार्थं वीर्यादिस्वरूपदेहमित्युक्तम् । देहस्य परमात्मना सहाभेदस्य 'यदात्मको भगवांस्तदात्मिकी व्यक्तिः' इत्यादिना प्रमितत्वाच्छङ्कानिरासः । 'दोषवर्जितम्' इत्येतद्दोषस्वरूपप्रदर्शनेन 'अशेष' 'अति' पदाभ्यां च विवृतम् । 'ज्ञेयम्' इत्यत्र ज्ञातृप्रदर्शनं सद्भिरिति । ज्ञातृकथनेन वैराग्याद्युपायकथनेन वेदान्तवेद्यमिति ज्ञानकरणकथनेन च विवृतम् । श्रुतिमती श्रवणमनने। नियतध्यानं स्वयोग्योपासनम् । ज्ञानमपरोक्षम् । योगस्तल्लक्षणोपायः । 'ज्ञेयम्' 'गम्यम्' इत्यत्र गमने ज्ञानस्य हेतुत्वमस्तीति दर्शयितुं ज्ञानयोगाद्गम्यमित्युक्तम् । विशेष्याकाङ्क्षायां ब्रह्मेत्युक्तम् । मायावादिरीत्या मुकुन्दाभिधस्य निर्गुणाऽभिन्नमन्दोपास्यमायाशबलत्वशङ्कानिरासार्थं अमलम् इत्युक्तम् । शुद्धमित्यर्थः । गुणैः स्वैरुदीर्णमित्यादिपदचतुष्टयस्य क्रमेणाद्याध्यायाद्यर्थप्रतिपादकत्वज्ञापनाय तद्विवरणपरस्वपद्यगतविशेषणपदेषु तत्तदध्यायनिर्णीतानन्दादिगुणचिन्तादिदोषराहित्यवैराग्यादि-साधनगमनरूपफलोपन्यासः कृतः ।

व्याचिख्यासितभाष्यमूलसूत्रप्रामाण्यं सूचयन् तत्कर्तृत्वेनोपाधिना वेदव्यासं प्रणमति– **याश्चेति** । अत्र 'यत्र उदैद्द्रियेन्दिरा' इत्यादिना वक्त्रानुकूल्यम्, 'निर्जरैः' इत्यादिना श्रोत्रानुकूल्यम्, 'याश्चा' इत्यनेन प्रसङ्गानुकूल्यञ्च दर्शयता 'वक्तृश्रोतृप्रसक्तीनां यदाप्तिरनुकूलता' । इत्यनुव्याख्यानोक्ता आप्तिमूलता सूत्राणां सूचिता । ब्रह्मसूत्रपदेन ब्रह्मपरश्रुतिव्याख्यानरूपत्वात् श्रुतिमूलत्वं, सूत्रपदेनैव न्यायव्युत्पाद-कत्वोक्त्या युक्तिमूलत्वञ्च सूचितम् । विद्याया लक्ष्म्यभिमन्यमानत्वाल्लक्ष्मीत्वेन, भारतस्य धर्माद्यशेष-पुरुषार्थदातृत्वात् पारिजातत्वेन, ब्रह्मसूत्रस्य स्वश्रवणरूपसेवनवतां मोक्षहेतुत्वादमृतत्वेन, पुराणानां विष्ण्वादितत्वप्रकाशकत्वान्मणित्वेन, शुकस्य सज्जनाह्लादकरत्वादिन्दुत्वेनोत्प्रेक्षा युक्तेति द्रष्टव्यम् ।

व्याख्येयतत्वप्रयोजकसफलत्वगम्भीरत्वादि दर्शयन् भाष्यकृतं प्रणमति– **स्वान्तेति** । वैकर्तनांशुव्रजादेः स्वान्तध्वान्तनिकृन्तनादावशक्तत्वादेव भाष्येण जितत्वम् । जितमहावैकर्तनांशुव्रजत्वे जितचन्द्रचन्द्रिकत्वे

(भाववोधः)

हेत्वन्तरं **निर्दोषमिति** । वैकर्तनांशुव्रजचन्द्रिकयोर्ह्रासादिदोषयुक्तत्वादिति । जितसिन्धुराजत्वे हेतुरमितमिति । अर्थतो अमितत्वं द्रष्टव्यम् । ग्रन्थस्य परिमितत्वात् । अत्र भाष्यस्य जितमहावैकर्तनांशुव्रजत्वजितचन्द्रचन्द्रिकत्वोक्त्या तद्विशिष्टाचार्यमुखस्य सूर्यचन्द्रबिम्बाधिक्यं ध्वनितम् । **कृपालव इति** । यद्यपि 'स्पृहिगृही'त्यादिना कृपेरालुच्प्रत्ययो न विहितः, तथापि 'लुशमविधायालुच्करणमन्यत्रापि यथा स्यात् । तेन कृपालुरित्यादि सिध्येत्' इति वैयाकरणवचनादेतत्साधुता । अत एव कौमुद्याम् 'हरे कृपालो नः पाहि' इत्युक्तम् ।

यद्वा कलशवाची अयमालुशब्दः । 'कर्कर्यालुर्गलन्तिका' इत्यभिधानात् । तथा च कृपापूर्णकलशा इत्यर्थः । कृपाऽऽलव इत्यपि क्वचित् पाठः । **तत्कृपया** तेषां मुकुन्दादीनां नमस्कृतानां कृपया । **रथ्याद्भिरिति** । समासान्तो विधिरनित्य इत्यभिप्रेत्यैवमुक्तम् । अत एव महाभाष्ये 'शुष्यन्ति तटाकानि' इति प्रयोगः । रथ्यापैरित्यपि क्वचित् पाठः । **सङ्गम्यन्त इति** । वाचो विशुद्धीत्युक्तत्वान्मदीयया वाचा इति अर्थसिद्धत्वान्नोक्तम् ।

**अथावियेति** । मङ्गलग्रन्थारम्भयोः कृतत्वेनाथशब्दो भाष्यस्थप्रतिग्रन्थव्याख्यानारम्भार्थो बोद्धव्यः । **फलसाधनतासिद्ध्यर्थमिति** । फलसाधनतासिद्धिरर्थः प्रयोजनं यस्य नमस्कारस्येति विग्रहः । मङ्गलयुक्तस्यैव ग्रन्थादेः फलहेतुत्वादिति भावः । निरन्तरायपरिसमाप्त्याद्यर्थमित्यत्रापि पूर्ववद्विग्रहः । ग्रथनस्य शिष्यशिक्षार्थस्य वक्ष्यमाणत्वेन फलसाधनतासिद्ध्यादिफलकत्वाभावात् । **पुरुषार्थो भवतीति सूचित इति** । अतःशब्दोक्तपुरुषार्थं प्रति विहितब्रह्मजिज्ञासायाः साक्षाद्धेतुत्वासम्भवेन जिज्ञासाजन्यज्ञानजप्रसादस्यार्थसिद्धत्वादिति भावः । **विशिष्टगुणानाचष्ट इति** । अत्र गुणशब्दो गुणोदीर्णत्वदोषवर्जितत्वज्ञेयत्वगम्यत्वरूपधर्मपरः । अनेन नारायणशब्दस्याध्यायचतुष्टयप्रतिपाद्यगुणोदीर्णत्वादिप्रतिपादकत्वप्रदर्शनेन तद्वाच्यस्य ब्रह्मणोऽधिकृतत्वरूपं नम्यत्वे निमित्तमुक्तं भवति ।

नरसम्बन्धित्वादित्यत्र नराः सज्जना विवक्षिताः । **न रीयत इति** । नञ उपपदाद्रीङ्क्षय इत्यस्माद्धातोः करणे डप्रत्यये प्रज्ञादित्वात् स्वार्थिकाण् प्रत्यये च कृते नारमिति रूपसिद्धिरिति द्रष्टव्यम् । अरमणं दुःखम् । **निर्दोषवेदोत्पन्नत्वादिति** । निर्दोषवेदवाचकान्नारशब्दात् 'तस्येदम्' इत्यणि कृते नारशब्दो वेदजन्यज्ञानवाचीति भावः ।

ननु अरविरुद्धगुणाश्रय इति निर्वचने अरशब्दस्य विरुद्धार्थकनञ्समासे, अरशब्दवाच्यदोषाश्रयो न भवतीति निर्वचने अरायणशब्दस्यान्यार्थकनञ्समासे, नारमणं येनेत्यादिनिर्वचने नारशब्दस्याभावार्थक-

(भावबोधः)

नञ्समासे च 'नञो नलोपः' इति नलोपे 'तस्मान्नुडचि' इति नुडागमे चानरायण इति भवेत् । कथं नारायण इतीत्यत आह– **नगनाकादिशब्दवदिति** । 'न भ्राड्' इत्यादिसूत्रद्वयेऽयमपि शब्द उपसङ्ख्येयः । उक्तनिर्वचनानुसारेणापि नारायणशब्दप्रयोगस्य प्रमाणसिद्धत्वादिति भावः । 'पूर्वपदात् संज्ञायामगः' इति णत्वम् । ल्युटः टित्करणसामर्थ्यात् अयनशब्दोऽधिकरणे त्रिलिङ्ग इति पुँल्लिङ्गत्वञ्च युक्तम् । ननु देवतासमुच्चायक'च'शब्दसद्भावात् 'अपि' शब्दः किमर्थ इत्यत आह– **स्वस्येति** । कथं 'अपि'पदेनारुचिः सूचितेत्यत आह– यद्यपीति । अनेन 'अपि' इत्येतत्तथापीति व्याख्यातं भवति । **नतिरितीति** । प्रकारवाचि 'इति' शब्दस्येत्यरुचिं सूचयतीत्यन्वयो द्रष्टव्यः ।।

ननु ग्रन्थस्य फलसाधनतादेर्नमस्कारेणैव सिद्धेर्ग्रथनं व्यर्थम् । एवमधिकारादिसूचनस्य प्रवृत्त्यङ्गतया कर्तव्यत्वेऽपि न महाफलार्थं तत्कार्यम् । तत्स्मरणेनैव फलसिद्धेरित्यत आह **नमस्काराधिकार्यादीति** । अधिकारसूचनमेवोपपादयति– **तथा हीति** ।

## श्रीराघवेन्द्रतीर्थविरचितः भावदीपः

लक्ष्मीनारायणं नत्वा पूर्णबोधान्गुरूनपि ।
तत्वप्रकाशिकाभावदीपं कुर्यां यथामति ।। १ ।। यद्यपि

तत्वप्रकाशिकाऽऽकूतं चन्द्रिकातः प्रकाशितम् ।
अपि मन्दकृते सर्वविषया च कृतिर्मम ।। २ ।।

नूतनैरुदिता ये तु दोषास्तेषामलग्नताम् ।
सम्प्रदर्शयितुं चाऽतः प्रसन्नाः सन्तु सज्जनाः ।। ३ ।।

इह खलु विविधसांसारिकदुःखपरिश्रमिणामधिकारिणामखिलदुःखनिवृत्तिविशिष्टपरमानन्दावाप्तये प्रवृत्तानामाम्नायानामितिकर्तव्यताभूतब्रह्मसूत्राणां यथावदर्थविवक्षया प्रवृत्तमतिगहनार्थं भाष्यं व्याचिकीर्षुर्ग्रन्थादौ मङ्गलमाचरति जयतीर्थमुनिः ।। **शुद्धेति** ।।

इदं च पद्यं भागवतस्याद्यपद्यस्य तात्पर्यस्थाद्यपद्यमिव भाष्यस्थाद्यश्लोकविवरणरूपत्वात्तद्वदेव वक्ष्यमाणादिसूचकत्वेन व्याख्येयम् । तथाहि । आद्याध्यायार्थस्य गुणैस्सर्वैरुदीर्णमित्यस्य व्याख्या शुद्धेत्यादि । तत्र शुद्धत्वं चन्द्रिकारीत्या सान्तत्वसातिशयत्वराहित्यं आनन्दादेस्सर्वस्य विशेषणम् । दुःखासम्भिन्नत्वादेश्चिन्तेत्यादिना लाभात् । उरुत्वादिकं तु सर्वविषयकत्वादिमात्रम् । व्यक्तमेतत्सर्वमग्रे ।

(भावदीपः)

आनन्दमयोऽभ्यासादित्यादौ परिपूर्णानन्दसंविदादेः, अनुकृतेस्तस्य चेत्यादावुरुद्युतेः, अत्तेत्यादौ सर्वसंहारकत्वाद्युक्त्या उरुबलस्य, मुक्तोपसृप्यव्यपदेशात्तन्निष्ठस्य मोक्षोपदेशादित्यादौ मोक्षदानादिना बहुलौदार्यादीनामुक्तेः । एतेन भाष्यस्थगुणपदस्य वैशेषिकादिप्रसिद्ध्या दुःखादिकं वैदिकप्रसिद्ध्या सत्त्वादिकं वा नार्थ इत्युक्तं भवति । द्युतिबलादेर्गुणत्वं तु गुणाद्वाऽऽलोकवदित्यत्र द्वितीये तदनुविधानादिना वक्ष्यत इति भावः । ननु देहसत्त्वे दुःखादिभोगप्रसङ्गाद्दोषवर्जितमिति भाष्योक्तमसत् । करणवच्चेन्न भोगादिभ्यः अन्तवत्त्वमिति वक्ष्यमाणत्वात् । तदसत्त्वे ज्ञानादिगुणोदीर्णता भाष्योक्ता न युक्ता । असर्वज्ञता वेति सूत्रकृतैव वक्ष्यमाणत्वादित्यतो वीर्यादिदेहमिति । अप्राकृतदेहवत्त्वान्न दुःखादिदोषप्रसङ्ग इति भावः । एतच्च अदृश्यत्वनयगुणसूत्रे रूपोपन्यासादित्यत्र सिद्धम् । तथा अन्यभावव्यावृत्तेश्चेत्यादावपि तस्यैवारूपवदेवेत्यत्र तृतीये उपपादयिष्यमाणत्वात् । द्वितीयाध्यायार्थस्य दोषवर्जितमित्यस्य विवरणं चिन्तेत्यादि । लेपः पुण्यपापसम्बन्धः । चिन्तादयो मुखं प्रधानं येषामस्तीति चिन्तादिमुखराः । ते च ते अशेषदोषा इति विग्रहः । खमुखकुञ्जेभ्य इति मत्वर्थे रः । यद्वा सन्मुखरितं सद्भिः प्रधानीकृतमिति दशमतात्पर्योक्तेर्मुखरशब्द एव प्रधानवाची । चिन्तादिभिर्मुखराः ध्वनन्त इव स्थिता इत्यर्थ इत्यप्याहुः । अधिकं तु 'भेदनिर्देशात्' 'न कर्माविभागादिति चेन्नानादित्वात्' 'असंभवस्तु सतोऽनुपपत्तेः' 'नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः' 'सर्वधर्मोपपत्तेश्च' इत्यादिभिश्चिन्तादिदोषाभावस्य द्वितीये वक्ष्यमाणत्वादिति भावः । न कर्मेत्यत्र कर्मणोऽस्वातन्त्र्योक्त्या तल्लेपाभावसिद्धेः । उक्तं च गीताभाष्ये । यः कर्मापि नियमयति कथं तत्तं बध्नातीति । एतेन तार्किकादिरीत्या रागादिरेव दोषपदार्थ इति भ्रमोऽपास्तः । तृतीयाध्यायार्थस्य ज्ञेयमित्यस्य ज्ञाने कर्तृणययोर्गत्युपायत्वस्य चोक्त्या विवरणं क्रियते ।। **सद्भिरिति** ।।

एतच्च असार्वत्रिकी सर्वथापि तु त एवोभयलिङ्गादित्यादौ सिद्धम् । वैराग्येति आद्यपादार्थोक्तिः । तत्र गत्यागतिस्वर्गनरकगर्भवासादिस्वरूपोक्त्याऽर्थाद्वैराग्यस्योक्तेः । भक्तीति द्वितीयपादस्य । तत्र भगवन्माहात्म्योक्त्या भक्तेरुक्तेः । श्रुतिमती श्रवणमनने । नियतध्यानं स्वयोग्योपासनमिति तृतीयपादार्थः । तत्र सर्ववेदान्तनये यथाशक्ति कृत्स्नवेदविषयश्रवणमननयोः उपसंहारादिनयेषु स्वयोग्योपासनस्य चोक्तेः । एतेन ज्ञानप्रणाड्या एतान्येवोपायो नान्यत्कर्मादीति सूचितम् । ज्ञानं साक्षात्कारः स एव योग उपायस्तस्मादिति चतुर्थपादार्थः । तत्र पुरुषार्थनयादौ पुमर्थोपायत्वसिद्धेः । एतेन चतुर्थार्थो गम्यमित्येतदपि विवृतम् । प्रणाड्या वैराग्यादिजात् ज्ञानात्सद्भिर्गम्यं न कर्मादित इति । अत एवाऽलं सम्यक्

(भावदीपः)

मुख्यवृत्त्या असंशयं वा । वेदान्तवेद्यं वेदानामन्तो निर्णयो यस्मात्तेन ब्रह्ममीमांसाशास्त्रेण वेद्यम् । सर्ववेदान्तप्रत्ययमित्यत्रेवान्तो निर्णयः । एतेन भाष्योक्तविशेषणानामधिकृतत्वद्योतनमपि फलं सूचितम् । नारायणपदस्य प्रतिपदं ब्रह्मेति । तेन ब्रह्मतन्त्रे नारायणनतिरनुचितेति शङ्काऽपास्ता । अत एव मुकुन्दाभिधमित्युक्तिः । नारायणमुकुन्दशब्दयोः पर्यायत्वप्रसिद्धेः । वक्ष्यति च ब्रह्मशब्दव्याख्यानं नारायणपदमिति । नन्वेवमुक्तदिशा सविशेषं मुकुन्दाभिधं ब्रह्म चेत्तर्हि-

निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः ।
ये मन्दास्तेऽनुकंप्यन्ते सविशेषनिरूपणैः ।।

इत्यद्वैत्युक्तदिशा मन्दोपास्यं किं ? नेत्याह ।। **अमलमिति** ।।

न विद्यते मलं संसाराख्यं यस्मात्तदमलं संसारनिवर्तकं मुमुक्षूपास्यं न मन्दोपास्यमिति यावत् । मायाख्यमलरहितमिति वाऽर्थः । अलमित्यस्यालमममलमिति वाऽन्वयः । एतच्च भाष्यस्थनारायणपदस्य मुक्ताश्रयत्वरूपार्थमभिप्रेत्योक्तम् । एवं वक्ष्यमाणार्थस्यादौ सूचनाच्छ्रोतृशेमुष्यनुकूलिता भवति । तथा वक्ष्यमाणदिशा ब्रह्मशब्दव्याख्यानपरतया तस्यैव नम्यत्वोपपादनपरतया चेदं पद्यं योज्यम् । ग्रन्थगौरवभयान्न प्रपञ्च्यते ।। १ ।।

गुरूंश्चेत्यत्र को गुरुः कथं च तस्य गुरुत्वमित्यतस्तद्विवृण्वन् व्याचिख्यासितभाष्यमूलसूत्रप्रामाण्यं च सूचयन्मङ्गलान्तरमाचरति ।। **याश्चेति** ।। सदा भूत्यै भवत्वित्यन्वयः । तन्त्रं पञ्चरात्रम् । ब्रह्मतर्कोऽपीत्येके । अत्र यत उदैद्विधेन्दिरेत्यनेन वक्त्रानुकूल्यं निर्जरैरित्यादिना श्रोत्रानुकूल्यं याश्चेत्यादिना प्रसङ्गानुकूल्यं च दर्शयता वक्तृश्रोतृप्रसक्तीनां यदाप्तिरनुकूलतेत्यनुव्याख्यानोक्ताप्तिमूलता सूत्राणां सूचिता । ब्रह्मसूत्रपदेन ब्रह्मपरश्रुतिव्याख्यानरूपत्वाच्छ्रुतिमूलत्वं न्यायव्युत्पादकत्वाद्युक्तिमूलत्वं च सूचयता ''आप्तिमूलतया चैव श्रुतिमूलतया तथा । युक्तिमूलतया चैव प्रामाण्यं त्रिविधं महदि''त्यनुव्याख्यानोक्तत्रिविधप्रामाण्यं स्मारितमिति चन्द्रिकायामेव व्यक्तम् । कामिताखिलदातृत्वसाम्याद्विधेन्दिरात्वेन नानापर्वोपेतत्वान्नानाशाखोपबृंहितत्वाद्वा भारतं पारिजातत्वेन जरामृतिनिवृत्युपायत्वाद् ब्रह्मसूत्रममृतत्वेन नानातत्वार्थप्रकाशकत्वादिना पुराणानि मणिगणत्वेन तत्वोपदेशेनाह्लादकत्वाच्छुक इन्दुत्वेनोक्त इति ज्ञेयम् । एवं रूपेण भूतिदः शास्त्रप्रभवत्वादिना गुरुश्चेति भावः । सम्प्रदानत्वाभावात्सम्बन्धसामान्ये सतामिति षष्ठी । बहुमानपूर्वकं स्वस्वत्वत्यागेन परस्वत्वापादनस्थल एव

(भावदीपः)

सम्प्रदानसंज्ञेत्यभियुक्तव्याख्यानात् । अत एव सम्प्रदानमिति गुरुसंज्ञा अन्यथा टि घु भादिवल्लघ्वीमेव तां कुर्यात् । इदं च पद्यं द्वापर इत्यादिभाष्यस्य तात्पर्यतो व्याख्यानरूपम् । तत्र सूत्रोपलक्षिततन्त्र-पुराणादेरप्याप्तिमूलत्वादिना ब्रह्मसूत्रतौल्येन प्रामाण्योक्त्या स्मृतेश्चेत्यादिसूत्रे भाष्ये च वक्ष्यमाणस्मृतीना-मुदाहरणमुपपादितं भवति । स्मृतीनां श्रुत्यादिमूलत्वं च 'इतिहासपुराणः पञ्चमो वेदानां वेद' इत्यादितत्वनिर्णयाद्युक्त्या ध्येयम् । विस्तृतमेतत्स्मृतिप्रामाण्यं तत्वप्रदीपे तच्चोक्तमिति भाष्यव्याख्यावसरे ॥ २ ॥

भाष्यस्य व्याख्येयत्वप्रयोजकसफलत्वगम्भीरत्वादि दर्शयन् भाष्यकृतं प्रणमति ॥ **स्वान्तेति** ॥

अलं समर्थम् । निकृन्तन इत्यत्राप्यन्वेति । वैकर्तनांशुव्रजचन्द्रचन्द्रिकयोस्स्वान्तध्वान्तकृन्तने तापत्रयोन्मूलने चाशक्तत्वाद्भाष्येण जितत्वम् । निर्दोषमिति तयोर्जये हेत्वन्तरम् । तापहासादिदोषित्वात्तयोः । अमितं अमितार्थमिति हेतोर्जितसिन्धुराजत्वम् । तदुक्तं ''भाष्यं चात्यर्थविस्तर''मित्यनुभाष्ये । अथ तस्मादेवंरूपभाष्याविर्भावकत्वादवसरप्राप्तान्प्रपद्य इति चार्थः । अत्र निकर्तन इति पाठः साधुः । निकृन्तन इति पाठे तु कृती छेदने इति धात्वन्तरस्य रूपं ध्येयम् । तथाहि गीतगोविन्दे । विरहिनिकृन्तनकुन्तमुखाकृतिकेतकदन्तुरिताशं इति प्रयोगः । एकेन नखनिकृन्तनेनेति श्रुतौ च ॥ ३ ॥

सन्न्यायरत्नावलिरूपटीकाकर्तृनर्थयते ॥ **श्रीमध्वेति** ॥ स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच् इत्यत्र शकारेत्संज्ञकलुशप्रत्ययविधानेनापि तस्य सिद्धत्वेन तिङ्शित्सार्वधातुकमिति सार्वधातुकसंज्ञायां कर्तरि शबिति शपि सति गुणे अयादेशे च अतो दीर्घो यञीति दीर्घे च सति ण्यन्तानां स्पृहीत्यादीनां स्पृहयालुरित्यादिरूपसिद्धावप्यालुच्ग्रहणं शयालुरित्यादिरूपसिद्ध्यर्थमिति मञ्जर्यास्तृतीयस्य द्वितीयपादे अभिधानात् । कृपिधातोरपि आलुच्प्रत्यये कृते संज्ञापूर्वको विधिरनित्य इति पुगन्तलघूपधस्य चेति गुणाभावे च सति कृपालुरिति साध्वित्येके । नष्टधर्मज्ञानलोककृपालुभिरिति गीताभाष्यटीकायामुक्तदिशा कृपाकलशा इति कलशार्थो वा आलुशब्दः । कर्कर्यालुर्गलन्तिकेत्यमरकोशोक्तेः । कृपां लाति आदत्त इति कृपापदोपपदाल्लाऽदान इति धातोर्डुप्रत्यये वा कृपालुरिति रूपम् । (विप्रसंभ्यो ड्वसंज्ञायामित्यत्र मितद्र्वादिभ्य उपसङ्ख्यानमित्युक्तेरित्यन्ये । तत्राद्ये लत्वाभावो दयावत्वरूपार्थलाभश्च क्लिष्टः । अन्त्ययोस्तु तृतीयाध्याये षिद्भिदादिभ्योऽङित्यङि क्रपेः सम्प्रसारणञ्चेति भिदादिगणसूत्रेण निष्पन्नस्य क्रप कृपायामिति धातुरूपस्य कृपेर्लाक्षणिकत्वेन कृपोरोल इत्यत्राग्रहणमित्यष्टमेऽध्याये वृत्तावुक्तत्वेन

(भावदीपः)

लत्वाभावोऽर्थानुगमश्च । स्याद्दयालुः कारुणिकः कृपालुः सूरतस्समा इत्यमरव्याख्यानबन्दिघटीये दुर्घटवृत्तौ च कृपां लातीत्यस्यैव साधुतोक्तेरित्याहुः । दयालव इत्यपि कचित्पाठः ।। ४ ।।

स्वगुरून्प्रणमति ।। **श्रीमदिति** ।। ५ ।। अथेति प्रतिज्ञाया अवसरप्राप्तिमाह । अथ तस्माद् गाम्भीर्यादियुतत्वादिति वा । तत्कृपया तेषां प्रागुक्तानां कृपया ।। ६ ।।

व्याकुर्वे इत्यात्मनेपदेन प्राप्तमात्मगामिफलं दर्शयति ।। **गङ्गासङ्गेनेति** ।। भाष्यकर्तृतत्प्रतिपाद्ययोः प्रीतेः प्रधानफलत्वेऽपि इदमवान्तरफलमिति भावः । गङ्गासङ्गेन रथ्याद्भिर्नैर्मल्यं यथा लभ्यते तथा मदीयायाः वाचो विशुद्धिसिध्यर्थं मदीयया वाचा गुरोर्गिरः सङ्गम्यन्ते व्याख्यानव्याख्येयभावेन सम्बध्यन्त इत्यर्थः । यद्वा भाष्यं व्याकुर्व इति प्राधान्येन भाष्यव्याख्याप्रतिज्ञानेऽपि न तावदेव किन्तु यन्न्याय-विवरणोक्तं यच्चानुव्याख्यानादिस्थानान्तरोक्तमवश्यमत्र भाष्ये संयोज्य व्याख्यानार्हं तदप्यत्र संयोज्य व्याक्रियत इति स्ववाक्शुद्धिरूपनान्तरीयकफलं वदन्नेवाह । **गङ्गेति** । मदीयवाचो विशुध्यर्थं मदीयया वाचा गुरोर्गिरः भाष्यादिस्थाः परस्परं सङ्गम्यन्ते सम्बद्धतया प्रकाश्यन्त इत्यर्थः । अस्मिन्पक्षे वाचो गिरां सङ्ग आर्थिक इति न दृष्टान्तानानुगुण्यं ध्येयम् । एतेन तत्वप्रदीपेनैवालं किमनेनेति प्रत्युक्तम् । तत्र केवलं भाष्यस्यैव व्याख्यानात् । अत एवाग्रे न्यायविवरणाद्युक्तविवरणं नाप्रतिज्ञातकीर्तनम् । अत एव च गीताभाष्याद्युक्तं शास्त्रयोनिसूत्रादौ तत्र तत्र संयोज्य व्याक्रियते । द्युभ्वाद्यधिकरणे चाभाषितं प्रधानं किं संयोज्यत इति चेन्न प्रकृतिजीवावभिधीयेते इत्यन्यत्रोक्तत्वादिति तत्वनिर्णयोक्तमपि संयोज्य व्याक्रियते । ऋक्पूरब्धूः पथामानक्ष इति समासान्तस्तु पथामिति निर्देशेन तस्यानित्यत्वावगतेर्नाश्रितः । तेन रथ्याद्भिरिति साधु ।। ७ ।।

अथाविद्येत्यथशब्दः प्रतिग्रन्थव्याख्या प्रारभ्यत इति प्रारम्भार्थः । अविद्यापटलमिव तेन पिहितं नयनमिव नयनं मनस्तत्वज्ञानं वा येषां तैरित्यर्थः । पटलपिहितनयनवदविद्यातिरस्कृततत्वज्ञानैरन्यथा व्याख्यातानीत्यर्थः । फलसाधनतासिध्यर्थं फलसाधनतासिद्धये । समङ्गलस्यैव सफलत्वादिति भावः । परिसमाप्त्याद्यर्थं परिसमाप्तिप्रचयादिप्रयोजनाय च अवश्यकर्तव्यमिति शेषः । तदुक्तं सुधायां नारायणप्रणामादिकं प्रारिप्सितस्यानन्तरायपरिसमाप्तेः प्रचयस्य च हेतुतयाऽविगीतशिष्टाचारादि-नाऽवगतमवश्यकरणीयं शिष्यान्ग्राहयितुं ग्रन्थादौ निबध्नातीति । सूत्रमिति समुदाया(शयं)र्थम् । अत एव तेषामित्यग्रे बहुवचनम् । तस्य निरुपपदस्य । व्यक्तमेतदग्रे मुख्यस्य निर्विशेषेणेत्यादाविति भावः । अत्र गुणदोषादिस्वरूपोक्तिः शुद्धेत्याद्यपद्य एव व्यक्तेति विशेषणानां कृत्यमेव त्रेधा व्यनक्ति

(भावदीपः)

वक्ष्यमाणमित्यादिना । प्रस्तावयितुं संक्षिप्यादौ वक्तुम् । तस्य च प्रपञ्चजिज्ञासाजननं फलमिति भावः । प्रसत्त्या प्रसादेन ।। **सूचित इति** ।। अतःशब्देन सङ्क्षिप्योक्त इत्यर्थः ।। **महायोगेति** ।। 'अतोऽनन्तगुणो' 'यच्छब्दा योगवृत्तय' इत्यणुभाष्योक्तेरिति भावः ।। **दोषवानपीति** ।। समन्वयनिरोधे सर्वकर्तृत्वसार्वज्ञसर्वैश्वर्यादेरसिद्ध्या तत्तन्नयपूर्वपक्षोक्तयुक्त्यादिभिर्जीववज्जनिमृत्यादिदोषवानपि स्यादित्यर्थः । न केवलं सर्वकर्तृत्वादिगुणाभाववानित्यपेरर्थः । तस्य च श्रुत्यैव निरस्यत्वात् तत्समन्वयस्य युक्तिसमयादिभिर्निरुद्धत्वादिति भावः ।। **निर्दोषत्वस्यैवेति** ।। सर्वदोषोज्झितस्तस्मादित्याद्युक्तेरिति भावः ।। **विरक्त्यादिभिरिति** ।। तस्माद्विरक्तः सन्ज्ञानमेव समाश्रयेदित्युक्तेरिति भावः । प्रविश्य भुञ्जते भोगानित्याद्युक्तेराह ।। **भगवत्प्राप्तीति** ।।

ननु ब्रह्मतन्त्रोक्तगुणवैशिष्ट्यं कथं नारायणस्योच्यते किन्तु ब्रह्मण एव वाच्यमित्याशङ्कां निरसितुं योजनान्तरमाह ।। **अथवेति** ।। **विशिष्टगुणानिति** ।। विशिष्टानितरासाधारणान् गुणोदीर्णत्वदोष-वर्जितत्वज्ञेयत्वगम्यत्वरूपगुणानित्यर्थः । निर्वक्ति निरुच्य दर्शयति विशेषणचतुष्टयेनेत्यर्थः । भाष्यकारीयं नारायणपदस्य विशेषणचतुष्टयेन विशिष्टगुणवाचकत्वप्रदर्शनं च तस्य ब्रह्मशब्दसमानार्थत्वात् शास्त्रार्थवाचकत्वाच्च नारायण एव शास्त्रार्थ इति दर्शयितुमिति नोक्तशङ्कावकाश इति भावः । एतदपि स्तुत्यर्थमिति सुधोक्तेरुपलक्षणत्वादविरोधः ।

।। **दोषारशब्दयोरिति** ।। ''दोषारछिद्रशब्दानां पर्यायत्वं यतस्तत'' इत्यनुभाष्योक्तेरिति भावः ।। **नरेति** ।। सज्जनेत्यर्थः ।

।। **न रीयत इति** ।। नञुपपदाद्रीङ् क्षय इति धातोः करणे डप्रत्यये प्रजादिभ्यश्चेति स्वार्थिकेऽण्-प्रत्यये यस्येति चेति लोपे चादिवृद्धौ वक्ष्यमाणदिशा नलोपाभावे च नारमिति रूपमिति भावः । अरमणं दुःखम् । निर्दोषवेदवाचकान्नारशब्दात्तस्येदमित्यणि कृते नारशब्दो वेदजन्यज्ञानवाचीति भावः । ननु नारशब्दात् वृद्धिर्यस्याचामिति वृद्धसंज्ञायां वृद्धाच्छ इति छप्रत्यये ईयादेशे नारीयमिति स्यात्कथं नारमिति । मैवम् । वा नामधेयस्येति वृद्धसंज्ञाया एवाऽभावात् । ओर्गुण इत्यत्र गुणग्रहणेन संज्ञापूर्वको विधिरनित्य इति ज्ञापनाद्वा । संज्ञया विधीयमानस्यैव संज्ञापूर्वकविधित्वात् । अत एव तृतीयस्य द्वितीयपादे स्पृहिगृहीत्यादिसूत्रे श्रद्धालुरित्यत्र श्लाविति द्विर्वचनमाशङ्क्य संज्ञापूर्वको विधिरनित्य इति द्विर्वचनं नेत्युक्तं मञ्जर्याम् ।

(भावदीपः)

नन्वरायणो नेति व्युत्पत्तौ नलोपो नञ इति नलोपे तस्मान्नुडचीति नुटि सति अनरायणेति भाव्यमित्यत आह ।। **नगनाकादिशब्दवदिति** ।। नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनख-नपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या । नगोऽप्राणिष्वन्यतरस्यामित्याभ्यां नाकादिशब्दस्य निपातितत्वेन तत्र यथा सौत्रत्वेन समाधानं तथाऽत्रापि सौत्रत्वेन समाधानमूह्यमिति भावः । तथाहि नलोप इति सूत्रे रात्रेः कृति विभाषेति पूर्वसूत्रादनुवृत्ताया विभाषाया व्यवस्थितविभाषात्वस्य न्यास एवोक्तत्वान्नारायण इत्यत्रापि नलोपाभावाद्युपपत्तिः । यद्वा दोषारेत्याद्यनुभाष्यसुधोक्तदिशा नसमासोऽस्त्विति । लघ्वक्षरं पूर्वमित्युक्तेर्नगनाकेति निर्देशः । नलोपाभावमात्रस्याद्यम् । नलोपाभावनुडभावयोर्द्वितीयमित्येवं निर्देश इत्यप्याहुः । नारायणशब्दे पूर्वपदात्संज्ञायामग इति णत्वं ल्युटष्टित्वसामर्थ्येनायनशब्दोऽधिकरणे त्रिलिङ्ग इति पुल्लिङ्गत्वं च सुधोक्तमेव ध्येयम् । व्यक्तमेतत्सर्वं चन्द्रिकायाम् । नन्वन्यथापि नारायणशब्दार्थ-निरुक्तिसम्भवे किमेवमेव निरुक्तौ बीजमिति चेन्न । ब्रह्मशब्दसमानार्थत्वादिद्योतकत्वेन प्रागेव समाधानात् । किञ्च नारायणनमनस्यावश्यकत्वोपपादनार्थतया च सार्थक्यं विशेषणानामिति भावेनाह ।। **अथवेति** ।।

**स हि वन्द्य इति** ।। त्रिविधा हि देवता वन्द्या भवति विशिष्टा अधिकृता इष्टा च । भक्तिपूर्वकदेवतानतेर्विघ्नविघातार्थत्वात् विशिष्टैव देवता तस्येष्टे । अधिकृता च स्वविषयग्रन्थप्रबोधादिकं सम्पादयति । इष्टायामेव देवतायां भक्त्यादिपूर्वं नमनं भवतीति गुणोदीर्णं दोषवर्जितमित्याभ्यां वैशिष्ट्यस्य ज्ञेयमित्यनेनाधिकृतत्वस्य गम्यमित्यनेनेष्टत्वस्य चोक्त्या नम्यत्वमुपपादितं भवतीति भावः । तेन भाष्यं चात्यर्थविस्तरमित्यनुव्याख्यानोक्तं लेशतो दर्शितं भवति । तत्वप्रदीपे त्वर्थान्तरमप्युक्तम् ।।

**गुरूनपीति** ।। भाष्ये बहुवचनं बहुवचनं गौरवादेवेति गीताभाष्यटीकोक्ताशयं वा । तमेव शास्त्रेत्यादिभिर्बहुभिः प्रकारैर्यद् गुरुत्वोपपादनं तेन गुरूंश्चेति बहुवचनान्तं पदं विवृतमिति सुधोक्ताभिप्रायं वेति भावः । पतेः पत्युः । शेषोक्तेर्वक्ष्यमाणलक्ष्मीवाक्ये मम योनिरित्यत्रोपयोगः । चकारेणैव गुरुदेवतानतिसमुच्चयलाभादपीति व्यर्थमित्यत आह ।। **स्वस्येति** ।। कथमित्यत आह ।। **यद्यपीत्यादिना नतिरित्यन्तेन** ।। **अनेनैवेति** ।। विशेषणचतुष्टयेनैवेत्यर्थः । अन्यार्थमुपात्तेनापीत्येवकारार्थः । **सम्बन्धाश्चेति** न केवलं प्रागुक्तार्थ इति चार्थः । अधिकार्यादिसूचनं व्यर्थमित्यतः प्रवृत्त्यङ्गत्वमेकं हेतुमुक्त्वाऽन्यं चाह ।। **तत्स्मरणस्येति** ।। सूचिता इत्यन्वयः । तेषां श्रोतृप्रवृत्त्यङ्गत्वं निर्विषये निष्फलेऽन्यविषयफलोद्देशेनान्यत्र चाप्रवृत्तेस्तद्विषयफले ज्ञात्वैव तत्र प्रवृत्तेर्दर्शनादिति ज्ञेयम् ।। **तदुक्तमिति** ।। प्रथमस्कन्धतात्पर्य इति योज्यम् । प्रारभतः प्रारभमाणस्य । 'चन्द्रादयस्तु मन्यन्ते

(भावदीपः)

सर्वस्मादुभयं पदमि'त्युक्तेः । महदिति भिन्नं पदम् । ननु विघ्नाभावस्य नमस्कारेणैव सिद्धेर्ग्रथनं व्यर्थमेव । यदपि तत्स्मरणस्येत्यादि तदप्यसाध्वेव । अधिकार्यादिसूचनस्य श्रोतृप्रवृत्त्यङ्गतया कार्यत्वेऽपि न महाफलार्थं तत्कार्यं तेन विनापि तत्स्मरणसम्भवेन तेनैव फलसिद्धेरित्यत आह ।। **नमस्कारेति** ।। यथाक्रममन्वयः । यद्यदाचरति श्रेष्ठ इत्यादेः शिष्या अप्येवं कुर्युरिति बोधनार्थमित्यर्थः । सूचिता इत्युक्तमेव व्यनक्ति ।। **तथाहीति** ।। **विषय इति** । सूचित इति सर्वत्रान्वेति । **प्रयोज(ने)नं इति** । यथाक्रममवान्तरप्रधानप्रयोजने सूचिते इत्यर्थः ।। यथायोग्यमिति ।। नारायणस्य विषयस्य शास्त्रप्रतिपाद्यत्वं ज्ञानस्य तद्विषयकत्वं गमनाख्यफलस्य तज्जन्यत्वं सम्बन्ध इति भावः ।

## श्रीमत्सत्यनाथतीर्थयतिविरचिता
## श्रीमत्तत्त्वप्रकाशिकाव्याख्याऽभिनवचन्द्रिका

सच्चिदानन्ददेहाय नमः शेषाङ्गशायिने ।
आत्मने वेदवेद्याय मुक्तगम्याय विष्णवे ।। १ ।।

भवाब्धिर्जानुदघ्नः स्यादानन्दः कण्ठसंमितः ।
मदुपास्त्येति हस्ताभ्यां रामो रक्षतु सूचयन् ।। २ ।।

विभज्य वेदान् यः सूत्रं चक्रे वेदार्थवित्तये ।
प्रार्थितो ब्रह्मरुद्राद्यैर्नमो व्यासाय विष्णवे ।। ३ ।।

असाधूनां निबन्धेन कुण्ठितं सूत्रमञ्जसा ।
व्याख्यातं येन सर्वज्ञं वन्दे भाष्यकृतं मुनिम् ।। ४ ।।

भाष्यबोधाय सत्तर्कदीपावलिमचीक्लृपत् ।
स पद्मनाभतीर्थार्यो दद्याद्विद्यां सतां गुरुः ।। ५ ।।

श्रीमद्भाष्यं यथाचार्यभावं वै सुप्रकाशितम् ।
वन्दे तान् जयतीर्थार्यान् यैः सुधा निर्मिता मुदा ।। ३ ।।

व्यासराजेन्दुमाशासे चन्द्रिका यस्य सम्मता ।
दुर्वादिचोरान्विद्राव्य रक्षितं भुवनत्रयम् ।। ७ ।।

(अभिनवचन्द्रिका)

अनधीत्य महाभाष्यं व्याख्यातं यदनुग्रहात् ।
वन्दे तं विधिना सत्यनिधिं विज्ञानसिद्धये ॥ ८ ॥

ज्ञानभक्त्याद्युपेतानामाचार्याणामनुस्मृतेः ।
अञ्जस्तरामि दुर्गाणि येभ्यो लब्धा मया सुधा ॥ ९ ॥

रामचन्द्रप्रसादेन लब्धाऽभिनवचन्द्रिका ।
तत्वप्रकाशिकाव्याख्या व्यज्यते विदुषां मुदे ॥ १० ॥

अनुवादः पूर्वपक्षसिद्धान्तानां करिष्यते ।
अयोगं बहुवाक्यानामुक्त्वा योगः प्रदर्श्यते ॥ ११ ॥

स्वयं मङ्गलमनुष्ठाय शिष्यशिक्षार्थं ग्रन्थादौ निबध्नाति – **शुद्धेति** ॥ ब्रह्म वन्द इत्यन्वयः । सर्वशब्दावाच्यं ब्रह्मेतिमतनिरासाय मुकुन्दाभिधमिति । शुद्धत्वमानन्दस्य, उरुत्वं संविद्द्युतिबलानाम्, बहुलत्वम् औदार्यवीर्ययोर्विशेषणम् । आनन्दस्य शुद्धत्वं परिच्छेदसान्तत्वसातिशयत्वराहित्यम् । उरुत्वं संविद्द्युतिबलानां तदेव । औदार्यवीर्ययोर्बहुलत्वमपि तदेव । प्रत्येकं विशेषणोक्तिस्तु आनन्दस्यैकस्यैव परिच्छेदादिराहित्यमिति भ्रमनिरासाय ।

चन्द्रिकायान्तु – आनन्दादेः शुद्धत्वं सान्तत्वसातिशयत्वरहितत्वमित्युक्तम् । तेषां तु – उरुत्वमुत्तमत्वम्, बहुलत्वं बहुभावशक्तिः । तथा च – शुद्धत्वमानन्दादीनामिव उरुबहुलयोरपि विशेषणमित्याशयः । तेन – उरुबहुलविशेषणयोर्वैयर्थ्यशङ्का परास्ता ।

**चिन्तेति** ॥ 'चिन्तामुखरे'त्येव सिद्धे सन्तापादीनां चतुर्णां ग्रहणं तेषां चिन्तासमकक्षत्वेन महादोषत्वसूचनाय । तदन्येषां दोषणामेतत्साम्यनिरासाय अन्यपदार्थत्वेन ग्रहणम् । सर्वसाधारणदोषनिरूपणप्रसङ्गात् । लेपः पापसम्बन्धो ज्ञेयः । पुण्यसम्बन्धस्तु अन्यपदार्थत्वेन ग्राह्यः ।

चन्द्रिकायान्तु – लेपः पुण्यपापसम्बन्ध इत्युक्तम् । यद्यपि पुण्यस्य अदुःखरूपत्वात् दुःखसाधनत्वाभावाच्च न दोषरूपत्वम् – तथापि कस्य चिद्गुणोऽपि कस्यचित् दोषो भवति । ईश्वरगुणस्यापि बहुभुक्त्वस्य नृषु दोषत्वदर्शनात् । ईश्वरे पुण्यसम्बन्धज्ञातुरनर्थदर्शनाच्च तत् युक्तमिति द्रष्टव्यम् ।

(अभिनवचन्द्रिका)

श्रुतिः=यथाशक्तिश्रवणम् । मतिः=यथाशक्तिमननम् । नियतध्यानं=स्वयोग्योपासनम् । ज्ञानम्=साक्षात्कारः । स एवयोगः उपायः । चिन्तासन्तापेत्यादिना स्वरूपातिरिक्तदोषान्निराकृत्य स्वरूपदोषानपि निराचष्टे – **अमलमिति** ।। न मलम् अमलं दोषात्मकं नेत्यर्थः । इममेवाभिप्रायं मनसि निधाय चन्द्रिकायाम् 'अमलं = मुमुक्षूपास्य'मिति तात्पर्यार्थ उक्तः ।

सूत्रकर्तुराप्तत्वं सूचयन् मङ्गलान्तरं निबध्नाति – **याश्चेति** ।। 'भारतपारिजातसुतरुः, सद्ब्रह्मसूत्राऽमृतम्, तन्त्रपुराणसन्मणिगण' इति विशेषणत्रयेण वक्त्रानुकूल्यं सूचितम् । निर्जरैरित्यनेन श्रोत्रानुकूल्यम् । याश्चेत्यनेन प्रसङ्गानुकूल्यम् । सूत्रकाराऽऽप्तभावस्मरणस्य महाफलेहतुत्वात् तत्सूचनं कृतमित्यवधेयम् । (२)

**स्वान्तेति** ।। **निकृन्तन** इति ।। कृती छेदने, ततो ल्युट् 'इदितो नुम् धातो' (पा.सू. ७-१-५८) रिति नुमागमः 'युवोरनाकौ' (पा.सू. ७-१-१) इति अनादेशे कृन्तनमिति रूपं साधु । ननु– इदित इत्युच्यते, न चाऽयमिदित् इति चेत्, न– 'धातो'रिति योगविभागेन नुमङ्गीकारात्, तदुक्तं 'शेमुचादीनाम्' (पा.सू. ७-१-५९) इति सूत्रभाष्ये 'शेतृम्फादीना'मिति वार्तिकं प्रत्याचक्षाणेन भाष्यकृता 'अथवानैवं विज्ञायते 'इदितो नुम् धातो'रिति कथं तर्हि 'इदितो नुम्', ततो 'धातो'रिती'ति ।। (३)

**श्रीमध्वेति** ।। तत्वमार्गगमनस्य तदुपजीवनेन विनाऽयोगेन तस्यैव मुख्यगुरुत्वात् 'गुरोर्नाम न गृह्णीयात्' इत्यनेन निषिद्धत्वात् गुरुनामग्रहणस्य 'पद्मनाभतीर्था' इत्यनुक्त्वा पङ्कजनाभतीर्था इत्याह । यत्किञ्चिन्नामग्रहणं तद्भक्तिपारवश्येनेति द्रष्टव्यम् । अत एव पूर्वश्लोके 'अमन्दबोधभगवत्पादान्' इत्युक्तम् । **कृपालव इति** ।। यद्यपि – 'स्पृहिग्रही'(पा०.सू०. ३-२-१५८)त्यत्र कृपेरालुच् प्रत्ययो न विहितः तथापि व्याकरणान्तरादवगन्तव्यः । अथवा कलशवाच्ययमालुशब्दो बोध्यः । केचित्तु यद्यपि 'स्पृहिगृही'त्यत्र कृपेरालुच्प्रत्ययो न विहितः, तथापि लुशोविधानेनैव सिद्धे यदालुज्विधानं करोति तज्ज्ञापयति आचार्यः 'अन्येभ्योऽपि आलुच् प्रत्ययो भवती'ति, कथं रूपसिद्धिः शपि कृते 'अतो दीर्घो यञि'(पा.सू.७-३-१०१)ति दीर्घे गुणेऽयादेशे 'स्पृहयालुः' इत्यादिरूपसिद्धिः, तदुक्तं महाभाष्ये – एवं तर्हि सिद्धे सति यदालुचं शास्ति तज्ज्ञापयत्याचार्यः 'अन्येभ्योऽपि भवतीति'ति । ननु – 'आलुचि शीङ्ग्रहण'मिति वार्तिकं प्रत्याचक्षाणेन भाष्यकृता शयालुरिति रूपमेवाभ्यनुज्ञातं न तु कृपालुरिति रूपमिति चेत्, न – 'अन्येभ्योऽपि अयं भवती'ति भाष्ये बहुवचनप्रयोगात् कृपालुरिति

(अभिनवचन्द्रिका)

रूपं तदभिप्रेतमेव । 'संज्ञापूर्वको विधिरनित्य' इति 'पुगन्तलघूपधस्य चे(पा.सू.७-३-८६)ति गुणो न । अत एव – 'हरे कृपालो नः पाही'ति अभियुक्तप्रयोग इत्याहुः । ननु – पद्मनाभतीर्थस्यैकत्वादेकवचनेन भाव्यम् । 'युष्मदिगुरावेकेषा'मिति वचनस्य युष्मच्छब्दाभावादप्रसक्तेरिति चेत्, उच्यते – पद्मनाभतीर्थसमीपगतेषु शिष्येषु पद्मनाभशब्दो वर्तते सम्भूयबहुत्वात् 'बहुषु बहुवचन'(पा.सू.१-४-२१)मित्यनेन बहुवचनमुपपन्नमिति । यथोक्तं 'फल्गुनीप्रोष्ठपदानां च नक्षत्र' (पा.सू.१-२-६०) इति सूत्रं प्रत्याचक्षाणेन भाष्यकृता 'अयमपि योगः शक्योऽवक्तुम्, कथमुदिते पूर्वफल्गुन्यौ उदिताः पूर्वाः फल्गुन्य इति । फल्गुनीसमीपगते चन्द्रमसि फल्गुनीशब्दो वर्तते बहवस्तेऽर्थाः तत्र युक्तं बहुवचनमिति' (४)

**श्रीमद्रमारमणेति** ।। दुर्वादिनां वारयितुमशक्यत्वेन वारणसदृशानि वाक्यानि वारणशब्देन गृह्यन्ते (५)

**गङ्गासङ्गेनेति** ।। 'रथ्यामतन्तीति रथ्यातः अतसातत्यगमने ताभिः । अद्भिरिति शेषः । नैर्मल्यं सेव्यत्वम् । अनायासेनेति शेषः । विशुद्धिः सेव्यत्वम् । ततश्च एवं योजना – गङ्गासङ्गेन रथ्याद्भिरद्भिः यथाऽनायासेन सेव्यत्वं लभ्यते, तथा अनायासेन वाचां सेव्यत्वसिध्यर्थं गुरोर्गिरः वाचश्च सङ्गम्यन्ते मया मेल्यन्त इति (७)

भाष्यानारम्भणीयत्वप्रयुक्तं मङ्गलस्य वैयर्थ्यं परिहरति – **अथाविद्येति** ।। ग्रन्थादौ अथशब्दोच्चारणस्याऽऽवश्यकतया शिष्टाचारप्राप्तत्वात् अथशब्दोच्चारणेन मङ्गलान्तरमनुष्ठाय शिष्यशिक्षार्थं निबन्धनं कृतमिति द्रष्टव्यम् । अविद्यया पटलपिहितनयना इव वर्तमानैः अन्यैः मिथ्याज्ञानिभिरिति यावत् । सूत्रादर्थमुपलभ्य रचितस्य परभाष्यस्याप्रमाणत्वे सूत्रमप्रमाणं स्यादित्याशङ्कापरिहाराय, अविद्यापटलपिहितनयनैरिति विशेषणम् । सूत्रस्य प्रमाणत्वेऽपि अविद्यावृतत्वप्रयुक्तं मिथ्याज्ञानमिति भावः । अतोऽगतार्थत्वात् श्रीमद्भाष्यस्य अनारम्भणीयत्वशङ्का परास्ता । 'अखिलफलसाधनतासिध्यर्थं, निरन्तरायपरिसमाप्त्याद्यर्थं चे'ति विशेषणद्वयं नमस्कारस्येति द्रष्टव्यम् । तेन ग्रथनस्य शिष्यशिक्षार्थत्वेन कैवल्याद्यखिलफलसाधनतासिध्याद्यर्थता नास्तीत्ययुक्तमेतदिति शङ्का परास्ता । ननु सूत्रशब्दस्य सामान्यशब्दत्वात् तेन ब्रह्मसूत्र ग्रहणे लक्षणप्रसङ्ग इत्यत आह ।। **अत्रेति** ।। अत्र हेतुमाह – **तस्य चेति** ।। सामान्यशब्दस्य द्वे शक्ती । एका सामान्यधर्मावच्छिन्ने, अपरा मुख्ये विशेषे । तत्राऽऽद्या मुख्या, द्वितीया परममुख्या इति भावः । **तेषां चेति** ।। सर्वेषां सूत्राणामेकवाक्यताभिप्रायेण प्राक् ब्रह्मसूत्रमिति एकवचनप्रयोगः । इदानीं तु सर्वाण्यपि सूत्राणि प्रत्येकमवान्तरा ब्रह्मविद्या इत्यभिप्रेत्य

(अभिनवचन्द्रिका)

बहुवचनप्रयोगः कृतः । **दोषवानपि स्यादिति** ।। जिज्ञासाधिकरणे जीवाऽभेदेन पूर्वपक्षे प्राप्ते तस्य गुणपूर्णत्वेन जीवस्य दोषित्वेन विरुद्धधर्माधिकरणात्वात् भेदः साधितः । गुणपूर्णत्वसिध्यर्थं प्रथमाध्याये समन्वयो निरूपितः । युक्त्यादिभिरुक्तसमन्वये निरोधिते विरुद्धधर्माऽधिकरणत्वाभावेन केवलं जीवाऽभिन्नः स्यात्, अपितु – दोषवानपि स्यादित्यर्थः । **विशिष्टेति** ।। नारायणशब्दस्य विशिष्टगुणवाचकत्वप्रदर्शनं च न मया नमस्कार्यत्वेन ज्ञापितं ब्रह्म निर्गुणं, किन्तु विशिष्टगुणाभिधायकनारायणशब्दवाच्यत्वात्सगुणमेव । निर्गुणस्य वन्ध्यापुत्रोपमत्वेन तदुपासनाया निष्फलत्वादिति सूचयितुम् । ननु नारायणशब्दस्य रूढत्वाद्योगप्रदर्शनमयुक्तम् । अखण्डवृत्त्यवयववृत्त्योः समावेशायोगादित्यत आह– **नगनाकादिशब्दवदिति** ।। आदिशब्देन पङ्कजादिशब्दा ग्राह्याः । नगनाकादिशब्दानां रूढत्वेऽपि योगस्य दृष्टत्वात् न विरोधः । विरोधस्य दर्शनैकापोद्यत्वादिति भावः । नगशब्दवदित्येतावता पूर्णे नाकादिशब्दग्रहणमनेकस्थलेषु सहचारप्रदर्शनाय । ननु अरविरुद्धगुणाश्रय इति निर्वचने अरशब्दस्य विरुद्धार्थकनञ्समासे, अरशब्दवाच्यदोषाश्रयो न भवतीति निर्वचने अरायणशब्दस्य अन्यार्थकनञ्समासे, न अरमणं येनेत्यादिनिर्वचने च अरशब्दस्य अभावार्थकनञ्समासे च, नञो 'नलोपो नञ' इति नलोपे 'तस्मान्नुडची'(पा.सू.६-३-७४)ति नुडागमे च अनरायण इति भवेत् कथं 'नारायण' इतीति चेत्, नञः प्रकृतिभावाश्रयणेन रूपाङ्गीकारात् । प्रकृतिभावविधायके 'नभ्राडित्यादिसूत्रे नारायणशब्दो न गृहीत इति चेत् । इदं तावदयं प्रष्टव्यः – किमर्थं 'नासत्यनमुचिनकुले'त्यादीनां ग्रहणम्, 'नभ्राण्नपान्नवेदास्सुप्रकृत्ये'त्येव सूत्रं किं न कृतमिति, तावदेव सूत्रं चेत् प्रामाणिकानां नासत्यादीनां रूपाणां सिद्धिर्न स्यादिति तेषां ग्रहणमिति चेत् तर्हि – नारायणशब्दस्यापि उक्तनिर्वचनविशिष्टस्य प्रमाणसिद्धत्वात् 'नभ्रा'डित्यादिषूपसङ्ख्यानमिति गृहाण । तदुक्तं सुधायाम् – 'ननु नञ्समासे 'नलोपो नञ इति प्राप्नोति, न – 'नभ्राड्' (पा.सू.६-३-७५) इत्यादिषु अस्य वक्तव्यत्वा'दिति । नारायणशब्दस्य यौगिकत्वे रूढत्वाभावप्रसङ्गेन 'पूर्वपदात्संज्ञायामग' (पा.सू.८-४-३) इति णत्वाप्राप्तिशङ्कां मनसि कृत्वा योगरूढत्वाङ्गीकारेण 'पूर्वपदात्संज्ञायामग' इत्यनेन णत्वाभिधानात् । अयमर्थकलापः सुधाऽभिमतो द्रष्टव्यः । अन्यथा प्रकारान्तरेण णत्वानुपपत्तिशङ्काभावात् 'पूर्वपदात्संज्ञायामग' इति णत्वमिति सुधावाक्यमनर्थकं स्यादिति ।।

**चन्द्रिकायां तु – 'नगनाकादिशब्दवदिति** ।। ननु – नभ्राण्नपा'दित्यादिसूत्राभ्यां नगनाकशब्दयोर्नलोपाभाव उक्तः । नारायणशब्दे तु नेति कथं तद्दृष्टान्तीकरणमिति चेत्, मैवम् –

(अभिनवचन्द्रिका)
स्त्रैणार्थ इत्यत्र 'स्त्रीपुंसाभ्या'मित्यादिना विहितस्य नञो नलोपाभावार्थं 'नलोपो नञ' इति सूत्रे 'रात्रेः कृतिविभाषे'(पा.सू.६-३-७२)त्यतोऽनुवृत्तायाविभाषाया व्यवस्थितविभाषात्वस्य न्यास एवोक्तत्वेन नारायण इत्यत्रापि नलोपाभावाद्युपपत्ते'रित्युक्तम् । तेषां तु – नगनाकादिशब्दवदित्यादिवाक्यस्य सिद्धान्त्यभिप्रेतमर्थमजानता पूर्वपक्षिणा दृष्टान्तदार्ष्टान्तिकयोर्वैषम्ये शङ्किते न ब्रूमो वयं नलोपाभावविषये नगनाकादिशब्दा दृष्टान्त इति । किं तर्हि – पूर्वोक्तरीत्या रूढत्वाद्यौगिकत्वं न सम्भवतीति शङ्कापरिहाराय योगरूढ्योः समाहारप्रदर्शनाय नगनाकादिशब्ददृष्टान्त उपात्तः । नलोपाभावविषये तु स्त्रैणार्थ इत्यादिशब्ददृष्टान्त इत्याशयः । एतेन दृष्टान्तदार्ष्टान्तिकयोर्वैषम्ये शङ्किते तत्परिहारं मनसि निधाय विभाषाऽनुवृत्त्या नलोपाभावकथनमसङ्गतमिति शङ्का परास्ता । एतेनैव नगशब्दे वैकल्पिकप्रकृतिभावविधानात् नाकशब्दे च नित्यं तद्विधानात् नगवच्चेन्न नाकशब्दवत्, नाकवच्चेन्न नगशब्दवत् इति । नगशब्दवदिति वा नाकशब्दवदिति वा वक्तव्यं न तु नगनाकादिशब्दवदिति । तथा प्राथमिकत्वात् नभ्राडादिशब्दवदिति वक्तव्यमित्यादिक्षुद्रोपद्रवाः परिहृताः । यदेतद्विभाषाऽनुवृत्त्या समाधानकरणं तत् व्यासतीर्थश्रीमच्चरणानां नाभिप्रेतम् किन्तु गुडजिह्विकात्वेनाभिहितम् । विभाषानुवृत्तेः सूत्रकारानभिमतत्वात् । तथा हि – यदि नलोपसूत्रे विभाषानुवृत्तिः, साच व्यवस्थितविभाषा स्यात् । तर्हि व्यवस्थितविभाषयैव 'नभ्राण्नपात्नवेदा' इत्यादिरूपसिद्धेः सम्भवात् इदं न प्रणीयात् । प्रणीतवांश्च सूत्रं तज्ज्ञापयत्याचार्यो नलोपसूत्रे न विभाषाऽनुवृत्तिरिति । एतदेवाऽभिप्रेत्य न्यास एवोक्तत्वादित्युक्तम् । स्वाभिप्रेतं च समाधानं यद्वानसमासोऽस्त्वित्युक्तम् ।।

**देवताननतिसमनन्तरं गुरूनपि नमतीति** ।। अन्तर्णीतण्यर्थमेतत् । नमयतीत्यर्थः । मया देवताप्रणामानन्तरं गुरुप्रणामं विधाय ग्रन्थारम्भः कृत इति भवद्भिरपि तथाऽनुष्ठेयमिति गुरुप्रणामनिबन्धनं सूचयतीत्यर्थः । **स्वस्य गुरुदेवताभेद इति** ।। चशब्देन गुरुदेवताभेदमनूद्य अंशे अपिशब्देन गर्हयामास । द्वयोर्लक्ष्मीव्यासयोर्गुर्वोर्मध्ये महालक्ष्म्या देवताभेदेऽपि व्यासस्य तदभावादिति भावः । इममेव विशेषं सूचयितुं गुरुदेवताभेदो नास्तीति अनुक्त्वा, अरुचिं सूचयतीत्युक्तम् । ननु– तथापि महालक्ष्म्या एव नमस्कारः कर्तव्यः । न तु व्यासस्येत्याशङ्क्याह – **यद्यपीति** ।। गुरुर्व्यासः एकस्यैव गुरोरभेद इतिसूचनाय गुरुरिति एकवचनप्रयोगः । अन्यथा गुरूनिति प्रकृतत्वात् गुरव इत्येवाऽवक्ष्यत् । इति शब्दः श्लोकार्थसमाप्तिद्योतकः । इतिशब्दात्परं ज्ञातव्यमिति शेषो द्रष्टव्यः ।

(अभिनवचन्द्रिका)

**भावबोधे तु** – ननु देवतासमुच्चायकचशब्दसद्भावात् अपिशब्दः किमर्थ इत्यत आह – **स्वस्य चेति** ।। कथमपिपदेन अरुचिः सूचितेत्यत आह – **यद्यपीति** ।। अनेन अपीत्येतत् तथापीति व्याख्यातं भवति । **नतिरितीति** ।। प्रकारवाचीतिशब्दस्य इत्यरुचिं सूचयतीत्यन्वयो द्रष्टव्य इत्युक्तम् । तत्र 'भेदे अरुचि'मिति अंशभेदेऽरुचिरुक्ता । यद्यपि विशेषानुग्रहार्थं पृथक् नतिरिति नारुचिप्रकारः तथापि – अनेन अरुचेः सूचितत्वात् इत्यरुचिं सूचयतीत्यन्वय इत्युक्तम् ।

एवमपि कथमरुचिः सूचितेति चेत् इत्थम् – यदि गुरुदेवतयोर्भेद एव स्यात् तर्हि अनुग्रहार्थमित्येव ब्रूयात् । गुरोः प्रागप्रणतत्वात् । न चैवम् । किन्तु विशेषानुग्रहार्थमित्याह । तेन मन्यामहे स्वगुरोर्देवताभेदसूचने तात्पर्यमिति । एतेन – चशब्देन भेदं विधाय अपिशब्देन निरासे 'माता वन्ध्ये'तिवत् व्याहतिः स्यादिति शङ्का परास्ता । **तत्स्मरणस्य महाफलहेतुत्वाच्चेति** ।। न केवलं प्रवृत्त्यर्थं सूचनम् । अपि तु सूचनाभावे शिष्याणां स्मरणायोगेन महाफलाभावप्रसङ्गात् स्मरणार्थं सूचनं कृतमित्यर्थः । मङ्गलमिव ग्रथनमपि शिष्टाचारपरंपराप्राप्तत्वेन विघ्नविघाताद्यर्थमिति भ्रमनिरासायाऽह– **नमस्काराधिकार्यादीति** ।। अधिकार्यादिसूचनग्रहणं दृष्टान्तार्थम् । अधिकार्यादिसूचनमिव मङ्गलनिबन्धनमपि शिष्यशिक्षार्थं न तु विघ्नविघाताद्यर्थमित्यर्थः ।

**चन्द्रिकायां तु** ।। – 'विघ्नाभावस्य नमस्कारेणैव सिद्धेर्ग्रथनं व्यर्थम् । एवमधिकार्यादिसूचनस्य प्रवृत्त्यङ्गतया कर्तव्यत्वेऽपि न महाफलार्थं तत्कार्यम् । तत्स्मरणेनैव महाफलसिद्धेरित्यत आह – नमस्काराधिकार्यादिग्रथनसूचने इती'त्युक्तम् । **अयमाशयः** – 'तत्स्मरणस्य महाफलहेतुत्वाच्चे'त्यस्य वाक्यस्य सिद्धान्त्यभिमतार्थमजानता भाष्यकारमहाफलार्थं सूचनमिति विपरीतार्थं जानता पूर्वपक्षिणा न महाफलार्थं कर्तव्यं तत्स्मरणेनैव महाफलसिद्धेरिति शङ्किते तद्विवरणार्थमधिकार्यादिग्रथनसूचने इत्याद्यंशः प्रवृत्त इति ।

न ब्रूमो वयं सूचकमहाफलार्थं सूचनमिति । किं तर्हि न केवलं शिष्यस्य प्रवृत्त्यर्थं सूचनम् किन्तु महाफलार्थमिति विवरणप्रकारो बोध्यः । एतेन महाफलार्थं सूचनं न कर्तव्यं तत्स्मरणेनैव महाफलसिद्धेरिति शङ्किते तत्समाधानमनभिधाय शिष्यशिक्षार्थत्वरूपप्रयोजनान्तरवर्णनमसङ्गतमिति शङ्का परास्ता । **नारायण एव विषय इति** ।। नारायणस्य स्वरूपेणोक्तत्वेऽपि विषयत्वेनानुक्तत्वात् सूचितत्वोक्तिरुपपन्नेति भावः ।

## ताम्रपर्णी श्रीनिवासविरचिता वाक्यार्थमुक्तावली

श्रीगुरुभ्यो नमः ।। श्रीवेदव्यासाय नमः ।। हरिः ॐ ।

वन्देऽहमानन्दचिदादिविग्रहं चिन्तादिदोषातिविदूरचित्तम् ।
सद्भिर्विरक्त्यादिभिरञ्जसैव ज्ञेयं मुकुन्दं श्रुतिमुक्तिगम्यम् ।

पान्तु नः श्रीमदाचार्यश्रीपदाम्बुजरेणवः ।
नमत्सुरकिरीटस्थान् ये मणीनतिशेरते ।। २ ।।

जयतीर्थार्यतरणेर्गोगणोऽस्तु दृशे मम ।
नुदन्नज्ञानतिमिरं मोक्षमार्गं प्रदर्शयन् ।। ३ ।।

चन्द्रिकाभावबोधादिपूर्वग्रन्थसमाश्रयात् ।
गुरूंश्च तद्गुरून्नत्वा टीकार्थो वर्ण्यते मया ।। ४ ।।

श्रीविठ्ठलार्यपुत्रेण श्रीमत्तीर्थार्यसेविना ।
श्रीनिवासेन कृत्वा हि रहस्यां पञ्चिकां पुनः ।। ५ ।।

श्रीमज्जयतीर्थचरणो भाष्याद्यपद्यविशेषणप्रपञ्चनपूर्वकं मङ्गलमाचरति । शुद्धेति ।। मुकुन्दाभिधं ब्रह्म अलं सम्यक् श्रद्धातिशयपूर्वकं वन्दे इत्यन्वयः । अत्र शुद्धत्वमानन्दस्योरुत्वं संविद्द्युतिबलानां बहुलत्वमौदार्यवीर्ययोर्विशेषणम् । अत्र आनन्दस्य शुद्धत्वं दुःखासमानाधिकरणत्वं, जीवसुखस्य मुक्तौ दुःखासमानाधिकरणत्वेऽपि संसारे तत्समानाधिकरणत्वान्न जीवसुखेऽतिव्याप्तिः । नापि रमासुखेऽतिव्याप्तिः । स्वातन्त्र्येण दुःखासमानाधिकरणत्वस्य विवक्षितत्वात् । स्वातन्त्र्येण दुःखासमानाधिकरणत्वरूपं शुद्धत्वं विवक्षित्वा मुक्तसुखे नित्यमुक्तसुखे चातिव्याप्तिपरिहारेऽपि दुःखसमानाधिकरणात्यन्ताभाववत्वं रमासुखस्य नैवं जीवसुखस्येति विवेको द्रष्टव्यः । ननु चिन्तादिदोषराहित्येन आनन्दस्य दुःखासामानाधिकरण्यं लब्धमिति चेन्न । दुःखादिदोषवत्वादीश्वरानन्दस्य दुःखासमानाधिकरणत्वं कथमिति शङ्कनिरासाय हेतोरसिद्धिव्युत्पादनाय चिन्तेति विशेषणस्य प्राप्तत्वात् । यद्वा शुद्धत्वं सान्तत्वसातिशयत्वाव्यक्त्यादिदोषराहित्यं विवक्षितम् । तच्च रमासुखादौ नास्त्येवेति ज्ञेयम् । अत एव छान्दोग्यव्यासतीर्थीये सत्सुखमहाज्ञानेत्यत्र सुखस्य सत्वमुत्पत्तिनाशदुःख-सम्भिन्नत्वाल्पत्वादिराहित्यमित्यर्थद्वयं सङ्गृहीतम् ।

(वाक्यार्थमुक्तावली)

ननु सान्तत्वसातिशयत्वादिराहित्यं संविदादिष्वप्यस्तीति कथमिदमानन्दमात्रस्य विशेषणमिति चेन्न । संविदः उरुत्वं स्वपरगताखिलविशेषविषयत्वम् । अत एव निरतिशयत्वं च । द्युतेः सर्वप्रकाशकत्वं तस्य भासा सर्वमिदं भातीत्यादेः । परप्रकाशनियामकत्वं च ''तमेव भान्तमनुभाति सर्व''मित्यादेः । परप्रकाशाभिभावकत्वं च न तत्र सूर्यो भातीत्यादेः ।

बलस्योरुत्वं सर्वबलाभिभावकत्वं निरतिशयत्वं च । 'अभीदमेकमेको अस्मि निष्पालभीद्वाकिमूर्तयः करन्ती'त्यादेः । औदार्यस्य बहुत्वमतीतानागतब्रह्मादीनां पददातृत्वं, रमायाः विविधविभूतिदातृत्वं, अन्ततो मुक्तानां सायुज्यलक्षणमुक्तावात्मपददानम् । स्त्रीरूपो मिथुनीभवेदित्यादेः स्त्रीरूपस्य ब्रह्मणः पतितया स्वप्रदानं च । वीर्यस्याध्यवसितान्तगामित्वं 'श्रुण्वे वीर' इत्यत्र विरोध्यवसितान्तगामीति सुधायां व्याख्यातत्वात् । तस्य बहुत्वं किं नाम अनन्तकालादारभ्य यद्यत्संकल्पितं तदन्तगामित्वम् । न चातीतानागतवर्तमानाखिलविशेषविषयसंविदः तादृशसर्वप्रकाशकद्युतेरतीतानागतसर्वबलाभिभावकस्य बलस्योक्तविधस्यौदार्यस्य वा सांतत्वं सातिशयत्वं च सम्भवतीत्युरुत्वादिविशेषणेनैव तल्लाभात्पृथगवक्तव्यत्वादानन्दस्योर्वित्यादि सान्तत्वराहित्यालाभात् पृथग्विशेषणम् । यत्तु चन्द्रिकायां सान्तत्वसातिशयत्वादिराहित्यमानन्दादेरिति शुद्धत्वस्य सर्वविशेषणत्वमुक्तं तदुरुबहुपदाभ्यां संख्यापरिमाणप्रकर्षोऽभिधीयते । सांतत्वराहित्यस्यापदार्थत्वादित्यभिप्रेत्येति ज्ञेयम् । आनन्दस्य फलरूपत्वात्तदनुभवस्योच्चताहेतुत्वात् द्युत्यात्मकदेहानुसन्धानस्यानन्दप्रयोजकत्वान्न दानात् परमं सुखमित्यौदार्यसुखप्रयोजकत्वोपपत्तेश्चानन्दादीनां स्वपदेन ग्रहणम् । अत्र शुद्धेत्यादिना भाष्यस्थगुणपदस्य नैयायिकप्रसिध्या दुःखादिकं वैदिकप्रसिध्या सत्वादिकं बाह्यप्रसिध्याऽमितभुक्त्यादिकं च नार्थः इत्युक्तं भवति । वीर्याद्दिदेहमित्यनेन गुणैरुदीर्णमित्यनेन प्राप्तगुणगुणिभेदशङ्का निरस्ता । तथा च श्रुतिः यदात्मको भगवान् तदात्मकी व्यक्तिः इत्यादिका । वीर्याद्यात्मकमित्यनुक्त्वा देहपर्यन्तधावनेन नारायणस्य देहवत्वे दुःखादिप्रसङ्गो अन्तवत्वं च विदेहत्वेऽसर्वज्ञत्वं च स्यात् । यद्वक्ष्यति 'करणवत् चेन्न भोगादिभ्यः' 'अन्तवत्त्वमसर्वज्ञता वे'ति शङ्का निरस्ता । अप्राकृतगुणवद्देहत्वान्न कश्चिद् दोष इति । दोषवर्जितमित्येतद्दोषस्वरूपप्रदर्शनेन नैयायिकमतरीत्या रागद्वेषमोहा दोषास्तद्वर्जितम् इत्यल्पार्थभ्रमं निरस्यन्नशेषातिपदाभ्यां विवृणोति ।। चिन्तेत्यादिना ।

चिन्ता 'किं मया कार्यमि'त्यादिरुपा चित्तवृत्तिः, सन्तापः आध्यात्मिकादितापत्रयं, लेपः पुण्यपापसम्बन्धः । चिन्तायाः कर्तव्याज्ञानपूर्वकत्वात् संविद्विरोधित्वेन सुखविरोधित्वेन च तद्ग्रहणम् ।

(वाक्यार्थमुक्तावली)

''चिन्तासमो नास्ति शरीरशोषणम्''इति वचनात् । तापत्रयस्य क्लेशहेतुत्वात् पुण्यपापसम्बन्धस्योद्भवादि-हेतुत्वाच्च प्राधान्येन तेषां ग्रहणम् । चिन्तादीनि मुखानि येषां सन्तीति चिन्तादिमुखराः ते च ते दोषाः इति विग्रहः । 'मुखकुञ्जरेभ्यो रः' इति मत्वर्थे रः । तथा चान्यत्र विधिभवमुखरैः सर्वदा सेव्यमानमिति । यद्वा मुखरशब्द एव प्रधानवाची । खसन्मुखरितं सद्भिः प्रधानीकृतमिति दशम-तात्पर्योक्तेः । भाष्ये ज्ञेयं गम्यमिति साध्यसाधनभावगर्भविशेषणद्वयं ज्ञानस्य गमनसाधनत्वादिति भावेन ज्ञानगमनयोः कर्तृसापेक्षत्वादिति पदद्वयं विवृणोति **सद्भिरिति** ।

ज्ञानोपायप्रदर्शनं **वैराग्येत्यादि** । श्रुतिः श्रवणं वाक्यार्थज्ञानं मतिर्मननं युक्तिभिरनुचिन्तनम् । अनुमितिरिति यावत् । नियतध्यानं गुरूपदिष्टस्वयोग्यगुणरूपध्यानं तज्जन्यं यदपरोक्षज्ञानं तदेव योग उपायः तेन गम्यं प्राप्यम् । नम्यत्वप्रयोजकयोः विशिष्टेष्टत्वयोर्गम्यमित्यन्तैर्विशेषणैर्लब्धत्वात् ज्ञेयत्वमित्येतदधिकृतत्वप्रदर्शनपरतया प्रकारान्तरेण विवृतम् । **वेदान्तवेद्यमिति** । वेदानामन्तो निर्णयो येन ब्रह्मसूत्रेण तद्वेद्यमित्यर्थः । वेदान्तवेद्यत्वं च न लक्षणयेति भावेनोक्तमलमिति ।

ननु आद्यसूत्रे ब्रह्मजिज्ञासेति ब्रह्मपदप्रयोगात्कथं भाष्ये नारायणस्य वेदान्तज्ञेयत्वमुक्तमित्यत उक्तं मुकुन्दाभिधं वेदान्तवेद्यमिति ।

ननु वेदान्तवेद्यस्य ब्रह्मणो मुकुन्दाभिधत्वं न सम्भवति । वेदान्तवेद्यस्य मुमुक्षूपास्यत्वात्सगुणस्य मुकुन्दस्य मायाशबलत्वादित्यत उक्तममलमिति । मायाबन्धादिरहितमत एव मुमुक्षूपास्यमिति ।

ननु वेदान्तवेद्यब्रह्म जीव एव । अत एव ब्रह्मसूत्रस्य शारीरकत्वप्रसिद्धिरित्यतश्चोक्तममलमिति । न तु सत्वादिगुणबद्धजीवाख्यमित्यर्थः । गुणबद्धात्मविज्ञानाद्गुणनिवृत्तिरूपमोक्षायोगात् इति भावः । यद्वा श्रियं वसाना अमृतत्वमायन्निति श्रुतेः प्रकृतेर्मुमुक्षूपास्यत्वात्प्रकृतिः परमं ब्रह्मेति ब्रह्मशब्दवाच्यत्वाच्च श्रीतत्वमेव वेदान्तवेद्यं ब्रह्मेत्यत उक्तं मुकुन्दाभिधममलं वेदान्तवेद्यं ब्रह्मेति । श्रियः पराधीनत्वादमलत्वाभावान्न वेदान्तवेद्यं ब्रह्म श्रीतत्वमिति भावः । अथवा सगुणज्ञानान्मोक्षायोगान्निर्गुणं निराकारं चिन्मात्रं ब्रह्म लक्षणया वेदान्तवेद्यं न तु मुकुन्दाभिधं सगुणमिति अत उक्तं मुकुन्दाभिधममलं निर्गुणनिराकारत्वादिदोषरहितमलं मुख्यया वृत्त्या वेदान्तवेद्यं ब्रह्म वन्दे इति । निर्गुणस्य ब्रह्मणो बुद्धावनारोहाच्च शशशृङ्गायितस्य कयापि वृत्त्या वेदान्तवेद्यत्वाभावादिति भावः ।

अत्राद्येन विशेषणद्वयेन लक्षणं विशिष्टत्वं चोक्तम् । सद्भिर्गम्यमित्यनेनेष्टत्वम् । गमनोपायप्रदर्शनेन

(वाक्यार्थमुक्तावली)

च वेदान्तवेद्यमित्यधिकृतत्वं वस्तुनिर्धारकं प्रमाणं च उक्तं भवति । अध्यायचतुष्टयव्याख्यानरूपत्वं तस्याद्यपद्यस्य स्फुटमेव । अनेनैव

अधिकारं फलं चैव प्रतिपाद्यं च वस्तु यत् ।
स्मृत्वा प्रारभतो ग्रन्थं करोतीशो महत्फलम् ॥

इत्युक्तमधिकार्यादिकं च सूचितम् ।

सूत्रस्य प्रामाण्यं सूचयन् तत्प्रमाणेन स्मृत्वा मूलगुरुं व्यासं सम्प्रार्थयते । **'याश्चेति'** । ससुरेन्द्रयाश्चेति प्रयोगात् छुत्वाभावः । तथात्वे याचनेति स्यात् । विद्याया इन्दिराभिमन्यमानत्वात् वेदविद्यायाः प्रादुर्भावमात्रेणेन्दिरासाम्याद् विद्येन्दिरेत्युक्तम् । भारतस्याशेषपुरुषार्थप्रदतया भगवत्पादैः भारतपारिजात-मधुभूतामिति पारिजातसाम्यस्योक्तत्वात् पारिजातसाम्यम् । उदधिमथनेनामृतोत्पत्तिवद्वेदविद्याविचारेण सूत्राणामुत्पन्नत्वान्न्यायामृतार्णवमिति भागवत्पादैरुक्तत्वात् अमृतसाम्यम् । भागवतादितन्त्रपुराणानां भगवन्महिमाप्रकाशवत्वेन मणिसाम्यम् । शुकस्य भागवताद्युपदेशे स्वमुखचन्द्रिकया सज्जनाह्लादकत्वादिन्दुसाम्यम् । अत्र यत उदैदिति आदिना शास्त्रप्रणयनोक्त्या विवक्षितार्थतत्वज्ञानादिवक्त्रानुकूल्यं, निर्जैरीरिति श्रोत्रानुकूल्यं, याश्चेति प्रसङ्गानुकूल्यं च सूचयतीति आप्तिमूलता ब्रह्मसूत्राणां सूचिता । ब्रह्मसूत्रपदेन ब्रह्मप्रतिपादकश्रुत्यर्थनिर्णायकन्यायसूचकत्वोक्त्या श्रुतियुक्तिमूलत्वं सूचितम् ।

भाष्यस्य व्याख्येयत्वप्रयोजकं सफलत्वं गाम्भीर्यादिकं च दर्शयन् भाष्यकृतं प्रणमति 'स्वान्तेति' । स्वान्तध्वान्तनिकृन्तनविषये तापत्रयोन्मूलनविषये सूर्यचन्द्रज्योत्स्नयोरुपरागादौ ह्रासेन सदोषत्वाद्भाष्यस्य निर्दोषत्वात्तेन तज्जय इति भावेनोक्तं निर्दोषमिति । एतेन सूर्यांशूनां चन्द्रचन्द्रिकायाश्च स्वान्तध्वान्तनिवर्तकत्वतापत्रयनिवर्तकत्वयोरप्रसक्तेः कथं भाष्येण तज्जय इति निरस्तम् । भाष्यस्य स्वविषये निर्दोषत्वात्सूर्यचन्द्रकिरणयोः स्वविषये सदोषत्वाद्भाष्येण तज्जय इति विवक्षितत्वात् । अत्यल्पध्वान्तबाह्यतापनिवर्तकसूर्यचन्द्रकिरणापेक्षया भाष्यगोगणस्यान्यासाध्यतापत्रयनिवर्तकत्वात् भाष्येण तज्जय इति वाऽभिप्रायः । जितसिन्धुराजत्वे हेतुरमितमिति । प्रतिपाद्यार्थानामनन्तत्वादिति भावः । कृन्तनम् इत्येतत् कृति छेदन इति धात्वन्तरस्य रूपं न तु कृती च्छेदन इतीकारान्तस्य तथात्वे निकृन्तन इति न स्यात् । यद्वा इदितो नुम्धातोरिति सूत्रे धातोरिति योगविभागेन इदित्वाभावेऽपि महाभाष्ये नुमङ्गीकृतत्वेन कृती च्छेदन इति धातौ इदित्वेऽपि नुमः सम्भवान्निकृन्तनं इति साधुः ।

(वाक्यार्थमुक्तावली)
निकर्तन इति केचित्पठन्ति । **कृपालव इति** । यद्यपि स्पृहिगृहीत्यादिना कृपेरालुच्प्रत्ययो न विहितः । तथापि लुङमविधायालुच्करणमन्यत्रापि यथा स्यात्तेन कृपालुरित्यादिसिद्धेरिति वैय्याकरणवचनादेतत्साधु । अत एव कौमुद्यां हरे कृपालो नः पाहीत्युक्तम् । यद्वा कर्कर्यालुर्गलन्तिकेत्यभिधानात् कलश-वाचकोऽयमालुशब्दः । कृपापूर्णकलशा इत्यर्थः । यद्वा कृपां लातीति कृपापदोपपदाल्ला दान इति धातोः डुप्रत्यये कृपालुरिति रूपम् । कृपालुः सूरतः समाः इत्यमरकोशव्याख्यानवन्दिभट्टीयदुर्घटवृत्यादौ च कृपां लातीत्यस्यैव साधुतोक्तेः । दयालव इति कचित्पाठः । **तत्कृपया** ब्रह्मादीनां कृपया ।

व्याकुर्वे इत्यात्मनेपदलब्धमात्मगामिफलं दर्शयति । **गङ्गेति** । सङ्गम्यन्ते मदीयया वाचा । यद्वा नास्माकं भाष्यव्याख्याने शक्तिः किं नाम मदीयाया वाचो विशुध्यर्थं गुरोर्भाष्यरूपा गिरः व्याख्येयत्वेन न्यायविवरणादिरूपा गिरो व्याख्यानत्वेन सङ्गम्यन्ते इत्यर्थः । अत एव प्रायशोऽधिकरणेषु न्यायविवरणोक्तपूर्वपक्षसिद्धान्तयुक्त्युपन्यासः । शास्त्रयोनिसूत्रे गीताभाष्योक्तमपरव्याख्याननिराकरणं द्युभ्वादिसूत्रे तत्वनिर्णयोक्तं प्रधानं संयोज्य व्याख्यातम् । स्वाप्ययसम्पत्योरन्यतरापेक्षमित्यत्र वृहद्भाष्यानुसारेण विवरणं च कृतम् । रथ्याद्भिरित्यत्र ऋक्पूरब्धूः पथामानक्ष इति समासान्तप्रत्ययस्तु पथामिति निर्देशेन तस्यानित्यत्वावगतेर्नाश्रितः । अत एव शुच्यंपि तटाकानीति महाभाष्ये प्रयोगः । भाष्यप्रतीकग्रहणेन व्याख्यानारम्भार्थोऽथशब्दः । नीयतेऽनेनेति नयनं मनः । अविद्याख्यावरणेन प्रतिबद्धमनस्कैरित्यर्थः । तदुक्तमनुव्याख्याने तमसैवान्यथामतिरिति । सुधायां च तमोगुणः प्रमाणेषु चेतःप्रवृत्तिं प्रतिबध्य प्रमाणाभासानां दोषानाच्छाद्य विपरीतज्ञानमुत्पादयतीति । तमोगुणोऽप्यविद्या-शब्देनोच्यत इति द्रष्टव्यम् । अत्र वक्तव्यं सर्वं प्रमेयमुक्तावल्यामुक्तमनुसन्धेयम् । **कैवल्येति** । कैवल्याद्यखिलफलसाधनता सिद्धिरर्थः प्रयोजनं यस्य नमस्कारस्येति विग्रहः । मङ्गलपूर्वस्यैव ग्रन्थस्य फलसाधनत्वादिति भावः । ग्रथनस्य शिक्षार्थत्वस्य वक्ष्यमाणत्वेन फलसाधनतासिध्यादिफलकत्वाभावात् । यद्वा नारायणेत्यतः पूर्वं कृतमिति शेषः । **तस्य** निरुपपदस्य सूत्रशब्दस्य । तेषां ब्रह्मसूत्राणाम् । **प्रसत्या** प्रसादेन । **सूचित इति** । अतःशब्दोक्तपुरुषार्थं प्रति विहितब्रह्मजिज्ञासायाः साक्षाद्धेतुत्वासम्भवेन जिज्ञासोत्थज्ञानप्रसादस्यार्थसिद्धत्वादिति भावः । **विशिष्टगुणानिति** । दोषाभाववत्वस्यापि गुणत्वादिति भावः । **नरसम्बन्धित्वादिति** । न रीयन्ते न क्षीयन्ते इति नराः सज्जनास्तत्सम्बन्धित्वात्सम्बन्धार्थः इति भावः । न रीयते इति नञ उपपदाद्रीङ् क्षये इत्यस्मात्करणे 'ड'प्रत्यये प्रज्ञादित्वात्स्वार्थे अणुप्रत्यये च कृते नारमिति सिध्यतीति ज्ञेयम् । अरमणं दुःखम् । **निर्दोषवेदेति** । न विद्यन्ते

(वाक्यार्थमुक्तावली)

अराः दोषाः येषान्ते नारा वेदास्तद्वाचकनारशब्देन तस्येदमिति अणि कृते नारशब्दः तज्जन्यज्ञानवाचीति भावः । क्षयरहितत्वाच्चेति । अत्रापि नय उपपदाद्रीङ् क्षय इति धातोः कर्तरि 'ऊ'पत्यये न रीयन्ते इति नराः प्रज्ञादित्वात्स्वार्थेऽण्प्रत्यये नाराः मुक्ताः इत्यर्थः ।

ननु नञोऽभावार्थकत्वे अरशब्दस्याभावार्थकनञ्समासे नलोपो नञ इति नलोपे तस्मान्नुडचीति नुडागमे चानरायण इति भवेत्कथं नारायण इतीत्यत आह **नगेति** । 'नभ्राण्नपान्नवेदानासत्यानमुचिनकुल-नखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या । नगोऽप्राणिष्वन्यतरस्यामित्येताभ्यां नगादिशब्दस्य श्रौतप्रयोगवशेन निपातितत्वेन नारायणशब्दस्यापि श्रौतत्वात्सोऽपि तत्रोपसंख्येय इत्यर्थः । नभ्राडित्यस्यादित्वात्तद्ग्रहणे कार्ये नाकग्रहणं तु नाकेष्विति बहुवचनमाद्यर्थेऽपि भवतीति द्योतयितुम् । अत एव सूत्रक्रममनुसृत्य नाकनगादिष्विवेति नोक्तम् । तथात्वे नाकशब्दात्पराद्यर्थबहुवचनस्य व्यक्तीकरणेन विवक्षितलाभो न स्यात् । यद्वाऽदिपदेन नैकधेत्यादिनकारसमासयुक्ताः शब्दाः ग्राह्याः । तथाच निषेधार्थकनकारसमासः न नञ्समासः । तथाच न दोष इत्युक्तं भवति । 'पूर्वपदात्संज्ञायामगः' इति णत्वम् । ल्युटः टित्करणसामर्थ्यादयनशब्दोऽधिकरणे त्रिलिङ्गः इति पुल्लिङ्गत्वं च युक्तम् । देवतासमुच्चयस्य चशब्देन सिद्धेः अपिशब्दवैयर्थ्यमित्यत आह **स्वस्येति** । **गुरुदेवताभेद इति** । पृथक् नत्यादिसूचिते गुरुदैवतयोः भेदे अरुचिं सूचयतीत्यर्थः । तत्कथमित्यत आह **यद्यपीति** । अनेनापीत्येतत्तथापि भेदस्यानुचितत्वेऽपीति व्याख्यातं भवति । यद्वा गुरुदैवतयोरभेदेऽपि विवक्षाविशेषेणैव पृथङ्नतिरिति पृथङ्नतावरुचिं सूचयतीत्यर्थः । विषयादिज्ञानस्य श्रोतृप्रवृत्त्यङ्गत्वसूचनाय प्रकारं चोपपादयति **तथाहि इत्यादिना** ।

ननु ग्रन्थस्य फलसाधनतादेर्नमस्कारेणैव सिद्धेः नमस्कारग्रथनं प्रथमं अधिकार्यादिसूचनं च व्यर्थमित्यत आह **नमस्कारेत्यादिना** ।

## पाण्डुरङ्गि श्रीनिवासाचार्यविरचिता तत्त्वसुबोधिनी

श्रीवेदव्यासाय नमः

नरसिंहं संप्रणम्य मध्वादीन् सगुरूनपि ।
तत्त्वप्रकाशिकाव्याख्यां करिष्यामो यथामति ।। १ ।।

भाष्यं व्याचिख्यासुः श्रीमज्जयतीर्थचरणो भाष्याद्यपद्यस्थविशेषणार्थप्रपञ्चनपूर्वकं मङ्गलमाचरति ।। **शुद्धेति** ।। अत्र शुद्धत्वं आनन्दादेः । उरुत्वं संवित्द्युतिबलानाम् । बहुलत्वं वीर्योदार्ययोः विशेषणम् ।

(तत्त्वसुबोधिनी)

तथाऽनन्दादेः शुद्धत्वं सान्तत्वसातिशयत्वशून्यत्वादि । संविदि उरुत्वं, ईश्वरादिगताशेषविशेषविषयत्वम् । द्युतेः उरुत्वं सकलप्रकाशकत्वम् । अन्यनिष्ठप्रकाशनियामकत्वं च । बलस्याप्रतिबद्धत्वम् । औदार्यस्य बहुलत्वं मोक्षादिपुमर्थसम्बन्धित्वम् । वीर्यस्य त्वारब्धसकलकार्यनिष्पत्तिहेतुत्वमिति द्रष्टव्यम् । 'गुणैः उदीर्णम्' इत्युक्त्या प्राप्तगुणगुणिभेदशङ्कानिरासार्थं वीर्यादिस्वरूपदेहमित्युक्तम् । देहस्य परमात्मना सहाभेदस्य यदात्मको भगवान् तदात्मिका व्यक्तिरित्यादिना प्रमितत्वात् न दोषः । दोषवर्जितमित्येतद्दोष-प्रदर्शनेनाशेषातिपदाभ्यां विवृतम् । ज्ञेयमित्यत्र ज्ञातृप्रदर्शनं सद्भिरिति । तच्च ज्ञातृकथनेन वैराग्याद्युपायकथनेन च विवृतम् । श्रुतिमती श्रवणमनने । नियतध्यानं स्वयोग्योपासनम् । ज्ञानमपरोक्षम् । योग उपायः । ज्ञेयं गम्यमित्यत्र गमने ज्ञानस्य हेतुत्वमस्तीति दर्शयितुं ज्ञानयोगादित्युक्तम् । अमलं मुमुक्षूपास्यं न तु परमत इव मुकुन्दाभिधं मन्दोपास्यम् । व्याचिख्यासितभाष्यस्य मूलभूतसूत्रप्रामाण्यं सूचयन् तत्कर्तृत्वेन वेदव्यासं प्रणमति ।। याश्चेति ।। अत्र यत उदैत् विद्येन्दिरेत्यादिना वक्त्रानुकूल्यं, निर्जरैः इत्यादिना श्रोत्रानुकूल्यं, याश्चेत्यादिना प्रसङ्गानुकूल्यं च दर्शयता आप्तिमूलता सूत्राणां सूचिता । ब्रह्मसूत्रपदेन ब्रह्मपरश्रुतिव्याख्यानरूपत्वात् श्रुतिमूलत्वं, सूत्रपदेनैव न्यायव्युत्पादकत्वोक्त्या युक्तिमूलत्वं च सूचितम् । विद्यायाः लक्ष्म्यभिमन्यमानत्वात् लक्ष्मीत्वेन, भारतस्य धर्माद्यशेषपुरुषार्थदातृत्वात् पारिजातत्वेन, ब्रह्मसूत्रस्य स्वश्रवणरूपसेवनवतां मोक्षहेतुत्वात् अमृतत्वेन, पुराणानां विष्ण्वादि-तत्वप्रकाशकत्वात् मणित्वेन, शुकस्य सज्जनाह्लादकारणत्वात् इन्दुत्वेन उत्प्रेक्षा युक्तेति द्रष्टव्यम् । भाष्यस्य व्याख्येयत्वप्रयोजकसफलत्वगम्भीरत्वादि दर्शयन् भाष्यकृतः प्रणमति ।। स्वान्तेति ।। वैकर्तनांशु-व्रजादेः स्वान्तध्वान्तनिकृन्तने ह्यशक्तत्वादेव भाष्येण जितत्वम् । जितमहावैकर्तनांशुव्रजत्वे जितचन्द्रचन्द्रिकत्वे च हेत्वंतरं निर्दोषमिति ।। वैकर्तनांशुव्रजजितचन्द्रचन्द्रिकयोः ह्रासादिदोषयुक्तत्वात् इति । जितसिन्धुराजत्वे हेतुः अमितमिति । अर्थतोऽमितत्वं द्रष्टव्यम् । ग्रन्थस्य परिमितत्वात् । अत्र भाष्यस्य जितमहावैकर्तनांशुव्रजत्वचन्द्रचन्द्रिकत्वोक्त्या तद्विशिष्टाचार्यमुखस्य सूर्यचन्द्रबिम्बाधिक्यं ध्वनितम् ।

**कृपालव** इति । ननु स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच् इत्यनेन कृपेरालुच्प्रत्ययो न विहितः । तथा च कृपालव इति कथमुक्तमिति चेत् । लुशमविधाय आलुच्करणमन्यत्रापि यथा स्यात्तेन कृपालुरिति सिद्ध्येदिति वैय्याकरणवचनादेतत्साधु । अस्यायमभिप्रायः । स्पृह्यादौ आलुच् किमर्थं विहितः लुशप्रत्ययेनैव स्पृहयालुरित्यादिरूपनिष्पत्तिसम्भवात् । कथमिति चेत् स्पृहीत्यस्योपरि लुशि कृते शित्वात् सार्वधातुकसंज्ञायां शपि कृते सार्वधातुकेत्यनेन गुणे सति अयादेशे जाते अतो

(तत्त्वसुबोधिनी)

दीर्घो यञीत्यनेन दीर्घे सति स्पृहयालुरिति सिद्ध्येदेव । एवमपि आलुच्प्रत्ययो विहितः । तेनैव ज्ञायत अन्यत्रापि सम्भवतीति । तथा च कृपेरपि सम्भवतीति कृपालुरिति साधु । यद्वा कलशवाची अयमालुशब्दः । तथाच कृपापूर्णकलशा इत्यर्थः ।

**तत्कृपया** तेषां मुकुन्दादीनां नमस्कृतानां कृपया । **रथ्याद्भिरिति** । न च ऋक्पूरब्धूः पथामित्यनेन अप्रत्यये रथ्यापैरिति भवेदिति वाच्यम् । समासान्तो विधिरनित्य इत्यभिप्रेत्यैवमुक्तत्वादिति भावः । गङ्गासङ्गेन यथा रथ्याद्भिः नैर्मल्यं लभ्यते तथा मदीयाया वाचो विशुद्धिसिद्ध्यर्थं गुरोः गिरः मदीयया वाचा सङ्गम्यन्ते व्याख्यानव्याख्येयभावेन सम्बध्यन्ते इत्यर्थः । यद्वा गुरोः गिरः परस्परं गम्यन्ते सम्बद्धतया प्रकाश्यन्त इत्यर्थः । अथाविद्येति ।। मङ्गलग्रन्थारम्भयोः कृतत्त्वेन भाष्यस्य प्रतिग्रन्थ-व्याख्याप्रारम्भार्थः अथशब्दः । **फलसाधनतासिध्यर्थमिति** । फलसाधनता सिद्धिः अर्थः प्रयोजनं यस्य नमस्कारस्येति विग्रहः । मङ्गलयुक्तस्यैव ग्रन्थादेः फलहेतुत्वादिति भावः । निरन्तरायमित्यत्राप्येवमेव विग्रहः । ग्रथनस्य शिष्यशिक्षार्थत्वस्य वक्ष्यमाणत्वेन फलसाधनतासिद्ध्यादिफलकत्वाभावादिति भावः । सामान्यशब्दत्त्वात् सूत्रशब्देन सूत्रमात्रग्रहणप्रसक्तौ सकलसूत्रार्थस्य चोत्तरत्रानुक्तेः व्यर्था प्रतिज्ञा स्यादित्यतः सूत्रशब्दस्य विवक्षितमर्थमाह । **अत्रेति** । तत्र युक्तिकथनं **निरुपपदेति** । अनेन सूत्रपदं ब्रह्मसूत्रवाचकं निरुपपदत्त्वात् इत्यनुमानं सूचितं भवति । अप्रयोजकतापरिहारायाह । **तस्येति** । निरुपपदसूत्रशब्दस्येत्यर्थः । नन्वेवं निरुपपदसूत्रशब्देन सूत्रशब्दमुख्यार्थस्यैव प्राप्तावपि कुतो ब्रह्मसूत्राणा-मेव लाभ इत्यत आह । **तेषां च ब्रह्मसूत्राणां तादृशत्त्वात् सूत्रशब्दमुख्यार्थत्वादिति** । पुरुषार्थो भवतीति सूचित इति । भगवत्प्रसादस्य मोक्षहेतुत्वं अतःशब्देन संक्षिप्योक्तमित्यर्थः ।। पुरुषार्थं प्रति विहितब्रह्मजिज्ञासायाः साक्षात् हेतुत्वासम्भवे च प्रसादस्यार्थसिद्धत्वादित्यर्थ इत्यप्याहुः ।

**विशिष्टगुणानप्याचष्ट इति** । अत्र गुणशब्दः गुणोदीर्णत्वदोषवर्जितत्वज्ञेयत्वगम्यत्वरूपधर्मपरः । नारायणशब्दस्य विशिष्टगुणवाचकत्वप्रदर्शनं च तस्य ब्रह्मशब्दसमानार्थत्वात् शास्त्रार्थवाचकत्वाच्च नारायण एव शास्त्रार्थ इति दर्शयितुम् । तथाच ब्रह्मणो नम्यत्वे निमित्तमधिकृतत्वमित्युक्तं भवति । नरसम्बन्धित्वादित्यत्र नराः सज्जनाः । **न रीयत इति** । नञुपपदात् रीङ् क्षये इत्यस्मात् धातोः करणे उप्रत्यये प्रज्ञादित्वात् स्वार्थिके अणप्रत्यये च कृते नारमिति रूपसिद्धिरिति द्रष्टव्यम् । अरमणं दुःखम् । **निर्दोषवेदोत्पन्नत्वादिति** । निर्दोषवेदवाचकान्नारशब्दात् 'तस्येदम्' इत्यपि कृते नारशब्दो वेदजन्यज्ञानवाचीति भावः ।। **अरतिरहितत्वादिति** । न रीयन्तेऽनेनेति नराः नरा एव नारा इति विग्रहे कर्मणि ड्प्रत्यये स्वर्थिके अणप्रत्यये सति नारा इति सिद्ध्यतीति भावः ।

(तत्त्वसुबोधिनी)

ननु अरविरुद्धगुणाश्रय इति निर्वचने अरशब्दस्य विरुद्धार्थकनञ्समासे अरशब्दवाच्यदोषाश्रयो न भवतीति निर्वचने अरायणशब्दस्य अन्यार्थकनञ्समासे नारायणं येनेत्यादिनिर्वचने नारशब्दस्याभावार्थकनञ्समासे च "नलोपो नञ" इति नलोपे तस्मान्नुडचि लुप्तनकारस्याजादेर्नुडागमः स्यादिति नुडागमे अनरायण इति भवेत् । कथं नारायण इति इत्यत आह । **नगनाकादिशब्दवदिति** । ननु नभ्राण्नपान्न-वेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या । एषु नञ् प्रकृत्या स्यात् । नगोऽप्राणिष्वन्यतरस्याम् । नगशब्दस्य नञ् प्रकृत्या स्यादप्राणिषु अन्यतरस्यां इति सूत्रद्वयेन नाकनगशब्दयोः नलोपाभाव उक्तः । नारायणशब्दस्य तु नेति कथं तद्दृष्टान्ताङ्गीकरणमिति चेत् ।

अत्राहुः नभ्राडिति सूत्रद्वयेऽयमपि शब्द उपसङ्ख्येयः । उक्तनिर्वचनानुसारेणापि नारायणशब्दप्रयोगस्य प्रमाणसिद्धत्वादित्यत्र तात्पर्यमित्यप्याहुः । वस्तुतस्तु स्त्रैणार्थ इत्यत्र स्त्रीपुंसाभ्यां इत्यादिना विहितस्य नञो नलोपो नञ इति सूत्रे रात्रेः कृति विभाषेत्यतोऽनुवृत्ताया विभाषाया व्यवस्थितविभाषात्त्वस्य न्यास एव वोक्तत्वेन नारायण इत्यत्रापि नलोपाभावाद्युपपत्तेः । यद्वा नसमासोऽयमित्यदोषः । ननु तर्हि नारायन इति स्यान्न तु नारायण इति । विधायकाभावेन तदसम्भवात् । न च रषाभ्यामित्यनेन तदुपपत्तिः । भिन्नपदत्वेन णत्त्वासम्भवादिति चेन्न । पूर्वपदात्संज्ञायामगः । पूर्वपदस्थान्निमित्तात्परस्य संज्ञायां नस्य णत्वं स्यान्न तु गकारव्यवधाने इति सूत्रेण णत्वं भविष्यतीति न दोषः । न चायनशब्दस्य नपुंसकत्वात् पुल्लिङ्गत्वं कथमिति वाच्यम् । ल्युटः टित्करणसामर्थ्यात् ङिपि समागते नारायणीति भवति । तथा नपुंसकत्वनियमो नेति पुल्लिङ्गत्वमपि भवतीति भावः । ननु देवतासमुच्चायकशब्दसद्भावादपिशब्दः किमर्थ इत्यत आह । **स्वस्येति** । कथमपिपदेनारुचिः सूचितेत्यत आह । **यद्यपीति** । अनेनापीत्येतत्तथापीति व्याख्यातम् । पृथङ्नतिरितीत्यत्रत्यस्येतिशब्दस्य इत्यरुचिं सूचयतीति पूर्वेणान्वयः । **अनेनैवेति** । ज्ञेयमित्यादिनैवेत्यर्थः । अधिकारादिसूचने श्रोतृप्रवृत्त्यङ्गभूतत्वरूपं एकं हेतुमुक्त्वा हेत्वन्तरमाह ।। **तत्स्मरणस्येति** ।। महाफलसाधनस्मरणार्थत्वात् सूचनमावश्यकमेवेति भावः । ननु ग्रन्थस्य फलसाधनत्वस्य विघ्नाभावस्य च नमस्कारेणैव सिद्धेः ग्रथनं व्यर्थम् । एवम् अधिकारादिसूचनस्य प्रवृत्त्यङ्गतया कर्तव्यत्वेऽपि न महाफलार्थं तत्कार्यम् । तत्स्मरणेनैव फलसिद्धेरित्यत आह ।। **नमस्काराधिकार्यादीति** ।

## श्रीनिवासतीर्थविरचितं श्रीतत्त्वप्रकाशिकाव्याख्यानं वाक्यार्थविवरणम्

यादवार्यगुरून्नत्वा तद्यादिष्टमार्गतः ।
यान्यत्रागम्यवाक्यानि तेषां भावो निरूप्यते ।

(वाक्यार्थविवरणम्)

**अमलमिति** अस्य अकारवाच्यस्य विष्णोः, मा-ज्ञानं येषां ते अधिकारिणः अमाः तान् लाति-गृह्णातीत्यमलः तम्, न विद्यते मलं रागादिकं येषां ते अमलाः मुक्ताः, ते अस्य सन्तीत्यमलः तमिति वाऽर्थः । **अथेति** । भाष्यगतप्रतिवाक्यव्याख्यानारम्भार्थोऽथशब्दः । 'रथ्यात्' इति विशिष्टोऽयं शब्दः । ''अत सातत्यगमने'' इति धातोः सन्ततगमनवद्भिरित्यर्थः इत्याहुः ।

आद्यपद्ये भगवत्पादैः किं क्रियते इत्यत आद्यपद्यमवतारयति **अविद्यापटलपिहितनयनैरिति** । नयनशब्देन नयनार्थज्ञानविवक्षायां दुर्जनानां यथार्थज्ञानप्रसक्तेरभावात्तस्य अविद्यापटलप्रतिबध्यत्वोक्ति-रयुक्ता । यद्वा नीयतेऽनेनेति करणव्युत्पत्त्या तत्साधनविवक्षा, तदापि दुर्जनस्वरूपेन्द्रियस्य यथार्थज्ञानजनकत्वप्रसक्तेरभावात् तस्य अविद्यापटलप्रतिबध्यत्वोक्तिरयुक्तेति चेत् । उच्यते । नयनशब्देन यथार्थज्ञानजननशक्तिमन्तीन्द्रियाण्येव विवक्षितानि । न चोक्तदोषः । इन्द्रियाणां यथार्थज्ञानजनकत्व-रूपप्रामाण्यस्यौत्सर्गिकत्वेन तदिन्द्रियाणामपि इन्द्रियत्वात्सज्जनेन्द्रियवत् यथार्थज्ञानजनकत्वं प्रसक्तम् । तदविद्याशब्दवाच्यतदीययोग्यतालक्षणदोषेण प्रतिबद्धमित्युच्यते । इन्द्रियाणामपवादे सति अयथार्थज्ञान-जनकत्वादित्याशय इति केचिदाहुः । वस्तुतस्तु नयनशब्देन प्रकृतत्वात् यथार्थज्ञानजनकानि सूत्राण्येव गृह्यन्ते । सूत्रतात्पर्यापरिज्ञानमविद्याशब्देनोच्यते । यथा च सूत्राणां सज्जनान्प्रतीव अन्यान्प्रत्यपि यथार्थज्ञानजनकत्वं प्रसक्तम् । तदविद्यालक्षणदोषेण प्रतिबद्धमित्युच्यते । एवं च सूत्रतात्पर्यापरिज्ञान-लक्षणदोषेण प्रतिबद्धयथार्थज्ञानजनकत्वशक्तिमत्सूत्रवद्भिरन्यैरित्यर्थो द्रष्टव्यः । अपरे तु नयनैः नयनसदृशैरित्याहुः ।

कीदृशो नमस्कार इत्यतः नमस्कारस्वरूपकथनार्थं प्रारिप्सितेत्याद्युक्तम् । प्रारिप्सितभाष्यस्य या कैवल्याद्यखिलफलसाधनता तत्सिद्धिरर्थो यस्येत्यर्थः । अध्येतॄणामिदं भाष्यं कैवल्याद्यखिलफलसाधनं भवत्वित्याशयेन नमस्कारः कृत इत्याशयः । अन्येषां निरन्तरायपरिसमाप्तिप्रचायार्थकमिति नमस्कार-स्वरूपकथनम् ।। आचार्याणां निरन्तरायपुरुषत्वेन तत्कृतनमस्कारस्य तदफलकत्वादिति ध्येयम् । पाणिन्यादिसूत्रव्यावृत्त्यर्थमाह ।। **अत्रेति** ।। **उच्यते** मुख्यवृत्त्या प्रतिपाद्यते । कुत इत्यत आह । **तस्येति** । निरुपपदसूत्रशब्दस्येत्यर्थः । तथापि कुतो ब्रह्मसूत्राणां ग्रहणमित्यत आह ।। **तेषां चेति** । ब्रह्मसूत्राणामित्यर्थः । **तादृशत्वात्** मुख्यत्वात् इतरसूत्रापेक्षयेति शेषः ।

**श्रोत्रिति** ।। अन्यथा कुत्र किं साधितमिति शिष्यबुद्धिर्व्याकुला स्यादिति भावः । **प्रस्तावयितुं** संक्षिप्यादौ वक्तुम् । तस्य प्रपञ्चे जिज्ञासाजननं फलमिति भावः । **प्रसत्त्येति** प्रसादेनेत्यर्थः ।

(वाक्यार्थविवरणम्)

कण्ठतः प्रसादस्यासूत्रित्वात् सूचित इत्युक्तम् । स च नारायणः । युक्त्यादिभिरित्यत्रादिपदेन समयश्रुतिन्यायोपेतश्रुतिग्रहणम् । गम्यमित्युक्त्या कथं शङ्कापरिहार इत्यत आह ।। **तत्रेति** । विशिष्टगुणान् विलक्षणगुणान् । नरसम्बन्धित्वमज्ञानादिसाधारणमिति द्वितीया व्युत्पत्तिः । साऽप्यौषधादिसाधारणेति तृतीया । साऽप्यमृतादिसाधारणेति चतुर्थी । साऽपि गङ्गास्नानादिसाधारणेति पञ्चमीति द्रष्टव्यम् । ननु न अरायण इति स्थिते नलोपो नञः । 'नञो नस्य लोपः स्यादुत्तरपदे परे' इति नलोपे अ अरायण इति जाते तस्मान्नुडचि । तस्माल्लुप्तनकारात्परे नुडागमः स्यादचि परे इति नुडागमे अनश्व इतिवद् अनरायण इति भवेत् । नारायण इति कथमित्यत आह ।। **नगेति** ।।

यद्यपि तथापि इति अपिशब्दः व्याख्यातः । **न देवतेति** । तथा च पृथङ्नतिर्व्यर्थेति भावः । एवं च एवं शङ्कानिवर्तनाय प्रकृतेन अपिशब्देन भेदे अरुचिरपि सूचितेति ध्येयम् । **श्रोतृप्रवृत्तीति** । 'ज्ञातार्थं ज्ञातसम्बन्धं श्रोतुं श्रोता प्रवर्तत' इत्युक्तेरिति भावः ।

ननु यथाकथञ्चित् विषयादिसूचनं कर्तव्यं, तदादावेव कस्मात्कार्यम् । अन्ते मध्ये वा कस्मान्न क्रियते इत्यत आह ।। **तत्स्मरणस्येति** ।। महाफलहेतुत्वाच्च तत्स्मरणमादावेव कर्तव्यमिति भावः । अत एवात्रानेनैवेत्युक्तम् । आदिग्रन्थेनैवेत्यर्थः । उत्तरत्र स्मृतावपि ''स्मृत्वा प्रारभत'' इत्युक्तम् । आरम्भं कुर्वत इत्यर्थः । तदुक्तं प्रथमस्कन्धभागवततात्पर्ये इति शेषः । मोक्षेच्छुसुराणकादिव्यावृत्त्यर्थं योग्य इत्युक्तम् । प्रयोजनम् अवान्तरमुख्यप्रयोजनम् ।

## शर्करा श्रीनिवासविरचिता वाक्यार्थमञ्जरी

श्रीलक्ष्मीवेङ्कटेशाय नमः ।। श्रीमदस्मद्गुरुवरयादवार्यकरपूजितगुणपूर्णबादरायणाय नमः ।।

रामं सर्वगुणैः पूर्णं निर्दोषं साधुसेवितम् ।
मुक्तिदं जानकीकान्तं प्रणमामि निरन्तरम् ।। १ ।।

ज्ञानभाक् हृत्तमोहर्ता श्रुतिपङ्कजबोधकः ।
व्यासांशुमान् दर्शयतु सन्मार्गङ्गुणमण्डलः ।। २ ।।

वाग्ज्योत्स्नाध्वस्तहृद्ध्वान्तं विबुधाब्ध्यर्द्धि साधकम् ।
शुद्धाध्वबोधकं सेवे नित्यं मध्वविधुं विदे ।। ३ ।।

(वाक्यार्थमञ्जरी)

मध्वसिद्धान्तमामथ्य शुद्धधीमन्दराद्रिणा ।
लब्धा न्यायसुधा येन तं जयीन्द्रमहं भजे ॥ ४ ॥

दुर्वादिमातङ्गसिंहान् सर्वशास्त्रार्थकोविदान् ।
व्यासराजमुखान् पूर्वव्याख्यातॄन् प्रणमाम्यहम् ॥ ५ ॥

दुर्मार्गादुद्धृतो यैश्च सन्मार्गे सम्प्रवेशितः ।
तान् गुरून् सततं सेवे सर्वशास्त्रविशारदान् ॥ ६ ॥

अथ तत्कृपया ब्रह्मसूत्रभाष्यप्रकाशिकाम् ।
व्याकरिष्ये यथाबोधं वाक्शुद्ध्यै नाभिमानतः ॥ ७ ॥

पूर्वाचार्यकृताः सन्ति व्याख्या विद्वन्मनोहराः ।
मन्दबोधाय तत्रोक्तसङ्ग्रहोऽथाप्ययं मम ॥ ८ ॥

इह खलु तापत्रयपरिशुष्यत्सत्कुमुदमोदकरीं श्रीमध्वदुग्धाब्धिसम्भूतभाष्येन्दूदितकौमुदीं परतत्त्वप्रकाशिकां कर्तुकामो जयतीर्थमुनिः प्रारिप्सिताविघ्नपरिसमाप्त्यादिप्रयोजनकशिष्टाचारानुमितश्रुतिबोधितकर्तव्यताकेष्टदेवतास्तुतिनतिरूपं मङ्गलं कृत्वा शिष्यशिक्षायै ग्रन्थादावुपनिबध्नाति ॥ **शुद्धेति** ॥ अस्मद्युत्तम इति सूत्रेणास्मच्छब्द एव उपपदत्वेन श्रूयमाणेऽश्रूयमाणे वा तदर्थविवक्षायामुत्तमपुरुषो भवतीत्युक्त्योत्तमपुरुषस्यास्मच्छब्दाविनाभावादेवात्र वन्द इत्युत्तमपुरुषप्रयोगादेवाहमिति कर्ता लभ्यते । तथाच अहं ब्रह्म अलं वन्द इत्यन्वयः । इदं पद्यं भाष्यस्याद्यपद्यव्याख्यानरूपम् । तथाहि । आद्याध्यायार्थतयोक्तं गुणैः सर्वैरुदीर्णमिति । अत्र गुणपदं तार्किकरीत्या दुःखादिपरं वेदान्तरीत्या सत्वादिपरं वा । नाद्यः । निरनिष्टो निरवद्य इति श्रुत्या दोषवर्जितमिति स्ववचनविरोधात् । न द्वितीयः । 'केवलो निर्गुणश्चे'ति श्रुतिविरोधात् । किं च गुणैः सर्वैरुदीर्णमिति गुणविशिष्टत्वोक्त्या गुणगुणिनोर्भेदः प्रतीयते । स च "गुणक्रियादयो विष्णोः स्वरूपं नान्यदिष्यत" इत्यादिविरुद्धः । अपि चेश्वरस्य देहोऽस्ति वा न वा । नाद्यः । मरणादिप्रसङ्गेन दोषवर्जितत्वायोगात् । न द्वितीयः । 'विवृणुते तनूं स्वामि'त्यादिश्रुतिविरोधात् । ज्ञानसुखाद्ययोगेन सर्वगुणोदीर्णत्वायोगाच्चेत्यत उक्तम् । **शुद्धेति** ॥ अत्र शुद्धत्वं नामाप्राकृतत्वम् । आनन्दादेः सर्वस्य विशेषणम् । उरुत्वं पूर्णत्वं संविदादेर्बुद्ध्या विविक्तमानन्दस्यापि विशेषणम् । बहुलत्वं बहुसङ्ख्यावत्त्वम् । औदार्यदिर्बुद्ध्या विविक्तमानन्दादेर्विशेषणम् । अत्र गुणस्वरूपनिरूपणेन तेषां भगवदभिन्नदेहाभिन्नत्वोक्त्या अविनाशगुणात्मकदेहोक्त्या

(वाक्यार्थमञ्जरी)

चोक्तशङ्कानिरास इति ध्येयम् । द्वितीयाध्यायार्थतयोक्तं दोषवर्जितमिति । अत्र दोषपदं यत्किञ्चिद्दोषपरश्चेदितरसाधारण्यम् । वर्जितत्वस्य प्रागभावप्रध्वंसान्यतरत्वे प्रागूर्ध्वन्दोषवत्त्वप्रसङ्गः । दोषैर्वर्जितं परित्यक्तमिति प्रतीत्या नारायणस्य हेयत्वं च प्रसज्यत इत्यत उक्तम् । **चिन्तेति** । लेपः कर्मसम्बन्धः । चिन्तादयो मुखराः प्रधानाः येषु तथोक्ताः ते च ते अशेषदोषाः अत्यन्तदूरीकृताः येन तत्तथोक्तम् । अत्र अशेषातिपदाभ्यां दोषाः वर्जिताः येनेति विग्रहसूचनेन च पूर्वोक्तशङ्कानिरास इति ध्येयम् । तृतीयाध्यायार्थतयोक्तं ज्ञेयमिति । अत्र ज्ञानसाधनं न तावच्छ्रवणादि । विरोचनादेः श्रवणादिना विपरीतज्ञानोदयात् । नापि ध्यानम् । माण्डव्यादेर्ध्यानेनार्थस्यैव श्रुतत्वात् । गमनोपायाभावाच्चतुर्थाध्यायार्थगम्यत्वं चानुपपन्नमित्यत उक्तम् । **सद्भिरिति** ।। श्रुतिः श्रवणं मतिर्मननं नियतध्यानं स्वयोग्योपासनं ज्ञानं साक्षात्कारः स एव योग उपायः । विरोचनादेरसज्जनत्वात् । माण्डव्यादिभिरयोग्यध्यानाचरणान्न तेषां ज्ञानोदयः । ज्ञानलक्षणोपायसद्भावाद्गम्यत्वं चोपपन्नमिति भावः । मायिरीत्या गुणविशिष्टमिदं ब्रह्म शबलमिति न मन्तव्यमित्याशयेनोक्तम् । **अमलमिति** । न विद्यते मलं संसाराख्यं यस्मात्तथोक्तम् । शबलं तु न संसारमोचकम् । अत एव मुकुन्दाभिधम् ।

स्वोक्तार्थे सर्वत्र प्रमाणमाह । **वेदान्तवेद्यमिति** ।। 'आनन्दो ब्रह्म' 'ज्ञानात्मको बलात्मको भारूपः सत्यकामः दातुः परायणं वीर्यमन्नाद्यं' 'बृहंतो ह्यस्मिन्गुणाः' 'श्रुताः सुविरुद्धाश्च देवे संत्यश्रुताः' । 'यदात्मको भगवांस्तदात्मिका व्यक्तिः' 'न कर्मणा वर्धते' 'अज आत्मा विजरो विमृत्युः' 'ब्राह्मणो निर्वेदमायात्' 'यमेवैष वृणुते' 'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' 'यमप्येति भुवनं सांपराये' 'तरति शोकमात्मविदि'' त्याद्युपनिषद्भिरुक्तविधया ज्ञेयमित्यर्थः । यद्वा वेदानामन्तो निर्णयो यस्मात्तद्वेदान्तं ब्रह्ममीमांसाशास्त्रं तेनोक्तविधया ज्ञेयमित्यर्थः । तथाहि । 'आनन्दमयोऽभ्यासादि'त्यत्र पूर्णानन्दसंविदादिकम् 'अनुकृतेस्तस्य चे'त्यत्र द्युतिः 'अत्ता चराचरग्रहणादि'त्यत्र सर्वसंहर्तृत्वोक्त्या वीर्यबले 'मुक्तोपसृप्यव्यपदेशादि'त्यत्र मोक्षदातृत्वोक्त्यौदार्यं 'रूपोपन्यासादि'त्यत्राप्राकृतदेहवत्वं 'अधिकं तु भेदनिर्देशादि'त्यत्र चिन्तासन्तापाद्यभावः 'न कर्माविभागादिति चेन्नानादित्वादि'त्यत्र कर्मणोऽस्वातन्त्र्योक्त्या तल्लेपाभावः । 'असम्भवस्तु सतोऽनुपपत्तेरि'त्यत्रोत्पत्त्यभावः । 'नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः' इत्यत्र भृत्यभावः । 'असार्वत्रिकी'त्यत्र योग्यता । तृतीयाद्ये वैराग्यम् । द्वितीये भक्तिः । तृतीये श्रुतिमतिनियतध्यानानि । चतुर्थे ज्ञानं 'पुरुषार्थोऽतः शब्दादिति बादरायण' इत्यत्र ज्ञानस्य पुरुषार्थोपायत्वं चोक्तमिति ।

(वाक्यार्थमञ्जरी)

नारायणपदस्य प्रतिपदं ब्रह्मेति । अथवा 'सङ्क्षेपविस्तराभ्यां हि प्रवदंति मनीषिण' इति वचनात् सर्वेषामपि पदानां विशेषणचतुष्टयव्याख्यानरूपत्वम् । तथाहि । सकृदुच्चरितस्यापि ब्रह्मशब्दस्य तन्त्रन्यायेन तात्पर्यवशाद्विशेषणसमर्पकत्वं चास्ति । तथा च गुणैः सर्वैरुदीर्णमित्यस्य सङ्ग्रहो ब्रह्मशब्देन क्रियते । दोषवर्जितमित्यस्यामलमिति । ज्ञेयमित्यस्य व्याख्यानं वेदान्तवेद्यमिति । गम्यमित्यस्य मुकुन्दाभिधमिति । ब्रह्मशब्दार्थः शुद्धेति । अमलशब्दार्थश्चिन्तेति । वेदान्तवेद्यमुकुन्दाभिधशब्दयोरर्थः सद्भिरिति । यद्वा वक्ष्यमाणरीत्या नारायणशब्दस्य गुणपूर्णत्वनिर्दोषत्वमुक्तगम्यत्वार्थकत्वान्निर्दोषत्वान्नारा वेदा वेद्यतया तदाश्रयत्वान्नारायण इति वेदवेद्यत्वार्थकत्वाच्च क्रमेण तत्समानार्थकैर्ब्रह्मामलमुकुन्दाभिधवेदान्तवेद्य-पदैर्नारायणपदव्याख्यानं क्रियते । शिष्टं वेदाः वेद्यतया तदाश्रयत्वान्नाराः प्रथमवत् । इत्थं व्याख्यानत्रये अमलमित्यस्य चिन्तासन्तापेत्यादिना गतार्थतेति शङ्का गर्भस्रावेण परास्तेति ध्येयम् ।। १ ।।

इदानीं गुरूंश्चेति विवृण्वन् व्याचिख्यासितभाष्यमूलसूत्रप्रामाण्यं च सूचयन् तत्कर्तृवेदव्यासं प्रार्थयते ।। **याश्चेति** ।। निर्जरैः प्रार्थनाख्यमन्दरपर्वतमथितात् यतो विद्येन्दिरादीनामुदयादिः सोऽयमित्यन्वयः । भूत्यै ज्ञानैश्वर्याय । पुराणादेः पृथगभिधानाद्विद्याशब्दो वेदमात्रपरो ज्ञेयः । **ब्रह्मसूत्रेति** । ब्रह्मेति तन्त्रम् । तथाच ब्रह्मणो विष्णोः सम्बन्धि यत् ब्रह्म वेदजातं तस्य सूत्राणि तद्विचारकरणीभूतन्यायनिबन्ध-नात्मकवाक्यानीत्यर्थः । यद्वा ब्रह्मणः श्रुतिजातस्य सूत्रं तन्निर्णायकन्यायनिबन्धनात्मकशास्त्रमित्यर्थः । तन्त्रं पञ्चरात्रम् । अत्र विद्यायाः लक्ष्म्यभिमन्यमानत्वाल्लक्ष्मीत्वेन भारतस्य धर्माद्यशेषपुरुषार्थदातृत्वात् पारिजातत्वेन ब्रह्मसूत्रस्य स्वश्रवणरूपसेवनवतां अजरामरणहेतुत्वादमृतत्वेन पुराणानां विष्ण्वादि-तत्त्वप्रकाशकत्वान्मणित्वेन शुकाचार्यस्य सज्जनाह्लादकरत्वादिन्दुत्वेनोत्प्रेक्षा युक्ता । वेदविद्यायाः अभिव्यक्तिमात्रसत्वेऽपि व्यासजन्यत्वाभावात् रमाया अपि अब्धिजन्यत्वाभावाद्दैदित्युक्तिः । क्षीराब्धि-साम्योपपादनेन लब्ध्यैश्वर्यदानसम्भावनयोक्तं सताम्भूतिद इति । ननु कर्मणा यमभिप्रैति स सम्प्रदानम् इति सम्प्रदानसंज्ञायां चतुर्थी सम्प्रदान इति चतुर्थीविधानाद्विप्राय गां ददातीत्यादाविव सद्भ्य इति चतुर्थ्या भाव्यम् । अतः कथं सतामिति षष्ठीति चेत् । उच्यते कर्मणेति सूत्रे अचोऽन्त्यादि टीत्यादाविव लघुसंज्ञायाः कार्यत्वेऽपि सम्प्रदानमिति गुरुसंज्ञाकरणमन्वर्थत्वज्ञापनार्थं तेन बहुमानपूर्वकस्वस्वत्वपरित्यागेन परस्वत्वापादनरूपं दानं यत्र तत्रैव सम्प्रदानत्वं नान्यत्र रजकस्य वस्त्रं ददातीत्यादाविति वृत्त्यादावुक्त्या अत्र तादृशदानाभावेन सम्प्रदानसंज्ञायाः अभावेऽपि सम्बन्धसामान्ये षष्ठ्युपपत्तिरिति ज्ञेयम् । **सतामिति** । अत्र व्यास इति निर्देशेन तस्य शास्त्रप्रभवत्वोक्त्या गुरुत्वोपपादनेन गुरूंश्चेत्येतद्विवृतम् । यत

(वाक्यार्थमञ्जरी)

उदैद्विद्येन्दिरेत्यादिना विद्येन्दिराधिष्ठानत्वोक्त्या विवक्षितार्थतत्त्वज्ञानलाभात् वक्त्रानुकूल्यं, निर्जरैरित्यादिना तत्वज्ञानयोग्यतालाभात् श्रोत्रानुकूल्यं, याञ्चेत्यनेन श्रोतृप्रयोजनोद्देशरूपप्रसङ्गानुकूल्यं च दर्शयता ''वक्तृश्रोतृप्रसक्तीनां यदाप्तिरनुकूलते''त्यनुव्याख्यानोक्ताप्तिमूलता सूत्राणां सूचिता । ब्रह्मसूत्रपदेनोक्त-व्याख्यानानुसारेण श्रुतिमूलत्वं सूत्रशब्देन युक्तिमूलत्वं च सूचितम् । तथा च

''आप्तवाक्यतया तेन श्रुतिमूलतया तथा ।
युक्तिमूलतया चैव प्रामाण्यं त्रिविधं महत् ।
दृश्यते ब्रह्मसूत्राणाम्''

इत्युक्त्या प्रमाणभूतब्रह्मसूत्रार्थभाष्यव्याख्यानं युक्तमिति द्रष्टव्यम् । ननु ''स्तोः श्चुना श्चुः'' इति यान्नेति नकारस्य चवर्गात्यञ्कारादेशे याञ्चेति भवेत् कथं यान्नेति । अत एव काशिकायां यजेर्यज्ञः याचेर्याञ्चेत्युक्तमिति चेत् । याञ्ना मोघा वरमधिगुणे नाधमे लब्धकामेत्यादिबहुप्रयोगनिर्वाहाय श्चुत्वाभावस्यापि क्वचिद्वक्तव्यत्वात् ।। २ ।।

भाष्यव्याख्येयत्वप्रयोजकसफलत्वगम्भीरत्वादि दर्शयन् तत्कर्तारमानन्दतीर्थं प्रणमति ।। **स्वान्तेति** ।। येषां मुखकमलात् भाष्यम् आविर्भूतं तान् पूर्णबोधपूज्यस्वरूपान् प्रपद्य इत्यन्वयः । भाष्यस्य श्रुतिस्मृतिप्रचुरत्वेनोत्पन्नमित्यनुक्त्वा आविर्भूतमित्युक्तम् । अत एवोत्तरत्रापि निःसृतमिति वक्ष्यन्ति ।। अमन्दबोधत्वोपपादनाय भाष्यकृत्त्वोक्तिः । मानसाज्ञानाख्यतमश्छेदनविषये पराजितमहासूर्यरश्मिसमूह-मित्यनेनाध्यात्मिकादितापत्रयनिवारणविषये पराजितचन्द्रप्रभमित्यनेन च सफलत्वोक्तिः गाम्भीर्येत्यादिना गम्भीरत्वोक्तिरिति विवेकः । वैकर्तनांशुव्रजचन्द्रचन्द्रिकयोः क्रमेण बाह्यान्धकारबाह्यतापवारकत्वेऽपि स्वान्तध्वान्ततापत्रयनिवारणयोरशक्यत्वाद्भाष्येण जितत्वम् । तथोपरागादौ ह्रासादिदोषयुक्तत्वान्निर्दोष-भाष्येण जितत्वम् । अनेनैतादृशभाष्यविशिष्टाचार्यमुखस्य सूर्यचन्द्रबिम्बाधिक्यं ध्वनितम् । लक्षादियोजन-परिमितसमुद्रस्यापरिमितभाष्येण जितत्वम् । अत्राप्यमितत्वमर्थत एव भाष्यं चात्यर्थविस्तरमित्युक्तेः । न तु शब्दतः ग्रन्थस्य परिमितत्वात् । ननु निपूर्वकात् कृती च्छेदन इत्यस्माद्धातोः ल्युट्प्रत्यये नुमागमे अनादेशे च निकृन्तनमिति भवति । तत्र नुमागमः केन ? इदितो नुम् धातोरित्यनेनेदित एव नुमागमविधानात् कृतीत्यस्य चानिदित्त्वादिति चेत्सत्यम् । नखनिकृन्तनेत्यादिप्रयोगसमर्थनाय धातोरिति योगविभागेनानिदितोऽपि नुमागमस्य व्याख्येयत्वात् । अत एवेदितो नुम् ततो धातोरिति महाभाष्येऽभिहितम् ।। ३ ।।

(वाक्यार्थमञ्जरी)

अथ परमगुरूणां सन्न्यायरत्नावलीकाराणां कृपालेशं प्रार्थयते ।। **श्रीमध्वेति** ।। ये पद्मनाभतीर्थाः तेषां कृपालेशः मयि नित्यं स्यादिति सम्बन्धः । तेषामेव कृपाराहित्ये तत्प्रार्थनमयुक्तम् । अत उक्तं कृपालव इति । कारुणिका इत्यर्थः । द्वेषादिदोषवत्वे कृपालुत्वमेवासिद्धमित्यत उक्तम् । अमला इति । कस्मिन् विषये कृपाप्रार्थनमित्यत उक्तम् । श्रीमध्वेति । श्रीमदानन्दतीर्थसेवाप्राप्त-निर्दोषविद्ययाऽमृतसमुद्रा इत्यर्थः । अनेन विद्याविषये कृपाप्रार्थनमिति सूचितम् । यद्वा तीर्थपदप्रयोगलब्ध-प्रसिद्धतीर्थसाम्यनिरासाय विशेषणत्रयम् । ननु कृपालव इति कथं ? स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुजिति सूत्रेण कृपेरालुच्प्रत्ययस्याविहितत्वादिति चेत्सत्यं तथापि व्याकरणान्तरात् कृपेरालुच्प्रत्ययो बोध्यः । यद्वा नायमालुच् प्रत्ययः किन्तु कलशवाचकोऽयमालुशब्दः । कर्कर्यालुर्गलन्तिकेत्यभिधानात् । तथा च कृपापूर्णकलशा इत्यर्थः । इदं च प्रकारद्वयं नष्टधर्मज्ञानलोककृपालुभिरिति गीताभाष्यव्याख्यानावसरे प्रमेयदीपिकायां व्यक्तम् । अथवा उदाहृतसूत्रे आलुच्प्रत्ययमविधाय लुश्प्रत्ययविधानेऽपि तस्य शित्वेन तिङ्शित्सार्वधातुकमिति सार्वधातुकसंज्ञायां कर्तरि शबिति शपि सति पुगन्तलघूपधस्य चेति गुणे अयादेशे च अतो दीर्घ इति दीर्घे सति ण्यन्तानां स्पृहीत्यादीनां स्पृहयालुरित्यादिरूपसिद्धावप्यालुच्करणं कृपालुरित्यादिरूपसिद्ध्यर्थमिति मञ्जर्यान्तृतीयाध्यायस्य तृतीयपादे अभिहितत्वादत्रापि कृकेरालुच्प्रत्यये कृते संज्ञापूर्वको विधिरनित्य इति पुगन्तलघूपधस्य चेति गुणाभावे च कृपालुरिति साधुः । अत एव कौमुद्यां हरे कृपालो नः पाहीत्युक्तम् ।। ४ ।।

स्वगुरूंन्नमति । **श्रीमदिति** ।। श्रीमद्रमारमणाख्यसद्गिरिचरणाख्यप्रत्यन्तपर्वतसम्बन्धवान् तदाश्रित इति यावत् । पादाः प्रत्यन्तपर्वता इत्युक्तेः । स चासौ व्याख्यानध्वनिना विनाशिताखिलदुर्वादिमदश्च तम् । दुर्वादिगजविपाटनसमर्थसङ्कल्पमित्यर्थः ।। ५ ।।

इदानीं शिष्यमनःसमाधानाय चिकीर्षितं प्रतिजानीते । **अथेति** । तत्कृपया तेषां नमस्कृतानां मुकुन्दादीनां कृपया । आनन्दतीर्थभगवद्वचसां विशिष्टव्याख्यानकर्मणि सुरा ह्यधिकारिणोऽत्रेति तत्वनिर्णयटीकान्ते स्वैनैवोक्तत्वात्कथं व्याकुर्वे इति प्रतिज्ञेत्यत उक्तम् । **यथामतीति** ।। विशिष्टव्याख्यान-करणे देवानामधिकारेऽपि यथामति व्याख्यानकरणे अस्माकमप्यधिकारोऽस्तीति भावः ।। ६ ।।

व्याकुर्वे इत्यात्मनेपदप्रयोगेण लब्धमात्मगामिव्याख्यानप्रयोजनमाह ।। **गङ्गेति** ।। भागीरथीसम्बन्धेन रथवीथिकाजलैर्नैर्मल्यं यथा लभ्यते तथा मदीयायाः वाचो विशुद्धिसिद्ध्यर्थम् आनन्दतीर्थीयवाक्यानि मदीयया वाचा व्याख्यानव्याख्येयभावेन सम्बध्यन्त इत्यर्थः । वाचो विशुद्धीत्युक्तत्वेन मदीयया वाचेत्यस्य

(वाक्यार्थमञ्जरी)

सिद्धत्वान्नोक्तम् । ननु ''ऋक्पूरब्धूः पथामानक्ष'' इत्यनेन समासान्तादप्शब्दात् अकारस्य विहितत्वेन विमलापैः सरोवरैरित्यादिवत् रथ्यापैरिति वक्तव्ये कथं रथ्याद्भिरति वचनमिति चेत्सत्यम् । ''समासान्तो विधिरनित्य'' इत्येतत्साधु । एतत्सूचनायैव सूत्रे पथामिति उक्तम् । अन्यथा पथानामित्यवक्ष्यत् । अत एव महाभाष्ये शुच्यंपानि तटाकानीति वक्तव्ये शुच्यंपि तटाकानीत्युक्तम् ।। ७ ।।

नन्वाचार्यैर्भाष्यं नारम्भणीयं प्रयोजनाभावात् । न च सूत्रव्याख्यानं प्रयोजनम् । अन्यैर्व्याख्यातत्वात् । अस्तु वा आरम्भणीयत्वम् । तथाप्याद्यपद्यं व्यर्थम् । न च मङ्गलनिबन्धनार्थं तदिति वाच्यम् । फलाभावेन तस्यैवाकर्तव्यत्वात् । अस्तु वा कर्तव्यत्वं न तस्य निबन्धनं तथापि सूत्रार्थ उच्यत इत्यंशो व्यर्थ इत्याशङ्कां पराकुर्वन्नाद्यपद्यमवतारयति ।। **अथेति** ।। अत्राविद्येत्यारभ्याचार्यवर्य इत्यन्तेन आद्यशङ्कायाः, प्रारिप्सितेत्यारभ्य समास्याद्यर्थमित्यन्तेन द्वितीयायाः, ग्रन्थारम्भेत्यादिना तृतीयायाश्च निरास इति ध्येयम् । ननु 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथे'ति स्मरणादत्राथशब्दः किं मङ्गलार्थः उतानन्तर्यार्थः अथ प्रारम्भार्थः यदि वा प्रश्नाद्यर्थः । नाद्यः । मङ्गलस्य कृतत्वात् । न द्वितीयः । कस्याप्यर्थस्य भाष्ये पूर्वमप्रकृतत्वात् भाष्यकृन्नमनस्य टीकाकृद्व्याख्याप्रतिज्ञानन्तर्यायोगाच्च । न तृतीयः । व्याकुर्वे इत्यनेन व्याख्या प्रारभ्यत इति लाभात् । न चतुर्थः । उत्तराद्यनुपलम्भात् । अतो व्यर्थ इति चेत् । अत्र ब्रूमः । आचार्यवर्यः ब्रह्मसूत्राणि यथावद् व्याचिख्यासुर्नमस्कारं ग्रथयति ग्रन्थारम्भं च प्रतिजानीत इत्युक्ते इयं शङ्केन्मिषति । ननु सूत्रव्याख्यानार्थं प्रवृत्तेनाचार्येण तदेव कार्यं किमनेनासङ्गतेन नमस्कारादिग्रथनेनेत्यत उक्तम् । **अथ व्याचिख्यासुरिति** । देवतानमनग्रथनादिकरणानन्तरं व्याचिख्यासुरित्यर्थः । तथाच बुभुक्षुः स्नानं करोतीत्यादौ स्नानस्य भोजन इव देवतानमनग्रथनादेर्व्याख्यानोपयोगलाभान्नासङ्गतिरिति भावः । अथवा बुद्धिस्थबुद्धचार्वाकतार्किककाणादकपिलाख्यपश्चमतप्रवृत्त्यनन्तरमित्यर्थः । अन्यथा व्याख्यातानीत्यनेन सम्बन्धः । पश्चमतप्रवृत्त्यनन्तरमेवान्यैरन्यथा व्याख्यातत्वात् । यद्वा सामान्यतः पूर्वं समग्रग्रन्थव्याख्याप्रारम्भेऽपि प्रतिग्रन्थव्याख्याप्रारम्भार्थोऽथशब्दः । **अविद्यापटलपिहितनयनैरिति** । अविद्यया अयोग्यतालक्षणया सूत्रतात्पर्यार्थापरिज्ञानरूपया च नेत्रवन्धाद्याच्छादितनयना इव वर्तमानैरित्यर्थः । अन्यथाव्याख्यानबीजायथार्थज्ञानोपपादनायैतत् । **अन्यैरिति** ।

''भारतीविजयश्चैव सच्चिदानन्द एव च ।
ब्रह्मघोषः शतानन्द उद्वर्तश्चैव पश्चमः ।

(वाक्यार्थमञ्जरी)

विजयो रुद्रभट्टश्च वामनाख्यस्तथाष्टमः ।
सयादवप्रकाशश्च नवमस्तत्र कीर्तितः ।
रामानुजस्तथा भर्तृप्रपञ्चो द्रविडस्तथा ।
ब्रह्मदत्तो भास्करश्च विशाखो वृत्तिकारकः ।
तथा विजयभट्टश्च विष्णुक्रान्तस्तथैव च ।
वादीन्द्रस्तु ततः पश्चात् तथा माधवदासकः ।
तथा पश्चात्सङ्कश्चेत्येकविंशतिवादिभिः ।
प्रणीतानि निराचक्रे दुर्भाष्याणि महामतिः ।''

इत्येकविंशतिसंख्याकैरित्यर्थः । यथावद्व्याख्यानसामर्थ्योपपादनाय भगवानित्युक्तम् । समग्रज्ञानवानित्यर्थः । **कैवल्यादीति** । वाचनिकमङ्गलस्य भगवन्नमस्कारोपबृंहितत्वाद्भाष्यं पठतामितरेषां मोक्षादिफलं निर्विघ्नपरिसमाप्त्यादिफलं च भवति । एकान्तभक्तस्य निरन्तरायस्य चाचार्यस्य तु भगवत्प्रीतिरेव फलमिति भावः । समाप्त्यर्थं चेत्यनन्तरं कृतमिति शेषः । यद्वा कैवल्याद्यखिलफलसाधनतासिद्धिरर्थः प्रयोजनं यस्य नमस्कारस्य स तथोक्तः । एवं निरन्तरायेत्याद्यपि नमस्कारविशेषणम् । तेन तयोश्चतुर्थ्यन्तत्वमभिप्रेत्य ग्रथयतीत्यनेनान्वये ग्रथनस्य फलसाधनतासिद्ध्यादिफलकत्वमुक्तं स्यात् । तथा च नमस्काराधिकारादिग्रथनसूचने शिष्यशिक्षार्थमित्युत्तरग्रन्थविरोधः । तत्र ग्रथनस्य शिष्यशिक्षाफलकत्वोक्तेरिति शङ्का परास्ता ।

पाणिन्यादिसूत्रप्रतीतिनिरासायाह ।। **अत्रेति** । अत्र सर्वसूत्राणां ब्रह्मरूपैकार्थप्रतिपादकत्वेनैकवाक्यत्वमिति सूचनाय समुदायविवक्षयैकवचनप्रयोगः । **उच्यते** मुख्यया वृत्त्या प्रतिपाद्यते । कुत इत्यत आह ।। **तस्येति** ।। निरुपपदशब्दस्येत्यर्थः । मुख्यस्य निर्विशेषेण शब्दोऽन्येषां विशेषणादिति वक्ष्यमाणत्वादिति भावः । तथापि तथाविधान्यसूत्रस्य ग्रहणं किन्न स्यादित्यत आह ।। **तेषाञ्चेति** ।। ब्रह्मसूत्राणामेवेत्यर्थः । अत्र महावाक्यार्थभेदाभावेऽपि अवान्तरवाक्यार्थभेदात् सर्वसूत्राणां प्रत्येकं अवान्तरब्रह्मविद्यात्वमिति सूचनाय बहुवचनप्रयोगः । **तादृशत्वात्** । सूत्रान्तरापेक्षया मुख्यत्वात् । येषां सूत्रत्वमञ्जसेति वक्ष्यमाणत्वादिति भावः । नारायणं नत्वेत्येतावता नमस्कारग्रथनात् किं विशेषणचतुष्टयेनेत्यत आह ।। **वक्ष्यमाणमिति** ।। सूत्रस्याध्यायचतुष्टयात्मकस्य वक्ष्यमाणो यो अर्थः गुणपरिपूर्णत्वादिरूपस्तमित्यर्थः । **सङ्गम्य** सङ्गृह्य । **प्रस्तावयितुं** सङ्क्षेपतो निरूपयितुं, तस्य प्रपञ्चे जिज्ञासाजननं प्रयोजनमिति भावः । विशिनष्टि इतरेभ्यो व्यावर्तयति । प्रस्तावप्रकारं दर्शयति ।

(वाक्यार्थमञ्जरी)

**तथाहीत्यादिना उदितत्वादित्यन्तेन । प्रसत्त्या** प्रसादेन ।। **सूचित इति ।।** अतःशब्देन संक्षिप्योक्त इत्यर्थः । तेन परस्य ब्रह्मणो विष्णोः प्रसादादिति वा भवेदिति प्रमाणानुसारेण साक्षादतःशब्दार्थसम्भवे सूचितमिति कथमुक्तमिति शङ्का परास्ता ।

**उन्मिषति** उदेति । प्रथमाध्याये सर्वशब्दसमन्वयस्यैवोक्त्या कथं गुणपूर्णत्वं तदर्थ इत्यत आह ।। **तत्र हीति ।।** आनन्दमयादिसर्वशब्दानां समन्वये तत्तच्छब्दप्रवृत्तिनिमित्तप्रचुरानन्दत्वादिसर्वगुणगण-लाभादिति भावः । अत्र पर्यायानन्तशब्दसमन्वये तेषामेकार्थप्रतिपादकत्वात् सर्वगुणोदीर्णतासिद्धिर्न स्यादतो अपर्यायेत्युक्तम् । तथाविधकतिपयशब्दसमन्वयेऽपि तदसिद्ध्या अनन्तेत्युक्तम् । अपर्यायानन्त-शब्दानां रूढ्या समन्वये गुणालाभान्महायोगवृत्त्येति । अनन्यसाधारणावयवार्थसापेक्षवृत्त्येत्यर्थः ।। **समन्वयेति ।।** उपक्रमादिलिङ्गप्रमाणकशक्तितात्पर्यलक्षणसम्बन्धेत्यर्थः । स चेति हरिपरामर्शकतच्छब्दस्य दोषवानपीत्यनेन सम्बन्धः । युक्त्यादीत्यादिपदेन समयश्रुतिन्यायोपेतश्रुतीनां ग्रहणम् । **दोषवानपीति ।।** प्रथमसूत्रे जीवव्यावृत्ततया ब्रह्मण एव जिज्ञास्यत्वसिद्धये तस्य गुणपूर्णत्वमुक्तम् । गुणपूर्त्यर्थमेव प्रथमाध्याये श्रुतिस्थशब्दसमन्वयो निरूपितः । युक्त्यादिविरोधेन श्रुतीनामप्रामाण्ये चोक्तसमन्वयासिद्ध्या गुणपूर्णत्वस्याप्यसिद्धिप्रसङ्गेन विरुद्धधर्माधिकरणत्वाभावेन जीवाभेदे जीववत् दोषवान् स्यादित्यर्थः । यद्वा युक्त्यादिविरोधेन श्रुतीनामप्रामाण्यात् समन्वये निरोधिते सर्वकर्तृत्वसार्वज्ञ्यसर्वैश्वर्यादिरसिद्ध्या तत्तदधिकरणपूर्वपक्षप्रापकयुक्त्यादिभिर्जीववज्जनिमृत्यादिदोषवानपि स्यादित्यर्थः । न केवलं गुणाभाववान् किन्तु दोषवानपीत्यपिशब्दः ।।

**तत्रेति ।।** युक्त्यादीनामाभासत्वेन तद्विरोधाभावे श्रुतिप्रामाण्यात् समन्वयेन गुणपूर्णत्वसिद्धौ विरुद्धधर्माधिकरणत्वेनाभेदाभावे दोषशङ्कानवकाश इति भावः । यद्वा युक्त्यादेरप्रामाण्यप्रापकाभावान्न दोषशङ्केति भावः ।। **तत्रेति ।।** पादत्रयोक्तवैराग्यभक्त्युपासनादिभिश्चतुर्थपादोक्तभगवज्ज्ञानं भवतीत्युक्ते तस्य ज्ञेयत्वमेवोक्तमिति भावः ।। **तत्रेति ।।** पादत्रयोक्तकर्मक्षयोत्क्रान्तिमार्गाणां भगवत्प्राप्त्यर्थ-त्वाच्चतुर्थपादोक्तभोगस्य तत्प्राप्तिं विनाऽयोगाद्गम्यत्वमेवोक्तमिति भावः । ननु ब्रह्ममीमांसाशास्त्रोक्तधर्माः ब्रह्मण एव वक्तव्याः किमर्थं नारायणस्योच्यन्त इति शङ्कानिरासाय ब्रह्मण एव नारायणत्वान्नारायण एवैतच्छास्त्रप्रतिपाद्य इति द्योतनाय ब्रह्मशब्दसमानार्थकनारायणशब्दनिर्वचनपरत्वेनापि विशेषणचतुष्टयं योजयति ।। **अथवेति ।।** नारायणशब्दनिर्वचनस्योक्तशङ्कानिरासफलकत्वे एतदपि स्तुत्यर्थमिति सुधाविरोध इति चेन्न । तस्याः उपलक्षणत्वाभिप्रायेण प्रवृत्तेः ।। **साङ्केतिकमिति ।।** प्रवृत्तिनिमित्ताद्यभावेऽपि

(वाक्यार्थमञ्जरी)

इदमनेन शब्देन वाच्यं भवत्विति **कस्यचिदिच्छामात्रेण बोधकमित्यर्थः** । **विशिष्टगुणान्** गुणपूर्णत्वाद्यनन्यसाधारणधर्मान् ।। **आचष्टे** वक्ति, प्रतिपादयतीति यावत् ।। **निर्वक्ति** निरुच्य दर्शयति । तदेव क्रमेण दर्शयति । **तथाहीत्यादिना** । **अभिन्नार्थत्वादिति** ।। दोषारच्छिद्रशब्दानां पर्यायत्वं यतस्तत इत्युक्तेरिति भावः । **विरुद्धार्थेति** ।

"सादृश्यं तदभावश्च तदन्यत्वं तदल्पता ।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिता" इत्युक्तेरिति भावः ।

अभावार्थत्वात् । अन्योन्याभावार्थत्वात् । अत एवाह ।। **अराश्रयो न भवतीति** ।। **नरेति** ।। सज्जनेत्यर्थः ।। **न रीयत इति** ।। न क्षीयत इत्यर्थः । नञुपपदात् रीङ्क्षय इत्यस्माद्धातोरुणादयो बहुलमिति बहुलग्रहणादौणादिके करणे डप्रत्यये डित्वात् टेरिति टिलोपे च नरमिति भवति । ततः प्रज्ञादिभ्यश्चेति स्वार्थिकाणूप्रत्यये तद्धितेष्वचामादेरित्यादिवृद्धौ यस्येति चेत्यकारलोपे नारमिति रूपसिद्धिरिति भावः ।। **अरमणमिति** ।। रमु क्रीडायामित्यस्माद्भावार्थे औणादिके डप्रत्यये रमणं तन्न भवतीत्यरमणं दुःखमित्यर्थः । **निर्दोषवेदोत्पन्नत्वादिति** ।। अरविरुद्धत्वान्नारो वेदः । नारशब्दात्तस्येदमित्यणि कृते यस्येत्यकारलोपे नारशब्दो वेदजन्यज्ञानवाचीति भावः । ननु नारशब्दात् वृद्धिर्यस्याचामादिस्तद् वृद्धमिति वृद्धसंज्ञायां वृद्धाच्छ इति छप्रत्यये आयनेयीनीयियः फढखछघामित्यनेन छस्येयादेशे नारीयमिति स्यात् । कथं नारमिति चेत् । सत्यम् । वा नामधेयस्य वृद्धसंज्ञेति नामधेयस्य विकल्पेन वृद्धिसंज्ञोक्तेः । संज्ञापूर्वको विधिरनित्य इति वैतत्साधु ।

ननु विरुद्धार्थकनञ्समासे न अरेति स्थिते नलोपो नञः नञो नस्य लोपः स्यादुत्तरपद इति नलोपे अ अर इति जाते तस्मान्नुडचि तस्माल्लुप्तनकारान्नञुत्तरपदस्याजादेर्नुडागमः स्यादचि पर इति नुडागमे अनरेति स्यात् । एवमभावार्थत्वेऽपि अरायणादन्यो अनरायण इति भवेत् । अश्वादन्यो अनश्व इतिवत् । नारायण इति कथम् । ननु वृत्तौ षष्ठाध्याये तृतीयपादे स्त्रैणार्थ इत्यत्र स्त्रीपुंसाभ्यां नञ्स्नञाविति विहितस्य नञो नलोपाभावाय नलोपो नञ इति सूत्रे रात्रेः कृति विभाषेत्यव्यवहितपूर्वसूत्रस्थविभाषापदानुवृत्तेरुक्तत्वात् । विभाषायाश्च व्यवस्थितविभाषात्वस्य न्यासेऽभिहितत्वादत्रापि नलोपाभावे नारायण इति साधुरिति चेन्न । नलोपसूत्रे विभाषापदानुवृत्तौ विभाषायाः व्यवहितं भाषात्वेन नभ्राडित्यादिशब्देष्वपि तेन नलोपाभावसम्भवेन तेषु शब्देषु नलोपाभावकथनाय प्रवृत्तयोर्नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या । नगोऽप्राणिष्वन्यतरस्यामित्यनयोः

(वाक्यार्थमञ्जरी)

सूत्रयोर्वैय्यर्थ्यप्रसङ्गात् । प्रपञ्चनार्थत्वमिति त्वगतिका गतिः । तथाविधशब्दपरिगणनार्थमित्यपि स्त्रैणार्थ इत्यादेरपि परिगणनप्रसङ्गाच्च । कथं तर्हि स्त्रैणार्थ इति रूपं तत्रापि नलोपनुडागमे अयादेशे च स्त्रायणेति स्यादिति चेन्न । चरितार्थाचरितार्थयोरचरितार्थस्य ग्रहणमिति न्यायेन स्त्रैणार्थ इत्यत्र नञ्प्रत्यये ञकारस्य च वृद्ध्यर्थत्वेन चरितार्थत्वात् । तदनुबन्धिनञ्प्रत्ययस्यापि चरितार्थत्वेन नलोपसूत्रे नञ् इत्यनेन प्रत्ययनञोऽग्रहणात् । अचरितार्थञकारयुक्तिनिपातनञ एव ग्रहणात् । किं च नलोपो नञ इति सूत्रे उत्तरपदे परतः पूर्वस्य नलोपो भवतीत्युक्त्या पूर्वस्य परत्वं च गम्यते प्रत्ययनञः पदत्वाभावादेव नलोपाभाव इति समाधानद्वयस्य मञ्जर्यामेवोक्तेः । नारायण इत्यत्र निषेधार्थकनिपातनयोश्चरितार्थत्वात् स्यादेव नलोप इति तत्राह ।। **नगनाकादिशब्दवदयं शब्दो ज्ञातव्य इति ।।** उक्तनिर्वचनानुसारेण शब्दप्रयोगस्य प्रामाणिकत्वान्नभ्राडित्यादिसूत्रद्वये अयमपि शब्द उपसंख्येय इति भावः ।

सुधायां तूपसङ्ख्यानं वैय्याकरणैर्न कृतमित्यरुच्या अमानो नाः प्रतिषेध इति गणपठितसमासोऽयमिति समाधानान्तरमुक्तम् । चन्द्रिकायां तु वृत्त्यनुसारेण विभाषापदानुवृत्त्या समाधानमभिधाय तत्र मञ्जर्युक्तास्वारस्यं मनसि निधाय सुधानुसारेण पक्षान्तरमुक्तम् । लध्वक्षरं पूर्वमित्युक्तेरुत्तरसूत्रस्थस्यापि नगशब्दस्य पूर्वनिर्देशः । नलोपाभावमात्रे नगशब्दो दृष्टान्तः । न रीयते अनेनेत्युक्तडान्तत्वं नगशब्दवदिति सूचनाय प्रथमप्राप्तनभ्राडित्यादिशब्दत्यागेन नाकशब्दस्य स्वशब्देनोपादानं च तस्य नुडागमप्रसक्त्यापि युक्तत्वात् इतरेषां तदभावात् नलोपाभावमात्रे दृष्टान्ततया आदिपदेन ग्रहणम् । सूत्रान्तरस्थत्वात् नगशब्दस्य स्वशब्देन ग्रहणम् । यद्वाऽदिपदेनैकधेत्यादिग्रहणं, तेन नसमासोऽयमिति सुधोक्त-समाधानान्तरमप्यत्रोक्तं बोध्यम् । नारायणपदस्य पदद्वयसमारूढत्वेन समानपदत्वाभावाद्रषाभ्यां नो णः समानपद इत्यनेन णत्वासम्भवात् पूर्वपदात्संज्ञायामग इति ''णत्वम्'' । तदर्थश्च पूर्वपदस्था-न्निमित्तात् उत्तरस्य नकारस्य णकारादेशो भवति संज्ञायां न तु गकारव्यवधान इति ।

ननु नपुंसके भावे क्त इत्यतो नपुंसक इत्यनुवर्तमाने करणाधिकरणयोश्चेति ल्युटो विहितत्वेन ल्युडंतनारायणशब्दस्य नपुंसकत्वं स्यादिति चेन्न । वृत्तिकारेण करणाधिकरणयोरिति सूत्रे नपुंसक इत्यस्यानुवृत्तेरनुक्तत्वात्, लिङ्गानुशासने इध्मप्रवश्चनः गोदोहन इत्याद्युदाहरणात्, महाभाष्ये भूवादयो धातव इति सूत्रव्याख्यानावसरे कोऽसावनुमानो नामेत्युक्तत्वात्, ''स्मृतिः प्रत्यक्षमैतिह्यमनुमान-श्चतुष्टयमिति'' श्रौतप्रयोगाच्चेति । सुधायां तु ल्युटः टित्करणसामर्थ्यादयनशब्दो अधिकरणे त्रिलिङ्ग इति पुल्लिंगत्वं च युक्तमिति समाधानांतरमुक्तम् । एवं ब्रह्ममीमांसाशास्त्रार्थसङ्ग्राहकविशेषणचतुष्टयस्य

(वाक्यार्थमञ्जरी)

नारायणशब्दनिर्वचनपरत्वप्रदर्शनेन नारायणस्यैतच्छास्त्रप्रतिपाद्यत्वकथनान्नम्यत्वप्रयोजकाधिकृतत्वमपि तस्योपपादितं भवति । इदानीं तस्यैव नम्यत्वद्योतनाय नम्यत्वप्रयोजकविशिष्टेष्टाधिकृतत्वरूपतृतीयोपपादकत्वेनापि योजयति ।। **अथवेति** ।। अत्र बहुगुणत्वनिर्दोषत्वाभ्यां विशिष्टत्वं, शास्त्रज्ञेयत्वेनाधिकृतत्वं, अधीतशास्त्रगम्यत्वेनेष्टत्वं प्रदर्शितम् । इतरासाधारणधर्मवत्वशास्त्रप्रतिपाद्यत्वापेक्षितफलदातृत्वानामेव क्रमेण विशिष्टाधिकृतेष्टशब्दार्थत्वादिति ध्येयम् ।

**गुरूनपीति** ।। यथा देवे तथा गुराविति श्रुतेरिति भावः । सामान्यप्रयोगे निमित्तमाह ।। **गुरोरिति** ।। नन्वेवमीशावास्यभाष्ये

''यस्माद् ब्रह्मेन्द्ररुद्रादिदेवतानां श्रियोऽपि च ।
ज्ञानस्फूर्तिः सदा तस्मै हरये गुरवे नमः''

इति नामग्रहणं कथमिति चेत् । उदाहृतवाक्यस्यापरोक्षतो नामग्रहणनिषेधकत्वेन परोक्षतस्तद्ग्रहणे बाधकाभावात् । अत एवाचार्याणां नित्यापरोक्षीकृतगुरुत्वेऽपि मर्यादारक्षणाय तत्र तस्मै नम इति परोक्षनिर्देशः कृतः । अत्र तु गुरूंश्चेति साधारणप्रयोगस्यापरोक्षत्वकथनस्यैवोचितत्वात् । उपलक्षणमेतत् । सुधोक्तरीत्या गुरुत्वोपपादकगुरुत्वशास्त्रप्रभवत्वादिहेतुबाहुल्यसूचनाय गुरूनिति बहुवचनप्रयोग इति द्रष्टव्यम् । ननु देवतासमुच्चायकचशब्दसद्भावादपिशब्दो व्यर्थ इत्यत आह । **स्वस्येति** । पृथङ्नमस्कारेण प्रसक्तं गुरुदेवताभेदमपिशब्देन गर्हयामासेत्यर्थः । आक्षिपति ।। **यद्यपीति** ।। तथाच न पृथङ्नतिर्युक्तेति भावः । परिहरति ।। **तथापीति** ।। इतिशब्दः श्लोकव्याख्यानसमाप्तौ । यद्वा अपिपदेन कथमरुचिः सूचितेत्यत आह ।। **यद्यपीति** ।। अनेनापि तथापि विशेषानुग्रहार्थं नत्वेति व्याख्यातं भवति । तथाच भेदज्ञापिकायाः पृथङ्नतेर्विशेषानुग्रहरूपप्रयोजनान्तरसूचकापिशब्देन भेदे रुच्यभावः सूचित इति भावः । **नतिरिति** । प्रकारवाचीतिशब्दस्येत्यरुचिं सूचयतीत्यनेनान्वयः । उपलक्षणमेतत् । सुधानुसारेणास्योद्भवादिदमित्याद्यनुव्याख्यानोक्तजगज्जन्मादिकारणत्वादिविशेषणसमुच्चायकत्वमपि पदप्रयोजनं द्रष्टव्यम् । अधिकार्यादिशून्यत्वान्नेदं शास्त्रमारम्भणीयमित्यत आह । **अनेनैवेति** ।। आद्यपद्येनैवेत्यर्थः । अन्यार्थं प्रवृत्तेनापीत्येवार्थः । वस्तुगत्या अधिकार्यादिसत्वमपेक्षितं न तु तत्सूचनमित्यत आह ।। **श्रोतृप्रवृत्त्यङ्गभूता इति** ।। सूचनेन ज्ञातानामेव प्रवृत्त्यङ्गत्वान्नाज्ञातानाम् । ज्ञातार्थज्ञातसम्बन्धं श्रोतुं श्रोता प्रवर्तत इत्युक्तेरिति भावः । एवं प्रवृत्त्यङ्गत्वेनाधिकार्यादिसूचनं कर्तव्यमित्युक्तम् । इतोऽपि तत्कर्त्तव्यमित्याह । **तत्स्मरणस्येति** ।। स्मरणार्थं सूचनमिति भावः । उक्तं प्रथमतात्पर्ये । प्रारभतः प्रारम्भमाणस्य ।

(वाक्यार्थमञ्जरी)

महदिति भिन्नं पदम् । तेनान्महतः समानाधिकरणेत्याकारे महाफलमिति स्यादिति निरस्तम् । ननु निर्विघ्नपरिसमाप्त्यादेर्नमस्कारेणैव सिद्धेर्ग्रथनं व्यर्थम् । एवमधिकार्यादिसूचनस्य प्रवृत्त्यङ्गतया कर्तव्यत्वेऽपि न महाफलार्थकर्तव्यत्वम् अधिकारादिस्मरणेन महाफलसिद्धेः । न च स्मरणार्थमेव सूचनमिति वाच्यम् । तस्यान्यतोऽपि सम्भवादित्यत आह ।। **नमस्काराधिकार्यादीति** ।। यथाक्रममन्वयः । सत्यं नमस्कारेणैव समाप्त्यादिफलमिति । तथापि ग्रथनाभावे शिष्याः आचार्यैर्नमस्कारो न कृत एवेति मत्वा स्वयमपि न कुर्युः । अतस्तच्छिक्षणार्थं ग्रथनम् । अधिकार्यादिस्मरणं अन्यतोऽपि भवतीत्यपि सत्यम् । तथापि तत्सूचनाभावे शिष्याऽधिकार्यादिस्मरणं नावश्यकमिति आचार्यैर्न तत्सूचनं कृतमिति मत्वा न तत्स्मरणादिकं कुर्युः । अतो महाफलार्थं तत्स्मरणमावश्यकमिति शिष्यशिक्षार्थं सूचनं कार्यमेवेति न तस्य वैयर्थ्यमिति भावः । प्रागूर्ध्वं वा ग्रथनस्य सार्थक्ये वक्तव्ये अधिकार्यादिप्रसङ्गे तत्कथनमेकवाक्येनोभयप्रयोजनकथनसौकर्यार्थमिति ध्येयम् । अधिकार्यादिसूचनमेवोपपादयति ।। **तथाहीति** ।। सूचित इति यथायोगं सर्वत्रान्वेति । **प्रयोजनमिति** । यथाक्रममवान्तरमुख्यप्रयोजनमित्यर्थः । यथा सम्भवमिति ।। नारायणस्य विषयस्य प्रतिपाद्यत्वं, ज्ञानस्य तद्विषयकत्वं, गमनस्य ज्ञानजन्यत्वं सम्बन्ध इति भावः ।

## श्री पाण्डुरङ्गि केशवाचार्य विरचिता तत्त्वप्रकाशिकाविवृतिः

नत्वा श्रीशं गुरून् सर्वान् गुरुराजोक्तमार्गतः ।
तत्वप्रकाशिकागूढभावं वक्ष्ये यथामति ।।

*फलसाधनतासिध्यादिफलकत्वाभावात् । ननु सूत्रार्थ इत्यत्र सूत्रशब्देन व्याकरणसूत्रमेव किमिति न गृह्यते इति तत्राह ।। **अत्रेति** ।। कुत इत्यत आह ।। **तस्येति** । अस्तु मुख्यार्थाभिधायकत्वं तथाप्यत्र सूत्रशब्देन तद्ग्रहणं कुत इत्यत आह ।। **तेषाञ्चेति** ।। ब्रह्मसूत्राणां मुख्यत्वात्तेन तद्ग्रहणं युक्तमिति भावः ।। **पुरुषार्थो भवतीति सूचित इति** ।। भगवत्प्रसादस्य मोक्षहेतुत्वे अतःशब्देन संक्षेपत उक्त इत्यर्थः । विशिष्टगुणानप्याचष्ट इति ।। अत्र गुणशब्दो गुणोदीर्णत्व–दोषवजितत्व–ज्ञेयत्व–गम्यत्व रूपधर्मपरः । नारायणशब्दस्य विशिष्टगुणवाचकत्वप्रदर्शनं च, तस्य ब्रह्मशब्दसमानात् शास्त्रार्थवाचकत्वाच्च नारायण एव सर्वशास्त्रार्थ इति दर्शयितुम् । तथा च ब्रह्मणो नम्यत्वे अधिकृतत्वं निमित्तमित्युक्तं भवति । नरसम्बन्धित्वादित्यत्र नराः सज्जनाः । न रीयन्त इति नञुपपदाद्रीङ्क्ष्ये इति

*(अत्र कश्चन ग्रन्थः त्रुटितः ।)

**(विवृतिः)**

धातोः करणे ड्प्रत्यये प्रज्ञादित्वात्स्वार्थिके णप्रत्यये च कृते नारमिति रूपसिद्धिरिति द्रष्टव्यम् । अरमणं दुःखम् ।। **निर्दोषवेदोत्पन्नत्वादिति** ।। निर्दोषवेदवाचकान्नारशब्दात्, तस्येदमित्यणि कृते नारशब्दो वेदजन्यज्ञानवाचीति भावः । अरतिरहितत्वादिति भावः । न रीयन्त इति नराः, नराः एव नारा इति विग्रहः । कर्मणि ड्प्रत्यये स्वार्थिकेण्प्रत्यये सति सिध्यतीति भावः ।। नन्वरविरुद्धगुणाश्रय इति निर्वचने अरशब्दस्य विरुद्धार्थकनञ्समासे अरशब्दवाच्यदोषाश्रयो न भवतीति निर्वचने अरायणशब्दस्य विरुद्धार्थकनञ्समासे च 'नलोपो नञः' नञो नस्य लोपः स्यादुत्तरपदे इति नलोपे सति 'तस्मान्नुडचि' लुप्तनकारात्परस्याजादेर्नुडागमः स्यात्' इति नुडागमे च अनरायण इति भवेत् कथं नारायण इतीत्यत आह ।। **नगनाकादिशब्दवदिति** ।। ननु नभ्राण्नपान्नवेदानासत्यानामुचिन-कुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या ।। एषु प्रकृत्या नञ् स्यात् ।।

'नगोऽप्राणिष्वन्यतरस्यां' नगशब्दस्य नञ् प्रकृत्या स्यात् । अप्राणिष्वन्यतरस्यामिति, सूत्रद्वयेन नाकनगशब्दयोः नलोपभाव उक्तः । नारायणशब्दे नेति कथं दृष्टान्तीकरणमिति चेत् । मैवम् ।। स्त्रैणार्थ इत्यत्र स्त्रीपुंसाभ्यामित्यादिना विहितस्य नञो नलोपाभावार्थं 'नलोपो नञः' इति सूत्रे रात्रेः कृति विभाषेत्यतोनुवृत्तायाः विभाषायाः व्यवस्थितविभाषात्वस्य न्यास एवोक्तत्वेन नारायण इत्यत्रापि नलोपाभावाद्युपपत्तेः । यद्वा नसमासोस्तु । नन्वेमप्यस्य भिन्नपदत्वेन णत्वासम्भव इति चेन्न । 'पूर्वपदात्संज्ञायामगः' पूर्वपदस्थान्निमित्तात्परस्य संज्ञायां नस्य णत्वं स्यान्न तु गकारव्यवधाने' इति सूत्रेण णत्वं भविष्यतीति न दोषः । न चात्र नशब्दस्य ल्युडन्तत्वेन कथं पुल्लिङ्गत्वमिति वाच्यम् । ल्युटः टित्करणसामर्थ्यात् ङीपि नारायणीति भवतीति तथा च नपुंसकत्वनियमो नेति पुल्लिङ्गत्वमपि भवतीति भावः ।। 'न भ्राडित्यादिसूत्रद्वये नाकनगशब्दवदयमप्युपसङ्ख्येयः । उक्तनिर्वचनानुसारेणास्य नारायणशब्दप्रयोगस्य प्रामाणिकत्वात्' इति भावबोधे ।।

ननु देवतासमुच्चायकचशब्दसद्भावादपिशब्दः किमर्थ इत्यत आह । **यद्यपीति** ।। अनेनापीत्येत्तत्तथापीति व्याख्यातम् ।। पृथङ्नतिरितीत्यत्रेतिशब्दस्य इत्यरुचिं सूचयतीति पूर्वेणान्वयः ।। **अनेनैवेति** ।। ज्ञेयमित्यादिवेत्यर्थः ।। अधिकारादिसूचने श्रोतृप्रवृत्त्यङ्गमूलत्वरूपमेकं हेतुमुक्त्वा हेत्वन्तरमाह ।। **तत्स्मरणेति** ।। ननु ग्रन्थस्य फलसाधनतायाः विघ्नाभावस्य च नमस्कारेणैव सिद्धेः ग्रथनं व्यर्थम् । एवमधिकारसूचनस्य प्रवृत्यङ्गतया कर्तव्यत्वेऽपि न महाफलार्थं तत्कार्यं, तत्स्मरणेनैव फलसिद्धेरित्यत आह ।। **नमस्काराधिकार्यादीति** ।। अधिकारादिसूचनमेवोपपादयति ।। **तथा हीति** ।।

## सूत्रभाष्यम्

द्वापरे सर्वत्र ज्ञान आकुलीभूते तन्निर्णयाय ब्रह्मरुद्रेन्द्रादिभिरर्थितो भगवान्नारायणो व्यासत्वेनावततार । अथेष्टानिष्टप्राप्तिपरिहारेच्छूनां तद्योगमविजानतां तज्ज्ञापनार्थं वेदमुत्सन्नं व्यञ्जयंश्चतुर्धा व्यभजत् । चतुर्विंशतिधैकशतधा सहस्रधा द्वादशधा च । तदर्थनिर्णयाय ब्रह्मसूत्राणि चकार ।

तच्चोक्तं स्कान्दे —

नारायणाद्विनिष्पन्नं ज्ञानं कृतयुगे स्थितम् ।
किञ्चित्तदन्यथा जातं त्रेतायां द्वापरेऽखिलम् ।।

गौतमस्य ऋषेः शापाज्ज्ञाने त्वज्ञानतां गते ।
सङ्कीर्णबुद्धयो देवा ब्रह्मरुद्रपुरस्सराः ।।

शरण्यं शरणं जग्मुः नारायणमनामयम् ।
तैर्विज्ञापितकार्यस्तु भगवान्पुरुषोत्तमः ।।

अवतीर्णो महायोगी सत्यवत्यां पराशरात् ।
उत्सन्नान्भगवान्वेदानुज्जहार हरिः स्वयम् ।।

चतुर्धा व्यभजत्तांश्च चतुर्विंशतिधा पुनः ।
शतधा चैकधा चैव तथैव च सहस्रधा ।।

कृष्णो द्वादशधा चैव पुनस्तस्यार्थवित्तये ।
चकार ब्रह्मसूत्राणि येषां सूत्रत्वमञ्जसा ।।

अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् ।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ।।

निर्विशेषितसूत्रत्वं ब्रह्मसूत्रस्य चाप्यतः ।
यथा व्यासत्वमेकस्य कृष्णस्यान्ये विशेषणात् ।।

(सूत्रभाष्यम्)

सविशेषणसूत्राणि ह्यपराणि विदो विदुः ।
मुख्यस्य निर्विशेषेण शब्दोऽन्येषां विशेषितः ।।

इति वेदविदः प्राहुः शब्दतत्त्वार्थवेदिनः ।
सूत्रेषु येषु सर्वेऽपि निर्णयास्समुदीरिताः ।।

शब्दजातस्य सर्वस्य यत्प्रमाणश्च निर्णयः ।
एवंविधानि सूत्राणि कृत्वा व्यासो महायशाः ।।

ब्रह्मरुद्रादिदेवेषु मनुष्यपितृपक्षिषु ।
ज्ञानं संस्थाप्य भगवान् क्रीडते पुरुषोत्तमः ।। इत्यादि ।

## सत्तर्कदीपावली

कथमेतेषां सूत्राणां प्रामाण्यं, कथं चोपादेयत्वमित्यत आह ।। **द्वापर इति ।।** न दुर्मतिजिनादिवाक्य-वदस्याप्यसुरादिव्यामोहनार्थत्वं किन्तु ब्रह्मादिदेवऋष्यादीनां परतत्त्वज्ञाननिर्वृत्त्यर्थं प्रणीतत्वात् श्रुतिमूलत्वाद्युक्तिमूलत्वाच्च प्रामाण्यम् । उपादेयत्वं त्विष्टानिष्टप्राप्तिपरिहारोपायज्ञापकवेदनिर्णायकत्वात्सिद्ध्यतीत्यर्थः । बहुपुराणादिसिद्धत्वेन विगानानर्हमप्येतत्सूत्रप्रामाण्यं स्कान्दपुराणादिवाक्यैर्द्रढयति ।। **नारायणादिति ।।** गौतमशापस्तु स्वहतगोनिर्मातृविषयः । चतुर्विंशत्यादिभेदस्तु वेदशाखाविषयः । कृष्णद्वैपायनादन्ये द्रौणिव्यासादयो विशेषणात्सोपपदव्यासशब्दाभिधेया इत्यर्थः ।

## तत्त्वप्रदीपिका

कथमेतेषां सूत्राणां प्रामाण्यमिति चेदाप्तिमूलत्वात् श्रुतिमूलत्वाद्युक्तिमूलत्वाच्चेति ब्रूमः । आप्तिस्तावत्, प्रसक्तिश्रोतृवक्तॄणामानुकूल्याद्भवति । तत्र प्रथमतः प्रसक्तिं दर्शयति– **द्वापरे सर्वत्र ज्ञान आकुलीभूत इति ।** द्वावेव धर्मपादौ परं यस्मिन्युगे प्राप्ते, ततः क्रमादपचयोऽन्त एकोऽवशिष्यते तस्मिन्द्वापरे । सर्वत्र, मनुष्याणामृषीणां देवानां च । केषाञ्चिदिदं वा तत्त्वमदो वेति संशयो बभूव । तत्र चैकतरप्राधान्यं केषाञ्चित्, अन्यतरप्राधान्यमन्येषां, इदमेव नान्यदित्यन्येषां, तद्विपरीतमपरेषामिति ज्ञानमाकुलीबभूव । तन्निर्णयाय ब्रह्मरुद्रेन्द्रादिभिरर्थित इति श्रोतॄन्दर्शयति । इदमेव तत्त्वं नान्यदिति सम्यज्ज्ञाननिर्णयापेक्षयेन्द्रादिभिरर्थितो ब्रह्मा रुद्रश्च । ततस्तैः सर्वैरुपगम्योत्तमाधिकारिभिरलब्धतत्त्वोत्कण्ठापरिखिन्नहृदयैरनन्यशरणत्वेन सकरुणमभिष्टूय प्रसादितोऽर्थितो भगवान्नारायणो व्यासत्वेनावततारेति वक्तृस्वरूपमाह ।।

(तत्त्वप्रदीपिका)

''ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः ।
भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ॥

इत्यादावशेषत इति विशेषणान्निरतिशयज्ञानादिगुणवान्भगवच्छब्दार्थ उक्तः स्यात् । गुणगुण्यभेदाभिप्रायात् । न च गुणानां परस्परं भेदः । विशेषाङ्गीकारेणैव बहुवचनाविरोधात् ।

ननु कथमेकस्यैव गुणगुणिभावः । गुणव्यतिरिक्तो हि गुणसम्बन्धेन गुणवान् । दण्डव्यतिरिक्तो दण्डीतिवत् भिन्नयोरेव तथानुभवादिति चेन्न । प्रत्यक्षत एव दण्डदण्डिनोर्भेदानुभवात्सम्बन्धापेक्षया दण्डीति युज्यते । न च गुणगुणिनोर्भेदोऽनुभूयते । 'विज्ञानमानन्दं ब्रह्म' इत्यादिसामानाधिकरण्येनाभेदप्रतीतेः । लोके च 'शुक्लः पट' इत्यादौ । तत्र शौक्ल्यसम्बन्धापेक्षया शुक्लत्वमिति चेन्न । 'शुक्लो वर्ण' इति प्रयोगदर्शनात् । तथाच श्रुतिः 'श्वेतं रूप'मिति, 'तस्य ह वा एतस्य परमस्य नारायणस्य चत्वारि रूपाणि शुक्लं रक्तं रौक्मं कृष्ण'मिति च । शौक्ल्यमित्यादिव्यवहारो निष्कर्षार्थः स्वरूपत्वमितिवत् । सामानाधिकरण्यं हि सर्वेषामभेदे प्रमाणम् । 'मृद्धट' इत्यादिसामानाधिकरण्येऽपि कारणेनाभेदप्रतीतेर्विनाशाच्च कार्यस्य भेदाभेदोपपत्तिः । तस्माद्द्रव्ये सत्यप्यपायिनां गुणादीनां भेदाभेदौ यावद्द्रव्यभाविनामभेदः । ननु भेदः प्रतीयते गुणगुणिनोः, पटस्य शौक्ल्यमिति तन्न । विशेषप्रतीतिरेषा 'पटस्य भेद' इतिवत् । न हि पटाद्भेदस्य भेदः । अनवस्थानात् । यथा च समवायस्य सत्त्वमिति स्वरूपभूतमेव सत्त्वं विशेष्यते । न च तस्य सत्ता भिन्नाऽभ्युपगम्यते वैशेषिकैः । द्रव्यगुणकर्मस्वेव सत्तासामान्यस्य वृत्तेः । अस्ति च ''समवायः सन्नि''ति प्रयोगविशेषः । अन्यथा 'समवायः समवाय' इतिवदनर्थकः प्रयोगः स्यात् ।

न चौपचारिकं समवायसत्त्वम् । मुख्यतस्तदभावप्रसङ्गात् । यथा च मायिनां ब्रह्मणः सत्यज्ञानानन्दत्वादि । न चैकस्मिन्ब्रह्मणि विशेषमन्तरेण सत्यज्ञानादिशब्दप्रवृत्तिः, तेषां पर्यायत्वप्रसङ्गात् । निर्विशेषेऽपि वस्तुन्यनृतादिव्यावर्त्यभेदाच्छब्दान्तरप्रवृत्तिरिति चेत् । अनृतादिव्यावृत्त्या ब्रह्मणि विशेषोऽस्ति वा न वा । न चेदेकपदेनैवाखण्डार्थसिद्धेः पदान्तरवैयर्थ्यं, पर्यायत्वं च सत्यादिपदानां स्यात् । विशेषाभ्युपगमेन वेदपदोदितस्य ब्रह्मणोऽनन्तगुणत्वमित्यस्मन्मतमेवाविस्मृतविमलविबुधमहाजनमानसमाननीयमखिलघस्मरैरस्मृतमपि तैरङ्गीकृतं स्यात् । अथानृतादिव्यावृत्तेरन्यो विशेषो नाभ्युपगम्यते, अध्यस्तातद्रूपव्यावृत्तेरेव विवक्षितत्वात्; न च तावताऽद्वैतहानिः, भावरूपविशेषाभावात्, भावाद्वैतं हि तैरभ्युपगम्यते; अतो नाभावेन सविशेषत्वप्रसङ्ग इति यदि ब्रूयात्स प्रष्टव्यः सोऽभावो ब्रह्मणो भिन्नः किमुताभिन्न इति । भिन्नश्चेद्भेदधर्मकत्वादभावविशिष्टत्वाच्च ब्रह्मणः सविशेषत्वम् । अभिन्नश्चेदभाव एव वा ब्रह्मैव वा स्यात् । अभावत्वे शून्यवादप्रसङ्गः । ब्रह्ममात्रत्वे ब्रह्मपदेनैव तस्य सिद्धेः पदान्तरवैयर्थ्यम् । अनृताद्यभावोपलक्षितस्वरूपत्वान्नाभावविशिष्टो वाक्यार्थ इति चेत्, उपलक्षितत्वविशेषः केन वार्यते । स्वरूपत्वं वाक्यार्थत्वमखण्डार्थत्वं च । तस्मात्सर्वथा सर्ववादिभिरभ्युपेयो विशेषः ।

(तत्त्वप्रदीपिका)

सोऽयमेकत्रापर्यायनानाशब्दप्रवृत्तिहेतुः । तेनैकमेवानेकधा द्रव्यगुणक्रियासामान्यादिस्वरूपेण प्रमाण-व्यवहारपदवीमध्यास्ते । स च विशेषो वस्तुस्वरूपं स्वनिर्वाहकश्च । न चेदृशं विशेषमन्तरेण सर्वेषां व्यवहारनिर्वाहः । न च गुणगुण्यादिभेदे सम्बन्धस्सम्भवी । तस्य सम्बन्धस्य ततो भिन्नत्वे गुणवदेव सम्बन्धान्तरापेक्षत्वादनवस्थानात् । अभिन्नत्वे वस्तुमात्रमिति न सम्बन्धस्स्यात् । तस्माद्गुणगुणिनोर्भेदं भेदाभेदौ वा कल्पयित्वा, तयोस्सम्बन्धं समवायमन्यं वा कल्पयित्वा, तदनवस्थापरिहारार्थं तस्य स्वनिर्वाहकत्वकल्पनाद्वरमेकस्य द्रव्यस्य गुणादिविशेषरूपेण स्वनिर्वाहकत्वम् । तदेवमेक एव नारायणो ज्ञानैश्वर्यादिसविशेषानन्तगुणगणात्मको भगवान् व्यासत्वेनावतारेति सूक्तमुक्तम् ।

तथा च महोपनिषदि —

"गुणक्रियादयो विष्णोः स्वरूपं नान्यदिष्यते ।
अतो मिथोऽपि भेदो न तेषां कश्चित्कदाचन ।।

स्वरूपेऽपि विशेषोऽस्ति स्वरूपत्ववदेव तु ।
भेदाभावेऽपि तेनैव व्यवहारश्च वर्तते ।।" इति ।

ब्रह्मतर्के च–

"अभिन्नत्वमभेदश्च यथा भेदविवर्जितम् ।
व्यवहार्यं पृथक् च स्यादेवं सर्वे गुणा हरेः ।।

अभेदाभिन्नयोर्भेदो यदि वा भेदभिन्नयोः ।
अनवस्थितिरेव स्यान्न विशेषणतामतिः ।।

मूलसम्बन्धमज्ञात्वा तस्मादेकमनन्तधा ।
व्यवहार्यं विशेषेण दुस्तर्कवलतो हरेः ।
विशेषोऽपि स्वरूपं सः स्वनिर्वाहकताऽस्य च" ।। इति ।

अथेत्यादेरयमर्थः । अथानन्तरमेव । अन्यत्राव्यापृतसुखप्राप्तौ दुःखपरिहारे चेच्छावतां तयोरुपायं विशिष्टमजानतां तज्ज्ञापनार्थं वेदमपपाठादुत्सन्नमनभिव्यक्तमध्यापनेन व्यञ्जयन्नध्येतॄणामल्पशक्तित्वं वीक्ष्य ऋगादिभेदेन चतुर्धा व्यभजत् । तांश्च चतुरो वेदान्प्रत्येकं शाखोपशाखाभेदेन व्यभजत्; ऋग्वेदं चतुर्विंशतिधा, यजुर्वेदमेकशतधा, सामवेदं सहस्रधा, अथर्ववेदं द्वादशधेति । तेषां सर्वेषामर्थमुपक्रमोप-संहारादितात्पर्ययुक्तिभिर्निर्णेतुं ब्रह्मसूत्राणि चकारेति श्रुतिमूलत्वं युक्तिमूलत्वं च प्रदर्शितं सूत्राणाम् ।

नन्वागमस्याप्रामाण्यान्न तन्मूलतया प्रामाण्यं सिद्ध्यतीति । तन्न । तदप्रामाण्यस्याप्यागम-प्रामाण्यानङ्गीकारे दुस्साध्यत्वात् । न चैतदनुमासाध्यम् । वाक्यस्यावोधकत्वेऽनुमाप्रयोगवैयर्थ्यात् । वचना-

(तत्त्वप्रदीपिका)

यत्तत्वात्साधनस्य । कथं चावोधकेन परं प्रति साधयेत् । स्वयं वा कथं बुध्येत । प्रत्यक्षं मानं, नागम इत्ययं सिद्धान्तोऽपि स्वगुरुवाक्यादवसीयते । आगमस्याप्रामाण्यं वदतः प्रत्यक्षस्यापि स्यात् । प्रत्यक्षस्य सम्प्रतिपन्नं प्रामाण्यं चेदागमस्यापि तथा । किञ्च नागमः प्रमाणमिति वचनं प्रमाणमुताप्रमाणम् । अप्रमाणं चेदागमः प्रमाणमेव । प्रमाणं चेत्स्वव्याहतिः । अतः प्रामाण्यमङ्गीकार्यम् । अथोच्येत, वक्तृज्ञानं शब्दादनुमीयते, आप्तवाक्यस्य ज्ञानपूर्वकत्वाज्ज्ञानलिङ्गकोऽर्थोऽवगम्यते, तज्ज्ञानस्य यथार्थत्वात्, अतो नाव्यवधानेनापि शब्दादर्थनिश्चयः, अव्यवधानेन शब्दार्थनिश्चये प्रमाणाप्रमाणवाक्यविभागो न स्यादिति । मैवम् । न तावद्वक्तृज्ञानमात्रानुमानं शब्दात् । तथा सति तद्व्यवधानेनापि शब्दादर्थागमाभावप्रसङ्गात् । अर्थविशेषितं ज्ञानमनुमीयते चेदर्थः प्रथमतः प्रतीत इति किमत्र व्यवधानम् । प्रतीयत एव केवलं प्रथमतो न निश्चितः, तत्प्रमाणान्तरादेव हि निश्चीयते, तस्मादनुमानात्मकं पुरुषवाक्यमिति चेन्न । शब्दादेवार्थज्ञानं, तन्निर्दोषत्वज्ञानं प्रमाणान्तरापेक्षम् । न च तावता तस्य तत्राप्रामाण्यम् । अन्यथा प्रत्यक्षेऽपि क्वचिन्निर्दोषत्वज्ञानस्य प्रमाणान्तराधीनत्वेन स्वार्थे प्रामाण्याभावप्रसङ्गादनुमानात्मत्कत्वप्रसङ्गाच्च । अत आगमस्य स्वार्थे प्रामाण्यमङ्गीकार्यं किं पुनर्वेदशब्दस्य । तदेतदाह भगवान्भाष्यकारो 'वेद'मिति । वेदनादेव हि वेद इत्युच्यते । वेदो न वेदयतीति विप्रतिषिद्धम् । तच्च प्रामाण्यं स्वत एवाभ्युपगन्तव्यं प्रत्यक्षवदेव । परतश्चेत्तस्यापि परत इत्यनवस्थानात् । न चानुमादेः गुणविमर्शः क्रियते । दोषाभावे प्रामाण्यसिद्धेः । तस्माद्दोषादप्रामाण्यं दोषाभावे स्वत एव प्रामाण्यम् । दोषस्य प्रामाण्यप्रतिवन्धकत्वाद्दोषाभावान्वय-व्यतिरेकित्वात्तस्मादेव प्रामाण्यं न स्वत इति चेत्तदयुक्तम् । न ह्युत्तंभकाभावान्वयव्यतिरेकित्वेनाग्ने-रौष्ण्यमस्वतः स्यात् । तस्मात्प्रमाणानां प्रामाण्यं स्वत एव । दोषादप्रामाण्यम् । दोषश्च बलवत्प्रमाणाज्ज्ञायते । उक्तं च ब्रह्मतर्के—

''अदुष्टमिन्द्रियं त्वक्षं तर्कोऽदुष्टस्तथाऽनुमा ।<br>
आगमोऽदुष्टवाक्यं च स्वदृक्चानुभवस्स्मृतः ।<br>
बलवत्प्रमाणतश्चैव ज्ञेया दोषा न चान्यथा ।।'' इति ।

किं पुनर्वेदस्यापौरुषेयत्वेनासम्भाव्यदोषस्य । पुरुषकृतत्वे ह्यज्ञानविप्रलम्भादिदोषाश्शङ्क्येरन् । न च वेदनित्यत्वं विना धर्माधर्मादिसिद्धिः । न चादृष्टत्वात्तदभावः । प्रत्यक्षायोग्यत्वात्तस्य । दृश्यन्ते हि सूक्ष्मास्सूक्ष्मदृग्भिस्स्थूलदृग्भिरदृष्टाः । विप्रतिपत्तौ परवाक्यायुक्त्या वा निर्णयः । युक्त्यविषयत्वात्तु धर्मादौ वाक्यापेक्षा । तस्य च पौरुषेयत्वकल्पने सर्वज्ञत्वतत्कृतत्वादिगुरुकल्पना स्यात् । न च नित्यत्वे किञ्चित्कल्प्यम् । कर्तरि प्रमाणाभावे स्वत एव नित्यत्वं स्यादेव । न च धर्मादिः कस्यचित्प्रत्यक्षः प्रमेयत्वात्करतलामलकवदित्यनुमानमात्रात्सर्वज्ञसिद्धिः । विप्रतिपन्ना दर्यः केनचित्पाटिताः दरीत्वा-त्सम्प्रतिपन्नदरीवदित्यादिना सिंहशृङ्गादेरपि सौलभ्यप्रसङ्गात् । योग्यानुपलब्धिविरुद्धोऽयं हेतुरिति चेत्समः

(तत्त्वप्रदीपिका)

पर्यनुयोगः । धर्मादिसूक्ष्मवस्तुनिदर्शिन उपलब्धियोग्यत्वमेव नास्तीति चेदेवं पृथुलगभीरदरीकारणस्येत्यपि समं समाधानम् । प्रत्यनुमा चात्र सम्भवति, विमतो धर्मदृक् न भवति पुरुषत्वात्, अविप्रलम्भकत्वनियतश्च न भवति, चैत्रवदित्यादिका । न चापसिद्धान्तोक्तिरियम् । केवलानुमानगम्यसर्वज्ञनिरासपरत्वादस्याः । अथ वाक्यत्वाल्लौकिकवाक्यवत्पौरुषेयत्वं मन्येथाः, सशरीरकर्तृरहितत्वादपौरुषेयत्वं किं न स्यादात्मवत् । ''न तस्य कार्यं करणं च विद्यत'' इत्यादिवाक्यसिद्धत्वान्नेश्वरस्यात्यन्तासिद्धिरिति चेन्न । सर्वज्ञेश्वरसिद्धौ तत्कृतत्वेन वेदप्रामाण्यसिद्धिः, प्रामाण्यसिद्धौ ततः सर्वज्ञसिद्धिरित्यन्योन्याश्रयत्वात् । तस्मादपौरुषेयो वेदः स्वत एव प्रमाणं चेति सिद्धम् ।। तच्चोक्तमाचार्यवर्येणैव वेदमुत्सन्नं व्यञ्जयन्निति ।। स्वत एव वेदयतीति वेदः । तथाच पिप्पलादश्रुतिः– ''नेन्द्रियाणि नानुमानं वेदा ह्येवैनं वेदयन्ति तस्मादाहुर्वेदा'' इति । ''न चक्षुर्न श्रोत्रं न तर्को न स्मृतिर्वेदा ह्येवैनं वेदयन्ति'' इति च भाल्लवेयश्रुतिः । नित्यत्वे च श्रुतिः– ''वाचा विरूप नित्यया'' इति । ''नित्ययाऽनित्यया स्तौमि ब्रह्म तत्परमं पद''मिति । ''श्रुतिर्वाव नित्या अनित्या वाव स्मृतयो याश्चान्या वाच'' इति पैङ्गिश्रुतिः ।

''विज्ञेयं परमं ब्रह्म ज्ञापिका परमा श्रुतिः ।
अनादिनित्या सा तच्च विना तां न स गम्यते'' ।। इति कात्यायनश्रुतिः ।

''वेदास्ते नित्यविन्नत्वात् श्रुतयश्चाखिलैः श्रुतेः ।
आम्नायोऽनन्यथापाठादीशबुद्धिस्थिताः सदे''ति महावाराहे ।।

न चानन्विते शब्दशक्तिरिति युक्तम् । अनन्वितार्थस्यैवाभावात् । अन्वितमेव हि सर्वं दृश्यते । एकपदश्रवणेन हि सामान्यान्वयप्रतीतौ विशेषान्वयाकाङ्क्षापदान्तरश्रवणात्पूर्यते । स्वत एवान्विता-नामर्थानामनन्वितत्वेन पदवाच्यत्वं कल्पयित्वा तेषामेवान्योन्यान्वितानां वाक्यार्थलक्षकत्वकल्पनाद्वरमन्विता-नामेव पदार्थानां वाक्यार्थत्वाश्रयणम् । अनुभवानुकूल्यात् । अन्यथा वाक्यार्थो नाम न स्यात् । ननु श्वेतरूपं पश्यतो हेषाशब्दं खुरनिष्पेषशब्दं च शृण्वतः 'श्वेतोऽश्वो धावती'ति धीर्भवति, तस्मात्प्रथम-मनन्विताः प्रतीता अर्थाः परस्परान्वयं बोधयन्तीति दृष्टमेवाश्रीयते, न कल्प्यत इति । तदेतदयुक्तम् । यतस्तत्राप्यन्वितानामेव प्रथमतः प्रतीतिः । न हि श्वेतिमा द्रव्यानन्वितः प्रतीयते, हेषादेश्च सामान्यान्वयो ज्ञात एव, वस्तूनामन्वयनियमात् । अन्यथा तैरन्वितत्वेन कथमश्वो विशिष्टार्थः पश्चाद्बोध्येत । न चात्रार्था-नामन्वयबोधकत्वम् । न ह्यर्थो नाम प्रमाणमस्ति । अनुमा ह्येषा, अयं श्वेतपदार्थोऽश्वो भवितुमर्हति खुर-निष्पेषहेषाशब्दवत्त्वात्सम्प्रतिपन्नवदिति । तस्मादन्विताभिधायिनश्शब्दाः । एतदपि सूचितं गुरुभिरेव तद्योगमविजानतां तज्ज्ञापनार्थं वेदमिति ।।

अत्र च केचिदाचक्षते, सत्यमन्विताभिधायित्वं शब्दानामस्त्येव, तथाऽपि न सिद्धान्विते तेषां शक्तिः किन्तु कार्यान्वित एव, तत्रैव व्युत्पत्तिसम्भवादिति । तदप्यचारु । कार्यस्य कार्यान्वयाभावा-

(तत्त्वप्रदीपिका)

त्प्रयोजकभेदकल्पनाप्रसङ्गात् । न च कार्यान्वयान्वयिनीति वाच्यम् । तथाविधवस्तुव्यवहाराभावात् । न हि देवदत्तो देवदत्तपुत्रपुत्रीत्युच्यते । न च कार्यप्रतियोगिकेनान्वयेनान्वयित्वं कार्यस्य । अन्वयित्वं हि नामान्वयधर्म धर्मित्वम् । कार्यधर्मेणान्वयेनान्वयित्वं सिद्धस्य च नास्ति । अतो न कार्यान्वयान्वयिनि शक्तिः कल्प्या ।।

ननु 'शुक्लां दण्डेन गामानये'ति वाक्यश्रवणसमनन्तरमेव श्रोतुर्गवानयनप्रवृत्तिदर्शनात्ततः प्रवर्तकज्ञानमनुमिमीते बालः, विगीता प्रवृत्तिः प्रवर्तकज्ञानपूर्विका प्रवृत्तित्वादस्मत्प्रवृत्तिवदिति; तच्च कार्यज्ञानं भवितुमर्हति प्रवर्तकज्ञानत्वादस्मत्प्रवर्तकज्ञानवदिति चानुमाय पुनः ''शुक्लां गां बधान'' ''शुक्लमश्वं दण्डेनाऽनये''त्यादि बहुकृत्व एकैकपदान्तरावापोद्धारे दण्डाद्यर्थविशेषावापोद्धारदर्शनात्सर्वप्रयोगे च कार्यानुगमात्प्रवर्तकज्ञानपूर्वकत्वनियमात्प्रवृत्तौ प्रवर्तकद्वारमेव सकलशब्दशक्तिं जानाति, कार्यस्यैव प्रवर्तकत्वं कार्यान्वित एव सकलशक्तिं बालो निश्चिनोतीति । तदेतद्बालविभीषिकामात्रं भ्रान्तानाम् । न हि तस्य वृद्धस्यापीदृशी पटुतरा बुद्धिर्भवति, यया शुक्लादिपदसमुदायक्रमं सकृत् श्रुतमविस्मृत्य तदनन्तरमेवान्यसम्भाषणोत्थानादिकां श्रोतुरानुषङ्गिकप्रवृत्तिं च दृष्टामपहाय गवानयनप्रवृत्तावेव ततः प्रवर्तकज्ञानमनुमिमीते, पुनस्तदर्थसमुदायं च हृदि सन्निधाय, तदेकपदोद्धारे तदर्थोद्धारं, पदान्तरावापे तदर्थावापं, सर्वत्र कार्यानुगमात्कार्यान्विते शक्तिं जानीयात् । किं पुनर्द्वित्रवर्षस्य बालस्य तत्क्षणदृष्टमपि विस्मरतः । स हि 'इयं माता', 'अयं तव भ्राताऽपूपमत्ती'त्यादिवाक्यानां नित्यपरिचितेष्विष्टेषु वर्तमानेष्वर्थेष्वाकाङ्क्षासन्निधियोग्यताभावात्प्रथमं शक्तिं जानाति । पुनश्च 'भ्राता क्षीरं पिबति', 'अहमपूपमद्मि' इत्यावापोद्धाराभ्यामङ्गुलिप्रसारणादिपूर्वकमुक्ते विशेषव्युत्पन्नो भवति । पुनश्च 'अपूपमघसं', 'गामयमानैषीदि'त्यादावनन्तरानीतेऽर्थे, एवं वर्तमानेऽतीते च व्युत्पन्नस्य तत एष्यदानयने बुद्धिरवतरतीति सिद्धान्वित एव बालश्शक्तिं जानाति । न प्रवर्तकद्वारं बालो ज्ञातुं शक्नोति । प्रवृत्तावाकाङ्क्षाद्यभावात् । नापि कार्यान्विते, कार्यस्यैवाभावात् । नापीष्टसाधनतां विना कार्यता नामास्ति । कृतियोग्यं कार्यमित्युक्ते निषिद्धस्यापि कार्यत्वं स्यात् । अकर्तुमशक्यत्वं च निषिद्धे समानम् । तस्मादिष्टसाधनव्यतिरेकेण कार्याभावान्न कार्यस्य प्रवर्तकत्वम् । साधनज्ञानस्य प्रवृत्त्यन्वयव्यतिरेकावुभयसम्प्रतिपन्नौ । न चातीतेष्टसाधने साधनताज्ञानमस्ति । नष्टस्य साधनस्य साधनताया अपि नष्टत्वात् । तत्पक्षे यत्कार्यज्ञानहेतुरिष्टसाधनज्ञानं तदेव प्रवृत्तिहेतुरस्माकमिति नातीतदूरस्थादौ व्यभिचारः । अपि च सिद्धेऽर्थे प्रामाण्यं नास्तीत्येतद्वाक्यं प्रमाणमुताप्रमाणम् । प्रमाणं चेदिदमेव हि सिद्धेऽर्थे प्रमाणं किमन्यनिवारणेन । अप्रमाणं चेत् सिद्धार्थे प्रामाण्यं न निराकृतम् । किञ्च कार्यवादिनो न परार्थानुमानं प्रमाणम् । सिद्धविषयत्वात् । न च तत्र विद्धीत्याद्यध्याहारः । अनध्याहृतेऽपि तस्मिन्वाक्यादर्थावगमात् । अप्रयोजकत्वात्तस्याऽधिक्यदोषप्रसङ्गाच्च । विध्यध्याहारेऽप्यनुमायाः स्वार्थे प्रामाण्यमभ्युपगन्तव्यम् । अन्यथा प्रतिवादिनं प्रति ज्ञानविधिमात्रपरं

(तत्त्वप्रदीपिका)

साधनदूषणरहितमसङ्गतं स्यात् । तस्माद् ब्रह्मवाक्यानां च प्रतिपत्तिकर्तव्यतापरत्वेऽपि यथाश्रुतानन्तगुणगण-परिपूर्णब्रह्मणि प्रामाण्यपर्याप्तिरिति न नः किञ्चिच्छिद्यत इति सिद्धेऽर्थे प्रामाण्यं सुस्थितम् । अतः सुष्ठूक्तं इष्टानिष्टप्राप्तिपरिहारेच्छूनां तद्योगमविजानतां तज्ज्ञापनार्थमिति ।। उक्तेऽर्थे प्रमाणमाह । तच्चोक्तं स्कान्दे "नारायणाद्विनिष्पन्नमि"त्यादि ।।

नन्वपौरुषेयो वेदः प्रमाणमस्तु, किमिति पुराणादिष्वादरः क्रियते । उच्यते । वेदानुसारित्वाद्वेद-परिगृहीतत्वाच्च । "ऋग्वेदं भगवोऽध्येमी"त्यारभ्य "इतिहासपुराणं पञ्चमं वेदानां वेद"मिति हि च्छन्दोगश्रुतिः । 'इतिहासपुराणः पञ्चमो वेदानां वेद' इति च । 'इतिहासः पुराणो विद्या उपनिषदः श्लोका' इति बृहदारण्यके । 'सर्वेषु वेदेषु तथेतिहास' इति पैङ्गिश्रुतिः ।

"उपास्य एकः परतः परो यो वेदैश्च सर्वैः सह चेतिहासैः ।
सपञ्चरात्रैः सपुराणैश्च देवः सर्वैर्गुणैस्तत्र तत्र प्रतीतैः ।।' इति भाल्लवेयश्रुतिः ।

"वेदैश्च पञ्चरात्रैश्च ध्येयो नारायणः परः ।
पञ्चरात्रं च वेदाश्च विद्यैकैव विधीयत" इति नारायणश्रुतिः ।

"सर्वान्वेदान्सेतिहासान्सपुराणान्सयुक्तिकान् ।
सपञ्चरात्रान्विज्ञाय विष्णुर्ज्ञेयो न चान्यथा ।।" इति ब्रह्मतर्के ।

सूत्रकारश्च भगवांस्तत्र तत्रोवाच "स्मृतेश्च", "अपि स्मर्यत" इत्यादि ।।

यद्यप्याचार्यः स्वोक्तार्थे स्वयमेव प्रमाणं, सर्वज्ञत्वादविप्रलम्भकत्वाच्च । तथाऽपि 'स्कान्दे चोक्तमि'ति प्रौढवादं करोति । सर्वज्ञत्वं तावत् श्रुतिसिद्धं, "बळित्था तद्वपुषे धायि दर्शत"मिति । इह हि प्रस्तुतस्य बलज्ञानस्वरूपस्य वायोः प्रथमावतारो रामस्याऽज्ञाप्रणेता साधको 'मति'शब्दोक्तः । द्वितीयं वपुः पूतनाक्षयकृत् 'पृक्ष'शब्दोक्तम्, ऋगादिसप्तविद्यानिवासात्मकं चास्य ऋषभस्य तृतीयं वपुर्ज्ञानदोहनार्थं योषासु जातम् । 'दश'शब्दः पूर्णवाची, "तानि दश दशेति वै सर्वमेतावती हि सङ्ख्या" इत्यादिश्रुतेः । 'दशप्रमति'मिति पूर्णप्रज्ञनामोक्त्या सर्वज्ञत्वमुक्तम् । येन 'शवसा' सुखेन महितषड्गुणस्य विष्णोर्वरणीया-न्गुणान् रुद्रादीश्वरा अन्ये च सूरयो 'निरक्रन्त' निरजानत । यत्र चायं 'प्रदिवः' प्रकृष्टज्ञानो मध्वनामा भूत्वा 'मातरिश्वा' गुहायां निहितं विष्णुं 'आधवे आ समन्तादीश्वरत्वे 'मथायति' प्रकाशयति, असत्य-मनीश्वरं जगद्वदद्भिरसुरैर्गूहितं सन्तं प्रकाशयतीत्यर्थः । यत्र च परमेश्वरस्य स्वपितुरिच्छया नीयमानः प्रश्नवीरुधः स्वदन्तेषु पर्यारोहयति चर्वितवच्छकलीकरोतीत्यर्थः ।।

(तत्त्वप्रदीपिका)

"अश्रुतप्रतिभा यस्य श्रुतिस्मृत्यविरोधिनी ।
विश्रुता नृषु जातं च तं विद्याद्देवसत्तमम् ।।" इति नारायणश्रुतिः ।

प्रत्यक्षमेव चैतल्लक्षणं दृश्यते भगवति भाष्यकारे ।

"हनशब्दो ज्ञानवाची हनूमान्मतिशब्दितः ।
रामस्य स्वृतरूपस्य वाचस्तेनानयन्त हि ।।

भृतमो भीम इत्युक्तो वाचो मा मातरः स्मृताः ।
ऋगाद्या इतिहासं च पुराणं पञ्चरात्रकम् ।
प्रोक्तास्सप्तशिवास्तत्र शयो भीमस्ततः स्मृतः ।।

मध्वित्यानन्द उद्दिष्टो वेति तीर्थमुदाहृतम् ।
मध्व आनन्दतीर्थः स्यात्तृतीया मारुती तनुः ।।

इति सूक्तगतं रूपत्रयमेतन्महात्मनः ।
यो वेद वेदवित्स स्यात्तत्त्ववित्तत्प्रसादत" इति भाववृत्ते ।

"साधको रामवाक्यानां तत्समीपगतः सदा ।
हनूमान्प्रथमो ज्ञेयो भीमस्तु वहुभुक् पितुः ।।

पृतनाक्षयकारी च द्वितीयस्तु तृतीयकः ।
पूर्णप्रज्ञस्तथाऽऽनन्दतीर्थनामा प्रकीर्तितः ।।

दशेति सर्वमुद्दिष्टं सर्वं पूर्णमिहोच्यते ।
प्रज्ञा प्रमतिरुद्दिष्टा पूर्णप्रज्ञस्ततस्स्मृतः ।।

आ समन्तात्पतित्वे तु गूढं कलियुगे हरिम् ।
असत्यमप्रतिष्ठं च जगदेतदनीश्वरम् ।
वदद्भिर्गूहितं सन्तं तृतीयोऽसुर्मथायाति ।।

तेन विष्णोस्तु वर्पाख्यान्गुणानज्ञासिषुः परान् ।
ईशानासः सूरयश्च निगूढान्निर्गुणोक्तिभिः ।।

त्रेतायां द्वापरे चैव कलौ चैते क्रमात्त्रयः ।
एतेषां परमो विष्णुर्नेता सर्वेश्वरेश्वरः ।
स्वयम्भुब्रह्मसंज्ञोऽसौ परस्मै ब्रह्मणे नमः ।।"

(तत्त्वप्रदीपिका)

इति च यजुःसंहितायाम् । अविप्रलम्भकत्वं चास्यावगम्यते । "यद्वै किं च मनुरवदत्तद्भेषजम्" "त्वा दूतासो मनुवद्वदेम" इत्यादिश्रुतेः । "ते वायवे मनवे बाधिताय" इति च ।

"ब्रह्माविष्णू हि सर्वस्य लोकेष्वाप्ततमौ मतौ ।
आप्तास्तदितरे ज्ञेया देवा मुनय एव च ।।" इति विष्णुसंहितायाम् ।

वायुरेव हि ब्रह्मा भवति । "वायुर्ह्येव प्रजापतिः । तदुक्तमृषिणा, पवमानः प्रजापति"रिति ।

"य आत्मदा बलदा यस्य विश्वे उपासते प्रशिषं यस्य देवाः ।
ततो देवानां समवर्ततासुरेकः कस्मै देवाय हविषा विधेम ।।" इत्यादिश्रुतिः ।।

न च बुद्धरूपे विप्रलम्भकत्वं विष्णोश्शङ्क्यम् । तत्र श्रोतॄणामसुराणामयोग्यत्वादन्यथामतिर्जाता, नान्यथावचननिमित्ता । इतरेषां रागादिमत्त्वादन्यथामातिर्युक्ता । विष्णोस्तु तदभावश्रुतेर्न वक्तृदोषकृतो मोहः । स एव हि तानि सूत्राणि तत्त्वविषयाणि प्रशान्तसंहितायामञ्जसा देवेभ्यो व्याचख्यौ । न च पुराणादिष्वन्यथोक्तिः । यतः सूत्रकर्ता भगवान् व्यास एव पुराणादिकर्ताऽपि । न च तद्वाक्यं क्वचिदप्रमाणमाशङ्क्यम् । आप्तिसाम्यात् । "सर्वत्र भगवत्प्रमाणा भगवद्वचनप्रामाण्या" इति मूलश्रुतिः । पूर्वपक्षसिद्धान्तविभागापरिज्ञानकृतश्च तत्र मोहः स्यात् । तच्च भाषारीतिविशेषाज्ञानाद्भवति । तथाच ब्राह्मे–

"भाषात्रयं न जानाति रीतीनां शतमेव च ।
पुराणार्थं वदन्याति नरकं नात्र संशयः ।।" इति ।

न पुराणानां स्वतोऽन्योन्यं वा विरोधः । शैवादिपुराणेषु दर्शनभाषाप्राचुर्याद्वेदाननुसारित्वमिव प्रतीयते । न तु तदस्ति । तत्रापि विष्णोस्सर्वोत्तमत्वमेव सिद्धान्तसारः । तत्र तत्र तदुक्तेः । पूर्वपक्षाधिक्यं दुर्जनमोहनार्थमिति दर्शनरहस्यम् । तस्मादयमाचार्य आप्ततम इति सिद्धम् । यदुक्तयः क्वापि नान्यथा दृश्यन्ते तत्राऽपि शङ्कमानाः कुत्र निश्चिन्वीरन्निति ।।

गौतमस्य हि वदान्यस्यात्रवन्तमाश्रमं द्वादशवार्षिक्यामनावृष्ट्यामृषयोऽभ्युपुः । तत्राहरहस्तेन समीहितहव्यकव्याभ्यवहार्यातिसर्जनेन सुकृतसमाधिस्वाध्यायप्रवचनाः समवर्तन्त । ततः सत्यां वृष्टौ प्रतिभयविपद्विमुक्ताः प्रतिष्ठासवस्तु महामुनिमनुज्ञापयाञ्चक्रुः । तेन विनिवारिताः सुहृत्तमं तममी स्नेहभङ्गभयान्नात्यवर्तन्त । तस्मिन्काले पतिशिरसः सपत्नीं निष्कामयन्त्या पार्वत्या प्रेषितो विनायको ब्रह्मचारिवेषप्रच्छन्नस्तानृषीनुपससार । भगवन्तः, किमत्र भवतां तपोधनानां तपःक्षयकरेणातिचिरमेकपरान्नाशनेन । स्वं स्वमाश्रमं व्रजत । तत्र चोपायमाकर्णयत । तपोबलान्मायामयीं माहेयीं निर्मिमीध्वम् । तां तु गौतमः स्वकीयया तपश्शक्त्याऽनुसवनं वर्षुकीकृतवलाहकावलीविगलितसलिलसंवर्धितसस्यग्रासिनीमपक्रामयितुं

(तत्त्वप्रदीपिका)

**प्रयतिष्यते । सा ततः सहसा निपतिष्यति । तदा ब्राह्मणास्तं विब्रूत । यावदिमामशेषमातरं सौरभेयीं नोत्थापयिष्यति, तावन्न भवान्भोज्यान्नः । अतो हरशिरसस्सुरसरितमवतीर्य तद्वारिणाऽऽसिच्य तामुज्जीवयतु भवानित्येवमनुतापिनं तमभिलप्यापसरतेत्युक्त्वा स व्रती स्वाश्रमं जगाम । ते चामुना सुनिपुणेन प्रणिगदितं प्रयाणोपायमुपश्रुत्यान्वतिष्ठन् । तेनैव च प्रातिष्ठन्त । ततस्तावदसौ मुनिवृषभश्चिरकालचीर्णया तपस्यया परितोषितात्पशुपतेर्मौलिमणिमालायितां मन्दाकिनीमंशेन समानीय तद्वारिणा सुरभिमभिषिषेच । ततश्च सोत्तस्थौ । तद्धौतमेन गोदत्तं वारि गोदावरीति जगति प्रसिद्धिं लेभे । अथ तस्य चिन्ता समजनिष्ट । किमिह किल कारणं, यदनया भद्रया केवलाम्मे कमण्डलूदकबिन्दुसंस्पर्शादपाति, सहसा चामोहि, अथ च गिरीशोत्तमाङ्गगतसुरतरङ्गिणीतनुतरङ्गसङ्गमादेव चोदबोधि, झटिति चोदस्थायि, आश्चर्यमेतदिति । स विगताधिः समाधिं समाधत्त । प्रतिबुबोध चैतद्वृत्तं विबुधवरयोरम्बिकाहेरम्भयोर्विना विचेष्टितेन चुक्रोध च तेभ्यः । अहो, अस्मत्तपोबलादतिमहती विपदमतितीर्णानामन्नपानादिभोगमत्तानां मुनीनां दुश्चिकित्सित-मेतत् । अस्तु नाम । तेषां धर्ममूढानामस्मन्निमित्तादवाप्तं ज्ञानं विनश्यत्विति गौतमशापः ।**

**ज्ञाने त्वज्ञानतां गते अज्ञानप्रतीतिगोचरतां गते । महायोगी महाशक्तिः ।**

अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् ।<br>
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ।।

यावद्भिरक्षरैर्विना विवक्षितार्थासिद्धिस्तावन्मात्राक्षर'मल्पाक्षरम्' । तद्वचनं भाष्यव्यावृत्त्यर्थम् । विशेषणान्तराणां भाष्येऽप्यनुवर्तनीयत्वात् । 'असंदिग्धं' निर्णीतार्थम् । निर्णयहेतुरहितवाक्याद्व्यावृत्त्यर्थम् । 'सारवदु'त्तमार्थम् । कुशलपुरुषोक्तलोकवार्तादिव्यावृत्त्यर्थम् । 'विश्वतोमुखं' एकप्रयोजनं प्रत्यपेक्षितार्थस्य कृत्स्नस्य प्रतिपादकम् । एतदनुक्तौ भगवन्नाममन्त्रादेः सूत्रत्वं स्यात् । अर्थविवक्षयाऽल्पाक्षरत्वेऽपि वृथा स्तोभपदं वा पादपूरणार्थं वा मा भूदित्यस्तोभम् । अपशब्दार्थदोषव्यावृत्त्यर्थमनवद्यमिति ।।

## तत्त्वप्रकाशिका

ननु यदुपादेयं तदेवानन्यार्थतया व्याख्येयम् । यच्च प्रमाणत्वे सतीष्टसाधनताऽवबोधकं प्रायस्तदेवोपादेयमतः कथं ब्रह्मसूत्राणां व्याख्येयत्वोपयोग्युपादेयतायै प्रामाण्यादीत्याशङ्क्य परिहर्तुं सूत्रागतिक्रममाह ।। **द्वापर इति ।।**

सर्वत्रेति सार्वत्रिकपुरुषोक्तिः । ज्ञाने सम्यग्ज्ञाने । आकुलीभूते किमिदमदो वेति सन्दिग्धे अन्यदेवेति मिथ्यादृष्टिदुष्टे च । आकुलीभावसमर्थनाय द्वापरग्रहणम् । तद्योगमिष्टप्राप्त्यनिष्टपरिहारोपायम् । वेदमुत्सन्नमित्यादेरपपाठादिना तिरोहितम् । प्रागेव चतुर्धा विभक्तं वेदं ऋङ्निगदादिरूपं व्यक्तीकृत्यैके-

(तत्त्वप्रकाशिका)

कस्मादेकैको भाग इति चतुर्धा व्यभजदेकैकं चावान्तरमृगादिवेदं चतुर्विंशत्यादिशाखाभेदेन व्यभजदित्यर्थः । तदुक्तम् । 'ऋचः स ऋच उद्धृत्य ऋग्वेदं कृतवान्प्रभुः । यजूंषि निगदाचैव तथा सामानि सामतः' इति । अवान्तरवेदादिविभागकथनं च ज्ञानाकुलीभावसमर्थनार्थम् । 'चक्रे वेदतरोः शाखा दृष्ट्वा पुंसोऽल्पमेधसः ।' इत्यादेः । अयं भावः । वाक्यप्रामाण्यं तावन्निर्दोषतया सम्भवति । निर्दोषता चापौरुषेयतया आप्तिमूलतया च । आप्तिश्च वक्तृनिर्दोषतैव । आप्तिमूलत्वाद् ब्रह्मसूत्राणां प्रामाण्यसिद्धिः । प्रमादाज्ञानसंशयविपर्ययाणां नारायणावतारे व्यासेऽसम्भवात् भगवत्वादेव । विप्रलम्भकत्त्वस्य च श्रोतृदोषनिवन्धनस्य ब्रह्मादिश्रोतृषु तदभावेनाभावनिर्णयात् । ज्ञानायोग्यताया ब्रह्मादिश्रोतृष्वभावात् । अपहासस्य च प्रसङ्गदोषनिवन्धनस्य तदभावेनाभावनिर्णयात् । अज्ञाननिर्हरणस्य च प्रसक्तत्वेन प्रसङ्ग-दोषाभावात् । आप्तिमूलत्वेनैव प्रामाण्यसिद्धौ सुतरां श्रुतिनिर्णायकत्वेन श्रुतियुक्तिमूलत्वात् । इष्टानिष्टप्राप्ति-परिहारसाधनवेदनहेतुवेदनिर्णायकत्वेनेष्टसाधनावबोधकत्वं च सिध्यति । अतो ब्रह्मसूत्राणामत्युपादेयत्वाद् व्याख्येयतेति ।

उक्तमेवार्थं प्रमाणेन स्थापयति ।। **तचेति** ।। स्थितं यथोत्पन्नं तथैव । अन्यथा जातमिदमदो वेति सन्दिग्धमन्यदेवेति मिथ्यादृष्टिदुष्टं च । अखिलमन्यथा जातम् । कालतो भागद्वयस्यान्यथात्वं युक्तं न सर्वस्येत्यतो विशेषकारणं चाह ।। **गौतमस्येति ।। अज्ञानताम्** अज्ञानमिति प्रतीतिविषयतां सन्देहगोचरतां च । ब्रह्मादिबुद्धिसङ्कीर्णता नाम सज्जनानुक्रोशयुक्ततैव नाज्ञानादिमिश्रत्वम् । गौतमशापस्य स्वहतगोनिर्मातृमात्रविषयत्वात् । कालाभिभवशून्यत्वाच्च तेषाम् । लोकस्य च सम्प्रदायप्रवर्तकाभावेन कालतश्चाज्ञानप्राप्तिः । तदुक्तमन्यत्र । 'नष्टधर्मज्ञानलोककृपालुभिर्ब्रह्मरुद्रेन्द्रादिभि'रित्यादि । तस्य वेदस्य । बहुवचनप्रयोगेऽपि नार्थभेदः शङ्कनीय इति भावेनैकवचनम् । वेदनिर्णयाय सूत्रान्तरैरलं किमेभिरित्यत आह ।। **येषामिति** । किन्तूत्सूत्रत्वं यदाञ्जस्यं ब्रह्मसूत्राणामित्यत आह ।। **अल्पेति** ।। यावदक्षरतां विना विवक्षितार्थासिद्धिस्तदल्पाक्षरत्वम् । एवं च भवितुमर्हतीत्यवचनमसन्दिग्धत्वम् । विशिष्टार्थता सारवत्त्वम् । बहुशाखानिर्णायकत्वं विश्वतोमुखत्वम् । व्यर्थाक्षरादिराहित्यमस्तोभत्वम् । अपशब्दादिवैधुर्यमनवद्यत्वम् । एतच्च सूत्रत्वं कुतो ब्रह्मसूत्राणामाञ्जस्येनेत्यत आह ।। **निर्विशेषितेति** ।। यतो ब्रह्मसूत्राणां मुख्यसूत्रत्वमत एव हि निर्विशेषितसूत्रत्वमप्यस्ति पुराणादावन्यथा तत्र स्यादित्यर्थः ।। यद्यत्र निर्विशेषितं तत्तत्र मुख्यं यदमुख्यं तद्विशेषितमित्येतत्कुत्र दृष्टमित्यत आह ।। **यथेति** ।। यथा कृष्णस्य निर्विशेषितव्यासत्वमत एव तन्मुख्यमन्ये द्रौण्यादयोऽमुख्यास्ततश्च विशेषणाद्व्यासास्तथा निर्विशेषितत्वान्मुख्यसूत्रत्वं ब्रह्मसूत्राणामेवेत्यत आह ।। **सविशेषणेति** ।। अन्यसूत्राणां सविशेषणत्वान्न मुख्यत्वमिति भावः । एतदुपपादनायैवान्ये विशेषणादिति प्रागेव दृष्टान्त उक्तः । निर्विशेषणसविशेषणत्वाभ्यां कुतो मुख्यामुख्यत्वे दृष्टान्ते कारणान्तरसम्भवादित्यत आह ।। **मुख्यस्येति** ।। मुख्यस्य मुख्यस्यैव । अस्त्वेतत्सूत्रत्वमञ्जसा

(तत्त्वप्रकाशिका)

ब्रह्मसूत्राणां तथापि वेदार्थनिर्णयाय सूत्रान्तरैरलं किमेभिरित्यस्य कथमनेन परिहार इत्यत आह ॥ सूत्रेष्विति ॥ यत्सूत्रपर्मतयोक्तं विश्वतोमुखत्वं तद्यदा ब्रह्मसूत्राणामेवाञ्जसा भवति तदा तेषामेव सर्वशास्त्रनिर्णायकत्वं भवेदतोऽन्यसूत्रेभ्योऽतिशयेन निर्णायकत्वात्तद्वचनं युक्तमिति भावः । अन्येषामपि द्वित्रशास्त्रनिर्णायकत्वात्कथमेषां सर्वनिर्णायकत्वमन्यथा तद्वैयर्थ्यमित्यत आह ॥ शब्देति ॥ सर्वस्य शब्दजातस्य ॥ निर्णय इति ॥ सर्वैः शब्दसमूहैः क्रियमाणो निर्णयो यत्प्रमाणो यन्मूलकः । अन्येषां निर्णायकत्वेऽपि ब्रह्मसूत्राणामस्त्येव सर्वशास्त्रनिर्णायकत्वम् । तन्निर्णयस्य ब्रह्मसूत्रमूलत्वेन व्याख्यान-रूपत्वात् । श्रुतिमूलकस्मृतिवदवैयर्थ्योपपत्तेरिति भावः । एवं विधानीत्युपसंहारः । सूत्रेष्वित्यादेरेवं-विधानीत्यनेनान्वयः । ब्रह्मरुद्रादिदेवेषु ज्ञानं संस्थाप्येत्यनेन पूर्वस्थितस्यैव विशेषयुक्त्यादिभिर्दृढीकरणं किञ्चिदप्राप्तलाभश्चोच्यते । 'जानन्तोऽपि विशेषार्थज्ञानाय स्थापनाय वा । पृच्छन्ति साधव' इत्यादेः । 'एवं ज्ञानं पुनः प्रापुः' इत्यादेस्त्वायमेवार्थः । विरिञ्चेतरेषां तिरोहितलाभो वा । 'यत आहुर्ब्रह्मणस्तु प्रायो नाऽप्रतिभासित'मित्यादेः । तदेवमत्युपादेयत्वाद् व्याख्येयानि ब्रह्मसूत्राणीति स्थितम् ।

## गुर्वर्थदीपिका

यत्र प्रमाणत्वे सतीष्टसाधनतावबोधकमित्यत्रेष्टसाधनतावबोधकस्यापि विप्रलम्भकवाक्यस्यानुपादेयत्वा-त्प्रमाणत्वे सतीत्युक्तम् । प्रमाणभूतस्यापि वाणिज्योपदेशस्य विरक्तेनानुपादेयत्वादुत्तरं विशेषणम् । परिहासकथायामप्रमाणस्याप्युपदेशात् प्राय इत्युक्तम् । यद्वा एकान्तिनामिष्टबोधकस्यैवोपादेयत्वात्प्राय इत्युक्तम् ।

सूत्रागतिक्रममाहेति वदतष्टीकाकारस्य द्वापर इत्यारभ्य नारायणो व्यासत्वेनाववतारेत्यन्तं भाष्यं भगवान्नारायण इति ब्रह्मरुद्रेन्द्रादिभिरर्थित इति तन्निर्णयायेति चांशत्रयेण वक्तृश्रोतृप्रसङ्गानुकूल्यं सूत्रेषु प्रदर्श्य सूत्राणामाप्तमूलत्वेन प्रमाणत्वपरिच्छेदार्थमिति हृदयम् । अथेत्यारभ्य ब्रह्मसूत्राणि चकारेत्यन्तं भाष्यं तु वेदस्येष्टसाधनतावबोधकतामनादित्वेन सर्वोत्तमप्रामाण्यं च प्रदर्श्य तदर्थनिर्णयायेति वचनाद् ब्रह्मसूत्राणामपीष्टसाधनतावबोधकत्वं श्रुतिमूलतया श्रौतयुक्तिमूलतया च सर्वोत्तमप्रामाण्यं च प्रसाधयितुं प्रवृत्तमिति हृदयम् । अन्यपरतया प्रतीयमानाकाशादिश्रुतीनामनन्तत्वादिश्रौतलिङ्गैर्विष्णुपरतायाः प्रतिसूत्रं निर्णेष्यमाणत्वात्सूत्राणां श्रुत्यर्थनिर्णायकत्वं च तत्र तत्र स्फुटमेवेति भावेन तदर्थनिर्णयायेत्युक्तम् । एवं चाप्तमूलतया श्रुतिमूलतया युक्तिमूलतया च ब्रह्मसूत्राणां महाप्रमाणत्वादेकान्तिनामिष्टस्यान्येषा-मिष्टसाधनस्य च ब्रह्मणो बोधकत्वेन सर्वोपादेयत्वाच्च परविद्या व्याख्यायत इति भावो भाष्यकारस्य । अन्यदेवेति मिथ्यादृष्टिदुष्टं चेत्यत्रान्यदैक्यज्ञानमेव तत्वज्ञानमिति मिथ्यादृष्ट्या मिथ्याज्ञानस्यैवोल्लेखेऽपि

(गुर्वर्थदीपिका)

एवपदबोधितया न त्विदं तत्वज्ञानमिति मिथ्यादृष्ट्या तत्वज्ञाने दुष्टे विषयीकृते सतीत्यर्थो ग्राह्यः । अन्यथा ज्ञान आकुलीभूत इत्यस्यासङ्गतिः स्यात् । प्रागेव चतुर्धा विभक्तं वेदमित्यस्य एकराशीकृतमाषतण्डुलगोधूमादिराशिवदेकराशावेव तत्र तत्र स्थितमृगादिवाक्यरूपेण वस्तुतो विभक्तमेकराशितया पठ्यमानं चेत्यर्थः । अज्ञानमिति प्रतीतिविषयतामित्यत्र नञो विरुद्धार्थत्वादज्ञानं विपरीतज्ञानम् । यावदक्षरतां विनेत्यत्र वर्षकालानन्तरं वाणिज्येन धनलाभाय वसुप्रदं गच्छेत्यादिलौकिक-वाक्यवदधिकारसम्पत्यनन्तरं मोक्षसाधनब्रह्मज्ञानाय ब्रह्मजिज्ञासा कर्तव्येत्यनुक्त्वा ''अथातो ब्रह्म-जिज्ञासे''त्यादिरूपेणार्थलभ्यार्थानां विशिष्याकथनेन सूचनमात्रेण प्रवृत्तिरल्पाक्षरमित्यर्थः । व्यर्थाक्षरादि-राहित्यमस्तोभत्वमित्यत्र यथा सामगाने ''जनद्वा उ जनदावुहोयीं जनदि''त्यादिस्तोभाक्षराण्युपादीयन्ते तथा व्यर्थाक्षरादिराहित्यमित्यर्थः । साम्न्यपि ''सोमः पवत'' इत्यादिसंहितानुपयोगित्वात् वैयर्थ्यम् । न तु सर्वथा । जनतां जायमानानां पदार्थानां हन्तृ अवनशीलं च ब्रह्मेत्यादिरूपेण ब्रह्मस्तुतिरूपत्वेन सार्थक्यादिति ज्ञेयम् ।

किं तत्सूत्रत्वमित्यत्र सूत्रं किंलक्षणमिति लक्षणस्यैव पृष्टत्वादस्मिन्श्लोके किं लक्षणमभिप्रेतम् ? न तावत्प्रत्येकं लक्षणानि । असन्दिग्धत्वसारवत्वास्तोभत्वानवद्यत्वानां चतुर्णामपि पुराणादौ गतत्वात् । नापि समुदितानि । अल्पाक्षरं विश्वतोमुखमित्येतावता पूर्त्या स्वरूपमात्रकथकानामन्येषां विशेषणानां व्यर्थत्वादिति चेत् । सत्यमल्पाक्षरत्वे सति विश्वतोमुखत्वमेव सूत्रलक्षणमभिप्रेतम् । अत्रापि विश्वतोमुखत्वमात्रस्य पञ्चरात्रादावतिव्याप्तेराद्यं विशेषणम् । तावत्येवोक्तेऽप्रशिखेत्यादिलौकिकगूढपुरुष-वाक्येऽतिव्याप्तेः । इदं हि वाक्यमल्पाक्षरं सत्पादचतुष्टयसूचकं वर्णचतुष्टयेन ।

''अनेन तव पुत्रस्य प्रसुप्तस्य वनान्तरे ।
शिखामाक्रम्य पादेन खड्गेनापहृतं शिरः''

इति मन्त्रिपुत्रविवक्षितार्थस्य महतः श्लोकस्यैव सूचकम् । अतो मिलितस्य सूत्रलक्षणत्वे न काचिद्धानिरिति सूचितम् ।

तन्निर्णयस्य ब्रह्मसूत्रमूलत्वेन व्याख्यानरूपत्वादित्यत्र ''समाकर्षा''दिति सूत्रेण ब्रह्मवाचक-ज्योतिरादिशब्दानामवान्तरमुख्यवृत्त्या कर्मादिष्वाकर्षणात् ज्योतिष्टोमादिकर्मणां तत्क्रमाणां तत्फलानां च प्रतिपादकता ज्ञेयेति सूत्रसूचितकर्मकाण्डविस्तरस्य जैमिनिना सविस्तरं प्रतिपादनात् कर्ममीमांसायाः ब्रह्मसूत्रव्याख्यानरूपता ज्ञेया ।

(गुर्वर्थदीपिका)

''इयदामनना''दिति सूत्रेण कृतनामादिप्राणपर्यन्तदेवमीमांसायास्सविस्तरं देवमीमांसासूत्रेषु प्रतिपादनाद्देवमीमांसाया अपि ब्रह्मसूत्रव्याख्यानरूपताऽनुसन्धेयेति भावः ।

''ज्योतिरुपक्रमात्तु तथा ह्यधीयत एक'' इत्यधिकरणे ज्योतिरादिसकलवैदिकपदवाच्योऽपि विष्णुरेव । ''एष इमं लोकमभ्यार्च''दित्युपक्रम्य ''ता वा एताः सर्वा ऋचस्सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राण एव प्राणऋच इत्येव विद्यादिति ह्यधीयत एक'' इति सूत्रार्थपर्यालोचनया कर्मदेवमीमांसयोरकथितस्य ज्योतिःपदोपलक्षितसकलवेदस्थपदवर्णस्वरात्मकशब्दराशीनां सर्वेषां परब्रह्मपरत्वप्रतिपादकत्वस्य समर्थनेन प्रतिसूत्रं सर्वोत्कृष्टविष्ण्वाख्यसारतरवस्तुप्रतिपादनेन चेतर-सूत्रेभ्योऽप्याञ्जस्यं सर्वशब्दनिर्णायकत्वं चास्तीति भावेन ''येषां सूत्रत्वमञ्जसा'' ''शब्दजातस्य सर्वस्य यत्प्रमाणश्च निर्णय'' इत्युक्तम् । एवं सति किमधिकरणान्तरेणेति न शङ्कनीयम् । तत्तत्प्रकरणस्य-श्रुतिलिङ्गादिभिरपि तेषां तेषां शब्दानां ब्रह्मपरतायाः समर्थनेन सार्थक्योपपत्तेः ॥

## भावबोधः

**अनन्यार्थतयेति** । प्रातीतिकार्थभाष्यकारान्तरोक्तविरुद्धार्थपरं न भवतीत्यनेन प्रकारेणेत्यर्थः । प्राधान्येनेति वार्थः । **प्रायस्तदेवोपादेयमिति** । अप्रमाणत्वादिना निश्चितस्यापि ख्यात्याद्यर्थं व्याख्यानोपादानदर्शनात् प्राय इत्युक्तम् । अत्युपादेयमित्यर्थः । अत एव 'ब्रह्मसूत्राणाम् अत्युपादेयत्वात्' इति वक्ष्यति । एवञ्च 'यदुपादेयम्' इत्येतत् यदत्युपादेयमिति व्याख्येयम् । एवमुपादेयताया इत्येतदपि । 'तन्निर्णयाय' इति भाष्ये तच्छब्देन ज्ञानपरामर्शः । तस्य प्रमाणत्वमोक्षहेतुत्वादिना निर्णयस्तन्निर्णयः । अत एवेदमदो वेत्यादिना ज्ञानविषयकसंशयविपर्ययौ दर्शितौ । द्वापरं अवततारेत्यन्वये स्वरूपकथनमेव स्यात् । अत आवश्यकं यथा स्यात् तथाऽऽह आकुलीभावेति । 'अथेष्टानिष्ट' इति भाष्ये 'अथ'शब्द अवतारानन्तर्यार्थकः सन् व्यासावतारस्य मुख्यतो वेदोद्धारादिप्रयोजनकत्वमाह । 'अथ' इत्यस्यावतारानन्तरमेव; न तु परोपदेशमपेक्ष्य येन स्वतः सार्वज्ञ्यं न स्यादित्यर्थ इति चन्द्रिकायाम् । 'वेदमुत्सन्नमित्यादेः' इत्यस्य 'इत्यर्थः' इति वक्ष्यमाणेनान्वयः । 'उत्सन्न'शब्दस्य नष्टार्थत्वं निवारयन्नाह **अपपाठादिनेति** । व्यासावतारात् प्राग्वेदानामविभक्तत्वं निराकुर्वन् 'व्यभजत्' इत्यस्य विवक्षितमर्थमाह **प्रागेवेति** । **अवान्तरवेदादीति** । 'अवान्तरवेद'पदादुद्धृतो वेदः ग्राह्यः । आदिपदेन चतुर्विंशत्यादिशाखा ग्राह्याः । अयं भाव इत्यत्र नारायणावतार इत्यनेन 'नारायणो व्यासत्वेनावततार' इत्येतदुक्तार्थम् । नारायणावतारस्य भ्रमायसम्भवं प्रत्यप्रयोजकत्वं परिहरति भगवत्त्वादेवेति । अन्यथा तन्न स्यादित्यर्थः ।

(भावबोधः)

अनेन 'भगवान्' इत्येतदुक्तभावम् । **ब्रह्मादिश्रोतृष्विति** । अनेन 'ब्रह्मरुद्रेन्द्रादिभिः' इत्येतदुक्ताभिप्रायम् । **अज्ञाननिर्हरणस्येति** । एतेन 'तन्निर्णयायार्थितः' इत्येतदुक्ततात्पर्यकम् । **श्रुतिनिर्णायकत्वेनेति** । अमुना 'तदर्थनिर्णयाय' इत्युक्ताशयम् । निर्णयायेति सूत्राणां निर्णायकत्वोक्त्या युक्तिमूलकत्वस्याप्युक्तत्वात् । **इष्टानिष्टप्राप्तिपरिहारेति** । अनेन 'तज्ज्ञापनार्थम्' इति 'तदर्थनिर्णयाय' इति चोक्ततात्पर्यकम् । तदर्थनिर्णयायेत्यत्र तच्छब्देन तज्ज्ञापनार्थमित्युक्तिलब्धेष्टानिष्टप्राप्तिपरिहारसाधनवेदनकरणरूपवेदपरामर्शादिति बोद्धव्यम् । निष्पन्नज्ञानस्य त्रेतादावपि स्थितत्वेन कृतग्रहणं किमर्थमित्यत आह **यथोत्पन्नमिति** । ज्ञानस्य प्रकारान्तरेण विक्रियमाणत्वाभावात् 'अन्यथा जातम्' इति पदं व्याचष्ट **इदमदो वेतीति** । दृष्टं विषयीकृतम् । **अज्ञानमिति** । सम्यग्ज्ञानं न भवतीति विपरीतप्रतीतिविषयतामित्यर्थः । ब्रह्मादिदेवव्यतिरिक्तसकललोकानां गौतमहतगोनिर्मातृत्वाभावात्तेषां सर्वेषां कथं साकल्येन सम्यग्ज्ञानान्यथात्वमित्यत आह **लोकस्य चेति** । **बहुवचनप्रयोगेऽपीति** । 'उत्सन्नान् भगवान् वेदान्' इत्यत्रेत्यर्थः । **यावदक्षरतामिति** । यावदक्षरतां विना विवक्षितार्थाऽसिद्धिस्तदर्थप्रतिपादनाय ततोऽधिकाक्षरानुपादानमल्पाक्षरत्वमित्यर्थः । अतो नाऽस्तोभत्वेन सह साङ्कर्यम् । **बहुशाखानिर्णायकत्वमिति** । महाव्याकरणसूत्रादेरपि बहुशाखागतपदस्वरादिनिर्णायकत्वेन न तत्राऽव्याप्तिरिति बोध्यम् । 'निर्विशेषितसूत्रत्वम्' इति मूले 'अतः'शब्देन निर्विशेषितसूत्रत्वे हेतुरुच्यत इति प्रतीयते । अतः कथमवतारिका ? न चैतदनुसारेण मुख्यसूत्रत्वेन निर्विशेषितसूत्रत्वं साधयतीति कुतो नावतारितमिति वाच्यम् । यद्यत्र निर्विशेषितं तत्तत्र मुख्यमिति व्याप्तौ यथा व्यासत्वमिति दृष्टान्तकथनायोगात् । वेदनिर्णयाय सूत्रान्तरैरलमिति शङ्कायाः 'सूत्रेषु येषु' इति वक्ष्यमाणरीत्या मुख्यसूत्रत्वोक्त्यैव परिहारेण तेन निर्विशेषितसूत्रत्वसाधनस्यासङ्गतत्वाच्च । यथाश्रुतोऽपिशब्दः सूत्रान्तरस्य निर्विशेषितसूत्रत्वं समुच्चिनोतीति च प्रतीयते । 'च'शब्दश्च किमर्थमित्यतो वाक्यं योजयति **यत इत्यादिना** । पर्वतस्य धूमवत्त्वं वह्निमत्त्वं कुत इति प्रश्ने व्यापकीभूतवह्निमत्त्व एव प्रमाणसिद्धधूमवत्त्वं सम्भवतीत्यभिप्रायेणात एवाग्निमत्त्वादेव धूमवत्त्वमित्युक्ते यथा धूमवत्त्वस्य वह्निमत्त्वे हेतुत्वमिति गम्यते । तथा प्रकृतेऽपि निर्विशेषितसूत्रत्वस्य मुख्यसूत्रत्वे हेतुत्वलाभः । अत एव हेतोरन्यथासिद्धिनिरासार्थमवधारणार्थः 'च'शब्दो 'अत एवेति' योजितः । 'अपि'शब्दस्तु मुख्यत्वरूपसाध्यसमुच्चायकः । हेतुसिद्ध्यर्थमुक्तम् **पुराणादाविति** ।

'निर्विशेषितशब्दात् वै ब्रवीति हरिरुच्यते ।
यथा सूत्रेति शब्देन ब्रह्मसूत्रं निगद्यते' ॥

(भावबोधः)

इत्यादावित्यर्थः । निर्विशेषितसूत्रत्वन्तु निरुपपदसूत्रशब्दवाच्यत्वमिति द्रष्टव्यम् । **निर्विशेषितव्यासत्वमिति** । व्यासत्वमित्येवोक्तत्वादन्ये विशेषणाद्यासा इत्युक्तत्वाच्चेति भावः । **तन्मुख्यमिति** । अनेनैकस्येति मुख्यस्येति व्याख्यातं भवति । **अमुख्या इति** । तत्रैकस्येत्युक्तत्वात् अत्रामुख्यत्वमर्थलब्धमिति भावः । **विशेषणाद्यासा इति** । सोपपदशब्दवाच्या इत्यर्थः । न मुख्यत्वमिति भाव इति । अनेन **'सविशेषण'** इति मूले 'हि'शब्दो हेत्वर्थः । **'अपराणि'** इत्यस्य ब्रह्मसूत्रभिन्नत्वममुख्यत्वञ्चार्थः । निर्विशेषितसूत्रत्वस्य मुख्यसूत्रत्वसमव्याप्तत्वात् तद्व्यापकत्वेन तदभावेन तदभावसाधनं चोपपद्यत इत्युक्तं भवति । **एतदुपपादनायैवेति** । मुख्यस्य निर्विशेषेणेत्यनेन निर्विशेषितत्वहेतोरप्रयोजकत्वशङ्कापरिहारेण पश्चादन्यत्र व्यभिचारशङ्काया अपि तत एव परिहारसम्भवादव्यभिचारप्रदर्शनमुखेनापि तस्य तत्रानुपयोगादिति भावः । **मुख्यस्यैवेति** । अन्यथा शङ्काया अपरिहारात् । एवं 'विशेषणात्' इत्यत्रापि 'एव' इति योज्यम् । अत्र मुख्यस्य निर्विशेषणशब्दवाच्यत्वे 'इति वेदविदः प्राहुः' इति वेदस्य वृद्धव्यवहारस्य च प्रमाणीकृतत्वेन विपक्षे प्रामाणिकपरित्यागप्रसङ्गाभिप्रायाच्छङ्कापरिहार इति भावः ॥

ननु 'सूत्रेषु येषु सर्वेऽपि' इत्यत्र ब्रह्मसूत्राणां सर्वशाखानिर्णायकत्वमुच्यते । कथं तेन ब्रह्मसूत्राणां निर्णायकत्वमुच्यते? कथं तेन ब्रह्मसूत्राणां मुख्यत्ववचनात् सूत्रान्तरैर्गतार्थताशङ्कापरिहार इत्यतस्तात्पर्यमाह **यत्सूत्रधर्मतयेति** । प्रागुक्तमेव मुख्यसूत्रत्वं यथा हेतुः स्यात् तथाऽनेन वाक्येन विव्रियत इति भावः । **शब्दसमूहैः क्रियमाण इति** । अनेन 'शब्दजातस्य' इति सम्बन्धे षष्ठी । सम्बन्धश्च जन्यजनकभाव इत्युक्तं भवति । 'शब्दजातस्य' इति षष्ठी कर्तरि; न तु कर्मणीत्यर्थ इति चन्द्रिकायामुक्तम् ।

ननु 'एवं ज्ञानं पुनः प्रापुर्देवाश्च ऋषयस्तथा' इति भारततात्पर्यनिर्णये पुनश्शब्दबलाद्देवादीनां तिरोहितज्ञानप्राप्तेराचार्यैरुक्तत्वात्तद्बलात् 'ज्ञानं संस्थाप्य' इत्यत्रापि तिरोहितमुत्पाद्येत्यर्थः स्यादित्यत आह **एवं ज्ञानमिति** ।

## भावदीपः

भाष्ये सूत्रार्थोक्तिं प्रतिज्ञाय तदुत्पत्तिक्रमोक्तिरयुक्तेत्यत आह ॥ **नन्विति** ॥ **अनन्यार्थतयेति** ॥ प्रातीतिकार्थपरं न भवतीत्यनेन प्रकारेणेत्यर्थः । इष्टसाधनतावगमेऽपि अनाप्तवाक्ये उपादेयत्वाभावात्प्रमाणत्वे सतीति । अप्रमाणत्वादिना निश्चितस्यापि सव्याख्यात्वाद्यर्थं व्याख्यानदर्शनादाह ॥ **प्राय**

(भावदीपः)

**इति** ।। बहुधा इत्यर्थः । देशे ज्ञानाप्रसक्तेराह ।। **सार्वत्रिकेति** ।। **सम्यग्ज्ञान इति** ।। निरुपपदज्ञानपदस्य मुख्यार्थत्वादिति भावः ।। **इदमिति** ।। गुणोत्कर्षादिज्ञानमेव तत्वज्ञानं उत ऐक्यादिज्ञानं वेति केषाञ्चित् । केषाञ्चिदन्यदेव ऐक्यादिज्ञानमेव तत्वज्ञानमुत्कर्षादिज्ञानं तत्वज्ञानादन्यदेवेति विपरीतज्ञानविषयीभूते चेत्यर्थः ।। **द्वापरग्रहणमिति** ।। द्वावेव धर्मपादौ यस्मिन्युगे प्राप्ते परं, ततः क्रमादपचयेऽन्ते एकोऽवशिष्यत इति तत्वप्रदीपोक्तव्युत्पत्त्या पादद्वयह्राससूचनादिति भावः । अथेष्टानिष्टेति भाष्ये अथेत्यस्यावतारानन्तरमेव न तु परोपदेशमपेक्ष्य येन सार्वज्ञादि न स्यादित्यर्थस्य तत्वप्रदीपे व्यक्तत्वा-न्नात्राथशब्दो व्याख्यातः । अत एव प्रमेयदीपिकायां 'व्यासोऽवततार । ततश्चेष्टानिष्टप्राप्तिपरिहारे'ति भाष्यगतस्य ततश्चेत्यस्यावतारानन्तरमेवेत्यर्थ उक्तः । वेदमुत्सन्नमित्यादेरित्यस्य इत्यर्थ इति वक्ष्यमाण-नान्वयः । उत्सन्नमित्यस्यार्थः ।। **अपपाठेति** ।। वेदमित्यस्य मूलवेदमिति प्रतीतिं निरस्यन् व्याचष्टे ।। **प्रागेवेति** ।। अवान्तरवेदादिविभागात्पूर्वमित्यर्थः । वेदं मूलवेदादुद्धृतमुपवेदमित्यर्थः । भाष्ये व्यञ्जयन्नित्यनन्तरं एकैकस्मादिति, वेदमित्यतः प्राक् प्रागेव चतुर्धा विभक्तमिति, व्यभजदित्यनन्तरं एकैकं चेति च योज्यमिति भावः । मूलवेदादुद्धृतऋङ्निगदादिरूपादुपवेदादवान्तरवेदः कृत इति भाष्येऽस्पष्टमपि कुतः कल्प्य इत्यत आह ।। **तदुक्तमिति** ।। तत् ऋङ्निगदादिरूपादुपवेदावान्तरवेदकरणं ऋग्भाष्योक्तस्मृतावुक्तमित्यर्थः । ऋचो निगदात्सामत इति मूलवेदादुद्धृतोपवेदा उच्यन्ते । तथेति यजुर्वेदं सामवेदं समुच्चिनोति । ऋग्वेदं यजुर्वेदं सामवेदमित्यवान्तरवेदा उच्यन्ते । तेषामृग्यत्रार्थवशेन पादव्यवस्था । 'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्' 'गीतिषु सामाख्ये'त्यादिजैमिनिसूत्रोक्त-लक्षणकानि ऋग्यजुस्सामान्युद्धृत्येत्यर्थः । व्यक्तमेतत्सर्वं 'तथा सामानि सामतः ।। एवं पुराणवचनादुद्धृता हि ततस्ततः ।। ऋचःशाखात्वमापन्नाः शिष्यतच्छिष्यकैरिमा' इति श्लोकद्वयव्याख्यानावसर एव ऋग्भाष्यटीकायाम् । तथाहि तत्र टीका । भवेदेतद्यदि मूलवेदादुपवेदानां ततोऽवान्तरवेदानां चोद्धारेण प्रबन्धनिर्माणं प्रामाणिकं स्यात् तदेव कुत इत्यत आह ।। **ऋच इति** ।। ऋङ्निगदसामानीति मूलवेदादुद्धृता उपवेदा उच्यन्ते ततो मूलवेदादुपवेदास्ततश्चावान्तरवेदा उद्धृता इत्येवं पुराणवचनादवगम्यत इत्यर्थः । यथोपवेदादिः प्रबन्धः कृत्रिमः एवं शाखाभेदोऽपीत्येतत्प्रसङ्गादाह । **ऋच इति** । ऋच इति प्रस्तुतत्वादुक्तं यजुरादिकं चैवमितिज्ञातव्यमित्यादि ।। इह टीकायां वेदमुत्सन्नमित्येतस्य मूलवेदादुद्धृतमुपवेदमिति कण्ठतोऽनुक्तिरुत्सन्नान्भगवानिति वक्ष्यमाणस्मृतौ ऋच इति ऋग्भाष्योक्तस्मृतौ मूलवेदादुद्धृतत्वांशस्य अस्पष्टत्वात् ऋङ्निगदादिरूपाद्वेदादृगाद्युद्धारेण ऋग्यजुरादिवेदकरणमात्र-प्रतीतेस्तदनुरोधेनेति ध्येयम् । वेदमुत्सन्नं व्यञ्जयंस्तदर्थनिर्णयायेत्यादिनैव पूर्तौ किमनेकविभागोक्त्येत्यत

(भावदीपः)

आह ।। **अवान्तरवेदादीति** ।। स्वत एव ऋङ्निगदादिरूपादेकैकस्मान्महावेदादुद्धृतस्यावान्तरस्य ऋगादिवेदस्य चतुर्विंशत्यादिशाखाभेदेन । आदिपदेन शाखानां चोपशाखाभेदेन कथनमित्यर्थः । यद्वा महावेदस्यावान्तरत्वेन च आदिपदेन चतुर्विंशत्यादित्वेन कथनमित्यर्थः ।। **ज्ञानेति** ।। एतच्च तन्निर्णयप्रसङ्गनार्थमिति भावः ।। **इत्यादेरिति** ।। प्रथमस्कन्ध इति ज्ञेयम् । एतच्च शाखाभेदकृतेर्ज्ञाना-कुलीभावानुमापकत्वं मानम् । ननु यदुपादेयमित्यादिना कृतचोद्यस्य कथमनेन निरासः । किञ्च नारायणो व्यासत्वेनावतीर्य ब्रह्मसूत्राणि चकारेत्येतावतैवाप्तिमूलत्वेन प्रामाण्यलाभादवशिष्टं व्यर्थम् । प्रामाण्यस्य स्वतस्त्वेन आप्तेरनुपयोगश्चेत्यत आह ।। **अयं भाव इति** ।। वक्तृनिर्दोषता केन लब्धेत्यत आह ।। **प्रमादेति** ।। भगवानित्यस्योपयोगमाह ।। **भगवत्त्वादेवेति** ।। ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः । भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिरित्यादावशेषत इति विशेषणान्निरतिशयज्ञानादिगुणवान्भगवच्छब्दार्थ उक्तस्स्यात् । गुणगुण्यभेदाभिप्रायादित्यादितत्त्वप्रदीपोक्तदिशा वा । ऐश्वर्यस्य समग्रस्येत्यादेर्वा सम्पूर्णसार्वज्ञादिमत्त्वादेवेत्यर्थः । ब्रह्मरुद्रेत्यादेर्भावमाह ।। **विप्रलम्भेति** ।। तन्निर्णयायेत्येतदुपयोगमाह ।। **अपहासस्येति** ।। तदर्थनिर्णयायेत्येतद्भावमाह ।। **आप्तीति** ।। **युक्तीति** ।। सूत्राणां न्यायैरेव निर्णायकत्वात् निर्णयायेत्युक्त्यैव युक्तिमूलत्वं प्राप्तमिति भावः ।। एतेन वक्तृश्रोतृप्रसक्तीनामित्याद्यनुभाष्योक्तदिशा प्रामाण्यमुपपादितं ध्येयम् । अथेष्टानिष्टेत्यादेरुपयोगमाह ।। **इष्टेति** ।। इत्ययंभाव इतीतिशब्दान्वयः ।।

।। **उक्तमेवेति** ।। द्वापरमात्रस्य कथं सार्वत्रिकपुंस्तज्ज्ञानाकुलीभावहेतुता । किञ्च तथापि ब्रह्मादीनां प्रार्थनं निर्बीजम् । न हि ते ज्ञानहानिं प्राप्ताः । कालशापानभिभूतत्वात् । अपि च वेदार्थनिर्णयाय जैमिनिसूत्रादिभिरेव पूर्तौ किमभिनवसूत्ररचनेन । न ह्येतेषु तेभ्यः कोऽप्यतिशयोऽस्तीत्याशङ्क्येति आदौ योज्यम् । तत्समाधिस्तु गौतमस्येति ।। **सङ्कीर्णबुद्धय इति** ।। येषां सूत्रत्वमसत्यादिनेति विवेक्तव्यम् । एतेन 'सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुकारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुरि'त्युक्तेः स्वपदवर्णनाभावान्नेदं भाष्यमिति कस्यचिदुक्तिरपास्ता । प्रमाणेन स्वपदवाक्यानां विशदीकरणात् । एवं सर्वत्र ध्येयम् । तदुक्तम् 'उक्तमुक्तमभिधेयमुत्तमं वेदवाक्यमनुवादयन्मुहुः । व्यञ्जयत्स्मृतिवचोभिरञ्जसा तस्य चार्थमतियुक्तयुक्तिमदि'ति । स्मृतिप्रामाण्यं तु द्वितीयपाद एव समर्थितम् । स्थितौ प्रकारानुक्तेराह ।। **यथेति** ।। अन्यथेत्युत्तरत्रोक्तेरेतल्लाभः । ज्ञानमन्यथाजातमित्ययुक्तम् । न हि प्रमा केनापि हेतुना भ्रान्तिर्भवतीत्यत आह ।। **इदमिति** ।। दृष्टं विपर्यीकृतम् । एतेनाज्ञानता-मित्येतद्व्याख्यानमुक्तबीजम् ।। **विशेषकारणश्चेति** ।। भाष्ये ज्ञाने त्विति तुशब्दः शापाचेति समुच्चायक इत्युक्तं भवति । भाष्ये प्राग्द्वापर इत्युपलक्षणमिति भावः । दुर्भिक्षोपप्लुता ऋषयो गौतमतपःप्रभावसमृद्धं

(भावदीपः)

तदाश्रममाप्य चिरकालं तेन संमानितास्तत्र सुखमुषित्वा कालेन सुभिक्षं स्वदेशं यियासवस्तदनुज्ञां याचमाना अपि गौतमेनालब्धानुज्ञाः शिवशिरस्स्थां सुरसरितं सपत्नीं निष्कासयंत्या भवान्या चोदितेन विघ्नेश्वरेणोपदिष्टोपायाः ज्ञानादितपोबलेन काञ्चन गां तदाश्रमस्थसस्यग्रासिनीं विदधुः । गौतमस्तामपक्रामयितुं स्वप्रयत्नमात्रेण सहसा निपतितां गामवलोक्य परितप्तमना बभूव । तदैव लब्धान्तरा विप्रा नायं गौतमो भोज्यान्न इत्युक्त्वा प्रतस्थिरे । ततो गौतमश्चिरकालचीर्णतपःप्रभावेन परितोषितहरशिरसोऽवतारितया सुरसरिता गां परिषिच्योज्जीवयामास । ततः किमेतदिति विचिन्त्य विप्रकृतमक्रमादिसर्वं निश्चित्य तान् ज्ञानहीना भवेयुरेत इति शशापेति शापक्रमस्य तत्वप्रदीपे उक्तत्वान्नात्र तदुक्तिः ।। **अन्यत्र** ।। गीताभाष्ये इत्यर्थः । भाष्ये महायोगीत्यस्य महाशक्तिरित्यर्थः । उत्सन्नानित्यादि तु अपपाठादिना तिरोहितान् प्रागेव ऋङ्निगदादिरूपेण विभक्तान्महावेदानुज्जहार । तांश्च महावेदान् तदंशानित्यर्थः । तेभ्य उद्धृत्य ऋगादिरूपेण चतुर्धा व्यभजत् । एकैकं चावान्तरवेदं चतुर्विंशत्यादिभेदेन व्यभजदिति पूर्वोक्तदिशा व्याख्येयमिति भावः ।। **बहुवचनेति** ।। पूर्वश्लोक इति योज्यम् । **किमेभिरित्यत आहेति** ।। सूत्रेषु येष्वित्यनेन परिहारं वक्तुमुपोद्घातमाहेत्यर्थः ।। **तदल्पाक्षरत्वमिति** ।। यावदक्षरतां विना विवक्षितार्थासिद्धिस्तदर्थप्रतिपादनाय ततोऽधिकाक्षरानुपादानमल्पाक्षरत्वमित्यर्थः । विशिष्टार्थता अनन्यलभ्यार्थता ।। **बहुशाखेति** ।। सद्व्याकरणसूत्रादेरपि बहुशाखागतपदार्थनिर्णायकत्वान्नाव्याप्तिरिति भावः ।। **व्यर्थेति** ।। अर्थाप्रतिपादकत्वेऽपि साम्नि स्तोभाक्षराणां ऋगक्षराव्याप्तगानभागपूरणायेव प्रयोजनान्तरायाक्षराप्रयोग इत्यर्थः । तेन नाल्पाक्षरत्वे सांकर्यम् । अत्र च भाष्यस्य निर्णयहेतुरहितवाक्यस्य कुशलपुरुषोक्तलोकवार्तादिवाक्यस्य भगवन्नाममन्त्रादेर्व्यर्थाक्षरोपेततादृशवाक्यविशेषस्य अपशब्दोपेततादृशवाक्यविशेषस्य च सूत्रत्वव्यावृत्त्यर्थं क्रमेण षड् विशेषणानीति तत्वप्रदीपे व्यक्तम् । चाप्यत इत्यत्र चोऽवधारणार्थ इत्युपेत्य तस्यापिशब्दस्य चान्वयमाह ।। **अत एव निर्विशेषितसूत्रत्वमपीति** ।। केवलसूत्रपदेनोक्तिरित्यर्थः । निर्विशेषितं निरुपपदम् । विशेषितं सोपपदम् ।। **विशेषणाद्व्यासा इति** ।। द्रौणिव्यास इत्यादिसोपपदव्यासशब्दवाच्या इत्यर्थः । सर्वविशेषणेति भाष्ये हिशब्दो हेत्वर्थः । अपराणीत्यस्यान्यानि सूत्राणि अमुख्यानीति चार्थ इति भावः ।। **एतदिति** ।। विशेषितशब्दवाच्यानाममुख्यत्वमित्येतत् दृष्टान्तनिष्ठतया दर्शनायैवेत्यर्थः । अन्यथा मुख्यतोपपादनस्यैव प्रकृतत्वेन यथा व्यासत्वमेकस्य कृष्णस्यैवेत्येव वाच्यं स्यादित्यर्थः ।। **मुख्यस्यैवेति** ।। अन्येषामेवामुख्यानामेवेत्यपि योज्यम् । अन्यथा मुख्यामुख्यत्वयोर्निर्विशेषणत्वसविशेषणत्वे प्रयोजके न स्यातामिति भावः । मुख्यामुख्ययोर्निर्विशेषणसविशेषणशब्दवाच्यत्वरूपोऽर्थे इति वेदविदः प्राहुरित्यनेन वेदस्य वृद्धव्यवहारस्य

(भावदीपः)

च प्रमाणीकरणान्निर्विशेषितत्वाद्येव मुख्यत्वादौ प्रयोजकं न तु कारणान्तरं शङ्क्यमिति भावः ।। **अनेनेति** ।। येषां सूत्रत्वमञ्जसेत्यादिनाऽञ्जसा सूत्रत्वकथनेनेत्यर्थः । प्राक्कथितस्योपयोगं वदन्नेव तात्पर्यमाह ।। **यत्सूत्रेति** ।। **कथमेषामिति** ।। द्वित्रशाखाभिन्नशाखानिर्णायकत्वस्य वाच्यत्वादिति भावः ।। शब्दसमूहैरिति ।। शब्दजातस्येति षष्ठी कर्तरि न कर्मणीति भावः ।। एतेन पूर्वतन्त्रेण गतार्थतामाशङ्क्य कर्मकाण्डब्रह्मकाण्डभेदेन परिहारं वदन्तो निरस्ताः । अन्यार्थं तु जैमिनिरित्यादिनोक्तस्यैव कर्मतन्त्रे प्रपञ्चनात् ।। **उपसंहार इति** ।। तेन चकारेत्यनेनापुनरुक्तिरिति भावः । येषु यत् इति यच्छब्दान्वयाप्रतीतेराह ।। **सूत्रेष्वित्यादेरिति** ।। **जानन्तोऽपीति** ।। चतुर्थगीतातात्पर्योक्तभाग्रेयवचनम् । पृच्छन्ति साधवो लोके तेन पृच्छसि पार्थिवेति वाक्यशेषः ।। **एवमिति** ।। एवं ज्ञानं पुनः प्रापुर्देवाश्च ऋषयस्तथेति तात्पर्यनिर्णयदशमाध्यायस्थवाक्य इत्यर्थः ।। **यत आहुरिति** ।। 'उपास्यैव तु पश्यन्ति नान्यथा तु कथञ्चन । ऋषीन् राज्ञस्तथाऽऽरभ्य प्रतिभाऽभ्यधिका क्रमात् । यावद्ब्रह्मा ब्रह्मणस्तु प्रायो नाप्रतिभासितम् । विष्णोः प्रीत्यर्थमेवास्य श्रोतव्यं प्रायशो भवेदि'ति गीतातात्पर्यत्रयोदशाध्याये आहुराचार्या इत्यर्थः ।।

## अभिनवचन्द्रिका

सूत्रार्थ उच्यत इति प्रतिज्ञाय द्वापर इत्यादि कथाकथनमसङ्गतम् । असूत्रार्थत्वात्तस्या इत्यत आह– **न चेति** ।। व्यापकनिवृत्त्या व्याप्यनिवृत्तिं वक्तुं व्याप्तिं तावदाह – **यदुपादेयमिति** ।। यदुपादेयं तदेव उपादानस्यानन्यार्थतया व्याख्येयं दृष्टमित्यर्थः । न ह्युपादानं व्यसनितया क्रियते । किं नाम व्याख्यानार्थमिति भावः । अनेन यत् व्याख्येयं तत् प्रेक्षावदुपादेयमिति व्याप्तिः सूचिता । **प्रायस्तदेवोपादेयमिति** ।। प्राय इत्यनन्तरं 'दृष्टं न च व्यभिचारो दृश्यत' इति शेषः । तथा च यदुपादेयं तत् प्रमाणत्वे सति इष्टसाधनतावबोधकमिति प्रायो दृष्टं भूयोदृष्टं न च व्यभिचारो दृश्यते इति व्याप्तिः सिद्धा । **अतः कथमिति** ।। व्याख्येयत्वं वदता उपादेयत्वस्य वक्तव्यत्वात् तदर्थं च प्रामाण्यादेर्वक्तव्यत्वात् तत् सूत्रेषु कथं, न कथमपीत्यर्थः । एवं च व्यापकस्य प्रमाणत्वे सति इष्टसाधनतावबोधकत्वस्य प्रमाणाभावेनाभावात् व्याप्यस्य उपादेयत्वस्याप्यभावः । तदभावेन तद्व्याप्यस्य व्याख्येयत्वस्याप्यभाव इति शङ्काग्रन्थार्थः ।

**चन्द्रिकायान्तु – 'प्रायस्तदेवोपादेयमिति** ।। अप्रमाणत्वादिनानिश्चितस्यापि ख्यात्याद्यर्थं व्याख्यानदर्शनात्प्राय' इत्युक्तमित्युक्तम् । तथा तु अप्रमाणत्वादिना निश्चितस्यापि व्याख्यानदर्शनात्

(अभिनवचन्द्रिका)

व्याख्येयत्वे उपादेयत्वं प्रमाणत्वे सतीष्टसाधनतावबोधकत्वं च नावश्यकमिति नाभिप्रायः । येन प्रकृत-व्याख्यानस्य ख्यात्याद्यर्थत्वसम्भवेन प्रामाण्यव्युत्पादनस्यानावश्यकत्वात् 'द्वापर' इत्यादि भाष्यवैयर्थ्यशङ्का स्यात् । किन्तु अप्रमाणत्वादिना निश्चितं यत् अव्याख्येयमेव व्याख्यायते अन्यायाध्ययनवत् । प्रतिज्ञातं भवद्व्याख्यानन्तु 'गम्य'मिति विशेषणबलात् मोक्षार्थमिति व्याख्येयव्याख्यानं, तच्च प्रामाण्येन विना अनुपपन्नमिति तद्व्युत्पादनमावश्यकमिति ।

**सम्यग्ज्ञान इति** ।। सम्यग्ज्ञानसाधने वेद इत्यर्थः । **इदमदो वेति** ।। वेदे तावदेवं सन्देहा जायन्ते 'अग्निमील' इत्यादि किमुदात्तम्, उताऽनुदात्तम्, अथ स्वरितमिति (१) अथ 'अग्निमील' इति पाठः, अथ वायुमील' इति (२) तथा – 'अन्योऽन्तर आत्मा आनन्दमयः' इत्यादयो वेदाः किं ब्रह्मपराः उत कोशादिपरा इति (३) तथा वेदः किं सम्यगनुभवसाधनम् उत नेति (४) इत्यादिसर्वेषां सङ्ग्रहाय 'किमिदमदो वे'त्युक्तम् । **अन्यदेवेति** ।। उदात्तस्थले अनुदात्त इति 'अग्निमील' इत्यादौ 'वायुमील' इत्यादि 'आनन्दमय' इत्यादयो वेदाः कोशपरा इति, तथा वेदो न सम्यगनुभवसाधनमिति मिथ्यादृष्टिदुष्ट इत्यर्थः । अत एव व्यासस्य संशयविपर्ययनिरासार्थमवतीर्णत्वादेव । अग्रे प्रत्यधिकरणं संशयपूर्वपक्षयोरुभयोरपि प्रदर्शनं भाष्ये । **तन्निर्णयायेति** ।। वैदिकस्वरपाठार्थ-निर्णयायेत्यर्थः । **द्वापरग्रहणमिति** ।। 'वेदः अपपाठादिना तिरोहितो भवितुमर्हति युगद्वयान्तर-प्रादुर्भाववत्त्वात्' इत्यनुमानं सूचितं बोद्धव्यम् । अनेन भागद्वयाकुलीभावः समर्थितो भवति । **अवान्तर-वेदादिविभागकथनमिति** ।। महावेदस्यावान्तरवेदत्वेन तस्य चतुर्विंशत्यादित्वेन विभागकथनमवशिष्ट-भगद्वयाकुलीभावसूचनायेत्यर्थः । **आप्तमूलत्वाद्ब्रह्मसूत्राणामिति** ।। ननु सूत्रमाप्तवाक्यत्वेन प्रमाणं तथा सति प्रतिज्ञामात्रेण पूर्णत्वेन 'इह'त्याद्यनभिधानप्रसङ्गात् । किं च व्यासस्य नारायणावतारत्वेन स्वतः सर्वज्ञत्वेऽपि नाऽऽप्तत्वं सम्भवति, विप्रलम्भकत्वात् । न च – विप्रलम्भनस्य श्रोतृदोषनिबन्धनस्य ब्रह्मादिश्रोतृषु तत्वज्ञानायोग्यत्वाभावेनाभाव इति वाच्यम् – तामसपुराणानामपि प्रामाण्यप्रसङ्गात् 'एष मोहं सृजाम्याशु यो जनान् मोहयिष्यति' इति स्वयमेवाभिधानाच्च । अपि च – न युक्तिसंवादित्वेनापि सूत्राणां युक्तिप्रतिपादकत्वेन युक्तिसमानार्थत्वरूपयुक्तिसंवादित्वभावात्, तथा श्रुतिनिर्णायकत्वेन श्रुतिगतभगवद्विषयकत्वविषयकत्वेऽपि श्रुतिविषयभगवद्विषयकत्वाभावात् न श्रुतिसंवादित्वमपीति चेत्, अत्र वक्तव्यम् – किं सूत्रं प्रमाणमेव नेत्युच्यते, उत प्रमाणमपि नाऽऽप्तवाक्यमित्युच्यते । नाद्यः – चतुर्मुखादिमहाजनपरिगृहीतत्वेन प्रामाण्यस्याङ्गीकर्तव्यत्वात् । न द्वितीयः – पौरुषेयवाक्यप्रामाण्यं प्रति आप्तवाक्यत्वस्य व्यापकत्वेन तदभावे तदभावापातात्, किं नाम तन्निश्चयोपायाभावात् ।

(अभिनवचन्द्रिका)

नाऽऽप्तवाक्यत्वेनार्थनिश्चायकम् । ततो हेत्वाद्युपन्यासोऽपि उपपन्नः । प्रामाण्यव्युत्पादनं तु व्याख्येयत्वोपयोग्युपादेयताव्युत्पादनायैव । एषां सूत्राणां स्वप्रतिपाद्ययुक्तिसिद्धेऽर्थे तात्पर्यसद्भावाद्युक्तिसंवादोऽप्युपपन्नः । यदपि तामसपुराणानां प्रामाण्यं स्यादित्युक्तम्, तेषामसदधिकारिकत्वेन प्रतीयमानार्थेऽप्रामाण्यात् । न च – एतेषामप्यसदधिकारिकत्वमेवेति वाच्यम् – 'ब्रह्मरुद्रादिदेवेषु मनुष्यपितृपक्षिषु । ज्ञानं संस्थाप्ये'ति वचनविरोधात् । तथा सूत्राणां श्रुत्यर्थनिर्णायकत्वेन श्रुतिगतभगवद्विषयकत्वविषयकत्वेऽपि श्रुतिवादो युज्यते 'सर्वेति वेदा युक्तयः सुप्रमाणा ब्राह्मं ज्ञानं परमं त्वेकमेव । प्रकाशयन्त' इति श्रुत्या श्रुतीनां भगवद्विषयकत्वाभिधानात् । ननु अस्य शास्त्रस्य आरम्भणीयत्वं सूत्रकार एव प्रथमसूत्रे समर्थयते तत्किमनेनेति चेत्, मैवम् – विषयादिसम्पादनेनैव सूत्रे आरम्भणीयत्वमुक्तम् । इह तु प्रामाण्यव्युत्पादनेन उपादेयत्वं समर्थितमित्यङ्गीकारात् । **प्रमाणेन स्थापयतीति** ।। ननु – व्यासस्याऽऽप्तत्वसिद्धौ आप्तोक्तत्वेन स्कान्दपुराणप्रामाण्यसिद्धिः । तत्सिद्धौ च तत्सिद्धिरिति अन्योन्याश्रय इति चेत् । न ब्रूमो वयम् – आप्तवाक्यत्वेन पुराणप्रामाण्यं येनान्योन्याश्रयः स्यात् । किन्तु 'न विलक्षणत्वादस्य तथात्वं चशब्दा'(ब्र.सू.२-१-४)दिति वक्ष्यमाणत्वात् अपौरुषेयवाक्यानुसारित्वेनैव प्रामाण्यसिद्धिरिति । तदिदमुक्तं – **प्रमाणेनेति** ।। वक्तुराप्तिमनपेक्ष्य श्रुत्यनुसारित्वेन प्रमाणतया सिद्धेनेत्यर्थः । अत एव सूत्रकारीयः 'स्मरन्ती'त्यादिना स्मृत्युपन्यास उपपन्नः । ननु – अथापि वाक्यप्रामाण्यं द्वेधा आप्तिमूलत्वेन, अपौरुषेयतया च । न च पुराणानामपौरुषेयत्वम् । व्यासोपज्ञताविरोधात् । तस्मादाप्तिमूलतयेति वाच्यम् । तथा च पुनरन्योन्याश्रय इति चेत्, सत्यम् । आप्तिमूलतयैव प्रामाण्यम्, तथापि तदनिश्चयेऽपि वादिवाक्ये संवादेन प्रामाण्यनिश्चयवत् अत्रापि वेदानुसारित्वेनैव प्रामाण्यनिश्चयाङ्गीकारात् इति । **अज्ञानमिति प्रतीतिविषयतामिति** ।। वेदः प्राणिनां ज्ञानसाधनं न भवतीति प्रतीतिविषयतामित्यर्थः । **स्वहतेति** ।। गोः निर्मातारः गोनिर्मातारः स्वेन हताः स्वहताः । स्वहताश्चते गोनिर्मातारश्चेति विग्रहः । स्वापराधेनैव हताः हतप्राया इत्यर्थः । एतेन ब्राह्मणनिर्मितगोहन्तृत्वेन स्वस्यैवापराधित्वाच्छापप्रदानमयुक्तमिति शङ्का परास्ता । एतेनैव 'गोरतद्धितलुकी' (पा.सू.५-४-९२)ति टचा भाव्यमिति कस्यचिद्भ्रमो निरस्तः । **किमेभिरिति** ।। सूत्रान्तरासाध्यमसाधारणफलं किं न किमपीत्यर्थः । अत इत्यनन्तरमाहेत्यतः पूर्वम् । 'असाधारणफलं वक्तुं इतरसूत्रादतिशयितसूत्रत्वं ताव'दिति शेषः । **यावदक्षरतां विनेति** ।। अक्षरशब्दोऽत्र पदपरः । यावन्ति पदानि विना विवक्षितार्थासिद्धिः तदर्थव्युत्पादनाय तावतामेव ग्रहणमल्पाक्षरत्वम् । एतेन 'खं तल्लिङ्गात्' (ब्र.सू.१-१-२२) इति वक्तव्यम् अल्पाक्षरत्वात् न तु 'आकाशस्तल्लिङ्गा'दिति परास्तम् । बहुशाखा-

(अभिनवचन्द्रिका)

**निर्णायकत्वमिति** ।। मीमांसासूत्राणामेवात्र लक्ष्यत्वेन सव्याकरणसूत्राणामलक्ष्यत्वेन लक्षणाभावो न दोषायेति ध्येयम् ।

**चन्द्रिकायां तु** – 'बहुशाखानिर्णायकत्वमिति ।। सव्याकरणसूत्रादेरपि बहुशाखागतपदार्थ-निर्णायकत्वान्नाव्याप्तिरिति ज्ञेय'मित्युक्तम् । तेषां तु बहुशाखागतपदरूपार्थनिर्णायकत्वेनामीमांसासूत्रत्वेन लक्ष्यत्वाभावान्नाव्याप्तिरितित्येव हृदयम् । अन्यथा पदार्थनिर्णायकत्वेऽपि बहुशाखानिर्णायकत्वरूपलक्षणाऽभावादव्याप्तिर्वज्ररूपायिता स्यात् ।

**व्यर्थाक्षरादिराहित्यमिति** ।। आदिशब्देन विरुद्धार्थकस्वरो गृह्यते । पदानामिवाक्षराणामपि अर्थवत्त्वादित्यर्थः । तदुक्तं 'प्रतिसूत्रं प्रतिपदं प्रत्यक्षरमथापि वे'ति ।

**चन्द्रिकायां तु**– 'अर्थाप्रतिपादकत्वेऽपि साम्निस्तोभाक्षराणामृगक्षरा व्यासगानभागपरिपूरणायेव प्रयोजनान्तरायाक्षराप्रयोग इत्यर्थ' इत्युक्तम् । अङ्गीकृत्य चेदमुक्तम् । 'असौ वाव लोको हावुकार' इत्यादिना स्तोभाक्षराणामपि अर्थवत्त्वव्युत्पादनात् ।

ननु – 'अल्पाक्षर'मित्यादि प्रत्येकं लक्षणं वा मिलितं वा । नाद्यः – अल्पाक्षरसूत्राभासेऽतिव्याप्तेः । द्वितीये – 'विश्वतोमुख'मित्यनेनैव पूर्णत्वात् इतरविशेषणानां वैयर्थ्यमिति चेन्न – अल्पाक्षरत्वे सति विश्वतोमुखत्वमेव लक्षणम् । इतराणि विशेषणानि स्वरूपकथनार्थमित्यङ्गीकारात् । विश्वतोमुखत्वमात्रं भारते गतम् । 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इति वचनात् । तत्परिहाराय सत्यन्तम् । न चैवमप्यतिव्याप्त्यपरिहारः – यावद्भिः पदैर्विना विवक्षितार्थासिद्धिः ततोऽधिकानामपि प्रश्नादीनां विवरणार्थमुपादानात् । न च – सूत्रेष्वपि समन्वयसूत्रोक्तस्य समस्तेनाध्यायेन विवरणात् लक्षणाभाव इति वाच्यम् । अल्पाक्षरशब्देन प्रश्नाऽधिकाऽनुपादानस्य विवक्षितत्वात् । **द्वित्रशाखेति** ।। 'बहुव्रीहौ सङ्ख्येये डजबहुगणात्' (पा.सू.५-४-७३) इति डचोविधानात् द्वित्रेति साधु । न च अन्यपदार्थत्वाभावान्नायं बहुव्रीहिः – 'सङ्ख्ययाऽव्ययाऽऽसन्नाऽदूराऽधिक सङ्ख्याः सङ्ख्येये' (पा.सू.२-२-२५) इत्यनेन विहितसमासस्यापि बहुव्रीहित्वात् । द्वे वा त्रिस्रो वा द्वित्रा इति विग्रहस्थवा-शब्दार्थरूपान्यपदार्थाभिधायकत्वाच्च । 'शब्दजातस्ये'ति मूले षष्ठी कर्तरि न तु कर्मणि इत्यभिप्रेत्य व्याचष्टे – **शब्दसमूहैरिति** ।। ननु शब्दसमूहैः क्रियमाणनिर्णयस्य एतन्मूलकत्वं नाम अनेनार्थमुपलभ्य रचितत्वम् । न च तत् सम्भवतीति, कर्ममीमांसादेवामीमांसयोः पूर्वभावित्वस्य भवद्भिरेवाङ्गीकृतत्वात्, सूत्रकारेणैव औडुलोम्यादिमतोदाहरणाच्च, पूर्वभाविना तयोः पश्चाद्भाव्येतन्मूलकत्वासम्भवादिति चेत्,

(अभिनवचन्द्रिका)
अत्रोच्यते – त्रिकालदर्शिनां मुनीनां व्यासप्रसादेन व्याससचित्तस्थिताकाशमिति सूत्रैकदेशदर्शनमस्त्येव । तथा च – तेनार्थमुपलभ्य रचनमप्युपपन्नम् । तदुक्तम् – व्याससचित्तस्थिताकाशादवच्छिन्नानि कानिचित् । स्वीकृत्य मुनयो ब्रूयु'रिति । न च – पश्चाद्भाविसूत्रं कथं पूर्वभाविज्ञानं प्रति कारणमिति वाच्यम् – पूर्ववर्तिनो वाक्यज्ञानस्यैव कारणत्वाङ्गीकारात् । मुनीनां समग्रसूत्रोपलम्भाभावेन तान् प्रति सूत्रोपदेश-श्चोपपन्न इत्यलम् ।

## वाक्यार्थमुक्तावली

ननु सूत्रार्थोक्तिं प्रतिज्ञाय तस्य उत्पत्तिक्रमोक्तिरयुक्तेत्यत अवतारयति **नन्वित्यादिना** । कलिङ्गोपदेशाध्यायादेः पूर्वपक्षग्रन्थस्यापि व्याख्येयत्वादन्यार्थतयेत्युक्तम् । अनन्यप्रयोजनकत्वेन प्राधान्येनेति यावत् । तत्र सिद्धान्तावबोधः प्रयोजनम् । न चैतच्छास्त्रं पूर्वपक्षरूपं येनानुपादेयत्वेऽपि सिद्धान्तावबोधार्थं व्याख्येयत्वं स्यादिति भावः । यद्वा प्रातीतिकार्थपरित्यागेन तात्पर्यविषयीभूतार्थवत्तया व्याख्येयमित्यर्थः । **प्रायस्तदेवेति** । उक्तरीत्या कलिङ्गाध्यायादेरुपादेयत्वात् प्राय इत्युक्तम् । अप्रमाणत्वेन निश्चितस्यापि ख्यात्याद्यर्थमुपादेयत्वदर्शनाद्वा । **इदमदो वेति** । इदं वा तत्वज्ञानमदो वा तत्वज्ञानमिति सन्दिग्धेत्यर्थः । **अन्यदेवेति** । भगवन्निर्गुणत्वादिज्ञानमेव तत्वज्ञानमिति भ्रान्तिविषयीकृतेत्यर्थः ।। यद्वक्ष्यति ''ज्ञाने त्वज्ञानताङ्गन'' इति भाष्ये । तन्निर्णयायेत्यनेन ज्ञानपरामर्शः । तस्य ज्ञानस्य प्रमाणत्वमोक्षसाधनत्वादिना निर्णयः तन्निर्णयः । अत एवेदमदो वेत्यादिज्ञानविषयकसंशयविपर्ययौ प्रदर्शितौ । द्वापरे अवततारेत्यन्वये स्वरूपकथनमेव स्यादतः प्रकृतोपयोगितया व्याचष्टे । **आकुलीभावेति** । द्वावेव धर्मपादौ केवलं यस्मिन्युगे तद्वापरमिति तत्वप्रदीपरीत्या निर्वचनादिति भावः । अथेष्टानिष्टेति भाष्ये अथशब्दो अवतारानन्तर्यार्थकः । तथा चावतारस्तदुद्देश्य इति भावः । यद्वा अवतारानन्तरमेव न तु परोपदेशमपेक्ष्य येन स्वतः सार्वज्ञ्यं न स्यादिति भावः । वेदमुत्सन्नमित्यादेरित्यस्य इत्यर्थ इति वक्ष्यमाणेनान्वयः । नष्टार्थत्वप्रतीतिनिरासायोत्सन्नशब्दार्थमाह **अपपाठादिना तिरोहितमिति** । आदिपदेनाध्ययना-भावेनाव्यक्तत्वम् । अत्रानध्ययनेनोत्सन्नत्वं मूलवेदस्य उपवेदादेरपपाठादिनेति विवेकः । तदुक्तं तत्वप्रदीपे । वेदमपारमुत्सन्नमनभिव्यक्तमध्ययनेन व्यभ्रपचिनोति । चतुर्धेत्यतः परमध्याहारो विभक्तमिति । मूलवेदस्यैव चतुर्धा विभक्तत्वप्रतीतेः उक्तं प्रागेव चतुर्धा विभक्तं ऋङ्निगदादिरूपं वेदमिति । मूलवेदमध्ययनार्थं सम्यक् प्रागेव त्रेतायुगे हयग्रीवरूपेण चतुर्धा विभक्तं ऋङ्निगदसामनामकमुपवेदमित्यर्थः । उपवेदस्यापि पुनर्विभागपरतया वेदमुत्सन्नं व्यभ्रपन् चतुर्धा व्यभजदिति यथाश्रुतं योजने व्यभ्रनविभजनयोरेककालीनत्व-

(वाक्यार्थमुक्तावली)

प्रतीतेर्व्यञ्जयन्नित्यस्य तात्पर्यमुक्तं व्यक्तीकृत्येति । प्रागेव विभक्तस्य पुनश्चतुर्धा विभागः कथमित्यतो व्यञ्जयन्नित्यतः परमध्याहरति **एकैकस्मादेको विभाग इति** । विभक्तादृगादेरेकैकस्मादेकैको भाग इति चतुर्धा व्यभजदित्यर्थः । उपवेदादुधृत्य चतुर्धा विभक्तमवान्तरवेदं ऋग्वेदादिक्रमेण चतुर्विंशतीत्यादिभेदेन व्यभजदिति । भाष्यार्थमाह **एकैकश्चेति** ।

ततश्चायं भाष्यार्थः । वेदमपारं मूलवेदमनध्ययनेनोत्सन्नं तिरोहितम् आदिकृतयुगे अनन्तवेदाधिकारिण उपदेशेन व्यक्तीकुर्वन् नारायणस्त्रेतायुगे अध्ययनार्थे हयग्रीवरूपेण हरिणा ऋङ्निगदादिरूपेण चतुर्धा विभक्तम् । पुनरपपाठादिना तिरोहितं भगवान्व्यासो व्यञ्जयन् यक्तीकृत्यैकैकस्मादेकैको भाग इति द्वापरे चतुर्धा व्यभजत् । एकैकं चावान्तरमृगादिवेदं चतुर्विंशत्यादिभेदेन व्यभजत् अवान्तरेति अवान्तरवेदत्वेन चतुर्विंशत्यादिशाखात्वेन च यो विभागस्तस्य कथनमित्यर्थः स्यादिति भावः । इत्यादेरिति आदिपदेन "अथो नृणां कालबलात्सुमन्दमायुर्मतिं कर्म च वीक्ष्य कृष्णः । विव्यास वेदान्भगवान् चतुर्धा चक्रे तथा भागवतं पुराणमिति" इत्यादेर्ग्रहणम् । त्रेतायां त्रेधा विभक्तत्वादेकैकस्मादेकैको भाग इति विभागे द्वापरे चातुर्विध्यं कथमिति चेन्न । निगदपदेनाथर्वणस्य विवक्षितत्वात् । अत एव प्रागेव चतुर्धा विभक्तमित्युपपन्नम् । **भगवत्त्वादेवेति** । ज्ञानविज्ञानयोर्भगपदार्थत्वादिति भावः । अनेनावततारेत्येतदुक्ततात्पर्यं भवति । ब्रह्मादिश्रोतृष्वित्यनेन ब्रह्मरुद्रेत्येतदुक्तार्थम् । अज्ञाननिर्हरणस्येत्यनेन तन्निर्णयायेत्येतदुक्तार्थम् । श्रुतियुक्तिमूलत्वादित्यनेन तदर्थनिर्णयायेत्येतत् इष्टानिष्टेत्यादिना तज्ज्ञापनार्थमिति तदर्थनिर्णयायेति चोक्तार्थम् । तदर्थनिर्णयायेति तच्छब्देन 'तज्ज्ञापनार्थम्' इत्युक्तिलब्धेष्टानिष्टप्राप्तिपरिहारसाधनवेदनकरणवेदपरामर्श इति ज्ञेयम् । निष्पन्नज्ञानस्य त्रेतादावपि सत्वात्कृतग्रहणं व्यर्थमित्यत आह **यथोत्पन्नमिति** । प्रकारान्तरेण विक्रियमाणत्वभ्रमं वारयति **अन्यथाजातमिति** । गौतमशापप्रकारस्तु तत्वप्रदीपिकायामुक्तः । गौतमस्य वदान्यस्य वसत आश्रमं द्वादशवार्षक्यामनावृष्टौ ऋषयोऽध्यूषुः । तत्र अहरहः स्नेहसमाहितहव्यकव्यान्यभ्यवहार्य सुकृतसमाधिस्वाध्यायप्रवचनाः समवर्तन्त । सत्यां वृष्टौ मृतिभयविपद्विमुक्ताः प्रतिष्ठासवस्तं मुनिमनुज्ञापयाञ्चक्रुः । तेन निवारिताः । सुहृत्तमस्नेहभङ्गभयान्नात्यवर्तन्त । तस्मिन्काले पतिशिरसः सपत्नीं निष्कासयन्त्या पार्वत्या प्रेरितो विनायको ब्रह्मचारिवेषप्रच्छन्नो ऋषीनुपससार । भगवन्तः किमत्र भवतां तपोधनानां तपःक्षपकारणातिचिरमेकात्रादनेन स्वस्वग्रामं व्रजत तत्रोपायमाकर्णयत तपोबलेन मायामयीं सौरभेयीं निर्मिमीध्वं तां तु गौतमः स्वीयतपोवनं वार्षकीकृतबलाहकावलीविगलितसलिलवर्धितसस्यग्रासिनीमपक्रामयितुं प्रयतिष्यते । सा ततः सहसा निपतिष्यति । तदा ब्राह्मणास्तं विब्रूत यावदिमामशेषमातरं सौरभेयीं नोत्थापयिष्यसि

(वाक्यार्थमुक्तावली)

तावन्न भवान् भोज्यान्नः । अतो हरशिरसः सुरसरितमवतार्य तद्वारिणा तामभिषिच्य तामुज्जीवयतु भवानित्येवमनुतापिनं तमभिलाप्य अपसरतेत्युक्त्वा स व्रती स्वाश्रमं जगाम । ते चामुना प्रणिगदितं सुनिपुणं प्रयाणोपायमाकर्ण्य अतिष्ठन् । तेनैव च प्रातिष्ठन्त । ततस्तावदसौ मुनिवृषभाश्चेरकालचीर्णतपस्यया परितोषितात्पशुपतेर्मौलिमणिमालायितां मन्दाकिनीमंशेन समानीय तद्वारिणा सुरभिमानिषेचत् । ततश्चोत्तस्थौ । ततो गौतमगोदत्तवारि गोदावरीति प्रसिद्धिं लेभे । अथ तस्य चिन्ता समजनिष्ट । तत्किमिह किल कारणं यदनया भद्रया केवलं मे कमण्डलूदकसंस्पर्शादपाति सहसा व्यामोहि । अथ गिरिशोत्तमाङ्गादागतसुरतरङ्गिणीसङ्गमादेव चोद्बोधि । झडिति चोदस्थायि आश्चर्यमेतदिति । प्रतिबुबोध चैतद्वृत्तं विबुधपरयोः अम्बिकाहेरम्बयोर्विचेष्टितमेतदिति । चुक्रोध च तेभ्यः । अहो मत्तपोबलाद्विपदमतितीर्षुणामन्नपानादिभोगमत्तानां मुनीनां दुश्चरितमेतत् । अस्तु नाम तेषामधर्ममूढानामस्मान्निमित्तादवामज्ञानं नश्यत्विति गौतमः शशापेति । गौतमशापस्य स्वहतगोनिर्मातृमात्रविषयकत्वे कथं तदितरलोकस्याज्ञानमित्यत आह लोकस्य चेति । सङ्कीर्णता नाम सज्जनानुक्रोशयुक्ततैवेत्यत्र गीताभाष्यसंमतिमाह तदुक्तमिति । बहुवचनप्रयोगेऽपीति । उत्सन्नान् भगवान्वेदानित्यत्रेत्यर्थः । यावदक्षरतामिति । यावदक्षरतां विना विवक्षितार्थासिद्धिस्तदर्थप्रतिपादनाय ततोऽधिकाक्षरानुपादानमल्पाक्षरत्वमित्यर्थः । अतो नास्तोभत्वेन साङ्कर्यम् । एवमपि भवितुमिति । एवमपि प्रमेयं भवितुमर्हतीति सन्देहजनकं वाक्यं स्यादस्य तु निर्णयसाहित्यान्न सन्देहजनकत्वमिति भावः । विशिष्टार्थता अनन्यलक्ष्यार्थता । बहुशाखेति । महाव्याकरणसूत्राणामपि बहुशाखागतपदादिनिर्णायकत्वान्नाव्याप्तिः । अल्पाक्षरमित्यादिसूत्रलक्षणे भाष्येऽसन्दिग्धत्वादिविशेषणपञ्चकसद्भावेऽप्यल्पाक्षरत्वाभावादसूत्रत्वं स्वपदविवरणादिसद्भावात् । हरिरित्यादिभगवन्नाम्नः अल्पाक्षरत्वादिविशेषणपञ्चकसद्भावेऽपि विश्वतोमुखत्वाभावादसूत्रत्वम् । तथा चाल्पाक्षरत्वे सति विश्वतोमुखत्वमित्येतावदेव लक्षणम् अतिव्याप्त्याद्यभावात् । अन्यानि स्वरूपकथनपराणि तानि च प्रत्येकम् एकैकव्यावर्तकानि । न तु तद्व्यतिरिक्तान्यसद्भावेनातिव्याप्तिनिरासकानि । तथाच तत्वप्रदीपे अत्र भाष्यस्य निर्णयहेतुरहितवाक्यस्य कुशलपुरुषोक्तलौकिकवार्तारूपवाक्यस्य भगवन्नाम्नः व्यर्थाक्षरोपेतकुशलपुरुषवाक्यस्यापशब्दमात्रोपेतलौकिकवाक्यस्य सूत्रत्वव्यावृत्यै क्रमेण विशेषणानीति ।

ननु मुख्यत्वे साधनीये अतो मुख्यत्वान्निर्विशेषितसूत्रत्वमिति तद्भङ्गकृत्य निर्विशेषितसूत्रत्वसाधनं प्रकृतासङ्गतं सन्दिग्धासिद्धं चेत्यतो व्याचष्टे यतो ब्रह्मसूत्राणामिति । अनेन चशब्दोऽवधारणे अत इत्यनेन सम्बध्यते । अपिशब्दस्य निर्विशेषितस्य सूत्रत्वमित्यनेनान्वयः । तथा च वह्निमत्वादेव

(वाक्यार्थमुक्तावली)

धूमवत्त्वमित्युक्ते वन्ह्यभावे धूमोऽपि न स्यादिति विपक्षे बाधकतर्कसूचनपूर्वकं धूमवत्वाद् वह्निमत्वमिति यथा लभ्यते तथा प्रकृतेऽपि निर्विशेषितसूत्रस्य मुख्यसूत्रत्वहेतुत्वलाभः । साध्यसत्वादेव हेतुरप्यस्ति । तदभावे हेतुरपि न स्यादिति सूचनाय निर्विशेषितसूत्रत्वमपीत्यपिपदम् । **पुराणादाविति** । यथा हि सूत्रशब्देन ब्रह्मसूत्रं निगद्यते । तस्मात्सूत्रार्थमागृह्य कर्तव्यः सर्वनिर्णय इत्यादावित्यर्थः । निर्विशिषितसूत्रत्वं निरुपपदसूत्रशब्दवाच्यत्वम् । **तन्मुख्येति** । अनेनैकस्येत्येतन्मुख्यस्येति व्याख्यातं भवति । **अमुख्या इति** । तत्रैकस्येत्युक्तिलब्धमत्रामुख्यमिति भावः । **विशेषणाद् व्यासाः इति** । सोपपदव्यासशब्दवाच्या इत्यर्थः । **सविशेषणत्वादिति** । अनेन हिशब्दो हेत्वर्थः । अपराणीत्यस्यान्यसूत्राण्यमुख्यानीत्यर्थद्वयमुक्तं भवति । निर्विशेषितत्वस्य मुख्यत्वसमव्याप्तत्वेन तद्व्यापकत्वात् तदभावे तदभावसाधनं चोपपद्यते इति ज्ञातव्यम् । एतदुपपादनायैवेति । न च निर्विशेषितहेतोरव्यभिचारप्रदर्शनमुखेन तस्य तत्रोपयोगः । अप्रयोजकत्वशङ्कानिरासकेन मुख्यस्य निर्विशेषेणेत्यनेनैव व्यभिचारस्यापि निरासादिति भावः । **मुख्यस्यैवेति** । एवकारासंयोजने अप्रयोजकत्वशङ्कानिरासादिति भावः । **अत्रेति** । वेदविदः प्राहुरिति वेदस्य वृद्धव्यवहारस्य प्रमाणीकृतत्वेन विपक्षे प्रामाणिकपरित्यागप्रसङ्गाभिप्रायाच्छङ्कापरिहार इति भावः ।

नन्वत्र सूत्राणां सर्वशाखानिर्णायकत्वमुच्यते कथं तेन तथापीत्याद्युक्तशङ्कापरिहार इत्यत आह । **यत्सूत्रधर्मतयेति** । प्रागुक्तमेव मुख्यसूत्रत्वं यथा हेतुः स्यात्तथानेनैव वाक्येन विव्रियत इति भावः । **क्रियमाण इति** । अनेन शब्दजातस्येति षष्ठी सम्बन्धे । स च जन्यजनकभावलक्षण इत्युक्तं भवति ।

ननु एवं ज्ञानं पुनः प्रापुरिति भारततात्पर्ये पुनःशब्दप्रयोगात् ब्रह्मादीनां तिरोहितलाभः प्रतीयत इत्यत आह । **एवमिति** । पुनःप्राप्तिर्नाम पुनर्दानस्याधिकस्य वा विरिञ्चेतरेषान्तिरोहितस्य लाभ इत्यर्थः । विरिञ्चेतरेषां तिरोधानं प्रारब्धकर्मणेति ज्ञेयम् । कालाभिभावादेरभावात् ।

## तत्त्वसुबोधिनी

**अनन्यार्थतयेति** । प्रातीतिकार्थभाष्यकारान्तरोक्तविरुद्धार्थपरं न भवतीत्यनेन प्रकारेणेत्यर्थः । प्राधान्येनेति वार्थः । **प्रायः तदेवोपादेयमिति** । अप्रमाणत्वादिना निश्चितस्यापि व्याख्यानार्थं व्याख्यानोपादानदर्शनात् प्राय इत्युक्तम् । प्राय उपादेयमत्युपादेयमित्यर्थः । अत एव ब्रह्मसूत्राणां अत्युपादेयत्वादिति वक्ष्यति । एवं यदुपादेयमित्येतदत्युपादेयमिति व्याख्येयम् । एवमुपादेयतायाः इत्येतदपि व्याख्यातम् । तन्निर्णयाय चेति भाष्ये तच्छब्देन ज्ञानपरामर्शः । तस्य प्रमाणत्वमोक्षहेतुत्वादिना

(तत्त्वसुबोधिनी)

निर्णयः तन्निर्णयः । अत एव इदमदो वेति ज्ञानविषयकसंशयविपर्ययावादौ दर्शितौ । द्वापरे अवततारेत्यन्वयं स्वरूपकथनमेव स्यात् । अत आवश्यकं यथा स्यात्तथाह ।। **आकुलीभावेति** ।। अथेष्टानिष्टेति भाष्ये अथेत्यस्यावतारानन्तरमेव । ननु परोपदेशमपेक्ष्य । येन स्वतः सार्वज्ञं न स्यादित्यर्थः । भावबोधे 'अथशब्द आनन्तर्यार्थकः सन् व्यासावतारस्य मुख्यतो वेदोद्धारादिप्रयोजनकत्वमाहेत्युक्तम्' । वेदमुत्सन्नमित्यादेः इत्यस्य इत्यर्थ इति वक्ष्यमाणेनान्वयः । उत्सन्नशब्दस्य नष्टार्थत्वं निवारयन् आह **अपपाठादिनेति** । व्यासावतारात्प्राक् वेदानामविभक्तत्वं निराकुर्वन् व्यभजदित्यस्य विवक्षितमर्थमाह । **प्रागेवेति** । **अवान्तरवेदादीति** । स्वत एव ऋङ्निगदादिरूपात् एकैकस्मात् महावेदात् उद्धृतस्यावान्तरस्य ऋगादिवेदस्य चतुर्विंशत्या शाखाभेदेन आदिपदेन शाखानां च उपशाखाभेदेन कथनमित्यर्थः । यद्वा महावेदस्य अवान्तरवेदत्वेन चतुर्विंशत्यादित्वेन च विभागकथनमित्यर्थः । कथमेतावता प्रामाण्यादि ब्रह्मसूत्राणां समर्थितमित्यत आह ।। **अयं भाव इति** ।। आप्तमूलत्वेन कथं निर्दोषत्वसिद्धिरित्यत आह ।। **आप्तिश्चेति** ।। तथापि ब्रह्मसूत्राणां कथं प्रामाण्यं सिद्धं इत्यत आह ।। **आप्तमूलत्वादिति** ।। तथापि सूत्रप्रणेतुः वेदव्यासस्य पुरुषत्वाविशेषात् प्रमादादिकं सम्भवति । तथाच तस्यानाप्तत्वेन कथं तेषामाप्तमूलत्वेन प्रामाण्यमित्यत आह । **प्रमादेति** । अस्तु नारायणावतारत्वं व्यासस्य तथापि प्रमादादिकं किं न स्यात् इत्यत आह । **भगवत्त्वादेवेति** । अन्यथा तन्न स्यादित्यर्थः । ननु नारायणावतारस्य बुद्धस्य प्रमादाद्यभावेऽपि विप्रलम्भकत्वात् अस्यापि विप्रलम्भोऽस्तु तथाच विप्रलम्भमूलकत्वात् न प्रामाण्यमेषामित्यत आह ।। **विप्रलम्भस्य चेति** । श्रोतृदोषाभावो कुतोऽवसीयत इत्यत आह ।। **ज्ञानयोग्यताया इति** । तथाप्यपहासमूलकमेतत्किं न स्यादित्यत आह ।। **अपहासस्य चेति** ।। प्रसक्तदोषाभावः कुत इत्यत आह ।। **अज्ञानेति** ।। आप्तमूलकत्वमात्रेण यदा प्रामाण्यसिद्धिस्तदा किमु वक्तव्यं श्रुत्यादिनिर्णायकत्वात्तन्मूलत्वेन प्रमाण्यसिद्धिः इत्याह ।। **आसीति** ।। तथापि इष्टसाधनत्वाभावात् कथं प्रामाण्यमात्रेण उपादेयत्वमित्यत आह ।। **इष्टेति** ।। तदर्थनिर्णयायेत्यत्र तच्छब्देन तज्ज्ञापनार्थम् इत्युक्तिलब्धेष्टानिष्टप्राप्तिपरिहारसाधनवेदनकरणरूपवेदपरामर्शादिति बोद्धव्यम् । निष्पन्नज्ञानस्य त्रेतादावपि स्थितत्वेन कृतग्रहणं किमर्थमित्यत आह ।। **यथोत्पन्नमिति** । ज्ञानस्य प्रकारान्तरेण विक्रियमाणत्वाभावादन्यथा जातमिति पदं व्याचष्टे ।। **इदमदो वेति** ।। दृष्टं विपर्यीकृतम् ।। **अज्ञानमितीति** । सम्यक्ज्ञानं न भवतीति विपरीतप्रतीतिविषयतामित्यर्थः । कुत इत्यत आह ।। **गौतमेति** ।। ननु कालतो ब्रह्मादिज्ञानस्याभिभवः किं न स्यादित्यत आह ।। **कालेति** ।। ब्रह्मादि-व्यतिरिक्तसकललोकानां गौतमहननिर्मातृत्वाभावात् तेषां सर्वेषां कथं साकल्येन सम्यक्ज्ञानान्यथात्वम्

**(तत्त्वसुबोधिनी)**

इत्यत आह ।। **लोकस्य चेति** । ब्रह्मादिबुद्धिसङ्कीर्णत्वम् अज्ञानादिमिश्रितत्त्वं नेत्युक्तं तत्र सम्मतिमाह ।। **तदुक्तमिति** ।। ननु एकत्र वेदानिति बहुवचनप्रयोगः क्वचिच्च वेदस्येति एकवचनप्रयोगः इति वैरूप्यं कुत इत्यत आह ।। **बहुवचनप्रयोगेऽपीति** । उत्सन्नान् भगवान् वेदानित्यत्रेत्यर्थः । **तदल्पाक्षरत्वमिति** । यावदक्षरतां विना विवक्षितार्थासिद्धिः तदर्थप्रतिपादनाय ततोऽधिकाक्षरानुपादानम् अल्पाक्षरत्वमित्यर्थः । अतो नाऽस्तोभत्वेन सांकर्यम् । **बहुशाखानिर्णायकत्वमिति** । सव्याकरणसूत्रादेरपि बहुशाखागत-पदस्वरादिनिर्णायकत्वेन न तत्राव्याप्तिरिति ज्ञेयम् । **व्यर्थाक्षरराहित्यमिति** । ये अर्थाप्रतिपादकत्वेऽपि साम्नि स्तोभाक्षराणां ऋगक्षराव्याप्तगानभागपरिपूरणाय च प्रयोजनान्तरापादनप्रयोगा इत्यर्थः । **निर्विशेषितसूत्रत्वमिति** मूले अतःशब्देन निर्विशेषितसूत्रत्वे हेतुरुच्यते इति प्रतीयते । तथाच कथमेवमवतारिका ? न चैतदनुसारेण मुख्यसूत्रत्वेन निर्विशेषसूत्रत्वं साधयतीति कुतो नावतारितमिति वाच्यम् । यद्यत्र निर्विशेषितं तत्तत्र मुख्यमिति व्याप्तौ यथा व्यासत्वमिति दृष्टान्तकथनायोगात् । वेदनिर्णयाय सूत्रान्तरैरेवालमिति शङ्कया सूत्रेषु येष्विति वक्ष्यमाणरीत्या मुख्यसूत्रत्वोक्त्यैव परिहारेण तेन निर्विशेषितसूत्रत्वसाधनस्यासङ्गतत्वाच्च । यथा श्रुतोऽपि शब्दः सूत्रान्तरस्य निर्विशेषितसूत्रत्वं समुच्चिनोतीति च प्रतीयते । चशब्दश्च किमर्थमित्यतो वाक्यं योजयति । **यत इत्यादिना** । पर्वतस्य धूमवत्वं वह्निमत्वं कुत इति प्रश्ने व्यापकीभूतवह्निमत्व एव प्रमाणसिद्धधूमवत्वं सम्भवतीत्यभिप्रायेण अत एव अग्निमत्वादेव धूमवत्त्वमित्युक्ते यथा धूमवत्त्वस्य वह्निमत्वे हेतुत्वमिति गम्यते । तथा प्रकृतेऽपि निर्विशेषितसूत्रत्वस्य मुख्यसूत्रत्वे हेतुत्वलाभः । अत एव हेतोः अन्यथासिद्धिनिरासार्थम् अवधारणार्थश्चशब्दः अत एवेति योजितः । अपिशब्दस्तु मुख्यत्वरूपसाध्यसमुच्चायकः । हेतुसिद्ध्यर्थम् उक्तं **पुराणादाविति** । निर्विशेषितशब्देन ब्रह्मेति हरिरुच्यते । यथा सूत्रेति शब्देन ब्रह्मसूत्रं निगद्यते इत्यादावित्यर्थः । निर्विशेषितसूत्रत्वं तु निरुपपदसूत्रशब्दवाच्यत्वमिति द्रष्टव्यम् । **निर्विशेषितव्यासत्व-मिति** । व्यासत्वमित्येवोक्तत्वादन्यं विशेषणात् व्यासा इत्युक्तत्वाच्चेति भावः । **अमुख्या इति** । तत्रैकस्येत्युक्तत्वादत्रामुख्यत्वं त्वर्थलब्धमिति भावः । **विशेषणात् व्यासा इति** । सोपपदव्यासशब्दवाच्या इत्यर्थः । न मुख्यत्वमिति भाव इति । अनेन सविशेषणेति मूले हिशब्दो हेत्वर्थकः । अपराणीत्यस्य ब्रह्मसूत्रभिन्नत्वं अमुख्यत्वं चार्थः । निर्विशेषितसूत्रत्वस्य मुख्यसूत्रत्वसमव्याप्तत्वात् तद्व्यापकत्वेन तदभावेन तदभावसाधनं चोपाद्यत इत्युक्तं भवति । **एतदुपपादनायैवेति** ।। मुख्यस्य निर्विशेषेण इत्यनेन निर्विशेषत्वहेतोः अप्रयोजकत्वशङ्कापरिहारेण पक्षादन्यत्र व्यभिचारशङ्कया अपि तत एव परिहारसम्भवादव्यभिचारप्रदर्शनमुखेनापि तस्य तत्रानुपयोगादिति भावः । **मुख्यस्यैवेति** । अन्यथा

(तत्त्वसुबोधिनी)

शङ्कया अपरिहारात् । एवं विशेषत इत्यत्रापि एवेति योज्यम् । अत्र मुख्यस्य निर्विशेषणशब्दवाच्यत्वे इति वेदविदः प्राहुरिति वेदस्य वृद्धव्यवहारस्य च प्रमाणीकृतत्वेन विपक्षे प्रामाणिकपरित्यागप्रसङ्गाभिप्रायात् शङ्कापरिहार इति भावः । ननु सूत्रेषु येष्वित्यत्र ब्रह्मसूत्राणां सर्वशाखानिर्णायकत्वं प्रतीयते कथं तेन ब्रह्मसूत्राणां निर्णायकत्वमुच्यते? सर्वशाखानिर्णायकत्ववचनेन ब्रह्मसूत्राणां मुख्यत्वं चानेनापि सूत्रान्तरैरस्य गतार्थशङ्कयाः परिहारः कथमित्यतस्तात्पर्यमाह । **यत्सूत्रधर्मतयोक्तमिति** ।। प्रागुक्तमेव मुख्यसूत्रत्वं यथा हेतुः स्यात्तथानेन वाक्येन वाव्रियते इति भावः । **शब्दसमूहैः क्रियमाण इति** । शब्दजातस्येति कर्तरि षष्ठी न तु कर्मणि इत्यर्थः । एतच्च करणे कर्तृत्वोपचाराभिप्रायेण उक्तमिति न कश्चित्क्षुद्रोपद्रवः । शब्दजातस्येति सम्बन्धे षष्ठी । सम्बन्धश्च जन्यजनकभाव इत्यप्याहुः । **तन्निर्णयस्येति** ।। अन्यसूत्रकृत-निर्णयस्येत्यर्थः । व्याख्यानरूपत्वात् ब्रह्मसूत्रव्याख्यानरूपत्वात् । ब्रह्मादीनां ज्ञानं चेदस्ति तर्हि प्रश्नः कथं घटते इत्यत आह । **पूर्वं स्थितस्यैवेति** । तत्र प्रमाणमाह । **जानन्तोऽपि इति** । नन्वेवं ज्ञानं पुनः प्रापुः देवाश्च ऋषयस्तथा इति भारततात्पर्यनिर्णये पुनःशब्दबलात् देवादीनां तिरोहितज्ञानप्राप्तेः आचार्यैरेवोक्तत्वात् तद्बलात् ज्ञानं संस्थाप्य इत्यत्रापि तिरोहितज्ञानमुत्पाद्य इत्यर्थः स्यादित्यत आह । **एवं ज्ञानमिति** ।।

## तत्त्वप्रकाशिकावाक्यार्थविवरणम्

**अनन्यार्थतया** प्राधान्येन । यदुपादेयम् इत्यादिग्रन्थं केचिदित्थं व्याचक्षते ।। **यथाहि** ।। ब्रह्मसूत्राणि प्राधान्येन न व्याख्येयानि । अत्युपादेयताशून्यत्वात् । अत्र व्यतिरेकव्याप्तिः प्रदर्श्यते यदुपादेयमिति । ननु कथं हेत्वभावपुरस्सरा व्याप्तिः । सत्यम् । एवकारमहिम्ना विपरीतव्याप्यव्यापकभावो लभ्यते । वह्निमत्त्वादेव धूमवत्त्वमित्यादौ दर्शनात् । नन्वत्युपादेयताशून्यत्वं स्वरूपासिद्धमिति चेत् । न । ब्रह्मसूत्राणि नात्युपादेयानि प्रमाणत्वे सति इष्टसाधनतावबोधकत्वशून्यत्वात् । अत्रापि व्यतिरेकव्याप्तिः प्रदर्श्यते ।। **यथेति** ।। अत्रापि उक्तरीत्या शङ्कासमाधानं द्रष्टव्यमिति । तदयुक्तम् । एवमनुमानपरतया व्याख्याने स्वरूपासिद्धिपरिहारकानुमाने एकस्य पदस्य वैय्यर्थ्यापत्तेः । अतः प्रयोज्यप्रयोजकभावपरतया ग्रन्थो व्याख्येयः ।। तथाहि ।। यदुपादेयम् अत्युपादेयमित्यर्थः । ब्रह्मसूत्राणि न व्याख्येयानि । व्याख्येयत्वेऽत्युपादेयत्वस्य प्रयोजकत्वेन तस्यात्राभावात् । तदभावोऽपि कुत इति चेत् न । ब्रह्मसूत्राणि नात्युपादेयानि, अत्युपादेयत्वे प्रमाणत्वे सतीष्टसाधनतावबोधकत्वस्य प्रयोजकत्वेन तस्यात्राभावात् । नन्वत्रापि उपादेयत्वे प्रमाणत्वम्, इष्टसाधनतावबोधकत्वं वा प्रयोजकमस्तु, विशिष्टं व्यर्थम् । इति

(वाक्यार्थविवरणम्)

चेत् । सत्यम् । अत्र प्रयोज्यप्रयोजकभावस्याभिप्रेतत्वेन तत्र च अधर्मसाधनत्वनिषिद्धत्वयोरिव समव्याप्तिसद्भावेन पदसार्थक्यम् । तथा हि । काकस्याष्टौ दन्ता इति वाक्ये प्रमाणत्वे सत्यपि अत्युपादेयताऽभावात् व्यभिचारः स्यात् । तदर्थम् इष्टसाधनतावबोधकत्वादित्युक्तम् । तावन्मात्रं 'चैत्यवन्दनान्मोक्ष' इति चैत्यवन्दनादेरिष्टसाधनतावबोधके बौद्धशास्त्रे व्यभिचारि । अतः प्रमाणत्वे सतीति विशेषणमिति न कश्चिद्दोषः । आदिपदेन इष्टसाधनतावबोधकत्वं ग्राह्यम् ।

घटादौ ज्ञानाभावात् सर्वत्रेत्युक्तमयुक्तमित्यत आह ।। **सर्वत्रेतीति** ।। किमिदमिति इदं निर्गुणप्रकारकज्ञानं समीचीनम्, उत अदः सगुणप्रकारकज्ञानं समीचीनमित्यर्थः । अन्यदेव निर्गुणप्रकारकज्ञानमेवेत्यर्थः । ऋचः स ऋच उद्धृत्येत्यत्र ऋग्भाष्यटीकानुसारेण अर्थः प्रतिपत्तव्यः ।। यथोक्तम् ।। भवेदेतत् यदि मूलवेदादुपवेदानां ततोऽवान्तरवेदानां चोद्धारेण प्रबन्धनिर्माणं प्रामाणिकं स्यात् । तदेव कुतः, इत्यत आह ।। **ऋच इति** ।। अत्र ऋङ्निगदसामशब्देन महावेदादुद्धृता उपवेदा उच्यन्ते । ततो मूलवेदात् उपवेदास्ततश्च अवान्तरवेदा उद्धृता इत्येतदेवं पुराणवचनादवगम्यत इति । तथा च ऋच उपवेदात् कांश्चिदृच उद्धृत्य ऋग्वेदम् अवान्तरवेदं कृतवानित्यादि व्याख्येयम् ।। **अवान्तरेति** ।। अत्र विभज्यते इति विभाग इति कर्मणि व्युत्पत्त्या विभागशब्देन विभक्तं ग्राह्यम् । आदिशब्देन शाखाभेदग्रहणम् । तथाच अवान्तरवेदश्चासौ आदिश्चासौ विभागश्चेति कर्मधारयः । तथा चावान्तरवेदत्वेन शाखाभेदेन च विभक्तस्य कथनमित्यर्थः । अत्रायं निष्कर्षः । ऋगादिसंज्ञां विहाय यदा सर्वेऽपि वेदा एकत्वेन स्थितास्तदा मूलवेदा इत्येव नाम । मूलवेदा इति । "काले कृतयुगे तदा । नैवर्क्सामादिनामानि" इत्याथर्वणभाष्यात् । स च मूलवेदः त्रेतायां विभक्तः ऋङ्निगदादिरूपः । 'ऋङ्निगदसामानीति मूलवेदात् उद्धृता उपवेदा उच्यन्ते' इति ऋग्भाष्यटीका-वचनात् । स एव द्वापरे गौतमशापादुत्सन्नो व्यासेन विभक्त ऋग्वेदादिरवान्तरवेदः चतुर्विंशत्यादिना विभक्तः । शाखाभेद ऋषिभिः प्रणीतोऽवान्तरशाखाभेद इति । यथोक्तं भागवते । "व्यदधाद्यज्ञसन्तत्यै वेदमेकं चतुर्विधम् । ऋग्यजुस्सामाथर्वाख्या वेदाश्चत्वार उद्धृताः ।। तमेव ऋषयो वेदं स्वं स्वं व्यस्यन्ननेकधा" इति ।। अत्र केचित् विशिष्टस्य मूलवेदस्य निश्शेषेण चतुर्धा विभाग इत्याहुः । तदसत् । ऋग्वेदं विज्ञायेति यजुर्वेदमित्याद्युक्त्वा छन्दोगश्रुतौ वाकोवाक्यमिति मूलवेदस्य पृथग्ग्रहणात् । "वाकोवाक्यं मूलवेदः" इति तद्भाष्ये मूलवेदस्य निश्शेषेण चातुर्विध्येन पृथग्ग्रहणं न स्यादिति ।

नन्विदं व्यासस्य स्वभाव एव किं न स्यात् । आकुलीभावसमर्थनार्थमिति कुत इत्यत आह ।। **चक्र इति** ।। कथमनेनोक्तदोषपरिहार इत्यत आह ।। **अयं भाव इति** । अपौरुषेयतयेति वेदाभिप्रायेण ।

**(वाक्यार्थविवरणम्)**

आप्तिमूलतयेति पौरुषेयग्रन्थाभिप्रायेण । वक्त्रानुकूल्यं श्रोत्रानुकूल्यं प्रसङ्गानुकूल्यं च यत्र सा आप्तिः । तत्र विवक्षितार्थतत्त्वज्ञानं करणपाटवम् अविप्रलिप्सेति त्रयं वक्त्रानुकूल्यम् । एतदुपपादयति ।। **प्रमादेति** ।। तथाच विवक्षितार्थतत्त्वज्ञानकरणपाटवसिद्धिरिति भावः । व्यासः प्रमादवान् न, नारायणावतारत्वात् इत्यत्राप्रयोजकत्वं परिहरति ।। **भगवत्त्वादिति** ।। व्यासस्याज्ञानादिमत्त्वे "ज्ञानविज्ञानयोश्चैव षण्णां भग इतीरणा" इति प्रमाणसिद्धभगवत्त्वं न स्यादित्यर्थः ।

श्रोतृदोषः वक्तृप्रेमानास्पदत्वतत्त्वज्ञानानास्पदत्वरूप इत्यर्थः । तदभावे न श्रोतृदोष इत्यर्थः । श्रोतृदोषाभावः कुतः इत्यत आह ।। **ज्ञानेति** ।। उपलक्षणमेतत् । वक्तृप्रेमास्पदत्वं च ब्रह्मादीनां प्रसिद्धमिति ध्येयम् । अनेन श्रोत्रानुकूल्यं च लब्धमिति ध्येयम् ।

प्रसङ्गानुकूल्यमुपपादयति ।। **अपहासस्येति** ।। **प्रसङ्गदोष इति** । श्रोतृप्रयोजनोद्देशाभावरूपः । प्रसङ्गदोषाभावः कुत इत्यत आह ।। **अज्ञानेति** ।।

अत्र श्रुतिमूलकत्वं नाम श्रुत्यर्थमुपलभ्य रचितत्वं न सम्भवति, असार्वज्ञप्रसङ्गेन व्यासस्य तदयोगात् । अतो वैवक्षिकमेवेत्याशयेन श्रुतिनिर्णायकत्वेनेत्युक्तम् ।।

युक्तिमूलकत्वं तु ब्रह्मशब्दोक्तवेदार्थनिर्णायकन्यायग्रन्थनात्मकसूत्रस्यैव ब्रह्मसूत्रत्वात् ब्रह्मसूत्रपदेन सिद्धमित्यन्यत्रोक्तत्वादनुक्तमिति ध्येयम् । एवं प्रामाण्यमुपपाद्य इष्टसाधनतावबोधकत्वमुपपादयति ।। **इष्टानिष्टेति** ।। वेदनं ज्ञापनम् । "तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तत" इत्युक्तेरिति भावः । निर्णेयनिर्णायकयोरेकफलकत्वादिति ध्येयम् ।। अतः प्रमाणत्वे सतीष्टसाधनतावबोधकत्वादित्यर्थः ।

**गौतमशापस्येति** ।। दुर्भिक्षपीडिताः सर्वे ऋषयः सुभिक्षं गौतमाश्रमं गताः । ततः स्वाश्रमेषु सुभिक्षे जाते सति गन्तुमुद्युक्तान् ऋषीन् वियोगासहो गौतमो निवारयाञ्चक्रे । ततो निवारिता ऋषयोऽयमस्माकमाज्ञां न ददात्यतो एतदुपरि कञ्चनापवादं स्थापयित्वा गच्छाम इति विचार्य दूर्वामयीं काञ्चन गां योगबलान्निर्माय नदीयक्षेत्रमध्ये विसृष्टवन्तः । तां दृष्ट्वा गौतमस्तृणेन तां तताडाथ सा ममार । अथ सर्वे ऋषयः "त्वं गोहत्याकर्ता, अतस्त्वत्समीपे वयं न वत्स्याम" इति तदुपरि अपराधं स्थापयित्वा स्वाश्रमं प्रति गताः । तदनन्तरं महात्मा गौतमो दिव्यदृष्ट्या तदीयं कापट्यं विचार्य "सर्वे यूयं ज्ञानमूढाः भवत" इति शशाप इति गौतमीमाहात्म्ये कथा । तेन गौतमेन हता या गौस्तन्निर्माणे ये ऋषयस्तन्मात्रविषयत्वाद्गौतमशापस्य इत्यर्थः । ननु ब्रह्मादीनां गौतमशापेनाज्ञान-

(वाक्यार्थविवरणम्)

प्राप्त्यभावेऽपि द्वापरयुगाख्यकालबलतोऽस्तु इत्यत आह ।। **कालेति** ।। अन्यत्र गीताभाष्ये । **बहुवचनप्रयोगेऽपीति** । "उत्सन्नान् भगवान् वेदानुज्जहार हरिः स्वयमि"ति बहुवचनप्रयोगेण बहुत्वस्य भेदव्याप्तत्वेन वाक्यभेदप्राप्त्याऽर्थभेदप्राप्तिः । ततश्च नैकवाक्यत्वम् । अर्थैक्यनिमित्तत्वादेकवाक्यत्वस्येति भावः । **एकवचनं** तथाच अर्थैक्यं लब्धम् । "अर्थैकत्वादेकवाक्यमि"त्युक्तेः । **यावदिति** । 'हा वु हा वु' इत्याद्यक्षराणि विना गानपूर्तिलक्षणविवक्षितार्थासिद्धिरस्तीति स्तोभाक्षरेष्वतिव्याप्तिवारणाय ततोऽधिकाक्षरानुपादानमिति विवक्षणीयम् । एवं प्रकृते आनन्तर्यप्रतिपादनमथेत्यल्पाक्षरेणैव कार्यम् । नानन्तरमित्यधिकाक्षरेणेति भावः । **व्यर्थेति** । अर्थाप्रतिपादकत्वेऽपि साम्नि स्तोभाक्षराणां हावेत्यादीना-मृगक्षराव्याप्तगानपरिपूरणायेव प्रयोजनान्तरायाक्षराप्रयोग इति भावः ।। **पुराणादाविति** ।। ननु पौराणिक-निर्विशेषितशब्दबलान्मुख्यत्वसाधनमयुक्तम् । अत्रैव "सूत्राणि निखिलान्यपि । सूत्रेषु येषु सर्वेऽपी"त्युक्तत्वेन इतरसूत्रेषु व्यभिचारात् इति चेत् । सत्यम् । सूत्राणीत्यत्र निरुपपदसूत्रशब्दवाच्य-सूत्रसाहित्येन इतरसूत्रेषु छत्रिन्यायेनोपचारात् हेतोरेवाभावान्न व्यभिचार इति भावः ।। सूत्रेष्वित्यत्रापि तथैव ज्ञेयम् ।। दृष्टान्ते व्यासादौ दर्शनादिति चेत्तत्राह ।। **दृष्टान्त इति** ।। मुख्यामुख्यत्वयोरिति शेषः । **कारणान्तरं** ज्ञानादिगुणान्तरसत्त्वादिरूपम् । दृढीकरणं ब्रह्मण एव । रुद्रादेः किञ्चिदप्राप्तलाभः इत्याहुः । ब्रह्मणोऽपि किञ्चिदप्राप्तलाभोऽस्त्येव ।। तथाहि ।। स्वयोग्यसर्ववेदभारतपुराणोक्तगुणा आपरोक्ष्येण ब्रह्मणा ज्ञाता एव सन्ति । तं प्रति यदा लक्ष्मीर्व्याख्याति वेदाद्यनुक्ताः मदुपास्याः गुणाः एते इति, तदा तद्गुणविषयकपरोक्षज्ञानमुत्पद्यत एव । तदप्राप्तलाभ इति विवक्षितम् ।। **क्रमेण** वर्धमानमिति वाक्यानुकूल्यात् ईशावास्यभाष्याद्येत्यङ्गीकारे दोषाभावादित्याचार्याः प्राहुः ।। **ब्रह्मणस्त्विति** । "देवान् ऋषीन् पितॄन् राज्ञः प्रतिभाऽभ्यधिका क्रमात् । यावद्ब्रह्मा, ब्रह्मणस्तु प्रायो नाप्रतिभासितम् । विष्णोः प्रीत्यर्थमेवास्य श्रोतव्यं नान्यथा क्वचित् ।" इति गीतातात्पर्यवाक्यम् ।

## वाक्यार्थमञ्जरी

सूत्रार्थ उच्यत इति प्रतिज्ञाय द्वापरेत्यादिना सूत्रागतिप्रकारनिरूपणमसङ्गतमित्यस्तस्तदुपयोगं वक्तुमाक्षिपति ।। **नन्विति** ।। व्याख्येयत्वप्रयोजकशून्यत्वान्न सूत्राणां व्याख्येयत्वमिति वक्तुं व्याख्येयत्वप्रयोजकं तावद्दर्शयति ।। **यदुपादेयमिति** ।। अनुपादेयस्यापि पूर्वपक्षग्रन्थस्य व्याख्येयत्वदर्शना-दाह । **अनन्यार्थतयेति** । प्राधान्येनेत्यर्थः । पूर्वपक्षग्रन्थस्य महावाक्यार्थबोधोपयोगितया व्याख्येयत्वेऽपि न प्राधान्येन व्याख्येयत्वम् । न चेदं शास्त्रमवान्तरं वाक्यं येनानुपादेयमपि महावाक्यार्थज्ञानोपयोगितया

(वाक्यार्थमञ्जरी)

व्याख्येयं स्यादिति भावः । तर्ह्युपादेयत्वमप्यस्त्वित्यतस्तत्प्रयोजकशून्यत्वान्नास्तीति वक्तुमुपादेयत्वप्रयोजकमाह । **यच्चेति** । इष्टसाधनतावबोधकस्यापि विप्रलम्भकवाक्यस्यानुपादेयत्वात्सत्यन्तम् । प्रमाणभूतस्यापि वाणिज्योपदेशस्य विरक्तेनानुपादेयत्वात्तदुत्तरभागः । अप्रमाणत्वेष्टसाधनानवबोधकत्वाभ्यां निश्चितस्यापि दुःशास्त्रस्य ख्यात्याद्यर्थमुपादेयत्वदर्शनात् प्राय इत्युक्तम् । अत्यन्तमित्यर्थः । अत एव ब्रह्मसूत्राणामत्युपादेयत्वादिति वक्ष्यति । यदर्थमेतन्निरूपणं तदिदानीमाह । **अत इति** । कथं न कथमपि । शब्दप्रामाण्यप्रयोजकापौरुषेयत्वाप्तिमूलत्वयोरभावादेतत्कामेनेदं कार्यमित्यप्रतिपादनाच्चेति भावः । देशे ज्ञानाप्रसक्तेराह ।। **सार्वत्रिकपुरुषेति** ।। **सम्यग्ज्ञान इति** ।। असम्यग्ज्ञानस्य तन्निर्णयायेत्युक्तनिर्णयानुपपत्तेरिति भावः ।। **किमिदमदो वेति** ।। विष्णुर्गुणपूर्ण इति ज्ञाने इदं प्रमाणमप्रमाणं वा मोक्षसाधनं न वेति केषाञ्चित्सन्देहविषयीभूते केषाञ्चिदप्रमाणमेव मोक्षसाधनं नेति विपरीतज्ञानविषयीकृते चेत्यर्थः । आकुलीभावे किन्निमित्तमित्यत आह ।। **आकुलीभावेति** ।। तस्याकुलीभावप्रयोजकत्वं द्वापरेऽखिलमिति वक्ष्यमाणप्रमाणे व्यक्तमिति भावः । भाष्ये तन्निर्णयायेति तच्छब्देन ज्ञानपरामर्शः । तस्य प्रमाणत्वमोक्षहेतुत्वादिना निर्णयस्तन्निर्णयः । अथेत्यस्यावतारानन्तरमेव न तु परोपदेशमपेक्ष्य येन स्वतः सार्वज्ञं न स्यादित्यर्थः । यद्वा अथशब्दो अवतारानन्तर्यार्थः सन् व्यासावतारस्य मुख्यतो वेदोद्धारकत्वादिप्रयोजनमाह । भाष्ये उत्सन्नमित्यस्य नष्टमिति । व्यभजदित्युक्त्येदानीमेव व्यासेन वेदविभागः कृतः पूर्वं त्वविभक्त एवेति । चतुर्विंशतिधेत्यादेरेकैकं चतुर्विंशत्यादिभेदेन चेति प्रतीतिनिरासायाह ।। **वेदमुत्सन्नमित्यादेरिति** ।। अस्यार्थ इति वक्ष्यमाणेनान्वयः ।। **प्रागेवेति** ।। व्यासावतारात्पूर्वमेवेत्यर्थः । वेदं मूलवेदादुद्धृतमुपवेदम् । **एकैकस्मादेकैको भाग इति** ।। ऋक्संज्ञकादुपवेदादृग्वेदाख्यो अवान्तरवेद इत्यादिप्रकारेणेत्यर्थः ।। **एकैकमवान्तरमिति** ।। ऋगादिसंज्ञकादुपवेदादुद्धृत्य विभक्तम् ऋग्वेदाद्यवान्तरवेदमित्यर्थः । **चतुर्विंशत्यादीति** । ऋगादौ यथाक्रममेतद्धयेयम् । मूलवेदादुद्धृतादृगादिरूपादुपवेदादवान्तरवेदः कृत इति भाष्ये अस्पष्टमपि किमर्थं कल्पितमित्यतस्तत्र ऋग्भाष्यसंमतिमाह ।। **तदुक्तमिति** ।। अयमर्थः । आदावेक एव वेद इति स नारायणेन ऋङ्निगदसामाथर्वभेदेन चतुर्धा विभक्तः । त एवोपवेदा इत्युच्यन्ते । अनन्तरं व्यासेन चतुर्णामुपवेदानां मध्ये एकैकस्मादेकैको वेदः कृतस्तेषां च ऋग्वेद इत्यादि नाम । त एवावान्तरवेदा इत्युच्यन्ते । तेषां च मध्ये एकैकस्माच्चतुर्विंशतिधेत्युक्तप्रकारेण शाखाः कृता इति । इदं चात्र ऋङ्निगदसामशब्दैर्महावेदादुद्धृता उपवेदा इत्युच्यन्त इत्यादि ऋग्भाष्यटीकास्थव्यवहारतोऽवगम्यते । सूत्रागतिक्रमं वक्तुं प्रवृत्तेन वेदमुत्सन्नं व्यभजयस्तदर्थनिर्णयाय ब्रह्मसूत्राणि चकारेत्येव वक्तव्ये वेदविभागकथनं किमर्थमित्यत आह ।। **अवान्तरेति** ।। महावेदादुद्धृतोप-

(वाक्यार्थमञ्जरी)

वेदानामवान्तरवेदत्वेन विभागकथनम् । आदिपदेन तेषां चतुर्विंशत्यादिविभागकथनं ग्राह्यम् । न केवलं द्वापरग्रहणमिति चशब्दः । अन्यथा विभागो व्यर्थः स्यादिति भावः । अत्र प्रथमभागवतसंमतिमाह ।। **चक्र इति** ।। अल्पमेधसः अल्पज्ञानिनः । यदुपादेयमित्यादिना कृतचोद्यस्य कथमनेन परिहार इत्यत आह । अयं भाव इत्यादिना व्याख्येयतेत्यन्तेन । आप्तिमूलत्वेन सूत्रप्रामाण्योपपादनायोपोद्घातसङ्गतिमाह । **वाक्यप्रामाण्यमिति** ।। श्रुत्यादिमूलत्वेन प्रामाण्यस्याग्रे वक्ष्यमाणत्वात्तावच्छब्दः । आप्तिश्च वक्तृनिर्दोषतैवेति । यद्यपि वक्तृश्रोतृप्रसक्तीनां यदाप्तिरनुकूलतेत्यनुव्याख्याने श्रोतृप्रसङ्गनिर्दोषताप्तिरित्युक्तं तथापि श्रोतृप्रसङ्गयोर्दुष्टत्वे वक्तरि विप्रलम्भापहासरूपदोषौ तयोरदुष्टत्वे तस्यापि तदुभयराहित्यमिति श्रोतृप्रसङ्गदोषयोस्तदुभयव्यापकत्वेन व्यापकीभूतश्रोतृप्रसङ्गदोषाभावे व्याप्यभूतविप्रलम्भापहासाख्यवक्तृदोषाभाव इति वक्तृनिर्दोषतैवाप्तिरित्युक्तम् । अत एवाग्रे श्रोतृप्रसङ्गदोषाभावाभ्यां विप्रलम्भापहासाख्यवक्तृदोषाभावमुपपादयिष्यति । यदर्थमुपोद्घातनिरूपणं तदिदानीमाह ।। **आप्तिमूलत्वादिति** ।। वक्तृनिर्दोषत्वरूपाप्तिमूलत्वमुपपादयति ।। प्रमादेत्यादिना दोषाभावादित्यन्तेन । नारायणावतारो व्यास इति हेतुगर्भविशेषणमेतत् । अनेन नारायणो व्यासत्वेनावततारेत्येतदुक्तार्थम् ।

नारायणावतारत्वस्य प्रमादाद्यसम्भवं प्रत्यप्रयोजकत्वं परिहरति । **भगवत्त्वादेवेति** ।। अन्यथा तन्न स्यादिति भावः । अनेन भगवानित्येतदुक्तभावम् । कोऽयं श्रोतृदोषः कथं च तदभाव इत्यत आह । **ज्ञानायोग्यताया इति** ।। **ब्रह्मादिश्रोतृष्विति** । अनेन ब्रह्मरुद्रेन्द्रादिभिरित्येतदुक्ताभिप्रायम् । प्रसङ्गदोषः श्रोतृप्रयोजनोद्देशाभावः । निर्हरणस्य निवारणस्य । अनेन तन्निर्णयायार्थित इति पदद्वयमुक्ततात्पर्यम् । मूलत्वादित्यनन्तरं सुतरां प्रामाण्यसिद्धिरिति योज्यम् । तन्मूलत्वोपपादनाय श्रुतिनिर्णायकत्वेनेत्युक्तनिर्णायकत्वेनैव मीमांसारूपत्वेन युक्तिमूलत्वस्यापि प्राप्तत्वादिति भावः । अनेन तन्निर्णयायेत्येतदुक्ताशयम् । अत्र श्रुतियुक्तिमूलत्वं श्रुतियुक्तिभ्यामर्थमुपलभ्य रचितत्वरूपं सर्वज्ञव्यासप्रणीते । न सम्भवति किन्तु समानार्थकत्वसाम्येन तत्संवादित्वमेव । न च तर्हि श्रुतियुक्तिसंवादित्वादित्येव किन्नोक्तमिति वाच्यम् । यादृच्छिकसंवादिताप्रतीतिनिरासायैवमुक्तत्वात् । इष्टसाधनतावबोधकत्वमाह । **इष्टानिष्टेति** । तन्निर्णायकत्वेन तत्समानार्थकत्वादिति भावः । अनेनाथेष्टानिष्टेत्याद्युक्तप्रयोजनम् । निष्पन्नज्ञानस्य त्रेतादावपि स्थितत्वेन कृतग्रहणं किमर्थमत आह ।। **यथोत्पन्नमिति** ।। भाष्ये किंभिन्नागचतुष्टये एको भागः । अन्वयमाह ।। **अखिलमिति** । कालतः द्वापराख्यकालसामर्थ्येन द्वावेव धर्मज्ञानपादौ परावरविशिष्टौ यस्मिन् युगे स द्वापर इति तत्त्वप्रदीपानुसारेण तन्निर्वचनादिति भावः । ज्ञानस्याज्ञानताप्राप्तिः कथमित्यत आह ।। **अज्ञानमितीति** ।। नञो विरुद्धार्थत्वादिदमप्रमाणमेवेति

(वाक्यार्थमञ्जरी)

विपरीतप्रतीतिविषयतामित्यर्थः । सन्देहः प्रमाणमप्रमाणं वेत्यादिरूपः । अनुक्रोशः कृपा । **नाज्ञानादिमिश्रत्वमिति** । विपरीतज्ञानसन्देहागोचरत्वमित्यर्थः ।। **स्वहतेति** ।। स्वेन गौतमेन हता या गौः तन्निर्मातारो ये ऋषयस्तन्मात्रविषयत्वादित्यर्थः । ब्रह्मादयश्च न तन्निर्मातार इति भावः । दुर्भिक्षोपद्रुता ऋषयो गौतमतपःसमृद्धगौतमाश्रममाप्य चिरकालं तेन संमानिताः सुखमुषिताः कालेन सुभिक्षं स्वदेशमियासवस्तदनुज्ञां याचमाना अपि स्नेहवशेनाप्राप्तानुज्ञाः शिवशिरस्थभागीरथीं सपत्नीं निष्कासयंत्या पार्वत्या चोदितेन गणेशेनोपदिष्टोपाया ऋषयः तपोबलेन काञ्चिद्गां निर्माय तदाश्रमस्थव्रीहिभक्षणार्थं तत्यजुः । गौतमस्तां तृणेन मन्दं ताडयामास । अथ सा ममार । ततः त्वया गोहत्या कृताऽतस्त्वं न भोज्यान्न इति गौतममभिधाय जग्मुः । ततो गौतमो बहुकालचीर्णतपास्तुष्टहरशिरसोऽवतारितजाह्नवीजलेन गां परिषिच्योज्जीवयामास । तज्जलं गोदावरीति लोके प्रसिद्धम् । ततो गौतमः किमेतदिति विचिन्त्य विप्रकृतान्यायं निश्चित्य तान् ज्ञानहीना भवथेति शशापेति शापप्रकारस्तत्त्वप्रदीपे व्यक्तः । कालाभिभवः द्वापराख्यकालसामर्थ्येन ज्ञानाभिभवः । ब्रह्मादिदेवव्यतिरिक्तसकललोकानां गौतमहतगोनिर्मातृत्वाभावेऽपि तज्ज्ञानस्य यथाऽन्यथात्वम् एवं ब्रह्मादिज्ञानस्यापि किन्न स्यादित्यत आह ।। **लोकस्येति** ।। तत् ब्रह्मादिबुद्धेः सज्जनानुक्रोशयुक्तत्वम् । अन्यत्र गीताभाष्ये । ज्ञानं ज्ञेयं, तथाच नष्टे अदर्शनं गते धर्मज्ञाने यस्य तस्मिँल्लोके कृपालुभिरित्यर्थः । भाष्ये । महायोगी महाशक्तिः । उज्जहार उद्धृतवान् । वेदानिति बहुवचनेन प्रकृतवेदानां तस्येत्येकवचनेन परामर्शे कारणमाह ।। **बहुवचनप्रयोगेऽपीति** ।।

**नार्थभेद इति** ।। विष्णोः सर्वोत्तमत्वरूपमहावाक्यार्थस्यैकत्वादिति भावः ।। **आहेति** ।। सूत्रेषु येषु सर्वेऽपीत्यादिना परिहारं वक्तुमुपोद्घातमाहेत्यर्थः । प्रभासङ्गतिं परिहरति । **यदाऽस्यमिति** । यस्य सूत्रत्वस्य मुख्यत्वमित्यर्थः । सूत्राणां प्रायो बह्वक्षरत्वादत आह । **यावदक्षरतामिति** ।। अक्षरसमुदायमित्यर्थः । तत् तावदक्षरोपेतत्वम् । प्रकृतार्थप्रतिपादकाल्पाक्षरबह्वक्षरयुक्तपर्यायपदानां मध्ये अल्पाक्षरपदोपेतत्वम् अल्पाक्षरत्वमित्यर्थः । इदं च श्रुत्यनुगमादिप्रयोजनविशेषाभावे तद्भावे चाधिकाक्षरपदोपेतपदोपादानेऽपि न दोषः । तेन एवं तल्लिङ्गादिति वक्तव्यं नाकाशस्तल्लिङ्गादिति निरस्तम् । तत्राकाश इति होवाचेति श्रुत्यनुगमायैवाकाशपदग्रहणात् । एवमन्यत्रापि बोध्यम् । **एवञ्चेति** ।। एवमपि भवति तथापि भवतीत्यवचनमित्यर्थः । इत्थमेव नान्यथेति निर्णायकत्वमिति यावत् । **विशिष्टार्थेतेति** ।। अनन्यथाभावितेत्यर्थः ।। **बहुशाखेति** ।। सव्याकरणसूत्रादेरपि बहुशाखागतपदस्वरादिनिर्णायकत्वान्न तत्राव्याप्तिः ।। **व्यर्थेति** ।। साम्नि ऋगक्षराध्यासगानभागपरिपूरणाय हावुहावित्यादिग्रहणवत्

(वाक्यार्थमञ्जरी)

प्रकृतार्थाप्रतिपादकत्वेऽपि प्रयोजनान्तरायाक्षराप्रयोग इति भावः । अल्पाक्षरत्वं प्रकृतार्थप्रतिपादकाधिकाक्षराप्रयोगः । अस्तोभत्वं तदप्रतिपादकाक्षराप्रयोग इति महान् भेदः । ननु किन्तत्सूत्रत्वमिति लक्षणस्य पृष्टत्वादनेन सूत्रलक्षणमुच्यत इत्यङ्गीकार्यम् । तत्र किमेतेषां प्रत्येकलक्षणत्वम् । उत मिलितानाम् । नाद्यः । अल्पाक्षरत्वविश्वतोमुखत्वातिरिक्तानां चतुर्णामपि पुराणादौ सत्वेनातिव्याप्तेः । नान्त्यः । अल्पाक्षरत्वे सति विश्वतोमुखत्वमात्रस्यातिव्याप्त्यभावेन शेषवैय्यर्थ्यादिति चेत् । सत्यम् । अल्पाक्षरत्वे सति विश्वतोमुखत्वमेव लक्षणम् । तत्रापि विश्वतो मुखत्वस्य पञ्चरात्रादावतिव्याप्तत्वात्सत्यन्तम् । अल्पाक्षरत्वमात्रं तथाविधवाक्यविशेषे गतमतो विशेष्यभागः । इतरत्स्वरूपकथनमिति । अतःशब्दस्य मुख्यसूत्रत्वपरामर्शकत्वात्तेन हेतुना निर्विशेषितत्वसाधनं प्रतीयते । तच्चानुपपन्नम् । मुख्यसूत्रत्वस्य सन्दिग्धत्वात् । निर्विशेषितत्वस्यासिसाधयिषितत्वाच्च । अपिशब्दस्य ब्रह्मसूत्रस्यापीत्यन्वये अन्येषामपि सूत्राणां निर्विशेषितत्वप्राप्तिः चशब्दश्च व्यर्थ इत्यत आह ।। **यत इति** ।। यथा पर्वतस्य वह्निमत्वं कुत इति प्रश्ने व्यापकीभूतवह्निमत्व एव प्रमाणसिद्धधूमवत्वं सम्भवतीत्यभिप्रायेणाग्निमत्वादेव धूमवत्वमित्युक्ते धूमवत्वस्य वह्निमत्वे हेतुत्वं लभ्यते । तथा प्रकृतेऽपि मुख्यसूत्रत्वादेव निर्विशेषितसूत्रत्वं नान्यथेत्युक्ते निर्विशेषितसूत्रत्वस्य मुख्यसूत्रत्वे हेतुत्वलाभ इति भावः । अत एव हेतोरन्यथासिद्धिपरिहारायावधारणार्थकचशब्दोऽत एवेति योजितः । अपिशब्दस्तु निर्विशेषितसूत्रत्वहेतोरसिद्धिपरिहाराय प्रमाणसिद्धिद्योतकः । अत एवोक्तं पुराणादाविति । निर्विशेषितशब्दाद्धि ब्रह्मेति हरिरुच्यते । यथा सूत्रेति शब्देन ब्रह्मसूत्रं निगद्यत इत्यादावित्यर्थः । निर्विशेषितसूत्रत्वं निरुपपदसूत्रपदवाच्यत्वम् । विशेषव्याप्तिग्रहणे यथा व्यासत्वमिति दृष्टान्तासंमतेः सामान्यव्याप्तिं दर्शयन्नाह ।। **यद्यत्रेति** ।। यत्र सजातीये । व्यतिरेकव्याप्त्युपयोगमनुपदमेव वक्ष्यति । **निर्विशेषितव्यासत्वमिति** । व्यासत्वमित्येवोक्तत्वादिति भावः । **तन्मुख्यमिति** ।। अनेनैकस्येत्येतन्मुख्यस्येति व्याख्यातम् । द्रौणिरश्वत्थामा ।। **अमुख्या इति** ।। तत्रैकस्येत्युक्तत्वात् अत्रामुख्यत्वमर्थाल्लब्धमिति भावः । **विशेषणाद्व्यासा इति** । द्रौणिव्यासेत्यादिसोपपदव्यासशब्दवाच्या इत्यर्थः । हिशब्दो हेत्वर्थः । अपराणीत्यस्यान्यत्वममुख्यत्वं चार्थ इत्यभिप्रेत्याह ।। **अन्यसूत्राणामिति** ।। व्याप्तिहीनमिदमिति न मन्तव्यमित्याह ।। **एतदुपपादनायैवेति** ।। निर्विशेषितसूत्रत्वहेतोरप्रयोजकत्वव्यभिचारशङ्कयोर्मुख्यस्य निर्विशेषणेत्यनुपदमेव निराकरिष्यमाणत्वेन प्रयोजनान्तराभावादेतदर्थमेव प्राग्व्यतिरेकव्याप्तिदर्शनपूर्वकं दृष्टान्ताभिधानमिति भावः । अनुमानद्वये अप्रयोजकत्वं शङ्कते ।। **निर्विशेषणेति** ।। व्यासद्रौणिव्यासादिदृष्टान्तबलादर्थाक्रियत इत्यत आह ।। **दृष्टान्त इति** ।। यथाश्रुते चोद्यानिरासादाह ।। **मुख्यस्यैवेति** ।। अत्र मुख्यस्य निर्विशेषण

(वाक्यार्थमञ्जरी)

शब्दवाच्यत्वे इति वेदविदः प्राहुरिति वेदस्य वृद्धव्यवहारस्य च प्रमाणीकृतत्वेन विपक्षे प्रामाणिकपरित्यागाख्यानिष्टप्रसङ्गसूचनेनोक्तशङ्कापरिहार इति ध्येयम् । नन्वत्र दृष्टान्तदार्ष्टान्तिकयोः कथं निर्विशेषणशब्दवाच्यत्वम् । ब्रह्मसूत्रमिति वेदव्यास इति च तयोः सोपपदशब्दवाच्यत्वादिति चेत् । उच्यते । अत्र निर्विशेषणशब्दवाच्यत्वमित्यनेन जनकनामपूर्वकनिर्देशाभावोऽभिमतः । स च तयोरस्ति । उक्तव्याख्यानानुसारेण ब्रह्मशब्दस्य विचार्यपरत्वात् व्यासीयसूत्राणीति कुत्राप्यभावात् । पाराशर्यव्यास इत्यभावाच्च । अन्यत्र तु जैमिनीयसूत्रं द्रौणिव्यास इत्यादि कर्तृनामपूर्वकनिर्देश इति । प्राक्कथितस्योपयोगं वदन्नेव तात्पर्यमाह । **यत्सूत्रधर्मेति** ।। अनेन सर्व इत्येतत्सर्वशाखाविषय इति व्याख्यातम् । **कथमेषामिति** ।। द्वित्रिशाखाभिन्नशाखानिर्णायकत्वस्यैव वक्तव्यत्वादिति भावः । अन्यथा अन्येषां द्वित्रिशाखानिर्णायकत्वाभावे सर्वस्य शब्दजातस्येत्यन्वयप्रदर्शनपूर्वकं प्रतीकग्रहणम् । अत्र शब्दजातस्येति षष्ठी कर्तरीत्याह ।। **शब्दसमूहैः क्रियमाण इति** ।। यद्वा सम्बन्धमात्रे षष्ठी सम्बन्धश्च जन्यजनकभाव इति भावः । तन्निर्णयस्य सूत्रान्तरैः क्रियमाणनिर्णयस्य ।। व्याख्यानरूपत्वादिति ।। समाकर्षादिति सूत्रेण ब्रह्मवाचकज्योतिरादिशब्दानाम् अवान्तरमुख्यवृत्त्या कर्मादिष्वाकर्षणाज्ज्योतिष्टोमादिकर्मणां तत्फलानां च प्रतिपादकता ज्ञेयेति सूचितकर्मकाण्डविस्तारस्य जैमिनिना सविस्तरं प्रतिपादितत्वात्कर्ममीमांसासूत्राणां ब्रह्मसूत्रव्याख्यानरूपत्वम् । इयदामननादिति सूत्रेण नामादिप्राणपर्यन्तं कृतदेवविचारस्य सविस्तरं देवमीमांसासूत्रेषु प्रतिपादनाद्देवमीमांसासूत्राणामपि ब्रह्मसूत्रव्याख्यानरूपत्वम् । ज्योतिरुपक्रमात्तु तथा ह्यधीयत एक इति सूत्रेण समन्वितस्वरवर्णपदादिनिर्णायकत्वात् व्याकरणसूत्राणां ब्रह्मसूत्रव्याख्यानरूपत्वम् । व्याख्यानव्याख्येययोः समानविषयकत्वं प्रसिद्धमिति भावः । तर्हि सूत्रान्तरवैयर्थ्यमित्यत आह ।। **श्रुतिमूलकेति** ।। **उपसंहार इति** । तेन "चकार ब्रह्मसूत्राणी"त्यनेन न पौनरुक्त्यमिति भावः । येषु सूत्रेषु यत्प्रमाण इति यच्छब्दयोरन्वयाप्रतीतेराह । **सूत्रेष्वित्यादेरीति** । भाष्ये पक्षिषु जरितर्यादिषु । उक्तरीत्या ब्रह्मादिज्ञानतिरोधानाभावात्कथं ज्ञानं संस्थाप्येति तिरोहितप्राप्तिरुच्यत इत्यत आह । **ब्रह्मरुद्रादीति** । अत्र दृढीकरणं ब्रह्मण एव, रुद्रादेः किञ्चिदप्राप्तलाभ इत्याहुः । वस्तुतस्तु ब्रह्मणोऽप्यप्राप्तलाभो अस्त्येव । ब्रह्मादीनामप्यप्राप्तज्ञानमुत्पद्यत इति ईशावास्यभाष्यटीकोक्तेः । अप्राप्तलाभ इत्येतत् ब्रह्मातिरिक्तविषयमिति न मन्तव्यम् । अत्र गीतातात्पर्यमुदाहरति ।। **जानन्त इति** ।। पृच्छन्ति माधवो लोके तेन पृच्छसि पार्थिवेति वाक्यशेषः । नन्वेवं ज्ञानं पुनः प्रापुर्देवाश्च ऋषयस्तथेति महाभारततात्पर्यनिर्णये पुनःशब्दबलाद्देवानां तिरोहितप्राप्तेराचार्यैरेवोक्तत्वावगमात्तदनुसारेण ज्ञानं संस्थाप्येत्यत्रापि तिरोहितज्ञानमुत्पाद्येत्यर्थः किं न स्यादित्यत आह ।। **एवं ज्ञानमिति** ।। अयं

(वाक्यार्थमञ्जरी)

**पूर्वस्थितस्येत्यादिनोक्तः ।। यत आहुरिति ।।** उपास्यैव तु पश्यन्ति नान्यथा तु कथञ्चन । ऋषीन् राज्ञस्तथाऽरभ्य प्रतिभाऽभ्यधिका क्रमात् । यावद् ब्रह्मा ब्रह्मणस्तु प्रायो नाप्रतिभासितमिति गीतातात्पर्ये आचार्याः यत आहुरतो विरिञ्चेतरेषामेव तिरोहितलाभ इत्यर्थः । नन्वत्रैव प्राय इत्युक्तत्वात् कदाचिद् ब्रह्मणोऽपि ज्ञानतिरोभावो ज्ञायते । 'एवं पुरा धारणयाऽत्मयोनिर्नष्टां स्मृतिं प्रत्यवरुह्य तुष्यन्नि'ति द्वितीये । 'अथाश्रितः कञ्जमुलोकतन्त्रं नात्मानमद्धाविददादिदेव' इत्यादि तृतीये च स्पष्टं तिरोहितज्ञानलाभः प्रतीयते । अतः कथं विरिञ्चेतरेषामित्युक्तिरिति चेत् । उच्यते । न ब्रह्मणः कदाचिदपि ज्ञानतिरोधानाख्याज्ञानम् । 'तस्य मध्यंदिने सूर्यक्षोभवत् क्षोभमात्रकम् । नैवाज्ञानं यथा सूर्ये तमो नास्ति कथञ्चने'ति एकादशतात्पर्योक्तेः । किन्तु विष्णुप्रीत्यर्थं स्वात्मनोऽज्ञानं कदाचित्प्रदर्शयति । ''अज्ञानञ्च चतुर्वारं द्विवारं भयमेव च । शोकोऽपि तावन्नान्यत्र कदाचिद् ब्रह्मणो भवेत् । तत्रापि भगवत्प्रीत्या उन्नत्यैवास्य तद्भवेदि''ति षष्ठतात्पर्योक्तेः । पुनः श्रवणादिकं च विष्णुप्रीत्यर्थमेव । विष्णुप्रीत्यर्थमेवास्य श्रोतव्यं प्रायशो भवेदित्युदाहृतगीतातात्पर्यवाक्यशेषात् कादाचित्कप्रदर्शनाभिप्रायं प्राय इति । ननु विरिञ्चेतरेषामपि कथं तिरोहितलाभः । उक्तरीत्या तेषां ज्ञानतिरोधानाभावादिति चेत्सत्यम् । गौतमशापकालसामर्थ्याभ्यां तज्ज्ञानाभिभवाभावेऽपि ब्रह्मवरोपोद्बलितकल्यावेशेन तत्तिरोधानं पुनस्तत्प्राप्तिश्चास्त्येव । 'कलिस्त्वयं ब्रह्मवरादिदानीं विबाधतेऽस्मान् सकालाः प्रजाश्च । अज्ञानमिथ्यामतिरूपतोऽसौ प्रविश्य सज्ज्ञानविरुद्धरूपः ।'' अथोगिरीशादिमनोनुशायी कलिर्ममाराशुसुवाङ्मयैः शरैः । निकृत्तशीर्षो भगवन्मुखेरितैः सुराश्च सज्ज्ञानसुधारसं पपुरिति'' भारततात्पर्योक्तेः । प्राक् शापकालाभ्यामेवाभिभवाभाव उक्तस्तदनुसारेणैव पूर्वव्याख्यानमिति न कोऽपि दोष इति ।।

## विवृतिः

**अनन्यार्थतयेति ।।** प्रातीतिकार्थभाष्यकारान्तरोक्तविरुद्धार्थपरं न भवतीत्यनेन प्रकारेणेत्यर्थः ।। **प्रायस्तदेवोपादेयमिति ।।** अप्रमाणत्वादिना निश्चितस्यापि ख्यात्याद्यर्थं व्याख्यातुमुपादानदर्शनात्प्राय इत्युक्तम् ।। व्यतिरेकसूचनार्थमेवशब्दः ।। **तन्निर्णयायेति** भाष्ये तच्छब्देन ज्ञानपरामर्शः तस्य प्रमाणत्वमोक्षहेतुत्वादिना निर्णयस्तन्निर्णयः । अत एव इदमदो वेति ज्ञानविषयकसंशयविपर्ययौ दर्शितौ ।। द्वापरे अवतनारत्यन्वयस्वरूपकथनमेवस्यात । अत आवश्यकं यथा स्यात्तथाऽऽह ।। **आकुलीभावेति ।।** अथशानिष्टेति भाष्ये अथेत्यस्यावतारानन्तरमेव न तु परोपदेशमपेक्ष्य । येन स्वतः सार्वज्ञं न

(विवृतिः)

स्यादित्यर्थः ।। अथशब्दः आनन्तर्यार्थकः सन् व्यासावतारस्य मुख्यतो वेदोद्धारादिप्रयोजनकत्वमाहेति भावबोधे ।। 'वेदमुत्सन्नमित्यादेरित्यस्य इत्यर्थः' इति वक्ष्यमाणेनान्वयः । उत्सन्नशब्दस्य नष्टार्थत्वं निवारयन्नाह । **अपपाठादिनेति** ।। व्यासावतारात्प्राक् वेदानामविभक्तत्वं निराकुर्वन् व्यभजदित्यस्य विवक्षितमर्थमाह । **प्रागेवेति** ।। **अवान्तरवेदादीति** ।। स्वत एव– ऋक्सामादिरूपादेकैकस्मान्महावेदादुद्धृतस्यावान्तरस्य ऋगादिवेदस्य चतुर्विंशत्यादिशाखाभेदेन, आदिपदेन शाखानां चोपशाखाभेदेन कथनमित्यर्थः ।। यद्वा महावेदस्यावान्तरवेदत्वेन, आदिपदेन चतुर्विंशत्यादित्वेन च विभागकथनमित्यर्थः । कथमेतावता प्रामाण्यादि ब्रह्मसूत्राणां समर्थितमित्यत आह ।। **अयं भाव इति** ।। आप्तिमूलत्वेन कथं निर्दोषत्वसिद्धिरित्यत आह ।। **आप्तिश्चेति** ।। तथापि ब्रह्मसूत्राणां कथं प्रामाण्यसिद्धिरित्यत आह । **आप्तिमूलत्वादिति** ।। तथापि सूत्रप्रणेतुर्वेदव्यासस्य पुरुषत्वाविशेषात्प्रमादादिकं सम्भवति । तथा च तस्यानाप्तत्वेन कथं तेषामाप्तिमूलत्वेन प्रामाण्यमित्यत आह । **प्रमादेति** । अस्तु नारायणावतारत्वं व्यासस्य तथापि प्रमादादि किं न स्यादित्यत आह ।। **भगवत्त्वादेवेति** ।। अन्यथा तत्र स्यादित्यर्थः । ननु नारायणावतारस्य बुद्धस्य प्रमादाद्यभावेऽपि विप्रलम्भकत्ववदस्यापि विप्रलम्भोऽस्तु । तथा च विप्रलम्भमूलकत्वान्न प्रामाण्यमेषामित्यत आह ।। **विप्रलम्भकत्वस्य चेति** ।। श्रोतृदोषाभावः कुतोऽवसीयत इत्यत आह ।। **ज्ञानायोग्यताया इति** । तथाप्यपहासमूलकं किं न स्यादित्यत आह ।। **अपहासस्य चेति** ।। प्रसक्तदोषाभावः कुत इत्यत आह ।। **अज्ञानेति** ।। आप्तिमूलत्वमात्रेण यदा प्रामाण्यसिद्धिस्तदा किमु वक्तव्यं श्रुत्यादिनिर्णायकत्वात्तन्मूलत्वे प्रामाण्यसिद्धिरित्याह ।। **आप्तीति** ।। तथापीष्टसाधनत्वाभावात्कथमुपादेयत्वमित्यत आह ।। **इष्टेति** ।। तदर्थनिर्णयायेत्यत्र तच्छब्देन तद्ज्ञापनार्थमित्युक्तिलब्धेष्टानिष्टप्राप्तिपरिहारसाधनवेदनकरणरूपवेदपरामर्शादिति बोद्धव्यम् ।

निष्पन्नज्ञानस्य त्रेतादावपि स्थितत्वेन गृहीतग्रहणं किमर्थमित्यत आह ।। **यथोत्पन्नमिति** ।। ज्ञानस्य प्रकारान्तरेण विक्रियमाणत्वाभावादन्यथाजातमिति पदं व्याचष्टे ।। **इदमदो वेतीति** ।। दुष्टं विषयीकृतम् ।। **अज्ञानमितीति** ।। सम्यग्ज्ञानं न भवतीति विपरीतप्रतीतिविषयतामित्यर्थः ।। कुत इत्यत आह । **गौतमेति** ।। ननु कालतो ब्रह्मादिज्ञानस्याभिभवः किं न स्यादित्यत आह ।। **कालेति** ।। ब्रह्मादिदेवव्यतिरिक्तसकललोकानां गौतमहतगोनिर्मातृत्वाभावात्तेषां सर्वेषां कथं साकल्येन सम्यग्ज्ञानान्यथात्वमित्यत आह । **लोकस्य चेति** ।। ब्रह्मादिबुद्धिसङ्कीर्णत्वमज्ञानादिमिश्रत्वं नेत्युक्तम् ।। तत्र सम्मतिमाह ।। **तदुक्तमिति** ।। नन्वेकत्रवेदानिति एकत्र वेदस्येति वैरूप्यं कुत इत्यत आह ।। **बहुवचनप्रयोगेऽपीति** ।। उत्सन्नान् भगवान् वेदानित्यत्रेत्यर्थः ।। **तदल्पाक्षरत्वमिति** ।। यावदक्षरतां

(विवृतिः)

विना विवक्षितार्थासिद्धिः तदर्थप्रतिपादनाय ततोऽधिकाक्षरानुपादानम् अल्पाक्षरत्वमिति भावः । अल्पाक्षरवह्वक्षरयुक्तपर्यायपदयोर्मध्येऽल्पाक्षरपदोपेतत्वमित्यर्थः ।। अतो नास्तोभत्वेन साङ्कर्यम् ।। [१]एवमपि भवितुमर्हतीत्यवचनमिति ।। उत्कटकोटिकसंशयाजनकवाक्यत्वमित्यर्थः ।। बहुशाखा-निर्णायकत्वमिति ।। सव्याकरणसूत्रादेरपि बहुशाखागतपदस्वरादिनिर्णायकत्वेन तत्र नाव्याप्तिरिति ज्ञेयम् ।। व्यर्थाक्षरराहित्यमिति ।। अर्थाप्रतिपादकत्वेऽपि साम्नि स्तोभाक्षराणाम् ऋगक्षराव्याप्तगान-भागपरिपूरणायेव प्रयोजनान्तरायाक्षराप्रयोग इत्यर्थः ।। निर्विशेषितसूत्रत्वमिति मूले अतःशब्देन निर्विशेषितसूत्रत्वे हेतुरुच्यत इति प्रतीयते । तत्र । यत् यत्र निर्विशेषितं तत्तत्र मुख्यमिति वक्ष्यमाण-विरोधात् । यथा श्रुतोऽपिशब्दः सूत्रान्तरस्य निर्विशेषितत्वं समुचिनोतीति प्रतीयते । चशब्दश्च किमर्थमित्ययो वाक्यं योजयति ।। यत इत्यादिना ।। पर्वतस्य वह्निमत्वं कुत इति प्रश्ने व्यापकीभूतवह्निमत्व एव प्रमाणसिद्धं धूमवत्वं सम्भवतीत्यभिप्रायेण, अत एवाग्निमत्वादेव धूमवत्वमित्युक्ते यथा धूमवत्वस्य वह्निमत्वे हेतुत्वमिति गम्यते तथा प्रकृतेऽपि निर्विशेषितसूत्रत्वस्य मुख्यसूत्रत्वे हेतुत्वलाभ एव अत एव हेतोरन्यथासिद्धिनिरासार्थमवधारणार्थश्चशब्दोऽत एव योजितः ।। अपि शब्दश्च मुख्यत्वरूप-साध्यसमुच्चायकहेतुसिध्यर्थमुक्तः ।। पुराणादाविति ।। निर्विशेषितसूत्रत्वं तु निरुपपदसूत्रशब्दवाच्यत्वमिति द्रष्टव्यम् ।। निर्विशेषितव्यासत्वमिति । व्यासत्वमित्येवोक्तत्वादन्य इति विशेषणाद्व्यायास इत्युक्तत्वाच्चेति भावः ।। अमुख्यत इति ।। तत्रैकस्येत्युक्तत्वादत्रामुख्यार्थत्वमपि लब्धमिति भावः ।। विशेषणाद्व्यांसा इति ।। सोपपदशब्दवाच्या इत्यर्थः ।। न मुख्यत्वमिति भाव इति ।। अनेन सविशेषणेति मूले हिशब्दो हेत्वर्थकः । अपराणीत्यस्य ब्रह्मसूत्रभिन्नत्वम् अमुख्यत्वं चार्थः । निर्विशेषितसूत्रत्वस्य मुख्यसूत्रत्वसमव्याप्तत्वात्तद्व्यापकत्वेन तदभावेन तदभावसाधनं चोपपद्यत इत्युक्तं भवति ।। एतदुपपादनायैवेति ।। मुख्यस्य निर्विशेषेत्यनेन निर्विशेषितत्वरूपहेतोरप्रयोजकत्वशङ्कापरिहारेण पक्षादन्यत्रापि व्यभिचारशङ्कयाअपि परिहारसम्भवादव्यभिचारप्रदर्शनमुखेनापि तस्य तत्रानुपयोगादिति भावः । मुख्यस्यैवेति ।। अन्यथा शङ्कया अपरिहारात् ।। एवं विशेषित इत्यत्रापि एवेति योज्यम् । अत्र मुख्यस्य निर्विशेषणशब्दवाच्यत्वे 'इति वेदविदः प्राहुः' इति वेदस्य वृद्धव्यवहारस्य च प्रमाणीकृतत्वेन विपक्षे प्रामाणिकपरित्यागप्रसङ्गाभिप्रायाच्छङ्कापरिहार इति भावः ।।

ननु सूत्रेषु येष्वित्यत्र ब्रह्मसूत्राणां सर्वशाखानिर्णायकत्ववचने ब्रह्मसूत्राणां मुख्यत्ववचनेपि सूत्रान्तरस्य मुख्यार्थताशङ्कापरिहारः कथमित्यतस्तात्पर्यमाह ।। यत्सूत्रधर्मतयेति ।। प्रागुक्तमेव मुख्यसूत्रत्वं

१. (क.पा./पाठान्तर)

(विवृतिः)

यथा हेतुः स्यात्तथाऽनेन वाक्येन विव्रियत इति भावः ।। **शब्दसमूहैः क्रियमाण इति** ।। शब्दजातस्येति षष्ठी कर्तरि न तु कर्मणीत्यर्थः ।। शब्दजातस्येति सम्बन्धे षष्ठी सम्बन्धश्चजन्यजनकभाव इति भावबोधे ।। **तन्निर्णयस्येति** ।। अन्यसूत्रकृतनिर्णयस्येत्यर्थः ।। **व्याख्यानरूपत्वात्** ब्रह्मसूत्रव्याख्यानरूपत्वात् ।। ब्रह्मादीनां ज्ञानं चेदस्ति तर्हि प्रश्नः कथं घटत इत्यत आह ।। **पूर्वस्थितस्यैवेति** ।। तत्र प्रमाणमाह ।। **जानन्तोऽपीति** ।। ननु 'एवं ज्ञानं पुनः प्रापुः देवाश्च ऋषयस्तथा, इति भारततात्पर्यनिर्णये पुनःशब्दबलाद्देवादीनां तिरोहितज्ञानप्राप्तेराचार्यैरेवोक्तत्वात् तद्बलात् ज्ञानं संस्थाप्येत्यत्रापि तिरोहितज्ञानमुत्पाद्येत्यर्थः स्यादित्यत आह ।। एवं ज्ञानमिति ।।

## सूत्रभाष्यम्

### ॐ अथातो ब्रह्मजिज्ञासा ॐ

अथशब्दो मङ्गलार्थोऽधिकारानन्तर्यार्थश्च । अतःशब्दो हेत्वर्थः ।

उक्तं च गारुडे —

अथातःशब्दपूर्वाणि सूत्राणि निखिलान्यपि ।
प्रारभन्ते नियत्यैव तत्किमत्र नियामकम् ।।

कश्चार्थस्तु तयोर्विद्वन्कथमुत्तमता तयोः ।
एतदाख्याहि मे ब्रह्मन्यथा ज्ञास्यामि तत्वतः ।।

एवमुक्तो नारदेन ब्रह्मा प्रोवाच सत्तमः ।
आनन्तर्येऽधिकारस्य मङ्गलार्थे तथैव च ।।

अथशब्दस्त्वतश्शब्दो हेत्वर्थे समुदीरितः ।
परस्य ब्रह्मणो विष्णोः प्रसादादिति वा भवेत् ।।

स हि सर्वमनोवृत्तिप्रेरकस्समुदाहृतः ।
सिसृक्षोः परमाद्विष्णोः प्रथमं द्वौ विनिःसृतौ ।।

ओङ्कारश्चाथशब्दश्च तस्मात्प्राथमिकौ क्रमात् ।
तद्धेतुत्वं वदंश्चापि तृतीयोऽत उदाहृतः ।।

(सूत्रभाष्यम्)

अकारस्सर्ववागात्मा परब्रह्माभिधायकः ।
तथौ प्राणात्मकौ प्रोक्तौ व्याप्तिस्थितिविधायकौ ॥

अतश्च पूर्वमुच्चार्यास्सर्व एते सतां मताः ।
अथातश्शब्दयोरेवं वीर्यमाज्ञाय तत्त्वतः ।
सूत्रेषु तु महाप्राज्ञास्तावेवाऽदौ प्रयुञ्जत इति ॥

## सत्तर्कदीपावली

तत्र तावत्प्रथमसूत्रं व्याख्यातुमुपादत्ते ॥ **अथेति** ॥ तत्राथातःशब्दौ व्याचष्टे ॥ **अथशब्द इति** ॥ उक्तार्थे गारुडवचनमुदाहरति ॥ अथात इति ॥ ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ । इत्यादिवचनात् श्रुतमात्रेणाप्यथशब्देन मङ्गलाचरणं भवतीति ज्ञायते । अत्र अकाराद्यर्थकथनम् अथातःशब्दयोः प्राशस्त्यज्ञापनार्थम् । सर्ववागात्मकत्वं त्वकारस्य तत्प्रतिपाद्यविष्णुवाचित्वात् । तकारथकारौ विष्णोर्व्याप्तिस्थितिवाचिनावित्यर्थः ।

## तत्त्वप्रदीपिका

अथशब्दः श्रवणकीर्तनाभ्यां मङ्गलफलः । विष्णोः परममङ्गलस्य वाचकत्वेनातिप्रियत्वात् । अतश्शब्दो हेत्वर्थः । सर्वस्य हि, 'दुःखं मा भूत्सुखमेव मे स्यादि'ति निश्शेषदुःखनिवृत्तिः परमसुखावाप्तिश्चेच्छाविषयत्वेन सदा हृदि कृताऽत इत्युच्यते । यस्माद्ब्रह्मजिज्ञासां विना ते न सिध्यतः, तया सिध्यतश्चातः सा कर्तव्या । ''व्याख्यानत्वात्सर्ववाचां सर्ववागात्मता भवेत्'' इति सामसंहितायाम् । तथौ प्राणात्मकौ प्रोक्तौ प्राणं प्रणेतारं विष्णुं वाचकत्वेनाऽप्तौ ।

## तत्त्वप्रकाशिका

तत्रादिसूत्रस्येदं सङ्गत्यादि । अत्र ब्रह्मजिज्ञासायाः कर्तव्यत्वसमर्थनादस्ति शास्त्रसङ्गतिः । अन्यथा शास्त्रस्यानारम्भणीयत्वप्रसङ्गादेतत्समर्थनीयम् । अध्यायपादसङ्गतिस्त्वानन्दमयाधिकरणमारभ्यैव गवेषणीया । ततोऽर्वाक्तनानामधिकरणानामध्यायपादपीठत्वात् । प्रथमाधिकरणत्वाच्छ्रुतिविचारस्याद्याप्यनारब्धत्वान्नाधिकरणश्रुतिसङ्गती च । प्रारिप्सिततया चित्तसङ्गतशास्त्रे प्रवर्तनीया ब्रह्मजिज्ञासा विषयः । कर्तव्या न वेति सन्देहः । उभयविधव्यापारदर्शनं सन्देहबीजम् । न कर्तव्येति पूर्वः पक्षः । अधिकारिविषयप्रयोजनसम्बन्धशून्यत्वात् । न तावद् ब्रह्म विषयः । असन्दिग्धत्वात्प्रमाणाभावेन जीवव्यतिरिक्तस्य

(तत्त्वप्रकाशिका)

ब्रह्मणोऽभावात् । जीवस्य च स्वप्रकाशत्वात् । न हि कश्चित्प्रकाशमानेऽर्थे सन्दिग्धे । न चात्मनः स्वप्रकाशत्वे विवदितव्यम् । अहमित्यनुभवात् । न चायं मानसोऽनुभवः । तस्यापि ज्ञायमानत्वेनानुभवान्तरान्वेषणेऽनवस्थानात् । कस्यचिदनुभवस्य स्वप्रकाशत्वेऽस्त्वात्मन एव तत् । जिज्ञासायामेवानुभवोऽनुभूयत इति न वाच्यम् । अनुभवविरोधात् । न ह्यज्ञायमानज्ञानसद्भावे किञ्चिन्मानम् । न च स्वप्रकाशसंविदाश्रयतयाऽऽत्माऽवभासत इति युक्तम् । औत्तरिकानुस्मृतिसिद्धसौषुप्तिकानुभवाभावप्रसङ्गात् । न हि सुषुप्तावात्मातिरिक्ता संविदस्तीति सम्भवति । संविदात्मकत्वाच्चात्मनो न संविद इव संविदाश्रयतया प्रतीतिः । अतः स्वप्रकाशात्मानतिरिक्तस्य ब्रह्मणोऽसन्दिग्धत्वान्न विषयत्वं सम्भवति । न च जिज्ञासायाः प्रयोजनमस्ति । ज्ञायमानेऽपि ब्रह्मणि तदनुपलम्भात् । विषयप्रयोजनाभावान्न ब्रह्मजिज्ञासायामधिकारी विद्यते । अत एव न सम्बन्धः । अतो न ब्रह्मजिज्ञासा कर्तव्येति नैतच्छास्त्रमारम्भणीयमिति प्राप्ते सिद्धान्तयत्सूत्रमुपन्यस्यति ।। **अथेति** ।। ग्रन्थादौ मङ्गलाचरणस्यावश्यकर्तव्यत्वात्तत्परतयाऽथशब्दं व्याचष्टे ।। **अथेति** ।। मुक्त्यर्थिमात्रस्य ब्रह्मजिज्ञासायां प्रवृत्तिनिरसनपरतयापि तं व्याचक्षाणस्तस्याभिधेयमर्थमाह ।। **अधिकारेति** ।। अथशब्दस्यानन्तर्यमात्रार्थत्वेऽप्यधिकारस्य योग्यतया सम्बन्धः । ब्रह्मजिज्ञासायाः प्रयोजनशून्यताशङ्कानिवर्तकतयाऽतःशब्दं व्याचष्टे ।। **अत इति** ।।

नन्वथातःशब्दपूर्वकत्वं सूत्राणां किंनिमित्तं मङ्गलोक्त्यादेः (मङ्गलाचरणादेः) शब्दान्तरेणापि सम्भवादित्याशङ्कां पुराणवचनेनैव परिहरति ।। **उक्तं चेति** ।। अत्र प्रथमप्रयोज्यत्वे नियामकेन भाव्यं तत्किं नियामकम् । न चैतत्प्राथम्यं यादृच्छिकम् । यतोऽखिलान्यपि नियत्यैव तत्पूर्वकाणीत्यर्थः । नियामकं च भवत् द्विविधं भवेत् । अवश्यवक्तव्यार्थत्वमाधिक्यं चेति । आधिक्यं च स्वरूपतोऽर्थतश्चेति द्वेधा भवति । तत्रादिपक्षे पृच्छति ।। **कश्चेति** ।। कोऽसाववश्यवक्तव्योऽर्थो येन प्राथम्यमित्यर्थः । द्वितीयमाक्षिपति ।। **कथमिति** ।। शब्दान्तरस्य स्वरूपोत्तमत्वादर्शनात्कथमनयोस्तदिति भावः । तृतीये पृच्छति ।। **कथमिति** ।। अवश्यवक्तव्यार्थत्वात्प्रथमप्रयोग इति परिहारमभिप्रेत्यावश्यवक्तव्यार्थत्वं तयोर्दर्शयति ।। **आनन्तर्य इति** ।। अत्रातःशब्दस्याऽवश्यवक्तव्यमर्थान्तरं चाह ।। **परस्येति** ।। अकारवाच्याद्विष्णोस्तत्प्रसादात्तज्जिज्ञासादि कार्यमिति वाऽतःशब्दार्थो भवेदित्यर्थः । 'अः इति ब्रह्म' (ऐ.आ. २-३-८-७) इत्यादिश्रुतिं सूचयति परब्रह्मग्रहणेन । किं जिज्ञासायपि भगवत्प्रसादेनेत्यत आह ।। **स हीति** ।। ननु मङ्गलोक्त्यादेः शब्दान्तरेणापि सम्भवात्किमेतत्प्रयोगनियत्येत्यतः स्वरूपाधिक्यं चास्तीत्याह ।। **सिसृक्षोरिति** ।। प्रथमं विनिःसृतावतः स्वरूपोत्तमौ तस्मात्प्राथमिकावित्यर्थः । यत्स्वजातौ प्रथमं हरेर्निस्सरति तत्तत्रोत्तममिति न्यायोऽनुसन्धेयः । अतश्च तृतीयतया प्राथमिक उदाहृतः । यस्तृतीयतयोदाहृतो विष्णुनेत्यत उक्तम इत्यर्थः । तद्धेतुत्वं तस्य विष्णोर्जिज्ञासादौ हेतुत्वं तस्य जिज्ञासादेर्मोक्षहेतुत्वं वा वदमित्यनुवादः । न केवलमाधिक्यं स्वरूपत एव किन्त्वर्थतश्चेत्यतोऽपि

(तत्त्वप्रकाशिका)

**प्रथमप्रयोग इत्याह ।। अकार इति ।।** सर्ववागर्थपूर्णताभिधायकतया परब्रह्माभिधायक इत्यर्थः ।। **प्राणात्मकाविति ।।** प्राणदैवत्यौ भगवद्वाचकौ । अभिमान्यभिमन्यमानयोरैक्यव्यपदेशो महतश्चतुर्मुखादित्यादौ प्रसिद्धः । वाच्यवाचकयोरैक्यव्यपदेशो 'अयं वै लोकः प्रथमा महानाम्नी' इत्यादौ दृष्टः । अत इत्युपसंहारः । वीर्यं स्वरूपाधिक्यादिमाहात्म्यम् ।

## गुर्वर्थदीपिका

अस्ति शास्त्रसङ्गतिरित्यत्र साक्षात्परम्परया वा विष्णुमीमांसारूपो ग्रन्थसमुदायोऽत्र शास्त्रमित्युच्यते । अन्यथा साधनफलाध्यायार्थयोरसङ्ग्रहः स्यात् । तेन च सङ्गतिः कथञ्चिद्विष्णुमीमांसारूपत्वे सति स्यात् । प्रथमाधिकरणं च विष्णुजिज्ञासायाः कर्तव्यत्वमीमांसारूपत्वात्परम्परया विष्णुमीमांसा-शास्त्रेऽस्मिन्नन्तर्भावलक्षणसङ्गत्या सङ्गतमिति भावः । प्रथमाध्यायस्य नामसमन्वयप्रतिपादकत्वा-त्प्रथमपादस्य चान्यत्र प्रसिद्धनाम्नां समन्वयप्रतिपादकत्वात्तस्य चानन्दमयाधिकरणमारभ्यैव क्रियमाणत्वेन ततः प्राक्तनाधिकरणपञ्चके चाभावात् अध्यायपादसङ्गतिस्त्वानन्दमयाधिकरणमारभ्यैव गवेषणीयेत्युक्तम् । पूर्वाधिकरणे विचारितश्रुत्यर्थमाक्षिप्योत्तराधिकरणे तत्समाधाने हि श्रुत्यधिकरणसङ्गती वक्तव्ये । अस्य च प्रथमाधिकरणत्वेनेतः पूर्वमाक्षेप्यश्रुतेरेवानारब्धत्वान्नाधिकरणश्रुतिसङ्गती चेति भावेनोक्तं **प्रथमाधिकरण-त्वादिति** । मनोवेद्यत्वे सुप्तौ मुक्तौ च मनसोऽभावेनाऽऽत्मनोऽपि ज्ञातत्वासम्भवात्स्वप्रकाश-त्वेनैवाऽऽत्मसिद्धिरिति भावेनोक्तं **जीवस्य स्वप्रकाशत्वादिति** । स्वात्मन एव तदित्यत्र तत् स्वप्रकाशानु-भवत्वं स्वात्मन एव जीवस्यैवेत्यर्थः । अनन्तः कस्यचिज्जडमानसानुभवस्य स्वप्रकाशत्वे प्राचीनानुभवस्यैव कुतो न तत् । अतोऽनवस्थापरिहाराय कस्यचिदनुभवस्य स्वप्रकाशत्वमभिलषता प्राचीनानुभवाद्वैलक्षण्य-मवश्यं वाच्यम् । तच्च चिद्रूपत्वमेवेति भावेन स्वात्मन एव तदित्युक्तम् । जिज्ञासायामेवेत्यत्र बुभुत्सैव जिज्ञासा । एकेनाज्ञायमाने घटे तदैवान्येन ज्ञायमानत्वस्य स्थिरतया अन्येद्युर्वा ज्ञायमानत्वस्य सम्भवेऽपि त्रिक्षणावस्थायिनि परप्रत्यक्षाविषये ज्ञाने स्वप्रत्यक्षस्याप्यभावेऽप्रामाणिकत्वमेव स्यादिति भावेनोक्तं **न हीति** । अतीतकालेऽनुभूतार्थविषयत्वमात्रेण स्मृतिसारूप्यात् साक्षिरूपपरामर्शात्मकज्ञानमप्यनुस्मृतिरिति भावेनोक्तम् **औत्तरिकानुस्मृतिसिद्धेति** । अन्यथा स्मृतेरप्यतीतार्थसाधकता न स्यादित्यतिप्रसङ्गसूचनायेत्थं प्रयोगः । एतावन्तं कालं सुखमहमस्वाप्सम्इत्यौत्तरिकपरामर्शबलादस्ति सुप्तावप्यनुभवः । स च सकलकरणोपरतिदशायां विद्यमानत्वान्न जन्यः । अजन्यस्य चानुभवस्याऽऽत्मातिरिक्तस्य कल्पने गौरवात् । ''बलमानन्द ओजश्च सहो ज्ञानमनाकुलम् । स्वरूपाण्येव जीवस्ये''ति स्मृतिविरोधा-च्चाऽऽत्मरूप एव वाच्य इति भावेनोक्तं **न हि सुप्तावात्मातिरिक्तेति** ।

(गुर्वर्थदीपिका)

अथशब्दस्य शङ्खनिनादवच्छ्रवणत एव मङ्गलत्वान्मङ्गलमर्थः प्रयोजनं यस्य स मङ्गलार्थः । अधिकारस्तु योग्यतया लभ्यते । "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिष्वि"त्यभिधानम् । अतःशब्दो हेत्वर्थ इत्यस्य "यतो नारायणप्रसादमृते न मोक्षः । न च ज्ञानं विनाऽत्यर्थप्रसादः । अतो ब्रह्मजिज्ञासा कर्तव्ये"ति स्वपदव्याख्यात्रा भाष्यकृतैव स्पष्टीकरिष्यमाणत्वात् ब्रह्मजिज्ञासायाः मोक्षसाधन-भगवत्प्रसादजनकज्ञानं प्रति यद्धेतुत्वं स एवार्थो यस्य स हेत्वर्थ इत्यर्थः । भावप्रधानो निर्देश इति भावः । यद्वा "तद्धेतुत्वं वदंश्चापी"ति स्मृतिसमाख्ययाऽकारवाच्यस्य विष्णोर्निमित्तार्थकपञ्चमी-विभक्त्यादेशभूततसेरर्थभूतं यज्जिज्ञासां प्रति हेतुत्वं सोऽर्थो यस्य स हेत्वर्थ इत्यर्थः । "मङ्गलानन्तरारम्भ-प्रश्नकार्त्स्न्येष्वथो अथ" इति वचनात् । शब्दान्तरेण अथोऽत इति सूत्रवल्लघुभूतशब्दान्तरेणेत्यर्थः । तदित्यस्य पूर्वपरामार्शित्वात्परामृश्यं किमित्यतस्तत्प्रस्तावयति **नियामकेनेति** । यद्यपि "स्वरूपाधिक्यं चास्तीत्याहे"ति स्वरूपाधिक्यस्यापि स्वयमेव वक्ष्यमाणत्वात् । "आदिपक्षे पृच्छति" "तृतीयेऽपि पृच्छती"तिवद्द्वितीयेऽपि पृच्छतीत्येव वक्तव्यम् । तथापि लोके शब्दान्तरे स्वरूपोत्तमतायाः काप्यदर्शा-नान्मन्द आक्षिपति इति भावेन द्वितीयमाक्षिपतीत्युक्तम् । यद्यपि ब्रह्मघटितश्रुतिसूचनाय ब्रह्मग्रहणेनेत्येव वक्तव्यम् । तथाऽपि "परस्य ब्रह्मण" इति स्मृतौ विष्णोरुत्तमब्रह्मत्वकथनेन मुख्ये सम्भवत्यमुख्यायोगात् श्रुतावपि ब्रह्मपदेन मुख्यब्रह्मरूपो विष्णुरेव ब्रह्मेति सूचनाय परब्रह्मग्रहणेनेत्युक्तम् । "सिसृक्षो"रिति स्मृतिवाक्ये मध्ये उत्तमता न दृश्यते । तथाऽपि कथमुत्तमता तयोरिति प्रश्नानुगुण्याय तदध्याहार्यमिति भावेनोक्तम् **अतः स्वरूपोत्तमाविति** । चतुर्मुखादपि प्राग्भगवन्मुखाद्विनिस्सृतऋग्वेदस्य ततोऽप्याधिक्या-दर्शनात्स्वजातावित्युक्तम् । "तृतीयोऽत उदाहृत" इत्यत्रातः अतश्शब्द इत्यर्थः । अतश्च तृतीयतया प्राथमिक उदाहृत इत्युक्तत्वेऽपि प्रथमं भगवन्मुखनिस्सृतत्वलाभेनोत्तमत्वे हेतुरेवोक्तो न तूत्तमत्वम् । ततश्च पूर्ववत् प्रश्नानानुगुण्यं स्यादित्याशङ्कयापेक्षितार्थं पूरयन्वाक्यतात्पर्यार्थानाह **अतस्तृतीयतयेति** । अतः कारणात् उत्तमः तृतीपतयोत्तम इत्यर्थः । "अतश्शब्दो हेत्वर्थे समुदीरितः । परस्य ब्रह्मणो विष्णोः प्रसादादिति वा भवेदि"त्यतश्शब्दार्थद्वयस्य प्रागेव कथितत्वात्पुनस्तद्धेतुत्वं वदन्नित्यस्य वैयर्थ्यमाशङ्कयानुवादेऽपि न्यूनतां परिहर्तुमर्थद्वयं वदन्नित्यनुवाद इत्याह **तद्धेतुत्वं तस्य विष्णोरित्या-दिना । अकार इतीति** ।। सर्ववागर्थपरिपूर्णताभिधायकतया परब्रह्माभिधायक इति वदता यद्यप्यकार-स्सर्ववागात्मा सर्ववागर्थपरिपूर्णः परमात्मेत्येव शब्दलभ्योऽर्थः । तथाऽप्यकारपरमात्मनोरैक्यायोगादिदं सामानाधिकरण्यं वाच्यवाचकयोरैक्याभिप्रायेणैव निर्दिष्टमिति सूचितम् । एवं च अकारस्सर्ववागात्मा सर्ववागर्थपरिपूर्णः परमात्मेति सामानाधिकरण्याद्वाच्यवाचकयोरैक्यमुक्तम् । तत्र दृष्टान्तः "अयं वै

(गुर्वर्थदीपिका)

लोकः प्रथमा महानाम्नी''ति । अत्र हि यथा महान्ति भगवन्नामानि यासु ता ऋचः महानाम्न्यः । तासु प्रथमा महानाम्नी ऋक् अयं लोको वै । एतल्लोकाधारत्वादयं लोक इत्युक्तः परमात्मा वै इति वाच्यवाचकयोरैक्यमुक्तम् । तद्वदिदमपीति भावः । तथौ प्राणात्मकौ प्राणस्वरूपाविति शब्दलभ्योऽर्थः । प्राणः देवता अभिमानी ययोः तौ प्राणदैवत्याविति तु फलितकथनम् । ''तनु विस्तारे'' ''ष्ठा गतिनिवृत्ता''विति धातोस्तकारो हरेर्व्याप्त्यभिधायकः । थकारस्स्थित्यभिधायक इति ''व्याप्तिस्थिति-विधायकौ'' । एवं च प्राणात्मकावित्यभिमान्यभिमन्यमानयोरैक्यमुक्तम् । तत्र दृष्टान्तो महतश्चतुर्मुखा-दिति । अत्र सृष्टिप्रकरणत्वान्महत्पदं महत्तत्त्वाभिधायकम् । एवं च यथा महतश्चतुर्मुखा-दित्यभिमान्यभिमन्यमानयोर्महत्तत्त्वचतुर्मुखयोस्सामानाधिकरण्येनैक्यव्यपदेशस्तथेहापीति ।।

## भावबोधः

अध्यायपादसङ्गतिस्त्विति । यथा ''तद्विजिज्ञासस्व' 'यतो वा' इत्यादिब्रह्मप्रतिपादकवाक्यार्थ-निर्णायकन्यायव्युत्पादकतया अधिकरणपञ्चकस्य ब्रह्मविचाररूपेण शास्त्रेणान्तर्भावलक्षणा सङ्गतिः, न तथाऽध्यायपादाभ्यां समन्वयतद्विशेषाप्रतिपादकत्वादिति भावः ।

ननु समन्वयसूत्रे साक्षात् समन्वयस्यैवोक्तेः 'तमेव समन्वयं प्रकटयति' इति भाष्येऽध्यायशेषस्य समन्वयसूत्रोक्तसमन्वयप्रपञ्चकत्वोक्तेः समन्वयसूत्रेणाध्यायशेषस्य प्रपञ्च्यप्रपञ्चकभावसङ्गतिरिति सुधाग्रन्थाच्च तस्यान्तर्भावसत्त्वादीक्षत्यधिकरणे ''तदभावे कुतोऽन्वयः' इत्यनुव्याख्यानोक्तरीत्या समन्वयासाधारण-हेतुवाच्यत्वसमर्थनेन तस्याध्यायान्तर्भावसम्भवात् कथमानन्दमयाधिकरणमारभ्यैवेत्युक्तमिति चेत्; सत्यम् । वैदिकानां शब्दानां ब्रह्मण्युपक्रमादिप्रमाणकः शक्तितात्पर्यलक्षणः सम्बन्धः समन्वयः । स च न समन्वयसूत्रप्रतिपाद्यः । तत्प्रमाणस्यानुक्तेः । किन्तु व्युत्पादयिष्यमाणः स शास्त्रयोनित्वे हेतुत्वेन सिद्धवदुपन्यस्तः । ईक्षत्यधिकरणेऽप्यवाच्यत्वप्रयुक्ता समन्वयासम्भवशङ्कैव निरस्ता । समन्वयस्तु न व्युत्पादित इति न तयोरध्यायान्तर्भावलक्षणा सङ्गतिः । किञ्च, अनयोरधिकरणयोः पादार्थाप्रतिपादकत्वेन न पादान्तर्भाव इति सिद्धम् । तथा च कथमध्यायान्तर्भावोऽपि ? न हि यद्विशेषानन्तर्भूतं तत् सामान्यान्तर्भूतं सम्भवतीति । **अध्यायपादपीठत्वादिति** । वक्ष्यमाणक्रमेणैतदधिकरणपञ्चकव्यतिरेकेण समन्वयाद्याकाङ्क्षानुदयात्तदाकाङ्क्षोत्थापकतया ततोऽर्वाक्तनानां पञ्चानामप्यधिकरणानामध्याय-पादपीठत्वादित्यर्थः । **नाधिकरणश्रुतिसङ्गती इति** । पूर्वाधिकरणतद्विषयवाक्याभ्यां सङ्गती नेत्यर्थः । **कर्तव्या न वेति** । अत्र वेदार्थनिर्णायकन्यायग्रथनात्मकमिदं शास्त्रमनारम्भणीयमुतारम्भणीयमिति

(भावबोधः)

प्रधानचिन्ता, नैतच्छास्त्रमारम्भणीयमित्युपसंहारवाक्यसूचिता द्रष्टव्या । अत एव सुधायां तत्र संशयः किमिदमारम्भणीयं न वेति प्रधानचिन्तामुक्त्वा जिज्ञासायाः कर्तव्यत्वाकर्तव्यत्वकोटिका चिन्ता तादर्थ्येनोक्ता । इदं तदर्थचिन्ताप्रदर्शनं सर्वत्र यथासम्भवं तदर्थचिन्तोहः कर्तव्य इत्युपलक्षणत्वेनेति ज्ञातव्यम् । तथा चात्र किमिदं शास्त्रमनारम्भणीयम्, उत आरम्भणीयमिति चिन्ता । तदर्थमेतच्छास्त्रव्युत्पादितन्यायकरणिका जिज्ञासा न कर्तव्या उत कर्तव्येति । तदर्थं जिज्ञासायां विषयादिकं न सम्भवति उत सम्भवतीति । तदर्थं विषयभूतं ब्रह्म किं प्रत्यगर्थभूतजीव एव प्रयोजनत्वेनाभिमतो मोक्षश्च कर्मादिसाध्यः; उत प्रत्यगर्थजीवभिन्नं मोक्षश्च विष्णुज्ञानजप्रसादैकसाध्य इति । तदर्थं ब्रह्मणो जीवभिन्नत्वे मोक्षस्य तादृशविष्णुप्रसादसाध्यत्वे च प्रमाणं नास्ति उतास्तीति । यदि प्रमाणाभावस्तदा ब्रह्ममोक्षयोर्विषयप्रयोजनत्वासम्भवात्तत एवाधिकार्याद्यभावाद्विषयादिशून्यत्वेन जिज्ञासायाम् अकर्तव्यत्वे शास्त्रमनारम्भणीयमिति पूर्वपक्षे, प्रमाणसद्भावे च तयोर्विषयप्रयोजनवत्त्वोपपत्तेर्मोक्षकामनया ब्रह्मजिज्ञासोरेवाधिकारित्वादिसम्भवात् सम्बन्धसम्भवाच्च विषयाद्युपेतत्वेन जिज्ञासायाः कर्तव्यत्वे शास्त्रमारम्भणीयमिति सिद्धान्ते च फलफलिभावः । एवमुत्तरत्रापि द्रष्टव्यम् । यत्राविशदं तत्र वक्ष्यते । जीवव्यतिरिक्तेश्वराभावात् तस्य च स्वप्रकाशत्वेन नित्यसिद्धत्वान्न जिज्ञास्यतेति न्यायविवरणानुसारेण पूर्वपक्षमाह । **न कर्तव्येत्यादिना** । न्यायविवरणे अधिकार्यादिनिरास उपलक्षित इत्यभिप्रेत्य विषयाद्यभावचतुष्टयं पूर्वपक्षयुक्तित्वेनोक्तम् । यथोक्तं न्यायविवरणटीकायाम् 'तथाप्युपलक्षणतया विषयनिराकरणसमर्थनयोरेव विवरणं क्रियते' इति । **न तावद् ब्रह्मेति** । नापि प्रयोजनादीति तावच्छब्दः, न तु नात्रऽब्रह्म विषय इति । अब्रह्मणो विषयत्वानिराकरणादिति ध्येयम् । किमनुभवोऽजिज्ञासितग्राह्यः, उत जिज्ञासितग्राह्य इति विकल्पं हृदि निधायाऽऽद्ये दोषमाह । **तस्यापीति** । द्वितीयं शङ्कते । **जिज्ञासायामेवेति** । जिज्ञासा च न सर्वत्रेति नानवस्थेति भावः । **अनुभवविरोधादिति** । ज्ञानस्य सुखदुःखादिवज्जिज्ञासाभावेऽप्यनुभवात् । अन्यथा जिज्ञासाया ज्ञानाख्यधर्मिज्ञानसाध्यत्वानुभवादनवस्था स्यादिति भावः ।

ननु न ज्ञानमात्रमजिज्ञासितग्राह्यम्, येनानवस्था । नापि जिज्ञासितग्राह्यम्, येनानुभवविरोधः । किन्तु किञ्चिज्ज्ञानं कदापि न ज्ञायत एवेति न कोऽपि दोष इत्यत आह **न ह्यज्ञायमानेति** । **अज्ञायमानत्वादेवेति** भावः । **संविदात्मकत्वादिति** । आत्मा न संविदाश्रयतया प्रतीयते संविदात्मकत्वात् **संविद्वत्**, इति प्रयोगो द्रष्टव्यः । **न चासिद्धो हेतुः** । औत्तरिकानुस्मृत्यैव तस्य सिद्धत्वादिति भावः । 'विषयप्रयोजनाभावादेवाधिकारी च । तदभावादेव सम्बन्धोऽपी'त्याचार्योक्तिं मनसि निधाय **अधिकारिसम्बन्धाभावमाह विषयप्रयोजनाभावादित्यादिना** । यो यत्प्रयोजनमर्थयमानो यद्विषयं जिज्ञासते

(भावबोधः)

**स तत्राधिकारीति** विषयप्रयोजनयोरधिकारिव्यापकत्वादिति भावः । 'अत एव' सम्बन्धिनामभावादेवेत्यर्थः । तत्फलकतयेति पाठः साधुः । न तु तदभिधेयतयेति । अत एव 'तस्याभिधेयमर्थमाहे'ति वक्ष्यति । तथा चाथशब्दो मङ्गलार्थ इति भाष्ये अर्थशब्दो प्रयोजनवचन इति भावः । **मङ्गलोक्त्यादेरिति** । मङ्गलप्रयोजनकाथशब्दो मङ्गलत्वेन विवक्षितः । तस्योक्तिरुच्चारणम् । आदिपदेनाधिकारानन्तर्यादिप्रतिपादनम् । अन्यथा मङ्गलोक्तेरित्यवक्ष्यदिति । **निखिलान्यपीति** । निखिलान्यपीत्यस्यैव विवरणं नियत्यैवेतीति भावः । **द्वितीयमाक्षिपतीति** । अवश्यवक्तव्यार्थत्वाधिक्यार्थयोस्तदभावयोश्च शब्दान्तरेषु दर्शनादथशब्दे तत्सन्देहेन प्रश्नमात्रसम्भवेन प्रथमतृतीययोः पृच्छतीत्युक्तम् । द्वितीये तु स्वरूपाधिक्यस्य शब्दान्तरेष्वदर्शनादथशब्दे तदाक्षेप इति भावः । अत एव 'शब्दान्तरस्य' इत्यादिना मूलाभिप्रेतो हेतुः प्रदर्शितः । 'कथं'शब्दः प्रश्नार्थकः । 'उत्तमता' शब्दस्तु उत्तमार्थतार्थक इत्यभिप्रेत्य कथमित्यादि प्रकारान्तरेण व्याचष्टे **तृतीये पृच्छतीति** । **इति न्याय** इति । अत्र सामान्यव्याप्तिरेवानुसन्धेया । यथा देवेषु चतुर्मुख इति दृष्टान्तसम्भवात् । न तु यः शब्द इति विशेषव्याप्तिः । दृष्टान्ताभावादिति भावः । अत इत्यस्यातःशब्दपरत्वं हेतुपरत्वं 'तृतीयोऽत उदाहृतः' इत्यनयोरावृत्तिं 'प्राथमिकौ' इत्यस्य वचनव्यत्यासेनानुषङ्गं चाभिप्रेत्य व्याचष्टे **अतश्च तृतीयतयेति** । 'अकारः सर्ववागात्मा' इत्यत्राकारस्य सर्ववागर्थप्रतिपादकत्वमेव सर्ववागात्मकत्वं सर्ववागात्मेत्यस्य हेत्वर्थगर्भत्वं चाभिप्रेत्याह **सर्ववागर्थेति** । अभिधायकतयेतीत्थम्भूतलक्षणे तृतीया । प्राणशब्दस्य विष्णुपरत्वमप्यभिप्रेत्याह **भगवद्वाचकाविति** । यद्वा, प्राणश्चात्मा भगवांश्च प्राणात्मानौ, स्वार्थे कप्रत्यय इति भावेन प्राणात्मकावित्येतद्व्याचष्टे । **प्राणदैवत्यौ भगवद्वाचकाविति** । **महतश्चतुर्मुखादिति** ।। महत्तत्वाभिमानिनश्चतुर्मुखादित्यर्थः । अयं वै लोकः प्रथमा महानाम्नीति । महानाम्नीसंज्ञिका, विदा मघवन्नित्यादिका ऋक् पृथिव्यादिलोकस्थविष्णुवाचीत्यर्थः । यथोक्तं कर्मनिर्णये–

प्रथमा या महानाम्नी तद्वाच्यः पार्थिवो हरिः ।
द्वितीयायास्त्वन्तरिक्षस्तृतीयायाद्युगः प्रभुः ।। इति ।

## भावदीपः

।। **तत्रेति** ।। सूत्रेष्वति वा अत्युपादेयत्वे सतीति वाऽर्थः । इदमित्युक्त्या परोक्तं हेयमिति सूचितम् । तद्विवृतं चन्द्रिकायाम् । अधिकरणानां हि सङ्गतिस्तावद् द्वेधा । अन्तर्भावरूपा आनन्तर्यरूपा चेति । तत्राऽऽद्या शास्त्रान्तर्भावाध्यायान्तर्भावपादान्तर्भावभेदेन त्रेधा । द्वितीयाऽपि आक्षेपिकी

(भावदीपः)

आतिदेशिकी औपोद्घातिकी आपवादिकीत्यादिरूपेणानेकविधा । एवमनेकविधाऽऽनन्तर्यरूपा सङ्गतिः । पूर्वाधिकरणेनोत्तराधिकरणस्येव पूर्वाधिकरणविषयवाक्येनोत्तराधिकरणविषयवाक्यस्याप्यस्ति सा श्रुतिसङ्गतिरित्युच्यते । उक्तं हि चन्द्रिकायाम्—

शास्त्रेऽध्याये तथा पादे श्रुत्याऽधिकरणेन च ।
सङ्गतिः पञ्चधा प्रोक्ता सर्वाधिकरणेष्वपि ॥

इत्यादि । तथा विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरः ॥ प्रयोजनं च पञ्चैतांस्तन्त्रेऽधिकरणं विदुरित्युक्तेर्विषयादिकं च वाच्यम् । तत् परैरन्यथा वर्णितमिति तद्व्युदासायेदं सङ्गत्यादीति प्रतिज्ञातं विवृण्वन् सङ्गतिं तावद् व्यनक्ति ॥ **अत्रेति** ॥ आद्याधिकरण इत्यर्थः । तद्विजिज्ञासस्वेति श्रुत्युक्ताया जिज्ञासायास्सविषयत्वादिन्यायबलेन कर्तव्यतासमर्थनेन ब्रह्मविचारपरे शास्त्रेऽन्तर्भावरूपा सङ्गतिरित्यर्थः । उक्तं च सुधायाम् अत एवाऽस्य न शास्त्रबहिर्भाव इति ॥ व्यर्थमितत्समर्थनमत्रेत्यत आह ॥ **अन्यथेति** ॥ न्यायानुसन्धानादिरूपजिज्ञासाया अकर्तव्यत्वे न्यायग्रथनात्मकसूत्रसन्दर्भरूपशास्त्रस्यानारम्भणीयत्वं स्यात् । न्यायानुसन्धानार्थत्वात्तस्य । तदारम्भणीयं चावश्यम् । अन्यथा परमपुरुषार्थहेतुश्रुत्यर्थनिर्णयानापत्तेरिति भावः । चन्द्रिकायां तु ब्रह्मविचारपरशास्त्रकर्तव्यतोपयोगितया जिज्ञासाकर्तव्यतासाधनादस्ति शास्त्रादिनौपोद्घातिकी सङ्गतिः । अन्यथा शास्त्रानारम्भापत्तेरित्यर्थ उक्तः ॥ **एतदिति** ॥ जिज्ञासाकर्तव्यत्वमित्यर्थः ॥ **अध्यायेति** ॥ अध्यायपादयोरन्तर्भाव इत्यर्थः ॥ पञ्चाधिकरण्याः पदानां हरौ शक्तितात्पर्यावधारणरूपसमन्वयाप्रतिपादकत्वादिति भावः । सङ्गती इति वक्तव्ये सङ्गतिस्त्वित्येकवचनकृत्यं चन्द्रिकायां व्यक्तम् । तर्हि पञ्चाधिकरण्याः पूर्वं निवेशे किं बीजमित्यत आह ॥ **तत इति** ॥ पञ्चाधिकरण्यास्समन्वयविशेषाप्रतिपादकत्वेनाध्यायान्तर्भावासम्भवेऽपि जिज्ञासाकर्तव्यतायाः प्रथमप्रतिपाद्यत्वात्तत्प्रतिपादनायाद्यसूत्रे ब्रह्मशब्देन जीवादिव्यावर्तकगुणपूर्तिलक्षणत्वेन सूचयित्वा, "जन्माद्यस्येति सूत्रेण गुणसर्वस्वसिद्धये । ब्रह्मणो लक्षणं प्रोक्तं शास्त्रमूलं यतस्ततः ॥" इत्यनुव्याख्यानोक्तदिशा द्वितीये तस्य गुणपूर्तिवाचितासिद्धये जीवपरतानिरासाय विश्वकारणतां जिज्ञास्यब्रह्मलक्षणत्वेनोक्त्वा, तृतीये पूर्तिकारणतयोरतिव्याप्तिनिरासाय तत्र शास्त्रं प्रमाणीकृत्य चतुर्थे तयोर्विष्ण्वेकनिष्ठत्वाय शास्त्रस्यान्यपरतां निषिध्य सर्वशास्त्रस्यसर्वशब्दप्रवृत्तिनिमित्तसर्वगुणपूर्तिसिद्धये वचनवृत्त्या सर्वशास्त्रतात्पर्यविषयतायां चोक्तायां संशब्दार्थस्य वाच्यत्वस्य कात्स्न्यर्थस्य च समर्थनार्थं पञ्चममिति पञ्चाधिकरण्या बद्धक्रमत्वात्तदनन्तरमेव समन्वये आकाङ्क्षोदयात्तदाकाङ्क्षोत्थापकतया समन्वयाध्यायस्य तदादिनामपादस्य

(भावदीपः)

चादौ निवेशो युक्त इत्यर्थः ।। **नाधिकरणेति** ।। पूर्वाधिकरणतद्विषयवाक्याभ्यां सङ्गतिर्नेत्यर्थः । उत्तराधिकरणस्य पूर्वाधिकरणेन सङ्गतेः पूर्वाधिकरणविषयवाक्यभूतश्रुतिसङ्गत्या अविनाभाव एव न त्वभेद इति सा पृथगिति सूचनाय द्विवचनप्रयोगः ।

एवं सङ्गतिमुक्त्वा विषयाद्याह **प्रारिप्सिततयेत्यादिना** ।। **ब्रह्मजिज्ञासेति** ।। ब्रह्मजिज्ञासा नाम ब्रह्मज्ञानाय सर्ववेदादिविषया वक्ष्यमाणदिशा श्रवणमनननिदिध्यासनरूपा वा सुधारीत्या वेदार्थनिर्णायकन्यायानुसन्धानापरपर्यायमननमात्ररूपा वा चित्तवृत्तिरित्यर्थः । अन्यथेत्यादि पूर्ववाक्योक्त-जिज्ञासाविषयकचिन्तासाफल्यद्योतनाय शास्त्रे प्रवर्तनीयेत्युक्तम् ।। जन्माद्यस्येत्यादौ शास्त्र इत्यर्थः । क्वास्ति शास्त्रमित्यत उक्तं प्रारिप्सिततया चित्तसङ्गतेति । एतेन शास्त्रमारभ्यं वा न वेति प्रधानसन्देहः । तदर्थं ब्रह्मजिज्ञासा कर्तव्या न वेति सन्देह इति सूचितम् । यद्यप्ययमत्र सन्देहो न ग्रन्थकर्तुः सर्वज्ञत्वात्तस्य । नापि परस्य शास्त्रस्यैवानुपलब्ध्या जिज्ञासाया अनुपस्थितेः । तथापि शास्त्रप्रणयनानन्तरं एतत्सूत्राभाव एतद् दृष्ट्वा परस्सन्दिहीतेति तदीयसन्देहप्रदर्शनमेतदिति सुधायामेव व्यक्तम् । वादिविप्रतिपत्तिरेव विचाराङ्गसन्देहबीजमित्यत्र हेत्वभावाद्विप्रतिपत्तेरपि साधारणधर्म एवान्तर्भावस्य पद्धत्यादावुक्तत्वात्साधारणधर्ममेव सन्देहबीजमाह ।। **उभयेति** ।। लोके निर्विषयादिक्रियाया आकाशरोमन्थनादेरकर्तव्यत्वदृष्टिः सविषयादिक्रियाया अन्नभोजनादेः कर्तव्यत्वदृष्टिरित्यर्थः । अत्र तदर्थचिन्तासूत्रक्रमविशेषचर्चादिकं चन्द्रिकातोऽवसेयम् । सङ्गम्यन्ते गुरोर्गिर इति स्वप्रतिज्ञामनुरुध्य सौत्रब्रह्मपदव्यावर्त्योक्तिपरं जीवव्यतिरिक्तेश्वराभावात्तस्य च स्वप्रकाशत्वान्न जिज्ञास्यतेति न्यायविवरणं विवृण्वन् पूर्वपक्षमाह ।। **न कर्तव्येति** ।। **अधिकारीति** ।। यद्यपि न्यायविवरणे जीवव्यतिरिक्तेत्यादिना विषयशून्यत्वमेको हेतुरुक्तो भाति न तु हेतुचतुष्टयमपि । तथापि विषयशून्यत्वोक्त्यैव तदन्यत्रितय-शून्यत्वमपि लभ्यत इति भावेन विषयशून्यत्वं तावद्वक्ति ।। **न तावद् ब्रह्म विषय इति** ।। ब्रह्मरूपो विषयस्तावन्नास्ति । प्रयोजनादि च नास्तीति वक्ष्याम इति तावच्छब्दः । श्रुतौ ब्रह्मेति श्रवणा-न्निष्कृष्योक्तिः । असंदिग्धत्वादित्येतदेव व्यनक्ति ।। प्रमाणाभावेनेत्यादिना स्वप्रकाशत्वादित्यन्तेन ।।

कर्मकाण्डस्य कर्मपरत्वाद्वेदान्तानां च जीवचैतन्यपरत्वात्प्रत्यक्षानुमानयोश्चाप्रसक्तेरिति भावः । ब्रह्मणोऽभावादित्येव पूर्तौ जीवेत्याद्युक्तिः वेदान्तानां निर्विषयत्वशङ्काव्युदासाय । उक्तं च सुधायाम् । ईश्वरविषया जिज्ञासा भविष्यतीति चेत् तस्यैवाभावात् । न चैवं ईश्वरादिपदानामानर्थक्येनापदत्वप्रसङ्ग इति वाच्यम् । तेषां कथञ्चिज्जीवविषयत्वादित्यादि । तर्हि जीव एवास्तु जिज्ञासाविषय इत्यत आह ।।

(भावदीपः)

**जीवस्य चेति** ।। जडं तु न सत्यमिति भावः । अत एव जीवस्य स्वप्रकाशत्वेऽपि देहादिभिन्नताणुत्वमहत्त्वज्ञानानन्दात्मकत्वकर्तृत्वादिना सन्दिग्धत्वात्तेन रूपेणास्तु जिज्ञासाविषयत्वम् । अन्यथा सिद्धान्तेऽपि ज्ञोऽत एवेत्यारभ्य आपादसमाप्ति द्वितीये जीवविचारो न स्यादिति प्रत्युक्तम् । अभेदवादिनः पूर्वपक्षिणो मते जीवचैतन्यादन्यस्य सर्वस्यासत्वेन विषयत्वायोगात् ।। **न चेति** ।। यद्यपि स्वप्रकाशत्वासमर्थनेऽपि मानसानुभवादिना सिद्धत्वेऽपि प्रकृतसिद्धिरस्ति, स्वप्रकाशतया वा स्वप्रकाशज्ञानाश्रयतया वा मानसप्रत्यक्षवेद्यतया वा सिद्धत्वेनेति सुधोक्तेः । तथापि न्यायविवरणोक्तवास्तवप्रमेयसमर्थनमेतत् । सम्भम्यन्ते गुरोर्गिर इति तद्विवरणस्यापि प्रतिज्ञानात् । अहमित्यनुभवः स्वप्रकाशरूपो न चेत् तत्प्रकाशः किं तार्किकरीत्या मानसानुभवेन किं वा प्राभाकररीत्या स्वप्रकाशज्ञानाश्रयतया । आद्यमाशङ्क्याह ।। **न चायमिति** ।। स्वात्मन इति ।। लाघवात्स्वात्मन एव तदस्त्वित्यर्थः ।। **जिज्ञासायामिति** ।। जिज्ञासा च न सर्वत्रेति नानवस्थेति भावः ।। **अनुभवेति** ।। ज्ञानस्य सुखदुःखादिवज्जिज्ञासाभावेऽप्यनुभवेन तद्विरोधात् । अन्यथा जिज्ञासाया ज्ञानाख्यधर्मिज्ञानसाध्यत्वानुभवादनवस्था स्यात् । अन्यथाऽनुभवविरोधादित्यर्थः । ननु न ज्ञानमात्रमजिज्ञासितग्राह्यम् । येनानवस्था । नापि जिज्ञासितग्राह्यम् । येनानुभवविरोधः । किन्तु किञ्चिज्ज्ञानं कदापि न ज्ञायत एवेति न कोऽपि दोष इत्यत आह ।। **न हीति** ।। न चेष्टापत्तिः । असत्वापादादिति भावः । द्वितीयं शङ्कते ।। **न चेति** ।। **औत्तरिकेति** ।। सुप्तोत्थितस्यैतावन्तं कालं सुखमहमस्वाप्समिति औत्तरिकी उत्तरकालीना अनुस्मृतिस्तावदस्ति । सा च पूर्वानुभवजन्येति सुप्तावप्यनुभवः कश्चन सिध्यति । स च स्वप्रकाशात्मरूपपक्ष एवोपपद्यते । न संविदाश्रयतया आत्मप्रकाशे । कुत इत्यत आह ।। **न हीति** ।। गृहीत एव प्राणो भवति गृहीता वाक् गृहीतं चक्षुरित्यादिकाण्वश्रुत्या सर्वेन्द्रियाणामुपरमादिति भावः । आत्मातिरिक्तेत्युक्त्या आत्मस्वरूपत्वेनैव सौषुप्तिकानुभवस्समाधेय इति सूचयति । संविदित्युपलक्षणम् । सुखमपि ध्येयम् । पुंस्त्वादिवत्वस्य सतोऽभिव्यक्तियोगादित्यत्र द्वितीये । बलमानन्द ओजश्च सहो ज्ञानमनाकुलम् । स्वरूपाण्येव जीवस्येत्यादिवचनादिना आनन्दज्ञानादिस्वरूपत्वस्यात्मन उपपादयिष्यमाणत्वात् । वक्ष्यमाणोपयोगित्वादपि स्वप्रकाशत्वस्यात्र प्रपञ्चनमिति भावः । नायं सुप्तावनुभूतस्य परामर्शः । किन्तु तदैवातीतं सुप्तिकालमनुमानेनानुभूय तद्द्वारेण दुःखाभावोऽनुमीयत इति चेन्न । अस्यार्थस्यातीतानागतौ कालावित्यादावानुमानिकपादीयानुव्याख्यानसुधयोर्निरासात् । अत्रैकं साक्षिज्ञानमेवातीतविषयकत्वमात्रेणानुस्मृतिरुच्यते । आजन्ममरणं स्मृत्वा मुक्ता हर्षमवाप्नुयुरिति छान्दोग्यभाष्योक्तस्मृतौ मुक्तस्वरूपज्ञाने स्मृतिशब्दप्रयोगात् । नित्ये स्वरूपानुभवरूपे ज्ञाने सत्येव

(भावदीपः)

तज्जन्यसंस्कारजन्यस्मृतिकल्पनायोगाच्च । मनोनुत्पन्नानुभवजनितसंस्कारसहकृतस्य मनसः तद्विषयस्मृतिजनकत्वेऽतिप्रसङ्गाच्च । अत एव "भक्तानां स्मरणं विष्णोर्नित्यज्ञप्तिस्वरूपतः । अनुग्रहोन्मुखत्वं तु नैवान्यत्कचिदिष्यत" इतीशावास्यभाष्यटीकायां "स्मरणं ह्यनुभवजन्यसंस्कारसहकृतेन मनसा जायते । ईश्वरश्च नित्यज्ञानस्वरूप इति तस्य स्मरणासम्भवात् लक्षणाश्रयणमिति भाव" इत्युक्तमित्याहुः । अन्ये तु सौषुप्तिकस्वरूपज्ञानाहितसंस्कारसहकृतेन स्वरूपेन्द्रियेणानुभूतविषयकतया स्वरूपज्ञानस्य व्यज्यमानत्वादनुस्मृतित्वमित्याहुः । अपरे तु चिन्मात्राणीन्द्रियाण्याहुर्मुक्तानामन्यदैव तु । तान्येव जडयुक्तानि ह्यभिन्नानि स्वरूपत इति द्वितीयस्कन्धतात्पर्योक्त्या स्वरूपेन्द्रियाभिव्यक्तसाक्ष्यनुभवजन्यसंस्कारसहकृतं स्वरूपेन्द्रियमिश्रं बाह्यं मन एवेमां स्मृतिं जनयतीत्याहुः । अत्र सुषुप्तावात्मातिरिक्तज्ञानाभावेनौत्तरिकानुस्मृतिर्न स्यात् इत्यापादनीये औत्तरिकेत्यादिविपरीतापादनं तु संविदात्मकत्वादिति वक्ष्यमाणहेतोरसिद्धिनिरासार्थम् ।

**।। न संविदाश्रयतयेति ।।** यथा संविद इति दृष्टान्तो योज्यः । उक्तं पूर्वपक्षं न्यायविवरणारूढं दर्शयन्नर्थतस्तदनुवादपूर्वमुक्तमविषयत्वमुपसंहरति **।। अत इति ।।** जीवस्य स्वप्रकाशत्वे औत्तरिकानुस्मृत्यादिरूपसाधकमानभावेन जीवान्यब्रह्मणोऽभावाच्चेत्यर्थः । एतेन न्यायविवरणस्थस्वप्रकाशत्वहेतुरसन्दिग्धत्वहेतूपपादनद्वारा जिज्ञास्यत्वाभावे हेतुर्न साक्षादित्युक्तं भवति **।। न विषयत्वमिति ।।** ब्रह्मणो जिज्ञासाविषयत्वं न सम्भवतीत्यर्थः । सन्दिग्धे न्यायः प्रवर्तत इत्युक्तेर्जिज्ञासायाश्च न्यायानुसन्धानात्मकत्वादिति भावः । यत्त्वहमिति बुद्धाववेद्यं निर्विशेषं जीवचैतन्यं वेदान्तविषयोऽस्त्विति तत्तु परमतनिरासप्रस्तावे चन्द्रिकायां निरस्तम् **।। न चेति ।।** प्रयोजनं चेति चान्वयः । सा हि मोक्षाख्यं प्रयोजनं जनयन्ती ज्ञानद्वारैवेति वाच्यम् । अहमिति जीवरूपब्रह्मज्ञाने सत्यपि फलानुभवानुपलम्भान्न मोक्षाख्यं मुख्यप्रयोजनं ज्ञानरूपमवान्तरप्रयोजनं च नास्ति । जीवरूपब्रह्मज्ञानस्य सिद्धत्वादिति भावः **।। विषयेति ।।** फलोद्देशेन विषयं जिज्ञासमानस्यैवाधिकारित्वादिति भावः **।। अत एवेति ।।** त्रितयाभावादेवेत्यर्थः **।। अत इति ।।** विषयाद्यभावादित्यर्थः । तद्विजिज्ञासस्वेत्यादिविधयस्त्वप्रमाणमिति भावः । पूर्वपक्षफलमाह **।। नैतदिति ।।** अत्राद्य इतिशब्दो हेतौ अन्त्यस्समाप्तौ । अयं च सौत्रब्रह्मपदव्यावर्त्यपूर्वपक्षो न्यायविवरणोक्तः प्रपञ्चितः । न तु सौत्राथातःपदव्यावर्त्यावपि । तौ तु यथाक्रमं अथशब्दोऽधिकारानन्तर्यार्थोऽतःशब्दो हेत्वर्थ इति सङ्ग्रहव्यावर्त्योक्तिप्रस्तावे भक्तिमान्परमे विष्णौ कर्मणा त्वधमः प्रोक्त इति विस्तरव्यावर्त्योक्तिप्रस्तावे च वक्ष्यते । उक्तप्रयोजनाधिकारिसंबन्धाभावाच्च

(भावदीपः)

विषयाभावेनैव प्राप्ता इति जीवान्यविषयसमर्थनपरेण ब्रह्मशब्देनैव निरसिष्यन्ते । अत एव वक्ष्यति ग्रन्थकारस्सिद्धान्तोक्त्यवसरे जीवस्य स्वप्रकाशत्वेऽपि तद्भिन्नब्रह्मणस्सन्दिग्धत्वाद्विषयत्व-सिद्धेर्मोक्षाख्यप्रयोजनसद्भावात्तत एवाधिकार्यादिसम्भवादिति । उक्तं चन्द्रिकायाम् । अहमिति ब्रह्मणि ज्ञायमानेऽपि मोक्षानुपलम्भान्निष्प्रयोजनत्वमिति शङ्का तु विषयसूचकेन ब्रह्मपदेनैव निरस्तेति । अतो ब्रह्मपदव्यावर्त्य एवायं पूर्वपक्षो न त्वथातःशब्दव्यावर्त्योऽपीति ज्ञेयम् ॥

॥ **ग्रन्थादौ मङ्गलाचरणस्येति** ॥ तदावश्यकत्वं चाविघ्नपरिसमाप्त्यादिहेतुत्वादिति बोध्यम् । विस्तृतमेतत्सुधायाम् ॥ **तत्परतयेति** ॥ तत्फलतयेत्यर्थः । अथशब्दोच्चारणादेर्मङ्गलस्याशब्दार्थत्वेन तत्परत्वायोगात् । मङ्गलप्रयोजनक इति सुधाग्रन्थाच्च । तत्त्वप्रदीपे तु अथशब्दः श्रवणकीर्तनाभ्यां मङ्गलफलकः विष्णोः परममङ्गलस्य वाचकत्वेनातिप्रियत्वादिति मङ्गलफलकत्वं मङ्गलरूपविष्ण्वर्थकत्वं चोक्तम् । तत्फलतयेत्यपि पाठः । अथपदव्यावर्त्यं दर्शयन्नेव भाष्यमवतारयति ॥ **मुक्त्यर्थिमात्रस्येति** ॥ मुक्तियोग्यत्वशान्त्यादिमत्त्वस्यापि अधिकारत्वेन वक्ष्यमाणत्वात् मुक्तियोग्यत्वशान्त्यादिमत्त्वरूपाधिकारा-नन्तर्यवाचिना सौत्राथशब्देन मुक्त्यर्थिमात्रस्याधिकारनिरास इति भावः । ननु मुक्त्यर्थिमात्रस्य ब्रह्मजिज्ञासायां प्रवृत्तावपि साधिकारित्वेन ब्रह्मजिज्ञासाकर्तव्यत्वप्राप्त्या मुक्तियोग्यत्वभक्तिपूर्वकाध्ययन-शमदमादिवैराग्यसंपत्तिरूपाधिकारार्पकेणाप्यथपदेन कथं जिज्ञासाकर्तव्यत्वोपपादनं तदुपपादकत्वेनैव सूत्र अथातोब्रह्मपदानामुपादानादिति चेत्सत्यम् । अथपदाभावेऽपि विषयार्पकब्रह्मपदेन जीवान्यविषय-सिध्यैव मुमुक्षुमात्रस्याधिकारप्राप्तौ शूद्रादेरपि प्राप्त्या अपशूद्रनये वक्ष्यमाणश्रवणाध्ययनादिप्रतिषेधक-प्रमाणविरोधेन मुमुक्षुमात्रमधिकारिणमुपाददाना जिज्ञासा न कर्तव्यैव स्यात् । अध्ययनादिमत्त्वरूपाधि-कारार्पकाथशब्दे तु सति अपशूद्रादिकमधिकारी सिद्ध इति विरोधाभावाज्जिज्ञासा कर्तव्यैव स्यादिति भावः ॥ **योग्यतयेति** ॥ आनन्तर्यप्रतियोगित्वसामर्थ्येनेत्यर्थः । सा च योग्यताधिकारस्यैव नान्यस्येत्येतद्विवृतं न तावदध्ययनमात्रादित्यादिना चन्द्रिकायाम् । प्रपञ्चितं च गुर्वादैर्न्यायमौक्तिकमालायाम् ॥ **प्रयोजनेति** ॥ मोक्षहेतोर्ज्ञानस्य विष्णुप्रसादस्य वा कर्मणा ज्ञानमातनोति तत्कर्म हरितोषं यदित्युक्त्या कर्मजन्यत्व-प्रयुक्तनिष्प्रयोजनत्वशङ्केत्यर्थः । न तु ज्ञायमानेऽपि ब्रह्मणीत्युक्तनिष्प्रयोजनत्वशङ्कानिवर्तकतयेति भ्रमितव्यम् । तस्य विषयार्पकब्रह्मपदेनैव निरासात् ।

॥ **नन्विति** ॥ विषयाधिकारिजिज्ञासाफलानामध्यायचतुष्टये निरूपयिष्यमाणक्रमेणाद्यसूत्रे निर्देशे कर्तव्येऽपीत्येतावद्वाक्यं नन्वित्यनन्तरं योज्यम् ॥ **मङ्गलोक्त्यादेरिति** ॥ विघ्ननिवर्तकशब्दोच्चारणादेरित्यर्थः ।

(भावदीपः)

क्वचिन्मङ्गलाचरणादेरिति पाठः । अत्रेत्यनुवादेन प्रथमप्रयोज्यत्व इति व्याख्यानम् । तदित्यस्य परामृश्यं किमित्यतस्तत्प्रस्तावयति ।। **नियामकेनेति** ।। **अखिलान्यपीति** ।। अथातो धर्मजिज्ञासा अथातो दैवीमीमांसा अथातो दर्शपूर्णमासावित्यादिसम्भाविताखिलानीत्यर्थः । तेन न पाणिनीयादौ व्यभिचारः शङ्क्यः । अवश्यवक्तव्यार्थत्वस्य तदभावस्य च लोके शब्दान्तरेषु दर्शनात् अथशब्दे तत्सन्देहेन पृच्छतीत्याद्युक्तम् । द्वितीये कथमाक्षेप इत्यत आह ।। **शब्दान्तरस्येति** ।। कथंशब्दमाक्षेपपरतया व्याख्याय पुनः प्रश्नपरतयापि व्याचष्टे ।। **तृतीयेऽपीति** ।। पूर्ववत्प्रश्नहेतुः संशयः उपपाद्यः । पर्यवसितार्थमाह ।। **तत्प्रसादादिति** ।। जिज्ञासादि कार्यमिति शेषोक्तिः । प्रथमं निस्सृतत्वे प्राथम्यं कुत इत्यतो मध्ये शेषमाह ।। **अतः स्वरूपोत्तमाविति** ।। ननु ॐ अथशब्दौ स्वरूपोत्तमौ हरेः प्रथमं निस्सृतत्वात् । यः शब्दः प्रथमं हरेर्निःसृतः स उत्तम इति व्याप्तौ दृष्टान्तो नेत्यत आह ।। **यत्स्वजाताविति** ।। **इति न्याय इति** ।। सामान्यन्याय इत्यर्थः । यथा देवेषु चतुर्मुख इति दृष्टान्त-सम्भवात् न तु विशिष्येति भावः । अत इत्यस्य अतःशब्दपरत्वं हेतुपरत्वं तृतीय उदाहृत इत्यनयोरावृत्तिं प्रायमिकावित्यस्य वचनव्यत्ययेनानुषङ्गं चोपेत्याह ।। **अतश्चेति** ।। **अनुवाद इति** ।। तेन हेत्वर्थ इत्यनेन न पुनरुक्तिरिति भावः । नन्वतःशब्दस्य तृतीयत्वे पूर्वमुच्चार्या इति त्रयाणां पूर्वोच्चार्यत्वं च सति अथातःशब्दपूर्वाणीत्युपक्रमे अथातःशब्दयोरित्युपसंहारे च कथं द्वयोरेवोक्तिः । तावेवादावित्यवधारणं च । सत्यम् । आ अध्यायसमाप्ति प्रतिसूत्रमादावनुषङ्गायासंहिततयोच्चार्यमाणत्वेन वैलक्षण्यात् । सर्वत्रानुगतत्वेन पृथगोक्रियतेऽखिलैरित्यनुभाष्योक्तेः । अथातः शब्दवदवश्यवक्तव्यार्थत्वाभावात् विशेषविवक्षया तयोः प्रश्नादीत्यदोषः । अत एव भाष्ये अथादेरेव व्याख्यानम् ।। **सर्ववागिति** ।। अकारो वै सर्वावागित्यत्र अन्येऽपि शब्दाः सर्वेऽपि ह्यकारार्थाभिधायिन इति । तस्मादकार एवायं सर्ववागात्मकः श्रुत इति तस्मात्सर्वगुणान्विष्णोरकारो वक्ति यत्प्रभोः । तद्व्यक्तयोऽपि शब्दा ये सर्वे विष्णुगुणब्रुवा इत्याद्यैतरेयभाष्योक्तदिशा सर्ववाचां गुणपूर्णत्वरूपो योऽर्थस्तदभिधायकतयेति वा सर्वं पूर्णमिहोच्यत इत्यादेः सर्वेति या वाक् तदर्थपूर्णताभिधायकतयेति वा व्याख्यातत्वात्सर्ववाचां सर्ववागात्मता भवेदिति तत्त्वप्रदीपोक्तस्मृत्या वा व्याख्यानव्याख्येयभावेन सर्ववागात्मकत्वमुपेत्य सर्ववागर्थेत्युक्तम् । भाष्ये सर्ववागात्मेति हेतुगर्भम् । अर्थैक्यादैक्योक्तिरिति भावः । प्राणपदस्य वायुविष्ण्वर्थत्वमुपेत्याह ।। **प्राणेत्यादि** ।। **महत इति** ।। अन्तरा विज्ञानमनसी इत्यत्र विज्ञानतत्वं महतस्समुत्पन्नं चतुर्मुखादिति भाष्योक्तस्मृतौ यथा महत्तत्वाभिमानिचतुर्मुखादित्यर्थे महतश्चतुर्मुखादिति प्रयोगः तथेत्यर्थः ।। **अयं वै लोक इति** ।। महन्नाम यासु ऋक्षु विद्यते ता महानाम्न्यः । परस्य ब्रह्मणो यन्नामेन्द्रादिकं

(भावदीपः)

तन्महार्थत्वान्महदिति कर्मनिर्णयोक्तदिशा प्रथमा महानाम्नीत्युच्यमाना विदा मघवन्नित्यादिका ऋगित्यर्थः । ऐतरेयोपनिषद्गतं विदा मघवन्निति आभिष्ट्वमभिष्टिभिरिति राय इति च ऋक्त्रयमिति यावत् । पृथिवीस्थविष्णुवाचकमित्यर्थः ।। तदुक्तं कर्मनिर्णये त्यृचविभागेन तिस्रो महानाम्न्य इति । तथा प्रथमा या महानाम्नी तद्वाच्यः पार्थिवो हरिरिति च ।। **उपसंहार इति** ।। तेन न पुनरुक्तिरिति भावः ।। तावेवादाविति भाष्ये संहिततयेति योज्यम् । ॐकारं त्वसंहिततयेति भावः ।। यद्वा स्रवत्यनोंकृतं ब्रह्म परस्ताच्च विशीर्यत इत्यर्थवादबलादेवोंकारस्य प्राप्त्या सूत्रकृतः प्रयत्नानपेक्षत्वात्तदारंभापेक्षया तावेवादावित्युक्तिरित्यदोषः ।

## अभिनवचन्द्रिका

**सङ्गत्यादीति** ।। आदिशब्देन विषयपरिग्रहः । **शास्त्रसङ्गतिरिति** ।। उपजीव्योपजीवकभावलक्षणा सङ्गतिरित्यर्थः । 'शास्त्रस्याऽनारम्भणीयत्वप्रसङ्ग'दित्यनेन टीकाकारैरेवोपजीव्योपजीवकभावसङ्गतिरिति स्वाभिप्रायाविष्करणात् । अध्यायपादसङ्गतिं सूचयति – **अध्यायपादसङ्गतिस्त्विति** ।। आनन्दमयाधिकरणमारभ्यैवाध्यायपादसङ्गतिर्गवेषणीया । ततः प्राक् न गवेषणीयेति भावः । सङ्गतिसद्भावे कुतो न गवेषणीयेत्यत आह – **ततोऽर्वाक्तनानामिति** ।। पीठिकाऽऽवरणस्योपोद्घातरूपत्वेन अध्यायपादाभ्यामौपोद्घातकी सङ्गतिः सिद्धेति न गवेषणीयेति भावः । अन्यथा – अत्राध्यायपादसङ्गत्यभावप्रतिपादनाय आनन्दमयाधिकरणमारभ्यैवाऽस्तीति ब्रूयात् । आनन्दमयाधिकरण (१-६-अ.) मारभ्याऽवश्यं सङ्गतिर्गवेषणीया । तत्र विवक्षिताया अन्तर्भावलक्षणसङ्गतेः । 'समस्तेनाऽध्यायेनेति, प्रायेणान्यत्र प्रसिद्धानामिति 'प्रायेणे'ति पदाभ्यां भाष्यकारेणैव क्वचिदभावस्योक्तत्वेन विशेषानुक्त्या सर्वत्रापि अन्तर्भावशङ्काप्रसङ्गात् । यद्यपि – अध्यायपादाभ्यामिव शास्त्रेणापि औपोद्घातकी सङ्गतिरस्तीति शास्त्रादिसङ्गतिरिति वक्तव्यम्, तथापि अध्यायपादाभ्यामौपोद्घातकी सङ्गतिः पञ्चाधिकरणीसाधारणी । शास्त्रसङ्गतिस्तु जन्माधिकरणमारभ्य अन्तर्भावलक्षणेति विशेषसूचनाय शास्त्रसङ्गतिं पृथगभिधाय अध्यायपादसङ्गतिः सूचिता । ब्रह्मविषयकविषयकत्वेन साक्षाद्ब्रह्मतल्लक्षणाद्यविषयकत्वेन मुख्यान्तर्भावाभावेऽपि ब्रह्मसम्बन्धिजिज्ञासाकर्तव्यत्वस्य न्यायेन व्युत्पादकत्वात्, अस्याधिकरणस्य शास्त्रान्तर्भावोऽपि नानिष्टः । अत एव – एवमेवाऽभिप्रायं मनसि निधाय सुधायाम् – अस्याऽधिकरणस्य शास्त्रान्तर्भाव इति वक्तव्ये 'अत एवास्य सूत्रस्य न शास्त्रबहिर्भाव' इत्युक्तम् ।

**(अभिनवचन्द्रिका)**

ननु अध्यायपादपीठत्वम् अध्यायपादोपोद्घातत्वमुक्तम् । तदयुक्तं द्वितीयाध्यायतो व्यावृत्तस्य प्रथमाध्यायमात्रासाधारणस्योपोद्घातत्वस्य, तथा द्वितीयादिपादतो व्यावृत्तस्य प्रथमपादमात्रासाधारणस्योपोद्घातत्वस्य भावेन शास्त्रोपोद्घातत्वस्यैव सत्त्वेन शास्त्रपीठत्वादिति वक्तव्यम्, न तु अध्यायपादपीठत्वादिति इति चेत् – न ब्रूमो वयं शास्त्राध्यायान्तरपादान्तरसङ्गतिर्नास्तीति । किं नाम एतदध्यायपादाभ्यामौपोद्घातकी सङ्गतिरस्तीति, स्मृत्यधिकरणस्य (ब्र.सू.२-१-१) युक्तिसमयद्विविधश्रुतिन्यायोपेतश्रुतिविरोधपरिहारात्मकत्वेन सर्वपादसङ्गतत्वेऽपि युक्तिविरोधपरिहारकत्वस्यापि भावेन प्रथमपादान्तर्भावाऽभिधानवत्, आनन्दमयनाम्नो नामलिङ्गात्मकत्वेऽपि नामात्मकत्वेन प्रथमपादान्तर्भावाऽभिधानवच्च, एतस्यापि प्रथमाध्यायप्रथमपादसङ्गतत्वाभिधानोपपत्तेः । सर्वाध्यायसर्वपादपीठत्वेऽपि प्रथमाध्यायप्रथमपादपीठत्वोक्तिस्तु प्रकृतोपयोगित्वात् इति द्रष्टव्यम् । अथवा अध्यायपादपीठत्वादित्यनेन न प्रथमाध्यायप्रथमपादपीठत्वमुक्तम्, किं नाम सर्वाध्यायसर्वपादपीठत्वम् । 'आनन्दमयाधिकरणमारभ्ये'त्यनेन तस्यैव प्रकृतत्वात् न हि आरभ्यपदगृहीतद्वितीयाध्यायाधिकरणानां प्रथमाध्यायप्रथमपादसङ्गतिरस्ति, किन्तु– तत्तदध्यायपादसङ्गतिः । अतः अध्यायपादशब्दाभ्यां सर्वाध्यायपादा एव विवक्षिता इति । यद्वा – ननु अस्याधिकरणस्याध्यायांतर्भावो भाष्यकृतोऽभिमतः । तथा हि – 'विष्णुरेव विजिज्ञास्य' इति अणुभाष्ये 'जिज्ञास्योऽयं विधीयत' इत्यनुव्याख्याने च जिज्ञास्यत्वरूपलिङ्गसमन्वयस्योक्तत्वात्, न्यायविवरणे 'जीवव्यतिरिक्तेश्वराभावात् तस्य स्वप्रकाशत्वेन स्वतः सिद्धत्वान्न जिज्ञास्यते'त्याक्षेपाच्च शास्त्राध्यायसङ्गती स्त इति वक्तव्यम् । कथं शास्त्रसङ्गतिमात्रकथनमित्यत आह– **अध्यायपादसङ्गतिस्त्विति** ।। पादग्रहणं दृष्टान्तार्थम् । यथा – पादसङ्गतिरानन्दमयाधिकरणमारभ्यैव साक्षादस्ति अध्यायसङ्गतिरपि तथैवेति गवेषणीया ज्ञातव्येत्यर्थः ।। यद्यस्याधिकरणस्याध्यायान्तर्भावो भाष्यकृदभिमतः स्यात् तर्हि इहैवाध्यायप्रतिपाद्यं ब्रूयात् न त्वानन्दमयाधिकरणोपक्रमे, पादप्रतिपाद्येन सहेति 'आनन्दमयाधिकरणमारभ्ये'त्यनेन सूचयामास अन्यथा – 'अध्यायपादसङ्गतिरिस्त्वह ने'त्येव ब्रूयात् । अणुभाष्याऽनुव्याख्याने तु आर्थिकार्थप्रदर्शनपरे । न्यायविवरणं तु आर्थिकार्थाक्षेपमुखेन जिज्ञासाक्षेपकं द्रष्टव्यम् ।। **नाधिकरणश्रुतिसङ्गती इति** । गवेषणीयेति प्रकृतमनुवर्तते । 'क प्रकृतमनुवर्तेत । 'आनन्दमयाधिकरणमारभ्ये'ति वाक्ये प्रकृतमिति गृहाण । ननु – तध्येकवचनान्तं प्रकृतं द्विवचनान्तेन चेहार्थः । न चानुवर्तमानं द्विवचनान्तमिति वाच्यम । अनुवर्तमानस्यापि द्विवचनान्तत्वायोगात् । 'न हि – गोधा अभिसर्पणाद्दहिर्भवती'ति चेत् – न, एकवचनान्तत्वेन प्रकृतमपि अर्थादिह द्विवचनान्तं गम्यत्यते, तदुक्तं महाभाष्ये – 'तस्य लोप' (पा.सू.१-३-९.) इति सूत्रे, 'तस्य ग्रहणं किमर्थम ?

(अभिनवचन्द्रिका)

इत्संज्ञकः प्रतिनिर्दिश्यते । नैतदस्ति प्रयोजनम् । प्रकृतमिदिति वर्तते क्व प्रकृतम् ? 'उपदेशेऽजनुनासिक इत्' (पा.सू.१-३-२) इति । तत्र प्रथमानिर्दिष्टम् । षष्ठीनिर्दिष्टेन चेहार्थः । अर्थात् विभक्तिपरिणामो भविष्यति । तद्यथा – उच्चानि देवदत्तस्य गृहाणि आमन्त्रयस्व एनम् देवदत्तमिति गम्यते । देवदत्तस्य गावोऽश्वा हिरण्यं च । आढ्योवैधेयः । देवदत्त इति गम्यत इति यदपि 'न हि गोधाऽभिसर्पणादहिर्भवती'ति तत् शब्दातिरिक्तद्रव्येष्वेव । शब्दस्तु येन येन विशेषेणाभिसम्बध्यते तस्य तस्य विशेषको भवतीति । ततश्च अधिकरणश्रुतिसङ्गती च न गवेषणीये इति व्यतिरेकनिश्चयादिति भावः ।

यच्चोक्तं कल्पतरुकारेण 'प्रथमसूत्रस्य समन्वयाद्यशेषविचारहेतुत्वात् शास्त्रप्रथमाध्यायप्रथमपादसङ्गतय' इति । तत्र – समन्वयाद्यशेषविचारहेतुत्वेन सर्वाध्यायसर्वपादसङ्गतत्वेन प्रथमाध्यायपादमात्रसङ्गत्युक्त्ययोगात् । अस्मदुक्तरीत्या अध्यायान्तरादिसङ्गतिमनिवार्य प्रकृतत्वात् प्रथमाध्यायादिसङ्गत्युक्तिरित्यङ्गीकारेऽपि शास्त्रसङ्गतिरित्युक्तमयुक्तमेव । समन्वयाद्यशेषविचारहेतुत्वस्य समन्वयाद्यध्यायातिरिक्तजन्माधिकरणादिचतुष्टयसाधारणशास्त्रसङ्गतिं प्रत्यप्रयोजकत्वात् । यदपि वाचस्पतिना श्रोतव्यादिवाक्यानां स्वार्थे समन्वयस्य तद्द्वारेण विचार्यमाणवेदान्तवाक्यानामपि ब्रह्मणि समन्वयस्य च निमित्तत्वात् आद्यं सूत्रं समन्वयेन सङ्गतमित्युक्तम् । तदपि न अस्याधिकरणस्य श्रोतव्यादिवाक्यानां स्वार्थे समन्वयप्रतिपादकत्वेन तन्निमित्तत्वोक्त्ययोगात् ।

**चन्द्रिकायां तु–** अध्यायपादसङ्गतिस्त्विति ।। यद्यपि = एतदधिकरणाभावे शास्त्रस्येव तदेकदेशयोरध्यायपादयोरपि आरम्भासम्भवः तथापि सिद्धे शास्त्रारम्भे पुनरध्यायाद्यारम्भाक्षेपस्य अनेनासमाधानात् । शास्त्रेणेव न ताभ्यामौपोद्घातकी सङ्गतिरित्यर्थः । यद्वा यथा 'तद्विजिज्ञासस्व'(तै.उ.३)-त्यादि ब्रह्मविचारविधायकवाक्यार्थनिर्णायकन्यायव्युत्पादकत्वात् ब्रह्मविचाररूपेण शास्त्रेण अन्तर्भावलक्षणा सङ्गतिः, न तथा अध्यायपादाभ्यां, समन्वयतद्विशेषाप्रतिपादकत्वादित्यर्थ' इत्युक्तम् । ननु– आद्यव्याख्यानं तावदयुक्तम् । तथा हि किमेतदधिकरणाभावे अध्यायपादयोर्य आरम्भासम्भवः सिद्धे शास्त्रारम्भे तस्यासमाधानम्, आहोस्वित् अन्यस्य । नाद्यः – अध्यायपादयोर्विषयाद्यभावप्रयुक्तारम्भासम्भवस्यातत्समर्थने सति अनिरासे कारणाभावात् । अन्यथा शास्त्रस्याप्यारम्भसिद्धिर्न स्यात् । न द्वितीयः – प्रकारान्तरेण अध्यायपादयोरनारम्भणीत्वप्रसक्त्यभावात् । भावे वा तदर्थमधिकरणान्तरं प्रणेयं स्यात् । अन्यथेदमप्यधिकरणं न प्रणेयं स्यात् । द्वितीयमपि व्याख्यानमनुपपन्नम् – तथा हि – 'तद्विजिज्ञासस्वे'ति वाक्यं यथा ब्रह्मविचारविधायकं तथा विचारविशेषसमन्वयादिविचारविधायकमपि

(अभिनवचन्द्रिका)

भवत्येव । अतः तदर्थनिर्णायकन्यायग्रथनात्मकस्याधिकरणस्य शास्त्रेणेव अध्यायपादाभ्यामपि अन्तर्भावो दुर्वारः । यदि साक्षात्समन्वयाप्रतिपादकत्वादध्यायाद्यसङ्गतिः तर्हि साक्षाद्ब्रह्मप्रतिपादकत्वाभावात् न शास्त्रसङ्गतिरिरिति चेत् – अत्रोच्यते । यत्तावत्पृष्टं 'किमेतदाधिकरणाभावेऽध्यायपादयोर्य आरम्भासम्भवः, सिद्धे शास्त्रारम्भे तस्याऽसमाधानं, आहोस्विदन्यस्य वे'ति तत्र द्वितीयपक्ष एवास्तु । न च 'प्रकारान्तरेणाऽनारम्भणीयत्वशङ्काभावः । भावे वा अधिकरणान्तरं प्रणेय'मिति उक्तमिति वाच्यम् । वाच्यत्वाऽभावप्रयुक्तसमन्वयासम्भवेन अध्यायाद्यारम्भाक्षेपप्राप्तेः तन्निरासाय ईक्षत्यधिकरण (१-१-५) प्रणयनाच्च । अयं भावः – अस्त्येव अध्यायपादाभ्यामौपोद्घातकी सङ्गतिः । न शास्त्रेणेव एतदधिकरणानन्तरं केनापि प्रकारेण शास्त्रस्यानारम्भणीयत्वशङ्कानुदयवत् अध्यायपादयोस्तदनुदयाभावात् इति । तदिदमुक्तं 'शास्त्रेणेव न ताभ्या'मिति । यदपि द्वितीयव्याख्याने 'शास्त्रेणेवाऽध्यायपादाभ्यामन्तर्भावो दुर्वार' इत्युक्तम् । तन्न – यथा – शास्त्रेणाऽन्तर्भावलक्षणासङ्गतिः तथा अध्यायपादाभ्यामन्तर्भाव सङ्गतेरभावात् । तथा हि – ब्रह्मस्वरूपनिर्णायकन्यायानां शास्त्रप्रतिपाद्यत्वात् अस्मिँश्चाधिकरणे ब्रह्मस्वरूपनिर्णायकत्वांशपरित्यागेन न्यायप्रतिपादकत्वांशसद्भावात् शास्त्रान्तर्भावसङ्गतिर्गौणी । ब्रह्मणि समन्वयनिर्णायकन्यायानामध्यायार्थत्वात्, अस्मिँश्चाऽधिकरणे ब्रह्मांशं समन्वयांशं चापहाय न्यायव्युत्पादकत्वमात्रस्य सत्त्वात् तदपेक्षयांऽतर्भावलक्षणसङ्गतिरमुख्या । एवं पादसङ्गतिः ब्रह्मसमन्वयनामरूपांशत्रयपरित्यागात् ततोऽप्यमुख्या । तदिदमुक्तं 'न तथाऽध्यायपादाभ्या'मिति । अन्यथा अध्यायपादाभ्यां सङ्गतिर्नेत्येवावक्ष्यत् ।

'अनूद्य परपक्षन्तु मितैः शब्दैस्तु दूषणम् ।
गुरुणा सत्यनिधिना यदवादि तदुच्यते' (१)

**वाचस्पत्युक्तमधिकरणम्** – शास्त्रे क्रियमाणो वेदान्तविचारो विषयः । कर्तव्य उत नेति सन्देहः । न कर्तव्य इति पूर्वपक्षः । विषयादिशून्यत्वात् । तथा हि – न तावत् ब्रह्मातिरिक्तं विषयः । तस्य मिथ्यात्वेन तद्विचारस्य व्यर्थत्वात् । नापि ब्रह्म । तस्य प्रत्यगात्माऽभिन्नत्वेन अहंप्रत्यये भासमानत्वेन नित्यसिद्धत्वात् । नाप्यविद्यानिवृत्तिः प्रयोजनम् । आत्मनि भासमानेऽपि तदनिवृत्तेः । न च वाच्यम् अहंप्रत्ययः 'स्थूलोऽहं कर्ता भोक्ता दुःखी'ति गृह्णाति । तद्विपरीतश्च वेदान्तवेद्यः सन्दिग्ध इति विषयादिसिद्धिरिति । वेदान्तानां प्रबलप्रत्यक्षबाधितत्वेन जपमात्रोपयोगित्वेनाऽविवक्षितार्थत्वात् । तथा च – वेदान्तविचारोऽनारब्धव्य इति ।

(अभिनवचन्द्रिका)

सिद्धान्तस्तु वेदान्तवाक्यैः ज्ञानानन्दैकरसाद्वितीयोदासीनस्वभाव आत्मा उपक्रमादिभिः प्रतिपाद्यते । न चोपक्रमादिलिङ्गसिद्धतात्पर्यकाणां वेदान्तवाक्यानां जपमात्रोपयोगित्वेनाऽविवक्षितार्थत्वं वक्तुं युक्तम् । प्रत्यक्षं तु सम्भावितदोषम् अपौरुषेयतया निश्चितेन निर्दोषेणाऽऽगमेन बाध्यते । तेन वेदान्तवेद्यः शुद्धः अहंप्रत्यये न भातीति विषयादिसिद्धिरिति ।

तत्र पूर्वपक्षस्तावदनुपपन्नः । तथा हि – ब्रह्मणः अहंप्रत्यये भासमानत्वेनाऽसन्दिग्धत्वेऽपि विपर्यस्तत्वेन विषयत्वोपपत्तेः । विचारस्य संशयनिरासकत्ववत् विपर्ययस्यापि निरासकत्वात् । किञ्च ब्रह्मस्वरूपस्य भासमानत्वेन सिद्धत्वेऽपि विचार्यमाणाद्वितीयत्वाकारेण सन्दिग्धत्वाद्विषयता दुर्वारा । न हि ब्रह्ममीमांसया स्वरूपमात्रं विचार्यम् । येन स्वरूपमात्रस्याऽसन्दिग्धता विषयताविघातनी स्यात् । अपि च – एवं सति विचारमात्रमनारम्भणीयं स्यात् । आकारविशेषविशिष्टस्यैव सन्दिग्धत्वेन स्वरूपमात्रे सन्देहस्य काप्यभावात् । अत एव प्रयोजननिरासोऽपि निरस्तः । अहं कर्ता भोक्तेति विपरीतज्ञानदशायामविद्यानिवृत्त्यभावेऽपि सम्यज्ज्ञानेन तन्निवृत्त्युपपत्तेः मा हि भूत् – स्रगादि भुजङ्गत्वादिना प्रतीतं न तोषहेतुरिति स्रगादित्वेन ज्ञातमपि तदहेतुः । यच्चोक्तम् – 'न च वाच्यमहंप्रत्ययः 'स्थूलोऽहं कर्ता भोक्ता दुःखी'ति गृह्णाति तद्विपरीतश्च वेदान्तवेद्यः सन्दिग्ध' इति विषयादिसिद्धिरित्यादि । किमनेनोक्तं भवति किं – वेदान्तप्रत्यक्षयोरेकस्मिन्धर्मिणि विरुद्धनानाधर्मावगाहित्वात् प्राबल्याद्यविवेकेन निर्णायकाऽभावात्संशय इति, आहोस्वित् तयोर्भिन्नविषयत्वात् प्रत्यक्षविषयस्य सिद्धत्वेऽपि वेदान्तवेद्यस्याऽसिद्धत्वमिति । आद्ये – 'प्रबलप्रत्यक्षबाधितत्वेन जपमात्रोपयोगित्वेनाऽविवक्षितार्थत्वात्' इति समाधानमयुक्तं स्यात् । प्राबल्याद्यविवेकदशायां सन्देह इत्युक्ते तद्विवेकदशायां तदभावव्युत्पादनस्याऽसङ्गतत्वात्, निर्णायकदशायां सन्देहाभावस्य सार्वत्रिकत्वेन सर्वलौकिकवैदिकविचाराभावप्रसङ्गात् । न द्वितीयः । प्रबलाहंप्रत्ययबाधितत्वेनेत्यस्याऽयुक्तेः भिन्नविषययोर्बाध्यबाधकभावायोगात् । किं च – वेदान्तानामविवक्षितार्थत्वे निर्विषयत्वस्य सिद्धत्वात् असंदिग्धत्वोपपादनप्रयासाऽनुपपत्तिरिति सिद्धान्तोऽप्यनुपपन्नः । तथा हि – वेदान्तवेद्यस्य शुद्धस्य अहंप्रत्ययाविषयत्वमात्रेण सन्दिग्धत्वासिद्धेः । शुद्धोऽहंप्रत्यये न भातीति त्वयैवोक्तत्वात् । अहंप्रत्ययवेदान्तयोर्भिन्नविषयत्वेन बाध्यबाधकभावायोगः । किं च– उपक्रमादिवशात् वेदान्तानां शुद्धप्रतिपादकत्वसिद्धौ विषयत्वसिध्या विचारप्रवृत्तिः । तत्प्रवृत्तौ चोपक्रमादिवशात् तत्सिद्धिरित्यन्योन्याश्रयः । तदेवं मतान्तरीयमधिकरणमयुक्तमिति हृदि निधाय स्वमतेनाऽधिकरणमारचयति – प्रारिप्सिततया चित्तसङ्गतेति ।। कर्तव्या न वेति सन्देह इति । सन्देहस्यैकज्ञानत्वेन युगपदेव कोटिद्वयाऽवलम्बनात् कर्तव्या । न वा: । न कर्तव्या उत कर्तव्येति

(अभिनवचन्द्रिका)
संशययोरविशेषः । इममेवाभिप्रायं मनसि निधाय चन्द्रिकायां 'न कर्तव्य उत कर्तव्य' इत्युक्तम् । न तु पूर्वपक्षसम्बन्धित्वेन निषेधकोटेः प्राथम्यमित्यभिप्रेत्येति द्रष्टव्यम् । विषयीकरणव्यापारे प्राथम्याभावस्योक्तत्वात् ।

ननु पूर्वमीमांसायां तदर्थचिन्तायाः प्रदर्शितत्वात् साऽत्रावश्यं वक्तव्येति चेत् अत्र – त्वेवं तदर्थचिन्ता वक्तव्या । अत्र वेदान्तनिर्णायकन्यायग्रथनात्मकमिदं शास्त्रमनारम्भणीयमुतारम्भणीयमिति । तदर्थं न्यायानुसन्धानरूपो विचारो न कर्तव्यः उत कर्तव्य इति । तदर्थं विचारविधेर्विषयादिकं न सम्भवति उत सम्भवतीति । तदर्थं विषयीभूतं ब्रह्म किं प्रत्यगर्थभूतजीव एव उत तदन्यदिति । न च सा सम्भवति तथा हि—

सन्दिग्ध इति यं जानन् हेतुमाहेष्टसिद्धये ।
पूर्वपक्षी च सिद्धान्ती न स्यादकुशलः कथम् ।।

तदर्थचिन्ताविषयत्वेन सन्दिग्धानेव हेतून् स्वार्थसिद्धये प्रयुंजानौ पूर्वपक्षिसिद्धान्तिनावकुशालौ कथं न स्यातामिति । किं च तदर्थमित्यस्य प्रथमसंशयसिध्यर्थमयं संशय इति अर्थ एव वक्तव्यो गत्यन्तराभावात् । न च तद्युज्यते विचारकर्तव्यत्वाऽकर्तव्यत्वकोटिकसंदेहस्य शास्त्रानारम्भणीयत्वारम्भणीयत्वसन्देहकोटिस्मरणाद्यहेतुत्वात् । शास्त्रानारम्भणीयत्वाऽऽरम्भणीयत्वसन्देहस्य शास्त्रदर्शनानन्तरमेव विशेषदर्शनाभावेन जातत्वात् । तदनन्तरभाविनो विचारकर्तव्यत्वाकर्तव्यत्वकोटिकसंशयस्य पूर्वभावित्वाभावाच्च । अपि चैवं चरमहेतावपि सन्देहप्रसङ्गेन पूर्वपक्षसिद्धान्तयोरनुत्थानमेव स्यात् ।

यत्तु चन्द्रिकायां – तदर्थचिन्ताप्रदर्शनं तत्तु परीतिमवलम्ब्यैवेति द्रष्टव्यम् । अत एव न्यायामृते 'त्रैकालिकनिषेधप्रतियोगि । न वे'त्यत्र तदप्रदर्शनम् ।

न कर्तव्येति पूर्वपक्ष इति ।। नन्वधिकरणस्य न्यायनिबन्धनत्वेन तदपेक्षितसंशयव्युत्पादनमस्तु न पूर्वपक्षस्योपयोगं पश्यामः । न हि पर्वतोऽग्निमानित्यनुमिमानेन अनग्निमानिति साधितम् । किं च संशयपूर्वपक्षयोः समावेशोऽनुपपन्नः । संशयपूर्वपक्षसामग्र्योर्विरुद्धत्वेन समावेशायोगात् । किं च पूर्वपक्षस्य साध्याभावनिश्चयरूपत्वात्, ग्राह्याभावनिश्चयस्याऽनुमितिप्रतिबन्धकत्वात् साध्यानुमितिरूपसिद्धान्तोदयो न स्यात् । न च – सिद्धान्तस्य द्वेधा प्रतिष्ठा भवति । स्वपक्षस्थापनेन परपक्षनिराकरणेन च । तन्निराकरणस्य तदनुवादमन्तराऽयोगेन पूर्वपक्षप्रदर्शनमिति वाच्यम् । तथा सति सिद्धान्तोक्त्यनन्तरमेव

(अभिनवचन्द्रिका)

पूर्वपक्षनिरासस्याऽवसरप्राप्तत्वेन तत्रैव पूर्वपक्षः प्रदर्शनीयः । किञ्च एवमाऽऽप्ततमः सूत्रकारो मन्यते । 'आनन्दमयोऽभ्यासा'(ब्र.१-१-१२)दिति स्वपक्षमभिधाय 'विकारशब्दान्ने'(ब्र.सू.१-१-१३)ति परपक्षमनूद्य न प्राचुर्यादिति तन्निरासात् । प्रथमाध्याये समन्वयमुक्त्वा तत्र प्राप्तविरोधपरिहारस्य द्वितीयाध्यायेऽभिधानाच्च । किं च – एवं भाष्यकारो मन्यते अस्मिन्नेव सूत्रे पूर्वपक्षानुक्तेः । अत एव अनुव्याख्यानेऽपि पूर्वपक्षमनुक्त्वैव 'ॐ तत्ववाचि' इति सूत्रं व्याख्यातवान् इति चेत् – न सन्दिग्धस्येव विपर्यस्तस्यापि न्यायविषयत्वेन पूर्वपक्षस्याप्यवश्यकत्वात् । 'संशयपूर्वपक्षयोः समावेश एवानुपपन्न' इत्युक्तमिति चेत्, न ब्रूमो वयं यस्य संशयः तस्यैव पूर्वपक्ष इति । किं तर्हि कस्यचित् संशयः कस्यचित् पूर्वपक्ष इति । प्रत्यधिकरणमुभयप्रदर्शनं तु सूत्राणामुभयनिरासकत्वात् । तदुक्तम् – 'इदमदो वेति संदिग्ध' इत्यादिना । न च पूर्वपक्षेण साध्याभावनिश्चयात् तस्य च ग्राह्याभावनिश्चयत्वेन अनुमितिप्रतिबन्धकत्वात् साध्यानुमितिर्न स्यादिति वाच्यम् । ग्राह्याभावनिश्चायकप्रमाणदौर्बल्याज्ञानदशायां तस्यानुमितिप्रतिबन्धकत्वेऽपि तन्निश्चयदशायामप्रतिबन्धकत्वात् । अन्यथा प्रमाणप्राबल्यदौर्बल्यचिन्ता व्यर्था स्यात् । सप्रतिपक्षस्थले च समबलचिन्ता व्यर्था स्यात् । दुर्बलेनापि प्रबलप्रतिरोधात् । यत्तु 'आप्ततमः सूत्रकारो मन्यत' इत्यादि न तद्युक्तम् । सूत्रकारेणापि संशयं पूर्वपक्षं च मनसि कृत्वैव सूत्रप्रणयनात् । अन्यथा अनाकाङ्क्षितत्वेनाऽनवधेयवचनः स्यात् । 'विकारशब्दा'दित्यादिना तु उक्तस्य हेतोः प्रतिरोधं बाधितविषयत्वं वाऽऽशङ्क्य समादधावित्यङ्गीकारात् । यदपि 'भाष्यकारोऽप्येवं मन्यत' इत्यादि तदपि न । न्यायविवरणे जीवव्यतिरिक्तेश्वराभावात् तस्य स्वप्रकाशत्वेन नित्यसिद्धत्वात् न जिज्ञास्यत इति पूर्वपक्षाभिधानात् भाष्यएवोत्तरत्र तत्प्रदर्शनाच्चेति । **अधिकारिविषयेति** ।। विषय-प्रयोजनयोरधिकार्यर्थत्वात् तस्य प्राधान्यात् अथशब्देन सूचितत्वाच्च प्रथमतः तत्कीर्तनम् । प्रयोजनस्याऽतःशब्देन सूचितत्वेऽपि विषयज्ञानसाध्यत्वेन विषयस्य प्राधान्यमभिप्रेत्य तदनन्तरं तत्कीर्तनम् । अवसरप्राप्तत्वात् प्रयोजनस्य तदानन्तर्यम् । सम्बन्धस्य सर्वनिरूप्यत्वात् सर्वानन्तर्यम् । नन्वत्राधिकारि-विषयप्रयोजनसम्बन्धाभावानां किं प्रत्येकहेतुत्वम्, उत मिलितानाम् आहोस्वित् विषयादिचतुष्टयवृत्ति-व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकैकाभावस्य । नाद्यः – स्वव्याहतत्वात् । तथा हि सिद्धत्वान्न ब्रह्मणो विषयत्वमिति वदता सन्दिग्धस्यैव विषयत्वाभ्युपगमात् । तस्य च निर्विषयत्वेनैकेन हेतुना विचाराऽकर्तव्यत्वस्य सिध्या पुनर्हेत्वंतरेण विचारं कुर्वता परित्यागात् । किं च अधिकारिविषय-प्रयोजनशून्यत्वं हि तत्सम्बन्धशून्यत्वमेव । नान्यत् । तथा च – विषयप्रयोजनाऽधिकारिशून्यत्वान् इत्येव वाच्यं न तु सम्बन्धशून्यत्वादित्यपि । अन्यथा कस्यचित्संदिग्धार्थस्य कस्यचित्प्रयोजनस्य

(अभिनवचन्द्रिका)

सद्भावेन विषयादिशून्यत्वमसिद्धं स्यात् । कस्यचित् सन्दिग्धस्य सद्भावेऽपि न तेन सहास्य विचारस्य प्रतिपाद्यप्रतिपादकभाव इति चेदङ्गीकृतं तर्हि विषयेण प्रतिपाद्यप्रतिपादकभावरूपसम्बन्धवत्त्वं सविषयत्वं तदभावश्च निर्विषयत्वमिति । किं च – अथशब्देन भक्तिवेदाध्ययनरूपाधिकारस्य सूचनात् तदभावेन पूर्वपक्षो युक्तः न तु फलकामनावदधिकार्यभावेन सौत्रपदानिरस्यत्वात् । न च अथशब्देनाऽयमेवाऽधिकारः सूचित इति वाच्यम् । तथासति अधिकारिघटकविषयप्रयोजनयोस्तेनैव सूचितत्वात् ब्रह्मातःशब्दयोर्वैयर्थ्यं स्यात् । अपि च सूत्रे सम्बन्धस्यासूचनात् तदभावेन पूर्वपक्षो न युक्तः । न द्वितीयः । विषयाभावमात्रस्य व्यभिचाराभावेन मेलनवैयर्थ्यात् । न तृतीयः । एकस्य विषयाभावस्य व्युत्पादनेनैव व्यासज्यवृत्तिप्रतियोगिताकाभावस्य व्युत्पादयितुं शक्यत्वेन 'न च जिज्ञासया प्रयोजनमस्ती'त्युत्तरटीकावैयर्थ्यप्रसङ्गात् इति चेत्, अत्रोच्यते – विषयशून्यत्वादयः प्रत्येकमेव हेतवः । ननु चोक्तं व्याहतिरिति । न – श्रोतृभेदेन तेषां हेतुत्वाङ्गीकारात् । तथा हि – कदाचिन्निर्विषयत्वेनानारम्भणीयत्वं प्रसाध्यते । अन्यदा तु निष्प्रयोजनत्वेनानारम्भणीयत्वं प्रसाध्यते, अन्यदा तु निरधिकारित्वेनानारम्भणीयत्वं प्रसाध्य तत्रासिद्धौ चोदितायां कदाचिद्विषयशून्यत्वेन, कदाचित्प्रयोजनशून्यत्वेन अनधिकारित्वं प्रसाध्यते । यद्यपि निर्विषयत्वेन निष्प्रयोजनत्वेन वा, नारम्भणीत्वं शक्यसाधनम् तथापि विषयशून्यत्वस्य प्रयोजनशून्यत्वस्य चाऽनारम्भणीयत्वेन व्याप्यप्रतिसन्धानदशायामयं क्रम इत्यङ्गीकाराददोषः । अन्यदा विषयसम्बन्धशून्यत्वेन अन्यदा प्रयोजनसम्बन्धशून्यत्वेन अन्यदाऽधिकारिसम्बन्धशून्यत्वेनाऽनारम्भणीयत्वं प्रसाध्यते । यच्चोक्तम् अधिकारिविषयप्रयोजनशून्यत्वमेव तत्सम्बन्धशून्यत्वमिति । तन्न – प्रतियोगिभेदात् । अन्यथा इह घटो नास्ति, घटसम्बन्धो नास्तीत्यनयोरविशेषः स्यात् । यदपि अथशब्देन भक्तिवेदाध्ययनादिरूपाधिकारस्य सूचनात् तदभावेन पूर्वपक्षो युक्त इति, तत्तथैव जीवव्यतिरिक्तेश्वराभावेन विष्णौ भक्तेः तत्पूर्वकाध्ययनस्य च मोक्षरूपप्रयोजनाऽभावेन विषयवैराग्यस्य ब्रह्मादिपदादेः मोक्षादवरत्वरूपासारत्वज्ञानरूपस्य चाऽधिकारिविशेषणस्याऽभावेन ब्रह्मजिज्ञासायामधिकारी न विद्यत इत्यभिप्रेत्य टीकायां 'विषयप्रयोजनाभावान्न ब्रह्मजिज्ञासायामधिकारी विद्यत' इत्युक्तत्वात् । यदपि चोक्तम् – सूत्रे सम्बन्धसूचकाऽभावात्तदभावेन न पूर्वपक्षो युक्त इति । तन्न – 'ब्रह्मजिज्ञासे'त्यत्र लुप्तया कर्मणि षष्ठ्या विषयविषयिभावलक्षणसम्बन्धबोधनात् सम्बन्धान्तरस्य च स्मारितत्वात् इति ।। ब्रह्मातिरिक्तस्य परंणैव विषयत्वानङ्गीकारात् अङ्गीकृतस्य ब्रह्मणो विषयत्वखण्डने निर्विषयत्वमेव भवतीत्यभिप्रेत्य ब्रह्मणो विषयत्वं दूषयति – **न तावदिति** ।। ननु न तावद्ब्रह्म विषय इत्यनेन किं पारिभाषिकं सन्दिग्धत्वरूपं विषयत्वं निराक्रियते आहोस्वित् गोचरत्वं निराक्रियते नाद्यः । असंदिग्धत्वादिति हेतोः साध्याभेदप्रसंगात् ।

(अभिनवचन्द्रिका)

किं च संदिग्धत्वं विषयत्वमिति न परिभाषा सम्भवति । संदिग्धार्थप्रतिपादकस्यापि वाक्यस्य संदेहनिवृत्युत्तरकालं निर्विषयत्वापत्तेः । स्याच्च ज्ञातार्थं प्रत्यपि ज्ञातज्ञापकस्य वाक्यस्य सविषयत्वं पुरुषान्तरसन्देहविषयार्थप्रतिपादकत्वात् । अपि च सन्देहः विशेषणमुपलक्षणम् वा ।

नाद्यः । घटोऽस्तीति वाक्येन विशेषणीभूतसन्देहाविषयीकरणात् । न द्वितीयः । ज्ञातज्ञापकविषयेऽपि कदाचित् सन्देहसद्भावेन सविषयत्वप्रसङ्गात् । न द्वितीयः – अनुभवविरोधात् इति चेत् । अत्रोच्यते – नाऽत्र शास्त्रगोचरत्वं नापि संदिग्धत्वं निराक्रियते । किं नाम शास्त्रकर्तुः प्रतिपिपादयिषायोग्यत्वम् । **असंदिग्धत्वादिति** ।। उपलक्षणमेतत् । 'अविपर्यस्तत्वात् अज्ञातत्वाभावाच्चे'ति द्रष्टव्यम् । ननु – ब्रह्मणि विषयत्वाऽविषयत्वकोटिकसंशयोऽस्ति न वा । आद्ये – असंदिग्धत्वादिति हेतोरसिद्धिः । द्वितीये तु – अनुमानप्रवृत्त्यनुपपत्तिः । सन्देहाभावेऽप्यनुमानप्रवृत्तिरिति चेत् प्रकृतब्रह्मजिज्ञासाप्रवृत्तिरपि तथाऽस्तु इति चेत्, अत्रोच्यते – अस्त्येव ब्रह्मणि शास्त्रविषयत्वाऽविषयत्वकोटिकः संशयः । न च – असंदिग्धत्वहेतोरसिद्धिः । भावाऽनवबोधात् । न हि – असंदिग्धत्वादित्यनेन सर्वथा संदेहविषयत्वाभावोऽभिमतः । किं नाम शास्त्रप्रतिपाद्यत्वाऽभिमतसर्वोत्तमत्वाद्याकारेण । तत्कुत इति चेत्, जीवव्यतिरिक्तेश्वराभावात् तस्य चाऽसर्वोत्तमत्वाद्याकारतया अनुभूयमानत्वात् । नहि – अन्यतरकोट्यधिकरणतया प्रतीयमाने तत्कोट्यवगाही संदेहो युज्यते । एवं च शास्त्रप्रतिपाद्याकारवत्तया सन्देहाभावान्न ब्रह्मणः शास्त्रविषयत्वम् । कथं तर्हि 'न हि कश्चित्प्रकाशमानेऽर्थे सन्दिग्ध' इति टीकायां सन्देहमात्राभावव्युत्पादनमिति चेत्, मैवम् – तत्रापि आकारविशेषेणैव संदेहाभावस्य व्युत्पादितत्वात् । न हि प्रकाशमानः कोऽपि घटादिः सर्वथा सन्देहाविषयोऽस्ति । तत्रापि किमयं देवदत्तेन ज्ञातो न वेत्यादिसंदेहदर्शनात् । एतेन ब्रह्मणो जिज्ञास्यत्वं प्रतिज्ञाय जीवाऽभिन्नत्वादिना विचारं कुर्वतः स्वव्याहतिरिति परास्तम् । सिद्धान्त्यभिमताऽऽकारेणाऽविचार्यत्वस्यैव प्रतिज्ञातत्वात् । तदुक्तं 'शास्त्रे प्रवर्तनीया ब्रह्मजिज्ञासा विषय' इति । अन्यथा ब्रह्मजिज्ञासाविषय इत्येव ब्रूयात् । ननु चिन्मात्रे ब्रह्मणि भासमानेऽपि यथाऽहमज्ञो दुःखीत्यादिभ्रमोऽङ्गीक्रियते तथा संशयोऽप्यस्तु । अधिष्ठानयाथात्म्यज्ञानस्य भ्रमाविरोधित्ववत् संशयाऽविरोधित्वस्यापि सम्भवात् । अन्यथा भ्रमोऽपि न स्यात् इति चेत्, न – स्यादिदं दूषणं यदि चिन्मात्रैक्येन पूर्वपक्षः स्यात्, किं नाम विशिष्टजीवाभेदेन । तथा च दुःखादीनां सत्यत्वेन भ्रमानङ्गीकारात् । तदुक्तं 'प्रमाणाभावेन जीवव्यतिरिक्तस्यब्रह्मणोऽभावात्' इति । अन्यथा – 'तत्त्वमस्या'दि प्रमाणसद्भावेन चिन्मात्रैक्यादित्यवक्ष्यत् । उक्तं च – न्यायविवरणे 'नाऽनुभवसिद्धाऽल्पगुणजीवाऽभेद इति । अन्यथा गुणत्रिकलचिन्मात्रैक्यस्य पूर्वपक्ष्यभिप्रेतत्वेनाऽल्पगुण-

(अभिनवचन्द्रिका)

जीवाऽभेदनिराकरणमयुक्तं स्यात् । किं च – चिन्मात्रैक्यं प्रतिपादयतो मायावादिनोऽपि मते विचारस्य विषयप्रयोजनसद्भावेन तदाक्षेपानुपपत्तिः । मायावादिनापि ब्रह्ममीमांसाशास्त्रस्यारम्भणीयत्वाङ्गीकारेणाऽऽरम्भणीयत्वाक्षेपानुपपत्तिश्च । ननु विरुद्धधर्माऽधिकरणत्वेन हेतुना भिन्नत्वेन प्रतीतयोर्जीवपरयोः कथमभेदेन पूर्वपक्षो घटत इति चेत्, न – जीवपरयोर्भेदसिद्धौ तद्गतधर्माणां विरुद्धत्वसिद्धिः, तत्सिद्धौ च तत्सिद्धिरित्यन्योन्याश्रय इति पूर्वपक्ष्याशयात् ।

यद्यपि – चन्द्रिकायां – 'तत्र तावद्विषयत्वेनाऽभिमतं ब्रह्म न जीवचैतन्याद्भिन्न'मित्युक्तम् । तेन चैतन्याभेदेन पूर्वपक्षः न तु विशिष्टाभेदेन तैरुक्त इति प्रतीयते । तथापि न विरोधः । विशिष्टाभेदेन पूर्वपक्षो न कार्य इत्यनुक्तत्वात् । तत्रोक्तपूर्वपक्षस्य च प्रकारान्तरत्वेनाबाधकत्वात् । अन्यथा सुधायां निरीश्वरमतावलम्बनेन पूर्वपक्षस्योक्तत्वेन तद्विरोधो दुर्वारः स्यात् । विशिष्टाभेदेन पूर्वपक्षस्य तेषामभिप्रेतत्वाच्च । अत एव विशिष्टाभेदेन पूर्वपक्षस्य वक्तव्यत्वेऽपि शुद्धाभेदं वदन् मायावादी सूत्रानभिप्रेतार्थप्रतिपादनात् पूर्वपक्ष्येवेति तद्व्याख्यानमश्रद्धेयमिति भावेन शुद्धाभेदेन पूर्वपक्षं प्रदर्श्य, जिज्ञासाकर्तव्यत्वोपपादकसाधकस्वाऽभिमतचैतन्याभेदव्युत्पादनाय जीवव्यतिरिक्तेश्वरे प्रमाणाभावं प्रतिज्ञाय, कर्मकाण्डस्य कर्मपरत्वात्, वेदान्तानां चोपक्रमादिभिः प्रत्यगात्ममात्रपरत्वात्, इति हेतुं वदतः पूर्वपक्षिणः स्वव्याघातः, उपक्रमाद्यनुसन्धानेन विना वेदान्तानां प्रत्यगात्ममात्रपरत्वस्य निर्णेतुमशक्यत्वात्, विचाराऽकर्तव्यत्वं प्रतिपादयतैव उपक्रमाद्यनुसन्धानरूपविचारकरणात् । तथा च – अद्वैतवादी वेदान्तशास्त्रे पूर्वपक्षितामपि नार्हतीत्यालोच्य 'यद्वे'त्यादिना स्वाभिप्रेतो विशिष्टाऽभेदेन पूर्वपक्ष उक्तः ।

ननु जीवस्यासन्दिग्धत्वोपपादनाय मानसानुभववेद्यत्वं वक्तव्यं न तु स्वप्रकाशत्वमसिद्धत्वादित्यत आह– **न चेति** ।। यद्यपि सिद्धान्तिनाप्यात्मनः स्वप्रकाशत्वाङ्गीकारात् । स्वप्रकाशत्वासिद्धिमाशंक्य तत्साधनमयुक्तम् । तथापि यदि सिद्धान्ती स्वप्रकाशत्वमङ्गीकुर्यात् तर्हि ब्रह्मविचारं न कुर्यात्, करोति च तेन ज्ञायते नाऽऽत्मनः स्वप्रकाशत्वमङ्गीकरोतीति मन्वानस्य तद्युक्तमेवेति द्रष्टव्यम् ।। **तस्यापीति** । मानसानुभवस्य ज्ञायमानत्वात् स्वप्रकाशत्वानङ्गीकारात्, तदैवानुभवान्तरमङ्गीकर्तव्यं तदप्येवं तदप्येवमिति ज्ञानानां यौगपद्यप्रसङ्गेनाऽनवस्थाप्रसङ्गादित्यर्थः । एतेन पूर्वज्ञानोत्पत्तेरुत्तरज्ञानोत्पत्त्यनधीनत्वेन मूलक्षयाभावात् नाऽनवस्थेति निरस्तम् । **कस्यचिदिति** ।। आत्मस्वप्रकाशत्वस्य ज्ञानयौगपद्यापत्तिपरिहारक्षमत्वात् तदेवाङ्गीकार्यं न तु कस्यचिदज्ञानस्य तदक्षमत्वादिति भावः । ननु अहमित्यनुभवो नानुभूयते जिज्ञासाभावात् । यदा च तज्जिज्ञासा तदा तज्ज्ञायते न तु तज्ज्ञानमपि तज्जिज्ञासाभावात् ।

(अनिर्वचनीय)

**तथा च न यौगपद्यमित्यत आह – जिज्ञासायामेवेति ।। अनुभवविरोधादिति ।।** ज्ञानस्य अबुभुत्सित-ग्राह्यत्वानुभवविरोधादित्यर्थः । ज्ञानमबुभुत्सितग्राह्यमित्यनुभवो भ्रमः । बुभुत्साविरहदशायामज्ञायमानज्ञानस्य सद्भावादित्यत आह – **न ह्यज्ञायमानेति ।। औत्तरिकानुस्मृतीति ।।** ननु सुषुप्तौ सर्वेन्द्रियोपरमेऽपि मनसोऽनुपरतत्वात् उपपन्नः सौषुप्तिकानुभवः । औत्तरिकानुस्मृतिलक्षणकार्यबलेन मनसोऽनुपरमकल्पनात् । प्रत्युत स्वप्रकाशत्ववादिमत एव अनुभवसिद्धौत्तरिकानुस्मृत्यभावप्रसङ्गः । मनस उपरतत्वेन स्वप्रकाश-संविदा तत्र संस्कारोत्पादायोगात् । संस्काराभावे च कारणाभावेन स्मरणायोग इति । न चोपरते मनसि संस्कारोत्पाद इति वाच्यम् । उपरतेनापि मनसा सुषुप्तौ ज्ञानोत्पादप्रसङ्गात् । न च – संस्कारस्य न मनोधर्मत्वं किं तु आत्मधर्मत्वमिति वाच्यम् । अपसिद्धान्तादिति चेत्, अत्रोच्यते – सुषुप्तौ अहमर्थावभास आत्मरूपोऽङ्गीकर्तव्यः न तु मानसः तस्योपरतत्वात् । न च मनसोऽनुपरमः कल्प्यत इति वाच्यम् । स्वप्नसुषुप्त्योर्भेदाभावप्रसङ्गात् । यदपि स्वप्रकाशत्ववादिमत एव संस्काराभावेन स्मरणायोग इति, तन्न सुषुप्तिदशायां संस्कारानङ्गीकारात् । कथं तर्हि अनुस्मृतिरिति चेत्, स्वापाऽपाये मनस उद्बोधे सति सौषुप्तिको नित्यानुभवः संस्कारमुत्पाद्य तिरोभवतीत्यङ्गीकारात् । ननु न ब्रूमो वयं संविदाश्रयतयैवाऽऽत्मनो भानमिति किं नाम – स्वप्रकाशतयापि । अतो न सौषुप्तिकानुभव इत्यत आह – **संविदात्मकत्वादिति ।।** स्वप्रकाशत्वाङ्गीकारे संविदाश्रयतया भानाङ्गीकारो व्यर्थः । अन्यथा संविदोऽपि संविदाश्रयतया भानं स्यात् अविशेषादिति भावः ।

**सुधायान्तु–** जीवस्य अहमिति स्वप्रकाशतया वा स्वप्रकाशज्ञानाश्रयतया वा मानसवेद्यतया वा सिद्धत्वेन न जिज्ञासाविषयत्वमित्युक्तम् तत्रापि पक्षद्वयं निराकृत्य एकैकपक्षमवशेष्य पुरुषभेदेन पूर्वपक्षत्रयं द्रष्टव्यम् ।

**ज्ञायमानेऽपि ब्रह्मणीति ।।** ननु– जिज्ञासाया निष्प्रयोजनत्वव्युत्पादनाय सत्यामपि जिज्ञासायां तदनुपलम्भादिति वक्तव्यम् । न तु ज्ञायमानेऽपि ब्रह्मणि तदनुपलम्भादिति । असङ्गतत्वात् । न च जिज्ञासाया विषयापरोक्षद्वारेणैव फलहेतुत्वात् तदापरोक्ष्यस्य निष्फलत्वेन जिज्ञासाया निष्फलत्वं भवतीत्येतदुक्तमिति वाच्यम् । तथा सति जिज्ञासाया वैफल्यव्युत्पादनाय तज्जन्याऽऽपरोक्ष्यवैफल्यस्य वक्तव्यत्वेन तदजन्यज्ञानस्य वैयर्थ्यात् । केवलायोगोऽदाहकत्वेऽप्ययःशलाकारोपितस्य तद्दाहकत्ववत् । स्वतःसिद्धब्रह्मापरोक्षस्य फलाहेतुत्वेऽपि जिज्ञासोत्थस्य तत्संभवादिति चेत्, मैवम् भावाऽनवबोधात् । तर्ह्यस्माभिः अहमित्याकारस्य ब्रह्मज्ञानस्य निष्फलत्वं, जिज्ञासाया निष्फलत्वे हेतुतयोच्यते । किंनाम

(अभिनवचन्द्रिका)

जिज्ञासाया ब्रह्मज्ञानाहेतुत्वमनेनोच्यते । तथा हि – 'न च जिज्ञासया प्रयोजनमस्ती'ति पूर्ववाक्येन परमप्रयोजनाभावव्युत्पादनाय अपरोक्षरूपावान्तरप्रयोजनाभावं प्रतिज्ञाय तद्धेतुरनेनोच्यते ब्रह्मणि ज्ञायमानेऽपि तदनुपलम्भात् = जिज्ञासानुपलम्भात् इति । अयमत्र समुदायार्थः – जिज्ञासा नापरोक्षजननद्वारा महापुरुषार्थहेतुः अपरोक्षज्ञानाऽजनकत्वात् । प्रमाणाभावेनाऽपरोक्षज्ञाने अवान्तरविशेषाभावात् । जिज्ञासा नाऽपरोक्षहेतुः, तद्व्यतिरेकप्रयोजकव्यतिरेकशून्यत्वात् इति ।

**चन्द्रिकायां तु–** 'नापि जिज्ञासायाः प्रयोजनमस्ति, प्रत्यग्रूपे ब्रह्मणि अहमिति ज्ञायमानेऽपि मोक्षानुपलम्भा'दित्युक्तम् । तेषामपि अस्मदुक्त एवाभिप्रायः । तथा हि – 'नापि जिज्ञासायाः प्रयोजनमस्ती'ति वाक्यस्यायमर्थः – जिज्ञासाया अपरोक्षजननद्वारा मोक्षरूपप्रयोजनं नास्तीति । तत्र व्यतिरेकव्यभिचारः 'अपरोक्षज्ञानहेतुत्वाभावा'दिति हेतुर्बहिरेवानुसंधेयः । ननु – प्राग्भवीयजिज्ञासया इदानीन्तनीयाहमिति ब्रह्माऽपरोक्षोत्पादस्य कल्पयितुं शक्यत्वेन न व्यतिरेकव्यभिचारः । न ह्यनादौ संसारे कदापि जिज्ञासा नानुष्ठितेति निश्चेतुं शक्यते इत्याशंकापरिहाराय 'प्रत्यग्रूपे ब्रह्मणि अहमिति भासमानेऽपि मोक्षानुपलम्भा'दिति द्वितीयं वाक्यम् । तस्यार्थः – यद्यहमिति ज्ञानं प्राग्भवीयजिज्ञासाजन्यं स्यात् तर्हि मोक्षोपलम्भः स्यात् । त्वया जिज्ञासाजन्यज्ञानस्य मोक्षहेतुत्वाभ्युपगमात् । न च तदस्तीति न जिज्ञासाजन्यमिति सिद्धो व्यतिरेकव्यभिचार इति । उपलक्षणं चैतत् 'भवान्तरे जिज्ञासाया अनुष्ठितत्वात् तत्फलस्यापि भावान्नातः परं जिज्ञासा कार्ये'ति द्रष्टव्यम् ।

**यद्वा–** जीवब्रह्मणोरभेदेन विषयाभावान्न जिज्ञासा कार्येत्यभिधाय अधुना भेदमङ्गीकृत्य प्रयोजनाभावेन न जिज्ञासा **कार्येत्याक्षिपति – नचेति** ।। अत्र हेतुमाह – **ज्ञायमानेऽपीति** ।। जिज्ञासया साक्षात्कृतब्रह्मणां वसिष्ठादीनां मोक्षानुपलम्भादित्यर्थः । **विषयप्रयोजनाभावादिति** ।। ऐक्यपक्षे विषयप्रयोजनाभावात् । भेदपक्षे प्रयोजनाभावादित्यर्थः । एवं **प्राप्ते सिद्धान्तयत् सूत्रमुपन्यस्यति — अथेतीति** ।। ननु अथेति प्रतीकग्रहणमनुपपन्नम् । तस्य सूत्रादित्वाभावात् । 'तत्र तारायमूलत्व'मित्यनुव्याख्याने ॐकारस्याऽऽदित्वोक्तेः । 'ननु– सूत्रादौ ॐकार एव न विद्यत' इत्याक्षिप्य ॐकारस्य सूत्रादित्वेन सुधायां समर्थितत्वाच्च । न च प्रथमसूत्रे विद्यमानस्याप्योंकारस्य, द्वितीयादिसूत्रेष्वनुवृत्तत्वेन प्रथमसूत्रा-नवयवत्वात् 'अथे'ति प्रतीकधारणमुपपन्नमिति वाच्यम् । द्वितीयादिसूत्रेष्वनुवर्तमानस्यापि प्रथमसूत्रा-वयवत्वात्, नहि ''उपत्वाग्ने दिवे दिवे,'' इति मन्त्रगतस्य 'उपमसी'त्यस्य 'राजन्तमध्वराणा'-मित्यत्राऽनुवृत्तिमात्रेण प्रथममन्त्रानवयवत्वं भवति । येनेह ॐकारस्यापि प्रथमसूत्रानवयवत्वं स्यात् ।

(अभिनवचन्द्रिका)

इममेवाभिप्रायं मनसि निधाय, सुधायां 'न ह्यूह्यमानं वाक्यात्पृथगिति शक्यते वक्तुं, मन्त्रेष्वप्यूह्यमानस्य मन्त्रानवयवत्वप्रसङ्गा'दित्युक्तम् । तथा भाष्ये– प्राथमिकमोङ्कारं विहाय 'अथशब्दो मङ्गलार्थ' इति अथशब्दव्याख्यानमयुक्तम् । प्रथमपरित्यागकारणाभावात् इति चेदुच्यते – अत्र द्वे दर्शने – 'अथातो ब्रह्मजिज्ञासे'त्यादिमं सूत्रमित्येकम्, अपरन्तु ॐअथातो जिज्ञासे'ति । तत्राऽऽद्यं सन्यायरत्नावलीकृतो दर्शनम् । 'तत्र व्याख्येयस्य शास्त्रस्येदमादिमं सूत्रम् । 'अथातो ब्रह्मजिज्ञासे'ति । तत्र ॐकारश्चाथ-शब्दश्च मङ्गलार्थत्वादादितः प्रयोक्तव्यौ । ॐकारस्तु 'स्रवत्यनोंकृतं ब्रह्मे'त्यादिवचनात् प्रत्यधिकरण-मनुवर्तमानत्वात् पृथगुच्चारितो वेदितव्यः । नाऽथशब्दवत्सूत्रोपनिबद्धः । इदानीमोंकाराद्यखिलवेदार्थ-भूतशास्त्रस्य विषयं प्रदर्शयितुमाह– 'ओतत्ववाचीती'ति संन्यायरत्नावल्युक्तेः । तथा हि– ॐकाररहितस्य ब्रह्मशब्दसहितस्य सूत्रस्योपन्यासात् 'नाऽथशब्दवत्सूत्रोपनिबद्ध' इत्युक्तेश्च, 'ॐकाराद्यखिल-वेदार्थभूतशास्त्रस्य विषयं प्रदर्शयितुमाहे'त्यादिना ओतत्ववाचीत्यनुव्याख्यानस्य वैदिकोङ्कारव्याख्यान-रूपत्वस्याभिधानाच्च । अन्यथा – सूत्रव्याख्यामारभते – ओतत्ववाचीत्यवक्ष्यत् । अस्मिंस्तु मते भाष्यकारीयम् ॐकारमव्याख्याय अथशब्दव्याख्यानं लिङ्गम् । न्यायविवरणकारीयो 'जीवव्यतिरिक्तेश्वरा-भावात्, तस्य स्वप्रकाशत्वेन नित्यसिद्धत्वात् – अजिज्ञास्यतेत्यतः 'अथातो ब्रह्मजिज्ञासे'त्याहेत्योङ्कार-रहितस्य सूत्रस्य पाठो लिङ्गम् । अनुव्याख्यानकारीयं 'सर्वत्रानुगतत्वेन पृथगोङ्क्रियतेऽखिलै'रित्यत्र सूत्रकृतेति वक्तव्ये 'अखिलै'रित्यभिधानं लिङ्गम् । सूत्रकारीयश्च अथशब्दवत् ॐकारस्य निबन्धाभावः, ब्रह्मशब्दनिबन्धश्च लिङ्गम् । आद्यं द्वितीयं चेत्युभयमपि सुधाकृतोमतम् । तत्राऽऽद्यमतस्य तु ज्ञापक-मुक्तमेव । सुधाकृतो द्वितीयमताङ्गीकारे तु 'तत्र ताराद्यमूलत्वं सर्वशास्त्रस्य चेष्यत' इति अनुव्याख्याने अथशब्दवदोंकारस्य सर्वशास्त्रमूलत्वोक्तिर्लिङ्गम् । अन्यथा – प्राङ्मुखत्वादिवदोङ्कारस्य सर्वशास्त्र-मूलत्वमवक्ष्यत् नाथशब्दस्य समकक्षतया ब्रूयात् । आह च अथशब्दसमकक्षतया ॐकारस्य शास्त्रमूलत्वं, तेन मन्यामहे ॐकारस्याऽथशब्दवत्सूत्रावयवत्वमनुव्याख्यानकृतो मतमिति भवत्येतल्लिङ्गम् । भाष्यकारीयं च 'ॐकारश्चाथशब्दश्च तस्मात्प्राथमिकौ क्रमात् । तद्धेतुत्वं वदश्चापि तृतीयोऽत उदाहृत' इति प्रमाणोदाहरणं लिङ्गम् । अन्यथा– अनुपयुक्तत्वात्तदुदाहरणमसङ्गतं स्यात् । ननु– सत्यमोङ्कारः सूत्रावयवतया सुधाभिमतः तथापि 'अथातो ब्रह्मजिज्ञासा, ॐ अथातो जिज्ञासे'ति पाठद्वयं नाऽभिमतं किं तर्हि – ॐ ब्रह्मशब्दोपेतः 'ॐ अथातो ब्रह्मजिज्ञासे'ति पाठः । तथा हि– 'ताराद्यमूलत्व'-मित्येतद्व्याख्यानावसरे 'तारश्चाऽथश्चतयोर्मूलत्वं क्रमेणादित्व'मित्यभिधानात् । तथा सूत्रयामास भगवानाचार्यः 'ॐअथातो ब्रह्मजिज्ञासे'ति । ॐब्रह्मशब्दोपेतसूत्रोपन्यासाच्च । 'यदुक्तं जीवव्यतिरिक्त

(अभिनवचन्द्रिका)

ईश्वर एव नास्तीति तत्परिहाराय सूत्रकृता 'ॐकारब्रह्मशब्दौ' इत्यभिधानाच्च । 'तदेतौ ॐकारब्रह्मशब्दावपि यौगिकौ जिज्ञास्यमनन्तगुणपरिपूर्णं प्रतिपादयन्तौ जीवजडयोस्तदयोगात् तद्व्यतिरिक्तमेव किंचिद्ब्रमयत' इत्युक्तेश्च । 'अस्तु ॐकारब्रह्मशब्दाभ्यां जीवजडव्यतिरिक्तस्य जिज्ञास्यस्य सिद्धि'रित्युक्तेश्च, 'अथवा सूत्रकारोक्तौ ॐब्रह्मशब्दोपेतसूत्रोपन्यासाच्चे'ति तत्पाठद्वयं सङ्कल्प्योपन्यस्तमित्यङ्गीकारान्न विरुद्धम् । अन्यत्तु सर्वं ज्ञापकं सुधार्थाऽपरिज्ञानविजृम्भितं साधकमस्माकमेव न परस्य । तथा हि– यदत्रोक्तं 'तारश्चाऽथश्च तयोर्मूलत्वं क्रमेणादित्व'मिति तत्पाठभेदे लिङ्गम् । न ह्येकपाठपक्षे द्वयोर्मुख्यमादित्वं सम्भवति । अमुख्यमादित्वमेकस्य वक्तुं युक्तं तदिदमुक्तं क्रमेणेति, पर्यायेणेत्यर्थः । पूर्वपाठे अथशब्दस्य, द्वितीयपाठ ओङ्कारस्य आदित्वमिति विवेकः । यदपि 'यदुक्तं जीवव्यतरिक्त ईश्वर एव नास्तीति तत्परिहाराय सूत्रकृता ॐकारब्रह्मशब्दौ प्रयुक्ता'विति तदपि पाठभेदे लिङ्गम् । एकेनैवशब्देन शङ्कयाः परिहृतत्वात् । अपरप्रयोगवैयर्थ्यात् यदेकेनापि वर्णेन अनर्थकेन सूत्रे न भवितव्यं किं पुनः पदेन तस्मादकामेनापि एकस्मिन्पाठे शङ्कपरिहारायैकं पदमुपात्तम् । अपरस्मिन्पाठे तच्छङ्कापरिहाराय पदान्तरमिति व्यवस्थाऽऽश्रयणीयेति । यदपि 'तदेतावोङ्कारब्रह्मशब्दावपि यौगिकौ जिज्ञास्यमनन्तगुणपरिपूर्णं प्रतिपादयन्तौ जीवजडयोस्तदयोगात् तद्व्यतिरिक्तमेव किंचिद्ब्रमयत' इति तदप्येवमेवास्माकमेव साधकं न परस्य । एकेनैव पूर्णत्वेनाऽपरस्य वैयर्थ्यप्रसङ्गात् पाठभेदेनैव तयोर्गमकत्वस्याङ्गीकार्यत्वात् । यच्चोक्तम् – अस्तु ओंब्रह्मशब्दाभ्यां जीवजडातिरिक्तस्य जिज्ञास्यस्य सिद्धि'रिति तदपि एवमेव एकस्मिन्पाठे ओंशब्देनाऽन्यस्मिन्पाठे ब्रह्मशब्देन जीवजडातिरिक्तस्य जिज्ञास्यस्य सिद्धिरित्यर्थत्वात् । यदपि 'अथवा– सूत्रकारोक्तावोंब्रह्मशब्दावुपलक्षणमात्र'मिति तदप्यस्माकमेव साधकं न परस्य । एकस्यैवोपलक्षणत्वसम्भवेऽपरस्य वैयर्थ्यात् । अस्माकं मते तु एकस्मिन्पाठे ब्रह्मशब्द उदाहरणत्वेनोपात्तः । पाठान्तरे तु ओंशब्द इत्यवैयर्थ्यम् । अवश्यं चैतदेव विज्ञेयम् – 'अथातो ब्रह्मजिज्ञासा, अथात ओंजिज्ञासे'-त्यन्वयसम्भवात् शब्दद्वयोपेत एक एव पाठ इत्यङ्गीकारे तु जिज्ञासापदस्य ब्रह्मशब्देनान्वितत्वात् ओङ्कारेणाऽन्वयो न स्यात् । बुध्या विवेकस्याऽगतिकागतित्वात् । अन्यथा 'तथात्वे प्रथमसूत्रं न्यूनमापद्येत । अधिकार्यादिप्रतिपादकस्याऽन्यस्याऽभावा'दिति सुधावाक्यं चाऽनर्थकं स्यात्, । विषयसमर्पकस्य ब्रह्मशब्दस्य सद्भावेनाऽऽदिशब्दसङ्ग्राह्याभावात् । किं च– ब्रह्मशब्देन गुणपरिपूर्णत्वस्याभिहितत्वात्, ओङ्कारस्यवैयर्थ्यम् । न च अन्यतरस्य रूढत्वात न वैयर्थ्यमिति वाच्यम् । 'स एव ब्रह्मशब्दार्थ' इति ओङ्कारब्रह्मशब्दस्यापि यौगिकत्वाभिधानात् । 'ताभ्यां च तत्सकलजीवजडात्मकात् प्रपञ्चाद्विलक्षणमवगम्यत' इति सुधोक्तेश्च । न च ओंजिज्ञासा, ब्रह्मजिज्ञासेति योजनाभेदेनाऽवैयर्थ्यमिति वाच्यम् ।

(अभिनवचन्द्रिका)

वाक्यभेदापरिहारात् । बुध्या विवेकप्रसङ्गाच्च । 'नारायणानन्तेश्वरादिशब्दाना'मिवोङ्कारस्यापि ब्रह्म-शब्दस्योपलक्षणत्वेन लाभसम्भवे पृथग्ग्रहणवैयर्थ्यं चेति । भवेदयं ग्रन्थकृतोऽभिप्रायः । तथापि– सन्न्यायरत्नावलीविरोधः । तैः 'अथातो ब्रह्मजिज्ञासे'त्येकस्यैव पाठस्याङ्गीकृतत्वात् इति चेत्, न–

स्थितं मतद्वयं सम्यक् व्यासमध्वहृदम्बरे ।
जानतापि स्वेच्छयैव स्वीकृत्यैवैकमुच्यते ।
श्रीपद्मनाभगुरुणा निषिध्यैवापरं मतम् ।
जयतीर्थमुनिः प्राह शिष्याणां हितकाम्यया ॥
मतद्वयं तयोस्तस्मात् मतं नैव विरुध्यते ।

तथा हि– उभयथापि ज्ञापकसद्भावात् पाठद्वयं सूत्रकारभाष्यकारयोः सम्मतमेव । तत्र 'अथातो ब्रह्मजिज्ञासे'ति पाठमङ्गीकृत्य सन्न्यायरत्नावली प्रवृत्ता । 'नाऽथशब्दवत्सूत्रोपनिबद्ध' इति ओङ्कारस्य सूत्रोपनिबन्धाभावकथनं तु एतत्पाठाभिप्रायेण 'नाथशब्दव'दित्यभिधानात् । अथशब्दो यथा पाठद्वयेऽपि सूत्रावयवः न तथोङ्कार इति तदर्थः । अन्यथा न सूत्रोपनिबद्ध इत्येवाऽवक्ष्यत् । इदं तु जयमुनेरपि सम्मतमेव । तथा च– 'अथातो ब्रह्मजिज्ञासे'ति पाठाभिप्रायेण भाष्यस्य प्रवृत्तत्वात् । ओङ्कार-मव्याख्यायाऽथशब्दव्याख्यानमुपपन्नम् । अत एव टीकाकारीयम् 'अथे'ति प्रतीकधारणं युक्तमिति द्रष्टव्यम् । सूत्रकाराणां पाठभेदोऽभिमत इति दृष्टचरमेतत् । तथा हि– इह तावत् सूत्रस्य पाठद्वयं दृश्यते 'पुरुषाश्मवदिति चेत्तत्रापी'(ब्र.सू. २-२)ति एकः पाठः । अपरस्तु 'पुरुषाश्मवदिति चेत्तथापी'ति । तत्राद्यपाठमभिप्रेत्य भाष्ये 'यथा चेतनसम्बन्धात् अचेतनमेव शरीरं अश्मादिकमादाय गच्छति एवमचेतनाऽपि प्रकृतिः पुरुषसम्बन्धात् प्रवर्तत इति चेत्, न– 'न ऋते त्वत् क्रियत' इति तत्रापि तथात्वे दृष्टान्ताभावा'दिति व्याख्यातम् । द्वितीयपाठानुसारेण अनुव्याख्याने– 'सन्निधानाच्चेतनस्य वर्तते यद्यचेतनम् । तथाप्यबुद्धिपूर्वत्वादुक्तदोषः समो भवे'दिति व्याख्यातम् । 'वृद्धिरादैच्, अदेङ्गुणः' इत्यत्र संहिताऽसंहिताभेदेन पाठभेदः पाणिनेरप्यभिमतः । अत एव महाभाष्ये असंहितया पाठपक्षे कुत्वं कस्मान्न भवति चोः कुरिति कुत्वं प्राप्नोतीत्याशङ्क्य 'अयस्मयादीनि च्छन्दसी'ति भसंज्ञया परिहारमभिधाय, 'वृद्धिरादैजदेङ्गुण' इति संहिततया पाठपक्षे जस्त्वाभावमाशङ्क्य 'उभयसंज्ञान्यपि छन्दांसि दृश्यन्त' इति पदसंज्ञामङ्गीकृत्य समाहितम् ।

तत्परतयेति ॥ मङ्गलसिध्यर्थमथशब्दोऽयमुच्चरित इत्याहेत्यर्थः । प्रयोजनकथनस्यापि व्याख्यान-रूपत्वात् व्याचष्ट इत्येतन्नानुपपन्नमिति बोध्यम् । एतेन मङ्गलस्य वाक्यार्थेऽनन्वयात् नाऽथशब्दो

(अभिनवचन्द्रिका)

मङ्गलार्थ इति परास्तम् । न केवलमथशब्दो मङ्गलसिध्यर्थः । अपि तु अवश्यवक्तव्यार्थप्रतिपादकश्चेति भावेनाह– **मुक्त्यर्थिमात्रस्येति** ।। न केवलमथशब्दस्य मङ्गलसिद्धिरेव प्रयोजनम् अपि तु – मुक्त्यर्थिमात्रस्य ब्रह्मजिज्ञासायां प्रवृत्तिनिरसनमपि प्रयोजनम् । इयाँस्तु विशेषः – मङ्गलप्रयोजनकत्वं तु उच्चारणमात्रेणैव, प्रवृत्तिनिरसनं तु वाक्यार्थे समन्वीयमानार्थाभिधानद्वारेति बोध्यम् । ननु– 'अतःशब्दो हेत्वर्थे समुदीरित' इत्यादिना अतःशब्दार्थस्योक्तत्वात् पुनः 'तद्धेतुत्वं वदंश्चापी'ति तस्यौवाभिधाने पौनरुक्त्यमित्यत आह– **वदन्नित्यनुवाद इति** ।। **प्रथमामहानाम्नीति** ।। विदा मघवन्नित्यादिका ऋक् महानाम्नीति शब्दवाच्या । 'अयं वै लोक' इति स्वप्रतिपाद्यलोकस्य विष्ण्वात्मकतया व्यपदिश्यत इत्यर्थः ।

## वाक्यार्थमुक्तावली

ॐ अथातो ब्रह्मजिज्ञासा ॐ ।। आदिसूत्रस्येदं सङ्गत्यादीत्यादिपदेन विषयसंशयादि गृह्यते । अधिकरणानां सङ्गतिस्तावद्द्वेधा । अन्तर्भावलक्षणाऽनन्तर्यरूपा चेति । तत्र आद्या शास्त्राध्यायपादान्तर्भावभेदेन त्रेधा । द्वितीयाऽप्याक्षेपिक्यौपोद्घातक्यातिदेशिक्यापवादक्यादिरूपेणानेकधा । पूर्वाधिकरणेन उत्तराधिकरणस्य सङ्गतिरधिकरणसङ्गतिः । सा च शास्त्राध्यायपादेष्वन्तर्भावरूपाप्याक्षेपिक्यादिरूपा सम्पद्यते । पूर्वाधिकरणविषयवाक्येनोत्तराधिकरणविषयवाक्यस्य सङ्गतिः श्रुतिसङ्गतिः । तदुक्तम् ''शास्त्रेऽध्याये तथा पादे श्रुत्याऽधिकरणेन च । सङ्गतिः पञ्चधा प्रोक्ता सर्वाधिकरणेष्वपी''ति । तत्राधिकरणं नाम विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरः । प्रयोजनं च पञ्चैतान् प्राञ्चोऽधिकरणं विदुरिति वचनोक्तलक्षणाधिकरणं ज्ञेयम् । प्रतिज्ञातां सङ्गतिं तावदाह । **अत्रेति** । ब्रह्मप्रतिपादकश्रुत्यर्थनिर्णायकन्यायव्युत्पादनपरेऽत्र शास्त्रेऽन्तर्भूतेऽस्मिन्नधिकरणे ब्रह्मणो जिज्ञास्यत्वमहिम्नो वर्णनपरतया ब्रह्मप्रतिपादिकायाः तद्विजिज्ञासस्वेत्यादिन्यायेन समर्थनादस्ति शास्त्रसङ्गतिरित्यर्थः । अत एव 'विष्णुरेव विजिज्ञास्यः' इति सङ्ग्रहभाष्ये 'सर्वकर्ताऽगमोदितः' इत्यादिगुणव्युत्पादकत्वेन जन्मादिसूत्राणां शास्त्रान्तर्भाववदस्यापि शास्त्रान्तर्भावः सूचितः ।

ननु चन्द्रिकायां ब्रह्मविचारशास्त्रकर्तव्यतोपयोगितया जिज्ञासाकर्तव्यतासाधनादस्य शास्त्रेणौपोद्घातिकी सङ्गतिरन्यथा शास्त्रानारम्भप्रसङ्गादित्युक्तत्वात्कथमन्तर्भावोक्तिरिति चेन्न । अस्याधिकरणस्य शास्त्रारम्भं प्रति उपोद्घातरूपेण सङ्गतत्वेऽपि स्वयं ब्रह्मणो जिज्ञास्यत्वगुणनिर्णायकत्वेन शास्त्रान्तर्भावेनाविरोधात् । **अध्यायपादसङ्गतिरिति** । अध्यायपादान्तर्भावलक्षणा सङ्गतिरित्यर्थः । कुतो नान्तर्भाव इत्यत आह । **तत इति** । पञ्चाधिकरण्या अध्यायपादप्रतिपाद्यप्रमेयोपयुक्तप्रमेयप्रतिपादकतया समन्वयाकाङ्क्षाजनकतया वाऽध्यायपादपाठत्वादुपक्रमादिन्यायेन ब्रह्मणि शक्तितात्पर्यलक्षणसम्बन्धावधारणसमन्वयसाधकत्वादिति भावः ।

(वाक्यार्थमुक्तावली)

ननु जन्मादिसूत्रे तद्ब्रह्मेति श्रौतब्रह्मशब्दस्य जीवादिसाधारणस्य यतो वा इमानि भूतानि जायन्त इति श्रुतजन्मादिकारणत्वरूपासाधारणलिङ्गेन विष्णुपरत्वसाधनात्समन्वयाध्यायान्तर्भावः तृतीये च लिङ्गस्य रुद्रादिसाधरणत्वाक्षेपे जगज्जन्मादिकारणत्वस्य शास्त्रैकसमधिगम्यत्वसमर्थनेन अनुमानतो रुद्रादौ लिङ्गस्य सावकाशत्वनिरसनेन विष्णोरेव ब्रह्मशब्दवाच्यत्वं दृढीकृतम् । चतुर्थे च जगज्जन्मादिकारणत्वेन शास्त्रप्रतिपाद्यत्वं रुद्रादेरेव 'एको रुद्रो न द्वितीयोऽवतस्थे' इति प्रलये च स्थानेन तस्यैव कारणत्वात् । ''ज्ञात्वा शिवं शान्तिमत्यन्तमेति'' इति मोक्षहेतुत्वश्रवणात् । संहारकारणत्वप्रसिद्धेश्चेत्याशङ्कापरिहाराय सर्वसमन्वयस्योक्तत्वादीक्षत्यधिकरणे च सर्वपदवाच्यत्वसाधनेन शक्त्यवधारणात् । ''तदभावे कुतोऽन्वय'' इत्यनुव्याख्यानोक्तरीत्या समन्वयमाक्षिप्य समाधानाच्चेति चेन्न । आनन्दमयोऽभ्यासादन्तस्तद्धर्मोपदेशा-दाकाशस्तल्लिङ्गादित्यधिकरणेषु शब्दविशेषं श्रुतिविशेषं न्यायविशेषं चोपादाय समन्वयोक्तिवदधिकरणपञ्चके तथोक्त्यभावात् । समन्वयपर्यवसानत्वेनान्तर्भाव-सङ्गत्यभावकथनोपपत्तेः । तथाप्यौपोद्धातकी सङ्गतिरस्त्येवाध्यायपादपीठत्वोक्तेरिति चेन्न । अधिकरणानामन्तर्भावसङ्गतेरेव मुख्यत्वात्प्रकृते तदभावात् । अथेदानीं विषयाद्याह । **पारिप्सिततयेत्यादिना** । ब्रह्मप्रतिपादकश्रुत्यर्थनिर्णायकन्यायानुस्मारके शास्त्रे प्रवर्तनीया शास्त्रेणोक्तविचारमननापरनामिका चित्तवृत्तिः यावत्तत्साध्यानिदिध्यासना या च तदङ्गभूता वाक्यार्थज्ञानलक्षणरूपा सा ब्रह्मजिज्ञासा विषय इत्यर्थः । **कर्तव्या न वेति** । किमिदं शास्त्रमना-रम्भणीयमुतारम्भणीयमिति प्रधानचिन्ता । अन्यथा शास्त्रस्यानारम्भणीयत्वप्रसङ्गात् इत्युपक्रमात् । नैतच्छास्त्रमारम्भणीयमित्युपसंहाराच्च । तदर्थमेतच्छास्त्रव्युत्पादितन्यायकरणिका जिज्ञासा न कर्तव्योत कर्तव्येति । तदर्थं विषयादिकं नास्त्युतास्तीति । यद्यप्ययं सन्देहो न ग्रन्थकर्तुः सर्वज्ञत्वान्नापि परस्य संशयविषयशास्त्रस्याप्रणीतत्वे धर्मिदर्शनाभावेनारम्भणीयत्वादिकोटिकसंशयायोगात् । तथापि शास्त्र-प्रणयनदशायामादित एतत्सूत्रप्रणयने शास्त्रं दृष्ट्वा परः सन्दिहतीति तदीयसन्देहप्रदर्शनमेतदिति सुधायां व्यक्तम् । इदानीं सङ्गम्यन्ते गुरोर्गिर इति प्रतिज्ञामनुस्मृत्य जीवव्यतिरिक्तेश्वराभावात्तस्य च स्वप्रकाशत्वेन नित्यसिद्धत्वाच्च जिज्ञास्यतेति न्यायविवरणं विवृण्वन् पूर्वपक्षमाह **न कर्तव्येति** । **अधिकारीति** । यद्यपि न्यायविवरणे विषयमात्रमाक्षिप्तं तथापि तदभावादेव प्रयोजनाद्याक्षेपस्य ज्ञायमाने ब्रह्मणि तदनुप-लम्भादित्वादिना करिष्यमाणत्वात् तदाक्षिप्ततया वा तदुपलक्षिततया वा प्रयोजनाधिकार्याद्यभावोक्तिः । **न तावद् ब्रह्म विषय इति** । क्रमेण प्रयोजनादि निरसिष्यत इत्यर्थः । तद्ब्रह्मेति श्रवणाद् ब्रह्मेति विशिष्योक्तिः । अहमिति साक्षिणैवानुभवादित्यर्थः । तार्किकमतावष्टम्भेनाशङ्क्य परिहरति । **न चायमिति** ।

(वाक्यार्थमुक्तावली)

नन्वहमिति प्रत्ययस्य मानसत्वेनात्मनस्तत्सिद्धत्वे प्राभाकररीत्याऽत्मनः संविदाश्रयतयाऽभावेऽपि पूर्वपक्ष्यभिप्रेतविषयाक्षेपसम्भवान्न्यायविवरणटीकायां सुधायां च स्वप्रकाशत्वेन नित्यसिद्धमिति मूलमुपलक्षणीकृत्य स्वप्रकाशतया वा स्वप्रकाशसंविदाश्रयतया वा मानसप्रत्यक्षतया वा सिद्धत्वान्न विषयत्वमित्याक्षिप्तत्वाच्च कुतः पूर्वपक्षिणा तदाशङ्क्य इष्यते इति चेन्न । मानसप्रत्यक्षतया स्वप्रकाशसंविदाश्रयतया वाऽत्मनो भाने यदा वृत्तिरूपात्मप्रमोपरम्यते तदा सन्देहावस्कन्दनाद्विषयत्वं घटेतापि स्वप्रकाशने तु साक्षिरूपज्ञानस्य नित्यतयाऽत्मनो नित्यसिद्धत्वात्कदापि सन्देहाद्यभावान्न विषयत्वसम्भावनापीत्यभिप्रेत्य तदाशङ्क्य दूषणोपपत्तेः । अत एव न्यायविवरणे स्वप्रकाशत्वेन नित्यसिद्धत्वादित्युक्तेः न्यायविवरणटीकादौ आत्मनो न विषयत्वं सर्वैरपि वादिभिरात्मनः प्रत्यक्षतयैव सिध्यङ्गीकारादित्यविप्रतिपत्तिसूचनाय पक्षत्रयेऽपि सिद्धत्वप्रतिपादनमिति ज्ञेयम् । ननु कुतो नायं मानसोऽनुभव इति चेन्न । स किमजिज्ञासितग्राह्य उत जिज्ञासितग्राह्य उताग्राह्य एव । आद्ये दोषमाह । **तस्यापीति ।** **कस्यचिदिति** अनवस्थापरिहाराय । कस्यचिदनुभवस्य स्वप्रकाशत्वे संविद्रूपस्यात्मन एव तत्किं नाङ्गीक्रियते लाघवादिति भावः । द्वितीयं शङ्कते । **जिज्ञासायामेवेति** । जिज्ञासा च न सर्वत्रेति नानवस्थेति भावः । **अनुभवेति** । सुखादिविशिष्टस्य जिज्ञासाभावेऽपि ग्राह्यत्वानुभवादिति भावः । अन्यथा जिज्ञासा नाम प्रकृते ज्ञानेच्छा तस्याः समानविषयकज्ञानाख्यधर्मिज्ञानसाध्यत्वानुभावादनवस्था स्यादिति भावः ।

ननु ज्ञानमात्रं न जिज्ञासितग्राह्यं येनानवस्था नापि अजिज्ञासितग्राह्यं येनानुभवविरोधः । किन्तु किञ्चिज्ज्ञानं न ज्ञायत एव इति तृतीयमाशङ्क्य प्रतिषेधति । **न ह्यज्ञायमानेति** । मनसोऽभावे च तेनैव ज्ञायमानत्वात् व्याघातः इति भावः ।

नन्वात्मा न स्वप्रकाशतया भासते किन्तु संविदाश्रयतया । न च तस्यापि संविदो ज्ञायमानत्वेऽनुभवान्तरान्वेषणेऽनवस्था । तस्या एव संविदः स्वप्रकाशत्वाङ्गीकारात् । न च तथापि यथा कथञ्चित्सिद्धत्वाद्विषयत्वं भज्यत इति वाच्यम् । दत्तोत्तरत्वादिति । प्राभाकरमतरीतिमाशङ्क्य निषेधति । **न चेति । औत्तरिकेति** । सुप्तोत्थितस्य एतावन्तं कालं सुखमहमस्वाप्समित्यौत्तरिकानुस्मृतिस्तावदस्ति । सा च पूर्वानुभवजन्येति सुप्तावपि एतावत्कालसुखसुप्त्यवस्थात्मविषयानुभवः कश्चन सिद्ध्यति । स च स्वप्रकाशात्मपक्ष एवोपपद्यते न तु संविदाश्रयतयाऽत्मपक्ष इत्यर्थः । कुत इत्यत आह । **न हीति ।** तदा सर्वेन्द्रियाणामुपरमादिति भावः । यद्यप्यात्मनो नित्यं स्वप्रकाशतया भासमानत्वान्नानुस्मृतिर्युक्ता । तथाप्यतीतकालसुखावस्थाविशिष्टात्मज्ञानस्यैकस्य जायमानत्वात्तस्य चानुभवत्वायोगात् अतीतसुख-

(वाक्यार्थमुक्तावली)

**स्मृतित्वमेष्टव्यम्** । सा च स्वरूपतः साक्षिस्वरूपैव । साक्ष्यनुभवेन स्वरूपान्तःकरणसंस्कारोदयेन तदभिव्यक्तस्मृत्यनुपपत्तेरिति दिक् । संविदाश्रयतयाऽत्मभाने तर्कविरोधमुक्त्वाऽनुमानविरोधमप्याह । **संविद्रूपत्वाच्चेति** । न चात्मन एवासिद्धिः औत्तरिकानुस्मृत्या विज्ञानघन एवेति श्रुत्या सिद्धत्वादिति भावः ।

एवं विषयमाक्षिप्य न्यायविवरणे विषयाक्षेपलब्धं प्रयोजनाद्यभावं चोपपादयति । **न चेत्यादिना** । **प्रयोजनमिति** । मोक्षाख्यप्रयोजनमित्यर्थः । ज्ञानद्वारेति शेषः । ब्रह्मणि जीवरूपब्रह्मणि । उपलक्षणं चैतत् । जीवरूपब्रह्मज्ञानस्य जिज्ञासायाः पूर्वमेव सिद्धत्वाद् ज्ञानरूपमवान्तरफलं च नास्तीति ज्ञेयम् । ब्रह्मशब्दव्यावर्त्य एवायं पूर्वपक्षः न त्वथशब्दव्यावर्त्यः तयोर्यथाक्रममधिकारानन्तर्यार्थश्चातःशब्दो हेत्वर्थ इति सङ्क्षेपेण 'भक्तिमान् परमे विष्णौ' 'कर्मणा त्वधमः प्रोक्तः' इति विस्तरेण च विप्रतिपद्यमानत्वात् । अत एवोक्तप्रयोजनाधिकारिसम्बन्धाभावाश्च विषयाभावेनैव प्राप्ता इति । जीवान्यविषयसमर्थनपरेण ब्रह्मशब्देन निरसिष्यन्ते । तदुक्तं चन्द्रिकायाम् । अहमिति ब्रह्मणि ज्ञायमानेऽपि मोक्षानुपलम्भान्निष्प्रयोजनत्वमिति शङ्का तु विषयसूचकेन ब्रह्मपदेन निरस्तेति । विषयप्रयोजनाभावादेवाधिकारी च तदभावादेव सम्बन्धोऽपीत्याचार्योक्तिं मनसि निधायाह । **विषयप्रयोजनाभावादित्यादिना** । यो यत्प्रयोजनमर्थयमानो यं विषयं जिज्ञासते स तत्राधिकारीति विषयप्रयोजनयोः अधिकारिव्यापकत्वात् इति भावः । **तत्फलतयेति** । अथशब्दस्य शङ्खवीणाध्वनिवत् श्रुतितो माङ्गलिकत्वेन तद्वाचकत्वाभावान्मङ्गलप्रयोजनकत्वेनेत्यर्थः । अत एवाभिधेयमर्थमाहेति वक्ष्यति । एतेन मङ्गलार्थ इति भाष्ये अर्थशब्दः प्रयोजनपर इत्युक्तं भवति । **विमुक्त्यर्थिमात्रस्येति** । अयोग्यानामपि तदर्थित्वान्मुक्तियोग्यत्वशान्त्यादिमत्वलक्षणाधिकारानन्तरवाचिनाऽथशब्देन मुक्त्यर्थिमात्रनिरास इत्यर्थः (यद्वाऽध्ययनादिरूपाधिकारानन्तर्यार्थकाथशब्देन मुक्त्यर्थिमात्रस्य शूद्रादेर्वेदार्थजिज्ञासायामधिकारनिरास) इति भावः । **योग्यतयेति** । अधिकारिणं प्रत्येव ब्रह्मजिज्ञासा कर्तव्येति विधिसन्निधानादानन्तर्यप्रतियोगित्वसामर्थ्येनाधिकार एवोपस्थीयत इति भावः । **प्रयोजनेति** । मोक्षहेतुज्ञानविष्णुप्रसादयोः कर्मणा ज्ञानमातनोति तत्कर्म हरितोषं यदित्यादिना कर्मजन्यतावगमाज्जिज्ञासायाः निष्प्रयोजनत्वशङ्कानिवर्तकतयेत्यर्थः । ननु ज्ञायमानेऽपि ब्रह्मणीत्युक्तशङ्कानिवर्तकतयेति भ्रमितव्यम् । तस्य विषयार्थकब्रह्मपदेनैव निरासात् । **नन्विति** । विषयाधिकारिजिज्ञासाफलानामध्यायचतुष्टयप्रतिपाद्यमानत्वात्तत्क्रमेणादिसूत्रैर्निर्देशो कर्तव्येऽपि इति नन्वित्यनन्तरमध्याहार्यम् । **मङ्गलोक्त्यादेरिति** । श्रुतितो माङ्गलिकाथशब्दं विहाय साक्षान्मङ्गलशब्दितदेवताप्रणामोंकारादिपदेनाधिकार्योक्त्यादेरित्यर्थः । निखिलान्यपीत्यस्य विवरणं

(वाक्यार्थमुक्तावली)

नियत्येति । यद्वा ननु ॐकारोऽपि सूत्रादावुपबद्धो किं विशिष्योच्यते अथातःशब्दपूर्वाणि निखिलान्यपि सूत्राणि प्रारभन्त इत्याशङ्क्य नियत्येत्युक्तम् । अयातश्शाब्दवन्नोङ्कारनियतिर्ब्रह्मसूत्रे ॐकारोपबद्धत्वेऽपि अन्यशरीरानुप्रविष्टतया सूत्रकृतोपबद्धत्वाभावात् । अत एव सूत्रेषु तु महाप्राज्ञास्तावेवादौ प्रयुञ्जत इति नियमाभिप्रायेण वक्ष्यति । अतश्च पूर्वमुच्चार्यास्सर्व एते सतां मता इति तु प्रत्यवायपरिहारार्थ-मध्येतृभिर्बहिरेवोच्चार्या इत्यभिप्रायेणेति प्रवृत्तम् । अतःशब्दस्य तृतीयत्वोक्तिस्तु ब्रह्मसूत्रगतातश्शब्दाभि-प्रायेण तत्र प्राथमिकतयोङ्कारस्योपबद्धत्वादिति ज्ञेयम् ।

**तृतीयेऽपि पृच्छतीति** । द्वितीयपक्ष इवाक्षेपकारणाभावात्प्रथमपक्ष इव तृतीयेऽपि सन्देहात् पृच्छामात्रमिति भावः । **स्वरूपोत्तमाविति** । नन्वोमथशब्दौ स्वरूपोत्तमौ प्रथमोत्पन्नत्वादित्यसिद्धिः । ब्रह्मण एव प्रथमजत्वादित्याशङ्कां परिहरन्सामान्यव्याप्तिप्रदर्शनपूर्वं दृष्टान्तमाह । **यत्स्वजाताविति** । श्रवणपाठादिनाऽस्य शब्देभ्योऽप्यतिशयेन धर्महेतुत्वं विवक्षितम् । अर्थाधिक्यातिरिक्तस्य तदुत्तमत्व-स्याभावात् तद्धेतुत्वमिति भाष्ये अत इत्यस्यातश्शब्दपरत्वं हेतुपरत्वं तृतीय उदाहृत इत्यनयोश्चावृत्तिं प्राथमिकावित्यस्य वचनव्यत्ययेनानुषङ्गं चाभिप्रेत्य चापिशब्दयोः सम्बन्धं च दर्शयति । **अतश्चेति** । **अनुवाद इति** । तेनातःशब्दो हेत्वर्थ इत्यनेन न पुनरुक्तिरिति बोध्यम् । सर्ववागात्मेति हेतुगर्भविशेषणम् । तत्र सर्ववागिति तदर्थभूतं पूर्णत्वमुच्यते । वाच्यवाचकयोरैक्यव्यपदेशस्य वक्ष्यमाणत्वात् । पुनस्तदात्मत्वं नाम तत्प्रतिपादकत्वमित्यभिप्रेत्य व्याचष्टे । **सर्वेति** । यद्वा सर्ववागात्मत्वं नाम सर्ववाग्व्याख्येयत्वम् । व्याख्यानव्याख्येययोरैकार्थ्यात्सर्ववागर्थपूर्णताभिधायकतयेति लभ्यते । तदुक्तमकारो वै सर्ववागिति । ऐतरेयभाष्ये च ''अन्येऽपि शब्दास्सर्वेऽपि ह्यकारार्थाभिधायिनः । तस्मादकार एवायं सर्ववागात्मकः श्रुतः । तस्मात्सर्वगुणान्विष्णोरकारो वक्ति यत्प्रभोः । तद्व्यक्तयो हि शब्दा ये सर्वे विष्णुगुणब्रुवा'' इत्युक्तम् । अभिधायकतयेतीत्थंभूतलक्षणे तृतीया । प्राणशब्दस्य विष्णुपरत्वमप्यभिप्रेत्य व्याचष्टे **भगवद्वाचकाविति** । यद्वा प्राणश्चात्मा च भगवांश्च प्राणात्मानौ स्वार्थे कप्रत्यय इति भावेन प्राणात्मकौ प्राणदैवत्यौ भगवद्वाचकाविति ।

**महतश्चतुर्मुखादित्यादाविति** । विज्ञानतत्वं महतस्समुत्पन्नं चतुर्मुखादित्यादावित्यर्थः । **प्रथमा महानाम्नीति** । अयं वै लोकः प्रथमा महानाम्नीत्युच्यमानविदामघवन्नित्यादि ऋचि अयं वै लोकः पृथिवीलोकस्थो विष्णुरिति विष्णोः ऋगैक्यमुच्यते । तत्र यथा वाच्यवाचकयोरैक्यव्यपदेशस्तथेत्यर्थः । तदुक्तं कर्मनिर्णये । प्रथमा या महानाम्नी तद्वाच्यः पार्थिवो हरिरिति । नन्वर्थाधिक्यं वक्तुमुपक्रम्य

(वाक्यार्थमुक्तावली)
किमित्यभिमान्याधिक्यमुच्यत इति चेन्न । अभिमानिनोऽपि अभिमानित्वादेवामुख्यतया वाच्यत्वसूचनेनापरब्रह्मवाचकतयाऽर्थाधिक्यसूचनादिति बोध्यम् ।

## तत्त्वसुबोधिनी

**अध्यायपादसङ्गतिस्त्विति ।** यद्यपि एतदधिकरणाभावे शास्त्रस्येव तदेकदेशयोः अध्यायपादयोरप्यारम्भासम्भवः । तथापि सिद्धे शास्त्रारम्भे पुनरध्यायाद्यारम्भाक्षेपस्यानेन समाधानात् शास्त्रेणैव न ताभ्यामित्यौपोद्घातिकी सङ्गतिरित्यर्थः । यद्वा तद्विजिज्ञासस्व इत्यादिब्रह्मविचारविधायकवाक्यार्थनिर्णायकन्यायव्युत्पादकत्वात् अधिकरणपञ्चकस्य ब्रह्मविचाररूपेण शास्त्रेण अन्तर्भावलक्षणा सङ्गतिः न तथा अध्यायपादाभ्यां समन्वयाप्रतिपादकत्वात् इत्यर्थः । ननु तथापि आनन्दमयाधिकरणारभ्येति कथम्? समन्वयसूत्रे साक्षात् समन्वयोक्तेः समन्वयसूत्रेण अध्यायशेषस्य प्रपञ्च्यप्रपञ्चकभावसङ्गतिरिति सुधाग्रन्थाच्च तत्राध्यायसङ्गतेः सत्त्वात् । ईक्षत्यधिकरणे समन्वयासाधारणहेतुवाच्यत्वसमर्थनेन तस्मिन्नपि तस्याः सत्त्वात् । "तदभावे कुतोऽन्वयः" इत्यनुव्याख्याने वाच्यत्वस्य समन्वयहेतुत्वेन उक्तत्वादिति । उच्यते । वैदिकशब्दानां ब्रह्मण्युपक्रमादिप्रमाणकः शक्तितात्पर्यलक्षणसम्बन्धः समन्वयः । तेन समन्वयासम्भवाशङ्कैव निरस्ता । समन्वयस्तु न व्युत्पादित इति न तयोः अध्यायपादाभ्यां अन्तर्भावलक्षणा सङ्गतिः । यद्वा आनन्दमयमारभ्य सङ्गतिद्वयं ततोऽर्वाक् समन्वयेक्षत्योः पादमात्रेण सङ्गत्यभावः । अन्येषु त्वध्यायेनापि सङ्गत्यभावः ।। अत एव अध्यायपादसङ्गतिरिति समुदायैकवचनम् । **अध्यायपादपीठत्वादिति ।** पञ्चाधिकरण्याः समन्वयविशेषाप्रतिपादकत्वादध्यायाद्यन्तर्भावासम्भवेऽपि विचारकर्तव्यतायाः प्रथमप्रतिपाद्यत्वाद्वक्ष्यमाणक्रमेण चतुरधिकरण्या बद्धक्रमत्वात्तदनन्तरमेव समन्वये आकाङ्क्षोदयात् तदाकाङ्क्षोत्थापकतया समन्वयाध्यायस्य तदादिनामपादस्य चादौ निवेशो युक्त इत्यर्थः । **नाधिकरणश्रुतिसङ्गती** इति । पूर्वाधिकरणतद्विषयवाक्याभ्यां सङ्गती नेत्यर्थः । ननु शास्त्रं सिद्धमसिद्धं वा । आद्ये विषयस्य सिद्धत्वात् कथमनुपयुक्तम् । द्वितीये शास्त्रस्यैवासिद्धत्वात्कुत्र विषयः कथ्यते इत्यत आह । **चिन्तासङ्गतेति । कर्तव्या न वेति ।।** अत्र शास्त्रम् अनारम्भणीयम् उत आरम्भणीयमिति प्रधाना चिन्ताऽभिमता द्रष्टव्या । अत एव नैतत् शास्त्रं आरम्भणीयमिति उपसंहारः । इयं तु तदर्थचिन्तेति द्रष्टव्यम् । अत एव च सुधायाम् आरम्भणीयं न वेति प्रधानचिन्तामुक्त्वा कर्तव्यत्वाकर्तव्यत्वचिन्तायाः तदर्थत्वमुक्तं इति भावः । सयुक्तिकं पूर्वपक्षमाह । न **कर्तव्येतीति ।। न तावद् ब्रह्मेति ।।** नापि प्रयोजनादीति तावच्छब्दः । ननु नाप्यब्रह्म विषय इति । अब्रह्मणो विषयत्वानिराकरणादिति

**(तत्त्वसुबोधिनी)**

ध्येयम् ।। **असन्दिग्धत्वादिति** । सन्दिग्धस्यैव विषयत्वादिति भावः । ननु नासन्दिग्धत्वं ब्रह्मणः तस्य जीवव्यतिरिक्तत्वेन प्रत्यक्षाद्यविषयत्वात् । तथा च कुतो न विषयत्वमित्यत आह । **प्रमाणेति** । यदि जीवव्यतिरिक्तं ब्रह्म अस्तीति स्यात् तदा सन्दिग्धत्वेन विषयत्वं स्यात् । न चैवम् । जीवव्यतिरिक्त-ब्रह्मसद्भावे प्रमाणाभावात् । प्रत्यक्षाप्रत्यक्षधर्मभेदस्य वायुवनस्पतिसंयोगवदप्रत्यक्षत्वेन प्रत्यक्षाप्रत्यक्ष-प्रतिबद्धलिङ्गाभावेनानुमानासम्भवात् । कर्मकाण्डस्य कर्मपरत्वात् । ब्रह्मकाण्डस्य अद्वैतरीत्या अखण्ड-चिन्मात्रबोधकत्वादिति भावः । अस्तु जीवाभिन्नत्वं तथापि जीवस्य सन्दिग्धत्वात् विषयत्वं भविष्यतीत्यत आह । **जीवस्येति** । किमनुभवोऽजिज्ञासितग्राह्यः उत जिज्ञासितग्राह्यः इति विकल्पं हृदि निधायाद्ये दोषमाह । **तस्यापीति** । **ज्ञायमानत्त्वेनेति** । परप्रकाश्यत्वेनेत्यर्थः । द्वितीयं शङ्कते । **जिज्ञासायामेवेति** । जिज्ञासा न सर्वत्रेति नानवस्थेति भावः । **अनुभवविरोधादिति** । ज्ञानस्य सुखदुःखादिवत् जिज्ञासा-भावेऽपि अनुभवात् । अन्यथा जिज्ञासायाः ज्ञानाख्यधर्मिज्ञानसाध्यत्वानुभवादनवस्थेति भावः ।। ननु न ज्ञानमात्रमजिज्ञासितग्राह्यम् । येन नानवस्था । नापि जिज्ञासितग्राह्यम् । येनानुभवविरोधः । किन्तु किञ्चित्ज्ञानं कदापि न ज्ञायत एवेति न कोऽपि दोष इत्यत आह । **न ह्यज्ञायमानेति** । अज्ञायमानत्वादेवेति भावः । कुत इत्यत आह । **न हीति** । **संविदात्मकत्वादिति** । आत्मा न संविदाश्रयतया प्रतीयते संविदात्मकत्वात् संविद्वदिति प्रयोगो द्रष्टव्यः ।। न चासिद्धिः । औत्तरीयकानु-स्मृत्यैव तस्य सिद्धत्वादिति भावः । **विषयेति** ।। योः यत्प्रयोजनमर्थयमानो यद्विषयं जिज्ञासते स तत्राधिकारीति विषयप्रयोजनयोः अधिकारिव्यापकत्वादिति भावः । अत एव विषयप्रयोजनाधिकारिणां अभावादेव । तत्फलकतयेति पाठः साधुः । न तु तत्परतयेति । अस्माभिरपि आनन्तर्याभिधोऽथशब्दः श्रुत्या मङ्गलप्रयोजनक इत्यङ्गीकृतत्वादिति सुधानुसारात् । विघ्नोत्सारणासाधारणकारणरूपस्य विष्णु-स्मरणादेः मङ्गलस्याथशब्दार्थत्वाभावेन तत्परत्वायोगात् । तस्याप्यभिधेयमर्थमाह इत्युत्तरग्रन्थाननुगुणत्वात् । तत्परतयेति पाठेऽप्ययमेवार्थोऽनुसन्धेयः । तथा चाथशब्दः मङ्गलार्थ इति भाष्ये अर्थशब्दः प्रयोजनवचन इति भावः । **मङ्गलोक्त्यादेरिति** । मङ्गलप्रयोजनकाथशब्दः मङ्गलत्वेन विवक्षितः । तस्योक्तिरुच्चारणम् । आदिपदेनाधिकारानन्तर्यादिप्रतिपादनम् । अन्यथा मङ्गलोक्तेरित्यवक्ष्यदिति । **शब्दान्तरेणापीति** ।। मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येत्यादि वचनादानन्तर्याद्यर्थकशब्दान्तरेणापीत्यर्थः । भाष्ये निखिलान्यपीति । निखिलान्यपीत्यस्यैव विवरणं नियत्यैवेति इति भावः । अथातःशब्दपूर्वाणीति भाष्योदाहृतश्लोके सूत्राणीति बहुवचनस्य त्रित्वे पर्यवसानवारणाय निखिलानीत्युक्तम् । नन्वेतन्निखिलानां सूत्राणाम् अथातःशब्दपूर्वकत्वं यादृच्छिकमित्यत: उक्तम् । **नियत्यैवेति** । बुद्धिपूर्वकमित्यर्थः । अभियुक्ता हि बुद्धिपूर्वकं आदिसूत्रे

(तत्त्वसुबोधिनी)

अयात:शब्दौ प्रयुञ्जते । नन्वेतत्कथं ज्ञायते । सर्व एते सतां मता इत्युपसंहारेणैवेति । नन्वेतदयात:शब्द-पूर्वकत्वमसिद्धमित्यत उक्तम् ।। अपीति । सूत्राणामथात:शब्दपूर्वकत्वं निश्चितमित्यर्थः । न चैतत्केन निश्चितमिति वाच्यम् । निरुपाधिकसहचारदर्शनव्यभिचारादर्शनाभ्यामेवेति भावः ।। ननु निखिलानि सूत्राणि अयात:शब्दपूर्वकाणीत्यसङ्गतम् । उत्तरसूत्रेषु तदभावात् । न च निखिलान्यादिसूत्राणीति विवक्षितमिति वाच्यम् । एवमपि वृद्धिरादैजित्यादिपाणिनीयसूत्रे तदभावात् । तथा च कथमिदमिति चेन्न । वेदार्थनिर्णायकादिसूत्रत्वावच्छेदेन अयात:शब्दपूर्वकत्वस्य विवक्षितत्वात् । एवं च उत्तर-सूत्रादेरादिसूत्रत्वाभावान्न दोषः । पाणिनीयसूत्रस्य च प्रकृतिप्रत्ययव्युत्पादनेन शब्दमात्रनिर्णायकत्वेन वेदार्थनिर्णायकसूत्रत्वाभावात् । गौतमसूत्रादावपि न प्रसङ्गः । वेदार्थनिर्णायकत्वाभावादेव । अयातो दर्शपूर्णमासौ व्याख्यास्याम इत्यनेन मन्त्रेण इदं कर्म कर्तव्यं इति कर्मरूपवेदार्थनिर्णायकत्वात् अयात:-शब्दपूर्वकत्वाच्च न कोऽपि दोषः । एवं च धर्मदेवब्रह्ममीमांसादिसूत्राणां वेदार्थनिर्णायकादिसूत्रत्वात् अयात:शब्दपूर्वकत्वाच्च न कोऽपि दोष इति सर्वमनवद्यम् । तथाच भाष्ये अथ च अतश्च अयात: अयातश्चासौ शब्दौ च अयात:शब्दौ पूर्वं येषां तानीति विग्रह इति भावः । द्वितीयमाक्षिपतीति । अवश्यवक्तव्यार्थत्वाधिक्ययोः तदभावयोश्च शब्दान्तरेषु दर्शनादथशब्दे तत्सन्देहेन प्रश्नमात्रसम्भवेन प्रथमतृतीययोः पृच्छतीत्युक्तम् । द्वितीये तु स्वरूपाधिक्यस्य शब्दान्तरेषु अदर्शनात् अथशब्दे तदाक्षेप इति भावः । अत एव शब्दान्तरस्येत्यादिना मूलाभिप्रेतो हेतुः प्रदर्शितः । मूले कथंशब्दः प्रश्नार्थः । उत्तमताशब्दस्तु तत्त्वार्थक इत्यभिप्रेत्य कथमित्यादि प्रकारान्तरेण व्याचष्टे । तृतीयेऽपि पृच्छतीति । प्रथमं निःसृतत्वेऽपि स्वरूपोत्तमत्वं कुत इत्यत आह । यत्स्वजाताविति । इति न्याय इति । अत्र सामान्यव्याप्तिरेवानुसन्धेया । यथा देवेषु चतुर्मुख इति दृष्टान्तसम्भवात् । ननु यः शब्दः इति विशेषव्याप्तिः । दृष्टान्ताभावादिति भावः । न च अथात:शब्दयोः प्राथम्यस्यैव पृष्टत्वात् तत्प्राथम्यमेव, उपपादनीयम् । ॐकारप्राथम्योपपादनं कोपयुक्तम् इति वाच्यम् । तस्यापि प्रथमं हरेः निःसृतत्वेन प्रसङ्गात् तत्कथनमिति भावः । अत इत्यस्यात:शब्दपरत्वं हेतुपरत्वमसकृदावृत्तित्वं ''तृतीयः'' ''उदाहृतः'' इत्यनयोः आवृत्तिं प्राथमिकावित्यस्य वचनव्यत्ययेनानुषङ्गं चाभिप्रेत्य व्याचष्टे । अतश्च तृतीयतयेति ।।

''अकारः सर्ववागात्मा'' इत्यत्राकारस्य सर्ववागर्थप्रतिपादकत्वमेव सर्ववागात्मकत्वं सर्ववागात्मक इत्यस्य हेत्वर्थगर्भत्वं चाभिप्रेत्याह ।। सर्ववागर्थेति । अभिधायकतयेति इत्थंभूतलक्षणे तृतीया । प्राणात्मकौ प्राणस्वरूपौ इत्येव शब्दलभ्योऽर्थः । प्राणो देवता अभिमानी ययोस्तौ प्राणात्मकौ इति

(तत्त्वसुबोधिनी)

फलितकथनं तनु विस्तार इति स्मरणात् । तकारो हरेः व्याप्त्यभिधायकः । स्था गातिनिवृत्ताविति च स्मरणात् थकार स्थित्यभिधायक इति व्याप्तिस्थितिविधायकौ । एवं च प्राणात्मकावित्यभिमान्यभिमन्यमानयोः ऐक्यव्यपदेशः कथमित्यतः दृष्टान्तेन उपपादयति । **अभिमानीति** । अत्र च सृष्टिप्रकरणत्वात् महत्पदं महत्तत्त्वाभिधायकम् । तथा च महत्तत्त्वाभिमानिनः चतुर्मुखादित्यर्थः । प्राणात्मकाविति भगवद्वाचकौ इति फलितम् । एवं च प्राणात्मकावित्येतद्वाच्यवाचकयोरैक्यव्यपदेशादृष्टेरनुपपन्नमित्यतो दृष्टान्तेनोपपादयति । **वाच्यवाचकयोरित्यादिना** । यद्वा प्राणश्चात्मा भगवांश्च प्राणात्मानौ प्राणात्मानावेव प्राणात्मकावित्यस्योक्त एवार्थः । प्राणदैवत्यौ भगवद्वाचकाविति व्याख्यातम् । तदयुक्तम् । प्राणदैवत्यत्वे भगवद्वाचकत्वे च तथयोस्तथौ प्राणात्मानाविति अभिमानिना प्राणेन वाच्येन भगवता चैक्यव्यपदेशायोगादित्यतः अभिमान्यभिमन्यमानयोरैक्यव्यपदेशं दृष्टान्तोक्त्या घटयति । **अभिमानीति** । वाच्यवाचकयोरपि तद्व्यपदेशं पूर्ववदुपपादयति । **वाच्यवाचकयोरिति । अयं वै लोक इति** । विदा मघवन्नित्यादिका ऋक् पृथिवीलोकस्थविष्णुवाचीत्यर्थः । प्रथमा या महानाम्नी तद्वाच्यः पार्थिवो हरिरिति स्मरणादिति भावः ।

## वाक्यार्थविवरणम्

**तत्रेति** ।। सूत्राणां व्याख्येयत्वे सिद्धे सतीत्यर्थः ।। **शास्त्रसङ्गतिरिति** ।। शास्त्रप्रतिपाद्यप्रतिपादकत्वेन शास्त्रान्तर्भावलक्षणा सङ्गतिः शास्त्रसङ्गतिः ।। **अन्यथेति** । ब्रह्मविचाराख्यजिज्ञासाया अकर्तव्यत्वे तत्कारणीभूतन्यायग्रन्थनात्मकशास्त्रस्याप्यनारम्भणीयत्वं स्यादिति भावः । एतत् जिज्ञासायाः कर्तव्यत्वम् । **अध्यायपादसङ्गतिरिति** ।। अध्यायपादप्रतिपाद्यप्रतिपादकत्वेन तदन्तर्भावलक्षणसङ्गतिरित्यर्थः । **अध्यायपादपीठत्वात्** ।। तदुपयुक्तार्थप्रतिपादकत्वेनोपोद्घातरूपत्वादिति व्याख्येयम् । "विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरः । प्रयोजनं च वक्तव्यं पूर्वसिद्धान्तपक्षयोः" इति उक्तिमनुसृत्य विषयादिकं दर्शयति । **प्रारिप्सिततयेति** । शास्त्रस्याप्यभावात् शास्त्रस्य प्रतिपाद्याभावात् कुत्र विषयप्रदर्शनमित्यत उक्तम् ।। **चित्तसङ्गतेति** ।। बुद्धिस्थितेत्यर्थः । विषयः संशयधर्मीत्यर्थः । **उभयविधेति** । कर्तव्याकर्तव्येत्यर्थः । आत्मनो जीवस्य अनुभवात् स्वविषयकज्ञानरूपत्वरूपस्वप्रकाशत्वस्येत्यर्थः । आत्मनो यदि अप्रकाशत्वं तर्हि तत्प्रकाशः किं तार्किकरीत्या मानसानुभवेन, किं वा प्राभाकररीत्या स्वप्रकाशसंविदाश्रयतया ।। आद्य सोऽनुभवः किं ग्राह्योऽग्राह्यो वा । ग्राह्यत्वेऽप्यजिज्ञासितग्राह्य उत जिज्ञासितग्राह्य इति विकल्पाः ।। अजिज्ञासितग्राह्यत्वे दोषमाह ।। **तस्यापीति** ।। मुम्यभावप्रसङ्गरूपबाधकं स्फुटत्वान्नोक्तम् ।

(वाक्यार्थचन्द्रिका)

कस्यचिदनुभवस्य स्वप्रकाशत्वान्नानवस्थेत्यत आह ।। **कस्यचिदिति** ।। तत् स्वप्रकाशत्वम् अङ्गीकार्यमित्यर्थः । अजिज्ञासितग्राह्यत्वाङ्गीकाराजिज्ञासायाश्च सर्वत्राभावान्नानवस्थितिः । द्वितीय-पक्षमाशङ्कते ।। **जिज्ञासायामेवेति** ।। सुखादिवत् ज्ञातैकसत्त्वेन जिज्ञासाभावेऽप्यनुभवेन जिज्ञासित-ग्राह्यत्वमनुभवविरुद्धमित्यत आह ।। **अनुभवेति** ।। जिज्ञासितग्राह्यत्वपक्षेऽपि अनवस्थापि द्रष्टव्या ।। तथा हि ।। ज्ञातुमिच्छा हि जिज्ञासा । तथा चानुभवविषयकजिज्ञासायां सत्यामेवानुभवविषयकं ज्ञानं भवतीति वाच्यम् । तस्याश्चेश्वरेच्छाया ज्ञानसाध्यज्ञानान्तरमङ्गीकरणीयम् । तस्यापि ज्ञानस्य पुनः जिज्ञासितग्राह्यत्वात्तद्विषयणीच्छाऽङ्गीकार्या । तस्याः पुनः ज्ञानसाध्यत्वात् ज्ञानान्तरमङ्गीकरणीयम् इति । अग्राह्यत्वपक्षं दूषयति ।। **न हीति** ।। अज्ञायमानत्वादेव तस्याप्रामाणिकत्वं स्यादिति भावः । प्राभाकररीत्या स्वप्रकाशसंविदाश्रयतया भासत इति न स्वप्रकाशत्वमिति शङ्कते ।। **न चेति** ।। 'आत्मा स्वप्रकाशसंविदाश्रयतया न भासते । संविद्रूपत्वात् । संवेदनवत्' इत्यनुमानं वक्तुं तत्र स्वरूपासिद्धिपरिहाराय हेतुं तावत् साधयति ।। **औत्तरिकेति** ।। आत्मनो ज्ञानरूपत्वसाधकसौषुप्ति-कानुभवस्यैवाप्रामाणिकतापरिहारायौत्तरिकानुस्मृतिसिद्धेत्यर्थः । ननु संविदाश्रयतया प्रतीत्यङ्गीकारे कुतः सौषुप्तिकानुभवाभावप्रसङ्ग इत्यत आह ।। **न हीति** ।। येन तदाश्रयतया आत्मा प्रतीयेतेत्यर्थः । मनआदिसर्वेन्द्रियाणां तदोपरतत्वेनात्मातिरिक्तं जन्यं ज्ञानं न तदानीमस्तीति भावः । एवं हेतुं प्रसाध्य प्रयोजनमाह ।। **संविदात्मकत्वादिति** ।। आत्मनो जीवस्य मानसानुभवसिद्धत्वं स्वप्रकाश-संविदाश्रयत्वेन सिद्धत्वं वा कस्माद्दूषणीयम् । यथाकथञ्चिदात्मनः सिद्धत्वेनाविषयत्वं वाच्यम् । तदेवमपि भविष्यत्येव । यथोक्तं सुधायाम् । 'जीवात्मनः स्वप्रकाशज्ञानाश्रयतया मानसप्रत्यक्षवेद्यतया सिद्धिः प्रदर्शिताऽतो न्यायविवरणोक्तं स्वप्रकाशत्वं साधयितुमेवेतरपक्षद्वयं दूषितमिति सम्प्रदायोऽव-गन्तव्यः । यथोक्तं चन्द्रिकायाम् । टीकायां वस्तुस्थितिप्रदर्शनाय न्यायविवरणोक्तस्वप्रकाशता साधितेति ।

प्रयोजनं भवदैहिकमामुष्मिकं वा स्यात् । नाद्यः । तस्यान्यतो लभ्यत्वात् । द्वितीयेऽपि स्वर्गोऽ-विद्यानिवृत्तिरूपापवर्गो वा । नाद्यः । तस्य कर्मादिसाध्यत्वात् । द्वितीये त्वाह । **ज्ञायमानेऽपीति** ।। स्वप्रकाशतपोक्तरीत्या अहमिति ब्रह्मणि ज्ञायमानेऽपि तस्याऽविद्यानिवृत्तिरूपप्रयोजनस्य इदानीमस्माकमनुपलम्भादिति व्याख्येयम् । अनूदितमेतच्चन्द्रिकायाम् । 'नाप्यविद्यानिवृत्तिः प्रयोजनम् । उक्तरीत्या आत्मनि भासमानेऽपि तदनिवृत्तेरि'ति ।। **अधिकारीति** ।। यो हि यमर्थमर्थयमानो यं विषयं जिज्ञासते तस्यैवाधिकारित्वादिति भावः । अत एव सम्बन्धिनामभावादेव ।। **नैतच्छास्त्रमिति** । तत्कारणीभूतन्यायग्रथनात्मकमिति शेषः ।।

(वाक्यार्थविवरणम्)

अत:शब्द: हेत्वर्थ इति भाष्ये हेत्वर्थ: हेतुत्वार्थक इत्यर्थ: । तथा चातो मोक्षरूपनिमित्त-सद्भावादिति सौत्रात:शब्दार्थो द्रष्टव्य: । एवं प्रमाणेऽपि हेत्वर्थे हेतुत्वार्थ इति व्याख्येयम् ।। तृतीय इति ।। तथाच उत्तमता अर्थत उत्तमता कथम् उत्तमार्थकम् इति यावदिति भाष्यं योज्यम् । स हीति भाष्यम् । जिज्ञासाया अपि मनोवृत्तिविशेषत्वादिति भाव: । मधुकैटभादिव्यावृत्त्यर्थं स्वजातावित्युक्तम् । इत्यत उत्तम इत्यर्थ: । इति हेतो: अतश्शब्द: स्वरूपत उत्तम इति व्याख्येयम् । तस्य तत्र इत्यर्थद्वयमभिप्रेत्य व्याचष्टे । तस्य विष्णोरिति । विष्णुप्रसादस्येत्यर्थ: । तस्य हेतुत्वं हेतुकत्वमित्यर्थमभिप्रेत्याह ।। तस्येति । अनुवाद इति ।। अतश्शब्दो हेत्वर्थे समुदीरत इत्युक्तत्वान्न विधानमिति भाव: । सर्ववागर्थपूर्णतेति ।। सर्वशब्दार्थभूता ये गुणास्तै: पूर्णतेत्यर्थ: । 'अकारो वै सर्ववाक्' इति श्रुतेरिति भाव: । इत्यादावित्यत्रादिपदेन 'अन्तरिक्षलोको, द्वितीयोऽसौ लोकस्तृतीय' इति वाक्यशेषग्रहणम् ।

## वाक्यार्थमञ्जरी

तत्रेति ।। सूत्रेष्वित्यर्थ: । सूत्राणामत्युपादेयत्वेन व्याख्येयत्वे सिद्धे सतिति वा । आदिशब्देन विषयादिपरिग्रह: । अत्र प्रथमाधिकरणे ।। शास्त्रसङ्गतिरिति । तद्विजिज्ञासस्व तद्ब्रह्मेत्यादिब्रह्मविचार-विधायकवाक्यार्थनिर्णायकन्यायव्युत्पादकत्वात् ब्रह्मविचारपरशास्त्रेऽन्तर्भावलक्षणसङ्गतिरित्यर्थ: । यथोक्तं सुधायाम् । सङ्गतिर्द्विविधा । अन्तर्भावलक्षणा आनन्तर्यलक्षणा चेति । आद्यापि शास्त्राध्यायपादान्तर्भाव-भेदेन त्रिविधा । द्वितीयाप्याक्षेपिकी आतिदेशिकी औपोद्घातिकी आपवादिकीत्याद्यनेकविधेति । अत्र यद्यप्यन्यथेत्युत्तरवाक्योक्तरीत्या जिज्ञासाया: कर्तव्यत्वाभावे जिज्ञासाकारणीभूतन्यायग्रथनात्मकशास्त्रस्या-नारम्भणीयत्वप्रसङ्गात्तदर्थं प्रवृत्तस्याधिकरणस्य शास्त्रेणौपोद्घातिकी सङ्गतिरस्ति तथापि सात्र न विवक्षिता । तथात्वे तस्या वक्ष्यमाणरीत्याऽध्यायपादाभ्यामपि सत्वेन शास्त्रसङ्गतिरस्ति अध्यायपादसङ्गतिर्नास्तीति वक्तुमयोगात् । अत एव न्यायविवरणटीकायां तद्विजिज्ञासस्वेति वाक्यार्थविचारपरत्वाद्वेदार्थमीमांसा-शास्त्रान्तर्गतमपि भवतीत्यन्तर्भावसङ्गतिरेवोक्ता । सुधायामपि अत एवास्य न शास्त्रबहिर्भाव इत्युक्तम् । किमर्थं जिज्ञासाया कर्तव्यत्वमत्र समर्थनीयमित्यत आह ।। अन्यथेति ।। जिज्ञासाया अकर्तव्यत्वे जिज्ञासाकारणीभूतन्यायग्रथनात्मकशास्त्रस्यानारम्भणीयत्वप्रसङ्गादित्यर्थ: । ननु–

शास्त्रेऽध्याये तथा पादे श्रुत्याऽधिकरणेन च ।
सङ्गति: पञ्चधा प्रोक्ता सर्वाधिकरणेष्वपि ।।

(वाक्यार्थमञ्जरी)

इत्याद्युक्तेः कथं शास्त्रसङ्गतिरेव प्रदर्श्यत इत्यत आह ।। अध्यायपादसङ्गतिस्त्विति ।। पञ्चाधिकरण्याः अध्यायपादप्रतिपाद्यसमन्वयतद्विशेषाप्रतिपादकत्वेन तदुभयान्तर्भावासम्भवादिति भावः । ननु चतुर्थसूत्रे समन्वयादिति साक्षात्समन्वयोऽभिहितः । तमेव समन्वयं प्रकटयतीत्यानन्दमयनयभाष्ये अध्यायशेषस्य समन्वयप्रपञ्चकत्वमुक्तं, सुधायां च समन्वयसूत्रेणाध्यायशेषस्य प्रपञ्च्यप्रपञ्चक-भावसङ्गतिरित्युक्तम् । तथेक्षतिनये तदभावे कुतोऽन्वय इत्यनुव्याख्यानोक्तरीत्या समन्वयसाधारण-हेतुवाच्यत्वसमर्थनं क्रियते । अतः समन्वयेक्षतिनययोरपि अध्यायसङ्गतत्वेन कथमानन्दमयाधिकरण-मारभ्यैवेत्युक्तमिति चेत् । उच्यते । आनन्दमयनयमारभ्य सङ्गतिद्वयं ततोऽर्वाक्तनसमन्वयेक्षतिनययोः पादमात्रेण सङ्गत्यभावः । अन्येषु त्रिषु चाध्यायेनापि सङ्गतेरभावः पञ्चाधिकरणीसाधारणोऽभिहितः । एतत्सूचनार्थमेवाध्यायपादसङ्गतीति द्विवचने प्रयोक्तव्ये सङ्गतिरिति समुदायैकवचनं प्रयुक्तम् । पञ्चाधि-करण्याः अध्यायपादानन्तर्भावे तदादौ निवेशः कथमित्यत आह ।। तत इति ।। आद्यसूत्रे जिज्ञास्यतयोक्तब्रह्मणो द्वितीये लक्षणमभिधाय तृतीये तस्यातिव्याप्तिनिरासाय शास्त्रं प्रमाणीकृत्य चतुर्थे शास्त्रस्यान्यपरत्वनिरासाय सर्वशब्दसमन्वयमभिधाय संशब्दवाच्यत्वे पञ्चमे समर्थिते तदनन्तरमेव समन्वये आकाङ्क्षोदयात् पञ्चाधिकरण्या उपोद्घातरूपत्वेन समन्वयाध्यायस्य तदादिनामपादस्य चादौ निवेशो युक्त इत्यर्थः । नाधिकरणश्रुतिसङ्गतीति ।। पूर्वनयेनोत्तरनयस्य सङ्गतिरधिकरणसङ्गतिः । पूर्वनयस्थविषय-वाक्येनोत्तरनयस्थविषयवाक्यस्य सङ्गतिः श्रुतिसङ्गतिः । तदुभयमुक्तरीत्या नास्तीत्यर्थः । ''विशयो विषयश्चैव पूर्वपक्षस्तथोत्तरः । प्रयोजनं च पञ्चैते प्राञ्चोऽधिकरणं विदुः''रित्युक्तेरधिकरणशरीरभूत-विषयादिपञ्चकं क्रमेण दर्शयति ।। प्रारिप्सितेत्यादिना ।। शास्त्रस्यैवानारब्धत्वात् कुत्र प्रवर्तनीयमित्यत उक्तम् ।। प्रारिप्सिततया चित्तसङ्गतेति ।। विषयः विचारविषयीभूतः संशयधर्मी । उभयविधेति ।। अग्निहोत्रनिषिद्धहिंसयोः कर्तव्यत्वाकर्तव्यत्वाभ्यां सहदृष्टव्यापारत्वाख्यसाधारणधर्मस्य जिज्ञासायां दर्शनं संशयकारणमित्यर्थः । अधिकारीति ।। एतेषां प्रत्येकं हेतुत्वं चन्द्रिकातोऽवगन्तव्यम् । ननु विषयस्यादौ निराकरणात् तदादित्वेन निर्देशः कार्यः । न च सूत्रे अथशब्देनादावधिकारिणः सूचितत्वात् तदादित्वेन निर्देश इति वाच्यम् । तर्हि तस्यैवादौ निरासप्रसङ्गात् । अतःशब्दसूचितप्रयोजनस्य द्वितीयतया ब्रह्मशब्दसूचितविषयस्य तृतीयतया निर्देशप्रसङ्गश्चेति चेत् । उच्यते । सौत्रक्रमानुसारेणादावधिकारि-निर्देशेऽपि तन्निरासे विषयप्रयोजननिरासयोर्हेतुत्वेन तयोः निर्देशवैपरीत्येन निराकरणं युक्तमिति ।। न तावदिति ।। प्रयोजनादि च निराकरिष्यामीत्याशयेन तावच्छब्दः ।। असन्दिग्धत्वादिति ।। सन्दिग्धस्यैव विचार्यत्वादिति भावः । कुतोऽसन्दिग्धत्वमिति चेत् । अत्र प्रष्टव्यम् । ब्रह्म किं जीवभिन्नं किञ्चिदस्त्युत

(वाक्यार्थमञ्जरी)

जीव एव । नाद्य इत्याह ।। **प्रमाणाभावेनेति** ।। प्रत्यक्षानुमानयोस्तत्रासामर्थ्येन कर्मकाण्डस्य कर्मपरत्वेन वेदान्तस्य जीवपरत्वेन जीवातिरिक्ते ब्रह्मणि न मानमिति भावः । द्वितीये त्वाह ।। **जीवस्येति** ।। ततः किमित्यह आह ।। **न हीति** ।। सन्दिग्धे सन्देहवान् भवति । निश्चयस्य संशयविरोधित्वादिति भावः ।। **अनुभवादिति** ।। अस्यानुभवस्यात्मस्वरूपत्वेन तत्प्रकाशितस्य स्वप्रकाशितत्वादिति भावः । नायमनुभवः आत्मस्वरूपः किन्तु तदतिरिक्तमनोजन्य एव । अतः आत्मनोऽन्यप्रकाशितत्वेन न स्वप्रकाशितत्वमिति मतमपाकरोति ।। **न चेति** ।। **तस्यापीति** ।। अज्ञायमानत्वपक्षे दूषणस्य वक्ष्यमाणत्वेन मानसानुभवस्य केनचिदनुभवेन ज्ञायमानत्वं वाच्यम् । एवं तस्यापीत्यनवस्थेत्यर्थः ।। **कस्यचिदिति** ।। तथाच तज्ज्ञानायानुभवान्तरानन्वेषणान्नानवस्थेति भावः । तत् स्वप्रकाशत्वं लाघवादिति भावः । ननु यदाऽनुभवं ज्ञास्यामीति जिज्ञासा तदैव तज्ज्ञानायानुभवान्तरान्वेषणं जिज्ञासा च सन्देह-दशायामेव । तथाच यदा कोटिस्मरणादिविरहेण सन्देहानुदयस्तदा तदधीनजिज्ञासाया अप्यभावेन नानुभवान्तरान्वेषणमतो नानवस्थेत्याशङ्क्य निराकरोति ।। **जिज्ञासायामेवेति** ।। **अनुभवविरोधादिति** ।। सुखं ज्ञास्यामीति जिज्ञासाभावेऽपि यथा सुखमनुभूयते तथा घटानुभवानन्तरमनुभवं ज्ञास्यामीति जिज्ञासाभावेऽपि घटज्ञानवानहमित्यनुभवसद्भावेन जिज्ञासायामेवानुभवस्य ज्ञायमानत्वाङ्गीकारे ज्ञानस्य अजिज्ञासितग्राह्यत्वानुभवविरोध इत्यर्थः । ननु मानसानुभवो न ज्ञायत एवातोऽनानवस्थेत्यत आह ।। **न हीति** ।। केनचित्प्रमाणेन ज्ञेयस्यैव सत्यत्वेन सर्वथाऽज्ञेयत्वे असत्वस्यापरिहार्यत्वादिति भावः । न ब्रूमो वयमात्मनो मानसानुभववेद्यत्वं येनानवस्था किन्तु स्वप्रकाशसंविदाश्रयतयाऽऽत्मा भासत इति प्राभाकरशङ्कामपाकरोति ।। **न चेति** ।। **सौषुप्तिकानुभवेति** ।। सुषुप्तौ जायमानात्मानुभवेत्यर्थः । इष्टापत्तिपरिहारायोक्तम् । **औत्तरिकानुस्मृतिसिद्धेति** ।। सुषुप्त्युत्तरकाले खल्वेतावन्तं कालं सुखमहमस्वाप्समिति स्मृतिर्भवति सा चानुभवपूर्वकत्वात् सुप्तावात्मानुभवं गमयतीति भावः । ननूक्त-ज्ञानस्यात्मादिविषयकत्वेन साक्षिरूपत्वात्कथं स्मृतित्वं मनोजन्यज्ञानस्यैव स्मृतित्वादिति चेत् । सत्यम् । अतीतकाले अनुभूतार्थविषयकत्वसारूप्येण साक्षिज्ञाने स्मृतिशब्दव्यवहारोपपत्तिः । आजन्म मरणं स्मृत्वा मुक्ता हर्षमवाप्नुयुरिति छान्दोग्यभाष्योदाहृतस्मृतौ मुक्तस्वरूपज्ञाने स्मृतिशब्दप्रयोगात् । कुत इत्यत आह । **न हीति** ।। गृहीत एव प्राणो भवति गृहीता वाक् गृहीतं चक्षुरिति श्रुत्या सर्वेन्द्रियो-परमावगमेनातिरिक्तसंविदभावान्न तदाश्रयतयाऽत्मभानमिति भावः ।

**आत्मातिरिक्तेति** । मुक्तात्मस्वरूपसंविदेव सौषुप्तिकानुभवः समाधेय इति सूचयति । किं चात्मा न संविदाश्रयतया भासते संविद्रूपत्वात्संविद्वदिति दूषणान्तरं प्राभाकरमतं चाह ।। **संविदात्मकत्वादिति** ।।

(वाक्यार्थमञ्जरी)

नन्वात्मनो विषयत्वं निराकुर्वता यथाकथञ्चिदात्मसिद्धिर्वक्तव्या । सा च स्वप्रकाशत्व इव मानसानुभववेद्यत्वे स्वप्रकाशसंविदाश्रयतया भाने वा समाना । अतोऽत्र तदुभयनिराकरणं व्यर्थमिति चेत् । सत्यम् । जीवव्यतिरिक्तेश्वराभावात्तस्य च स्वप्रकाशत्वेन नित्यसिद्धत्वादिति न्यायविवरणोक्तस्वप्रकाशत्वसमर्थनार्थमेव मानसानुभववेद्यत्वादिति मतनिराकरणं कृतम् । **न चेति** ।। प्रयोजनं चेति सम्बन्धः ।। **ज्ञायमानेऽपीति** ।। जीवाख्ये ब्रह्मण्यहमिति ज्ञायमानेऽप्यैहिकामुष्मिकफलानुपलम्भादित्यर्थः ।। **विषयेति** ।। यो हि यत्प्रयोजनमुद्दिश्य यं विषयं जिज्ञासते तस्यैव तत्राधिकारित्वादिति भावः । अत एव सम्बन्धिभूतत्रितयाभावादेव । अतः विषयाद्यभावात् । पूर्वपक्षफलमाह ।। **नैतदिति** ।। आद्य इतिशब्दो हेतौ । द्वितीयः पूर्वपक्षसमाप्तौ ।।

ॐ अथातो ब्रह्मजिज्ञासा ॐ ।। अत्रौङ्कारो बुद्ध्या विविक्तेन ब्रह्मेत्यनेनान्वीयते । तथाच । अथाध्ययनशमदमादिरूपाधिकारसम्पत्त्यनन्तरम् । अतः अकारशब्दवाच्यात् प्रसन्नात् ब्रह्मणो ज्ञानजन्यप्रसादजन्यमोक्षाख्यफलसत्वात् । ओं ब्रह्मणो गुणपूर्णस्य विष्णोः जिज्ञासा श्रवणमनननिदिध्यासनरूपा कर्तव्येत्यर्थः । ओंब्रह्मशब्दयोरपि योगेन गुणपूर्तिवाचित्वेऽपि एकस्य रूढित्वमाश्रित्य विशेष्यवाचित्वेनान्वयः । आत्मेति तूपगच्छन्तीत्यत्रैव द्रष्टव्यः । तत्रात्मशब्दस्यावृत्तिमङ्गीकृत्यैकस्य स्वामित्वार्थकत्वमपरस्य विष्णुरूपविशेष्यवाचित्वं चाङ्गीकृत्यान्वयस्य वक्ष्यमाणत्वात् । ब्रह्मशब्दमात्राद्विषयसिद्धावपि ब्रह्मणि वेदरूपप्रमाणसूचनाय तद्वाख्येयौंकारग्रहणम् ।। **अवश्यमिति** ।। तस्याविघ्नपरिसमाप्त्यादिफलकत्वादिति भावः ।। न च सूत्रकारस्य विघ्नशून्यत्वात् तत्करणमनर्थकमिति वाच्यम् । शिष्यशिक्षार्थत्वात् । अन्यथा भारतादौ न कुर्यात् ।। **तत्परतयेति** ।। मङ्गलफलतयेत्यर्थः । न तु तदभिधायकतयेति । अथशब्दस्य श्रुतितो माङ्गलिकत्वेन मङ्गलाभिधायकत्वाभावात् । अथशब्दः श्रुत्या मङ्गलप्रयोजनक इति सुधाग्रन्थाच्च । मङ्गलस्य वाक्यार्थान्वयाच्च । तस्याभिधेयमाहेत्युत्तरग्रन्थस्वारस्याच्च । अत एव तत्फलतयेति क्वचित्पाठः । ततश्च मङ्गलार्थ इत्यर्थशब्दः प्रयोजनवचन इति भावः ।। **योग्यतयेति** ।। आनन्तर्यप्रतिपत्तावबाधितत्वसामर्थ्येनेत्यर्थः । **मङ्गलोक्त्यादेरिति** । मङ्गलप्रयोजनकशब्दोऽत्र मङ्गलत्वेन विवक्षितः । उच्चिरुच्चारणम् । क्वचिन्मङ्गलाचारादेरिति पाठः । आदिपदेनाधिकारानन्तर्यादिप्रतिपादनम् । **शब्दान्तरेणेति** ।। तत्प्रयोगेणेत्यर्थः । अत्रेत्यनुवादः । प्रथमप्रयोज्यत्व इति व्याख्या । तदिति परामर्शघटनाय नियामकं प्रस्तावयति ।। **नियामकेनेति** ।। यादृच्छिकम् ईश्वरेच्छया प्राप्तम् । "यदृच्छा हि तदिच्छा स्यादि" त्युक्तेः । अनियतमिति यावत् । अतो न नियामकापेक्षेति भावः ।। **यत इति** ।। निखिलानीत्यस्यैव विवरणं नियत्यैवेति भावः । अथातो ब्रह्मजिज्ञासा । अथातो धर्मजिज्ञासा ।

(वाक्यार्थमञ्जरी)

**अथातो दैवीमीमांसा** । अथातो दर्शपूर्णमासावित्यादिसम्भावितनिखिलानीति बोध्यम् । तेन पाणिनीयसूत्रादौ न व्यभिचारः शङ्क्यः । किं नियामकमित्येतद्विवरणपरतयोत्तरग्रन्थं योजयति ॥ **नियामकं चेत्यादिना** ॥ **अवश्यवक्तव्यार्थत्वमिति** ॥ अर्थस्यादौ वक्तव्ये तत्प्रतिपादकशब्दस्यापि प्रथमं प्रयोक्तव्यत्वमिति भावः । स्वरूपतः अर्थत उत्तमत्वमनपेक्ष्य । अर्थतः अर्थाधिक्यमनपेक्ष्य ॥ **आक्षिपतीति** ॥ तथाच न कथमपीति योज्यमिति भावः । अत्रावश्यवक्तव्यार्थत्वाधिक्ययोस्तदभावयोश्च लोके शब्दान्तरेषु दर्शनादथशब्दादौ तत्सन्देहेन प्रश्नसम्भवात्प्रथमतृतीययोः पृच्छतीत्युक्तम् । स्वरूपाधिक्यस्य शब्दान्तरेष्वदर्शनादथशब्दादौ तदाक्षेप इति द्वितीये आक्षिपतीत्युक्तम् । अत एव तत्र शब्दान्तरस्येत्यादिना मूलाभिप्रेतो हेतुः प्रदर्शितः । हेत्वर्थ इति भाष्ये हेतुत्वार्थक इत्यर्थः । अतः प्रसादात् ब्रह्मप्रसादादित्यर्थः । कथं लभ्यत इत्यतोऽतःशब्दार्थमाह ॥ **अकारशब्दवाच्याद्विष्णोरिति** ॥ पञ्चम्यर्थे तसिरिति भावः । पर्यवसितमाह ॥ **तत्प्रसादादिति** ॥ प्रसन्नादिति योग्यतया लाभादिति भावः । जिज्ञासादि कार्यमिति शेषोक्तिः । अकारशब्दवाच्यत्वं विष्णोः कुत इत्यत आह ॥ **अः इतीति** ॥ ब्रह्मपदोदितश्रुतिसूचनाभावे विष्णोरित्येव ब्रूयादिति भावः ॥ **स हीति** ॥ जिज्ञासाया अपि मनोवृत्तिविशेषत्वात्तदर्थं तत्प्रसादादिरावश्यक इति भावः । प्रथमं निःसृतत्वमेव प्राथम्ये हेतुत्वेनोच्यते न तु स्वरूपत उत्तमत्वमत आह ॥ **अतः स्वरूपोत्तमाविति** ॥ ननु ओंकाराथशब्दौ स्वरूपोत्तमौ हरेः प्रथमं निसृतत्वादित्यनुमाने यः शब्दो हरेः प्रथमं निःसरति स उत्तम इति व्याप्तौ दृष्टान्तो नेत्यत आह ॥ **यत्स्वजाताविति** ॥ मधुकैटभादेश्चतुर्मुखादप्याधिक्यनिरासाय स्वजाताविति । इति न्यायः सामान्यन्यायः । यथा देवेषु चतुर्मुख इति दृष्टान्तसम्भवात् न तु विशिष्येति भावः । शब्दान्तरस्य स्वरूपत उत्तमत्वादर्शनात्कथमनयोस्तदिति शङ्कानिरासाय सिसृक्षोरित्यादि भाष्ये ओंकारस्य स्वरूपोत्तमग्रहणमिति ध्येयम् । अतःशब्दस्य तृतीयत्वेनोदाहरणे स्वरूपोत्तमत्वं कथमित्यत आह ॥ **अतश्चेति** ॥ अतःशब्दार्थ इत्यर्थः ॥

**प्राथमिक इति** ॥ अनेन प्राथमिकावित्यस्य वचनव्यत्यासेनानुषङ्ग इत्युक्तं भवति ॥ **तृतीयतयोदाहृत इति** ॥ अनेन तृतीयोदाहृतशब्दयोरावृत्तिरित्युक्तं भवति ॥ इत्यत इति ॥ अनेन तन्त्रन्यायेनातःशब्दस्य हेतुपरत्वं चास्तीत्युक्तं भवति । परस्य ब्रह्मण इति द्वितीयव्याख्यानानुसारेणाह । **तस्य विष्णोरिति** ॥ हेत्वर्थे समुदीरित इति प्रथमव्याख्यानानुसारेणाह ॥ **तस्य जिज्ञासादेरिति** ॥ मनोवृत्तिशब्देन जिज्ञासाया अपि प्रकृतत्वादिति भावः । व्यत्यासप्रश्नपरस्येत्यादिनोक्तस्य समीपस्थत्वेन तत्परामर्शस्वारस्यसूचनाय कृतः ॥ **अनुवाद इति** ॥ प्रागुक्तमेव हेत्वर्थकत्वम् अधिकविधानायानूद्यते न पुनरत्र विधीयते तेन

(वाक्यार्थमञ्जरी)
हेत्वर्थे समुदीरित इत्यादिना न पौनरुक्त्यमिति भावः । स्वरूपैक्यानुपपत्तेराह ।। **सर्ववागर्थेति** ।। सर्वासां वाचामर्थभूतं यद् गुणपूर्णत्वं तदभिधायकतयेत्यर्थः । अकारो वै सर्वा वागित्यैतरेयवाक्यव्याख्यानावसरे तद्भाष्ये—

'अन्येऽपि शब्दाः सर्वेऽपि ह्यकारार्थाभिधायिनः ।
तस्मादकार एवायं सर्ववागात्मकः श्रुतः ।
तस्मात्सर्वगुणान्विष्णोरकारो वक्ति यत्प्रभोः ।।'

इत्युक्तत्वादर्थैक्याभिप्रायेणैक्यव्यपदेशः । हेतुगर्भं चैतदिति भावः । **परब्रह्माभिधायक इति** ।। गुणपूर्णत्वस्यैव परब्रह्मशब्दार्थत्वादिति भावः । प्राणशब्दस्य वायौ प्रसिद्ध्यनुसारेणाह ।। **प्राणदैवत्याविति** ।। तस्य विष्णुपरत्वमभ्युपेत्याह ।। **भगवद्वाचकाविति** ।। भाष्ये अत सातत्यगमने ष्ठा गतिनिवृत्ताविति स्मरणात् । क्रमेण व्याप्तिस्थितिविधायकावित्यर्थः । व्याख्यानद्वयेऽपि कथं प्राणात्मकावित्यैक्यव्यपदेश इत्यतः क्रमेणोभयत्र प्रयोगौ प्रदर्शयति ।। **अभिमानीति** ।। विज्ञानतत्त्वं महतः समुत्पन्नं चतुर्मुखादित्यादौ महत्तत्वाभिमानिनश्चतुर्मुखादिति वक्तव्ये महतश्चतुर्मुखादिति प्रयोगो यथा तथेत्यर्थः ।। **अयं वै लोक इति** ।। परमैश्वर्यादिसम्पन्नमहार्थप्रतिपादकत्वेन महच्छब्दितेन्द्रादिनामास्यामस्तीति महानाम्नीसंज्ञका प्रथमा विदा मघवन्नित्यादिका ऋगयं लोकः भूलोकस्यविष्णुवाचकेत्यर्थः । प्रथमा या महानाम्नी तद्वाच्यः पार्थिवो हरिरिति कर्मनिर्णयोक्तेः ।। **उपसंहार इति** ।। अतस्तस्मात्प्राथमिकावित्यादिना न पुनरुक्तिरिति भावः ।

## विवृतिः

**अध्यायपादसङ्गतिस्त्विति** ।। यद्यप्येतदधिकरणाभावे शास्त्रस्येव तदध्यायपादयोरप्यारम्भासम्भवः तथापि सिद्धे शास्त्रारम्भे पुनरध्यायाद्यारम्भाक्षेपस्यानेन समाधानात् शास्त्रेणैव न ताभ्यामौपोद्घातिकी सङ्गतिरित्यर्थः । यद्वा, तद्विजिज्ञासस्वेत्यादि ब्रह्मविचारविधायकवाक्यार्थनिर्णायकन्यायव्युत्पादकत्वाद्ब्रह्मविचाररूपेण शास्त्रेणान्तर्भावसङ्गतिर्न तथाऽध्यायपादाभ्यां समन्वयाप्रतिपादकत्वादित्यर्थः ।।

ननु तथाप्यानन्दमयाधिकरणमारभ्येति कथम् । समन्वयसूत्रे साक्षात्समन्वयोक्तेः ।। समन्वयसूत्रेणाध्यायशेषस्य प्रपञ्चस्य प्रपञ्चकभावसङ्गतिरिति सुधाग्रन्थाच्चात्राध्यायसङ्गतेः सत्वात् ।। ईक्षत्यधिकरणे समन्वयासाधारणहेतुवाच्यत्वसमर्थनेन तस्मिन्नपि तस्याः सत्वात् ।। तदभावे कुतोऽन्वय इत्यनुव्याख्याने, वाच्यत्वस्य समन्वयहेतुत्वेनोक्तत्वादिति ।। उच्यते ।। वैदिकानां शब्दानां ब्रह्मणि उपक्रमादिप्रमाणकः

(विवृतिः)

शक्तितात्पर्यलक्षणसम्बन्धः समन्वयः । स च न समन्वयसूत्रव्युत्पाद्यः । तत्र तत्प्रमाणस्यानुक्तेः । किन्तु व्युत्पादयिष्यमाणः स शास्त्रयोनित्वे हेतुत्वेन सिद्धवदुपन्यस्तः ।। ईक्षत्यधिकरणे च अवाच्यत्वप्रयुक्तासम्भावनाशङ्कैव निरस्ता, समन्वयस्तु न व्युत्पादित इति न तयोरध्यायपादाभ्यामन्तर्भावलक्षणा सङ्गतिः । यद्वा आनन्दमयमारभ्य सङ्गतिद्वयं ततोऽर्वाक् समन्वयेक्षत्योः पादमात्रेण सङ्गत्यभावः अन्येषुत्वध्यायेनापीति सङ्गत्यभावः पञ्चाधिकरणीसाधारणः । अत एवाध्यायपादसङ्गतिरिति समुदायैकवचनम् । **अध्यायपादपीठत्वादिति** ।। पञ्चाधिकरण्याः समन्वयविशेषाप्रतिपादकत्वादध्यायान्तर्भावासम्भवेपिऽविचारकर्तव्यतायाः प्रथमप्रतिपाद्यत्वाद्वक्ष्यमाणक्रमेण चतुरधिकरण्या बद्धक्रमत्वात्तदनन्तरमेव समन्वये आकाङ्क्षोदयात्तदाकांक्षोत्थापकतया समन्वयाध्यायस्य तदादि नामपादस्य चादौ निवेशो युक्त इत्यर्थः ।। **नाधिकरणश्रुतिसङ्गती चेति** ।। पूर्वाधिकरणतद्विषयवाक्याभ्यां सङ्गती नेत्यर्थः । ननु शास्त्रं सिद्धमसिद्धं वा । आद्ये विषयस्य सिद्धत्वात्कथं तत्कथनमनुपयुक्तम् ।। द्वितीये शास्त्रस्यैवासिद्धत्वात्तत्कथनमनुपयुक्तम् ।। विषयः कथ्यत इत्यत आह ।। **चित्तसङ्गतेति** ।। सयुक्तिकं पूर्वपक्षमाह ।। **न कर्तव्येतीति** ।। **न तावद्ब्रह्मेति** ।। नापि प्रयोजनादीति तावच्छब्दः । न तु नाप्यब्रह्मविषय इति । अब्रह्मणो विषयत्वनिराकरणादिति ध्येयम् ।। **असन्दिग्धत्वादिति** ।। सन्दिग्धस्यैव विषयत्वादिति भावः ।। ननु नासन्दिग्धत्वं ब्रह्मणः, तस्य जीवव्यतिरिक्तत्वेन प्रत्यक्षाद्यविषयत्वात् ।। तथा च कुतो न विषयत्वमित्यत आह ।। **प्रमाणेति** ।। यदि हि जीवव्यतिरिक्तं ब्रह्मास्तीति स्यात्तदा सन्दिग्धत्वेन विषयत्वं स्यात् । न चैवम् ।। जीवव्यतिरिक्तेश्वरसद्भावे प्रमाणाभावादिति भावः ।। **प्रमाणेति** ।। अस्तु जीवाभिन्नत्वं तथापि जीवस्य सन्दिग्धत्वाद्विषयत्वं सम्भविष्यतीत्यत आह ।। **जीवस्य चेति** ।। किमनुभवो जिज्ञासितग्राह्यः उत अजिज्ञासितग्राह्य इति विकल्पं मनसि निधायाद्ये दोषमाह ।। **तस्यापीति** ।। द्वितीयं शङ्कते ।। **जिज्ञासायामेवेति** ।। जिज्ञासा च न सर्वत्रेति । तथा च नानवस्थेति भावः ।। **अनुभवविरोधादिति** ।। ज्ञानस्य सुखदुःखादिवज्जिज्ञासाभावेऽप्यनुभवात् । अन्यथा जिज्ञासाया ज्ञानाख्यधर्मिज्ञानसाध्यत्वानुभवादनवस्थेति भावः ।।

ननु न ज्ञानमात्रमजिज्ञासितग्राह्यं, येनानवस्था, नापि जिज्ञासितग्राह्यं, येनानुभवविरोधः, किन्तु किञ्चित् ज्ञानं कदापि न ज्ञायत एवेति न कोऽपि दोष इत्यत आह ।। **न हीति** ।। **संविदात्मकत्वादिति** ।। आत्मा, न संविदाश्रयतया प्रतीयते, संविदाश्रयकत्वात्, संविद्वदिति प्रयोगो द्रष्टव्यः । न चासिद्धिः । आन्तरीयकानुस्मृत्यैव तस्य सिद्धत्वादिति भावः । तदभावादेव विपर्ययेति ।। यत्प्रयोजन-

(विवृतिः)

मर्षयमानो यं विषयं जिज्ञासते स तत्राधिकारीति विषयप्रयोजनयोरधिकारिव्यापकत्वादिति भावः । **अत एव सम्बन्धिनामभावादेव** ।। **तत्परतयेति** ।। अस्माभिरप्यनन्तर्याभिधेयोऽथशब्दः श्रुत्या मङ्गल-प्रयोजनक इत्यङ्गीकृतत्वादिति सुधानुसारान्मङ्गलप्रयोजनतयेत्यर्थः । न तु तत्परतयेति । अत एव 'तस्याभिधेयमर्थमाह' इति वक्ष्यति ।। तथा चाथशब्दो मङ्गलार्थ इति भाष्येऽथशब्दः प्रयोजनवचन इति भावः ।। तत्फलतयेति पाठस्तु समीचीन एव ।। **मङ्गलोक्त्यादेरिति** ।। मङ्गलप्रयोजनकाथशब्दो मङ्गलत्वेन विवक्षितः तस्योक्तिरुच्चारणं, आदिपदेनाधिकारानन्तर्यादिप्रतिपादनम् । अन्यथा मङ्गलाद्युक्तेरित्यवक्ष्यदिति ।। अयातःशब्दपूर्वाणीति भाष्योदाहृत(वाक्ये) श्लोके सूत्राणीति बहुवचनस्य त्रित्वे पर्यवसानवारणाय निखिलानीत्युक्तम् । न चैतन्निखिलानां सूत्राणामयातःशब्दपूर्वकत्वं यादृच्छिक-मित्यत उक्तम् ।। **नियत्यैवेति** ।। बुद्धिपूर्वकमित्यर्थः । अभियुक्ता हि बुद्धिपूर्वकमथातःशब्दौ प्रयुञ्जते, न चैतत्कथं ज्ञायते, तच्च सर्वएते सतां मताः इत्युपसंहारेणैवेति । नन्वेतदथातःशब्दपूर्वकत्वमसिद्धमित्यत उक्तम् अपीति ।। सूत्राणामयातः शब्दपूर्वकत्वं निश्चितमित्यर्थः । न चैतत्केननिश्चितमिति वाच्यम् ।। निरुपाधिकसहचारदर्शन व्यभिचारादर्शनाभ्यामेवेति भावः ।

ननु निखिलानि सूत्राणि अथातःशब्दपूर्वकाणीत्यसङ्गतम् । उत्तरसूत्रेषु तदभावात् । न च निखिलान्यादिसूत्राणीति विवक्षितमिति वाच्यम् । एवमपि, वृद्धिरादैजिति पाणिनीयसूत्रे तदभावात् । तथा च कथमिदमिति चेत् न । वेदार्थनिर्णायकादिसूत्रावच्छेदेनायातःशब्दपूर्वकत्वस्य विवक्षितत्वात् । एवं चोत्तरसूत्रादेरादिसूत्रत्वाभावान्न दोषः ।। पाणिनीयसूत्रस्य, प्रकृतिप्रत्ययव्युत्पादनेन शब्दमात्र-निर्णायकत्वेन, वेदार्थनिर्णायकसूत्रत्वाद्यभावात् गौतमसूत्रादावपि न प्रसङ्गः । वेदार्थनिर्णायकत्वाभावादेव । अथातो दर्शपूर्णमासौ व्याख्यास्यामः, इत्यत्र तु अनेन मन्त्रेणेदं कर्म कर्तव्यमिति कर्मरूप-वेदार्थनिर्णायकत्वात् अथातःशब्दपूर्वकत्वाच्च न कोऽपि दोष इति सर्वमनवद्यम् ।। अखिलानीत्यस्यैव विवरणं नियत्यैवेतीति भावः ।। तथा च भाष्ये अथ च अतश्च अथातः अथातश्च तौ शब्दौ च अथातःशब्दौ, तौ पूर्वे एषान्तानीति विग्रह इति भावः ।। **द्वितीयमाक्षिपतीति** ।। अवश्यवक्तव्यार्थ-त्वार्थाधिक्ययोस्तदभावयोश्चशब्दान्तरेषु दर्शनादथशब्दे तत्सन्देहेन प्रश्नमात्रसम्भवेन प्रथमतृतीययोः पृच्छतीत्युक्तम् । द्वितीये तु स्वरूपाधिक्यस्य शब्दान्तरेष्वदर्शनादथशब्दे तदाक्षेप इति भावः । अत एव शब्दान्तरस्येत्यादिना मूलाभिप्रेतो हेतुः प्रदर्शितः ।। कथंशब्दः प्रश्नार्थः उत्तमशब्दस्तूत्तमार्थ क इत्यभिप्रेत्य कथमित्यादिकं प्रकारान्तरेण व्याचष्टे । **तृतीयेऽपि पृच्छतीति** ।। प्रथमं निःसृतत्वेऽपि स्वरूपोत्तमत्वं कुत इत्यत आह ।। **यत्स्वजाताविति** ।। अत्र सामान्यव्याप्तिरेवानुसन्धेया ।। यथा

(विवृतिः)

देवेषु चतुर्मुख इति दृष्टान्तसम्भवात् ।। न तु यः शब्द इति विशेषव्याप्तिः । दृष्टान्ताभावादिति भावः ।। नन्वथातःशब्दयोः प्राथम्यस्यैव पृष्टत्वात्तत्प्राथम्यमेवोपपादनीयं, ओङ्कारप्राथम्योपपादनं क्वोपयुक्तमिति वाच्यम् । तस्यापि प्रथमं हरेर्निस्सृतत्वेन प्रसङ्गात्तत्कथनमिति भावः । अत इत्यस्यातः शब्दपरत्वं हेतुपरत्वं असकृदावृत्तित्वं, तृतीय उदाहृत इत्यनयोरावृत्तिं, प्राथमिकावित्यस्य वचनव्यत्ययेनासङ्गं चाभिप्रेत्य व्याचष्टे ।। **अतश्च तृतीयतयेति** ।। अकारः सर्ववागात्मेत्यत्राकारस्य सर्ववागर्थप्रतिपादकत्वमेव, सर्ववागात्मकत्वं, सर्ववागात्मेत्यस्य हेत्वर्थत्वं चाभिप्रेत्याह ।। **सर्ववागर्थेति** ।। अभिधायकतयेतीत्थम्भूतलक्षणे तृतीया ।। प्राणशब्दस्य विष्णुपरत्वमभिप्रेत्याह ।। **भगवद्वाचकाविति** ।। **महतश्चतुर्मुखादिति** ।। महत्तत्वाभिमानिचतुर्मुखादित्यर्थः ।। **अयं वै लोक इति** ।। महानाम्नीसंज्ञिका विदा मध्यवन्नित्यादिका ऋक् पृथिवीलोकस्थविष्णुवाचिकेत्यर्थः ।

## सूत्रभाष्यम्

**अधिकारश्चोक्तो भागवततन्त्रे —**

**''मन्दमध्योत्तमत्वेन त्रिविधा ह्यधिकारिणः ।**
**तत्र मन्दा मनुष्येषु य उत्तमगणा मताः ।।**

**मध्यमा ऋषिगन्धर्वा देवास्तत्रोत्तमा मताः ।**
**इति जातिकृतो भेदस्तथाऽन्यो गुणपूर्वकः ।।**

**भक्तिमान्परमे विष्णौ यस्त्वध्ययनवान्नरः ।**
**अधमः शमादिसंयुक्तो मध्यमस्समुदाहृतः ।।**

**आब्रह्मस्तम्बपर्यन्तमसारं चाप्यनित्यकम् ।**
**विज्ञाय जातवैराग्यो विष्णुपादैकसंश्रयः ।।**

**स उत्तमोऽधिकारी स्यात्सन्यस्ताखिलकर्मवानि''ति ।**

**अध्ययनमात्रवतः (ब्र.सू.३-४-१२) । नाविशेषात् (ब्र.सू.३-४-१३) इति चोपरि । शान्तो दान्त उपरतस्तितिक्षुस्समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्येत् । (बृ.उ.४.४.२३) । परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायात् । नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स**

(सूत्रभाष्यम्)

गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् (मुं.उ.१-२-१२) । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् (क.उ.२-२३)

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ।। श्वे.उ.६-२३)

इत्यादिश्रुतिभ्यश्च ।। व्योमसंहितायां च—

अन्त्यजा अपि ये भक्ता नामज्ञानाधिकारिणः ।
स्त्रीशूद्रब्रह्मबन्धूनां तन्त्रज्ञानेऽधिकारिता ।।

एकदेशे परोक्ते तु न तु ग्रन्थपुरस्सरे ।
त्रैवर्णिकानां वेदोक्ते सम्यग्भक्तिमतां हरौ ।।

आहुरप्युत्तमस्त्रीणामधिकारं तु वैदिके ।
यथोर्वशी यमी चैव शच्याद्याश्च तथा पराः ।। इति ।

यतो नारायणप्रसादमृते न मोक्षः, न च ज्ञानं विनाऽत्यर्थप्रसादः, अतो ब्रह्मजिज्ञासा कर्तव्या ।

यत्रानवसरोऽन्यत्र पदं तत्र प्रतिष्ठितम् ।
वाक्यं वेति सतां नीतिः सावकाशे न तद्भवेत् ।। इति बृहत्संहितायाम् ।

## सत्तर्कदीपावली

पदानन्तर्यमथशब्दो ब्रवीति तमधिकारं मन्दमध्यादिभेदेन त्रिधा विभज्य भागवततन्त्रोक्त्या दर्शयति । मन्देति ।। विष्णुभक्तिमत्वं सत्यध्ययनवतामपि शमदमादिराहित्यसाहित्यवशान्मन्दमध्योत्तमभेदविशेषित एव जिज्ञासाधिकारो नाविशेषित इत्येतस्मिन्नुपरितनमपि सूत्रद्वयं दर्शयति ।। अध्ययनेति ।। तथानेकशास्त्रागतश्रुतिमप्यस्मिन्नर्थे दर्शयति । शान्त इत्यादिना । यमेवैष वृणुत इत्यनेन व्रियमाणस्य भक्तत्वं सिद्ध्यति । न ह्यभक्तं कश्चित् स्वीकरोतीति । तेन लभ्य इत्यनेन स्वीकृतेन लभ्य इत्युच्यते । लब्धः परमात्मा किं करोतीत्याकाङ्क्षायामुक्तं तस्यैष आत्मा विवृणुते तनूं स्वामिति । तस्य स्वीकृतस्य एष परमात्मा स्वां तनूं वेदवाक्यैः विवृणुते प्रकाशयतीत्यर्थः । अनेन भक्त्या विष्णुं प्रसाद्य तस्मात्प्रसन्नात् तज्जिज्ञासा कर्तव्येत्युक्तं भवति । विष्ण्वादिकं नाम । इतिहासादि तन्त्रम् ।

(सत्तर्कदीपावली)

**अतश्शब्दस्य हेत्वर्थं विवृणोति ।। यत इति ।।** जिज्ञासाऽऽसादित ब्रह्मज्ञानं विना विष्णुप्रसाद-द्वारकमोक्षासिद्धेर्ब्रह्मजिज्ञासा कर्तव्येत्यर्थः । न च साक्षादध्ययनादेव ब्रह्मज्ञानसिद्धेर्व्यर्था ब्रह्मजिज्ञासेति वाच्यम् । जिज्ञासामन्तरेण संशयविपर्ययरहितज्ञानासम्भवात् । न हि परस्परं विरुध्यमानवाक्यैर्निर्णायकन्यायव्युत्पादन-मन्तरेण सम्यग्ज्ञानं ब्रह्मविषयकमुत्पद्यते । अत्र ब्रह्मजिज्ञासापदं स्वाकाङ्क्षितेन न्यायप्राप्तेन कर्तव्यमिति पदेन योजयितव्यमित्येतद्धृदि निधाय पदसापेक्षं वाक्यसापेक्षं वा यत्सूत्रं तत्र न्यायप्राप्तं पदादिकमश्रुतमप्यध्याहर्तव्य-मित्येतद् वृहत्संहितावचनेन दर्शयति ।। **यत्रेति ।।** न चाध्याहारस्य निरङ्कुशत्वादिदं पदमध्याहर्तव्यमिदं तु नेति नियमहेतुर्नास्तीति वाच्यम् । यत्र साकाङ्क्षवाक्ये यत्पदं विनाऽन्यस्य पदस्यावकाशो न्यायबाधितः तत्र तदेव पदमध्याहार्यतया प्रतिप्रितं न्यायवशादिति नियामकस्य वक्तुं शक्यत्वात् । अनेकपदानामविशेषेण अवकाशवति हि साकाङ्क्षवाक्ये इदमेव पदमध्याहार्यमिति नियमो न युज्यत इत्यर्थः ।

## तत्त्वप्रदीपिका

''अध्ययनमात्रवतः'' ''नाविशेषात्'' इति चोपरि सूत्रकारो भगवान्व्यास एवाधिकारं तारतम्येन वक्ष्यति । शान्तो दान्त उपरतस्तितिक्षुः समाहित इति । ''शमो मन्निष्ठता बुद्धे''रिति भागवते । वैष्णवसिद्धान्तादचलनमित्यर्थः । ''दम इन्द्रियनिग्रहः'' । 'उपरतिः' विष्णावेव मनोरतिः । 'तितिक्षा' द्वन्द्वसहिष्णुता । 'समाधानं' सदा हरौ चित्तस्यावस्थितिः । ''यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वामि''ति । यमेष परमात्मा भक्तिदानेन 'वृणुते' स्वीकरोति तेन प्राप्यः, यतस्तस्यैव स्वां तनुं प्रकाशयति ।

''भक्त्यैव वृणुते विष्णुर्भक्त्या ददाति निजं पदम् ।
भक्त्यैव दृश्यते नित्यं भक्त्या योगान्ददाति च ।।'' इति पाद्मे, जयान्तरे च ।

''भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुनः ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप''त्यादिस्मृतिश्वशब्दाद्गृह्यते ।।

ब्रह्मजिज्ञासाया मोक्षहेतुत्वं सूचितं, तत्कथमित्यत आह । **यतो नारायणप्रसादमृते न मोक्ष इत्यादि ।**

अत्राऽऽह, बन्धस्याज्ञानकार्यत्वेन मिथ्यात्वाज्ज्ञानादेव निवृत्तेर्न प्रसादान्मोक्ष इति । तदयुक्तम् । अज्ञानासम्भवात् । न हि परमात्मनः सर्वज्ञस्याज्ञानं सम्भवति । आश्रयविषयाभावात् । न च स्वयं प्रकाशमानस्याज्ञातत्वं, स्वज्ञातत्वात् । नन्वपराधीनप्रकाशत्वं ब्रूमो न स्वदृश्यत्वं, कर्तृकर्मत्वविरोधात् ।

(तत्त्वप्रदीपिका)

तन्न । भृङ्गवत्त्वपुच्छवत्त्ववदविरोधात् । न च द्रष्टृदृश्यनिरपेक्षं दृग्रूपत्वं निरूपणीयम् । अतोऽपराधीनप्रकाशत्वं स्वाधीनप्रकाशत्वमेव । तस्मादेतदपि निर्विशेषत्वाभिनिवेशदोषदूषितशेमुषीणां दुष्प्रतिपादम् । न चैकस्यैवाज्ञानाश्रयविषयत्वम् । निर्विशेषत्वादेव । सविशेषत्वे "त्वहं मां न जानामी"त्युभयविधा प्रतीतिः सम्भवति । अतो यद्यपि स्वयम्प्रकाशत्वं नः, तथाऽपि सविशेषत्वादज्ञातत्वं, तथा ज्ञत्वज्ञातत्वे चेति नास्मत्पक्षे विरोधः । न च रूपयोर्भेदः, विशेषादेव द्वित्वाद्युपपत्तेः । ते चानन्ताः प्रतिवस्तु विशेषाः । विशेषविशेषिणोर्विशेषाणां च विशेषः स्वयमेव । एवम्भूते विशेषे किं प्रमाणमिति चेन्न प्रमाणप्रश्नः सिद्धार्थत्वात् । एवम्भूतत्वं न विशेषाद्भिन्नं, सामानाधिकरण्योक्तेः, अन्यथाऽनवस्थानाच्च । न च तयोः पर्यायत्वम् । अतस्तत्र तत्र प्रसिद्धो विशेषः ।

ननु न वयं निर्विशेषत्ववादिनो विशेषमङ्गीकुर्महे । न । निर्विशेषत्वविशेषाङ्गीकारात् । न च तन्मिथ्या । सविशेषत्वप्रसङ्गात् । अथ कथं तर्हि सविशेषत्वपरिहाररूपेण निर्विशेषत्वोक्तेन सविशेषत्वप्रसङ्ग इति चेत्कथं वाचालत्वपरिहाररूपेण "अहं मौनी"तिवचनावर्तनेनामौनित्वम् ।

सर्वज्ञस्याप्यज्ञत्वमज्ञातत्वं च परमात्मन एकस्यैवौपाधिकभेदात्सम्भवतीति चेत्कस्योपाधिरिति वक्तव्यम् । न तावच्छुद्धस्य । सर्वज्ञत्वात् । अज्ञानकार्यो ह्युपाधिः । अशुद्धस्य चेदनवस्था, परस्पराश्रयत्वं वा, अज्ञानसिद्धौ तत्कार्योपाधिसिद्धिस्तत्सिद्धौ चाज्ञानसिद्धिरिति । न च बीजाङ्कुरवदुपपत्तिः । मूलबीजस्य प्रकृतिकार्यत्वादवस्थितेः । दृष्टा च सा बीजाङ्कुरपरम्परा । न चात्र किञ्चिन्मानम् । अतो दुर्घटमिदमज्ञानकल्पितो बन्ध इति । अतस्त्वत्पक्षस्याविद्यामूलत्वमनुपपन्नम् । उपपन्नश्चेत्सत्यस्स्यात् । उपपन्नोऽपि मिथ्या चेद् ब्रह्मणो मिथ्यात्वप्रसङ्गः । न च जगतो दुर्घटत्वं, प्रत्यक्षादिप्रमाणदृष्टत्वात् । तस्मान्मिथ्यात्वं जगतो दुर्घटमतो न कल्पनीयम् । प्रमाणसिद्ध्यसिद्धी एव हि सौघट्यदौर्घट्ये । न च ब्रह्माविद्योत्थो घटादिर्घटादिव्यवहारयोग्यस्स्यात् । न हि शुक्त्यज्ञानोत्थं रजतं रजतार्थक्रियाकारि क्वापि दृष्टम् । न हि बाधानन्तरं कस्यचिदेतावन्तं कालमपि शुक्त्यज्ञानं नासीदिति प्रतीतिः, यथेदं रजतं नासीदिति । न च रजतस्यानिर्वचनीयत्वम् । न हि बाधकज्ञानेऽनिर्वचनीयत्वप्रतीतिः । नास्ति रजतमिहेति सर्वोऽनुभवति । ख्यातिबाधान्यथानुपपत्त्याऽनिर्वचनीयत्वं कल्प्यत इति चेन्न । असतः ख्यातिनिषेधासम्भवात् । ननु नासतः ख्यातिर्निषिध्यते, अपि त्वसतः सत्त्वप्रतीतिरेव । न । असतः सत्त्वप्रतीतिर्हि भ्रान्तिः । न ह्यनिर्वचनीयस्यानिर्वचनीयत्वं तत्रापि भ्रान्तौ प्रतीयते, सदिति प्रतिभानात् । न च तस्य सत्त्वमस्ति, सदसद्विलक्षणत्वात् । न चानिर्वचनीयस्य सत्त्वमनिर्वचनीयम्, अनवस्थानात् । न चानिर्वचनीयत्वे नानवस्थादोषः, किन्तु वेष इति वाच्यम् । अनिर्वचनीयस्याद्याप्यसिद्धत्वात् । अन्ततो गत्वा येन रूपेण भ्रान्तौ प्रतीयते तेन रूपेण नास्त्येवेत्यङ्गीकार्यम् । अन्यथा न भ्रान्तित्वं स्यात् । अतो न बन्धो मिथ्या ।

(तत्त्वप्रदीपिका)

दुःख्यहमित्यबाधितानुभवस्य भ्रान्तित्वं प्रत्यक्षानुमानागमविरुद्धस्य ब्रह्मास्मीति परोक्षावभासस्या-भ्रान्तित्वमित्यहो महोन्मत्तानां प्रलापः । प्रत्यक्षतो हि दुःखित्वमनुभूयते । न च बाधो दृश्यते श्रूयते वा ।

''अहमित्येव यो वेद्यः स जीव इति कीर्तितः ।
स दुःखी स सुखी चैव स पात्रं बन्धमोक्षयो''रिति परमश्रुतिः ।

न च मिथ्यादुःखित्वपरिहाराय विपश्चिच्छ्रवणादौ प्रवर्तेत । न खल्वाप्तवचनाधिगतरज्जुसर्पस्वरूपो रज्जुसर्पपरिहाराय विषविगमविद्यां चरति । नापि श्रुतशास्त्रो भोजनादौ प्रयतेत, अशनायाद्यतीत-ब्रह्मात्मतानिश्चयात् । न हि प्रमाणान्तरनिश्चितदिग्विशेषोऽन्यथाऽनुभवन्नपि तत्प्रयुक्तव्यवहारं करोति । दृश्यन्ते चैते स्वशरीरपोषणप्रयत्ना मायिनः सुनिश्चितनिर्गुणात्मानः । अतस्तन्मतमत्यन्तहेयम् । अतश्शास्त्रार्थत्वाय बन्धस्सत्यः ।

स च सदागमगीयमानस्वमानस्वातन्त्र्यसार्वज्ञादिगुरुतमगुणगणपरिपूर्णपरमानन्दामृतमहार्णवस्य विष्णोः प्रसादमन्तरेण नोच्छिद्यते ।

''यस्य प्रसादात्परमार्तिरूपादस्मात्संसारान्मुच्यते नापरेण ।
नारायणोऽसौ परमो विचिन्त्यो मुमुक्षुभिः कर्मपाशादमुष्मात् ।।'' इति हि श्रुतिः ।।

''न तादृशी प्रीतिरीड्यस्य विष्णोर्गुणोत्कर्षज्ञातरि यादृशी स्यात् ।
तत्प्रीणनान्मोक्षमाप्नोति सर्वस्ततो वेदास्तत्परास्सर्व एव ।।'' इति च ।।

तस्मात्सूक्तं यतो नारायणप्रसादमृते न मोक्षः, न च ज्ञानं विनाऽत्यर्थप्रसादः, अतो ब्रह्मजिज्ञासा कर्तव्येति ।। यत्रानवसरोऽन्यत्र अन्यस्य पदस्य वाक्यस्य वेत्यर्थः ।

## तत्त्वप्रकाशिका

ननु कोऽसावधिकारः कतिविधश्च ब्रह्मजिज्ञासायां यदानन्तर्यमथशब्दो वक्तीत्यत आह ।। **अधिकारश्चेति** ।। अत्राधिकारिकथनेऽपि तद्विशेषणतयाऽधिकारोऽप्युक्तो भवति । अनेन मोक्षयोग्यत्वं सामान्यलक्षणमभिप्रेतम् । अस्य च सच्छूद्रादौ व्याप्तेः प्राधिकत्वादरुच्या प्रकारान्तरेणाधिकारिणः स्वरूपमाह ।। **तथेति** ।। अत्राध्ययनलब्धापि विष्णुभक्तिरन्याप्याध्ययननिवृत्त्यर्थं पृथगुक्ता । तथा च हरिभक्तिपूर्वकाध्ययनवत्त्वं सामान्यतो ब्रह्मविद्याऽधिकार इत्युक्तं भवति । शमादिसंयुक्त इत्यादौ पूर्वसङ्ग्रहः । पूर्वत्र चोत्तरोक्तानुकर्षश्च कर्तव्यः । न चैवं साङ्कर्यम् । उत्तरोक्ताप्राचुर्येणासाङ्कर्यात् । ब्रह्मायसारता नाम तेषामसर्वोत्तमत्वं तत्पदादीनां मोक्षावरत्वं च ज्ञेयम् । नन्वत्र ब्रह्मविद्यायामित्यनुक्तेः कुतोऽप्य-

(तत्त्वप्रकाशिका)
मधिकारस्तत्त्रैविध्यं च ब्रह्मविद्यायामित्यत आह ॥ **अध्ययनेति** ॥ उपरि तृतीये वक्ष्यते । शमादिसंयुक्तता च ब्रह्मविद्यायामेवाधिकार इति श्रुत्याऽऽह ॥ **शान्त इति** ॥ शान्तो भगवन्निष्ठबुद्धिः । दान्तो निगृहीतेन्द्रियः । उपरतो विषयालम्बुद्धिमान् । तितिक्षुर्द्वन्द्वसहिष्णुः । समाहितो यथावस्तुज्ञानादिमान् । शान्तादिर्भूत्वा परमात्मानं स्वस्थितं विद्यादिति तेषां तादर्थ्यमुक्तं भवति उपनीतोऽधीयीतेत्यादिवत् । अत्राऽऽत्मनीत्युक्त्या मध्यमाधिकारित्वं सूचितम् । 'ऋषयोऽन्तःप्रकाशाः' इति श्रुतेः । सारासारविवेकाद्यपि ब्रह्मविद्यायामेवाधिकार इति श्रुत्या दर्शयति ॥ **परीक्ष्येति** । लोकान्विष्णुलोकेतरान् कर्मापादितान् असारानित्यतया परीक्ष्य वैराग्यं प्राप्नुयात् । स च मोक्षादितरत्र निर्विण्णो विज्ञानार्थं गुरुमेवाभिगच्छेत् । यस्मान्नित्यपुमर्थो मोक्षः कर्मादिना न सिद्ध्यति तस्मादित्यर्थः । अत्रापि विज्ञानपदेनोत्तमाधिकारित्वं सूचितम् । 'देवादीनां तु यज्ज्ञानं विज्ञानमिति कीर्तितम्' इत्युक्तेः । विष्णुभक्तिरपि ब्रह्मविद्यायामधिकार इति श्रुत्याऽऽह ॥ **यमिति** ॥ एष विष्णुः यं वृणुते तेन लभ्यस्तस्य प्रसन्नो भवति । ततश्च तस्याधिकारिणः स्वस्वरूपं प्रकाशयतीत्यर्थः । अत्र वृणुत इत्यनेन भक्तत्वं सूचितम् । सा च भक्ति-र्विष्णौ सर्वाधिकाऽन्येष्वपि यथायोग्या ब्रह्मविद्योपयोगिनीत्येतच्छ्रुत्याऽऽह ॥ **यस्येति** ॥ नन्वध्ययनवतामेव ब्रह्मविद्याधिकारित्वे त्रिवर्णेतरेषामध्ययनविधुराणां ज्ञानाभावेन मोक्षाभावः स्यादित्याशङ्क्य प्रमाणेन परिहरति ॥ **व्योमसंहितायां चेति** ॥ अन्त्यजा वर्णबाह्याः । भक्ता इत्यधिकारकथनम् । तन्त्रं पञ्चरात्रादि । अध्ययनाभावेन वैदिकज्ञानानधिकारित्वेऽपि त्रिवर्णेतरेषां नामादिज्ञानाधिकारित्वान्मोक्षो-पपत्तिरिति भावः । 'सपत्नी मे पराधम' इत्यादौ स्त्रीणामपि वेदाधिकारदर्शनात्कथं तासामनधिकार इत्यत उक्तस्यापवादमाह ॥ **आहुरिति** ॥ तथा परा मुनिस्त्रियो नरादिकुलजाश्च ॥

एवमथशब्दं सङ्क्षेपविस्तराभ्यां व्याख्यायातःशब्दो हेत्वर्थ इत्युक्तं व्यनक्ति ॥ **यत इति** ॥ सुखमेव मे स्याद् दुःखं मनागपि मा भूदिति सर्वाभिमतमोक्षस्य नारायणात्यर्थप्रसादमन्तरेणासम्भवादत्यर्थप्रसादस्य च तदपरोक्षज्ञानमन्तरेणालाभादपरोक्षज्ञानस्य च ब्रह्मजिज्ञासां विनाऽनुदयादत्यर्थप्रसादद्वारा मोक्षसाधनापरोक्षज्ञानोत्पादिका ब्रह्मजिज्ञासा कर्तव्येत्यर्थः । यदुक्तमसन्दिग्धत्वान्न ब्रह्मणो विषयत्वमिति तद्ब्रह्मपदप्रयोगेण परास्तम् । तथा हि । भवेदेतदसन्दिग्धत्वं जिज्ञास्यस्य यदि तत्स्वप्रकाशजीवाभिन्नं स्यात् । न चैतदस्ति । जिज्ञास्ये ब्रह्मपदश्रवणात् 'तद्विजिज्ञासस्व तद्ब्रह्मेति' । ब्रह्मशब्दश्च पूर्णगुणतां वक्ति । 'अथ कस्मादुच्यते ब्रह्मेति । बृहन्तो ह्यस्मिन् गुणाः' इति श्रुतेः । तथा च कथं तस्य जीवाभेदः जीवस्याल्पगुणत्वेनानुभवात् । न च ब्रह्मणि गुणाध्यासः । परमार्थतोऽब्रह्मत्वप्रसङ्गात् । देशाद्यपरिच्छिन्नता ब्रह्मेति चेन्न । उक्तश्रुतिविरोधात् देशाद्यपरिच्छेदेन च जीवाभेदसिद्धेः । जीवाणुत्वस्य च वक्ष्यमाणत्वात् । अतो जीवस्य स्वप्रकाशत्वेऽपि तद्भिन्नब्रह्मणः सन्दिग्धत्वाद्विषयत्वसिद्धेर्मोक्षाख्यप्रयोजनसद्भावात् तत एवाधिकार्यादिसम्भवाद् ब्रह्मजिज्ञासा कर्तव्येति । ब्रह्मपदव्याख्यानरूपं नारायणपदम् । ननु कर्तव्येति पदमत्र

(तत्त्वप्रकाशिका)

**न श्रूयते यद्यध्याहारस्तर्हि न कर्तव्येत्यध्याहारः किं न स्यादध्याहारस्य निरङ्कुशत्वादित्यत आह ।। यत्रेति ।। यत्र वाक्ये महावाक्ये वा यत्पदं वाक्यं वा विनाऽन्यत्रार्थान्तरेऽनवसरोऽर्थान्तरस्याघटना तत्र वाक्ये महावाक्ये वा तदेव पदं वाक्यं वा प्रतिष्ठितं प्राप्तं नान्यदिति सतां न्यायः । यत्पदं वाक्यं वा विनापि पदान्तरेण वाक्यान्तरेण वा वाक्ये महावाक्ये वा सावकाशेऽर्थान्तरे घटनावति तदेव पदं वाक्यं वा नियमेन प्रतिष्ठितं न भवेदिति न्यायात्कर्तव्यपदमेवाध्याहार्यम् । न कर्तव्येत्यादेरधिकारकथनादिनाऽयोगादिति भावः ।**

## गुर्वर्थदीपिका

कोऽसावधिकार इत्यत्र कः किंलक्षणः किं तस्य सामान्यलक्षणं किं वा विशेषलक्षणमिति भावः । कतिविधः सामान्यतः कतिप्रकारः विशेषतश्च कतिप्रकार इत्यर्थः । सर्वेषां च प्रश्नानां समान्यतो विशेषतश्च ब्रह्मजिज्ञासायामप्युपयोगात् ब्रह्मजिज्ञासायामित्युक्तम् । यद्यपि वक्ष्यमाणपञ्चरात्र-वचनेऽधिकार्येव प्रपञ्चितः तथाऽप्यधिकारसम्पत्त्यनन्तरमधिकारिणा क्रियमाणजिज्ञासायामधिकार्यनन्तर-मित्यस्यानुपपन्नत्वात्सौत्राथशब्दसङ्गतिरधिकारस्यैवेति भावेनाधिकारश्चोक्त इति भाष्यम् । तर्हि स्मृता-वधिकारकथनं केति शङ्कापरिहारार्थमाह टीकाकारः । **अत्राधिकारिकथनेऽपीति** । ''मन्दमध्योत्तमत्वेन त्रिविधा ह्यधिकारिण'' इति स्मृतावधिकारिणो मोक्षाधिकारिण इत्यर्थस्य विवक्षितत्वान्मोक्षयोग्यत्वं सर्वाधिकारिसामान्यलक्षणं लब्धमिति भावेनाह ।। **अत्रेति** । ''तत्र मन्दा मनुष्येष्वि''त्यत्र मनुष्येषु तत्पदोपलक्षितपश्वादिषु चेत्यर्थः । अस्य मोक्षयोग्यत्वरूपसामान्यलक्षणस्य सामान्यतो विभागस्य च । सच्छूद्रादौ मोक्षयोग्यजीवमात्रे व्याप्तेः व्याप्त्या वर्तमानत्वेन निमित्तेन । प्रायिकत्वात् बहुसम्बन्धिलक्षणत्वेन सामान्यलक्षणत्वात् । अरुच्या साक्षाद् ब्रह्मजिज्ञासोपयोगित्वाभावाख्यारुच्या । प्रकारान्तरेण ब्रह्मजिज्ञासायामेव यथोपयोगस्तेन प्रकारेण । अधिकारिणां स्वरूपमाह लक्षणविभागाभ्यामाहेत्यर्थः । तर्ह्यनुपयुक्तप्रमेयं स्मृतौ कुतः कथितं भाष्यकारेणापि कस्मादुद्धृतमिति न शङ्कनीयम् । वक्ष्यमाणाधिकारि-विशेषलक्षणादिकथने सर्वाधिकारिसाधारणसामान्यलक्षणस्यापि प्रमाणसामान्यलक्षणवत्तदुपयोगित्वात्तत्सङ्ग्रहः स्मृतौ भाष्ये चेति ज्ञेयम् । यद्यपि मोक्षयोग्यत्वाख्यगुणः प्रागुक्तस्तथाऽपि तस्य जातावेव पर्यवसानाज्जाति-कृतो भेद इत्युक्तम् । वक्ष्यमाणविभागस्य विप्रर्षिदेवत्वाख्यजातिमात्राश्रयणं विनाऽध्ययनशमादिगुणानामपि कथनात् ''तथाऽन्यो गुणपूर्वक'' इत्युक्तम् । विशेषलक्षणस्य सामान्यलक्षणपूर्वकत्वात्तस्य च स्मृतौ स्पष्टमभावेऽपि ''अध्ययनमात्रवत'' इत्यनुपदमेव भाष्यकृता वक्ष्यमाणसूत्रार्थपर्यालोचनयोहः कर्तव्य इति भावेनाह । **तथा चेति** । उत्तरोक्तप्राचुर्येणेत्यत्र अधमेष्वध्ययनवन्मध्यमेषु शमादिवदुत्तमे विष्णुपादैक-

(पूर्णप्रदीपिका)

संश्रयादिवच्च स्मृत्या स्पष्टमनुक्तानामुत्तरत्रानुकर्षबलेनाधमेषूक्तशमादीनां मध्यमेषूक्ताध्ययनादीना-मुत्तमेषूक्ताध्ययनशमादीनां च तत्र तत्र प्रागुक्तासाधारणगुणेभ्योऽप्राचुर्येणेत्यर्थः । अत एवं प्राचुर्यात्तेषु तेष्वेकैकगुणस्यैव मुख्यतः कथनम् । तथा च स्वनिष्ठगुणेषु येषामध्ययनमेव प्रधानो गुणस्तेऽधमाः । येषां शमादिकमेव प्रधानो गुणस्ते मध्यमाः । येषां सारासारविवेकादिकमेव प्रधानो गुणस्ते उत्तमा इति विभागः स्मृत्यैव सूचित इत्यनुसन्धेयम् । मोक्षादितरपदार्थानामसारत्वज्ञानाभावे तेषु वैराग्यानुदयात्तच्च ग्राह्यमित्युक्तम् । तत्पदादीनामिति । मध्यमाधिकारित्वमित्यत्र ब्रह्मविद्यायां मध्यमाधिकारिभूतमृष्यादित्वमित्यर्थः ।

## भावबोधः

**सच्छूद्रादौ व्याप्तेरिति** । अतिव्याप्तेरित्यर्थः । यद्यपि सच्छूद्रादेर्देहान्तरे वैदिकब्रह्मविद्याधिकारसम्भवेन तेषामपि लक्ष्यत्वान्नातिव्याप्तिः । तथापि वेदविद्याधिकारशून्यतापादकशूद्रादिदेहावच्छिन्नेऽपि तस्मिन् मोक्षयोग्यत्वसत्वेनातिव्याप्तिरिति भावः । **प्रायिकत्वादिति** । देवानारभ्य त्रैवर्णिकमनुष्योत्तमपर्यन्तेषु बहुषु मोक्षयोग्येषु वेदविद्याधिकारस्य सत्वेनास्य मोक्षयोग्यत्वस्य प्रायिकत्वादित्यर्थः । अध्ययनलब्धापीति । 'अवैष्णवस्य वेदेऽपि ह्यधिकारो न विद्यते' इत्यादेरित्यर्थः । **अन्याय्याध्ययनेति** । अभक्तैरनधिकारिभिर्वा भक्तादिभिरप्यसमये अयोग्यपुरुषेभ्यो वा पुस्तकपाठादिना वा कृतत्वमन्याय्यत्वमध्ययनस्य । **सामान्यतो ब्रह्मविद्येति** । मुक्त्ययोग्यब्राह्मणादौ तद्योग्यसच्छूद्रादौ चातिव्याप्तिपरिहाराय क्रमेण पदद्वयम् ।

ननु हरिभक्तिपूर्वकाध्ययनवत्त्वं कथं सामान्यलक्षणम्? मध्यमादिष्वभावात् । तत्सत्त्वेऽधिकारि-लक्षणस्यातिव्याप्त्यापत्तेरित्यतः–

भक्तियुक्तः परे विष्णौ तथाध्ययनवानपि ।
अधमोऽयमिति ज्ञेय एतत्पूर्वं शमादिमान् ।।
मध्यः स्याद् ब्रह्मणो विष्णोर्वशे ब्रह्मादिपूर्वकम् ।
विज्ञाय भक्तिसम्पन्नः ।।

इति विशेषप्रमाण उपलक्षणत्वेन एतत्पूर्वशमादिमानिति भक्तिसम्पन्न इति अधमाधिकारिलक्षणस्य मध्यमोत्तमयोरप्युक्तत्वेन तदनुसारेणाऽऽह । **शमादिसंयुक्त इत्यादाविति** ।

ननु सर्वं सर्वत्र चेत् परस्पराव्यावृत्तत्वान्न विशेषलक्षणानीत्याशङ्क्य निरस्यति । **न चैवमिति** । **उत्तरोक्तमिति** । **पूर्वस्मिन्निति** शेषः । तथा चोत्तरस्मिन् मध्यम उत्तमे चोक्तानामध्ययनवत्त्वादीनां

(भावबोधः)

त्रयाणां गुणानां पूर्वस्मिन्नधमे वाऽप्राचुर्यादित्यर्थः । ततश्च प्रचुरतमाध्ययनादिगुणत्रयवत्त्वमुत्तमत्त्वम् । प्रचुरतमत्वरहितप्रचुरतराध्ययनादिमत्वं मध्यमत्वम् । प्रचुरतमत्वप्रचुरतरत्वरहिताध्ययनादिमत्वं अधमत्वमित्युत्तमादीनां त्रयाणां लक्षणान्यनेनोक्तानि । प्रचुरत्वप्रचुरतरत्वप्रचुरतमत्वानां मधुरत्वादिवत् स्पष्टत्वादिवच्च जातिरूपत्वान्न कश्चित् क्षुद्रोपद्रवः ॥

यद्वा सङ्गृहीतानुकृष्टाश्च गुणा उत्तरोक्ताः । तेषां तत्र तत्र भक्तिमानित्यादियथास्थितमूलोक्त-गुणापेक्षयाऽप्राचुर्येणेति योजना । यथास्थितमूलोक्तगुणानां च प्राचुर्यमर्थतो लभ्यम् । ततश्च यत्राध्ययनवत्त्वं प्रचुरं गुणद्वयमप्रचुरं सोऽधमः । यत्र शमादिसम्पत्तिः प्रचुरा अध्ययनवत्त्वं वैराग्यादि चाप्रचुरं स मध्यमः । यत्र विष्णुपादैकसंश्रयत्वं प्रचुरम् अध्ययनवत्त्वं शमादिसम्पत्तिश्चाप्रचुरा स उत्तम इत्यर्थः । अधमादिष्वध्ययनवत्त्वादीनां समानाधिकरणगुणद्वयापेक्षया प्राचुर्ये भक्तिमानित्यादौ तत्र तत्र तस्य तस्य गुणस्य विशिष्य वचनम् आत्मनीति मध्यमाधिकारित्वं सूचितमिति विज्ञानमित्युत्तमाधिकारित्वं सूचितमिति टीकावचनं ज्ञापकमिति ध्येयम् ।

तात्पर्यचन्द्रिकायां तु समानाधिकरणानां वेदाध्ययनशमादिविष्णुपादैकसंश्रयत्वादीनां मध्ये यस्य शमादिविष्णुपादैकसंश्रयत्वादिकेऽप्रचुरेऽध्ययनं प्रचुरं सोऽधमः । यस्य विष्णुपादैकसंश्रत्वादिकमेवाप्रचुरम् अध्ययनशमादिके प्रचुरे स मध्यमः । यस्य तु विष्णुपादैकसंश्रयत्वादिकं प्रचुरमध्ययनशमादिकं त्वप्रचुरे स उत्तम इत्यर्थ इत्युक्तम् ।

ब्रह्मणो विष्णोर्वशे ब्रह्मादिपूर्वकं विज्ञायेति विशेषप्रमाणानुसारेण ब्रह्मेत्यादि व्याचष्टे । **ब्रह्मायसारता नामेति** । 'विष्णुपादैकसंश्रयः' इति मूलस्यार्थो भक्तिसम्पन्नो विष्ण्वर्थं मोक्षमर्थयमाणो मोक्षार्थं तु विष्णुः स्यादिति ज्ञानी स उत्तम इति विशेषप्रमाणानुसारेणार्थो ज्ञातव्यः । 'नाविशेषात्' इति सूत्रेण तत्त्रैविध्यं कुतो ब्रह्मविद्यायामित्याशङ्कापरिहार इति बोद्धव्यम् ॥

> तस्माच्च भगवन्निष्ठबुद्धिना जितशत्रुणा ।
> विषयस्नेहहानेन द्वन्द्वदुःखसहिष्णुना ।
> यथावज्ज्ञानिना विष्णुर्जिज्ञास्यो मोक्षमिच्छता ॥

इति विशेषप्रमाणानुसारेण शान्त इत्यादिश्रौतपदानि व्याचष्टे । **शान्तो भगवन्निष्ठबुद्धिरित्यादिना** । **विद्यादिति** । पश्यार्थश्चानालोचन इति ज्ञानमात्रे तत्प्रयोगात् । अन्यथा परोक्षज्ञान एव शमादीनां हेतुत्वं लभ्येत । न ब्रह्मविद्यायामिति भावः । **मध्यमाधिकारित्वं सूचितमिति** । तथा चैतत्समाख्या-

(भावबोधः)

वलाच्छमादिसंयुक्तो मध्यम इति वाक्यस्य ब्रह्मविद्यायामेव मध्यमाधिकारिप्रतिपादकत्वं सिद्ध्यतीति भावः । उत्तमाधिकारित्वं सूचितमित्यस्याप्ययमेवाभिपायः ।

तस्मान्नित्यमनित्यं वा ज्ञात्वाऽसारमनर्थकम् ।
तस्मान्निर्वेदमापन्नः प्रपद्येत गुरुम् ऋजुम् ।।

इति विशेषप्रमाणानुसारेण श्रुतिं व्याचष्टे । **लोकान् विष्णुलोकेतरानित्यादिना** । 'यथा भक्त्या हरिस्तुष्टः प्रसीदति तथा गुरुः' इति विशेषप्रमाणानुसारेण श्रुतिं व्याचष्टे । **तस्य प्रसन्नो भवतीति** । **प्रकाशयतीति** । श्रवणादिज्ञानविषयं करोतीत्यर्थः ।

यथा विष्णौ परा भक्तिर्यथायोग्यं गुरावपि ।
कर्तव्या परमं ब्रह्म तत्त्वं तस्य प्रकाशते ।।

इति विशेषप्रमाणानुसारेण श्रुत्यभिप्रायमाह । **सा च भक्तिरिति** । अनेन देवे विष्णौ परा सर्वाधिका भक्तिः । तथा देवे तदितरदेवेषु गुरावन्येषु स्वोत्तमेषु च । यथा यथायोग्यं भक्तिर्यस्य तस्येति वाक्यं योजितं भवति ।

वेदाध्ययनहीना ये स्त्रीशूद्रान्त्यजपूर्वकाः ।
तेषां मुक्तिः कथं ब्रह्मंस्तैर्जिज्ञास्यो हरिः कथम् ।।

इति प्रमाणानुसारेण **व्योमसंहितायामित्यादिभाष्यमवतारयति** । **नन्वध्ययनेति** । **वर्णवाह्या इति** । तेन म्लेच्छादीनां सङ्ग्रह इति भावः । **सपत्नी म इति** । तदधिकाराभावे तद्द्रष्टृत्वं कथं स्यादिति भावः ।

देव्यो मुनिस्त्रियश्चैव नरादिकुलजा अपि ।
उत्तमा इति विज्ञेयाः ।।

इति भारततात्पर्यनिर्णयानुसारेणाह । **तथा परा इति** । **नरादिकुलजाश्चेति** । शच्याद्या इत्यर्थः । **पदर्थ ब्रह्मजिज्ञासाविधिः** स मोक्ष एव मा भूत् अनपेक्षितत्वादित्यत उक्तम् । **सुखमेव मे स्यादिति** ।

विना हरिप्रसादं न मोक्षो भवति कर्हिचित् ।
प्रसादोऽपि तदा तस्य यदा चास्यापरोक्षता ।
विना वै ब्रह्मजिज्ञासां नापरोक्षं कथञ्चन ।।

(भावबोधः)

इति विशेषप्रमाणानुसारेण भाष्ये 'ज्ञान'पदमपरोक्षज्ञानपरम् । 'प्रसादः' इत्यनन्तरं न च ब्रह्मजिज्ञासां विना ज्ञानमित्यध्याहारश्च । अन्यथा भाष्ये अतो ब्रह्मजिज्ञासा इत्यस्यासङ्गत्यापत्तेः । 'आत्मा वाऽरे द्रष्टव्यः' इत्यादिप्रमाणोदाहरणानुपयोगाच्चेत्यभिप्रेत्य तद्व्याचष्टे । **मोक्षस्येत्यादिना** । 'जिज्ञासोत्थज्ञानजात्तत्प्रसादादेव मुच्यते' इत्यनुव्याख्यानानुसारेण अतो ब्रह्मजिज्ञासा इत्येतद्व्याचष्टे । **अत्यर्थप्रसादद्वारेति** । 'तद्विजिज्ञासस्व, तद्ब्रह्म' इति ब्रह्मशब्देन गुणपूर्णतोक्तेर्नानुभवसिद्धाल्पगुण-जीवाभेदः । 'अथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन् गुणाः' इति श्रुतेरिति न्यायविवरणं मूलीकृत्य सिद्धान्तमाह । **यदुक्तमित्यादिना** । **देशाद्यपरिच्छेदेनेति** । अङ्गीकारवादोऽयम् । **ब्रह्मपदव्याख्यानरूपं नारायणपदमिति** । अत्र गुणपरिपूर्णतावाचिना नारायणपदेन सौत्रब्रह्मपदव्याख्यानमुक्तसिद्धान्तज्ञापनार्थम् । अन्यथा यतो ब्रह्मप्रसादमित्येवावक्ष्यत् । व्याख्यानव्याख्येयभावज्ञापनार्थमेवातो ब्रह्मजिज्ञासेति ब्रह्मपदप्रयोगः । अन्यथा तत्रापि नारायणपदप्रयोगः स्यादिति भावः ।

## भावदीपः

।। **अनेनेति** ।। मोक्षाधिकारिणस्त्रिविधा इति वचनेन मुक्तियोग्यत्वं जिज्ञासामात्राधिकारिलक्षणं लब्धमित्यर्थः ।। **व्याप्तेरिति** ।। व्याप्तिर्व्यापनम् । यस्य व्यापनं लक्ष्यमात्रेऽस्ति तद्धि लक्षणं यो धर्मो लक्ष्ये व्याप्त्या वर्तत इत्युक्तेः । अस्य च मुक्तियोग्यत्वस्य व्याप्तिस्तु सच्छूद्रे असमर्थेषु अनर्थि-ष्विदानीन्तनपशुपक्ष्यादिष्वलक्ष्यभूतेषु बाहुल्येन वर्तत इति व्याप्तेः प्रायिकत्वादित्युक्तम् । विदुरधर्म-व्याधजरितर्यादौ ब्रह्मविद्याधिकारदृष्ट्या तत्र व्याप्तिरिष्टैवेत्यतः प्रायिकत्वादित्युक्तम् । तानति-क्रम्यानुत्पन्नज्ञानेष्वपि बाहुल्येन वर्तमानत्वादित्यर्थः । सच्छूद्रादेर्देहान्तरे वैदिकब्रह्मविद्याधिकारेऽपि नैतद्देहेऽधिकारः । देहान्तरेऽधिकारश्च नेदानीं प्रवृत्त्युपयोगीत्यरुच्येत्यर्थः ।। **प्रकारान्तरेणाधिकारि-स्वरूपमिति** ।। एतच्च वेदजिज्ञासारूपजिज्ञासाविशेषाभिप्रायम् । ननु मुक्तियोग्यत्वमेवाधिकारिलक्षणमस्तु । शुगस्येति वक्ष्यमाणापशूद्राधिकरणन्यायेनाधिकारस्य त्रैवर्णिकमात्रपर्यवसानोपपत्तेः । व्यर्थश्चायमथशब्दः । जीवान्यविषयार्पकब्रह्मपदेनैव मुमुक्षुमात्राधिकारिणस्तदपशूद्रत्वस्याप्यपशूद्रनयन्यायेनैव लाभसम्भवात् । तत्सिद्धस्यैवापशूद्राधिकारस्यात्र सूचनमित्यपि नातीवतुष्टिकरम् । तथान्यो गुणपूर्वक इत्यादिभाष्यं च व्यर्थम् । अरुच्येत्यादिटीका चायुक्तेति कस्यचिद्वाद्यमयुक्तम् । त्वदुक्तदिशा त्रैवर्णिकाधिकारलाभेऽपि त्रैवर्णिकेष्वपि केषाञ्चिदनधिकारिणां भावेन तत्परिवर्जनस्यापशूद्रनयेनाप्राप्तेः । अध्ययनमात्रवत इत्यधिकरणे तादृशाधिकारविशेषस्य प्राप्तत्वेऽपि तस्यैवेह तथान्यो गुणपूर्वक इत्यादिभाष्येण विविच्य कीर्तनात् ।

(भावदीपः)

श्रोतृप्रवृत्तिसौकर्याय वक्ष्यमाणस्यैवादावयपदेन निर्देशोपपत्तेश्चेत्यथशब्दोऽर्थवानेव । भाष्यं चार्थवत् । तदेतदाह । सच्छूद्रादावित्यादिपदेन । अन्यथा सच्छूद्र इत्येवावक्ष्यत् । तथा च त्रैवर्णिकमात्राधिकारित्वेऽपि अवैष्णवस्य वेदेऽपि ह्यधिकारो न विद्यते । गुरुभक्तिविहीनस्य शमादिरहितस्य चेत्यादिप्रमाणविरोधान्मुक्तियोग्यत्रैवर्णिकमात्रमपि न वेदजिज्ञासाधिकारि । किन्तु राजसूयादौ राजत्वादिमानिव तथान्य इत्यादिवचनसिद्धशान्त्यादिमानपीति वक्तुं प्रकारान्तरेणाधिकारि स्वरूपमाहेति टीकार्थो बोध्यः ।। **अध्ययनलब्धापीति** ।। अवैष्णवस्य वेदेऽपि ह्यधिकारो न विद्यते । गुरुभक्तिविहीनस्य शमादिरहितस्य च ।। न च वर्णावरस्यापीत्यध्ययनमात्रवत इत्यत्र भाष्योक्तदिशेति भावः । भक्तिरित्युपलक्षणम् । अध्ययनवानित्यस्याग्रेऽप्यन्वयात् । अध्ययनलब्धोऽपि शमादिरित्यपि ध्येयम् ।।

**अन्याय्येति** । अभक्तानधिकारिकृतत्वादिकमन्याय्यत्वम् ।। **हरिभक्तीति** ।। शमादिकमप्यत्र ग्राह्यम् । अध्ययनशमादिवैराग्येष्वन्यतमप्राचुर्येण त्रिविधाधिकारिव्यवस्थोक्तिरग्रेतनवाक्यानुरोधात् ।। **उत्तरोक्तेति** ।। पूर्वपूर्वस्मिन्निति शेषः । ततश्चायमर्थः । समानाधिकरणानामध्ययनशमादिविष्णुपादैकसंश्रयत्वादीनां मध्ये यस्याध्ययनं प्रचुरमन्यदप्रचुरं सोऽधमः । यस्य विष्णुपादैकसंश्रयत्वादिकमेवाप्रचुरमध्ययनशमादिके तु प्रचुरे स मध्यमः । यस्य विष्णुपादैकसंश्रयत्वादिकमेव प्रचुरम् अध्ययनशमादिके त्वप्रचुरे स उत्तमः इति । भाष्ये सन्यस्तेति विष्ण्वर्पितेत्यर्थः ।। **तृतीय इति** ।। अध्याये चतुर्थपाद इत्यर्थः । मात्रेति कार्त्स्न्यमुच्यते । यथाशक्ति कृत्स्नाध्ययनवतोऽधिकारितेत्युक्त्या कुतोऽयमधिकारो ब्रह्मविद्यायामिति शङ्काऽपास्ता । सा चाधिकारिता देवादीनामविशेषान्न भवति । अविशेषेण न भवति । एकरूपा न भवति । अविशेषात् । ज्ञानादेरप्यविशेषप्रसङ्गात् । स च प्रज्ञान्तरपृथक्त्ववद्दृष्टिश्च तदुक्तमित्यत्र निरस्त इति नाविशेषादित्यनेन तत्त्रैविध्यं च कुत इति शङ्काऽपास्तेति भावः । ब्रह्मविद्यायां श्रवणादिरूपायाम् ।। **श्रुत्येति** ।। विस्पष्टं विवक्षितसर्वार्थलाभात्स्मृतिः पूर्वमुक्तेति भावः । अत्रैकं कानिचिद्वचनान्युदाहृत्य तदनुरोधेन टीकायां श्रुत्यर्थोक्तिरित्याहुः । तानि चाचार्यैर्न काप्युदाहृतानीति केचिन्न श्रद्दधते । अन्ये त्वाचार्यानुदाहृतत्वेऽपि पञ्चरात्रपञ्चाधिकरणीसूत्रभावविवृतिपरभारद्वाजसंहितादौ पठ्यमानत्वाददोष इत्याहुः । शमो मन्निष्ठता बुद्धेरित्येकादशस्कन्धोक्तेराह ।। **भगवन्निष्ठेति** ।। वैष्णवसिद्धान्तादचलनमित्यर्थ इति तत्वप्रदीपे । पश्येदित्युक्त्या शमादेरपरोक्षाङ्गत्वप्रतीत्याप्रकृतानुपयोगमाशङ्क्यानुबन्धादिभ्य इत्यत्र तृतीये दयाच्छमदमादींश्च तेन चैते गुणाः पुनः । तैः सर्वैर्दर्शनं विष्णोः श्रवणादिकृतं भवेदित्यादिस्मृत्यादौ वक्ष्यमाणदिशा अपरोक्षाङ्गत्वमिव प्रशान्तचित्ताय शमान्विताय प्रोवाच तां तत्वतो ब्रह्मविद्यामित्यादौ श्रवणादिरूपब्रह्मविद्याङ्गत्वमपि श्रुतमिति भावेन

(भावदीपः)

पश्येदिति पदं श्रवणादिरूपज्ञानमात्रार्थतया व्याचष्टे ।। **विद्यादिति** ।। तस्मादेवंविच्छान्त इति पूर्ववाक्ये एवंविच्छब्देन न श्रवणादिरूपं ज्ञानं विवक्षितं किन्तु तदङ्गमन्यदेव ज्ञानमिति भावः । अपरोक्षदृशो मिथ्यादर्शनं न कचिद्भवेदित्येतद्व्याख्यावसरे तत्वनिर्णययीकादौ पश्यार्थैश्चानालोचन इति पाणिनीये चाक्षुषभिन्नज्ञानार्थैरित्यर्थोक्त्या दृशि धात्वादेशस्य पश्येदित्यस्य ज्ञानमात्रे प्रयोगादिति व्याख्यानादिति हृदयम् । षष्ठे काण्वशाखायां पश्यतीति पाठेऽपि तदर्थानुवादेन शाखान्तरस्थत्वेन भाष्ये पश्येदिति पाठः साधुरिति भावः ।। **इति श्रुतेरिति** ।। चतुर्थाध्यायतृतीयपादान्ते विशेषं च दर्शयतीत्यत्र भाष्योक्तश्रुतेरित्यर्थः ।। **विवेकाद्यपीति** ।। आदिपदोक्तवैराग्यद्वाराऽधिकारत्वं विवेकस्य ज्ञेयम् । न तु परमत इव वैराग्यादिवत्साक्षात् । परीक्ष्येति श्रुतौ विज्ञाय जातवैराग्य इति स्मृतौ च ल्यबन्तोक्त्या तथैव प्रतीतेः । उक्तं च पद्धत्यादौ तदेवंभूतैः प्रमाणैः पदार्थानां नित्यानित्यत्वादिकं निश्चित्य विषयेषु विरक्तस्येत्यादि । तदित्यस्यार्थस्तस्मादिति । अत्र विवेकादेः श्रवणाद्यङ्गगुरूपसत्तेः पूर्वभाव-श्रवणात् तादर्थ्यं सिद्धमिति स्फुटत्वान्नोक्तम् । भाष्ये श्रोत्रियमित्यस्य छन्दोध्यायिनमित्यर्थः ।। **इत्युक्तेरिति** ।। गीताभाष्ये षष्ठे अध्याय इत्यर्थः । नन्वत्रात्मन्येवेति श्रुतौ तद्विज्ञानार्थमिति श्रुतौ च मध्यमोत्तमयोर्यथाक्रमं शमादिकं विवेकादि च विशेषणं प्राप्तं न त्वाद्यायामुत्तमाधमयोरन्त्यायां मध्यमाधम-योरिति प्राप्तं तथा मध्यमोत्तमयोरध्ययनादिकं च विशेषणमिति च श्रुतिद्वयेन न प्राप्तमिति चेन्न । ब्रह्मविद्यायां शमदमादिकमङ्गमुत नेति विचारे शमदमादिकमङ्गमित्येव वक्तुं प्रवृत्तत्वाच्छ्रुतिद्वयस्य । अत एव टीकायां शमादिसंयुक्तता च ब्रह्मविद्यायामेवाधिकार इत्येवोक्तम् । अध्ययनादिकं तु पूर्वोक्तविशेषस्मृतिबलादुपलक्षणत्वेन ग्राह्यम् । शमादेर्विवेकादेश्च स्वशब्देनोक्तिस्तु श्रुतिद्वये मध्यमोत्तमयोः स्वगतधर्मेष्वध्ययनादिषु यथाक्रमं शमादेर्विवेकादेः प्राचुर्याभिप्रायेण । अत एव श्रुतिबलात्प्राचीनस्मृतिरपि ब्रह्मविद्याधिकारपरेति द्वयोरप्यन्योन्यसाहाय्येन विवक्षितार्थे साधकत्वात् श्रुतिस्मृत्योर्द्वयोरप्युक्तिर्भाष्ये अर्थवतीति भावः । भक्त्यैव वृणुते विष्णुर्भक्त्या दद्यान्निजं पदम् । भक्त्यैव दृश्यते नित्यं भक्त्या भोगान्ददाति चेति पाद्मस्मृत्या अन्यत्र भाष्येऽन्यथाव्याख्यानेऽपीह प्रकृतोपयोगितया लभ्यपदेन प्रसादोऽभिमतः । विवृणुत इत्यनेन श्रवणादिजन्यप्रकाशविषयं स्वां तनुं करोतीत्यर्थ इत्यभिप्रेत्याह ।। **विष्णुरिति** ।। वृणुते तदीयभक्त्या स्वीकरोतीत्यर्थः । ततश्च भक्तिजन्यप्रसादतश्चेत्यर्थः । परस्य ब्रह्मणो विष्णोः प्रसादादिति वा भवेत् । तज्जिज्ञासादिकं कार्यमिति पूर्वोक्तदिशा श्रवणादिविषयतायामपि प्रसादस्यावश्यकत्वादिति भावः । श्रुत्यर्थं व्यञ्जयन्नेव तामवतारयति ।। **सा चेति** ।। परेत्यस्यार्थः सर्वाधिकेति । देवे गुरावित्येतद्बहुवचनान्तं व्याचष्टे ।। **अन्येष्वपीति** ।। **यथायोग्येति** ।। देवेषु देवयोग्या

(भावदीपः)

गुरौ गुरुयोग्येत्यर्थः । उक्तं च ज्ञानपादीयसुधायाम् । यथा देवे तथा गुराविति । यथा देवे देवयोग्या तथा गुरौ गुरुयोग्येत्यर्थ इति । विष्णुभक्तिर्देवभक्तिर्गुरुभक्तिस्तथैव च । तत्तच्छ्रैष्ठ्यानुसारेणेति प्रथमाध्याय-बृहद्भाष्योक्तेश्चेति ज्ञेयम् ।। **ब्रह्मविद्येति** ।। प्रकाशन्त इति प्रकाशपदेन ज्ञानरूपपरतत्वादिविद्योक्तेरिति भावः ।। **श्रुत्याऽहेति** ।। एतेन भाष्ये इत्यादिश्रुतिभिश्चेत्यस्याधिकारश्चोक्त इति पूर्वेणान्वयः सूचितः । तत्वप्रदीपे तु भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।। ज्ञातुं द्रष्टुं चेत्यादिस्मृतिश्चशब्दाद् गृह्यत इत्युक्तम् । **व्योमसंहतियां चेतीति** ।। भाष्ये व्योमसंहितायां चाधिकार उक्त इत्यन्वयः । अयमपि सौत्राथशब्दार्थ एव । ब्रह्मजिज्ञासा नाम सर्ववेदान्तनये दर्शयति चेति सूत्रभाष्यादिदिशा यथाधिकारं ब्रह्मज्ञानायाखिलवेदवेदानुसारिग्रन्थार्थविषयकश्रवणमनननिदिध्यासनादि । तत्राऽथपदेनोक्तानां मुक्ति-योग्यानां मध्ये त्रैवर्णिकानां प्रागुक्तगुणयुक्तानां सर्वत्राधिकारः । तदन्येषां तु भक्तानां वेदानुसारि-ग्रन्थार्थजिज्ञासायामेव । तत्रापि केषाञ्चिन्नाममात्रादावित्यादिरूपोऽधिकारविशेषो व्योमसंहितायामुक्त इत्यर्थः । अरुच्या प्रकारान्तरेणेत्यादिटीका तु जिज्ञासाविशेषपरा । तेनैतद्भाष्यमुत्सूत्रमिति न कस्यचिदुपालम्भावकाशः ।। **वेदाधिकारेति** ।। अन्यथा तद्द्रष्टृत्वं न स्यादिति भावः ।। **मुनिस्त्रिय इति** ।। काण्वश्रुतौ एतद्वै तदक्षरं गार्ग्येतस्य वा अक्षरस्य प्रशासने गार्गीत्यक्षरविद्यायां गार्ग्याः सम्बोधनात् । तथा आत्मा वा अरे द्रष्टव्य इत्यादावर इति मैत्रेय्याः सम्बोधनात् । तथा भवति ते व्याख्यास्यामीति मैत्रेयीं सम्बोध्य व्याचक्षाणस्य तु मे निदिध्यासस्वेति निदिध्यासनविधानादिति भावः ।। **नरादिकुलजाश्चेति** ।। तदुक्तं तात्पर्यनिर्णये एकोनत्रिंशेऽध्याये । देव्यो मुनिस्त्रियश्चैव नरादिकुलजा अपि । उत्तमा इति विज्ञेयाः सच्छूद्रैरप्यवैदिकम् । ज्ञेयमन्यैर्हरेर्नामित्यादि ।। **सङ्क्षेपेति** ।। अथशब्दोऽधि-कारेत्यादिसङ्क्षेपः । अधिकारश्चोक्तो भागवततन्त्र इति विस्तरः । सङ्क्षेपविस्तराभ्यां च प्रवदन्ति मनीषिण इत्यादेर्भाष्यत्वाच्च द्वाभ्यामुक्तिरर्थवतीति भावः ।। **व्याख्यायेति** ।। ब्रह्मज्ञानहेतुजिज्ञासामात्रे योग्यत्वमधिकारः । तद्विशेषे तु तद्विशेष इत्यर्थतया व्याख्यायेत्यर्थः । अनिर्वचनीयाविद्यानिवृत्तिरूपमोक्षस्य ज्ञानादेव सिद्धेः किं प्रसादेनेत्यतो वा गौतमाद्यभिमतैकविंशतिदुःखध्वंसादिरूपस्य मोक्षस्य पुरुषैरर्थ्यमानत्वरूपपुमर्थत्वाभावेन तदुद्देशेन जिज्ञासायाः कर्तव्यत्वायोगादित्यतो वा कर्मासाध्यत्वसूचनाय वा मोक्षस्वरूपं वदन्नेव वाक्यं योजयति ।। **सुखमेवेति** ।। सर्वाभिमतत्युक्त्या सर्वाविवादो वाऽस्य परमपुरुषार्थत्वं वा सूचितम् । तदुक्तं तत्वनिर्णयादौ । मोक्षो हि सर्वपुरुषार्थोत्तम इत्यादि । अन्यत्रापि न मोक्षसदृशं किञ्चिदधिकं वा सुखं क्वचिदित्यादि । परोक्तमोक्षस्वरूपे तु न सर्वाभिमतिरस्तीति तन्न मोक्षस्वरूपं किन्तु दुःखनिवृत्तिविशिष्टसुखावाप्तिरूपमेवेति भावः । उपर्यत्यर्थेति भाष्यानुवादात्पूर्वत्रापि

(भावदीपः)

तथा ज्ञेयमिति भावेनोक्तम् ।। **नारायणात्यर्थेति ।। अत्यर्थप्रसादस्य चेति ।।** एतेन भाष्येऽत्यर्थ-प्रसादश्चेति चकारान्वयः । ज्ञानपदं चापरोक्षपरम् । अपरोक्षज्ञानस्य चेत्यादिशेषश्च ज्ञेय इति दर्शितम् । जिज्ञासां श्रवणमनननिदिध्यासनरूपाम् । जिज्ञासोत्थज्ञानजात्तत्प्रसादादेव मुच्यत इत्यनुभाष्योक्तेः । अत्राप्यग्रे सर्वस्योक्तस्य भाष्ये यथाक्रमं स्पष्टयिष्यमाणत्वाच्चेति भावः । भाष्यस्थातःशब्दार्थमाह ।। **अत्यर्थेत्यादिना** उत्पादिकेत्यन्तेन हेतुगर्भविशेषणेन । पक्षधर्मताभिव्यक्त्यर्थं हेतुविभक्त्यनुक्तिः । एतेन सौत्रातःशब्दस्य सर्वनामत्वात्प्रकृतस्य हेतुत्ववाचकेनातःशब्देन कथमेता-वल्लभ्यम् । अथशब्दोक्ताधिकारिविशेषणत्वेन मोक्षस्येच्छाविषयतया प्रकृतत्वेऽपि तं प्रति नारायण-प्रसादसाधनत्वादेरप्रकृतत्वेन तस्यात इत्यत्र प्रातिपदिकेन परामर्शासम्भवेन तस्य जिज्ञासाकर्तव्यतायां हेतुत्वस्य तसिल्प्रत्ययरूपविभक्त्योगादिति चोद्यं निरस्तम् । सूत्रे अथशब्दानन्तरमतःशब्दात्पूर्वं नारायणेत्यादिवाक्यस्य भाष्यकृताऽध्याहृतत्वेन मोक्षहेतुप्रसादजनकज्ञानोत्पादकत्वस्य प्रकृतत्वसम्भवेनात इत्यत्राकाररूपप्रातिपदिकेनोक्तरूपोत्पादकत्वं परामृश्य पञ्चम्यास्तसिलित्युक्ततसिल्प्रत्ययेन तस्य हेतुत्वं जिज्ञासां प्रति वक्तुं शक्यते । तादृशज्ञानोत्पादकत्वाज्जिज्ञासा कर्तव्येति । न चैवमध्याहारो निष्प्रमाणकः । यत्रानवसरोऽन्यत्रेति वक्ष्यमाणमूलकत्वादस्याध्याहारस्य । अत एव तत्र वाक्यं चेत्युक्तम् । अत एव च मोक्षप्रसादज्ञानजिज्ञासानामुत्तरोत्तरेण विना पूर्वपूर्वस्याघटनोक्ता भाष्ये । तमेवमित्यादिवक्ष्यमाणप्रमाण-सिद्धत्वाच्चेति ।।

नन्वेतदयुक्तम् । मुक्त्यर्थिरूपाधिकारिसामान्ये सिद्धे सति तस्य मुक्तियोग्यत्वाध्ययनश-मदमादिरूपविशेषणमर्पयितुमथपदम् । सिद्धे च मोक्षफले प्रसादादिद्वारा तद्धेतुत्वार्पकमतःपदम् । न चैतदस्ति । अहमर्थान्यविषयाभावात्तस्मिंश्चाहमिति ज्ञायमानेऽपि मोक्षानुपलम्भात्प्रयोजनं नास्ति । तदभावान्नाधिकारीत्युक्तत्वादित्यतस्सर्वमेतद्विषयाभावमूलम् । विषयसत्त्वे तु तज्ज्ञानान्मोक्षस्तदिच्छुरधिकारी च सिद्ध्यतीति भावेन जीवान्यविषयप्रदर्शनपरसौत्रब्रह्मपदव्याख्यानार्थं प्रवृत्तं ब्रह्मशब्देन गुणपूर्ण-त्वोक्तेर्नानुभवसिद्धाल्पगुणजीवाभेद इत्यादि न्यायविवरणं विवृण्वानः पूर्वपक्षं निराह ।। **यदुक्तमित्यादिना ।।** एतेन ग्रन्थान्तरोक्तपूर्वोत्तरपक्षयोरत्र प्रपञ्चनं निर्बीजमिति प्रत्युक्तम् । ब्रह्मपदेन विषयार्पणप्रकारस्यान्यत्रोक्तस्यात्रानुसन्धानेऽथातःपदव्याख्यानस्यात्र प्रकृतेनान्वयाद्बुद्धिसौकर्याच्च । अत एव सङ्क्रम्यन्ते गुरोर्गिर इति पूर्वप्रतिज्ञापि युक्तेति । प्रयोगेणेत्युक्तं व्यनक्ति ।। **श्रवणादिति ।।** न्यायविवरणोक्तश्रुतिमेवाह ।। **अथेति ।।** उच्यते विष्णुरित्यर्थः ।। **न चेति ।।** तथा च न जीवभेद-सिद्धिरिति भावः ।। **देशेति ।।** सा चास्त्यध्यस्तगुणेऽपि ब्रह्मणीत्यब्रह्मतापत्तिर्नेति भावः ।। **उक्तेति ।।**

(भावदीपः)

श्रुतिरप्यस्तगुणपरेति चेन्न । निर्दोषत्वेन सिद्धप्रामाण्यभङ्गप्रसङ्गादिति दोषे सत्येव दोषान्तरमाह ।। देशेति ।। वक्ष्यमाणत्वादिति ।। उत्क्रान्तिगत्यागतीनामित्यत्र द्वितीयस्य तृतीयपादे तत्र सोऽस्माच्छरीरा-दुत्क्रम्यामुं लोकमभिगच्छति । अमुष्मादिमं लोकमित्युत्क्रमणगमनक्रियावत्त्वहेतुनाऽणुत्वस्य वक्ष्यमाणत्वादित्यर्थः । न चैतदभेदवादिमते पूर्वपक्षसूत्रं चन्द्रिकायां निरस्तत्वात् । न्यायामृते जीवाणुत्वस्य जीवाणुत्ववादे समर्थनाच्च । यदुक्तमित्यादिनोक्तमर्थं भाष्यारूढं दर्शयन्नतो ब्रह्मजिज्ञासेत्युपसंहारभाष्यं प्रकारान्तरेण व्याचष्टे ।। अत इति ।। जिज्ञास्ये ब्रह्मपदश्रवणादिति प्रागुक्तहेतुपरामर्शित्वमेकोऽर्थः । अस्मिन्नर्थे तद्भिन्नेति साध्येनान्वयः ।। अर्थान्तरं चाह ।। जीवस्येत्यादिना सम्भवादित्यन्तेन ।। एतेन भाष्ये अत इत्यस्यावृत्तिः आद्यस्य जीवभेदकगुणपूर्तिवाचिब्रह्मपदश्रवणादित्यर्थः । अन्यस्य तु जीवस्येत्यादिरर्थ इति सूचितम् । बुद्धिस्थपरामर्शित्वादतःशब्दस्य । इतिशब्दो वाक्यव्याख्यासमाप्तौ ।

ननु मुक्तिहेतुनारायणप्रसादस्य ज्ञानद्वारा जिज्ञासाजन्यत्वे तज्जिज्ञासैव कार्या न ब्रह्मजिज्ञासा व्यधिकरणत्वात्तस्मादतो ब्रह्मजिज्ञासेत्ययुक्तमित्यत आह ।। ब्रह्मपदेति ।। नारायणपदस्य गुणपूर्त्यर्थताया आद्यपद्यव्याख्यायामभिधानात् । दोषारच्छिद्रशब्दानां पर्यायत्वं यतस्ततः ।। गुणा नारा इति ज्ञेयास्तद्वान्नारायणः स्मृतः ।। ब्रह्मशब्दोऽपि हि गुणपूर्तिमेव वदत्ययमित्याद्यनुभाष्योक्तेश्चेति भावः । तेन नारायणोऽसौ परमो विचिन्त्य इत्यादिश्रुतिस्सूचिता । भाष्ये इत्यादिश्रुतिस्मृतिभ्य इति वक्ष्यमाणस्य यतो नारायणप्रसादमृते इत्यनेनान्वयात् ।

## अभिनवचन्द्रिका

**अनेनेति** ।। 'तत्र मन्दा मनुष्ये'ष्वित्यादिना मोक्षयोग्येतरावृत्तिविशेषलक्षणत्रयकथनेनेत्यर्थः । **अस्य चेति** ।। 'सच्छूद्रादा'वित्यतः परं 'सत्त्वेने'ति शेषः । ततश्चैवं योजना – अस्य सामान्यलक्षणस्य मनुष्योत्तमादिविशेषलक्षणस्य च 'नाग्निर्न यज्ञो न वेदो न व्रतानी'त्यादिना वैदिकविद्याधिकार-रूपसाध्यस्यापवादविषये शूद्रादौ सत्त्वेन व्याप्तेः प्रायिकत्वात् औत्सर्गिकत्वात् अपवादविषयं परित्यज्य साध्यानुमितिजनकत्वेन प्रतिपत्तिगौरवमित्यरुच्या प्रकारान्तरेणाधिकारिणः स्वरूपं प्रमाणोदाहरण-मुखेनाहाऽऽचार्यो भाष्यकार इत्यर्थः । नन्वेवं सति कथं दुष्टस्य लक्षणस्य स्वीकारः कृत इति चेत् न । दोषस्याल्पत्वेन स्वीकारसम्भवात् । तदुक्तं महाभाष्ये 'न हि दोषाः सन्तीति परिभाषा न कर्तव्या लक्षणं वा न प्रणेयम्, न हि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते, न हि मृगाः सन्तीति यवा नोप्यन्त' इति । भाष्ये– **इति जातिकृतो भेद इति** ।। भेदो विभागः । अस्मिन् कल्पे

(अभिनवचन्द्रिका)

देवा उत्तमगणस्थाः । ऋषिगन्धर्वा मध्यमाः । उत्तरपक्षे तु विज्ञानशून्या अन्तःप्रकाशा एव ऋषयो मध्यमाः । विज्ञानवन्तो गन्धर्वाः । विशिष्टऋषयो देवाश्चोत्तमगणस्था इति विवेकः । एतेन – भेदस्यैकत्वात् अन्य इत्यनुपपन्नमिति परास्तम् । ननु भक्तिरध्ययनाङ्गम् । अध्ययनमेव अधिकारिलक्षणम् । तथा च 'भक्तिमान् परमे विष्णा'विति श्लोकेऽध्ययनमेव लक्षणत्वेन वाच्यम् । न तु भक्तिरपि तत्समकक्षतया ग्राह्या व्यर्थत्वादित्यत आह– **अध्ययनलब्धापीति** ।। अध्ययनेन लब्धा अध्ययनाङ्गमिति यावत् । अयं भावः – सत्यमध्ययनमेव ब्रह्मविद्याधिकारिणो लक्षणम् तथापि अलक्षणव्यावृत्तमेव लक्षणं लक्ष्यनिर्धारणस्येष्टे नाऽव्यावृत्तमिति लक्षणभूताध्ययनस्याऽऽभासव्यावृत्युपयोग्यध्ययन-जन्याऽतिशययोगित्वलक्षणविशेषसंपत्तय एव भक्तिः पृथगुक्ता । न तु लक्ष्यस्य अलक्ष्यव्यावृत्युपयोगि-तयेति । अत एव 'हरिभक्तिपूर्वकाध्ययनवत्त्वं ब्रह्मविद्याधिकार' इत्युक्तं भवतीत्युक्तम् । अन्यथा– हरिभक्तिमत्त्वे सति अध्ययनवत्त्वं ब्रह्मविद्याधिकार इत्यवक्ष्यत् । या तु भक्तिः 'विष्णुपादैकसंश्रया' इत्यनेनोक्ता सा अधिकार एव न तु तदप्यध्ययनविशेषणम् । यद्वक्ष्यति 'विष्णुभक्तिरपि ब्रह्मविद्याया-मधिकार इति श्रुत्याऽऽहे'ति । ननु– न भक्तिरध्ययनाङ्गम् । भक्तिशून्यानामपि दुर्योधनादीनामध्ययन-दर्शनात् । अन्यायाध्ययनमेतदिति चेत् । महानुभावद्रोणस्य अनधिकार्यध्यापनप्रवृत्त्ययोगात् । अन्यथा– कर्णस्याप्यध्यापनप्रसङ्गः । अभक्तस्यैव विरोचनस्य चतुर्मुखादध्ययनदर्शनाच्च । अध्ययनाय 'अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीते'ति संस्कारपरामर्शवत् भक्तेरपरामर्शाच्च, इति चेत्, सत्यम् – न भक्तिः वर्णवत् अध्ययनमात्राङ्गम् । किन्तु– तत्वज्ञानाङ्गाऽध्यापनाङ्गम् । एवं च– द्रोणादीनाम-भक्ताऽध्यापनप्रवृत्तिरुपपन्ना भवति ।

कथं तर्हि – 'विद्या ह वै ब्राह्मणमाजगाम गोपाय मां शेवधिष्टेऽहमस्मि । अनार्यकायाऽनृजवे शठाय न मां ब्रूया वीर्यवती तथा स्या'मिति विद्यादेवताप्रार्थनमिति चेत्, नेदमध्यापनपरित्याजनाय प्रार्थनम् । किं तर्हि व्याख्याननिषेधाय । अवश्यं चैतदेवं विज्ञेयम् । अन्यथा – अभक्तानामध्ययनशून्यत्वेन तेषां वेदवाक्येन मिथ्याज्ञानं न स्यात् । न स्याच्चाभक्तानां मिथ्याज्ञानजननाय 'तत्त्वमसी'त्यादि-व्यामिश्रोक्तिः । एतदेवाभिप्रेत्य अन्यायाध्ययनव्यावृत्त्यर्थं पृथगुक्तेति उक्तम् । अन्यथा हरिभक्तिकृता-न्यायाध्ययनव्यावृत्त्यभावेन अन्यायाध्ययन व्यावृत्त्यर्थमित्युक्तमयुक्तं स्यात् । अन्यायाध्ययनशब्दे अभक्तत्रिवर्णकृतमिथ्याज्ञानपर्यवसिताध्ययनग्रहणे तु न दोषो भवति भक्तिपदेन तद्व्यावृत्तिसम्भवात् । एवं च कर्णाध्यापननिवृत्तिरप्युपपद्यते । अध्ययनमात्राङ्गसंस्कारशून्यत्वात् । अत एव संस्कारपरामर्शोऽपि युज्यत इति न किञ्चिदत्रानुपपन्नमस्तीति । ननु किं शमादिसल्लक्षणमधमादीनां स्वरूपभूतम् । उत

(अभिनवचन्द्रिका)

आगन्तुकम् । नाद्यः आनन्दतारतम्यविधायकतैत्तिरीयश्रुतावुपलक्षणतया आनन्दस्य गृहीतत्वेन एकवृत्तिसर्वगुणानां साम्यात् । समानाधिकरणगुणान्तरोत्कर्षासम्भवेनासम्भवात् । न द्वितीयः । संसारदशायां कदाचित्सुखस्य । कदाचित् दुःखस्य प्राचुर्यवत् अधम एव कदाचिच्छमादेः कदाचिद्विष्णुपादैकसंश्रयत्वादेः प्राचुर्यसम्भवात् समानाधिकरणगुणोत्कर्षसम्भवेन मध्यमोत्तमलक्षणयोरतिव्याप्तेः । एवमधमलक्षणस्यातिव्याप्तिर्द्रष्टव्येति चेत्, यथेच्छसि तथास्तु । अस्तु तावदाद्यः पक्षः । ननु चोक्तमसम्भव इति न । अधमादिगतानामध्ययनादिगुणानां 'यथाऽऽनन्दे तथा ज्ञाने विष्णुभक्तौ बलादिके । सर्वैर्गुणैः शतगुणाः क्रमेणोक्ते न तेऽखिला' इति प्रमाणानुसारेण साम्येऽपि प्राचुर्यस्यापि भावात् । कथं तर्हि न व्याहतिरिति चेत् । न प्राचुर्यपदेन शमादिगतस्पष्टत्वस्यैव विवक्षितत्वात् । जगद्विषये लक्ष्मीज्ञानसमानविषयस्यापीश्वरज्ञानस्य एवंरूपातिशयदर्शनात् । तदुक्तम्–

'अथवा सहस्रगुणिता अनन्तगुणितास्तथा ।
परिमाणे शतगुणेत्यानन्दस्फुटतावशात्' ।। इति ।

अथवा पुनरस्तु द्वितीयः । ननु चोक्तमतिव्याप्तिरिति, स्यादयं दोषः यदि प्राचुर्यपदेन परिमाणाधिक्यं सङ्ख्याप्रकर्षं वा ब्रूमः । न चैवं, किं नाम स्पष्टत्वमात्रम् । तथा च अधमे संसारदशायां किञ्चिच्छमाधिक्येऽपि अल्पसुवर्णाधिकस्यापि कांस्यस्य स्पष्टत्वाभाववत् शमे स्पष्टताभावात् अध्ययन एव तद्भावात् न कश्चिद्दोष इति । एतेन न्यूनशमाद्यधिकाध्ययुक्तेति मध्यमलक्षणमुपपन्नम् । तस्य प्रमाणप्रमितत्वेन उत्तमाधमयोः सत्त्वादतिव्याप्तेः । नापि 'आब्रह्मस्तम्बपर्यन्त'मित्याद्युत्तमलक्षणम् । तस्यापि अधममध्यमयोस्सत्त्वेनातिव्याप्तेः । नापि 'भक्तिमान्परमे विष्णा' वित्यादि अधमलक्षणम् । तस्य सामान्यलक्षणत्वेन मध्यमोत्तमयोस्सत्त्वादतिव्याप्तेरित्यत आह – **शमादिसंयुक्त इत्यादाविति** । आदिपदेनोत्तमग्रहणम् । ततश्च मध्यमोत्तमलक्षणयोः अधमलक्षणसङ्ग्रह इत्यर्थः ।

**पूर्वत्र चेति** । अधमलक्षणे मध्यमलक्षणस्यानुकर्ष इत्यर्थः । एवमपि प्रागुक्तातिव्याप्तिः न परिहृतेत्याशङ्क्य निषेधति – **न चेति** ।। **उत्तरोक्तेति** ।। अधममध्यमोत्तमानां लक्षणोक्तिसमये गृहीतानां प्राचुर्यम् । उत्तरकाले च अनुवृत्त्या, आकर्षणेन वा, उक्तानामप्राचुर्येण असाङ्कर्यमित्यर्थः । शमादौत्यत्र प्रचुरशमस्यैव लक्षणत्वं, पूर्वोक्तानुवृत्तिकथनं तु प्राचुर्यनिरूपणाय । आदिपदोक्तानां दमादीनामपि प्रत्येकलक्षणत्वम् । एवमुत्तमस्य बहून्येव लक्षणानीति ध्येयम् । ततश्च स्वसमानाधिकरणशमप्रचुराध्ययनवत्त्वमधमत्वम् । स्वसमानाधिकरणाध्ययनप्रचुरशमवत्त्वं मध्यमत्वम् । स्वसमानाधिकरणाध्ययनप्रचुरवैराग्यवत्त्वमुत्तमत्वम् ।

(अभिनवचन्द्रिका)

एवमन्यान्यपि लक्षणानि द्रष्टव्यानि । यद्यपि सर्वेषामपि अध्यायनशमादिवैराग्यविष्णुपादैकसंश्रयत्वादीनि सन्ति, तथापि प्राचुर्यानिरूपणाय एकोपादानेन कृतत्वात् न तानि विशेषणानि विवक्षितानि । एतेन– ननु स्वसमानाधिकरणगुणेषु प्रचुराध्ययनवतोऽधमाच्छतगुणाधिकस्य मध्यमस्याऽध्ययनाधिक्यमेव न्याय्यम् । सहस्राश्वैकगजवतो देवदत्तात् द्विगुणैश्वर्यवान् यज्ञदत्त इत्युक्ते द्विसहस्राश्वानां गजद्वयस्य च प्रतीतेः एवमुत्तमेऽपीति निरस्तम् । यद्यपि सत्तर्कदीपावल्यां विष्णुभक्तिमत्त्वे सति अध्ययनवतामपि शमदमादिराहित्यसाहित्यवशात् मंदमध्योत्तमभेदविशेषित एव जिज्ञासाधिकार इत्युक्तत्वात् । सर्वत्र शमादिसाहित्यं प्रतिपादयतः टीकाकृतः तद्विरोधः प्रतीयते । तथापि नासौ वास्तवतविरोधः । 'अल्पस्वे निस्व' इत्यादिप्रतिपादनवत् अस्पष्टे नास्तीति प्रयोगदर्शनात्, शमादीनामस्पष्टत्वाभिप्रायेणैव शमादिराहित्यस्योक्तत्वात् ।

चन्द्रिकायान्तु समानाधिकरणानां वेदाध्यनशमादिविष्णुपादसंश्रयत्वानां मध्ये यस्य शमादिविष्णुपादैकसंश्रयत्वादिके अप्रचुरेऽध्ययनन्तु प्रचुरं सोऽधमः । यस्य विष्णुपादैकसंश्रयत्वादिकं प्रचुरम्, अध्ययनशमादिमत्त्वे अप्रचुरे स उत्तम इत्युक्तम् । तत्र लक्षणेषु स्वरूपकथनार्थैव विशेषणानि प्रयुक्तानि न त्वतिव्याप्तिपरिहाराय । अतो न पदकृत्यचिन्तया क्लेशः कार्यः ।

**यथा योग्येति** ।। भिन्ने एवैते पदे । अन्येषु ब्रह्मादिषु यथा=येन प्रकारेण । अनुष्ठिता योग्या= तत्तत्स्वरूपानुसारिणी स्यात्, तथा कृता भक्तिः ब्रह्मविद्योपयोगिनीत्यर्थः । एतेन अव्ययीभावत्वात् यथायोग्यमिति भाव्यमिति परास्तम् । भाष्ये– **'यस्य देवेपरा भक्ति'रिति** ।। आद्यो देवशब्द परब्रह्मवाचकः द्वितीयस्तु ब्रह्मादिपरः । ततश्चैवं योजना – यस्याधिकारिणः देवपरा=सर्वोत्कृष्टा भक्तिः, देवे=देवेपु, ब्रह्मादिषु, यथा=योग्यतानुसारेण गुरावपि यथा – योग्यतानुसारेणैवेति । भाष्ये – **स्त्रीशूद्रेति** ।। तन्त्रोत्पाद्यविद्यायां भक्तिविशिष्टे श्रवणेऽधिकार इति भावः । स्त्रीशूद्रादीनां न तन्त्रोत्पाद्यसर्वज्ञानाधिकारः किन्तु एकदेश इत्याह– **एकदेश इति** ।। परोक्त=परं प्रत्युक्तं उपसर्जनतया श्रवणाधिकार इति भावः । **न तु ग्रन्थेति** ।। ग्रन्थो वेदः । वेदमनूद्य व्याख्यानपरं श्रुतिगीतादौ नाधिकारः किन्तु वेदसंवादिपञ्चरात्रादेर्भागविशेष इति भावः । **त्रैवर्णिकानामिति** ।। वेदोक्त वेदप्रवचनोत्पादितं भक्तेस्सम्यक्त्वं नाम अध्ययनसाहित्यम् । अयमत्र समुदायार्थः – मोक्षसाधनीभूतं ज्ञानं त्रिविधम् – नामार्थज्ञानं, तन्त्रैकदेशार्थज्ञानं, वेदार्थज्ञानं चेति । तत्राद्ये भक्तिरेवाधिकारः । द्वितीये भक्तिविशिष्टो वर्णः । तृतीये तु – भक्तिपूर्वकमध्ययनमिति । ननु ब्रह्मणः गुणपरिपूर्णत्वेऽपि जीवाभेदः किं न स्यादित्यत आह– **टीकायां जीवस्याल्पगुणत्वेनानुभवादिति** ।। विरुद्धधर्माधि-

(अभिनवचन्द्रिका)

करणत्वात् तयोर्नैक्यमिति भावः । ननु विरुद्धधर्माधिकरणत्वेन भेदसाधनमनुपपन्नम् । अन्योन्याश्रयात् । तथा हि– जीवब्रह्मणोर्भेदसिद्धौ गुणपरिपूर्णत्वाल्पगुणत्वयोर्विरोधसिद्धिः, तत्सिद्धौ च तत्सिद्धिरिति चेत्,

स्यादेतत् – यदि भिन्नाधिकरणवृत्तित्वं विरोधः स्यात्, न चैवं – किं नाम परस्परविरहव्याप्यत्वं वा, परस्परविरहरूपत्वं वा । अन्यथा भूतत्वमूर्तत्वयोरपि विभिन्नाधिकरणवृत्तित्वेन विरोधः स्यात् । न स्याच्च संयोगतदत्यन्ताभावयोः एकाधिकरणवृत्तित्वात् । तथा च गुणेषु पूर्णत्वं नाम निरवधिकत्वं, अल्पत्वं च सावधिकत्वं, अवधितदभावयोः परस्परविरहरूपत्वेन विरोधित्वात् । तद्द्वारा सावधिक-निरवधिकयोरपि विरुद्धत्वात् । तदधिकरणत्वेन जीवेश्वरयोर्भेदसिद्धिः । यद्यपि यत्र विरुद्धधर्माधिकरणत्वं तत्र भेद इति न व्याप्तिः । संयोगतदत्यन्ताभावाधिकरणे वृक्षे व्यभिचारात् । तथापि यौ विरुद्धौ तौ भेदनिर्वाह्यावित्यस्त्येव व्याप्तिः । स च भेदो न धर्मिण एवेति नियमः किन्तु कालावच्छेदकसम्बन्धा-वयवाधिकरणादीनामन्यतमस्य । प्रकृते च इतरप्रतिषेधसहितस्य विरुद्धधर्माधिकरणत्वस्य धर्मभेदसाधकत्वमिति न किञ्चिदनुपपन्नम् । ननु सुखदुःखादयोऽन्तःकरणधर्माः तद्भेदादन्तःकरणभेदः साध्यतां, जीवेश्वरभेदे तु किमायातमिति चेत् । न । ब्रह्मानन्दस्य तत्स्वरूपत्वेन अन्तःकरणधर्मत्वा-भावात् । जीवानन्दस्यापि स्वरूपबाह्यभेदेन द्विविधत्वात् । स्वरूपानन्दमादाय भेदसाधनसम्भवात् । बाह्यस्य अन्तःकरणधर्मत्वेऽपि तत्स्वामित्वस्य जीववृत्तित्वात्, परिच्छिन्नाऽपरिच्छिन्नगुणस्वामित्वाभ्यामपि भेदसाधनसौलभ्यात् । ननु ब्रह्मणि जीवे च प्रतीयमानं पूर्णगुणत्वं अल्पगुणत्वं च मिथ्यैव । न च मिथ्याभूतेन विरुद्धधर्माधिकरणत्वेन भावभेदः सम्भवति नागवंगत्वेन विभ्रमगोचरायाः शुक्तिकाया अपि भेदप्रसङ्गादित्यत आह – **न च ब्रह्मणीति** ।। गुणाध्यासः अल्पगुणपूर्णगुणयोरध्यासः । **परमार्थत इति** ।। उपलक्षणमेतत् । अजीवत्वप्रसङ्गात् इत्यपि द्रष्टव्यम् । मायावादिना इष्टापत्तिरिति वक्तुं शक्यत्वेऽपि न पूर्वपक्षिणा तथा वक्तुं शक्यते । विशिष्टाद्वैतवादिना तेन जीवत्वब्रह्मत्वयोः पारमार्थिकत्वाङ्गीकारादिति भावः । नन्वपरिच्छिन्नपरिच्छिन्नगुणयोर्मिथ्यात्वेऽपि न जीवत्वब्रह्मत्वहानिः । सत्येन देशाद्यपरिच्छेदेन ब्रह्मत्वाङ्गीकारात् । अपरिच्छिन्नस्यापि आकाशस्य घटावच्छेदेन परिच्छिन्नत्ववत् अपरिच्छिन्नस्यापि ब्रह्मणो देहावच्छेदेन परिच्छिन्नत्वरूपजीवत्वसम्भवात् इत्याशङ्क्य– **देशाद्य-परिच्छिन्नेति** ।। उपलक्षणं चैतत् । शरीरावच्छिन्नता जीवतेत्यपि द्रष्टव्यम् । **जीवाणुत्वस्य वक्ष्यमाणत्वादिति** ।। स्वाभाविकमेव तदणुत्वं नाऽऽकाशाणुत्ववदौपाधिकमिति भावः ।

## वाक्यार्थमुक्तावली

अधिकारश्चोक्त इति भाष्ये तत्त्रैविध्यं चोक्तमिति भाष्यार्थः । नन्वधिकारिस्वरूपमेव तत्रोच्यते नाधिकार इत्यत उक्तमधिकारश्चेति । न केवलमधिकार्यपि तु तद्विशेषणतयाऽधिकारोऽपीत्यर्थः । तदेतदाह । **अत्राधिकारिकथनेऽपीति** । **अनेन मोक्षयोग्यत्वमिति** । मोक्षयोग्यत्वेन सामान्यलक्षणमभिप्रेतमित्यर्थः । मोक्षाधिकारिणस्त्रिविधा इति प्रतिपादनेनेति केचित् । सच्छूद्रादौ व्याप्तेरतिव्याप्तेरित्यर्थः । यद्यपि सच्छूद्रादेर्देहान्तरे अधिकारोऽस्ति तथापि तद्देहावच्छिन्नेऽभावादतिव्याप्तिरित्यर्थः । कथं तर्हि इदं सामान्यलक्षणं स्यादित्यत आह । **प्रायिकत्वादिति** । देवानारभ्य त्रैवर्णिकमनुष्योत्तमपर्यन्तेषु बहुषु मोक्षयोग्येषु भावान्मोक्षयोग्यत्वस्य प्रायिकत्वात्प्रायो लक्ष्यतावच्छेदकसामानाधिकरण्यात्तद्विवक्षया सामान्यलक्षणत्वोक्तिरिति भावः । यद्वा सच्छूद्रादेः शूद्रादिजन्मन्यधिकाराभावेऽपि ब्राह्मणादिजन्मसु सत्वेनाधिकारस्य प्रायिकत्वान्नातिव्याप्तिः । तद्देहावच्छेदेन लक्षणाभावादरुचिरिति भावः । अथवा न च सच्छूद्रपक्ष्यादावतिव्याप्तिरिति युक्तम् । विदुरधर्मव्याधजरितर्यादीनां लक्ष्यत्वेनातिव्याप्तेरयुक्तेरित्यत आह । **प्रायिकत्वादिति** । सच्छूद्रादिषु केषुचिदतिव्याप्त्यभावेऽपीदानीन्तनसच्छूद्रादिष्वतिव्याप्तेर्बाहुल्येन वर्तमानत्वादित्यर्थः । **प्रकारान्तरेणेति** । न मुक्तियोग्यत्वमेवाधिकारः । त्रैवर्णिकेतरेष्वतिव्याप्तेः । नापि मुक्तियोग्यत्वे सत्यध्ययनवत्वमात्रम् । किन्तु राजसूयादौ राजत्वादिकमिव तथान्य इत्यादिवचनसिद्धभक्त्यादिगुणविशेषोऽपि तदधिकारविशेष इति भावेन प्रकारान्तरेणेत्यर्थः । **अध्ययनलब्धापीति** । अवैष्णवस्य वेदेऽपि ह्यधिकारो न विद्यत इति वचनादिति भावः । अयोग्येभ्यो योग्येभ्यो वा असमये वा पुस्तकादिना वा कृतत्वमन्यायत्वमध्ययनस्य । तथाच भक्तिमानित्यस्य सार्थक्ये सति भक्तिमान्परमे विष्णौ यस्त्वध्ययनवान्सोऽधिकारीत्यन्वये सति हरिभक्तिपूर्वकाध्ययनवत्वं सामान्यतो ब्रह्मविद्याधिकार इत्युक्तं भवतीति भावः । मनुष्ययोग्यब्राह्मणादौ सच्छूद्रादौ चातिव्याप्तिपरिहाराय क्रमेण पदद्वयम् । नन्वेवं भक्तिमान्परमे विष्णौ यस्त्वध्ययनवान्नरः सोऽधिकारीत्यनेनाधम इत्येतदनन्वितं स्यात् । भक्तिमानित्यादेरधम इत्यनेनाप्यन्वयं विरोधलक्षणत्वेन कथमिदं सामान्यलक्षणं स्यान्मध्यमादावभावात् । भावे वाऽधमाधिकारिलक्षणस्यातिव्याप्तिरित्यतो नैतावदेवाधमाधिकारिलक्षणम् । नापि शमादिसंयुक्तत्वमात्रं मध्यमादिलक्षणमित्यभिप्रेत्याह **शमदमादिसंयुक्त इत्यादाविति** । ननु सर्वं सर्वत्र चेत्परस्याव्यावृत्तत्वान्न विशेषलक्षणानीत्याशङ्क्य निरस्यति । **न चैवं साङ्कर्यमिति** । **उत्तरोक्तेति** । पूर्वत्रेति शेषः । सर्वगुणानां सर्वत्रानुवृत्तौ सिद्धायामुत्तरस्मिन्मध्यम उत्तमे चोक्तानामध्ययनवत्वादीनां त्रयाणां गुणानां पूर्वस्मिन्मध्यमेऽधमे वा प्राचुर्यमित्यर्थः । तथा च प्रचुरतमाध्ययनादिगुणत्रयवत्वमुत्तमत्वं

(वाक्यार्थमुक्तावली)

प्रचुराध्ययनादिमत्वं मध्यमत्वम् । एतद्भिन्नाध्ययनादिमत्वमधमत्वमिति । अथवोत्तरोक्तस्य शमादेः पूर्वस्मिन्नधमादावप्राचुर्यम् । यत्र शमादिकं च प्रचुरमध्ययनवत्वं वैराग्यं चाप्रचुरं स मध्यमः । यत्र वैराग्यं प्रचुरमध्ययनं शमादिकं वाऽप्रचुरं स उत्तमः । तथा च यत्राध्ययनवत्वं प्रचुरं शमादिकं वैराग्यं वा अप्रचुरं सोऽधमः ।

ननु कथं वा देवादिषु मध्यमापेक्षया शमाद्यं प्रचुरमिति चेन्न । स्वसमानाधिकरणगुणापेक्षया प्राचुर्याप्राचुर्ययोर्विवक्षितत्वादिति भावबोधे । चन्द्रिकायां तु स्वसमानाधिकरणानां वेदाध्ययनशमादिविष्णुपादैकसंश्रयत्वादीनां मध्ये यस्य शमदमादिविष्णुपादैकसंश्रयत्वादिके अप्रचुरे अध्ययनं तु प्रचुरं सोऽधमः । यस्य विष्णुपादैकसंश्रयत्वाद्येवाप्रचुरम् अध्ययनशमादिके प्रचुरे सो मध्यमः । यस्य तु विष्णुपादैकसंश्रयत्वादिकं प्रचुरमध्ययनशमादिकमप्रचुरं स उत्तम इत्यर्थः उक्तः । अनन्तभट्टीये तु उत्तरत्र पूर्वोक्तं प्रचुरमेव पूर्वत्रोत्तरोक्तमप्रचुरम् । तथा चोत्तमाधिकारिणः सर्वं प्रचुरमित्यर्थ उक्तः । भाष्ये विष्णुपादैकसंश्रय इत्यस्य विष्ण्वर्थमर्थयन्मोक्षं न मोक्षार्थे तु विष्णुः स्यादिति ज्ञानी स उत्तम इति प्रमाणानुसारेणार्थो ज्ञेयः । सन्यस्तेत्यस्य विष्ण्वर्पितेत्यर्थः । अध्ययनमात्रवत इत्यत्र मात्रेति कृत्स्नमुच्यते । यथाशक्ति कृत्स्नाध्ययनवतोऽधिकार इत्युक्त्याऽयमधिकारो ब्रह्मविद्यायामित्येतत्कुतोऽवगम्यत इति शङ्का निरस्ता । स चाधिकारो देवादीनामविशेषादेकप्रकारेण न भवतीति नाविशेषादित्यर्थः । तेन तत्त्रैविध्यं कुतः इति शङ्का निरस्तेति । श्रुत्येति । स्पष्टं विवक्षितसर्वार्थलाभात्स्मृतिः पूर्वेति भावः ।

पश्येदित्याद्ययुक्तम् । शमदमादीनां ब्रह्मविद्याधिकारत्वे प्रमाणस्य वक्तुमुपक्रान्तत्वादपरोक्षाङ्गत्वस्य प्रकृतासङ्गतत्वादित्यतो व्याचष्टे । **विद्यादिति** । प्रशान्तचित्ताय शमान्विताय प्रोवाच तां तत्वतो ब्रह्मविद्यामित्यादेः शमादेर्ब्रह्मविद्याङ्गत्वश्रवणादिहापि पश्येदित्यस्य पश्यार्थश्चानालोचन इति पाणिनिवचनात्, पश्येदित्यस्य विद्यादित्यर्थ इति भावः । काण्वशाखायां पश्यतीति पाठेऽपि पश्येदिति शाखान्तरमनुसृत्य पठितम् । **मध्यमाधिकारित्वं च सूचितमिति** । यद्यपि पूर्वोक्तदिशा शमादिकं सर्वत्र वर्तते । तथापि मध्यमे स्वसमानाधिकरणगुणेषु शमादेः प्राचुर्यान्मध्यमाधिकारिषु शमादिकं सूचितमित्यर्थः । एवमुत्तमाधिकारित्वमित्यत्रापि विरक्तिप्राचुर्यस्यान्यत्राभावात् विरक्तिप्राचुर्यवानुत्तम इति विज्ञानपदेन सूचितमित्यर्थः । सारासारविवेक एवादिः कारणं यस्य वैराग्यस्य तद्विवेकादि विवेकजन्यं वैराग्यमिति यावत् । स्मृतौ विज्ञाय जातवैराग्य इति श्रुतौ परीक्ष्येति ल्यबन्तोक्त्या तथैव प्रतीतेः । उक्तं च पद्धत्यादौ नित्यानित्यत्वादिकं निश्चित्य विषयेषु विरक्तस्येति । तद्विज्ञानार्थमित्यत्र

(वाक्यार्थमुक्तावली)

तदित्यस्यार्थस्तस्मादिति । अकृत इत्यस्यार्थो नित्येति । **स्वस्वरूपं प्रकाशतीति** । श्रवणादिना ज्ञानविषयं करोतीत्यर्थः । **वृणुत इत्यनेनेति** । अभक्तस्य स्वीयतया स्वीकारायोगादिति भावः । **अन्येष्वपि यथायोग्येति** । एतेन यस्य देवे परा निरतिशया भक्तिर्यथा देवे देवयोग्या तथा गुरावपि गुरुयोग्या भक्तिरस्ति । तस्यैते प्रागुक्ता अर्थाः प्रकाशन्ते प्रतीयन्त इति व्याख्यातं भवति । भाष्ये इत्यादिश्रुतिभ्यश्चेत्यस्य अधिकारश्चोक्त इत्यनेनान्वयः । एवं व्योमसंहितायां चेत्यस्यापि । अयं सौत्रार्थः शब्दार्थ एव । ब्रह्मजिज्ञासा नाम वेदान्ताधिकरणदिशा गतिसामान्यसूत्रदिशा च यथाधिकारं ब्रह्मज्ञानाय वेदवेदानुसारिग्रन्थार्थविषयकश्रवणमनननिदिध्यासनानि । तत्राथपदोक्तानां मुक्तियोग्यानां मध्ये त्रैवर्णिकानां प्रागुक्तानां सर्वाधिकारः । तदितरेषां तु वेदानुसारिग्रन्थार्थजिज्ञासायामेव । तत्रापि केषांचिन्नाममात्रादावित्यादिरूपोऽधिकारिविशेषो व्योमसंहितायामुक्त इत्यर्थः । अरुच्या प्रकारान्तरेणेति टीका तु वेदश्रवणादिरूपजिज्ञासाविशेषपरा । तेनैन्द्राष्यमुत्सूत्रमिति कस्यचिच्चोद्यानवकाशः । नरादि-कुलजाताः शच्याद्या इत्यर्थः । नन्वतश्शब्दस्य हेतुसामान्यपरत्वेऽपि मोक्षलक्षणप्रयोजनाख्यहेतोरिति हेतुविशेषणप्रतिपत्तिः कथमित्यतो यान्प्रति जिज्ञासा विधीयते तैरपेक्षिततया बुद्धौ परिवर्तमानस्य मोक्षस्य मोक्षयोग्यत्वलक्षणाधिकारवाचकाथशब्देन प्रस्तुतत्वाद्धेतुविशेषप्रतिपत्तिः सम्भवतीति भावेनाह । **सुखमेव मे स्यादिति** । यद्यपि भाष्ये मोक्षाख्यफलस्य सत्वादित्येव वक्तव्यम् । तथाप्यतश्शब्दोक्तपुरुषार्थं प्रति विहितब्रह्मजिज्ञासायाः साक्षाद्धेतुत्वासम्भवेन तद्घटनाय यावदपेक्षितं तावत्सर्वमतश्शब्दापेक्षितमेवेति भावेन यतो नारायणप्रसादमृत इत्याद्युक्तम् । अत एवोक्तं भगवतः प्रसत्या पुरुषार्थो भवतीति सूचित इति । नानुभवसिद्धाल्पगुणजीवाभेद इति न्यायविवरणं हृदि निधाय पूर्वपक्षं निराह । **यदुक्तमित्यादिना** । **न चेति** । तथा च जीवभेदसिद्धिरिति भावः । **अब्रह्मत्वेति** । अब्रह्मत्वश्रवणप्रसङ्गादित्यर्थः । यदि गुणा आरोपितास्तदा परमार्थतो ब्रह्मेति श्रुतिषु श्रूयते । न च तथाविधं वाक्यं वर्तते येन गुणा आरोपिताः स्युः । केवलो निर्गुणश्चेति श्रुतेरन्यपरत्वादिति भावः । यद्वा गुणारोपितस्य प्रवृत्तिनिमित्तगुणाधिकरणत्वाभावेन जिज्ञास्यस्य परमार्थतोऽब्रह्मत्वप्रसङ्ग इत्यर्थः । **देशादीति** । सा चाध्यस्तगुणं ब्रह्मण्यस्तीति नाब्रह्मतापत्तिरिति भावः । **उक्तेति** । अथ कस्मादुच्यत इत्युक्तश्रुति-विरोधादिति भावः ।

ननु नोक्तश्रुतिविरोधः । देशाद्यपरिच्छेदस्यापि गुणत्वादित्यत आह । **देशाद्यपरिच्छेदेन चेति** । यदुक्तमित्यादिनोक्तमर्थं भाष्यारूढं दर्शयन्नतो ब्रह्मजिज्ञासेति भाष्यमुपसंहारपरतया प्रकारान्तरेण व्याचष्टे ।। **अत इति** । पारमार्थिकगुणपूर्तिवाचिब्रह्मशब्दश्रवणादित्यर्थः । नारायणप्रसादमृते मोक्षाभावेन तत्प्रसादार्थं

(वाक्यार्थमुक्तावली)

नारायणजिज्ञासा कार्या । कुतो ब्रह्मजिज्ञासा विधीयत इत्यत आह । **ब्रह्मपदेति । अधिकारकथनादिनेति ।** विषयप्रयोजनकथनमुच्यते । ब्रह्मजिज्ञासाया अकर्तव्यत्वे गुणपूर्तिप्रतिपादनं ब्रह्मपदेन कथ्यमानमसङ्गतं स्यात्तस्य सन्दिग्धत्वोपपादकतया विषयसमर्पकत्वात् । अतश्शब्देन मोक्षप्रयोजनोक्तिश्चायुक्ता । इयन्तं कालं जिज्ञासाभावेऽपि मुक्त्यदर्शनादिति ।

## तत्त्वसुबोधिनी

नन्वधिकारे पृष्टे अधिकार एव वक्तव्यः । अधिकारिकथनं कोपयुक्तमित्यत आह । **अधिकारीति ।** अधिकारविशिष्टाधिकारिनिरूपणेऽधिकारनिरूपणमपि सिद्धमिति स न पृथगुक्त इत्यर्थः । **सच्छूद्रादौ व्याप्तेरिति ।** अतिव्याप्तेरित्यर्थः । यद्यपि सच्छूद्रादेः देहान्तरे ब्रह्मविद्याधिकारसम्भवेन तेषामपि लक्ष्यत्वान्नातिव्याप्तिः । तथापि वेदविद्याधिकारशून्यतापादकशूद्रदेहावच्छिन्नेऽपि तस्मिन् मोक्षयोग्यत्वसत्त्वेनातिव्याप्तिरिति भावः । **प्रायिकत्त्वादिति ।।** देवानामपि त्रैवर्णिकमनुष्योत्तमपर्यन्तेषु बहुषु मोक्षयोग्येषु वेदविद्याधिकारेऽपि न तद्देहेऽधिकारः । देहान्तरेऽधिकारश्च नेदानीं प्रवृत्युपयोगीत्यरुच्येत्यर्थ इति चन्द्रिकोक्तरीत्या अस्य च मोक्षयोग्यत्वरूपलक्षणस्य सच्छूद्रादौ व्यापनात् । **अध्ययनलब्धाऽपीति ।।** अवैष्णवस्य वेदेऽपि ह्यधिकारो न विद्यते इत्यादेरित्यर्थः । **अन्याय्याध्ययननिवृत्त्यर्थमिति ।।** अभक्तैः अनधिकारिभिः वा भक्तादिभिरपि असमयेऽयोग्यपुरुषेभ्यो वा पुस्तकपाठादिना वा कृतत्वमन्याय्यत्वमध्ययनस्य द्रष्टव्यम् । **तथा चेति ।** मुक्तियोग्यत्वे सति भक्तिपूर्वकाध्ययनवत्त्वम् अधिकारिलक्षणमिति भावः । मुक्त्ययोग्यब्राह्मणादौ तद्योग्यसच्छूद्रादौ वाऽतिव्याप्तिपरिहाराय क्रमेण पदद्वयम् । ननु हरिभक्तिपूर्वकाध्ययनवत्वं कथं सामान्यलक्षणं मध्यमादिषु अभावात् । तत्सत्वे अधमाधिकारिलक्षणस्यातिव्याप्त्यापत्तेः तस्यैवाधमाधिकारिविशेषलक्षणत्वात् इत्यतो न तत्र तत्रोक्तगुणमात्राधरितानि विशेषलक्षणानि किं नाम गुणत्रयघटितान्येव । ''भक्तियुक्तः परे विष्णौ तथाऽध्ययनवानपि । अधमोऽयमिति ज्ञेयः एतत्पूर्वं शमादिमान् । मध्यः स्याद् ब्रह्मणो विष्णोः वशे ब्रह्मादिपूर्वकम् । विज्ञाय भक्तिसम्पन्न'' इति विशेषप्रमाणेन उपलक्षणत्वेन एतत्पूर्वं शमादिमानिति भक्तिसंपन्न इति च अधमाधिकारिलक्षणस्य मध्यमोत्तमयोः उक्तत्वात्तदनुरोधेनाह । **शमादिसंयुक्त इत्यादावित्यादिना ।** ननु सर्वं सर्वत्र चेत्परस्परव्याहतत्वान्न विशेषलक्षणानीत्याशङ्क्य निरस्यति । **न चैवमिति ।** उत्तरोक्तेति । पूर्वपूर्वस्मिन्निति शेषः । तथा चोत्तरोक्तयोः मध्यमे उत्तमे च उक्तयोः गुणयोः पूर्वस्मिन्नधमे तथोत्तरस्मिन्नुक्तस्य उत्तमोक्तस्य गुणस्य मध्ये तयोत्तरस्मिन्नुक्तस्य उत्तमे उक्तयोः अधममध्यमयोः गुणयोः अप्राचुर्यादित्यर्थः ।

(तत्त्वसुबोधिनी)

ततश्चायमर्थः । समानाधिकरणानां वेदाध्ययनशमादिविष्णुपादैकसंश्रयत्वानां मध्ये यस्य शमदमादि-विष्णुपादैकसंश्रयत्वादिके अप्रचुरे अध्ययनन्तु प्रचुरं सोऽधमः । यस्य विष्णुपादैकसंश्रयत्वादिकमेवाप्रचुरम् अध्ययनशमादिके तु प्रचुरे सः मध्यमः । यस्य विष्णुपादैकसंश्रयत्वादिकं प्रचुरम् अध्ययनशमदमादिके तु अप्रचुरे सः उत्तमः । यद्वा उत्तरोक्तयोः मध्यमे उत्तमे च उक्तयोः उत्तरोक्तस्य उत्तमोक्तस्य प्राचुर्येण इत्येव टीकार्थः । ततश्च यस्य समानाधिकरणानां त्रयाणां मध्ये भक्तिपूर्वकाध्ययनं प्रचुरं शमादिकेऽप्रचुरे सोऽधमः । यस्य समानाधिकरणानां मध्ये अध्ययनशमादिके प्रचुरे विष्णुपादैकसंश्रयत्वमेव अप्रचुरं स मध्यमः । यस्य तु त्रयमपि प्रचुरं स उत्तम इति त्रयाणां लक्षणानि सूचितानीति ज्ञातव्यम् । भावबोधे तु प्रचुरतमतया अध्ययनादिगुणत्रयवत्त्वम् उत्तमत्वम् । प्रचुरतमत्वरहितप्रचुर-तराध्ययनादिमत्वं मध्यमत्वम् । प्रचुरतमत्वप्रचुरतरत्वरहिताध्ययनादिमत्वम् अधमत्वम् इति उत्तमादीनां त्रयाणां लक्षणानि अनेनोक्तानि । प्रचुरत्वप्रचुरतरत्वप्रचुरतमत्वानां मधुरत्वादिवत् स्पष्टत्वादिवच जातिरूपत्वान्न कश्चित्क्षुद्रोपद्रवः । यद्वा सङ्गृहीता अनुकृष्टाश्च गुणा उत्तरोक्ताः । तेषां तत्र तत्र भक्तिमान् इत्यादियथास्थितमूलोक्तगुणापेक्षया अप्राचुर्येणेति योजना । यथास्थितमूलोक्तगुणानां प्राचुर्यम् अर्थतो लभ्यम् । ततश्च यत्राध्ययनवत्वं प्रचुरं गुणद्वयमप्रचुरं सोऽधमः । यत्र शमादिसम्पत्तिः प्रचुरा अध्ययनवत्त्वं वैराग्यादि च अप्रचुरं स मध्यमः । यस्य विष्णुपादैकसंश्रयत्वं प्रचुरं अध्ययनवत्वं शमादिसम्पत्तिश्चाप्रचुरा स उत्तम इत्यर्थः । अधमादिषु अध्ययनवत्त्वादीनां समानाधिकरणगुणद्वयापेक्षया प्राचुर्ये तत्र तत्र तस्य तस्य गुणस्य विशिष्य वचनम् आत्मनीति मध्यमाधिकारित्वं सूचितमिति विज्ञानपदेनोत्तमाधिकारित्वं सूचितमिति टीकावचनं च ज्ञापकमिति ध्येयम् । ''न अविशेषादिति'' सूत्रेण तत्त्रैविध्यं कुतो ब्रह्मविद्यायामित्याशङ्कापरिहार इति बोद्धव्यम् । **विद्यादिति** ।। पश्यार्थेश्चानालोचन इति ज्ञानमात्रेऽपि तत्प्रयोगात् । अन्यथा परोक्षज्ञान एव शमादीनां हेतुत्वं लभ्येत । न ब्रह्मविद्यायामिति भावः । **तेषां तादर्थ्यमिति** ।। शमादीनां ब्रह्मविद्यात्वमित्यर्थः । **मध्यमाधिकारित्वं सूचितमिति** । तथा च एतत्समाख्याबलात् शमादिसंयुक्तो मध्यम इति वाक्यस्य ब्रह्मविद्यायामेव मध्यमाधिकारि-प्रतिपादकत्वं सिद्ध्यतीति भावः । **विज्ञानपदेनेति** । विज्ञानार्थमिति पदेनेत्यर्थः । उत्तमाधिकारित्वं सूचितमित्यस्यायमेवाभिप्रायः । **प्रकाशयतीति** । श्रवणादिजन्यज्ञानविषयो भवतीत्यर्थः । कथमनेन विष्णुभक्तिः ब्रह्मविद्यायां अधिकार इत्युक्तमिति अत आह । **अत्रेति** । **सा च भक्तिरिति** । अनेन देवे विष्णौ परा सर्वाधिका भक्तिः यथा तथा देवे तदितरदेवेषु गुरावन्येषु स्वोत्तमेषु च यथायोग्यं भक्तिः यस्य तस्य एते कथिताः विष्ण्वादिरूपा अर्थाः प्रकाशन्ते इति वाक्यं योजितं भवति ।

(तत्त्वसुबोधिनी)

**वर्णबाह्या इति** । तेन म्लेच्छादीनां सङ्ग्रह इति भावः । **नामज्ञानाधिकारिण इति** । नामज्ञानाधिकारवत्त्वमुक्तं त्रिवर्णेतरेषां तत्र कोऽसौ नामज्ञानाधिकारो यद्वत्त्वम् अन्त्यजादेः उच्यते इत्यत आह । **भक्ता इत्यधिकारकथनार्थमिति** । ततश्च भक्तिरेव नामज्ञानाधिकार इत्युक्तं भवति । कथमनेन अध्ययनविधुराणां स्त्रीशूद्रादीनां मोक्षः समर्थित इत्यत आह । **अध्ययनाभावेनेति** । भाष्ये तन्त्रज्ञान इत्यस्यैव विशेषणं एकदेश इत्यादि । ननु ग्रन्थपुरस्सर इत्यस्य ग्रन्थमारभ्य समाप्तिपर्यन्तं न श्रोतव्यमित्यर्थः । त्रैवर्णिकानां वेदोक्ते अधिकार इत्युक्ते अयोग्यानामपि अधिकारः प्रतीयते अत उक्तम् । **सम्यक् भक्तिमतामिति** । **सपत्नी मे इति** । तदधिकाराभावेन द्रष्टृत्वं कथं स्यादिति भावः । **नरादिकुलजाश्चेति** । शच्याद्या इत्यर्थः । **सङ्क्षेपविस्तराभ्यामिति** । अधिकारानन्तर्यार्थ इति सङ्क्षेपेण अधिकारश्चोक्तो भागवततन्त्र इति विस्तरेण च इत्यर्थः । यदर्थं ब्रह्मजिज्ञासाविधिः स मोक्ष एव मा भूदनपेक्षितत्वादित्यत उक्तम् । **सुखमेव मे स्यादिति** । भाष्ये ज्ञानपदम् अपरोक्षज्ञानपरम् । प्रसाद इत्यनन्तरं न च ब्रह्मजिज्ञासां विना ज्ञानमित्यध्याहारश्च कर्तव्यः । अन्यथा भाष्ये 'अतो ब्रह्मजिज्ञासा' इत्यस्यासङ्गतत्वापत्तेरित्यभिप्रेत्य तद्व्याचष्टे । **मोक्षस्येति** ।। 'जिज्ञासोत्थज्ञानजात्तत्प्रसादादेव मुच्यते' इत्यनव्याख्यानानुसारेणातो ब्रह्मजिज्ञासा इत्येतद्व्याचष्टे । **अत्यर्थप्रसादद्वारेति** । ब्रह्मपदश्रवणेऽपि कुतो न जीवाभेद इत्यत आह ।। **ब्रह्मशब्दश्चेति** । अस्तु पुराणादौ गुणपूर्णत्वं तथापि जीवाभेदः स्यादेव जीवस्यापि **गुणपूर्णत्वादित्यत** आह । **जीवस्येति** । ननु गुणपूर्णत्वं ब्रह्मशब्दार्थः कुतः देशाद्यपरिच्छेद एव ब्रह्मशब्दार्थोऽस्तु इत्याशयेनाशङ्क्य **देशादीति** । अस्तु देशाद्यपरिच्छेदमात्रं ब्रह्मशब्दार्थः तथापि जीवभेदः सिद्ध एवेत्यभ्युच्चयवादेनाह । **देशाद्यपरिच्छेदेन चेति** । ननु जीवस्यापि देशाद्यपरिच्छिन्नत्वात्कथं ततो भेदसिद्धिरित्यत आह । **जीवाणुत्वस्येति** । **वक्ष्यमाणत्वात्** । उत्क्रान्तिगत्यागतीनामित्यत्रेत्यर्थः । नन्वेवं सौत्रब्रह्मपदव्याख्यानेन सिद्धान्तकरणे किं ज्ञापकमित्याशङ्क्य भाष्यकारीयगुणपूर्णत्ववाचिनारायणपदप्रयोग एव इत्याह । **ब्रह्मपदेति** । अन्यथा यतो ब्रह्मप्रसादमित्येवावक्ष्यत् । ननु अतो ब्रह्मजिज्ञासेत्यत्र ब्रह्मशब्दप्रयोगः किमर्थः नारायणशब्दप्रयोग एव कुतो न कृत इति न वाच्यम् । व्याख्यानव्याख्येयभावज्ञापनार्थं तथोक्तमिति भावः । **न कर्तव्येत्यादेरिति** । न कर्तव्येत्यादेः अध्याहारस्याधिकारकथनेन विरोध इत्यर्थः ।

## वाक्यार्थविवरणम्

ब्रह्मजिज्ञासायामधिकार इत्यन्वयः ।। असङ्गतिशङ्कापरिहारायाह ।। **यदानन्तर्यमिति** ।। इति

(वाक्यार्थविवरणम्)

जातिकृत इति भाष्ये मनुष्योत्तमत्त्वऋषित्वगन्धर्वत्वदेवत्वाख्यधर्मकृत इत्यर्थः । **अस्य चेति** । अस्य चेत्यस्यावृत्तिः । चशब्देन लक्ष्यतावच्छेदकसङ्ग्रहः । व्याप्तेः प्रायिकत्वादिति पदाभ्यामतिव्याप्तिरित्याचष्टे ।। तथाहि ।। सास्नादिरूपलक्षणस्य हि गोत्वरूपलक्ष्यतावच्छेदकाक्रान्त एव हि वृत्तिर्दृष्टा । तदनाक्रान्तेऽपि विद्यमानं पशुत्वं गोः न लक्षणम् । एवमस्य च मोक्षयोग्यत्वरूपाधिकारिसामान्यलक्षणस्य सच्छूद्रादौ व्याप्तेरभिव्याप्य विद्यमानत्वादस्य च लक्ष्यतावच्छेदकीभूतस्य च ब्रह्मविद्याधिकारस्य प्रायिकत्वात् । ब्रह्मविद्याधिकाररूपलक्ष्यतावच्छेदकानाक्रान्तेऽपि सच्छूद्रादौ मोक्षयोग्यत्वरूपसामान्यलक्षण-सद्भावादतिव्याप्तिरित्यर्थः । चशब्दसूचितमिदं व्याख्यानमिति भावः । आब्रह्मस्तम्बपर्यन्तमित्यत्र ब्रह्मशब्देन चतुर्मुखस्य स्तम्बशब्देन् तृणाभिमानिजीवविवक्षायामाह ।। **तेषामिति** । ब्रह्मशब्देन सत्यान्तलोकस्य, स्तम्बशब्देन तृणरूपजडविवक्षायामाह ।। **तत्पदादीनामिति** ।। भाष्ये यस्य देवे परमात्मनि परा सर्वोत्कृष्टा भक्तिः । देवे देवतासमूहे यथा योग्यतानुसारेणैव भक्तिः । गुरोस्तथा योग्यतानुसाणैव भक्तिः । तस्यैते कथिता ह्यर्था इति योजना ।। न च जिज्ञासया विना ज्ञानमित्यपि प्रनाडी अभिप्रेतेत्याशयेनाह ।। **अपरोक्षज्ञानस्य चेति** ।। **गुणाध्यास इति** ।। तथा च न विरुद्ध-धर्माधिकरणत्वमित्यर्थः । **अब्रह्मत्वेति** । गुणपूर्णत्वस्यैव ब्रह्मत्वादित्यर्थः । **देशादिति** । 'बृह् वृद्धौ' वृद्धिश्च देशतः कालतश्चाभिमतेति ब्रह्मत्वं युक्तमित्यर्थः ।। **उक्तश्रुतीति** ।। अथ कस्मादिति श्रुतीत्यर्थः । देशकालापरिच्छेदस्य ब्रह्मत्वेऽपि तेन जीवभेद एव सिद्ध्यतीत्याह ।। **देशादीति** ।। ननु जीवस्यापि व्याप्तत्वान्नित्यत्वाच्च कथं भेदसिद्धिरित्यत आह ।। **जीवेति** ।। उत्क्रान्तिगत्यागतीनाम् इत्यादाविति शेषः । उपलक्षणमेतत् । ज्ञोऽत एवेति जीवोत्पत्तेरपि वक्ष्यमाणत्वादित्यपि द्रष्टव्यम् । भाष्ये **एकदेशे परोक्ते त्विति** । ब्राह्मणान् बन्धून् व्यपदिशति न स्वयं ब्राह्मणो यः स ब्रह्मबन्धुः तथा च स्त्रीशूद्रब्रह्मबन्धूनां तन्त्रज्ञानेऽधिकारितास्ति, तत्रापि न समग्रतत्वज्ञानम् इत्युक्तमेकदेश इति । तत्रापि न स्वातन्त्र्येणाधिकार इत्युक्तं परोक्ते त्विति । परं प्रत्युक्त इत्यर्थः । तत्राप्यधिकारविशेषोऽ-स्तीत्याह ।। **न त्विति** ।। ग्रन्थशब्देन तन्नियमाः पुस्तकधारणशान्तिपाठादय उपलक्ष्यन्ते । ग्रन्थनियम-पुरस्सरं एकदेशे अधिकारो नैवेत्यर्थः । नियमपूर्वकं परं प्रत्युक्तैकदेशश्रवणं न कार्यमिति यावत् ।

## वाक्यार्थमञ्जरी

ब्रह्मजिज्ञासायामधिकार इति सम्बन्धः । कः किंलक्षणकः । मन्दमध्यमोत्यादिनाधिकारिनिरूपणा त्कथमधिकारश्चोक्त इत्युक्तमत आह ।। **अधिकारीति** ।। भाष्ये जातिकृतः मनुष्योत्तमत्वादिधर्मकृतः ।

(वाक्यार्थमञ्जरी)

नन्वत्र त्रिविधा इत्युक्त्या कतिविधा इति प्रश्नपरिहारेऽपि लक्षणानुक्तेस्तत्प्रश्नो न परिहृत इत्यत आह ।। **अनेनेति** ।। मोक्षयोग्येतरावृत्तिमनुष्योत्तमत्वादिविशेषधर्मकथनेनेत्यर्थः ।। **अस्य चेति** ।। सच्छूद्रादौ चेत्यन्वयः । व्याप्तिर्व्यापनम् । यस्य व्यापनं लक्ष्यमात्रेऽस्ति तद्धि लक्षणम् । यो धर्मो लक्ष्ये व्याप्त्या वर्तते न वर्तते चान्यत्र स धर्मो लक्षणमित्युक्तेः । अस्य मोक्षयोग्यत्वस्य व्यापनं लक्ष्य इव जिज्ञासानधिकारित्वेनालक्ष्ये सच्छूद्रादौ चास्ति । अतो नेदं लक्षणम् । ननु सच्छूद्रादेरपि विदुरधर्मव्याधजरितयर्दिवैदिकब्रह्मविद्याधिकारदृष्ट्या लक्ष्यत्वात्तद्व्यापनमिष्टमेवेत्यत उक्तम् । **प्रायिकत्वादिति** ।। विदुरादिव्यतिरिक्तेष्वप्यनुत्पन्नज्ञानेषु बाहुल्येन वर्तमानत्वादित्यर्थः । ननु तेषामपि देहान्तरे वैदिकब्रह्मविद्याधिकारो वर्तत एवेति लक्ष्यत्वात्तद्व्यापनमपीष्टमित्यत उक्तम् ।। **अरुच्येति** ।। तेषां देहान्तरे विद्यमानोऽधिकारो नेदानीं प्रवृत्त्युपयुक्तः । प्रवृत्त्युपयुक्त एवाधिकारोऽत्र विचार्यत इत्युच्यत इत्यर्थः । तर्हि अतिव्याप्तस्य कथं सामान्यलक्षणत्वेन स्वीकारः । तथात्वे शृङ्गित्वस्यापि तथात्वापत्तेरित्यत उक्तम् । **प्रायिकत्वादिति** ।। लक्ष्यतावच्छेदकसामानाधिकरण्यस्य बाहुलिकत्वादित्यर्थः । अलक्ष्यतावच्छेदकसामानाधिकरण्यापेक्षया वैदिकब्रह्मविद्याधिकारित्वरूपलक्ष्यतावच्छेदकसामानाधिकरण्यस्य बाहुलिकत्वेन दोषस्याल्पतयाऽस्य सामान्यलक्षणत्वेन स्वीकारः । शृङ्गित्वे तु नैवमिति भावः ।।

**अध्ययनलब्धेति** ।। अवैष्णवस्य वेदेऽपि ह्यधिकारो न विद्यत इत्युक्तेरिति भावः । अत्राध्ययनस्यान्याय्यत्वम् अभक्तैरनधिकारिभिर्भक्तैरधिकारिभिरपि पुस्तकपाठादिनाऽयोग्योपदेशेन वा कृतत्वं द्रष्टव्यम् । विशेषलक्षणस्य सामान्यलक्षणपूर्वकत्वादाह ।। **तथा चेति** ।। अत्र मोक्षायोग्यब्राह्मणसच्छूद्रादिव्यावृत्त्यर्थं क्रमेण विशेषणद्वयम् । ननु "भक्तियुक्तः परे विष्णौ तथाध्ययनवानपि । अधमोऽयमिति ज्ञेय एतत्पूर्वशमादिमान् । मध्यः स्याद् ब्रह्मणो विष्णोर्वशे ब्रह्मादिपूर्वकः । विज्ञाय भक्तिसम्पन्नो विष्णवर्थं मोक्षमर्थयन् । न मोक्षार्थं च विष्णुः स्यादिति ज्ञानी स उत्तमः" इति विशेषप्रमाणेन मध्यमादावध्ययनादेरप्युक्तेः कथं शमादिसंयुक्तत्वमात्रं तल्लक्षणम् । किं च तावन्मात्रस्य मध्यमादिलक्षणत्वे उक्तस्य सामान्यलक्षणत्वानुपपत्तिरधममात्रवृत्तेरित्यत आह ।। **शमादिसंयुक्त इत्यादाविति** ।। शमादिसंयुक्त इत्यत्र भक्तिपूर्वकाध्ययनसङ्ग्रहः । जातवैराग्यो विष्णुपादैकसंश्रय इत्यत्र भक्तिपूर्वकाध्ययनशमादिसङ्ग्रह इत्यर्थः । **विशेषप्रमाणमुपलक्षणमिति** भावेनाह ।। **पूर्वत्र चेति** ।। भक्तिमानित्यादौ शमादिसंयुक्तत्वविष्णुपादैकसंश्रयत्वादेरनुकर्षः । शमादिसंयुक्त इत्यत्र विष्णुपादैकसंश्रत्वादेरनुकर्ष इत्यर्थः । एवं सर्वस्य सर्वत्र सम्बन्धसाङ्कर्यम् । परस्परमव्यावृत्तिः अतिव्याप्तिरिति यावत् ।। **उत्तरेति** । पूर्वस्मिन्निति शेषः । उत्तरस्मिन्मध्यमे उत्तमे चोक्तानामध्ययनवत्त्वादिगुणसमुदायानां त्रयाणां पूर्वस्मिन्नधमे मध्यमे

(वाक्यार्थमञ्जरी)

वा अप्राचुर्येणेत्यर्थः । ततश्च प्रचुरतमाध्ययनादिगुणवत्त्वमुत्तमत्वं प्रचुरतराध्ययनादिमत्त्वं मध्यमत्वं प्रचुराध्ययनादिमत्त्वमधमत्वमिति न साङ्कर्यमिति भावः । अथवा उत्तरं चोक्तं च तयोरप्राचुर्येणेत्यर्थः । सङ्गृहीतानामनुत्कृष्टानां चाप्राचुर्यं कण्ठतोऽभिहितानां च प्राचुर्यमिति यावत् । तथा चाधमनिष्ठगुण-समुदायत्रयमध्ये शमादिविष्णुपादैकसंश्रयत्वयोरप्राचुर्यमध्ययनादेः प्राचुर्यं मध्यमनिष्ठगुणसमुदायत्रयमध्ये अध्ययनादिविष्णुपादैकसंश्रयत्वयोरप्राचुर्यं शमादेश्च प्राचुर्यम् । उत्तमनिष्ठतयोक्तगुणसमुदायत्रयमध्ये अध्ययनादिशमाद्योरप्राचुर्यं विष्णुपादैकसंश्रयत्वादेः प्राचुर्यमिति न साङ्कर्यमिति भावः । भाष्ये **सन्न्यस्तेति** ।। विष्ण्वर्पितेत्यर्थः । ब्रह्मादिशब्देन चेतनविवक्षायामाह ।। **असर्वोत्तमत्वमिति** ।। तल्लोकादिजडविवक्षायामाह ।। **तत्पदादीनामिति** ।। अत्र भागवततन्त्रे । तृतीये वक्ष्यत इति ।। तृतीयाध्याये चतुर्थपादे द्वितीयाधिकरणे किं सर्वेषां ज्ञानाधिकारः उत केषाञ्चिदेवेति सन्देहे फलार्थित्व-साम्यात्सर्वेषामस्तीति पूर्वपक्षे यथा नवकोटिदेवानां देवत्वसाम्येऽपि तन्मध्ये शतस्यैव सोमपानाधिकारः तथा पुरुषार्थित्वसाम्येऽपि न सर्वेषां ज्ञानाधिकारः । किं त्वध्ययनमात्रवतः । यथाशक्त्यखिलवेदाध्ययनवत एवेति सिद्धान्तितम् । अनेनाध्ययनस्य ब्रह्मविद्याधिकारत्वं गम्यते । तत्रैव तृतीयाधिकरणे किं सर्वेषामेक-प्रकारेण ज्ञानाधिकारः उत तारतम्येनेति सन्देहे तारतम्यकल्पनस्य व्यर्थत्वादविशेषेणैव सर्वेषामधिकार इति प्राप्ते नाविशेषात् न अविशेषेण ज्ञानाधिकारः तथा सत्यात्मज्ञानेऽपि साम्यापत्तेरिति सिद्धान्तितम् । अनेन ब्रह्मविद्याधिकारत्रैविध्यं गम्यत इति भावः ।। द्वन्द्वसहिष्णुः सुखदुःखाभ्यामुच्चत्वनीचत्वहीनः । **स्वस्थितमिति** ।। आत्मनीत्यनन्तरं स्थितमिति शेष इति भावः । पश्येदिति तेषामपरोक्षज्ञान-साधनत्वमुच्यते न श्रवणादिरूपजिज्ञासार्थत्वमित्यत उक्तम् ।। **विद्यादिति** ।। पश्यार्थैश्चानालोचन इत्यत्र पश्यार्थैरित्यत्र ज्ञानार्थैरिति व्याख्यानेन ज्ञानमात्रेऽपि प्रयोगादिति भावः । तादर्थ्यं ज्ञानार्थत्वम् ।। **उपनीत इति** ।। उपनयनवानध्ययनं सम्पादयेदित्यत्र यथोपनयनस्याध्ययनार्थत्वं तथेत्यर्थः । **अन्तःप्रकाशा इति** ।। शरीरान्तःस्थितात्मज्ञानवन्त इत्यर्थः । तेषां मध्यमत्वं च मध्यमा ऋषिगन्धर्वा इति प्रागेवोक्तमिति भावः । निर्विण्णः विरक्तः । अकृतशब्दार्थो नित्यपुमर्थ इति । कृतेनेत्यस्य कर्मादिनेति । तदित्यस्य तस्मादिति ।। **देवादीनामिति** ।। सामान्यैर्ये त्वविज्ञेया विशेषा मम गोचरा इति पूर्वार्धः । तेषामुत्तमत्वं देवास्तत्रोत्तमा मता इति प्रागेवोक्तमिति भावः । वृणुते स्वीकरोति । यथा भक्त्या हरिस्तुष्ट इति प्रमाणानुसारेण तेन लभ्य इत्यस्याभिप्रायमाह ।। **तस्य प्रसन्न इति** ।। **प्रकाशयति** ।। श्रवणादिकं विषयीकरोति । भक्तिवाचकपदाभावादाह ।। **अत्रेति** ।। अभक्तस्य स्वीकाराभावादिति भावः । हरिभक्तिमात्रस्य प्रयोजकत्वे देवतागुरुद्वेषिणस्तत्र साम्येन भक्तस्य वा ब्रह्मविद्याधिकारप्रसङ्गनिरासाया-

(वाक्यार्थमञ्जरी)

दाहृतश्रुत्यर्थं व्यञ्जयन्नेव तामवतारयति ।। **सा चेति** । अनेन यस्य देवे हरौ परा सर्वोत्कृष्टा देवे देवतासमूहे यथा योग्यतानुसारेण गुरौ च गुरुसमुदाये तथा योग्यतानुसारेणैव भक्तिर्वर्तते तस्य महात्मनः पूर्वकथिता एते अर्थाः प्रकाशन्त इति श्रुतिर्योजिता भवति । भाष्ये व्योमसंहितायां चेत्यस्याधिकारश्चोक्त इति पूर्वेण सम्बन्धः ।। **वर्णबाह्या इति** ।। तेन सन्म्लेच्छादीनां सङ्ग्रह इति भावः ।। **अधिकारि-कथनमिति** ।। तेनायोग्यानामपि नामज्ञानेन मोक्ष इति निरस्तमिति भावः । भाष्ये ब्राह्मणान् बन्धून् व्यपदिशति स्वयं तु न ब्राह्मणो यः स ब्रह्मबन्धुः । तन्त्रेऽपि न श्रुत्यर्थविचारभागे अधिकार इत्युक्तम् ।। **एकदेश इति** ।। अत्रापि न स्वातन्त्र्येणेत्युक्तम् ।। **परोक्त इति** ।। परं प्रत्युक्त इत्यर्थः । तत्रापि विशेषोऽस्तीत्युक्तम् । **न तु ग्रन्थपुरःसर इति** ।। अस्य वाक्यस्यायमर्थ इति ग्रन्थार्थपूर्वक इत्यर्थः । वेदोक्तेऽधिकारेति सम्बन्धः । पराधम पराणुद शर्चीवाक्यमिदम् ।। **उक्तस्यापवादमाहेति** ।। स्त्रीणां वेदाधिकारो नास्तीति सामान्येनोक्तस्य सङ्कोचरूपबाधकमाहेत्यर्थः । भाष्ये यमी यमभार्या । ''देव्यो मुनिस्त्रियश्चैव नरादिकुलजा अपि । उत्तमा इति विज्ञेया'' इति भारततात्पर्यनिर्णयानुसारेणाह ।। **मुनिस्त्रियो नरादिकुलजाश्चेति** । मनुष्यादिकुलोत्पन्नशच्याद्या इत्यर्थः । सङ्क्षेपविस्तराभ्याम् । अधिकारानन्तर्यार्थ इति सङ्क्षेपः । अधिकारश्चोक्त इत्यादिना विस्तरः । मोक्षस्य परीत्यैकविंशतिदुःख-ध्वंसादिरूपत्वे अनपेक्षितत्वमेव स्यादित्यतो मोक्षस्वरूपं निरूपयन्नाह ।। **सुखमेवेति** ।। मनाक् ईषत् । भाष्ये अत्यर्थप्रसादमित्यनुवादात् पूर्वत्रापि तथा ज्ञेयमित्याह ।। **नारायणात्यर्थेति** । अत्यन्तेत्यर्थः । **अत्यर्थप्रसादस्य चेति** । अनेनात्यर्थप्रसादश्चेति सम्बन्धः सूचितः ।

अत्यर्थप्रसादस्य ज्ञानसाध्यत्वेन तदेव सम्पाद्यं किं जिज्ञासयेत्यतोऽपेक्षितं पूरयति ।। **अपरोक्षज्ञानस्येति** ।। अत एवाग्रे अपरोक्षज्ञानस्य जिज्ञासासाध्यत्वे आत्मा वा अर इति श्रुत्युदाहरणमिति भावः । भाष्यस्यातःशब्दार्थं सूचयन्नाह ।। **अत्यर्थेति** ।। जिज्ञासा श्रवणमननध्यान-रूपोपासना । ननु विषयाद्यभावेन जिज्ञासाया अकर्तव्यत्वात् कथं कर्तव्यत्वोक्तिरित्यतः सूत्रादिसूचितयुक्त्या पूर्वपक्षं प्रतिक्षिपति ।। **यदुक्तमिति** ।। प्रयोगेण सूत्रे कुत्रेत्यत आह ।। **तद्विजिज्ञासस्वेति** ।। आद्यतच्छब्दस्य यतो वा इमानीत्यादि यच्छब्देनान्वयः । किंनामकं तदित्यत उक्तम् ।। **तद्ब्रह्मेति** ।। ततः किमित्यत आह ।। **ब्रह्मशब्दश्चेति** ।। **अथेति** ।। हरिः कस्मान्निमित्तात् ब्रह्मशब्देनोच्यत इति प्रश्नः । **हि** यस्मादस्मिन्हरौ गुणाः बृहन्तः पूर्णाः तस्मादिति परिहारः । अप्रामाणिकत्व-शङ्कानिरासायानुभवादिति युक्तम् । तथा च विरुद्धधर्माधिकरणत्वान्नाभेद इति भावः ।। अध्यासः आरोपः । उपलक्षणमेतत् । जीवनिष्ठाल्पगुणानामपि मिथ्यात्वं बोध्यम् । तथा च विरुद्धधर्मत्यागेन

(वाक्यार्थमञ्जरी)

चिन्मात्रैक्यं युक्तमित्याशयः ।। **परमार्थत इति** । ब्रह्मशब्दार्थगुणानां मिथ्यात्वे ब्रह्मत्वस्य पारमार्थिकत्वायोगादिति भावः । ननु बृह वृद्धावित्यस्मान्मनिन्प्रत्यये निष्पन्नो ब्रह्मशब्दः पूर्णत्वापरपर्यायापरिच्छिन्नत्वमात्रं प्रतिपादयति । अपरिच्छिन्नत्वरूपब्रह्मत्वं च देशाद्यपरिछिन्नत्वेनापि सम्भवति । अतो न विरुद्धधर्माधिकरणत्वेन भेद इति शङ्कते ।। **देशाद्यपरिच्छिन्नतेति** ।। **उक्तेति** । गुणपूर्णत्वं ब्रह्मत्वमित्यभिधायकार्थेत्यादिकेत्यर्थः । अभ्युपगमवादेनाह ।। **देशादीति** ।। **वक्ष्यमाणत्वादिति** ।। उत्क्रान्तिगत्यागतीनामित्यत्र सोऽस्माच्छरीरादुत्क्रम्येत्याद्युत्क्रान्तिगमनादिलिङ्गैर्जीवाणुत्वस्य वक्ष्यमाणत्वादित्यर्थः । **अतः** ब्रह्मणो गुणपूर्णत्वात् । आदिशब्देन सम्बन्धः स च विषयप्रयोजनयोः कार्यकारणभावादिरूपः । ननु ब्रह्मजिज्ञासायाः ज्ञानप्रसादद्वारा मोक्षहेतुत्वे यतो नारायणप्रसादमृते न मोक्ष इति कुतः प्रागुक्तमित्यत आह ।। **ब्रह्मपदेति** ।। उभयोरप्युक्तरीत्या गुणपूर्त्यर्थत्वादिति भावः । अत्र सूत्रे । तथा च कर्तव्येति पदमुत्सूत्रितमिति भावः ।। **किन्न स्यादिति** ।। एवमपि वाक्यपर्यवसानादिति भावः । निरङ्कुशत्वात् । एवमेव नियमेति निर्वन्धरहित्वात् । **यत्रेति** ।। यत्रावान्तरवाक्ये यत्पदं विनाऽर्थान्तरे घटनाभावस्तत्र तदेव पदमध्याहार्यम् । यत्रावान्तरवाक्ये यत्पदं विनापि पदान्तरेणार्थान्तरघटना तत्र तदेवाध्याहार्यमिति नियमो नास्ति तथा यत्र महावाक्ये यदवान्तरवाक्यं विनाऽर्थान्तरघटनाभावस्तत्र तदेवाध्याहार्यं यत्र महावाक्ये यदवान्तरवाक्यं विनाप्यर्थान्तरघटना तत्र तदेवाध्याहार्यमिति नियमो नास्तीति सतां नीतिरिति निर्गलितोऽर्थः । न कर्तव्येत्यध्याहारेणार्थान्तरघटना सम्भवतीत्यत आह ।। **न कर्तव्येत्यादेरिति** ।। अकरणस्य स्वतःसिद्धत्वेन तदर्थमधिकारादिकथनमनर्थकमिति भावः ।

## विवृतिः

ननु, अधिकारे पृष्टेऽधिकार एव वक्तव्यः । अधिकारिकथनं क्वोपयुक्तमित्यत आह ।। **अधिकारीति** ।। अधिकारविशिष्टाधिकारिनिरूपणेऽधिकारनिरूपणमपि (कृतं भवतीति) सिद्धमिति स न पृथगुक्त इति भावः ।। **सच्छूद्रादौ व्याप्तेरिति** ।। अतिव्याप्तेरित्यर्थः ।। यद्यपि सच्छूद्रेऽपि, जन्मान्तरे वैदिकब्रह्मविद्याधिकारसम्भवेन तेषामपि लक्ष्यत्वान्नातिव्याप्तिः ।। तथापि वेदविद्याधिकारशून्यतापादकशूद्रदेहावच्छिन्नेऽपि तस्मिन् मोक्षयोग्यत्वस्य सत्वेनातिव्याप्तिरिति भावः ।। **प्रायिकत्वादिति** ।। देवानारभ्य त्रैवर्णिकमनुष्यपर्यन्तेषु बहुमोक्षयोग्येषु वेदविद्याधिकारसत्वेनास्य मोक्षयोग्यत्वस्य प्रायिकत्वादित्यर्थः ।। **अरुच्येति** ।। सच्छूद्रस्य देहान्तरे वैदिकब्रह्मविद्याधिकारेऽपि न तद्देहेऽधिकारः । देहान्तरेऽधिकारश्च (नैतद्देह) नेदानीं प्रवृत्त्युपयोगीत्यरुच्येत्यर्थः ।। **अध्ययनलब्धापीति** ।। अवैष्णवस्य वेदेऽपि ह्यधिकारो

(विवृतिः)

न विद्यते ।। इत्यादेरित्यर्थः ।। **अन्याय्याध्ययननिवृत्यर्थमिति** ।। अभक्तैरनधिकारिभिर्वा, भक्तादिभिरपि असमये योग्यस्य, पुरुषो योवा पुस्तकपाठादिना कृतत्वमन्याय्यत्वमध्ययनस्य ।। **तथा चेति** ।। मुक्तियोग्यत्वे सति भक्तिपूर्वकाध्ययनवत्त्वमधिकारिलक्षणमित्यर्थः ।। मुक्त्ययोग्यब्राह्मणादौ तद्योग्यसच्छूद्रादौ चातिव्याप्तिवारणाय क्रमेण पदद्वयम् ।। ननु हरिभक्तिपूर्वकाध्ययनवत्त्वं कथं सामान्यलक्षणं, मध्यमादिष्वभावात् ।। तत्सत्वेऽधमाधिकारिलक्षणस्यातिव्याप्तिरित्यत आह ।। **शमादिसंयुक्त इत्यादाविति** ।। तथा च श्रुतावधमाधिकारिलक्षणस्य मध्यमोत्तमयोरुक्तत्वान्नातिव्याप्तिरिति भावः ।। ननु, सर्वं सर्वत्र चेत्परस्पराव्यावर्तकत्वान्न विशेषलक्षणानीत्याशङ्क्य निरस्यति ।। **न चैवमिति** ।। **उत्तरोक्तेति** ।। **पूर्वस्मिन्निति** शेषः ।। तथा च पूर्वस्मिन् मध्यमे उत्तमे वोक्तानामध्ययनवत्वादीनां त्रयाणां गुणानां पूर्वस्मिन्नधमे मध्यमे वाऽप्राचुर्यादित्यर्थः ।। **तथा चायमर्थः** ।। समानाधिकरणानां वेदाध्ययनशमादिविष्णुपादैकसंश्रयत्वानां मध्ये यस्य शमादिविष्णुपादैकसंश्रयत्वादिकेऽप्रचुरे अध्ययनं तु प्रचुरं सोऽधमः यस्य विष्णुपादैकसंश्रयत्वादिकमेवाप्रचुरम् अध्ययनशमदमादिके तु प्रचुरे स मध्यमः । यस्य विष्णुपादैकसंश्रयत्वादिकं प्रचुरम् अध्ययनशमदमादिके त्वप्रचुरे स उत्तम इति ।। भावबोधे तु प्रचुरतमतयाऽध्ययनादिगुणवत्वमुत्तमत्वम् । प्रचुरतमत्वरहितप्रचुरतराध्यनादिमत्वं मध्यमत्वम् ।। प्रचुरतमत्वप्रचुरतरत्वरहिताध्ययनादिमत्वमधमत्वमित्युत्तमादीनां त्रयाणां लक्षणान्यनेनोक्तानि । प्रचुरत्वप्रचुरतरत्वप्रचुरतमत्वादीनां मधुरत्वादिवत्स्पष्टत्वादिवच्चजातिरूपत्वान्न कश्चित् क्षुद्रोपद्रवः । यद्वा सङ्गृहीता अनुकृष्टाश्च गुणा उत्तरोक्ताः तेषां तत्र तत्र भक्तिमानित्यादि यथास्थितमूलोक्तगुणापेक्षयाऽप्राचुर्येणेति योजना । यथास्थितमूलोक्तगुणानां प्राचुर्यमर्थतो लभ्यम् । ततश्च यत्राध्ययनवत्वं प्रचुरं गुणद्वयमप्रचुरं सोऽधमः । यत्र शमदमादिसम्पत्तिः प्रचुरा अध्ययनवत्वं वैराग्यादि च अप्रचुरं स मध्यमः । यस्य विष्णुपादैक संश्रयत्वं प्रचुरं अध्ययनवत्वं शमादिसम्पत्तिश्चाप्राचुरा स उत्तम इत्यर्थः ।। अधमादिष्वध्ययनवत्वादीनां समानाधिकरणगुणद्वयापेक्षया प्राचुर्यम् । तत्र तत्र तस्य तस्य विशिष्यवचनम् । आत्मनीत्युक्त्या मध्यमाधिकारित्वं सूचितमिति विज्ञानपदेनोत्तमाधिकारित्वं सूचितमिति टीकावचनं च ज्ञापकमिति ध्येयमित्युक्तम् । 'नाविशेषात्' इति सूत्रेण त्रैविध्यं कुतो ब्रह्मविद्यायामित्याशङ्कापरिहार इति बोद्धव्यम् ।। **विद्यादिति** ।। पश्यार्थश्चानालोचन इति ज्ञानमात्रेऽपि तत्प्रयोगात् ।। अन्यथा परोक्षज्ञान एव शमादीनां हेतुत्वं लभ्येत न ब्रह्मविद्यायामिति भावः ।।

**तेषां तादर्थ्यमिति** ।। शमादीनां ब्रह्मविद्यार्थत्वमिति भावः ।। **मध्यमाधिकारित्वं च सूचितमिति** ।। तथा चैतत्समाख्याबलात् शमादिसंयुक्तो मध्यम इति वाक्यस्य ब्रह्मविद्यायामेव मध्यमाधिकारित्व-

(विवृतिः)

प्रतिपादकत्वं सिध्यतीति भावः । उत्तमाधिकारित्वं सूचितमित्यस्याप्ययमेवाभिप्रायः ।। **प्रकाशयतीति** ।। श्रवणादिजन्यज्ञानविषयो भवतीत्यर्थः ।। कथमनेन विष्णुभक्तिर्ब्रह्मविद्यायामधिकार इत्युक्तमित्यत आह ।। **अत्रेति ।। सा च भक्तिरिति ।। यस्य,** **देवे** विष्णौ, परा सर्वाधिका यथा भक्तिः **तथा देवे** तदितरदेवेषु गुरावन्येषु स्वोत्तमेषु च यथा यथायोग्या भक्तिर्यस्य तस्यैते कथिताः विष्ण्वादिरूपा अर्थाः प्रकाशन्त इति वाक्यं योजितं भवति ।। **वर्णबाह्या इति** ।। तेन म्लेच्छादीनां सङ्ग्रह इति भावः । कथमनेनाध्ययनविधुराणां स्त्रीशूद्रादीनां मोक्षः समर्थित इत्यत आह ।। **अध्ययनाभावेनेति** ।। भाष्ये तन्त्रज्ञान इत्यस्यैव विशेषणम् एकदेश इत्यादि न तु ग्रन्थपुरस्सर इत्यस्य, ग्रन्थमारभ्य समाप्तिपर्यन्तं न श्रोतव्यमित्यर्थः । त्रैवर्णिकानां वेदोक्ते अधिकार इत्युक्ते अयोग्यानामप्यधिकारः प्रतीयते अत उक्तं सम्यग् भक्तिमतामिति ।। **सपत्नी इति** ।। तदधिकाराभावे तद्द्रष्टृत्वं कथं स्यादिति भावः ।। **नरादिकुलजाश्चेति** ।। शच्याद्या इत्यर्थः ।

**एवमथशब्दमिति** ।। आनन्तर्येऽधिकारस्येत्यनेन संक्षेपेण, मन्दमध्येत्यनेन विस्तरेण चेत्यर्थः ।। यदर्थं ब्रह्मजिज्ञासाविधिः स मोक्ष एव मा भूदनपेक्षितत्वादित्यत उक्तं **सुखमेव मे स्यादिति** ।। भाष्ये ज्ञाने तु वेदोक्तेऽप्यधिकारी सतां मत इति ब्रह्मतर्के ।। पठेद्वेदानर्थानधीयीताथ विचार्य ब्रह्म विन्देदिति कौषारवश्रुतिः ।। ॐ नाविशेषात् ॐ ।। न सामान्येनाधिकारो देवादीनामिति ज्ञानपादे तृतीयेऽधिकरणे वक्ष्यतीत्यर्थः ।। उपरि तृतीय इति ।। ॐ अध्ययनमात्रवतः ॐ ।। अवैष्णवस्य वेदेऽपि ह्यधिकारो न विद्यते ।। गुरुभक्तिविहीनस्य शमादिरहितस्य च ।। न च वर्णावरस्यापि तस्मादध्ययनान्वितः ।। ब्रह्मज्ञानपदमपरोक्षज्ञानपरम् । न च ब्रह्मजिज्ञासां विना ज्ञानमित्यध्याहारश्च कर्तव्यः ।। अन्यथा भाष्ये अतो ब्रह्मजिज्ञासेत्यस्यासङ्गतत्वापत्तेरित्यभिप्रेत्य तद्व्याचष्टे ।। **मोक्षस्येति** ।। ब्रह्मजिज्ञासेत्येतद्व्याचष्टे ।। **अत्यर्थप्रसादद्वारेति** ।। विषयाभावान्न जिज्ञासेति यदुक्तं तद्दूषयितुं सिद्धान्तमाह ।। **यदुक्तमिति** ।। कुत इत्यत आह ।। **जिज्ञास्य इति** ।। अस्तु ब्रह्मपदश्रवणं तथापि कुतो न जीवाभेद इत्यत आह ।। **ब्रह्मशब्दश्चेति** ।। अस्तु ब्रह्मणो गुणपूर्णत्वं तथापि जीवाभेदः स्यादेव । जीवस्यापि गुणपूर्णत्वादित्यत आह ।। **जीवस्येति** ।। ननु गुणपूर्णत्वं ब्रह्मशब्दार्थ इति कुतः, देशाद्यपरिच्छेद एव ब्रह्मशब्दार्थोऽस्त्वित्याशयेन शङ्कते ।। **देशादीति** ।। अस्तु देशाद्यपरिच्छेदमात्रं ब्रह्मशब्दार्थः तथापि जीवभेदः सिद्ध एवेत्यभ्युपगमवादेनाह ।। **देशाद्यपरिच्छेदेनेति** ।। ननु जीवस्यापि देशाद्यपरिच्छिन्नत्वेन कथं भेदसिद्धिरित्यत आह ।। **जीवाणुत्वस्येति** ।। वक्ष्यमाणत्वात् ''उत्क्रान्तिगत्यागतीनामित्यत्रेत्यर्थः । नन्वेवं सौत्रब्रह्मशब्दव्याख्यानेन सिद्धान्तकरणं किं ज्ञापकमित्याशङ्क्य

(विवृतिः)

भाष्यकारीयो गुणपूर्णवाची नारायणपदप्रयोग एवेत्याह ।। **ब्रह्मपदेति** ।। अन्यथा यतो ब्रह्मप्रसादमित्येवावक्ष्यत् । न च अथातो ब्रह्मजिज्ञासेत्यत्र ब्रह्मशब्दप्रयोगः किमर्थः । नारायणशब्दप्रयोग एव कुतो न कृत इति वाच्यम् । व्याख्यानव्याख्येयभावज्ञापनार्थं तथोक्तमिति भावः ।। न **कर्तव्येत्यादेरिति** ।। न कर्तव्येत्यध्याहारस्याधिकारकथनेन विरोधादित्यर्थः ।।

## सूत्रभाष्यम्

'तमेवं विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यते' (तै.आ.३-१२) ।। 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः' (भ.गी.७-१७) । 'यमेवैष वृणुते तेन लभ्यः' (क.उ.२-२३) । 'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य' (बृ.उ.६-५-६) इत्यादिश्रुतिस्मृतिभ्यः ।।

कर्मणा त्वधमः प्रोक्तः प्रसादः श्रवणादिभिः ।
मध्यमो ज्ञानसम्पत्त्या प्रसादस्तूत्तमो मतः ।।

प्रसादात्त्वधमाद्विष्णोः स्वर्गलोकः प्रकीर्तितः ।
मध्यमाज्जनलोकादिरुत्तमस्त्वेव मुक्तिदः ।।

श्रवणं मननं चैव ध्यानं भक्तिस्तथैव च ।
साधनं ज्ञानसम्पत्तौ प्रधानं नान्यदिष्यते ।।
न चैतानि विना कश्चिज्ज्ञानमाप कुतश्चन । इति नारदीये ।

## सत्तर्कदीपावली (५)

यतो नारायणप्रसादमृत इत्यादिनोक्तमर्थं श्रुतिस्मृतिभिः समर्थयते तमेवमित्यादिना । तं पुरुषोत्तममेवं विद्वान् तत्प्रीत्याऽमृतो भवति 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रिय' इति भगवद्वचनात् । न चात्र ज्ञानिनि भगवतः प्रीतिप्रतीतावपि तत्प्रीतिसाध्यत्वं मोक्षस्य न प्रतीयते इति वाच्यम् । 'यमेवैष वृणुते तेन लभ्य' इत्यत्र यमेष परमात्मा वृणुते तेनैव मोक्षदातृत्वेन लभ्यत इति मोक्षस्य विष्णुस्वीकारसाध्यत्वप्रतीतेः । न च तीर्थस्नानादिनैव ज्ञानसिद्धौ व्यर्था जिज्ञासेति वाच्यम् । 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इत्यादौ विष्णुज्ञानार्थं श्रवणादिविधानविरोधादेवेत्यर्थः । यज्ञादिकर्मणैव विष्णुप्रसाद इत्येनामाशङ्कां नारदीयवचनेन परिहरति ।। **कर्मणेति** ।।

## तत्त्वप्रदीपिका

**'प्रियो हि ज्ञानिन'** इति ज्ञानस्य प्रसादसाधनत्वे प्रमाणम् । 'तमेवं विद्वान्' इति प्रसादद्वारेण मोक्षसाधनत्वे । 'आत्मा वा अरे द्रष्टव्यश्श्रोतव्य' इति जिज्ञासाया ज्ञानसाधनत्व इति ।

## तत्त्वप्रकाशिका

नारायणप्रसादमृते न मोक्ष इत्येतत्कुत इति तत्राह ।। **तमिति** ।। अत्र ज्ञानान्मोक्षो नामानन्यथोपपत्या प्रसादादेवोक्तो भवति । ज्ञानेन भगवत्प्रसाद इत्येतत्कुत इति तत्राह ।। **प्रियो हीति** ।। न केवलमर्थान्मोक्षस्य प्रसादैकसाध्यत्वं किन्तु श्रुतं चेति तां श्रुतिं चाह ।। **यमिति** ।। यमात्मा प्रसन्नः सन्वृणुते तेनैव प्राप्य इत्यर्थः । जिज्ञासया ज्ञानमित्येतत्कुत इति तत्राह ।। **आत्मेति** ।। दर्शनार्थं श्रवणादिरूपा जिज्ञासा कार्येत्यर्थः । न च श्रवणादेरसन्वाच्यता 'जिज्ञासितं सुसम्पन्नम्' इति विचारेऽपि तत्प्रयोगादिच्छाया अविधेयत्वाद्भवतीत्यादिकथनस्य वैयर्थ्यात्सूत्रं च श्रुत्यनुसारीति । अस्तु मोक्षो भगवत्प्रसादसाध्यस्तदर्थं न ज्ञानमपेक्षितम् । **'तत्कर्म हरितोषं यत्'** । 'य इमं परमं गुह्यम्' इत्यादेः कर्मादिनापि भगवत्प्रसादसिद्धेः । यद्यपि मोक्षस्य कर्मादिसाध्यत्वं श्रुत्यादिसिद्धं तथापि 'तमेवं विद्वान्' 'यमेवैष वृणुते' इत्यादावन्यनिषेधाच्छङ्काभावः । अत्र पुनः प्रियो हीति वाक्येऽन्यनिषेधाभावाद्भवेदेवं शङ्केत्याशङ्कां प्रमाणेन परिहरति ।। **कर्मणेति** ।। सत्यं भवेदेव कर्मादिना भगवत्प्रसादस्तथापि तस्यानुत्तमत्त्वाज्ज्ञानसाध्यस्यैवोत्तमत्वात् । अनुत्तमेन स्वर्गादिमात्रसिद्धेरुत्तमेनैव मोक्षसिद्धेस्तत्साधनं ज्ञानमपेक्षितमिति भावः ।

ननु ज्ञानं च 'कर्मणा ज्ञानमातनोति' इत्यादेः कर्मादिनाऽपि सम्भवतीति न जिज्ञासया कृत्यम् । आत्मेति वाक्येऽन्यनिषेधाभावादित्याशङ्कां तच्छेषेण परिहरति ।। **श्रवणमिति** ।। का गतिस्तर्हि तद्वचनस्येत्यत आह ।। **प्रधानमिति** ।। अप्रधानसाधनं कर्मादीति भावः । विपरीतं किं न स्यादित्यत आह ।। **न चेति** ।। एतानि श्रवणादीनि । कुतश्चन कर्मादेः । ज्ञानस्य श्रवणाद्यन्वयव्यतिरेकित्वात्तदेव प्रधानसाधनं कर्मादिस्तदभावात्तत्पारम्पर्येण साधनमिति भावः ।

## गुर्वर्थदीपिका

''यमेवैष वृणुत'' इत्यत्रापि पूर्वोक्तप्रवचनादिर्भक्तिसाहित्ये सति भगवत्प्रसादहेतुत्वस्याप्यभिप्रेतत्वाद् ब्रह्मविद्याधिकारो लभ्यते । ''यस्य देवे'' इति श्रुतावपि देवे परा भक्तिरिति विशेषितत्वाद्गुरौ न तादृशी भक्तिः । यथा तथेति वचनं तु दार्ढ्यमात्रेण साम्याज्ज्ञेयम् । यदि च यथा तथेति शब्दबलाद्गुरावपि परा भक्तिरङ्गीक्रियते तदा देवे क्रियमाणभक्तौ परतायामवरभूतावध्यभावात्तदर्थक्यमेव स्यादतः

(गुर्वर्थदीपिका)

सुष्ठूक्तं दार्ढ्यमात्रेण साम्यादिति । "अधिकारानन्तर्यार्थ" इत्यत्र सङ्क्षेपेण कथनात् "अधिकारश्चोक्तो भागवततन्त्रे" इत्यत्र विस्तृत्य कथनात् सङ्क्षेपविस्तराभ्यामित्युक्तम् । "सुखमेव मे स्याद्दुःखं मनागपि मा भूत्" इत्यादिना मोक्षस्वरूपनिरूपणं, भगवत्प्रसादादिकं विना स्वेच्छया कर्मादिना मोक्षस्य प्राप्यत्वाभावसूचनार्थं तार्किकाभिमतमोक्षस्य सर्वानुभवविरुद्धस्य चेतनार्थं मोक्षो नापेक्षितः किं तत्साधनचर्चयेति शङ्कानिरासार्थं चेति । न तावत्परब्रह्म विषय इत्यादिना टीकाकारोक्तपूर्वपक्षप्रापिका युक्तिः जिज्ञास्ये ब्रह्मपदश्रवणादित्यादिना सिद्धान्तस्थापिका युक्तिश्च न्यायविवरणे भाष्यकृतैवोक्तेति ज्ञातव्यम् । एवमुत्तरत्र प्रत्यधिकरणमनुसन्धेयम् ।

अनन्ययोपपत्त्येति ज्ञानस्य त्रिक्षणावस्थायित्वेन "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्यत" इति श्रुतेः प्रारब्धकर्मभोगावसानकालीनतया कालान्तरभाविमोक्षसाधनत्वस्य प्रसादाख्यद्वारं विनाऽनुपपत्तेरित्यर्थः । "प्रियो ही"ति वाक्ये "स च मम प्रिय" इति ज्ञानिषु भगवत्प्रीतिविषयत्वस्य स्पष्टमुक्तत्वादिति भावः । वरणस्याङ्गीकाराख्यप्रसादवाचकत्वस्य लोके प्रसिद्धत्वाद्वरणपदेनैव प्रसादो लभ्यत इति भावेनोक्तं प्रसन्नः सन्वृणुत इति । अत्र प्रसन्नस्सन्निति, स्पष्टीकरणायोक्तम् । वृणुते अङ्गीकरोतीत्यनेनैव प्रसादो लभ्यत इति ज्ञेयम् । न च श्रवणादेरसन्वाच्यतेत्यत्रासन्वाच्यता इच्छावाचकसन्प्रत्ययान्तजिज्ञासापदावाच्यतेत्यर्थः । जिज्ञासितं सुसम्पन्नमित्यनेन "जिज्ञासितं सुसम्पन्नमपि ते महदद्भुतम् । कृतवान्भारतं यस्त्वं सर्वार्थपरिबृंहित"मिति नारदवाक्यं सङ्गृह्णाति । भारतपुराण-ब्रह्ममीमांसादिकर्तुः "तद्धि स्वयं वेद भवांस्तथाऽपि प्रादेशमात्रं भवतः प्रदर्शित"मिति नारदेनैव स्वतोऽप्यतिशयितसर्वज्ञतया स्तुतस्योक्तेऽस्मिन्श्लोके "यस्सर्वज्ञः त्वं सर्वार्थपरिबृंहितं भारतं कृतवा"निति सर्वज्ञतया स्तुतस्य च व्यासस्यास्मदादिवदन्यतो ज्ञातुमिच्छाया असम्भवात्सुसम्पन्नं सुखेन सम्पन्नं परिपूर्णं सर्वोत्तममद्भुतमाश्चर्यतमं सर्वश्रुत्यर्थभूतं परं ब्रह्म जिज्ञासितं स्वसहजमननशक्त्या सदा सम्यग्विचारितं खल्वित्यवार्थस्य वक्तव्यत्वाज्जिज्ञासापदं मीमांसापदवदस्मिन्श्लोके विचारस्यैव वाचकमिति भावेनोक्तम् । **विचारेऽपि तत्प्रयोगादिति** । सूत्रं च श्रुत्यनुसारीत्यनेन "आत्मा वा अरे द्रष्टव्य" इति श्रुतौ दर्शनार्थं श्रवणादिरूपविचारस्यैव कथितत्वात्तत्समानार्थकसूत्रेणापि ज्ञानार्थं श्रवणादिरूप-विचारस्यैव वक्तव्यत्वात्सौत्रं जिज्ञासापदं विचारपरमेवेति सूचितम् । कर्मादिनेत्यत्राऽऽदिपदेन गीतोक्त-प्रवचनादिरूपपरोक्षज्ञानं गृह्यते । यद्यपि "श्रोतव्य" इत्यादिश्रुतौ श्रवणादीनां ज्ञानसाधनत्वमेव साक्षात् श्रुतम् । भगवत्प्रसादस्य सर्वकारणतया श्रवणादिजन्यो हरेर्मध्यमप्रसादोऽपि ज्ञानं प्रत्येव कारणमित्यर्थाल्लभ्यते तथाऽपि कर्मासाध्याया ज्ञानानंदद्याश्च यावन्मोक्षं ज्ञानिनां जनलोकादिप्राप्तेः

(गुर्वर्थदीपिका)

किञ्चित्कारणं वाच्यम् । अकारणकार्योत्पत्तेरयोगात् । अतो भगवन्मध्यमप्रसादद्वारा ज्ञानसाधकश्रवणादेरेव गङ्गायात्राया नर्मदाप्राप्तिहेतुत्ववज्जनलोकादिप्रापकमध्यमप्रसादहेतुत्वमप्यन्यथानुपपत्त्यैव वाच्यमिति भावेनोक्तं मध्यमाज्जनलोकादिरिति । ज्ञानस्य श्रवणाद्यन्वयव्यतिरेकित्वादित्यत्र साक्षादन्वयव्यतिरेकित्वादित्यर्थः । यद्वा पारम्पर्येणेति वदताऽन्तःकरणशुद्धिद्वारा ज्ञानहेतुत्वमिति सूचितम् । एवं चाशुद्धबुद्धिषु कर्मादेरप्यन्वयव्यतिरेकसम्भवेऽपि शुद्धबुद्धिषु तदनपेक्षणाद्वैकल्पिकमेव कर्मादिकारणत्वमिति भावेनोक्तम् । कर्मादेस्तदलभ्यत्वादिति ।

## भावबोधः

ऋते हरिप्रसादं न मोक्षोपायो हि दृश्यते ।
प्रसादसाधकं ज्ञानं न ज्ञानं मोक्षसाधकम् ।।

इति विशेषप्रमाणानुसारेण 'तमेवं विद्वान्' इति श्रुतिमवतार्य व्याचष्टे । **नारायणप्रसादमित्यादिना** । अन्यथा भाष्ये ज्ञानान्मोक्षस्याप्रतिपादितत्वेनैतत् श्रुत्युदाहरणमसङ्गतं स्यादिति भावः । **अन्यथानुपपत्त्येति** । 'यमेवैष वृणुते तेन लभ्यः' । 'यस्य प्रसादात्' इत्यादौ प्रसादस्यैव मोक्षसाधनत्वोक्तेः 'प्रियो हि' इत्यादिना ज्ञानस्य प्रसादहेतुत्वोक्तेश्च । अन्यथा प्रसादं विना ज्ञानस्य मोक्षसाधनत्वानुपपत्त्येत्यर्थः । यद्वा, अन्यथा 'तमेवम्' इत्यस्य प्रसादद्वारा ज्ञानस्य मुक्तिहेतुत्वानङ्गीकारे । 'यस्य प्रसादात्' 'तमेवं विद्वान्' इति श्रुतिद्वये, 'नापरेण' 'नान्यः पन्था:' इति निषेधस्य उपपत्त्यभावेनेत्यर्थः ।

यस्माज्ज्ञानिप्रियो विष्णुर्विष्णोर्ज्ञानी प्रियो यतः ।
तस्माज्ज्ञानाद्भवत्येव प्रसादो मोक्षसाधकः ।।

इति प्रमाणानुसारेण प्रियो हीत्येतदवतारयति **ज्ञानेनेति** ।

भक्तस्यैव प्रसादोऽपि नेतरेषां क्वचिद्भवेत् ।।

इति विशेषप्रमाणानुसारेणाऽऽह । **तेनैवेति** । लभ्यत्वं ज्ञेयत्वमपि भवतीति प्रागप्युदाहरणं युक्तमिति भावः ।

''कर्मणाऽपि प्रसादो हि श्रूयते दृश्यते क्वचित् ।
तस्माज्ज्ञानैकसाध्यत्वं प्रसादस्य कथं भवेत् ।।

(भावबोधः)

इति वचनानुसारेण कर्मादिः प्रसादसाधनत्वप्रतिपादकवाक्योदाहरणपूर्वकं कर्मणेत्याद्युत्तरग्रन्थमवतारयति । **अस्तु मोक्ष इति । य इममिति** । अत्र 'मद्भक्तेष्वभिधास्यति' इत्युक्तश्रवणादिरूपविचारस्य,

'न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः'

इत्युक्तिबलात् प्रसादसाधनत्वमवगम्यत इति भावः । **ज्ञानसाध्यस्यैवोत्तमत्वादिति** । अत एव 'न च ज्ञानं विनाऽत्यर्थप्रसाद' इति प्रागन्यथासिद्धिशङ्कानिरासार्थमत्यर्थेत्युक्तमिति भावः ।

## भावदीपः

तत्र कया किं सिद्धमित्यप्रतीतेराह ।। **नारायणेति** ।। **अनन्ययोपपत्त्येति** ।। अनन्यया प्रसादात्यागेन ज्ञानस्य मोक्षजनकत्वोपपत्त्येत्यर्थः । अतो यथार्थबन्धस्य विना विष्णुप्रसादतः । अनिवृत्तेस्तदर्थं हि जिज्ञासाऽत्र विधीयत इत्यनुभाष्योक्तरीत्या अनादिसत्यबन्धनिवृत्तिरूपामृतत्वाख्यस्य मोक्षस्य प्रसादं विना ज्ञानमात्रेणालभ्यत्वात्प्रसादद्वारैव ज्ञानस्य मोक्षजननोपपत्त्येत्यर्थः । यद्वा तं विद्वानेव चामृत इत्यनुभाष्यव्याख्यावसरे सुधायां यद्यपि तमेवमिति परमपुरुषप्रसादो न श्रूयते । तथापि यमेवैष इति वाक्यानुरोधेन तत्राप्यनुसन्धेयः । निमित्तेन नैमित्तिकोपलक्षणात् । मुमुक्षुसम्बन्धिसाधनावधारणाय न साक्षादुक्तिरित्युक्तदिशा अनन्ययोपपत्त्येत्यर्थः ।। **तत्राहेति** ।। स च ज्ञानी मम प्रियः प्रीतिविषय इत्युक्त्या प्रसादहेतुता ज्ञानस्योक्तेति भावः ।। **अर्थादिति** ।। अनन्ययोपपत्त्येत्युक्तदिशेति भावः ।। **प्रसन्न इति** ।। वृणुते अङ्गीकरोतीत्युक्त्या प्रसादो लभ्यत इति भावः ।। **प्राप्य इति** ।। पूर्वं लभ्यत्वं प्रसन्नत्वमित्युपेत्यार्थ उक्तः । प्राप्तेः प्रसादैकसाध्यत्वस्फोरणायैवकारस्य तेनैवेत्यन्वयमाह ।। **तेनैव प्राप्य इति** ।। न तु कर्मणेत्यर्थः । ज्ञानपादे ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनादित्यत्र दर्शनार्थं श्रवणादि विधीयत इति भाष्यं हृदि कृत्वाह ।। **दर्शनार्थमिति** ।। एतेन ब्रह्मजिज्ञासेत्यत्र ब्रह्मज्ञानाय वेदार्थविषयश्रवणमनननिदिध्यासनरूपा जिज्ञासा कार्येति वचनव्यक्तिस्सूचिता । उक्तं च जिज्ञास्योऽयं विधीयत इत्यत्र सुधायाम् । ज्ञानविधौ हि ब्रह्मणोऽप्राधान्यं स्यात् । ब्रह्मज्ञानोद्देशेन जिज्ञासाविधानात्तु नोऽप्राधान्यमिति । उक्तं च न्यायामृते तृतीयपरिच्छेदे । ब्रह्मज्ञानाय ब्रह्मविचारः कर्तव्य इति न वचनव्यक्तिः । तथात्वे ब्रह्मणो विधेयविशेषणतापातात् । किं तु ब्रह्मज्ञानाय वेदविचारः कर्तव्य इत्येव वचनव्यक्तिः । यद्यपि ब्रह्मपरवेदविचार एव ब्रह्मविचारस्तथापि न ब्रह्मविचाररूपेण विधानम् । किन्तु वेदविचाररूपेण । तथा च श्रुतिः । तस्मादेनं सर्ववेदानधीत्य विचार्य च ज्ञातुमिच्छेदितीत्यादि ।

(भावदीपः)

व्यक्तं चेदं सर्ववेदान्तनयभाष्यादौ श्रवणं नामोपनिषद्भाष्यादिरूपोपदेशजन्यवाक्यार्थज्ञानम् । मननं श्रुतवाक्यार्थे युक्त्यनुसन्धानम् । निदिध्यासनं तु निरन्तरतद्विषयचिन्तनम् । श्रवणं शब्दजं ज्ञानमुपपत्त्यनु-चिन्तनम् । मतिर्निरन्तरा चिन्ता निदिध्यासनमुच्यत इत्युक्तेः । अत्र मननमात्रस्यैव न्यायनिबन्धन-रूपशास्त्रारम्भोपयोगितया कर्तव्यत्वे वाच्येऽपि श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति भाष्योक्त-श्रुतिमनुरुध्य त्रितयकर्तव्यतयोक्तेरनेकधा तात्पर्यं चन्द्रिकायां व्यक्तम् ॥ **जिज्ञासेति** ॥ यद्यपि श्रुतौ तस्मा एतत्प्रोवाच । अन्नं प्राणमित्यादिना ब्रह्मरूपाणि श्रुतवते तद्विजिज्ञासस्वेत्यालोचनमेव विधीयते । तथैव श्रुतावग्रे प्रतीतेः । तथापि श्रुतेऽपि ब्रह्मणि पुनः पुनः श्रवणादि कार्यमिति भावेन तद्विजिज्ञास-स्वेत्युक्तिरिति भावः । व्यक्तमेतदग्रे चतुर्थाध्याये । 'आवृत्तिरसकृदुपदेशात्' 'लिङ्गाच्चे'त्यत्र ॥ **असन्वाच्यतेति** ॥ धातोः कर्मणः समानकर्तृकादिच्छायां वेति इच्छार्थकसन्प्रत्ययान्तजिज्ञासा-पदावाच्यतेत्यर्थः ॥ **जिज्ञासितमिति** ॥ जिज्ञासितं सुसम्पन्नमपि ते महदद्भुतमिति प्रथमस्कन्धे । सुसम्पन्नं परिपूर्णं महदुत्तमम् आश्चर्यतमं च ब्रह्म ते जिज्ञासितं विचारितं खल्विति नारदेन वेदव्यासं प्रत्युक्ते वाक्ये विचारेऽपि प्रयोगात्तस्य तत्र मीमांसापदवद्रूढिरित्यर्थः । यत्रार्थस्य विसंवादः प्रत्यक्षेणोप-लभ्यते । स्वरसंस्कारमात्रार्था तत्र व्याकरणस्मृतिरित्युक्तेस्साधुत्वमात्रपरा व्याकरणस्मृतिरिति भावः । तथा च मननरूपविचारे मुख्येन जिज्ञासाशब्देन छत्रिन्यायेन लक्षणया त्रितयोपादानं सूत्रे । तद्विजिज्ञास-स्वेत्यादिश्रुतौ च युक्तमिति भावः । नन्विच्छायामपि जिज्ञासापदप्रयोगादिच्छाऽत्र जिज्ञासाशब्दार्थः किन्न स्यादित्यत आह ॥ **इच्छाया इति** ॥ ननु वाचस्पतिरीत्या भवतीत्यध्याहारे इच्छाऽत्रार्थः स्यादित्यत आह ॥ **भवतीत्यादीति** ॥ ननु मुमुक्षानन्तरं ब्रह्मज्ञानेच्छा भवतीत्युक्ते ज्ञानेच्छा सन्दिग्धे विषये निर्णयाय भवतीति सन्दिग्धरूपविषयस्य निर्णयाख्यफलस्य च सूचनान्न वैयर्थ्यमिति चेन्न । विषयाद्यभावादिच्छैव नोत्पत्तुमर्हतीति वदन्तं पूर्वपक्षिणं प्रतीच्छया विषयादिसूचनोक्त्ययोगेन तदुक्तवैयर्थ्यमेवेत्याशयेनोक्तम् ॥ **इत्यादिकथनस्येति** ॥ दोषान्तरं चाह ॥ **सूत्रं चेति** ॥ तद्विजिज्ञासस्वेति श्रुतौ विधिप्रत्ययश्रवणेन तद्व्याख्यानपरं सूत्रं कर्तव्यपदान्वितमेव तदनुसारि । अन्यथा तदननुगुणमेव स्यादिति भावः । यत्कश्चिदाह । भवत्पक्षेऽपि श्रुतावनुक्तयोरधिकारिफलयोरथातः पदाभ्यामुक्तेः श्रुत्यननुसारि सूत्रमिति । तन्न । न हि तद्विजिज्ञासस्व तद्ब्रह्मेत्येतदेकमेवोदाहरणम् । विश्वतो-मुखत्वभङ्गापत्तेस्सूत्राणाम् । किन्तु विचारविधायकनानावाक्यान्यपि । तेषु च क्वचिच्छान्तो दान्त इत्यादावधिकारिविषयजिज्ञासानाम् । "यस्य प्रसादात्परमार्तिरूपादस्मात्संसारान्मुच्यते नापरेण" । "नारायणोऽसौ परमो विचिन्त्यो मुमुक्षुभिः कर्मपाशादमुष्मादि"त्यादावधिकारिविषयफलजिज्ञासानां

(भावदीपः)

चतसृणामप्युक्तेः । तद्विजिज्ञासस्व स विजिज्ञासितव्य इत्यादावपि विशब्देनाधिकारिफलवैशिष्ट्यस्यापि सूचनाच्च । अत एव सङ्क्षेपभाष्ये कृत्स्नसूत्रार्थोक्त्यर्थं श्रुत्यविसंवादार्थं च विष्णुरेव विजिज्ञास्य इत्युक्तम् । अत एव च पूर्वतन्त्रे द्वितीयस्याद्यपादे विधिमन्त्रयोरैकार्थ्यमेकशब्दादिति विधिमन्त्राधिकरणे अग्नीन्विहरेत्यादावामन्त्रणादियुक्ते विधिशक्तिप्रतिबन्धोक्तेरिह च तद्विजिज्ञासस्वेति भृगोरामन्त्रणात् । आत्मा वा अर इत्यत्र मैत्रेय्या अर इत्यामन्त्रणादविधित्वमिति प्रत्युक्तम् । बहुश्रुत्यनुरोधेनात्रापि विधेरेवानुमानेन आमन्त्रणेन तन्मात्रं प्रत्युक्तावतात्पर्यादिति । भाष्ये कर्मणेत्यादेः प्रकृतोपयोगाप्रतीतेराह ।। **अस्तु मोक्ष इति** ।। अनेन न च ज्ञानं विनेत्यादिस्वोक्तिसमर्थनार्थमिदं भाष्यमिति दर्शितम् । ''तत्कर्म हरितोषं यत्सा विद्या तन्मतिर्यये''त्यदृश्यत्वनयभाष्योक्तवचनात् । ''य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यती''ति गीतायामभिधापदोक्तप्रवचनस्य ''न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तम'' इत्युत्तरवाक्यस्थप्रियकृत्तमपदेन प्रसादहेतुत्वलाभादिति भावः । तदाह कर्मादिनेत्यादिपदेन तुल्यन्यायस्य कथमस्तु मोक्ष इत्यभ्युपगमः । प्रमाणस्योभयत्रापि प्रागुक्तेरित्यतो व्यनक्ति ।। **यद्यपीति** ।। **श्रुत्यादीति** ।। ''अपाम सोमममृता अभूमे''ति श्रुतौ ''कर्मणैव हि संसिद्धिमास्थिता जनकादय'' इति स्मृतौ च तयोक्तेरिति भावः ।। **अन्यनिषेधादिति** ।। अत एव भाष्ये प्राक् ''नान्यः पन्था अयनाये''त्यंशस्याप्युक्तिः । अत एव च प्राक्टीकायां यमेवेत्येवशब्दस्य तेनैवेत्यन्वय उक्तः ।। **शङ्काभाव इति** ।। तेन भाष्यं कर्मविभागपूर्वं तत्फलस्य मोक्षैकदेशादिरूपस्योक्तिस्स्यात् । प्रकृतसमर्थनस्याविशेषादिति शङ्काऽपास्ता । तमेवमित्यादिश्रुत्युक्त्यैव कर्मजन्यत्वशङ्कानिरासेन यतो नारायणप्रसादमृते न मोक्ष इत्यंशस्य समर्थनात् । 'अपाम सोमममृता अभूमे'त्यादिश्रुत्यादिगतिस्तु 'भाक्तं वाऽनात्मवित्त्वात्' । 'विधेव तु निर्धारणादि'त्यादौ वक्ष्यत इति भावः । 'प्रियो ही'त्यादेः पूर्वभाष्ये उदाहरणं तु तस्यापि तत्कर्म हरितोषं यदित्यादिविरोधमाशङ्क्यात्यर्थमित्यस्यानुवर्तनेन स च ममात्यर्थं प्रियः कर्मकृत्तु प्रियमात्रमित्यर्थात् तस्यापि कर्मणेत्यादिस्मृत्या तात्पर्यं व्यक्तीकर्तुम् । एवमग्रेऽपि तत्र तत्र बोध्यम् । ननु प्रसादस्य हेतुविभागात्पूर्वं विभागोक्त्या फलविभागकथनेन कथमुक्तशङ्कानिरास इत्यतो भावमाह ।। **सत्यमिति** ।। **ज्ञानसाध्यस्यैवेति** ।। अत एव भाष्ये प्रागत्यर्थप्रसाद इत्यत्यर्थपदप्रयोग उत्तमप्रसादोक्त्यै कृतः । मध्यमाज्जनलोकादिरिति भाष्यं एके व्याचक्षते । जनलोकादिरिति बहुव्रीहितत्पुरुषौ । स्वबिम्बेतररूपसाक्षात्कारसहितान्मध्यमादिति वाच्यम् । न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिरित्यत्र भाष्ये सामान्यदर्शनाल्लोका इति वक्ष्यमाणत्वात् । तथा च ईयुर्स्वान्कर्मणा लोकान् ज्ञानेनैव तदुत्तरानिति द्वितीयस्कन्धतात्पर्याविरोध इति । अन्ये तु प्रादुर्भावानृते विष्णुमिन्द्रियैर्नैव पश्यति ।। प्रादुर्भावानपि

(भावदीपः)

यदा ज्ञानदृष्ट्यैव पश्यति । तदैव मुच्यते जीवो न दृष्टैरिन्द्रियैः क्वचिदिति काठकभाष्योक्तेरवतारविषयक-ज्ञानदर्शनसहितान्मध्यमादित्यर्थ इत्याहुः । अपरे तु स्वबिम्बसाक्षात्कारवतामेव कार्यं ब्रह्म प्राप्तवतां मध्ये जनलोकादौ कियत्कालमवस्थानं न निर्हेतुकं भवितुमर्हतीति तत्कृतश्रवणादिजन्यमध्यम-प्रसादाज्जनलोकादीत्याहुः । इतरे तु जनलोकादिरिति तत्पुरुष एव । तथा च यथान्यास एव साधुः । श्रवणादेरपि ज्ञानत्वाज्ज्ञानेनैव तदुत्तरानिति वाक्यं न विरुध्यत इत्याहुः । आध्यानायेत्यत्र टीकायां श्रवणादेर्जनलोकादिफलकत्वोक्तिरप्येवं नेयेति । स्मृतिशेषोक्तेरुपयोगमाह ।। **नन्विति** ।। कर्मणा ज्ञानमातनोति ज्ञानेनामृती भवतीति भाक्तं वेत्यत्र भाष्योक्तवचनादित्यर्थः ।। **अन्यनिषेधेति** ।। तद्वाक्यस्य प्रागुक्तिस्तु कर्मणा ज्ञानमित्येतद्विरोधमाशङ्क्य श्रवणं मननमित्यादिस्मृत्या प्रधानसाधनत्वं श्रुत्यभिप्राय इति विवरितुम् ।। **तदभावादिति** ।। साक्षादिति योज्यम् । तेन न पारम्पर्येणेति वक्ष्यमाणविरोधः ।। **पारम्पर्येणेति** ।। चित्तशुद्धिद्वारा ।। विविदिषन्ति यज्ञेन दानेनेत्यादेः । वक्ष्यति च 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववदि'ति । 'उत्क्रमिष्यत एवम्भावादि'ति चेति भावः । एतेन ज्ञानप्रसादादेस्तद्धेतुत्वादेश्च प्रामाणिकत्वात्प्रमाणैः श्रुत्यादिभिः सर्वस्य बुद्धौ सन्निधावपि तस्य सूत्रे अत इति मोक्षहेतुप्रसादजनकज्ञानोत्पादकत्वादिति परामर्शो युक्त इत्यपि सूचितम् ।।

## अभिनवचन्द्रिका

**श्रवणादिरूपा जिज्ञासेति** ।। आदिशब्देन मनननिदिध्यासनयोर्ग्रहणम् । ननु सुधायां 'जिज्ञासा नाम विचारापरपर्यायमनननमित्युक्तम् । टीकायां सर्वशाखाधिकरणे आद्यसूत्रे श्रवणमनने कर्तव्ये इत्युक्तमित्युक्तम् । ततस्ताभ्यां विरोध इति चेन्न । सुधादौ श्रवणादौ जिज्ञासाशब्दार्थत्वानिषेधात् । तथा हि– न हि सुधायां श्रवणनिदिध्यासने जिज्ञासे न भवत इत्युक्तं नापि सर्वशाखाधिकरणटीकायां निदिध्यासनं कर्तव्यमिति नोक्तमित्युक्तम् । किन्तु सुधायां मननकर्तव्यतासिद्ध्यैव शास्त्रारम्भणीयत्वं सिद्धं भवतीत्यभिप्रायेण जिज्ञासाविशेषो मननं जिज्ञासापदेनोक्तम् । सर्वशाखाधिकरणे तु तदुत्तराधिकरणे निदिध्यासनस्य विचारयिष्यमाणत्वात् । तत्र तयोरेव विचार्यत्वात् तदुपयोगितया एकदेशानुवादः कृतः । इह तु पूर्वपक्षिसिद्धान्तिभ्यां त्रयाणामप्यकर्तव्यत्वसमर्थनं तु व्यभिचारशङ्का परिहाराय । तथा हि – जीवव्यतिरिक्तेश्वराभावेन तस्य नित्यसिद्धत्वेन निर्विषयत्वात् । तत एवाधिकारिसम्बन्धशून्यत्वाच्च मननमात्रकर्तव्यत्वं, यदि तु पूर्वपक्षी साधयेत्तदा सिद्धान्ती, निर्विषयत्वं श्रवणनिदिध्यासनयोः कर्तव्यत्वाद्व्यभिचारं चोदयेत् । अतः पूर्वपक्षिणा तयोरपि पक्षत्वात् । न व्यभिचार इति वाच्यम्–

(अभिनवचन्द्रिका)

एवं सिद्धान्तिनापि विषयादिसद्भावेन मननमात्रस्य कर्तव्यतोक्तौ पूर्वपक्षी विषयादिमतोरपि श्रवणनिदिध्यासनयोरकर्तव्यत्वात् व्यभिचारं चोदयेत्, अतस्तेनापि तयोरपि पक्षत्वात् न व्यभिचार इति वक्तव्यमिति । **विचारेऽपीति** ।। योगभावेऽपि प्रयोगसद्भावात् विचारेऽपि रूढ इति भावः । उपलक्षणमेतत्, श्रवणनिदिध्यासनयोरपीति ग्राह्यम् ।

'श्रवणं मननं चैव निदिध्यासनमेव च । विष्णोस्तु ब्रह्मविद्यायाः जिज्ञासेति विदो विदुः' इति ।

एतेन– श्रवणादेः सन्वाच्यतासमर्थनाय श्रवणादिषु प्रयोगे समर्थनीये विचारमात्रे प्रयोगप्रदर्शनमनुपपन्नमिति परास्तम् । **अस्तु मोक्ष इति** ।। 'कर्मादिनापि भगवत्प्रसादसिद्धे'रित्यस्य 'इत्याशङ्क्य प्रमाणेन परिहरती'त्यनेनान्वयः । ननु प्रसादार्थं न ज्ञानमपेक्षितं कर्मादिनैव प्रसादसम्भवात् इत्याशङ्का यदि परिहार्या तर्हि – न मोक्षार्थं ज्ञानमपेक्षितं कर्मादेर्मोक्षसाधनत्वस्य श्रुत्यादिसिद्धत्वादित्यपि शङ्का परिहरणीया अविशेषादित्याशङ्क्य परिहरति – **यद्यपीति** ।। भाष्ये **श्रवणादिभिरिति** ।। आदिशब्देन मनननिदिध्यासनयोरिव पादयोगयोगतपोज्ञानानामपि ग्रहणम् । मात्राचतुर्भागकालीनसामान्यभगवद्रूपाऽपरोक्षयुक्ताऽखण्डितध्यानं पादयोगः । मात्राकालीनसामान्याऽपरोक्षयुक्ताऽखण्डितध्यानं योगः । षण्मात्राकालीनसामान्याऽपरोक्षयुक्तपरोक्षज्ञानं तपः । सामान्यरूपस्य मुहूर्तापरोक्षेण सहितं परोक्षज्ञानं ज्ञानम् । तदुक्तमेकादशतात्पर्ये–

'नित्यशो भगवद्रूपस्यापरोक्ष्येण दर्शनम् ।
मुहूर्तमात्रं ज्ञानं स्यात् महाज्ञानं ततोऽधिकम् ।
सदैवाखण्डितज्ञानं तप इत्युच्यते बुधैः ।
अपरोक्षदृशा युक्तं नित्यं षण्मात्रकालया ।।
अपरोक्षदृशा युक्तमेकमात्रायुजा युतम् ।
योगनाम्ना समुद्दिष्टं ध्यानं नित्यमखण्डितम् ।
तच्चतुर्भागया नित्यमपरोक्षदृशा युतम् ।
पादयोगाख्यमुद्दिष्टं ध्यानं नित्यमखण्डितम्' इति ।

ज्ञानसम्पत्या=योग्यापरोक्षज्ञानसम्पत्त्येत्यर्थः । **मध्यमाज्जनलोकादिरिति** ।। जनलोकस्याऽऽदिः, जनलोकः आदिर्यस्य सोऽयं जनलोकादिरिति तत्पुरुषो बहुव्रीहिश्च द्वावपि तन्त्रेणापात्तौ । अत्रायं विवेकः – पादयोगान्महर्लोकः, योगाज्जनलोकः, तपसस्तपोलोकः, ज्ञानात्सत्यलोकः, योग्यात्मदर्शनात् मोक्ष इति । तदुक्तम्–

(अभिनवचन्द्रिका)

'ज्ञानेन ब्रह्मलोकः स्यात् महाज्ञानात् हरेर्गतिः । पादयोगात् महर्लोकः जनलोकस्तु योगतः । तपसस्तु तपोलोकः प्राप्यते नान्यतः क्वचित्' इति ।

**ज्ञानस्य श्रवणाद्यन्वयव्यतिरेकित्वादिति ।।** ननु श्रवणं मननसाधनं मननं निदिध्यासनसाधनं, तथा च– निदिध्यासनस्यैव ज्ञानान्वयव्यतिरेकाऽनुविधायित्वं, न तु – श्रवणमननयोः । पारंपर्यसद्भावेन ध्यानसमकक्षत्वाभावात् । कर्मणोऽप्येवमन्वयव्यतिरेकसद्भावेन प्राधान्यस्य न्यायप्राप्तत्वेन तन्निराकरणं न स्यात् इति चेत्, न वैषम्यात् । यथा श्रवणेनैव तन्त्रज्ञानाधिकारिणां स्त्रीशूद्राणामपरोक्षज्ञानम् ।

'अथवा सततं शास्त्रविमर्शेन भविष्यती'ति ।

वचनात् । केषाश्चित् उत्तमानां शास्त्रविमर्शनरूपमननेनैव अपरोक्षज्ञानं, बहूनां निदिध्यासनेनेति प्रत्येकमपरोक्षहेतुत्वमुपलब्धं न तथा कर्मणामिति ।

## वाक्यार्थमुक्तावली

**अनन्यथोपपत्येति ।** अन्यथानुपपत्येत्यर्थः । 'यमेवैष वृणुते' 'यस्य प्रसादादि'त्यादौ प्रसादस्य मुक्तिं प्रति प्रियो हीत्यादौ ज्ञानस्य प्रसादं प्रति हेतुत्वोक्तेश्चान्यथा ज्ञानस्य मोक्षसाधनत्वेऽनुपपत्तेरित्यर्थः । यद्वा नान्यः पन्था इत्यत्र ज्ञानातिरिक्तमार्गनिषेधाद्यस्य प्रसादात् परमार्तिरूपादस्मात्संसारान्मुच्यते नापरेणेत्यत्र प्रसादातिरिक्तसाधननिषेधादुभयान्यथानुपपत्या प्रसादद्वारा ज्ञानमृतेऽन्यः पन्था नेत्यर्थ इति भावः । न च प्रसादात् ज्ञानद्वारा मुच्यते नापरेणेत्यर्थः । लोकवैरूप्यात् । लोके राजप्रसादस्यैव साक्षान्मोचकत्वदर्शनान्नान्यः पन्था इत्यत्र ज्ञानस्य मोक्षमार्गत्वोक्तावपि प्रसादान्मुच्यत इत्यत्रैव साक्षाद्धेतुत्ववाचिनिमित्तपञ्चम्यन्तत्वश्रवणाच्चेति भावः । **श्रुतं चेति ।** साक्षात् श्रुत्युदाहरणेन पूर्तावपि शिष्यव्युत्पादनाय व्युत्पादनापेक्षश्रुत्युदाहरणं प्रागिति भावः । **श्रुतं चेति ।** अनेन द्रष्टव्य इति यत्तत् श्रोतव्यमित्यादिनेति वाक्यं योजितं भवति । श्रवणं नाम वेदोपदेशजन्यवाक्यार्थज्ञानम् । श्रुतार्थे युक्त्यनुसन्धानं मननम् । निदिध्यासनन्तु ध्यानम् । श्रवणं वाक्यजं ज्ञानमुपपत्यनुचिन्तनम् । मतिर्निरन्तरा चिन्ता निदिध्यासनमुच्यत इत्युक्तेः । अत्र मननमात्रस्यैव न्यायनिबन्धनात्मकशास्त्रोपयोगितया कर्तव्यत्वं वाच्ये सर्ववेदान्तप्रत्ययमित्यादौ शास्त्राभ्यासरूपिण्याः ध्यानरूपायाश्चोपासनायाः कर्तव्यत्वोक्तेः जिज्ञासासूत्रेऽपि मननसाध्यं श्रवणं तत्साध्यं ज्ञानं च कर्तव्यतया विवक्षितमिति द्रष्टव्यम् इत्यादि तृतीयविधायकश्रुत्यनुसारेणोक्तमिति बोध्यम् । ननु जिज्ञासा नाम ज्ञानेच्छा धातोः कर्मणः समानकर्तृका-

(वाक्यार्थमुक्तावली)

दिच्छायां सनो विधानात् । तथा च कथं द्रष्टव्य इत्यादिश्रुत्यर्थतया दर्शनार्थश्रवणादिरूपजिज्ञासा कार्येत्युच्यत इत्यत आह । **न चेति** । असन्वाच्यतासन्प्रत्ययान्तशब्दावाच्यतेत्यर्थः । जिज्ञासितमिति विचारितमित्यर्थः । एवं च प्रयोगवशान्मीमांसाशब्द इव विचारे रूढ इति भावः । न च व्याकरण-विरोधः । यत्रार्थस्य विसंवादः न प्रत्यक्षेणोपलभ्यते । तत्र संस्कारमात्रार्थे तत्वव्याकरणं स्मृतमित्युक्तेः । साधुत्वमात्रपरं व्याकरणमिति भावः ।

न च सुधायां जिज्ञासापदेन विचारो लक्ष्यत इत्युक्तेर्विरोधः । पररीत्या प्रवृत्तत्वात् । यद्वा प्रयोगदर्शनेन रूढविवक्षया मननविचारशक्तेन जिज्ञासाशब्देन छत्रियन्यायेन जिज्ञासितं सुसम्पन्नमित्यादौ व्यासं प्रति नारदवचनस्य लक्षणया त्रितयोपपादनं सुधोक्तमित्यविरोधः । नन्विच्छायामपि जिज्ञासापदप्रयोगात्स एवार्थः किं न स्यादित्यत आह । **इच्छाया इति** । प्रवृत्तिसाध्यस्यैव विधेयत्वेनेच्छायाश्च विषयसौन्दर्यलभ्यतया प्रवृत्त्यसाध्यत्वेनाविधेयत्वादित्यर्थः ।

ननु वाचस्पतिरीत्या भवतीत्यध्याहारेणेच्छार्थः किं न स्यादित्यत आह । **भवतीत्यादेरनुप-योगादिति** । विषयप्रयोजनसूचकत्वेन प्रकृतानुपयोगादित्यर्थः ।

नन्वथ मुमुक्षानन्तरं ब्रह्मज्ञानेच्छा भवतीत्युक्ते ज्ञानेच्छा सन्दिग्धविषये निर्णयाय भवतीति पुनरावृत्तौ सन्दिग्धरूपविषयस्य निर्णयाख्यफलस्य च सूचनान्न वैयर्थ्यमित्यत उक्तम् । **इत्यादिकथनस्येति** । विषयाद्यभावादिच्छैव विषयेनामुमर्हतीति वदन्तं प्रतीत्यादिकथनस्यानुपयोगादिति भावः । आदिपदेन प्रशस्तेति पदं गृह्यत इत्यप्याहुः । कर्तव्येति पदमेवाध्याहार्यम् । न तु परोक्तरीत्या भवतीत्यादि इत्यत्र नियामकमाह । **सूत्रं चेति** । श्रोतव्यो मन्तव्यः तद्विजिज्ञासस्वेति श्रुतौ विधिप्रत्ययश्रवणेन तद्व्याख्यानरूपसूत्रे कर्तव्येति पदमेवाध्याहर्तव्यमिति भावः । यद्वा अक्षरसाम्याद् ब्रह्मविचार इत्येवानुक्त्वा सूत्रं किमिच्छाविचारसाधारणसन्दिग्धजिज्ञासापदप्रयोगेणेत्यत आह **सूत्रं चेति** । जिज्ञासापदघटितसूत्रं चेत्यर्थः । अत्र केनचित्प्रलपितं भवत्पक्षेऽपि श्रुतावनुक्तयोरथाथातःशब्दाभ्यामुक्तेः श्रुत्यननुसारि सूत्रमिति । तदयुक्तम् । न हि तद्विजिज्ञासस्वेत्येवोदाहरणं किन्तु विचारविधायकान्यनन्तवाक्यानि तेषु च क्वचिच्छान्तो दान्त इत्यादावधिकारिविषयजिज्ञासानां, यस्य प्रसादादित्यत्राधिकारिविषयजिज्ञासाफलानां चतुर्णामुक्तेः । तद्विजिज्ञासस्व स विजिज्ञासितव्य इत्यादावप्यधिकारिफलवैशिष्ट्यस्यापि सूचनाच्च । अत एव सांप्रभाष्ये कृत्स्नसूत्रार्थोक्त्यर्थं श्रुत्यविसंवादार्थं च विष्णुरेव विजिज्ञास्य इत्युक्तम् । न च ज्ञानं क्रियात्पर्यप्रसाद इति स्वोक्तार्थे प्रमाणोक्तिपरं कर्मणेत्याद्यवतारयति । **अस्तु मोक्ष इति** ।

(वाक्यार्थमुक्तावली)

अत एव प्रमाणेन परिहरतीति वक्ष्यत्यतो न पौनरुक्त्यमिति भावः । **य इममिति** । ''य इमं परमं गुह्यं मद्भक्तेष्वभिधास्यति । भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयम् । न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तम'' इत्यत्राभिधास्यतीत्युक्तप्रवचनस्य प्रियकृत्तम इत्यनेन प्रसादहेतुत्वलाभादिति भावः । तदाह कर्मादिनेत्यादिपदेन । **मोक्षस्य कर्मादिसाध्यत्वमिति** । ''अपाम सोमममृता अभूमे''त्यत्र कर्मसाध्यत्वम् । ''त्यागेनैकेनामृतत्वमानशुरि''त्यत्र वैराग्यसाध्यत्वम् । श्रुत्वा मोक्षं च विन्दतीत्यत्र श्रवणसाध्यत्वं चेत्यर्थः । **अन्यनिषेधादिति** । तमेवेत्यत्र 'नान्यः पन्था' इत्यन्यनिषेधात् । तत्र ज्ञानात् मोक्षो नामान्यथानुपपत्त्या प्रसादादेव मोक्ष इत्युक्तत्वात् । यमेवैष वृणुत इत्यत्र तेनैव लभ्यत इत्येवाकारान्वयादिति भावः ।

ननु प्रियो हि ज्ञानिनोऽत्यर्थमित्यत्र ज्ञानस्यात्यर्थप्रसादसाधनत्वश्रवणात्कथं कर्मणाऽत्यर्थप्रसाद इत्यत आह । **अत्र पुनरिति** । कर्मादिनाऽत्यर्थप्रसादो नेति निषेधाभावात् प्रत्युत न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तम इत्यत्र श्रवणात्प्रसादस्योत्तमत्वमुक्तमिति चेन्न । तद्वाक्यस्य कर्माध्ययनस्वाध्याय-व्याख्यानवत्सु व्याख्यातृसमो मत्प्रियोऽन्यो नेत्येवम्परत्वात् । तदुक्तम् । ''आख्यातुश्च समं मुक्तौ सुखं नान्यस्य कस्यचिदि''ति । ''मध्यमाज्जनलोकादि''रिति च । यद्यपि ईयुस्तीन्कर्मणा लोकान् ज्ञानेनैव तदुत्तरान् । एवं ज्ञानं विना नैव महर्लोकादिका गतिः । पादयोगान्महर्लोको जनोलोकस्तु योगत इति बहुप्रमाणबलाज्जनादेर्ज्ञानैकसाध्यत्वावगमादुत्तमप्रसादसाध्यत्वं न वक्तव्यम् । तथापि तत्र ज्ञानपदस्य सामान्यदर्शनपदोक्तयोग्येतररूपसाक्षात्कारपरत्वात्तस्य च श्रवणादिभिरित्यादिपदेन ग्रहणादेकवाक्यतया न विरोधः । तदुक्तं सामान्यदर्शनाल्लोका मुक्तिर्योग्यात्मदर्शनादिति । तत्र सामान्यदर्शनं योग्यापरोक्षात्पूर्वभाव्येव जनप्राप्त्यनन्तरं साधनसम्पत्त्या तत्रैव योग्यापरोक्षोपपत्तेः । यद्वा ज्ञानेनैवेत्यादौ ज्ञानपदं योग्यापरोक्षपरम् । तथा च ज्ञानेनैव ज्ञानं प्राप्यैव श्रवणादिना तदुत्तरानित्यर्थः । एवं ज्ञानं विना नैव महर्लोकादिका गतिरित्युक्तेः । न च ज्ञानेनैव जनादिप्राप्त्युपपत्तेः किं श्रवणादिनेति वाच्यम् । स्वबिम्बसाक्षात्कारेण कार्यब्रह्म गच्छतां मध्ये जनलोकादौ कियत्कालमवस्थानस्य निर्हेतुकत्वानुपपत्तेस्तदर्थं श्रवणादिसार्थक्यात्तत्सहकारितया ज्ञानस्यापेक्षितत्वादुत्तरभाविश्रवणादेरानन्दाति-शयहेतुत्वेऽपि नान्तरीयकतया ज्ञानादिहेतुत्वाविरोधः । न चानन्दातिशयहेतुप्रसादस्यात्युत्तमत्वात्तस्यैव जनादिहेतुत्वात्कथं मध्यमत्वमिति वाच्यम् । आनन्दातिशयहेतूत्तरभाविकर्मजप्रसादवदुत्तमत्वाभावोपपत्तेरिति दिक् । **पारम्पर्येणेति** । चित्तशुद्धिद्वारेत्यर्थः ।

## तत्त्वसुबोधिनी

**नारायणप्रसादमिति** । अन्यथा भाष्ये ज्ञानान्मोक्षस्याप्रतिज्ञातत्वेनैतच्छ्रुत्युदाहरणमसङ्गतं स्यादिति भावः । **अन्यथानुपपत्त्येति** । ज्ञानस्य त्रिक्षणावस्थायित्वेन तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्यते इति श्रुतेः । प्रारब्धभोगावसानकालीनतया कालान्तरभाविमोक्षसाधनत्वस्य प्रसादाख्यद्वारं विनानुपपत्तेरित्यर्थः । **अन्यथानुपपत्तेरिति** ।। ''यमेवैष वृणुते तेन लभ्यः'' ''यस्य प्रसादादि''त्यादौ प्रसादस्यैव मोक्षसाधनत्वोक्तेः प्रियो हीत्यादिना ज्ञानस्य प्रसादहेतुत्वोक्तेश्चान्यथा प्रसादं विना ज्ञानस्य मोक्षसाधनत्वानुपपत्तेरित्यर्थः । यद्वा अन्यथा तमेवमित्यस्य प्रसादद्वारा ज्ञानस्य मुक्तिहेतुत्वानङ्गीकारे ''यस्य प्रसादात्'' ''तमेवं विद्वान्'' इति श्रुतिद्वये ''नापेरण'' ''नान्यः पन्था'' इति निषेधस्य उपपत्त्यभावेनेत्यर्थः । वरणस्याङ्गीकाराख्यप्रसादवाचकत्वस्य लोकप्रसिद्धत्वात् वरणपदेनैव प्रसादलाभः इत्याशयेनोक्तम् । **प्रसन्नः सन् वृणुते इति** । अत्र प्रसन्नः सन् इति स्पष्टीकरणायोक्तम् । वृणुते अङ्गीकरोतीत्यनेनैव प्रसादलाभादिति ध्येयम् । **तेनैवेति** । लभ्यत्वं ज्ञेयत्वमिति भवतीति प्रागप्युदाहरणं युक्तमिति भावः । **दर्शनार्थमिति** ।। अनेन द्रष्टव्य इत्यनुवादरूपमित्युक्तं भवति । **श्रवणादिरूपेति** । अत्रातद्गुणसंविज्ञानबहुव्रीहिणा विचार एवाभिप्रेतः । अत एव वक्ष्यति । विचारेऽपि तत्प्रयोगादिति । नन्वेतद्वाक्यानुसारेण त्रयाणामपि जिज्ञासाशब्दार्थत्वमभ्युपगन्तव्यम् । तथा सति जिज्ञासा नाम युक्त्यनुसन्धानात्मकविचारापरपर्यायं मननमित्युक्तत्वेन तद्विरोधापातात् । न्यायनिबन्धनात्मकशास्त्रा-रम्भणीयत्वस्य न्यायानुसन्धानकर्तव्यतोक्तिमात्रेण सिद्धेश्च । न हि औपदेशिकवाक्यार्थग्रहणलक्षणश्रवणं कर्तव्यतोक्तिरूपशास्त्रारम्भणीयत्वे हेतुः । श्रवणजं ज्ञानं पूर्ववृत्तमिति मीमांसमानस्य पूर्वकृतत्वेन उक्ततया शास्त्रस्यारम्भणीयत्वं विनापि तत्कर्तव्यतासिद्धेरिति भावः । यद्वा श्रवणनिदिध्यासने विहितत्वात् मुमुक्षुणा कार्ये मननमपीति दृष्टान्ततया तयोरुपपादनम् । न तु शास्त्रारम्भहेतुतया । अथवा निदिध्यासनस्याकर्तव्यत्वे तदङ्गभूतमननस्यापि तथात्वात् परम्परया निदिध्यासनं कर्तव्यतारम्भणीयत्वे हेतुः । तथा च विचारशास्त्रव्युत्पाद्यन्यायाङ्गवाक्यस्यार्थः इत्येवंरूपस्य श्रवणज्ञानस्याभावे शास्त्रारम्भासिद्धेः तत्कर्तव्यताप्यारम्भणीयत्वे हेतुः आरम्भणीयतासिध्यर्थं त्रितयकर्तव्यतोच्यते । न चैकस्य जिज्ञासाशब्दस्य श्रवणाद्यनेकार्थतायोगः । इच्छार्थे जिज्ञासाशब्दो विचारे वा लाक्षणिक इति पक्षे दोषाभावात् । मननरूपविचाराभिधायक इति मते श्रवणादौ छत्रिवल्लक्षणोपपत्तेरिति भावः । ननु अस्यां श्रुतौ श्रवणादिविचारो दर्शनसाधनत्वेनोच्यते यत इत्यादिवाक्ये तु दर्शनार्थं जिज्ञासा कर्तव्यत्वेनोक्ता ।

(तत्त्वसुबोधिनी)

**श्रवणादिविचारश्च न मननजिज्ञासापदवाच्य** इति भिन्नविषयत्वात् कथं तत्र प्रमाणत्वेन एतच्छ्रुत्युदाहरणमित्याशङ्क्य परिहरति । **न च श्रवणादेरिति** ।। ''जिज्ञासितं सुसम्पन्नमपि ते महदद्भुतम् । कृतवान्भारतं यस्त्वं सर्वार्थपरिबृंहितमि''ति व्यासं प्रति नारदवचनं अनेन सङ्गृह्यते । तत्र जिज्ञासितमित्यस्य विचारितमित्यर्थस्य प्रकरणबलसिद्धत्वेन तद्दृष्टान्तीकृतमिति भावः । ननु इच्छायामपि जिज्ञासापदप्रयोगात् इच्छा जिज्ञासाशब्दार्थः किं न स्यादित्यत आह । **इच्छाया अविधेयत्वादिति** । अत्र जिज्ञासाशब्दात् मीमांसाशब्दादिवत् इच्छाप्रतीत्यभावेऽपि विचारप्रतीतेः तस्य तत्र रूढिरेवाभिमता । न चैवं तस्मात् ज्ञानेच्छान्तर्णीतो विचारो जिज्ञासापदेन लक्ष्यते इति सुधाविरोधः । **तस्य परमतोपन्यासत्वात्** । अत एव शङ्कग्रन्थे तदुक्तिः । अत एव यदि च जिज्ञासाशब्दः मीमांसाशब्दवत् विचार एव उपसङ्कचायते इति तत्रैव स्वमतोक्तिः । यद्वा सुधायां पक्षद्वयेऽपि जिज्ञासाशब्दस्य विचारपरत्वाविशेषादन्यतरनिर्धारणस्याप्रयोजनत्वात् पक्षद्वयोक्तिः तदनुसारेणात्रापि टीकायां तत्त्वोद्योतेऽपि लक्षणया विचारेऽपि तत्प्रयोगात् मुख्यार्थस्य चेच्छाया अविधेयत्वादित्यपि योजनीयमिति दिक् । न च टीकायां जिज्ञासापदलक्ष्यत्वमेव विचारस्य मतम् । अन्यथा मुख्यार्थानुपपत्तिकथनपरेच्छाया अविधेयत्वादित्यनेन टीकाविरोधापातादिति वाच्यम् । तस्यानुपदमेवान्यथाव्याख्यायमानत्वात् । किञ्च जिज्ञासाशब्दस्य इच्छावाचित्वेऽपि मुख्यार्थत्यागेन लक्षणया विचारपरत्वम् आवश्यकमेव । अन्यथा अध्याहृतकर्तव्यपदार्थान्वयानुपपत्तेः । न च तदध्याहार एव निर्निबन्धनः । आकाङ्क्षाया एव तन्मूलत्वेन तेन विना आकाङ्क्षानुच्छेदात् । ननु अस्तिभवत्योः सर्वत्र सम्बन्धात् आकाङ्क्षानिवृत्तिरिति चेत्तत्राह । **भवतीत्यादीति** । किञ्च तद्विजिज्ञासस्व इत्यादिश्रुतौ तावत् जिज्ञासाशब्दो लक्षणया विचारपर एव । मुख्यार्थेच्छाया अविधेयत्वात् । ततश्च तदनुसारिसूत्रेऽपि लक्षणया विचार एव अवसेयः । अन्यथा श्रुतिसूत्रयोः भिन्नविषयत्वापातादित्याह । **सूत्रं चेति** । केचित्तु । ननु सूत्रे जिज्ञासाशब्दः विचारार्थश्चेत् विचार इत्येव वक्तव्यम् । अल्पाक्षरत्वानपगमात् । प्रत्युतासन्दिग्धत्वलाभाच्चेत्यत आह । **सूत्रं चेति** । तद्विजिज्ञासस्वेति श्रुत्यनुसारीत्यर्थ इत्याहुः । कर्मादिः प्रसादसाधनत्वप्रतिपादकवाक्योदाहरणपूर्वकं कर्मणेत्याद्युत्तरग्रन्थमवतारयति । **अस्तु मोक्ष इति** । **परममिति** । अत्र मद्भक्तेषु अभिधास्यतीत्युक्तविचारस्य कश्चिन्मे प्रियकृत्तम इत्युक्तिबलात्प्रसाद-साधनत्वमवगम्यत इति भावः । ननु कर्मणैव हि संसिद्धिमास्थिता जनकादयः इत्युक्तत्वात्कर्मणैव मोक्षो भविष्यति किं प्रसादेन इत्यपि कुतो नाशङ्क्यत इत्यत आह । **यद्यपीति** । **ज्ञानसाध्य-स्यैवोत्तमत्वादिति** । अत एव न च ज्ञानं विनाऽत्यर्थप्रसाद इति प्रागन्यथासिद्धिशङ्कानिरासार्थं

(तत्त्वसुबोधिनी)
अत्यर्थेत्युक्तमिति भावः । ननु आत्मा वा अर इति वाक्ये श्रवणादिरूपजिज्ञासया ज्ञानं सम्पादनीय-मित्युक्तत्वात् न कर्म ज्ञानसाधनम् इत्यत आह । **आत्मेति वाक्य इति** । कर्मादिरूपान्यसाधन-स्यानिषिद्धत्वात् तेनोपपत्तौ न जिज्ञासया कृत्यमस्तीति भावः । **विपरीतमिति** । कर्मादि प्रधानसाधनं श्रवणादि तु अप्रधानसाधनमिति विपरीतं किं न स्यात् इत्यर्थः । ज्ञानस्य श्रवणाद्येव प्रधानसाधनं कर्मादि तु अप्रधानसाधनमित्यत्र युक्तिमाह । **ज्ञानस्येति** ।

## वाक्यार्थविवरणम्

भाष्ये मध्यमाज्जनलोकादिरित्यत्र जनलोकस्य आदिरिति महर्लोक एव ग्राह्यो, न जनलोक-तपोलोकादिः । 'आजनान्न जनिर्भुवि' इति जनलोकादेरपुनरावृत्तिलोकत्वादिति ध्येयम् ॥ **कर्मादेस्तदभावादिति** ॥ कर्माभावेऽपि श्रवणादिना ज्ञानोत्पत्तिसम्भवेन व्यतिरेकाभावादिति भावः ।

## वाक्यार्थमञ्जरी

श्रुताविहाधिकारिवर्गे परमात्मानमुक्तरीत्या जानन् मुक्तो भवति मोक्षायान्यो मार्गो न विद्यत इति ज्ञानस्यैव मोक्षसाधनत्वमुच्यते न प्रसादस्येत्यत आह ॥ **अत्रेति** ॥ **अनन्यथोपपत्त्येति** ॥ अनन्यथा प्रसादात्यागेन ज्ञानस्य मोक्षहेतुत्वोपपत्त्येत्यर्थः । कुत इत्यतो ज्ञानस्यैव मोक्षहेतुत्वे यस्य प्रसादादिति श्रुत्यनुपपत्तेरिति व्याख्येयम् । अर्थात् अन्यथानुपपत्त्येत्यर्थः । श्रुतं श्रुतौ साक्षादुक्तम् । एषशब्दार्थः प्रसन्नस्सन्निति । इषु इच्छायामित्यस्माद् अर्श आदिभ्योऽचि कृते गुणे चैषशब्दस्य निष्पत्तेः प्रसादस्यापीच्छाविशेषत्वादिति भावः । एतेनात्र प्रसादवाचकपदाभावात् वरणं च प्रसाद उच्यत इति सुधोक्तरीत्या वृणुत इत्यनेन लाभे अर्थलभ्यत्वेन श्रुतं चेत्यनुपपन्नमिति निरस्तम् । एतेनैव यमेवैष तस्यैष इत्यनयोरन्यतरवैयर्थ्यमिति निरस्तम् । विवक्षितार्थलाभायाह ॥ **दर्शनार्थमिति** ॥ श्रवणं शब्दजं ज्ञानमुपपत्त्यानुचिन्तनम् । मतिर्निरन्तरा चिन्ता निदिध्यासनमुच्यत इति प्रमाणानुसारेण श्रवणादिशब्दार्थो बोध्यः । ननु श्रवणादित्रयाणां जिज्ञासारूपत्वे मननस्यैव तथात्वप्रतिपादकेन विचारोऽपि तत्प्रयोगादित्युत्तरग्रन्थेन विरोधः । जिज्ञासा नाम युक्त्यनुसन्धानात्मकविचारापरपर्यायं मननमिति सुधाविरोधश्च । सुधायामेव श्रवणजं ज्ञानं पूर्ववृत्तमिति श्रवणस्य जिज्ञासातः पूर्वभावोक्त्यनुपपत्तिश्च । न च श्रवणमादिर्यस्य मननस्य तच्छ्रवणादीत्यतद्गुणसंविज्ञानबहुव्रीहिणा श्रवणादिशब्देन मननमेवोच्यत इति वाच्यम् । तथात्वे तत्र श्रवणमनननिदिध्यासनरूपा जिज्ञासा सैवेत्युक्तमिति वक्ष्यमाण-

(वाक्यार्थमञ्जरी)

तृतीयाध्यायस्थवाक्यविरोधापत्तेरिति चेत् । उच्यते । उत्तरग्रन्थे अन्यनिषेधाभावेन न तद्विरोधः । न्यायनिबन्धनात्मकशास्त्रारम्भणीयत्वस्य न्यायानुसन्धानात्मकमननकर्त्तव्यत्वोक्तिमात्रेण सिद्धेस्तस्यैव जिज्ञासात्वं सुधायामुक्तम् । अत्र तु प्रतिवाक्यमयमस्य वाक्यार्थ इत्येवंरूपश्रवणजज्ञानाभावे प्रतिवाक्यमस्य वाक्यस्यायमर्थो न वेति सन्देहस्यैवासम्भवे तन्निरासकन्यायव्युत्पादकशास्त्रारम्भणीयत्वासिद्धेः श्रवण-कर्तव्यत्वस्य ध्यानस्याकर्तव्यत्वे तदङ्गमननस्याप्यकर्तव्यत्वेन शास्त्रारम्भणीयत्वासिद्धेः ।। निदिध्यासन-कर्तव्यत्वस्य शास्त्रारम्भे परम्परया हेतुत्वमिति तयोरपि जिज्ञासात्वं भाष्योदाहृतश्रुत्यनुसारेणोक्तमिति न सुधाविरोधः । स्वयं जिज्ञासारूपस्यापि श्रवणस्य मननरूपजिज्ञासातः पूर्वभावसम्भवान्न श्रवणजमिति सुधाविरोधः । एकस्य जिज्ञासाशब्दस्य श्रवणाद्यनेकार्थत्वं द्वे वाव ब्रह्मणो रूप इत्यादावेकस्य रूपशब्दस्य स्वरूपप्रतिमापरत्वदर्शनादुपपन्नमिति । ननु धातोः कर्मणः समानकर्तृकादिच्छायां वा इषि कर्मणो धातोरिषिणैककर्तृकात्सन्प्रत्ययो वा स्यादिच्छायामितीच्छायामेव सन्प्रत्ययविधानादनिच्छारूपश्रवणादेर्न सन्नन्तजिज्ञासाशब्दवाच्यत्वमित्याशङ्क्य निराकरोति ।। न चेति ।। असन्वाच्यता न, सन्नन्त-जिज्ञासाशब्दवाच्यत्वाभावो न, सन्नन्तजिज्ञासाशब्दवाच्यत्वमस्त्येवेति यावत् । जिज्ञासितमिति ।। जिज्ञासितं सुसम्पन्नमपि ते महदद्भुतमिति प्रथमस्कन्धे सुसम्पन्नं परिपूर्णं महदद्भुतम् आश्चर्यतमं च ब्रह्मेति जिज्ञासितं विचारितं खल्विति नारदेन व्यासं प्रत्युक्ते वाक्ये विचारेऽपि जिज्ञासाशब्दप्रयोगा-दित्यर्थः । उपलक्षणमेतत् । ''श्रवणं मननं चैव निदिध्यासनमेव च । विष्णोस्तु ब्रह्मविद्यायां जिज्ञासेति विदो विदुः'' इति त्रिष्वपि प्रयोगो बोध्यः । व्याकरणं तु साधुत्वमात्रपरम् । यत्रार्थस्य विसंवादः प्रत्यक्षेणोपलभ्यते । स्वरसंस्कारमात्रार्था तत्र व्याकरणं स्मृतिः इति स्मृत्युक्तेरिति भावः । ननु ज्ञानेच्छान्तर्णीतो विचारो लक्ष्यत इति सुधायां जिज्ञासापदस्य विचारलक्षकत्वोक्त्या कथमत्र जिज्ञासापदस्य विचारवाचकत्वोक्तिरिति चेन्न । सुधायां परमतानुवादात् । अत एवोत्तरत्र यदि च जिज्ञासाशब्दो मीमांसाशब्दवत् विचार एवोपसंख्यायत इति स्वमतमुक्तम् । व्यक्तमेतच्चन्द्रिकायाम् । नन्वथापि न ब्रह्मजिज्ञासाशब्दो ज्ञानेच्छापरः । किन्तु विचारस्योपलक्षकः । सत्यं । तथापि तत्पूर्वको विचारो लक्ष्यते । अन्यथा सम्बन्धाभावादिति प्रमेयदीपिकाविरोधः । अस्य परमतानुवादत्वायोगात् । तथाहि । ज्ञानेच्छायाः अनिषिद्धत्वे प्रमाणत्वेन खलु गीताभाष्ये ब्रह्मजिज्ञासां विज्ञाय प्रज्ञां द्रष्टव्य इत्यादिवचनान्युदाहृतानि । तत्र जिज्ञासाशब्दस्य विचारलक्षकत्वेन ज्ञानेच्छापरत्वाभावान्नैतत्सूत्रं ज्ञानेच्छाया अनिषिद्धत्वे प्रमाणत्वेनोदाहर्तव्यमिति नन्वित्यादिना शङ्कते । ज्ञानेच्छापरिहारेण विचारमात्रस्य लक्ष्यत्वे

(वाक्यार्थमञ्जरी)

लक्षणाबीजसम्बन्धाभावात् । ज्ञानेच्छान्तर्णीतविचारस्य लक्ष्यत्वेऽङ्गीक्रियमाणे ज्ञानेच्छापूर्वकमेव विचारस्य लक्ष्यत्वप्राप्त्या तदनिषिद्धत्वे प्रमाणत्वेनैतदुदाहरणं युक्तमिति परिहृतं सत्यमित्यादिना । न च विचारस्य वाच्यत्वे प्रकृतोपयोगः नापि परमताभिप्रायेण प्रमाणत्वोक्तिर्युक्तेति चेत् सत्यम् अभ्युपगमवादोऽयमित्य-दोषः । वाचकत्वपक्षेऽपि विचारस्य विधेयत्वेन काम्यत्वाद् द्रष्टव्य इत्यादिप्रमाणोदाहरणस्येव सूत्रोदाहरणस्य प्रकृतोपयोगसूचनादिति प्रमेयदीपिकाभावबोधे स्फुटमिति । नन्विच्छायामपि जिज्ञासाशब्दप्रयोगात्सैवात्र जिज्ञासापदवाच्या किन्न स्यादित्यत आह ।। **इच्छाया इति** ।। प्रयत्नसाध्यस्यैव विधेयत्वेन पुरुषप्रयत्नागोचरेच्छायाः कर्तव्यत्वविधानायोगादिति भावः । ननु कर्तव्यत्वविधायकं कर्तव्यपदं सूत्रे न श्रूयते । न चाध्याहारः कृत इति वाच्यम् । भवतीत्यध्याहारेणापि वाक्यपर्यवसानेन कर्तव्य-पदाध्याहारनिर्बन्धाभावात् । अतोऽत्रेच्छाग्रहणं सम्भवतीत्यत आह ।। **भवतीत्यादीति** ।। आदिपदेन प्रशस्तेत्यादिसङ्ग्रहः । प्रवृत्त्युपयुक्तवाक्यस्यैव सार्थकत्वेन घटोऽस्तीत्यादिवज्जिज्ञासा भवतीत्युक्ते प्रवृत्त्ययोगात्तत्कथनमनर्थकमित्यर्थः । दूषणान्तरमाह ।। **सूत्रं चेति** ।। तद्विजिज्ञासस्वेति श्रुतौ जिज्ञासाविधानात्तदनुसारेण जिज्ञासाविधायककर्तव्यपदमेवाध्याहार्यम् । न भवतीत्यादीत्यर्थः । अतोऽत्रेच्छाग्रहणायोगाच्छ्रवणादेरेव जिज्ञासात्वमिति भावः ।। **तत्कर्म हरितोषं यदिति** ।। यद्धरितुष्टिकरं तदेव कर्मेत्यर्थः ।। **य इति** ।। "य इमं परमं गुह्यं मद्भक्तेष्वभिधास्यति" इत्यत्राभिधापदोक्तप्रवचनस्य "न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तम" इत्युत्तरवाक्यस्यप्रियकृत्तमपदेन प्रसादहेतुत्वलाभादिति भावः । आदिपदेन श्रवणादि ग्राह्यम् । सिद्धेरित्यस्येत्याशङ्क्यमित्यनेनान्वयः । ननु प्रसादस्य कर्मादि-साध्यत्ववन्मोक्षस्यापि कर्मसाध्यत्वमपाम सोमममृता अभूम कर्मणैव हि संसिद्धिमास्थिता जनकादयः इत्यादिसिद्धम् । तत्र मोक्षस्य कर्मसाध्यत्वमनाशङ्क्य प्रसादस्य तत्साध्यत्वं किमर्थमित्याशङ्क्य परिहरति ।। **यद्यपीति** ।। **अन्यनिषेधादिति** ।। आद्ये 'नान्यः पन्था' इति द्वितीये तेनैवेत्यन्यनिषेधादित्यर्थः । अत एव प्राक्तेनैवेत्येवकारान्वयो दर्शितः ।। **ज्ञानसाध्यस्यैवेति** ।। अत एव प्राक् न च ज्ञानं विनाऽत्यर्थप्रसाद इत्यत्यर्थग्रहणमिति भावः । ननु मध्यमाज्जनलोकादिरिति श्रवणादिजन्यप्रसादाज्जन-लोकादिप्राप्तिकथनमयुक्तम् । "योगस्य तपसश्चैव ज्ञानस्य गतयोऽमलाः । महर्जनस्तपः सत्यं भक्तियोगस्य मद्गतिः" इत्येकादशभागवते ।

> नित्यशो भगवद्रूपस्यापरोक्ष्येण दर्शनम् ।
> मुहूर्तमात्रं ज्ञानं स्यान्महाज्ञानं ततोऽधिकम् ।

(वाक्यार्थमञ्जरी)

ज्ञानेन ब्रह्मलोकः स्यान्महाज्ञानाद्धरेर्गतिः ।
सदैवाखण्डितध्यानं तप इत्युच्यते बुधैः ।।

अपरोक्षदृशा युक्तं नित्यं षण्मात्रकालया ।
अपरोक्षदृशा नित्यमेकमात्रायुजा युतम् ।।

योगनाम्ना समुद्दिष्टं ध्यानं नित्यमखण्डितम् ।
तच्चतुर्भागया नित्यमपरोक्षदृशा युतम् ।।

पादयोगाख्यमुद्दिष्टं ध्यानं नित्यमखण्डितम् ।
पादयोगान्महर्लोको जनोलोकस्तु योगतः ।
तपसस्तु तपोलोकः प्राप्यते नान्यतः क्वचित् ।।

इति तत्तात्पर्ये, ''ईयुस्त्रीन्कर्मणा लोकाञ्ज्ञानेनैव तदुत्तरान्'' इति द्वितीयतात्पर्ये च जनोलोकादेर-परोक्षज्ञानमात्रसाध्यत्वस्मरणात् । एतेन जनोलोकस्यादिरिति जनलोकादिशब्देन महर्लोक एव गृह्यत इति निरस्तम् । उक्तरीत्या तस्याप्यपरोक्षज्ञानसाध्यत्वावगमादिति चेत् । उच्यते । अपरोक्षज्ञानं द्विविधम् । स्वयोग्यबिम्बादिदर्शनं ध्यानसामर्थ्यलब्धभगवन्मूर्तिसामान्यदर्शनं चेति । अत्र श्रवणादिभि-रित्यादिपदेन सामान्यदर्शनं च ग्राह्यम् । तथा च सामान्यदर्शनापरोक्षज्ञानसहितश्रवणादिजन्यप्रसादात् जनलोकादि प्राप्तिरुपपन्ना । न च दर्शनद्वैविध्यं सामान्यदर्शनस्य जनलोकादिहेतुत्वं चाप्रामाणिकम् । न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिरिति सूत्रे सामान्यदर्शनाल्लोका मुक्तिर्योग्यात्मदर्शनादिति भाष्यं च स्फुटत्वात् । एतदनुसारेण ज्ञानसम्पत्त्येति भाष्यं योग्यज्ञानसम्पत्त्येति व्याख्येयम् । अतो न कोऽपि विरोध इति ।। **आत्मेति** ।। अतो न तद्विरोध इति भावः । तच्छेषेण प्रमाणशेषेण । **श्रवणाद्यन्वयेति** ।। श्रवणाद्यन्वयव्यतिरेकप्रयुक्तान्वयव्यतिरेकप्रतियोगित्वादित्यर्थः । तदभावाज्ज्ञानान्वय-व्यतिरेकप्रयोजकान्वयव्यतिरेकप्रतियोगित्वाभावात् । पारम्पर्येण अन्तःकरणशुद्ध्यादिद्वारा । यद्यपि श्रवणमननयोरपि निदिध्यासनद्वारैव हेतुत्वं तथापि कर्मानधिकारिणां कर्मणा विनापि तन्त्रादिश्रवणादिना अपरोक्षज्ञानोदयाच्छ्रवणादिना विना कस्यापि ज्ञानोदयाभावाद्वैपम्यमिति भावः ।।

## विवृतिः

**नारायणप्रसादमिति** ।। भाष्यानुसारेणाह ।। **अत्रेति** ।। अन्यथा भाष्ये ज्ञानान्मोक्षस्याप्रतिज्ञातत्वेनैतत्

(विवृतिः)

श्रुत्युदाहरणमसङ्गतं स्यादिति भावः ।। **अनन्यथोपपत्त्येति** ।। यमेवैष वृणुते तेन लभ्यः, यस्य प्रसादादित्यादौ प्रसादस्यैव मोक्षसाधनत्वोक्तेः । प्रियोहीत्यादिना प्रसादस्य हेतुत्वोक्तेश्च । अन्यथा प्रसादं विना ज्ञानस्य मोक्षसाधनत्वानुपपत्तेरित्यर्थः ।। यद्वा ज्ञानस्य **अन्यथा** तमेवमित्यस्य प्रसादद्वारा ज्ञानस्य मुक्तिहेतुत्वप्रतिपादकत्वानङ्गीकारे, यस्य प्रसादात्तमेवं विद्वानिति श्रुतिद्वयनापरेण, नान्यः पन्था इति निषेधस्योपपत्त्यभावेनेत्यर्थः ।। **तेनैवेति** ।। लभ्यत्वं ज्ञेयत्वमपि भवतीति प्रागप्युदाहरणं युक्तमिति भावः ।। **दर्शनार्थमिति** ।। अनेन द्रष्टव्य इत्यनुवादरूपमित्युक्तं भवति । नन्वस्यां श्रुतौ श्रवणादिविचारो दर्शनसाधनत्वेनोच्यते । यत इत्यादिवाक्ये तु दर्शनार्थं जिज्ञासा कर्तव्यत्वेनोक्ता । श्रवणादिविचारस्य च जिज्ञासापदवाच्यत्वेन भिन्नविषयत्वात्कथं तत्र प्रमाणत्वेनैतत् श्रुत्युदाहरण-मित्याशङ्क्य परिहरति ।। **न च श्रवणादेरिति** ।। जिज्ञासितं सुसम्पन्नमिति व्यासं प्रति नारदवचने जिज्ञासितमित्यस्य विचारितमित्यर्थत्वस्य प्रकरणबलसिद्धत्वेन दृष्टान्तीकृतम् । ननु इच्छायामपि जिज्ञासापदप्रयोगादिच्छाऽत्र जिज्ञासापदवाच्या किं न स्यादित्यत आह ।। **इच्छाया अविधेयत्वादिति** ।। ननु सौत्रजिज्ञासापदवाच्यस्याविधेयत्वमेवास्त्विति तत्राह ।। **भवतीत्यादीति** ।। आदिपदेन प्रशस्तेत्याद्यर्थवादग्रहणम् ।। ननु सूत्रे जिज्ञासाशब्दोऽपि विचारार्थश्चेद्विचार इत्येव वक्तव्यम् अल्पाक्षरत्वानपगमात्, प्रत्युतासन्दिग्धत्वलाभाच्चेत्यत आह ।। **सूत्रं चेति** ।। तद्विजिज्ञासस्वेति श्रुत्यनुसारीत्यर्थः ।। कर्मादेः प्रसादसाध्यत्वप्रतिपादकवाक्योदाहरणपूर्वकं कर्मणेत्याद्युत्तरग्रन्थमवतारयति ।। **अस्तु मोक्ष इति** ।। **य इममिति** ।। अत्र मद्भक्तेष्वभिधास्यतीत्युक्तविचारस्य कश्चिन्मे प्रियकृत्तम इत्युक्तिबलात्प्रसादसाधनत्वमवगम्यत इति भावः ।।

ननु कर्मणैव हि संसिद्धिमास्थिता जनकादय इत्युक्तत्वात्कर्मणैव मोक्षो भविष्यतीति किं प्रसादेनेत्यपि कुतो न शङ्क्यते इत्यत आह ।। **यद्यपीति** ।। ज्ञानं साध्यस्यैवोत्तमत्वादिति ।। अत एव न च ज्ञानं विनाऽत्यर्थप्रसाद इति प्रागन्यथासिद्धिनिरासार्थमत्यर्थेत्युक्तमिति भावः ।। न चात्माऽवारे, इति वाक्यं श्रवणादिरूपजिज्ञासया ज्ञानं सम्पादनीयमित्युक्तत्वाच्च तत्कर्म ज्ञानसाधनं तथाचावश्यकी जिज्ञासेत्यत आह ।। **आत्मेति वाक्य इति** ।। कर्मादिरूपान्यसाधनस्यानिषिद्धत्वात्तेनैवोपपत्तौ न जिज्ञासया कृत्यमस्तीति भावः ।। **विपरीतमिति** ।। कर्मादि प्रधानसाधनं श्रवणादि तु अप्रधानमिति विपरीतं किं न स्यादित्यर्थः । ज्ञानस्य श्रवणाद्येव प्रधानसाधनं कर्मादि त्वप्रधानमित्यत्र युक्तिमाह ।। **ज्ञानस्येति** ।।

## सूत्रभाष्यम्

'ब्रह्म'शब्दश्च विष्णावेव । 'यमन्तः समुद्रे कवयोऽवयन्ति यदक्षरे परमे प्रजाः । यतः प्रसूता जगतः प्रसूती तोयेन जीवान्व्यससर्ज भूम्यामि'त्युक्त्वा 'तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनामि'ति (म.ना.उ.१-३, ६) हि श्रुतिः । 'तन्नो विष्णुरि'ति (म.ना.उ. ३-१६) वचनाद्विष्णुरेव हि तत्रोच्यते । न चेतरशब्दात्तत्प्राप्तिः । 'नामानि विश्वाऽभि न सन्ति लोके यदाविरासीदनृतस्य सर्वम् । नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ती'ति भाल्लवेयश्रुतिः ।। 'यो देवानां नामधा एक एव तं सम्प्रश्नं भुवनायन्त्यन्ये' (ऋ.सं.१०-८२-३) इत्येवशब्दान्नान्येषां सर्वनामता । 'अजस्य नाभावध्येकमर्पितं यस्मिन्विश्वानि भुवनानि तस्थुरि'ति (ऋ.सं. १०-८२-६) विष्णोर्हि लिङ्गम् । न च प्रसिद्धार्थं विनाऽन्योऽर्थो युज्यते ।। 'अजस्य नाभाविति यस्य नाभेरभूत् श्रुतेः पुष्करं लोकसारम् । तस्मै नमो व्यस्तसमस्तविश्वविभूतये विष्णवे लोककर्त्रे' इति स्कान्दे । 'परो दिवा पर एना पृथिव्ये'ति (ऋ.सं. १०-८२-५) समाख्याश्रुतौ ।। 'यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधामि'त्युक्त्वा 'मम योनिरप्स्वँतः समुद्र' (ऋ.सं. १०-१२५-५, ७) इत्याह ।

उग्रो रुद्रः । समुद्रेऽन्तर्नारायणः । प्रसिद्धत्वात्सूचितत्वाच्चास्यार्थस्य । न चाविरोधे प्रसिद्धः परित्यज्यते । उक्तन्यायेन च श्रुतय एतमेव वदन्ति ।

'वेदे रामायणे चैव पुराणे भारते तथा ।
आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयत' इति हरिवंशेषु ।।

## सत्तर्कदीपावली

विष्णुजिज्ञासया विष्णुप्रसादो युक्तः न तु ब्रह्मजिज्ञासयेत्यत आह ।। **ब्रह्मेति** ।। विष्णुरेव ब्रह्मेत्यत्र तद्विषयत्वेन प्रसिद्धश्रुतिमाह ।। **यमन्तरिति** ।। क्षीरसमुद्रशायित्वलिङ्गविशिष्टमन्तस्समुद्र इत्यादिनाऽनूद्य 'तदेव ब्रह्म परमं कवीनाम्' इति विधानात् । 'तन्नो विष्णुः प्रचोदया'दित्युत्तरत्र श्रवणाच्च । न च तत्रैव 'तन्नो रुद्र' इत्यादिश्रवणात् रुद्रादीनामपि ब्रह्मत्वप्राप्तिरिति वाच्यम् । तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमा इत्यादिना क्षीरसमुद्रशायिन्येव इतरदेवतानाम्नां रुद्रादिशब्दानां च मुख्यनिष्ठत्वात् । रुद्रादिनाममात्रवाच्यत्वं विष्णोः श्रुतिमाह ।। **नामानीति** ।। लोके तावत्सुरनरादिरूपे परमैश्वर्यादिप्रवृत्तिनिमित्ताभावाद्विश्वा-नीन्द्रादिनामानि अभितो मुख्यतो न सन्ति । अतोऽनृतस्य ब्रह्मव्यतिरिक्तस्य जगतः यस्मादैश्वर्यादिकं सर्वं

(सत्तर्कदीपावली)

मुख्यतो नामप्रवृत्तिनिमित्तम् आविरासीत् । तं च गुणसमुद्रं सर्वाणि नामानि आसमन्तात्परममुख्यतया विशन्ति तं विष्णुमेव परममुदाहरन्ति इत्यर्थः । अन्येषामपि विष्ण्वादिनामवत्वं किं न स्यादित्येतत् श्रुत्या परिहरति ।। यो देवानामिति ।। अत्र विश्वकर्तृत्वाद्विश्वकर्मनामा विष्णुरेवेति प्रतिपाद्यते न देववर्धक्यादिः । अजस्य नाभावध्येकमर्पितं यस्मिन्विश्वा भुवनानि तस्थुरिति पद्मनाभत्वाख्यविष्णुलिङ्गश्रवणविरोधात् । ननु पद्मनाभवदन्योऽप्यर्थः सम्भवतीत्यत आह ।। न चेति ।। न हि सर्वभुवनाश्रयपद्माधारनाभिमान् इतः पद्मनाभादन्यः श्रुतिपुराणादिप्रसिद्धोऽस्तीत्यर्थः । एतामेव श्रुतिमुदाहृत्य पद्मनाभप्रतिपादकपुराणवचनमाह ।। अजस्येति ।। व्यस्ता इन्द्रादीन् प्रति, समस्ता एकीकृत्य दत्ता ब्रह्माणं प्रति विश्वविभूतिर्येन स तथोक्तः । इतोऽपि विश्वकर्मसूक्ते प्रतिपादितो विष्णुरेव पर एना पृथिव्यै तावती महिना सम्बभूवेति परशब्द-स्यावध्यपेक्षत्वात् । दिवेत्यादेर्विभक्तिविपरिणामः कार्यस्ततश्चैतदुक्तं भवति । दिवः पर एतस्याः पृथिव्याश्च परो यः पुरुषोत्तमो निर्दिष्टो अस्य महिम्ना प्रभावेन अहमेतावती अहं रुद्रेभिर्वसुभिश्चरामीत्यारभ्य उक्त-माहात्म्यवती सम्बभूवेति.। द्यावापृथिवीदेवता चात्र लक्ष्मीरेव द्विरूपा विवक्षिता । तेन द्यावापृथिवीपरत्वं नाम विष्णोः प्रकृतिपरत्वमेव । न चात्र लक्ष्मीप्रभावकारणभूतः द्यावापृथिवीपरो विष्णुरेव कस्माद्? ब्रह्मादिः किं न स्यादिति वाच्यम् । यं कामये तं तमुग्रं कृणोमीत्यादिना रुद्रब्रह्मादीनां स्वसृज्यत्वमुक्त्वा मम योनिरप्स्वन्तः समुद्र इति क्षीरोदार्णवान्तःशयानस्य स्वप्रादुर्भावकारणस्य विष्णोर्निर्दिष्टत्वेन ब्रह्मादेर्लक्ष्मीच्छ्याऽऽप्तपदत्वेन विष्णोः प्रकृतिपरत्वेन सिद्धेः । ब्रह्मशब्देन चतुर्मुख इवात्र उग्रशब्देन रुद्र एवोच्यते । उग्रः कपर्दीति प्रसिद्धत्वात् । समुद्राप्स्वन्तर्योनिशब्दार्थस्य निर्देशेन च नारायणपदयौगिकार्थस्य सूचितत्वात् प्रसिद्धत्वाच्च स एवात्र निर्दिश्यते । नाराः आपः अयनं यस्य सः नारायणः । तन्नामग्रहणं लक्ष्म्या स्त्रीणां स्वभर्तृनामग्रहणम् । अनुचितमिति ज्ञापयितुं न कृतम् । न चोग्रशब्देन रुद्रादन्य एव गौण्या वृत्त्योक्तः किं न स्यादिति वाच्यम् । असति बाधके प्रसिद्धपरित्यागासम्भवात् । न चान्याधीनत्वे रुद्रस्य विश्वाधिको रुद्रो महर्षिरिति श्रुतिविरोध इति वाच्यम् । तच्छ्रुतेरुक्तरीत्या विष्णुपरत्वात् । 'शाश्वतं शिवमच्युतम्' इत्यादिश्रुतीतिहासादौ विष्णुविषयत्वेन शिवादिशब्दप्रयोगाच्च । एवं यत्र सर्वोत्तमत्वविषयतया प्रयोग इन्द्रादिशब्दानां विश्वस्मादिन्द्र उत्तर इत्यादिश्रुतीतिहासादौ तत्रोक्तवक्ष्यमाणन्यायैः विष्णुरेवोच्यते । तथाहि वचनम् ।। वेद इति ।। तदेतदाह । परो दिवेत्यादिना ।

## तत्त्वप्रदीपिका

ब्रह्मशब्दश्च विष्णावेवेत्यादेरयमर्थः ।

"समार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि ।।"

"ऋचोऽक्षरे परमे व्योमन् यस्मिन्देवा अधि विश्वे निषेदुः ।।"

(तत्त्वप्रदीपिका)

> ''अहं सुवे पितरमस्य मूर्धन्मम योनिरप्स्वंतस्समुद्रे ।''
> ''समुद्रेऽन्तः कवयो विचक्षते मरीचीनां पदमिच्छन्ति वेधसः ।''

इत्यैतरेयश्रुत्युदितं विष्णुमेव हि ''अम्भस्यपारे भुवनस्य मध्य'' इत्याद्या तैत्तिरीयश्रुतिः, ''यस्मिन्देवा अधि विश्वे निषेदुः'', ''यमन्तस्समुद्रे कवयो वयन्ति'', ''यतः प्रसूता जगतः प्रसूती''ति यच्छब्दैः परामृश्य ''विवेश भूतानि चराचराणी''ति विष्णुशब्दयोगेन चानूद्य ''तदेव ब्रह्म''त्याह ।। ''तन्नो विष्णु''रिति च स्पष्टं जगौ । यश्च देवतामीमांसान्ते ''विष्णुरेव हि तत् श्रुतेः'' ''तं ब्रह्मेत्याचक्षते तं ब्रह्मेत्याचक्षत'' इति सर्वदेवोत्तमत्वेन प्रतिज्ञातो ब्रह्मत्वेन चोक्तः, स एव ब्रह्मशब्देनोत्तरमीमांसायां विचार्यत्वेनोच्यते ।

**न चेतरशब्दात्तत्प्राप्तिः** । न च ''तदेवाग्निस्तद्वायुस्तदु चन्द्रमा'' इत्यादिशब्दात्तत्र तत्र रुद्रादिशब्दाच्च तेषां ब्रह्मत्वप्राप्तिः । विश्वानि नामानि लोकेऽभितो न सन्ति मुख्यतो न सन्ति, न मुख्यतो लोकवाचकानि । किन्तु यतो विष्णोरस्य जगतोऽनृतस्य जन्मलयादिकं सर्वमाविरासीत्, यं च वाचकत्वेन नामानि 'आ' समन्ताद्विशन्ति तं विष्णुमुत्तमं वदन्ति ।।

> ''ऋगताविति धातोस्तु पूर्वावगतवत्सदा ।
> स्थितेर्ब्रह्मर्तमित्युक्तमनृतं परिणामतः ।।
> प्रकृतिप्राकृतं प्रोक्तमसत्तदशुभत्वतः ।
> असतां बुद्धिगम्यत्वादसत्यमिति चोच्यते ।।'' इति व्यासस्मृतिः ।

''एतेषां वेदानामेतेषां देवानामेतेषां कालानामेतासां नाडीनामन्यस्य च सर्वस्य यानि नामानि तानि नारायणस्य नामानी''ति नारायणश्रुतिः । **न च प्रसिद्धार्थं विनाऽन्योऽर्थो युज्यत इति** । न च नाभ्यर्पितमेकं विश्वाधारभूतं पद्मादन्यद्युज्यते । न च नाभिपद्मवान्नारायणात्प्रसिद्धादन्यो युज्यते । अश्रुतकल्पनाप्रसङ्गात् । समस्तविश्वविभूतयो येन व्यस्ताः स 'व्यस्तसमस्तविश्वविभूतिः' । अथवा व्यास्तास्समस्ताश्च विश्वविभूतयो येन ।

परो दिवेत्यादेरयमर्थः । इतश्चैतस्मिन्सूक्ते विष्णुरेवोच्यते । इह हि द्यावापृथिव्योः पर इत्याख्या श्रूयते । श्रीसूक्ते चैतयाऽऽख्यया समाख्या श्रूयते । तत्र हि ''यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधा''मिति ब्रह्मादीनां देव्यधीनत्वमुक्त्वा ''मम योनिरप्स्वन्तस्समुद्र'' इति तस्य विष्ण्वधीनत्ववचनेन विष्णोस्सर्वोत्तमत्वं प्रतिपाद्यते । 'परो दिवे'ति पञ्चम्यर्थे तृतीया । द्यावापृथिव्योः श्रीभूम्योः परस्समुद्र-

(तत्त्वप्रदीपिका)

**शायी । अहम् 'एतावती' यथोक्तप्रकारा महिमा नाधिकेति । न चाविरोधे प्रसिद्धः परित्यज्यते, श्रुतहानिप्रसङ्गात् । उक्तन्यायेन चेति ।** प्रत्यधिकरणं वक्ष्यमाणैश्च न्यायैरित्यर्थः ।

## तत्त्वप्रकाशिका

ननु नारायणप्रसादमृते न मोक्षश्चेत्तर्हि तज्जिज्ञासैव कर्तव्या न ब्रह्मजिज्ञासा । न च वाच्यं नारायण एव ब्रह्मपदेन विवक्षितः सूत्रकृतेति । ब्रह्मशब्दस्य बह्वर्थत्वेन सूत्रकारविवक्षाविशेषस्य दुर्ज्ञेयत्वादित्यत आह ।। **ब्रह्मेति** ।। विष्णावेव मुख्य इति शेषः । ब्रह्मशब्दस्यानेकार्थत्वेऽपि तस्य विष्णावेव मुख्यत्वान्मुख्यस्यैव ग्राह्यत्वात्स एव सूत्रकारविवक्षितो ज्ञायत इति भावः ।। 'स विष्णुराह हि' ।। 'तं ब्रह्मेत्याचक्षत' इति निरन्तरसूत्रद्वयेन ब्रह्मत्वेन नारायणस्यैव प्रस्तुतिं सूचयति विष्णुग्रहणेन । ब्रह्मशब्दस्यान्यत्रापि रूढत्वात् रूढेरेव मुख्यत्वात् कुतो विष्णावेवासौ मुख्य इत्यत आह ।। **यमिति** ।। यद्यप्यन्यत्र रूढो ब्रह्मशब्दस्तथापि विष्णावेव मुख्यः । अन्यत्राज्ञरूढित्वाद्भगवति च विद्वद्रूढ्या ब्रह्मशब्द इति कवीनां तदेव परमं ब्रह्मेति श्रुत्युक्तत्वाद्विद्वदविद्वद्रूढ्योर्विद्वद्रूढेरेव मुख्यत्वात् । तच्छब्देन विष्णुरिति कुत इति चेत् । यमन्तःसमुद्रे स्थितं ज्ञानिनो जानन्तीति विष्णुलिङ्गादेवेति भावः । समुद्रस्थत्वलिङ्गस्यान्यत्र कथञ्चित्सम्भवात्तच्छब्देन कुतो विष्णुत्वनिश्चय इत्यतो निरवकाशश्रुतेरेवेत्याह ।। **तन्न इति** ।। यतस्तं विद्महे धीमहि च तस्मादस्माञ्शुभं प्रति विष्णुश्चोदयत्वित्यर्थः । यदि विष्णुशब्दात्स एवात्रोक्तं ब्रह्म तर्हि तन्नो रुद्र इत्यादीतरवाचकशब्दसद्भावात्तेषामपि मुख्यब्रह्मत्वं प्राप्तमित्यत आह ।। **न चेति** ।। कुतो नेतरेषां मुख्यब्रह्मत्वप्राप्तिरिति चेत् तत्प्रापकशब्दानां विष्णावेव मुख्यत्वादित्यभिप्रायेण तत्र श्रुतिमाह ।। **नामानीति** ।। सर्वाणि नामानि रुद्रादिजगति मुख्यतो न सन्ति यतो विष्ण्वितरस्य जगतः सर्वं नामप्रवृत्तिनिमित्तमुत्पत्तिमत् तर्हि कस्मिंस्तानि मुख्यतः सर्वाणि नामानि यं मुख्यतो वाचकत्वेन विशन्ति । तमपरिच्छिन्नप्रवृत्तिनिमित्तं विष्णुं वदन्ति विद्वांस इत्यर्थः । यथा सर्वनामवत्त्वेन विष्णुरेवात्रोक्तं ब्रह्म तथा रुद्रादीनामपि विष्ण्वादिशब्दवाच्यत्वेन त एवात्रोक्तं ब्रह्म किं न स्युरित्यत आह ।। **य इति** ।। नामधा नामधारकः । यच्छब्देन विष्णुरिति कुतोऽस्य सूक्तस्यान्यपरत्वादित्यत आह ।। **अजस्येति** ।। पद्मनाभत्वलिङ्गादयं विष्णुरेव । उत्सर्गतो लिङ्गाच्छ्रुतेः प्राबल्येऽपि निरवकाशलिङ्गेन सावकाशविश्वकर्मश्रुतेर्बाधसम्भवादिति भावः । नाभ्यर्पितं पद्मादन्यत्किं न स्यादित्यत आह ।। **न चेति** ।। नाभ्यर्पितो विश्वाधारः पदार्थः प्रसिद्धपद्माख्यार्थं विनाऽन्यो न युज्यते प्रसिद्धिबाधादित्यर्थः । विश्वकर्मश्रुतिवत्पद्मनाभत्वलिङ्गं चान्यस्यापि किं न स्यादित्यतो वाऽऽह ।। **न चेति** ।। पद्मनाभत्वेन प्रसिद्धपदार्थं भगवन्तं विनाऽन्यः पद्मनाभो न युज्यते प्रसिद्धिबाधादित्यर्थः । न केवलमेतच्छ्रुत्युक्तं पद्मं पद्मनाभस्य हरिः प्रसिद्धैव किन्तु तद्वाचित्वेन स्मृतिगृहीतत्वाच्चेत्याह ।। **अजस्येति** ।। अजस्य नाभाविति

(तत्त्वप्रकाशिका)

श्रुतेरित्यन्वयः । क्वचिद् व्यस्ताः क्वचित्समस्ता विश्वविभूतयो येनासौ तथोक्तः । पूर्वार्धे विष्णुवाचकाभावादुत्तरार्धोदाहरणम् । यदा निरवकाशत्वेन लिङ्गमात्रं श्रुतिबाधकं तदा किं वाच्यं समाख्यायुक्तं तदिति भावेनाह ।। **पर इति** ।। 'परो दिवा पर एना पृथिव्या परो देवेभिरसुरैर्यदस्ति' इत्यनेन विश्वकर्मसूक्तोक्तेन सूक्तान्तरे 'परो दिवा पर एना पृथिव्यैतावती महिना सम्बभूव' इति समाख्यानाच्च विष्णुरेव विश्वकर्मसूक्तोक्तः । न च तत्रापि विष्णुः कुत इति शङ्क्यम् । यतः समाख्याश्रुतौ द्यावापृथिवीपरं मम योनिरप्स्वन्तः समुद्रे इति लक्ष्मीः स्वकारणत्वेन समुद्रस्थितत्वेन चाह । न चास्तु लक्ष्मीकारणं ब्रह्माद्यन्यतममिति वाच्यम् । 'यं कामये' इति लक्ष्म्या ब्रह्मादीनां स्वाधीनत्वोक्तेरित्यर्थः । दिवेत्यादितृतीया पञ्चम्यर्थे । स विष्णुर्द्यावापृथिवीपरोऽहं तु महिम्नैतावती परिमिता बभूवेत्यर्थः । यमुग्रं ब्रह्माणमृषिं सुमेधसं वा कर्तुं कामये तं तमुग्रं ब्रह्माणमृषिं सुमेधसं वा करोमीत्यर्थः ।

नन्वत्र समुद्रस्थो रुद्रः किं न स्यात् । 'तप्यमानाय सलिले' इति भारतोक्तेः । न च रमाधीनत्वोक्तिविरोधः । उग्रशब्देन कस्यचित्क्रूरस्यैव ग्रहणसम्भवादित्यत आह ।। **उग्र इति** ।। अत्रोग्र इति रुद्र एव भवेत् । 'उग्रः कपर्दी श्रीकण्ठः' इति तस्यैवोग्रत्वेन प्रसिद्धत्वात् । उग्रशब्देन रुद्रशब्दार्थस्य सूचितत्वाच्च । उग्रो रुद्रो रौद्र इत्येकार्थत्वात् । तथा समुद्रस्थो नारायण एव भवेत् । समुद्रशयनत्वेन तस्यैव 'महोदधिशयोऽन्तक' इत्यादौ प्रसिद्धत्वात् । तथा समुद्रान्तस्थत्वकथनेन नारायणशब्दार्थस्य सूचितत्वाच्च । 'आपो नारा' इति स्मृतेरित्यर्थः । नन्वत्र प्रसिद्ध्यादिसद्भावेऽपि तत्परित्यागेनान्यस्वीकारे किं बाधकमित्यत आह ।। **न चेति** ।। प्रसिद्धार्थस्य विरोधकापोह्यत्वात् तदभावे तत्परित्यागो न युक्तः प्रसिद्धबाधादित्यर्थः । अत्रोग्रपदेन रुद्रग्रहणे 'विश्वाधिको रुद्र' इत्यादिश्रुतिविरोधात्तत्परित्याग इत्यत आह ।। **उक्तेति** ।। नामानि विश्वेत्याद्युक्तन्यायेन वक्ष्यमाणन्यायैश्च विश्वाधिकादिश्रुतीनां विष्णुपरतया न बाधकत्वमिति भावः । श्रुतीनां विष्णुवचकत्वे स्मृतिं चाह ।। **वेद इति** ।। एतद्वचनस्य हरिवंशत्रयगतत्वसूचनाय बहुवचनम् ।

## गुर्वर्थदीपिका

अवोपपदात् ''इण् गतौ''विति धातोरवयन्तीति रूपनिष्पत्तेः ''कवयोऽवयन्ती''त्यत्रावयन्ति जानन्तीत्यर्थः । ''यदाविरासीदनृतस्ये''त्यत्र ''ऋतं सत्यं परम्ब्रह्मे''ति श्रुतेः ऋतभिन्नस्येत्यर्थमभिप्रेत्योक्तं **विष्णिवतरस्येति** । विष्णुशब्दस्य विष्णौ लोके प्रसिद्धिवद्रुद्रे प्रसिद्ध्यभावेन रुद्रे सर्वनामवत्त्वे स्पष्टश्रुत्यन्तराभावेन श्रुत्यमूलकस्मृतेः स्वार्थासाधकत्वेन चैतच्छ्रुतेः रुद्रपरत्वे सिद्धे तस्यापि विष्णुनामवत्त्वं तत्सिद्धौ च तद्बलात् श्रुतेः रुद्रपरत्वसिद्धिरित्यन्योन्याश्रयं सत्येव दोषान्तरं वक्तुमाशङ्कते । **यथेति** । विश्वकर्मशब्दस्य विश्वं करोतीति व्युत्पत्त्या ''इन्द्रं मित्रं वरुणमग्निमाहु''रिति श्रुत्या च विष्णावेवावकाशः

(गुर्वर्थदीपिका)

न तु त्वष्टरीति भावेनोक्तम् । **सावकाशेति** । ''अजस्य नाभा''विति श्रुतेः प्रमाणाद्यस्य नाभेर्लोकसारं लोकात्मकतया सारं श्रेष्ठं पुष्करमेवाभूत् । न तु यत्किञ्चित्पुष्करम् । तस्यामेव यस्मिन्नाभ्यर्पितपुष्करं ''विश्वा भुवनानि तस्थु'' रित्युक्तेरिति स्मृतेः पूर्वार्धस्य भावः ।

समाना निश्चितार्थकत्वेन सम्यक्च या आख्या सा समाख्या । सा चात्र कथमिति चोद्यं परिहरति । **न च तत्रापीति** । रोदयति सर्वानिति व्युत्पत्त्या उग्ररुद्रशब्दयोरेकार्थ्यमिति भावेनोक्तम् । **उग्रशब्देनेति** । ''तप्यमानाय सलिल'' इत्यत्र स्मृतेः तपस्व्यन्तरवद्यत्किञ्चित्सलिलवासित्व-मात्रप्रापकत्वेऽपि समुद्रोदकवासित्वस्य सुतरामप्रापकत्वान्न रुद्रोऽयमिति भावेनाऽह । **तथा समुद्रस्य इति** । नामानि विश्वेत्याद्युक्तन्यायेनेत्यत्रादिपदेन ''यो देवानां नामधे''ति श्रुतिरपि सङ्गृह्यते । वैभवात्समाख्यारम्भेऽपि निरवकाशलिङ्गबलेनानयाऽपि श्रुत्या विष्णोरेव सकलदेवनामवत्त्वस्य निर्णीतत्वादेक एवेत्येवशब्देनान्येषां सर्वदेवनामवत्त्वस्य निषेधाच्च प्रबलयाऽनया श्रुत्या सकलश्रुतीनां विष्णुपरताया अवधारितत्वान्न कुचोद्यावकाश इति भावः ।

## भावबोधः

ब्रह्मशब्देन वाच्योऽयं विष्णुरेव हि मुख्यतः ।
मुख्यवाच्या न रुद्राद्याः किन्त्वमुख्यत एव ते ।।

इति विशेषवचनानुसारेणाह– **मुख्य इति । शेष इति** । अन्यथाऽवधारणानुपपत्तेरिति भावः । ननु नारायण एवेति वक्तव्ये किं तत्पर्यायविष्णुशब्दग्रहणेनेत्यतः–

स्वयं भगवता विष्णुर्ब्रह्मेत्येतत्पुरोदितम् ।
स विष्णुराह हीत्यन्ते देवशास्त्रस्य तेन हि ।।

इत्यनुव्याख्यानं मनसि निधायाह– **स विष्णुरिति** । एतत्सूत्रद्वयकरणानन्तरमेव ब्रह्ममीमांसाया आरब्धत्वान्निरन्तरत्युक्तम् ।

समुद्रशायी भगवान् य आधारो हि मुख्यतः ।
जगत्प्रसूती लक्ष्मीश्च यतः सृता चराचरम् ।।

(भावबोधः)

स एष सत्यरूपो यस्तद्ब्रह्म परमं हरिः ।
इति वेदविदः प्राहुस्तस्माद् ब्रह्मेति केशवः ।।

इति विशेषप्रमाणानुसारेण प्रवृत्तम् 'अन्तः' इत्यादिभाष्यमवतार्य व्याचष्टे– **ब्रह्मशब्दस्येत्यादिना** ।

यत्तत्र रुद्र इत्यादिवाक्यै रुद्रादिदेवताः ।
जिज्ञास्या इति श्रूयन्ते यथा विष्णुस्तथैव च ।।
विष्णुरेव हि जिज्ञास्य इत्येतत् कथमुच्यते ।।

इति प्रमाणानुसारेण 'न चेतरे'ति भाष्यमवतारयति– **यदि विष्णुशब्दादिति** ।

रुद्रादिनित्यनाम्नां हि प्रवृत्तेर्नित्यमेव तु ।
निमित्तं तत्र वक्तव्यं न रुद्रादेश्च नित्यता ।।

तत्प्रवृत्तेर्निमित्तं च नित्यं नैव हि विद्यते ।
तस्मात् समस्तनामानि हरेरेव न कस्यचित् ।।

इति प्रमाणानुसारेण श्रुतिं व्याचष्टे– **सर्वाणि नामानीत्यादिना** । मुख्यत इत्यस्यार्थः । **विष्ण्वितरस्येति** । अनेनानृतस्येति पदमृतशब्दवाच्यविष्णुभिन्नस्येति व्याख्यातं भवति । **मुख्यतो वाचकत्वेनेति** । मुख्यत इत्याद्योऽर्थः । वाचकत्वेनेत्यध्याहार इति बोध्यम् । परममित्यस्यार्थोऽ-परिच्छिन्नप्रवृत्तिनिमित्तमिति ।

एवं विष्ण्वादिवाच्यत्वं रुद्रादीनां न जातुचित् ।
समस्तनामधा विष्णुः स एवैको जनार्दनः ।

इति प्रमाणमूलकं यो देवानामित्यादिभाष्यमवतार्य व्याचष्टे– **यच्छब्देनेति** । **अन्यपरत्वादिति** । विश्वकर्मा विमना इति विश्वकर्मश्रुतेर्विश्वकर्मपरत्वादित्यर्थः ।

किञ्च ब्रह्मेति विष्णुर्हि यतो लक्ष्मीनियामकः ।
लक्ष्मीश्च ब्रह्मरुद्राणां कर्तुकामा करोति सा ।।

(भावबोधः)

लक्ष्मीनियामकत्वाच्च ब्रह्मेति विष्णुरुच्यते ।
यं कामये तमित्यादि श्रुत्यैतत् प्रतिपादितम् ।।
तस्माद्ब्रह्मप्रसिद्धिस्तु विष्णावेव न कुत्रचित् ।।

इति प्रमाणमूलकं भाष्यमवतार्य व्याचष्टे– **यदा निरवकाशत्वेनेति** । 'परो दिवा पर एना पृथिव्या' इति समाख्याश्रुताविति मूलस्य परो दिवेत्यादिरूपाऽर्थतः शब्दतश्च समानोक्तिरूपा समाख्या । यतः श्रुतौ विष्णुपरत्वेन निर्णीते अम्भृणीसूक्ते तिष्ठति, अतोऽत्रापि विष्णुरेवोच्यत इति यत इत्यादि-पदाध्याहारेण योजनामभिप्रेत्य तद्वाक्यं तावद्व्याख्याति । **परो दिवेति** । समाख्याश्रुतावित्येकमेव पदमित्यभिप्रेत्य व्याचष्टे– **समाख्याश्रुताविति** । **लक्ष्म्येति** । अस्य सूक्तस्य अम्भृणीदेवताकत्वात् अम्भृण्याश्च लक्ष्मीरूपत्वादिति भावः । 'त्यक्त्वा प्रसिद्धिं नान्यत्र वक्तुं शक्यं महामुने ।' इति प्रमाणमूलकं 'न चाविरोधम्' इति भाष्यमवतार्य व्याचष्टे– **नन्वत्र प्रसिद्ध्यादिभावेऽपीति** ।

'जिज्ञास्यो रुद्र इत्यादिश्रुतयो विष्णुमेव च ।
उक्तरीत्या वदन्त्येवं नात्र कार्या विचारणा ।।'

इति प्रमाणमूलकम् 'उक्तन्यायेन' इति भाष्यमवतार्य व्याचष्टे– **अत्रोग्रशब्देनेति** । **हरिवंशत्रयेति** । खिलाखिलपारिजातसंज्ञकहरिवंशभागत्रयेत्यर्थः ।

## भावदीपः

एवं संक्षेपविस्तराभ्यां सौत्राथातःपदार्थोक्तिपरं भाष्यं व्याख्याय ब्रह्मपदार्थोक्तिपरं भाष्यं विवृण्वानो ब्रह्मपदस्य नारायणपदेन व्याख्यातत्वात् ब्रह्मशब्दश्च विष्णावेवेत्यादिभाष्यं किमर्थमित्यत आह ।। **नन्वित्यादिना** ।। **बह्वर्थत्वेनेति** ।। बृह जातिर्जीवकमलासनशब्दराशिष्वित्यादेरिति भावः ।। **मुख्य इति शेष इति** ।। तेन बृहजातीत्यादेः, ब्रह्माणि जीवाः सर्वेऽपीत्यादेः, मम योनिर्महद्ब्रह्मेत्यादेः, स एनान् ब्रह्म गमयतीत्यादेः, कार्यं बादरिरस्य गत्युपपत्तेरित्यादेश्चाविरोध इति भावः ।। तत्र **मुख्यत्वाभावादिति** विष्णुपदोक्तिसूचितं ज्ञापकमाह ।। **स विष्णुरिति** ।। ननु द्वितीयसूत्रे तमित्युद्देश्यो विष्णुरिति कुतः । येन तस्यैव ब्रह्मत्वं स्यादित्यत उक्तम् ।। **निरन्तरेति** ।। अन्योन्याव्यवहितेत्यर्थः । सूत्रद्वयमध्ये अन्यद्व्यवधायकं सूत्रं नेति विष्णुरेव तमिति परामृश्यत इति भावः । ब्रह्मत्वेन ब्रह्मपद-मुख्यार्थत्वेन । प्रस्तुतिं प्रकृतत्वमित्युक्त्या देवमीमांसानन्तर्यमस्योक्तं भवति । निरन्तरेत्यस्य

(भावदीपः)

जिज्ञासासूत्राव्यवहितेत्यर्थ इत्यप्याहुः । उक्तं चानुभाष्ये ।। स्वयं भगवता विष्णुर्ब्रह्मेत्येतत्पुरोदितम् । स विष्णुराह हीत्यन्ते देवशास्त्रस्य तेन हीति । श्रुत्युक्तेरुपयोगाप्रतीतेराह ।। ब्रह्मेति ।। विद्वद्रूढ्येति ।। रूढिर्योगो योगरूढिः रूढोपचारो रूढलक्षणा उपचारो लक्षणेति लोकसिद्धसप्तवृत्तिभ्योऽन्यस्य महायोगविद्वद्रूढिरूपवृत्तिद्वयस्य ब्रह्मणि शब्दानां समाकर्षादित्यत्र वक्ष्यमाणत्वात् विद्वद्रूढ्येति सिद्धवदुपन्यासः । भाष्ये हिर्हेतौ । ब्रह्मशब्दश्च विष्णावेवेत्यन्वयः । तत्र च विद्वद्रूढ्येति शेषः । श्रुतौ परमपदोक्तमुख्यत्वस्य रूढिं विनानुपपत्तेरिति भावः । आहुरिति प्रयोगबाहुल्य-रूपरूढेरप्युपलक्षणमेतदिति ध्येयम् । प्रयोगमात्रबाहुल्यं रूढिरित्यभिधीयत इत्यनुभाष्योक्तेः ।। मुख्यत्वादिति ।। असम्भाविताज्ञानादिमूलत्वादिति भावः । यमित्याद्यंशस्य कृत्यमाह ।। तच्छब्देनेति ।। कवय इत्यस्यार्थो ज्ञानिन इति । अवयन्तीत्यस्य जानन्तीति । यत् यस्मिन् । अक्षरे अविनाशिनि । परमे प्रजाः अधीनाः । जगतः प्रसूती प्रसूतिर्जनित्री लक्ष्मीः । यतो यस्मात्प्रसूता उत्पन्ना । यच्च वस्तुतो येन तत्तत्कर्मणा स्ववीर्येण वा । तोयोपलक्षितैर्भूतैर्वा । भूम्यां पृथिव्यां पृथिव्यादिलोकेषु । जीवान्व्यससर्ज विससर्ज विविधं ससर्जेति तत्वनिर्णयटीकोक्तदिशा भाष्यशेषस्यार्थो ज्ञेयः ।। इति विष्णुलिङ्गादेवेति । समुद्रान्तःस्थत्वरूपलिङ्गादित्यर्थः । लिङ्गमसाधारणो धर्म इति वक्ष्यते । शब्दादेव प्रमित इत्यत्र श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां श्रुत्यर्थनिर्णायकत्वं च समन्वयसूत्रे वक्ष्यत इति भावः ।। निरवकाशश्रुतेरेवेति ।। अर्थान्तरराहित्यरूपनिरवकाशविष्णुशब्दरूपश्रुतेरेवेत्यर्थः । वक्ष्यति नाममात्रेण निर्देशः श्रुतिरिति । नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयादिति श्रुतौ चतुर्थ्याः विपरिणामेनार्थमाह ।। तमिति ।। तदिति श्रवणाद्यत इति शेषोक्तिः । शुभं प्रतीति च । तत्र इत्यस्यार्थस्तस्मादस्मानिति ।। विष्णावेवेति ।। तत्तदन्तर्यामिरूपभेदेन वा । विश्वेत्यस्यार्थः सर्वाणीति । लोक इत्यस्य रुद्रेत्यादि । अभीत्यस्य मुख्यत इति । यदित्यस्य यत इति । अनृतस्येत्यस्य तदवर्तमिति श्रुत्या ऋतपदवाच्यविष्णुभिन्नस्येत्यभिप्रेत्य विष्णिवतरस्येत्यर्थ उक्तः । आङोऽर्थो मुख्यत इति । परममित्यस्यार्थोऽपरिच्छिन्नेति । धारक इति । दधातेः क्विविति भावः । तं सम्प्रश्नं प्रश्न-विषयम् । अन्यानि भुवनानि यन्तीत्यर्थः ।। अन्येति ।। विश्वकर्मश्रुत्याः तत्परत्वादित्यर्थः । हिर्हेत्वर्थ इति मत्वाह ।। पन्नेति ।। ननु उपक्रमादिलिङ्गानां बलीयो ह्युत्तरोत्तरम् । श्रुत्यादौ पूर्वपूर्वं त्वित्युक्तेः कथं लिङ्गान्निर्णय इत्यत आह ।। उत्सर्गत इति । बाधेति ।। प्रसिद्धविश्वकर्मरूपार्थ-प्रच्यावनरूपबाधेत्यर्थः । वक्ष्यते चाऽयं न्यायोऽन्यस्तद्धर्मोपदेशादित्यत्र । श्रुतिबाधे च नगुक्तविश्व-कर्ममृक्तरूपप्रकरणस्यापि बाधः सिद्ध्यति । ज्योतिश्चरणेत्यत्र वक्ष्यमाणन्यायेनेति भावः । लिङ्गस्या-

(भावदीपः)

सिद्धिनिरासपरतया भाष्यं व्याख्याय निरवकाशत्वाभावनिरासपरतया व्याचष्टे ॥ **विश्वकर्मेति** ॥ **व्यस्ता इति** ॥ कचिज्जडे सृष्ट्यादयश्चतस्रो जीवेष्वष्टावित्येवंरूपेणेत्यर्थः । भाष्ये परो दिवेति श्रुतौ विष्णुलिङ्गोक्तेरुपयोगाप्रतीतेराह ॥ **यदेति** ॥ आदावपेक्षितं शेषमाह ॥ **परो दिवेत्यादिना समाख्यानाचेत्यन्तेन** । अपेक्षितपूर्तौ भाष्यवाक्यमवतार्य योजयति ॥ **न च तत्रेति** ॥ इत्याहेत्यत्र भाष्येऽपेक्षितकर्मार्पकं परो दिवेत्याद्येवेति भावेनाह ॥ **याबेति** ॥ **लक्ष्मीरिति** ॥ अस्य सूक्तस्याम्भृणीवाक्यत्वादम्भृण्याश्च श्रीर्भूर्दुर्गाऽम्भृणी ह्रीश्च महालक्ष्मीश्च दक्षिणेति बृहद्भाष्योक्तश्रुत्या लक्ष्मीमूर्तित्वादिति भावः । एवमग्रेपि । यं कामय इत्यादेः कृत्यमाह ॥ **न चेति** ॥ श्रुत्यर्थमाह ॥ **दिवेति** ॥ श्रीभूमिपर इति तत्वप्रदीपे । बभूवेत्युत्तमपुरुषम् । श्रुतावेनेति पृथिवीविशेषणम् अस्या इत्यर्थः । तं ब्रह्माणं तमृषिं तं सुमेधामिति शेषस्यार्थः ब्रह्माणमित्यादि । कृणोमीति विकरणव्यत्ययेन करोमीत्यर्थः ।

॥ **प्रसिद्धत्वादिति** ॥ अमरकोशादाविति भावः ॥ **महोदधीति** ॥ अम्भोनिधिरनन्तात्मा महोदधिशयोऽन्तक इति सहस्रनामसु ॥ **इति स्मृतेरिति** ॥ अन्तस्तद्धर्मेत्यत्र वक्ष्यमाणस्मृतेरिति ज्ञेयम् ॥ **अत्रेति** ॥ यं कामये तं तमुग्रमित्यत्रेत्यर्थः ॥ **वक्ष्यमाणेति** ॥ अन्तर्नयादौ प्रत्यधिकरणं वक्ष्यमाणेत्यर्थः । वेदे रामायणे चैवेति वक्ष्यमाणेति चार्थः । एतेन भाष्ये चः समुच्चय इति दर्शितम् ॥ **हरिवंशत्रयेति** ॥ खिलाखिलपारिजातरूपभागत्रयेत्यर्थः ।

## अभिनवचन्द्रिका

**नारायणप्रसादमृते न मोक्षश्चेदिति** ॥ ननु – न ब्रह्मजिज्ञासा कर्तव्येति पूर्वपक्षोऽनुपपन्नः । ब्रह्मपदेन नारायणाभिन्नस्यैव विवक्षितत्वरूपतद्धेतोरसिद्धेः किन्तु ब्रह्मजिज्ञासा कर्तव्या न वेत्याशङ्का स्यादिति वक्तव्यम् । यदि सूत्रकृता ब्रह्मशब्देन नारायण एव विवक्षितः स्यात्, तर्हि ब्रह्मजिज्ञासा कार्या अन्यथा तु नेति चेत्, उच्यते – नात्र पूर्वपक्षिणो नारायणादन्यस्यैव ब्रह्मशब्दार्थत्वमिति हेतुर्विवक्षितः । येनासिद्धिशङ्का स्यात् । न चैवं, किं नाम जात्यादिकं सर्वमपि ब्रह्मशब्दार्थः । ततश्च ब्रह्मशब्दार्थैकदेशनारायणजिज्ञासायाः सप्रयोजनत्वेन कर्तव्यत्वेऽपि न ब्रह्मशब्दार्थमात्रजिज्ञासायाः कर्तव्यत्वं निष्प्रयोजनत्वादिति हेतुर्विवक्षितः । ततश्चैवं योजना – नारायणप्रसादमृते न मोक्षो भवति चेत्, तर्हि नारायणजिज्ञासैव कर्तव्या स्यात् न तु सूत्रकारोक्तब्रह्मशब्दार्थस्य जात्यादेः सर्वस्य जिज्ञासा कर्तव्या स्यात् । न च सूत्रकृता ब्रह्मशब्देन नारायणस्यैव विवक्षितत्वात् सूत्रोक्ता ब्रह्मजिज्ञासा

(अभिनवचन्द्रिका)

**कर्तव्येति** वाच्यम् । नियामकाभावेन सूत्रकृता ब्रह्मशब्देन नारायण एव विवक्षितः न जात्यादिरित्यस्य निर्णेतुमशक्यत्वात् । नियामकाभावे जात्यादिवाचकेन ब्रह्मशब्देन जात्यादिसर्वग्रहणस्यैवोचितत्वात् । **प्रसिद्धार्थस्य विरोधैकापोद्यत्वादिति** ।। अपेति नोपसर्गः किन्तु उपसर्गप्रतिरूपकमव्ययम् । तेन 'वदः सुपि क्यच्चे'त्यत्र अनुपसर्ग इत्यनुवृत्तेः नात्र क्यप् सम्भवतीति निरस्तम् । **हरिवंश-त्रयगतत्वसूचनायेति** ।। बादरायणकृतहरिवंशादन्यौ हरिवंशौ रूपान्तरेण भगवत्प्रणीतौ स्तः । तत्रेदं वचनमस्तीति सूचनायेत्यर्थः ।

## वाक्यार्थमुक्तावली

एवं सङ्क्षेपविस्तराभ्यां सौत्राथातश्शब्दार्थोक्तिपरं भाष्यं व्याख्याय ब्रह्मशब्दार्थोक्तिपरं भाष्यं विवृण्वानो ब्रह्मपदस्य नारायणपदार्थत्वं कथमित्याशङ्कते । **नन्वित्यादिना** । नारायण एवेति वक्तव्ये किं विष्णुग्रहणेनेत्यत आह । **स विष्णुरिति** । निरन्तरत्वं परस्परसूत्रद्वयस्य जिज्ञासासूत्रात्पूर्वं देवमीमांसायां तथागतनिरन्तरसूत्रद्वये विष्णोरेव ब्रह्मत्वमवधार्य तदनन्तरमेवाथातो ब्रह्मजिज्ञासेति सूत्रप्रणयानाद्ब्रह्मशब्देन विष्णुमेव विवक्षितवान्सूत्रकार इत्यर्थः । तदुक्तम् । "स विष्णुराह हीत्यन्ते देवशास्त्रस्य तेन हि" इति । **विद्वद्रूढ्येति** । योगपूर्विकविद्वत्प्रयोजकवाहुल्यानुमितरूढ्येत्यर्थः । समाकर्षादित्यत्र लोके समवृत्तयो ब्रह्मणि महायोगविद्वद्रूढिलक्षणवृत्तिद्वयमिति वक्ष्यति । इति हि श्रुतिरिति भाष्ये हिशब्दो हेतावित्यभिप्रेत्याह श्रुत्युक्तत्वादिति । परमपदेन मुख्यत्वस्य कवीनां प्रवृत्तिनिमित्तज्ञानिनामित्यनेन कवीनां संमत्या तदेव परमं ब्रह्माहुरिति अनेन योगरूढेश्चोक्तत्वादिति भावः । यमित्यंशस्योपयोगमाह । **तच्छब्देनेति** । **अन्यत्र कथञ्चिदिति** । शिवे कथञ्चित्तपस्सिद्ध्यर्थत्वेनापीति भावः । यद्वक्ष्यति तप्यमानाय सलिल इति । **निरवकाशश्रुतेरेवेति** । श्रुतिर्नाम समुद्दिष्टमित्युक्तेर्निरवकाशविष्णुनाम-रूपतात्पर्यज्ञापकादेवेत्यर्थः । अभीत्यस्यार्थो मुख्यत इति । अनृतस्येत्यस्यार्थो विष्ण्वितरस्येति । पूर्वावगतवत्सदा स्थितेर्ब्रह्मर्तमित्युक्तेः ऋतशब्दस्य विष्णुवाचित्वात् । अविशन्तीत्याद्यर्थमाह । **मुख्यत इति** । वाचकत्वं प्रवृत्तिनिमित्तमुख्यत्वं वार्य इति भावः । परममित्यस्यार्थोऽपरिच्छिन्नेति । **नामधा नामधारक इति** । श्रुतौ दधातेः किबिति भावः । **अन्यपरत्वादिति** । विश्वकर्मपरत्वादित्यर्थः । लिङ्गस्यासिद्धिनिरासकतया भाष्यं व्याख्याय सावकाशत्वशङ्कापरिहारकतयाऽपि व्याचष्टे । **विश्वकर्मश्रुतिवदिति** । **क्वचिद्व्यस्ता इति** । इन्द्रादौ व्यस्ताः ब्रह्मादौ समस्ताः । **समाख्याश्रुताविति** । भाष्ये कस्य वाक्यस्य समाख्येति न प्रतीयतेऽतोऽध्याहृत्य योजयति । **परो दिवेत्यादिना**

(वाक्यार्थमुक्तावली)

**समाख्यानादित्यन्तेन** । एतेन समाख्याश्रुतावित्येत्समाख्यानाचेति पञ्चम्यन्ततया व्याख्यातं भवति । इदानीं समाख्याश्रुतौ मम योनिरप्स्वन्तः समुद्रे इत्याहत्यन्तमवतार्य व्याचष्टे । **न चेति** । यं कामय इत्याद्यवतार्य व्याचष्टे । **न चास्त्विति** । नामानि विश्वेत्याद्युक्तन्यायेनेति । ननु रुद्रादिनाम्नां विष्णुपरत्वस्याद्यप्यनिश्चितत्वान्नामानि विश्वेति भाल्लवेयश्रुतेरपि सत्प्रतिपक्षशङ्कायां "यो देवानां नामधा एक एवे"त्यारब्धश्रुतिसावकाशताशङ्कया अद्याप्यपरिहृतत्वात्कथं निर्धारणमिति चेन्न । प्रमाणविशेषमपहाय विष्ण्वादिनाम्नामपि रुद्रपरत्वं किं न स्यादिति सम्भावनामात्रेण भाल्लवेयश्रुतेः सावकाशत्वचोदनायोगात् । अन्तराधिकरणे समुद्रान्तःस्थितत्वादिलिङ्गानां निरवकाशत्वस्य स्पष्टं वक्ष्यमाणत्वाचेति भावेनोक्तन्यायेन चेति श्रुतय इति च शब्दस्तदर्थमाह । **वक्ष्यमाणन्यायैश्चेति** । वेदे रामायणे चैवेत्यादिवक्ष्यमाणन्यायैरिति वा । **हरिवंशेति** खिलाखिलपारिजाताख्य-भागत्रयगतत्वसूचनायेत्यर्थः ।

## तत्त्वसुबोधिनी

ब्रह्मशब्दश्च विष्णावेवेति साकाङ्क्षत्वात् शेषं पूरयति । **मुख्य इति शेष इति** । अन्यथाऽव-धारणानुपपत्तेरिति भावः । तथापि ब्रह्मशब्दस्यानेकार्थत्वान्नारायण एवात्र ब्रह्मपदेन कथं विवक्षित इत्यत आह । **ब्रह्मशब्दस्येति** । ननु नारायण एवेति वक्तव्ये किं तत्पर्यायविष्णुग्रहणेन इत्यत आह । **स विष्णुराह हीति** । एतत्सूत्रद्वयकरणानन्तरमेव ब्रह्ममीमांसाया आरब्धत्वान्निरन्तरेत्युक्तम् । नामानीति श्रुतौ अभि इत्यस्यार्थो मुख्यत इति । अनुतस्येत्यनेन ऋतशब्दवाच्यात् विष्णोरन्यद्विवक्षितमित्याह । **विष्ण्वितरस्येति । मुख्यतो वाचकत्वेनेति** । मुख्यत इत्याडोऽर्थः । वाचकत्वेन इत्याध्याहार इति बोध्यम् । परमं इत्यस्यार्थोऽपरच्छिन्नप्रवृत्तिनिमित्तमिति । ननु लिङ्गात् श्रुतेः प्रबलत्वात् कथं तेन विष्णुरेवापमित्यवसीयत इत्यत आह । **उत्सर्गत इति** । तद्वाचित्वेन ब्रह्मपद्मनाभशब्दयोः नाभ्यर्पितविष्णुवाचित्वेनेत्यर्थः । ननु तस्मा इत्युत्तरार्धोदाहरणं किमर्थमित्यताह । **पूर्वार्ध इति** । परो दिवा पर एना पृथिव्येति समाख्याश्रुताविति मूलस्य परो दिवेत्यादिरूपार्थतः शब्दतश्च समानोक्तिरूपायां समाख्याश्रुतौ यतो विष्णुरेवोच्यत इति यत इत्यादिपदाध्याहारेण योजनामभिप्रेत्य तद्वाक्यं तावद्व्याख्याति । **परो दिवेति** । समाख्याश्रुतावित्येकमेव पदमित्यभिप्रेत्य व्याचष्टे । **समाख्याश्रुताविति । लक्ष्म्येति** । अस्य सूक्तस्य अम्भृणीदेवताकत्वात् अम्भृण्याश्च लक्ष्मीमूर्तित्वात् इति भावः । नन्वुग्रशब्देन रुद्रशब्दार्थः

(तत्त्वसुबोधिनी)

**कथं सूचितः** इत्याशङ्क्य एकार्थत्वात् सूचनं युक्तम् इत्याह । **रुद्र इति । हरिवंशत्रयेति ।** खिलाखिलपारिजातसंज्ञकहरिवंशभागत्रयेत्यर्थः ।

## वाक्यार्थविवरणम्

'ॐ नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात्' इति विष्णुगायत्र्यर्थमाह ।। **यत इति ।** मन्त्रे तच्छब्दश्रवणाद्यत इत्यध्याहृतम् । चतुर्थीद्वयं द्वितीयार्थे इत्यभिप्रेत्य तम् इत्युक्तम् । विद्महे जानीमः । धीमहि चिन्तयामः ।। **नामधा इति ।।** धातुगतिशुध्योरिति धातोर्नामशोधक इति विप्रतिपत्तेरित्यर्थः ।। यद्वा ।। पोषणेऽपि धातोः प्रसिद्धत्वात् पोषकत्वप्राप्तेराह इत्यप्याहुः । विश्वविभूतयः ऐश्वर्याद्याः ।

## वाक्यार्थमञ्जरी

**बह्वर्थत्वेनेति** ।। बृह जातिजीवकमलासनशब्दराशिष्विति धातुव्याख्यानादिति भावः । विवक्षाविशेषस्य नारायणरूपस्य । ब्रह्मशब्दस्य बह्वर्थत्वात्कथमवधारणमित्यत आह । **मुख्य इति शेष इति** । यतो नारायणप्रसादेति नारायणशब्देन प्रकृतस्य विष्णुशब्देन ग्रहणे कारणमाह ।। **स विष्णुरिति** ।। स पूर्वोक्तो विष्णुरेव आह हि श्रुतिः । तं विष्णुं ब्रह्मेत्याचक्षते ज्ञानिन इत्यर्थः । द्वितीयसूत्रे तमिति विष्णुपरामर्शः कुत इत्यत उक्तम् । **निरन्तरेति** । अन्योन्यव्यवधानरहितेत्यर्थः । अव्यवहिताद्यसूत्रे विष्णोरुक्त्या द्वितीये तस्यैव परामर्श इति भावः । यद्वा निरन्तरेत्यस्य ब्रह्मजिज्ञासेति सूत्राव्यवहितेत्यर्थः । अनयोर्देवमीमांसान्तिमसूत्रत्वाद्देवमीमांसाकरणानन्तरमेव ब्रह्ममीमांसाया आरब्धत्वात् । तदुक्तं 'स्वयं भगवता विष्णुर्ब्रह्मेत्येतत्पुरोदितम् । स विष्णुराह हीत्यन्ते देवशास्त्रस्य तेन हि' इति । ब्रह्मत्वेन ब्रह्मशब्दस्य मुख्यार्थत्वेन । ब्रह्मशब्द इतीतिशब्दस्य श्रुत्युक्तत्वादित्यनेनान्वयः । कवीनामित्यन्वयप्रदर्शनं । तत्र कवीनामिति बहुवचनेन बहुज्ञानिप्रयोगावगमाद्विद्वद्रूढित्वं ज्ञायत इति भावः ।। **विद्वद्रूढेरेवेति** ।। अविद्वद्रूढरज्ञानमूलत्वादमुख्यत्वमिति भावः । तच्छब्देन तदेवेत्यत्रत्येन । अवयन्तीत्यस्यार्थो जानन्तीति । एतदर्थमेव तदंशोदाहरणमिति भावः । अवयन्तीत्यन्त एव भाष्ये श्रुतिपाठः । तावन्मात्रस्य व्याख्यानात् । समुद्रान्तःस्थत्वमात्राक्षेपसमाधानार्थेति ध्येयम् । लिङ्गात् समुद्रान्तःस्थत्वरूपात् । असाधारणधर्मो लिङ्गमिति वक्ष्यति । अन्यत्र रुद्रादौ । तप्यमानाय सलिल इति भारतोक्तेरिति भावः । समुद्रेऽन्तर्नारायण इति वक्ष्यमाणरीत्या तत्रासम्भवात्कथमिदमित्युक्तम् ।

(वाक्यार्थमञ्जरी)

निरवकाशश्रुतेरर्थान्तरे अवकाशरहितविष्णुशब्दात् । नाममात्रेण वस्तुनिर्देशः श्रुतिरिति वक्ष्यति । 'नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात्' इति श्रुतिं चतुर्थीविपरिणामेन व्याचष्टे ।। **यत इति** ।। तदिति तच्छब्दश्रवणाद्यत इत्यध्याहारः शुभं प्रतीति च । विद्महे जानीमः । धीमहि चिन्तयामः । चोदयतु प्रेरयतु चुद प्रेरण इति धातोः । **तन्नो रुद्र इति** । तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् इत्यादीत्यर्थः ।। **इतरवाचकेति** ।। अनेनेतर इति शब्द इतरशब्द इति प्रतीतिः निरस्ता ।। **तेषामपि मुख्यत्वमिति** ।। अनेन तच्छब्दस्तेषां तदिति तन्त्रेणोपात्त इत्युक्तं भवति ।। **विष्णावेवेति** । तदन्तर्यामिरूपविशेषेण वा महादेवत्वरुद्रत्वादिगुणविशेषेण वा तत्तच्छ्रुतौ विष्णुप्रार्थनाभेदान्न पौनरुक्त्यमिति भावः । अभीत्यस्यार्थो मुख्यत इति । अनृतस्येत्यस्य विष्ण्वितरस्येति । तदेवर्तमिति विष्णोः ऋतशब्दवाच्यत्वान्नत्रश्चान्योन्याभावार्थत्वादिति भावः । आङोऽर्थो मुख्यत इति । परमित्यस्यापरिच्छिन्नेति ।। **धारक इति** ।। दधातेः किविति भावः । एक एवेत्यन्त एव भाष्ये पाठः । इतरांशकृत्याभावात् । क्वचित्पाठे तु सम्प्रश्नं प्रश्नविषयम् । अन्यानि भुवनानि यन्तीत्यर्थः ।। **अन्येति** ।। विश्वकर्मेत्यर्थः । विश्वकर्मा विमनेति विश्वकर्मश्रुतेरिति भावः । ननु 'श्रुतिर्लिङ्गं समाख्या च वाक्यं प्रकरणं तथा । पूर्वं पूर्वं बलीय' इति श्रुतितो लिङ्गस्य दुर्बलत्वावगमात्कथं तेन निर्णय इत्यत आह ।। **उत्सर्गत इति** ।। स्वभावत इत्यर्थः ।। **सावकाशेति** ।। नामानि सर्वाणीत्युक्त्या भगवत्यवकाशो युक्त इत्यर्थः ।। **बाधेति** ।। प्रतीतार्थपरित्यागरूपेत्यर्थः । भाष्ये अधि तस्थुरिति सम्बन्धः । छन्दसि परेऽपि व्यवहिताश्चेति स्मरणात् ।

।। **अन्यदिति** ।। पद्ममित्यवचनादिति भावः ।। **प्रसिद्धीति** ।। श्रुत्यादिप्रसिद्धीत्यर्थः । एवं लिङ्गसमर्थनपरतया व्याख्याय तन्निरवकाशपरत्वेनापि व्याचष्टे ।। **विश्वकर्मश्रुतिवदिति** ।। उभयोरेकत्रासम्भवादाह ।। **क्वचिदिति** ।। जीवे व्यस्ताः सृष्ट्यादयः सर्वेऽपि जडे समस्ताः सृष्ट्यादयश्चत्वार इत्यादिरूपेणेत्यर्थः । सूक्तान्तरे विश्वकर्मसूक्तेन समाख्यानात् तत्प्रतिपाद्यार्थ-प्रदिपादनादिति यावत् । निर्णीतस्थले समानोक्तिः समाख्येति वक्ष्यति ।। **लक्ष्मीरिति** ।। अस्याम्भृणीवाक्यत्वात् अम्भृण्याश्च श्रीर्भूर्दुर्गाऽम्भृणी ह्रीश्च महालक्ष्मीति कीर्तितेति बृहद्भाष्योक्तरीत्या लक्ष्मीमूर्तित्वादिति भावः । भाष्ये अप्सु आ अन्तरित्यर्थः । श्रुतिं व्याचष्टे ।। **दिवेति** ।। एनेति पृथ्वीविशेषणम्, अस्या इत्यर्थः । सुमेधसं ज्ञानिनं कृणोमि करोमीत्यर्थः । तप्यमानाय तपः कुर्वाणाय । एकार्थत्वात् क्रूररूपैकार्थप्रतिपादकत्वात् । 'आपो नारा इति प्रोक्ता आपो वै नरसूनवः । अयनं तस्य ताः पूर्वं तेन नारायणः स्मृत' इति व्यासस्मृतिरन्तर्याधिकरणे उदाहरिष्यति । अत्र यं कामय इति वाक्यं । अपाबल्यात् बाध्यत्वात् । प्रसिद्धपदसूचितं हेतुमाह ।। **प्रसिद्धीति** ।। विरोधाभावोऽसिद्ध

(वाक्यार्थमञ्जरी)

**इत्याह ।। अत्रेति ।।** तथात्वे तस्य रमानीचत्वप्राप्तेरिति भावः । **वक्ष्यमाणेति ।।** वेदे रामायणे चैवेत्यादिना आनन्दमयनयमारभ्य प्रतिनयं वा वक्ष्यमाणेत्यर्थः । अनेन चः समुच्चय इत्युक्तं भवति ।। **हरिवंशत्रयेति ।** खिलाखिलपारिजातसंज्ञकहरिवंशभागत्रयेत्यर्थः ।

## विवृतिः

**ब्रह्मशब्दश्च विष्णावेवेत्यस्य साकांक्षत्वाच्छेषं पूरयति ।। मुख्य इति शेष इति ।।** अन्यथाऽवधारणानुपपत्तिरिति भावः । **तथापि ब्रह्मशब्दस्यानेकार्थत्वान्नारायण** एवात्र ब्रह्मपदेन कुतो विवक्षित इत्यत आह ।। **ब्रह्मशब्दस्येति ।।** ननु नारायण एवेति वक्तव्ये किं तत्पर्यायविष्णुग्रहणेनेत्यत आह ।। **स विष्णुरिति ।।** एतत्सूत्रकरणा नन्तरमेव ब्रह्ममीमांसाया आरब्धत्वान्निरन्तरेत्युक्तम् ।। नामानीति श्रुतौ अभीत्यस्यार्थो मुख्यत इति ।। अनृतस्येत्यनेन ऋतशब्दवाच्याद्विष्णोरन्यद्विवक्षितमित्याह ।। **विष्णितरस्येति ।। मुख्यतो वाचकत्वेनेति ।।** मुख्यत इत्याङोर्थः वाचकत्वेनेत्यध्याहार इति बोध्यम् ।। परममित्यस्यार्थोऽपरिच्छिन्नप्रवृत्तिनिमित्तमिति । ननु लिङ्गात् श्रुतेः प्रबलत्वात्कथं तेन विष्णुरेवायमित्यवसीयत इत्यत आह ।। **उत्सर्गत इति ।। तद्वाचित्वेन** ब्रह्मनाभशब्दयोर्नाभ्यर्पितविष्णुवाचित्वेनेत्यर्थः ।।

ननु तस्मा इत्युत्तरार्धोदाहरणं किमर्थमित्यत आह ।। **पूर्वार्ध इति ।।** परो दिवा पर एना पृथिव्येति समाख्याश्रुताविति मूलस्य परो दिवेत्यादिरूपार्थतः शब्दतश्च समानोक्तिरूपा समाख्या, यतः श्रुतौ विष्णुपरत्वेन निर्णीते अम्भ्रणीसूक्ते तिष्ठति, अतोऽत्रापि विष्णुरेवोच्यत इति यत इत्यादिपदाध्याहारेण योजनामभिप्रेत्य तद्वाक्यं तावद्व्याख्याति ।। **परो दिवेति ।।** समाख्या श्रुतावित्येकमेव पदमित्यभिप्रेत्य व्याचष्टे ।। **समाख्याश्रुताविति ।। लक्ष्म्येति ।।** अस्य सूक्तस्याम्भृणीदेवतात्वेनाम्भृण्याश्च लक्ष्मीमूर्तित्वादिति भावः ।। ननु उग्रशब्देन रुद्रशब्दार्थः कथं सूचित इत्याशङ्क्यैकार्थत्वात्सूचनं युक्तमित्याह ।। **रुद्र इति ।। हरिवंशत्रयेति ।।** खिलाखिलपारिजाताख्यहरिवंशभागत्रयेत्यर्थः ।।

## सूत्रभाष्यम्

**न चेतरग्रन्थविरोधः ।**

'एष मोहं सृजाम्याशु यो जनान्मोहयिष्यति ।
त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय ।।

अतथ्यानि वितथ्यानि दर्शयस्व महाभुज ।
प्रकाशं कुरु चात्मानमप्रकाशं च मां कुर्वि'ति वाराहवचनात् ।।

शैवे च स्कान्दे—

'श्वपचादपि कष्टत्वं ब्रह्मेशानादयः सुराः ।
तदैवाच्युत यान्त्येव यदैव त्वं पराङ्मुख' इति ।।

ब्राह्मे च ब्रह्मवैवर्ते—

'नाहं न च शिवोऽन्ये च तच्छक्त्येकांशभागिनः ।
बालः क्रीडनकैर्यद्वत् क्रीडतेऽस्माभिरच्युत' इति ।।

न च वैष्णवेषु तथा । 'तत्रैष मोहमि'त्युक्तम् ।।

## सत्तर्कदीपावली

न च वेदरामायणादिभिः विष्णुरेव सर्वोत्तमतया प्रतिपाद्यते चेत् पाशुपतादिग्रन्थैर्विरोधः तैस्तु रुद्रस्यैव सर्वैश्वर्यादितत्परत्वादिति वाच्यम् । लोकव्यामोहनार्थं विष्णुनियुक्तरुद्रकृतत्वेनोक्तत्वात्तेषां वराहपुराणे । तदाह ।। **न चेति** ।। मुह्यति तथ्यमिति प्रतिपादितानीत्यर्थः । तथा च पाद्मे । आगमैः कल्पितैस्त्वं च जनान्मद्विमुखान्कुर्विति । ननु वैष्णवेष्वेव पुराणेषु विष्णोः सर्वोत्तमत्वप्रतिपादनं नान्यत्रेत्यत आह ।। **शैव इति** ।। अतः शिवादेः सर्वोत्तमत्वप्रतिपादनं शैवपुराणेषु मोहार्थमेवेति मन्तव्यम् । न तु तद्वद्वैष्णवेषु विष्णवन्यस्य सर्वोत्तमत्वप्रतिपादनमस्ति । यत्र क्वचित्सन्दिग्धमिव दृश्यते तदेव मोहं सृजामि इत्यत्र मोहार्थत्वेन परिहृतमित्यर्थः ।

## तत्त्वप्रदीपिका

न च पाशुपतादिग्रन्थैर्विरोधः । तेषां मोहनार्थं सृष्टत्वात् । एष मोहं सृजामीति । मोहकारणं सृजामीति, जनानामनादिकर्मवासनानुरूपमिति यावत् । अतो न मोहशास्त्रवक्ता विष्णुराशङ्कनीयः । "अजस्यावक्रचेतस" इति हि श्रुतिः । "निरनिष्टो निरवद्य" इति च । त्वं च मोहशास्त्राणि कुरु अन्यैश्च कारय । अतथ्यानि अविद्यमानानि लिङ्गमूलमार्गणादीनि । वितथ्यानि ततो विगतत्वे सति तथ्यानि स्रष्टृत्वादीनि ।

न च शैवादिपुराणविरोधोऽपीत्याह शैवे चेति । यदि च शैवादिपुराणानां शिवायुत्तमत्वे तात्पर्य-मिष्यते, तर्हि पूर्वापरविरोधादप्रामाण्यं स्यात् । तेष्वपि विष्णोस्सर्वोत्तमत्वप्रतिपादनात् । तस्मात्पाशु-पतादिपरिकल्पितशिवायुत्तमत्वपरिपाटी पूर्वपक्षो दर्शनभायया तेपून्यस्यत इत्यभिप्रायः । न च वैष्णवेपु पुराणेपु तथा विष्णोरन्यस्योत्तमत्वमुक्तम् । यदि च यत्र क्वापि कस्यचित्समत्वादिकमुक्तमिव प्रतिभाति तद्बुद्धिकालुष्यात्पूर्वपक्षसिद्धान्तविभागापरिज्ञानादित्युक्तम् । तदेतदाह– तथैव मोहमित्युक्तमिति ।।

## तत्त्वप्रकाशिका

तथाप्यस्ति पाशुपतादिशास्त्रविरोधः । तत्र रुद्रादीनां सर्वोत्तमत्वायुक्तेरित्यत आह ।। न चेति ।। कुतो न विरोध इति चेत् तेषां मोहार्थं कृतत्वादिति भावेनाह ।। एष इति ।। मुह्यतेऽनेन जन इति मोहो नटनं वञ्चनं वा । त्वं च सृज दधीच्यादिभिः कारय च । अविद्यमानमतथ्यम् । व्यधिकरणत्वेन विद्यमानं वितथ्यम् । आत्मानं मां च प्रति । प्रकाशं प्रसिद्धिम् । स्कान्दादिपुराणानां शिवादिविषयत्वात्तद्विरोधः स्यादित्यत आह ।। शैवे चेति ।। ब्राह्मे ब्रह्मविषये । क्रीडनकैः क्रीडासाधनैरस्माभिः करणैः । तेषां शैवादित्वेऽपि न विरोधित्वम् । तत्रापि विष्णूत्तमत्वादेरेवोक्ततया स्वविरोधेन तत्राप्रामाण्यात् । न च विपरीतं किं न स्यादिति वाच्यम् । शिवायुत्कर्षादेः शैवादिपुराणेष्व-साधारण्येन प्राप्तत्वादिति भावः । तथापि विष्णूत्तमत्वरुद्राधमत्वयोर्वैष्णवग्रन्थविरोधोऽस्तीत्यत आह ।। न चेति ।। तथा सर्वोत्तमत्वादिविरोधः । ननु तत्रापि विष्णुना रुद्रस्तुत्यादि कथमुच्यत इत्यत आह ।। तथेति ।। यदुच्यते तथैव मोहमिति वचनान्मोहार्थत्वेन प्रत्युक्तमित्यर्थः । तस्माद्रुद्रादीनामधमत्वे बाधकाभावाद् कामय इत्यादौ तद्वचनाल्लक्ष्मीकारणत्वेन मम योनिरित्युक्तो विष्णुरेव । ततश्च तत्समाख्यानाद्विश्वकर्मसूक्तवाच्योऽपि स एव । तथा च तस्यैव यो देवानामिति सर्वनामत्वोक्तेर्नान्येषां सर्वनामताऽतस्तेषां तन्नो विष्णुरित्यादावप्राप्तेर्विष्णुरेव परं ब्रह्म । ततो विष्णावेव ब्रह्मशब्दस्य मुख्यत्वेन स एव सूत्रकृता जिज्ञास्यतया विवक्षित इति । तदेवं जिज्ञास्ये तद्ब्रह्मेति ब्रह्मपदश्रवणात्तेन च तस्य पूर्णगुणत्वोक्तेर्नानुभवसिद्धाल्पगुणजीवाभेदस्तस्येति सन्दिग्धत्वेन विषयत्वसिद्धेः प्रयोजनादिसद्भावाच्च ब्रह्मजिज्ञासा कर्तव्यैवातः शास्त्रमारम्भणीयमेवेति ।। १ ।। अ-१ ।।

## गुर्वर्थदीपिका

**भस्मधारणमात्रादेव कैलासगमनादिकमतथ्यम्** । व्यधिकरणतया विष्णौ विद्यमानं शिवे प्रोच्यमानं सर्वज्ञत्वादिकं वितथ्यमिति भावेनोक्तम् । **अविद्यमानमित्यादि** । शैवपुराणस्थशिवाधिक्य-विष्ण्वाधिक्यवचनयोर्मिथो विरोधे शिवाधिक्यवचनमेवाप्रमाणं तस्य पुराणान्तरसम्मत्यभावात् । विष्ण्वाधिक्यवचनस्य तु वैष्णवपुराणसम्मतिसद्भावात्प्रामाण्यमिति भावेनोक्तं **शिवाद्युत्कर्षादेरिति** । असाधारण्येन इतरपुराणसाधारण्याभावेनेत्यर्थः । शैवपुराणेषु "एष मोहं सृजामी"ति क्वाप्यनुक्तत्वान्मिथो विरोधो वज्रलेपायितः । वैष्णवपुराणेषु तु कचिद्विपरीतोक्तेः "एष मोह"मिति गतिकथनान्न क्वापि विरोध इति भावेनाह । **यदुच्यत इति** ।

## भावबोधः

यच्चोक्तं पाशुपतसौराद्यैर्मोहकैर्नयैः ।
शिवः सर्वोत्तम इति जिज्ञास्यत्वं शिवस्य च ॥

इति प्रमाणानुसारेण न चेतरेति भाष्यमवतारयति– **तथापीति** । सौराद्यैरित्यनुसारेण प्रथमादिपदेन सूर्यादिग्रहणम् । 'जिज्ञास्यत्वं शिवस्य च' इत्युक्तग्रहणाय द्वितीयादिपदम् ।

तथापि न विरोधोऽस्ति यतस्ते वै दुरागमाः ।

इति प्रमाणानुसारेणैष मोहमित्यस्याभिप्रायमाह– **तेषां मोहार्थमिति** । **नटनं वञ्चनं वेति** । नटनस्य क्रियारूपत्वाद्वञ्चनस्य शब्दरूपत्वाद्भिन्नार्थत्वमनयोः शब्दयोः स्पष्टमेव । 'अविद्यमानम्' लिङ्गमूलाद्यत्यन्तासत् । 'व्यधिकरणत्वेन विद्यमानम्' रुद्रस्यामर्दितसर्वविषभक्षणादि वाय्वाद्यन्यगतम् । **आत्मानं मां च प्रतीति** । यदीयं द्वितीया कर्मणि स्यात् तर्हि प्रकाशवन्तमिति स्यादिति भावः । अत एव 'प्रकाशं' प्रसिद्धिमिति व्याख्याति । अनेनाप्रकाशमप्रसिद्धिमित्यपि व्याख्यातं भवति । तथा च लोकेषु आत्मानं प्रति प्रसिद्धिं कुरु । न केवलमेतावत् । किन्तु मां प्रत्यप्रसिद्धिं च कुर्वित्यर्थ उक्तो भवति । **असाधारण्येन प्राप्तत्वादिति** । तस्यैव तद्ग्रन्थप्रतिपाद्यत्वेनाधिकृतत्वात् । तस्य ग्रन्थस्य शिवाद्युत्कर्षप्रतिपादनार्थमेव प्रवृत्तत्वादिति यावत् । तस्मिन्नपि प्रसङ्गे विष्णूत्तमत्वमुच्यमानं कथमविद्यमानं भवेत् ? न हि शैवपुराणादिकं विष्णूत्कर्षप्रतिपादनाय प्रवृत्तम्; येनाविद्यमानमपि विष्णूत्तमत्वं प्रतिपादयेदिति भावः । **तत्रैव मोहमिति वचनादिति** । अत्रोक्तमित्यत्यावृत्तिः । तत्राद्यस्य प्रत्युक्तमित्यर्थः ।

(भावबोधः)

इतिशब्दस्य यथाश्रुतस्य शब्दपदार्थकत्वव्यवस्थापकत्वम् । अत एवोक्तम् एष मोहमिति वचनादिति । द्वितीयोक्तशब्देनापि तस्यान्वयः । तदप्युक्तम् इत्युक्तमिति ॥

## भावदीपः

न चाविरोध इति पूर्वभाष्ये श्रुतिपुराणादिविरोधस्य प्रसिद्धरुद्रार्थत्याजनेन निरस्तत्वान्न चेतरेति किमर्थमित्यत आह ॥ **तथापीति** ॥ अत्रोग्रपदेन रुद्रग्रहण इत्यनुषङ्गः । भाष्ये एषोऽहमित्यर्थः ॥ **नटनमिति** ॥ विद्यमानाकाराच्छादनेनाविद्यमानाकारप्रदर्शनं नटनम् । वञ्चनं त्वविद्यमानकथनम् । सृजामीत्यस्य विपरिणामेनान्वयमाह ॥ **सृजेति** ॥ गीताभाष्यटीकायां तु कारयेति स्वार्थे णिजित्युक्तं द्वितीये । काप्यविद्यमानं लिङ्गमूलान्वेषणादिकमतथ्यमिति तत्वप्रदीपे । विष्णवादौ विद्यमानं रुद्रादिनिष्ठतयोच्यमानं स्वातन्त्र्यादिकं वितथ्यम् ॥ **आत्मानं मां चेति** ॥ कर्मप्रवचनीययुक्ते द्वितीया । आत्मानं प्रति प्रकाशं प्रसिद्धिं कुरु । मां च प्रति अप्रकाशं अप्रसिद्धिं कुरु । आत्मप्रसिद्धिं ममाऽ-प्रसिद्धिं च कुर्वित्यर्थः । भाष्ये इति वाराहवचनान्मोहार्थं कृतत्वावगमान्नेतरग्रन्थविरोधश्चेत्यन्वयः । शैवे चेत्यादेः सङ्गत्यप्रतीतेराह ॥ **स्कान्देति** ॥ शिवादीत्यादिपदेन ब्रह्मादिः ॥ **तद्विरोध इति** ॥ अत्रोग्रपदेन रुद्रग्रहण इति इहाप्यनुषङ्गः । ब्रह्मपुराणभ्रान्तिनिरासायाह ॥ **ब्राह्म इति** ॥ तेनाहमिति ब्रह्मोक्तिरिति दर्शितम् । एतेन शैव इत्यपि व्याख्यातम् । चोद्यनिरासप्रकारमाह ॥ **तेषामिति** ॥ तत्र शिवाद्युत्कर्षादावप्रामाण्यादिति भावः । तथेति व्याख्येयानुवादः ॥ **वचनादिति** ॥ भाष्ये वचनादित्यस्यानुवृत्तिः । उक्तमित्यस्य प्रत्युक्तमित्यर्थः । मोहार्थत्वेनेति शेष इति दर्शितम् । ननु सूत्रं व्याचक्षाणस्य किं प्रसक्तानुप्रसक्तानुपयुक्तोक्त्येत्यत: सर्वस्य प्रकृतोपयोगमाह ॥ **तस्मादिति** ॥ पुराणादौ शिवाद्युत्कर्षोक्तेर्मोहार्थत्वाद्विश्वाधिक इत्यादिश्रुतेर्विष्णुपरत्वादित्यर्थः । अयं च हेतुर्बाधकाभावं बोध्यः । तथा हीत्यादिनोक्तं सिद्धान्तप्रमेयमुन्मूलमिति भ्रमनिरासाय तद्विजिज्ञासस्व तद्ब्रह्मेति ब्रह्मशब्देन पूर्णगुणत्वोक्तेर्नानुभवसिद्धाल्पगुणजीवाभेद इति न्यायविवरणारूढं दर्शयन्नधिकरणार्थं प्रयोजनोक्त्यापि संहरति ॥ **तदेवमिति** ॥ तच्छब्दार्थं व्यनक्ति ॥ **ब्रह्मपदश्रवणादिति** ॥ एवमथ कस्मादुच्यत इति श्रुत्युक्तप्रकारेण पूर्णत्वोक्तेरित्यन्वयः । एतेन न्यायविवरणे ब्रह्मशब्देनेत्यत्र जिज्ञास्ये श्रुतेनेति, पूर्णगुणत्वेनेत्यत्र तस्येत्यपि योज्यमिति दर्शितम् ॥ **सन्दिग्धत्वेनेति** ॥ ब्रह्मशब्दादिना आपातप्रतीतस्य सगुणनिर्गुणाल्पगुणत्वादिना विप्रतिपत्त्या सन्दिग्धत्वेनेत्यर्थः । जिज्ञासा श्रवणादिरूपा । शास्त्रं न्यायग्रन्थ-नात्मकम् । टीकातात्पर्यविवृतौ व्यासतीर्थादयः क्षमाः । वयं तु तत्कृतव्याख्यालेशभा(जो)वं वदामहे ॥

## अभिनवचन्द्रिका

**तथापीति ।।** श्रुतिमात्रस्य भगवत्परत्वेन तद्विरोधाभावेऽपि पाशुपतादिशास्त्रविरोधोऽस्त्येवेत्यर्थः । **कुतो न विरोध इति ।।** चेच्छब्दः अत इत्यर्थे वर्तते । ततश्च कुतो न विरोध इत्यतः तेषां मोहार्थं कृतत्वादिति भावेनाहेत्यन्वयः । एतेन चेदित्यनन्तरं नेति निषेधेन भाव्यं तदभावात् न्यूनमिति परास्तम् । **नटनं वञ्चनं चेति ।।** मिथ्याज्ञानजनकीभूताचारो नटनं, मिथ्याज्ञानजनकं वचनं वञ्चनमिति भेदः । **शिवादिविषयत्वादिति ।।** शिवादीनां सर्वोत्तमत्वप्रतिपादकत्वादित्यर्थः । **इत्यत आहेति ।।** स्कान्दादिपुराणानां शिवाद्युत्कर्षप्रतिपादकत्वात्, तद्विरोधशङ्कापरिहाराय तेषां पुराणानां विष्णूत्कर्ष एव तात्पर्यं न शिवाद्युत्कर्ष इति भावेन विष्णूत्कर्ष प्रतिपादकं स्कान्दादिपुराणस्थं वाक्यद्वयमाहेत्यर्थः । **तेषां शैवादित्वेऽपीति ।।** तेषां शिवोत्कर्षप्रतिपादकत्वेन शैवादित्वेऽपि न तैर्विष्णूत्कर्षस्य विरोधः । तेषामपि विष्णूत्कर्ष एव तात्पर्यादिति भावः । **न च विपरीतमिति ।।** वैष्णवपुराणवत्स्कान्दादि-पुराणानामपि विष्णूत्कर्ष एव यदि तात्पर्यं तर्हि विपरीतं वैष्णवत्त्वं किं न स्यात् । न स्यादेवेति वाच्यमित्यर्थः । कुतो न वाच्यमित्यत आह – **शिवाद्युत्कर्षादिरिति ।।** शैवादिपुराणेषु शैवादित्वेन परिगणितपुराणेषु शिवाद्युत्कर्षादिः वैष्णवपुराणापेक्षया असाधारण्येन अतिशयेन प्रवृत्तत्वात् शैवादिसंज्ञेति भावः । कुतः स्कान्दादिपुराणानां विष्णूत्कर्षे तात्पर्यं स्वीक्रियते शिवादिसर्वोत्तमत्व एव तात्पर्यं किं न स्यादिति चेत्, न–

'वेदे रामायणे चैव पुराणे भारते तथा ।
आदावन्ते च मध्ये च विष्णुस्सर्वत्र गीयते' ।।

इति वेदभारतरामायणवत् पुराणमात्रस्य विष्णुपरत्वस्मरणात् । न च–

ऋगाद्या भारतं चैव पञ्चरात्रमथाखिलम् ।
मूलरामायणं चैवं पुराणं चैतदात्मकम् ।।

इत्यत्राखिलस्य पञ्चरात्रस्य प्रामाण्यमुक्त्वा एतदात्मकं पुराणमित्यभिधानात् स्कान्दादिपुराणानां वेदविरुद्धत्वम्, अप्रामाण्यं चाऽवर्जनीयमिति वाच्यम् ।

'ऋगाद्या अपरा विद्या यदा विष्णोर्न वाचकाः ।
ता एव परमा विद्या यदा विष्णोस्तु वाचकाः' ।।

(अभिनवचन्द्रिका)

इतिवत् वेदानुकूल्येन योजनायां प्रामाण्यमेव । वेदविरोधेन योजनायां अप्रामाण्यमेवेत्याशयेन 'ऋगाद्या' इति वचनस्य प्रवृत्तत्वात् । **तथा सर्वोत्तमत्वादिविरोध इति** ।। यथा शैवपुराणेषु विष्णुसर्वोत्तमत्वादिविषये बाहुल्येन विरोधः प्रतीयते न तथा वैष्णवेषु प्रतीयते इत्यर्थः । बाहुल्येन विरोधप्रतीत्यभावेऽपि काचित्कविरोधस्तु बाधको भविष्यतीत्याशङ्क्ते – **ननु तत्रापीति** ।। **यदुच्यत इति** ।। यत् क्वचिद्वेदविरुद्धत्वमुच्यते तन्मोहार्थमेवोच्यत इति न तद्विरोधो बाधक इति भावः । **प्रयोजनादिसद्भावाच्चेति** ।। ननु ब्रह्मजिज्ञासाकर्तव्यत्वे विषयादिसद्भावः प्रत्येकं हेतुः उत मिलितः । नाद्यः – सविषयस्यापि काकदन्तविचारस्याऽनारम्भणीयत्वेन व्यभिचारात् । न द्वितीयः – प्रयोजनादिसद्भावाच्चेति चशब्दानुपपत्तेः । किञ्च – प्रयोजनसद्भावमात्रस्य व्यभिचाराभावेन विशेषण-वैयर्थ्यमिति चेत्; न ब्रूमो वयं सविषयत्वादीनां प्रत्येकं हेतुत्वं, नापि मिलितानाम् । येनोक्तदोषः स्यात् । किं नाम, प्रयोजनवत्त्वमात्रस्य । विषयादिनिरूपणं तु जिज्ञासा कर्तव्या प्रयोजनवत्त्वात् इत्यनुमानस्य निर्विषयत्वादिहेतूनामसिद्धत्वेन न तैः प्रतिपक्ष इति सूचनाय । ततश्चैवं योजना – प्रयोजनवत्त्वेन साधकसद्भावात् विषयादिसद्भावेन प्रतिपक्षाभावात् कर्तव्या जिज्ञासेति ।

**पूर्वपक्षस्तु–** शास्त्रमिदमनारम्भणीयं न्यायानुसंधानरूपविचारस्यैवाकर्तव्यत्वात् । तदकर्तव्यत्वं च निर्विषयत्वादिहेतुभ्यः । तथा हि– विषयत्वाभिमतं ब्रह्म न जीवाद्भिद्यते मानाभावात् । मानं भवत् प्रत्यक्षमनुमानमागमो वा । नाद्यः – घटपटवज्जीवेश्वरयोर्भेदानुपलम्भात् । न द्वितीयः – कामगामित्वात् । न तृतीयः परस्पराश्रयात् । तथा हि– उपक्रमादिभिरनिर्णीततात्पर्यकस्य भेदागमस्य 'यजमानप्रस्तर' इत्याद्यागमस्य प्रतीतार्थप्रामाण्यप्रसङ्गेन भेदे प्रामाण्यायोगात् उपक्रमादिनिर्णीततात्पर्यस्यागमस्य भेदे प्रामाण्यं वाच्यम् । तथा च शास्त्रेणोपक्रमाद्यनुसंधानरूपविचारप्रवृत्तौ निर्णीततात्पर्येण वेदेन भेदसिद्धिः । तत्सिद्धौ जीवभिन्नस्य ब्रह्मणः सन्दिग्धत्वापत्त्या शास्त्रेण विचारप्रवृत्तिरिति । जीवात्मकत्वे च स्वप्रकाशत्वेन नित्यसिद्धत्वात् न विषयत्वम् । नापि प्रयोजनम् । तथा हि– प्रयोजनं भवत्, स्वर्गादि, अभ्युदयो वा स्यात् । नाद्यः – लघूपायेन तत्सिद्धेः । नापि मोक्षः – जिज्ञासानन्तरं मोक्षानुपलम्भात् । अस्तु जीवव्यतिरिक्तं ब्रह्म तथापि नापरोक्षद्वारा विचारस्य तद्धेतुत्वं, साक्षात्कृतब्रह्मणामपि वसिष्ठादीनां तदनुपलम्भात् । विषयाभावात् प्रयोजनाभावाच्च । अथशब्दोक्ताधिकारिविशेषणाऽसम्भवेन न ब्रह्मजिज्ञासायामधिकारी विद्यते । अत एव न सम्बन्धोऽपीति ।

(अभिनवचन्द्रिका)

**सिद्धान्तस्तु**— कर्तव्यैव ब्रह्मजिज्ञासा सप्रयोजनत्वात् । न च निर्विषयत्वेन सत्प्रतिपक्षतेति वाच्यम् । जीवभिन्नस्य ब्रह्मण एव विषयत्वसम्भवेन निर्विषयत्वासिद्धेः । न च भेदे मानाभावः । 'तद्विजिज्ञासस्व तद्ब्रह्मे'ति श्रुतिसिद्धपूर्णत्वस्यैव मानत्वात् । न च – जडे साधारण्यं, जीवासम्भावितगुणत्वस्य हेतुत्वेन विवक्षितत्वात् । न चानुमानस्य कामगामित्वं – 'भिन्नोऽचिन्त्यः परमो जीवसंघा'दिति श्रुतिमूलत्वात् । न चोपक्रमाद्यनुसन्धानरूपविचारप्रवृत्तौ 'भिन्नोऽचिंत्य' इत्याद्यागमानां भेदे तात्पर्यनिर्णयः । तस्मिन् सति प्रकृतानुमानस्य प्रमाणत्वेन जीवभिन्नविषयसिद्धिः । तत्सिद्धौ च विचारप्रवृत्तिरित्यन्योन्याश्रय इति वाच्यम् – तात्पर्यसन्देहे सत्येव विचारापेक्षणात् । 'भिन्नोऽचिन्त्य' इत्यादिश्रुतौ सन्देहाभावेन विचाराऽनपेक्षणात् । अन्यथा उपक्रमादीनामपि स्वार्थे तात्पर्यनिर्णयायोपक्रमाद्यन्तरमन्वेषणीयं स्यादित्यनवस्था । तथा च– जीवभिन्नस्य ब्रह्मणः सन्दिग्धत्वेन न निर्विषयत्वेन प्रतिपक्षः । व्याप्यस्य प्रयोजनस्य सद्भावेन व्यापकस्याऽधिकारिणोऽपि सिद्धेः न तदभावेनापि न प्रतिपक्षः । ननु– साक्षात्कृत-ब्रह्मणामपि वसिष्ठादीनां मोक्षाऽनुपलम्भेन सप्रयोजनत्वमसिद्धमिति चेत्, न – अनुपलम्भः किं प्रत्यक्षेण, उत प्रत्यक्षमात्रेण । नाद्यः – परमाण्वादीनामप्यभावप्रसङ्गात् । द्वितीये वर्तमानकाले सत्त्वाऽनुपलम्भः । उत कदापि । नाद्यः – ज्योतिष्टोमाद्यनुष्ठानाभावप्रसङ्गात् । नान्त्यः– ब्रह्मप्रलयानन्तरं वसिष्ठादीनां मोक्षोपलम्भश्रवणात् । अत एव सम्बन्धाभावश्च परास्त इति न तदभावेनापि प्रतिपक्ष इति । विचारः कर्तव्य एवेति शास्त्रमारम्भणीयमिति सिद्धम् । (१-१-१)

## वाक्यार्थमुक्तावली

**पाशुपतादिशास्त्रविरोध इति** । अम्भृणीसूक्ते उग्रपदेन रुद्रग्रहणस्येति शेषः । भाष्ये एष इत्यनन्तरमहमिति शेषः । नटनं व्यापारं वचनं ग्रन्थम् । सृजामीत्यस्य पुरुषव्यत्ययेनार्थमाह । **त्वञ्च सृजेति** । प्रमेयदीपे तु त्वं च कारय कुर्विति स्वार्थे णिजिति व्याख्यातः । काप्यविद्यमानं लिङ्ग-मूलान्वेषणमतथ्यम् । रुद्रादौ विद्यमानम् अस्वातन्त्र्यादिकं विष्ण्वादिनिष्ठतयोच्यमानं वितथ्यम् । यद्वा नारायणादौ विद्यमानं रुद्रादिनिष्ठतयोच्यमानं सर्वोत्तमत्वादिकं वितथ्यम् । अथवा व्यधिकरणत्वेन विद्यमानं रुद्रस्यामर्दितसर्वविषभक्षणादि वाच्याद्यन्यगतम् ।

ननु प्रकाशशब्दः काशतेरकर्मकाद्भावे घञि कृते निष्पन्नः प्रसिद्ध्यर्थः । तथा च आत्मानं प्रकाशं प्रसिद्धं कुरु मामप्रसिद्धं कुर्विति कथं सामानाधिकरण्यमित्यत आह । आत्मानश्च प्रतीति । ब्राह्मपुराणं ब्रह्मवैवर्तं चेति प्रतीतिनिरासाय आह । **ब्राह्म इति** । शैवं चेत्यत्र तु शैवाख्यपुराणान्तरा-

(वाक्यार्थमुक्तावली)

भावादेव शिवविषय इति स्वत एव प्रतीतेरशिवविषय इति न व्याख्यातम् । **तेषां शैवादित्वेऽपीति** । शिवादिसर्वोत्तमत्वविषयतया तत्परत्वेऽपीत्यर्थः । **तत्र प्रामाण्यादिति** । शिवाद्युत्कर्षप्रामाण्यादित्यर्थः । शैवब्रह्मपदव्यावत्याशङ्काप्रदर्शनपूर्वकं भावमाह । **न च विपरीतमिति** । शैवभागविरोधेन श्वपचादापीत्यादिवैष्णवभागस्य विष्णूत्कर्षेऽप्रामाण्यं किं न स्यादित्यर्थः । **असाधारण्येनेति** । उद्देश्यतया प्राप्तत्वादित्यर्थः । इदमुक्तं भवति । असाधारणतया शिवाद्युत्कर्षं प्रतिपादयितुं खलु तत्प्रवृत्तिः । तत्प्रकरणेऽन्योत्कर्षप्रतिपादने तत्सत्यमेवाङ्गीकार्यम् । अन्यथा तदप्रतिपादनप्रसङ्गात् । न च पूर्वपक्षतया प्रतिपादनं निषेधाभावात् । प्रत्युतोपसंहारागतत्वेनैव तन्निषेधौचित्यात् । विस्तरस्तु गीताभाष्यटीकातोऽवगन्तव्यः । **तच्चैष मोहमित्युक्तमित्यत्र** इतिशब्दो द्विरावर्तते । एकस्य शब्दपरत्वं इति वचनादित्यर्थः । मोहार्थत्वेनेति शेषः । उक्तमित्यस्यावृत्तिः । आद्यस्य प्रसक्तमित्यर्थः । द्वितीयस्येतिशब्देनान्वय इत्यभिप्रेत्य व्याचष्टे । **यदुच्यते तच्चेति** । प्रसक्तानुप्रसक्त्या बहुग्रन्थोक्तमेकबुद्ध्यारोहाय पिण्डीकृत्य दर्शयति । **तस्मादिति** । शिवाद्युत्कर्षोक्तेर्मोहार्थत्वाद्विश्वाधिकादिश्रुतेर्विष्णुपरत्वादित्यर्थः । सूत्रं व्याख्यातुमुपक्रम्य ब्रह्मशब्दश्चेत्यादिकथनस्य कोपयोग इत्यत आह । **अतो विष्णावेवेति** । अधिकरणार्थमुपसंहरति । **तदेवमिति** ।

## तत्त्वसुबोधिनी

रुद्रादीनामित्यादिपदेन सूर्यादयो ग्राह्याः । द्वितीयादिपदेन जिज्ञास्यत्वं ग्राह्यम् । **नटनं वञ्चनं वेति** । विद्यमानाकाराच्छादनेनाविद्यमानाकारान्तरप्रदर्शनं नटनम् । वञ्चनन्तु अविद्यमानकथनम् । **अविद्यमानमिति** । क्वाप्यविद्यमानं लिङ्गमूलान्वेषणादिकमतथ्यम् । विष्ण्वादौ विद्यमानं रुद्रादिनिष्ठतया उच्यमानं स्वातन्त्र्यादिकं वितथ्यम् । आत्मानं मां च प्रति । यदीयं द्वितीया कर्मणि स्यात् तर्हि प्रकाशवन्तमिति स्यादिति भावः । अत एव प्रकाशं प्रसिद्धिमिति व्याख्याति । अनेनाप्रकाशमप्रसिद्धिमित्यपि व्याख्यातं भवति । तथा च लोकेषु आत्मानं प्रति प्रसिद्धिं कुरु । न केवलमेतावत् । किन्तु मां प्रति अप्रसिद्धिं च कुरु इति अर्थः उक्तो भवति । **तत्रेति** । रुद्रसर्वोत्तमत्वे इत्यर्थः । **न च विपरीतं किं न स्यात् इति वाच्यमिति** । विष्णुसर्वोत्तमत्वप्रतिपादकस्यैवाप्रामाण्यमिति विपरीतं किं न स्यादिति न वाच्यमित्यर्थः । **असाधारण्येनाप्राप्तत्वादिति** ।। तस्यैव तद्ग्रन्थप्रतिपाद्यत्वेनाधिकृतत्वात् तस्य ग्रन्थस्य शिवाद्युत्कर्षप्रतिपादनार्थमेव प्रवृत्तत्वादिति यावत् । तस्मिन्नपि प्रसङ्गे विष्णूत्तमत्वमुच्यमानं कथमविद्यमानं भवेत् । न हि शैवपुराणादिकं विष्णूत्कर्षप्रतिपादनाय प्रवृत्तम् ।

(तत्त्वसुबोधिनी)

येनाविद्यमानमपि विष्णूत्तमत्वं प्रतिपादयेदिति भावः । **तथापीति** । विष्णूत्तमत्वरुद्राधमत्वप्रतिपादक-वैष्णवग्रन्थेषु रुद्रोत्तमत्वस्यापि कचिदुक्तत्वादेषामपि परस्परविरोधोऽस्तु इत्यर्थः । **तच्चैष मोहमिति वचनादिति** । अत्रोक्तमित्यस्यावृत्तिः । तत्राद्यस्य प्रत्युक्तमित्यर्थः । इतिशब्दस्य यथाश्रुतस्य शब्दपदार्थकत्वव्यवस्थापकत्वम् । अत एवोक्तमेष मोहमिति वचनादिति । द्वितीयोक्तशब्देनापि तस्यान्वयः । तदप्युक्तम् इत्युक्तमिति ॥ १ ॥

## वाक्यार्थविवरणम्

**शैवादित्वेऽपि** शिवादिप्रतिपादकत्वेऽपि । **तत्रापि** शैवस्कान्देऽपि । **तत्र** शिवाद्युत्कर्षप्रतिपादके । अतथ्यम् अविद्यमानं लिङ्गमूलान्वेषणादीति भावबोधे । अयमत्र सेतुमाहात्म्ये इतिहासः । विष्णुविरिञ्चौ उत्तमत्वे विवदमानौ रुद्रमीयतुः । तदा स तावुभौ प्रत्याह । मम सकिरीटं शिर अवलोक्यायाहीति । विरिञ्चः नभस्युपरि गत्वा गत्वा मूर्धानमपश्यन् श्रान्तः । तदा केतकी कामधेनुश्च मूर्धत आगमिष्यन्तौ ददृशे । कस्मात्स्थानादागच्छतमिति पृष्टावूचतुः । 'बहुकल्पकाल आसीत् । त्वमद्यापि नैकदेशमप्यागतः । तस्माद् व्यावृत्यावाभ्यां सहागच्छ' इत्युक्तः विरिञ्चस्तथा चक्रे । 'मया त्वच्छिरोऽवलोकितम् । तत्रैतौ साक्षिणौ' इति प्रोवाच । तावपि तथैवमिति प्रोचतुः । तद्विचार्य मम शिरःस्थानगमनम् अहं न जानामि वाम् । यूयं त्रयो मृषावादिन इत्युक्त्वा तान् शशाप । मुखमग्राह्यं भूयादिति धेनुं, शिवपूजानर्हा भूया इति केतकीं, त्वं पूज्यो मा भूरिति विरिञ्चं च । अथ विष्णुरपि पातालपर्यन्तं गत्वा तत्र लिङ्गमूलमनवलोक्य परावृत्य, नाहं लिङ्गमूलं जानामीत्याह । ततः शिव एवाधिको नेतरौ इति प्रसिद्धमभूदिति ॥ विपरीतं विष्णूत्कर्षप्रतिपादन एवाप्रामाण्यमित्यर्थः ॥ **असाधारण्येनेति** ॥ शिवादीनधिकृत्य प्रवृत्तत्वेनेत्यर्थः । तदुद्देशेनैव प्रवृत्ते स्तुत्यादौ तत्राविद्यमानोक्तिः । तत्र प्रसङ्गात्प्राप्तेऽर्थे प्रामाण्यं च दृष्टमित्यर्थः ॥

## वाक्यार्थमञ्जरी

विरोध इत्यनन्तरमत्र रुद्रग्रहण इत्यनुवर्तते । भाष्ये एष इत्यस्य एनमित्यर्थः । मोहस्य मिथ्याज्ञानरूपस्य मोहकत्वाभावादाह ॥ **मुह्यत इति** ॥ **नटनं वञ्चनं वेति** । विद्यमानाकारच्छादनेना-विद्यमानाकारप्रदर्शनं नटनम् । अविद्यमानकथनं वञ्चनमित्युभयोः क्रियावचनरूपत्वाद्भेदः । दधीच्यादिभिः ऋषिभिः । क्वापि अविद्यमानं लिङ्गमूलान्वेषणादिकमतथ्यम् । विष्ण्वादौ विद्यमानं स्वातन्त्र्यादिकं

(वाक्यार्थमञ्जरी)

रुद्रादौ उच्यमानं वितथ्यम् । आत्मानं मामित्यनयोः कर्मणि द्वितीयात्वे प्रकाशवन्तमित्यादि स्यान्न तु प्रकाशमित्यादीत्यत आह ।। **आत्मानं मां च प्रतीति** ।। "अभितः परितः समयानिकषाहा प्रतियोगेऽपीति" स्मरणात् कर्मप्रवचनीययोगे द्वितीयेति भावः । **प्रकाशं प्रसिद्धिमिति** ।। तेनाप्रकाशमप्रसिद्धिमित्यपि व्याख्यातम् । आत्मप्रसिद्धिं मामप्रसिद्धं च कुर्वित्यर्थः ।। **शिवादिविषयत्वादिति** ।। अनेन शैव इत्येतच्छिवविषय इति व्याख्यातम् । तेषां व्यासप्रणीतत्वेन मोहार्थं निर्मितपाशुपतादिविलक्षणत्वमिति भावः । भाष्ये श्वपचादिति तर्कितं ध्येयम् । करणैरिति क्रीडासाधनैरित्यर्थः ।। **स्वविरोधेनेति** ।। स्वप्रतिपादितविष्णूत्तमत्वविरोधेनेत्यर्थः । तत्र रुद्राद्युत्तमत्वे । वैपरीत्यं स्वविरोधेन विष्णूत्तमत्वादावप्रामाण्यरूपम् ।। **असाधारण्येनेति** ।। मुख्यप्रतिपाद्यत्वेनेत्यर्थः । असाधारण्येन रुद्राद्युत्कर्षप्रतिपादनाय प्राप्तमविद्यमानमपि तद्ब्रूयादिति भावः । तथेत्यनुवादः । उक्तशब्दार्थः प्रत्युक्तमिति ।। **उच्यत इति** ।। 'आराध्य देवदेवेशं शङ्करं लोकशङ्करम् । तपसा तोषयित्वा तं कैलासगिरिवासिनम् । रुक्मिण्यां तनयं लेभे दग्धं कामं पुनर्हरिः' इत्यादिनोच्यत इत्यर्थः । ब्रह्मशब्दश्च विष्णावेवेत्यादिनोक्तमुपसंहरति ।। **तस्मादित्यादिना** ।। अधिकरणार्थमुपसंहरति ।। **तदेवमिति** ।। अत इति सिद्धान्ते फलकथनम् ।। १ ।।

## विवृतिः

रुद्रादीनामित्यत्रादिपदेन सूर्यादयो ग्राह्याः । द्वितीयादिपदेन जिज्ञास्यत्वं ग्राह्यम् । **नटनं वञ्चनं वेति** ।। विद्यमानाकाराच्छादनेनाविद्यमानाकारान्तरप्रदर्शनं, नटनं, वञ्चनं त्वविद्यमानकथनमिति ।। **अविद्यमानमिति** ।। क्वाप्यविद्यमानलिङ्गमूलान्वेषणादिकम् अतथ्यं, विष्ण्वादौ विद्यमानं रुद्रादिनिष्ठतयोच्यमानं स्वातन्त्र्यादिकं वितथ्यम् ।। **आत्मानं माञ्च प्रतीति** ।। यदीयं द्वितीया कर्मणि स्यात्तर्हि प्रकाशवन्तमिति स्यादिति भावः ।। अत एव प्रकाशं प्रसिद्धिमिति व्याख्याति । अनेना प्रकाशमप्रसिद्धिमिति व्याख्यातं भवति ।। तथा च लोकेष्वात्मानं प्रति प्रसिद्धिं कुरु न केवलमेतावत् किन्तु मां प्रति अप्रसिद्धिं च कुर्वित्यर्थ उक्तो भवति ।। तत्रेति ।। रुद्रसर्वोत्तमत्व इत्यर्थः ।। **न च विपरीतं किं न स्यादिति वाच्यमिति** ।। विष्णुसर्वोत्तमत्वप्रतिपादकस्यैवाप्रामाण्यमिति विपरीतं किं न स्यादिति न च वाच्यमित्यर्थः ।। **असाधारण्येन प्राप्तत्वादिति** ।। तस्यैव तद्ग्रन्थप्रतिपाद्यत्वेनाधिकृतत्वात्तस्य ग्रन्थस्य शिवाद्युत्कर्षप्रतिपादनार्थमेव प्रवृत्तत्वादिति यावत् ।। तस्मिन्नपि प्रसङ्गे विष्णूत्तमत्वमुच्यमानं कथमविद्यमानं भवेत् । नहि शैवपुराणादिकं विष्णूत्कर्षप्रतिपादनाय प्रवृत्तम् ।

(स्मृतिः)

येनाविद्यमानमपि विष्णूत्तमत्वं प्रतिपादयेदिति भावः । **तथापीति** ।। विष्णूत्तमत्वरुद्राधमत्वप्रतिपादकवैष्णवग्रन्थेषु रुद्रोत्तमत्वस्यापि क्वचिदुक्तत्वादेषामपि परस्परविरोधोऽस्त्वित्यर्थः ।। **तच्चैषमोहमिति वचनादिति** ।। अत्र उक्तमित्यस्यावृत्तिः तत्राद्यस्य प्रयुक्तमित्यर्थत्व इतिशब्दस्य यथाश्रुतस्य शब्दपदार्थव्यवस्थापकत्वम् । अत एवोक्तमेष मोहमिति वचनादिति द्वितीयोक्तशब्देनापि तस्यान्वयः । तदप्युक्तमित्युक्तमिति । ब्रह्मशब्दस्य विष्णुपरत्वोपपादनमुपसंहरति ।। **तस्मादिति** ।। अधिकरणार्थमुपसंहरति ।। **तदेतमिति** ।।

।। इति जिज्ञासाधिकरणम् ।। १ ।।

## २. जन्माधिकरणम्

ब्रह्मणो लक्षणमाह—

॥ ॐ जन्माद्यस्य यतः ॐ ॥ १-१-२ ॥

सृष्टिस्थितिसंहारनियमनज्ञानाज्ञानबन्धमोक्षा यतः ।

'उत्पत्तिस्थितिसंहारा नियतिर्ज्ञानमावृत्तिः ।
बन्धमोक्षौ च पुरुषाद्यस्मात्स हरिरेकराट्' ॥ इति स्कान्दे ।

यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद् ब्रह्मेति । (तै.उ.३-२)

य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा (ऋ.सं.१-१५४-५) ।

चतुर्भिस्साकं नवतिं च नामभिश्चक्रं न वृत्तं व्यतीँरवीविपत् । (ऋ.सं.१-१५५-६) ।

'परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति । न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप' (ऋ.सं.७-९९-१२) ।

'यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा' (ऋ.१०-८२-३) इत्यादि च ॥ २ ॥ अ.२ ॥

## सत्तर्कदीपावली

किं तद् ब्रह्म यज्जिज्ञासा कर्तव्येत्यपेक्षायां जगज्जन्मादिकर्तृत्वादिविशिष्टब्रह्माभिधानमसङ्गतमिति चेन्नैवम् । सर्वथाऽनवगतस्य प्रश्नासम्भवात् बृहद्ब्रह्मेति ज्ञानमेव सर्वतो व्यावृत्ततया ज्ञातुं पृष्टत्वेन व्यावृत्तये लक्षणविशिष्टब्रह्माभिधानस्य सङ्गतत्वात् । निर्गुणं चेदत्र ब्रह्म विवक्षितं जन्माद्यस्य न यत इति सूत्रं स्यात् । न हि कर्तृत्वादिधर्मरहितात्किञ्चिदुत्पद्यते । जगज्जन्मादिकर्ता च हरिरेवेत्यत्र पुराणवचनमाह ॥ उत्पत्तीति ॥ भीषास्माद्वातः पवते यः पृथिवीमन्तरो यमयतीत्यादिश्रुतावपि विष्णुरेव जगज्जन्मादिकर्तोच्यते । तद्ब्रह्मेति श्रवणात् । एतद्दार्ढ्याय विष्णुसूक्तगतश्रुती दर्शयति । य उ त्रिधात्वित्यादिना । अस्यार्थः । यः प्रकृतिपुरुषकालाधारत्वात्त्रिधातुशब्दोक्तः एक एव पृथिव्याद्याधारः स हि विष्णुर्नम्यत्वेन नामपादोक्तैश्चतुर्भिर्वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धाख्यस्वरूपैः सहितः अष्टवस्वेकादशरुद्रविष्णुव्यतिरिक्तैका-

(सत्तर्कदीपावली)

दशादित्यहिरण्यगर्भादिदशप्रजापतिपञ्चाशन्मरुदाख्यान्नवतिसङ्ख्याकान् विशेषेणार्तान् अधिकान् अन्यांश्च पदार्थान् वृत्तं चक्रमिव अवीविपत् विशेषेण सृष्ट्यादिना परिवर्तयामासेत्यर्थः । तदेतज्जगत्सृष्ट्यादिमाहात्म्यं विष्णोरन्ये न प्राप्नुवन्तीत्येतदुच्यते ।। पर इति ।। यतो मात्रया मितेः परः अपरिच्छिन्नः अवध्यतीतः तन्वा वृधान जगद्व्याप्त्या विष्णो ते तव महिमानमन्ये न प्राप्नुवन्तीत्यर्थः । महिमातारतम्यपरावधिभूतं विष्णोर्महित्वं यथेदानीतनो न प्राप्नोति तथा जातो नापि जनिष्यमाणो प्राप्स्यतीत्युच्यते ।। न त इति ।। एतदेव महित्वं दृश्यते यो न इति । यो विश्वकर्मनामा पद्मनाभो नः सुरनरादीनामस्माकं पितेत्यापि दनुपुत्रादेरजनकोऽपि पिता दृष्ट इति तन्निवृत्यर्थं जनिता पितेति विशेषणम् । पातीति वा पिता विशेषेण धाता विधारकः पोषको मुक्तानां तत्संपृच्छ्यत इति सम्प्रश्नं भुवनानि यन्तीत्यन्वयः ।

## तत्त्वप्रदीपिका

ब्रह्मणो लक्षणमाह-जन्माद्यस्य यतः । या च विष्णोर्ब्रह्मत्वविधात्री तैत्तिरीयश्रुतिर्यानि तस्य लक्षणान्याह तान्यनेन सूत्रेण भगवानाह । तथाहि– "यतः प्रसूता जगतः प्रसूती" "सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधी"ति प्रकृतिकालसृष्ट्यभिधानेन तस्मादेव सर्वसृष्टिरुक्ता । तदधीनत्वादितरसृष्टेः । "यस्मिन्निदं सं च विचैति सर्वं यस्मिन्देवा अधि विश्वे निषेदुः"रिति स्थितिः । "वेनस्तत्पश्यन्विश्वा भुवनानि विद्वान्यत्र विश्वं भवत्येकनीळ"मिति ज्ञानं संहारश्च । "विवेश भूतानि चराचराणी"त्यर्थान्नियमनम् । "येनाऽदित्यस्तपति तेजसा भ्राजसा चे"ति स्पष्टम् । "ऋतस्य तन्तुं विततं विवृत्य तदपश्यत्तदभवत्प्रजास्वि"त्यज्ञानं बन्धश्च । "य एनं विदुरमृतास्ते भवन्ती"ति मोक्षः । "यतो वा इमानि भूतानि जायन्ते, ये जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति, तद्विजिज्ञासस्व, तद्ब्रह्मे"ति तैत्तिरीयश्रुतिः विष्णोरेवैतानि स्रष्टृत्वादीनि प्रसिद्धलक्षणानीत्याह ।। **य उ त्रिधात्वित्यादि** । प्रकृतिपुरुषकालधातृत्वात् 'त्रिधातु' । भूमिं धियं च दधार । **चतुर्भिरिति** । वासुदेवादिनामवद्भिः रूपै'र्व्यतीन्' विशेषतोऽधिका'न्नवतिं' 'साकं' युगपदेव 'अवीविपत्' पर्यवर्तयत्; विप परिवर्तन इति धातोः, किमुतान्यान् । प्रधानवायुना सह पञ्चाशन्मरुतो, वसवो, रुद्रादित्या एकादश, प्रजापतयश्च ब्रह्मदशमा नवतिर्देवाः । चतुर्भिर्नामवद्भिः कीर्तिमद्भिर्देवैः साकं नवतिं देवान्पर्यवर्तयदिति वाऽन्वयः । तथा चोक्तम्–

"आदित्या वसवो रुद्रा मरुतश्चाश्विनावपि ।
बृहस्पतिश्च कामश्च मनुर्दक्षो विनायकः ।।

भृगुर्भवानिरुद्धश्च धर्मो निर्ऋतिरेव च ।
कुबेरसहिता देवा नवतिस्सम्प्रकीर्तिताः ।।
अनन्तो गरुडो वायुश्चत्वारो ब्रह्मणा सह ।" इति ।

(तत्त्वप्रदीपिका)

**परो मात्रयेति ।** मात्रायाः 'परः' परिमाणातीतस्त्वं, तन्वा 'वृधान' वर्धमान, देहेन पूर्ण, इत्थम्भावे तृतीया । देहरूपेण पूर्ण इत्यर्थः । यतश्चिदानन्दात्मको विष्णोरभिन्नश्च देहः । ते महिमानं नानुभवन्ति न प्राप्नुवन्ति ।।

१. त्वदीयायाः 'पृथिव्याः' प्रकृतेः 'रजसी' पुण्यपापे 'विद्म' । प्रकृते रजसा हि पुण्यपापे सृज्येते । 'परमस्य' ते रूपं महिमानं वा त्वमेव वित्से ।

त्वमेव 'महिम्नो' महिमसमुदायस्यान्तः । ब्रह्मणश्श्रियो वा महिमानमतिशयितो हि विष्णुमहिमा । अन्यमहिम्नां परमन्तं ते महिमानं न कश्चिदाप ।।

२. यत्राकं नास्ति त'न्नाकम्' । उच्चैरस्तम्भयः । 'ऋष्वं' प्रकाशरूपम् । 'पृथिव्याः' पृथिव्यात्मकस्य ब्रह्माण्डस्य प्राचीं दिशमुत्थापनेन 'दाधर्थे'ति सर्वधारणोपलक्षणम् । देवान्पर्यवर्तयदित्युक्त्यैव सृष्ट्यादयः स्पष्टोदिता अतिमहिमोक्त्याऽपि सन्दर्शिताः ।। यो नः पिता पाता ।

''स एव पितृसंस्थस्तु पातृत्वात्पितृनामकः'' इत्यैतरेयसंहितायाम् । विधाता धारणपोषणकर्ता, पोषणं ज्ञानमोक्षप्रदानेन ।। इति जन्माधिकरणम् ।।

## तत्त्वप्रकाशिका

अत्र श्रुत्युक्तब्रह्मणो विष्णुत्वसमर्थनादस्ति शास्त्रसङ्गतिः । श्रुत्यादिसङ्गतिस्तु तद्विजिज्ञासस्व तद्ब्रह्मेति श्रुत्युक्तं ब्रह्म जिज्ञास्यमित्युक्तं तस्य च विष्णुत्वं यावन्न साध्यते तावत्तस्य गुणपूर्त्यसिद्ध्या भेदकाभावेन जिज्ञास्यता न सम्भवतीति । तच्छ्रुत्युक्तं ब्रह्मात्र विषयः । किं विष्णुरुत जीव इति सन्देहः । उभयत्रापि ब्रह्मपदप्रयोग एव सन्देहबीजम् । यद्यपि पूर्वाधिकरणे विष्णावेव ब्रह्मशब्दो मुख्य इत्युक्तं तथापि स्वकृत-व्याख्यानस्थापनाय भाष्यकारैरेवोक्तत्वाद् भवति सन्देहः । जीव एवेदं ब्रह्मेति पूर्वः पक्षः । बृह जातिर्जीवेति ब्रह्मशब्दस्य जीवे रूढत्वात् । यद्यपि ब्रह्मशब्दो विष्णौ प्रवर्तते तथापि तस्य तत्र योगेनैव प्रवृत्तेः । रूढियोगयोश्च रूढेरेव बलवत्त्वाज्जीववाचित्वमेव मुख्यम् । न च रूढिपरित्यागेन योगाङ्गीकारो युक्तः । बाधकं विना मुख्यार्थत्यागायोगात् । न चात्र तादृशं बाधकमस्ति । तस्मात् जीव एवेदं ब्रह्म । तस्य च स्वप्रकाशत्वेनासन्दिग्धत्वादजिज्ञास्यतेति । अथ सिद्धान्तयत्सूत्रमवतारयति । **ब्रह्मण इति ।** निर्बाधरूढिबलाज्जीव एवेदं ब्रह्मेति प्राप्ते तन्निराकर्तुं जीवग्रहणे बाधकं श्रुत्युक्तं जिज्ञास्यब्रह्मणो लक्षणमाह सूत्रकार इत्यर्थः । अस्य जगतो जन्म आदिपदोक्ते स्थितिसंहृती यतस्तद्ब्रह्मेत्यादिप्रतीतार्थनिरासाय सूत्रं यथावद्व्याचष्टे ।। **सृष्टीति ।।** सृष्ट्याद्यष्टकमस्य जगतो यतो भवति तदेव जिज्ञास्यं ब्रह्मोच्यते । तल्लक्षणं च विष्णावेव सम्भवति न जीवेऽतो ब्रह्मशब्दस्य जीवे रूढत्वेऽपि बाधकसद्भावात्तद्ब्रह्मेति श्रुत्युक्तं ब्रह्म

(तत्त्वप्रकाशिका)

विष्णुरेवेति युक्तैव प्रागुक्तजिज्ञासेत्यर्थः । यद्यपि विष्णौ ब्रह्मशब्दो विद्वद्रूढियुक्तस्तथाप्यभ्युपगम्योक्तिरियमिति ज्ञातव्यम् । जन्माद्यस्येति तद्गुणसंविज्ञानः । लब्धजन्मनो हि स्थित्यादीत्यतो जन्मन आदित्वम् । ननु जगज्जन्मादिकर्तृत्वं यदि विष्ण्वेकनिष्ठं तर्हि भवेज्जीवापवाधकं तदेव कुत इत्यत आह ।। उत्पत्तीति ।। आवृतिरज्ञानम् । एकराट् स्वतन्त्रः । नन्वेतल्लक्षणं जिज्ञास्ये नोपलभ्यतेऽतः कथं जीवापवाधकमित्यतस्तत्पूर्ववाक्ये कथितमिति तदुदाहरति ।। यत इति ।। यत्प्रयन्ति प्रलये । यदभि स्वेच्छया सम्यक् प्रविशन्ति मुक्तौ । सृष्ट्यादिकर्तृत्वं प्रत्येकमपि विष्ण्वैकनिष्ठं किमु सर्वमित्यभिप्रायेण स्थितिकर्तृत्वस्य तदेकनिष्ठत्वे श्रुतिमाह ।। य इति ।। य एक एव प्रकृतिपुरुषकालाधारकः पृथिवीं द्यां सर्वभुवनानि च दधारेत्यर्थः । तथा नियमनं च तदेककर्तृकमिति श्रुतिमाह ।। चतुर्भिरिति ।। स बृहच्छरीरो मूलरूपी चतुर्भिर्वासुदेवादिनामभिर्नाममात्रैः स्वरूपभेदशून्यैः साकं नवतिं विशेषेणाधिकान् देवान् वृत्तं चक्रमिव पर्यवर्तयदित्यर्थः । अष्टौ वसव एकादश रुद्रा एकादशादित्याः दश प्रजापतयः पञ्चाशन्मरुत इति नवतिः । एतान्यपि लक्षणान्यन्यव्याप्तानि नेत्याह ।। पर इति ।। हे विष्णो स्वमूर्त्यैवापरिच्छिन्न त्वं मितेः परोऽतोऽपरिमितत्वात्ते जगत्सृष्ट्यादिमहिमानं केऽपि न प्राप्नुवन्तीत्यर्थः । वर्तमाननिषेधात् स्यादतीतादावतिव्याप्तिरित्यत आह ।। नेति ।। हे विष्णो देव ते महिम्नः परमन्तं सीमानं जायमानो न प्राप्नोति जातो नाप जनिष्यमाणो नाप्स्यतीत्यर्थः । जगत्कारणत्वं च ब्रह्मणो न विकारित्वेन किन्तु पितृवदेवेति श्रुत्या दर्शयति ।। य इति ।। नः सर्वेषाम् । न दत्तपुत्रपितृवत्पिता किन्तु जनिता जनकः । सर्वाणि भुवनानि तद्गतधामानि च वेदेत्यर्थः । अतोऽतिव्याप्त्यादिशून्यविष्णुलक्षणवत्त्वाद्विष्णुरेव श्रुत्युक्तं ब्रह्म न जीवोऽतो युक्तैव ब्रह्मजिज्ञासेति स्थितम् ।। अ-२ ।।

## गुर्वर्थदीपिका

ब्रह्मणो जीवाभेदेन न जिज्ञासायां विषयतेत्याशङ्क्य जीवाभेदनिरासाय विषयत्वसमर्थनाय च जिज्ञास्ये ब्रह्मपदं प्रयुञ्जता सूत्रकारेणाज्ञरूढेरुपेक्षितत्वाद्विद्वद्रूढिमहायोगयोराश्रितत्वाद्भाष्यकृता च सौत्रब्रह्मशब्दस्यैव पोषणाय "तदेव ब्रह्म परमं कवीना"मिति श्रुतिं प्रमाणयताऽज्ञरूढिमुपेक्ष्य विद्वद्रूढिमाश्रित्य विष्णोरेव ब्रह्मताया निर्णीतत्वान्न सूत्रभाष्ययोर्दिशा नोत्तराधिकरणप्रापकतयाऽज्ञरूढिमात्रेण शब्दस्य पुनर्जीववाचित्वशङ्का । तथाऽप्यभ्युपगमवादेन कथञ्चिद् ब्रह्मशब्दस्य जीववाचित्वेऽङ्गीकृतेऽपि जिज्ञासाश्रुतौ न जीवोऽङ्गीकर्तुं शक्यः । तस्यामेव श्रुतौ जीवेऽसम्भावितलक्षणस्योक्तत्वेन रूढ्यपवादकसद्भावादिति न्यायविवरणोक्तपूर्वपक्षसिद्धान्तानुसारेण टीकाकारस्य प्रवृत्तिः । "ब्रह्मणो लक्षणमाहे"ति वदन्भाष्यकारः पूर्वाधिकरणोक्तसिद्धान्तसमर्थनार्थं तत्रैव स्वभाष्ये प्रपञ्चितमखिलमनुपमृश्यैव "लक्षणप्रमाणाभ्यां वस्तुसिद्धि"रिति वचनात् तयोरभावात्कथं तस्य पूर्वाधिकरणोक्तजिज्ञास्यत्वमित्यभ्यधिकाशङ्कां

(गुर्वर्थदीपिका)

परिहर्तुं क्रमेण जन्मादिकारणत्वाख्यलक्षणं तद्वत्त्वे सच्छास्त्राख्यप्रमाणं च समर्थयितुमुत्तराधिकरणद्वयमित्यपि सङ्गतिं सूचितवान् । अतो न ग्रन्थद्वयस्यापि वैयर्थ्यमिति ज्ञेयम् । अत एव स्वकृतव्याख्यानस्थापना-येत्याद्यपि मन्दाशङ्कैव । अधिकारिप्रयोजनसाधकाथातःपदद्वयवद्विषयप्रदिपादकसौत्रब्रह्मशब्देनैव सर्वस्याप्यर्थस्य सूचितत्वेन स्वकपोलकल्पितशङ्कायाः कारणाभावात् । यद्यपि विषयत्वसाधक-ब्रह्मपदेनैवानन्तगुणपरिपूर्णत्वाख्यं लक्षणमिति सूचितम् । तथापि तदसम्भावनाशङ्कायां सम्भावकश्रुत्युक्त-जन्मादिकारणत्वलक्षणस्य स्पष्टं निरूपणायाधिकरणान्तरारम्भ इति सर्वमवदातम् ।

विष्णोरपरिमितत्वे तदभिन्नतन्महिम्नोऽप्यपरिमितत्वावश्यम्भावान्न परिमितगुणैरन्यैः स महिमा प्राप्तुं शक्य इति भावेनोक्तम् । अतोऽपरिमितत्वादिति । जात इति वचनबलाज्जायमान इति वचनबलाद्यो जातो न यश्च जायमानो न किन्तु भविष्यन्नपि नेति नञावृत्त्या अतीतवर्तमानभविष्यतां महिमनिषेधप्राप्ति-रिति भावेनाह । **जायमान इत्यादिना** । अन्यथा महतः सर्वोत्तमस्य भावो महिमेति सर्वोत्तमत्व-प्रतिपादकतया अस्यामेव श्रुतावुक्तमहिमशब्दविरोधः विष्णुपदसूचितविष्णुसहस्रनामस्थ'भूतभव्य-भवत्प्रभु'रिति नामविरोधश्च स्यात् । इति जन्माधिकरणम् ।।

## भावबोधः

**तस्य च विष्णुत्वं यावन्न साध्यत–** इति । अनेन पूर्वाधिकरणेनास्याधिकरणस्याक्षेपिकी सङ्गतिरुक्ता भवति । **न सम्भवतीति** । प्रकारवाचिन इतिशब्दस्येति श्रुत्यादिसङ्गतिरिति पूर्वेण सम्बन्धः । **किमिति** । अत्र 'तद्ब्रह्म' इति श्रुत्युक्तं ब्रह्म किं जीव उत विष्णुरिति चिन्ता । तदर्थं ब्रह्मशब्दस्य रूढार्थजीवपरित्यागेन यौगिकार्थविष्णुग्रहणे हेतुर्नास्त्युतास्तीति । तदर्थं यतो वेत्यादिपूर्वोक्तं जन्मादिकारणत्वं किं जीवसाधारणमुत विष्णुमात्रनिष्ठमिति । तदर्थं तस्य विष्णुमात्रनिष्ठत्वे प्रमाणं नास्त्युतास्तीति । **मुख्य इत्युक्तमिति** । मुख्यामुख्ययोर्मध्ये मुख्यस्यैव सम्प्रत्यय इत्यवधारणबलेन नोत्कटकोटिकोऽपि सन्देहः सम्भवतीति भावः । **स्वकृतव्याख्यानेति** । 'यतो नारायणप्रसादमृतं' इत्यादिनेत्यर्थः । **योगेनैवेति** । न्यायविवरणे पूर्वाधिकरणसिद्धान्ते 'अथ कस्मादुच्यते' इति श्रुत्युदाहरण-पूर्वकं विष्णौ तस्य योगस्यैव प्रदर्शितत्वात् । योगानङ्गीकारेण पूर्णत्वासिद्धेश्च श्रुतिप्रतिपादितयोगेनैव तद्व्यवहारोपपत्तौ योगरूढ्यङ्गीकारस्य व्यर्थत्वाचेति भावः । **जीववाचित्वमेव मुख्यमिति** । अनेन 'जीव एवायं ब्रह्मशब्दः' इति न्यायविवरणं व्याख्यातं भवति ।

(भावबोधः)

'भरद्वाज प्रवक्ष्यामि लक्षणं परवस्तुनः ।
यज्ज्ञानेन प्रकृष्टत्वं मन्दैरपि च ज्ञायते ।'

इति प्रमाणानुसारेण **'ब्रह्मणो लक्षणमाह'** इति भाष्यं व्याचष्टे– **जीवग्रहणे बाधकमिति । जिज्ञास्यब्रह्मणो लक्षणमिति ।** विष्णुलक्षणत्वेन प्रमितं जगज्जन्मादिकारणत्वं जिज्ञास्यब्रह्मसम्बन्धि, जीवसम्बन्धि नेत्यर्थः । अत एव जीवग्रहणे बाधकमित्युक्तम् । 'यतो वा इमानि भूतानि जायन्ते' इति जन्मादिकारणत्वस्यैव ब्रह्मलक्षणत्वेनोक्तेरिति न्यायविवरणानुसारेणाह **तल्लक्षणं चेति । अभ्युपगम्योक्तिरियमिति ज्ञातव्यमिति ।** तथा च विद्वद्रूढ्या ब्रह्मशब्दस्य विष्णौ मुख्यत्वसाधकम् **'ब्रह्मशब्दश्च विष्णावेव'** इत्यादिभाष्यमुपपन्नम् । सूत्रापेक्षया भाष्ये प्रकारान्तरेणोपपत्तिकथनं शिष्यव्युत्पादनार्थमिति ज्ञातव्यम् । न च रूढ्यङ्गीकारो निर्मूलः । 'योगवत् कवीनाम्' इत्यादिना तत्र तत्र प्रमितत्वादिति पूर्वाधिकरण एव प्रमापितत्वात् । अत एव न्यायविवरणेऽपि श्रुत्या योगप्रदर्शन-मुपलक्षणपरमिति ज्ञातव्यम् । तत्र कण्ठतोऽनुक्तिस्तु ब्रह्मशब्दस्य गुणपूर्णत्वाभिधायकत्वानुपपादकत्वेनानुप-योगादिति भावः । **तद्गुणसंविज्ञान इति ।** 'यतो वा' इत्यादिश्रुतौ 'जायन्ते' इत्युक्तत्वादिति भावः । एवञ्च **'लब्धजन्मनः'** इत्युपपन्नम् । अत एव 'तद्गुणसंविज्ञानः' इत्युक्त्वाऽनन्तरम् 'लब्धजन्मन' इत्युक्तम् । अन्यथा तन्निवर्तनीयशङ्काया एवानुदयात् ।

उदयस्थितिसंहारनियमाज्ञानबन्धनम् ।
ज्ञानमोक्षौ यतः पुंसः स विष्णुरिति कीर्तितः ।।

इति प्रमाणानुसारेणाऽऽह– **आवृतिरज्ञानमिति ।**

यतो जातानि भूतानि जीवन्त्येतानि येन वै ।
आप्नुवन्ति लयं यत्र यत्र मुक्तिः स वै हरिः ।।
तस्मात् स एव जिज्ञास्यो नात्र कार्या विचारणा ।।

इति प्रमाणानुसारेण 'यतो वा' इत्यादिश्रुतिं व्याचष्टे– **यत्प्रयन्ति प्रलय इति ।**

कर्मशेषादिरूपाणि भुवनानि चतुर्दश ।
यो दधार स वै विष्णुर्नान्यो विश्वस्य धारकः ।।

इति विशेषप्रमाणानुसारेण व्याचष्टे– **य एक एवेति ।**

(भावबोधः)

चतुर्भिर्नामभिः साकं वासुदेवादिभिर्हरिः ।
वसून् रुद्रान् तथादित्यान् ब्रह्मणो मरुतस्तथा ।।
बृहच्छरीरो भगवान् नूनं शास्ति च नित्यशः ।।

इति प्रमाणानुसारेण श्रुतिं व्याचष्टे– **स बृहच्छरीर इति** ।

व्यतीनित्यस्यार्थो विशेषेणाधिकानिति । 'विशेषेणाधिकत्वेन व्यतयो देवताः स्मृताः' इति वचनात् । **एतान्यपि लक्षणानीति** । न केवलं नियामकत्वं पालकत्वञ्चेति लक्षणद्वयमेव नातिव्याप्तम्, किन्तु तदतिरिक्तान्यपि सृष्टिकर्तृत्वादीनि नातिव्याप्तानीत्याहेत्यर्थः ।

जातो जनिष्यमाणश्च वर्तमानस्तथैव च ।
विष्णोः सृष्ट्यादिकर्तृत्वं लभते न कुतश्चन ।

इति वचनानुसारेणाऽऽह **विष्णो इति** ।

सृष्ट्यादिकरणे विष्णौ न विकारोऽस्ति कुत्रचित् ।
यथा पुत्रस्य जनने पितुर्नास्ति विकारता ।।

इति वचनानुसारेण 'यो नः पिता' इति श्रुत्यभिप्रायमाह **जगत्कारणत्वञ्चेति** ।

तस्मात् सृष्ट्यादिकर्ता यः तद्ब्रह्म स हरिः स्मृतः ।
न जीवादिरतो विष्णुर्विजिज्ञास्य इति स्थितम् ।।

इति वचनानुसारेणाधिकरणार्थमुपसंहरति **अत इति** ।। २ ।।

## भावदीपः

।। ॐ जन्माद्यस्य यतः ॐ ।। प्रत्यधिकरणं प्रतिपाद्यज्ञानेन स्पष्टत्वाद्भाष्यानुक्तामप्यन्तर्भावसङ्गतिं स्वयमाह ।। **अत्रेति** ।। एतदधिकरण इत्यर्थः ।। **सङ्गतिरिति** ।। अन्तर्भावरूपेत्यर्थः । तदुपपादनं श्रुत्युक्तेत्यादि । ब्रह्मपदवाच्यस्येत्येव वाच्ये श्रुत्युक्तेत्युक्तिस्सौत्रब्रह्मपदोक्तस्येति भ्रमनिरासाय । तथा च श्रुत्यर्थनिर्णायकन्यायग्रथनात्मके शास्त्रे अस्य श्रौतब्रह्मपदार्थनिर्णायकन्यायग्रथनात्मकस्यान्तर्भावो युक्त इति भावः ।। **विष्णुत्वेति** ।। सिद्धान्ते तस्य रूढिनिरासेन यौगिकत्वमात्रोक्तावपि योगार्थस्य विष्णावेव

(भावदीपः)

सम्भवात् यौगिकत्वेत्यनुक्त्वा विष्णुत्वेति फलितोक्तिः कृता ।। **श्रुत्यादीति** ।। अधिकरणमादिपदार्थः । सङ्गतिः पूर्वानन्तर्यरूपा ।। एकवचनं तु एकस्य प्रदर्शनेऽन्यस्य सा सुज्ञाना एकप्रकारत्वात् श्रुत्यधिकरणसङ्गत्योरिति प्रकारैक्यबुध्या । न तु सङ्गत्यैक्यबुध्या । कचित् द्विवचनस्यापि प्रयोगात् । पूर्वाधिकरणतद्विषयवाक्याभ्यामेतदधिकरणविषयवाक्ययोः सङ्गती त्वित्यर्थः ।। **इत्युक्तमिति** ।। विषयादिन्यायैः पूर्वाधिकरणे साधितमित्यर्थः । तस्य श्रौतब्रह्मशब्दार्थस्य ।। **न साध्यत इति** ।। रूढित्याजकजन्मादिहेतुत्वरूपबाधकाख्यन्यायोपदर्शनेनेति भावः ।। **भेदकाभावेनेति** ।। तथा च पूर्वपक्षे जीवस्यैव ब्रह्मतापत्त्या पूर्वत्रेव विषयादिशून्यत्वेन तज्जिज्ञासा पूर्वसूत्रोक्ता न कार्येत्याक्षेपादाक्षेपिकी सङ्गतिरित्यर्थः । 'पूर्वमाक्षिप्यते यत्र तत्र साक्षेपिकी मते'त्युक्तेः । एतेन तद्विजिज्ञासस्वेत्युक्ता जिज्ञासा कार्येत्युक्तं पूर्वं तदयुक्तम् । तद्ब्रह्मेत्युक्तब्रह्मणोऽविष्णुत्वेन रूढ्या जीवत्वादिति पूर्वश्रुत्यात्र विचार्यश्रुतेरपि सङ्गतिः सिद्धा । वाक्यैक्येऽपि पूर्वत्र तद्विजिज्ञासस्वेत्यंशः तद्ब्रह्मेति ब्रह्मश्रुतिरूपहेतूक्त्या विचारितोऽत्र तु पूर्वत्र हेतूकृततद्ब्रह्मेत्यंशः उत्तरत्र तु अत्र हेतूकृतो यतो वेत्यादि पूर्वांशो विचार्यत इत्यंशभेदाद्भेद इति भावः । इतिशब्दस्य इति सङ्गतिरिति पूर्वेणान्वयः । एवमग्रेऽपि सङ्गतिग्रन्थव्याख्या ध्येया ।। **तच्छ्रुत्युक्तमिति** ।। न तु सुधायामिव सर्वश्रुत्युक्तं ब्रह्मपदार्थमात्रं जीव इति पूर्वपक्ष्यत इति तच्छब्दप्रयोगाभिप्रायः ।। **उभयत्रापीति** ।। तदेव ब्रह्मेति श्रुतौ विष्णौ बृहजातिजीवकमलासनशब्दराशिष्विति जीवे प्रयोग इत्यर्थः । कारणत्वश्रवणाज्जात्यादेरिहासन्देहनिविष्टत्वं व्यक्तम् । यद्वा तदप्युपलक्ष्यम् ।। **उत जीवादिरिति** ।। यथोक्तं न्यायविवरणटीकायाम् । जीव एवेति जात्यादेरुपलक्षणम् । एवशब्दस्तु भगवन्तं व्यावर्तयतीति ।। **स्वकृतेति** ।। यतो नारायणप्रसादमृत इत्यादिना स्वकृतेत्यर्थः । तथा चेतःपूर्वसूत्रे विष्णुत्वासाधनात्सन्देहो युक्त इति भावः । यत्तु स विष्णुराह हीत्यादावेतत्पूर्वभाविसूत्रद्वये ब्रह्मशब्दस्य विष्णौ मुख्यत्वं सिद्धम् । अस्मिन्नपि शास्त्रे स्याच्चैकस्य ब्रह्मशब्दवदित्यत्र द्वितीये । परं जैमिनिर्मुख्यत्वादिति चतुर्थे च मुख्यत्वं सूत्र एव सिद्धमिति । तन्न । योगेनैव तत्र मुख्यत्वस्याभिमतत्वात् । इह तद्ब्रह्मेति श्रुतौ योगार्थस्यैव पूर्वपक्षिणाऽऽक्षेपात् । विष्णौ विद्वद्रूढिरस्त्वेऽपि इह तदभावाभ्युपगमेन केवलयौगिकत्वोपगमेनोत्तरपक्षप्रवृत्तेरिति तात्पर्यात् । अभ्युपगमकृत्यं त्वभ्युपगम्योक्तिरियमिति टीकाव्याख्याने वक्ष्यामः । न च जीव एवायं ब्रह्मशब्द इति न्यायविवरणं विवृण्वान आह ।। **जीव एवेति** ।। तत्रस्थैवकारसूचितहेतुमाह ।। **रूढत्वादिति** ।। गुणपूर्तिरूपयोगस्य जीवे अयोगात् । अन्यस्य चातिप्रसक्तस्याभावाज्जात्यादिसाहचर्याच्च रूढत्वमेवेति भावः ।। **प्रवर्तत इति** ।। तदेव ब्रह्मेत्यादिश्रुतावेति भावः ।। **योगेनैवेति** ।। रूढत्वे गुणपूर्त्यसिद्धेरिति भावः ।

(भावदीपः)

एवकारस्तु योगरूढिव्युदासार्थः । बृहन्तो ह्यस्मिन्गुणा इति श्रुत्यनुसारिकृप्तावयवशक्तिरूपयोगेनैवोपपत्तौ समुदायशक्तिरूपरूढेस्तदेव ब्रह्मेत्यादावपि सर्वत्राकल्पकत्वादिति भावः । एतेन विष्णौ ब्रह्मशब्दस्य रूढिरप्याक्षिप्ता ।। **रूढेरेवेति** ।। अवयवार्थनिरपेक्षायाः शीघ्रमर्थोपस्थापकत्वादिति भावः । तदेव ब्रह्मेत्यादाविवात्राप्यस्त्वित्यत आह ।। **न चात्रेति** ।। तद्ब्रह्मेति श्रुतावित्यर्थः । तादृशं समुद्रशायित्वादि-रूपम् । कारणत्वं त्वदृष्टद्वारा जीवेऽपि युक्तमिति भावः । उक्तं प्रमेयं पूर्वपक्षन्यायविवरणारूढं कुर्वन्नुपसंहरति । **तस्माद्रूढौ बाधकाभावादिति** । जीव एवेदं ब्रह्मेत्यनेन जीव एवायं ब्रह्मशब्द इति न्यायविवरणमुक्तार्थम् । इदं ब्रह्म । तद्ब्रह्मेति श्रुत्युक्तं ब्रह्मेत्यर्थः । अत्राप्येवकारेण पूर्वोक्तदिशा जात्यादिकमपि वा विष्णुमात्रमेव वा व्यावर्त्यं बोध्यम् । जीवादावनेकत्र ब्रह्मत्वबुद्धिप्रसक्तावेव लक्षणोक्त्या विष्णुरेवेदं ब्रह्मेति सिद्धान्तयितव्यत्वात् । तस्य स्वप्रकाशत्वान्न जिज्ञास्यतेति पूर्वाधिकरणपूर्वपक्षन्यायविवरणशेषं जीव एवायं ब्रह्मशब्द इत्यत्राप्यनुवर्त्य योज्यमिति भावेन वाक्यं पूरयति ।। **तस्य चेति** ।। एतेन फलं दर्शितम् । अत्र स्वप्रकाशत्वेनेति जात्यादेः सुप्रसिद्धत्वेनेत्यस्योप-लक्षणं वा अध्याहारो वा । इतिशब्दः पूर्वपक्षसमाप्तौ । एवमग्रेऽपि । अत्र कचिज्जात्यादेर्मुख्यतोऽ-जिज्ञास्यत्वात् । देहात्मविवेकस्यावश्यकत्वादिति टीकापाठो नात्रत्यटीकापाठः । तस्य चेत्याद्युत्तर-वाक्यानानुगुण्याच्चन्द्रिकावाक्यानानुगुण्याच्च । किन्तु न्यायविवरणटीकादिस्थ एवात्र कैश्चित्प्रक्षिप्तो बहुकोशेष्वदर्शनादित्याहुः ।। **अथेति** ।। अथ केन प्रयुक्तोऽयमित्यादाविव प्रकृतादर्थादर्थान्तरेऽयमथशब्दः विष्णुरिति सिद्धन्तयितुमित्यर्थः । एवमन्यत्रापि । ब्रह्मलक्षणोक्तौ सङ्गत्यप्रतीतेर्जीव एवायं ब्रह्मशब्द इत्यन्यत्रोक्तं संयोजयंस्तामाह ।। **निर्बाधेति** ।। उक्तं च सङ्गम्यन्ते गुरोर्गिर इति ।। **इत्यादीति** ।। आद्यस्य चतुर्मुखस्य जन्म यत इत्येतदादिपदार्थः । ननु सूत्रे जन्मादीत्येकवचनं भाष्ये तु मोक्षा इति बहुवचनं कथं व्याख्यानमित्यतः समुदायाशयं सूत्रमिति भावनाकांक्षितपूर्त्या भाष्यसूत्रयोरर्थमाह ।। **सृष्ट्यादीति** ।। यथायोगं व्यस्तं समस्तं चेति भावः । व्यस्तसमस्तविश्वविभूतय इति प्राक् स्फुटत्वा-दत्रानुक्तिः । भाष्ये बहुवचनं तु सौत्रैकवचनात्सर्वमेकं लक्षणमिति परीत्या न भ्रमितव्यमिति बहुलक्षण-सूचनाय । व्यक्तमेतत्सुधाचन्द्रिकयोः ।। **तदेवेति** ।। जन्मादिकारणत्वलक्षणयुक्तमेवेत्यर्थः । जन्मादिकारणत्वस्यैव लक्षणत्वोक्तेरिति न्यायविवरणोक्तेरिति भावः । यत इत्युक्तेस्तदिति लभ्यते । भाष्यटीकयोः सृष्टिस्थितीत्यादिप्रयोजकव्यापारवाचिना सृष्ट्यादिशब्देन प्रयोज्यव्यापारो जन्मादिर्लक्ष्यते । लक्षणाफलं तु ब्रह्मणः स्रष्टृत्वादिकमेव न तूपादानत्वमिति प्रदर्शनमिति चन्द्रिकोक्तेः । अत एव वक्ष्यति यो नः पितेति ।। **ब्रह्मोच्यत इति** ।। तेन पूर्वस्माद् ब्रह्मपदानुवृत्तिः सूचिता । ततः

(भावदीपः)

किमित्यतो वक्ष्यमाणं भाष्यं सर्वं हृदि कृत्वा सूत्रभाष्ययोः फलितार्थमाह ।। **तल्लक्षणं चेति** ।। सम्भवति वक्ष्यमाणदिशेति भावः ।। **न जीव इति** ।। न जीवादावित्यर्थः । ननु रूढ्या जीव इति प्राप्ते सूत्रे विद्वद्रूढ्युक्त्यैव समाधिः कार्यः । तदेव ब्रह्मेत्यादिश्रुत्या ब्रह्मशब्दस्य विष्णौ विद्वद्रूढेः सत्त्वात् । न तु रूढौ बाधकोक्त्येत्याशङ्क्याह ।। **यद्यपीति** ।। इयमिति सौत्री बाधकोक्तिः । पूर्वपक्ष्युक्तदिशा विष्णौ रूढ्यभावमङ्गीकृत्यैव न तु वस्तुत इत्यर्थः । अभ्युपगमवादफलं तु जीवभेदकगुणपूर्तिलाभेन पूर्वोक्तविषयसिद्धिरिति ज्ञेयम् । रूढ्युक्तौ तदलाभात् । अष्टकलाभायाह ।। **तद्गुणेति** ।। तस्य गुणस्य उपसर्जनीभूतस्यान्यपदार्थे सम्यग्विज्ञानं विशेषणत्वेनोपादानं यस्मिन्बहुव्रीहौ स तद्गुणसंविज्ञानो बहुव्रीहिरिति शेषः । तद्गुणसंविज्ञानमति पाठे तद्गुणस्यान्यपदार्थे संविज्ञानं विशेषण-त्वेनोपादानमित्यर्थः । जन्म आदिः प्रथमं यस्मिन् स्थित्यादिजात इत्यत्र कथं जन्मनस्तेषु प्राथम्यम् । 'न पौर्वापर्यमिच्छन्ति नद्यां भ्राम्यद्भ्रमेरिवे'ति तृतीयस्कन्धोक्त्या दर्शपौर्णमासीतिथ्योरिव जन्म-संसारयोरनादित्वादित्यत आह ।। **लब्धेति** ।। सत्यमेवं तथापि लब्धजन्मनः स्थित्यादिरितिवत् स्थितस्य नष्टस्य वा जन्म नेत्येकव्यक्त्यपेक्षया जन्मनः प्राथम्यमिति भावः । व्यक्तमेतन्मिथ्यात्वानुमानखण्डनटीका-भावप्रकाशिकायाम् । अन्धकारभ्रान्तिं निराह ।। **आवृतिरिति** ।। एकाकित्वभ्रान्तिं निराह ।। **एकरादिति** ।। नियतिः व्यापारेषु प्रेरणम् । बन्धः प्रकृतितः । मोक्षो बन्धादिति व्यक्तमिति भावः । एतेषामसाङ्कर्यं चन्द्रिकायां व्यक्तम् । एतेन

''सृष्टिः स्थितिः संहृतिश्च नियमोऽज्ञानबोधने ।
बन्धो मोक्षः सुखं दुःखमावृतिर्ज्योतिरेव च ।।''

इति तत्वसङ्ख्यानोक्त्या सुखादीन्यपि कुतो न गृहीतानीति निरस्तम् । स्कान्दे सूत्रकृतैवाष्टक-कर्तृत्वस्यैव लक्षणत्वेनोक्तत्वात् । सूत्रे तावत एव विवक्षणीयत्वात् ।। **पूर्ववाक्ये कथितमिति** ।। तेन लक्षणस्यासम्भवनिरासार्थमेतदिति दर्शितम् । अत एव वक्ष्यत्युपसंहारे व्याप्यादीत्यादिपदम् । नन्वत्र वाक्ये जन्मस्थितिलयमुक्तिरूपव्यापारचतुष्टयकर्तृत्वमात्रमेव श्रुतं न तु सृष्ट्याद्यष्टककर्तृत्वरूपं अतः कथमेतल्लक्षणं पूर्ववाक्ये कथितमित्युक्तिः । मैवम् । एतद्वाक्योपलक्षितेष्वेवंरूपवाक्यान्तरेषु त्वं मुक्तिदो बन्धदोऽतो मतो नस्त्वं ज्ञानदोऽज्ञानदश्चासि विष्णो इत्यादिषु तत्र तत्र व्यापारान्तराणां श्रवणेनात्रा-प्युपलक्षणतया सृष्ट्याद्यष्टकस्य ग्राह्यत्वादिति तात्पर्यात् । विवृतमेतत्सृष्ट्याद्यष्टकस्य श्रौतत्वं तत्वप्रदीप-चन्द्रिकयोः । एकैकव्यापारोक्तिपरश्रुत्युक्तरूपयोगाप्रतीतेराह ।। **सृष्ट्यादीति** ।। **विष्ण्वेकनिष्ठमिति** ।।

(भावदीपः)

जीवापबाधकमिति अनुवर्तते ।। **किम्विति** ।। स्कान्दस्मृत्या परो मात्रयेति वक्ष्यमाणश्रुत्या च सर्वं विष्ण्वेकनिष्ठं सज्जीवबाधकं किमु वाच्यमित्यर्थः । सर्वमित्यनेकपरं वा । प्रागुक्तदिशा यतो वेत्यत्रोपलक्षितसृष्ट्याद्यष्टकपरं वा ज्ञेयम् ।। **तदेकनिष्ठत्व इति** ।। एक एवेति श्रौतावधारणादेतल्लाभ इति भावः ।। **श्रुतिमिति** ।। स्मृतौ सर्वस्य तदेकनिष्ठत्वोक्तेस्सा पूर्वमुक्तेति भावः । एतेन यतो वेति वाक्ये चतुष्टयश्रवणेनाष्टकाश्रवणेऽपि तेन तत्र जीवबाधनं सिद्ध्यतीत्येतत्स्मृत्युक्तौ फलं सूचितम् । उ इत्येकस्येतिपदेनान्वयं मत्वार्थमाह ।। **एक एवेति** ।। त्रिधात्वित्यस्यार्थः प्रकृतीति । विष्णुसूक्तस्थत्वाद्यच्छब्दो विष्णुपरः । तस्य तदस्य प्रियमिति वक्ष्यमाणेनान्वय इति भावः ।। **तदेकेति** ।। श्रुतौ ब्रह्मरुद्रादिसर्वदेवतानियमनोक्त्या एतल्लाभ इति भावः । चतुर्भिर्नामभिरित्युक्तेर्भावो नाममात्रैरित्यादि । व्यतीनित्यस्यार्थो विशेषेणाधिकानिति । 'विशेषेणाधिकत्वेन व्यतयो देवताः स्मृता' इति कर्मनिर्णयोक्तेः । नेत्यस्यार्थो इवेति ।। **पर्यवर्तयदिति** ।। विप परिवर्तन इति तत्वप्रदीपोक्तधातोर्णिच लुङि रूपम् । यान्येतानि देवजातानि गणश आख्यायन्ते वसवो रुद्रा आदित्या विश्वेदेवा मरुत इति काण्वश्रुतौ तृतीये ।

आदित्या वसवो रुद्रास्त्रिविधा हि सुरा यतः ।
मरुतश्चैव विश्वे च साध्याश्चैव च तद्गताः ।।

इति सप्तमस्कन्धतात्पर्ये । नवचयं नवतिमित्यत्र ऋग्भाष्ये च गणश उक्तान्देवानाह ।। **अष्टाविति** ।। आदित्यानां द्वादशत्वेऽपि विष्णुव्यतिरिक्तानां नियम्यानां एकादशत्वादेकादशादित्या इत्युक्तिः ।। **पञ्चाशदिति** ।। एकोनपञ्चाशन्मरुतां मुख्यवायुना सह पञ्चाशत्त्वादिति भावः । एतेन चतुर्मुखस्यापि नियम्यत्वसिद्धिः । मुख्यवायोरेव तत्त्वात् । तत्वप्रदीपे तु टीकोक्तमेकमर्थमुक्त्वा चतुर्भिर्नामभिः नामवद्भिः साकं नवतिं देवान्पर्यवर्तयदिति वान्वयः । तथा चोक्तम् ।

आदित्या वसवो रुद्रा मरुतश्चाश्विनावपि ।
बृहस्पतिश्च कामश्च मनुर्दक्षो विनायकः ।
भृगुश्चैवानिरुद्धश्च धर्मो निर्ऋतिरेव च ।
कुबेरसहिता देवा नवतिः सम्प्रकीर्तिताः ।
अनन्तो गरुडो वायुश्चत्वारो ब्रह्मणा सह ।।

इतीत्यन्तेन ग्रन्थेन नामभिश्चतुर्भिरित्यनेन अनन्तादिचतुर्णाम् एकोनपञ्चाशन्मरुतां अश्विनोरेकस्यविवक्षयाऽश्विप्रभृत्येकादशदेवानां च नवतिपदेन ग्रहणमुपेत्ययं श्रुतिरन्यथापि व्याख्याता ।। **एतान्यपीति** ।।

(भावदीपः)

**सृष्टिकर्तृत्वादीन्यष्टावपि लक्षणानीत्यर्थः ।** विष्णोः देवत्वमित्युत्तरार्धे श्रवणादाह ।। **हे विष्णो इति ।।** तन्वा वृधानेत्यस्यार्थः स्वमूर्त्येत्यादि । मात्रयेत्यस्य मितेः परिमितेरित्यर्थः । पूर्वोक्तं हेतुगर्भमिति भावेनाह ।। **अत इति ।।** आपेत्यस्य विपरिणामेनार्थमाह ।। **प्राप्नोतीति ।।** एतच्चोपलक्षणं मत्वाऽऽह ।। **जनिष्यमाण इति ।।** सर्वे च वयं च वयम् । त्यदादीनि सर्वैर्नित्यमिति एकशेषं मत्वाऽह ।। **न इति ।।** नोऽस्माकम् अस्मदादिसर्वेषामित्यर्थः । पुनरुक्तेराह ।। **न दत्तेति ।।** जनिता जनयिता । जनिता मन्त्र इति सूत्राज्जनक इत्यर्थः । विधाता धारणपोषणकर्ता । न च जीव एवायं ब्रह्मशब्दः यतो वा इत्यादिना जन्मादिकारणत्वस्यैव ब्रह्मलक्षणत्वोक्तेरिति न्यायविवरणारूढं दर्शयितुं तदर्थं व्युत्क्रमेणानुवदन्नधिकरणार्थं फलोक्त्योपसंहरति ।। **अत इति ।।** उक्तश्रुतिस्मृतिबलात् अतिव्याप्त्यादि-शून्येत्यवधारणार्थोक्तिः । असम्भव आदिपदार्थः । स च यतो वेत्यादिवाक्योक्तितात्पर्यलब्धः । लक्ष्यैक्यादव्याप्तिशङ्का नास्त्येव । न च जीव एवेत्यवधारणं विष्णुरेवेत्यध्याहृतविष्णुपदेनान्वेतीति भावेनोक्तम् ।। **विष्णुरेव श्रुत्युक्तं ब्रह्म न जीव इति ।।** न जीवादीत्यर्थः । अत ब्रह्मणो विष्णुत्वान्निश्चितजीवत्वाभावेन सन्दिग्धत्वसम्भवादित्यर्थः ।। अ-२ ।।

टीकागाम्भीर्यमाहात्म्यं मर्शं मर्शं पुरो मनः ।
नैति तद्विस्तरभयात्करोत्यग्रेसरं मतिः ।।

## अभिनवचन्द्रिका

**अत्रेति ।।** अस्याधिकरणस्य श्रुत्यर्थनिर्णायकन्यायग्रन्थनात्मकशास्त्रान्तर्भावप्रतिपादनाय श्रुत्युक्तेति ब्रह्मविशेषणमिति द्रष्टव्यम् । **तस्य विष्णुत्वमिति ।** श्रुत्युक्तस्य ब्रह्मणः विष्णुत्वसिद्धेः पुरा, श्रौतब्रह्मशब्दस्य यौगिकत्वानिर्णयेन न तेन तस्य गुणपूर्तिसिद्धिः स्यात् । ततश्च जिज्ञास्यस्य जीवाद्भेदकाभावेनासन्दिग्धत्वापत्त्या जिज्ञास्यता न स्यादिति । तस्य विष्णुत्वसमर्थनमावश्यकम् । समर्थ्यतं च श्रौतब्रह्मणो विष्णुत्वमत्राधिकरण इति श्रुत्यादिसङ्गतिरिति भावः । ननु श्रौतब्रह्मणो विष्णुत्वसमर्थनेनैव जीवभेदसिद्धिसम्भवात् जीवभेदसिद्ध्ये किं गुणपूर्तिसिध्यनुसरणेनेति चेत्, सत्यम् – विष्णुत्वसिद्ध्यैव जीवाद्भेदः सिध्यतीति तथापि पूर्वाधिकरणे जीवभेदसिद्ध्ये ब्रह्मशब्देनोपन्यस्तस्य गुणपरिपूर्णत्वस्य हेतोः, नाऽस्य ब्रह्मशब्देन गुणपूर्णता सिध्यति रूढ्यैव ब्रह्मशब्दस्य प्रवृत्तत्वादित्य-सिद्धिशङ्का प्राप्तौ तत्परिहाराय विष्णुत्वसमर्थनेन गुणपूर्णत्वसाधनमावश्यकम् । **भाष्यकारेणैवोक्त-त्वादिति ।।** **सूत्रकृता ब्रह्मशब्दो** विष्णावेव मुख्य इत्यनुक्तत्वात्, भाष्यप्रवृत्तेः प्राक् स्वकृतप्रथमसूत्रदर्शिनां

(अभिनवचन्द्रिका)

सम्भावित संशयाऽऽहरणे न श्रुत्युक्तब्रह्मणो विष्णुत्वसमर्थनं सूत्रकारस्योपपन्नमिति भावः । एतेन भाष्यकारवचनस्य निर्णायकत्वेन संशयाहेतुत्वात् भाष्यकारेणैवोक्तत्वात् 'भवति सन्देह' इत्ययुक्तमिति परास्तम् । **बृहजातिजीवेति** ।। उपलक्षणमेतत् । ब्रह्मशब्दस्य जीवे बहुलप्रयोगात् 'ब्रह्माणि जीवाः सर्वेऽपि परब्रह्माणि मुक्तिगा' इति ब्रह्मशब्दस्य जीववाचितया व्याख्यानाच्चेत्यपि द्रष्टव्यम् । यद्यपि 'बृहजतिजीवकमलासनशब्दराशि'ष्विति धातुव्याख्यानात् बृहधातोरेव जीवादौ रूढिसिद्धिः न तु ब्रह्मशब्दस्येति जीवादौ तस्य रूढिसिद्धये नेदं धातुव्याख्यानमुदाहर्तव्यम् तथापि बृहधातोः स्वार्थिकमनिन्प्रत्ययान्तत्वेन बृहधातोर्जीवे रूढिसिद्धौ ब्रह्मशब्दस्य रूढिः स्वयमेव सिध्यतीति भावेन धातोरेव रूढिसिध्द्यर्थं धातुव्याख्यानमुदाहृतम् । **यद्यपि ब्रह्मशब्द इति** ।। अत्राधिकरणे जीवव्यतिरिक्तेश्वरवादी पूर्वपक्षी । ततश्च ब्रह्मशब्दो विष्णौ योगेन प्रवर्तते जीवे रूढ्या प्रवर्तत इत्याद्युपपन्नमिति बोध्यम् ।। ननु गङ्गायां घोष इत्यत्र समभिव्याहृतघोषपदमुख्यार्थान्वयानुपपत्त्या गङ्गापदमुख्यार्थस्य प्रवाहस्य त्यागवत्, अत्रापि समभिव्याहृत'विजिज्ञासस्वे'तिपदमुख्यार्थ-जिज्ञासान्वयानुपपत्त्यैव ब्रह्मशब्दमुख्यार्थस्यापि जीवस्य त्यागोऽस्त्वित्यत आह– **न चात्र तादृशमिति** ।। युक्तस्तत्र गङ्गापदमुख्यार्थस्य त्यागः । समभिव्याहृतघोषपदमुख्यार्थान्वयानुपपत्तिसद्भावात् । प्रकृते च ब्रह्मशब्दमुख्यार्थत्यागो न युक्तः – समभिव्याहृत 'विजिज्ञासस्वे'ति पदस्य विचारे लाक्षणिकत्वेन मुख्यार्थान्वयानुपपत्तेरभावात् । एवं च ब्रह्मशब्दमुख्यार्थं गृहीत्वा तदन्वययोग्यमेव विजिज्ञासस्वेति पदेन लक्षणीयमिति भावः । तदिदमुक्तम् – न चाऽत्र तादृशं बाधकमस्तीति । अन्यथा – न चात्र बाधकमस्तीत्यवक्ष्यत् । उपसंहरति – **तस्मादिति** ।। अत्र टीकायां 'जात्यादेर्मुख्यतो जिज्ञास्यत्वात् देहात्मविवेकस्याऽऽवश्यकत्वा'दिति प्रक्षिप्तम् । ततश्चैवं टीकावाक्यपाठः – 'तस्माज्जीव एवेदं ब्रह्मे'ति तस्यार्थः – बाधकं विना मुख्यार्थत्यागासम्भवात् जात्याद्यपेक्षया जीव एव ब्रह्मशब्दस्य बहुलप्रयोग-सद्भावात् नपुंसकब्रह्मशब्दस्य जीववत् कमलासने बहुलप्रयोगाभावात् । जीव एवेदं ब्रह्म न जात्यादिः । नापि कमलासनः । नापि विष्णुरिति । अवश्यं च 'जात्यादौ मुख्यतो जिज्ञास्यत्वात् देहात्म-विवेकस्याऽऽवश्यकत्वा'दिति वाक्यं प्रक्षिप्तं विज्ञेयम् । अन्यथा 'देहात्मविवेकस्यावश्यकत्वा'दिति जिज्ञास्यत्वं विधाय अजिज्ञास्यतेत्युपसंहारे व्याहतिः स्यात् । सन्दिग्धत्वं विना देहात्मविवेक-स्यावश्यकत्वायोगेन आवश्यकत्वोक्त्यैव सन्दिग्धत्वलाभात्, असन्दिग्धत्वादित्यप्ययुक्तं स्यादिति । **लक्षणमाह सूत्रकार इति** ।। ननु सृष्टिकर्तृत्वादि प्रत्येकं लक्षणम् । उत मिलितमेकमेव । किं चातः यदि प्रत्येकं लक्षणम् तर्हि लक्षणान्याहेति बहुवचनेन भवितव्यम् । अथ समुदितं तर्हि एकैकस्यापि

(अभिनवचन्द्रिका)

व्याप्तिर्वक्तव्या । अन्यथा विशेषणवैय्यर्थ्यम् । न च सा सम्भवति, 'य उ त्रिधा (ऋ.सं.१-१५५-६) त्वित्यादिना स्थित्यादेः विष्ण्वेकनिष्ठत्वस्य भाष्य एवोक्तत्वात् । यतो वा इमानि भूतानि जायन्त' (तै.उ.३-१) इत्यस्यां श्रुतौ यच्छब्दत्रयश्रवणेन यत इमानि भूतानि जायन्ते तद्ब्रह्म, येन जीवन्ति तद्ब्रह्मेत्यादि पृथगन्वयेन प्रत्येकं लक्षणत्वप्रतीतेश्चेति चेत्, सत्यम्– सृष्टिकर्तृत्वादीनि प्रत्येकमेव लक्षणानीति । तथापि लक्षणमाहेत्येकवचनमुपपन्नम् । सूत्रकृता सृष्ट्यादिनिरूपितस्यैकस्यैव कर्तृत्वस्य लक्षणत्वेन विवक्षितत्वात् । श्रुतौ तु प्राधान्येन जगत्कारणत्वजगत्पालकत्वादीन्यनेकानि लक्षणान्युक्तानि, अर्थात्तु जगद्धर्मजनिस्थितिसंहाराद्यनेकधर्मकर्तृत्वं लक्षणमुक्तम् । सूत्रकृता तु सूचितेन जन्मादिकर्तृत्वेनैव जिज्ञास्यस्य जीवाद्यावृत्तिर्भवति, किमु कण्ठोक्तैर्जगत्कर्तृत्वपालकत्वादिभिरिति भावेन सूचितमेव सृष्ट्यादिकर्तृत्वं लक्षणमुक्तमिति ध्येयम् । एतेन 'जन्माद्यस्य यत' इति सूत्रे अस्येत्यनेन घटादिग्रहणवत्, इदंशब्देन उत्पत्तिस्थितिसंहारादीनामपि ग्रहणसम्भवात् 'इदं यत' इति, 'जन्म यत' इति वा, सूत्रेण सर्वस्यापि सिद्ध्या, 'जन्माद्यस्य यत' इति गुरुतरसूत्रप्रणयनमयुक्तमिति परास्तम् । अस्मिन्सूत्रे जगद्धर्मसृष्ट्याद्यष्टकारणत्वस्यैव विवक्षितत्वेन जगत्कारणत्वस्याविवक्षितत्वात् । **आदिपदोक्ते स्थितिसंहृती इति** ।। ननु आदिपदस्य पूर्वपदेनैकार्थत्वात् जन्मपदोक्तमेव आदिपदोक्तं भवेत् न तु स्थितिसंहृती आदिपदोक्ते, अन्यथा स्थितिसंहृत्योरादिपदार्थत्वे अन्यपदार्थत्वाभावात् जन्मादीत्यत्र बहुव्रीहिर्न स्यादिति चेत्, न– बहुव्रीहौ समस्यमानपदयोर्व्यासज्यवृत्तिलक्षणया अन्यपदार्थपरत्वेन स्थितिसंहृत्योरादिपदार्थत्वात् । दम्पतिपुत्रस्य अन्यतरपुत्रत्वव्यवहारवत् पदद्वयार्थस्य एकपदार्थत्वव्यवहारस्य युक्तत्वात् । ननु– अथापि अस्य तद्गुणसंविज्ञानबहुव्रीहित्वात् आदिपदोक्ताः सृष्टिस्थितिसंहृतय इति वक्तव्यम् । यत्र वर्तिपदार्थः अन्यपदार्थैकदेशः तत्रैव तद्गुणसंविज्ञानबहुव्रीहिरिति नियमात् इति चेत्, सत्यम् – स्थितिसंहृती इव जन्मापि अन्यपदार्थ एव । तथापि जन्मनः समस्यमानपदशक्यत्वं स्थितिसंहृत्योस्तु तन्नेति विशेषद्योतनाय तथोक्तम् । **प्रतीतिनिरासायेति** ।। यद्यपि सृष्टिस्थितिसंहारकर्तृत्वस्य ब्रह्मासाधारणधर्मत्वात् सृष्टिस्थितिसंहृतयो यतः तद्ब्रह्मेति प्रतीतिर्न निरसनीया, तथापि सृष्टिस्थितिसंहारकर्तृत्वमात्रं सूत्रार्थ इति प्रतीतिर्निरसनीयैव, सृष्टिस्थितिसंहृतिनियमनज्ञानाऽज्ञानबन्धमोक्षसुखदुःखादिप्रमाणप्रमितयावद्धर्मकर्तृत्वस्य सूत्रार्थत्वात् । प्रमाणप्रमितस्य हातुमशक्यत्वात् । भाष्ये सूत्रार्थत्वेन सृष्ट्याद्यष्टकर्तृत्वोक्तिस्तु परोक्तसृष्ट्यादित्रितयकर्तृत्वादिनियमनिरासेन प्रमाणप्रमितयावज्जगद्धर्मकर्तृत्वं सूत्रार्थ इति विज्ञेयमिति ज्ञापनाय न तु सृष्ट्याद्यष्टकर्तृत्वमेव सूत्रार्थ इत्यवधारणज्ञापनायेति बोध्यम् । **लब्धजन्मन इति** ।। ननु– लब्धजन्मनः स्थित्यादीति, यदि जन्मन आदित्वम्, तर्हि – 'बन्धस्यैव जन्मादीति बन्धाद्यस्य

(अभिनवचन्द्रिका)

यत' इति सूत्रं स्यात् इति चेत्, सत्यम् तथापि बन्धस्याऽसार्वत्रिकत्वात्, जन्मनः सार्वत्रिकत्वात्, जन्मन आदित्वम् । भाष्ये **'यस्मात्स हरिरेकराडिति** ।। उत्पत्त्यादिकं यस्मात्स हरिरेकराडिति उत्पत्त्यादिकर्तृत्वं प्रति हरित्वस्य व्यापकत्वोक्त्या व्यापकाभाववति व्याप्याभावनियमात्, जन्मादि-कारणत्वस्य विष्ण्वैकनिष्ठत्वं सिध्यतीति भावः । **प्रत्येकमपीति** ।। एकैकनिरूपितमित्यर्थः । **किमु सर्वमिति** ।। सृष्ट्यादिसर्वनिरूपितमेकमेव कर्तृत्वमित्यर्थः । एतेन प्रत्येकं विष्ण्वेकनिष्ठत्वे न समुदितानां कर्तृत्वानां लक्षणत्वम्, व्यावर्त्याभावात्, समुदितानां न च लक्षणत्वे एकैकस्यापि व्याप्तेरावश्यकत्वात् प्रत्येकं विष्ण्वेकनिष्ठत्ववर्णनमयुक्तमिति परास्तम् । त्रिधा त्वित्यस्यार्थः **प्रकृतिपुरुषकालाधार इति** ।। **एकादशादित्या इति** ।। आदित्यानां द्वादशत्वेऽपि विष्णुव्यतिरिक्तानां नियम्यानामेकादशत्वादियुक्तिः । **तत्त्वप्रदीपे तु** – चतुर्भिः नामवद्भिर्कीर्तिमद्भिः अनन्तगरुडवायुब्रह्मभिः साकं नवतिं देवान् पर्यवर्तयदिति वा अन्वय' इति टीकोक्तव्याख्यानं प्रथमतः कृत्वा इत्यपि व्याख्यातम् । स्वकीयद्वितीयव्याख्याने संमतिश्चोक्ता–

'आदित्या वसवो रुद्रा मरुतश्चाश्विनावपि ।
बृहस्पतिश्च कामश्च मनुर्दक्षो विनायकः ।
भृगुश्चैवाऽनिरुद्धश्च धर्मो निर्ऋतिरेव च ।।
कुबेरसहिता देवा नवतिः सम्प्रकीर्तिताः ।
अनन्तो गरुडो वायुश्चत्वारो ब्रह्मणा सहे'ति ।।

अत्राश्विनोरैक्यविवक्षा द्रष्टव्या । **एतान्यपि लक्षणानीति** ।। केवलं नियामकत्वं पालकत्वं चेति लक्षणद्वयमेव नातिव्याप्तम्, किन्तु तदतिरिक्तान्यपि सृष्टिकर्तृत्वादीनि नातिव्याप्तानीत्याहेत्यर्थः ।

अत्र परैः– 'न तावदुपलभ्यमानं जगदेव ब्रह्मलक्षणम् । तस्याऽनित्याऽशुद्धपरिच्छिन्नादिरूपस्य तद्विरुद्धब्रह्मलक्षणत्वानुपपत्तेः । नापि नित्यत्वादिर्ब्रह्मधर्मः । तस्यानुपलब्धेरिति प्राप्ते, मा भूदनुभूयमानं जगत् तद्धर्मतया तदात्मतया वा लक्षणम्; तदुत्पत्त्यादि तु भविष्यति देशान्तरप्राप्तिरिव सवितुर्व्रज्याया' इति सिद्धान्तितम् । तत्र– 'यतो वा इमानी'ति वाक्येन सूत्रेण च जगत्कारणत्वस्यैव स्पष्टं लक्षणतया प्रतिभानेनोत्पत्त्यादेर्लक्षणत्वाभिधानायोगात् । जगत इव जन्मनोऽपि विरुद्धत्वेन तल्लक्षणतायोगस्य त्वद्रीत्यैव प्राप्तेश्च । ब्रह्मत्वसिद्धस्यापि जन्मनो लक्षणत्वे जगतोऽपि तथात्वप्राप्त्या 'मा भूदनुभूयमानं जगत्तद्धर्मतया तदात्मतया वा लक्षणमित्युक्त्यनुपपत्तेश्च । देशान्तरप्राप्तेः सवितुर्व्रज्या ज्ञापकत्वेन तल्लक्षणत्वाच्च ।

(अभिनवचन्द्रिका)

**पूर्वपक्षस्तु–** जीव एवेदं ब्रह्म न विष्णुः जीवप्रापकरूढिसद्भावात् । न च विष्णुप्रापकयोगसद्भावात् विष्णुरेवात्रोक्तं ब्रह्म किं न स्यादिति वाच्यम् । योगाद्रूढेर्मुख्यत्वात्, बाधकं विना मुख्यार्थत्यागायोगात् । न च जिज्ञास्यत्वमेव बाधकमिति वाच्यम् । जिज्ञासापदस्य ज्ञानेच्छावाचकत्वेन विचारार्थकत्वाभावात् । ततश्च जीवस्य ब्रह्मपदमुख्यार्थत्वाभावात् अस्य ब्रह्मणः जीवत्वे सिद्धे तस्य च स्वप्रकाशत्वेनासन्दिग्धस्याऽविचार्यत्वात् प्रकृतानुगुणमेव जिज्ञासापदेन लक्षणीयमिति जिज्ञासाया अविहितत्वात्, न ब्रह्मजिज्ञासा सम्भवतीति ।

**सिद्धान्तस्तु–** ब्रह्मशब्दस्य विष्णौ योगरूढत्वात् विष्णुरेवेदं ब्रह्म । यद्यपि ब्रह्मशब्दो जीवे रूढः तथापि रूढिमात्रात् विद्वद्रूढेः प्राबल्येन निर्णयोपपत्तेः । अस्तु वा जीव एव रूढिः । तथापि 'यतो वे'ति पूर्ववाक्योक्तकारणत्वपालकत्वसंहारकत्वमुक्तप्राप्यत्वानामयोगप्रसङ्गेन मुख्यार्थस्यापि त्याज्यत्वात् । न च तेषां जीवे सम्भव इति वाच्यम् – भाष्योदाहृत 'य उ त्रिधा' त्वियादिना तेषां विष्ण्वेकनिष्ठत्वस्य सिद्धत्वात् । जिज्ञासाशब्दो विचारे रूढः, यदि वा लाक्षणिकः, उभयथापि 'आत्मा वा अरे द्रष्टव्य' (बृ.उ.४-) इति श्रुतिसमाख्यानात् विचारपर एवेति तद्विरोधाच्च न जीवोऽत्र विवक्षितः । तथा च जीवातिरिक्तस्य ब्रह्मणः प्रागुक्तं जिज्ञास्यत्वं सिद्धम् (२.अ)

## वाक्यार्थमुक्तावली

ॐ जन्माद्यस्य यतः ॐ । अत्र ब्रह्मप्रतिपादिकायास्तद्ब्रह्मेति श्रुतेरर्थनिर्णयानुकूलन्यायानुसन्धानस्य क्रियमाणत्वेन शास्त्रान्तर्भावसङ्गतिरस्तीति आह अत्रेति । पूर्वाधिकरणे ब्रह्मजिज्ञासायां कर्तव्यतयोक्तायां तत्राक्षेपे प्राप्ते तत्परिहारस्य क्रियमाणत्वादस्याधिकरणस्य श्रुत्यधिकरणाभ्यामाक्षेपकी सङ्गतिः । अध्यायादिसङ्गतिस्तु नास्तीति प्रागेवोक्तेत्यभिप्रेत्याह श्रुत्यादीति । न सम्भवतीति । श्रुत्यादिसङ्गतिरित्यन्वयः । अत्र श्रुत्यधिकरणसङ्गत्योरेकप्रकारत्वज्ञापनाय सङ्गतिरित्येकवचनम् । वस्तुतः सङ्गत्यैक्याभावेन क्वचित्सङ्गतीति द्विवचनप्रयोगः । यद्यपि सिद्धान्ते ब्रह्मशब्दस्य रूढित्याजकजन्मादिहेतुत्वरूपबाधकोपन्यासेन रूढिनिरासेन यौगिकत्वमात्रं समर्थ्यते तथापि योगार्थस्य विष्णावेव सम्भवाद्यौगिकत्वसमर्थनमित्यनुक्त्वा विष्णुत्वेति फलितोक्तिः कृता । ब्रह्मशब्दितविष्णुनिर्णायकत्वेन शास्त्रान्तर्भावप्रदर्शनार्थं च । यद्यप्यधिकरणत्रये विषयवाक्यमेकमेव । तथापि पूर्वाधिकरणे तद्विजिज्ञासस्वेत्यंशः तद्ब्रह्मेति गुणसमर्पकतया जीवव्यावर्तकब्रह्मश्रुतिरूपहेतूक्त्या विचारितः । अत्र

(वाक्यार्थमुक्तावली)

पूर्वं हेतूकृतो ब्रह्मेत्यंशः उत्तरत्र तु अत्र हेतूकृतो यतो वेत्यादि पूर्वांशो विचार्यत इत्यंशभेदाद्भेद इति भावः । **किं विष्णुरिति** । अत्र तद्ब्रह्मेति श्रुत्युक्तं ब्रह्म किं जीव उत विष्णुरिति चिन्ता । तदर्थं ब्रह्मशब्दस्य रूढार्थजीवपरित्यागेन यौगिकार्थविष्णुग्रहणे हेतुर्नास्त्युतास्तीति । तदर्थं हेतुत्वेनोपन्यस्यमानं जन्मादिकारणत्वं विष्णौ किमप्रमितमुत प्रमितमिति । कारणत्वश्रवणाज्जात्यादेरसन्देहनिविष्टत्वम् । जीवस्य त्वदृष्टद्वारा कारणत्वं सम्भवतीति तस्य सन्देहनिविष्टत्वम् । यद्वा न्यायविवरणटीकायां जीव एवेति जात्यादेरुपलक्षणम् । एवशब्दस्तु भगवन्तं व्यावर्तयतीत्युक्तत्वेनात्र जीवग्रहणमुपलक्षणं द्रष्टव्यम् । **स्वकृतव्याख्यानेति** । सौत्रब्रह्मशब्दस्य यतो नारायणप्रसादमृते न मोक्ष इति स्वकृतव्याख्यान-स्थापनायेत्यर्थः । **जीववाचित्वमिति** । न्यायप्रदर्शकं जीव एवायं ब्रह्मशब्द इति न्यायविवरणं विवृण्वन् ब्रह्मणो लक्षणमाहेत्युक्त्या लक्षणस्य सजातीयजीवव्यावर्तकत्वलाभात् । व्यावृत्तेश्च प्रसक्तिपूर्वकत्वात्प्रसञ्जकं पूर्वपक्षमाह **जीव एवेति** । **यद्यपीति** । 'स्याच्चैकस्य ब्रह्मशब्दवत्' । 'परं जैमिनिर्मुख्यत्वादि'ति वक्ष्यमाणन्यायेनेति भावः ।

**योगेनैवेति** । ननूत्तरत्र योगोपपादनेऽपि देवशाखे निरन्तरसूत्रद्वये आचक्षत इति प्रयोगबाहुल्य-प्रतिपादनेन रूढ्युक्तेः कथमवधारणमिति चेन्न । रूढ्या विष्णुर्स्वाकारे रूढः जीवेषु तुल्यत्वेन तस्यापि अत्र प्राप्तिः स्यादिति भयेन सिद्धान्तिना रूढ्याच्छादनेन योगेनैव तत्प्रवृत्तेरङ्गीकर्तव्यत्वात् । योगरूढ्यङ्गीकारस्य रूढ्यंशे प्रकृतोपयोगाभावेन तस्यानुपन्यसनीयत्वादित्यभिप्रेतत्वात् । **रूढेरेवेति** । अवयवार्थनिरपेक्षतया तस्याः शीघ्रमर्थोपस्थापकत्वादिति भावः ।

ननु तदेव ब्रह्म परमं कवीनामित्यत्र रूढार्थजीवपरित्यागेन यौगिकार्थविष्णुग्रहणं दृष्टम् । तद्वत्प्रकृते किं न स्यादित्यत आह **न चात्रेति** । तादृशं निरवकाशम् । समुद्रशायित्वरूपं कारणत्वं त्वदृष्टद्वारा जीवेऽप्यस्तीति भावः । **जन्मादिपदोक्त इति** । जन्मादिपदोक्ते स्थितिसंहृती च इति यत इति योज्यम् । यद्वा तद्गुणसंविज्ञानं गृहीत्वा जन्म विना स्थितिसंहृती यतस्तद्ब्रह्मेति योज्यम् । **इत्यादि-प्रतीतेति** । आद्यस्य जन्म यतो इत्यादिशब्दार्थः । भाष्ये मोक्षा इति बहुवचनं सौत्रैकवचनादेकं लक्षणमिति न भ्रमितव्यमित्याशयेन प्रवृत्तम् । सौत्रैकवचनं जात्यभिप्रायेण । आकाङ्क्षितपूरणेन सूत्रभाष्ययोरर्थमाह **सृष्ट्यादीति** । नन्वदृष्टद्वारा जीवस्यापि कारणत्वात्कथमनेन रूढार्थत्याग इत्यत आह **लक्षणं चेति** । यतो जायन्त इति साक्षात्कारणत्वस्य श्रूयमाणत्वेनादृष्टद्वारा कल्पकाभावात् । साक्षाद्धेतुत्वस्य सर्वथाऽनवकाशमिति भावः । ननु रूढ्या जीव इति प्राप्ते विद्वद्रूढ्या विष्णुरिति

(वाक्यार्थमुक्तावली)
समाधिः कार्यः । तदेव ब्रह्म परमं कवीनामिति विद्वद्रूढेः प्रमितत्वात् । न तु योगमात्रमङ्गीकृत्य बाधकवशेन मुख्यस्यापि रूढार्थस्य त्याग इति समाधानं वक्तुमुचितमित्यशङ्क्य परिहरति । **यद्यपीति । अभ्युपगम्योक्तिरिति** । विष्णौ रूढ्यभावमिति शेषः । इयमुक्तिः सौत्री बाधकोक्तिः । तावतापि जीवभेदबाधकगुणपूर्तिलाभेन प्रकृतसिद्धेरिति भावः । नन्वस्तु जन्मादीत्येकवचनं जात्यभिप्रायं तथाप्य-तद्गुणसंविज्ञानः किमिति मन्दाशङ्कां परिहरति । **तद्गुणसंविज्ञान इति** । जायन्त इत्युक्तत्वात् । अष्टकलाभाच्चेति भावः । ननु स्थित्याद्यपेक्षया जन्मन आदित्वमयुक्तम् । न पौर्वापर्यमिच्छन्ति नद्यां भ्राम्यद्भ्रमेरिवेति भागवतोक्त्या दर्शपौर्णमासतिथ्योरिवोभयोरप्यनादित्वादित्यत आह **लब्धेति** । स्थित्यपेक्षया जन्मनः पूर्वभावित्वनियमाभावेऽपि यत्र जन्मस्थिती वर्तेते तस्य लब्धजन्मनः स्थित्यादिक-मिव स्थितस्य वा नष्टस्य वा जन्म नेति । तत्र जन्मनः पूर्वभावित्वनियमात् । एकत्वाभिप्रायेण स्थित्यादि इत्यनुक्त्वा जन्मादीत्युक्तमिति भावः ।

नन्वस्य जगतो धर्मिणस्तद्धर्माणां च जन्मादि सृष्टिस्थिती यत इत्युक्तेऽपि संहारादिषट्कस्यापि अस्येत्यनेन ग्रहणात् जगत्कर्तृत्ववत् संहारादिकर्तृत्वमपि सेत्स्यति । न च वाच्यमस्येति धर्मिण एव ग्रहणं न धर्माणामिति । सुखदुःखादिधर्मान्प्रत्यपि कर्तृत्वस्य पृथग्वक्तव्यतापातात् । तस्मादष्टकर्तृत्वं न सूत्रार्थ इति चेन्न । **सृष्ट्याद्यष्टकर्तृत्वस्य** मोक्षार्थमवश्यं ज्ञातव्यत्वेनैवमुक्तत्वात् । यथोक्तम्—

सृष्टिरक्षाहृतिज्ञाननियत्यज्ञानबन्धनान् ।
मोक्षं च विष्णुतस्त्वेव ज्ञात्वा मुक्तिर्न चान्यथेति ।।

**पूर्ववाक्ये कथितमिति** । चतुष्टयं साक्षात् श्रुतम् । बन्धान्मोक्षदानोक्त्या बन्धकत्वमप्युक्तप्रायम् । बन्धस्य भगवदज्ञानकार्यत्वात्तत्कर्तृत्वं, विज्ञानान्मोक्षस्य प्रमितत्वात्तत्कर्तृत्वमपि, नियमनकर्तृत्व-मुपलक्षणतया द्रष्टव्यम् । अभिरामित्युपसर्गद्वयबलादिदं मुक्तिपरमिति भावेनार्थमाह । **यदभि स्वेच्छयेति** । विष्ण्वेकनिष्ठमित्यनतिव्याप्तमित्यर्थः । **श्रुतिमाहेति** । **स्मृतौ** सर्वस्य विष्णुनिष्ठतोक्तेः । मा पूर्वमुपन्यस्तेति भावः । **एक एवेति** । एतेन उशब्द एवार्थः एक इत्यनेन सम्बध्यत इत्युक्तं भवति । श्रुतौ त्रिधा-न्वित्येकं पदम् । तथा नियमनमिति सर्वदेवतानियमनोक्त्या तल्लाभ इति भावः । वृहच्छरीर इत्युत्तर-वाक्यस्थं विशेष्यतया संयोज्य व्याख्यातम् । **व्यतीनित्यस्यार्थो** विशेषणाधिकानिति । विशेषणाधिकत्वात् व्यतयो देवताः स्मृता इति कर्मनिर्णयोक्तेरिति भावः । **त्र्यकमिवेति** । नकार इवार्थको वेदे प्रसिद्ध इति भावः । पर्यवर्तयदिति 'विपृ' परिवर्तन इति धातोरिति तत्त्वप्रदीपे । **हे विष्णविति** । विष्णोर्देवत्व-

(वाक्यार्थमुक्तावली)

मित्युरार्धे श्रवणादिति भावः । अन्तमित्यस्यार्थः सीमानमिति । यथा जीवमहिमसु चतुर्मुखमहिम्नः सीमत्वं यथा वा परतन्त्रमहिमसु रमामहिम्नः । एवं विष्णुमहिम्नोऽपि विवक्षाविशेषेण सीमत्वं न मन्तव्यमिति भावेनोक्तं परमिति । यथोक्तं सत्तर्कदीपावल्याम् । महिमातारतम्यपरावधिभूतं विष्णोर्महिमत्वं यथेदानीन्तनो न प्राप्नोति तथा जातोऽपि न प्राप्नोति न विकारित्वमिति । तथा च न प्रकृतावतिव्याप्तिरिति भावः ।

## तत्त्वसुबोधिनी

ॐ जन्माद्यस्य यतः ॐ ।। **तस्य विष्णुत्वं यावन्न साध्यत इति** । अनेन पूर्वाधिकारणेनास्याधिकरणस्याक्षेपिकी सङ्गतिरुक्ता भवति । जिज्ञासा न सम्भवतीतीत्यत्रस्थ इतिशब्दस्य प्रकारवाचिनः इति श्रुत्यादिसङ्गतिरिति पूर्वेण सम्बन्धः । **उभयत्रापीति** । जीवे विष्णावपि इत्यर्थः । **मुक्त इत्युक्तमिति** । मुख्यामुख्ययोः मध्ये मुख्यस्यैव सम्प्रत्यय इत्यवधारणबलेन नोत्कटकोटिकोऽपि सन्देहः सम्भवतीति भावः । **स्वकृतव्याख्यानेति** । यतो नारायणप्रसादमृत इत्यादिनेत्यर्थः । **योगेनैवेति** । पूर्वाधिकरणसिद्धान्ते अथ कस्मादुच्यत इति श्रुत्युदाहरणपूर्वकं विष्णौ तस्य योगस्यैव प्रदर्शितत्वात् । योगानङ्गीकारे गुणपूर्णत्वासिद्धेश्च । श्रुतिप्रतिपादितयोगेनैव तद्व्यवहारोपपत्तौ योगरूढ्यङ्गीकारस्य व्यर्थत्वाच्चेति भावः । **न चात्रेति** । अत्र तद्विजिज्ञासस्वेति वाक्ये तादृशं तदेव ब्रह्म परमं कवीनां इत्यादौ समुद्रशायित्वस्येव प्रकृते तदभावादिति भावः । न चैवं तेनैव सविषयत्वात् आक्षेपानुपपत्तिरिति शङ्क्यम् । जीवान्यब्रह्मधर्मिकगुणपूर्णत्वप्रकारकविशिष्टाधिकारिकपूर्वसूत्रोक्तजिज्ञासा न कर्तव्या इत्यत्र तात्पर्यात् । ननु ब्रह्मशब्दस्य जीव इव जात्यादावपि रूढिसद्भावात् तदप्यत्र ब्रह्मशब्दार्थः किं न स्यादित्यतः तस्य तत्र रूढत्वेऽपि बाधकवशात्तत्परित्याग इत्याह । **जात्यादेरिति** ।। जडत्वेन तस्य जिज्ञास्यत्वाभावादिति भावः । ननु जडस्यापि वियदादेः 'न वियत्' इत्यादौ विचार्यमाणत्वात् जात्यादेः जडत्वेऽपि जिज्ञास्यत्वं स्यादित्यत उक्तम् **मुख्यत इति** । तथा च जात्यादेः अन्यार्थं जिज्ञास्यत्वेऽपि मुख्यतः तदभावात् न जिज्ञास्यत्वमिति भावः । ननु तर्हि जीवस्यापि जिज्ञास्यत्वस्यैव बाधकत्वात् जीवोऽप्यत्र ब्रह्मशब्देन ग्राह्य इत्यत आह । **देहात्मविवेकस्येति** । जीवज्ञानाभावे देहात्मनोः विवेकज्ञानासम्भवादिति भावः । ब्रह्मणो लक्षणमाहेति भाष्यं व्याचष्टे । **जीवग्रहण इति** । **जिज्ञास्यब्रह्मणो लक्षणमिति** । विष्णुलक्षणत्वेन प्रमितं जगज्जन्मादिकारणत्वं जिज्ञास्यब्रह्मसम्बन्धित्वेनेत्यर्थः । अत एव जीवग्रहणे बाधकमित्युक्तम् । **इत्यादिप्रतीतिनिरासायेति** । आदिपदेन आद्यस्य हिरण्यगर्भस्य जन्म यतः तद्ब्रह्मेति । तथा जन्मादीति

(तत्त्वसुबोधिनी)

तद्गुणसंविज्ञानो बहुव्रीहिः । ततश्च जन्म आदि यस्यावस्थानस्य तज्जन्मादीत्येवार्थः । जगत्पालको भगवान् विष्णुरिति प्रसिद्धेरिति अपव्याख्यानद्वयपरामर्शो इति ज्ञेयम् । **यथावदिति** । अयं भावः । श्रौतं हि ब्रह्मणो लक्षणमिहोच्यते । श्रुतयश्च कृत्स्नस्यापि प्रपञ्चस्य सृष्ट्याद्यष्टककारणं परमेश्वरमभिदधतीत्यतः सृष्ट्याद्यष्टस्यैव जन्मादिपदार्थत्वात् अन्यथाव्याख्यानं अपव्याख्यानमेवेति । ननु पूर्वाधिकरणे तदेव ब्रह्म इत्यादिना विष्णौ विद्वद्रूढेः समर्थितत्वात् तस्मादादौ कुतो न सिद्धान्तः क्रियत इत्यत आह । **यद्यपीति** । उभयथापि सिद्धान्तसम्भवात् योगमादाय सिद्धान्तः क्रियते इत्यदोषः । रूढिमादायापि सिद्धान्त ऊह्य इति भावः ।

जन्म आदि यस्येति अतद्गुणसंविज्ञानो बहुव्रीहिः । तथा च स्थितिकर्तृत्वमेव लक्षणमिति ये मन्यन्ते तन्मतं निराकरोति । **जन्माद्यस्येति** । अन्यथा यतो वेति श्रुतौ जायन्ते इत्युक्तेः असम्भव इति भावः । एवं च लब्धजन्मनः इत्युपपन्नम् । अत एव तद्गुणसंविज्ञानं इत्युक्त्वा अनन्तरं लब्धजन्मनः इत्युक्तम् । **तद्गुणसंविज्ञान इति** । अत्र तच्छब्देन बहुव्रीह्यर्थोऽन्यपदार्थ उच्यते । तस्य गुणत्वेन संविज्ञानं यस्मिन् बहुव्रीहौ स तद्गुणसंविज्ञानः । सर्वस्याविशेषणत्वे समासासम्भवात् समासार्थैकदेशो विशेषणमिति लभ्यते । तथा च लम्बकर्णो देवदत्तः इत्यत्र देवदत्तैकदेशमेव विशेषणं कृत्वा देवदत्तो बोध्यते तथा जन्मादीत्यत्रापि विशेष्यभूतजन्मस्थितिभङ्गाद्येकदेशभूतं जन्मैव विशेषणं कृत्वा विशेष्यार्थो बोधनीय इति भावः । ननु स्थितिग्रहणमेव प्रथमतः किं न कृतमित्यत आह । **लब्धजन्मनो हीति** । आवृतिपदेन बन्धः प्रतीयते इति स्यात् । तथा च पौनरुक्त्यमत आह । **आवृतिः अज्ञानमिति** । सृष्ट्यादिकारणस्य कुतो हरित्वमित्यतोऽन्येषामस्वातन्त्र्येण तदसम्भवात् हरेः एव स्वातन्त्र्येण तत्सम्भवात् इत्याशयेन स्वातन्त्र्यसमर्पकतया एकराट् इत्येतद्व्याख्याति । **एकराडिति** । **पर्यवर्तयदिति** । विपूपरिवर्तन इति धातोरिति भावः । **व्यतीनित्यस्यार्थो विशेषणाधिकानिति** । विशेषणाधिकत्वेन व्यतयो देवताः स्मृता इति वचनात् । **नर्तनमेव दर्शयति** । **अष्टाविति** । **पञ्चाशन्मरुत इति** ।। एकोनपञ्चाशन्मरुतां मुख्यवायुना सह पञ्चाशत्वादिति भावः । **एकादशादित्या इति** । आदित्यानां द्वादशत्वेऽपि विष्णुव्यतिरिक्तानां नियम्यानाम् एकादशत्वादियमुक्तिः । सृष्टिस्थितीत्यादिभाष्ये प्रयोजकव्यापारवाचिना सृष्ट्यादिशब्देन प्रयोज्यव्यापारो जन्मादिर्लक्ष्यते । लक्षणाप्रयोजनं च ब्रह्मणः स्रष्टृत्वादिकमेव ननु उपादानत्वमिति प्रदर्शनम् । अधिकरणार्थमुपसंहरति ।। **अत इति** ।।

## वाक्यार्थविवरणम्

**भाष्यकारेणैवेति** ।। न तु सूत्रकारेणेत्यर्थः । **आदिपदोक्ते स्थितिसंहृतीति** ।। यतो वा इत्यादिश्रुत्यनुसारादिति भावः । इत्यादीत्यादिपदेनातद्गुणसंविज्ञानबहुव्रीहिणा अस्य यतो जन्मादि जन्म आदि यस्य पालनस्य तत् जन्मादीति जन्मादिशब्देन पालनमेव ग्राह्यम् । तथा च स्थितिकर्तृत्वमेव ब्रह्मणो लक्षणं, न तु सृष्टिसंहारकर्तृत्वम् । ब्रह्मविष्णुमहेश्वराणां मध्ये विष्णुः पालकः, ब्रह्मा स्रष्टा, महेश्वरः संहारकर्तेति प्रसिद्धेरिति रामानुजीयव्याख्यानसङ्ग्रहः । आदिपदेन सङ्गृहीतं व्याख्यानमयुक्त-मित्याशयेनाह । **जन्मादीति** । 'विशेषेणाधिका यस्माद्धचतयो देवताः स्मृता' इति प्रमाणं मनसि निधायोक्तम् ।। **विशेषेणाधिकान् देवानिति** ।। पर्यवर्तयदिति । विपृ परिवर्तन इति धातुव्याख्यानादिति भावः ।। २ ।।

## वाक्यार्थमञ्जरी

।। **शास्त्रसङ्गतिरिति** ।। ब्रह्ममीमांसाशास्त्रप्रतिपाद्यब्रह्मविचारपरत्वात् ब्रह्ममीमांसाशास्त्रेऽन्तर्भाव-सङ्गतिरित्यर्थः । एवमग्रेऽपि शास्त्रसङ्गतिर्व्याख्येया ।। **श्रुत्यादिसङ्गतिस्त्विति** ।। आदिपदेनाधिकरणम् एकवचनप्रयोगश्चैकप्रदर्शनेनान्यापि सुज्ञानेति प्रकारैक्याभिप्रायेण चतुरधिकरण्यां यतो वेत्यादिश्रुतिरेव विचार्यत इति श्रुतिसङ्गतिः स्फुटा । तुशब्दः शास्त्रसङ्गतितः आक्षेपकत्वाख्यं विशेषमाह 'पूर्वमाक्षिप्यते यत्र तत्र साक्षेपिकी मता' इत्युक्तेः । एवमग्रेऽपि यत्र पूर्वाक्षेपस्तत्राक्षेपिकी ध्येया ।। **गुणपूर्त्यसिद्ध्येति** ।। रूढ्या जीवपरत्वे यौगिकार्थगुणपूर्त्यसिद्ध्येत्यर्थः । उभयत्रेति ।। तदेव ब्रह्मेति विष्णौ बृहजातिर्जीवेति जीव इत्यर्थः । मुख्य इत्युक्तमिति ।। मुख्यामुख्ययोर्मुख्यस्यैव सम्प्रत्यय इत्यन्यतरनिश्चयान्नोक्तसन्देहः सम्भवतीति भावः ।। **स्वकृतेति** ।। यतो नारायणप्रसादमृते न मोक्ष इत्यादिनेत्यर्थः । **भाष्यकारैरेवेति** । न सूत्रकारेणेत्येवशब्दः । सूत्रकारेणैव परकीयसम्भावितसन्देहात्परेण तन्निरासकन्यायस्य व्युत्पादितत्वादिति भावः । इतरकोटिप्रापकं प्रतिषेधति ।। **यद्यपीत्यादिना** ।। **योगेनैवेति** ।। रूढ्यङ्गीकारे गुणपूर्त्यसिद्धेरिति भावः । तर्हि पङ्कजादिशब्दवद्योगरूढिरस्तु तावतापि गुणपूर्तिलाभात् । एवं च रूढिमात्रतो योगरूढेः प्राबल्याद्विष्णुरेवायं ब्रह्मेति चेन्न । अथ कस्मादिति श्रुतिसिद्धयोगेनैव तद्व्यवहारोपपत्तावसिद्धसमुदाय-शक्तिरूपरूढिकल्पनस्य व्यर्थत्वात् । पङ्कजादिशब्दे योगमात्रस्य भेकादावतिप्रसक्त्या रूढिकल्पनम् । न चात्र तथा । अन्यत्र गुणपूर्तेरनङ्गीकारात् । तदेवाह योगेनैवेत्येवकारेण । **रूढेरेवेति** । तस्यावयवार्थ-

(वाक्यार्थमञ्जरी)

सापेक्षयोगापेक्षया तन्निरपेक्षतया शीघ्रोपस्थापकत्वादिति भावः । ननु तदेव ब्रह्मेत्यत्र रूढिप्राप्तजीवत्यागेन विष्णुग्रहणवदत्रापि तन्निरपेक्षतया शीघ्रोपस्थापकत्वं स्यादित्याशङ्क्याह ।। **न चेति** ।। **बाधकं विनेति** ।। तत्र समुद्रस्थत्वं बाधकमिति भावः । अत्रापि जिज्ञास्यत्वं बाधकमित्यत आह ।। **न च तादृशमिति** ।। समुद्रस्थत्ववदपरिहार्यमित्यर्थः । जिज्ञास्यत्वं तु वक्ष्यमाणरीत्या जीवेऽपि सावकाशमिति भावः । ननु ब्रह्मशब्दस्य जीव इव जात्यादावपि रूढत्वात्कथं जीव एवेत्यवधारणमिति शङ्कां परिहरन्नेवोपसंहरति ।। **तस्मादिति** ।। मुख्यतः अवश्यं तस्यातीवप्रसिद्धेरिति भावः । जीवस्याप्यहमिति प्रसिद्धिरस्तीत्यतः स्वरूपेण सिद्धत्वेऽपि देहभिन्नत्वेन न सिद्धिरिति भावेनाह ।। **देहात्मविवेकस्येति** ।। अन्यथा "भस्मीभूतस्य देहस्य पुनरागमनं कुत" इति चार्वाकोक्तरीत्या न पुण्यपापकरणाकरणे स्यातामिति भावः । यद्यपि कमलासनस्यापि प्रसिद्धिरस्ति । तथापि न तस्य जिज्ञास्यत्वं प्रयोजनाभावादिति सुधायामेवोक्तम् । ननूक्तरीत्या जीवस्य जिज्ञास्यत्वे तस्य चेत्यादिना कथं तस्याजिज्ञास्यत्वोक्तिरिति चेत् उच्यते– जात्यादिवैलक्षण्योपपादनाय देहान्यत्वादिना जीवस्य जिज्ञास्यतोक्ता । सिद्धान्त्यभिमतमोक्षफलकगुणपूर्णत्वप्रकारकजिज्ञासा निराक्रियते । अत एव चन्द्रिकायां विशिष्टाधिकारिकमोक्षफलकजीवान्यधर्मिकगुणपूर्णत्वप्रकारकपूर्वसूत्रोक्तजिज्ञासाक्षेपेणैवेत्याद्युक्तम् ।।

ॐ जन्माद्यस्य यतः ॐ ।। अस्य प्रमितस्य चेतनाचेतनात्मकस्य जगतः जन्मादि सृष्टिस्थितिलयनियमनज्ञानाज्ञानबन्धमोक्षजातं यतः यस्मात् यथायोग्यं भवति; तज्जन्मादिकारणं ब्रह्मेत्यर्थः । पूर्वपक्षप्रतिबन्धकयुक्तेरेव वक्तव्यत्वात् लक्षणकथनमसङ्गतमित्यत आह ।। **निर्बाधेति** ।। **श्रुत्युक्तमिति** ।। विष्णुलक्षणत्वेन प्रमितं जन्मादिकारणत्वं जिज्ञास्यब्रह्मसम्बन्धित्वेनाहेत्यर्थः ।। **अस्येति** ।। इदं त्रितयकर्तृताभिधायिमायावादिव्याख्यानम् । आदिपदेन जन्म आदिर्यस्य पालनस्येत्यतद्गुणसंविज्ञानबहुव्रीहिणा पालनकर्तृत्वमेवोच्यत इति रामानुजव्याख्यानसङ्ग्रहः ।। **निरासायेति** ।। जिज्ञासाविधायके यतो वेत्यादिश्रुतावेव चतुष्टयकर्तृत्वोक्तेरिति भावः ।।

।। **सृष्ट्याद्यष्टकमिति** ।। ननु सूत्रे जगन्निष्ठजन्माद्युच्यते । भाष्यटीकयोस्तु स्रष्टा संहर्तेत्यादिप्रयोगाद् ब्रह्मनिष्ठव्यापार उच्यते । अतः कथं व्याख्यानव्याख्येयभाव इति चेत् । उच्यते । प्रयोजकव्यापारवाचिना सृष्ट्यादिशब्देन प्रयोज्यव्यापारो जन्मादिर्लक्ष्यते । लक्षणाप्रयोजनं च ब्रह्मणः स्रष्टृत्वमेव न तूपादानत्वमिति सूचनम् । अत एव यो नः पितेति श्रुतिं तथैवावतारयिष्यतीति ध्येयम् । नन्वत्र जीवे रूढिमङ्गीकृत्य बाधकवशात्तत्परित्याग इति न वक्तव्यम् । किन्तु तदेव ब्रह्म परमं कवीनामिति पूर्वाधिकरणोक्तन्यायेन

(वाक्यार्थमञ्जरी)

**ब्रह्मशब्दस्य** विष्णौ **विद्वद्रूढेरुक्तत्वाद्विद्वदविद्वद्रूढ्योर्विद्वद्रूढेरेव** बलीयस्त्वाद्विष्णुरेवात्रोक्तं ब्रह्मेति वक्तव्यमित्याशङ्क्य परिहरति ।। **यद्यपीति** ।। **अभ्युपगम्येति** ।। अभ्युपगमवादप्रयोजनं तु जीवभेदकगुणपूर्तिलाभः । रूढ्यङ्गीकारे तदलाभादिति भावः । इयमुक्तिः सौत्री बाधोक्तिः । रामानुज-रीत्याऽतद्गुणसंविज्ञानेऽष्टकालाभादाह ।। **तद्गुणसंविज्ञान इति** ।। तस्य गुणस्य अन्यपदार्थं प्रत्युपसर्जनी-भूतस्यान्यपदार्थे संविज्ञानं विशेषणत्वेनोपादानं यस्मिन्बहुव्रीहौ स तद्गुणसंविज्ञानः यथा लम्बकर्ण-मानयेत्यादौ । प्रकृते च तस्य गुणस्यान्यपदार्थपालनादिकं प्रत्युपर्सनीभूतस्य जन्मनोऽन्यपदार्थे पालनादौ संविज्ञानं विशेषणत्वेनोपादानं कार्यं न तु चित्रगुमानयेत्यादाविव तत्परित्याग इत्यर्थः । ननु कथं जन्मनः स्थित्याद्यपेक्षया आदित्वम् ? पौर्वापर्येणेति चेन्न । दर्शपौर्णमासतिथ्योरिव जन्मस्थिति-संहारप्रवाहस्यानादित्वेन पौर्वापर्यानियमादित्यत आह ।। **लब्धजन्मेति** ।। सत्यमेवं तथापि लब्धजन्मनः स्थित्यादिरितिवन्न स्थितस्य नष्टस्य वा जन्मेत्येकव्यक्त्यपेक्षया जन्मनः प्राथम्यमिति भावः । अज्ञानं भावरूपम् । **नोपलभ्यत इति** ।। तद्विजिज्ञासस्वेत्यत्रानुपलम्भादिति भावः । प्रयन्ति प्रयान्ति । त्रिधात्वित्यस्यार्थः प्रकृतिपुरुषकालाधारक इति । यच्छब्दस्य तदस्य प्रियमित्युत्तरेणान्वयः ।

'चतुर्भिर्नामभिः साकं वासुदेवादिभिर्हरिः ।
वसून् रुद्रांस्तथादित्यान् ब्रह्मणो मरुतस्तथा ।।
बृहच्छरीरो भगवान्नूनं शासति नित्यशः'

इति प्रमाणानुसारेण श्रुतिं व्याचष्टे ।। **बृहच्छरीर इति** ।। बृहच्छरीरो विमिमानित्युत्तरत्रोक्तमिदम् । व्यतानित्यस्यार्थो विशेषणाधिकानिति । विशेषणाधिकत्वेन व्यतया देवताः स्मृताः इति कर्मनिर्णयोक्तेः । वृत्तं भ्रममाणं नेत्यस्यार्थो इवेति ।। **पर्यवर्तयदिति** ।। विपरिवर्तनधातोरिति भावः । **एकादशादित्या इति** । आदित्यानां द्वादशत्वेऽपि विष्णुव्यतिरिक्तानां नियम्यानाम् एकादशत्वादियमुक्तिः । **पञ्चाशन्मरुत इति** । एकोनपञ्चाशन्मरुतां मुख्यवायुना सह पञ्चाशत्वादिति भावः । तत्त्वप्रदीपे चेमं प्रकारमभिधाय

''आदित्या वसवो रुद्रा मरुतश्चाश्विनावपि ।
बृहस्पतिश्च कामश्च मनुर्दक्षो विनायकः ।।

भृगुश्चैवानिरुद्धश्च धर्मो निर्ऋतिरेव च ।
कुबेरसहिता देवा नवतिः सम्प्रकीर्तिताः ।।
अनन्तो गरुडो वायुश्चत्वारो ब्रह्मणा सह''

(वाक्यार्थमञ्जरी)

इति प्रमाणानुसारेण प्रकारान्तरमप्युक्तम् । अत्राश्विनोरेकत्वं बोध्यम् ।। **एतान्यपीति** ।। न केवलं स्थितिनियमनकर्तृत्वे किं त्वष्टावपीत्यर्थः । तन्वा वृधानेत्यस्यार्थः स्वमूर्त्यैवापरिच्छिन्न इति । मात्रयेत्यस्य मितेरिति ।। **अपरिमितत्वादिति** ।। विष्णोरपरिमितत्वोक्तौ महिम्नस्तत्स्वरूपत्वात्तस्या-परिमितत्वमुक्तमित्याशयेनेयमुक्तिः ।। **वर्तमानेति** ।। वर्तमानार्थकलट्प्रयोगादिति भावः । यथा जीव-महिमसु चतुर्मुखमहिम्नः सीमात्वं यथा वा परतन्त्रमहिमासु रमामहिम्नः सीमात्वमेवं विष्णुमहिम्नोऽपि विवक्षाविशेषेण सीमात्वं न युक्तमित्याशयेनोक्तम् ।। **परमिति** ।।

''जातो जनिष्यमाणश्च वर्तमानस्तथैव च'' इति प्रमाणानुसारेणेदमुपलक्षणमित्याशयेनाह ।। **जनिष्यमाण इति** ।। सर्वे च वयं च वयं त्यदादीनि सर्वैर्नित्यमित्येकशेषं मत्वा आह ।। **नः सर्वेषामिति** ।। अस्मदादिसर्वेषामित्यर्थः । पौनरुक्त्यवारणायाह ।। **न दत्तपुत्रवदिति** ।। पिता पालकः ।। २ ।।

## विवृतिः

**तस्य च विष्णुत्वं यावन्न साध्यत इति** ।। अनेन पूर्वाधिकरणेनास्याधिकरणस्याक्षेपिकी सङ्गतिरुक्ता भवति । जिज्ञास्यता न सम्भवतीत्यत्रेतिशब्दस्य प्रकारवाचिनः इति श्रुत्यादिसङ्गतिरिति पूर्वेणान्वयः (सम्बन्धः) । **उभयत्रापीति** ।। जीवे विष्णावपीत्यर्थः ।। **मुख्य इत्युक्तमितिः** ।। मुख्यामुख्ययोर्मध्ये मुख्यस्यैव सम्प्रत्यय, इत्यवधारणबलेनोत्कटकोटिकोऽपि सन्देहः सम्भवतीति भावः ।। **स्वकृतव्याख्यानेति** ।। यतो नारायणप्रसादमृत इत्यादिनेत्यर्थः ।।

**योगेनैवेति** ।। पूर्वाधिकरणसिद्धान्ते अथ कस्मादुच्यत इति श्रुत्युदाहरणपूर्वकं विष्णौ तस्य योगस्यैव प्रदर्शितत्वात् । योगानङ्गीकारे गुणपूर्णत्वासिद्धेश्च श्रुतिप्रतिपादितयोगेनैव तद्व्यवहारोपपत्तौ योगरूढ्यङ्गीकारस्य व्यर्थत्वाच्चेति भावः ।। ननु ब्रह्मशब्दस्य जीव इव जात्यादावपि रूढिसद्भावात्तदेवात्र ब्रह्मशब्दार्थः किं न स्यादित्यत आह ।। जात्यादेरिति ।। जडत्वेन तस्य जिज्ञास्यत्वाभावादिति भावः ।। ननु जडस्यापि वियदादेः 'न वियदश्रुतेः' इत्यादौ विचार्यमाणत्वाज्जात्यादेर्जडत्वेऽपि जिज्ञास्यत्वं स्यादित्यत उक्तम् ।। **मुख्यत इति** ।। तथा च जात्यादेरन्यार्थं जिज्ञास्यत्वेऽपि मुख्यतोऽभावाद-जिज्ञास्यत्वमिति भावः ।। ननु जीवस्याप्यजिज्ञास्यत्वाज्जीवोऽप्यत्र ब्रह्मशब्देन न ग्राह्य इत्यत आह ।। **देहात्मविवेकेति** ।। जीवज्ञानाभावे देहात्मनोर्विवेकज्ञानासम्भवादिति भावः ।। ब्रह्मणो जिज्ञासेति भाष्यं व्याचष्टे ।। **जीवग्रहण इति** ।। **जिज्ञास्यब्रह्मणो लक्षणमिति** ।। विष्णुलक्षणत्वेन प्रमितं

(विवृतिः)

जगज्जन्मादिकारणत्वं जिज्ञास्यब्रह्मसम्बन्धित्वेनेत्यर्थः ।। अत एव जीवग्रहणे बाधकमित्युक्तम् । ननु पूर्वाधिकरणे तदेव ब्रह्मेत्यादिना विष्णौ विद्वद्रूढेः समर्थितत्त्वात्तामादायैव कुतो न सिद्धान्तः क्रियते इत्यत आह ।। **यद्यपीति** ।। उभयथापि सिद्धान्तसम्भवाद्योगमादाय सिद्धान्तः क्रियत इत्यदोषः । रूढिमादायापि सिद्धान्त ऊह्य इति भावः ।। जन्म आदि यस्येत्यतद्गुणसंविज्ञानो बहुव्रीहिः । तथा च स्थितिकर्तृत्वमेव लक्षणमिति मन्यते तन्निरासायाह ।। **जन्माद्यस्येतीति** । अन्यथा यतो वेति श्रुतौ जायन्त इत्युक्तेरसम्भव इति भावः ।।

एवं च लब्धजन्मन इत्युपपन्नम् ।। अत एव तद्गुणसंविज्ञानं इत्युक्त्वानन्तरं लब्धजन्मन इत्युक्तम् ।।

ननु स्थितिग्रहणमेव प्रथमतः किं नं कृतमित्यत आह ।। **लब्धजन्मनो हीति** ।। आवृतिपदेन बन्धः प्रतीयते । तथा च पौनरुक्त्यमत आह ।। **आवृतिरज्ञानमिति** ।। एकराट्त्वस्य ब्रह्मादिष्वपि सत्वादतिव्याप्तिरित्यत आह ।। **एकराट् स्वतन्त्र इति** । पर्यवर्तयदिति ।। विपरिवर्तन इति धातोरिति भावः । **व्यतीनित्यस्यार्थो** विशेषेणाधिकानिति ।। विशेषेणाधिकत्वेन व्यतयो देवताः स्मृताः इति वचनात् । नवतिमेव दर्शयति ।। **अष्टाविति** ।। **पञ्चाशन्मरुत इति** ।। एकोनपञ्चाशन्मरुतां मुख्यवायुना सह पञ्चाशत्वादिति भावः ।। एकादशादित्या इति ।। आदित्यानां द्वादशत्वेऽपि विष्णुव्यतिरिक्तानां नियम्यानामेकादशत्वादियमुक्तिः । सृष्टिस्थितीत्यादिभाष्ये प्रयोजकव्यापारवाचिना सृष्ट्यादिशब्देन प्रयोज्यव्यापारो जन्मादिर्लक्ष्यते ।। लक्षणाप्रयोजनं च ब्रह्मणः सृष्टृत्वादिकमेव न तूपादानत्वमिति प्रदर्शनम् । अधिकरणार्थमुपसंहरति ।। **अत इति** ।।

।। इति जन्माधिकरणम् ।।

## ३. शास्त्रयोनित्वाधिकरणम्

**अनुमानतोऽन्ये न कल्पनीयाः ।**

**।। ॐ शास्त्रयोनित्वात् ॐ ।। ३ ।।**

'नावेदविन्मनुते तं बृहन्तं सर्वानुभुमात्मानं साम्पराये' (तै.ब्रा. ३-१२-९) ।। 'औपनिषदः पुरुष' इत्यादिश्रुतिभ्यश्च ।।

(सूत्रभाष्यम्)

न चानुमानस्य नियतप्रामाण्यम् ॥

'श्रुतिसाहाय्यरहितमनुमानं न कुत्रचित् ।
निश्चयात्साधयेदर्थं प्रमाणान्तरमेव च ॥

श्रुतिस्मृतिसहायं यत् प्रमाणान्तरमुत्तमम् ।
प्रमाणपदवीं गच्छेन्नात्र कार्या विचारणा ॥

पूर्वोत्तराविरोधेन कोऽत्रार्थोऽभिमतो भवेत् ।
इत्याद्यमूहनं तर्कः शुष्कतर्कं तु वर्जयेदि'त्यादि कौर्मे ॥

शक्यत्वाच्चानुमानानां सर्वत्र ।

'सर्वत्र शक्यते कर्तुमागमं हि विनाऽनुमा ।
तस्मान्न सा शक्तिमती विनागममुदीक्षितुम् ।' इति वाराहे ।

## सत्तर्कदीपावली

अधुना रुद्रादीनां जगत्कारणत्वमाशङ्क्य तत्परिहारत्वेन सूत्रमवतारयति ॥ शास्त्रेति ॥ यद्यनुमानेन जगत्कर्ता सिद्ध्येत् तर्ह्येव यत्कार्यं तत्सकर्तृकमिति व्याप्त्या क्षित्यादिकार्यस्यापि यः कश्चित्कर्ता सिद्ध्यन् रुद्रादिः परिशङ्कितः स्यात् । न त्वेतदस्ति शास्त्रैकसमधिगम्यत्वाज्जगत्कर्तुः । अतः शास्त्रं यं जगत्कर्तारं बोधयति स जगत्कर्ता स्यान्नापरः । शास्त्रैकवेद्यत्वं जगत्कर्तुः श्रुतिभिरुपपादयति । नावेदविदित्यादिना ॥ सर्वमनुभवतीति सर्वानुभुं परमात्मानं साम्पराये तल्लोकमुद्दिश्य वेदविदेव मनुते न त्ववेदविदित्यनेन वेदैकवेद्यत्वमनुमानावेद्यत्वं च जगदीशितुरुक्तं भवति । पुरु सरणः परमपुरुषो जगत्कर्ता औपनिषदः उपनिषदेकसमधिगम्य इत्युक्तं भवति । नैषा तर्केण मतिरापनेयेत्याद्या श्रुतिरादिशब्दोक्ता । इतोऽपि नानुमानं स्वतन्त्रमीश्वरं साधयति अनियतप्रामाण्यत्वाभावादित्याह ॥ न चेति ॥ एतदेव पुराणवचनेनोपपादयति ॥ श्रुतीति ॥ न ह्यनिश्चितार्थसाधकं प्रमाणं भवति । न च क्षित्यादेः कार्यत्वहेतुना घटवत्सकर्तृकत्वं निश्चेतुं शक्यम् । शरीरवत्कर्तृरहितत्वेन अकर्तृकत्वस्यापि सम्भवात् । जडशरीरादिमानीश्वरो अनुमानगम्योऽस्त्विति न वाच्यं प्रत्यक्षविरोधात् । अतः श्रुतिमनुसृत्यैव अत्यन्तातीन्द्रिये ईश्वरे प्रवर्तमानमनुमानं प्रमाणं भवेत् नान्यथा । यथा भगवदवताराग्राहि प्रत्यक्षम् । न चात्यन्तातीन्द्रियार्थे स्वतन्त्रानुमानप्रवृत्तौ यस्तर्केणानुसन्धत्ते स मां वेद न चेतनम् इति वचनविरोधः । तद्वचनस्य श्रुतिपौर्वापर्यपर्यालोचनतर्कविषयत्वादित्यर्थः । यदि स्वतन्त्रानुमानेन प्रत्यक्षयोग्यार्थस्यापि सिद्धिर्भवेत् तर्हि शशशृङ्गादीनामपि सिद्धिः स्यात् । तत्रापि

(सत्तर्कदीपावली)

गवादिवच्चतुष्पाददिहेतुना अनुमानस्य कर्तुं शक्यत्वादित्याह ।। **शक्यत्वादिति** ।। पुराणवचनेनैतदुपपादयति ।। **सर्वत्रेति** ।। उदीक्षितुम् अर्थमुदीक्षयितुमित्यर्थः । ननु प्रत्यक्ष एव विषयीकरोति नानुमानम् इत्येतत्प्रतिपादनं व्यर्थमित्येतच्चोद्यं परिहरति रेतो धातुरित्यादिमोक्षधर्मवचनेन । अस्यार्थः । कस्यचिदेव रेतसः शरीरविशेषपरिणामान्यथानुपपत्या कस्यचिदेव अपथ्यस्य सेवनेन वातपित्तादिधातुविकारान्यथानुपपत्या कस्याश्चिदेव वटकर्णिकायाः वटविशेषपरिणामान्यथानुपपत्या केनचिदेव जातिस्मृत्यन्यथानुपपत्या कस्यचिदेव अयस्कान्तस्य अयोभ्रामकत्वान्यथानुपपत्या सूर्यकान्तशिलाया अप्यग्निजनकत्वान्यथानुपपत्या जीवद्दशायां तन्निर्वाहकमन्यत्कल्पनीयम् । तच्च कारणं रेतोधात्वाद्यभिमानिजीवान्तर्यामी कर्मसापेक्षो विष्णुरेवेत्येतद्वेद एव बोधयितुं शक्नोति । देवताभ्युपयाचनान्यथानुपपत्याऽप्यागमिकोऽर्थः सिद्ध्यति । अप्रत्यक्षाया हि देवताया याचनं लोकसिद्धम् । मृतशरीरस्य ज्ञानचेष्टानिवृत्त्यनुपपत्या जीवद्दशायां ज्ञानादिनिर्वाहकं परोक्तं कारणं सिद्ध्यत्येव अन्यथा मृतशरीरस्यापि ज्ञानादिमत्वप्रसङ्गात् । गतप्राणत्वेन ज्ञानाभावश्चेत्सुप्तशरीरस्य ज्ञानं स्यात् सप्राणत्वात् । जीवेश्वरादिकमनङ्गीकुर्वतः प्रत्यक्षैकप्रामाण्यवादिनोऽम्बुपानादि प्रवृत्तिरपि दुर्घटा स्यात् । अनुमायत्तत्वात्तस्याः । इतोऽपि न शास्त्रापह्नवः कर्तुं शक्यते । अत्युत्कटैः पुण्यपापैरिहैव फलमश्नुते इति लोकप्रसिद्धेरित्याह **दर्शनादिति** । हितशासनात् शास्त्रम् ऋगादिकं तदनुकूलस्मृत्यादि चोच्यते न पाशुपतादिकं कुवर्त्मत्वादित्येतत्स्कान्दवचनेन दर्शयति ।। **ऋगिति** ।। चरितं रघुनाथस्य शतकोटिप्रविस्तरमित्यादिवचनसिद्धं मूलरामायणम् । भारतवचनैरपि वेदादेः सच्छास्त्रत्वं प्रदर्शयति ।। **साङ्ख्यमिति** ।।

साङ्ख्यं योगः पाशुपतं वेदारण्यकमेव च ।

ज्ञानान्येतानि भिन्नानीति

साङ्ख्यादिदर्शनानां नानामतत्वमुक्त्वा तत्र वेदारण्यकस्यापौरुषेयत्वेनोत्कर्षे वक्तव्ये पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् । ज्ञानेष्वेतेषु राजेन्द्र सर्वेष्वेतद्विशिष्यत इति पञ्चरात्रस्यैव प्रमाणत्वेन यद्वैशिष्ट्यकथनं तद्वेदारण्यकेन यज्जगत्कारणमुच्यते तदेव पञ्चरात्रेणेति वेदपञ्चरात्रयोरेकत्वाभिप्रायं यथायोगं यथान्यायं निष्ठा नारायणः पर इति वाक्यशेषादित्यर्थः । एतदेव शास्त्रं ऋगादिकं योनिः प्रतिपत्तिकारणं यस्य तच्छास्त्रयोनीत्येवं व्याख्येयम् । न शास्त्रस्य योनिरितीत्याह ।। **शास्त्रमिति** ।। जगज्जन्मादिकारणे ब्रह्मणि पूर्वसूत्रोक्ते किं तत्र प्रमाणमित्याकाङ्क्षितत्वाच्छास्त्रप्रमाणकत्वमेवाभिधातुं युक्तम् । न तु शास्त्रकारणत्वम् असङ्गतत्वात् । न हि शास्त्रकारणत्वं जगत्कारणत्वे हेतुः वैपरीत्यस्यापि वक्तुं शक्यत्वात् । जगज्जन्मादिकारणत्वोक्तौ शास्त्रादिकारणत्वस्यापि सिद्धत्वाच्च । न पुनरस्तत्कारणत्वं वक्तुं युज्यते शास्त्रस्यापि जगदन्तर्भूतत्वादित्यभिप्रायः ।

## तत्त्वप्रदीपिका

जगत्कारणत्वं विष्णोरुक्तं केचित्प्रधानरुद्रादीनां कल्पयन्ति, तन्निराकरोति– **अनुमानत इत्यादिना** । अनुमानतोऽन्ये न कल्पनीयाः कारणभूता इति कुतः? । शास्त्रयोनित्वात् । जगत्कारणस्य शास्त्रयोनित्वे प्रमाणमाह नेत्यादि । "नावेदविन्मनुते तं बृहन्तं सर्वानुभुमात्मानं साम्पराय" इति । तं पूर्णं वेदेनैव मनुते । सर्वमनुभवतीति 'सर्वानुभूः' सम्यक्परस्मिन्नयनं 'साम्परायः' । तादर्थ्ये सप्तमी । 'औपनिषदः' उपनिषदेकगम्यः । 'पुरुषः' पूर्णषड्गुणः । न हि पूर्णगुणात्सर्वज्ञादन्यस्य जगत्कारणत्वम् । न च द्वयोः पूर्णत्वं, पूर्णत्वविरोधात् । आदिशब्दात् "सर्वे वेदा यत्पदमामनन्ति" "तं त्वौपनिषदं पुरुषं पृच्छामी"त्यादि च द्रष्टव्यम् ।

न चानुमानस्य नियतप्रामाण्यम् । अनुमानत्वादेव । प्रमाणान्तरानुकूलत्वे यन्मानं, नान्यथा, तद्ध्यनुमानं नाम ।

"श्रुतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम्" इति, "श्रुतिर्वेदोऽक्षजं प्रत्यक्षं पूर्वोक्तिरैतिह्यं युक्तिरनुमानमि"ति च तुरश्रुतेरैतिह्यादपि पाश्चात्त्यत्वादनुमानस्य न तेषां विरोधे, तन्निरपेक्षत्वे वा प्रामाण्यम् । श्रुतेस्तु क्वापि प्रत्यक्षानुमानानन्तर्यवचनं प्रवृत्तिक्रमापेक्षम् ।। श्रुतिसाहाय्यरहितमनुमानं प्रत्यक्षं च श्रौतेऽर्थे न क्वापि प्रमाणम् । यथा हिंसाऽधर्मत्वानुमानं; यथा च रामकृष्णादेर्मानुषत्वादिविषयं प्रत्यक्षम् । उपक्रमोपसंहारादिलिङ्गैः ऊहनं 'तर्कः' । श्रुतिनिरपेक्षः 'शुष्कतर्कः' । तस्मान्न स्वतन्त्रस्य तस्य प्रामाण्यं सम्भवति ।

ननु स्वतन्त्रमेवार्थं साधयदनुमानं को निवारयति? तथाहि– विमतं सकर्तृकं कार्यत्वाद्घटवदित्यनपेक्षमेवेदं जगत्कर्तारमीश्वरं साधयतीति; तदयुक्तम् । उपाधिदोषदुष्टत्वात्तस्य । अस्मदादिप्रत्यक्षकर्तृकत्वं शरीरवत्कर्तृकत्वं वा उपाधिः । तेन हि घटादेस्सकर्तृकत्वम् । तस्मान्न स्वतन्त्रस्य प्रामाण्यमिति नियतप्रामाण्यं नास्तीत्युक्तम् । तस्मान्नानुमाऽऽगमं विनाऽर्थमुदीक्षयितुं शक्नोति ।

## तत्त्वप्रकाशिका

अत्र जन्मादिकारणत्वस्यान्यनिष्ठत्वनिरासादस्ति शास्त्रसङ्गतिः । जगज्जन्मादिकर्तृत्वस्य जिज्ञास्यं ब्रह्मणि श्रवणाद्विष्णुरेव ब्रह्मेत्युक्तम् । जन्मादिकर्तृत्वस्य च यदाऽन्यनिष्ठता निवार्यते तदेव तेन विष्णुत्वनिश्चयः स्यादिति । तज्जन्मादिकारणत्वं विषयः । किं विष्णोरेवान्यस्याप्यस्ति वेति सन्देहः । पूर्वोक्तन्यायः प्रसिद्धिश्च संशयबीजम् । अन्येषामप्यस्तीति पूर्वः पक्षः । अनुमानेन रुद्रादेरपि कारणतासाधनसौलभ्यात् । न चोदाहृतश्रुतिविरोधः । तासां युक्तिविरुद्धार्थे प्रामाण्यायोगात् । तथा च

(तत्त्वप्रकाशिका)

जन्मादिकारणत्वस्य भगवदेकनिष्ठताभावान्न तस्यैव तेन जिज्ञास्यब्रह्मतानिश्चय इति । सिद्धान्तयति ।। **अनुमानत इति** ।। कारणत्वेनेति शेषः । तत्र हेत्वाकाङ्क्षायां सूत्रमुपन्यस्यति ।। **शास्त्रयोनित्वादिति** ।। भवेदनुमानतोऽन्येषां कारणत्वकल्पना यदि कारणमानुमानिकं स्यात् । न चैतदस्ति । शास्त्रैकसमधिगम्यत्वात्कारणस्य । न हि धर्मादिनिश्चयोऽनुमानेनेति सूत्रार्थः । कारणस्य शास्त्रैकवेद्यत्वं कुत इत्यत आह ।। **नेति** ।। तं पूर्णं सर्वज्ञं सर्वकर्तारं सर्वस्वामिनं मोक्षायाऽवेदविन्न जानाति । पुरुषो जगत्कर्तौपनिषदेकसमधिगम्य इत्यर्थः ।

औपनिषदस्यापि कारणस्यानुमानेन सिद्धिः किं न स्यात्स्वातन्त्र्यादिहेतुना पूर्णत्वादिसिद्ध्यङ्गीकारादित्यत आह ।। **न चेति** ।। सत्यमस्त्येवाऽनुमानस्यौपनिषदपदार्थनिश्चायकत्वं श्रुत्यादिसहकारियुक्तस्यैव न तु नियतप्रामाण्यम् । स्वातन्त्र्येणादृष्टार्थनिश्चायकत्वे प्रतिपक्षादिसम्भवात् । तादृशं च प्रकृतमिति भावः । अत्रैव स्मृतिसंमतिमाह ।। **श्रुतीति** ।। कुत्रचिददृष्टे । यथेश्वरो न स्वतन्त्रश्चेतनत्वादिति । प्रमाणान्तरं प्रत्यक्षं यथा रामकृष्णादिदोषग्राहि । तर्हि कीदृशस्य प्रत्यक्षादेरदृष्टार्थनिश्चायकत्वमिति तत्राह ।। **श्रुतीति** ।। अत्रापि प्रमाणान्तरं प्रत्यक्षम् । यशोदायाः प्रत्यक्षम् । तर्कः प्रमाणपदवीं गच्छेदित्यन्वयः । यथा विष्णुः स्वतन्त्रः पूर्णत्वादिति । केवलानुमानस्य प्रामाण्येऽतिप्रसङ्गं चाह ।। **शक्यत्वाच्चेति** ।। श्रुत्यादिसाहित्यहीनानुमानस्य सर्वत्र जगत्कारणाभावादौ शशादीनां विषाणित्वादौ च कर्तुं शक्यत्वान्नानुमानस्य नियतप्रामाण्यमित्यर्थः । तत्रैव प्रमाणमाह ।। **सर्वत्रेति** ।। उदीक्षितुमर्थमुदीक्षयितुम् । तस्मात्केवलानुमानस्यानिर्णायकत्वाच्छास्त्रेणैव कर्तृत्वनिश्चय इति स्थितम् ।।

## भावबोधः

।। ॐ शास्त्रयोनित्वात् ॐ ।। **अन्यनिष्ठत्वनिरासादिति** । तथा चोक्तस्य लक्षणस्यातिव्याप्तिनिरासाय प्रमाणमुच्यत इत्यनन्तरसङ्गतिरिति भावः । **किमिति** । अत्र जगज्जन्मादिकारणत्वं किमन्यस्यापि किं विष्णोरेवेति चिन्ता । तदर्थं जगत्कारणत्वं किमनुमानादिप्रमाणगम्यमुत शास्त्रैकवेद्यमिति । तदर्थं कारणत्वस्य शास्त्रैकसमधिगम्यत्वे प्रमाणं नास्त्युतास्तीति । तदर्थं नावेदविदित्यादिश्रुतेः कारणत्वस्यानुमानवेद्यत्वनिषेधकत्वं न सम्भवत्युत सम्भवतीति । तदर्थं केवलानुमानस्यातीन्द्रियार्थे प्रामाण्यं युक्तमुतायुक्तं वेति । तदर्थं केवलानुमानस्य प्रामाण्याभावे प्रमाणं नास्ति उतास्तीति । 'रुद्रादेः समस्तमेतल्लक्षणम्' इति न्यायविवरणानुसारेण पूर्वपक्षमुपपादयति । **अनुमानेनेति** । न चानुमानतः कल्प्या अन्ये मृष्ट्यादिकारणाः' इति प्रमाणानुसारेणाह । **कारणत्वेनेति** शेष इति ।

(भावबोधः)

सृष्ट्यादिकारणत्वस्य गम्यत्वादागमादिभिः ।
कारणं भगवान् विष्णुः शास्त्रगम्यः सनातनः ॥

इति विशेषप्रमाणमूलकं 'शास्त्रैकसमधिगम्यत्वात् कारणत्वस्य' इति न्यायविवरणं मनसि निधाय सूत्रार्थमाह । भवेदित्यादिना । जगत्कारणत्वस्य शास्त्रैकसमधिगम्यत्वे हेतुत्वेनाभिप्रेतस्यातीन्द्रियत्वस्य शास्त्रैकसमधिगम्यत्वेन व्याप्तिमुपपादयति । न हि धर्मादीति ।

तस्माद्वेदविदः पुंसां सर्वस्वामी स सर्ववित् ।
सर्वगः सर्वकर्ता वै ज्ञायते न कुतश्चन ॥

इति प्रमाणानुसारेण 'नाऽवेदवित्' इति श्रुतिं व्याचष्टे– तं पूर्णमित्यादिना । आत्मानमित्यस्य सर्वकर्तारं सर्वस्वामिनमिति । पुरुष इत्यस्य जगत्कर्तेति च व्याख्यानम्, श्रुत्योः प्रकृतोपयुक्तत्वज्ञापनार्थम् । कर्तृत्वस्य आत्मशब्दार्थत्वेन पुरुषस्य जगत्कर्तृत्वेन 'कर्तृत्वादात्मशब्दोक्तः' 'जगृहे पौरुषं रूपमादौ लोकसिसृक्षया' इत्यादिप्रमाणसिद्धत्वादिति भावः ।

श्रुतिसाहाय्यरहितानुमानस्य वह्न्यादौ प्रवृत्तेः कथं न कुत्रचिदित्युक्तमित्यत आह– कुत्रचिददृष्ट इति । अस्मदाद्यदृष्ट इत्यर्थः । तथा च प्रमाणान्तरं प्रत्यक्षमित्याद्युपपन्नम् । अन्यथा केनाप्यदृष्टविषयकश्रुतिसहितप्रत्यक्षस्याप्रसिद्धत्वाद्विशेष्य निषेधोऽनर्थक इति भावः । अत्रापि प्रमाणान्तरमिति । तर्कस्य पृथग्ग्रहणादिति भावः ।

## भावदीपः

॥ ॐ शास्त्रयोनित्वात् ॐ ॥ सङ्गतिरिति ॥ अन्तर्भावरूपा । अन्यनिष्ठत्वनिरासमात्रेण कथं सा लब्धा । तन्निरासस्य वा किं फलमित्यतः तन्निरासफलं व्यञ्जयंस्तां व्यनक्ति ॥ जगदिति ॥ तदेव तेनेति ॥ एतेनास्य जिज्ञास्यब्रह्मणो विष्णुत्वनिर्णायकलक्षणातिव्याप्तिनिरासपरत्वाद् ब्रह्मशास्त्रेऽन्तर्भावः प्रागुक्तजिज्ञास्यब्रह्मणो विष्णुत्वनिश्चयः फलमिति सूचितम् । इतिशब्दो हेत्वर्थः सर्वत्र शास्त्रसङ्गतिरित्यन्वेति । यद्वा पूर्वस्याद्युत्तराधिकरणसङ्गतिमन्वेति इहेतरत्र च शास्त्रसङ्गतिरित्यनन्तरमनुवर्त्य तत्पक्षतया एतद्वाक्यं पूर्वाधिकरण इव योज्यम् । तथा चात्र पूर्वपक्षे पूर्वोक्तस्याक्षेपात्पूर्वाधिकरणतद्विषयवाक्ययोरनन्तराधिकरणतद्विषयवाक्ययोश्चापि सङ्गतिरिति भावः । अधिकरणे

(भावदीपः)

अनुवृत्तेन प्रकारार्थकस्येतिशब्दस्यान्वयो ज्ञेयः । यद्यपि पूर्वत्रैव श्रुतिस्मृत्युक्त्या जन्मादिकर्तृत्वस्य विष्ण्वेकनिष्ठतोक्ता । तथापि सा भाष्यकृतैवोक्ता न तु सूत्रकृतेति वा तासामिह पूर्वपक्षे युक्तिनिरोधेनाक्षेपाद्वा भवत्यन्यनिष्ठताशङ्केति भावः । एतेनानेन सर्वगतत्वमायामयशब्दादिभ्य इत्यत्रैव तृतीये विष्ण्वेकनिष्ठताया वक्ष्यमाणत्वात्तेन गतार्थमिदमिति निरस्तम् । आगमाद्यवष्टम्भेनात्र तदुक्तस्याप्याक्षेपादिति बोध्यम् ।। **तदिति** ।। यतो वेत्यादिवाक्योक्तम् । **अन्यस्यापीति** ।। भाष्ये अन्य इत्येवोक्तावपि न च रुद्रादौ सममेतल्लक्षणमिति न्यायविवरणे समपदेन साधारण्यस्योक्तेः अत्रापि भाष्येऽन्येऽपीत्यभिमतमिति भावेनान्यस्येत्यनुक्त्वा विष्णोरेव अन्यस्याप्यस्ति वेत्युक्तम् । क्वचिद्विष्णोरन्यस्याप्यस्ति न वेति पाठः । अत एव भाष्यानुरोधादन्येषामपीति वाच्ये रुद्रादाविति एकवचनानुरोधेनान्यस्येत्युक्तम् ।। **पूर्वोक्तेति** ।। स च न्यायो जगज्जन्मादिकर्तृत्वस्येत्यादिना प्राग्विवृतः ।। **प्रसिद्धिश्चेति** ।। रुद्रादौ जगत्कर्तृत्वसंहर्तृत्वादिप्रसिद्धिश्चेत्यर्थः । अत्र सौत्रशास्त्रपदेनानुमानमूलकं पाशुपताद्यागममूलकं चेति चोद्यद्वयं व्यावर्त्यम् । द्वयोरप्यशास्त्रत्वात् । नैव शास्त्रं कुवर्त्म तदिति वक्ष्यमाणत्वात्प्रत्यक्षस्याप्रसक्तेः । तत्राद्यमनुमानत इति भाष्येण द्वितीयं तु ऋग्यजुस्सामाथर्वाश्चेति भाष्येण सूचितम् । तत्राद्यं व्यनक्ति ।। **अनुमानेनेति** ।। विमतं सकर्तृकं कार्यत्वात् घटवदित्यनेन विश्वकर्तृसिद्धौ प्रसिद्धिबलाद्रुद्रादिरेव कश्चिन्न तु विष्णुः । नावेदविदिति नैषा तर्केणेति स्वप्रामाण्यनिबंधकश्रुत्युक्ते विष्ण्वाख्यकर्तरि अनुमानस्यापर्यवसानादिति भावः । एतेन भाष्ये तसिल् तृतीयार्थः । तथा रुद्रादौ सममेतल्लक्षणमिति न्यायविवरणे च मया अनुमानेन सहितं समं अनुमानेन सिद्धमिति समशब्दार्थो दर्शितः । अत एव भाष्यरीत्या अन्येषामिति प्रक्रमेऽपि रुद्रादेरित्युक्तम् ।। **श्रुतीति** ।। य उ त्रिधात्वित्यादिश्रुतीत्यर्थः ।। **युक्तिविरुद्धार्थ इति** ।। विष्णुरेव कर्ता नान्य इत्यस्योक्तयुक्तिविरुद्धत्वेन विष्णुकर्तृत्वमात्र एव तात्पर्यं श्रुत्यादेर्न त्वन्यकर्तृतानिषेधे इति श्रुत्यादिना विष्णोरनुमानेन च शिवादेः कर्तृत्वं प्राप्तमिति देशादिभेदेनाविरुद्धं नेयमिति भावः । ततश्च किमित्यत आह ।। **तथा चेति** ।। रुद्रादेरपि कारणत्वं सतीत्यर्थः । एतेन रुद्रादौ समं साधारणमित्यपि समशब्दार्थो दर्शितो भवति ।। **भगवदेकेति** ।। जन्माद्यस्येत्यत्र कृत्स्नजगज्जन्मादिकर्तृत्वस्य विष्णुलक्षणत्वे असम्भवापत्त्या कतिपयजगज्जन्मादिकर्तृत्वं लक्षणत्वेनावश्यं विवक्षणीयमिति तदन्येषामपि प्राप्तमिति न भगवदेकनिष्ठतेति भावः । यथान्यासे विरोधादत्रान्यथाह ।। **कारणत्वेनेति** शेष इति ।। कथमनेनोक्तार्थे हेतुरुक्त इत्यतो भाष्येऽनुक्तमपि शास्त्रैकसमधिगम्यत्वात्कारणस्येति न्यायविवरणवाक्यमत्र संयोज्यमिति भावेन तदेव पठति ।। **शास्त्रैकेति** ।। शास्त्रं वेदादि च तदेकं असहायं च शास्त्रैकं विशेषणविशेष्यभावस्य कामचारित्वात् सङ्ख्यावचनस्यैवैकशब्दस्य पूर्वकालैकेति

([illegible])

समासविधानात् । सूत्रे पूर्वत्र प्रकृतं कारणं कारणत्वस्येत्यनुवर्त्यं कारणवाचितयाऽध्याहृतं तत्पदं वा तस्येत्यनुवर्त्यमिति भावः । कचिच्छास्त्रगम्यत्वस्यानुमानिकेऽपि दृष्टेर्व्यभिचारव्युदासायार्थलब्धस्याप्यंकेत्यस्योक्तिः । अयं च सूत्रार्थोऽत्रापि भाष्ये सौत्रपदयोर्विग्रहोक्त्याऽन्ते विवरिष्यते । अत्र च जगत्कर्ता नानुमानयोग्यः शास्त्रैकगम्यत्वादित्यभिमतप्रयोगे धर्मादिर्दृष्टान्तः । तत्र चोदनालक्षणोऽर्थो धर्म इति जैमिनिसूत्राच्छास्त्रैकगम्यत्वरूपहेतुसत्त्वं सिद्धं कृत्वा साध्यमुपपादयति ।। न हीति ।। चोदनैकप्रमाणकत्वभङ्गापत्तेरिति भावः । ऋग्यजुरित्यादिस्मृत्या शास्त्रशब्दितस्य सर्वस्य विष्णौ प्रामाण्येऽपि अन्यार्थं तु जैमिनिरित्यादावपरममुख्यवृत्त्या धर्मादावपि प्रामाण्योपगमान्न तत्र साधनवैकल्यं शङ्क्यम् ।

ऋगाद्या अपरा विद्या यदा विष्णोर्न वाचिकाः ।
ता एव तु परा विद्या यदा विष्णोस्तु वाचिकाः ।।

इत्याथर्वणभाष्योक्तेः । एतेन पूर्वपक्ष्यभिमतकार्यत्वाद्यनुमानस्य बाधितविषयत्वं सूचितम् । सर्वानुभुमित्यस्य सर्वमनुभवति अनुभावयति उत्पादयति चेत्यर्थद्वयमुपेत्याह ।। सर्वज्ञं सर्वकर्तारमिति ।। आत्मानमित्यस्य स्वामिनमित्यर्थः । सर्वेति योग्यतयोक्तम् । सम्यक्परस्मिन्नयनं सम्परायः । तादर्थ्ये सप्तमी । धर्माणि दीपिनं हन्तीत्यादिवदित्युपेत्याह ।। मोक्षायेति ।। प्रकृतोपयोगायाह ।। पुरुषो जगत्कर्तेति ।। जगृहे पौरुषं रूपमादौ लोकसिसृक्षयेत्यादेरिति भावः ।

भाष्यस्यादिपदेन तं त्वौपनिषदं पुरुषं पृच्छामीत्यादेर्ग्रहः । इत्यादिभ्य इति भाष्यस्य सूत्रेणान्वयः ।। स्वातन्त्र्याविरुद्धमिति ।। तथा चोक्तं सर्वधर्मोपपत्तेश्चेत्यत्र न्यायविवरणे स्वतन्त्रस्य पूर्णगुणत्वनियमात् ।

अपूर्णोऽयं जीवसङ्घोऽस्वतन्त्रः पूर्णो हरिर्यः स्वतन्त्रः सदैव ।
न हि स्वतन्त्रोऽपूर्णतां कामयीत पूर्णो यदि स्यादस्वतन्त्रः कुतस्सः ।।

इति श्रुतेरिति । आदिपदेन कर्तृत्वात्सगुणं ब्रह्म पुरुषं पुरुषमित्याद्युक्तकर्तृत्वादिहेत्वादिग्रहः । भाष्ये यस्त्वर्थः । नियतप्रामाण्यं तु नास्तीत्युपेत्य तदनूद्यार्थमाह ।। न त्विति ।। प्रतिपक्षादीति ।। तत्र व्यक्तमनुभाष्ये तत्त्वनिर्णयतट्टीकयोस्तर्कताण्डवे च । प्रकृतं कार्यत्वादीत्यर्थः । धूमादौ व्यभिचारादाह ।। कुत्रचित्त्विति ।। यथा रामेति ।। व्यक्तमेतत् 'अपरोक्षिनदृष्टैव सदोषा ज्ञायते हरिरि'त्यादिज्ञानपादीयानुव्याख्यानसुधयोः ।। यशोदाया इति ।। 'सा तत्र ददृशे विश्वं जगत्स्थास्नु च खं दिशः' इत्यादेः कल्याणं विश्वमित्यत्र [illegible] । पूर्णत्वादित्यादि न 'न

(भावदीपः)

हि स्वतन्त्रोऽपूर्णतां कामयीते'ति 'आत्मा हि परमस्स्वतन्त्रोऽधिगुणः' 'पूर्णमदः पूर्णमिदमि'त्यादि-श्रुतिसहायम् ।। **केवलानुमानस्येति** ।। तेन भाष्ये चकारः उक्तस्मृतिसमुच्चायक इति सूचितम् ।। **जगत्कारणाभावादाविति** ।। तथा चोक्तं विष्णुतत्त्वनिर्णये । विमतं विकर्तृकमस्मत्संमतकर्तृरहित-त्वादित्यादि । आदिपदेन "वस्तुत्वात्तुरगः शृङ्गी"त्याद्यनुभाष्योक्तमश्वशृङ्गित्वादिकं ग्राह्यम् । पूर्वस्मात्साध्यानुवृत्तिं मत्वाह ।। **नानुमानस्येति** ।।

## अभिनवचन्द्रिका

**अत्र जगज्जन्मादिकारणत्वस्येति** ।। ब्रह्मसम्बन्धिलक्षणस्य अनतिप्रसक्तत्वविचारत्वेन ब्रह्मविचारत्वात् शास्त्रान्तर्भाव इत्यर्थः । **तदैव तेन विष्णुत्वनिश्चयः स्यादिति** ।। ननु जगज्जन्मादि-कारणत्वस्यान्यनिष्ठत्वेऽपि रूढिविषयजीवानिष्ठत्वात् तेन रूढ्यर्थजीवनिरासायोगेन विष्णुपरता सेत्स्यतीति किमन्यनिष्ठतानिरासप्रयासेनेति चेत् सत्यम् । भवत्येव तेन देवदत्तादिजीवव्यावृत्तिः देवदत्तादिजीवा-निष्ठत्वात्, तथापि जीवत्वेन ब्रह्मशब्दरूढिविषयस्य न रुद्रादेर्व्यावृत्तिः सम्भवति । जीवापबाधकत्वेनोप-न्यस्तस्य पूर्ववाक्योक्तजगज्जन्मादिकारणत्वस्य तत्रापि सत्त्वात् । नापि मुख्यतो जिज्ञास्यत्वानुपपत्तिर्बाधिका विष्णुवत्तस्यापि मुख्यतो जिज्ञास्यत्वसम्भवात् । अन्यथा तस्यापि न स्यात् । तथा च रुद्रादिरेव जिज्ञास्यं ब्रह्म निर्बाधरूढिसद्भावादिति शङ्कापरिहाराय पूर्वोक्तजन्मादिकारणत्वस्य विष्ण्वेकनिष्ठत्व-साधनमावश्यकमिति द्रष्टव्यम् । **किं विष्णोरन्यस्याप्यस्ति न वेति सन्देह इति** ।। विष्णोरित्यनन्तर-मिवेति शेषः । ततश्चैवं योजना – यथा विष्णोः स्वातन्त्र्येण जगत्कारणत्वं तथैवान्यस्यापि रुद्रादेः अस्ति न वेति सन्देह इति । **अन्येषामप्यस्तीति पूर्वपक्ष इति** ।। नन्विदमयुक्तम् । सिद्धान्त्यभिमतस्य रुद्रादिसमवेतज्ञानाज्ञानबन्धादिकर्तृत्वस्य रुद्रादावसम्भवात् । न हि स्वयमेव प्रेक्षावान् स्वात्मानं बध्नाति दुःखयतीति कर्तृत्वस्यात्र युक्तम् । प्रेक्षावत्त्वहानेः । प्रेक्षावत्त्वानङ्गीकारे च मूढस्य देवदत्तादिजीववत् जगत्कर्तृत्वासम्भवेनानतिव्याप्तिरेवेति चेत्, स्यादयं दोषः यदि 'यतो वा इमानी'ति वाक्यस्य रुद्रादि-समवेतज्ञानाज्ञानबन्धादिकर्तृत्वमेवार्थः स्यात् । न चासावर्थः । रुद्रादेर्विष्णुसमानत्वेन बन्धादिशून्यत्वात् । किं नाम महदादिकर्तृत्वमेवार्थः । अन्यथा घटस्य ज्ञानाज्ञानबन्धकर्तृत्वं वाक्यार्थः स्यात् । यदि बाधितविषयत्वान्नासौ वाक्यार्थः, हन्त तर्हि तत एव रुद्रादिसम्बन्धादिकर्तृत्वमपि न वाक्यार्थः । ततश्चाऽऽगमाद्विष्णोरिवानुमानाद्रुद्रादेरपि कारणत्वस्य प्रमितत्वात् भवत्येवातिव्याप्तिः । न च कल्पप्रसङ्गः । सूत्रकाराभिमतस्य रुद्रबन्धादिकारणत्वस्य श्रुत्यनभिमततत्वात् । प्रत्युत सूत्रकारस्यैवायं दोषो यत्

(अभिनवचन्द्रिका)

श्रुत्यनभिमतार्थवक्तृत्वं नामेति । एवमेव हिरण्यगर्भादिचेतनेषु प्रधानाद्यचेतनेषु चातिव्याप्तिरूह्या । यद्यपि प्रधानादौ सिद्धान्त्यभिमतं उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वरूपं कर्तृत्वं न सम्भवति, तथापि ज्ञानं विनैव जगत्कारणत्वं श्रुत्यर्थ इति मन्यमानस्य भवेदेवातिव्याप्तिरिति शङ्केति । अनुमानं तु– शिवो जगत्कर्ता जगत्करिष्यामीति तदिच्छुत्वे सति तत्कर्त्रा विष्णुना न्यूनाधिकबलवत्त्वात् । न चाऽसिद्धो हेतुः । ब्रह्मविष्णुमहेश्वराणां आत्यन्तिकसाम्यस्य आविपालगोपालसिद्धत्वादिति । तदिदमुक्तम्– साधनसौलभ्यादिति ॥ हेतोराविपालगोपालसिद्धत्वेनासिद्धिशङ्कानुदयात्सौलभ्यमित्यर्थः । न चोदाहृतश्रुतिविरोध इति ॥ 'न ते विष्णो' (ऋ.सं.७-९९-१२) इत्यादिश्रुतिविरोध इत्यर्थः । तासां युक्तिविरुद्धार्थं इति ॥ तासां श्रुतीनां 'न हि निन्दा' न्यायेन विष्णूत्कर्ष एव तात्पर्यम् न तु शिवापकर्ष इति भावः । न तस्यैव तेनेति ॥ ब्रह्मशब्दस्य विष्णाविव रुद्रादावपि वृत्तेः पूर्ववाक्योक्तस्य जन्मादिकारणत्वस्य तत्रापि सत्त्वेन निर्णायकाभावात् जिज्ञास्यं ब्रह्म शिवो वा विष्णुर्वेति सन्देहः स्यात्, न तु निश्चयः । उभावपि विष्णुशिवौ जिज्ञास्यब्रह्मणी इति निश्चयो वा स्यादित्यर्थः । अङ्गीकृत्य चेदमुदितम् । ब्रह्मशब्दस्य विष्णौ यौगिकत्वात् रुद्रे रूढत्वात् योगापेक्षया रूढेर्बलवत्त्वात् रुद्र एवेति निश्चयः स्यादिति द्रष्टव्यम् । भवेदनुमानत इति ॥ यद्यपरोक्षस्यैव परोक्षमनुमानस्य प्रमेयं स्यात् तदाऽनुमानेन रुद्रादीनां कारणत्वनिश्चयः । महदादिकारणत्वमेव श्रुत्यर्थ इति निश्चयः स्यात् । न चैवं – परोक्षमात्रस्य शास्त्रासाधारणविषयत्वात् । अन्यथा अनुमानेन धर्मादिनिश्चयः स्यादिति भावः । शास्त्रैकसमधिगम्यत्वादिति ॥ ननु कारणस्यानुमानवेद्यत्वात्, शास्त्रैकसमधिगम्यत्वादित्ययुक्तमिति चेत्, स्यादयं दोषः यद्ययमेकशब्दः अनुमानावेद्यत्वं वदेत्, न चैवम् । किं नाम असहायवाची, स च असहायः शास्त्रवेद्यतामाह । एकशब्दस्यानेकार्थत्वात् । तदुक्तं महाभाष्ये– 'एकशब्दोऽयं बह्वर्थः । अस्ति संख्यावाची एको द्वौ बहवः इति, अस्त्यसहायवाची एकाग्नयः एकहलानि एकाकिभिः क्षुद्रकैर्जितमिति, अस्त्यन्यवाची 'सधमादो द्युम्न एकास्ताः, अन्या इत्यर्थो गम्यते' इति, ननु– समासशास्त्रे प्रथमानिर्दिष्टत्वेनोपसर्जनत्वात् एकशब्दस्य पूर्वनिपातेन भवितव्यम् । न भवितव्यम् । पूर्वकालैक(पा.२-१-४९)ति सूत्रेण समासानङ्गीकारात् । संख्यार्थकस्यैकशब्दस्य तत्र ग्रहणात् । संख्येतरार्थकस्य 'विशेषणं विशेष्येण बहुलम्(पा.२-१-५७)मि'त्यनेन समासविधानात् । नन्वत्रापि विशेषणमिति प्रथमानिर्दिष्टत्वात् पूर्वनिपातो भविष्यति । न भविष्यति । विशेषणविशेष्यभावस्य कामचारत्वेन एकशब्दस्य विशेष्यत्वात् । ननु 'नावेदविन्' इति श्रुत्या कारणस्य शास्त्रैकवेद्यत्वाप्रतिपादनात् प्रत्यक्षानुमानयोरनुपपत्तिरतः 'सर्वानुभु'मिति शब्दार्थमाह– सर्वेषां सर्वकर्तारमिति ॥ सर्वमनुभवतीति

(अभिनवचन्द्रिका)

व्युत्पत्त्या सार्वज्ञं तथा सर्वप्राणिनामनु कर्मानुसारेण भावयति उत्पादयतीति व्युत्पत्त्या सर्वकर्तृत्वं चशब्दार्थ इति बोध्यम् । 'औपनिषदः पुरुष' इति श्रुतेरनुदाहार्यत्वमिति शङ्कानिरासाय पुरुषशब्दार्थमाह– **पुरुषो जगत्कर्तेति** ।। पुरु सर्वं सूत इति जगत्कर्तृत्वं पुरुषशब्दार्थ इति बोध्यम् । **औपनिषदस्यापीति** ।। चाक्षुषेऽपि पुष्पे घ्राणेन गन्धसिद्धिवत् औपनिषदे धर्मिणि अनुमानेन शिवत्वसिद्धिः किं न स्यात् । अपि तु स्यादेव । त्वयापि औपनिषदे धर्मिणि स्वातन्त्र्यादिहेतुना पूर्णत्वसिध्यङ्गीकारादिति भावः । एतेन औपनिषदस्य कारणस्यानुमानेन सिद्धिर्नानिष्टा विष्णोः जगत्कारणत्वाहानेः । न हि य एव विष्णुः जगत्कारणत्वेनोपनिषद्भिः सिद्धः स एव चेदनुमानेन सिद्धः । तदा विष्णोर्जगत्कारणत्वहानिर्भवति । उपनिषदनुमानयोः समानविषयत्वात् येनानुमानेन सिद्धिरनिष्टा स्यादिति परास्तम् । **सत्यमस्त्येवेति** ।। सत्यमस्त्येवानुमानस्य पूर्णत्वादिधर्मवैशिष्ट्येन निश्चायकत्वम्, तत्साधकस्वातन्त्र्यादिहेतूनां श्रुत्यनुसारित्वात् तथापि नानुमानेन जगत्कारणे शिवत्वसिद्धिः । आगमसाहाय्यरहितानुमानस्यादृष्टार्थनिश्चायकत्वाभावात् प्रतिपक्षादिसम्भवादिति भावः । भाष्ये– **श्रुतिसाहाय्यरहितेति** ।। श्रुतिसाहाय्यरहितमनुमानं कुत्रचिददृष्टेऽर्थे शिवत्वादिरूपमर्थं निश्चयात्न साधयेन्निश्चयरूपानुमितिजननद्वारा अर्थं न व्यवस्थापयेत् । किन्तु एककोटिकसंशयरूपामनुमितिं जनयेत् । एवं प्रमाणान्तरं प्रत्यक्षमपि अदृष्टेऽर्थे एककोटिकसंशयं विपरीतनिश्चयं वा जनयेत् । न त्वर्थव्यवस्थापिकां प्रमां, श्रुतिस्मृतिसाहाय्ययुक्तं प्रमाणान्तरं प्रत्यक्षं प्रमाणपदवीं गच्छेत्, निश्चयरूपं ज्ञानं जनयेदित्यर्थः । कीदृशमनुमानं प्रमाणपदवीं गच्छेदित्यतः शृङ्गग्राहकतया प्रमाणमनुमानमाह– भाष्ये **पूर्वोत्तरेति** ।। श्रुतिसाहाय्ययुक्तः तर्कः प्रमाणपदवीं गच्छेदिति पूर्वेण सम्बन्धः । कोऽसौ श्रुतिसाहाय्ययुक्तस्तर्कः इत्यत उक्तं– **पूर्वोत्तरेति** । 'मनः प्राणे प्राणः तेजसि तेजः परस्यां देवताया'मित्यत्र प्राणशब्दस्य पूर्वोत्तराविरोधेन निमित्तेन कः चतुर्मुखः अभिमतोऽर्थः विवक्षितोऽर्थो भवेत् । अन्यथा मुक्त्यर्थलयप्रतिपादकपूर्वोत्तरवाक्यविरोधः स्यादिति भावः । एतेन 'कोऽत्रार्थोऽभिमतो भवे'दिति प्रश्नस्य आक्षेपस्य वा ऊहशब्दवाच्यानुमानत्वकथनमयुक्तमिति परास्तम् । टीकायां – **रामकृष्णादिदोषग्राहीति** ।। ननु रामकृष्णादिदोषाणामतीन्द्रियत्वेन तान् प्रत्यक्षं विषयीकुर्यात् । विषयीकरोति च । अतः शुक्तिकायामारोपितरजतत्ववत् रामकृष्णाद्यारोपितदोषाणामैन्द्रियकत्वमेव वाच्यम् । तथा चाऽऽगमाऽसहकृतस्य प्रत्यक्षस्याऽतीन्द्रियार्थनिश्चायकत्वाभावेनेदमुदाहरणमिति चेत्, मैवम् – रामकृष्णाद्यारोपितदोषाणामतीन्द्रियत्वात् कथं तर्हि तेषामिन्द्रियेण ग्रह इति चेत्, चक्षुराद्यविषयीभूताया अपि तन्मायाः संस्कारलक्षणसहकारिवशात् सोऽयमिति ग्रहवत् दोषलक्षणसहकारिवशात् अतीन्द्रियाणामपि दोषाणां ग्रह इति गृहाण । अत एव

(अभिनवचन्द्रिका)

दृष्टान्तोऽप्यपास्तः । इन्द्रियं स्वमहिम्ना यमर्थं विषयीकरोति तस्यैवैन्द्रियकत्वात् । अन्यथा सर्वेषामारोपितार्थप्रतिभासप्रसङ्गो दुर्वार इति । यथा यशोदाया इति ।। यशोदाप्रत्यक्षस्य श्रुतिस्मृतिसहायत्वं नाम श्रुतिस्मृत्युक्तानुष्ठानजनितधर्मसहकृतत्वमिति द्रष्टव्यम् । एतेन यशोदाप्रत्यक्षगृहीतस्यातीन्द्रियत्वेन प्रत्यक्षेण ग्रहः । प्रत्यक्षेण ग्रहे च नातीन्द्रियत्वमिति परास्तम् । अतीन्द्रियस्याप्यर्थस्य योगजधर्मसहकारित्वेन भानसम्भवात् । 'इत्याद्यमूहनं तर्कं' इत्यत्राऽऽद्यशब्दोक्तोदाहरणमाह— यथा विष्णुरिति ।।

## वाक्यार्थमुक्तावली

।। ॐ शास्त्रयोनित्वात् ॐ ।। अत्र यतो वेत्यादिब्रह्मलक्षणप्रतिपादकश्रुत्यर्थजन्मादिकारणत्वस्यानतिव्याप्तत्वलक्षणत्वनिर्णयायान्यायकत्वुत्पादनस्य क्रियमाणत्वात् शास्त्रेऽन्तर्भावसङ्गतिरित्याह ।। तत्रेति ।। विष्णुरेव ब्रह्मेति पूर्वाधिकरणे सृष्ट्यादिकर्तृत्वलिङ्गेन साधिते तस्यान्यनिष्ठत्वादेतदनुपपन्नमित्याक्षेपे तत्परिहारस्य क्रियमाणत्वादाक्षेपिकी सङ्गतिरिति भावेन श्रुत्यधिकरणसङ्गतिमाह ।। जन्मादीति । स्यादितीति । श्रुत्यधिकरणसङ्गतिरिति शेषः । यद्यपि लक्षणस्यान्यनिष्ठता प्रागेव श्रुत्यादिभिर्निरस्ता । तथापि भाष्यकृतैव न सूत्रकृतेति भवत्येव शङ्का । यद्वा तासां युक्तिविरोधेनाक्षेपोऽत्र क्रियत इति । अन्यस्यापीति । अत्र जन्मादिकारणत्वं किमन्यस्याप्युत विष्णोरेवेति चिन्ता । तदर्थं जगत्कारणत्वं किमनुमानादिप्रमाणगम्यमुत शास्त्रैकगम्यमिति । तदर्थं कारणत्वस्य शास्त्रैकसमधिगम्यत्वेन प्रमाणं नास्त्युतास्तीति । पूर्वोक्तन्याय इति । य उ त्रिधातु पृथिवीमित्युक्तन्यायः शिवादीनां कारणत्वेन प्रसिद्धिश्चेत्यर्थः । अन्ततरानुक्तौ तूक्तरीत्या संशयो न स्यादिति द्रष्टव्यम् । सौत्रशास्त्रपदेनानुमानमूलं पाशुपताद्यागममूलं चेति पदद्वयं व्यावर्त्यम् । तत्राद्यमनुमानत इति भाष्येण द्वितीयं तु ऋग्यजुस्सामाथर्वाश्चेति भाष्येण सूचितम् । तत्राद्यं व्यनक्ति । अनुमानेनेति । रुद्रो जगत्कर्ता सर्वज्ञत्वात् व्यतिरेकेण यज्ञदत्तवदित्यनुमानेनेत्यर्थः । यद्वा जगत्कारणत्वं रुद्रनिष्ठं तदन्यानिष्ठत्वे सति यत्किञ्चिन्निष्ठत्वादित्यनुमानेनेत्यर्थः । प्रामाण्यायोगादिति । य उ त्रिधात्वित्यादीनां युक्तिविरुद्धार्थे एकस्यैव जगद्धारकत्वादिकमिति प्रतीतार्थे प्रामाण्यायोगादित्यर्थः । यद्वा अन्यनिषेधेन विष्णुकारणत्वश्रुतीनां प्रामाण्येऽपि तासां तदितरनिषेधपराणां प्रामाण्यायोगादित्यर्थः । यद्वाऽतिव्याप्तिरित्यापातनः । वस्तुतस्त्वसम्भव एवेति न्यायविवरणटीकायामुक्तत्वात् । युक्तिविरोधे विष्णुकारणत्वपराणां सर्वथा अप्रामाण्यादित्यर्थः । शास्त्रयोनित्वादिति हेत्वंशस्यानुमानत इति भाष्येणान्वयमभिप्रेत्य व्याचष्टे । भवेदिति । शास्त्रयोनित्वादित्येतद्वाक्यपूरणेन न्यायविवरणव्याख्यानेन विवृणोति । शास्त्रैकेति । शास्त्रं वेदादिकम् । शास्त्रं च तदेकत्वसहायं चेति

(वाक्यार्थमुक्तावली)

शास्त्रैकं विशेषणविशेष्यभावस्य कामचारित्वात् । सङ्ख्यावचनस्यैवैकशब्दस्य पूर्वकालैकेति समास-विधानादिति न्यायविवरणटीकातस्तदर्थो ज्ञेयः । तथा च प्रयोगः । जगत्कर्ता नानुमानयोग्यः शास्त्रैकगम्यत्वाद्धर्मादिवदिति । तत्र चोदनालक्षणोऽर्थो धर्म इति जैमिनिसूत्राद्धेत्वंशं दृष्टान्ते सिद्धवत्कृत्य साध्यमुपपादयति । **न हीति** । चोदनैकप्रमाणकत्वभङ्गापत्तेरिति भावः । अमुख्यवृत्या अपि धमदिः शास्त्रैकगम्यत्वस्य सिद्धान्तेऽङ्गीकारान्न साध्यवैकल्यम् । आत्मानमित्यस्यार्थद्वयमाह । **सर्वकर्तारं सर्वस्वामिनमिति** । कर्तृत्वादात्मशब्दोक्त इति वचनात् । सम्यक् परस्मिन्नयनं साम्पराय इति तत्वप्रदीपं मनसि निधाय तादर्थ्ये सप्तमीति भावेन साम्पराय इत्येतद्व्याचष्टे । **मोक्षायेति** । **पुरुषो जगत्कर्तेति** । "जगृहे पौरुषं रूपमादौ लोकसिसृक्षये"त्युक्तेरिति भावः । भाष्ये आदिपदेन तं चौपनिषदं पुरुषं पृच्छामीत्यादिसङ्ग्रहः । इत्यादिभ्य इति भाष्यस्य सूत्रेणान्वयः । **स्वातन्त्र्यादीति** । उक्तं च न्यायविवरणे । स्वतन्त्रस्य पूर्णत्वनियमादिति । आदिपदेन कर्तृत्वात् सगुणं ब्रह्मेत्याद्युक्त-कर्तृत्वादिग्रहः । धूमादौ व्यभिचारादाह । **कुत्रचिददृष्ट इति** । अस्मदादिप्रत्यक्षादृष्ट इत्यर्थः । तथा च प्रमाणान्तरं प्रत्यक्षमित्याद्युपपन्नम् । अन्यथा केनाप्यदृष्टविषयकश्रुतिसहितप्रत्यक्षस्याप्रसिद्धत्वाद्विशिष्य निषेधोऽनर्थक इति भावः । अथवा वेदैकवेद्यत्वमदृष्टत्वम् । अत एव तत्वप्रदीपे श्रुतिसाहाय्यरहितमनुमानं प्रत्यक्षं च श्रौतेऽर्थे न प्रमाणमित्युक्तम् । भाष्ये **'इत्याद्यमूहनं तर्क'** इति । विमर्श एवाद्यं पूर्वभावि यस्य तदूहनं मननं तर्क इत्यर्थः ।

## तत्त्वसुबोधिनी

।। ॐ शास्त्रयोनित्वात् ॐ ।। **अन्यनिष्ठत्वनिरासादिति** । तथा च उक्तस्य लक्षणस्यातिव्याप्ति-निरासाय प्रमाणमुच्यत इत्यनन्तरसङ्गतिरिति भावः । श्रुत्यधिकरणसङ्गती दर्शयति । **जगज्जन्मादीति** । पूर्वपक्षमुपपादयति । **अनुमानेनेति** । शिवो जगज्जन्मादिकर्ता सर्वज्ञत्वादिति व्यतिरेकेणेत्यर्थः । न च हेत्वसिद्धिः । पाशुपतागमात्प्रसिद्धिरित्याशयात् । ननु रुद्रादीनामनुमानतः अकल्पनात् कारणताया एव च ततः कल्पनात् पूर्वपक्षादिनां तन्निरासाय कारणत्वेन न कल्पनीया इत्येव वक्तव्ये अन्ये न कल्पनीया इति वचनमन्यथानुवादः इत्यतः शेषं सम्पूर्य व्याचष्टे । **कारणत्वेनेति शेष इति** । सूत्रार्थमाह । **भवेदित्यादिना** । जगत्कारणत्वस्य शास्त्रैकसमधिगम्यत्वं हेतुत्वेन अभिप्रेतस्यातीन्द्रियत्वस्य शास्त्रैकसमधिगम्यत्वेन व्याप्तिमुपपादयति । **न हि धर्मादीति** ।। आत्मानमित्यस्य सर्वकर्तारं सर्वस्वामिनमिति पुरुषः इत्यस्य जगत्कर्तेति च व्याख्यानं श्रुत्योः प्रकृतार्थपरत्वज्ञापनार्थम् । कर्तृत्वस्य

(तत्त्वप्रबोधिनी)

आत्मशब्दार्थत्वेन जगत्कर्तृत्वस्य पुरुषशब्दार्थत्वेन "कर्तृत्वादात्मशब्दोक्तः" "जगृहे पौरुषं रूपम् आदौ लोकसिसृक्षया" इत्यादिप्रमाणसिद्धत्वादिति भावः । नन्वनुमानस्यास्वातन्त्र्येणादृष्टार्थानिश्चायकत्वेऽपि श्रुत्यादिसाहाय्यरहितत्वाच्चोपनिषदर्थनिश्चायकत्वमित्याह । तादृशं चेति । श्रुतिसाहाय्यरहितानुमानस्य वह्न्यादौ प्रवृत्तेः कथं कुत्रचिदित्युक्तमित्याह । कुत्रचिददृष्ट इति । अस्मदाद्यदृष्ट इति अर्थः । तथा च प्रमाणान्तरं प्रत्यक्षमित्युपपन्नम् । अन्यथा केनाप्यदृष्टविषयकश्रुतिसहितप्रत्यक्षस्याप्रसिद्धत्वाद्विशिष्य निषेधोऽनर्थकः स्यादिति भावः । अत्रापि प्रमाणान्तरमिति । तर्कस्य पृथग्ग्रहणादिति भावः । विपक्ष इति । पूर्वानुमानापेक्षया विपरीतानुमानकरणे इत्यर्थः । नन्वनुमाया अचेतनत्वेन उदीक्षणासम्भवात् कथमुदीक्षितुमित्युक्तमित्यत आह । अर्थमुदीक्षयितुमिति । केवलानुमानस्येति । श्रुत्यादिसाहाय्यरहितस्येत्यर्थः । अनिर्णायकत्वात् । स्वातन्त्र्येणादृष्टार्थानिश्चायकत्वात् ।

## वाक्यार्थविवरणम्

जगत्कारणम् अनुमानवेद्यं न भवति शास्त्रैकसमधिगम्यत्वात् इत्यनुमाने शास्त्रेतरप्रमाणावेद्यत्वे सति तद्वेद्यत्वादिति हेत्वर्थः । तत्र जगत्कारणस्यानुमानिकत्वाभावे शास्त्रेतरानुमानरूपप्रमाणावेद्यत्वमात्रमेव हेतुः । न च साध्याविशिष्टत्वम् । अनुमानवेद्यतायोग्यताशून्यस्य हेतुत्वात् । फलोपधानाभावस्य साध्यत्वात् । तथा च 'जगत्कारणमनुमानवेद्यं न अनुमानवेद्यतायोग्यताशून्यत्वात् धर्मादिवत्' इत्येवानुमानमभिप्रेतम् । तत्र दृष्टान्ते हेतुमुपपादयति । न हि धर्मादिनिश्चयो अनुमानेनेति । नेति । ननु शास्त्रयोनित्वं नाम शास्त्रैकसमधिगम्यत्वम् । तच्च तदितरावेद्यत्वे सति तद्वेद्यत्वम् । तत्र यदि तदितरावेद्यत्वमात्रं हेतुत्वेनाभिप्रेतं, तर्हि विशेष्यभागो व्यर्थ इति चेत् । सत्यम् । ब्रह्मणः प्रत्यक्षावेद्यत्वस्योभयसिद्धत्वेन शास्त्रेतरानुमानावेद्यत्वे सर्वथा प्रमाणावेद्यत्वप्राप्त्या तदसिद्धिरेव स्यादित्याशङ्कापरिहारायैव शास्त्रवेद्यत्वमुक्तम् । न तु हेतुशरीरप्रविष्टतयेति ज्ञेयम् ॥ कारणस्य शास्त्रैकवेद्यत्वमिति ॥ कारणस्य शास्त्रेतरप्रमाणावेद्यत्वं कुतः प्रमाणात्प्रतिपत्तव्यम् । तथा च हेतोः स्वरूपासिद्धिरिति भावः ।

## वाक्यार्थमञ्जरी

जन्मादिकारणत्वस्य विष्णुलक्षणत्वेनोक्तत्वात् । तेन शास्त्रसङ्गतिरित्युपपन्नम् ॥ तदेवेति ॥ अन्यथा अतिव्याप्तत्वेन विष्णुलक्षणत्वासिद्धेरिति भावः । यद्यपि लक्षणस्य विष्ण्वेकनिष्ठत्वं प्रागुक्तं तथापि [illegible] न दोषः । इतिशब्दस्याध्याहारेण श्रुत्यादिसङ्गतिरित्यनेनान्वयः । [illegible]ऽपि । उक्तन्यायः पूर्वोक्तश्रुतिस्मृतिरूपः प्रसिद्धिः [illegible] ॥ अनुमानेनेति ॥ भित्त्यादिकं सकर्तृकं

(वाक्यार्थमञ्जरी)

कार्यत्वादित्यनुमानेन कर्तृमात्रसिद्धावपि तस्य नावेदविदिति स्वप्रामाण्यनिषेधकश्रुत्युक्ते विष्ण्वाख्ये कर्तरि पर्यवसानायोगेन पाशुपताद्यागमोक्ते शिवादौ पर्यवसानाद्वा शिवो जगत्कर्ता सर्वज्ञत्वात् व्यतिरेकेण कुलालवदित्यनुमाने वा रुद्रादेः कारणत्वसिद्धिः । न च द्वितीयेऽसिद्धिः पाशुपताद्यागमेन तत्सिद्धेरिति भावः ।। **श्रुतीति** ।। य उ त्रिधात्वित्यादिश्रुतीत्यर्थः । युक्तिविरुद्धार्थे उक्तानुमानविरुद्धे विष्णोरेव कारणत्वरूपे ।। ॐ शास्त्रयोनित्वात् ॐ ।। जगत्कारणस्य वेदवेदानुसारिग्रन्थैकप्रमाणकत्वान्नानुमान-पाशुपतादिवेद्यत्वमित्यर्थः । अभिधेयत्वादिनाऽन्येषामपि अनुमेयत्वादाह ।। **कारणत्वेनेति शेष इति** ।। आनुमानिकं अनुमाननिश्चेयम् ।। **शास्त्रैकेति** ।। शास्त्रमात्रज्ञेयत्वादित्यर्थः । कारणं नानुमाननिश्चेयं शास्त्रैकवेद्यत्वादिति प्रयोगे व्याप्तिमुपपादयति ।। **न हीति** ।। तस्य चोदनैकवेद्यत्वादिति भावः । प्रकृतोपयोगायात्मशब्दस्यार्थान्तरं सर्वकर्तारमिति । कर्तृत्वादात्मशब्दोक्त इत्यादेः । सम्यक् परस्मिन्नयनं सम्परायः सम्पराय एव साम्परायः । तादर्थ्ये सप्तमीत्युपेत्याह ।। **मोक्षायेति** ।। जगत्कर्तेत्यपि प्रकृतोपयोगाय । "जगृहे पौरुषं रूपम् आदौ लोकसिसृक्षया" इत्युक्तेरिति भावः । अङ्गीकारात् स्वतन्त्रस्य पूर्णगुणत्वनियमादिति न्यायविवरणे ।। **श्रुत्यादिसहकारीति** ।। स्वातन्त्र्यानुमानमपि पूर्णो हरिर्यः सदैवेत्यादिश्रुतिसहायमिति भावः ।। **प्रतिपक्षादीति** ।। विमतं सकर्तृकं कार्यत्वादित्युक्ते विमतं विकर्तृकमस्मत्संमतकर्तृरहितत्वादिति प्रतिपक्षसम्भवादित्यर्थः । तादृशं श्रुतिसाहाय्यरहितम् । श्रुतिसाहाय्यरहितानुमानस्य बहुवादौ प्रवृत्तेः कथं न कुत्रचिदिति तत्राह ।। **अदृष्ट इति** ।। अस्मदाद्यदृष्ट इत्यर्थः । तेन प्रमाणान्तरं प्रत्यक्षमित्युपपन्नम् । अन्यथा केनाप्यदृष्टविषयकश्रुतिसहितप्रत्यक्षस्याप्रसिद्धत्वेन विशिष्य निषेधे अनर्थकः स्यादिति ध्येयम् । **यथेश्वर इति** ।। इदं तु यः स्वतन्त्रः सदैवेति श्रुतिबाधितम् ।। **यथा रामेति** ।। इदं तु वर्जितः सर्वदोषैरिति श्रुतिविरुद्धम् ।। **अत्रापीति** ।। तर्कस्य पृथगभिधानादिति भावः ।। **यशोदाया इति** ।। तत्र य उ त्रिधात्वित्यादिश्रुतिसहायम् । **यथा विष्णुरिति** ।। समव्याप्तत्वेनोभयोरपि परस्परं साध्यसाधनभावसूचनाय पूर्वप्रयोगाद्व्यत्यासः । भाष्ये तादृशतर्कप्रदर्शनाय पूर्वोत्तरेत्याद्युक्तम् । ऊहनं परामर्शजन्यज्ञानविशेषः । शुष्कः श्रुत्यसहायः ।। **जगत्कारणत्वाभावादाविति** ।। जगन्निष्कारणं वस्तुत्वादात्मवत् । न चेष्टापत्तिः । सकारणत्वस्य यतो वेत्यादिप्रमाणसिद्धत्वेन प्रामाणिकहानापत्तेः । शशो विषाणवान् मृगत्वात् कृष्णमृगवत् । न चेष्टापत्तिः । शशविषाणस्य सर्वथा अप्रमितत्वेनाप्रमाणिककल्पनाप्रसङ्गादिति भावः । ईक्षणकर्तृत्व-मागमसहायस्यापि नास्तीति किं विशिष्य निषेधनेन्यत आह ।। **उदीक्षयितुमिति** ।। तस्मात् स्वपरपक्षयोः साधकबाधकसद्भावात्कथं शास्त्रादीश्वरसिद्धिरित्येतदुपपादनाय पूर्वभागः ।

## विवृतिः

**अन्यनिष्ठत्वनिरासादिति** ॥ तथाचोक्तलक्षणस्यातिव्याप्तिनिरासाय प्रमाणमुच्यत इत्यनन्तरसङ्गतिरिति भावः । श्रुत्यधिकरणसङ्गती दर्शयति ॥ **जगज्जन्मादीति** ॥ पूर्वपक्षमुपपादयति ॥ **अनुमानेनेति** ॥ ननु रुद्रादीनामनुमानत अकल्पने असिद्धिरेव स्यात् तत्राह ॥ **कारणत्वेनेति** शेष इति ॥ सूत्रार्थमाह ॥ **भवेदित्यादिना** ॥ जगत्कारणत्वस्य शास्त्रैकसमधिगम्यत्वे हेतुत्वेनाभिप्रेतस्यातीन्द्रियस्य शास्त्रैकसमधिगम्यत्वेन व्याप्तिमुपपादयति ॥ **न हि धर्मादीति** ॥ नावेदविदिति श्रुतिं व्याचष्टे ॥ **तं पूर्णमिति** ॥ आत्मानमित्यस्य सर्वकर्तारं सर्वस्वामिनमिति ॥ पुरुष इत्यस्य जगत्कर्तेति व्याख्यानं श्रुत्योः प्रकृतोपयुक्तत्वज्ञापनार्थम् ॥ कर्तृत्वस्यात्मशब्दार्थत्वेन, जगत्कर्तृत्वस्य पुरुषशब्दार्थत्वेन, कर्तृत्वादात्मशब्दोक्तः, जगृहे पौरुषं रूपमादौ लोकसिसृक्षया' इत्यादि प्रमाणसिद्धत्वादिति भावः । नन्वनुमानस्य प्रामाण्यमस्त्येवेति निषेधोऽनुपपन्न इत्याशङ्क्य तदर्थमाह ॥ **स्वातन्त्र्येणेति** ॥ **तादृशं चेति** ॥ स्वातन्त्र्येणादृष्टार्थनिश्चायकमित्यर्थः । श्रुतिसाहाय्यरहितानुमानस्य वह्न्यादौ प्रवृत्तेः कथं कुत्र चिदित्युक्तमित्यत आह ॥ **कुत्रचिददृष्ट इति** ॥ अस्मदाद्यदृष्ट इत्यर्थः । तथा च प्रमाणान्तरं प्रत्यक्षमित्युपपन्नम् । अन्यथैकेनाप्यदृष्टविषयकश्रुतिसहितप्रत्यक्षस्याप्रसिध्या विशिष्य निषेधोऽनर्थकः स्यादिति भावः ॥ **अत्रापि प्रमाणान्तरमिति** ॥ तर्कस्य पृथग्ग्रहणादिति भावः ॥ विपक्ष इति ॥ पूर्वानुमानापेक्षया विपरीतानुमानकरणेत्यर्थः ॥ नन्वनुमानस्याचेतनत्वेनादीक्षणासम्भवात्कथमेतदित्यत आह ॥ **अर्थमुदीक्षयितुमिति** ॥ **केवलानुमानस्येति** ॥ श्रुतिसाहाय्यरहितस्येत्यर्थः ॥ अनिर्णायकत्वात्, स्वातन्त्र्येणादृष्टार्थानिश्चायकत्वात् ॥

## सूत्रभाष्यम्

**'रतौ धातुर्वटकणिका घृतधूमाधिवासनम् ।**
**जातिस्मृतिरयस्कान्तः सूर्यकान्तोऽम्बुभक्षणम् ॥**

**प्रेत्य भूतात्ययश्चैव देवताभ्युपयाचनम् ।**
**मृते कर्मनिवृत्तिश्च प्रमाणमिति निश्चयः ॥'**

**इति मोक्षधर्मवचनाच्च नास्तिक्यवादो युज्यते ।**

**दर्शनाच्च तपआदिफलस्य ।**

## तत्त्वप्रदीपिका

नन्वेवमनुमानस्याप्रामाण्यात्तन्न्यायेनाऽगमस्याप्यप्रामाण्यात्प्रत्यक्षमेव सम्मतं प्रमाणमस्तु । अतो न देहव्यतिरिक्तो जीवोऽस्ति नापि जगत्कर्तेश्वरः, प्रमाणाभावादित्याशङ्क्याऽह । रेतो धातुरित्यादि । रेतः सिक्तं कालाच्छरीरं भवति । न च तस्य शरीरभावः प्रत्यक्षग्राह्यः । वाक्याद्युक्त्या वा ज्ञायते, अतस्तयोः प्रामाण्यम् । न च तद्रेतो मृतशरीरे सिक्तं वर्धते । तस्माद्यदधिष्ठित एव वर्धते स देहव्यतिरिक्तो जीवोऽभ्युपगन्तव्यः । न च जीवच्छरीरेऽपि नियमेन वर्धते । अतो यदिच्छया वर्धते न वर्धते च, स ईश्वरः । धातुर्वातादिरपथ्याद्विपरीयते । न च तयोर्हेतुहेतुमद्भावः प्रत्यक्षः । न च मृतशरीरे विकारो भवति । अपथ्यकरणेऽपि जीवच्छरीरेऽपि कदाचिन्न । वटकणिकाया वटभावो न प्रत्यक्षः । नापि भर्जिता सा प्ररोहति । अभर्जिताऽपि कदाचित्प्ररोहति, कदाचिन्न । घृतोपयोगात्पीनतेति न प्रत्यक्षत्वम् । नापि मृतशरीरनिक्षिप्तेन तेन पीनता भवति । जीवोपयुक्तेऽपि कदाचिन्न भवति । न च वृक्षे धूमाधिवासन-निमित्तता पुष्पफलसम्भवस्य प्रत्यक्षा । न च धूमाधिवासनेऽपि शुष्के पुष्पादिसम्पत्तिः । जीवत्यपि क्वचिद्भवति, क्वचिन्न भवति । अनेन पुण्येनैवं स्वर्गोऽनुभूयते, अनेन पापेनेत्थं नरकमनुभूतमित्यादिज्ञानं जातिस्मृतिमतामस्ति । एतमर्थमागमश्चावगमयति । तस्मादागमप्रामाण्यस्थापिका सा । न च देह-व्यतिरिक्तस्य जीवस्यातीतवर्तमानदेहसम्बन्धमन्तरेण जातिस्मृतिरुत्पद्यते । सा च कस्यचिदेव भवति, न सर्वस्य । न चायस्कान्तस्यायोभ्रामशक्तिः प्रत्यक्षा । न चाजीवतभ्रंशकत्वं दृष्टम् । न चैतादृशी वस्तुशक्तिः सर्वशक्तिमीश्वरमन्तरेण प्रतिनियममर्हति । एवं सूर्यकान्तेऽप्यूहनीयम् । अम्बुभक्षणात्तृष्णानाश इत्येतन्न प्रत्यक्षम् । न च मृतशरीरे पात्रान्तरे वा निहितं तत्पच्यते । जीवच्छरीरेऽपि कदाचिदेव । प्रेतशरीरं भूतान्यप्येति, पूर्वं नाप्येति; यस्मिंस्तिष्ठति नाप्येति, गच्छत्यप्येति, स देहातिरिक्तोऽस्तीति गम्यते । न च तस्य प्रेतस्य देहे भूताप्ययस्स्वाधीनः । आगमविहितं देवताराधनादि कुर्वतस्सा प्रत्यक्षा भवति । तत्प्रसादाद्यथोदितमारोग्यपुत्रवित्तादि भवति । तस्मादागमप्रामाण्यनिश्चयः । सा च वरप्रदानाद्यतिशयवती देवता परलोकसुखादिदानेन देहादन्यं जीवमीश्वरं चावगमयति । ईश्वर एव वा सा स्यात् । मरणनिमित्तत्वं चेष्टानिवृत्तेर्न प्रत्यक्षम् । स च चेष्टावान्न देहः । न च तस्य मरणं स्वाधीनम् । स्वाध्यायब्रह्मचर्यादि-स्तपसस्तेजस्वितादिफलं दृश्यते । तप्तमाषादिदिव्यपरीक्षाणां च तत्त्वविज्ञानादि फलम् । तस्मादागमान्तस्य सर्वस्य सिद्धिः । अतश्च न नास्तिक्यवादो युज्यते ।

## तत्त्वप्रकाशिका

नन्वतीन्द्रियार्थाभावेन प्रत्यक्षेतरस्याप्रामाण्यात्कथं शास्त्रादीश्वरसिद्धिरिति नास्तिकवादं मोक्षधर्मवचनेन निराचष्टे ॥ रेत इति ॥ रेतो धात्वाद्यतीन्द्रियार्थसत्त्वेऽनुमानादिप्रामाण्ये च प्रमाणं प्रमापकमिति निश्चयः ।

(तत्त्वप्रकाशिका)

तथा हि । रेतःशरीरयोः कार्यकारणभावोऽस्ति । न चासौ प्रत्यक्षोऽतोऽन्वयव्यतिरेकित्वाख्यानुमानस्य मानत्वसिद्धिः । मृतशरीरे सिक्तस्याकारणत्वेन यदधिष्ठितं परिणमते तज्जीवसिद्धिः । न च जीवत्सर्वशरीरे पतितं कार्यकरमतस्तत्प्रेरकेश्वरादृष्टसिद्धिः । ततस्तत्प्रतिपादकागमप्रामाण्यसिद्धिः । एवं वातादि-धातुरपथ्याद्विक्रियते नापि मृतशरीरे न जीवच्छरीरेषु सर्वेषु । वटकणिकातो वट उत्पद्यते न च भर्जिताया नाप्यभर्जिताभ्यः सर्वाभ्यः । घृतेन पीनता जायते न मृतशरीरे नापि जीवत्सर्वशरीरेषु । धूमाधिवासनेन वृक्षेषु पुष्पादिसम्पत्तिर्जायते न च शुष्केषु नाप्यशुष्केषु सर्वेषु । साधनविशेषाज्जातिस्मृतिर्भवति न चेतनाभावे सा युक्ता न चास्ति सर्वेषाम् । अयस्कान्तेनायो भ्रमति न चाचेतने चेष्टकत्वं न च सर्वाचेतनानाम् । सूर्यकान्तेनाग्निर्जायते न चासौ शक्तिरचेतने युक्ता । अम्बुभक्षणेन तृष्णा निवर्तते न च तन्मृतशरीरे पच्यते न च जीवत्सर्वशरीरेषु । मरणेन देहस्य भूतेष्वप्ययो भवति न च जीवतो न स्वेच्छया । देवताभ्युप-याचनेन सम्पदादिकं भवति न च सर्वेषाम् । मरणेन चेष्टानिवृत्तिर्भवति न पुनः स्वेच्छया । एतैः प्रमाणैर-रनुमानजीवेश्वरागमादृष्टादिसिद्धेर्न नास्तिक्यवादो युज्यत इत्यर्थः । इतश्चासौ न युज्यत इत्याह ॥ दर्शनाच्चेति ॥ अत्युत्कटतपःपापाभ्यां प्रत्यक्षत एव फलं दृश्यते । न च तत्र कारणान्तरमस्ति । अतस्तत्कार्यकारणभावोऽनुमानगेय इति तन्मानत्वसिद्धिः । तपआदीनां वैदिकत्वादागममानत्वसिद्धिः । ततश्चेश्वरादिसिद्धिरिति न नास्तिक्यवादो युज्यते । तस्माच्छास्त्रादेवेश्वरादिसिद्धिरिति युक्तमेवेति भावः ।

## गुर्वर्थदीपिका

देवताभ्युपयाचनं, मम सम्पदादिकं जायते चेत्तवैतावद्धनं दास्यामीत्याकारेण वेङ्कटपत्यादिदेवतायाः प्रार्थनम् । यद्यपि जन्मान्तरीयदेवताभ्युपयाचने सम्पदादिकं भवतीत्यस्माकमभिमतम् । तथाऽपि प्रत्यक्षैकप्रमाणवादी चार्वाकस्तु नाङ्गीकरोत्यत ईदृशदेवताभ्युपयाचनमेव वक्तव्यम् ।

## भावबोधः

अतीन्द्रियार्थसद्भावे स्मृतिरागम एव च ।
तत्सहाय्यानुमा चैव प्रमाणमिति निश्चयः ॥

रेतःशरीरयोः कार्यकारणत्वं हि विद्यते ।
नाद्यः प्रत्यक्षतो गम्यं प्रमाणमनुमात्र वै ॥

मृते शरीरे सिक्तस्य तथा जीवशरीरके ।
अभावात् कारणत्वस्य सिद्धिर्जीवविशारदेः ॥

(भावबोधः)

तस्मात्तद्वाचकस्यापि आगमस्य प्रमाणता ।
एवं धातोरपथ्यस्य वटपादपजीवयोः ।
जातिस्मृतेरनुष्ठानादयस्कान्ताय सोऽपि तु ॥

सूर्यकान्तस्य वह्नेश्च जलभक्षणतृष्णयोः ।
मृते भूतल्यस्यापि देवतार्चनसम्पदोः ॥

मृते कर्मनिवृत्तिश्चेत्यादेरनुमानादिभिः ।
तपःपापफलस्यापि दर्शनादनुमादिकम् ॥

प्रमाणमेव नास्तिक्यवादोऽतो नैव विद्यते ॥

इति विशेषप्रमाणानुसारेण रेत इत्यादिप्रमाणं व्याचष्टे रेतो । धात्वादीत्यादिना ।

## भावदीपः

शास्त्रपदव्यावर्त्यचोद्ययोरेकं निरस्यान्यं निरसिष्यन्निदानीं योनिपदव्यावर्त्यचोद्यनिरासाय प्रवृत्तं रेत इत्यादिभाष्यम् । तस्य सङ्गत्यप्रतीतेर्भाष्यस्यनास्तिक्यवादपदार्थं वदन्नेव तामाह ॥ नन्वतीन्द्रियेति ॥ एतेन रेतो धातुरित्यादिकमुत्सूत्रमिति कस्यचिच्चोद्यं निरस्तम् । शास्त्रं योनिः प्रमाणमित्युक्त्या तदप्रामाण्यापकृतेः सूचनात् । अनुक्तानां प्रमाणानां सङ्ग्रहश्च कृतो भवेदित्यादिस्मृत्याऽध्यायान्ते द्विरुक्त्या सर्वत्र सूचनाच्च शास्त्रपदव्यावर्त्यचोद्यद्वयनिरासानन्तरम् अस्य योनिपदव्यावर्त्यचोद्यस्य निरस्यत्वेऽप्यत्र तन्निरासस्तु प्रमाणपदवीं गच्छेदित्यनुमानप्रामाण्यप्रस्तावात् । भाष्ये मोक्षधर्मेति । तं प्रत्यस्यानुपयोगेऽपि शिष्यं प्रत्युपयोगादेतदुक्तिरिति भावः । भाष्येऽन्तिमं प्रमाणपदं करणसाधनं सत् रेतःप्रभृतिषु द्वादशस्वन्वेतीति कुत्र प्रमाणमित्याकाङ्क्षां पूरयन् योजयति ॥ रेतो धात्वादीति ॥ वचनादित्यस्य नास्तिक्यवादायोगे हेतुत्वायोगादाह ॥ एतैरिति ॥ वचनात्प्रतीतैरित्यर्थः ।

## अभिनवचन्द्रिका

नन्वतीन्द्रियार्थाभावेनेति ॥ प्रमाणाभावेन अतीन्द्रियार्थाभावात् प्रत्यक्षेतरयोरनुमानाऽऽगमयोर-प्रामाण्यम् । एवं च सति कथं शास्त्रादीश्वरसिद्धिः स्यात् । अप्रमाणस्यार्थव्यवस्थापकत्वाभावात् । न चाऽनुमानाऽऽगमाभ्यामेवाऽतीन्द्रियार्थसिद्धेः अतीन्द्रियार्थाभावरूपो हेतुरसिद्ध इति वाच्यम् ।

([illegible])

अनुमानाऽऽगमयोः प्रामाण्यसिद्धौ अतीन्द्रियार्थसिद्धिः । अतीन्द्रियार्थसिद्धौ च अप्रामाण्यसाधकासिद्ध्या तयोः प्रामाण्यसिद्धिरिति अन्योन्याश्रयादिति नास्तिकमतावलंबिनः शिष्यस्य पूर्वपक्षं मोक्षधर्मवचनेन निराचष्ट इत्यर्थः । एतेनाऽऽगमाप्रामाण्यवादिनं प्रति मोक्षधर्मवचनोदाहरणमयुक्तमिति परास्तम् । नास्तिकमतावलम्बिनं शिष्यं प्रत्येवोपन्यस्तत्वात् । नन्वनुमानागमयोरप्रामाण्यमिति पूर्वपक्षोऽनुपपन्नः । धूमाद्यनुमानस्य, आप्तवाक्यस्य च प्रामाण्यस्यावर्जनीयत्वात् । न हि समानविषययोः प्रत्यक्षानुमानयोः प्रत्यक्षागमयोश्च मध्ये प्रत्यक्षं प्रमाणं नानुमानं नाप्यागम इति सम्भवति । वस्तुनः सत्त्वमसत्त्वं चेति द्वैरूप्यापातात् । विषयस्य सत्त्वमन्तरा प्रामाण्यस्य विषयासत्त्वमन्तरा प्रामाण्यस्य चायोगात् इति चेत् । स्यादयं दोषः यदि परः अनुमानमात्रस्याऽऽगममात्रस्य च असदर्थावगाहित्वलक्षणमप्रामाण्यं ब्रूयात् । न चैवं, किंनाम कतिपययोरनुमानाऽऽगमयोः बाधितार्थकत्वलक्षणमप्रामाण्यं ब्रूते ततश्चाऽनाश्वासादनुमानमात्रस्य च अर्थाव्यवस्थापकत्वलक्षणमप्रामाण्यं ब्रूते । लोके अनुमानाद्युपन्यासस्तु परस्य सम्भवेनोत्पत्त्यर्थमेव न तु अर्थव्यवस्थापनार्थमिति ब्रवीति । अत एव धूमेन वह्न्यनुमितौ साशङ्क एव प्रवर्तते । दर्शनोत्तरकाले तु अर्थव्यवस्थासिद्धौ शङ्का निवर्तते । अत एव पर्वतोऽग्निमानिति वदन्तं प्रति पृच्छन्ति किमेवं पश्यसि उत एवमेव वदसीति स यदि पश्यमीत्याह तदा विश्वस्ता भवन्ति । यदाऽनुमाय वदामि, श्रुत्वा वदामीत्याह तदा न विश्वस्ता भवन्ति । अत एव प्रत्यक्षेतरा-प्रामाण्यसाधनाय परस्यातीन्द्रियार्थाभावादिति हेतोरुपन्यासो न युक्त इति शङ्का परास्ता । अर्थव्यवस्थापनार्थं हेतोरनुपादेयत्वेऽपि सम्भवनार्थमुपादेयत्वात् । रेतोधात्वादीति ।। रेतोधात्वाद्यैन्द्रियकं अतीन्द्रियार्थमन्तरा अनुपपद्यमानमतीन्द्रियार्थस्यानुमानादिप्रामाण्यस्य च व्यवस्थापकं भवति । अन्यथा प्रत्यक्षप्रमितो धूमो वह्निमपि न व्यवस्थापयेत् । अतीन्द्रियत्वाविशेषात् । न चेष्टापत्तिः । धूमदर्शनानन्तरं वह्न्यर्थिनो निष्कम्पप्रवृत्त्यभावापातात् । न चेष्टापत्तिः । अनुभवविरोधात् । ननु प्रत्यक्षप्रमितोऽपि धूमः, यावता विना नोपपद्यते तत्सर्वं व्यवस्थापयतीति चेत्, मोचैवोचः । परोऽपि श्रोष्यति । यावता अस्माभिरपि प्रत्यक्षप्रमितं रेतोधात्वादि यावता विना नोपपद्यते तत्सर्वमैन्द्रियिकमतीन्द्रियं वा व्यवस्थापयतीति वक्तुं शक्यत इति भावः ।

रेतःशरीरयोरिति ।। त्वन्मत इति शेषः । अन्यथा अपत्योत्पत्तिमुद्दिश्य रेतःसेकादौ प्रवृत्तिर्न स्यादिति भावः । अस्तु रेतःशरीरयोः कार्यकारणभावः तथापि अनुमानस्य मानत्वं कुतोऽभ्युपेयमित्यत आह- न चासाविति ।। निर्मानस्य वस्तुनः सत्त्वायोगेन त्वदभ्युपगतरेतःशरीरयोः कार्यकारण-

(अभिनवचन्द्रिका)

भावसत्त्वनिर्वाहाय किञ्चिन्मानमभ्युपेयम् । न तत्र प्रत्यक्षं सम्भवतीति प्रत्यक्षेतरस्य मानत्वसिद्धिरिति भावः । **जीवसिद्धिरिति** ।। यद्यपि स्वात्मा प्रत्यक्षसिद्धः तथापि परात्मनोऽतीन्द्रियत्वात् तत्सिद्धिरनुमानेनोक्ता । एवं वातादिधातूनामपथ्येन विक्रिया भवतीत्याद्यर्थानां परस्याभिमतत्वात् तेषामतीन्द्रियार्थसिद्धये लिङ्गत्वेनोपन्यासो नानुपपन्न इति द्रष्टव्यम् । **अत्युत्कटतपःपापाभ्यामिति** ।। अत्युत्कटतपःपापाभ्यामनुष्ठिताभ्यां फलं तावत्प्रत्यक्षेण दृश्यते । वस्तुतः साध्यसाधनयोः प्रत्यक्षेण दर्शनानन्तरं तयोः कार्यकारणभावज्ञानं जायत इति प्रत्यक्षसिद्धमिति भावः । **न च तत्रेति** ।। प्रत्यक्षसिद्धे तत्कार्यकारणज्ञाने कारणान्तरं प्रत्यक्षमनुमानं वा न चाऽस्तीत्यर्थः । इतःपरं टीकायां श्रूयमाणं 'अतः तत्कार्यकारणभावो अनुमानवेद्य इति तन्मानत्वसिद्धि'रिति वाक्यं प्रक्षिप्तम् । अवश्यं चैतदेवं विज्ञेयम् । तप आदीनां वैदिकत्वादित्युत्तरग्रन्थविरोधात् । तप आदीनां स्वफलं प्रति कारणभावस्य आगमवेद्यत्वाभिधानात् । कुत तप आदीनां कार्यकारणभावज्ञाने प्रत्यक्षादेर्न कारणत्वमित्यत आह– **तप आदीनामिति** ।। परिशेषफलमाह– **ततश्च आगममानत्वसिद्धिरिति** ।। क्वचितु 'आगममानत्वसिद्धि'रित्येव पाठः । तस्मिन् पाठे 'ततश्चे'ति शेषो द्रष्टव्यः । आगममानत्वसिद्धिफलमाह– **ततश्चेति** ।।

## वाक्यार्थमुक्तावली

शास्त्रपदव्यवर्त्यचोद्ययोरेकं निरस्यान्यं निरसिष्यन्निदानीं योनिपदव्यावर्त्यचोद्यनिरासाय प्रवृत्तं रेत इत्यादिभाष्यम् । तस्य सङ्गत्यप्रतीतेर्नास्तिक्यवादशब्दार्थं वदन्नवतारयति । **नन्वतीन्द्रियेति** । एतेनैतदुत्सूत्रमिति कस्यचिच्चोद्यं निरस्तम् । शास्त्रं योनिः प्रमाणमित्युक्त्या तदप्रामाण्यनिराकृतेः सूचनात् । न च शास्त्रपदव्यावर्त्यचोद्यद्वयं निरस्यानन्तरमेतच्चोद्यं निरस्यतामिति वाच्यम् । प्रमाणपदवीं गच्छेदित्यनुमानप्रामाण्यप्रस्तावे तन्निरास इति भावः । **भाष्ये मोक्षधर्मेति** । चार्वाकं प्रत्यनुपयोगेऽपि शिष्यं प्रति तस्याभासत्वमुच्यत इति बोध्यम् । **अन्वयव्यतिरेकित्वाख्येति** । शरीरं रेतःकारणकं तदन्वयव्यतिरेकानुविधायित्वादित्यस्येत्यर्थः । **जीवसिद्धिरिति** । परिणम्यमानं रेतः अधिष्ठातृपूर्वकं परिणम्यमानरेतस्त्वात् व्यतिरेकेण मृतशरीरे सिक्तरेतोवदित्यनुमानेनेत्यर्थः **ईश्वरादृष्टसिद्धिरिति** । वन्ध्यादौ सिक्तं रेतः दृष्टसामग्र्यतिरिक्तसामग्रीविरहप्रयुक्तकार्याभाववत् दृष्टसामग्रीसमवधानेऽपि कार्यशून्यत्वात् व्यतिरेकेण वन्ध्याशरीरे सिक्तरेतोवदित्यनुमानेनेति भावः ।

**अत इति** । सामान्यतोऽदृष्टसिद्धावपि अदृष्टविशेषस्येश्वरत्वप्रकारकेश्वरबोधस्य चागमं विनाऽयोगादिति

(वाक्यार्थमुक्तावली)

भावः । अपथ्याद्धिक्रियत इत्यादावन्वयव्यतिरेकित्वस्यानुमानत्वसिद्धिरित्यनुवर्तनीयम् । नापि मृतशरीर इत्यादौ कार्यकरणमतस्तदधिष्ठातृजीवसिद्धिरित्युपस्कार्यम् । न सर्वशरीर इत्यादौ कार्यकरणमतस्तत्प्रेरकेश्वरादिसिद्धिरित्युपस्कार्यम् । साधनविशेषाज्जातिस्मृतिरिति । साधनविशेषादित्यनेनान्वयतिरेकित्वस्यानुमानत्वमुक्तमिति ज्ञेयम् । सर्वेषामपि पूर्वजन्मस्मृत्यभावाच्च साधनविशेषादित्युक्तम् । यद्यपि जातमात्रमृगादीनां स्तन्यपानादिप्रवृत्तौ पूर्वस्मृतिरावश्यकी तथापि जातिस्मृत्यभावात्तदर्थं साधनमपेक्षितमेवेति भावः । न चेतनाभाव इति ।। स्मृतेरनुभवजन्यत्वेनानुभवितृत्वेनानेकशरीरानुगतचेतनस्याङ्गीकार्यत्वादिति भावः । न चास्ति सर्वेषामिति । साधनवतामपीति शेषः । तेन साधनाभावादेवाभावोपपत्तौ नेश्वरापेक्षेति निरस्तम् । न चाचेतने चेष्टकत्वमतश्चेतनसन्निधानमङ्गीकार्यमिति भावः । न च सर्वाचेतनानामिति । चेतनसन्निधानवतामपि सर्वाचेतनानां कार्यकरत्वं न दृष्टमिति भावः । न च चेतनविशेषसन्निध्यभावात्कार्याभाव इति वाच्यम् । तदर्थमपीश्वरस्याङ्गीकार्यत्वादिति । न चासौ शक्तिरचेतने युक्तेति । न च मृदा घटजनिवत्किं न स्यादिति वाच्यम् । मृद एव घटात्मना परिणामवत्सूर्यकान्तस्यापरिणामात् । सन्निधानमात्रेणान्यत्राग्निजननस्य तदधिष्ठितचेतनव्यापारमन्तरेणायोगात् । बिम्बप्रतिबिम्बभावस्य चाभावादिति भावः ।

## तत्त्वसुबोधिनी

रेत इत्यादिप्रमाणं व्याचष्टे । रेतो धात्वादीति । वातादिधातुरपथ्याद्धिक्रियत इत्यादौ जन्यजनकभावादिकं यथासम्भवमूहनीयम् । देवताभ्युपयाचनमिति । मम सम्पदादिकं जायते चेत् तवैतावद्धनं दास्यामीत्याद्याकारेण क्षेत्रपत्यादिदेवतायाः प्रार्थनम् । यद्यपि जन्मान्तरीयदेवताभ्युपयाचनेन सम्पदादिकं भवत्येव तथापि प्रत्यक्षैकप्रमाणवादी चार्वाकः तन्नाङ्गीकरोतीति तादृशदेवताभ्युपयाचनमेव ग्राह्यमिति भावः ।

## वाक्यार्थमञ्जरी

ईश्वरपरलोकादिकमेव नास्ति शास्त्रादिकमपि प्रमाणभूतं नास्तीति अनेनैव नास्तिक्यवाद इत्येतद्विवृतम् ।। कार्यकारणभावोऽस्तीति ।। अन्यथा अपत्योत्पादनाय रेतःसेकादौ प्रवृत्त्यनुपपत्तिरिति भावः ।। न चासाविति ।। तस्य कल्पनादिघटितत्वादिति भावः ।। अन्वयव्यतिरेकित्वात्स्येति ।। शरीरं रेतोजन्यं तदन्वयव्यतिरेकानुविधायित्वात् [illegible] इत्यनुमानेनेत्यर्थः । यदधिष्ठिते येनाधिष्ठिते । परिणमते शरीरात्मना । वातादिधातुरित्यादौ न चासौ प्रत्यक्ष इत्यादि यथासम्भवमनुसृत्य कार्यकारणभाव-

(वाक्यार्थमञ्जरी)

साधकानुमानप्रामाण्यजीवेश्वरादृष्टागमप्रामाण्यसिद्धिर्व्याख्येया । कणिका बीजम् । अयस्कान्तेन सूचीपाषाणेन ।। **न चाचेतने चेष्टकत्वमिति** ।। अतस्तत्रेश्वरोऽङ्गीकार्य इति भावः ।। एवमेव न चासाविति वाक्यं योज्यम् । **पच्यत इति** । पचनानन्तरमेव तृष्णानिवृत्तिरिति भावः ।। **नापि जीववत्सर्वशरीरेति** ।। व्याधिविशेषविशिष्टानां तथा दर्शनादिति भावः । भूतेषु पृथिव्यादिषु । वचनादित्यस्य नास्तिक्यवादायोगे हेतुत्वायोगादाह ।। **एतैरिति** ।।

## विवृतिः

रेत इत्यादिप्रमाणं व्याचष्टे ।। **रेतो धात्वादीति** ।। वातादि धातुरपथ्याद्विक्रियत इत्यादौ जन्यजनकभावादिकं यथासम्भवमूहनीयम् ।

## सूत्रभाष्यम्

**ऋग्यजुःसामाथर्वाश्च भारतं पञ्चरात्रकम् ।**
**मूलरामायणं चैव शास्त्रमित्यभिधीयते ।।**

**यच्चानुकूलमेतस्य तच्च शास्त्रं प्रकीर्तितम् ।**
**अतोऽन्यो ग्रन्थविस्तारो नैव शास्त्रं कुवर्त्म तत् ।। इति स्कान्दे ।।**

**सांख्यं योगः पाशुपतं वेदारण्यकमेव च ।**

**इत्यारभ्य वेदपञ्चरात्रयोरैक्याभिप्रायेण पञ्चरात्रस्यैव प्रामाण्यमुक्त्वमितरेषां भिन्नमतत्वं प्रदर्श्य मोक्षधर्मेष्वपि । शास्त्रं योनिः प्रमाणमस्येति शास्त्रयोनि ।। ३ ।।**

## तत्त्वप्रदीपिका

अनुकूलं पुराणादि ।

सांख्यं योगः पाशुपतं वेदारण्यकमेव च ।
ज्ञानान्येतानि भिन्नानि उताऽहो नेति चोच्यताम् ।।

सांख्यं योगः पाशुपतं वेदारण्यकमेव च ।
ज्ञानान्येतानि भिन्नानि नात्र कार्या विचारणा ।।

(तत्त्वप्रदीपः)

साङ्ख्यस्य वक्ता कपिलः परमर्षिस्स उच्यते ।
प्राचीनगर्भं तमृषिं प्रवदन्तीह केचन ।
हिरण्यगर्भो योगस्य वक्ता चैव चतुर्मुखः ॥

उमापतिर्भूतपतिः श्रीकण्ठो ब्रह्मणस्सुतः ।
उक्तवानिदमव्यग्रं ज्ञानं पाशुपतं शिवः ॥

पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणस्स्वयम् ।
ज्ञानेष्वेतेषु राजेन्द्र सर्वेष्वेतद्विशिष्यते ॥

ज्ञानेष्वेतेषु सर्वेषु सांख्यपाशुपतादिषु ।
यथायोगं यथान्यायं निष्ठा नारायणः परः ॥

ससंशयास्ते सर्वेऽपि पञ्चरात्रमसंशयम् ।
निस्संशयेषु सर्वेषु नित्यं वसति केशवः ॥

ससंशयान्हेतुबलान्नाध्यावसति माधवः ।
पञ्चरात्रविदो ये तु यथाक्रमपरा नृप ॥
एकान्तभावोपगता वासुदेवं विशन्ति ते''

इति । ज्ञापयन्तीति 'ज्ञानानि' । ''परमर्षिस्स उच्यते'' न तु परमब्रह्मर्षिः परमज्ञानी । प्राचीना ब्रह्मादयो यस्य गर्भास्स 'प्राचीनगर्भः', तं प्राचीनगर्भं केचिज्ज्ञा वदन्ति ।

कपिलो वासुदेवाख्यस्तन्त्रं सांख्यं जगाद ह ।
ब्रह्मादिभ्यश्च देवेभ्यो मन्वादिभ्यस्तथैव च ॥

तथैवासुरये सर्ववेदार्थैरुपबृंहितम् ।
सर्ववेदविरुद्धं च कपिलोऽन्यो जगाद ह ॥
साङ्ख्यमासुरयेऽन्यस्मै कुतर्कपरिबृंहितमि''ति पाद्मे ।

यद्यपि मिथ्यावचनं व्यामोहहेतुरिति । तथाऽपि परमाज्ञया मोहनार्थम् ''अव्यक्तमुक्तवान्'' । साङ्ख्य-पाशुपतयोः योगे विशिष्य ज्ञानमुच्यते । अनुयोगस्तूक्तम् । न च तत्र विष्णोरुत्तमत्वनिषेधः । 'यथा-योगं' सर्वशब्दानां ब्रह्मणि वृत्त्या । 'यथान्यायं' यथा विष्णौ तात्पर्योपपत्तिः । 'निस्संशयेषु' यथा-निश्चितार्थेषु । 'हेतुबलान्' हेतुसामर्थ्यात् । 'यथाक्रमपराः' यथोक्तभेदतारतम्यक्रमपराः । पञ्चरात्रस्य

(तत्त्वप्रदीपिका)

साक्षाद्वेदारण्यकैकार्थतास्पष्टीकरणाय वेदारण्यकस्थाने पञ्चरात्रस्य प्रामाण्यमुक्तम् । मोक्षधर्मेष्विति बहुवचनं धर्मभेदात् ।

**शास्त्रं योनिः प्रमाणमस्येति** । अस्य विष्णोः शास्त्रं योनिः ज्ञप्तिकारणं प्रमाणमित्यर्थः ।। इति शास्त्रयोनित्वाधिकरणम् ।

## तत्त्वप्रकाशिका

नन्वेवमनुमानस्यानिश्चायकत्वेन शास्त्रादेव कारणत्वसिद्धिश्चेत्तर्हि पाशुपतादिशास्त्रेण रुद्रादेः कारणत्वं स्यादित्यत आह ।। **ऋगिति** ।। इतश्च पाशुपतादिकं कुवर्त्मेत्याह ।। **साङ्ख्यमिति** ।। 'पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम्' । 'ज्ञानेष्वेतेषु राजेन्द्र सर्वेष्वेतद्विशिष्यत' इति मोक्षधर्मेष्वपि साङ्ख्यादिषु प्रकृतेषु पञ्चरात्रस्यैव प्रामाण्यमुक्तम् । अतः पाशुपतादिकममानमेवेत्यर्थः । अनेन पञ्चरात्रप्रामाण्यमेव भवेन्नान्याप्रामाण्यमित्यत आह ।। **इतरेषामिति** ।। साङ्ख्यं योगः पाशुपतं वेदारण्यकमेव च । ज्ञानान्येतानि भिन्नानि नात्र कार्या विचारणेति परस्परविरुद्धतयोक्तानामेकप्रामाण्योक्तावन्याप्रामाण्यं लभ्यत इति भावः । तर्हि वेदारण्यकस्याप्यप्रामाण्यं स्यादित्यत आह ।। **वेदेति** ।। पञ्चरात्रस्य वेदार्थत्वेन तत्प्रामाण्योक्तौ वेदप्रामाण्यमेवोक्तं भवति । ऐक्याभिप्रायाभावे पञ्चरात्राधिक्यकथनमसङ्गतं स्यादिति भावः । वेदस्यैव प्रामाण्यं किं नोच्यते पञ्चरात्रप्रामाण्यसिद्ध्यर्थम् । पञ्चरात्रप्रामाण्योक्तौ तु वाक्यार्थान्यथाऽनुपपत्त्या वेदप्रामाण्योहसम्भवादिति । धर्मबहुत्वाद्बहुवचनम् । तस्मात्कारणस्य वेदादिशास्त्रैकसमधिगम्यत्वान्नानुमानेनान्यकारणत्वं शङ्क्यमिति न जिज्ञास्यस्य विष्णुत्वनिश्चयायोग इति ।

सूत्रं व्याख्यायाऽथ यत्परेणोक्तं शास्त्रस्य योनिरिति तदयुक्तमिति भावेनाह ।। **शास्त्रमिति** ।। शास्त्रं योनिर्ज्ञप्तिकारणं प्रमाणमित्येव शास्त्रयोनि न शास्त्रस्य योनिरिति भावः । समासप्राबल्यात्कुतो नासावर्थ इति चेद्वेदादिकर्तृत्वकथनस्योक्तानुपयुक्तत्वात् । न हि जन्मादिकर्तृत्वे शास्त्रयोनित्वं हेतुः । वैपरीत्यस्यैवोचितत्वात् । जगत्कारणत्वोक्त्याऽर्थलब्धं सार्वज्ञमेव शास्त्रयोनित्वोक्त्या स्फोरयतीति चेन्न । तत्रार्थलब्धशक्त्याद्यस्फुटीकृत्य सार्वज्ञमात्रस्फुटीकरणे विशेषकारणाभावात् । अनन्तजगन्निर्माणोक्त्याऽस्फुटीभूतं सार्वज्ञं तदेकदेशनिर्माणोक्त्या कथमाविर्भवेत् । किञ्चेदं शास्त्रस्येश्वरनिर्मितत्वमर्थमुपलभ्य रचितत्वं वा निःसृतत्वमात्रं वा । नाद्यः । कणादचरणानुसरणप्रसङ्गात् श्रुत्यादिविरोधाच्च । न द्वितीयः । शास्त्रयोनित्वस्य सार्वज्ञसाधकत्वाभावप्रसङ्गात् । अतोऽर्थान्तरमुक्तानुपयुक्तयमुक्तं चेति उक्त एव सूत्रार्थ इति ।।अ.३।।

## गुर्वर्थदीपिका

गोषु कृष्णा गौः सम्पन्नक्षीरतमेत्यादौ प्रशंस्यमानगवादीनां निर्धारणसप्तम्यन्तपदवाच्यत्वेन प्राग्गप

(पूर्वानुवृत्तिः)

प्रस्तावनावश्यम्भावबदेतेषु सर्वेषु प्रागुक्तसांख्ययोगपाशुपतवेदारण्यकेषु ज्ञानेषु ज्ञायते एभ्य इति व्युत्पत्त्या ज्ञानसाधनशास्त्रेषु, एतत्पञ्चरात्राख्यं शास्त्रं विशिष्यत इत्युक्ते विशेष्यमाणपञ्चरात्रस्यापि प्रागुक्तनिर्धारण-सप्तम्यन्तपदार्थभूतशास्त्रेष्वपि प्रस्तावोऽवश्यं वाच्यः । अन्यथा वाक्यस्यासङ्गतिः स्यात् । स च पञ्चरात्रविरुद्धार्थकसांख्यादित्रिके एकार्थत्वरूपमैक्यमादायाप्यसम्भवात्समानार्थकवेदारण्यकेनैव वाच्य इति भावेनोक्तं "वेदपञ्चरात्रयोरैक्याभिप्रायेणे"ति । एवं च पञ्चरात्रस्यैव प्रामाण्यकथनेऽप्यर्थाद्वेदारण्यकस्यापि प्रामाण्यमुक्तं स्यादेव । अत उभयोरप्यैक्योक्त्या प्रामाण्यप्रस्तावनाय प्राग्वेदारण्यकस्य मुखतः कथनम् । अत्र तु पञ्चरात्रस्यैव । यद्यपि साक्षान्निर्धारणायां विशिष्टोक्तवेदारण्यकस्यैव प्रशंसायामप्यर्थैक्यात् पञ्चरात्र-स्यापि प्रामाण्यं लभ्यते । तथाऽप्यागमात्मकतया प्रसिद्धसच्छास्त्रपरिगणनाय प्रवृत्तव्यासवाक्ये न्यूनता स्यात् । स्वमूलरूपेण वेदसमानतया सर्गादावुपदिष्टपञ्चरात्रासङ्ग्रहः सर्वथाऽनुचितश्च स्यात् । अत उभयोरपि स्ववाक्येनैव सङ्ग्रहार्थमित्यमुक्तिः । प्राग्वेदारण्यकपदेनोपनिषदामेव ग्रहणे संहितारूप-बहुतरवेदस्यासङ्ग्रहप्रसङ्गेन पुनर्न्यूनतैव स्यात् । अतोऽजहत्स्वार्थलक्षणया वेदमात्रबोधकं तदिति सूचनाय "वेदपञ्चरात्रयो"रित्याह भगवान्भाष्यकारः । अनयैव दिशा पञ्चरात्रपदमपि सकलपौरुषेयसदागमोप-लक्षणम् । सांख्यादिपदं च सकलदुरागमोपलक्षणमिति सूचितम् । "इतरेषां भिन्नमतत्वं प्रदर्श्य"त्यु-पलक्षणम् । प्रमाणीभूतपञ्चरात्रविरुद्धत्वेनाप्रामाण्यं च प्रदर्श्येत्यपि द्रष्टव्यम् । अतः श्लोकद्वयेनैव दूष्यसकलदुरागमानां पोष्यसकलसदागमानां दूषणपोषणप्रकारस्य च सङ्ग्रह इति महत्कौशलं व्यास-वाक्यस्येत्यभिसन्धिर्भाष्यकारस्य । "ज्ञानान्येतानि भिन्नानी"त्यत्र वेदारण्यकस्य प्रमाणशास्त्रत्वा-त्सांख्यादित्रिकाभिन्नमता तेषां च प्रकृतेरेव मोक्षदायकत्वं, वायुनिरोधस्यैव मोक्षदायकत्वं, पशुपतेरेव मोक्षदायकत्वमित्यादिरूपेण परस्परं विरोधो ज्ञेयः । यद्यपि प्रमितिकारणमित्युक्तेऽपि योनिशब्दार्थस्यैव विवरणं ज्ञायते । तथाऽपि सामान्यतोऽपीश्वरज्ञानं वेदं विना न भवतीति सूचनाय योनिर्ज्ञप्तिकारण-मित्युक्तम् । तावत्येवोक्तेऽपि शास्त्रपदपर्यालोचनया प्रमितिकारणतैवाऽऽयास्यतीति भावेनोक्तं प्रमाणमिति । इदं च शास्त्रं योनिः प्रमाणमस्येति बहुव्रीहिः फलितार्थकथनमिति ज्ञातव्यम् ।

## भावबोधः

असङ्गतं स्यादिति । 'साङ्ख्यं योगः पाशुपतम्' इत्येतद्वाक्यात् पूर्वं 'सांख्यं योगः पाशुपतम्' इत्यादिरूपेणैव वाक्येन सांख्यादीनां परस्परविरुद्धज्ञानजनकत्वं नैकविषयज्ञानजनकत्वं वा । विरुद्धज्ञानजनकत्वेऽपि सर्वाण्यप्रमाणान्युतैकं प्रमाणम् । तदेकमपि किमिति प्रश्ने सर्वाण्यप्रमाणानीति

(भाववोधः)

वा वक्तव्यम् । अथ वा, उक्तानां मध्य एव एकं प्रामाणमिति वक्तव्यम् । पञ्चरात्रप्रामाण्यकथन-मसङ्गतमिति भावः । यदि वेदपञ्चरात्रयोरैक्याभिप्रायेण वेदप्रामाण्यसिद्ध्यर्थं पञ्चरात्रप्रामाण्योक्तिस्तर्हि वेदस्यैव प्रामाण्यं पञ्चरात्रप्रामाण्यसिद्ध्यर्थं किं नोच्यते । वेदस्य प्रागुक्तत्वेनासङ्गत्यभावादिति शङ्के- **वेदस्यैवेति** । यद्वा वेदस्यैव प्रामाण्यं किं नोच्यत इति प्रश्ने उत्तरमाह- **पञ्चरात्रप्रामाण्यसिद्ध्यर्थमिति** । वेदप्रामाण्योक्तौ न पञ्चरात्रप्रामाण्यसिद्धिः । पञ्चरात्रप्रसक्तेरेवाभावात् । अतः पञ्चरात्रप्रामाण्यसिद्ध्यर्थं पञ्चरात्रप्रामाण्यमुच्यत इत्यर्थः । एवं तर्हि वेदप्रामाण्यासिद्धिः स्यादित्यत आह **पञ्चरात्रप्रामाण्योक्ताविति** । **वाक्यार्थान्यथानुपपत्त्येति** । 'ज्ञानेष्वेतेषु' इत्यत्रैतच्छब्देन पूर्वोक्तसाङ्ख्यादिपरामर्शः । निर्धारणे सप्तमी । तथा च पञ्चरात्रस्य वेदारण्यकैक्याभिप्रायाभावे 'ज्ञानेष्वेतेषु' इत्यत्र एतच्छब्देनोक्तं पञ्चरात्रं विशिष्यत इति वाक्यार्थो नोपपद्यते । तस्य प्रागनुक्तत्वात् । निर्धारणस्थले तदर्थकसप्तम्यन्तपदवाच्यार्थमध्य एव कस्यचिदतिशयितत्वेन वक्तव्यत्वात् । 'गवां गोषु वा' इत्यादौ तथा दर्शनादिति भावः । शास्त्रं योनिरस्येत्येवोक्तौ ब्रह्मणो वेदजातत्वं प्रतीयते । तन्निवृत्त्यर्थं भाष्ये प्रमाणमित्युक्तमित्यभिप्रायेण तद्व्याचष्टे- **ज्ञप्तिकारणमिति** । 'जन्माद्यस्य' इत्युक्तार्थे प्रमाणस्यैवाकाङ्क्षितत्वात् । अन्यथा प्रकृतानुपयुक्तत्वेनासङ्गतत्वं स्यादिति भावः । अत एव गीताभाष्ये जन्माद्यस्येत्युक्ते प्रमाणं हि तत्रापेक्षते । न तु तस्य जातत्वमित्युक्तम् । **समासप्राबल्यादिति** ।। अन्यपदार्थप्रधानबहुव्रीह्यपेक्षया उत्तरपदार्थप्रधानतत्पुरुषस्य अन्तरङ्गत्वेन प्राबल्यादित्यर्थः । **समासप्राबल्यादित्यर्थः** । 'न तु वेदकारणत्वम्' इति गीताभाष्यं मनसि निधायाऽऽह- **वेदादिकर्तृत्वकथनस्येति** । न हि वेदकारणत्वं जगत्कारणत्वे हेतुरिति गीताभाष्यं मनसि निधायाह- **न हीति** । न हि विचित्रजगत्स्रष्टुर्वेदसृष्टिरशक्या सृज्यत्व इति गीताभाष्यं मनसि निधायाह- **वैपरीत्यस्यैवेति** । सहस्रवत्त्वेन शतवत्त्वसाधनं, न तु शतवत्त्वेन सहस्रवत्त्वसाधनमिति भावः । न च सर्वज्ञत्व इति गीताभाष्यं मनसि निधायाह- **जगत्कारणत्वेति** । यदि वेदस्रष्टा सर्वज्ञः किमिति न जगत्स्रष्टा सर्वज्ञ इति गीताभाष्याभिप्रायमाह- **अनन्तजगन्निर्माणेति** ।।

## भावदीपः

सौत्रशास्त्रपदव्यावर्त्यपाशुपताद्यागममूलकबाधनिरासाय प्रवृत्तं ऋग्यजुरित्यादिभाष्यम् । तस्य तथात्वाप्रतीतेराह ।। **नन्वेवमिति** ।। **रुद्रादेरिति** ।। शैवस्कान्दगाणपत्यहैरण्यगर्भप्रभृतीनां प्रत्येकं तत्तदागमेन तस्य तस्य जगत्कर्तृत्वप्रत्यवस्थानं ध्येयम् । तथा च पाशुपतादिना रुद्रादेः कर्तृत्वे

(भावदीपः)

प्रागुदाहृतश्रुतीनामागमविरोधेन विष्ण्वेककर्तृत्वे प्रामाण्यायोगेन ताभिस्तस्य कर्तृत्वमात्रं सिध्यतीति द्वयोरपि मानत्वेन कालादिभेदेन द्वयोरपि कर्तृत्वमविरुद्धमिति प्रागुक्तदिशा कतिपयकर्तृत्वरूपलक्षणस्यातिव्याप्तिरिति भावः । एतेनैतल्लक्षणं रुद्रादौ समं मया पाशुपतादिरूपमानेन सहितं पाशुपतादिशास्त्रसिद्धं तथा च समं रुद्रादिसाधारणमिति न्यायविवरणयोजनं सूचिता ॥ इत्यत आहेति ॥ स्मृतौ ऋगादितदनुकूल-पुराणादिपौरुषेयग्रन्थस्यैव शास्त्रत्वेन शास्त्रैकसमधिगम्यत्वात्कारणस्य विष्णुर्जगत्कर्तेति सूत्रकृदुक्त्याऽऽगमे-नान्यस्य कर्तृत्वकल्पनं बाधितार्थमित्युक्तं भवति ॥ इतश्चेति ॥ एतेन भाष्ये मोक्षधर्मेष्वपीत्यपिशब्दः प्रागुक्तस्कान्दस्मृतिसमुच्चायक इति दर्शितम् । पूर्ववाक्ये विशिष्य पाशुपतादेरनुक्तेरस्याप्युक्तिः । सौत्रशास्त्रशब्दितमेतदिति दर्शयितुं साक्षादन्यस्य कुवर्त्मत्वलाभाय च प्राचीनस्याप्युक्तिरिति भावः । ज्ञानेषु ज्ञानसाधनेषु ॥ वेदारण्यकमिति ॥ वेदाश्चारण्यकानि च तत्समाहारो वेदारण्यकम् । आरण्यक-पदेनारण्येऽधीयमानवेदभाग उच्यते । कुल्माण्डवदयं निर्देशः । उक्तं च छान्दोग्यभाष्ये तृतीये आरण्यकमावर्तयेदित्यादि ॥ प्रकृतेष्विति ॥ एवं हि तत्र क्रमः । जनमेजयः ।

> साङ्ख्यं योगः पाशुपतं वेदारण्यकमेव च ।
> ज्ञानान्येतानि भिन्नानि उताहो नेति चोच्यताम् ॥

वैशम्पायनः ।

> साङ्ख्यं योगः पाशुपतं वेदारण्यकमेव च ।
> ज्ञानान्येतानि भिन्नानि नात्र कार्या विचारणा ॥
>
> साङ्ख्यस्य वक्ता कपिलः परमर्षिस्स उच्यते ।
> प्राचीनगर्भं तमृषिं प्रवदन्तीह केचन ॥
>
> हिरण्यगर्भो योगस्य वक्ता चैव चतुर्मुखः ।
> उमापतिर्भूतपतिः श्रीकण्ठो ब्रह्मणः सुतः ॥
>
> उक्तवानिदमव्यग्रो ज्ञानं पाशुपतं शिवः ।
> पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् ॥
> ज्ञानेष्वेतेषु राजेन्द्र सर्वेष्वेतद्विशिष्यते ॥

इत्यादिना तत्प्रकाशिकोक्तः ॥ ऐक्याभिप्रायाभाव इति ॥ एतेष्वंशतद्विशिष्यत इति पञ्चरात्रस्याधि-

(भावदीपः)

क्योक्तिर्हि पूर्वोक्तसाङ्ख्ययोगपाशुपतैक्यविवक्षया वा वेदारण्यकैक्यविवक्षया वा स्यात् । अन्यथा एतेष्विति निर्धारणायोगात् पञ्चरात्राधिक्यकथनमसङ्गतं स्यात् । प्रागस्यानिर्देशात् । तत्राद्ये पञ्चरात्रसाङ्ख्यादेर्वेदादप्याधिक्यमुक्तं स्यात् । तच्च न युक्तम् । वेदविरोधेनालब्धप्रामाण्यस्य तस्य वेदादाधिक्यायोगात् द्वितीयमेष्टव्यमित्यर्थः । किं नोच्यत इति प्रश्नस्योत्तरमाह ।। पञ्चरात्रेति ।। वेदप्रामाण्योक्तौ न पञ्चरात्रप्रामाण्यसिद्धिः । अनुपपत्त्यभावादिति भावः । अस्मिन्पक्षे वेदप्रामाण्यं न सिद्ध्यतीत्यत आह ।। पञ्चरात्रप्रामाण्योक्तौ त्विति ।। पञ्चरात्रस्यावेदमूलत्वे वा तन्मूलत्वेऽपि मूलस्य वेदस्याप्रामाण्ये वा प्रामाण्यायोगात्पञ्चरात्रप्रामाण्योक्तौ वेदप्रामाण्यसिद्धिरित्यर्थः ।। बहुवचनमिति ।। मोक्षधर्मेष्वपीत्यत्रेत्यर्थः । उक्तं प्रमेयं न्यायविवरणारूढं सौत्रहेतोः सम्बन्धभाष्योक्तसाध्येनान्वयं च दर्शयन् फलोक्त्याऽधिकरणार्थमुपसंहरति ।। तस्मादिति ।। नावेदविदित्त्यादिबलादित्यनेन भाष्योक्तोपपादनं सूत्रोक्तहेतुसमर्थनार्थमित्युपसंहारः सूचितः ।। नानुमानेनेति ।। पाशुपतादिना चेत्युपलक्ष्यते । तेनान्यत्रोक्तोभयार्थकसमशब्दार्थः सम्बन्धभाष्यार्थश्चैकः सम्पद्यते । योनिशब्दस्य कारणे शक्तेर्भाष्ये कथं प्रमाणमिति व्याख्येत्यतः करणसाधनं प्रमाणपदमिति भावेनाह ।। ज्ञप्तीति ।। योनीत्यस्य कारणमात्रार्थत्वेऽपि ज्ञप्तेर्योग्यतयाऽन्वयः । शास्त्रकारणकत्वस्य ब्रह्मणि बाधात्तत्पुरुषस्य च निरस्तत्वात् । जन्माद्यस्येत्युक्ते प्रमाणं हि तत्रापेक्ष्यते । न तु तस्य जातत्वमिति तार्तीयगीताभाष्योक्त्या शास्त्रीयजनकत्वस्यानाकांक्षितत्वाच्च । ज्ञानेष्वेतेष्विति साधनत्वेन ज्ञानपदस्य प्रकृतत्वाद् भ्रान्तिनिरासाय ज्ञानेत्यनुक्त्वा ज्ञप्तीत्युक्तम् । शास्त्रजन्या ब्रह्मज्ञप्तिः प्रमितिरूपैव न कदाप्यप्रमितिरिति प्रमैकजननस्वभावत्वमेव शास्त्रस्य । ज्ञप्तिजननशक्तिप्रमाजननशक्त्योरेकत्वात् । तयोर्भेदे वा द्वयोः सहजत्वात् । अपवादकदोषस्य चापौरुषेये तदनुसारिणि चाभावादिति द्योतयितुं प्रमितीत्यनुक्त्वा ज्ञप्तीत्येवोक्तम् । भाष्ये प्रमाणमिति पर्यवसितोक्तिरिति भावेन तदनुवदति ।। प्रमाणमिति ।। एतेन शास्त्रगम्यत्वादित्यनुक्त्वा शास्त्रयोनित्वादित्युक्त्या शास्त्रजनकत्वं सूचितमिति निरस्तम् । योनीत्युक्त्या तदप्रामाण्यनिरासात् । अप्रामाण्यं हि सर्वात्मना ज्ञप्त्यजनकत्वेन वा संशयविपर्ययजनकत्वेन वा भवति । तत्र योनिर्ज्ञप्तिकारणमित्युक्त्या बाधकत्वरूपस्य सा ज्ञप्तिः प्रमितिरूपैवेति सूचनेन संशयविपर्ययजनकत्वरूपस्य चाप्रामाण्यस्य निरासात् । अत एव प्राक् समधिगम्यत्वादिति संशब्दप्रयोगः । उक्तं च ''औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रामाण्य''मित्यादि जैमिनिसूत्रे उपदेशो वेदः तस्यार्थस्य ज्ञानं ज्ञापकमव्यतिरेकश्च संशयविपर्ययाजनकश्चेति त्रिविधाप्रामाण्यनिरासेन प्रामाण्यम् । न हि वेदकारणत्वं जगत्कारणत्वे हेतुरित्यादि गीताभाष्योक्तं सर्वमिह योज्यमिति भावेन

([illegible])

शङ्कामाह ॥ समासेति ॥ समस्यमानपदार्थत्यागेनान्यपदार्थप्रधानबहुव्रीहितस्तत्पुरुषस्य तदत्यागेनोत्तर-पदार्थप्रधानस्य प्राबल्यादित्यर्थः ॥ कणादेति ॥ पौरुषेयत्वापातादित्यर्थः । अस्त्वित्यत आह ॥ श्रुत्यादीति ॥ वाचा विरूप नित्यया । 'अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवे'त्यादिश्रुतिस्मृतिभि-र्देवतानये भाष्योक्तयुक्त्या च विरोधाच्चेत्यर्थः ॥ सार्वज्ञेति ॥ अध्यापकतुल्यत्वादिति भावः । विवृतमेतत्सर्वं चन्द्रिकायां परमतदूषणप्रस्तावे । यत्तु योनिपदस्य ज्ञप्तिहेतुत्वार्थत्वेऽपि समासप्राबल्याच्छास्त्रस्य योनित्वं शास्त्रयोनित्वं तस्माच्छास्त्रस्य प्रामाण्याद्ब्रह्मैव जगत्कर्तृ इत्यर्थ इति । तन्न । योनित्वशब्दस्य गुणवाचित्वेन पूरणगुणेति समासनिषेधादित्यादि चन्द्रिकाप्रकाशे ज्ञेयम् । यत्कश्चिदाह । सूत्रे प्रतिज्ञाध्याहारदोषः । शास्त्रपदव्यावर्त्यं च न पाशुपतादि ।

> साङ्ख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा ।
> आत्मप्रमाणान्येतानि न हन्तव्यानि हेतुभिः ॥

इति भारतोक्त्या तस्यापि शास्त्रत्वात् । पत्युरसामञ्जस्यादित्यत्र तदमानत्वस्य सिद्धत्वाच्चेति । तन्न । साकाङ्क्षे सूत्रे योग्याध्याहारस्य सर्वसमाधेयत्वात् । यत्रानवसर इत्यादिस्मृतेः । नैव शास्त्रं कुमत्यं तदिति साक्षात् एतद्विशिष्यत इत्यत्रार्याच पाशुपतादेरशास्त्रत्वोक्त्या भारतोक्तेरन्यार्थवर्ण-नस्यावश्यकत्वात्समन्वयपादस्येतरेषां चानुपलब्धेरित्युक्तहेतुविस्तृतिरूपत्वात् । स्मृतिनयं न चास्यापौनरुक्त्यं चन्द्रिकायामेवानेकधोक्तमिति यत्किञ्चिदेतत् ॥ ३ ॥ अ-३ ॥

## अभिनवचन्द्रिका

वाक्यार्थान्यथानुपपत्त्येति ॥ 'ज्ञानेष्वेतेषु' इत्यत्रैतच्छब्देन पूर्वोक्तसांख्यादिपरामर्शः । निर्धारणे सप्तमी । तथा च पञ्चरात्रस्य वेदारण्यकैक्याभिप्रायाभावे 'ज्ञानेष्वेते'ष्वित्यत्रैतच्छब्देनोक्तं पञ्चरात्रं विशिष्यत इति वाक्यार्थो नोपपद्यते । तस्य प्रागनुक्तत्वात् । निर्धारणस्थले तदर्थकसप्तम्यन्तपदवाच्यार्थमध्य एव कस्यचिद्धर्मविशिष्टत्वेन वक्तव्यत्वात् । गवां गोषु वेत्यादौ तथा दर्शनादिति भावः । धर्मबहुत्वा-द्बहुवचनमिति ॥ प्रतिपाद्यगतं बहुत्वं प्रतिपादके उपचर्यत इति भावः । समासप्राबल्यादिति ॥ लक्षणावृत्त्या प्रतिपादकबहुव्रीह्यपेक्षया अव्यवधानतया स्वार्थप्रतिपादकस्य तत्पुरुषस्य प्राबल्यमिति भावः । वेदादिकर्तृत्वकथनस्येति ॥ वेदादिकर्तृत्वस्य पूर्वसूत्रोक्तजगज्जन्मादिकारणत्वाऽसाधकत्वेन शास्त्रकर्तृत्वं न सूत्रार्थ इत्यर्थः । उक्तानुपपत्तिमेवाह– न हीति ॥ यदि जन्मादिकर्तृत्वे शास्त्रयोनित्वं हेतुः स्यात्

(अभिनवचन्द्रिका)

तदा तद्वचनं प्रकृतोपयुक्तं स्यात् । न चासौ हेतुर्भवतीति भावः । कुतो न हेतुरित्यत आह– **वैपरीत्यस्यैवेति ।।** जन्मादिकर्तृत्वस्य 'यतो वा इमानी'ति श्रुत्या जिज्ञास्ये श्रुतत्वेन साधनत्वं, वेद-कर्तृत्वस्य विशिष्याश्रुतत्वेन साध्यत्वमिति वैपरीत्यस्यैवोचितत्वादित्यर्थः । न हि सिद्धं साध्यं असिद्धं साधनं सम्भवतीति भावः । नात्र सूत्रकृता शास्त्रयोनित्वेन जन्मादिकर्तृत्वं साध्यते । येनोक्तदूषणं स्यात्, किं नाम जन्मादिकर्तृत्वोक्त्याऽर्थलब्धं सार्वज्ञं स्फुटीक्रियत इति कश्चित् । तन्मतमाशङ्कते– **जगत्कारणत्वोक्त्येति ।। उक्तानुपयुक्तमयुक्तं चेति ।।** शास्त्रयोनित्वं नाम यदि अध्यापकवत्संप्रदाय-प्रवर्तकत्वमात्रं तदा प्रकृतानुपयुक्तं, यदा अर्थमुपलभ्य रचितत्वं तदा अयुक्तं परव्याख्यानमित्यर्थः ।

अत्र भामतीविवरणयोः 'जगत्कारणत्वेन सार्वज्ञे सिद्धे शास्त्रयोनित्वं हेत्वन्तरमुच्यते । वेदः स्वविषयादधिकविषयज्ञानवत्प्रणीतः वाक्यप्रमाणत्वात् पाणिन्यादिशास्त्रव'दित्युक्तम् । तन्न– वेद-विषयातिरिक्तस्य कस्यचिज्ज्ञानस्य सिद्धावपि सर्वस्य ज्ञानासिध्या सार्वज्ञासिद्धेः । न हि वेदविषयातिरिक्तं एकमेवेत्यत्र किञ्चिन्मानम् । येन तज्ज्ञानमात्रेण सार्वज्ञं स्यात् । किं च स्वविषयाधिकज्ञानस्य कारणकोटौ प्रवेशोऽस्ति न वा । नाद्यः – विवक्षितार्थतत्वज्ञानस्यैव कारणत्वेनाधिकज्ञानस्याकारणत्वात् । न द्वितीयः – विवक्षितार्थतत्वज्ञानेनैव वाक्यप्रामाण्यस्योपपन्नत्वेनाप्रयोजकत्वात् । किं च – वेदकर्तुः सार्वज्ञमनुमिमानेन तस्य निर्विशेषब्रह्मज्ञानमङ्गीक्रियते न वा । आद्येऽधिष्ठानयाथात्म्यज्ञान-सद्भावेनारोपितार्थज्ञानायोगाद्बाधः । द्वितीये सार्वज्ञासिद्धिः । ब्रह्मज्ञानाभावादिति । विवरणे तु यथा– दीपगता प्रकाशनशक्तिः तदुपादाने वह्नौ, तथा वेदगता प्रकाशनशक्तिः तदुपादाने ब्रह्मणि कार्योपादनयोरेकशक्तित्वादित्युक्तम् । तन्न – कार्योपादनयोरेकशक्तित्वेन कथंचिद्वेदवज्ज्ञानजनन-शक्तिसिद्धावपि ज्ञानरूपत्वस्य ज्ञानवत्त्वस्य वा सिद्धेः । वृश्चिकोपादानस्यापि गोमयस्य कार्यगतदुःख-जननशक्त्यभावेन कार्योपादनयोरेकशक्तित्वनियमाभावाच्च । त्वन्मते ब्रह्मणः आरोपाधिष्ठानत्वेन वह्निप्रदीपयोरेककार्योपादानभावाभावेन वैषम्याच्चेति । ननु पूर्वसूत्रोक्तसर्वकारणत्वाक्षेपण तत्समाधानार्थमिदमस्तु । उक्तं हि कल्पतरौ–

'अथवा वेदनित्यत्वाद्ब्रह्मणो विश्वयोनिता ।
नेति शङ्कामपाकर्तुं शास्त्रयोनित्वमुच्यते'

इति चेत्, न – तथा सति शास्त्रयोनित्वस्य साध्यत्वेन हेतूकरणायोगप्रसङ्गात् । न हि शास्त्र-योनित्वाभावात् जगत्कारणत्वं नास्तीत्याक्षेपे शास्त्रयोनित्वमसाधयित्वा, शास्त्रयोनित्वाज्जगत्कारणत्व-मित्युक्तिः सम्भवतीति ।।

([illegible])

पूर्वपक्षस्तु–

'वेदोक्तं सर्वजगतः कारणत्वं यथा हरेः ।
अङ्गीकार्यं समानत्वादनुमानाच्छ्यमानतः ॥

अङ्गीकार्यं शिवस्यापीत्यतिव्याप्तिरतः स्फुटम् ।
अन्येषां जगज्जन्मादिकारणत्वमस्त्येवेत्यतिव्याप्तिः ॥

ननु रुद्रादेरन्याश्रयप्रसङ्गेन कारणत्वायोगान्नातिव्याप्तिः । सिद्धान्त्यभिमतस्य लक्षणस्य तत्राभावात् । सिद्धान्त्यनभिमतरुद्रव्यतिरिक्तजगत्कारणत्वोपपादनेनाऽतिव्याप्तिदानस्याऽनुचितत्वात् । किं च सूत्रकाराभिमतं विष्णुजन्यबन्धादियोगित्वं रुद्रादावङ्गीक्रियते न वा । आद्ये न तस्य कारणत्वसम्भवः । बद्धस्य देवदत्तादितुल्यत्वात् । द्वितीयेऽसम्भव एव वक्तव्यः । सिद्धान्त्यभिमतस्य रुद्रादिजगन्निष्ठज्ञानाज्ञान-बन्धादिकर्तृत्वस्य विष्णावभावादिति चेत्, स्यादयं दोषः यदि सूत्रकृदभिमतस्य लक्षणस्यातिव्याप्तिं ब्रूमः । न चैवं, किं नाम 'यतो वा इमानी'ति श्रुत्युक्तलक्षणस्यैवातिव्याप्तिं ब्रूमः । न च रुद्रादि, तन्निष्ठबन्धादिकारणत्वं श्रुत्यभिप्रेतम् – रुद्रस्य विष्णुसमानत्वेन बन्धाज्ञानादिशून्यत्वात् । अविद्यमान-रुद्रादिनिष्ठबन्धादिकर्तृत्वस्य श्रुत्यर्थत्वे घटस्य बन्धादिकर्तृत्वमपि श्रुत्यर्थः स्यात् । ततश्च महदादिकर्तृत्वमेव श्रुत्यर्थः । न सूत्रकारोक्तः । तस्य रुद्रादावनुमानेन सिद्धत्वात् अतिव्याप्तिरेव । अत एव न बन्धप्रसङ्गोऽपि । प्रमाणं तु 'शिवो जगत्कर्ता, तदिच्छुत्वे सति, तत्कर्तृविष्णुसमानत्वादित्यनुमानम् । अस्य च सकललोकसिद्धत्वेन नासिद्ध्यादिदुष्टोपस्थः । तथा च 'तद्विजिज्ञासस्वे'ति वाक्ये रुद्रादिग्रहणे बाधकाभावात् रूढिसद्भावाच्च रुद्र एव विवक्षितो न विष्णुरिति ।

सिद्धान्तस्तु– विष्णोरेव जगत्कारणत्वम् । न रुद्रादीनाम् । रुद्रादिबन्धादिकारणत्वादेः रुद्रादावसम्भवात् । न च रुद्रादिकारणत्वादिः न 'यतो वा इमानी'ति श्रुत्यर्थ इति वाच्यम् । 'इमानी'त्यनेनोत्पत्त्यादिमत्तया प्रमाणप्रमितसर्वपदार्थग्रहणात् । रुद्रस्य चोत्पत्त्यादिमत्तया प्रमाण-प्रमितत्वात् । अस्तु वा त्वदुक्तरीत्या महदादिकर्तृत्वमेव 'यतो वा' इति श्रुत्यर्थः तथापि न रुद्रादावति-व्याप्तिः । कारणत्वस्य शास्त्रैकसमधिगम्यत्वात् । त्वदनुमानस्य प्रतिपक्षाऽसिद्धादिग्रस्तत्वेनाऽसाधकत्वात् । न च सकललोकप्रसिद्धत्वान्नासिद्धिरिति वाच्यम् । अस्मदादीनामसंमतत्वेन सकललोकप्रसिद्ध्यभावात् । पामरप्रतीतेश्चाऽप्रयोजकत्वेनाऽसाधकत्वात् । तथा च शिवादिग्रहणे श्रुत्युक्तलक्षणासम्भवरूपबाधकसद्भावात् 'तद्विजिज्ञासस्वे'ति वाक्ये विष्णुरेव विवक्षित इति स एव जिज्ञास्य इति सिद्धम् । (अ.३)

## वाक्यार्थमुक्तावली

सौत्रशास्त्रपदव्यावर्त्यचोद्यान्तरनिरासाय प्रवृत्तं ऋग्यजुरित्यादि । तस्य तथात्वाप्रतीतेराह । नन्वेवमिति । इतश्चेति । प्रमाणान्तराच्चेत्यर्थः । स्कान्दवचने पाशुपतादिनामग्रहणाभावान्मोक्ष-धर्मप्रमाणोपन्यासः । सौत्रशास्त्रशब्दितमेतदिति दर्शयितुम् अन्यस्य साक्षात्कुवर्तमत्वलाभाय स्कान्दवचनमपि सार्थकम् । वेदारण्यकमिति समाहारद्वन्द्वः । आरण्यकपदेनोपनिषद उपलक्ष्यन्ते । असङ्गतं स्यादिति ।

"साङ्ख्यं योगः पाशुपतं वेदारण्यकमेव च ।
ज्ञानान्येतानि भिन्नानि नात्र कार्या विचारणा ।।"

इति भीष्मेण विरुद्धत्वमेषामुक्तम् ।

अनन्तरमेतानि विरुद्धानि चेत्तर्ह्येतेषु मध्ये किं प्रमाणमिति प्रश्ने—

"साङ्ख्यस्य वक्ता कपिलः परमर्षिः स उच्यते ।
प्राचीनगर्भं तमृषिं प्रवदन्तीह केचन ।
हिरण्यगर्भो योगस्य वक्ता चैव चतुर्मुखः ।
उमापतिर्भूतपतिः श्रीकण्ठो ब्रह्मणः सुतः ।
उक्तवानिदमव्यग्रं ज्ञानं पाशुपतं शिवः ।
पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् ।
ज्ञानेष्वेतेषु राजेन्द्र सर्वेष्वेतद्विशिष्यत"

इति पञ्चरात्रप्रामाण्यमुच्यते । वेदपञ्चरात्रैक्याभावे त्वेतदसङ्गतं स्यात् । पूर्वमप्रकृतत्वादिति भावः ।

ननु वेदपञ्चरात्रयोरैक्याभिप्रायेण वेदप्रामाण्यसिध्यर्थं यदि पञ्चरात्रप्रामाण्योक्तिस्तर्हि पञ्चरात्रप्रामाण्य-सिद्ध्यर्थं वेदस्यैव प्रामाण्यं किं नोच्यते । वेदस्य प्रागुक्तत्वेनासङ्गत्यभावादित्याशयेन शङ्कते । वेदस्यैवेति । परिहरति । पञ्चरात्रप्रामाण्योक्ताविति । सम्भवादित्यनन्तरं वेदस्यैव प्रामाण्योक्तौ तावन्मात्रेण प्रश्नपरिहारसङ्गतिसद्भावात् । पञ्चरात्रप्रामाण्यासिद्धेरिति पूर्णायम् । यद्वा वेदस्यैव प्रामाण्यं किं नोच्यत इति शङ्कायाः उत्तरमाह । पञ्चरात्रप्रामाण्यसिध्यर्थमिति । वेदप्रामाण्योक्तौ न पञ्चरात्र-प्रामाण्यसिद्धिः । पञ्चरात्रप्रसक्तेरेवाभावात् । अतः पञ्चरात्रप्रामाण्यसिध्यर्थं पञ्चरात्रप्रामाण्यमुच्यत इत्यर्थः । एवं तर्हि वेदप्रामाण्यासिद्धिः स्यादित्यत आह पञ्चरात्रप्रामाण्येति । वाक्यार्थान्यथानुपपत्त्या

([illegible])

इति । वेदपञ्चरात्रयोरैक्याभिप्रायं विना सांख्यवेदादीनां मध्ये प्रामाण्यप्रश्ने अदृष्टपञ्चरात्रप्रामाण्योक्तौ प्रश्नपरिहारवाक्यार्थासामञ्जस्यादिति भावः । **धर्मबहुत्वादिति** । प्रतिपाद्यधर्मबहुत्वादित्यर्थः । **न शास्त्रस्य योनिरिति** । अन्यथा जन्माद्यस्येत्युक्ते प्रमाणं हि तत्रापेक्षते । न तु तस्य जातत्वमिति गीताभाष्योक्तरीत्याऽसङ्गतत्वं स्यादिति भावः । **समासप्राबल्यादिति** । समस्यमानपदार्थत्यागेनान्य-पदार्थप्रधानबहुव्रीह्यपेक्षया तदत्यागेन समस्यमानोत्तरपदार्थप्रधानकस्य तत्पुरुषस्य प्राबल्यादित्यर्थः । **शक्त्यादीति** । बहुचित्रजगद्बहुधाकरणेन परशक्तेः, को ह्येवान्यादित्युक्तरीत्या पूर्णानन्दत्वादेश्च स्फुटीकरणेनेत्यर्थः । **कणादचरणेति** । पौरुषेयत्वापातेनापसिद्धान्तः स्यादिति भावः ।

ननु न महच्चरणानुसरणं विरोधीत्यतो वेदविरोधान्न तस्य महत्त्वमिति भावेन दूषणान्तरमाह । **श्रुत्यादीति** । वाचा विरूप नित्ययेत्यादिका श्रुतिरित्यर्थः । **सार्वज्ञेति** । अध्यापकतौल्यादिति भावः ।

ननु योनिपदस्य ज्ञप्तिहेतुत्वार्थत्वेऽपि शास्त्रस्य योनित्वं प्रमायोनित्वं प्रामाण्यं तस्माच्छास्त्रस्य प्रामाण्याद् ब्रह्मैव जगत्कर्त्रेति तत्पुरुषाश्रये समासप्राबल्यं भवदर्थलाभश्च भवति । किं बहुव्रीह्याश्रयणेनेति चेन्न । योनिशब्दस्य गुणवाचित्वेन पूरणगुणेति समासनिषेधादिति भावः ।

## तत्त्वसुबोधिनी

**ऐक्याभिप्रायाभावे पञ्चरात्राधिक्यकथनमिति** । वेदारण्यकशब्देन पञ्चरात्रस्याविवक्षायां एतेषु एतत् विशिष्यते इति निर्धारणायोगात् । पञ्चरात्रस्य प्रागनिर्देशात् । वेदविरुद्धतया निर्दिष्टसाङ्ख्याद्यैक्य-मभिप्रेत्य साङ्ख्यादिशब्देन पञ्चरात्रविवक्षायान्तु पञ्चरात्रादेः वेदादप्याधिक्यमुक्तं स्यात् । न च तद्युक्तम् । वेदविरोधेन अलब्धप्रामाण्यस्य तस्य वेदादाधिक्यस्य दूरनिरस्तत्वात् । वेदारण्यकशब्देन पञ्चरात्रविवक्षा तु वेदारण्यकैक्याभिप्रायं विना न युक्तेत्यर्थः । यद्वा दृष्टार्थविषयस्य पौरुषेयवाक्यस्य पञ्चरात्रस्य वेदैकार्थत्वरूपवेदमूलत्वाभावे प्रामाण्यरूपमाधिक्यं न स्यादित्याधिक्योक्त्यन्यथानुपपत्त्या वेदमूलत्व-सिद्धिरित्यर्थः । अथवा साङ्ख्यं योगः पाशुपतमित्येतद्वाक्यात् पूर्वं साङ्ख्यं योगः पाशुपतमित्यादिरूपेणैव वाक्येन साङ्ख्यादीनां परस्परविरुद्धज्ञानजनकत्वं वा एकविषयज्ञानविषयत्वं वा । विरुद्धज्ञानजनकत्वेऽपि सर्वाण्यप्रमाणानि उत एकं प्रमाणम् । तदेकमपि किमिति प्रश्ने सर्वाण्यप्रमाणानीति वा वक्तव्यम् । अथवा उक्तानां मध्ये एव एकं प्रमाणम् इति वक्तव्यम् । तथा च वेदपञ्चरात्रयोः ऐक्याभिप्रायाभावे पञ्चरात्रप्रामाण्यकथनमसमञ्जसं स्यादिति भावः । किं नोच्यत इति प्रश्नस्योत्तरमाह । पञ्चरात्रप्रामाण्य-

(तत्त्वसुबोधिनी)

**सिद्ध्यर्थमिति ।** वेदप्रामाण्योक्तौ हि न पञ्चरात्रप्रामाण्यसिद्धिः । न ह्यदृष्टविषयस्यापि वेदस्यापौरुषेयस्य प्रामाण्यं पञ्चरात्रप्रामाण्यं विनाऽनुपपन्नम् । न च मूलप्रामाण्योक्तौ तत्सिद्धिः वेदपञ्चरात्रयोः मूलमूलिभावस्याद्याप्यसिद्धेरिति भावः । ननु पञ्चरात्रप्रामाण्योक्तौ वेदप्रामाण्यसिद्धिः कथमित्यत आह । **पञ्चरात्रप्रामाण्योक्ताविति ।** पञ्चरात्रस्यावेदमूलत्वे मूलस्य वेदस्याप्रामाण्ये वा प्रामाण्यायोगात् पञ्चरात्रप्रामाण्योक्तौ वेदप्रामाण्यसिद्धिरित्यर्थः । **वाक्यार्थान्यथानुपपत्येति ।** ज्ञानेषु एतेषु इत्यत्र एतच्छब्देन पूर्वोक्तसाङ्ख्यादिपरामर्शः । निर्धारणे सप्तमी । तथापि पञ्चरात्रस्य वेदारण्यकैक्याभिप्रायाभावे ज्ञानेष्वेतेष्वित्यत्र एतच्छब्देनोक्तं पञ्चरात्रं विशेष्यत इति वाक्यार्थो: नोपपद्यते तस्य प्रागनुक्तत्वात् । निर्धारणस्थले तदर्थकसप्तम्यन्तकपदवाच्यार्थमध्ये एव कस्यचिदतिशयितत्वेन वक्तव्यत्वात् । गवां गोपु वेत्यादौ तथा दर्शनादिति भावः । ननु मोक्षधर्मेष्विति बहुवचनं किमर्थमित्यत आह । **धर्मबहुत्वादिति ।** शास्त्रं योनिः अस्येत्येवोक्तौ ब्रह्मणो वेदजातत्वं प्रतीयते तन्निवृत्यर्थं भाष्ये प्रमाणमुक्तम् इत्यभिप्रेत्य तद्व्याचष्टे । **ज्ञप्तिकारणमिति ।** जन्माद्यस्येत्युक्तार्थे प्रामाण्यस्यैवाकांक्षितत्वात् । अन्यथा प्रकृतानुपयुक्तत्वेनासङ्गतत्वं स्यादिति भावः । ननु शास्त्रयोनित्वादिति हि सूत्रम् । अत्र कारणत्वं शास्त्रगम्यमित्येव प्रतीयते । अनुमानादिना नेति तु न प्रतीयते । तथा चानुमानादिनिरासः कथं सूत्रारूढः इति चेन्नैवम् । असाधारण्येन व्यपदेशा भवन्तीति न्यायेनाचक्षते इति चेत् शास्त्रेणैव गम्यं नान्येनेति लभ्यत एवेति नानुपपत्तिरिति भावः । **समासप्राबल्यादिति ।** समस्यमानपदार्थत्यागेन अन्यपदार्थप्रधानात् बहुव्रीहेः तत्पुरुषस्य तदत्यागेन उत्तरप्रधानस्य प्राबल्यमिति भावः । **वैपरीत्यस्यैवेति ।** सहस्रवत्वेन शतवत्वसाधनं न तु शतवत्वेन सहस्रवत्वसाधनमिति भावः । **श्रुत्यादीति ।** "वाचा विरूप नित्यया" इत्यादिश्रुतिविरुद्धत्वादित्यर्थः ।। ३ ।।

## वाक्यार्थविवरणम्

**पञ्चरात्रस्यैव प्रामाण्यमुक्तमिति** ।। 'साङ्ख्यं योगः पाशुपतं वेदारण्यकमेव च । ज्ञानान्येतानि भिन्नानि उताहो एक एव तु' इति ज्ञानसाधनानि साङ्ख्यादिशास्त्राणि किं परस्परविरुद्धार्थप्रतिपादकानि, उतैकार्थप्रतिपादकानि इति जनमेजयप्रश्नस्य वैशम्पायनेन पञ्चरात्रस्यैव प्रामाण्यमुत्तरत्वेनोक्तमित्यर्थः ।। **समासेति** ।। बहुव्रीहौ समस्यमानपदार्थत्यागेन अन्यपदार्थस्य प्राधान्यम् । तत्पुरुषे तु तदत्यागेनोत्तरपदार्थस्य प्राधान्यम् इति षष्ठीतत्पुरुषस्य प्राबल्यमिति ध्येयम् । **किमेति ।** किमित्यर्थः । **निस्सृतत्वमात्रमिति ।** अध्यापकवदुच्चारयितृत्वमात्रमित्यर्थः । **श्रुत्यादीति ।।** 'यावद् ब्रह्म विष्ठितं तावती

वाग्' इत्यादिवेदापौरुषेयत्वप्रतिपादकश्रुत्यादीत्यर्थः । उक्तानुपयुक्तमिति । न हि जन्मादिकर्तृत्वम् इत्युक्तरीत्येत्यर्थः । अयुक्तम् किञ्चेदमित्युक्तरीत्येत्यर्थः ।। ३ ।।

## वाक्यार्थमञ्जरी

इतश्च वक्ष्यमाणादपि प्रकारात् । साङ्ख्यमित्यादिभाष्यमाकाङ्क्षाक्रमेण योजयति ।। पञ्चरात्रस्येत्यादिना ।। अत्रेदं बोध्यम् ।

''साङ्ख्यं योगः पाशुपतं वेदारण्यकमेव च ।
ज्ञानान्येतानि भिन्नान्युताहो नेति चोच्यताम् ।।

साङ्ख्यं योगः पाशुपतं वेदारण्यकमेव च ।
ज्ञानान्येतानि भिन्नानि नात्र कार्या विचारणा ।।

सांख्यस्य वक्ता कपिलः परमर्षिः स उच्यते ।
प्राचीनगर्भं तमृषिं प्रवदन्तीह केचन ।।

हिरण्यगर्भो योगस्य वक्ता चैव चतुर्मुखः ।
उमापतिर्भूतपतिः श्रीकण्ठो ब्रह्मणः सुतः ।।

उक्तवानिदमव्यग्रं ज्ञानं पाशुपतं शिवः ।
पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् ।।
ज्ञानेष्वेतेषु राजेन्द्र सर्वेष्वेतद्विशिष्यते''

इत्यत्राद्यश्लोकेन सांख्यादीनि चत्वारि ज्ञानसाधनानि किं परस्परभिन्नार्थप्रतिपादकान्युतैकार्थप्रतिपादकानि । आद्ये किं सर्वाण्यप्रमाणानि उतैकं प्रमाणम् । एकं प्रमाणं चेत् किं तदिति जनमेजयेन प्रश्नः क्रियते । वैशम्पायनेन तु द्वितीयपद्येन क्रमेण प्रकृतिवायुनिरोधशिवविष्णूनां मोक्षदत्वप्रतिपादकत्वेन भिन्नार्थप्रतिपादकत्वमित्याद्यप्रश्नपरिहारः क्रियते । सार्धश्लोकत्रयेणान्यासप्रणीतत्वादितरेषामप्रामाण्यं वेदपञ्चरात्रयोरेकार्थत्वेन पञ्चरात्रप्रामाण्योक्तौ वेदस्यापि प्रामाण्यमुक्तं भवेदित्यभिप्रेत्य पञ्चरात्रस्याप्तप्रणीतत्वेन प्रामाण्यमिति द्वितीयतृतीयप्रश्नपरिहारः क्रियते नान्याप्रामाण्यमिति । अकथनादिति भावः । वेदस्य पञ्चरात्राभिन्नार्थत्वं मत्वा शङ्कते ।। नहीति ।। वेदश्चारण्यकं च तयोः समाहारो वेदारण्यकम् ।

(वाक्यार्थमञ्जरी)

अरण्ये पठनीयो वेदभागः आरण्यकं सामान्यविशेषभावेन पृथगुक्तिरिति ध्येयम् । वेदार्थत्वेन वेदव्याख्यान-रूपत्वेन ।। **असङ्गतं स्यादिति** ।। ऐक्याभिप्राये हि वेदारण्यकशब्देन पञ्चरात्रस्यापि प्रसक्तत्वेन एतेषु किं प्रमाणमिति प्रश्नोत्तरत्वेन तदाधिक्यकथनं सङ्गतं स्यात् । तदभावे च पञ्चरात्रस्य प्रागप्रकृतत्वेन तदाधिक्यकथनमसङ्गतं स्यादित्यर्थः ।। पृच्छति ।। **वेदस्यैवेति** ।। वेदस्यैव पृष्टत्वादिति भावः । उत्तरमाह ।। **पञ्चरात्रेति** ।। नोच्यत इत्यनुवर्तते । वेदप्रामाण्योक्तौ तदलाभादिति भावः । तर्हि वेद-प्रामाण्यं नोक्तं स्यादित्यत आह ।। **पञ्चरात्रप्रामाण्योक्ताविति** ।। **वाक्यार्थानुपपत्त्येति** ।। ज्ञानेष्वेतेष्विति वाक्यस्य योऽर्थः पञ्चरात्रप्रामाण्यरूपः तस्यान्यथा वेदप्रामाण्यं विनाऽनुपपत्त्येत्यर्थः । तथाहि । एतेषु किं प्रमाणमिति प्रश्नस्यैतेषु पञ्चरात्रं प्रमाणमित्युत्तरं पञ्चरात्रस्यैतेष्वन्यतमत्वं विना नोपपद्यते तत्र साङ्ख्याद्यन्यतमत्वं नास्ति तद्विरुद्धार्थप्रतिपादकत्वात् । अतो वेदारण्यात्मकत्वं वाच्यम् । न च स्वरूपैक्यं सम्भवति । अतोऽर्थैक्यमङ्गीकार्यं तत्र वेदस्याप्रामाण्ये तत्समानार्थकपञ्चरात्रस्याप्यप्रामाण्यं स्यात् । न चैवम् । अतो वेदस्यापि प्रामाण्यमिति ।। **धर्मबहुत्वादिति** ।। तथा च प्रतिपाद्यबहुत्वप्रयुक्तबहुत्वव्यवहार इत्यर्थः ।। **प्रमाणमिति** ।। सामर्थ्यलब्धायाः ज्ञप्तेः शास्त्रपदार्थपर्यालोचनया प्रमात्वलाभ इति भावः । ननु तपोधन इत्यादौ समस्यमानपदद्वयार्थत्यागेनान्यपदार्थस्यैव तपस्विनः प्राधान्यं राजपुरुष इत्यादौ च समस्यमानोत्तरपदार्थस्य पुरुषस्य प्राधान्यम् । एवं चान्यपदार्थप्रधानबहुव्रीह्यपेक्षया (उत्तर) वृत्तिपदार्थ-प्रधानतत्पुरुषस्य प्राबल्यात्स एवात्रास्त्विति शङ्के ।। **समासप्राबल्यादिति** ।। जन्मादिकारणत्वं कुत इत्यतः शास्त्रयोनित्वेन तत्साध्यते अत उक्तोपयोग इत्यत आह ।। **न हीति** ।। **वैपरीत्यस्यैवेति** ।। सहस्रवत्त्वेनैव शतवत्त्वसाधनं नान्यथा व्यभिचारादिति भावः ।। **अर्थलब्धमिति** ।। उपादानादिज्ञानवत एव कर्तृत्वादिति भावः । स्फोरयति स्फुटीकरोति । **अर्थलब्धशक्तीति** ।। शक्त्यभावे कर्तृत्वान्तर्गत-प्रयत्नानुपपत्तेरिति भावः । अभ्युपेत्येदमुक्तम् । वस्तुतस्तु सार्वज्ञस्फोरणमेव न युक्तमित्याह ।। **अनन्तेति** ।। ननु शास्त्रस्याशेषार्थप्रतिपादकत्वात् तन्निर्माणमशेषार्थज्ञानं विना न सम्भवतीति सार्वज्ञप्राप्तिरिति चेन्न । तथात्वे सार्वज्ञस्य पूर्ववदर्थलब्धत्वेन स्फोरणायोगात् । न केवलमुक्तरीत्या शास्त्रकर्तृत्वकथनमनुपयुक्तं किं त्वयुक्तं चेत्याह ।। **किं चेदमिति** ।। **कणादेति** ।। तद्वत् पौरुषेयत्वाङ्गीकारे तन्मतप्रवेश इत्यर्थः । अस्त्वित्यत आह ।। **श्रुतीति** ।। अपौरुषेयत्वाभिधायक वाचा विरूप नित्ययेत्यादिश्रुतीत्यर्थः ।। **सार्वज्ञसाधकत्वाभावेति** ।। अध्यापकवदर्थाज्ञानेऽप्युच्चारणसम्भवादिति भावः । नन्विदमधिकरणं स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गादित्यनेन पुनरुक्तम् । तत्रेवात्रापि साङ्ख्यपाशुपतादिदुरागमानां निरासादिति चेत् । उच्यते । अत्र विष्णोरेवेत्यवधारणेन सिद्धान्तः ।

([illegible])

तत्र तु विष्णोः कारणत्वं नेत्यसम्भवेन पूर्वपक्षोऽस्तीति सिद्धान्तः । अत एवात्र टीकायां विष्णोरिवान्यस्याप्यस्ति न वेति सन्देहः । कारणत्वस्य भगवदेकनिष्ठत्वाभावादिति पूर्वपक्षोपसंहारश्च । तत्र तु युक्तं न वेति सन्देहः । न विष्णोः कारणत्वं सिद्ध्यतीति पूर्वपक्षोपसंहारश्च । सुधापि अत्रातिव्याप्तिमाशङ्क्येति । तत्र तु शिवादीनामेव कारणत्वमिति । विस्तरस्तु चन्द्रिकायां द्रष्टव्यः ॥ ३ ॥

## विवृतिः

**ऐक्याभिप्रायाभावे पञ्चरात्राधिक्यकथनमिति** ॥ वेदारण्यकशब्देन पञ्चरात्रस्याविवक्षायां 'एतेष्वेतद्विशिष्यते,' इति निर्धारणायोगः । पञ्चरात्रस्य प्रागनिर्देशात् । वेदविरुद्धतया निर्दिष्टसाङ्ख्याद्यैक्यमभिप्रेत्य सांख्यादिशब्देन पञ्चरात्रविवक्षायान्तु पञ्चरात्रादेर्वेदादप्याधिक्यमुक्तं स्यात् । न च तद्युक्तम् । वेदविरोधेनालब्धप्रामाण्यस्य तस्य वेदाधिक्यस्य दूरनिरस्तत्वात् ॥ वेदारण्यकशब्देन पञ्चरात्रविवक्षा तु वेदारण्यकैक्याभिप्रायं विना न युक्तेत्यर्थः । यद्वा दृष्टविषयस्य पौरुषेयवाक्यस्य पञ्चरात्रस्य वैदिकार्थत्वरूपवेदमूलत्वाभावे प्रामाण्यरूपमाधिक्यं न स्यादित्याधिक्योक्त्यन्यथानुपपत्त्या वेदमूलत्वसिद्धिः इत्यर्थः । अथवा साङ्ख्यं योगः पाशुपतमित्येतद्वाक्यात्पूर्वं, साङ्ख्यं, योगः पाशुपतमित्यादिरूपेणैव वाक्येन साङ्ख्यादीनां परस्परविरुद्धज्ञानजनकत्वं वा, विरुद्धज्ञानजनकत्वेऽपि सर्वाण्यप्रमाणान्युतैकं प्रमाणम् । तदेकमपि किमिति प्रश्ने सर्वाण्यप्रमाणानीति वा वक्तव्यम् उतोक्तानां मध्ये एवैकं प्रमाणमिति वक्तव्यम् । तथा च वेदपञ्चरात्रयोरैक्याभिप्रायाभावे वेदपञ्चरात्रयोरैक्याभिप्रायकथनमसङ्गतं स्यादिति भावः । किं नोच्यत इति प्रश्नस्योत्तरमाह ॥ **पञ्चरात्रप्रामाण्यसिध्यर्थमिति** ॥ वेदप्रामाण्योक्तौ हि न पञ्चरात्रप्रामाण्यसिद्धिः । न ह्यदृष्टविषयस्यापि वेदस्यापौरुषेयस्य प्रामाण्यं पञ्चरात्रप्रामाण्यं विनाऽनुपपन्नम् । न च मूलप्रामाण्योक्तौ मूलिनोऽपि तत्सिद्धिः । वेदपञ्चरात्रयोर्मूलमूलिभावस्याद्याप्यसिद्धेरिति भावः । ननु पञ्चरात्रप्रामाण्योक्तौ वेदप्रामाण्यसिद्धिः कथमित्यत आह ॥ **पञ्चरात्रप्रामाण्योक्ताविति** ॥ पञ्चरात्रस्य अवेदमूलत्वे वा तन्मूलत्वेऽपि मूलस्य वेदस्याप्रामाण्ये वा प्रामाण्यायोगात् पञ्चरात्रप्रामाण्योक्तौ वेदप्रामाण्यसिद्धिरित्यर्थः । ननु शास्त्रयोनित्वात्, इति सूत्रे अत्र कारणत्वं शास्त्रैकसमधिगम्यत्वेन प्रतीयते । अनुमानादिना तु नेति न प्रतीयते । तथा चानुमानादिविनाशः कथं सूत्रारूढ इति चेन्न वैषम्यम् । असाधारण्येन व्यपदेशा भवन्तीति न्यायेनाभक्ष इतिवत् शास्त्रेणैव गम्यं नान्येनेति लभ्यत एवेति नानुपपत्तिरिति भावः ॥ **वाक्यार्थान्यथानुपपत्त्येति** ॥ ज्ञानेष्वेतेष्वित्यत्रैतच्छब्देन पूर्वोक्तसांख्यादिपरामर्शः । निर्धारणे सप्तमी ॥ तथा च पञ्चरात्रस्य वेदारण्यकैक्याभिप्रायाभावे

(विवृतिः)

ज्ञानेष्वेतेष्वित्यत्रैतच्छब्देनोक्तपञ्चरात्रं विशिष्यत इति पञ्चरात्रस्य वैशिष्ट्यं नोपपद्यते । तस्य प्रागनुक्तत्वात् । निर्धारणस्यले तदर्थपञ्चम्यन्तशब्दवाच्यार्थमध्य एव कस्यचिदतिशयितत्वेन वक्तव्यत्वात् ।। गवां गोषु वेत्यादौ तथा दर्शनादिति भावः ।। ननु मोक्षधर्मेष्विति बहुवचनं किमर्थमित्यत आह ।। **धर्मबहुत्वादिति** ।। शास्त्रं योनिरस्येत्येवोक्तौ ब्रह्मणो वेदजातत्वं प्रतीयते तन्निवृत्त्यर्थं भाष्ये प्रमाणमित्युक्तमित्यभिप्रेत्य व्याचष्टे ।। **ज्ञापिकारणमिति** ।। जन्माद्यस्येत्युक्तार्थे प्रमाणस्यैवापेक्षितत्वात् । अन्यथा प्रकृतानुपयुक्तत्वेनासङ्गतत्वं स्यादिति भावः ।। **समासप्राबल्यादिति** ।। समस्यमानपदार्थत्यागेनान्यपदार्थप्रधानत्वाद्बहुव्रीहेस्तत्पुरुषस्य तदत्यागेनोत्तरपदार्थप्रधानस्य प्राबल्यादिति भावः ।। **वैपरीत्यस्येति** ।। सहस्रवत्त्वेन शतवत्त्वसाधनं न तु शतवत्त्वेन सहस्रवत्त्वसाधनमिति भावः ।। **श्रुत्यादीति** ।। वाचा विरूपनित्ययेत्यादि श्रुतिविरुद्धत्वमित्यर्थः ।।

।। इति शास्त्रयोनित्वाधिकरणम् ।।

## ४. समन्वयाधिकरणम्

अज्ञानां प्रतीयमानमपि नेतरेषां शास्त्रयोनित्वम्, कुतः ?

**।। ॐ तत्तु समन्वयात् ॐ ।।**

अन्वय उपपत्त्यादि लिङ्गम् । उक्तं च बृहत्संहितायाम् ।

'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये' इति ।।

उपक्रमादितात्पर्यलिङ्गैः सम्यङ्निरूप्यमाणे तदेव शास्त्रगम्यम् ।

'मां विधत्तेऽभिधत्ते मां विकल्प्योऽपोह्य इत्यहम् ।
इत्यस्या हृदयं साक्षान्नान्यो मद्वेद कश्चन'

इति हि भागवते (११-२१-४३) ।।

## सत्तर्कदीपावली

जगत्कारणतया शास्त्रप्रमाणकत्वं विष्णोरेव कुतः प्रधानस्यान्यस्य वा तत्किं न स्यादिति । तत्तद्वादिभिस्तया तयोच्यमानत्वादित्येतदाशङ्क्य परिहारत्वेन सूत्रमवतारयति ।। तत्त्विति ।। तत्रान्वय-शब्देनोपपत्त्यादिकमुच्यते । ब्रह्मणि शास्त्रान्वयसाधकत्वात् । उपपत्त्यादिषड्विधतात्पर्यलिङ्गमागमवाक्येन दर्शयति । उपक्रमेति । यज्जिज्ञास्यत्वेन प्रतिज्ञातं विष्णुशब्दवाच्यं ब्रह्म तदेव जगत्कारणतया शास्त्रप्रतिपाद्यम् । उपक्रमादिवशात् । तद्विरोधादेव न प्रधानादि तथाभूतमित्यर्थः । एतदेव भगवद्वाक्येन समर्थयते ।। मामिति ।। मदुद्देशेन कर्माणि विधत्ते इन्द्रादिनामापि मामभिधत्ते न देवानित्यर्थः ।

## तत्त्वप्रदीपिका

जगत्कारणस्य विष्णोश्शास्त्रैकगम्यत्वं साधितम् । तस्यैव च शास्त्रगम्यत्वमित्याह । अज्ञाना-मित्यादिना । साङ्ख्यपाशुपतसौरशाक्तेत्यादीनां प्रतीयमानमपीतरेषां प्रधानरुद्रादीनां न शास्त्रगम्यत्वम् । कुतः ? तत्तु समन्वयात् । उपपत्त्यादि लिङ्गमिति वचनादुत्तरोत्तरप्राबल्यं सूचितम् । उपक्रमादीनां सर्वेषामुपपत्तित्वेऽपि ब्राह्मणपरिव्राजकन्यायेन भेदोक्तिः । यद्यपि कैश्चिदंशस्य देवतान्तरायन्वयः, स ब्रह्मणः सर्वोत्तमत्वप्रतिपादनार्थ इति तदेव सम्यगन्वयान्महातात्पर्यमवगम्यते ।

उपक्रमोपसंहारयोर्विशेषसामान्योक्तितया यत्राविरोधस्तत्र क्वचिदुपक्रमो बलवान् । प्रथमप्राप्तत्वात् । तदनुरोध्युपसंहारः । यथा "आत्मा वा इद"मित्युपक्रमसिद्ध आत्मा 'तन्मामवत्वि'ति सामान्योप-संहारेऽप्यनुवर्तते । यत्र विरोधस्तत्रोपसंहारानुरोधेनोपक्रमो व्याख्येयः । व्याख्यानरूपत्वादुपसंहारस्य । असकृदुक्तिः 'अभ्यासः' । 'अपूर्वत्वं' प्रमाणान्तरागम्यत्वम् । अभ्यासः प्रमाणान्तरासिद्धविषयस्त्व-पूर्वताबलेन नीयते । ज्ञानाविफलत्वात्तस्याः । यथा– 'तदस्य प्रथमं जन्म', 'तदस्य द्वितीयं जन्म', 'तदस्य तृतीयं जन्मे'त्यभ्यासो जीवनः प्रतीतोऽन्तर्यामिविषयो भवति । अफलत्वादपूर्वात्वपूर्वेऽपि फलवति तात्पर्यं स्यात्, किमुतापूर्वे । यथा–

"येनापूर्वेण मनसा यतः स्मरसि केशव ।
अपत्यमिव कूर्माणां तेन जीवाम्यहं वय"मित्यादौ ।।

यदर्थमन्यस्यार्थप्रतिपादनस्य फलाभावः, तस्मिन्नर्थवादवत्यभुतफले भुक्तफलादपि तात्पर्यं स्यात् । यथा– "यदन्नेऽग्निर्भवतो य एकोऽधिशिरसः शिरस्त्व वेदे"त्यादौ भुक्तफलादपि शिरस्त्वकेनादभुतफले प्राप्य-सकलतात्पर्यवत्वति प्रसंगाभावेन तात्पर्यं पर्यवसीयते । अर्थवादोऽप्युपपत्तिबलेन नीयते । यथाऽत्र प्राणः प्रतीतः सर्वोत्तमत्वार्थवादस्तदसम्भवाद्यत्रान्तर्यामिविषयो भवति । यथा चेन्द्राद्यादिगः प्रतीतः

(तत्त्वप्रदीपिका)

सर्वोत्तमत्वार्थवादस्तस्मिन्नेव प्रकरणेऽन्यत्र वा तेषां हीनत्ववचनाद्युपपत्त्या विष्णुपरोऽवसीयते । तस्मादर्थवादादुपपत्तिर्बलीयसी ॥

'मां विधत्तेऽभिधत्ते मा'मिति भागवतवचनार्थं दर्शयति । 'आत्मानमेव लोकमुपासीत', 'ज्योतिष्टोमेन स्वर्गकामो यजेत', 'ब्राह्मणो न हन्तव्य' इत्यादि मामुद्दिश्यैव विधत्ते श्रुतिः ।

''न ते विष्णो जायमानो न जातः'' ''अग्न इन्द्र वरुण मित्र देवा'' इत्यादि मामभिधत्ते ।

''द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं च,'' ''द्वे वाव ब्रह्मणो रूपे आत्मा चैवानात्मा चे''ति विविधं कल्पयित्वा, ''नेति नेति तत्र यस्स आत्मा स नित्यः शुद्धः केवलो निर्गुणश्च । अथ ह योऽनीदृशः सोऽनात्मे''त्यादिना दोषावपोहः, निर्दोषत्वेन विधेयोऽप्यहमेवेत्यस्याभिप्रायमहमेव वेदेति ॥

## तत्त्वप्रकाशिका

अत्र ब्रह्मणो जगत्कारणत्वेन शास्त्रप्रतिपाद्यत्वसमर्थनादस्ति शास्त्रसङ्गतिः । कारणस्य शास्त्रैकयोनित्वाद्यस्य शास्त्रं कारणतामाचष्टे तदेव कारणमिति वर्णितम् । तद्यदा विष्णोरेव तदेवोक्तलक्षणं सम्भवतीति । तत्कारणत्वेन शास्त्रयोनित्वं विषयः । विष्णोरन्यस्यापि वेति सन्देहः । पूर्वोक्तिरुभयथापि शास्त्रप्रतीतिः सन्देहबीजम् । रुद्रादीनामपि कारणत्वेन शास्त्रयोनित्वमिति पूर्वः पक्षः । पाशुपतादिशास्त्रेषु रुद्रादिर्जगत्कारणत्वेन वेदादिवेद्य इति निगदितत्वात् । न च तस्याप्रामाण्येनासाधकत्वम् । वेदेऽपि तेषां कारणतया प्रतीयमानत्वात्प्रतीतिसध्रीचीनस्य च प्रामाण्योपपत्तेः । तथा च पाशुपताद्युक्तिप्रतीतिभ्यामन्येषामपि कारणत्वेन शास्त्रयोनित्वे जगत्कारणत्वं न विष्णोरेव लक्षणमिति प्राप्ते सिद्धान्तयति ॥ अज्ञानामिति ॥ पाशुपतावावुक्तत्वेऽपि नेतरेषां शास्त्रयोनित्वम् । पाशुपताद्युक्तस्योक्तरीत्याऽयथार्थत्वसम्भवात् । प्रतीतेरज्ञानमूलत्वसम्भवात् । प्रतीतमपि नेतरेषां शास्त्रयोनित्वमिति भावः । ननु प्रतीत्यादेरज्ञानमूलत्वादि परिकल्प्याऽप्यन्येषां कारणतया शास्त्रयोनित्वाग्रहणे को हेतुरिति पृच्छति ॥ कुत इति ॥ प्रतीयमानमपि नेतरेषां शास्त्रयोनित्वमिति सम्बन्धः । तत्र हेतुकथनाय सूत्रमुपन्यस्यति ॥ तत्त्विति ॥ सूत्राक्षराणि व्याचष्टे ॥ अन्वय इति ॥

कानि तान्युपपत्त्यादीनि कुत्र च लिङ्गानीत्यत आह ॥ उक्तं चेति ॥ एकस्यैवार्थस्याऽसकृदुक्तिरभ्यासः । प्रमाणान्तरासिद्धता अपूर्वता । फलवत्त्वं फलम् । स्तुतिर्निन्दा परकृतिः पुराकल्पोऽर्थवादः । युक्तिरुपपत्तिः । उपक्रमादीनामुपपत्तित्वेऽपि ब्राह्मणपरिव्राजकन्यायेन पृथगुक्तिः । उपक्रमादीनामुपपत्त्यादित्वेन भाष्यं तेषामुत्तरोत्तरप्राबल्याभिप्रायम् । 'उपक्रमादिलिङ्गानां बलीयो ह्युत्तरोत्तरम्' इत्युक्तेः । उपसंहारस्य व्याख्यानरूपत्वेन तद्विरोध्युपक्रमाप्रामाण्योपपत्तेस्तस्य ततोऽपि प्राबल्यम् । एकत्रोक्तादपि

(तत्त्वप्रकाशिका)

बहुलोक्तेः प्राबल्यादभ्यासस्योपक्रमोपसंहाराभ्यां प्राबल्यम् । एकत्र बहुवारोक्तादपि मुख्यस्य प्राबल्याद-पूर्वताया उपक्रमोपसंहाराभ्यासेभ्यः प्राबल्यम् । फलस्योद्देश्यत्वादुपक्रमादिभ्यः प्राबल्यम् । करणाकरण-योरिष्टानिष्टकथनादिरूपार्थवादस्य फलमात्राधिक्यादुपक्रमादिभ्यः प्राबल्यम् । उपपत्तेः सर्वमूलत्वेन सर्वतः प्राबल्यमिति । एतत्सर्वं वाक्यतात्पर्यनिर्णये लिङ्गं भवति ।

विरोधे तु दुर्बलबाधकतया प्रबलं निर्णायकम् । साम्ये निरवकाशेन सावकाशं बाध्यते । स्वभावदुर्बले-नापि निरवकाशेन स्वभावतः प्रबलस्यापि सावकाशस्य बाधो भवत्येवमेकेनानेकेषां च बाधः ।

ननु सावकाशत्वनिरवकाशत्वाभ्यामेव निर्णयो न स्वभावप्राबल्यदौर्बल्यं नामास्ति । दुर्बलप्रबलयोः सावकाशत्वादिनियमात् । अन्यथा वाक्याप्रामाण्यापत्तेरिति । मैवम् । स्वभावप्रबलेन दुर्बलबाधने तत्प्रामाण्यायार्थान्तरकल्पनम् । सावकाशत्वं पुनः स्वयमर्थान्तरवाचित्वमिति भेदात् । अत्र श्रुत्यादिषट्कं च ग्राह्यम् । सूत्रं योजयति ।। उपक्रमादीति ।। पाशुपतादिशास्त्रोक्तं प्रतीतमपि नान्येषां शास्त्रयोनित्वम् । पाशुपतापुरुषादेः शास्त्रनिर्णायकत्वाभावादुपक्रमादीनामेव निर्णायकत्वात् । तैश्च सम्यक् शास्त्रे विचार्यमाणे ब्रह्मैव शास्त्रगम्यं प्रतीयते न रुद्रादि । अतोऽन्यथाप्रतीत्यादेरज्ञानमूलत्वाद्बाधेव युक्तमिति भावः । ननु कर्म-विधानादिरूपत्वाच्छास्त्रस्य कथं ब्रह्मपरतेत्याशङ्कां भगवद्वाक्येन परिहरति ।। मामिति ।। कर्मविधात्री श्रुतिरपि मां प्रत्येव तद्विधत्ते । इन्द्राद्यभिधात्री च मामभिधत्ते । चत्वारि वागित्यादिश्रुत्याऽहं विविधरूपत्वेन कल्प्यः । न तुरं विषेत्यादिश्रुत्याऽहमेवाभिधायकोऽतः । एवम्भूताया अस्याः श्रुतेरित्यभिप्रायमहमेव वेद न मत्तोऽन्यः इत्यर्थः । तस्मादुपक्रमादिलिङ्गाद्विष्णुरेव सर्वशास्त्रैर्जन्मादिकारणत्वोक्त्युपलक्षितानन्तगुणतयोच्यत इति तस्यैव शास्त्रगम्यत्वमिति सिद्धम् ।। अ-४ ।।

## गुर्वर्थदीपिका

स्तुतिर्निन्दा परकृतिः पुराकल्पोऽर्थवाद इत्यत्र स्तुतिः "वायव्यं श्वेतमालभेत भूतिकाम" इति स्वविहितवाक्यपागे रुच्युत्पादनाय "वायुर्वै क्षेपिष्ठा देवता" इत्यादिना वायोर्यत्स्तवनं सा स्तुतिः । "अस्ति ब्रह्मेति चेद्वेद" ति स्वोक्तब्रह्मास्तित्वे रुच्युत्पादनाय तद्विपरीतासत्त्वाश्रयणे "असन्नेव स भवति । असद् ब्रह्मेति वेद चे" दिति याऽनर्थोक्तिः सा निन्दा । परकृतिः "अथात ऐन्द्रो महाभिषेक" इति स्वविहितमहाभिषेके रुच्युत्पादनाय "एतेन ह्वा ऐन्द्रेण महाभिषेकेण तुरः कावषेयो जनमेजयं पारीक्षितमभिषिषेचे" त्यादिना या परेषां कृतिरुच्यते सा परकृतिः । पुराकल्पः "वायुर्वै प्रजापति" रिति स्वोक्ते वायुप्रजापत्यैक्ये तदुपेक्षणेनक "पवमानः प्रजापति" रिति स्वपूर्वाचार्यकथा ज्ञानरूपकल्पना सा पुराकल्प इति विवेकः ।

(सुबोधदीपिका)

स्वभावप्रबलेन दुर्बलबाधने तत्प्रामाण्यायार्थान्तरकल्पनमित्यस्य स्वभावप्रबलेन भेदग्राहिणा साक्षिणा विरोधे सति "अहं ब्रह्मास्मी"त्यपौरुषेयवाक्यस्य सर्वथाऽप्रामाण्यायोगाद्यदहम्पदस्यान्तर्याम्यर्थत्वकथनं तत्सावकाशत्वनिरवकाशत्वे विहाय स्वभावप्रबलेनैव दुर्बलबाधनं नेत्यर्थः । सावकाशत्वं पुनः स्वयमर्थान्तरवाचित्वमित्यस्योपक्रमतया स्वभावतो दुर्बलेन निरवकाशतया प्रबलेन च "सता सौम्य तदा सम्पन्नो भवती"ति वाक्येन "यत् स आत्मा तत्त्वमसी"त्युपसंहारवाक्यस्य तत्त्वमस्यतत्त्वमसीत्यर्थद्वयेऽपि सावकाशस्य च यदतत्त्वमसीत्यर्थकथनं तन्निरवकाशेन सावकाशबाधनं नामेत्यर्थः । न विद्यते प्रियं फलं यस्मात्तदप्रियमपरितोषणं तस्मादपोह्य इति भावेनोक्तम् । अप्रियादपोह्य इति ।

## भावबोधः

तद्यदा विष्णोरेव तदैवोक्तलक्षणं सम्भवतीति । तथा च पूर्वाधिकरणे कारणत्वेन शास्त्रयोनित्वमुक्तम् । तच्चेदन्यस्यापि स्यात्तदोक्तातिव्याप्तितादवस्थ्यमिति पूर्वपक्षोत्थानादनन्तरसङ्गतिरिति भावः । किमिति । अत्र कारणत्वेन शास्त्रयोनित्वं किमन्यस्याप्युत विष्णोरेवेति चिन्ता । तदर्थं वेदतात्पर्यनिश्चयः, किं शैवागमादिना, किं वोपक्रमादिनेति । तदर्थमुपक्रमादिकं किं वेदतात्पर्यव्यभिचार्युताव्यभिचारीति । तदर्थमुपक्रमादेर्बलाबलव्यवस्थापनं न सम्भवत्युत सम्भवतीति । बलाबलोपेतोपक्रमादीनां वेदतात्पर्यनिश्चायकत्वपक्षेऽप्यवधारणार्थकसौत्रः 'तु'शब्दः किं नोपपद्यत उतोपपद्यत इति । तदर्थं तस्य ब्रह्मपरत्वे प्रमाणं नास्त्युतास्तीति ।

शैवपाशुपताद्यैश्च ह्यागमैस्तु पितामह ।
शिवादेः कारणत्वञ्च वेदेऽपि प्रोच्यते क्वचित् ॥

तस्माद्धरेः सर्वशास्त्रगम्यत्वं तत्कथं भवेत् ।
एतदाचक्ष्व मे ब्रह्मन् विस्तरात् पृच्छतो मम ॥

इति प्रमाणमूलकं न च पाशुपतशास्त्रोदितत्वादि शास्त्रप्रतिपाद्यत्वे कारणमिति न्यायविवरणं मनसि निधाय पूर्वपक्षमुपपादयति । पाशुपतादिशास्त्रेष्विति । न्यायविवरणगतादिपदव्याख्यानम् । वेदेऽपीति ॥

कामक्रोधाभिभूतानामज्ञानामकृतात्मनाम् ।
प्रतीतमपि रुद्रादेः शास्त्रकारणता कुतः ॥

(भावबोधः)

उपक्रमादेरज्ञानाद्रुद्रादेः शास्त्रयोनिता ।
प्रतीयते द्विजश्रेष्ठ वस्तुगत्या न विद्यते ॥

इति प्रमाणमूलकमज्ञानां प्रतीयमानमपीति भाष्यमवतारयति– सिद्धान्तयतीति । 'शैवपाशुपतादीनां मोहकानां न मानता' इति प्रमाणं मनसि निधायाह– पाशुपताद्युक्तस्येति । उक्तरीत्या । साङ्ख्ययोग इत्युक्तरीत्येत्यर्थः । प्रमाणान्तरासिद्धेति । प्रमाणलक्षणटीकारीत्याऽत्रापि प्राचुर्येणेति ग्राह्यम् । अन्यथा प्रमाणसम्प्लववादिनामस्माकमसम्भवः स्यात् । तदुक्तरीत्या ऐकरूप्यमप्यत्र सङ्ग्राह्यम् । अथवोपक्रमोप-संहारावित्यत्रोपक्रमश्चोपसंहारश्चोपक्रमोपसंहारौ मिलिताविति व्याख्यानविवेकेनैव तदपि लब्धमिति बोद्धव्यम् । कर्तृनामनिर्देशपूर्वकमितिहासः परकृतिः । सामान्यतः कथाकथनं पुराकल्पः । ब्राह्मण-परिव्राजकन्यायेनेति । उपक्रमादीनां तात्पर्यार्थनिर्णय उपपत्तित्वेऽपि स्वार्थ आगमत्वमेव । नैवमुपपत्तेरिति विशेषादिति भावः । मुख्यस्येति । प्राचुर्येण प्राप्तस्येत्यर्थः । फलमात्रादिति । असाधने प्रत्ययवचना-द्विरहितादित्यर्थः । साम्य इति । एकस्य बहुत्वेन प्राबल्यमेकस्य ज्ञात्वा प्राबल्यमिति वोपपत्त्यादीनां श्रुत्यादिभिः सह यथासम्भवं साम्यमिति वा द्रष्टव्यम् । एकेनेति । निरवकाशेनेत्यनुवर्तते । अन्यथेति । द्वयोरपि निरवकाशत्व इत्यर्थः । अर्थान्तरकल्पनमिति । व्याख्यात्रा कर्तव्यमित्यर्थः । स्वयमर्थान्तर-वाचित्वमिति । व्याख्यातृव्यापारमनपेक्ष्येत्यर्थः । उपक्रमादीनामेवेति । अनेन 'किन्तूपक्रमादिलक्षणः समन्वय एव' इति न्यायविवरणं व्याख्यातं भवति । तद्गत'एव'कारस्तु पाशुपतादिशास्त्रोक्तमित्यादिना प्रागेव व्याख्यात इति बोध्यम् ॥

उपक्रमादिभिर्लिङ्गैः सम्यग्वेदे विचारिते ।
विष्णुरेव हि तद्गम्यो न रुद्राद्याश्च जातुचित् ॥

इति प्रमाणमूलकम् 'उपक्रमादिभिः' इति भाष्यं व्याचष्टे– तैश्चेति । ब्रह्मैवेति । अनेनान्वयादित्येक-वचनं समुदायार्थम् । सम्यगित्यर्थस्य 'सं'शब्दस्य 'शास्त्रे विचार्यमाणः' इत्यध्याहृतेन सम्बन्धः । तच्छब्दः प्रथमसूत्रोक्तब्रह्मपरामर्शकः । तुशब्दः अवधारणार्थकः । शास्त्रयोनीति पूर्वसूत्रादनुवृत्तिरिति योजना दर्शिता भवति ॥

कर्मकाण्डपरो वेदस्तत्परो विबुधर्षभ ।
श्रुतिः कर्मपरेन्द्रादिवाचिनी हरिमेव च ॥

(भावबोधः)

विधत्ते ह्यभिधत्ते च विविधः कल्प्य एव च ।
अप्रियत्वाद्धरेर्यस्मान्न सुरां तु पिबेदिति ।।
श्रुत्यापोह्य इति ह्यस्या हृदयं हरिरेकराट् ।।

इति प्रमाणानुसारेण भगवद्वाक्यं व्याचष्टे– **कर्मविधात्रीति** । योग्यतया कर्मणां कर्मत्वेन सम्बन्धः । **मां प्रत्येवेति** । मत्प्रीत्यर्थमेवेत्यर्थः । **अप्रियादपोह्य इति** । सुरापानादिकं मदप्रीतिसाधनत्वान्निषिध्यत इत्यर्थः । इत्यस्या इत्यत्रत्येतिशब्दं व्याचष्टे– **एवम्भूताया इति** । कर्मविधात्र्यादिरूपाया इत्यर्थः । **इत्यभिप्रायमिति** । अनेन 'अस्याः' 'हृदयम्' इत्यनयोर्मध्ये 'मां विधत्तेऽभिधत्ते मां विकल्प्योऽपोह्यः' इत्येतद्योजनीयमित्युक्तं भवति । **उपलक्षितानन्तेति** । अस्मिन्नधिकरणे शास्त्रपदवाच्यानन्तवेदादिसदागमानां जन्मादिकारणत्वादिलक्षणतदितरानन्दादिगुणप्रतिपादकानां समन्वयस्योक्तत्वदिति भावः ।। इति समन्वयाधिकरणम् ।। ४ ।।

## भावदीपः

।। ॐ तत्तु समन्वयात् ॐ ।। ब्रह्मण इत्युक्त्या ब्रह्मपरे शास्त्रेऽन्तर्भावसङ्गतिरुपपादिता । कारणस्येत्यादिग्रन्थस्तु पूर्वत्रेव द्वेधा व्याख्येयः । एवमग्रेऽपि । तथा च पूर्वाधिकरणफलाक्षेपेण पूर्वपक्षोत्थानात्पूर्वेणाक्षेपिकी सङ्गतिरिति भावः ।। **अन्यस्यापि वेतीति** ।। इतरेषामिति भाष्योक्तावप्येकदा न बहुभिर्विवादः । किं तु प्रत्येकं प्रत्येकं विष्णोरेव शिवस्यापि वेति तथा विष्णोरेव वा हिरण्यगर्भस्यापि वेति एवंरूपेण पूर्वपक्षादिरप्येवमेव ज्ञेय इति सूचयितुम् अन्यस्यापीत्येकवचनोक्तिः । पूर्वत्राप्येवं ध्येयम् । विष्णोरित्यत्र विष्णोरेवेति बोध्यम् ।। **पूर्वोक्तिरिति** ।। कारणस्य शास्त्रयोनित्वाद्विष्णुरेव कारणमिति पूर्वोक्तिरित्यर्थः ।। **उभयथापीति** ।। विश्वाधिको रुद्रः । 'हिरण्यगर्भः समवर्तताग्रे' 'नारायणो वा इदमग्र आसीदि'त्यादिनेत्यर्थः । सौत्रसमन्वयशब्देन करणव्युत्पत्त्यान्वयज्ञापकोपक्रमादिवाचिना पाशुपतादिरूपव्याख्यानोक्तत्वं वेदादावापातप्रतीतत्वं चेति द्वयं व्यावर्त्यम् । न च पाशुपतशास्त्रोदितत्वादि शास्त्रप्रतिपाद्यत्वे कारणमिति न्यायविवरणोक्तम् । तत्रादिपदेन हैरण्यगर्भसौरशाक्तेयोदितत्वादेरिवापातप्रतीतिरपि गृहीता । तथा च तदनुरोधादज्ञानामिति भाष्योक्तमापातप्रतीतत्वं पाशुपतोदितत्वादेरुपलक्षणम् अपिना समुच्चायकं वेत्यभिप्रेत्योभयमूलं पूर्वपक्षं व्यनक्ति ।। **ब्रह्मादीनामपीति** ।। पूर्वेण गतार्थत्वं शङ्कते ।। न चेति ।। कुवर्त्म तदित्यापुक्तादिशेति भावः । सर्वाचीनस्य संहितस्य । अत एव पाशुपताद्युदितत्वोक्तादार्ढ्यापादकत्वाद्भाष्ये आपातप्रतीतेः स्वशब्द-

(प्रकाशः)

नोक्तिरिति भावः । सिद्धान्तसुधायां प्रत्येकमेव हेतुद्वयपरतयोक्तम् ।। पाशुपतादीति ।। पाशुपतादावुक्तिप्रतीतिभ्यामित्यर्थः । तथा चेत्यनन्तरं पञ्चरात्राद्युक्तिप्रतीतिभ्यां विष्णोरेवेति योज्यम् । तदुक्तं न्यायविवरणटीकायाम् । यथाहि वेदैश्च सर्वैरहमेव वेद्य इत्यादिशास्त्रबलाद्वेदादिकं विष्णोः प्रतिपादकमिष्यत इति । अन्येषामपीत्यनेन भाष्ये इतरेषामपीति योज्यमिति सूचितम् ।। कारणत्वेनेति ।। कालादिभेदेनाविरुद्धेनेति भावः ।। न विष्णोरेवेति ।। एतेन न्यायविवरणे तथा च रुद्रादौ सममेतल्लक्षणमिति पूर्वन्यायविवरणवाक्यमनुवर्त्य योज्यमिति सूचितम् । एतच्च सौत्रावधारणार्थं तुशब्दव्यावर्त्यम् । प्रतीयमानमिति भाष्यमन्यत्रोक्तस्याप्युपलक्षणं मत्वाह ।। पाशुपतादाविति ।। उक्तरीत्येति ।। कुवर्त्म तदित्याद्युक्तरीत्येत्यर्थः । अज्ञानामित्युक्तिलभ्यहेतुमाह ।। प्रतीतेरिति ।। अनेन भाष्यं द्वेधा योजितम् । आक्षेपार्थस्य प्रकृतेऽनन्वयादाह ।। पृच्छतीति ।। प्रतीयमानमपीति ।। प्रागुपलक्षितं पाशुपताद्युक्तमपीत्येतदप्यत्र योज्यम् ।। व्याचष्ट इति ।। अन्वीयन्ते शक्तितात्पर्यगोचरेण सम्बध्यन्ते तया ज्ञायन्त इति यावत्, वाक्यान्येतेनेति व्युत्पत्त्येति भावः ।

भाष्ये लिङ्गमिति समुदायाभिप्रायं सूत्रस्मृत्यनुसार्येकवचनम् । अन्यथा लिङ्गैरित्यग्रेतनोक्तिविरोध इति मत्वोक्तम् ।। कानि तानीति ।। वाक्यस्यादिरुपक्रमः । तदन्त उपसंहार इति स्फुटत्वादन्यस्वरूपमाह ।। एकेति ।। प्रमाणान्तरासिद्धताऽपूर्वतेत्येवात्र पाठः । प्राचुर्येणेति तु न्यायकल्पलतापाठः । गुणाभिधानं स्तुतिः । दोषोक्तिः निन्दा । एककर्तृकोपाख्यानं परकृतिः । बहुकर्तृकोपाख्यानं पुराकल्पः ।

उदाहरणमेतेषां चन्द्रिकायां प्रकाशते ।
विस्तरो भीषयत्यस्मांस्तस्मान्नात्र यतामहे ।।

तत्त्वप्रदीपे विवृतत्वाट्टीकायामुदाहरणानुक्तिः । उपक्रमोपसंहारतदैकरूप्येति प्रमाणलक्षणोक्तैकरूप्यस्येहानुक्तिबीजं चन्द्रिकायां व्यक्तम् ।। उपपत्तिरप्येषोऽपीति ।। तात्पर्यनिर्णयरूपसाध्ये इति भावः । कुलक्षणत्वस्यैवानुपपत्तेः पृच्छन्त इति भक्तिपादीयानुभाष्योक्तेरिति भावः । ननु स्मृतावुपपत्तेरित्युक्तावपि भाष्ये उपपत्त्यादिलिङ्गमित्युपक्रमादिनुपपत्तेः प्राथम्यं कुत इत्यत आह ।। उपक्रमेति ।। उक्तेरिति ।। ज्ञानपादीयानुभाष्योक्तेरित्यर्थः । बीजं खलु प्रथमं भवतीति ।। उपसंहारस्येत्याविना ।। आपत्तेरित्यनन्तरं तत्प्रामाण्यार्थमुपसंहारानुसारित्वस्योपक्रमादिति योज्यम् । तृतीयापपदं प्रथमेऽश्रवणादिति चेदित्यत्रोपक्रमप्रामाण्यार्थमुपसंहारानुसारित्वस्यावर्जनीयत्वम् । व्याख्यानस्य पश्चात्तनत्वनियमादिति न्यायविवरणोक्तेरिति भावः । विस्तृतमंतत्तर्कताण्डवे ।। मुख्यावधृतोपसंहारविजये च । उपसंहारयोरित्यनन्तरं सकाशादिति

(भावदीपः)

शेषः । बहुबाधस्यान्याय्यत्वादिति भावः ।। **मुख्यस्येति** ।। अप्राप्तस्येत्यर्थः । सर्वमेतच्चन्द्रिकायां सम्यग्विवृतम् । ननूपक्रमादीनां वाक्यैकदेशत्वात् कथं लिङ्गमित्युक्तिर्भाष्य इत्यतो लिङ्गं तात्पर्यनिर्णय इति चतुर्थपादं व्याचष्टे ।। **एतत्सर्वमिति** ।। एतेन कुत्र च लिङ्गादीति टीकायां कृता शङ्का दत्तोत्तरा । स्वार्थे शब्दात्मकमपि इदमेतत्परमबाधे सत्येतदुपक्रमत्वादित्यादिरूपेण महावाक्यतात्पर्यार्थनिर्णये लिङ्गमित्यर्थः । वाक्यानां तात्पर्यं नाम न वृत्त्यन्तरम् । कर्मनिर्णये निरस्तत्वात् । किन्तु तत्प्रमितिशेषत्वं तथैव तर्कताण्डवे प्रथमपरिच्छेदेऽभिधानात् । उत्तरोत्तरप्राबल्योक्तेरुपयोगमाह ।। **विरोधे त्विति** ।। **साम्य इति** ।। उपक्रमादिद्विकस्य यथाकथञ्चित्साम्ये प्रतीते सतीति वा उपक्रमादेः श्रुत्यादिभिः साम्ये प्रतीते सतीति वार्थः । विस्तरस्तु चन्द्रिकाप्रकाशे ध्येयः ।। **स्वभावेति** ।। उपजीवकत्वादिना स्वभावदुर्बलेनापि उपजीव्यत्वादिना स्वभावप्रबलस्यापि इत्यर्थः । **एवमिति** । एकेन निरवकाशेन सावकाशानामनेकेषां बाधः इत्यर्थः ।। **प्राबल्यदौर्बल्यमिति** ।। विप्रतिषिद्धं चानधिकरणवाचीत्येकवद्भावः । शीतोष्णमितिवत् ।। **सावकाशत्वादीति** ।। दुर्बलस्य प्रबलेन बाधो नामार्थान्तरपरत्वरूपसावकाशत्वकल्पनम् । प्रबलस्य यथाश्रुतार्थत्वरूपनिरवकाशत्वमित्येव वाच्यम् । अन्यथा अर्थान्तरताऽकल्पने पाशुपतादेर्वेदेनेवाप्रमाण्यं स्यात् । सावकाशत्वाप्रामाण्याभ्यामन्यस्य बाधस्याभावादित्यर्थः ।। **वाक्येति** ।। उपक्रमादिरूपावान्तरवाक्येत्यर्थः ।। **अर्थान्तरेति** ।। बलाल्लक्षणादिनार्थान्तरकल्पनमित्यर्थः ।। **स्वयमर्थान्तरेति** ।। स्वरसतोऽर्थान्तरवाचित्वमित्यर्थः । एवं स्वभावदुर्बलस्योक्तरूपसावकाशत्वनियमाभाववत्स्वभावप्रबलस्य निरवकाशत्वनियमाभावोऽप्यूह्य इति भावः । नन्वग्रे तल्लिङ्गादित्यादौ श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्याभिरपि निर्णयो दृश्यत इति कथं भाष्ये सप्तानामेवोक्तिरित्यत आह ।। **अत्रेति** ।। तात्पर्यार्थनिर्णय इत्यर्थः । उपपत्त्यादिलिङ्गमिति भाष्य इति वार्थः । श्रुत्यादीनां लक्षणबलाबलबीजादिकं तुशब्दादेवेत्यत्र वक्ष्याम इति भावः । ननु प्रतीत्यादेरज्ञानमूलत्वादि परिकल्प्यान्येषां कारणतया शास्त्रयोनित्वाग्रहणे को हेतुरिति कृतप्रश्नस्य कथमनेनोत्तरं लब्धमित्यतः सौत्रसमन्वयादित्येतत्तात्पर्योक्तिपरस्योपक्रमादिलक्षणः समन्वय एव शास्त्रप्रतिप्राधान्ये कारणमिति न्यायविवरणस्यार्थमाह ।। **पाशुपतेति** ।। प्रतीतमपि आपातप्रतीतमपि इत्यर्थः ।। **पाशुपताद्युक्त्यादेरिति** ।। पाशुपतादायुक्तेरापातप्रतीतेश्चेत्यर्थः । एवं सौत्रसमन्वयशब्दार्थोक्तिपरन्यायविवरणार्थमुक्त्वा ततश्च किमित्यतः तदन्वितत्वेन भाष्यार्थमाह ।। **तैश्चेति** ।। शास्त्र इति भाष्ये शेष इति भावः ।। **ब्रह्मैवेति** ।। एतेन सूत्रे तुरवधारणे तदिति च ब्रह्म परामृश्यते । शास्त्रयोनीति पूर्वस्मात्प्रथमान्तं सदनुवर्तत इति दर्शितम् । शीलस्य ऋग्यजुःसामेत्युक्तक्रमादिरूपशास्त्रस्य विविधरूपत्वेन कल्पनं विकल्पः ।। चत्वारि वागित्यादि ।। तत्र वागित्यनुवादः ।

(तत्त्वप्रदीपः)

विधिभागे हरेः पूजैवाभिधाने च तद्गुणाः ।
विकल्पे तद्बहुत्वं चाप्यपोहे तु तदप्रियम् ॥

उच्यते सर्ववेदेषु तत्र वेद स एव हि ।
सुरा हरेर्गुणाः प्रोक्तास्ते मे स्युरिति चिन्तनम् ॥

सुरापानमिति प्रोक्तं तन्न कुर्यात्कथञ्चन ।
ब्राह्मणो विष्णुरुद्दिष्टः स नास्तीत्यभिचिन्तनम् ॥

ब्रह्महत्या समुद्दिष्टा तां न कुर्यात्कथञ्चन ।
इत्याद्यपोहवाक्यार्थश्चिन्त्यो विष्णौ बुधैर्जनैः ॥

इत्येकादशस्कन्धतात्पर्यदिशाऽर्थमाह ॥ कर्मेति ॥ अस्या इत्यग्रे श्रवणादाह ॥ श्रुतिरिति ॥ मां प्रत्येवेति ॥ तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तत इत्युक्तेर्निश्शेषदुःखप्रहाणरूपमोक्षस्य प्रीत्या मोक्षफलत्वाचेत्यनुव्याख्यानोक्तदिशा विष्णुप्रीतिं विनाऽयोगाज्जीवानां तादृङ्मोक्षहेतुविष्णुप्रीत्युद्देशेन विधत्ते । अवान्तरतात्पर्येण कर्म विदधदपि कर्मकाण्डं महातात्पर्येण मय्येव पर्यवस्यतीति भावः । वक्ष्यति च वाक्यान्वयादित्यत्र ॥ अभिधत्त इति ॥ रूढियोगादिवृत्तिभिरिन्द्राद्यभिधात्री श्रुतिर्महायोग-विद्वद्रूढिभ्यां मामेवाभिधत्त इत्यर्थः । तदपि वाक्यान्वयमुपेत्यैव अप्रियादप्रीतेरपोहः अप्रीतिमान्न कार्यः । अप्रीतिहेतुत्वात्सुरापानं न कार्यमिति वक्तीत्यर्थः । इत्यस्या इत्येतद्व्याख्यानं एवम्भूताया इति । कर्मादिविधात्र्यादिरूपाया इत्यर्थः । इत्यहमित्यत्रत्येतिशब्दस्य इदयमित्यनेनान्वयमाह ॥ इत्यभिप्रायमिति ॥ ननु जिज्ञास्यब्रह्मणो जन्मादिसूत्रोक्तजगज्जन्मादिकारणत्वरूपलक्षणस्यातिव्याप्ति-निरासायोपक्रमादिलिङ्गैः कतिपयवाक्यप्रतिपाद्यत्वमात्रं प्रतिज्ञातव्यं न तु कर्मकाण्डादिसर्वशास्त्रप्रतिपाद्यत्वं शास्त्रयोनिसूत्रे तावदेव हेतूकर्तव्यमित्याशङ्कां निरस्यन्समग्रसूत्रार्थं च व्यञ्जयन्फलितवक्ष्योपसंहरति ॥ तस्मादिति ॥ उपक्रमादीनामेव तात्पर्यार्थनिर्णायकत्वादित्यर्थः । अयं चोपक्रमादिलक्षणः समन्वय एव शास्त्रप्रतिपाद्यत्वे कारणमिति न्यायविवरणे सिद्धं तात्पर्यनिर्णय इति भाष्ये चोक्तार्थस्य हेतुत्वेनोपसंहारः । समन्वयादिति सौत्रहेतुपदस्योपसंहारः उपक्रमादिलक्षणादिति ॥ तत्तिवन्वयस्य विष्णुरेवेति । संबन्धोऽत्र सूत्रे आवर्तमानः तत्रानुवर्तमानशास्त्रयोनिपदेनाप्यन्वेति तत्र साकल्यं मुख्यत्वं चास्यार्थ इत्युपेत्यार्थमाह ॥ सर्वशास्त्रैरिति ॥ उच्यत इति ॥ स्वस्वकर्णपदवाक्यात्मना मुख्यवृत्त्या प्रतिपाद्यत इत्यर्थः । 'मुख्यार्थो भगवान्विष्णुः सर्वशास्त्रस्य नापरः' इत्यनुभाष्योक्तेः । कथमुच्यत इत्यतः

(भावबोधः)

कारणत्वेत्यादिपूर्वसूत्रेऽन्वितं कारणस्येत्येतदिह कारणत्वेनेत्येवमन्वेति तच्चोपलक्षणमित्यर्थः । कारणत्वाद्यनन्तगुणतयेति यावत् । अयं भावः । जिज्ञास्यब्रह्मणो ब्रह्मपदोक्तमनन्तगुणत्वं प्रथमलक्षणम् । तत्प्रसिध्यर्थं जन्मादिकारणत्वं लक्षणमिति सर्वशब्दप्रवृत्तिनिमित्तवत्तया सर्वशास्त्रप्रतिपाद्यत्वस्याप्रतिज्ञायां प्रधानलक्षणं न सिध्यतीति तत्सिद्ध्यर्थं मुख्यवृत्त्या सर्वशास्त्रयोनित्वप्रतिज्ञा युक्तेति । तदुक्तमनुव्याख्याने–

'जन्माद्यस्येति सूत्रेण गुणसर्वस्वसिद्धये ।
ब्रह्मणो लक्षणं प्रोक्तं शास्त्रमूलं यतस्ततः ।।
अन्वयः सर्वशब्दानां गुणसर्वस्ववेदकः ।।'

इत्यादि । तस्यैवैतल्लक्षणमिति फलोक्तिः । एतत्कारणत्वमनन्तगुणत्वं चेत्यर्थः । अत्रोपक्रमादिभिः शास्त्रप्रतिपाद्यत्वस्याबाधे सति मुख्यत्वस्य प्राप्तावपि न सर्वशास्त्रार्थत्वस्य प्राप्तिः । तथापि तत्र गतिसामान्यादिति हेतुरग्रे स्पष्ट इति भावः ।। यत्तु एतेन सर्वे व्याख्याता इत्यनेनेदं गतार्थम् । वाक्यान्तरेऽन्यस्यापि कारणत्वं प्रतीयत इति चोद्यस्य प्रागुक्तन्यायातिदेशेन निरसिष्यमाणत्वादित्युपालम्भनम् । तन्न । त्वन्मते तथात्वेऽप्यस्मन्मते तत्र निषेधमुखेन वेद्यवस्तुवाचिपदघटितवाक्यानामेव विचार्यत्वेनागतार्थत्वात् । विरोधिसर्वबाहुल्यकारणस्त्रीनिषेधिनामित्युक्तेः । किञ्चेहापातप्रतीत्यादिना पूर्वपक्षः तत्र तु प्रवृत्तिनिमित्ताभावेन, किञ्चेह कारणत्वं विष्ण्वेकनिष्ठं नेति तत्र तु सर्वशब्दवाच्यत्वं नेति । अत्रोक्तस्याग्रे न्यायातिदेशेन प्रपञ्चनाच्च न कश्चिद्दोष इति ।। ४ ।। अ.४ ।।

## अभिनवचन्द्रिका

इदमप्यधिकरणं पूर्वाधिकरणवत् 'यतो वा इमानी'ति वाक्यस्य परोक्तार्थमङ्गीकृत्य प्रवृत्तमिति बोध्यम् । एतेन– 'यतो वा इमानी'ति वाक्यतात्पर्यविषयीभूतस्य ब्रह्मरुद्रादिसमवेतबन्धादिकारणत्वस्य रुद्रादिनिष्ठत्वेन यया कयापि श्रुत्या प्रतिभासाभावात् शास्त्रावष्टम्भेनाऽतिव्याप्तेरयोगात् तत्परिहाराय प्रवृत्तमिदमधिकरणं व्यर्थमिति परास्तम् । अत्र ब्रह्मण इति ।। रुद्रादीनां जगत्कारणत्वप्रतिपादकतया प्रतीयमानशास्त्रभागप्रतिपाद्यत्वसमर्थनादित्यर्थः । एतेन पूर्वपक्षिणा विष्णोर्जगत्कारणत्वेन शास्त्रप्रतिपाद्यत्वस्याङ्गीकृतत्वात् तत्समर्थनं व्यर्थमिति परास्तम् । पूर्वपक्षिणा भागविशेषे प्रतिपाद्यत्वाङ्गीकारेऽपि रुद्रादीनां जगत्कारणताप्रतिपादकतया प्रतीयमानवेदभागप्रतिपाद्यत्वानङ्गीकारेण तत्प्रतिपाद्यत्वसमर्थनस्याऽऽवश्यकत्वात् । कारणस्येति ।। भावप्रधानो निर्देशः । कारणत्वस्य शास्त्रैकयोनित्वादित्यर्थः ।

([illegible])

**तत्सम्भवतीति** ।। तत्समर्थनमावश्यकमिति शेषः । **तत्कारणत्वेनेति** ।। विष्णुरुद्रशब्दाघटित 'द्यावाभूमी जनयन् देव एक' इत्यादिसामान्यवचनप्रतिपाद्यत्वं तथा 'एको रुद्रो न द्वितीयाय तस्थ' इत्यादि-विशेषवाक्यप्रतिपाद्यत्वं च विषय इत्यर्थः । सामान्यवचनप्रतिपाद्यत्वकोटिकं संशयमाह— **विष्णोरन्यस्यापि वेति** ।। 'द्यावाभूमी जनय'न्नित्यादिवाक्यप्रतिपाद्यत्वं विष्णोरेव उतान्यस्यापि वेत्यर्थः । उपलक्षणं चैतत्, 'एको रुद्र' इत्यादिविशेषवाक्यप्रतिपाद्यत्वं किं विष्णोरेव उतान्यस्यैवेति सन्देह इत्यपि द्रष्टव्यम् । कण्ठोक्तसंशयबीजमाह— **पूर्वोक्तिरिति** ।। शास्त्रयोनित्वादियुक्तिः । उभयथापि शास्त्रप्रतीतिः— 'द्यावाभूमी' इति वाक्यस्य कदाचिद्विष्णुपरतया कदाचिदन्यपरतया प्रतीतिः । अयमेव अस्य वाक्यस्य प्रतिपाद्य इति निर्णयाभाव इति यावत् । उपलक्षणमेतत् । पूर्वोक्तिः, एको रुद्र इत्यादिवाक्यानां रुद्रपरत्वप्रतीतिश्च, सन्देहबीजमिति द्रष्टव्यम् । एतेन इहाधिकरणे शास्त्रविशेषप्रतिपाद्यत्वस्यैव निर्णयात् शास्त्रयोनित्वमिति सामान्यस्य विषयत्वाभिधानमयुक्तमिति परास्तम् । **रुद्रादीनामपीति** ।। न केवलं विष्णोरेव कारणत्वेन शास्त्रभागप्रतिपाद्यत्वं अपि तु रुद्रादीनामपि कारणत्वेन शास्त्रभागप्रतिपाद्यत्वमिति पूर्वपक्ष इत्यर्थः । 'न च – पाशुपतादिशास्त्रोदितत्वादि शास्त्रप्रतिपाद्यत्वे कारण'मिति न्यायविवरणं मनसि निधायाह— **पाशुपतादिशास्त्रेष्विति** ।। **न च तस्येति** ।। पाशुपतादिशास्त्रस्याऽज्ञप्रणीतवेद-व्याख्यानसाम्येनाऽप्रामाण्यान्न तस्य वेदतात्पर्यनिर्णायकत्वमिति न वाच्यमित्यर्थः । प्रतीतिसध्रीचीन-त्वान्नाज्ञप्रणीतवेदव्याख्यानसाम्यमिति भावेनाह— **वेदेऽपीत्यादिना** ।। रुद्रादीनां कारणतायाः वेदेऽपि प्रतीयमानत्वेन पाशुपतादीनां प्रतीतिसध्रीचीनत्वम् । ततश्चाऽज्ञप्रणीतवेदव्याख्यानसाम्यान्नाप्रामाण्यमिति भावः । **तथा चेति** ।। 'यजमानः प्रस्तर' इति वाक्यजन्यप्रतीतेः तात्पर्यानिर्णायकत्वेन वेदजन्यशिवादि-कारणत्वप्रतीतेरपि तात्पर्यानिश्चायकत्वात् प्रतीतिमात्रं न पूर्वपक्षहेतुः । सर्वज्ञप्रणीतशास्त्ररूपवेदव्याख्यानस्य तात्पर्यनिर्णायकत्वेऽपि अज्ञप्रणीतवेदव्याख्यानसाम्येनाप्रामाण्यसाधकत्वपरिहाराय प्रतीत्यनुसरणमावश्यक-मिति द्योतनायो'क्तिप्रतीतिभ्या'मित्युक्तम् । ततश्च पाशुपताद्युक्तिप्रतीतिभ्यां रुद्रादीनां जगत्कारणत्वेन शास्त्रयोनित्वे सिद्धे लक्षणत्वेनोक्तं जगत्कारणत्वं न विष्णोरेव अपि तु अन्येषामपीति भावः । **अज्ञानमूलत्वसम्भवादिति** ।। रुद्रादीनां कारणताप्रतीतेः शास्त्रतात्पर्याज्ञानमूलत्वसम्भवादित्यर्थः । **तत्र हेतुकल्पनायेति** ।। प्रतीयमानमपि पाशुपतादिशास्त्रोक्तमपि, नेतरेषां शास्त्रयोनित्वं ग्राह्यमित्यस्मिन्नर्थे हेतुकल्पनाय सूत्रमुपन्यस्यतीत्यर्थः । अनेन सूत्रे 'यत' इति शेषं पूरयित्वा, अन्वयात् – उपक्रमादिलिङ्गैः, सम्यक् – विचारे क्रियमाणे, यत्तत्तु – तदेव, ब्रह्मैव, शास्त्रयोनितया निर्धार्यते, तस्मात् प्रतीयमानमपि पाशुपतादिशास्त्रोक्तमपि नेतरेषां शास्त्रयोनित्वं ग्राह्यमिति सूत्रस्य योजनोक्ता भवति । एतेन

(अभिनवचन्द्रिका)

समन्वयादित्यस्य विष्णुरेव शास्त्रयोनिरित्येतस्मिन्नर्थे हेतुत्वेन 'नेतरेषां शास्त्रयोनित्व' मित्यस्मिन्नर्थे हेतुत्वाभावात् तत्र हेतुकथनाय सूत्रमुपन्यस्यतीत्ययुक्तमिति परास्तम् । 'समन्वया'दिति सूत्रखण्डस्य 'नेतरेषां शास्त्रयोनित्व'मित्यस्मिन्नर्थे हेतुकथनपरत्वाभावेऽपि समग्रसूत्रस्य तद्धेतुकथनपरत्वात् । **सूत्राक्षराणीति** ।। भाष्ये व्याख्येयतया उदाहृतस्य 'अन्वय' इत्यस्य सौत्रपदत्वाभावात् सूत्राक्षराणी-त्युक्तम् । भाष्ये 'अन्वय उपपत्यादिलिङ्ग'मित्युक्त्वा, उक्तं चेति संमतिकथनमयुक्तं, तत्र उपपत्यादि-लिङ्गानां अन्वयशब्दार्थत्वानुक्तेरित्यत आह । **कानि तानीति** ।। अनेन उक्तं चेत्यस्य उपपत्यादीनां समन्वयशब्दार्थत्वं प्रतिज्ञातं बृहत्संहितायामुक्तमिति नार्थः किन्तु कानि तान्युपपत्यादीनि । कुत्र च लिङ्गानीति शङ्कापरिहाराय यन्मया वक्तव्यं तदुक्तमेवेत्यर्थ इति सूचितम् । प्रकरणादिरुपक्रमः । तदन्त उपसंहार इत्यनयोर्लक्षणयोस्स्फुटत्वात् अनुक्त्वा अभ्यासादीनां लक्षणमाह– **एकप्रकारेत्यादिना** ।। **स्तुतिर्निन्देति** ।। गुणख्यापनं स्तुतिः । तदन्यत्र दोषख्यापनं निन्दा । कर्तृनामनिर्देशपूर्वकमितिहासः परकृतिः । सामान्यतः कथाकथनं पुराकल्प इत्यनेकानि अर्थवादस्य लक्षणानि द्रष्टव्यानि । **उपक्रमादीना-मुपपत्तित्वेऽपीति** ।। ननु उपक्रमादीनामुपपत्तित्वेपीत्ययुक्तं तथा हि 'उपक्रमोपसंहाराविति श्लोके साध्यान्तरे उपपत्तित्वेन प्रसिद्धस्य तात्पर्यलिङ्गत्वमुच्यते न । चोपक्रमादयस्तथा स्वार्थे तेषामागमत्वात् । तदुक्तं तर्कताण्डवे – 'अत्र स्वार्थे शब्दात्मकानामुपक्रमादीना'मिति । तथा च नोपपत्तिशब्देन उपक्रमादीनां ग्रहणं सम्भवति । अवश्यं चैतदेवं विज्ञेयम् । स्वार्थोपपत्तेस्तात्पर्ये लिङ्गत्वमुच्यत इति । इदं विप्रतिपन्नं वाक्यं विष्णुसर्वोत्तमत्वपरं तत्साधकयुक्तिमत्वात्, यद्वाक्यं यत्साधकयुक्तिमत् तद्वाक्यं तत्परम् । यथा आप्ततया स्वयं पर्वतस्याग्निमत्त्वमभिधाय तत्रैव संवादितया युक्तिमभिदधतो वाक्यमिति । इयांस्तु विशेषः – धूमाद्या उपपत्तयः संयोगादिसम्बन्धेन विद्यमानाः स्वसाध्यसाधकाः । उपपत्तिः प्रतिपाद्यप्रतिपादकभावसम्बन्धेन विद्यमाना तात्पर्यसाधिकेति । अन्यथोपपत्तिस्तात्पर्यलिङ्गमित्यस्य तात्पर्योपपत्तिः तात्पर्यलिङ्गमित्यर्थप्राप्त्योपपत्तिर्लिङ्गमित्यभिधानमनर्थकं स्यात् । वह्निव्याप्यं वह्निव्याप्यमित्यभिधानवदिति चेत्, उच्यते – सत्यमुपपत्त्यादीनां स्वप्रतिपाद्यार्थे आगमत्व'मिति तथाप्यर्थान्तरे उपपत्तित्वसद्भावात् 'उपक्रमादीनां उपपत्तित्वेऽपी'त्युक्तिरुपपन्ना । न हि उपक्रमादिः स्वार्थमागमतयैव बोधयति, न तु किमप्यनुमापयतीति वक्तुं शक्यम् । उपक्रमादिवाक्यश्राविणः तत्प्रयोक्तृपुरुषानुमानदर्शनात् । **ब्राह्मणपरिव्राजकन्यायेनेति** ।। ब्राह्मण इत्यौवाक्तौ परिव्राजकलाभेऽपि ब्राह्मणत्वातिरिक्तपरिव्राजकत्वाख्यधर्मसद्भावात् तद्विवक्षया परिव्राजकानां पृथगुक्तिवत् उपक्रमादिष्वपि उपपत्तित्वातिरिक्तोपक्रमत्वादिविशेषधर्मसद्भावात् तद्विवक्षया उपक्रमादीनां पृथगुक्तिरित्यर्थः । ननु

([illegible])

भाष्ये 'अन्वय उपक्रमादिलिङ्ग'मिति वक्तव्यम् । उपपत्यादि लिङ्गमिति तु कथमुक्तमित्यत आह— उपक्रमादीनामिति ।। उपसंहारस्येति ।। ननु व्याख्यानरूपत्वेन तस्य ततः प्राबल्यमित्येतावता पूर्णत्वेन तद्विरोध्युपक्रमाप्रामाण्यापत्तेरित्यस्य अपिशब्दस्य च वैय्यर्थ्यम् । न च प्राबल्योपपादनाय तद्विरोधिन उपक्रमस्याऽप्रमाण्यापत्तेरिति हेत्वन्तरमुक्तमिति वाच्यम्— उपसंहारविरोध्युपक्रमाप्रामाण्ये सिद्धे उपसंहारस्य व्याख्यानत्वोपपादनाय तद्विरोध्युपक्रमाप्रामाण्यापत्तेरिति हेत्वन्तरमुक्तमिति वाच्यम् । उपसंहारविरोध्युपक्रमाप्रामाण्ये सिद्धे उपसंहारस्य प्राबल्यं तत्प्राबल्ये एतदप्रामाण्यमित्यन्योन्याश्रयादिति चेत्, न । उपसंहारस्य व्याख्यानत्वोपपादनाय तद्विरोध्युपक्रमाप्रामाण्यापत्तेरित्यस्य वक्तव्यत्वात् । अन्यथोपक्रमाविरुद्धोपसंहारस्येव विरुद्धोपसंहारस्यापि उपक्रमव्याख्यानता न सिध्येत् । 'तद्विरोध्युपक्रमाप्रामाण्यापत्तेरित्युक्ती' तु सिद्धयत्येव विरोध्युपसंहारस्योपक्रमव्याख्यानरूपत्वम् । अन्यतरस्यान्तरव्याख्यानत्वाऽनङ्गीकारे 'माता वन्ध्ये'ति मत्तवाक्यवत् परस्परविरोधेनाऽप्रामाण्यं स्यादिति बाधकस्य सूचनात् । न च वैपरीत्यमेव युक्तम् । व्याख्येयस्य पूर्वभावित्वनियमात् । यत्र तु उपक्रमो विस्पष्टः उपसंहारस्तु सामान्यरूपेण तत्र तु उपक्रमस्य निरवकाशत्वेनैव प्राबल्यम् । न व्याख्यानत्वेन पूर्वभाविनो व्याख्यानत्वा सम्भवात् । अनुपसञ्जातविरोधित्वेन प्रबलतया सम्भावनाविषयोऽपि उपक्रमात् उपसंहारः प्रबल इति सूचनायाऽपिशब्दोऽपि सार्थकः । ततश्चैवं योजना — उपसंहारविरोध्युपक्रमाप्रामाण्यापत्तेः उपसंहारस्य व्याख्यानरूपत्वं, तत एव उपक्रमादपि प्राबल्यं उपक्रमस्य तु उपसंहारानुसारित्वं चाभ्युपेयमिति । तदुक्तं न्यायविवरणे— 'उपक्रमप्रामाण्यार्थमेवोपसंहारानुसारित्वमङ्गीकार्यम् । व्याख्यानस्य पश्चात्तनत्वनियमादिति । एकत्रोक्तावपीति ।। ननूपक्रमात्प्रबलादुपसंहारादभ्यासस्य प्राबल्योक्तयैव उपक्रमादपि प्राबल्यलाभसम्भवात् उपसंहारात्प्राबल्यमित्येव वक्तव्यं न तूपक्रमोपसंहारयोरिति । न चोपसंहारात्प्राबल्यमित्येतावन्मात्रोक्तौ विरूपोपक्रमात् तथा तादृशोपसंहारमात्राच प्राबल्यमिति विज्ञायेत तन्मा विज्ञायि, किन्तु यत्रोपक्रमोपसंहारयोरैकरूप्यं तत्र ताभ्यामपि प्राबल्यमिति बोधनायोपक्रमोपसंहारयोः प्राबल्यमित्युक्तमिति वाच्यम् यत्रोपक्रमोपसंहारयोरैकरूप्यं तत्रोपक्रमोपसंहारयोरभ्यासरूपत्वेन ताभ्यामभ्यासस्य प्राबल्यायोगात् । न चास्य द्विवारोक्तिरूपत्वेन बहुलोक्तिरूपस्याभ्यासस्य प्राबल्यमुपपन्नम् इति वाच्यम् । द्विवारोक्तिरूपाभ्यासस्य प्राबल्यासिद्धिप्रसङ्गादिति । अत्र वक्तव्यम् । किं उपसंहारप्राबल्योक्तिविशेषोपक्रमप्राबल्योक्तिः, आहोस्वित् अभ्यास उपक्रमात्प्रबलः, तदुक्तमोपसंहारोत्तमत्वादिति मानान्तरेण लभ्यत इति । नाद्यः । तयोर्भेदेन तदुक्तमतदुक्तित्वायोगात् । न द्वितीयः — उपसंहारोत्तमत्वादिपक्षमुक्तिर्न विशेषोपक्रमादिविवक्षायनस्य सम्भवे उपक्रमोत्तमोपसंहारोत्तमत्वरूपहेत्वनयानु-

सन्धानस्य गुरुत्वात् । एवमुत्तरत्रापि द्रष्टव्यम् । एकत्र बहुवारोक्तादपीति ।। मुख्यस्य – आवश्यकस्य । ततश्चैवं योजना – अयं पूज्य इति एकवारं बहुवारं वोक्तमप्यपहायाऽऽवश्यकस्य लोके पूजादर्शनेन प्राबल्यस्य सिद्धत्वेन अपूर्वस्य मानान्तराऽप्राप्तत्वेन तत्प्रतिपादनस्यात्यावश्यकत्वात् अपूर्वताया उपक्रमोपसंहाराभ्यासेभ्यः प्राबल्यमिति । फलमात्राधिक्यादिति ।। अकरणे प्रत्यवायस्य च वैशद्येन फलस्वरूपस्य च कथनं विना फलस्वरूपप्रतिपादकाद् ग्रन्थादर्थवादग्रन्थस्याऽऽधिक्यमित्यर्थः । एतेनार्थवादस्य फलात्मकत्वात् तस्य फलाधिक्यकथनमयुक्तमिति परास्तम् । अर्थवादफलग्रन्थयोः सामान्यविशेषरूपत्वेन सामान्यरूपात्फलग्रन्थाद्विशेषरूपार्थवादग्रन्थस्य आधिक्यकथने बाधकाभावात् । यद्यपि इष्टानिष्टकथनादिरूपस्यार्थवादस्योपक्रमादिभ्यः प्राबल्यमित्येतावदेव वक्तव्यम्, फलाधिक्यसाधकेन करणाकरणयोरिष्टाकथनादिरूपाख्येन लिङ्गेन उपक्रमाद्याधिक्यसाधनसम्भवात्, तथापि शिष्यबुद्धिवैशद्याय पूर्वोक्तेन लिङ्गेन फलाधिक्यं प्रसाध्यते । न चोपक्रमाद्याधिक्यं प्रसाधितम् । उपपत्तेः सर्वमूलत्वेनेति ।। उपपत्तेः सर्वमूलत्वं नाम उपक्रमाद्यर्थ संशये सति तद्व्युदासेन तदर्थनिश्चायकत्वम् । तदुक्तमनुव्याख्याने– 'युक्तोऽयुक्तश्च यत्रार्थ आगमस्य प्रतीयते । स्यात्तत्र युक्त एवार्थ' इति । ननु उपक्रमादीनां प्राबल्य-दौर्बल्यमयुक्तं तेषामनुमानत्वात्, अनुमानस्य च द्वयं सामर्थ्यं, व्याप्तिः, समुचितदेशादौ सिद्धिश्च । तदुभयं उपक्रमादिषु सर्वेष्वप्यस्तीति सर्वेषां साम्यमेव वाच्यम्, न तु कस्यचित्प्राबल्यम् । व्याप्ति-समुचितदेशादिसिद्ध्यतिरिक्तस्यानुमानबलस्याभावात् इति चेत्, उच्यते । नोपक्रमादीनां धूमादिलिङ्गानामिव निरङ्कुशा व्याप्तिः, किन्तु इष्टसाधनत्वेनाप्तत्वस्यैव यदुपक्रम्यते तत्तत्परमित्यादिरूपा व्याप्तिरौत्सर्गकी । तत्र पूर्वपूर्वा व्याप्तिः उत्तरोत्तरविरोधे संकुच्यत इति प्राबल्यदौर्बल्यमुपपन्नमिति । ननु यत्र यदुपक्रम्यते तत्तत्परमित्यौत्सर्गकी व्याप्तिरित्ययुक्तम् । यत्प्रकरणं यदुपक्रमवत् तत्तत्परमेवेति आत्यन्तिकनियमसद्भावात् । न च यस्मिन्प्रकरणे उपक्रमोपसंहारौ विरुद्धौ तत्रोपक्रान्तार्थे तात्पर्याभावात् नात्यन्तिकनियम इति वाच्यम् । उपक्रमस्योपसंहारानुसारेण नेयत्वेन विष्णूपसंहारानुसरणाय विष्णूपक्रमत्वस्यैव वक्तव्यत्वात् । अन्यथा उपक्रमः शिवपरः उपसंहारस्तु विष्णुपर इति मन्त्रवाक्यवत् तत्प्रकरणमप्रमाणं स्यात् इति चेत् स्यादयं दोषः यदि शिवाद्युपक्रमशब्दस्य शिवादिप्रतिपादकोपक्रमत्वमर्थः स्यात्, न चैवं, किं नाम, शिवादिशब्दोपेतोपक्रमत्वमर्थः । एवं तत्तदुपसंहारादिशब्दस्य तत्तच्छब्दोपेतोपसंहारत्वादिशब्दस्य तत्तच्छब्दोपेतोपसंहारत्वादिकमर्थो बोध्यः । एवं च यत्र शिवशब्दोपेतोपक्रमः तत्र तत्परत्वमित्यात्यन्तिक-नियमाभावात् औत्सर्गकी व्याप्तिरित्येवाभ्युपेयम् । ननु अभ्यासो लिङ्गमित्यादिरूपेण एकवचनान्ता-नामन्वयसम्भवेऽपि उपक्रमोपसंहारौ अर्थवादोपपत्ती चेति द्विवचनान्तयोर्नान्वयः सम्भवतीत्यतः

([illegible])

'एतत्सर्व'मित्यध्याहृत्यान्वयं दर्शयति । एतत्सर्वमिति ॥ साम्य इति ॥ विरुद्धोभयतात्पर्यनिर्णायकयोरभ्यासत्वादिना साम्य इत्यर्थः । न स्वभावप्राबल्यदौर्बल्यं नामास्तीति ॥ असंकीर्णोदाहरणाभावादिति भावः । अर्थान्तरकल्पनमिति ॥ लक्षणादिनेति शेषः इदं च समाधानं उभयोर्निरवकाशस्थलमभिप्रेत्य । उभयोर्निरवकाशत्वेन साम्येऽपि अपरत्र स्वभावप्रबलत्वस्याधिकस्य प्रविष्टत्वात् अन्यतरबाधनिर्णयो न विहन्यते । तथा च— सावकाशत्वनिरवकाशत्वासङ्कीर्णोदाहरणसद्भावात् पार्थक्यं युज्यत एवेति द्रष्टव्यम् । उपलक्षणमेतत् । उभयोः सावकाशत्वेऽपि स्वभावतः प्रबलेन रूढ्यादिप्राप्तस्वारसिकार्थस्य बाधदर्शनात् इदमप्यसंकीर्णोदाहरणं द्रष्टव्यम् । अत्रेति ॥ अत्र भाष्ये अन्वय उपपत्त्यादिलिङ्गमित्यतः परं 'श्रुत्यादिषट्कं चे'ति शेषो द्रष्टव्य इति भावः । न चाऽऽदिशब्देनैव श्रुत्यादिषट्कग्रहणसम्भवे शेषाभिधानमयुक्तमिति वाच्यम् । उपक्रमादिषु उत्तरोत्तरं प्राबल्यं, श्रुत्यादिषट्के तु पूर्वपूर्वप्राबल्यमिति विशेषद्योतनाय पृथग्ग्रहणस्य भाष्यकाराभिमतत्वात् । तैः सम्यक्शास्त्रे विचार्यमाण इति ॥ सुधायां तु, अन्वयात् — उपक्रमादिलिङ्गसमुदायात्, शास्त्रे सम्यक् विचारिते सति सर्वशास्त्रस्य भगवत्येव सम्यक् वचनवृत्त्या अन्वयात् शक्तितात्पर्यलक्षणसम्बन्धावगमात् तद्विष्ण्वाख्यं ब्रह्मैव जगज्जन्मादिकारणत्वेन शास्त्रयोनि न तु हिरण्यगर्भादय इति उक्तम् । अत्रेदं प्रतिभाति – उपक्रमादिलिङ्गसमुदायात् शक्तितात्पर्यलक्षणसम्बन्धावगमादित्ययुक्तम् । उपक्रमादीनां तात्पर्यनिर्णायकत्वेन शक्त्यनिर्णायकत्वात् । 'लिङ्गं तात्पर्यनिर्णय' इति वचनात् । अन्यथा तीरमुपगम्य गङ्गापदस्य तीरे शक्तिप्रसङ्गः । अधिकरणोपक्रमे सुधायामेव 'यद्यपि नामानि सर्वाणी'त्यादि श्रुत्या शिवादिनाम्नां विष्णौ शक्तिमात्रमवसीयते, तथापि न तात्पर्ये प्रमाणमस्तीति तात्पर्यस्यैव निर्णायकत्वाभिधानाच्चेति चेत्, भवेदयं दोषः यद्युपक्रमादिलिङ्गसमुदायात् साक्षात्तात्पर्यस्येव वचनवृत्तेरप्यवगमो भवतीति सुधाभिप्रायः स्यात्, न चैवं, किं नाम उपक्रमादिलिङ्गात् शास्त्रतात्पर्येऽवगते 'नामानि सर्वाणी'ति श्रुतेरपि भगवति तात्पर्यावगमात् आगमेनैव भगवति सर्वशब्दानां शक्तिः सिद्धा भवतीति ।

भाष्ये मां विधत्त इति ॥ यद्यपि भागवते (११-२१ अ.) 'मां विधत्त' इत्यस्यानन्तरं 'इत्यस्या हृदय'मित्यस्योत्तरार्धस्य न पाठः किन्तु— 'इत्यस्या' इत्यनन्तरमेव 'मां विधत्त' इत्यर्धस्य पाठः । तथापि— 'किं विधत्ते किमाचष्टे किमनूद्य विकल्पयेत्' इति पूर्वार्धेन 'इत्यस्या हृदय'मित्यर्धस्यान्वयाऽभावात् व्यत्यासेन पाठः कृतः । ततश्चैवं भागवतसार्धश्लोकयोजना — पूर्वं 'वेदा ब्रह्मात्मविषयास्त्रिकाण्डविषया अपी(भाग.११-२१-३५)'ति श्लोकार्धेन त्रिकाण्डविषयतया

(अभिनवचन्द्रिका)

प्रतीयमाना अपि ब्रह्मात्मविषया इत्युक्त्या द्विकाण्डविषयत्वं सर्वथा निराकृतमिति मन्यमानस्य सर्ववैदिकपदानां भगवत्परत्वे उद्देश्यविधेयभावाद्यनुपपत्त्या परिनिष्ठितो वाक्यार्थ एव न सिध्यतीति श्रोतुर्मानसिकीं शङ्कामनुवदति — **किं विधत्त इति** ।। 'यजेते'त्यादिश्रुतिः किमुद्दिश्य विधत्ते, इन्द्रादिप्रतिपादिका श्रुतिः किमाचष्टे । 'चत्वारि वा'गित्यादिका श्रुतिः, किमनूद्य विकल्पयेत् । उपलक्षणमेतत् 'न सुरां पिबे'दित्यादिका श्रुतिः किं निषेधतीत्यपि द्रष्टव्यम् । वाक्यसमन्वयमाश्रित्यास्माभिर्ब्रह्मपरत्वमुक्तम् । न तु पदसमन्वयाभिप्रायेणेत्याशयेनोत्तरमाह— **'मां विधत्त' इति** ।। कर्मविधात्री श्रुतिरपि मां प्रत्येव विधत्ते, इन्द्राद्यभिधात्री च मामभिधत्ते, चत्वारि वागित्यादिश्रुत्या अहं विविधरूपत्वेन कल्प्यः । अहमेव 'न सुरां पिबे'दित्यादिश्रुत्या अप्रियादपोह्यः, अहंशब्द ईश्वरगुणपरः । गुणगुणिनोरभेदात् । अप्रियात् = अत्र मद्गुणाः सन्त्विति ईश्वरेच्छारूपापीत्यविषयात् जीवात्, अपोह्यः = निराकार्य इत्यर्थः । अनेन सुरां = भगवद्गुणं, स्वात्मनि न चिन्तयेत् इति 'न सुरां पिबे'दिति श्रुतिर्व्याख्याता भवति । तदुक्तम्—

'सुरा हरेर्गुणाः प्रोक्तास्ते मे स्युरिति चिन्तनम् ।
सुरापानमिति प्रोक्तं तन्न कुर्यात्कथंचन ।।
ब्राह्मणो विष्णुरुद्दिष्टः स नास्तीति विचिन्तनम् ।
ब्रह्महत्या समुद्दिष्टा तां न कुर्यात्कथंचन' ।। इति ।

इत्यहमित्यत्र इतिशब्दो वेदव्याख्यानसमाप्त्यर्थकः । यद्ययं वेदार्थः तर्हि वेदव्याख्यातृजैमिन्याद्यनुभवविरोध इत्यत आह— **इत्यस्या हृदयमिति** ।। अस्याः श्रुतेः, इति साक्षात् हृदयं=मुख्यं हृदयं, मदन्यः=जैमिन्यादिः, न वेद, किन्तु अवान्तरतात्पर्यविषयीभूतमर्थं वेद । कश्चन = कोऽपि, चतुर्मुखः, मदनुग्रहाद्वेदेत्यर्थः । अतो न कश्चिद्विरोधः । **जन्मादिकारणत्वोक्त्यमुपलक्षितेति** ।। इदमिह सम्प्रधार्यम् । अनन्तगुणाः कुत्रत्यजगत्कारणत्वोक्त्युपलक्षिता इति । किं वेदगतया जगत्कारणत्वोक्त्या उत सूत्रगतया । नाद्यः – वेदे साक्षाद्वचनवृत्त्या ब्रह्मशब्दात् अनन्तगुणानामुक्तत्वेन उपलक्षणवैयर्थ्यात् । नापि द्वितीयः – 'जन्माद्यस्य यत' (१-१-२) इति सूत्रे जगत्कारणत्ववाचकपदाभावात् ब्रह्मशब्दोक्तानन्तगुणपूर्णत्वोपपादनाय जगत्कारणत्वस्योक्तत्वेन, तदुक्तेस्तदुपलक्षणत्वाभिधानायोगाच्च । तदुक्तं सुधायाम् – 'ननु बृहद्ब्रह्मेति समस्तगुणपरिपूर्णत्वं प्रसिद्धमेव । तत्किं लक्षणान्तरेण । सत्यम् – तथापि – तदुपपादनार्थमित्यदोष' इति । ततश्चेदमयुक्तमिति चेत्,

(अभिनवचन्द्रिका)
स्यादयं दोषः — यद्यनेन वाक्येन जगत्कारणमिति पदेनानन्तगुणाः लक्षणयोच्यन्त इति प्रतिपाद्यत इत्यभ्युपगच्छामः । न चैवं, किं नाम जगत्कारणत्वोक्त्युपपादितानन्तगुणतया उच्यत इति प्रतिपाद्यत इति ब्रूमः ।

पूर्वपक्षस्तु–

'पञ्चरात्रादिसंसिद्धतात्पर्येणाऽऽगमेन हि ।
यथा जन्मादिहेतुत्वं विष्णोरित्यवधार्यते ।।
शैवागमादिसंसिद्धतात्पर्येणागमेन हि ।
ज्ञायते तच्छिवस्यापीत्यतिव्याप्तिरतः स्फुटम् ।।
प्रतीतिसध्रीचीनत्वमुभयत्र समं स्वतः ।

तथा हि– विष्णोरिव अन्येषामपि जगत्कारणत्वेन शास्त्रयोनित्वमभ्युपगन्तव्यम् । वेदव्याख्यानरूप-पञ्चरात्राद्यगमात् विष्णौ तात्पर्यावधारणवत्, सर्वज्ञशिवादिप्रणीतवेदव्याख्यानरूपपाशुपताद्यागमात् शिवादिष्वपि कारणत्वाभिधायकवेदैकदेशतात्पर्यावधारणात् सर्ववेदव्याख्यानप्रामाण्यसम्भवे पञ्चरात्रादि-प्रामाण्यमङ्गीकृत्य, शैवाद्यगमप्रामाण्यानङ्गीकारे कारणाभावात् । भागविशेषे विष्णुप्रतिपादकत्वस्य स्पष्टोपलम्भवत् भागविशेषे शिवादिपरत्वस्य स्पष्टमुपलम्भेन प्रतीतिसध्रीचीनत्वस्योभयत्र साम्यात् । न च बहूनां कारणत्वासम्भवः । गुरुतरभारोद्धरणादौ प्रत्येकमसमर्थानां सव्यपेक्षाणां बहूनां कर्मत्वस्य सर्वानुभवसिद्धत्वात् । न च 'सर्वे वेदा यत्पदमामनन्ती'त्यादिश्रुतिविरोधः — विष्णुप्रसिद्धशब्दलिङ्गाद्युपेताः सर्वे वेदा इत्यर्थत्वात्तस्याः । न च– 'एको नारायण आसीन्न ब्रह्मा न च शङ्कर' इत्यादिरुद्रादि-कारणतानिषेधकवाक्यविरोधः — तेषां विष्णुकारणताप्राशस्त्यपरत्वेनोदितानुदितहोमनिन्दावाक्यवत् शिवादिकारणतानिषेधे तात्पर्याभावात् । न चोपक्रमादिविरोधः — उपक्रमादितो व्याख्यानस्य सर्वज्ञप्रणीतत्वेन बलवत्त्वात् । तस्माद्विष्णुवच्छिवादीनामपि कारणत्वेन शास्त्रयोनित्वात्, अतिव्याप्तं जगत्कारणत्वमिति ।

सिद्धान्तस्तु–

'उपक्रमादिलिङ्गेन वेदतात्पर्यमीयते ।
विष्णावेव शिवादौ तु तात्पर्यं ग्राहकं न हि ।।
शैवागमस्य मानत्वं नैवोपक्रमपूर्वकैः ।
लिङ्गैर्बाधादभ्युपेयं नातिव्याप्तिरतो भवेत् ।।

(अभिनवचन्द्रिका)

तथा हि— शिवादीनां प्रमाणाभावेन जगत्कारणत्वाभावान्नातिव्याप्तिः । न च शैवाद्यागमनिर्णीत-तात्पर्यकवेदस्तत्र मानम् । उपक्रमादिविरुद्धस्य शिवादौ वेदतात्पर्यग्राहकस्य शैवाद्यागमस्यामानत्वात् । न च वैपरीत्यम् तेषामन्तरङ्गत्वेन बलवत्त्वात् । शैवाद्यगमस्य तात्पर्यावधारणायोपक्रमादीनां त्वयाऽनु-सर्तव्यत्वेनोपजीव्यत्वाच्च । न च प्रतीतिसध्रीचीनत्वेनागमस्य प्रामाण्यम् उपक्रमाद्यनुसन्धानपूर्वक-प्रतीतिसध्रीचीनत्वस्याभावात् । आपाततः प्रतीतिसध्रीचीनत्वस्याऽप्रयोजकत्वात् । उदितहोमादिनिन्दायाः उदितहोमादेर्विहितत्वेन निन्दायां तात्पर्याभावेऽपि शिवादिकारणत्वस्याऽप्रामाणिकत्वेन तन्निषेधवाक्यानां स्वार्थे तात्पर्यसद्भावाच्च । तस्मादनतिव्याप्तम् जगज्जन्मादिकारणत्वं ब्रह्मलक्षणमिति सिद्धम् ।। (अ.४)

## वाक्यार्थमुक्तावली

ॐ तत्तु समन्वयात् ॐ ।। अत्र ब्रह्मणो जगत्कारणत्वेन शास्त्रप्रतिपाद्यत्वप्रतिपादिकायाः औपनिषदः पुरुष इत्यादिश्रुतेरर्थनिर्णयाय न्यायानुसन्धानस्य क्रियमाणत्वाच्छास्त्रान्तर्भावसङ्गतिरित्याह । **अत्र ब्रह्मण इति** । अधिकरणादिना त्वाक्षेपकी सङ्गतिरित्याह । **कारणत्वस्येति** । **विष्णोरन्यस्यापि वेति** । विष्णोः शिवस्यापि वा विष्णोर्हिरण्यगर्भस्यापि वेत्यनेकसंशयप्रदर्शनाय सामान्येनेत्युक्तम् । भाष्ये नेतरेषामिति बहुवचनप्रयोगेऽपि युगपद्बहुभिर्विवादायोगादेकवचनम् । अत्र जगत्कारणत्वेन शास्त्रयोनित्वं किमन्यस्याप्युत विष्णोरेवेति चिन्ता । तदर्थं वेदतात्पर्यनिश्चयः किं शैवागमादिना किं वोपक्रमादिनेति । तदर्थं शैवागमादेः वेदतात्पर्यनिश्चायकत्वे बाधकमुपक्रमादेरेव शास्त्रतात्पर्यलिङ्गत्वे प्रमाणं किं नास्त्युता-स्तीति । **शास्त्र इति** । 'विश्वाधिपो रुद्रः' 'हिरण्यगर्भस्समवर्तताग्रे' 'नारायणो वा इदमग्र' इत्यादिशास्त्रे उभयथापि विष्णोरन्यस्यापि प्रतीतिरित्यर्थः । समन्वयशब्देन करणव्युत्पत्त्या अन्वयज्ञापकोपक्रमादिवाचिना पाशुपतादिरूपव्याख्यानोक्तत्वं वेदादावापातप्रतीतत्वं चेति द्वयं व्यावर्त्यम् । तत्राद्यं न च पाशुपतादि-शास्त्रोदितत्वादि शास्त्रप्रतिपाद्यत्वे कारणमिति न्यायविवरणे स्वपदेनोपात्तम् । द्वितीयमादिपदेन प्रतीतेः पाशुपतादिसहकारित्वेन सहकार्यप्राबल्यात् । भाष्ये तु द्वितीयमज्ञानां प्रतीयमानमिति स्वपदेनाद्यमपि-पदेनोक्तम् । पाशुपतादेः कुवर्त्मनः प्रागेवोक्तत्वादित्यभिप्रेत्योभयमूलं पूर्वपक्षं व्यनक्ति । **पाशुपतादि-शास्त्रेष्वित्यादिना** । **निगदितत्वादिति** । अनेन रुद्रादेः कारणतया शास्त्रयोनित्वे आगमः प्रमाणमित्युक्तं भवति । **प्रतीयमानत्वादिति** । रुद्रादेः कारणतया वेदप्रतिपाद्यत्वेऽनुभव एव प्रमाणमित्यर्थः । **सध्रीचीनस्येति** । संवादिन इत्यर्थः । **अन्येषामपीति** । एतेनाज्ञानां प्रतीयमानमपीत्यपिपदं इतरेषा-मपीत्यपिपदेनापि सम्बध्यत इत्यपिपदं व्याख्यातं भवति । प्रतीयमानमपीत्यपिसमुच्चयमाह । **पाशुपतादा-**

(वाक्यार्थमुक्तावली)

**विति** । अज्ञानामित्युक्तिलब्धार्थमाह । **प्रतीतेरिति** । **प्रतीतमपीति** । एतेनापिपदस्यार्थान्तरमुक्तं भवति । प्रतीतिसिद्धतयाऽपलापानर्हमपीति । **व्याचष्ट इति** । अन्वीयन्ते शक्तितात्पर्यगोचरेण सम्बन्धतया ज्ञायन्ते वाक्यान्येतेनेति व्युत्पत्त्येति भावः ।

लिङ्गानीति । अन्वयादित्यस्य वक्ष्यमाणार्थान्तरविवक्षया समुदायाभिप्रायेण वा लिङ्गं तात्पर्यनिर्णय इति स्मृत्यनुसारेण वा सूत्रे एकवचनप्रयोगाद्भाष्ये लिङ्गमित्येकवचनमिति मनसि निधाय उपक्रमादिलिङ्गै-रित्युपसंहारभाष्यानुसारेणात्र बहुवचनप्रयोगः । **प्रमाणान्तराप्राप्ततेति** । अत्र प्रमाणलक्षणटीकारीत्या प्राचुर्येणेत्यपि ग्राह्यम् । अन्यथा प्रमाणसम्प्लववादिनामस्माकमसम्भवापत्तेः । स्वानुपजीविप्रमाणान्तरेत्यपि विशेषणीयम् । तेनेश्वरादिप्रतियोगिकजीवभेदे प्रत्यक्षानुमानसिद्धेऽपि न भेदवाक्यस्यापूर्वताभङ्गः अनुमानादेरागमोपजीवित्वादिति प्रमाणलक्षणटीकोक्तरीत्यैवोपक्रमोपसंहारयोरैकरूप्यमप्यत्र गणनीयम् यद्वा मूले उपक्रमश्च उपसंहारश्चोपक्रमोपसंहारौ मिलितौ चेति व्याख्यानेनैव तल्लाभः ।। **फलवत्त्वमिति** । एकस्मिन्प्रकरणे उभयप्रापकसद्भावेऽपि यज्ज्ञानात्फलं श्रूयते तद्विषयत्वं यद्वाक्यस्येति फलोक्तेर्लिङ्गत्वमिति भावः । यद्वा 'तेषां पाहि श्रुधीहव'मित्यत्र विभक्तिविपरिणामेन तान् सोमान्पिबेत्यर्थं ब्रूमो वा तेषां सोमानामंशं पिबेति ब्रूमो वेति विषये विभक्तिव्यत्ययादपि तेषामंशं पाहीति व्याख्यानं वरमिति पूर्वपक्षे श्रीमता भाष्यकृता राद्धान्तितम् । भगवतो गुणाधिक्यज्ञापनलक्षणवेदफलविरोधात्तेषाम् अंशमिति न व्याख्यानमुचितम् । किन्तु विभक्तिव्यत्ययेनार्थकथनस्य सर्वभोक्तृत्वाख्यगुणाधिक्यज्ञापनलक्षणफलवत्त्वेन तान्समग्रान् सोमान् स्वातन्त्र्येण पिबेति स्वातन्त्र्यद्योतकविभक्तिव्यत्यय एव ज्यायानिति । यथोक्तम्

गुणाधिक्यं येन भवेत् वेदस्यार्थः स एव हि ।
प्रयोजकत्वान्नान्यस्य फलाभावात्तदर्थता ।
उपक्रमादयो यत्र तात्पर्यार्थस्स एव हि ।

इति ऋग्भाष्ये । तथा च फलोक्तिं विना येनार्थेन प्रतिपादिते न स्वतात्पर्यविषयद्योतनलक्षणफलवत्त्व भवति तत्फलमित्यर्थः । गुणिनिष्ठगुणाभिधानं स्तुतिः । दोषिनिष्ठदोषाभिधानं निन्दा । कर्तृनामकथन-पूर्वकमितिहासः परकृतिः । सामान्यतः कथनं पुराकल्पः । यद्वा परेणेदं कृतमित्येककर्तृकत्वकथनं परकृतिः । पूर्वमन्यैरपीदं कृतमित्यनेककर्तृकत्वकथनं पुराकल्पः । **उपक्रमादीनामिति** । उपक्रमादीनां तात्पर्यार्थनिर्णये उपपत्तित्वेऽपि स्वार्थे आगमत्वमेव नैवमुपपत्तेरिति विशेषादिति भावः ।

(वाक्यार्थमुक्तावली)

ननूदाहृतस्मृत्यनुसारेणान्वय उपक्रमादि लिङ्गमिति वक्तव्ये उपपत्त्यादीति व्यत्यासः कुतः इत्यत आह **उपक्रमादीनामिति । उपक्रमाप्रामाण्योपपत्तेरिति** । प्रतीतार्थाप्रमापकत्वोपपत्तेरित्यर्थः । **मुख्यस्येति** । स्वानुपजीविप्रमाणान्तराप्राप्तेऽर्थेऽपूर्वतया मुख्यस्येत्यर्थः । **करणाकरणयोरिति** । करणे फलकथनरूप-स्तुत्यर्थवादात् । अकरणेऽनिष्टकथनरूपनिन्दार्थवादात् । आदिपदेन परकृत्यादिकथनमात्ररूपाच्चेत्यर्थः । यद्यपि गुणाभिधानादिकमेव स्तुत्यादि तथापि इष्टादिकथनं स्तुत्यादौ पर्यवस्यतीति तात्पर्यम् । **फलमात्रा-दिति** । असाधने प्रत्यवायवचनादिरहितादित्यर्थः । यद्वा फलवत्त्वरूपफलमात्रात्फलोक्तिरूपार्थवादस्य प्राबल्यमित्यर्थः । **सर्वमूलत्वेनेति** । उपक्रमादीनां व्याप्तिबलेनार्थगमकत्वलाभ एव तात्पर्यज्ञापकत्वेन सर्वत्र स्वस्वरूपाधायकत्वेन सर्वमूलत्वेनेत्यर्थः ।

ननूपक्रमादीनां वाक्यशेषत्वात्कथं लिङ्गत्वमित्यतश्चतुर्थपादं व्याचष्टे । **एतत्सर्वमिति** । उत्तरोत्तर-प्राबल्योक्तेरुपयोगमाह । **विरोधे त्वित्यादिना । दुर्बलबाधकतयेति** । उक्तरीत्या दुर्बलोपक्रमादिबाधकतया प्रबलोपसंहारादिकं निर्णायकमित्यर्थः । **साम्य इति** । उपक्रमे एकविषये बहुश्रुतिः । उपसंहारेऽन्यविषये एकैव श्रुतिरिति । एकस्य बहुत्वेनापरस्य जात्या प्राबल्यमिति साम्यं इत्यर्थः । यद्वा द्वयोरप्युपक्रमादि-स्थतया साम्य इत्यर्थः । **स्वभावदुर्बलेनापीति** । उपक्रमादिनेत्यर्थः । स्वभावप्रबलस्योपसंहारादेः । **एवमेकेनेति** । एवंविधेन निरवकाशनैकेन श्रुत्यादिना उपक्रमे मध्ये उपसंहारे वा विद्यमानेन तत्रैव विद्यमानानामन्यपराणां सावकाशानां श्रुत्यादीनां बाध इत्यर्थः । **अन्यथेति** । द्वयोरपि निरवकाशत्व इत्यर्थः । **वाक्याप्रामाण्येति** । उपक्रमाद्यवान्तरवाक्याप्रामाण्येत्यर्थः । **अर्थान्तरकल्पनम् इति** । व्याख्यात्रा बलादर्थान्तरे लक्षणादिनाऽर्थान्तरकरणमित्यर्थः । यथा स्वभावप्रबलोपपत्तिविरोधेन तत्वमसीति सामानाधिकरण्येनैक्यपरवाक्यस्य तत्सदृशः त्वमसीति गौणार्थग्रहणमिति भावः । **अर्थान्तरवाचित्वमिति** । व्याख्यातृव्यापारमनपेक्ष्य स्वरसतोऽर्थान्तरशक्तिरित्यर्थः । यथा तत्रैवातत्वमसीति पदविभागेन भेदपरत्वम् । यथा वा नित्यं हरिर्यच्चरणाभिवन्दनादित्यादौ हर्यादिशब्दानां स्वत एवेन्द्रादिपरत्वमिति ।

ननूत्तरत्र श्रुतिलिङ्गसमाख्यावाक्यप्रकरणस्थानैरपि निर्णयो दृश्यत इति कथं सप्तानामेवोक्तिरित्यत आह । **अत्रेति** । तुशब्दो भाष्ये अवधारणार्थतया तदेवेति व्याख्यात इत्यभिप्रेत्य तद्व्यावर्त्यम् अज्ञानां प्रतीयमानमपीति भाष्य एव व्यक्तमिति भावेन व्याचष्टे । **पाशुपतादीति** ।

उपक्रमादीति प्रसिद्धं पदं परित्यज्य यौगिकान्वयपदग्रहणकृत्यमाह । **पाशुपताद्युक्त्यादेरिति** । भाष्यं समग्रं सूत्रारूढं दर्शयति । **तैश्चेति** । सम्यङ्निरूप्यमाण इति भाष्यं सूत्रे समित्यनन्तरं निरूप्यमाणेति

(वाक्यार्थमुक्तावली)

शेषपरमित्यभिप्रेत्य तस्य विशेष्यापेक्षायामाह । **शास्त्र इति** । ततश्चायं सूत्रार्थः । अन्वयादुपक्रमादिलिङ्गैः सम्यक् शास्त्रे प्रविचार्यमाणे सति समन्वयात् सर्वेषां शब्दानां शक्तितात्पर्याभ्यां परमात्मन्यन्वयात् सम्बन्धावगमात् तदेव ब्रह्म 'सं' शास्त्रयोनि सकलशास्त्रमुख्यप्रतिपाद्यमिति । व्यक्तमेव तत्सुधायाम् । अन्वयशब्दस्योपक्रमाद्यर्थत्वं भाष्ये स्पष्टम् । संशब्दस्यावृत्या शास्त्रे विचार्यमाण इत्यध्याहृतसम्बन्धोऽपि । तैः सम्यक्प्रविचारित इत्येतद्व्याख्यापरसुधानुसारेण स्पष्टः । तमेव समन्वयं प्रकटयतीत्युत्तरभाष्यपर्यालोचनयाऽन्वयादित्यस्यावृत्या सर्वशब्दानां परमात्मन्येव शक्तितात्पर्याभ्यां सम्बन्धादित्यपि लभ्यते । शास्त्रयोनीत्यनुवृत्तिस्तु स्फुटा । 'सं'शब्दस्य पुनर्द्विरावृत्या सकलशास्त्रेति मुख्येति चार्थलाभस्तु ईक्षत्यधिकरणे तदुभयाक्षेपेणात्र भाष्ये च मां विधत्त इत्यादिप्रमाणोपन्यासेन ज्ञायत इति । अत एव मां विधत्त इत्यादिभाष्यमुन्मूलमिति निरस्तम् । अप्रियादपोह्य इति अभिप्रायात्सुरापानादेरहमपोह्यः व्यावर्त्यः न तु सोमपानादिव पूज्यः । तथा च भगवत्प्रीत्यै न सुरां पिबेदिति लभ्यत इति भावः । इत्यस्या इत्यत्रेतिशब्दार्थमाह । **एवमिति** । इत्यस्या इत्यत्र विद्यमानेतिशब्दस्येति हृदयमित्यनेनान्वयमाह । **इत्यभिप्रायमिति** ।

ननु जन्मादिकारणत्वपराणां वाक्यानां समन्वयप्रतिज्ञानं सूत्रे सङ्गतं किं सर्वशब्दसमन्वयप्रतिज्ञानेनेत्यत आह । **जन्मादिकारणत्वोक्त्युपलक्षितेति** । स्पष्टमेतदनुव्याख्याने । 'जन्माद्यस्येति सूत्रेण गुणसर्वस्वसिद्धये । ब्रह्मणो लक्षणं प्रोक्तम्' इत्यादिना ।

## तत्त्वसुबोधिनी

।। ॐ तत्तु समन्वयात् ॐ ।। श्रुत्यधिकरणसङ्गती दर्शयति । **कारणस्येति** । **तद्यदेति** । तथा च यत्पूर्वाधिकरणे शास्त्रयोनित्वेन जगत्कारणत्वमुक्तं तस्यातिव्याप्त्या पूर्वपक्षोत्थानात् अनन्तरसङ्गतिरिति भावः । पूर्वपक्षमुपपादयति । **पाशुपतादीति** । **न च तस्येति** । पाशुपतादिशास्त्रस्येत्यर्थः । **तेषामिति** । रुद्रादीनामित्यर्थः । **अस्तु रुद्रादीनामिति** । पाशुपतादेरिति शेषः । उक्तरीत्येति । साङ्ख्ययोग इत्युक्तरीत्या इत्यर्थः । **ननु प्रतीतिसध्रीचीनस्य पाशुपतादेः प्रमाणान्तरासिद्धेति** । प्रमाणलक्षणटीकारीत्याऽत्रापि प्राचुर्येणेत्यपि ग्राह्यम् । अन्यथा प्रमाणसम्प्लववादिनाम् अस्माकं मते असम्भवः स्यात् । तदुक्तरीत्या ऐकरूप्यमप्यत्र सङ्ग्राह्यम् । अथवा उपक्रमोपसंहारावित्यत्र उपक्रमश्चोपसंहारश्च उपक्रमोपसंहारौ मिलिताविति व्याख्यानविवेकेनैव तदपि लब्धमिति बोध्यम् । कर्तृनामनिर्देशपूर्वकम् इतिहासः परकृतिः । सामान्यतः कथाकथनं पुराकल्पः । उपक्रमादीनामिति । उपक्रमादीनाम् इदमेतत्परम्

(तत्त्वसुबोधिनी)

अबाधे सत्येतदुपक्रमत्वादित्यादिरूपेण महावाक्यतात्पर्यनिर्णये उपपत्तित्वेऽपि स्वार्थे आगमत्वमेव नैवमुपपत्तौ । किन्तु स्वार्थेऽपि लिङ्गरूपा तात्पर्येऽपि अयं तात्पर्यविषय उपपन्नत्वादित्यनेन रूपेण लिङ्गरूपैवेति विशेषात् पृथगुक्तिरिति भावः । ननु तात्पर्यनिर्णायकेषु उपक्रमस्य प्रथमत्वात् अन्वय उपक्रमादि लिङ्गमिति वक्तव्यम्, उपपत्त्यादि लिङ्गमिति कथमुक्तमित्यत आह ॥ **उपक्रमादीनामिति** ॥ उपक्रमादीनां सङ्ग्राहकं यदुपपत्तेरादित्वेन ग्रहणं तस्य उत्तरोत्तरप्राबल्यज्ञापनार्थत्वान्नानुपपत्तिरिति भावः । उत्तरोत्तरप्राबल्यमेवोपपादयति । **उपसंहारस्येत्यादिना** । **मुख्यस्येति** । प्राचुर्येणाप्राप्तस्येत्यर्थः । **फलमात्रादिति** । असाधने प्रत्यवायवचनादिरहितादित्यर्थः । नन्वेषां परस्परविरोधे कथं निर्णय इत्यत आह । **विरोधे त्विति** । समत्वे कथं निर्णय इत्यत आह । **साम्य इति** । उपक्रमादिद्वयस्य समस्तविरोधे निरवकाशेन सावकाशं बाध्यत इत्यर्थः । एकस्य बहुत्वेन प्राबल्यमेकस्य जात्या प्राबल्यमिति वा उपपत्त्यादीनां श्रुत्यादिभिः सह यथा साम्यमिति वा द्रष्टव्यम् । **स्वभावदुर्बलेनेति** । उपजीवकत्वादिनेति शेषः । **स्वभावप्रबलस्येति** । उपजीव्यत्वादिनेति शेषः । निरवकाशस्य एकस्य सावकाशानेक विरोधे कथं निर्णय इत्यत आह । **एकेनेति** । निरवकाशेनेत्यनुवर्तते । **अन्यथेति** । द्वयोरपि निरवकाशत्वे इत्यर्थः । **अर्थान्तरकल्पनमिति** । व्याख्यात्रा कर्तव्यमित्यर्थः । तथा चेदं दुर्बलत्वमिति भावः । **स्वयमर्थान्तरवाचित्वमिति** । व्याख्यातृव्यापारमनपेक्ष्येत्यर्थः । **अत्र श्रुत्यादिषट्कं च ग्राह्यमिति** । अत्र सूत्रे अर्थनिर्णायकश्रुत्यादिकमपि विवक्षितमिति नानुपपत्तिरिति भावः । अत्र सूत्रे उपक्रमादिति प्रसिद्धं पदं परित्यज्य यौगिकान्वयपदग्रहणेनेदं सूचितम् । शास्त्रस्यास्मिन्नर्थे तात्पर्यमस्तीति ज्ञाने आपातप्रतीतिः व्याख्यातृवचनं वा न लिङ्गं किन्तु उपक्रमादय एव तेषामव्यभिचारित्वात् प्रतीतिव्याख्यानयोस्तु व्यभिचारित्वात् । यत्रापि तयोः न व्यभिचारः तत्रापि उपक्रमाद्यनुसन्धानपूर्वकत्वादेव इत्युपजीव्यत्वात् उपक्रमादीनामेव तात्पर्यलिङ्गत्वमिति । संशब्दस्य त्रयोऽर्थाः । वचनवृत्त्येति । सर्वेति । सम्यगिति । तत्र सम्यगित्यस्याध्याहृतप्रविचारित इति क्रियया सम्बन्धः । सम्यक्प्रविचारणं च उपक्रमादीनां श्रुत्यादीनां च सावकाशत्वादिना बलाबलनिश्चयपुरःसरं दुर्बलेन प्रबलाबाधेन वाक्यार्थविमर्श एव । अन्वयादित्येकवचनं समुदायार्थम् । तेन च तेषां अविरोधः सूचितो भवतीति । शास्त्रयोनीति पूर्वसूत्रादनुकर्षः । तच्छब्दार्थो ब्रह्म । तुशब्दोऽवधारणे । अन्वयादित्यस्यावृत्तिः । तथा चैवं सूत्राक्षरार्थः सम्पन्नः । अन्वयादुपक्रमादिलिङ्गसमुदायात् शास्त्रे सम्यक् प्रविचारिते सति सर्वशास्त्रस्य भगवत्येव सम्यक् वचनवृत्त्या अन्वयात् शक्तितात्पर्यार्थलक्षणसम्बन्धावगमात् तद्विष्णाख्यं ब्रह्मैव जगज्जन्मादिकारणत्वेन शास्त्रयोनि न तु हरादय इति । न च जन्माद्यस्य यत इति यच्छब्दश्रवणात्

(तत्त्वसुबोधिनी)

तद्ब्रह्मेति प्रकृतं तदेवानुवर्तिष्यत इति किन्तच्छब्दग्रहणेनेति वाच्यम् । तुशब्दस्तावदितरव्यावृत्त्यर्थ-मवश्यापेक्षितः । तत्र तच्छब्दाभावे तस्यान्वयो न ज्ञातुं शक्यते यतोऽवधारणं ततोऽन्यत्र निषेध इति वचनात् । न चानुवृत्तेनान्वय इति वाच्यम् । श्रुतेनान्वयादित्यनेनैव सम्बन्धप्रतीतिप्रसङ्गात् । न च तदनुपयोगः । प्रतीतिव्याख्याननिरासस्यैव प्रयोजनवत्वात् । तथा च तन्निरासाय सूत्रे तच्छब्दग्रहणं सार्थकमिति । **कर्मविधात्रीति ।** योग्यतया कर्मणां कार्यत्वेन सम्बन्धः । **मां प्रत्येवेति ।** मदर्थमेवेत्यर्थः । **अप्रियादपोह्य इति ।** सुरापानादिकं मदप्रीतिसाधनत्वान्निषिध्यत इत्यर्थः । इत्यस्या इत्यत्र इतिशब्दं व्याचष्टे । **एवम्भूताया इति ।** कर्मविधात्र्यादिरूपाया इत्यर्थः । **इत्यभिप्रायम् इति ।** अनेन अस्या हृदयमित्यनयोर्मध्ये मां विधत्ते मां विकल्पोऽपोह्य इत्येतत् योजनीयमित्युक्तं भवति । **उपलक्षितानन्तेति ।** अस्मिन्नधिकरणे शास्त्रपदवाच्यानन्तवेदादिसदागमानां जन्मादिकारणत्वलक्षणतदितरानन्दादि-गुणप्रतिपादकानां समन्वयस्योक्तत्वादिति भावः ॥

## वाक्यार्थविवरणम् ।

भवति अस्ति । **अन्यथेति ॥** उभयोरपि निरवकाशत्वे परस्परविरोधेन वाक्याप्रामाण्यापत्तेरिति भावः ॥ **अर्थान्तरकल्पनमिति ॥** यथा एकीभवन्तीत्यादेः स्वभावप्रबलेन द्वा सुपर्णेत्यादिवेदवाक्येन विरोधे सति तत्प्रामाण्याय स्थानैक्यादिरूपार्थान्तरव्याख्यानं तथाऽत्र कर्तव्यम् । न सोऽर्थः पदमहिम्ना लभ्यते इति यावत् । सावकाशत्वं तु स्वयमेव व्याख्यातृव्यापारमनपेक्ष्यैव पदमहिम्नैवार्थान्तरवाचित्वम् । यथेन्द्रादिशब्दानां महोयोगवृत्त्या भगवद्वाचित्वम् । तथा च स्वभावप्रबलेन दुर्बलस्य बाधे सति तत्प्रामाण्याय व्याख्यात्रा कल्प्यमानार्थान्तरत्वं दुर्बलत्वम् । व्याख्यातृव्यापारमनपेक्ष्य स्वमहिम्नै-वार्थान्तरवाचित्वं सावकाशत्वमित्यर्थः । दुर्बलत्वलक्षणे कल्पनापदोपरि भारः । सावकाशत्वलक्षणे वाचित्वपदोपरि भार इति द्रष्टव्यम् ॥ ४ ॥

## वाक्यार्थमञ्जरी

**जगत्कारणत्वेन** जगत्कारणत्वमित्यनेन प्रकारेण । एवमग्रेऽपि । तज्जगत्कारणत्वेन शास्त्रयोनित्वम् । **पूर्वोक्तिः** कारणस्य शास्त्रयोनित्वाद्विष्णुरेव कारणमित्युक्तिः । प्रतीतिः "एको रुद्रो न द्वितीयोऽवतस्थे" 'एको नारायण आसीदि'त्यादिना । अप्रमाण्येन नैव शास्त्रं कुवर्त्म तदित्युक्तरीत्या । **प्रतीतिसध्रीचीन-स्येति ।** प्रतीतिसाहित्येन समीचीनस्येत्यर्थः ॥

(वाक्यार्थमञ्जरी)

ॐ तत्तु समन्वयात् ॐ ।। जन्मादिकारणत्वेन शास्त्रगम्यं तत्तु विष्ण्वाख्यं ब्रह्मैव कुतः समन्वयात् बलाबलत्वादिना सम्यग्विचारितोपक्रमादिप्रमाणादित्यर्थः । प्रकरणादिरुपक्रमः तदन्तः उपसंहारः इत्यस्य स्फुटत्वादभ्यासादेर्लक्षणमाह । **एकप्रकारेत्यादिना** । असकृत् अनेकवारं यथा अहो दर्शनीयाऽहो दर्शनीयेत्यादि । ननु समिधो यजति इडो यजति तनूनपातं यजति बर्हिर्यजति स्वाहाकारं यजति इति भिन्नप्रकारयुते अभ्यासे इदं लक्षणमव्याप्तम् । न च तत्रापि यजत्यंशे एकप्रकारोऽस्तीति वाच्यम् । तथात्वे घटोऽस्ति पटोऽस्ति इत्यत्रातिव्याप्तेः । तत्राप्यस्तित्वांशे एकप्रकारोक्तिसत्वादिति चेत् । सत्यम् । अभ्यासो द्विविधः तात्पर्यनिश्चायकः कर्मभेदप्रयोजकश्च । तत्राद्यः एकप्रकारासकृदुक्तिरूपः । अपरस्त्वसकृदुक्तिमात्ररूपः । इदानीं तात्पर्यनिश्चायकस्यैव लक्ष्यत्वान्नेतरत्रातिव्याप्तिरिति ।। **प्रमाणान्तरेणासिद्धार्थतेति** ।। प्रमाणान्तरेणाग्राह्यतेत्यर्थः । यथेश्वरसार्वज्ञप्रतिपादकं यः सर्वज्ञ इत्यादि । नन्वेतदनुपपन्नम् । ईश्वरसार्वज्ञस्य स्मृतिवाक्येन कार्यत्वाद्यनुमानेन च प्राप्तत्वेन मानान्तराप्राप्तत्वाभावादिति चेन्न । प्रमाणलक्षणटीकानुसारेण प्राचुर्येणेति पूरणात् । तथा च स्वबोधनीयपुरुषगताज्ञानादिविरोधिना स्वानुपजीविमानान्तरेणाग्राह्यार्थत्वं पर्यवस्यति । अस्यार्थः स्वं शब्दस्तेन बोधनीयो यः पुरुषस्तद्गतं यदज्ञानादि तद्विरोधिनां स्वं शब्दस्तदनुपजीविमानान्तरेणाग्राह्यार्थत्वमिति । अत्र स्वानुपजीविमानान्तरेणेत्यनेनोक्तचोद्यनिरासः । स्मृतिवाक्यकार्यत्वाद्यनुमानयोः शब्दोपजीवित्वात् । तावन्मात्रस्य लक्षणत्वे असम्भवः सार्वज्ञादिरूपवेदार्थस्य शब्दानुपजीवीश्वरप्रत्यक्षग्राह्यत्वात् । अतः स्वबोधनीयपुरुषगताज्ञानादिविरोधिनेति । ईश्वरस्य वेदबोधनीयत्वाभावात् वेदबोधनीयास्मदादिगताज्ञानादिकं प्रतीश्वरप्रत्यक्षस्य विरोधित्वासम्भवाच्चासम्भवपरिहारः । टीकानुसारेण प्रमाणान्तराप्राप्तार्थत्वमित्युक्ते प्रत्यक्षापेक्षया पूर्वं प्रवृत्ते अग्निर्हिमस्य भेषजमित्यादिवाक्येऽतिव्याप्तिः । तत्रापि स्वबोधनीयपुरुषगताज्ञानादिविरोधिना स्वानुपजीविना स्पार्शनप्रत्यक्षेण वह्न्यौष्ण्यस्याप्राप्तत्वात् । अतो मानान्तराग्राह्येति । औष्ण्यस्य प्रत्यक्षाप्राप्तत्वेऽपि तद्ग्रहणयोग्यत्वेन तदग्राह्यत्वाभावान्नातिव्याप्तिरिति । **फलवत्त्वमिति** । फलप्रतिपादकत्वमित्यर्थः । यथाऽमृतो वाव सोमपोऽभवतीत्यादिरर्थवाद इत्यभियुक्तप्रयोगो वा विधिशेषत्वं वाऽर्थवाद इति तल्लक्षणस्य स्फुटत्वात् तद्विशेषानेवाह ।। **स्तुतिरिति** ।। वायुर्वै क्षेपिष्ठा देवतेत्यादि स्तुतिः । प्लवा ह्येते अदृढा यज्ञरूपा इत्यादि निन्दा । कर्तृनामनिर्देशपूर्वकमितिहासः परकृतिः । यथा जनको वैदेह आसाञ्चक्रेत्यादि । सामान्यतः कथाकथनं पुराकल्पः । यथाऽत्र य उद्गीथे कुशला बभूवुरित्यादि ।

(वाक्यार्थमञ्जरी)

**युक्तिरिति** ।। पूर्णत्वापूर्णत्वाभ्यां जीवेशभेदप्रतिपादकम् । भिन्नोऽचिन्त्यः परमो जीवसङ्घात् पूर्णः परो जीवसङ्घोह्य पूर्ण इत्यादि ।

उपक्रमोपसंहाराविति भाष्ये प्रत्येकविवक्षया द्वाविव समुदायविवक्षया तदैकरूप्यमपि विवक्षितम् । तट्टीकायां तदनुक्तिश्च कण्ठतोऽनुक्तत्वादिति ध्येयम् । ननूपक्रमादीनामुपपत्तेः सकाशात् पृथगुक्तिरयुक्ता । इदं वाक्यमेतत्परम् अबाधे सत्येतदुपक्रमवत्वादित्यादिरूपेण तेषामपि महावाक्यतात्पर्ये उपपत्तिरूपत्वादित्यत आह ।। **उपक्रमादीनामिति** ।। सन्यासिनां ब्राह्मणत्वेऽपि ब्राह्मणे अविद्यमानदण्ड-मुण्डतादिविशेषवत्वाद्यथा पृथगुक्तिः तथोपक्रमादीनां तात्पर्यनिर्णये उपपत्तित्वेऽपि अवान्तरवाक्यार्थ-रूपस्वार्थे आगमरूपत्वम् । उपपत्तेश्च अयं तात्पर्यविषय उपपन्नत्वादिति तात्पर्यनिर्णय इव ईश्वरो भिन्नः पूर्णत्वादित्यादिस्वार्थेऽप्युपपत्त्याप्तिरूपत्वम् । अतो विशेषादुपपत्तेः सकाशादुपक्रमादेः पृथगुक्ति-रित्यर्थः । उदाहृतवाक्ये उपक्रमस्य प्राथम्यश्रवणादन्वय उपपत्त्यादि लिङ्गमिति कथमुक्तमित्यत आह । **उपक्रमादीनामिति** ।। अत्रानुव्याख्यानसंमतिमाह ।। **उपक्रमेति** ।। उत्तरोत्तरप्राबल्यमुपपादयति । **उपसंहारस्येत्यादिना** ।। **व्याख्यानरूपत्वेनेति** ।। तत्सत्यमित्युपक्रमे श्रुतसत्यशब्दव्याख्यानं सदिति प्राणः अतीत्यत्रं यदित्यासवादित्य इत्युपसंहारेण क्रियते । अन्यथा प्रथमप्राप्तोपक्रमेणैवार्थबोधे प्रयोजनान्तराभावेनोपसंहारस्य वैय्यर्थ्यं स्यादिति भावः ।। **उपक्रमाप्रामाण्येति** ।। निश्चितप्रामाण्य-व्याख्यानानुसारेण निश्चेतव्यप्रामाण्यव्याख्येयबाधस्य न्यायत्वादिति भावः ।। **प्राबल्यमिति** ।। सत्यशब्दादन्यप्राप्तिनिषेधकोदाहृतस्थल एव दृष्टत्वादिति भावः । **बहूक्तेः प्राबल्यादिति** ।। बहुबाधस्यान्याय्यत्वादिति भावः ।। **प्राबल्यमिति** ।। यथा ''तस्यैष एव शारीर आत्मे''ति शारीरशब्द-बलाज्जीवप्रापकोपसंहारापेक्षया ''असद् ब्रह्मेति वेद चेदस्ति ब्रह्मेति चेद्वेदेति'' ब्रह्मशब्दाभ्यासस्य प्राबल्यम् । अत्रोपक्रमात्प्राबल्यकथनं वस्तुस्थितिप्रदर्शनार्थं न त्वावश्यकम् । उपसंहाराधिक्येनैवोप-क्रमाधिक्यसिद्धेः । उपसंहाराधिक्यस्यैवोपपादनाच्च । एवमग्रेऽपि ।। **मुख्यस्येति** ।। प्राचुर्येणाप्राप्तस्येत्यर्थः । असकृदावृत्तस्यापि सम्भवदनेकार्थस्य स्वारसिकप्राप्तार्थत्यागेनावैय्यर्थ्यायाप्राप्तार्थताया आवश्यकत्वादिति भावः ।। **प्राबल्यमिति** ।। यथा ''जीवाद्भवन्ति भूतानि जीवे तिष्ठन्त्यचञ्चलाः । जीवे तु लयमिच्छन्ति'' इति जीवशब्दाभ्यासापेक्षया प्रत्यक्षसिद्धं यत्किञ्चिद्भूतकर्तृजीवं विना ब्रह्मग्रहणेनापूर्वतायाः प्राबल्यम् ।। **उद्देश्यत्वादिति** ।। अपेक्ष्यत्वादित्यर्थः । अप्राप्ते निष्फले तात्पर्यादर्शनात् प्राप्तेऽपि सफले तात्पर्य-दर्शनादिति भावः ।। **प्राबल्यमिति** ।। यथा ब्रह्मोत्पत्तिप्रतिपादकत्वेनापूर्वतायुक्तादप्यसतः सदजायतेति

(वाक्यार्थमञ्जरी)

वाक्यात् ब्रह्मानुत्पत्तिप्रतिपादकत्वेन तत्प्रीत्या मोक्षरूपफलवतः सदेव सौम्येति वाक्यस्य प्राबल्यम् ॥ **फलमात्रादिति** ॥ इष्टानिष्टकथनशून्यादित्यर्थः ॥ **प्राबल्यमिति** ॥ यथामृतो वावेति फलवाक्यात्काम्यकरणे अनिष्टकथनस्य प्लवा ह्येते अदृढा यज्ञरूपा इति निन्दारूपार्थवादस्य प्राबल्यम् ॥ **सर्वमूलत्वेनेति** ॥ उक्तरीत्योपक्रमादेरप्युपपत्तिरूपेण तात्पर्यनिश्चायकत्वादिति भावः ॥ **प्राबल्यामिति** ॥ यथा तस्य तावदेव चिरमित्याद्यर्थवादोपेतादप्यभेदवाक्याद्भिन्नोऽचिन्त्य इत्यादिसोपपत्तिकभेदश्रुतेः प्राबल्यम् । लिङ्गमित्येकवचनं घटयंश्चतुर्थपादार्थमाह ॥ **एतदिति** ॥ यदर्थमुत्तरोत्तरप्राबल्यनिरूपणं तदाह । **विरोध इत्यादिना बाध इत्यन्तेन** । उपक्रमादिष्वन्योन्यविरोध इत्यर्थः । एतदुदाहरणं पूर्वोक्तमेव ध्येयम् ॥

**साम्य इति** ॥ उपक्रमादिद्वयस्योपसंहारद्वयस्य वा समस्य विरोधे निरवकाशेन सावकाशं बाध्यमित्यर्थः । यथा प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति प्राणब्रह्मणोरुपक्रमेऽपि श्रुतिलिङ्गादिना निरवकाशब्रह्मोपक्रमेण प्राणोपक्रमबाधः ॥ **स्वभावेति** ॥ उपक्रमादावुत्तरत्वं स्वभावप्राबल्यनियामकम् ॥ **बाधो भवतीति** ॥ यथाऽदितेरदितित्वमिति स्वभावप्रबलोपसंहाराददितिप्रतीतावपि नैवेह किञ्चनेति निरवकाशोपक्रमेण सावकाशोपसंहारस्य बाधः । एकेन निरवकाशेन अनेकेषां सावकाशानां बाध इति । यथा एकमेवाद्वितीयं तत्त्वमस्यथ सम्पत्स्यत इत्यभेदप्रापकाणां क्रमेणोपक्रमोपसंहारफलानां शकुनिसूत्रदृष्टान्तोपपादकभेदोपपत्त्या बाधः । ननु बाधे सत्यर्थान्तरपरत्वं सावकाशत्वं दुर्बलत्वमपीदमेव । अर्थान्तरपरत्वाभावो निरवकाशत्वम् । प्राबल्यमपीदमेवातो बाध्यत्वे सावकाशत्वं बाधकत्वे निरवकाशत्वं प्रयोजकमित्येव वाच्यम् । न तूभयोरुभयत्र प्रयोजकत्वमिति शङ्कते ॥ **नन्विति** ॥ निर्णयः । बाध्यबाधकव्यवस्था । अन्यथा द्वयोरपि निरवकाशत्वे ॥ **वाक्येति** ॥ उपक्रमाद्यवान्तरवाक्येत्यर्थः । वाक्यार्थे द्वैरूप्यायोगादिति भावः । अर्थान्तरपरत्वसाम्येऽपि व्याख्यातृव्यापारसापेक्षत्वनिरपेक्षत्वाभ्यां विशेष इत्याह ॥ **मैवमिति** ॥ **अर्थान्तरकल्पनमिति** ॥ बलाल्लक्षणादिनाऽर्थान्तरकल्पनं व्याख्यात्रा कार्यमित्यर्थः । इदं दुर्बलत्वं नाम यथोपजीव्यत्वादिना प्रबलभेदग्राहिसाक्ष्यादिप्रमाणविरोधेन तत्त्वमसीत्यादेः सादृश्ये लक्षणा । स्वयं व्याख्यातृप्रयासमनपेक्ष्य यथां निरवकाशपरोवरीयस्त्वादिलिङ्गविरोधेनाकाशश्रुतेरासमन्तात्काशत इत्याकाश इति योगेन विष्णुपरत्वम् । सावकाशत्वदुर्बलत्वयोर्भेदे तद्विरुद्धनिरवकाशत्वप्राबल्ययोर्भेदः स्फुट एवेति नोक्तः । ननूपक्रमादीनां सप्तानामेव तात्पर्यलिङ्गत्वे कथमुत्तरत्र श्रुत्यादिना निर्णय इत्यत आह ॥ **अत्रेति** ॥ **उपपत्त्यादीति** ॥ भाष्ये आदिपदार्थत्वेनेत्यर्थः । तत्स्वरूपं वामनाधिकरणे स्फुटीभविष्यतीति भावः । तर्ह्युपक्रमादिभिरेव रुद्रादिनिर्णयोऽस्त्वित्यत आह ॥

(वाक्यार्थमञ्जरी)

**तैश्चेति** ॥ कर्मविधात्री प्रातः सन्ध्यामुपासीतेत्यादिका । विष्णोः सिद्धत्वेन विधेयत्वाभावादाह ॥ **मां प्रत्येवेति** ॥ मत्प्रीत्यर्थमेव कर्मादि विधत्त इत्यर्थः । इन्द्राद्यभिधात्री । इन्द्र श्रेष्ठानीत्यादिका । मामभिधत्ते परममुख्यवृत्त्या । विविधरूपत्वेन वासुदेवादिरूपत्वेन । कल्प्यः ज्ञेयः । अप्रियत्वादपोह्य इति मदप्रीतिसाधनत्वादेव सुरापानादिकं निषिध्यत इत्यर्थः । इत्यस्याः इत्यत्रेतिशब्दं व्याचष्टे ॥ **एवम्भूताया इति** ॥ इत्याभिप्रायमिति ॥ अनेनास्या हृदयमित्यनयोर्मध्ये मां विधत्त इत्यादि योज्यमित्युक्तं भवति ॥ **उपलक्षितानन्तेति** ॥ अस्मिन्नधिकरणे शास्त्रपदवाच्यानन्तवेदादिसदागमानां जन्मादिकारणत्वादिलक्षणं तदितरानन्दादिगुणप्रतिपादकानां समन्वयस्योक्तत्वादिति भावः ॥ ४ ॥

## विवृतिः

श्रुत्यधिकरणसङ्गती दर्शयति ॥ **कारणस्येति** ॥ **तद्यदेति** ॥ तथा च पूर्वाधिकरणे शास्त्रयोनित्वेन जगत्कारणत्वमुक्तम् । तस्यातिव्याप्त्या पूर्वपक्षोद्धारादनन्तरसङ्गतिरिति भावः । पूर्वपक्षमुपपादयति ॥ **पाशुपतादीति** ॥ **न च तस्येति** ॥ पाशुपतादिशास्त्रस्येत्यर्थः ॥ **असाधकत्वं** रुद्रादेः कारणत्वा-साधकत्वम् ॥ **तेषामिति** ॥ रुद्रादीनामित्यर्थः ॥ अस्तु रुद्रादीनां कारणत्वेन प्रतीतिः । ततः किमित्यत आह ॥ **प्रतीतीति** ॥ पाशुपतादेरिति शेषः ॥ **उक्तरीत्येति** ॥ साङ्ख्यं योग इत्युक्तरीत्येत्यर्थः ॥ ननु प्रतीति सध्रीचीनस्य पाशुपतादेः प्रामाण्योपपत्तिरित्युक्तमित्यत आह ॥ **प्रतीतेरिति** ॥ **प्रमाणान्तरसिद्धेति** ॥ प्रमाणलक्षणटीकारीत्याऽत्रापि प्राचुर्येणेत्यपि ग्राह्यम् ॥ अन्यथा प्रमाणा-सम्भवादीनामस्माकं मतेऽसम्भवः स्यात् । तदुक्तरीत्या ऐकरूप्यमप्यत्र सङ्ग्राह्यम् । अथवोपक्रमोप-संहारावित्यत्रोपक्रमश्चोपसंहारश्चोपक्रमोपसंहारौ मिलिताविति व्याख्यानविवेकेनानेनैवैतदपि लब्धमिति बोध्यम् । कर्तृनामनिर्देशपूर्वकमितिहासः परकृतिः, सामान्यतः कथाकथनं पुराकल्पः । ननु उपक्रमादीनामुपपत्तित्वादुपपत्तिग्रहणेनैवोपक्रमादिग्रहणे सिद्धे तेषां पृथगुक्तिर्व्यर्थेत्यत आह ॥ **उपक्रमादीनामिति** ॥ उपक्रमादीनां तात्पर्यार्थनिर्णये उपपत्तित्वेऽपि स्वार्थे आगमत्वमेव नैवमुपपत्तेरिति विशेषात् पृथगुक्तिरिति भावः ॥

ननु तात्पर्यनिर्णायकेषूपक्रमस्य प्रथमत्वादन्वय उपक्रमादिलिङ्गमिति वक्तव्यम्, उपपत्यादिलिङ्गमिति कथमुक्तमित्यत आह ॥ **उपक्रमादीनामिति** ॥ उपक्रमादीनाम् । सङ्ग्राहकं यदुपपत्तेरादित्वेन भाष्यं तदित्यर्थः ॥ तेषामुपक्रमादीनां तथा चोपपत्तेरादित्वेन ग्रहणस्योत्तरोत्तरप्राबल्यसूचनार्थत्वान्नानुपपत्तिरिति

(वितृतिः)

भाव: । **ब्राह्मणपरिव्राजकन्यायेनेति** ॥ उपक्रमादीनां तात्पर्यनिर्णये उपपत्तित्वेति स्वार्थे आगमत्वमेव नैवमुपपत्तेरिति विशेषादिति भावः ॥ उत्तरोत्तरप्राबल्यमेवोपपादयति ॥ **उपसंहारस्येत्यादिना** ॥ **मुख्यस्येति** ॥ प्राचुर्येण प्राप्त्यस्येत्यर्थः ॥ **मूलमात्रादिति** ॥ असाधने प्रत्यवायवचनादिरहितादित्यर्थः ॥ नन्वेषां परस्परविरोधे कथं निर्णय इत्यत आह ॥ **विरोधे त्विति** ॥ समत्वे कथं निर्णय इत्यत आह ॥ **साम्य इति** ॥ उपक्रमादिद्वयस्य समस्तविरोधे निरवकाशेन सावकाशं बाध्यत इत्यर्थः । एकस्य बहुत्वेन प्राबल्यमेकस्य जात्या प्रबलत्वमिति वोपपत्यादीनां श्रुत्यादिभिः सह यथा साम्यमिति द्रष्टव्यम् । निरवकाशस्यैकस्य सावकाशानेकविरोधे कथं निर्णय इत्यत आह ॥ **एवमेकेनेति** ॥ निरवकाशेनेत्यनुवर्तते ॥ **अन्यथेति** ॥ द्वयोरपि निरवकाशत्व इत्यर्थः ॥ **अर्थान्तरकल्पनमिति** ॥ तथा चेदमेव निरवकाशत्वम् । एवं च स्वभावप्रबलेनापि निरवकाशेन स्वभावदुर्बलस्यापि निरवकाशस्य बाधे तस्य व्याख्यात्राऽर्थान्तरकल्पनं कर्तव्यमित्युभयोर्निरवकाशत्वेऽपि नोक्तवाक्याप्रामाण्यदोष इति भावः ॥ **अत्रेति** । अर्थनिर्णायकमिति शेषः । श्रुत्याद्यनुगुणेऽर्थे उपक्रमादिना तात्पर्यनिर्णय इत्यर्थः ॥ अन्यथा श्रुत्यादि विरोधे लिङ्गादेः प्रामाण्यमेव न स्यादिति भावः ॥ अत्र **श्रुत्यादिपट्कञ्च ग्राह्यमिति** ॥ अत्र सूत्रे अर्थनिर्णायकं श्रुत्यादिकमपि विवक्षितमिति नानुपपत्तिरिति भावः ॥ अत्र सूत्रे उपक्रमाति प्रसिद्धं पदं परित्यज्य यौगिकान्वयपदग्रहणेनेदं सूचितं शास्त्रस्यास्मिन्नर्थे तात्पर्यमस्तीति । ज्ञाने आपातप्रतीतिर्वा व्याख्यातृवचनं वा न लिङ्गं किन्तूपक्रमादय एव । तेपामव्यभिचारित्वात् । प्रतीति-व्याख्यानयोस्तु व्यभिचारित्वात् । यत्रापि तयोर्न व्यभिचारस्तत्राप्युपक्रमाद्यनुसन्धानपूर्वकत्वादेव, न स्वत इत्युपजीव्यत्वादुपक्रमादीनामेव तात्पर्यलिङ्गत्वमिति । संशब्दस्य त्रयोऽर्थाः ॥ **वचनवृत्त्येति** ॥ **सर्वेति** ॥ **सम्यगिति** ॥

अत्र सम्यगित्यस्याध्याहृतप्रविचारित इति क्रियया सम्बन्धः । सम्यक् प्रविचारणं चोपक्रमादीनां श्रुत्यादीनां च सावकाशत्वादिना बलाबलनिश्चयपुरःसरं दुर्बलेन प्रवलबाधया वाक्यार्थविमर्श एव । अन्वयादित्येकवचनं समुदायार्थम् । तेन च तेषामविरोधः सूचितो भवतीति ॥ शास्त्रयोनीति पूर्वसूत्रा-दनुकर्षः । तच्छब्दार्थो ब्रह्म । तुशब्दोऽवधारणे । अन्वयादित्यस्यावृत्तिः । तथा चैवं सूत्राक्षरार्थः सम्पन्नः । अन्वयात् उपक्रमादिलिङ्गसमुदायात् शास्त्रे सम्यक् प्रविचारिते सति सर्वशास्त्रस्य भगवत्येव सम्यक् वचनवृत्त्या अन्वयात् शक्तितात्पर्यलक्षणसम्बन्धावगमात्तद्विष्ण्वाख्यं ब्रह्मैव जगज्जन्मादिकारणत्वेन शास्त्रयोनि न तु हरादय इति । न च जन्माद्यस्य यत इति यच्छब्दश्रवणात् तद्ब्रह्मेति प्रकृतं

**(विवृतिः)**

तदेवात्रानुवर्तिष्यत इति किं तच्छब्दग्रहणेनेति वाच्यम् ॥ तुशब्दस्तदितरव्यावृत्यर्थमवश्यापेक्षितः । तत्र तच्छब्दाभावे तस्यान्वयो ज्ञातुं न शक्यते । यतोऽवधारणं ततोऽन्यत्र निषेध इति वचनात् । न चानुवृत्तेनान्वय इति वाच्यम् । श्रुतेनान्वयादित्यनेन सम्बन्धप्रतीतिप्रसङ्गात् । न च तदनुपयोगः । प्रतीतिव्याख्याननिरासस्यैव प्रयोजनत्वात् । तथा च तन्निरासाय सूत्रे तच्छब्दग्रहणं सार्थकमिति ॥ **कर्मविधात्रीति** ॥ योग्यतया कर्मणां कर्मत्वेनैव सम्बन्धः । **मां प्रत्येवेति** ॥ मत्प्रीत्यर्थमेवेत्यर्थः ॥ **अप्रियादपोह्य इति** ॥ सुरापानादिकं मदप्रीतिसाधनत्वान्निषिध्यत इत्यर्थः । इत्यस्या इत्यत्रेतिशब्दं व्याचष्टे ॥ **एवंभूताया इति** ॥ कर्मविधात्र्यादिरूपाया इत्यर्थः ॥ **इत्यभिप्रायमिति** ॥ अनेनास्या हृदयमित्यनयोर्मध्ये मां विधत्तेऽभिधत्ते मां विकल्प्योऽपोह्यः, इत्येतद्योजनीयमित्युक्तं भवति । **उपलक्षितानन्तेति** ॥ अस्मिन्नधिकरणे शास्त्रशब्दवाच्यानन्तवेदादिसदागमानां जन्मादिकारणत्वादि लक्षणतदितरानन्दादिगुणप्रतिपादकानां समन्वयस्योक्तत्वात् इति भावः ॥

**॥ इति समन्वयाधिकरणम् ॥**

## ५. ईक्षत्यधिकरणम्

ननु 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' (तै.उ.२-२२) ॥ 'अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्' (क.उ.१-३-१५) । 'अवचनेनैव प्रोवाच' (बाष्कलश्रुति) ॥ 'यद्वाचाऽनभ्युदितं येन वागभ्युद्यते । (क.उ.१-५) यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदं श्रुतम्' (के.उ.१-८) इत्यादिभिर्न तच्छब्दगोचरम् । नेत्याह ।

**॥ ॐ ईक्षतेर्नाशब्दम् ॐ ॥**

'स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते' (ष.प्र.उ.५-५) । 'आत्मन्येवात्मानं पश्येत् ॥ विज्ञाय प्रज्ञां कुर्वीत' (बृ.उ.६-४-२३, ६-४-२१) इत्यादिवचनैरीक्षणीयत्वाद्वाच्यमेव । औपनिषदत्वान्नावचनेनेक्षणम् ।

'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति' (क.उ.२-१५) । 'वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम्' (भ.गी.१५-१५) इत्यादिश्रुतिस्मृतिभ्यश्च ।

## सत्तर्कदीपावली

योऽयं सर्ववेदवाक्यपदसमन्वयो ब्रह्मणि प्रतिज्ञातः तं तावदाक्षिपति । यतो वाच इत्यादिश्रुतिभिः अशब्दत्वेन ब्रह्मणः प्रतिपादितत्वात् तत्रैकस्यापि पदस्य न समन्वयः किमु सर्ववेदसमन्वय इत्येतन्निषेधक-सूत्रमवतारयति ॥ **ईक्षतेरिति** ॥ व्याचष्टे **स इति** । न चाशब्दत्वेन श्रुत्युक्तत्वात्परमात्मनो तत्राशेष-श्रुतिसमन्वय इति न वाच्यम् । तं त्वौपनिषदं पुरुषमित्यस्यां श्रुतावुपनिषदेकसमधिगम्यत्वेन अनुमानाद्य-गोचरत्वस्योक्तत्वात् । अतः सर्ववेदवेद्यो विष्णुः । सर्वे वेदा यत्पदमामनन्ति इत्यादिश्रुतिवचनात् । एवं सति यतो वाच इत्यादिश्रुत्यर्थः क इत्यतोऽपेक्षितमर्थमाह ॥ **अवाच्येति** ॥ साकल्येन वक्तुमशक्यत्वेन अप्रसिद्धत्वात् । ब्रह्मणोऽवाच्यत्वादिव्यपदेश इत्येतत्सोदाहरणमाह ॥ **न तदिति** ॥ न च वाच्यमीक्षतेर्ना-शब्दमित्यनेन शब्दावाच्यत्वं मायावाद्यभ्युपगतं ब्रह्मणो न निषिध्यते किं तु प्रधानस्य जगत्कारणत्वं साङ्ख्याभ्युपगतं श्रुतिशब्दावाच्यत्वहेतुना निषिध्यत इति । अजामेकामित्यादिश्रुत्युक्तस्य प्रधानस्याशब्दत्वेन साङ्ख्यानभ्युपगतत्वादित्याह ॥ **न चेति** ॥

## तत्त्वप्रदीपिका

एवं तावद्ब्रह्मणो जिज्ञास्यत्वं प्रतिज्ञाय तस्य जन्मादिकारणत्वोक्त्या सर्वगुणपूर्णत्वं प्रदर्श्यायोगान्य-योगव्यवच्छेदेन शास्त्रगम्यत्वमुक्तम् । अत्रेदमसहमानैर्मायिभिराक्षिप्यते न ब्रह्म शास्त्रगम्यं, शब्दागोचरत्वात् । 'यतो वाचो निवर्तन्त' इत्यादिश्रुतेः । गोचरत्वे, घटादिवदब्रह्मत्वप्रसङ्गाच्च । औपनिषदत्वं तु, लक्षणया तत्रोपनिषद्वृत्तेरिति । तन्निराकरणायेदमधिकरणमारभ्यते । ॐ ईक्षतेर्नाशब्दम् ॐ । जीवघनो जीवसारो ब्रह्मा । तस्मात्तदुपदेशादित्यर्थः । ''तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मण'' इति, तमेव शास्त्रा-दाचार्याद्विज्ञाय प्रकृष्टमपरोक्षं ज्ञानमापादयेत् । ब्राह्मणो ब्रह्मनिष्ठः ।

'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति' इति । 'तप आलोचन' इति धातोरालोचनरूपा युक्तयस्तपांसि ।

## तत्त्वप्रकाशिका

अत्र ब्रह्मणो वाच्यत्वसमर्थनादस्ति शास्त्रसङ्गतिः । सकलजगज्जन्मादिकारणत्वेन ब्रह्मैव शास्त्रस्य मुख्यार्थ इत्यभिहितम् । उपक्रमादिभिर्निर्णीतस्य मुख्यार्थत्वात् । तच्च वाच्यत्व एव सम्भवतीति । तन्मुख्यतः शास्त्रयोनित्वं विषयः । ब्रह्मणो युक्तमयुक्तं वेति सन्देहः । वादिविप्रतिपत्तिः सन्देहबीजम् । तत्र पूर्वपक्षयति ॥ **नन्विति** ॥ न ब्रह्मणः शास्त्रमुख्यार्थत्वमुपपद्यते । यतस्तत 'यतो वाचो निवर्तन्ते'

(तत्त्वप्रकाशिका)

**इत्यादिश्रुतेः शब्दावाच्यम्। न ह्यवाच्यस्य शास्त्रमुख्यार्थता सम्भवति। अतो न शास्त्रोक्तकारणत्वं तस्येति भावः। अशब्दमित्यादेः शब्दादिगुणशून्यं तदविषयश्चेत्यर्थः। 'अवचनेनैव प्रोवाच' इति वचनवृत्तिं विना लक्षणयोपदिदेश। यच्छ्रोत्रेण न शृणोति पुरुषः। 'त्रयी न श्रुतिगोचरा' इति गोचरशब्दस्य विशेष्यलिङ्गतयाऽऽर्षप्रयोगान्न तच्छब्दगोचरमिति युक्तम्। सिद्धान्तयत्सूत्रमवतारयति ॥ नेति ॥ अत्र सूत्रकारो ब्रह्मणोऽवाच्यत्वं श्रुतिप्राप्तं प्रतिषेधतीत्यर्थः। सूत्रं व्याचष्टे। स इति ॥ स प्रणवोपासको जीवोत्तमहिरण्यगर्भोपदेशेन परमं पुरुषं पश्यति। परोक्षतो ब्रह्म विज्ञायाऽपरोक्षतो जानीयादित्यादिश्रुतिभिर्ब्रह्मण ईक्षणीयत्वावगतेस्तदन्यथानुपपत्त्या वाच्यमेव तदतस्तस्य शास्त्रयोनित्वोपपत्तेः कारणत्वसम्भव इत्यर्थः। नेक्षणीयत्वान्यथानुपपत्त्या ब्रह्मणो वाच्यत्वं वाच्यम्। ईक्षणस्य प्रत्यक्षादिनापि सम्भवादित्यत आह ॥ औपनिषदत्वादिति ॥ भवेदेतद्यदि ब्रह्म प्रत्यक्षादिगम्यम्। नैतदस्ति। तस्योक्तरीत्योपनिषदेकगम्यत्वात्। तथा च प्रत्यक्षाद्यवेद्यत्वे सतीक्षणीयत्वान्यथानुपपत्त्या वाच्यमेव तदिति भावः। परिशेषप्रमाणेन वाऽत्र वाच्यत्वं साध्यते। तथा हि। श्रुतिषु तावदीक्षणीयत्वं ब्रह्मणः श्रूयते। ईक्षणं च प्रमाणेन भवेत्। प्रसक्तप्रमाणेषु न ब्रह्मणो वचनेतरप्रमाणेनेक्षणम्। तस्यौपनिषदत्वात्। वचनेनेक्षणं चावाच्ये वृत्त्यन्तरायोगेन परिशेषाद्वाच्यत्वमेव साधयतीति।**

**ननु श्रुतिसिद्धमवाच्यत्वं कथं युक्तिमात्रेण दूष्यते। 'प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम्' इति युक्तितः श्रुतेः प्राबल्योक्तेरित्यतः श्रुतिस्मृती चाह ॥ सर्व इति ॥ तपांसि यत्प्रति वदन्ति वेदाः।**

## गुर्वर्थदीपिका

'पुरुषमीक्षत' इति श्रुतौ 'इक्षुदितपौ' इति धातुनिर्देशात् ईक्षतेः ईक्षधातुश्रवणात् तेन च परमात्मन ईक्षणीयत्वमपि श्रुतमिति भावेनोक्तं ब्रह्मण ईक्षणीयत्वावगतेरिति। सौत्रप्रयोगबलादीक्षणवाच्यपीक्षतिरिति वैदिकं पदं वा। औपनिषदत्वाद् ब्रह्मणो न श्रुतिनिरपेक्षप्रत्यक्षादिप्रमाणैरीक्षणम्। श्रुत्यर्थश्रवणमनननिदिध्यासनैः शक्त्युत्तेजने यन्मनसा भगवदीक्षणं तत् 'असाधारण्येन व्यपदेशा भवन्ति' इति न्यायात् श्रुत्यैवेक्षणमिति सौत्राभिप्रायं हृदि निधायोक्तम् ईक्षणं च प्रमाणेनेत्यादि। श्रुतिसहितयौक्तानुभवस्य केवलश्रुतितः प्राबल्यमिति सौत्राभिप्रायस्फोरणायोक्तं न्यायविवरणे श्रुतिसहितानुभवस्य प्रबलत्वादिति। का सा श्रुतिरित्यतो भाष्येऽस्मिन्यः श्रुतिस्मृत्योरुद्धारस्तस्य सङ्गतिमाह ॥ **नन्विति** ॥

## भावबोधः

॥ ॐ ईक्षतेर्नाशब्दम् ॐ ॥ **वाच्यत्वसमर्थनादिति।** उपलक्षणमेतत्। सकलशास्त्रप्रतिपाद्यत्व-

(भावबोधः)

दर्शनादित्यपि द्रष्टव्यम् । अत एव सुधायां वचनवृत्त्यैव सकलशास्त्रप्रतिपाद्यं ब्रह्मेत्युक्तम् । तमाक्षिप्य समाधातुम् इदमधिकरणमारभ्यत इत्युक्तम् । एवञ्च 'सं'शब्दार्थसकलवेदमुख्यार्थत्वाक्षेप-समाधानपरेऽस्मिन्नधिकरणे वेदमुख्यार्थत्वोपपादकवाच्यत्वसमर्थनपरसूत्राणामिव सकलवेदार्थत्वसमर्थनपरस्य 'गतिसामान्यात्' इति सूत्रस्याप्यन्तर्भाव उपपद्यते । 'सं'शब्दाक्षेपसमाधानरूपत्वज्ञापनार्थमेव वाच्यत्व-समर्थनपरसूत्रमध्येऽस्य सूत्रस्य निवेशः कृतः । पृथक्करणे तु वाच्यत्वसमर्थनपरत्वाभावादधिकरणान्तरत्व-प्रतीतिप्रसङ्गात् । यथोक्तं सुधायाम्– सूत्रकारस्यापि प्रकरणसाङ्कर्यस्यैतदेव प्रयोजनम् । यदाक्षेपद्वय-समाधानस्य पूर्वसूत्रस्थ'सं' शब्दार्थसमर्थनमेकमेव प्रयोजनमिति सूचनमिति । अत्रानन्तरसङ्गतिस्तु वचनवृत्त्यैवेत्यादिपूर्वोदाहृतसुधाग्रन्थ एव स्पष्टमुक्ता ।

ननु रुद्रादिशब्दयुक्तवेदवाक्येषु उपक्रमादिलिङ्गबलाद्विष्णुरेव प्रतिपाद्य इत्युक्तम्, न तु विष्णोर्वेद-मुख्यार्थत्वं, यत्सिद्ध्यर्थं वाच्यत्वसमर्थनं सङ्गतं स्यादित्यत आह– **उपक्रमादिभिरिति** । उपलक्षणञ्चैतत् । सुधोक्तरीत्या 'सं'शब्देन विष्णोर्मुख्यार्थत्वं स्यादित्युक्तत्वादिति बोध्यम् । **युक्तमयुक्तं वेति** । अत्र पूर्वसूत्रस्थ'सं'शब्दोक्तसर्ववेदमुख्यार्थत्वं ब्रह्मणो न युक्तमुत युक्तमिति चिन्ता । तदर्थं तस्य वाच्यत्वं नास्त्युतास्तीति । तदर्थं 'यतो वाचः' इति श्रुतिः किं ब्रह्मावाच्यत्वाभिप्रायतया निरवकाशा । उताप्रसिद्धेरवाच्यं तदित्युक्तप्रकारेण सावकाशेति । तदर्थं श्रुतेरवाच्यत्वाभिप्रायत्वे बाधकं ब्रह्मणो वाच्यत्वे साधकं नास्त्युतास्तीति । तदर्थम् 'आत्मन्येवात्मानं पश्येत्' इत्यादिश्रुत्युक्तेक्षणीयत्वं 'पूर्णमदः' 'एको देवः' इत्यादिश्रुत्युक्तञ्च किं गौणस्य; उत शुद्धस्य ब्रह्मण इति । तदर्थमात्मशब्दस्वाप्यय-वचननिर्गुणपदानि गौणे मुख्यानि, उत शुद्ध एव मुख्यानीति । तदर्थं 'यस्यानुवित्त' इत्यादिरात्मनिष्ठस्य मोक्षोपदेशः 'तमेवैकम्' इत्युक्तहेयत्वावचनम् 'पूर्णमेवावशिष्यते' इत्युक्तं प्रलयेऽवशिष्यमाणत्वं 'सर्वव्यापी केवलः' इत्याद्युक्तसर्वव्यापित्वजडामिश्रत्वादिकं किं गौणात्मनि सम्भवत्युत शुद्ध एव सम्भवतीति । **यतस्तदिति** । अनेन न च तस्यावाच्यत्वं श्रुत्यभिप्राय इति न्यायविवरणं व्याख्यातं भवति । **उपदिदेशेति** । विष्णुमिति शेषः । तथा च न व्याहतिरिति भावः । **न तच्छब्दगोचरमिति युक्तमिति** । उपलक्षणं चैतत् । सुधोक्तरीत्या शब्दानां सम्बन्धिनां गवां ज्ञानानां चरश्चरणं वृत्तिर्यस्मिंस्तच्छब्दगोचरमिति व्यधिकरणबहुव्रीहित्वं वा चरश्चरणमस्यास्तीति मत्वर्थीयाच्प्रत्ययान्तत्वं वाऽऽश्रित्य शब्दगोचरमित्यस्य साधुत्वं द्रष्टव्यम् । ततश्च 'मनसा सह' इति श्रुतौ यदज्ञेयत्वमभिप्रेतं तदपि सङ्गृहीतं भवति । अत एवावाच्यत्वादिकत्वाप्रसिद्धत्वादिकवदज्ञेयत्वस्यापि गतिं वक्ष्यति भाष्यकारः । सूत्रे वाच्यमित्येव वक्तव्ये

(भावबोधः)

नाशब्दमिति वचनम् 'द्वौ नञौ प्रकृतमर्थं सातिशयं गमयतः' इति वचनादवधारणार्थमित्यभिप्रेत्योक्तम्। **वाच्यमेवेति । प्रत्यक्षत्वाद्यवेद्यत्वे सतीति ।** आगमाननुसारिप्रत्यक्षादिप्रमित्यविषयत्वे सति प्रमाविषयत्वान्यथानुपपत्त्येत्यर्थः । तेन आगमानुसारिप्रत्यक्षादिवेद्यत्वेन भ्रान्तिवेद्यत्वेन वा न विशेषणासिद्ध्यन्यथासिद्धी । आगमानुसारिप्रत्यक्षादिवेद्यत्वं तु वाच्यत्वव्यतिरेकेण न सम्भवतीति भावः । एवमर्थापत्तिपरतया 'औपनिषदत्वात्' इति वाक्यं व्याख्याय परिशेषप्रमाणपरतयापि व्याचष्टे– **परिशेषप्रमाणेन वेति ।** यद्यप्यर्थापत्तिपरिशेषयोरनुमानतैव । तथापि तयोर्भेदमभ्युपेत्य वाऽनुमानत्वावान्तरभेदमाश्रित्य वा पक्षान्तरोक्तिः । **प्रमाणेनेति ।** भ्रान्तेरविद्यानिवर्तकत्वाभावेन प्रमाणाभासेन मोक्षजनकेक्षणासम्भवादिति भावः । 'अवचनेन' इत्येतद्वचनेतरप्रमाणेनेति व्याख्याय प्रकारान्तरेण व्याख्याति– **वृत्त्यन्तरेति । श्रुतिस्मृती चाहेति ।** श्रुतावामनन्तीति साक्षाद्वाच्यत्वोक्तेः स्मृतौ च 'अहमेव' इत्यवधारणोपपत्तयेऽन्येषाममुख्यतया वेदवेद्यत्वेऽस्यापि मुख्यतया वेदवेद्यत्वस्य विवक्षणीयत्वात्तस्य च वाच्यत्वं विनाऽयोगात् सर्वशब्दलक्षणायोगाच्च वाच्यत्वसिद्धिरिति भावः ।

## भावदीपः

॥ ॐ ईक्षतेर्नाऽशब्दं ॐ ॥ **ब्रह्मण इति ॥** तथा च तद्ब्रह्मेति श्रौतब्रह्मणः श्रुत्यन्तरोक्तेक्षणीयत्वादिन्यायेन वाच्यत्वसमर्थनान्न्यायग्रथनात्मकशास्त्रेऽन्तर्भावसङ्गतिरित्यर्थः । यद्यपि पूर्वत्र संशब्दोक्तस्य वाच्यत्वस्यैव सर्वशास्त्रयोनित्वस्यापि गतिसूत्रे समर्थनमस्ति तथापीहैकस्य प्राधान्यमुपेत्य वाच्यत्वेत्येवोक्तम्। नन्वत्र वाच्यत्वोक्तौ का पूर्वसङ्गतिः किं च फलमित्यतः श्रुत्यधिकरणसङ्गती प्रयोजनं चाह ॥ **सकलेति ॥ कारणत्वेनेति ॥** कारणत्वाद्यनन्तगुणत्वेनेत्यर्थः । ननु संशब्देन मुख्यत्वप्रतिज्ञानेऽपि समन्वयादित्युक्तहेतुना कथं तत्सिद्धमित्यत आह ॥ **उपक्रमेति ॥** अबाधे सतीत्यपि योज्यम् । तेषां तात्पर्यलिङ्गत्वेन मुख्यत्वावगमकत्वात्। बाधकस्य चेहाशङ्क्य निरसिष्यमाणत्वादिति भावः ॥ **वादीति ॥** वाच्यत्वावाच्यत्ववादीत्यर्थः । पूर्वाक्षेपपूर्वं भाष्योक्तपूर्वपक्षं व्यनक्ति ॥ **न ब्रह्मण इति ॥** तत्र हेतुत्वेन इत्यादिभिर्न तच्छब्दगोचरमिति भाष्यं व्यनक्ति । **यत इति ॥** तद्ब्रह्मेत्यर्थः । अप्राप्य मनसा सहेत्युक्तेरज्ञेयं चेत्यपि ध्येयम्। अवाच्यत्वादज्ञेयत्वाच्च न ब्रह्मणश्शास्त्रमुख्यार्थत्वमित्यर्थः । हेत्वोरसिद्धिवारणायोक्तमित्यादिश्रुतेरिति । भाष्ये बहुवचनोक्तावपि प्रत्येकं साधकत्वद्योतनाय श्रुतेरित्येकवचनोक्तिः । हेत्वोरप्रयोजकत्वं निराह ॥ **न ह्यवाच्यस्येति ॥** अज्ञेयस्य चेत्यपि ज्ञेयम्। व्याघातप्रसङ्गादिति भावः ॥ **अत इति ॥** शास्त्रमुख्यार्थत्वाभावादित्यर्थः ॥ **कारणत्वमिति ॥** कारणत्वा-

(भावदीपः)

दीत्यर्थः ॥ **शब्दादीति** ॥ न विद्यते शब्दो यस्येति व्युत्पत्त्येत्यर्थः । अरूपमित्यादौ तु रूपादिराहित्यं रूपादिग्राहकचक्षुराद्यविषयत्वं चेत्यर्थः । महत्त्वसमानाधिकरणोद्भूतरूप वतस्तादृशस्पर्शवतो वा द्रव्यस्य चक्षुरादिविषयत्वात् । एवं चावाच्यत्वमज्ञेयत्वं चोभयं प्राप्तमिति भावः । सूत्रानुगुणत्वादेतद्वाक्योक्तिर्भाष्ये । अत्रावाच्यत्वादेरस्फुटत्वात्पूर्ववाक्योक्तिः । ब्रह्मणोऽवाच्यत्वे कथं तद्ब्रह्मेत्याद्युक्तिरित्यतो भाष्येऽवचनेनैव प्रोवाचेत्युक्तं तद्व्याहतिनिरासाय व्याचष्टे ॥ **अवचनेनेति** ॥ उपदिदेश । तद्ब्रह्मेत्यर्थः । यदित्येतत्कर्म-कारकमिति भावेनाह ॥ **पुरुष इति** ॥ अत्रावाच्यत्वाज्ञेयत्वे स्पष्टमुक्ते । गोचरा इन्द्रियार्थाश्चेति गोचरपदस्य पुंलिङ्गत्वात्कथं गोचरमित्युक्तिरित्यत आह ॥ **त्रयीति** ॥ 'स्त्रीशूद्रब्रह्मबन्धूनां त्रयी न श्रुतिगोचरा' इति प्रथमस्कन्धे प्रयोगादित्यर्थः । उपलक्षणमेतत् । यदि तत्स्यादगोचरमित्यनुव्याख्यान-सुधायामुक्तदिशा शब्दानां गवां ज्ञानानां चरश्चरणं वृत्तिर्यस्मिन् तच्छब्दगोचरमिति व्यधिकरण-बहुव्रीहिमाश्रित्यापि साधुत्वं ध्येयमित्युक्तं चन्द्रिकायाम् । तृतीये ग्रहवृधनिश्चिगमश्चेति सूत्रे घञर्थे कविधानमिति वार्तिकोक्त्या चरतेः कप्रत्यये चरेति रूपम् । गोचरसञ्चरवहव्रजव्यजापणनिगमाश्चेति सूत्रे मञ्जर्यां रूढशब्दोऽयं तस्य यथाकथञ्चिन्निर्वचनमित्युक्तेः । तथा च प्रागुक्तावाच्यत्वाज्ञेयत्वयोर्द्वयोरपि पूर्वपक्षभाष्येऽभिधानं लब्धम् । अप्राप्य मनसा सहेत्यंशोक्तिश्चार्थवतीति ज्ञेयम् । तेनेक्षणीयत्वमप्य-सिद्धमिति शङ्कितुर्भावः । अत एवाग्रे भाष्ये अवाच्यत्वादिकं त्वित्यादिशब्दः । एतेन न च तस्यावाच्यत्वं श्रुत्यभिप्राय इति न्यायविवरणेऽज्ञेयत्वमप्युपलक्ष्यं बोध्यम् । अत्र सूत्रे पूर्वसूत्रात्तत्पदमनुवर्त्य तदशब्दमिति योज्यमिति भावेन भाष्ये न तच्छब्दगोचरमित्युक्तम् । श्रुतिप्राप्तं श्रुतितात्पर्यज्ञानप्राप्तमित्यर्थः । न च तस्यावाच्यत्वं श्रुत्यभिप्राय इति न्यायविवरणोक्त्या किन्तु श्रुत्यभिप्रायाज्ञानप्राप्तमिति ध्वनितत्वात् । सूत्रे चावाच्यं नेत्यनुक्त्वा अशब्दं नेत्युक्त्या अशब्दमस्पर्शमित्यादिश्रुत्यर्थाज्ञानप्राप्तमिति लाभादिति भावः । ननु 'यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत । स तेजसि सूर्ये सम्पन्नो यथा पादोदरस्त्वचा विनिर्मुच्यत एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकम् । स एतस्मात्' इति श्रुतौ स हि ध्याता तं ध्येयं परमेश्वरमपरोक्षीकृत्य तेजसि सूर्ये सम्पन्नः सम्प्राप्तो जीर्णत्वङ्मुक्तसर्पवत्प्रारब्धपाप्मना विनिर्मुक्तः सामाभिमानिदेवताभिः सत्यलोकं नीतः स एतस्मात्सत्यलोकपतेर्जीवसाराच्चतुर्मुखादुत्तमोत्तमं सर्वशरीरगं पुरुषमीक्षत इत्यपरोक्षमीक्षणं भाति । नरस्य न शब्दाकरणकत्वात्कथं तेन वाच्यत्वादिसिद्धिरित्यतः सत्यं सर्वं जीवघनादित्यत्र तदुपदेशेनेति व्याख्यायत इति भावेनाह ॥ **जीवोत्तमहिरण्यगर्भोपदेशेनेति** ॥ पश्यतीति जानातीत्यर्थः ।

(भावदीपः)

प्रणवेन हरिं ध्यायन् ब्रह्मलोकं समेत्य च ।
ज्ञानं चतुर्मुखात्प्राप्य मुच्यते नात्र संशयः ॥

इति षट्प्रश्नभाष्योक्तेरिति भावः । पश्यतीत्युक्तिस्तु ईक्षदर्शनाङ्कनयोरिति धातोर्दशि धात्वादेशरूप-पश्यतेर्ज्ञानमात्रार्थत्वमुपेत्येति । भाष्ये आत्मन्यात्मानमिति श्रुतिः उत्तरसूत्रार्था ईक्षत इति श्रुत्युक्तिश्च सूत्रोपात्तत्वादुभयत्रापि पश्यतेरपरोक्षेऽपि सम्भवात्स्पष्टमपरोक्षार्था विज्ञायेति श्रुतिः । आत्मनीति श्रुतिः प्रागेव व्याख्याता । भाष्ये वचनैरित्यस्येक्षणीयत्वे हेतुत्वानुपयोगादीक्षणीयत्वावगतेरित्युक्तम् । एतेन हेतोरसिद्धिरुद्धृता । सूत्रे ईक्षतेरिति धातुनिर्देशमात्रत्वेन तदर्थलक्षणाया ईक्षणादिति लाभात्तस्य चासम्बद्धस्य हेतुत्वायोगाद्योग्यतया पुरुषमीक्षत इति श्रुत्यानुगुण्याच्च क्रियाकर्मभाव इति मत्वेक्षणीयत्वादित्युक्तं भाष्य इति भावः । अशब्दं नेत्यस्य द्वौ नञाविति न्यायलब्धार्थस्योक्तिर्भाष्ये वाच्यमेवेति । तदनुवदन्विशेष्याकाङ्क्षां पूरयति ॥ **वाच्यमेव तदिति** ॥ पूर्वपक्षभाष्यात्तत्पदमिहानुवर्त्यम् । सूत्रे च पूर्वसूत्रादिति भावः । ननु सूत्रे अशब्दं नेत्यनुक्त्वा पूर्वस्मात्तत्त्वित्यनुवर्त्य ईक्षतेर्वाच्यमित्युक्तावपि तद्ब्रह्म वाच्यं तु वाच्यमेवेति सिध्यतीति चेन्न । तत्पदान्विततुशब्दस्यात्रान्वये सति तत्त्वित्याध्यायसमाप्त्यनुवृत्तिर्न स्यात् । शिष्टं तन्त्रदीपिकायां व्यक्तम् । वाच्यत्वोक्तेः फलमाह ॥ **अत इति** ॥ वाच्यत्वादित्यर्थः । सौत्रहेतोर-प्रयोजकत्वं शङ्कते ॥ **नेति** ॥ नावचनेनेक्षणमित्येतदर्थमाह ॥ **भवेदेतदिति** ॥ तत्र हेतुमाह । **तस्योक्तेति** ॥ शास्त्रयोनिसूत्रोक्तरीत्येत्यर्थः । एवमीक्षणीयत्वाद्वाच्यमेवेति भाष्यमर्थापत्तिपरतया औपनिषदत्वादित्यादिभाष्यं तत्रेक्षणीयत्वे विशेषणार्पकमिति व्याख्यायेदानीमित्यादिवचनैरीक्षणीयत्वा-द्वाच्यमेवेति भाष्यं परिशेषपरतया औपनिषदत्वादित्यादि तु तत्र प्रसक्तप्रतिषेधपरतया व्याचष्टे ॥ **परिशेषेत्यादिना साधयतीत्यन्तेन** ॥ अर्थापत्तिपरिशेषयोरनुमानत्वेऽप्यवान्तरविशेषात्पृथगुक्तिः ॥ **श्रूयत इति** ॥ इत्यादिवचनैरिति भाष्यं पूर्ववदसिद्धिनिरासकमिति भावः । भाष्यस्थावचनेनेत्यस्यार्थो वचनेतरेति । वचनवृत्त्यन्येनेत्यर्थान्तरं चाह ॥ **वृत्त्यन्तरेति** ॥ उपस्थिते हि लक्षणादिर्वाच्यः । औपनिषदस्योपस्थितिश्च शब्देनैव । तत्रापि लक्षणादिश्चेत्तत्रापि लक्ष्योपस्थित्यर्थं शब्दान्तरमित्यनवस्थापत्तेरिति भावः । स्वप्रकाश-तया सिद्धे ब्रह्मणि शब्दानां लक्षणेति तु सूर्यदर्शने दीपस्येव वैयर्थ्यादयुक्तम् । विवरिष्यते चैतदग्रे ।

इत्यादिश्रुतिस्मृतिभ्यश्चेति भाष्ये वाच्यमेवेति साध्यस्यान्वयात्सूत्रोक्तेक्षणीयत्वयुक्तिसहायत्वेन श्रुत्याद्युक्तौ बीजमाह ॥ **नन्विति** ॥ **तेषु त्रिष्विति** ॥ प्रत्यक्षानुमानागमेषु मध्ये आगमस्य प्राबल्यं जात्यैवोत्सर्गेणैव स्मृतमिति तत्वनिर्णयोक्तेरित्यर्थः ॥ इत्यत इति ॥ एतेन सर्वे वेदा यत्पदमामनन्तीति

(भावदीपः)

श्रुतिसहितानुभवस्य बलवत्त्वादिति न्यायविवरणे साहित्योक्तरुक्तप्रयोजना ॥ **श्रुतिस्मृती चाहेति** ॥ भाष्ये अथ कस्मादुच्यते ब्रह्मेति नामानि सर्वाणि यमाविशन्तीति वचसां वाच्यमुत्तममित्यादीनां बहुत्वेन बहुवचनोक्तावप्युपात्तं तु श्रुतिस्मृतिरूपं द्वयमेवेति भावेन द्विवचनोक्तिः । श्रुतावाङ्प्रयोगेण साक्षादेव वाच्यत्वस्य स्मृतौ चाहमेवेत्यवधारणलब्धमुख्यमेववेद्यत्वाद्यन्यथानुपपत्त्या च वाच्यत्वस्य सिद्धेरिति भावः । सूत्रे श्रुत्याद्यनुक्त्वा ईक्षणीयत्वयुक्त्युक्तिस्तु पूर्वपक्ष्यक्तश्रुत्यादिप्रतिरुद्धत्वेन स्वतोऽनिर्णायकत्वात्तदनुग्राहकत्वेनेति बोध्यम् ।

## अभिनवचन्द्रिका

ईक्षतेरिति धातुनिर्देशः । न चाऽविविक्षितार्थशब्दमात्रं ब्रह्मणो वाच्यत्वे हेतुर्भवितुमर्हतीति तदर्थोऽनेन लक्ष्यते । न च ब्रह्मासम्बन्धीक्षणमप्यत्र हेतुर्भवति । अतिप्रसङ्गात् । सम्वन्धश्च न कर्तृत्वादिरूपः श्रुत्यननुगमात् । विपक्षे बाधकाभावप्रसङ्गाच्च । अत ईक्षणं ब्रह्मकर्मकमेव हेतुत्वेन वाच्यम् । न चैतदपि युक्तम् व्यधिकरणत्वात् । तस्मादीक्षणकर्मत्वमेव हेतुतया विवक्षितम् । इममेवाभिप्रायं मनसि निधाय 'ईक्षणीयत्वतो विष्णुर्वाच्य एवे'(अनुव्या.१-१-५)त्युक्तम् । ततश्चैवं सूत्रयोजना – न विद्यते वाचकः शब्दो यस्य तत् अशब्दम् । ईक्षणकर्मत्वाद्ब्रह्म अशब्दम् अवाच्यं न, किन्तु वाच्यमेवेति । वाच्यमिति वक्तव्ये 'नाशब्द'मिति वचनं तु 'द्वौ नञौ प्रकृतमर्थं सातिशयं गमयत' इति न्यायात् अवधारणार्थम् । यद्यप्येक एव नञ् प्रकृतमर्थं सातिशयं गमयति, अपरस्तु प्रकृतार्थाभावं गमयतीति 'नञुत्तरो नञ् प्रकृतमर्थं गमयती'ति वक्तव्यं तथापि छत्रिन्यायेन तथोक्तमिति ध्येयम् ।

अन्तर्भेदाधिकरणमिदम् । वाच्यत्वसमर्थनपरेऽस्मिन्नधिकरणे 'गतिसामान्या'(१-१-१०)दिति अप्रसिद्धशाखाप्रतिपाद्यत्वस्य समर्थनात् । यद्यपि इदमपि 'गतिसामान्या'दिति सूत्रं पूर्वाधिकरण एव निवेशनीयम्, तथापि शास्त्रीयप्रमेयस्य बहुवारं स्मृतेः फलातिशयहेतुत्वात् सिंहावलोकनन्यायमवष्टभ्य इहाधिकरणे प्रवेशितम् । तदुक्तं 'बहुवारं स्मृतेस्तस्य फलबाहुल्यकारणा'दिति । ननु वाच्यत्वसमर्थनमेव कुत इत्यतः तस्यावश्यकत्वं वक्तुमुपक्रमते– **सकलजगदिति** ॥ सकलजगज्जन्मादिकारणत्वेन ब्रह्मैव सकलशास्त्रान्तर्गतपदानां वचनवृत्त्या लभ्योऽर्थ इत्यभिहितमित्यर्थः । अत्र टीकायामितः परं श्रूयमाणम् । 'उपक्रमादिभिर्निर्णीतस्य मुख्यार्थत्वा'दिति वाक्यं प्रक्षिप्तम् । अवश्यं चैतदेवं विज्ञेयम्, 'शास्त्रमुख्यार्थ इत्यभिहित'मित्यस्य हेत्वाकाङ्क्षाविधुरत्वेन तस्याऽवक्तव्यत्वात् । न हि पूर्वाधिकरणनिर्णीतप्रमेयानुवादावसरे हेत्वाकाङ्क्षा भवति । अन्यथा – अधिकरणान्तरेषु सङ्गतिप्रदर्शनाय वृत्तानुवादवेलायां हेत्वाकाङ्क्षा भवति ।

(अभिनवचन्द्रिका)

तन्निवृत्तये हेत्वभिधानं च स्यात् । उपक्रमादीनां तात्पर्यसाधकत्वेऽपि शक्तिसाधकत्वाभावाच्च । **तच्चेति** ॥ वृत्त्या लभ्यार्थत्वं वाच्यत्व एव सम्भवति न तु सर्वथा केनाप्यवाच्यत्वे । पदशक्त्यविषयस्य शक्तिलभ्यार्थत्वासम्भवात् वाच्यत्वं समर्थनीयमिति भावः । **तन्मुख्यत इति** ॥ नन्वत्राधिकरणे ब्रह्मणो वाच्यत्वसमर्थनात्, ब्रह्म विषयः वाच्यमवाच्यं वेति संदेह इति वक्तव्यं, न तु तन्मुख्यतः शास्त्रयोनित्वं विषयः ब्रह्मणो युक्तमयुक्तं वेति संदेह इति । साध्यसंदेहस्यानुमानाङ्गत्वेन तस्यैव दर्शनीयत्वात् । शास्त्रयोनित्वस्य सिद्धान्तफलत्वेनासाध्यत्वादिति चेत्, सत्यमिह तथैव वक्तव्यम्, तथापि सर्वेष्वप्याक्षेपकाधिकरणेषु तदधिकरणसंशयस्याऽऽक्षेप्याधिकरणप्रमेयसंशयपर्यवसन्नतेति सूचनाय तथोक्तमिति । भाष्ये – 'नन्वित्यारभ्य न तच्छब्दगोचर'मित्यन्तं वाक्यं पूर्वपक्षप्रदर्शकम्, 'नेत्याहे'ति तु सिद्धान्तप्रदर्शकमिति ज्ञापनाय प्रथमवाक्यमवतारयति – **तत्र पूर्वपक्षयतीति** ॥ एतेन – नन्वित्यनेन पूर्वपक्षस्य स्पष्टं प्रतिभासात् तत्र पूर्वपक्षयतीत्यवतारिका अनुपपन्नेति परास्तम् । **न ह्यवाच्यस्येति** ॥

केनापि पदेनावाच्यस्य शक्तिबललभ्यशास्त्रार्थत्वं नास्तीति हि प्रसिद्धमित्यर्थः । **अत इति** ॥ यस्मादवाच्यमेव ब्रह्म अतस्तस्यकारणादिपदशक्तिबलेन शास्त्रोक्तं कारणत्वं न सम्भवति कारणपदावाच्यस्य कारणत्वासम्भवात् । अन्यथा गङ्गापदावाच्यस्यापि तीरस्य गङ्गात्वप्रसङ्गादिति भावः । ननु कारणपदावाच्यत्वादकारणमित्ययुक्तम् । कारणपदावाच्यस्यापि कारणत्वे प्रमाणसद्भावेन स्वीकर्तव्यत्वात्, गङ्गापदावाच्यस्य गङ्गात्वाभावस्तु प्रमाणाभावादेव । अन्यथा – अशब्दपदोक्तमशब्दत्वं न स्यात् यदि 'यतो वाच' (तै.उ.२०) इत्यादि प्रमाणबलात् अशब्दपदावाच्यस्यापि अशब्दत्वसिद्धिः, तर्हि – 'यतो वा इमानि भूतानी'ति वाक्यबलात् कारणपदावाच्यस्यापि कारणत्वसिद्धिरस्त्विति चेत् लक्षणया समन्वयवादिनामशब्दपदावाच्यस्यापि प्रमाणबलेन अशब्दत्वसिद्धिसम्भवेऽपि त्वन्मते कारणपदावाच्यस्य न कारणत्वसिद्धिः । लक्षणया समन्वयस्य त्वयाऽनङ्गीकारात् । अवाच्ये मुख्यसमन्वयस्याप्यभावेन त्वन्मते जगत्कारणत्वे प्रमाणवैधुर्यस्यैव प्राप्तेः । न च – प्रमाणबलात् अशब्दपदप्रवृत्तिनिमित्तसद्भावे तच्छब्दवाच्यत्वमवर्जनीयमिति वाच्यम् । प्रमाणबलेन तत्तच्छब्दप्रवृत्तिनिमित्तसद्भावेऽपि श्रुत्या वाच्यत्वस्य निषिद्धत्वेन तस्यानंगीकर्तव्यत्वात् । ननु ब्रह्मणो वाच्यत्वाभावे 'यतो वाचो निवर्तन्ते' (तै.उ.२) इत्यादिश्रुतिप्रतिपाद्यत्वाभावेन तस्यावाच्यत्वं न सिध्येदिति शंकापरिहारार्थं भाष्ये प्रवृत्तं 'अवचनेने'ति वाक्यं व्याचष्टे – **अवचनेनेति** ॥ ब्रह्मणोऽवाच्यत्वसमर्थनाय भाष्योदाहृतं 'यच्छोत्रेणे'ति वाक्यं व्याचष्टे – **यच्छोत्रेणेति** ॥ 'न शृणोती'त्यत्र अयमित्यनुक्तेः ब्रह्मेति प्रतीति निरासायाह – **पुरुष**

(अभिनवचन्द्रिका)

**इति** ॥ ततश्चैवं योजना । पुरुषः यद्ब्रह्म श्रोत्रेण न शृणोति यद्वाचकं शब्दं न शृणोतीत्यर्थः । श्रोत्रशब्दार्थमाह श्रुतिः – येन श्रोत्रमिति ॥ येन कारणेन इदं शब्दजातं श्रोत्रेण श्रुतं तेन निमित्तेन इदं श्रोत्रमुच्यते । शब्दग्राहित्वं श्रोत्रशब्दप्रवृत्तिनिमित्तमिति भावः । ननु – 'रोपध' (५५) इति लिङ्गानुशासनसूत्रेण गोचरशब्दस्य पुंलिङ्गत्वविधानात् 'न तच्छब्दगोचर'मित्यनुपपन्नम् । न च – अस्य प्रयोगस्यार्षत्वान्नपुंसकत्वमुपपन्नमिति वाच्यम् । आर्षग्रन्थेषु नपुंसकत्वेन प्रयोगाभावादित्यत आह– **त्रयीति** ॥ नपुंसकत्वेन प्रयोगाभावेऽपि विशेष्यलिङ्गतया प्रयोगस्य विद्यमानत्वा दार्षप्रयोगस्यानियतलिङ्गत्वं सिद्धमिति भावः ॥ **ईक्षणीयत्वावगतेरिति** ॥ 'स एतस्मा'दित्यादि-श्रुतिसिद्धशब्दजन्यापरोक्षज्ञानविषयत्वान्यथानुपपत्त्या ब्रह्म वाच्यमेवेत्यर्थः । अत्र शब्दस्यापरोक्ष-ज्ञानजनकत्वं च तज्जनकेन्द्रियसहकारित्वमेव न साक्षादिति बोध्यम् । यद्यपि शब्दविषयत्वमात्रेणैव वाच्यत्वसाधनमुचितं परेणापि 'यतो वाचो निवर्तन्त' इत्यादिश्रुतिविषयत्वस्याङ्गीकृतत्वेनाऽसिद्धि-शङ्कानुदयात्, तथापि शिष्यबुद्धिशुद्धये मीमांसाप्रवृत्त्यर्थं 'स एतस्मा'दि त्यादिश्रुतिसिद्धमीक्षणविशेषकर्मत्वं हेतुत्वेनोपात्तम् । ननु ईक्षणीयत्ववाच्यत्वयोः व्याप्तिसद्भावात् धूमादिना वह्न्यादिसाधनमिव, ईक्षणीयत्वेन लिङ्गेन वाच्यत्वसाधनमुचितम्, न त्वर्थापत्तिविधया । यत्र हि नात्यन्तकी व्याप्तिः तत्रार्थापत्तिविधया गमकत्वमङ्गीकरणीयम् । तद्यथा – पीनत्वं यस्य रात्रिभोजनमन्तराऽनुपपद्यमानं तस्यैव रात्रिभोजनं कल्पयति, न तु दिवा भुंजानस्य । योगिनो वा रोगिणो वा दिवा भोजनादिनैवोपपन्नत्वेन अन्यथानु-पपत्तेरभावादिति चेत्, सत्यम् – तथापि ईक्षणीयत्ववाच्यत्वयोर्व्याप्तेः परेणानङ्गीकारात् अर्थापत्तिविधया गमकत्वमुक्तम् । ईक्षणमात्रं हेतुत्वेन सूत्रकृतोक्तमिति मन्यमानः शङ्कते – **नेक्षणीयत्वान्यथानुपपत्त्येति** ॥ कुतो न वाच्यमित्यत आह– **ईक्षणस्येति** ॥ ऐन्द्रियकत्वे केवलप्रत्यक्षेण अतीन्द्रियत्वे अनुमानोपनीत-प्रत्यक्षेण वा ईक्षणस्य सम्भवात् वाच्यत्वमन्तराऽप्युपपन्नस्य न वाच्यत्वसाधकत्वमिति भावः । **भवेदेत-दिति** ॥ यदि ब्रह्मविषयकमीक्षणं केवलप्रत्यक्षेण, अनुमानोपनीतप्रत्यक्षेण वा । उपपन्नं भवेत् तदैव वाच्यतां न साधयेत् । नैतदस्तीत्यर्थः । कुतो नेत्यत आह – **तस्योक्तरीत्येति** ॥ नन्वस्तु आगमसहकृत-प्रत्यक्षजन्येक्षणस्य वाच्यत्वसाधकत्वं, सूत्रोक्तेक्षणस्य अन्यथोपपन्नत्वेन न वाच्यत्वासाधकत्वमित्यत आह– **तथा चेति** ॥ सूत्रकृता शब्दसहकृतप्रत्यक्षजन्येक्षणमेव हेतुत्वेन विवक्षितं नेक्षणमात्रमिति भावः । **परिशेषप्रमाणेन वेति** ॥ परिशेषप्रमाणसिद्धेनेक्षणेन अत्र सूत्रे वाच्यत्वं साध्यत इत्यर्थः । पूर्वं 'स एतस्मा' (प्र.उ.)दित्यादिश्रुत्यैव शब्दसहकृतप्रत्यक्षजन्येक्षणं सिद्धमित्यभिप्रेत्य तदन्यथानुपपत्त्या वाच्यत्वं साध्यत इत्युक्तम्, इदानीं तु श्रुत्या ईक्षणमात्रं सिद्धं परिशेषेण तु तस्मिन्नीक्षणे

(अभिनवचन्द्रिका)

शब्दसहकृतप्रत्यक्षजन्यत्वरूपविशेषः सिध्यति । एवं च श्रुतिपरिशेषसिद्धविशिष्टेक्षणान्यथानुपपत्त्या वाच्यत्वं साध्यत इत्युच्यत इति भेदः । एतेन – 'परिशेषप्रमाणेन वा अत्र वाच्यत्वं साध्यत' इत्ययुक्तम्, 'वचनेनेक्षणं च अवाच्ये वृत्त्यन्तरायोगेने'ति ईक्षणीयत्वार्थं पराभ्युपगतलक्षणान्यथानुपपत्त्या वाच्यत्वसिद्धेर्वक्ष्यमाणत्वेनोत्तरग्रन्थविरोधात्, ईक्षतेरिति सूत्रोक्तेक्षणहेतुत्वपरित्यागप्रसङ्गाच्चेति परास्तम् । परिशेषसिद्धेनेक्षणेन वाच्यत्वसिद्धेरिहाभिमतत्वात् । परिशेषमेव दर्शयति – **ईक्षणं च प्रमाणेन भवेदित्यादिना** ॥ अत्र ईक्षणसाधनानि त्रीणि प्रमाणानि प्रसक्तानि । केवलं प्रत्यक्षं, अनुमानसहकृतम् आगमसहकृतं चेति । तत्र केवलं अनुमानसहकृतं प्रत्यक्षं वा न सम्भवति । परमेश्वरस्य औपनिषदत्वेन तदयोग्यत्वात् । परिशेषाच्छब्दसहकृतप्रत्यक्षमेव परमेश्वरेक्षणजनकत्वेन सिद्धमिति भावः । परिशेषसिद्धि-फलमाह – **वचनेनेक्षणं चेति** । परिशेषात्सिद्धं वचनेन जन्यमीक्षणं शब्दानां ब्रह्मणि लक्षणावृत्ति-स्वीकारेऽपि वाच्यत्वं साधयति । अवाच्ये लक्षणादिरूपवृत्त्यन्तरायोगादिति भावः । **श्रुतिस्मृती चाहेति** ॥ ईक्षतिशब्दार्थत्वेन श्रुतिस्मृती चाहेत्यर्थः । एतेन श्रुतिसिद्धस्य अवाच्यत्वस्य युक्तिमात्रेण दूषणमनुपपन्नमित्याशङ्काया भाष्यकारीयश्रुतिस्मृत्युदाहरणेनाऽपरिहारात् । तदुदाहरणमयुक्तम् । न हि अन्यस्य प्रमेयसिद्धये दुर्बलप्रमाणोदाहरणमयुक्तमिति शङ्काप्राप्तौ तदन्यनेन केनचित्प्रबलप्रमाणोदाहरण-मुपयुज्यते, येन भाष्यकारीयं तदुदाहरणं युक्तं स्यादिति परास्तम् । ईक्षतेरिति धातुनिर्देशस्य ईक्षणीयत्वोप-लक्षकत्ववत् श्रुतिस्मृत्युपलक्षकत्वस्य इहाभिमतत्वात् । भाष्ये– **सर्वे वेदा यत्पदमामनन्तीति** ॥ सर्वे वेदाः, नामानि सर्वाणीत्येवमादयः वाच्यत्वादिप्रतिपादका यावन्तो वेदाः ते सर्वे यत्स्वरूपमामनन्ति । ननु तपःप्रतिपादकानां वेदानां न भगवत्परत्वमिति सर्वेषां वेदानां भगवत्परत्वमयुक्तमिति शङ्कापनोदा-योक्तम् – **तपांसीति** ॥ तपःप्रतिपादकत्वेनाभिमता यावन्तो वेदाः ते सर्वेऽपि सर्वाणि तपांसि यत्प्रति वदन्ति । उपलक्षणमेतत् । 'न सुरां पिबे'दित्येवमादयो भगवत्प्रीतिमुद्दिश्य सुरापाननिषेधं कुर्वन्तीत्यादिकमूह्यम् । वाच्यत्वादिप्रतिपादकैः सर्वैरपि वेदैरहमेव वेद्य इत्यर्थः । एतेन – उदाहृत-श्रुतिस्मृत्योः वेदानां भगवत्परत्वाभिधायकत्वेऽपि वाच्यत्वाभिधायकत्वाभावात्तदुदाहरणमयुक्तमिति परास्तम् । साक्षाद्वाच्यत्वाभिधायकत्वाभावेऽपि सर्वेषां भगवत्परत्वोक्तौ 'नामानी'त्यादिश्रुतीनामपि भगवत्परत्वप्राप्त्या वाच्यत्वस्यापि सिद्धेः । न हि 'नामानी'त्यादिवाक्यं भगवत्परं तदर्थश्च वाच्यत्वं न भगवत इति सम्भवति । येन श्रुतिस्मृत्युदाहरणमसंगतं स्यात् ।

# वाक्यार्थमुक्तावली

ॐ इक्षतेर्नाशब्दं ॐ ॥ अत्र सर्वे वेदा यत्पदमामनन्तीत्यादिब्रह्मप्रतिपादकश्रुत्यर्थभूतस्य ब्रह्मणस्सर्ववेदमुख्यप्रतिपाद्यत्वस्य निर्णयाङ्गन्यायानुसन्धानस्य क्रियमाणत्वाच्छास्त्रसङ्गतिरित्याह । अत्रेति । शास्त्रमुख्यार्थत्वसिद्धय इति शेषः । वाच्यत्वेत्युपलक्षणम् । सर्वशास्त्रप्रतिपाद्यत्वेत्यपि ग्राह्यम् । वेदमुख्यार्थत्वोपपादकवाच्यत्वसमर्थनपरसूत्राणामिव सकलवेदार्थत्वसमर्थनपरस्य गति सामान्यसूत्रस्याप्यत्र विद्यमानत्वात् ।

ननु तर्हि प्रमेयद्वयप्रतिपादनेऽधिकरणभेदप्रसङ्गः इति चेन्न । उभयोरपि पूर्वसूत्रीयसंशब्दार्थत्वेनैकत्वविवक्षयैकाधिकरणत्वात् । अत एवाधिकरणान्तरत्वप्रतीतिनिरासाय गतिसूत्रस्य मध्ये निवेशः । अधिकरणादिसङ्गतिं दर्शयति सकलेति ॥ **शास्त्रेति** ॥ सर्वशास्त्रेत्यर्थः । **अभिहितमिति** । संशब्देनेति शेषः । आर्थिकी तत्सिद्धिरित्याह ॥ **उपक्रमादिति** ॥ **युक्तमयुक्तं वेति** । अत्र सकलवेदमुख्यार्थत्वं ब्रह्मण किमयुक्तमुत युक्तमिति चिन्ता । तदर्थं तस्य वाच्यत्वं नास्त्युतास्तीति । तदर्थं ब्रह्मणो वाच्यत्वसाधकप्रमा नास्त्युतास्तीति । तदर्थं प्रमाणतयोपन्यस्यमानमीक्षणीयत्वं पूर्णमद इति श्रुत्युक्तत्वं च किं जीवाख्यगौणस्योत ब्रह्मण इति । तदर्थं ईक्षणीये श्रुतात्मशब्दः पूर्णमद इत्यत्रोक्तस्वप्ययः किं गौणे मुख्यः उत शुद्ध एव मुख्य इति । तदर्थं यस्यानुवित्त इत्यादेरात्मनिष्ठस्य मोक्षोपदेशस्य तमैवैकमित्युक्ते हेयत्वावचनस्य च पूर्णमेवावशिष्यत इत्युक्तस्य प्रलयेऽवशेषस्य च किं गौणे सम्भव उत शुद्ध एव सम्भव इति । एतत्सर्वनिर्वाहार्थं निर्गुणस्यावाच्यत्वश्रुतिबाधकं वाच्यत्वसाधकमुपपत्तिनिरपेक्षं स्पष्टं प्रमाणं नास्त्युतास्तीति । हेतोरप्रयोजकत्वं परिहरति ॥ **न ह्यवाच्यस्येति** ॥ भाष्ये अप्राप्य मनसा सहेत्यंशोदाहरणं तु सिद्धान्त्यभिमतवाच्यत्वसाधकेक्षणीयत्वहेतोरसिद्धिव्युत्पादनाय । अत एवावाच्यत्वादिकं त्वप्रसिद्धत्वादित्यत्राज्ञेयत्वस्यापि गतिं वक्ष्यति । अशब्दमित्यादेः प्रकृतोपयुक्तमर्थद्वयमाह अशब्दमित्यादेरिति ॥ **शब्दादिगुणशून्यमिति** ॥ तथा चायमर्थः । वचनवृत्तिः खलु गुणादियोगनिमित्ता । तस्य च निर्गुणत्वान्न तत्र वचनवृत्तिरिति भावः । अथवा शब्दादिगुणशून्यतया श्रोत्राद्यग्राह्यत्वादज्ञेयत्वं तस्येति भावः ॥ **तदविषयश्चेति** ॥ अशब्दमित्यस्य शब्दाविषय इत्यर्थः । अशब्दमित्यादेः शब्दादिग्राहकश्रोत्राद्यविषय इत्यर्थः । नन्वौपनिषदः पुरुष इति वाच्यत्वस्य श्रुतत्वात्कथमवाच्यत्वमित्यतः प्राप्तमवचनेनैव प्रोवाचेत्यंशं व्याचष्टे **वचनवृत्तिमिति** ॥ उक्तं च सुधायाम् । औपनिषदत्वं तु लक्षणया वृत्त्या सम्भवान्न वाच्यतामपेक्ष्यत इति । यद्वाचानभ्युदितमित्यस्य यद्वाचकं

(वाक्यार्थमुक्तावली)

शब्दतत्वं वा वाचा इन्द्रियेण न व्यवहृतमिति वा यद् ब्रह्म वाचा वेदवाचा अनभिहितमिति वार्थः। यच्छोत्रेणेत्यत्र यद्यद्विषयं शब्दमित्यर्थः। यद्वा तस्य लौकिकशब्दगुणशून्यत्वादलौकिकशब्दगुणस्य श्रोत्राविषयत्वमित्यर्थः।

ननु गोचरा इन्द्रियार्थाः स्युरित्यभिधानात् कथं गोचरमिति नपुंसकलिङ्गप्रयोग इत्यत आह **त्रयीति**। सूत्रे ईक्षतेरिति धातुनिर्देशः। तेन तदर्थभूतमीक्षणं लक्ष्यते। न च ब्रह्मसम्बन्धीक्षणं तस्य वाच्यत्व-साधकमित्यत ईक्षणकर्मत्वमेव हेतुतया विवक्षितम्। तदित्यनुवर्तते। न विद्यते शब्दो वाचको यस्य तदशब्दमवाच्यं न। नाशब्दमिति वचनं द्वौ नयौ प्रकृतमर्थं सातिशयं गमयत इत्यतो वाच्य-मेवेत्यवधारणार्थमित्यभिप्रेत्य स एतस्मादित्यादिभाष्यं प्रवृत्तमिति भावेन व्याचष्टे। **स प्रणवोपासक इत्यादिना** ॥ यः पुनरेतं त्रिमात्रेणोमित्यनेनाक्षरेण परं पुरुषमभिध्यायीतेति षट्प्रश्ने पूर्ववाक्ये प्रणवोपासकस्य प्रकृतत्वादिति भावः। उत्तमाज्जीवघनाच्चतुर्मुखादपि परं पुरिशयं पुरुषमीक्षत इति परकृतापव्याख्याननिरासाय व्याचष्टे जीवोत्तमहिरण्यगर्भोपदेशेनेति।

पश्यत्यपरोक्षतो जानाति। अपरोक्षस्य शब्दाकरणत्वेऽपि शब्दजन्यपरोक्षज्ञानोपासनाद्वारकत्वात् उपदेशेन पश्यतीति युज्यते। विज्ञाय प्रज्ञां कुर्वीतेत्येतत्समानार्थकत्वात्। आत्मन्येवात्मानमित्यत्र ह्युपदेशेनेति योज्यम्। ईक्षणस्य शब्दसम्बन्धाभावे तेन वाच्यत्वनिर्णयायोगादिति ॥ **वाच्यमेवेति** ॥ यद्यपि तत्त्वित्यनुवृत्तावधारणं स्वत एव भवति। तदर्थं नञ्द्वयं न प्रयोक्तव्यं तथापि तत्पदान्विततु-शब्दस्याध्यायपरिसमाप्तिपर्यन्तं धर्म्यन्वितत्वेन साध्यान्वितत्वाभावात्। अत्र तद्ब्रह्म वाच्यमेवेत्यन्वये तद्भङ्गभयेन पुनरवधारणस्यापेक्षितत्वादिति। **प्रत्यक्षादिनापीति**। आगमाननुगृहीतप्रत्यक्षादिनेत्यर्थः। सिद्धान्तिनोऽपि प्रात्यक्षिकेक्षणस्याङ्गीकृतत्वात्। **प्रत्यक्षाद्यवेद्यत्वे सतीति**। श्रुत्यननुसारिप्रत्यक्षादि-प्रमित्यविषयत्वे सति प्रमाविषयत्वान्यथानुपपत्त्येत्यर्थः। तेनागमानुसारिप्रत्यक्षादिवेद्यत्वेन भ्रान्तिवेद्यत्वेन वा विशेषेणासिध्यन्यथासिध्योः निरासः। आगमानुसारिप्रत्यक्षादिवेद्यत्वं तु वाच्यत्वव्यतिरेकेण न सम्भवतीति भावः। एवमीक्षणीयत्वादिति वाक्यमर्थापत्तिपरतया औपनिषदत्वादिति वाक्यं तत्रेक्षणीयत्वे विशेषणार्पकतया व्याख्यायेदानीं प्रथमं वाक्यं परिशेषपरतया द्वितीयं प्रसक्तिप्रतिषेधपरतया व्याचष्टे ॥ **परिशेषेत्यादिना साधयतीत्यन्तेन**। भ्रान्तेरविद्यानिवर्तकत्वाभावेन प्रमाणेन मोक्षजनकेक्षणासम्भवादिति भावः। वचनेतरप्रमाणेनेति वचनाननुगृहीतप्रमाणेनेत्यर्थः। अवचनेत्येतत् प्रकारान्तरेण व्याख्याति ॥ **वृत्यन्तरेति** ॥ श्रुतिस्मृती चाहेति। एतेन श्रुतिस्मृतिभ्यश्चेत्यस्य वाच्यमेवेत्यनेनान्वयं सूचयति।

(वाक्यार्थमुक्तावली)

श्रुतिस्मृतीनामादिपदोपात्तानां बहुत्वेऽपि जातिविवक्षया टीकायां द्विवचनम् । तपांसीत्यत्र वेदा इति श्रुतावाङ्प्रयोगेन साक्षादेव वाच्यस्य स्मृतौ चाहमेवेत्यवधारणलब्धमुख्यवेद्यत्वान्यथानुपपत्त्या च वाच्यत्वसिद्धिरिति भावः । सूत्रे श्रुत्याद्यनुक्तेक्षणीयत्वयुक्तिस्तु सर्वे वेदा इत्यादेरेव विषयवाक्यत्वेन पूर्वपक्ष्युक्तश्रुतिप्रतिरुद्धत्वेन स्वतो निर्णायकत्वात् तदनुग्राहकत्वेनेति बोध्यम् ।

## तत्त्वसुबोधिनी

ॐ ईक्षतेर्नाशब्दम् ॐ ।। **वाच्यत्वसमर्थनादिति** । उपलक्षणमेतत् । सकलशास्त्रप्रतिपाद्यत्वसमर्थनादित्यपि द्रष्टव्यम् । आद्यसूत्रे ब्रह्मशब्देन जीवादिव्यावर्तकगुणपूर्तिलक्षणत्वेन सूचयित्वा द्वितीये तस्य गुणपूर्तिवाचितासिद्धये जीवपरतानिरासाय कारणता जिज्ञास्यब्रह्मलक्षणत्वेनोक्ता । तृतीये पूर्तिकारणतयोरतिव्याप्तिपरिहाराय तत्र शास्त्रं प्रमाणीकृत्य चतुर्थे तयोः विष्ण्वेकनिष्ठत्वाय शास्त्रस्यान्यपरतां निषिध्य सर्वशास्त्रशब्दप्रवृत्तिनिमित्तसर्वगुणसिद्धये वचनवृत्त्या सर्वशास्त्रतात्पर्यविषयतायां चोक्तायां संशब्दार्थस्य वाच्यत्वस्य कार्त्स्न्यस्य च इहाक्षिप्य समाधानादनन्तरसङ्गतिः । एवं वाच्यत्वोपपादकेऽस्मिन्नधिकरणे सकलवेदार्थत्वसमर्थनपरस्य गतिसूत्रस्यान्तर्भावः संशब्दार्थाक्षेपसमाधानरूपत्वज्ञापनार्थमेव कृतः । पृथक्करणे तु वाच्यत्वसमर्थनपरत्वाभावादधिकरणान्तरत्वप्रतीतिप्रसङ्गादिति भावः । ननु रुद्रादिशब्दयुक्तवेदवाक्येषु उपक्रमादिलिङ्गबलाद्विष्णुरेव प्रतिपाद्य इत्युक्तम् । न तु विष्णोः वेदमुख्यार्थत्वं यत्सिद्ध्यर्थं वाच्यत्वसमर्थनं सङ्गतं स्यात् इत्यत आह ।। **उपक्रमादिभिरिति** ।। उपलक्षणं चैतत् । सुधोक्तरीत्या संशब्देन विष्णोः मुख्यार्थत्वस्याप्युक्तत्वादिति बोध्यम् । शब्दवाच्यत्वेऽपि न शास्त्रमुख्यार्थत्वमित्यत आह ।। **न हीति** ।। **उपदिदेशेति** । विष्णुमिति शेषः । तथा च न व्याहतिरिति भावः । न तच्छब्दगोचरमिति युक्तमिति । उपलक्षणं चैतत् । सुधोक्तरीत्या शब्दानां गवां ज्ञानानां चरश्चरणं वृत्तिः यस्मिन् तच्छब्दगोचरमिति व्यधिकरणबहुव्रीहित्वं वा चरश्चरणमस्यास्तीति मत्वर्थीयाच्प्रत्ययान्तत्वं वाश्रित्य शब्दगोचरमित्यस्य साधुत्वं द्रष्टव्यम् । ततश्च यतो वाचो इत्यादिश्रुतौ मनसा सहेत्यदृश्यत्वस्यापि उक्तत्वात् ईक्षणीयत्वम् असिद्धमिति पूर्वपक्षस्याभिप्रायः । सूत्रे वाच्यमित्येव वक्तव्ये नाशब्दमिति वचनं द्वौ नञौ प्रकृतमर्थं सातिशयं गमयतः इति वचनात् अवधारणार्थम् इत्यभिप्रेत्योक्तं वाच्यमेवेति ।। **प्रत्यक्षाद्यवेद्यत्वे सतीति** ।। आगमाननुसारिप्रत्यक्षादिप्रमित्यविषयत्वे सति प्रमाविषयत्वान्यथानुपपत्तेत्यर्थः । तेनागमानुसारिप्रत्यक्षादिवेद्यत्वात् भ्रान्तिविषयत्वाद्वा न विशेषणासिध्यन्यथासिद्धी । आगमानुसारिप्रत्यक्षादिवेद्यत्वन्तु वाच्यत्वव्यतिरेकेणासम्भवीति भावः । 'औपनिपद-

(तत्त्वसुबोधिनी)

त्वात्' इति वाक्यं पूर्वमर्थापत्तिपरतया व्याख्यातम् इदानीं परिशेषप्रमाणपरतया व्याचष्टे । **परिशेषप्रमाणेन वेति** । यद्यपि स्वमते अर्थापत्तिपरिशेषयोः अनुमानता । तथापि तयोः भेदमुपेत्य वा अनुमानत्वावान्तरभेदमाश्रित्य वा पक्षान्तरोक्तिः ॥ **प्रमाणेनेति** ॥ भ्रान्तेः अविद्यानिवर्तकत्वाभावेन प्रमाणाभासेन मोक्षजनकेक्षणासम्भवादिति भावः । अवचनेन इत्येतद्वचनेतरप्रमाणेनेति व्याख्याय प्रकारान्तरेण व्याख्याति ॥ **वृत्त्यन्तरायोगेनेति** ॥ न च ईक्षणकर्मत्वरूपम् ईक्षणीयत्वं कथं सूत्रलब्धम् इति वाच्यम् । अन्यथानुपपत्त्यैव तस्य लाभात् । तथाहि । ईक्षतेरिति धातुनिर्देशः । तत्राविवक्षितशब्दमात्रे वाच्यत्वे हेतुत्वासम्भवात् तदर्थम् ईक्षणरूपोऽनेन लक्ष्यते । तथा चासम्बद्धस्यान्यसम्बन्धिनो वा ईक्षणस्य हेतुत्वासम्भवात् ब्रह्मसम्बन्धिन एव तस्य हेतुत्वं वक्तव्यम् । सम्बन्धश्च न कर्तृत्वादिरूपः श्रुत्यननुगमात् वाच्यत्वसाधकत्वाभावाच्च । तथा चेक्षणं ब्रह्मकर्मकमेव हेतुत्वेन वाच्यम् । तदपि न युक्तम् । तथात्वे ब्रह्म वाच्यं तत्कर्मकेक्षणादिति वैय्यधिकरण्यं स्यात् । ईक्षणकर्मत्वमेव वाच्यत्वे हेतुतया विवक्षितमित्यन्यथानुपपत्त्या ईक्षणीयत्वं लक्ष्यते इति न कोऽपि दोष इति भावः । **श्रुतिस्मृती चाहेति** । श्रुतावामनन्तीति साक्षाद्वाच्यत्वोक्तेः स्मृतौ चाहमेवेत्यवधारणोपपत्तये मुख्यतया वेद्यत्वस्य विवक्षणीयत्वात् तस्य च वाच्यत्वं विना अयोगात् सर्ववेदलक्षणाया अयोग्यत्वाच्च वाच्यत्वसिद्धिरिति भावः । ननु सर्वस्यापि वेदस्य ब्रह्मस्वरूपप्रतिपादकत्वे धर्मादिसिद्धिः न स्यात् तत्प्रतिपादकाभावादित्यत आह ॥ **वेदा इति** ॥ तथा च वेदस्य धर्मादिप्रतिपादकत्वात् न तदसिद्धिः । न च तथात्वे विष्णुप्रतिपादकत्वायोगः । स्वतन्त्र्येण विष्णुज्ञानार्थमेव तत्प्रतिपादनादिति भावः । यद्वा पदसमन्वयाभिप्रायेण सर्वे वेदा इति । वाक्यसमन्वयाभिप्रायेण तपांसीति । तथा च मुखतो धर्मादिप्रतिपादकत्वेऽपि वाक्यतात्पर्यं विष्णावेवेति भावः ।

## वाक्यार्थमञ्जरी

**वाच्यत्वेति** ॥ उपलक्षणमेतत् । सुधोक्तरीत्या संशब्दार्थसर्वशास्त्रप्रतिपाद्यत्वसमर्थनादित्यपि ध्येयम् । तेन सकलशास्त्रप्रतिपाद्यत्वसमर्थकगतिसामान्यसूत्रस्यैतदधिकरणान्तर्भाव उपपन्नः । ननूपक्रमादिलिङ्गबलाद्रुद्रादिशब्दोपेतशास्त्रस्यापि विष्णुरेवार्थ इत्येवोक्तं न तु तस्य मुख्यत्वमित्यत आह ॥ **उपक्रमादीति** ॥ उपलक्षणमेतत् । सुधोक्तरीत्या संशब्देन विष्णोर्मुखार्थत्वस्याप्युक्तत्वात् ॥ **वादीति** ॥ वाच्यत्वावाच्यत्ववादीत्यर्थः । तद्ब्रह्म । **न हीति** । वचनवृत्त्या लब्धस्य मुख्यार्थत्वादिति भावः । प्रकृतोपयोगायाह ॥ **तदविषयश्चेति** ॥ शब्दत्वगाद्यविषय इत्यर्थः । एतदुपपादनायैव गुणराहित्यकथनमिति

(वाक्यार्थमञ्जरी)

भावः । प्रोवाचेत्यनेन वचनप्राप्त्या अवचनेनेत्येतद्व्याहतमित्यत आह ॥ **वचनवृत्तिं विनेति** ॥ **उपदिदेशेति** ॥ विष्णुमिति शेषः । यच्छ्रोत्रेणेत्यत्र यच्छब्दार्थब्रह्मणः कर्तृत्वे येन श्रोत्रमिदं श्रुतमित्यनेन व्याहतमित्यत आह ॥ **पुरुष इति** ॥

'अत्रोदाहृतवाक्यार्थविशेषो लिख्यते मया ।
पूर्वपक्षोत्थितिर्ज्ञेया प्रतीतार्थानुसारतः ।

अत्रायं भाष्योदाहृतश्रुत्यर्थः । वाचः सर्वेऽपि शब्दा मनसा सह अप्राप्य साकल्येनाविषयीकृत्य यत आनन्दरूपाद् ब्रह्मणो निवर्तन्ते तं ब्रह्मस्वरूपानन्दं विद्वान्न वेत्तीत्यन्वयः । यद् ब्रह्म अशब्दं प्राकृतशब्दरहितं साकल्येन तदप्रतिपाद्यं तद्बाह्यश्रोत्रागोचरं तद्बाहिरसनागोचरं नित्यं नाशरहितम् अगन्धवत् प्राकृतगन्धवत् न भवति तद्बाह्यघ्राणागोचरं च तदित्यन्वयः । अस्पर्शं प्राकृतस्पर्शरहितं तद्बाह्यस्पर्श-न्द्रियागोचरश्च । अव्ययं ह्रासरहितम् । अरसं प्राकृतरसरहितम् । यद् ब्रह्म वाचा वागिन्द्रियेण अनभ्युदितम् अभि साकल्येन नोक्तं येन ब्रह्मणा वाक् वागुपलक्षितं सर्वं जगत् । अभ्युद्यते अभि साकल्येन वागिन्द्रियेणोच्चार्यते तदेव ब्रह्म त्वं विद्धीत्यन्वयः । पुरुषो यद् ब्रह्म श्रोत्रेण साकल्येन न शृणोति येन च ब्रह्मणा इदं श्रोत्रोपलक्षितं जगत्साकल्येन श्रुतं श्रवणादिविषयीकृतं तदेव ब्रह्म त्वं विद्धीत्यन्वय इति ॥ **त्रयीति** ॥ स्त्रीशूद्रब्रह्मबन्धूनां त्रयी न श्रुतिगोचरा इति प्रथमस्कन्धे प्रयोगादिति भावः । त्रयी श्रुतिः श्रुतिगोचरा न श्रवणविषयीभूता न । उपलक्षणमेतत् । सुधोक्तरीत्या शब्दानां गवां ज्ञानानां चरश्चरणं वृत्तिर्यस्मिन् तच्छब्दगोचरमिति व्यधिकरणबहुव्रीहिं वा चरश्चरणमस्यास्तीति मत्वर्थीयाच्प्रत्ययान्तत्वं वा आश्रित्य शब्दगोचरमित्यस्य साधुत्वं द्रष्टव्यम् । तेनाप्राप्य मनसा सहास्पर्श-मित्यादिश्रुतौ यदज्ञेयत्वमभिप्रेतं तदपि सङ्गृहीतं भवति । अन्यथा तदंशोदाहरणं न स्यात् । अत एव भाष्ये अवाच्यत्वादिकमित्यादिशब्दः, तदवतारिकाग्रन्थे अवाच्यत्वाज्ञेयत्वाभिधायकेति टीकावचनम्, अतर्क्यमज्ञेयमित्यादिप्रमाणोदाहरणं च सङ्गच्छते । न च ज्ञेयत्वसमर्थनमसङ्गतमिति वाच्यम् । ईक्षणीयत्वहेतोरसिद्धिपरिहारार्थत्वात् । अत एवेक्षणीयत्वासिद्धिपरिहारकत्वेन गौणश्चेन्नात्मशब्दादिति सूत्रं न च गौण आत्मा दृश्य इत्यादिना भाष्येण व्याख्यातमिति बोद्धव्यम् ।

ॐ ईक्षतेर्नाशब्दम् ॐ ॥ तद् ब्रह्म अशब्दम् अवाच्यं न किं तु वाच्यमेव ईक्षतेः पुरुषमीक्षत इति कर्मत्वव्यपदेशादित्यर्थः । श्रुतिप्राप्तं आपापत इति शेषः । **हिरण्यगर्भोपदेशेनेति** ॥

(वाक्यार्थमञ्जरी)

''प्रणवेन हरिं ध्यायन् ब्रह्मलोकं समेत्य च ।
ज्ञानं चतुर्मुखात्प्राप्य मुच्यते नात्र संशय''

इति षट्प्रश्नभाष्योक्तेरिति भावः । पौनरुक्तिपरिहाराय विज्ञायेत्येतद्व्याचष्टे ॥ **परोक्षत इति** ॥ ईक्षणीयत्वं ज्ञेयत्वम् । ईक्षणस्य ज्ञानस्य । **प्रत्यक्षादिनापीति** ॥ अतोऽन्यथाप्युपपत्तिरिति भावः । उक्तरीत्या शास्त्रयोनित्वादित्युक्तरीत्या ॥ **प्रत्यक्षाद्यवेद्यत्वे सतीति** ॥ आगमाननुसारिप्रत्यक्षाद्यवेद्यत्वे सतीत्यर्थः । तेनागमानुसारिप्रत्यक्षादिवेद्यत्वाद्विशेषणासिद्धिरिति निरस्तम् ॥ **ईक्षणीयत्वान्यथानुपपत्त्येति** ॥ प्रमाविषत्वान्यथानुपपत्त्येत्यर्थः । तेन भ्रान्तिविषयत्वेनान्यथासिद्धिरिति निरस्तम् । 'औपनिषदत्वात्' इति वाक्यमेवमर्थापत्तिपरत्वेन व्याख्याय परिशेषपरत्वेनापि व्याचष्टे ॥ **परिशेषप्रमाणेन वेति** ॥ **प्रमाणेनेति** ॥ भ्रान्तेरज्ञानानिवर्तकत्वेन प्रमाणेन मोक्षजनकेक्षणासम्भवादिति भावः ॥ **अवाच्ये वृत्त्यन्तरेति** ॥ अवाच्येऽपि लक्षणाङ्गीकारेऽनवस्था वक्ष्यत इति भावः । अनेनावचनेनैतत्प्रकारान्तरेण योजितम् ॥ **प्राबल्यमिति** ॥ तेषु त्रिष्वक्षादिकरणेषु मध्ये यदागमस्य प्राबल्यमुक्तं तज्जात्यैव स्मृतम् उत्सर्गेणैव स्मर्तव्यमित्यर्थः ॥ **श्रुतिस्मृती चाहेति** ॥ श्रुतावाङ्ग साक्षाद्वाच्यत्वोक्तेः स्मृतौ कर्मादीनामपि वेद्यत्वादहमेवेत्यवधारणानुपपत्त्या तदुपपत्तयेऽन्येषां मुख्यतया वेद्यत्वेऽपि हरेः परममुख्यवृत्त्या वेद्यत्वस्य वक्तव्यत्वात्तस्य च वाच्यत्वं विनाऽयोगात्तत्सिद्धिरिति भावः । भाष्ये वेदान्तकृत् वेदनिर्णायकब्रह्ममीमांसा-कर्ता । यत्प्रति यत्प्रीत्यर्थम् ।

## विवृतिः

**वाच्यत्वसमर्थनादिति** ॥ उपलक्षणमेतत् । सकलशास्त्रप्रतिपाद्यत्वसमर्थनादित्यपि द्रष्टव्यम् । आद्यसूत्रे ब्रह्मशब्देन जीवादिव्यावर्तक गुणपूर्तिलक्षणत्वेन सूचयित्वा, द्वितीये तस्य गुणपूर्तिवाचित्वसिद्धये जीवपरता निरासाय कारणता जिज्ञास्यब्रह्मलक्षणत्वेनोक्ता । तृतीये पूर्तिकारणतयोरतिव्याप्तिपरिहाराय शास्त्रं प्रमाणीकृत्य चतुर्थे तयोर्विष्ण्वैकनिष्ठत्वाय शास्त्रस्यान्यपरतां निषिध्य सर्वशास्त्रस्य शब्दप्रवृत्तिनिमित्त-सर्वगुणपूर्तिसिद्धये, वचनवृत्या, सर्वशास्त्रतात्पर्यविषयतायां चोक्तायां संशब्दार्थस्य वाच्यत्वस्य कात्स्न्र्यस्य चेहाक्षिप्य समर्थनादनन्तरसङ्गतिः । एवं वाच्यत्वोपपादकेऽस्मिन्नधिकरणे सकलवेदार्थत्वसमर्थनपरस्य गतिसूत्रस्यान्तर्भावः संशब्दार्थाक्षेपसमाधानरूपत्वज्ञापनार्थमेव कृतः । पृथक्करणे तु वाच्यत्वसमर्थनपरत्वा-भावादधिकरणान्तरत्वप्रतीतिप्रसङ्गात् । ननु रुद्रादिशब्दयुक्तवेदवाक्येषु उपक्रमादिलिङ्गबलाद्विष्णुरेव प्रतिपाद्य इत्युक्तं, न तु विष्णोर्वेदमुख्यार्थत्वं यत्सिध्यर्थं वाच्यत्वसमर्थनं सङ्गतं स्यादित्यत आह ॥

(विवृतिः)

**उपक्रमादिभिरिति** ॥ उपलक्षणं चैतत् । संशब्देन विष्णोर्मुख्यार्थत्वस्याप्युक्तत्वादिति वोध्यम् । शब्दावाच्यत्वेऽप्यस्तु शास्त्रमुख्यार्थत्वमित्यत आह ॥ **न हीति** ॥ **उपदिदेशेति** ॥ विष्णुमिति शेषः । तथा च न व्याहतिरिति भावः । **न तच्छब्दगोचरमिति युक्तमिति** ॥ उपलक्षणं चैतत् । शब्दानां गवां ज्ञानानां चरः चरणं, वृत्तिः, यस्मिन् तच्छब्दगोचरमिति व्यधिकरणबहुव्रीहिं वा, चरश्चरणमस्यास्तीति मत्वर्थीयाच्प्रत्ययान्तत्वं वाऽऽश्रित्य शब्दगोचरमित्यस्य साधुत्वं द्रष्टव्यम् । ततश्च यतो वाच इत्यादिश्रुतौ मनसा सहेत्यदृश्यत्वस्याप्युक्तत्वादीक्षणीयमसिद्धमिति पूर्वपक्ष्यभिप्रायः ।

सूत्रे वाच्यमित्येव वक्तव्ये नाशब्दमिति वचनं 'द्वौ नञौ प्रकृतमर्थं सातिशयं गमयतः' इति वचनादवधारणार्थमित्यभिप्रेत्योक्तम् । **वाच्यमेवेति** ॥ पूर्वमर्थापत्तिपरतया व्याख्यातं इदानीं परिशेषप्रमाणपरतया व्याचष्टे ॥ **परिशेषप्रमाणेन वेति** ॥ यद्यपि स्वमतेऽर्थापत्तिपरिशेषयोरनुमानता, तथाऽपि तयोर्भेदमुपेत्य वाऽनुमानत्वावान्तरभेदमाश्रित्य वा पक्षान्तरोक्तिः ॥ **प्रमाणेनेति** ॥ भ्रान्तेरविद्यानिवर्तकत्वाभावेन प्रमाणाभासेन मोक्षजनकेक्षणासम्भवादिति भावः । अवचनेनेत्येतद्वचनेतरप्रमाणेनेति व्याख्याय प्रकारान्तरेण व्याख्याति ॥ **वृत्यन्तरायोगेनेति** ॥ न हि ईक्षतेरिति धातुनिर्देशः तत्र विवक्षितशब्दमात्रस्य वाच्यत्वे हेतुत्वाभावात् तदर्थ ईक्षणरूपोऽनेन लक्ष्यते । तथाचासम्बद्धस्यान्यसम्बन्धिनो वेक्षणस्य हेतुत्वासम्भवाद्ब्रह्मसम्बन्धिन एव तस्य हेतुत्वम् । वक्तव्यं सम्बन्धश्च न कर्तृत्वादिरूपः श्रुत्यननुगमात् वाच्यत्वसाधकत्वाभावाच्च । तथाचेक्षणं ब्रह्मकर्मकमेव हेतुत्वेन वाच्यं तदपि नयुक्तं, तथात्वे, ब्रह्म, वाच्यं, तत्कर्मकेक्षणादिति वैय्यधिकरण्यं स्यात् । तस्मात् ईक्षणकर्मत्वमेव हेतुतया विवक्षितमित्यन्यथानुपपत्या, ईक्षणीयत्वं लभ्यत इति न कोऽपि दोष इति भावः ॥ **श्रुतिस्मृती चाहेति** ॥ श्रुतावामनन्तीति साक्षाद्वाच्यत्वोक्तेः स्मृतौ चाहमेवेत्यवधारणोपपत्तये मुख्यतया वेद्यत्वस्य विवक्षणीयत्वात्तस्य च वाच्यत्वं विनाऽयोगात्सर्ववेदलक्षणाया अयोग्यत्वाच्च वाच्यत्वसिद्धिरिति भावः । ननु सर्वस्यापि वेदस्य ब्रह्मस्वरूपप्रतिपादकत्वे धर्मादिसिद्धिर्न स्यात्, प्रतिपादकाभावादित्यत आह ॥ **वेदा इति** ॥ तथा च वेदस्य धर्मादिप्रतिपादकत्वात्र तदसिद्धिः । न च तथात्वे विष्णुप्रतिपादकत्वायोगः, स्वातन्त्र्येणैव विष्णुज्ञानार्थं तत्प्रतिपादनादिति भावः । यद्वा पदसमन्वयाभिप्रायेण सर्वे वेदा इति वाक्यसमन्वयाभिप्रायेण तपांसीति । तथा च मुखतो धर्मादिप्रतिपादकत्वेऽपि वाक्यतात्पर्यं विष्णावेवेति भावः ।

## सूत्रभाष्यम्

अवाच्यत्वादिकं त्वप्रसिद्धत्वात् ॥

'न तदीदृगिति ज्ञेयं न वाच्यं न च तर्क्यते ।
पश्यन्तोऽपि न पश्यन्ति मेरो रूपं विपश्चित' इतिवत् ॥

'अप्रसिद्धेरवाच्यं तद्वाच्यं सर्वागमोक्तितः ।
अतर्क्यं तर्क्यमज्ञेयं ज्ञेयमेवं परं स्मृतम्' इति गारुडे ॥

न चाशब्दत्वमितरसिद्धम् ॥ ५ ॥

## तत्त्वप्रदीपिका

मेरोरप्रसिद्धत्वादवाच्यत्वेऽपि, ब्रह्मणस्त्वगोचरत्वादेवेत्याशङ्क्य विशेषप्रमाणमाह– **अप्रसिद्धेरवाच्यं तदिति ।** न चाशब्दत्वमितरसिद्धमित्यस्यायमर्थः । उक्तन्यायेन वाच्यत्वाद्ब्रह्मणो मायिसिद्धमशब्दत्वं न श्रुत्यर्थः । अस्यैव भाष्यस्यान्योऽर्थः न चावाच्यत्वं ब्रह्मण इतरस्य मायिनोऽपि सिद्धम् । ब्रह्मणि व्यवहाराभावप्रसङ्गात् । अन्योऽर्थः कथ्यते यन्मायिनोक्तं प्रधानस्याशब्दत्वं हेतुत्वेनाशब्दं हि तदिति साङ्ख्यं प्रति, तदितरस्य साङ्ख्यस्य न सिद्धम् । तेन प्रधानस्य वेदगम्यत्वाङ्गीकारात् । किञ्च, यदितरेण मायिनोक्तं प्रधानस्याशब्दत्वं सूत्रार्थत्वेन, तन्न तस्य सिद्धम् । स्वयमेव भगवद्गीताव्याख्याव्याजग्रन्थे प्रधानस्य शब्दगम्यत्वाङ्गीकारात् । न च समन्वयप्रतिपादनादन्यो व्यापारः सत्यां गतौ सम्भवत्यस्मिन्नध्याये । अत ईक्षतेर्नाशब्दमिति सूत्रं ब्रह्मणोऽशब्दत्वनिराकरणपरमिति सिद्धम् ॥

## तत्त्वप्रकाशिका

नन्वेवं युक्त्यादिसिद्धत्वे वाच्यत्वस्यावाच्यत्वाज्ञेयत्वाभिधायकोदाहृतश्रुतेः का गतिरित्यत आह ॥ **अवाच्यत्वादिकमिति ॥** अवाच्यत्वादिकमवाच्यत्वादिव्यपदेशः । अप्रसिद्धिः साकल्येनागोचरता । नन्वप्रसिद्धेरवाच्यत्वादिव्यपदेशः क दृष्ट इत्यत आह ॥ **न तदिति ॥** पश्यन्त इत्युक्तेरप्रसिद्ध्यैवैतदिति ज्ञायते । न केवलमन्यथाऽनुपपत्तिमात्रसिद्धेयं व्यवस्थाऽपि तु स्मृतिसिद्धा चेति भावेनाह ॥ **अप्रसिद्धेरिति ॥** एवमप्रसिद्धिप्रसिद्धिभ्याम् । एवं यतो वाच इत्यादिश्रुतीनां युक्त्यादिबलादर्थान्तरोपपत्तेर्नाशब्दं ब्रह्मेति सूत्रं व्याख्याय परकृतापव्याख्यां प्रत्याख्याति ॥ **न चेति ॥** जगत्कारणत्वं सदेव सौम्येत्यादौ कस्यचित्प्रतीयते । तत्किं ब्रह्मोत प्रधानमिति सन्देहे प्रधानमिति प्राप्ते सिद्धान्तितम् । न प्रधानं

(तत्त्वप्रकाशिका)

**श्रौतजगत्कारणम् । तदैक्षतेति ईक्षतिश्रवणादशब्दं हि तदिति । तदेतद् व्याख्यानमयुक्तम् । यतोऽशब्दं हि तदिति हेतुतयोक्तमश्रौतत्वं न साङ्ख्यस्य प्रतिवादिनः सिद्धम् । तेन वैदिकत्वाभ्युपगतेः । नापि स्वन्यायेन तदुक्तिः । अजामेकामित्यादौ प्रधानस्य श्रुतत्वात् । न च तत्रान्यत्कल्प्यम् । नाममात्रे विवादादर्थान्तरस्य चाभावादिति भावः । किं च ब्रह्मणोऽपि श्रौतत्वं न युक्तम् । अवाच्यत्वात् । अवाच्ये वृत्त्यन्तरायोगात् । नापि तस्येक्षितृत्वम् । तस्येक्षतिस्वरूपत्वात् । जगत्कारणस्य मायावच्छिन्नस्येक्षणं सम्भवतीति चेन्न । जिज्ञास्यस्यैव जगत्कारणतयोक्तत्वात् । न हि जिज्ञास्यं मायावच्छिन्नम् । तज्जिज्ञासाया अप्रयोजकत्वात् । किञ्च माययेक्षणं भवत्युपचर्यते वा । आद्ये दृश्यत्वाद्यपि किं न स्यात् । न द्वितीयः । प्रधानेऽपि सम्भवादिति ॥ ५ ॥**

## गुर्वर्थदीपिका

साकल्येनागोचरतेत्यत्र साकल्येन शब्दादिप्रमाणानामगोचरतेत्यर्थः । वाच्यं तर्क्यमिति शब्दानुमानयोर्गृहीतत्वाज्ज्ञेयमित्यवशिष्टप्रत्यक्षेण ज्ञेयत्वमेव स्मृतेरर्थ इत्यनुसन्धेयम् । एवमप्रसिद्धिप्रसिद्धिभ्यामित्यस्य साकल्येनाप्रसिद्धिप्रसिद्धिभ्याम् इत्यर्थः । जडत्वानादित्वत्रिवर्णप्रजाजनकत्वसंसार्युपभोग्यत्वमुक्तानुपयोगित्वाख्यसाङ्ख्योदितप्रधानलक्षणानां श्रुतौ श्रवणात्प्रकृतिरेवैतच्छ्रुत्यर्थभूता । तस्या अत्र चाविद्येति नामान्तरं त्वया दत्तमिति भावेनोक्तम् अर्थान्तरस्य चाभावादिति । माययेक्षणं भवतीत्यत्रेक्षणपदेनेक्षणकर्तृत्वमुच्यते तद्भवत्युत्पद्यते चेत्यर्थः । ननु मायाविशिष्टे ईक्षितृत्वस्योत्पत्तिरस्ति । विशिष्टस्य मिथ्यात्वाद्दृश्यत्वादिकमप्यस्तीति मायिनां मतम् । अतः कथमिदमनिष्टमिति चेत्सत्यं माययाऽपि जडभूतस्वस्वरूपे स्वसम्बन्धिमात्रे वा नेक्षितृत्वमुत्पाद्यते । घटादावपि प्रसङ्गात् । प्रकृत्याख्यमायया प्रकृतिस्वरूपेऽपि न्यायसाम्येनोत्पादयितुं शक्यत्वात् । अतो विशेष्यभूतचिदंश एवोत्पादयतीति वक्तव्यम् । तस्य दृश्यत्वादिकं परस्यानिष्टमेवेति भावः ।

## भावबोधः

युक्त्यादिबलादिति । अनेन 'सर्वे वेदा यत्पदमामनन्ति' इति श्रुतिसहितानुभवस्य बलवत्त्वादिति न्यायविवरणमुक्ततात्पर्यकं भवति । तथा हि– न्यायविवरणे साक्षात्सूत्रोक्तेक्षणीयत्वलिङ्गजन्यानुभवस्य 'च' इत्यनेनाभिधाय तस्य प्राबल्यव्युत्पादनार्थं श्रुतिसहितेत्युक्तम् । अत्रापि युक्त्येति लिङ्गं स्वपदेनोपादाय तत्प्राबल्योपपादकश्रुत्यादेरादिपदेन ग्रहणमिति । एवं भाष्यगतमितरपदं मायावाद्यपेक्षयेतरसांख्यपरं कृत्वा 'न चाशब्दत्वम्' इति वाक्यं व्याख्यामिदानीमस्मदपेक्षयेतरमायावादिपरं कृत्वा तदेव वाक्यं व्याख्याति– नापि स्वन्यायेनेति ।

(भाववोधः)

तेजोऽबन्नात्मकञ्चापि यद्युपादानमिष्यते ।
अनाद्येवापराधः कः प्रधानमिति चोदितः ॥

इत्यनुव्याख्यानानुसारेणाऽऽह **न च तत्रेति** । अन्यत्तेजोबन्नात्मकम् । ननु न विशिष्टमीक्षितृ; येन जिज्ञास्यत्वायोगः । किन्तु शुद्धमेव मायासम्बन्धादीक्षितृ इत्याशङ्कापरिहारार्थमाह– किञ्च माययेति । किञ्चेति न दूषणान्तरप्रतिज्ञार्थः । किन्तु मायया चेक्षणं किं भवतीत्यर्थः । एवं सत्याद्ये दृश्यत्वाद्यपीत्युत्तरवाक्यमपि सङ्गच्छते । विशिष्टपक्षे दूषणान्तरत्वे इष्टापत्तिप्रसङ्गेन तदयुक्तं स्यादिति बोध्यम् ।

## भावदीपः

अज्ञेयत्वेति भाष्यस्थादिपदार्थोक्तिः । श्रुतेरिति जात्येकवचनम् । अतोऽग्र इत्यादिश्रुतीनामित्युक्तिः । अवाच्याप्रसिद्धादिपदवाच्यत्वाद् व्याहतिनिरासायावाच्यत्वादिव्यपदेश इत्युक्तम् ॥ **अन्यथेति** ॥ पश्यन्त इत्युक्त्यन्यथानुपपत्येत्यर्थः । एवमिति पदमतर्क्यं तर्क्यमित्यनेनाज्ञेयं ज्ञेयमित्यनेन चान्वेतीति भावेनैवमित्यस्यार्थमाह ॥ **एवमप्रसिद्धिप्रसिद्धिभ्यामिति** ॥ स्मृतावज्ञेयं ज्ञेयमिति श्रुतिमूलप्रत्यक्षादिति बोध्यम् । वाच्यं तर्क्यमिति शब्दतर्कयोरुक्तेर्भाष्यमुत्सूत्रमिति भ्रमनिरासायोक्तमनुवदति ॥ **एवमिति** ॥ **युक्त्यादीति** ॥ सूत्रे श्रुत्याद्यनुग्राहकन्यायमात्रोक्तावपि तदनुग्राह्यवाच्यत्वे श्रुत्यादेरपि सूत्रकृतो हेतुत्वेनाभिमतत्वादीक्षतेरित्यस्य श्रुतिसहितानुभवस्य बलवत्त्वादिति न्यायविवरणोक्त्यनुरोधेन युक्त्यादिबलादित्यनुवादः कृतः । स्मृतिभ्यश्चेत्यन्तभाष्यार्थानुवादोऽयम् । अवशिष्टभाष्यार्थानुवादोऽर्थान्तरेति । वाच्यमेवेत्यस्य व्याख्येयप्रदर्शनेनानुवादो नाशब्दमिति । अनुवृत्ततत्पदार्थो ब्रह्मेति । वादिप्रतिवादिनोर्मायिसाङ्ख्ययोरन्योन्यापेक्षयान्योन्ययोरितरत्वात् द्वावपि भाष्यस्थेतरपदोपात्ताविति भावेनाह ॥ **न साङ्ख्यस्येति** ॥ **नापि स्वन्यायेनेति च** ॥ **तेन वैदिकत्वेति** ॥ अजामेकां लोहितशुक्लकृष्णामित्यादिमन्त्रार्थत्वेनोक्तेरित्यर्थः ॥ अन्यदिति ॥ त्रिगुणात्मिकानाद्यविद्यादिकमित्यर्थः । एवं व्याख्यानं स्वव्याहतं चेत्याह ॥ **किं चेति** ॥ **वृत्त्यन्तरेति** ॥ वक्ष्यमाणदिशेति भावः । एतेन भाष्ये चशब्दस्य किञ्चेत्यर्थः । नेति काकुः । अशब्दत्वमितरसिद्धं प्रधानादितरस्य मायावाद्यङ्गीकृतब्रह्मणः सिद्धं न भवति किं भवत्येवेति योजना सूचिता । भाष्यस्थचशब्दमनुक्तसमुच्चयं मत्वा ईक्षतेरिति सूत्रांशव्याख्यां च निराह ॥ **नापीति** ॥ एतेनेक्षितृत्वं चेतरसिद्धं मायावाद्यङ्गीकृतब्रह्मणः सिद्धं न भवतीति भाष्यार्थो दर्शितः । अर्थान्तरं चाभिप्रेत्य शङ्कान्तरं निराह ॥ **जगत्कारणस्येति** ॥ **अप्रयोजकत्वादिति** ॥ शुद्धात्मज्ञानादेव मोक्षोक्तेरिति भावः । एतेनेक्षितृत्वं चेतरसिद्धं मायावच्छिन्नब्रह्मणः सिद्धं न वाच्यम् । कुतः अशब्दं हेतुगर्भमिदम् ।

(भावदीपः)

अशब्दत्वात् । श्रवणादिरूपजिज्ञास्यत्वासम्भवात्तस्येति भाष्यार्थः सूचितो भवति । ननु न विशिष्टमीक्षितृ येन जिज्ञास्यत्वायोगः । किन्तु शुद्धमेव मायासम्बन्धादीक्षितृ तेन न कोऽपि दोष इत्यत आह ॥ **किञ्चेति** ॥ भवति उत्पद्यते शुद्धस्येत्यर्थः ॥ **दृश्यत्वेति** ॥ तथा च मिथ्यात्वापत्तिरिति भावः । एतेनेक्षितृत्वं चेतरसिद्धं इतरेण मायोपाधिना इतरस्य शुद्धब्रह्मणः सिद्धं उत्पन्नं न भवति तथात्वे इतरसिद्धं इतरस्येक्षितृत्वेतरस्य दृश्यत्वादेरपि सिद्धं भावे निष्ठा । सिद्धिर्न स्यात्किं भवेदेवेति तथेक्षितृत्वमुपचरितं चेदितरसिद्धं इतरस्य प्रधानस्य सिद्धं न भवेत्किं भवेदेवेति च भाष्यार्थः सूचितः ॥

## अभिनवचन्द्रिका

शिष्यः शङ्कते – **नन्विति** ॥ 'यतो वाच' इति वाङ्निवृत्त्युक्त्या अवाच्यत्वस्य 'अप्राप्य मनसा सहे'ति मनसोऽविषयत्वोक्त्याऽज्ञेयत्वस्य च लाभो भवतीत्यभिप्रेत्योक्तम् । अवाच्यत्वाज्ञेय-त्वाभिधायकश्रुतेः का गतिरित्येव प्रष्टव्यम्, न तु अज्ञेयत्वाभिधायकश्रुतेः का गतिरिति प्रष्टव्यमिति परास्तम् । अस्य शिष्यप्रश्नत्वेन पूर्वपक्षिप्रश्नत्वाभावात् । उपसंहरति – **एवमिति** ॥ 'न चाशब्दत्व-मितरसिद्धमिति भाष्यं इतरस्य पूर्वपक्षिणोऽशब्दत्वं प्रधानस्य न सिद्धमित्यर्थपरतया व्याख्याय इतरस्य सिद्धान्तिनः अशब्दत्वं प्रधानस्य न हि सिद्धमित्यर्थपरतयापि व्याचष्टे– **नापि स्वन्यायेनेति** ॥ इतरसिद्धं मायावादिसिद्धं 'सदेव सोम्ये'(छा.६)त्यादिवाक्यप्रतिपाद्यत्वं ब्रह्मणो न सम्भवति । यतः तेन तस्य शब्दावाच्यत्वमङ्गीकृतमिति 'न चाशब्दत्वमिति भाष्यस्य योजनान्तरमभिप्रेत्याह – **किं चेति** ॥ यथा त्वन्मते 'सदेवे'त्यादिवाक्यप्रतिपाद्यत्वं प्रधानस्य न सम्भवति, तथा ब्रह्मणोऽपि न सम्भवतीत्यर्थः । जगत्कारणं जिज्ञास्यं स्यात्, भिन्नमेवेति मन्वानः शङ्कते – **जगत्कारणस्येति** ॥ नन्वस्ति तावन्मायाया ईक्षितृत्वं, तत्सम्बन्धात् 'तदैक्षते'(छा.६-२)ति श्रुतौ शुद्धस्येक्षितृत्वमुच्यत इत्यत आह– **किं च मायया ईक्षणमिति** ॥ मायसम्बन्धाद्ब्रह्मणि ईक्षणं भवति । तच्च श्रुत्या उच्यत इत्युच्यते उत श्रुत्या ईक्षितृत्वमुपचर्यत इत्युच्यत इत्यर्थः । **प्रधानेऽपि सम्भवादिति** ॥ 'तदैक्षते'ति ईक्षितृत्वं प्रधानेऽपि सम्भवतीति तस्य जगत्कारणत्वे बाधकमित्यर्थः ।

## वाक्यार्थमुक्तावली

**व्यपदेश इति** ॥ वस्तुतस्तस्याभावादिति भावः । न केवलमन्यथानुपपत्तीति । अवाच्यत्व-वाच्यत्वादिप्रतिपादकप्रमाणद्वयविरोधान्यथानुपपत्त्येत्यर्थः । एवमिति पदमतर्क्यमिदिनान्वेतीति भावेन

(वाक्यार्थमुक्तावली)

व्याख्याति एवमिति ॥ **युक्त्यादिबलादिति** ॥ युक्तिरीक्षणीयत्वादिका । आदिपदेन सर्वे वेदा इति श्रुतिः । यद्वा युक्तिरर्थापत्तिः । आदिपदेनाप्रसिद्धेरिति स्मृतिर्गृह्यते । न प्रधानं श्रौतजगत्कारणमिति साध्यम्, अशब्दं हि तदिति हेतुः कारणत्वाभिधायकवैदिकशब्दगोचरत्वात् इत्यर्थः । कथमशब्दत्वमित्यत उक्तम् । तदैक्षतेति ईक्षतिश्रवणादिति । तदैक्षत तत्तेजोऽसृजत स एक्षत लोकान् व्यसृजदिति स ईक्षांचक्रे । स प्राणमसृजतेति कारणस्येक्षितृत्वश्रवणात्तस्याचेतनेऽयुक्तत्वादित्यर्थः । स्पष्टमेतत् सुधायाम् । केचित्तु अशब्दं हि तदिति हेत्वन्तरं इति व्याचक्षते । इतःपरं सिद्धान्तिततया अभिमतमायीतर-साङ्ख्यपरत्वेन व्याख्यानम् इत्यर्थः । अन्यदिति तेजोऽबन्नात्मकजगदुपादानमित्यर्थः । तदुक्तम् अनुव्याख्याने । तेजोऽबन्नात्मकं चापि यद्युपादानमिष्यत इति । नाममात्र इति । अनादितो जगदुपादा-नस्य प्रकृतिसूक्ष्मानतिरेकादिति भावः । एवं व्याख्यानं स्वन्यायविरुद्धमित्याह किञ्चेति । एतेन भाष्ये किञ्चाशब्दत्वं प्रधानादितरस्य ब्रह्मणस्त्वन्मते सिद्धं न किमिति योजनान्तरमुक्तं भवति । इदानीं चशब्दसूचितं दूषणान्तरमाह ॥ **नापीति** ॥ एतेन चेक्षितृत्वं इतरमते इतरस्य ब्रह्मणो न सिद्धमिति व्याख्यातं भवति । अर्थान्तरमभिप्रेत्य शङ्कां परिहरति । जगत्कारणस्येति । अप्रयोजकत्वादिति । शुद्धात्मज्ञानादेव मोक्षोपपत्तेरिति भावः । एतेन चेक्षितृत्वमितरस्य शुद्धातिरिक्तस्य मायावच्छिन्नस्य सिद्धम् इति वाच्यम् । कुतश्च यस्मात्तस्याशब्दत्वं श्रवणादिरूपजिज्ञासाविषयत्वमित्यर्थ उक्तो भवति । ननु न विशिष्टमीक्षितृ येन जिज्ञास्यत्वायोगः किन्तु शुद्धमेव मायासम्बन्धादीक्षित्रित्यत आह **किञ्चेति** ॥ अत्र किञ्चेति न दूषणान्तरप्रतिज्ञार्थं किन्तु माययेक्षणं भवत्युत किमित्यर्थः । अन्यथा वक्ष्यमाणदूषणस्य परस्येष्टत्वेन तत्कथनमयुक्तं स्यादिति बोध्यम् । दृश्यत्वाद्यपि इत्यादिपदेन मिथ्यात्वं गृह्यते । यद्वा दृश्यत्वमीक्षणीयत्वमादिपदेन वाच्यत्वं गृह्यते । **एतेनेति** ॥ ईक्षितृत्वमितरस्य शुद्धस्य सिद्धमुत्पन्नं भवति । तथात्वे इतरस्येक्षितृत्वादितरस्य दृश्यत्वादेरपि सिद्धं सिद्धिः भावे निष्ठा न स्यात्किमिति योजना सूचिता भवति । इति शब्दो भाष्यार्थोक्तिसमाप्तिद्योतकः । न चैवं श्रद्धाजाड्येनानेकार्थकथनं न टीकाभिप्रेतमिति वाच्यम् । भाष्यस्य बह्वर्थत्वात् । टीकाकृतश्च तद्वचने शक्तत्वात् । अक्षरार्थानुगुण्याच्चेति ।

## तत्त्वसुबोधिनी

सर्वथाऽप्रसिद्धे अवाच्यत्वव्यपदेशोऽपि कथं इत्यतो व्याचष्टे ॥ **साकल्येनेति** ॥ एवं भाष्यगत-मितरपदं मायावाद्यपेक्षया इतरसाङ्ख्यपरं कृत्वा 'न चाशब्दत्त्वमिति' वाक्यं व्याख्यातम् । इदानीम्

(तत्त्वसुबोधिनी)

अस्मदपेक्षया इतरमायावादिपरं कृत्वा तदेव वाक्यं व्याख्याति ॥ नापि स्वन्यायेनेति ॥ न च तत्रेति ॥ अन्यत्तेजोऽबन्नादिकम् । अवच्यत्वेऽपि लक्षणया श्रौतत्वं भविष्यतीत्यत आह ॥ **अवाच्य इति** ॥ ननु न विशिष्टमीक्षितृ येन जिज्ञास्यत्वायोगः । किन्तु शुद्धमेव मायासम्बन्धादीक्षित्रिति शङ्कापरिहारार्थमाह । **किञ्च माययेति** । किञ्चेति न दूषणान्तरप्रतिज्ञार्थः । किन्तु मायया चेक्षणं किं भवतीत्यर्थः । एवं सति आद्ये दृश्यत्वाद्यपीत्युत्तरवाक्यमपि सङ्गच्छते । विशिष्टपक्षे दूषणान्तरत्वे इष्टापत्तिप्रसङ्गेन तदयुक्तं स्यादिति बोध्यम् ॥ **आद्ये दृश्यत्वाद्यपीति** ॥ तथात्वे च दृश्यत्वस्य हेतोः अनैकान्तिकत्वमिति भावः ।

## वाक्यार्थमञ्जरी

अप्रसिद्धिनिमित्तकावाच्यत्वस्य वास्तव्यत्वे व्याहतिरित्यत आह ॥ **अवाच्यत्त्वादिव्यपदेश इति** ॥ व्यवहार इत्यर्थः । सर्वागमोक्तस्य कथमप्रसिद्धत्वमित्यत आह ॥ **साकल्येनेति** ॥ **अप्रसिद्धैवेति** ॥ पश्यन्तोऽपि न पश्यन्तीत्यनयोर्विरोधपरिहाराय साकल्येन न पश्यन्तीति वाच्यम् । तदेव चाप्रसिद्धत्वमिति भावः । **अन्यथानुपपत्तीति** ॥ वाच्यत्वसाधकप्रमाणान्यथानुपपत्तीत्यर्थः । इयम् अप्रसिद्धत्वादवाच्य-त्वादिरूपा ॥ **अप्रसिद्धिप्रसिद्धिभ्यामिति** ॥ तथा चाप्रसिद्धेरतर्क्यमज्ञेयं प्रसिद्धेस्तर्क्यं ज्ञेयं चेति व्याख्येयमिति भावः । अत्र ज्ञेयत्वमागमानुकूलतर्कप्रत्यक्षेणावचनतर्कयोः पृथगुक्तेरिति ध्येयम् । तदीयाधिकरणं सङ्क्षेपतोऽनुवदति ॥ **जगत्कारणत्वमिति** ॥ **सदेवेति** ॥ 'सदेव सौम्येदमग्र आसीत्' 'एकमेवाद्वितीयं' 'तदैक्षत बहुस्यां प्रजायेयेति' 'तत्तेजोऽसृजत' इत्यादावित्यर्थः ॥ **प्रधानमिति प्राप्तमिति** ॥ चेतनस्य ब्रह्मणोऽपरिणामितया क्रियाकर्तृत्वलक्षणसच्छक्त्यसम्भवात् प्रधानस्य तत्सम्भवादिति भावः ॥ **श्रौतेति** ॥ श्रुत्युक्तेत्यर्थः ॥ **ईक्षणश्रवणादिति** ॥ तस्य जडेऽसम्भवादिति भावः । अशब्दमित्यंशोक्तहेतुमाह ॥ **अशब्दमिति** ॥ प्रधानस्य श्रुत्यप्रतिपाद्यत्वात्तत् श्रुत्युक्तकारणं न भवतीत्यर्थः । इतरशब्दस्य मायिपरत्वमुपेत्य प्रकारान्तरमाह ॥ **नापीति** ॥ **श्रुतत्वादिति** ॥ तत्र लोहितशुक्लकृष्णामिति त्रिगुणात्मकत्वरूपतल्लिङ्गश्रवणादिति भावः । अन्यत्तेजोऽबन्नात्मकम् । अत्रोक्तरूपाणां यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्येति तेजःप्रभृतिषु प्रसिद्धत्वादिति भावः ॥ **नाममात्रेति** ॥ तेजोऽबन्नात्मकस्यैव प्रधानत्वादिति भावः । अत एवाह ॥ **अर्थान्तरस्येति** ॥ इत्थं व्याख्यानं स्वव्याहतं चेत्याह ॥ **किं चेति** ॥ **ईक्षतिस्वरूपत्वादिति** ॥ क्रियारूपस्य क्रियाश्रयत्वरूपकर्तृत्वानुपपत्तिरिति भावः । ननु 'तदैक्षत तत्तेजोऽसृजत' इति

(वाक्यार्थमञ्जरी)

जगत्कारत्वेनोक्तस्येक्षितृत्वमङ्गीक्रियते । जगत्कारणं च नेक्षारूपं शुद्धं किन्तु मायाविशिष्टं शबलमेव । अतो नोक्तदोष इत्याशङ्कते ॥ **जगत्कारणस्येति** ॥ जगत्कारणत्वेनोक्तं शुद्धमेवेति परिहरति ॥ **नेति** ॥ आदिसूत्रे जिज्ञास्यत्वेनोक्तस्यैव द्वितीये जन्मादिकारणत्वेनोक्तत्वादिति भावः । जिज्ञास्यं तु शुद्धमेवेति भावः । विशिष्टमेव जिज्ञास्यमस्त्वित्यत आह ॥ न हीति ॥ अप्रयोजकत्वादिति ॥ प्रयोजनविकलत्वादित्यर्थः । विशिष्टस्य मिथ्यात्वेन तज्ज्ञानस्य भ्रमत्वेन मोक्षाहेतुत्वादिति भावः । ननु न विशिष्टमीक्षितृ येन जिज्ञास्यत्वायोगः । किन्तु विशिष्टान्तर्गतं विशेष्यभूतं शुद्धमेव । न च तस्येक्षारूपत्वविरोधः । केवलवह्नेः रोगनिवर्तकत्वायोगेऽप्ययःपिण्डसमारूढस्य तथात्ववदीक्षारूपस्यापि शुद्धस्य मायासम्बन्धेनेक्षितृत्वसम्भवादित्याशङ्क्य किं श्यामेऽप्याम्रफले सौरातपसम्बन्धात्पीतरूपमिव शुद्धेऽपि माययेक्षणं सम्भवतीति विवक्षितं उत विशिष्टगतं विशेष्ये केनचित्सम्बन्धेनोपचर्यत इति पृच्छति ॥ **किं चेति** ॥ माययेक्षणं च किमित्यर्थः । एतेन विशिष्टपक्ष एव दूषणान्तरप्रतिज्ञाने तेनापि विशिष्टस्य दृश्यत्वाङ्गीकारेण दृश्यत्वाद्यपि किं न स्यादिति दूषणाभिधानमसङ्गतमिति निरस्तम् ॥ **दृश्यत्वाद्यपीति** ॥ केवलस्य वह्नेरित्यादिन्यायसाम्यात् । तथा च मिथ्यात्वं स्यादिति भावः ॥

## विवृतिः

सर्वथाऽप्रसिद्धे अवाच्यत्वव्यपदेशोऽपि कथमित्यतो व्याचष्टे ॥ **साकल्येनेति** ॥ एवं च भाष्यगत-मितरपदं मायावाद्यपेक्षया इतरसांख्यपरं कृत्वा न चाशब्दत्वमिति वाक्यं व्याख्यातम् । इदानी-मस्मदपेक्षयेतरमायावावादिपरं कृत्वा तदेव वाक्यं व्याख्याति ॥ **नापि स्वन्यायेनेति** ॥ **न च तत्रेति** ॥ अन्यत्तेजोबन्नादिकम् । अवाच्यत्वेऽपि लक्षणया श्रौतत्वं भविष्यतीत्यत आह ॥ **अवाच्य इति** ॥ ननु न विशिष्टमीक्षितृ, येन जिज्ञास्यत्वायोगः किं तु शुद्धमेव मायासम्बन्धादीक्षित्रिति शङ्कापरिहारार्थमाह ॥ **किं च माययेति** ॥ किञ्चेति न दूषणान्तरप्रतिज्ञापनार्थः किं तु मायया चेक्षणं किं भवतीत्यर्थः ॥ एवं सत्यति दृश्यत्वाद्यपीत्युत्तरवाक्यमपि सङ्गच्छेत । विशिष्टपक्षे दूषणान्तरत्वे इष्टापत्तिप्रसङ्गेन तदयुक्तं स्यादिति बोध्यम् । आद्ये अदृश्यत्वाद्यपीति ॥ तथात्वे च दृश्यत्वस्य हेतोरनैकान्तिकत्वमिति भावः ।

## सूत्रभाष्यम्

**॥ ॐ गौणश्चेन्नात्मशब्दात् ॐ ॥ ६ ॥**

(सूत्रभाष्यम्)

न च गौण आत्मा दृश्यो वाच्यश्च न निर्गुण इति युक्तम् । आत्मशब्दात् ।

'यो गुणैः सर्वतो हीनो यश्च दोषविवर्जितः ।
हेयोपादेयरहितः स आत्मेत्यभिधीयत ॥

एतदन्यस्वभावो यः सोऽनात्मेति सतां मतम् ॥
अनात्मन्यात्मशब्दस्तु सोपचारः प्रयुज्यत' इति वामने ॥

द्वे वाव ब्रह्मणो रूपे आत्मा चैवानात्मा च । तत्र यः स आत्मा स नित्यः शुद्धः केवलो निर्गुणश्च । अथ ह योऽनीदृशः सोऽनात्मेति तलवकारब्राह्मणम् । न च मुख्ये सत्यमुख्यं युज्यते ॥ ६ ॥

## सत्तर्कदीपावली

उक्तार्थमाक्षिप्य समादधत्सूत्रमुपन्यस्य व्याचष्टे ॥ **गौणश्चेदित्यादिना** ॥ ननु जगत्कर्तरि परमात्मनि निखिलश्रुतिसमन्वयदोषपरिहारायोदाहृतं वचनमात्मन्येवात्मानं पश्येदित्यादि तत्सत्त्वरजस्तमोगुणबद्धात्मविषयतयोपपन्नमिति । यन्निषिद्धं तत्त्रिगुणातीतस्य परमात्मनो अदृश्यत्वावाच्यत्वसाधकमिति चेत् । मैवम् । आत्मशब्दमुख्यार्थपरित्यागप्रसङ्गात् । त्रिगुणातीतस्यैव मुख्यार्थत्वात् । प्रमाणवचनेनैतदुपपादयति ॥ **यो गुणैरित्यादिना** ॥ न च मुख्ये सत्यमुख्यं युज्यते ।

## तत्त्वप्रदीपिका

गौणश्चेन्नाऽत्मशब्दात् । एकमेव ब्रह्माविद्यावस्थायां स्रष्टृत्वादिगुणैस्सगुणं, दृश्यं, वाच्यं च, विद्यावस्थायां निर्गुणमदृश्यमवाच्यं चेति चेन्न । आत्मशब्दात् । तस्मिन्नीक्षणीये ब्रह्मणि, ताभिरेव श्रुतिभिः 'आत्मन्येवाऽत्मानं पश्येत्' 'अज आत्मा महान्ध्रुव' इत्यादिभिरात्मशब्दप्रयोगात् । न च सगुणस्याऽत्मशब्दवाच्यत्वमस्तीत्याह– **यो गुणैस्सर्वतो हीन इत्यादिना** । हेयोपादेयरहितः स्वाभाविकदोषवर्जितः, सर्वगुणपूर्णः । द्वे वाव ब्रह्मणो रूपे इत्यत्रानात्मनो ब्रह्मरूपत्वं तदधीनत्वात्, 'सर्वं खल्विदं ब्रह्म' इतिवत्तत्प्रतिमात्वाद्वा । रूप्यतेऽस्मिंस्तदिति तद्रूपमेतत् ।

## तत्त्वप्रकाशिका

उक्तार्थमाक्षिप्य समादधत्सूत्रं पठित्वा व्याचष्टे ॥ **गौणश्चेदिति** ॥ यत् दृश्यत्वबलाद् ब्रह्म

(तत्त्वप्रकाशिका)

**वाच्यमित्युक्तं न तद्युक्तम् । यत ईक्षतिश्रुतौ जीवाख्यो गौणात्मा दृश्य उच्यते तदन्यथानुपपत्त्या च स एव वाच्यः स्यात्र गुणातीतं ब्रह्मेक्षतिश्रुत्युक्तम् । गौणग्रहणे बाधकस्येतरज्ञापकस्य चाभावात् । अतो न तद्वाच्यमिति चोद्यं न युक्तम् । ईक्षणीये तस्मिन्नेव (आत्मन्येव) आत्मानं पश्येत् । 'अज आत्मा महान् ध्रुवः' 'तमेव धीरो विज्ञाय' इत्यात्मशब्दश्रवणात्तेन च तस्य निर्गुणत्वसिद्धेः । स एव ईक्षत्या वाच्य इत्यर्थः । नन्वात्मशब्दसद्भावेऽपि कुतोऽयं निर्गुणो न गौण इत्यत आह ॥ य इति ॥ गुणैः सत्त्वादिभिः । हेयोपादेयरहित अत्युपादेय एवेत्यर्थः । हृदि ह्येष आत्मेत्येतदन्यस्वभावेऽप्यात्मशब्दप्रयोगात्कथं सोऽनात्मेत्यत आह ॥ अनात्मनीति ॥ रूपशब्दः स्वरूपप्रतिमारूपाभिप्रायः । तत्रात्मानात्मनोः स य आत्मा स नित्यो देहहान्यादिरहितः शुद्धः कर्मलेपविधुरः केवलो जडामिश्रः । ननूपचारेणापि गौणे प्रयोगसद्भावात्स एव श्रुत्युक्तदृश्यात्मा किं न स्यादित्यत आह ॥ न चेति ॥ आत्मपदमुख्यार्थे निर्गुणे दृश्यतया प्रतिपाद्ये सम्भवत्यमुख्यार्थगौणग्रहणं न युज्यते । मुख्यासम्भव एव गौणाश्रयणादिति भावः ॥ ६ ॥**

# गुर्वर्थदीपिका

सत्त्वादिगुणत्रयबद्धत्वं गौणत्वं तदतीतत्वञ्च निर्गुणत्वमिति भावेनोक्तं जीवाख्यो गौण आत्मेति । न गुणातीतं ब्रह्मेति च । एवमुत्तरत्राऽपि ज्ञेयम् । अज आत्मा महान्ध्रुव इत्येत्रक्षणीये आत्मशब्दश्रवणं बोधयितुं तमेव धीरो विज्ञायेति वाक्यशेषोदाहरणम् । 'गौणग्रहणे बाधकस्य' इत्यादौ गौणशब्दः सत्त्वादिगुणयुक्तजीवरूपमुख्यार्थपरः, न तु 'मुख्यासम्भवेऽमुख्याश्रयणात्' इत्यत्रेवाऽमुख्यार्थपर इति ज्ञेयम् । **उपादेय एवेत्यर्थ इति** । अनेन हेयोपादेयेति भावप्रधानो निर्देशः । निषेधस्य च समुचितोभयप्रतियोगिकत्वम्, न तु प्रत्येकप्रतियोगिकत्वमित्युक्तं भवति । यद्यपि हेय एवेत्यपि सम्भावितम् । तथापि तस्य बाधितत्वादेवमुक्तम् । **स्वरूपप्रतिमारूपाभिप्राय इति** । आत्मनि स्वरूपाभिप्रायः अनात्मनि प्रतिमारूपाभिप्राय इत्यर्थः । **स य इति** । स नित्य इति तच्छब्दस्य पृथग्विद्यमानत्वादेवमन्वय उक्तः । जीवस्यापि नित्यत्वादाह– **देहहान्यादीति** ।

# भावदीपः

॥ ॐ गौणश्चेन्नाऽऽत्मशब्दात् ॐ ॥ उक्तार्थमाक्षिप्येत्युक्तं व्यञ्जयन् तत्र साध्यहेतुभावेन भाष्यं व्यनक्ति ॥ **यद्दृश्यत्वेति** ॥ **गौणेति** ॥ सत्वादिगुबद्धेत्यर्थः । जीवश्चेदिति वाच्ये गौण इत्युक्तिकृत्यमुत्तरसूत्रे व्यक्तम् । गौणात्मेत्यात्मपदप्रयोगेणैतत्सूचयति । पूर्वसूत्रेऽनुषक्ततत्पदानुरोधेन

(भावदीपः)

अशब्दमिति क्लीबोक्तावपि इह सूत्रे आत्मानं पश्येदित्यात्मपदानुरोधेन गौण इति पुल्लिङ्गोक्तिरिति ॥ **गौणेति** ॥ सत्वादिगुणबद्धजीवग्रहणम् इत्यर्थः ॥ **इतरेति** ॥ निर्गुणेत्यर्थः । आत्मपदोक्त्यर्थमज इत्याद्युक्तिः ॥ **उपादेय एवेति** ॥ हेयत्वसहितोपादेयत्वरहित इति स्मृतौ व्याख्येति भावः । हृदि हीति श्रुतेर्जीवपरत्वं तु अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हीति सूत्रसिद्धमिति भावः । भाष्ये अनात्मनि जीवे सोपचार इति परममुख्यवृत्त्यपेक्षयेति भावः । न तु गौणवृत्त्येति । कल्पनोपदेशाच्चेति सूत्रविरोधात् ॥ **स्वरूपेति** ॥ आत्मनि स्वरूपाभिप्रायोऽनात्मनि जीवे प्रतिमाभिप्राय इत्यर्थः । तत्रेति व्याख्येयानुवादेनात्मानात्मनोरिति व्याख्या । प्रागात्मेति निर्देशात्स इत्युद्दिश्य आत्मेति विधिरयुक्त इति मत्वाऽनुवाद इत्याह ॥ **स य आत्मेति** ॥ तेन योऽनात्मा सोऽनीदृश इत्यपि दर्शितम् । **पुनरुक्तेराह** ॥ **शुद्ध इति** ॥ गौणे जीवे । गौणाश्रयणादमुख्याश्रयणादित्यर्थः ॥ ६ ॥

## अभिनवचन्द्रिका

**उक्तार्थमाक्षिप्येति** ॥ भवत्येव निर्गुणो वाच्यः, तथापि 'स एतस्मा' (प. उ. ५-२)दित्यादि श्रुत्युक्तेक्षणीयत्वान्यथानुपपत्त्या निर्गुणस्य एतच्छ्रुतिप्रतिपाद्यत्वाभावादिति मन्यमानस्य तटस्थस्य मतमालंब्य, उक्तार्थमाक्षिप्येत्यर्थः । एतेन – सर्वशब्दावाच्यत्ववादिनं प्रति आत्मशब्देन हेतुना सगुणस्य 'स एतस्मा'दिति श्रुतिप्रतिपाद्यत्वनिराकरणं निर्गुणस्य तत्प्रतिपाद्यत्वसमर्थनं चायुक्तम् । आत्मशब्दस्य निर्गुणवाचकत्वानङ्गीकारादिति परास्तम् । **अतो न तद्वाच्यमिति** ॥ वस्तुगत्या आत्मादि-शब्दवाच्यमपि अतः ईक्षणीयत्वलिङ्गात् तद्वाच्यमिति न सिध्यतीति यच्चोद्यं तन्न युक्तमित्यर्थः । **तेन च तस्येति** ॥ निर्गुणवाचकेनाऽऽत्मशब्देन ईक्षतिश्रुतिप्रतिपाद्यस्य निर्गुणत्वसिद्धेरित्यर्थः । आत्म-शब्दप्रवृत्तिनिमित्तनिरूपणाय प्रवृत्तं 'यो गुणैः सर्वतो हीन' इत्यादिकं व्याचष्टे । **गुणैः सत्वादिभि-रिति** ॥ यद्यपि 'यश्च दोषविवर्जित' इत्यनेनैव सत्वादिगुणशून्यत्वं लभ्यते, तथापि तेषां गुणशब्द-वाच्यत्वात् व्यावृत्तिरकृतेति भ्रमः स्यात् स मा भूदित्येवमर्थं पृथङ्निराकरणम् । **हेयोपादेयरहित इत्युपादेय एवेत्यर्थ इति** ॥ भावप्रधानोऽयं निर्देशः । ततश्च हेयत्वसमानाधिकरणोपादेयत्वशून्यत्वोक्त्या उपादेय एवेत्यर्थो लभ्यत इति भावः ।

(सू.६) **भाष्ये अनात्मनीति** ॥ परब्रह्मव्यतिरिक्ते जीवादावात्मशब्दः सोपचारः प्रयुज्यते । पराधीनप्रवृत्तिनिमित्तमपेक्ष्य प्रयुज्यत इत्यर्थः । एतेन 'आत्मा जीवे धृतौ देहे स्वभावे परमात्मनी'ति वचनात् आत्मशब्दो जीवे रूढ एवेति तस्यौपचारिकत्वाभिधानमयुक्तमिति परास्तम् । ब्रह्मणि परममुख्य-

(अभिनवचन्द्रिका)

वृत्तिः, जीवे मुख्यवृत्तिरित्यङ्गीकारात् । रूपशब्दः स्वरूपप्रतिमारूपाभिप्राय इति ॥ स्वरूपप्रतिमा-साधारणपूजास्पदत्वरूपसामान्यधर्मावच्छिन्नपर इत्यर्थः । **जडामिश्र इति ॥** जडदेहानवच्छिन्न इत्यर्थः । ननु – **उपचारेणापीति ॥** पराधीनप्रवृत्तिनिमित्तमपेक्ष्य जीवे 'हृदि ह्येष आत्मे'त्यादौ आत्मशब्द-प्रयोगदर्शनात् 'आत्मन्येवात्मानं पश्ये'(बृ. ६-४-२३)दित्यादावपि स एवोक्तः किं न स्यादिति भावः । आत्मपदेति ॥ 'आत्मन्येवात्मानं पश्ये'दित्यत्र आत्मशब्दपरममुख्यार्थे प्रतिपाद्ये सम्भवति न मुख्यार्थः प्रतिपाद्यतयाऽभ्युपगन्तव्यः परममुख्यार्थासम्भव एव मुख्यार्थस्य ग्राह्यत्वादिति भावः ।

## वाक्यार्थमुक्तावली

ॐ गौणश्चेन्नात्मशब्दात् ॐ ॥ **गौणात्मेति** । सत्वादिगुणबद्ध इत्यर्थः । जीव इति सूत्रे वक्तव्ये गौणग्रहणकृत्यं तदुत्तरसूत्रे न हि गौणात्मनिष्ठस्य मोक्षः इत्युक्तिसौकार्यायेति बोध्यम् । पूर्वसूत्रे अनुषक्ततत्पदानुरोधेनाशब्दमिति क्लीबोक्तावप्येतत्सूत्रोपात्तश्रुतिस्थात्मपदानुरोधेन गौण इति पुल्लिङ्गनिर्देशः । विज्ञाय प्रज्ञां कुर्वीतेत्यत्र नात्मशब्दः श्रूयते इत्यत आह– **अज आत्मेति** । पूर्वशेषोदाहरणम् उपादेय एवेति । अनेन हेयोपादेयेति भावप्रधानो निर्देशः । तथा चोपादेयत्वोपेतेति । एकसत्वे द्वयं नास्तीति प्रतीत्या द्वित्वावच्छिनोभयाभावम् एकमादाय योजनायामुपादेयत्वमात्रं पर्यवस्यति इत्यर्थः । भाष्ये अनात्मनि जीवे सोपचार इत्यत्र परममुख्यापेक्षया अल्पवृत्तिरुपचार इत्युच्यते ॥ **स्वरूपेति ॥** आत्मनि स्वरूपाभिप्रायो नात्मनि जीवे प्रतिमारूपाभिप्राय इत्यर्थः । **स य इति ॥** स नित्य इति तच्छब्दस्य पृथग्विद्यमानत्वादिति भावः । जीवस्यापि नित्यत्वादाह । **देहहान्यादीति** । **गौणाश्रयणादिति** । अमुख्याश्रयादित्यर्थः ।

## तत्त्वसुबोधिनी

गौणग्रहणे बाधकस्येत्यादौ गौणशब्दः सत्वादिगुणयुक्तजीवरूपमुख्यार्थपरः । न तु मुख्यस्या-सम्भवेऽमुख्याश्रयणात् इत्यत्रेवामुख्यार्थपर इति ज्ञेयम् । अस्तु आत्मशब्दश्रवणं ततः किमित्यत आह ॥ **तेन चेति ॥ उपादेय एव इत्यर्थ इति ॥** अनेन हेयोपादेयेति भावप्रधानो निर्देशः । निषेधस्य समुचितोभयप्रतियोगिकत्वम् । न तु प्रत्येकप्रतियोगिकत्वमित्युक्तं भवति । यद्यपि हेय एवेत्यपि सम्भावितं तथापि तस्य बाधितत्वादेवम् उक्तम् । **स्वरूपप्रतिमारूपाभिप्राय इति ॥** आत्मनि स्वरूपाभिप्रायः अनात्मनि प्रतिमारूपाभिप्राय इत्यर्थः । **स य इति ॥** स नित्य इति तच्छब्दस्य पृथग्विद्यमानत्वादेवमन्वय उक्तः । जीवस्यापि नित्यत्वादाह ॥ **देहहान्यादीति ॥**

## वाक्यार्थविवरणम्

**अत्युपादेय एवेति** ॥ हेयत्वसहितमुपादेयत्वं नास्तीत्युक्ते सविशेषणे हीति न्यायेन हेयत्वसाहित्यनिषेधेऽत्युपादेयत्वमेव प्राप्नोतीत्यर्थः ॥

## वाक्यार्थमञ्जरी

ॐ **गौणश्चेन्नात्मशब्दात्** ॐ ॥ पुरुषमीक्षत इत्यादावीक्षणकर्मत्वेनोक्तो गौणस्त्रिगुणसम्बद्धो जीव एव न विष्णुरिति चेन्न । आत्मानं पश्येदित्यादावीक्षणकर्मणि विष्णुमात्रनिष्ठात्मशब्दश्रवणादित्यर्थः ॥ **गौणेति** । सत्वादिगुणबद्धेत्यर्थः । ईक्षतिश्रुत्युक्तं निर्गुणमेवास्त्वित्यत आह ॥ **गौणग्रहण इति** ॥ भाष्योदाहृते विज्ञाय प्रज्ञामित्यंशे आत्मशब्दाभावात्पूर्वांशमुदाहरति ॥ **अज इति** ॥ ध्रुवः निश्चलः । आनन्दादिभ्रमं वारयति ॥ **सत्वादिभिरिति** ॥ **अत्युपादेय इति** ॥ अनेन हेयत्वसहितोपादेयत्वाभाववानित्यर्थः उक्तो भवति ॥ **हृदि ह्येप इति** ॥ अस्य जीवपरत्वं हृदि हीति सूत्रसिद्धमिति भावः । भाष्ये अनात्मनि जीवे ॥ **सोपचार इति** ॥ परममुख्यत्वापेक्षया न तु गौण्या वृत्त्या ॥ **स्वरूपप्रतिमाभिप्राय इति** ॥ आत्मनि स्वरूपाभिप्राय अनात्मनि प्रतिमाभिप्राय इत्यर्थः ॥ **स य इति** ॥ सः प्रसिद्धो य इत्यर्थः । तेन न तच्छब्दान्तरवैयर्थ्यमिति भावः । जीवस्यापि नित्यत्वादाह ॥ **देहहानीति** ॥ जडामिश्रः प्राकृतदेहरहितः ॥ **गौणाश्रयणादिति** ॥ अमुख्याश्रयणादित्यर्थः ।

## विवृतिः

गौणग्रहणे बाधकस्येत्यादौ गौणशब्दः सत्वादिगुणयुक्तजीवरूपमुख्यार्थपरः । न तु मुख्यस्यासम्भवे अमुख्याश्रयणादित्यत्रेवामुख्यार्थपर इति भावः । अस्त्वात्मशब्दश्रवणं ततः किमित्यत आह ॥ **तेन चेति** ॥ **उपादेय एवेत्यर्थ इति** ॥ अनेन हेयोपादेयेति भावप्रधानो निर्देशः । हेयत्वे सत्युपादेय इत्यर्थः । निषेधस्य च समुच्चितोभयप्रतियोगिकत्वं न तु प्रत्येकप्रतियोगिकत्वमित्युक्तं भवति ॥ यद्यपि हेय एवेत्यपि सम्भवति तथापि तस्य बाधितत्वादेवमुक्तम् । **स्वरूपप्रतिमारूपाभिप्राय इति** ॥ आत्मनि स्वरूपाभिप्रायः अनात्मनि प्रतिमाभिप्राय इत्यर्थः ॥ **स य इति** ॥ सनित्य इति तच्छब्दस्य पृथग्विद्यमानत्वादेवमन्वय उक्तः । जीवस्यापि नित्यत्वादाह ॥ **देहहान्यादीति** ।

## सूत्रभाष्यम्

**॥ ॐ तन्निष्ठस्य मोक्षोपदेशात् ॐ ॥ ७ ॥**

न हि गौणात्मनिष्ठस्य मोक्षः । 'यस्यानुवित्तः प्रतिबुद्ध आत्माऽस्मिन् सन्दोहे गहने प्रविष्टः । स विश्वकृत्स हि सर्वस्य कर्ता तस्य लोकः स उ लोक एव' (बृ.उ. ६-४-१३) इत्यात्मनिष्ठस्य मोक्ष उपदिश्यते । 'अयमात्मा ब्रह्म' (मा.उ. १-२, बृ.उ. ४-५-१९) ॥

ब्रह्मेति परमात्मेति भगवानिति शब्द्यते (भाग. १-२-११) ।

दत्तं दूर्वाससं सोममात्मेशब्रह्मसम्भवान् (भाग. ४-१-१५) ॥

'चेतनस्तु द्विधा प्रोक्तो जीव आत्मेति च प्रभो ।
जीवा ब्रह्मादयः प्रोक्ता आत्मैकस्तु जनार्दनः ॥

इतरेष्वात्मशब्दस्तु सोपचारः प्रयुज्यते ।
तस्याऽत्मनो निर्गुणस्य ज्ञानान्मोक्ष उदाहृतः ॥

सगुणास्त्वपरे प्रोक्तास्तज्ज्ञानान्नैव मुच्यते ।
परो हि पुरुषो विष्णुस्तस्मान्मोक्षस्ततः स्मृत' इति पाद्मे ॥ ७ ॥

## सत्तर्कदीपावली

युक्त्यन्तरेण त्रिगुणातीतस्य औपनिषदात्मत्वं साधयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **तन्निष्ठस्येत्यादिना** ॥ यस्येति श्रुतेरयमर्थः । यस्य निरन्तरोपासकस्यानुवित्तो ज्ञातः स्वयंप्रभः आत्मा दहराकाशप्रविष्टः सर्वकृत् यः स हि परमात्मा सर्वस्य कर्ता । अतः स्ववेत्तारं कृतकृत्यं करोतीत्यभिप्रायः । तस्य परमात्मनो यो वैकुण्ठादिलोकः स एव तद्वेत्तुर्लोक इति । एतदुक्तं भवति । यन्निष्ठस्यात्र मोक्ष उपदिश्यते सोऽत्रोच्यमान आत्मा त्रिगुणातीत एव भवेत् । न हि गुणवद्धात्मनिष्ठस्य मोक्ष उपपद्यते । स्वतस्त्रिगुणातीतस्य मोक्षदस्य विष्णोरेवात्मशब्द इत्यत्र श्रुतिपुराणवचनान्याह अयमिति ।

अनसूया तथैवात्रेर्जज्ञे पुत्रानकल्मषान् ।
दत्तं दूर्वाससं सोममात्मेशब्रह्मसम्भवान् ॥

(सत्तर्कदीपावली)

इत्यादिभागवतवाक्ये शर्वपितामहौ पृथङ्निर्दिश्य विष्णोरेवात्मशब्देन निर्देशात्तस्य गुणवद्ब्रह्माद्यवाचकत्वं विष्णुवाचकत्वं च सिद्ध्यति । स्वतस्त्रिगुणवर्जितत्वं विष्णोस्तन्निष्ठस्य मोक्षश्च भागवत एवोक्तः ।

हरिर्हि निर्गुणः साक्षात्पुरुषः प्रकृतेः परः ।
स सर्वदृगुपद्रष्टा तं भजन्निर्गुणो भवेदिति ।

## तत्त्वप्रदीपिका

तन्निष्ठस्य मोक्षोपदेशात् । तस्मिन्नीक्षणीयत्वेनोक्त आत्मनि निष्ठस्य मोक्षोपदेशाच्च स निर्गुणः । न हि शबलब्रह्मनिष्ठस्य जीवनिष्ठस्य वा मोक्षस्तन्मतेऽपि ।

यस्येत्यादेरयमर्थः । यस्य सर्वज्ञ आत्मा यथावज्ज्ञातः । 'सन्दोहः' कार्यकारणसङ्घातः । सन्दुह्यतेऽनेन पुरुषार्थ इति वा सन्दोहो देहः । तस्मिन्नाभीरे प्रविष्टः । स 'विश्वकृत्' कृतकृत्यः । कुतः ? स हि परमात्मा प्रसन्नः सर्वशक्तिः सर्वमस्य ज्ञानिनः कार्यं करोति । 'तस्य' परमात्मनो यो 'लोकः' स्थानं, तदेव ह्यस्य स्थानं भवति । ब्रह्मशब्देन पूर्वं प्रस्तुते विष्णौ 'गौणश्चेन्नाऽऽत्मशब्दादि'त्यात्मशब्दः प्रयुक्तः । अस्य शब्दत्रयस्यैकार्थत्वे प्रमाणमाह– अयमात्मेति श्रुतिं भागवतवचनं च ।

'वदन्ति यत्तत्वविदस्तत्वं यज्ज्ञानमद्वयम् ।
ब्रह्मेति परमात्मेति भगवानिति शब्द्यत' इति ॥

'अनसूया तथैवात्रेर्जज्ञे पुत्रानकल्मषान् ।
दत्तं दुर्वाससं सोममात्मेशब्रह्मसम्भवान्' इति च ॥

विष्णोरात्मत्वं, ब्रह्मरुद्रादीनाममुख्यात्मत्वं, तस्य सत्वादिगुणवर्जितत्वं, सर्वोत्तमत्वं, तज्ज्ञानान्मोक्षं पाद्मवचनेनापि साधयति ॥

## तत्त्वप्रकाशिका

नन्वात्मशब्दो मुख्यत एव गौणपर इति किं न स्यात् । न चोक्तश्रुतिस्मृतिविरोधः । तत्राऽऽत्मशब्दो विष्णौ मुख्यो जीवेष्वमुख्य इत्यनुक्तेश्चेतनाचेतनविषयत्वसम्भवात् । तथा च श्रुतेरार्जवसम्भवात् । निर्दोषत्वादेः स्वभावविपयत्वोपपत्तेरित्याशङ्कां परिहर्तुं सूत्रं पठति ॥ **तन्निष्ठस्येति** ॥ नात्मशब्दो गौणे मुख्य इति युक्तम् । आत्मनिष्ठपुरुषस्य मोक्षोपदेशादिति सूत्रार्थः । तन्निष्ठस्य मोक्षोपदेशोऽपि कुतोऽसौ न गौण इत्यत आह ॥ **न हीति** ॥ गुणवद्धात्मविज्ञानाद् गुणनिवृत्तिरूपमोक्षो न युक्त इत्यर्थः । कोऽ-

(तत्त्वप्रकाशिका)

सावात्मनिष्ठस्य मोक्षोपदेश इत्यतस्तमाह ॥ **यस्येति** ॥ सर्वकर्तृत्वात्स वायुकर्ता सर्वज्ञोऽस्मिन् देहे गुहा-स्थाने प्रविष्ट आत्मा येनोपासकेन ज्ञातो भवति तस्योपासकस्य स विष्णुलोके एव लोको भवतीत्यात्म-निष्ठपुरुषस्य मोक्ष उपदिश्यतेऽतो नात्मशब्दो गौणपर इत्यर्थः । आत्मशब्दो विष्णावेव न जीवेष्वित्यत्र स्पष्टश्रुतिस्मृतीश्चाऽऽह ॥ **अयमिति** ॥ कुतस्तस्यैवात्मत्वं नान्येषामित्यत आह ॥ **तस्येति** ॥ आत्म-ज्ञानान्मोक्षो 'यस्यानुवित्त' इत्यादावुदाहृतोऽतो नात्मशब्दो विष्णोरन्यत्र । तस्यैव निर्गुणस्य मोक्षदातृत्व-सम्भवादित्यर्थः । मोक्षोपदेशोऽपि कुतो नेतरेषामात्मत्वमित्यत आह ॥ **सगुणा इति** ॥ विष्णोर्निर्गुण-त्वेनास्तु मोक्षदातृत्वसम्भावनानिश्चयस्तु कुत इत्यत आह ॥ **परो हीति** ॥ परः स्वतन्त्रः ॥ ७ ॥

## गुर्वर्थदीपिका

हेयोपादेयशब्दौ भावप्रधानाविति भावेनोक्तम् उपादेय एवेति । सतामिति शेषः । सज्जनेपु हेयत्वरहितं दुर्जनेषूपादेयत्वरहितमिति वा हेयोपादेयरहितम् । यद्यप्यात्मशब्दोऽयं काञ्चिदभिधावृत्तिं विना जीवादिषु न केवलोपचारेण प्रवृत्तः । लौकिकलिङ्गानुशासनादिविरोधात् । अनङ्गीकाराच्च । तथाऽपि विद्वद्रूढ्या महायोगेन च भगवत्यभिधीयमानपरममुख्यवृत्त्यपेक्षयाऽज्ञरूढिमात्रमूलायाः अभिधावृत्तेरप्यस्या अमुख्यत्वेनोपचारप्रायत्वात्सोपचार इत्युक्तम् । अत एव हि परममुख्याऽवान्तर-मुख्याऽमुख्या चेति त्रिधा वृत्तिं वर्णयन्ति । आत्मशब्दवाच्यतया लोकप्रसिद्धजीवस्याऽत्मशब्देन ग्रहणेऽनात्मतया प्रसिद्धजडस्यानात्मशब्देन ग्रहणे लोकप्रसिद्ध्यनुरोधाख्यमार्जवं चास्तीति भावेनोक्तं तथा चेति । 'दुह प्रपूरण' इति धातोः 'दादेर्धातोर्घ' इति हकारस्य घकारे कृते सन्दोह एव सन्दोघः । एवं च पञ्चभूतसमूहवाची स शब्द इति भावेनोक्तं देह इति विशति देहिनां हृदयगुहां वाति च श्वासोच्छ्वासादिरूपेणेति विश्व इति । भावेन विश्वकृच्छब्दार्थमाह वायुकर्तेति । तस्योपासकस्य सः प्रसिद्धः उलोक एव उच्चत्वादुकारवाच्यविष्णुलोक एव लोको भवतीति श्रौतपदानामर्थष्टीकाकृता तु फलितोऽर्थः कथितः । अन्यथोत्तरलोकपदस्यैवपदस्य च वैयर्थ्यं स्यादिति ज्ञेयम् । अस्यां श्रुतावात्म-ज्ञानादेव मोक्षोक्तेर्विष्णुरेव मुख्याता । अज्ञरूढिमात्रेणामुख्यतयोक्तो जीवस्त्वमुख्य एव । तस्यापि मुख्यात्मत्वे श्रुतिरियं तद्व्यवच्छेदाय परमात्मेति पदमुपादद्यात् । अतोऽनया श्रुत्योपेक्षितः स जीवो न कुत्रापि श्रुतेर्मुख्यार्थः । बाधकाभावे च परममुख्यार्थस्य क्वापि त्यागायोगात् । एवं चालौकिकश्रुतीनां मार्गेऽलौकिकमार्गाश्रयण एवाऽऽर्जवं न त्वज्ञलौकिकमार्गानुसरण इति भावः । अयमात्मा ब्रह्मेत्यत्रायं पूर्वप्रकरणे प्रस्तुत आत्मा न त्वज्ञप्रसिद्धो जीवात्मा । अन्तरङ्गप्रकरणप्रस्तावमुल्लङ्घ्य बाह्याङ्ग-प्रस्तावानुसरणे कारणाभावात् । विष्णोरात्मशब्दवाच्यत्वे ब्रह्मेति परमात्मेति परमात्मपदसहितस्मृत्युपादा-

(गुर्वर्थदीपिका)

नस्य कथमुपयोग इति चेदित्थं यथा राजत्वजात्याक्रान्तेषु महत्त्वाभिधायकं महाराजपदं राजत्वे तस्य मुख्यतायां च प्रमाणं तथा परमात्मपदमपि विष्णोरात्मत्वे तस्य भगवत्येव मुख्यत्वे च प्रमाणमिति सुतरां प्रकृतोपयोगित्वात् ।

## भावबोधः

**श्रुतेरार्जवसम्भवादिति** । आत्मानात्मशब्दयोश्चेतनाऽचेतनविषयत्वेन प्रसिद्धेः रूपशब्दः स्वरूपाभिप्राय इत्यकल्पनाच्च तद्विषयत्वे 'द्वे वाव ब्रह्मणः' इति श्रुतेरार्जवसम्भवादित्यर्थः । स्वभावविषयत्वोपपत्तेरिति । जीवात्मन्यपि दुःखादिदोष औपाधिक एवेति भावः ।

यस्य ज्ञातो नित्यबुद्धो भगवान् पुरुषोत्तमः ।
तस्य लोकः स एवैको यो लोकः परमात्मनः ॥

स हि विष्णुः परो वायोरपि कर्ता प्रकीर्तितः ।
विश्वो वायुः समुद्दिष्टः पूर्णत्वाज्जीवसङ्घतः ॥

तदन्यस्यापि सर्वस्य कर्तैको विष्णुरेव हि ।
प्रविष्टो गहने देहमध्ये सन्दोहनामनि ॥

इति बृहदारण्यकभाष्योदाहृतवचनानुसारेण श्रुत्यर्थमाह– **सर्वकर्तृत्वादित्यादिना** ।

## भावदीपः

॥ ॐ तन्निष्ठस्य मोक्षोपदेशात् ॐ ॥ **आर्जवेति** ॥ आत्मानात्मशब्दयोश्चेतनाचेतनविषयतया प्रसिद्धेस्तदबाधनाद्रूपशब्दे प्रतिमारूपैकार्थत्वसम्भवेनानेकार्थत्वस्याकल्पनाच्च । तद्विषयत्वे द्वे वाव ब्रह्मण इति श्रुतेरार्जवं सम्भवतीत्यर्थः ॥ **स्वभावेति** ॥ जीवेऽपि दुःखादिदोष औपाधिक इति भावः । आत्मनिष्ठस्य मोक्ष उपदिश्यत इति भाष्यं हेतुगर्भमिति मत्वा योग्यसाध्यमध्याहृत्यार्थमाह ॥ **नात्मेति** ॥ **आत्मेति** ॥ एतेन सौत्रतच्छब्दः पूर्वसूत्रप्रकृतात्मपरामर्शीति दर्शितम् । अत्र यद्यपि तस्मिन्नीक्षणीयत्वेनोक्ते आत्मनि निष्ठस्य मोक्षोपदेशाच्च निर्गुण इत्यादिना तत्वप्रदीपे, तथा नन्वीक्षणीयत्वेन वाच्यत्वं मायाशबलस्य ब्रह्मणो न शुद्धस्येत्याशङ्कापरिहारकत्वेन तावद्गौणश्चेदिति तन्निष्ठस्येति च सूत्रद्वयमिति सन्यायरत्नावल्यां चेक्षणीयस्य सगुणत्वनिरासपरत्वेन सूत्रद्वयं व्याख्यातम् । तथापि जीवेऽप्यात्मशब्दो

(भावदीपः)
मुख्योऽस्त्विति शङ्कानिरासकस्यान्यस्याभावादत्र टीकायां तन्निरासकत्वेन व्याख्यातम् । अत एव प्रागुक्तश्रुतिस्मृती नोक्तशङ्कानिरासिके इति दर्शितम् । अस्मिन्पक्षे चशब्दाकर्षो न कार्य इति भावः । तथा चास्मिन्पक्षे भाष्योक्तश्रुतिस्मृत्योरात्मशब्दादित्युक्तहेतुदार्ढ्यानापादकत्वाद्भाष्ये पूर्वं तदुक्तिव्यर्थेति न शङ्क्यम् । तन्निष्ठसूत्रोक्तदिशा मुक्तिहेतुज्ञानविषयस्यात्मशब्दार्थत्वात्तस्य च निर्गुण एव सम्भवात्तद्वशेनायमात्मेत्यादिस्पष्टश्रुत्यादिवशेन च प्रागुक्तश्रुतिस्मृतीचेतनाचेतनप्रसिद्धिबाधेन जीवपरविषये स्यातामिति तयोरप्यर्थनिर्णयायेति तात्पर्यात् ॥ **गुणबद्धेति** ॥ एतेन सूत्रे गौणपदप्रयोगकृत्यं व्यक्तीकृतम् । रूपोपन्यासाच्चेति सूत्रे विश्वो हिरण्यगर्भोऽग्निरिति भाष्योक्तश्रुताविव विश्वशब्दो वायुपरः । अतो न पुनरुक्तिरिति मत्वाऽऽह ॥ **सर्वकर्तृत्वा (द्वा)त्स वायुकर्तेति** ॥ प्रतिबुद्धशब्दार्थः सर्वज्ञ इति । सन्दोहपदार्थो देह इति । कार्यकारणसङ्घातत्वात्तस्येति भावः । गहनपदार्थो गुहास्थान इति । यस्येत्यस्य येनेति । मतिबुद्धिपूजार्थेभ्य इति वर्तमानार्थकक्तप्रत्यये क्तस्य च वर्तमान इति षष्ठी । अनुवित्त इत्यस्य ज्ञात इति । यस्य ज्ञातो नित्यबुद्धो भगवानिति बृहद्भाष्योक्तेरिति भावः ॥ **श्रुतिस्मृतीश्चाहेति** ॥ अयमात्मेति श्रुतिः । ब्रह्मेति दत्तमिति च द्वे भागवतस्थे । चेतनस्त्विति पाद्मीति तिस्रः स्मृतय इति सूचितम् । श्रीब्रह्मादिसर्वजीवानां हिताहितप्रवृत्तावस्वातन्त्र्यानुभवेन तेषामादानादिकर्तृत्वेनास्ति कश्चित्तेषां शरीरेष्वित्यनुमानसिद्धमादानादिकर्तारमयमात्मेत्युद्दिश्य ब्रह्मेति तस्य ब्रह्मत्वोक्तेरिति माण्डूकोपनिषद्भाष्य-दिशा श्रुत्यर्थो ध्येयः । 'वदन्ति तत्तत्त्वविदस्तत्वं यज्ज्ञानमद्वयम् । ब्रह्मेति परमात्मा' इत्यत्र मुख्यात्मेति शब्द्यत इत्यर्थः । 'अनसूया तथैवात्रेर्जज्ञे पुत्रानकल्मषान् । दत्तं दुर्वाससम्' इत्यत्र दत्तात्रेयस्यात्मशब्दित-विष्ण्वतारत्वमुक्तम् । 'ब्रह्मणो नावतारोऽस्ति सन्निधानं तु केवलमिति' तात्पर्यवशात् सोमस्य ब्रह्मावेशा-वतारत्वं ज्ञेयम् । जज्ञे जनयामासेत्यर्थः । सोपचार इति प्राग्वदर्थः । स्मृतौ तज्ज्ञानान्नैव मुच्यत इत्यस्य गुणबद्धेत्यादिटीकोक्तयुक्तेरेवेति भावो ज्ञेयः ॥ ७ ॥

## अभिनवचन्द्रिका

(सू.७) **नन्वात्मशब्द इति** ॥ आत्मशब्दो जीवे परममुख्य एव ततश्च 'आत्मन्येवात्मानं पश्ये'दित्यत्र श्रूयमाणोऽप्यात्मशब्दो जीवपर एव किं न स्यादित्यर्थः । **तथा च श्रुतेरिति** ॥ 'द्वे वाव ब्रह्मणो रूपे' इत्यस्याः श्रुतेः रूपशब्दस्य प्रतिमामात्रपरत्वेन आर्जवसम्भवात् सुबोधकत्व-सम्भवादित्यर्थः । **नात्मशब्द इति** ॥ आत्मशब्दो गौणे मुख्यः । ततश्च 'आत्मन्येवात्मानं पश्ये'दिति श्रुतिप्रतिपाद्योऽपि स एवेति यदुक्तं तन्न युक्तमित्यर्थः । एतेन मोक्षोपदेशस्य परब्रह्मणि तात्पर्यमात्र-

(अभिनवचन्द्रिका)
साधकत्वेऽपि जीवे शक्तिनिरासकत्वाभावात्तन्निरासाय तदुपादानमयुक्तमिति परास्तम् । परब्रह्मणि तात्पर्यसाधनायैव मोक्षोपदेशरूपलिङ्गस्योपादानात् । **आत्मशब्दो विष्णावेवेति** ।। 'परममुख्य' इति शेषः । भाष्ये **दत्तमिति** ।। 'अत्रेः पत्न्यनसूया त्रीन् जज्ञे सुयशसः सुतान्' इति पूर्वार्धम् । अस्यार्थः– अनसूया अत्रेः पत्नी, सुयशसः आत्मेशब्रह्मसम्भवान् त्रीन् सुतान्, जज्ञे जनयामास, तत्र एकं दत्तमाहुः, अपरं दूर्वाससमाहुः, अन्यं सोममाहुरिति । **कुतस्तस्यैवात्मत्वमिति** ।। 'आत्मन्येवात्मानं पश्ये'दिति श्रुत्युक्तात्मशब्दविषयत्वं तस्यैव नान्येषामित्येतत्कुतः 'हृदि ह्येष आत्मे'त्यादौ परममुख्यातिरिक्तार्थेऽपि तात्पर्यदर्शनात् इत्यत आहेत्यर्थः ।

**आत्मज्ञानादिति** ।। यस्मात् 'यस्यानुवित्त' इत्यादावात्मज्ञानान्मोक्ष उदाहृतः, अतः 'आत्मन्येवात्मानं पश्ये'दित्यादौ आत्मशब्दो विष्णुपर एव नान्यपर इहात्मनो मोक्षार्थं ज्ञेयत्वाभिधानादिति भावः । **मोक्षोपदेशोऽपीति** ।। आत्मज्ञानान्मोक्षोपदेशोऽपि मोक्षार्थं ज्ञेयताप्रतिपादकश्रुतिगतात्मशब्दविषयत्वमन्येषां कुतो नेत्यर्थः ।

## वाक्यार्थमुक्तावली

ॐ तन्निष्ठस्य मोक्षोपदेशात् ॐ ।। **आर्जवसम्भवादिति** ।। आत्मानात्मशब्दयोः चेतनाचेतनविषयतया प्रसिद्धेस्तदबाधनात्, रूपशब्दस्य प्रतिमारूपैकार्थत्वसम्भवेनानेकार्थत्वस्याकल्पनाच्च, तद्विषयत्वे द्वे वावेति श्रुतेरार्जवं सम्भवति इति भावः ।। **निर्दोषत्वादेरिति** ।। यश्च दोषविवर्जितः इत्याद्युक्तनिर्दोषत्वादेरित्यर्थः । दुःखादिविशेषस्य अस्माभिः सज्जीव इव परैर्जीवमात्रेऽपि सोपाधिकत्वाङ्गीकारादिति भावः । आत्मनिष्ठस्य मोक्षोपदेशादिति । यस्यानुवित्त इतीक्षणीयात्मनिष्ठस्येत्यर्थः । यद्यपि सन्यायरत्नावल्यां तत्वप्रदीपे च ईक्षीणीयस्य सगुणत्वनिरासे हेत्वन्तरपरत्वेन तन्निष्ठस्येति सूत्रं व्याख्यातम् । तथापि जीवेऽप्यात्मशब्दो मुख्योऽस्त्विति शङ्कानिरासकस्यान्यस्याभावात् । सूत्रे चशब्दाभावाट्टीकायां इत्थं व्याख्यातम् ।। **गुणवद्धेति** ।। एतेन पूर्वसूत्रे गौणपदप्रयोगकृत्यमुक्तं भवति । 'विश्वो वायुस्समुद्दिष्टः पूर्णत्वात् जीवसङ्घतः' इत्यादिबृहद्भाष्यं हृदि निधाय व्याचष्टे । **सर्वकर्तृत्वादित्यादिना** ।। **देह इति** ।। कार्यकारणसङ्घातात्मकदेहमध्य इत्यर्थः । प्रविष्टो गहने देहमध्ये सन्दोहनामनीति वचनात् ।। **विष्णुलोक एवेति** ।। उलोक इत्यत्र उशब्दस्य विष्णुनामसु पाठादिति भावः । **श्रुतिस्मृतीति** । अयमात्मेति श्रुतिः । ब्रह्मेति दत्तमिति भागवतस्थे स्फुटे इति नाकरनिरूपणं भाष्ये कृतम् । चेतनश्चेत्यारभ्य पाद्मी स्मृतिः इति विवेकः ।

## तत्त्वसुबोधिनी

चेतनाचेतनविषयत्वसम्भवादिति । आत्मानात्मशब्दयोरिति शेषः ॥ **श्रुतेरार्जवसम्भवादिति** ॥ आत्मानात्मशब्दयोश्चेतनाचेतनविषयतया प्रसिद्धेः रूपशब्दः स्वरूपप्रतिमाभिप्राय इत्यकल्पनाच्च तद्विषयत्वे द्वे वाव ब्रह्मण इति श्रुतेरार्जवं भवतीति अर्थः । तर्हि आत्मनः श्रुतौ निर्दोषत्वाद्युक्तिः कथं घटते जीवस्य दुःखादिमत्वादित्यत आह । निर्दोषत्वादेः स्वभावविषयत्वोपपत्तेरिति । जीवात्मन्यपि दुःखादि-दोषः औपाधिक एवेति भावः । यस्येति श्रुतौ विश्वशब्दः विश्वो हिरण्यगर्भोऽग्निरित्यादाविव याय्वर्थः । तेन सर्वकर्तेत्यनेन न पुनरुक्तिरित्याह ॥ **वायुकर्तेति** । प्रतिबुद्धशब्दार्थमाह । सर्वज्ञ सति । अनुवित्त-शब्दार्थमाह । **ज्ञात इति** । ततश्च तयोः न पौनरुक्त्यमिति भावः । चेतनस्तु द्विधा प्रोक्तो जीव इति भाष्ये जीवशब्देनास्वतन्त्रं चैतन्यं विवक्षितम् । चित्प्रकृतेरप्यस्वतन्त्रत्वात्तस्यापि जीवशब्देन परिग्रहः । एवं च चित्प्रकृतेरत्रानुक्तत्वादयुक्तमेतदित्यपास्तम् । न च तर्हि ब्रह्मादय इत्यत्र ब्रह्मा आदिः येषामिति पुंलिङ्गचतुर्मुखपरब्रह्मशब्दो विरुद्ध्येतेति वाच्यम् । ब्रह्म आदि येषामिति विग्रहाश्रयणात् । प्रकृतिः परमं ब्रह्मेति प्रमाणानुसारेण ब्रह्मशब्दस्य चित्प्रकृतिवाचकत्वेन दोषाभावादिति द्रष्टव्यम् ।

## वाक्यार्थमञ्जरी

तर्हि कोऽर्थ इत्यत आह ॥ **चेतनेति** ॥ किमत्र नियामकमत आह ॥ **तथा चेति** ॥ चेतनाचेतन-परत्वे आत्मानात्मशब्दयोश्चेतनाचेतनपरतया प्रसिद्धत्वेद तदबाधनाद्रूपशब्दस्य प्रतिमारूपार्थत्वसम्भवेन अनेकार्थत्वस्य अकल्पनाच्च द्वे वावेति श्रुतेः ऋजुत्वं सम्भवतीत्यर्थः । आत्मशब्दस्य चेतनमात्रपरत्वे यश्च दोषविवर्जित इत्याद्यनुपपत्तिरित्यत आह ॥ **निर्दोषत्वादेरिति** ॥ जीवात्मन्यपि दुःखादिदोषः औपाधिक एवेति भावः ॥

ॐ **तन्निष्ठस्य मोक्षोपशात्** ॐ ॥ तन्निष्ठस्यात्मज्ञानिनः यस्यानुवित्तः प्रतिबुद्ध आत्मा तस्य लोकः स उलोक एवेति मोक्षाभिधानान्नात्मशब्दोक्तो गौण इत्यर्थः । असौ आत्मा ॥ **गुणवद्धेति** ॥ एतत्सूचनार्थमेव पूर्वसूत्रे जीव इत्यनुक्त्वा गौण इत्युक्तमिति ध्येयम् । कः कुत्रत्यः । विश्वकृच्छब्दार्थो वायुकर्तेति । विशति देहिनां हृदयगुहां वाति च श्वासोच्छ्वासादिरूपेणेति योगाद्विश्वो वायुः समुद्दिष्ट इत्युक्तेः । विश्वो हिरण्यगर्भ इत्यादौ विश्वशब्दस्य वायौ प्रयोगाच्च । अतो न सर्वस्य कर्तेत्यनेन पुनरुक्तिरिति भावः । प्रतिबुद्धशब्दार्थः सर्वज्ञ इति । सन्दोहशब्दार्थो देह इति । तस्य कार्यकारण-

(वाक्यार्थमञ्जरी)

सञ्ज्ञातत्वात् । गहनशब्दार्थो गुहाशब्दार्थ इति । यस्येत्यस्य येनेति । अनुवित्त इत्यस्य ज्ञात इति । तेन न प्रतिबुद्ध इत्यनेन पौनरुक्त्यमिति भावः । उच्चत्वादुकारवाच्यो विष्णुस्तल्लोक उलोक इत्याशयेनोक्तं विष्णुलोक इति । भाष्ये अयमिति श्रुतिः । तत्र श्रीब्रह्मादिनियामकत्वेन प्रकृतस्यायमिति परामर्शः । 'वदन्ति तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम् । ब्रह्मेति परमात्मेति' इति भागवतवाक्यम् । 'अनसूया तथैवात्रेर्जज्ञे पुत्रानकल्मषान् । दत्तम्' इत्यपि भागवतवाक्यम् । अत्र दत्तात्रेयस्य आत्मशब्दित-विष्ण्वतारत्वमुक्तम् । 'ब्रह्मणो नावतारोऽस्ति सन्निधानं तु केवलम्' इति तात्पर्यात्सोमस्य ब्रह्मावेशावतारत्वं ज्ञेयम् । जज्ञे जनयामास । चेतनस्तु द्विधा प्रोक्त इत्यत्र जीवशब्दो जीवेशयोर्भिदा चैवेत्यादाविवास्वतन्त्रचेतनपरः । तेन रमाया अपि सङ्ग्रहः । न च जीवा ब्रह्मादय इत्यनुपपत्तिः । 'मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम्' इति तस्यामपि ब्रह्मशब्दार्थप्रवृत्तेः । प्रकृतोपयोगायाह । **स्वतन्त्र** इति ॥

# विवृतिः

**चेतनाचेतनविषयत्वसम्भवादिति** ॥ आत्मशब्दस्येति शेषः ॥ **श्रुतेरार्जवसम्भवादिति** ॥ आत्मानात्मशब्दयोश्चेतनाचेतनविषयतया प्रसिद्धेः रूपशब्दः स्वरूपप्रतिमाभिप्राय इत्यकल्पनाच्च तद्विषयत्वे द्वे वाव ब्रह्मणो रूपे, इति श्रुतेरार्जवं भवतीत्यर्थः ॥ तर्हि श्रुतौ निर्दोषत्वाद्युक्तिः कथं घटत इत्यत आह ॥ **निर्दोषत्वादेः स्वभावविषयत्वोपपत्तेरिति** ॥ जीवात्मन्यपि दुःखादिदोषः औपाधिक एवेति भावः । यस्येति श्रुतौ विश्वशब्दो विश्वो हिरण्यगर्भोऽग्निरित्यादाविव वाय्वर्थः । तेन सर्वकर्तेत्यनेन न पुनरुक्तिरित्याह ॥ **वायुकर्तेति** ॥ प्रतिबुद्धशब्दार्थमाह ॥ **सर्वज्ञ इति** ॥ अनुवित्तशब्दार्थमाह ॥ **ज्ञात इति** ॥ ततश्च तयोर्न पौनरुक्त्यमिति भावः ॥ ''चेतनस्तु द्विधाः प्रोक्तो जीव'' इति भाष्ये जीवशब्देनास्वतन्त्रचैतन्यं विवक्षितम् । एवं च चित्प्रकृतेरप्यस्वतन्त्रत्वात्तस्या अपि जीवशब्देन परिग्रहः । एवं च चित्प्रकृतेरत्रानुक्तत्वादयुक्तमेतदित्यपास्तम् । न च तर्हि ब्रह्मादय इत्यत्र ब्रह्मा आदिर्येषामिति पुल्लिङ्गचतुर्मुखपरब्रह्मशब्दो विरुध्येतेति वाच्यम् । ब्रह्म आदि येषामिति विग्रहाश्रयणात् । प्रकृतिं परमं ब्रह्मेति प्रमाणानुसारेण ब्रह्मशब्दस्य चित्प्रकृतिवाचकत्वेन दोषाभावादिति द्रष्टव्यम् ।

## सूत्रभाष्यम्

**॥ ॐ हेयत्वावचनाच ॐ ॥ ८ ॥**

'तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः' (मुं.उ. २-२-५) इत्यन्येषां हेयत्ववचनादस्याहेयत्ववचनान्न गौण आत्मा ॥ ८ ॥

## सत्तर्कदीपावली

पुनरपि युक्त्यन्तरेण स्वतः त्रिगुणातीतस्यैवौपनिषदात्मत्वं साधयत्सूत्रमुपन्यस्य व्याचष्टे । **हेयत्वेत्यादिना** । तमेवैकमिति श्रुतौ जानथ मुञ्चथेति व्यापारोपलक्षणरूपो विद्ध्यर्थोपदेशस्तेन स्मरणवचनश्रवणादिरूपं व्यापारमात्मविषयं कुरुतानात्मविषयं त्यजतेत्यर्थः भवति । तत्रानात्मा त्रिगुणबद्धः आत्मशब्दोक्तः स्वतस्त्रिगुणवर्जितो योग्यतावशात्सिद्ध्येत् । गुणबद्धस्यापि विरिञ्चादेः पुरुषोत्तमशेषत्वेन सेव्यत्वेऽपि प्रधानतया हेयत्वमस्तीत्यदोषः । एतच्च तमेवैकं प्रधानं जानथेति व्याख्यानादवगम्यते । एकशब्दस्य प्रधानेऽपि प्रयोगदर्शनात् किमेकं दैवतं लोक इत्यादौ । अत्र चैकशब्दस्य प्रधानविषयत्वं दैवतं देवतानां चेति परिहारवचनादवगम्यते । अन्यथा त्वेकशब्दो व्यर्थः स्यात् । न हि किञ्चिदनेकत्वविशिष्टं दैवतमस्ति लोके येनैकत्वसङ्ख्याविशिष्टं दैवतं पृच्छ्येत ।

## तत्त्वप्रदीपिका

हेयत्वावचनाच्च । तमेवैकं जानथ आत्मानं प्रधानं जानथ । अत्र विवृतिः सर्वतो विलक्षणत्वप्रदर्शनार्था । अन्यविषया वाचो अन्या वाचः । अमृतस्याऽश्रय इति मुक्ताश्रय इति श्रुत्यर्थः । अस्यां श्रुतावन्येषां हेयत्ववचनादस्य दृश्यस्याऽत्मनोऽहेयत्ववचनाच्च नायं गौणाः ।

## तत्त्वप्रकाशिका

युक्त्यन्तरेणाप्यात्मशब्दस्य गौणपरत्वं पराकुर्वत् सूत्रमुपन्यस्य व्याचष्टे ॥ हेयत्वेति ॥ यद्यात्मशब्दो गौणपरस्तर्हि तमेवैकमिति श्रुत्युक्तात्माऽपि गौणः स्यात् । न चास्त्विति वाच्यम् । तथा सति हेयत्वप्रसङ्गात् । न चास्य हेयत्वमुच्यते । प्रत्युत जानथेत्यस्याहेयत्ववचनात् । न च गौणस्याप्यहेयता । अन्या वाचो विमुञ्चथ इति गौणात्मनो हेयत्ववचनात् । अतो न गौण आत्मशब्दवाच्यः किन्तु निर्गुण एवेत्यात्मशब्दादीक्षतिश्रुत्युक्तोऽपि स एव । तस्य चेक्षत्यन्यथानुपपत्त्या वाच्यत्वमिति भावः । न च वाच्यं सगुणपरोऽप्यात्मशब्दो मोक्षदातृत्वाहेयत्वाभ्यां निर्गुणलिङ्गाभ्यामपह्रियत इति । तस्य मुख्यतो जीववाचित्व एव मानाभावात् ॥ ८ ॥

## गुर्वर्थदीपिका

अमृतसेत्वात्मनोऽन्येषामन्यपदेन सङ्ग्रहाद्गौणात्मापि सङ्गृहीत इति भावेनाक्तं गौणात्मनो हेयत्ववचनादिति ।

## भावबोधः

**प्रत्युतेति ।** अनेनास्य अहेयत्ववचनादिति भाष्येण सूत्रे नञ्व्यत्यासः कृतः । अवचनमात्रस्या-साधकत्वात् । सूत्रे तथा वचनं तु अन्येषां हेयत्ववचनज्ञापनार्थम् । तथाहि । 'हेयत्वावचनात्' इत्यत्र हेयत्ववचनाभावादित्यर्थः । तथा चान्यप्रसिद्धस्य हेयत्ववचनस्यात्र निषेधबलादन्यत्र तत्सत्त्वं सूचितमित्युक्तं भवति । **मोक्षदातृत्वेति ।** 'यस्यानुवित्तस्तमेवैकं जानथ' इति श्रुत्युक्ताभ्यामित्यर्थः ।

## भावदीपः

॥ ॐ हेयत्वावचनाच्च ॐ ॥ सौत्रचशब्दानुरोधादाह ॥ **युक्त्यन्तरेणेति** ॥ भाष्ये आत्मा गौणो जीवो न अस्य तमेवेत्युक्तात्मनोऽहेयत्ववचनादित्युक्ते वैय्यधिकरण्यं निरस्यन् योजयति ॥ **यदीति** ॥ **न चास्येति** ॥ एतेनात्मा गौणो न हेयत्वावचनात् । अन्यथा तद्वचनप्रसङ्ग इति सूत्रं योजितम् । भाष्यं सूत्रशेषतया सङ्गमयति ॥ **प्रत्युतेति** ॥ जानथ जानीतेत्यर्थः ॥ **अस्येति** ॥ तमेवेति श्रुत्युक्तात्मन इत्यर्थः । अन्येषामित्यादेरुपयोगमाह ॥ **न चेति** ॥ अन्याः अन्यविषयाः । साध्यांशं व्यनक्ति ॥ **अत इति** ॥ हेयत्वावचनाहेयत्ववचनान्यहेयत्ववचनानां सत्त्वादित्यर्थः । श्रुतौ जानथ आत्मानमिति विवृत्त्या निर्देशस्तु तस्य सर्ववैलक्षण्यज्ञापनार्थ इति तत्वप्रदीपोक्तिः । 'विश्लिष्टार्थे च विश्लिष्टमिति ऋग्भाष्योक्तेः । विवृतावपि सर्गः स्यात्संहितायां च यत्र हि । समानोत्तमहीनत्वमुच्यते वस्तुनोऽञ्जसा' इत्यैतरेयभाष्योक्तेः । भाष्ये सेतुरित्यन्तोक्तिस्तु हेयत्वावचनादिहेतुत्रयवदमृतसेतुत्वलिङ्गस्यापि मुक्तोपसृप्येत्यत्र वक्ष्यमाणस्यानुसन्धानाय । ईक्षणीयत्वात्मशब्दतन्निष्ठमोक्षोपदेशहेयत्वावचनानां एकत्रैकवाक्ये सद्भावसूचनाय वा । अत एव वक्ष्यति टीकायां मोक्षदातृत्वेति । तेन पुरुषमीक्षत इत्यत्रेक्षणम् आत्मानं पश्येदित्यादावात्मपदं यस्यानुवित्त इत्यत्र मोक्षोपदेशः आत्मानं जानथेत्यत्राहेयत्ववचनमिति व्यधिकरणमिति निरस्तम् । एकत्रैव तेषां सत्त्वात् । अस्यैव वाक्यस्य चतुस्सूत्र्यामुदाहार्यत्वेऽपि यावद् दृश्यत्वपरं वाक्यं तावत्सर्वमपीह विषय इति दर्शयितुं नानावाक्योक्तिः ।

(भावदीपः)

श्रुतौ तमित्यनेन यस्मिन्द्यौः पृथिवी चान्तरिक्षमित्युक्तद्युभ्वाद्यायतनं परामृश्यते । तस्य च ब्रह्मत्वं द्युभ्वाद्यायतनं स्वशब्दादित्यत्र वक्ष्यते । नन्वेवं हेयत्वावचनादित्यादिनाऽत्रत्यात्मशब्दस्य विष्णौ मुख्यत्वे सति मुक्तोपसृप्यव्यपदेशादिति सूत्रे कथमन्यपरत्वमाशङ्क्य मुक्तप्राप्यत्वेनोद्धार इति चेन्न । विष्णावेवात्मशब्दस्य मुख्यत्वेऽपि जायमानत्वरूपलिङ्गेनामुख्यवृत्त्या अन्यपरत्वे शङ्किते अमृतसेतुत्वरूपलिङ्गेनोद्धारः । एवं च हेयत्वावचनादिकं च तत्राप्यनुसन्धेयम् । तथा च हेयत्वावचनादिहेतुचतुष्टयेनात्रात्मशब्दो जीवे मुख्यो नेति । तत्र तु अमृतसेतुत्वादिभिरेतैरेव हेतुभिरमुख्यवृत्त्याऽपि जीवपरो नेत्युच्यत इति व्युत्पादनभेदादपौनरुक्त्यम् । एवं चात्र तत्र चोक्तयुक्त्याऽऽत्मशब्दस्य विष्णौ मुख्यत्वे तात्पर्ये च सिद्धे तेनात्मशब्दादिना प्राणभृज्जीवो न द्युभ्वाद्यायतनमिति वक्ष्यत इति न कोऽपि दोषः ॥

## अभिनवचन्द्रिका

अत्र गुणसूत्रम् – 'हेयत्वावचनाच्चे'ति । अस्यार्थः – आत्मन्येवात्मानं पश्ये'दित्यादौ गौणात्मा नात्मशब्दार्थः । तथा सति, हेयत्वस्यावचनप्रसङ्गत्=अनुक्तिप्रसङ्गत्, हेयत्वप्रतिपादकवचनविषयत्वं न स्यादिति यावत् । न च – तदिष्टम् – गुणबद्धस्याहेयत्वे गुणबन्धस्याहेयत्वप्राप्त्या तन्निवृत्तिरूपमोक्षस्यापुरुषार्थत्वं स्यादिति । किं तद्धेयत्ववचनं कुतस्तद्विषयत्वाभावप्रसङ्ग इत्यत आह – (सू.८) **भाष्ये – तमेवैकमिति ॥** 'तमेवैक'(मु.उ. २-२-५)मिति श्रुतौ ज्ञेयादन्यस्य हेयत्वमुच्यते अस्य तु ज्ञेयत्वमुच्यत इति त्वयाऽङ्गीकारत् तस्य हेयत्ववचनविषयत्वाभावप्रसङ्गः । ततश्च गौणात्मा नेक्षति श्रुतिगतात्मशब्दार्थः । न हि कस्यचित् ज्ञेयत्वमुक्त्वा तदन्यस्य हेयत्वोक्तौ ज्ञेयस्यैव हेयत्वमुक्तं भवति । ज्ञेयस्य ज्ञेयान्यत्वासम्भवादिति भावः । **टीकायां यद्यात्मेति ॥** यदि ज्ञेयत्वप्रतिपादक 'आत्मन्येवात्मानं पश्ये'दित्यादिश्रुतिगतात्मशब्दः गौणपरः स्यात् तर्हि 'तमेवैक'मिति श्रुत्युक्तात्मापि गौणः स्यात् । ज्ञेयत्वप्रतिपादकसर्ववाक्यान्तर्गतात्मशब्दानां गौणपरत्वस्य त्वयाऽङ्गीकारात् । अन्यथा – 'तमैवैक'मिति श्रुत्यैव ईक्षणीयत्वसम्भवात् 'स एतस्मा'दित्यादिश्रुतीनां सगुणपरत्वव्युत्पादनं व्यर्थं स्यात् । न च अयमप्यात्मा गौणोऽस्त्विति वाच्यम् । तथा सति हेयत्वप्रसङ्गात् त्वदभ्युपगतस्य 'अन्या वाचो विमुञ्चथे'ति वाक्यप्रतिपाद्यत्वस्य हेयत्वप्रसङ्गात् परित्यागप्रसङ्गादित्यर्थः । यद्यपि – यदि ईक्षणीयत्वप्रतिपादकसर्ववाक्यान्तर्गतात्मशब्दो गौणपरः स्यात्, तर्हि – 'अन्या वाचो विमुञ्चथे'(मु.२-२-५)ति वाक्यप्रतिपाद्यत्वपरित्यागः स्यादित्येव वक्तुमुचितम्, तथापि ज्ञेयस्यापि गौणात्मनः 'अन्या वाचो विमुञ्चथे'ति हेयत्वप्रतिपादकवाक्यप्रतिपाद्यत्वमस्त्वित्याशङ्कापरिहाराय

(अभिनवचन्द्रिका)

अन्तरङ्गानुपपत्तिं वक्तुं यद्यात्मशब्दो गौणपरः तर्हि 'तमेवैक'मिति श्रुत्युक्तात्मापि गौणः स्यादित्याद्युक्तम्। एतेन – तथा सति हेयत्वप्रसङ्गादित्यनेन हेयत्वं गौणस्यापाद्यते, उत निर्गुणस्य। नाद्यः – गौणात्मनो हेयत्वेनेष्टापादनप्रसङ्गात्। 'तमेवैकं जानथे'ति श्रुत्युक्ताऽऽत्मशब्दार्थत्वाभावेऽपि गौणात्मनो हेयत्वस्यावर्जनीयत्वेन तथा सति हेयत्वप्रसङ्गादित्युक्त्ययोगाच्च। न द्वितीयः – न चास्य हेयत्वमुच्यते, प्रत्युत 'जानथे'त्यस्य 'अहेयत्ववचना'दित्युत्तरग्रन्थविरोधात् आत्मशब्दो गौणपरः। ततश्च ज्ञेयत्वमपि तस्यैवेति वदता निर्गुणस्य ज्ञेयत्वाऽनङ्गीकारेण 'न चास्य हेयत्वमुच्यत' इति विपर्ययपर्यवसानायोगात्। 'जानथे'त्यस्य निर्गुणविषयत्वाऽनङ्गीकाराच्चेति परास्तम्। गौणात्मनोऽहेयत्वप्रतिपादकवाक्यप्रतिपद्यत्व-त्यागस्यैवापाद्यत्वात्। ननु गौणात्मनो ज्ञेयत्वेऽपि कुतस्तद्वाक्यविषयत्वपरित्याग इत्यत आह– **न चास्येति**॥ अस्य गौणस्य, हेयत्वमुच्यत इत्यस्यायुक्तत्वादित्यर्थः। कुतो न युक्तमित्यत आह– **प्रत्युतेति**॥ प्रत्युत 'तमेवैक'मिति पूर्वभागे अस्य गौणात्मन 'जानथे'त्यहेयत्वमुच्यत इति त्वयाऽङ्गी-करादिति भावः। **न च गौणस्यापीति**॥ हेयत्वेनोक्तस्यापि गौणस्य अधिकारिविशेषं प्रति अहेयता 'जानथे'त्यनेन ज्ञेयता उच्यत इति न वाच्यमित्यर्थः। कुतो न वाच्यमित्यत आह– **अन्या वाच इति**॥ 'अन्या वाच' इत्यनेन ज्ञेयत्वेनोक्तान्यविषयकवचसाहेयत्वोक्त्या हेयज्ञेययोर्भेदावगमात् नैकस्य वस्तुनोधिकारिभेदेन ज्ञेयत्वं हेयत्वं चोच्यत इति न युक्तमिति भावः। **अत इति**॥ गौणः ईक्षणीयत्व-प्रतिपादकवाक्यान्तर्गताऽऽत्मशब्दविषयो नेत्यर्थः। **ईक्षतिश्रुत्युक्तोऽपि स एवेति**॥ यस्मादीक्षतिश्रुत्यन्त-र्गताऽऽत्मशब्दविषयः तस्माद्वाक्यतात्पर्यविषयोऽपि स एव। पदतात्पर्यविषयस्यैव वाक्यतात्पर्य-विषयत्वादित्यर्थः। नन्वस्तु 'यस्यानुवित्तः प्रतिबुद्ध आत्मा, तमेवैकं जानथे'त्यादिश्रुतिप्रतिपाद्यो निर्गुणः, ततश्च तत्सिद्धेक्षणीयत्वान्यथानुपपत्त्या वाच्यश्च, तथापि नात्मशब्दवाच्यः। तस्य मुख्यतः सगुणवाचकत्वात्। 'यस्यानुवित्त' इत्यादिश्रुतेर्निर्गुणलिङ्गरूपबाधकबलेन आत्मपदलक्ष्यार्थपरत्वोपपत्तेरिति मन्यमानस्य चोद्यमनूद्य निषेधति॥ **न च वाच्यमिति**॥ एतेन 'तमेवैक'मिति श्रुतिगतस्यात्मशब्दस्य बाधकवशादपि न निर्गुणपरत्वं पूर्वपक्षिणा वक्तुं युक्तम्। पूर्वपक्षिणा ईक्षणीयत्वं सगुणस्यैव न निर्गुणस्य। ततश्च तदन्यथानुपपत्त्या वाच्यत्वं सगुणस्यैव न निर्गुणस्येत्याशङ्कितत्वादिति परास्तम्। तस्य मुख्यत इति॥ भवेदात्मशब्दस्य लक्षणया निर्गुणपरत्वं, यद्यात्मशब्दस्य परममुख्यतो जीववाचित्वे मानं स्यात् न चैतदस्तीति भावः।

## वाक्यार्थमुक्तावली

ॐ हेयत्वावचनाच्च ॐ । **तमेवैकमिति श्रुत्यात्मापीति ।** आत्मन्येवात्मानमिति श्रुताविव तमेवैकमित्यत्रापि ईक्षणीयत्वोक्त्या समाख्यारूपत्वादिति भावः । **हेयत्वप्रसङ्गादिति ।** सगुणास्त्वपरे प्रोक्ताः तद्धानान्नैव मुच्यत इति मुमुक्षुणा ज्ञेयत्वाभावोक्त्या गौणानां हेयत्वनियमादिति भावः ॥ **न चास्येति ॥** एतेन हेयत्वावचनादिति यथाश्रुतं योजितं भवति । तथा च हेयत्ववचनादित्यन्तभाष्यस्य तमेवैकमिति श्रौतात्मा न गौणस्तस्य हेयत्वावचनादन्यथा हेयत्ववचनाप्रसङ्गादिति योजनोक्ता भवति । अहेयत्ववचनादिति भाष्यं व्याचष्टे । **प्रत्युतेति ।** एतेन हेयत्वावचनादिति सूत्रे 'आ'कारस्य पूर्वसम्बन्दो बुध्या विवेकेनेत्युक्तं भवति ।

ननु तमेवैकमित्युक्तात्मा गौण एवास्तु । न च तथात्वे तस्य हेयत्वप्रसङ्गेन हेयत्वावचनविरोधः इति वाच्यम् । गौणस्याप्यहेयत्वे विरोधाभावात् । तद्धानान्नैव मुच्यते इत्यत्र स्पष्टं गौणानां हेयत्वावचनादित्याशङ्कानिवर्तकतयाऽन्येषां हेयत्वावचनादिति भाष्यं प्रकारान्तरेण व्याचष्टे । **न च गौणस्याप्यहेयतेति ।** नचान्या वाच इति जडविषयः इति वाच्यम् । तथात्वे गौणात्मनां बहुत्वेन तमेवैकमित्येकपदप्रयोगात् जात्यभिप्राये वा । निर्गुणस्यापि हेयपक्षप्रवेशापत्तेरिति भावेन न च गौणस्याप्यहेयतेत्येकवचनं गौणात्मनां हेयत्ववचनादिति बहुवचनान्तात्मपदं च प्रयुक्तम् । एतेन हेयत्वावचनादित्यन्यत्र प्रसिद्धहेयत्वस्यात्र निषेधबलात् । न च विवक्षया वाऽन्यत्र तत्स्वरूपं सूचितमित्युक्तं भवति । अत इति । हेयत्वावचनान्य-हेयत्ववचनानां सत्वादित्यर्थः । न च वाच्यमिति । वस्तुतः सगुणे मुख्योऽप्यात्मशब्दस्तस्यानुवित्त-स्तमेवैकमिति श्रुत्योः मोक्षदातृत्वाहेयत्वाभ्यां निर्गुणलिङ्गाभ्यां सगुणाद्व्यावर्तते । आत्मन्येवात्मानं पश्येदित्यादौ तु बाधकाभावात् सगुणपर एवेति न वाच्यमित्यर्थः । यद्यपीयं शङ्का न वाच्यत्वविरोधिनी । निर्गुणत्वेऽपीक्षणीयत्वस्य सत्वात् । तथाप्युक्तिनिर्वाहार्थं निराकृतेति द्रष्टव्यम् ।

ननु भाष्ये अमृतस्यैष सेतुरित्यधिकांशोदाहरणं कुत इति चेन्न । अहेयत्वोपपादनार्थत्वात् । यद्वा हेयत्वावचनादिहेतुत्रयवदमृतसेतुत्वलिङ्गस्याप्यात्मशब्दस्य गौणपरत्वनिराकरणेऽनुसन्धेयत्वज्ञापनार्थत्वाच्च । एतदभिप्रायेण वा टीकायां मोक्षदातृत्वेत्युक्तम् । अस्यैव वाक्यस्य चतुर्थसूत्रविषयत्वेऽपि यावद् दृश्यत्वपरं वाक्यं तावत्सर्वमपीह विषयवाक्यमिति दर्शयितुं नानावाक्योदाहृतिरिति ध्येयम् । नन्वेवं हेयत्वावचनादिना अत्रात्मशब्दस्य विष्णौ मुख्यत्वे सति मुक्तोपसृप्यव्यपदेशादिति सूत्रे कथमात्मशब्दस्यान्यपरत्वमाशङ्क्य

(वाक्यार्थमुक्तावली)
मुक्तप्राप्यत्वेन उद्धार इति चेन्न । हेयत्वावचनादिहेतुभिरात्मशब्दो न जीवे मुख्य इति व्युत्पादनमत्र सूत्रे विवक्षितम् । तत्र तु जायमानत्वरूपलिङ्गेनामुख्यवृत्याऽन्यपरत्वे शङ्किते अमृतसेतुत्वादिभिरेतैरेव हेतुभिरमुख्यवृत्यापि जीवपरो नेत्युच्यत इति व्युत्पादनभेदादपौनरुक्त्यमिति ।

## तत्त्वसुबोधिनी

**प्रत्युतेति** ।। अनेनास्याहेयत्ववचनादिति भाष्येण सूत्रे नञ्व्यत्यासः कृतः । अवचनमात्रस्य असाधकत्वात् । सूत्रे तथा वचनं तु अन्येषां हेयत्ववचनज्ञापनार्थम् । तथाहि । हेयत्वावचनादित्यत्र हेयत्ववचनाभावादित्यर्थः । तथा चान्यप्रसिद्धस्य हेयत्ववचनस्यात्र निषेधबलात् अन्यत्र तत्सत्वं सूचितं भवतीति भावः ।। **मोक्षदातृत्वेति** ।। अनेन अमृतस्यैष सेतुरित्येतदुदाहरणप्रयोजनमुक्तम् ।

## वाक्यार्थमञ्जरी

ॐ हेयत्वावचनाच्च ॐ ।। न गौर आत्मशब्दोक्तः । तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथेति आत्मशब्दार्थस्य हेयत्वावचनात् । प्रत्युताहेयत्ववचनात् । अन्यस्य हेयत्ववचनाच्चेत्यर्थः ।। हेयत्वप्रसङ्गादिति ।। मुमुक्षुणेति शेषः । गौणस्य वक्ष्यमाणरीत्या हेयत्वादिति भावः । अस्य तमेवेति श्रुत्युक्तस्य । जानथ विजानथ । अन्याः भगवदितरविषयकाः । ननु सगुणानामपि ब्रह्मादीनामङ्गाव-बद्धास्त्वित्यादावहेयत्वं वक्ष्यति सूत्रकारः । सत्यम् । अत्र प्राधान्येय हेयत्वमुच्यते । तत्र तु परिवार-तयोपास्यत्वमिति न विरोधः ।। **मोक्षदातृत्वेति** ।। तथा च बाधकवशात्'आत्मन्येवात्मानम्' 'अज आत्मा' 'तमेवैकमि'त्यादौ तत्त्यागेऽपीक्षतिश्रुतौ बाधकाभावाज्जीवग्रहणं न सम्भवतीति भावः ।।

## विवृतिः

**प्रत्युतेति** ।। अनेनास्याहेयत्ववचनादिति भाष्येण सूत्रे नञ्व्यत्यासः कृतः अवचनमात्रस्यासाधक-त्वात्। सूत्रे तथावचनं तु अन्येषां हेयत्ववचनज्ञापनार्थम् । तथा हि । हेयत्वावचनादित्यत्र हेयत्ववचनाभावादित्यर्थः । तथाचान्यत्र प्रसिद्धस्य हेयत्ववचनस्यात्र निषेधबलादन्यत्र तत्सत्वं सूचितं भवतीति भावः । **मोक्षदातृत्वेति** ।। अनेनामृतस्यैष सेतुरित्येतदुदाहरणप्रयोजनमुक्तम् ।।

## सूत्रभाष्यम्

॥ ॐ स्वाप्ययात् ॐ ॥ ९ ॥

पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते
(बृ.उ.५-१-१)

'स आत्मन आत्मानमुद्धृत्याऽऽत्मन्येव विलापयत्यथात्मैव भवति ।'
'स देवा बहुधा भूत्वा निर्गुणः पुरुषोत्तमः ।
एकीभूय पुनः शेते निर्दोषो हरिरादिकृदि'ति स्वस्यैव स्वस्मिन्नप्ययवचनात् ।

न हि गौणात्मनि निर्दोषस्य लयः ॥ ९ ॥

## सत्तर्कदीपावली

हेत्वन्तरेण त्रिगुणातीतस्यैव वेदोक्तात्मशब्दत्वं साधयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **स्वाप्ययादित्यादिना** ॥ अयमर्थः । दीपादीपान्तराणीव मूलरूपादवतारानुद्धृत्य तैरेकीभूय महाप्रलये वर्तमानो यो निर्दिष्टः पूर्णस्य पूर्णमादायेत्यादिश्रुतौ स त्रिगुणतत्कार्यलयविशिष्यमाणत्वात्त्रिगुणातीत एव भवेत् । न चायं त्रिगुणसंवलितो अस्मादन्यः त्रिगुणातीत इति वाच्यम् । त्रिगुणातीतस्य त्रिगुणसंवलिते लयप्रसङ्गात् । न च तद्युक्तम् । नैव तौ द्वावनन्यलीनौ महाप्रलये युज्यते । आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किञ्चन मिषदित्यादिश्रुतिविरोधात् । आत्मशब्दश्च विष्ण्वैकवाचीत्युक्तम् ।

## तत्त्वप्रदीपिका

स्वाप्ययात् ।

'पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यत'' इति ।

पूर्णमदो, मूलरूपम् । पूर्णमिदमवताररूपम् । अमुष्मादिदं सङ्ख्यामात्रेण 'उदच्यते' उद्रिच्यते, एकमेव बहुसङ्ख्याकं भवति, विशेषादेव । स्वस्य पूर्णस्य, पूर्णमिदमवताररूपमादाय तन्मूलरूपमेवावशिष्यते । स्वस्यैवावताररूपस्य निर्दोषस्य स्वस्मिन्मूलरूपेऽप्यय उच्यते । न हि निर्दोषस्य गौणात्मनि लयस्तैरभ्युपगम्यते ॥

## तत्त्वप्रकाशिका

युक्त्यन्तरेणापि निर्गुणस्य वाच्यत्वं प्रतिपादयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **स्वाप्ययादिति** ॥ अदो मूलरूपं पूर्णमिदमवताररूपं च पूर्णं तत्पूर्णं सृष्टिकाले पूर्णान्मूलरूपादुद्रिच्यते । प्रलये च पूर्णस्य स्वस्य पूर्णमवताररूपं स्वीकृत्यैकीभूय मूलरूपमन्यत्रालीनं स्वयमवशिष्यत इति निर्गुणस्यैव श्रुत्युक्तत्वाद्भवत्येवासौ वाच्यः । न चायं गौणः । पूर्णत्वात्स्वस्य स्वस्मिन्नप्ययाच्च । गौणस्यापूर्णत्वादन्यस्मिंल्लयाच्चेत्यर्थः । नन्वयं स्वाप्ययवानन्यत्रालीनोऽपि गौणः स्यान्निर्गुणोऽन्योऽस्तीति चेन्न । यद्ययं स्वाप्ययवान् गौणस्तर्ह्ययं निर्गुणश्चोभौ प्रलये लयहीनौ तिष्ठत उतैकस्मिन्नन्यस्य लयो भवति । नाद्यः । 'इदं वाऽग्रे नैव किञ्चिनासीत्' इत्यादिश्रुतिविरोधात् । द्वितीयेऽपि न तावद्गौणस्य निर्गुणे लयः । तस्य स्वाप्ययेनावस्थानाभ्युपगतेः । तथा च निर्गुणस्य सगुणे लयो वक्तव्यः । अस्त्विति चेत्तत्राह ॥ **न हीति** ॥ गौणात्मनि जीवे निर्दोषस्य निर्गुणस्य परमात्मनो लयो नोपपद्यते । 'यत्प्रयन्ति' इत्यादिश्रुतिविरोधात् । अतोऽयमनन्यलीनो निर्गुण एव । तस्य च श्रुत्युक्तत्वेन वाच्यत्वमिति भावः । यद्यपीयं निर्गुणस्य वाच्यत्वेऽभ्युच्चययुक्तिस्तथापि श्रुत्युक्तत्वाच्च निर्गुणो वाच्य इति बहिरेवोक्ते कुतोऽयं निर्गुण इति शङ्कापरिहारात्मकत्वात्सूत्रस्य तत्र भाष्ये च चशब्दाभावः । अत्र गौणादिव्यपदेशः सत्त्वादिधर्मवत्त्वविषय एवेति सूचनाय निर्दोषस्येति ॥ ९ ॥

## गुर्वर्थदीपिका

श्रुतिविरोधादित्युपलक्षणम् । पूर्णमेवेत्येवकारेण द्वयोः प्रलयेऽवस्थानानुपपत्तेश्च । यद्यपि प्राक् सूत्रकृतैव सूचितश्रुत्युक्तत्वादिति सूत्रेऽपि निर्गुणत्वस्य श्रुतत्वमुदितं तथाऽपि स्वाप्ययस्य निर्गुणादन्यत्रायोगादार्थिकमेव श्रुतत्वं न साक्षात् । उत्तरत्र श्रुतत्वादिति सूत्रे तु साक्षान्निर्गुणस्यैव श्रुतत्वम् । अतो न सूत्रयोः पौनरुक्त्यमिति भावेन प्रथमत एव सूत्रसूचितश्रुतिमुदाहृत्य निर्गुणश्चेति श्रुतत्वादित्याह भगवान्भाष्यकारः ।

## भावबोधः

अवतारा महाविष्णोः सर्वे पूर्णाः प्रकीर्तिताः ।
पूर्णं च तत्परं रूपं पूर्णात् पूर्णाः समुद्गताः ॥

पूर्वरूपस्य पूर्णस्य पूर्णं यदवतारगम् ।
रूपं तदात्मन्यादाय पूर्णमेवावतिष्ठते ॥

(भावबोधः)

इति बृहदारण्यकभाष्योक्तवचनानुसारेण श्रुतिं व्याचष्टे– **अद इत्यादिना** । 'कथं मायाव्यवच्छिन्नः पूर्णो मुख्यतया भवेत्' इत्यनुव्याख्यानानुसारेणाऽऽह– **गौणस्यापूर्णत्वादिति** । **यत्प्रयन्तीत्यादीति** । 'तद् विजिज्ञासस्व' इति जिज्ञास्यरूपनिर्गुण एव जीवानां लयोक्तेरित्यर्थः । तत्र भाष्ये च 'च'शब्दाभाव इति । निर्गुणस्य पूर्णमद इति श्रुतिप्रतिपादितत्वं त्वितः पूर्वं सूत्रान्तरेण न प्रतिपादितमिति भावः । नन्वेवं सति 'श्रुतत्वाच्च' इत्यनेनेदं पुनरुक्तम् । तत्राप्यस्यैवार्थस्य विवक्षितत्वादिति चेत्, न; अत्र स्वाप्ययवत्वपूर्णत्वरूपनिर्गुणधर्मप्रतिपादनद्वारा निर्गुणस्य श्रुत्युक्तत्वमभिप्रेतम् । अत एव श्रुत्युक्तत्वादिति, अध्याहृत्य सूत्रविन्यासः प्रदर्शितः । तदुक्तेस्तद्धर्मवचनद्वारापि सम्भवात् । 'श्रुतत्वाच्च' इत्यत्र तु साक्षान्निर्गुणवाचकनामात्मकपदोपेतश्रुतिप्रतिपाद्यत्वमभिप्रेतम् । अत एव सूत्राक्षरस्वारस्याय 'एको देवः' इति निर्गुणपदोपेतश्रुत्युदाहरणं भाष्ये कृतम् । अनुव्याख्याने च 'पदं निर्गुणमिति कथं गौणं वदिष्यति' इत्युक्तम् । गौणादिपदव्यपदेश इत्यत्र निर्गुणस्येति वक्तव्ये यदा निर्दोषस्येत्युच्यते तदा निर्गता गुणा दोषरूपाः सत्त्वादय एव न तु शुभा आनन्दादय इति सूचितं स्यात् । तथा च गौणपदेन निर्गुणविरुद्धस्य विवक्षितत्वात् सत्त्वादिगुणयुक्तत्वमेव गौणत्वमित्यप्यर्थात् सूचितमिति भावः ।

## भावदीपः

॥ ॐ स्वाप्ययात् ॐ ॥ श्रुत्युक्तत्वाच्चेत्यध्याहरिष्यमाणहेतुवाक्ये चशब्दादाह ॥ **युक्त्यन्तरेणेति** ॥ न केवलमीक्षणीयत्वयुक्त्येत्यर्थः । अवतारा महाविष्णोः सर्वे पूर्णाः प्रकीर्तिता इत्यादिबृहद्भाष्य-दिशाऽर्थमाह ॥ **अदो मूलेति** ॥ एतेन स आत्मन इति श्रुतिः स देवो बहुधेति स्कान्दस्मृतिरपि व्याख्यतप्राया । आदिकृदितीत्यनन्तरं स्वस्येत्यतः प्रागध्याहार्यमाह ॥ **श्रुत्युक्तत्वादिति** ॥ श्रुतिस्मृत्युक्तत्वादित्यर्थः । तत्र तदशब्दं नेत्याद्यसूत्रादनुवृत्तसाध्यांशयफलितार्थमाह ॥ **भवत्येवासौ वाच्य इति** ॥ भाष्यशेषं योजयति ॥ **न चायमिति** ॥ श्रुत्युक्त इत्यर्थः ॥ **पूर्णत्वादिति** ॥ पूर्णमिति श्रुत्यनुरोधादयं हेतुरुक्तः । सूत्रभाष्याभ्यामुक्तमुपलक्षणमिति भावः ॥ **स्वस्य स्वस्मिन्निति** ॥ सूत्रे स्वेति तन्त्रम् । श्रुत्युक्तो न गौण इति साध्यं योज्यमिति दर्शितम् । पूर्णत्वलिङ्गस्योपलक्षणत्वादाद्य-श्रुत्युक्तिः । तत्र लयस्यास्फुटत्वाद् द्वितीयश्रुत्युक्तिः । तत्र लयस्वरूपादि विविच्य वक्तुं स्मृत्युक्तिः । स्कान्दवचनेनापि स्वस्यैवावताररूपस्य निर्दोषस्य स्वस्मिन्मूलरूपे अप्यय उच्यत इति तत्वप्रदीपोक्तेः ॥ **अपूर्णत्वादिति** ॥ तथाऽनुभवसिद्धत्वादिति भावः ॥ **अन्यस्मिन्निति** ॥ यत्प्रयन्तीत्यादेरिति भावः । एतेन श्रुतत्वाच्चेति वक्ष्यमाणेनापौनरुक्त्यं दर्शितम् । इह निर्गुणस्य श्रुत्युक्तत्वं पूर्णत्वस्वाप्ययादि-

(भावदीपः)

लिङ्गायत्तम् । तत्र तु निर्गुणश्चेति साक्षादेवेति भेदात् । न हीति भाष्यस्य सङ्गत्यप्रतीतेस्तामाह ॥ **नन्विति ॥ यत्प्रयन्तीत्यादीति** ॥ अत्र यत्प्रयन्ति भूतानि तद्ब्रह्मेति सर्वजीवानां निर्दोष एव लयोक्तेरिति भावः । श्रुत्युक्तत्वेन श्रुतिस्मृत्युक्तत्वेनेत्यर्थः ॥ **वाच्यत्वमितीति** ॥ लक्षणया श्रुत्युक्तत्वं तु निरसिष्यत इति भावः । सूत्रे स्वाप्ययाच्चेति स्यादित्याशङ्कां निरस्यति ॥ **यद्यपीति** ॥ **श्रुत्युक्तत्वाच्चेति** ॥ श्रुतिस्मृत्युक्तत्वाच्चेत्यर्थः । ननु श्रुतिस्मृत्युक्तत्वं नाम तज्जन्यज्ञानकर्मत्वमेव । तथा च श्रुत्युक्तत्वादित्यस्य श्रुत्यादिजन्यज्ञानकर्मत्वाच्च नाऽशब्दं ब्रह्मेत्यर्थः स्यात् । अयमेवार्थ ईक्षतेर्नाशब्दमित्यत्रोक्तः । तत्रापि उपनिषदाद्यनेकजन्येक्षणकर्मत्वाद् ब्रह्माशब्दं नेत्युक्तत्वादिति चेन्मैवम् । तत्राद्यसूत्रे सामान्यतः शब्दजन्येक्षणकर्मत्वहेतूक्तौ तस्यासिद्धिनिरासायोक्तेक्षणवाक्यानां गौणपरतयोत्पन्नव्यधिकरणासिद्धिशङ्का त्रिभिः सूत्रैः परम्परया परिहृता । अत्र पुनर्निर्गुणस्यैव ब्रह्मणोऽसाधारणस्वाप्ययादिरूपनिरवकाश-लिङ्गोपेततया गौणपरत्वशङ्कानास्पदवाक्यविशेषजन्यज्ञानविषयत्वरूपश्रुतत्वहेतुना शुद्धं वाच्यमेवेत्युच्यत इति न कोऽपि दोषः । केचित्तु आद्यसूत्रे प्रत्यक्षाद्यवेद्यत्वे सति ईक्षणीयत्वादिति हेतुना वाच्यं ब्रह्मेत्युक्तम् । अत्र तु श्रुत्युक्तत्वात् श्रुत्यादिजन्यज्ञानविषयत्वात्तस्य लक्षणादिनानुपपत्तेरशब्दं न किन्तु वाच्यमेवेत्युच्यत इति भेदान्न दोष इत्याहुः । एवं श्रुतत्वाच्चेत्यनेनाप्यस्य साक्षात्त्वासाक्षात्त्वाभ्यां भेदो ज्ञेयः ॥ **निर्दोषस्येतीति** ॥ सत्वादिगुणरूपदोषहीनस्येत्यर्थः । अन्यथा निर्गुणस्येत्यवक्ष्यदिति भावः ॥ ९ ॥

## अभिनवचन्द्रिका

(सू.९) **युक्त्यन्तरेणेति** ॥ मीमांसाद्वारा शिष्यबुद्धिशुद्ध्ये ईक्षणीयत्वेन वाच्यत्वं प्रसाध्य, युक्त्यन्तरेणापि निर्गुणस्य वाच्यत्वं साधयत्सूत्रमित्यर्थः । ननु निर्गुणस्य वाच्यत्वसाधिका युक्तिः, अथ सूत्रप्राप्तः स्वाप्ययः, आहोस्वित् टीकोक्तं श्रुत्युक्तत्वम् । नाद्यः – व्याप्त्यभावात् । न हि स्वाप्ययवतः शब्दवाच्यत्वं दृष्टचरं येनानयोर्व्याप्तिः स्यात् । निर्गुणस्यैव श्रुत्युक्तत्वात् । 'भवत्येवासौ वाच्य' इत्युत्तरटीकाविरोधाच्च । न द्वितीयः – 'श्रुतत्वाच्चे'(१-१-११)ति सूत्रेण गतार्थत्वप्रसङ्गात् । न चात्र न श्रुत्युक्तत्वमात्रं हेतुः किंतु – 'पूर्णमद' इति श्रुत्युक्तत्वं, तत्रापि न श्रुतत्वमात्रं हेतुः, किंतु – 'साक्षी चेता केवलो निर्गुणश्चे'ति श्रुत्युक्तत्वं हेतुः, अतो न गतार्थत्वमिति वाच्यम् । श्रुत्युक्तत्वमात्रस्य व्यभिचाराभावेन विशिष्टस्य हेतुकरणायोगादिति चेत्, उच्यते – श्रुत्युक्तत्वमात्रमेवात्र हेतुः । सूत्रोक्तस्तु स्वाप्ययः अन्यस्यैव श्रुत्युक्तत्वात् निर्गुणस्य श्रुत्युक्तत्वमसिद्धमिति शङ्कानिरासाय ।

(अभिनवचन्द्रिका)
न च 'श्रुतत्वाच्चे'त्यनेन गतार्थता । तत्र श्रुत्युक्तत्वादन्यस्यैव रूढशब्दरूपश्रुत्युक्तत्वस्य हेतुत्वेन विवक्षितत्वात् । तदुक्तमनुव्याख्याने – 'पदं च निर्गुण इति कथं गौणवदिष्यत' इति । ननु पूर्णत्वस्य निर्गुणत्वसाधकत्वसम्भवेऽपि न स्वाप्ययस्य तत्साधकत्वं, तस्य गौणेऽपि सम्भवादित्याशयेन शङ्कते– **नन्विति** ।। उत्तरमाह – **नेति** ।। विकल्पासहत्वादिति शेषः । एतेन नेत्यस्य यद्ययमित्युत्तरवाक्येनान्वयः तत्र विकल्पमात्रस्य कृतत्वेन हेतोरनुक्तेरिति परास्तम् । **यद्यपीति** ।। यद्यपि स्वाप्ययादिति सूत्रप्राप्ता श्रुत्युक्तत्वादिति युक्तिः अभ्युच्चययुक्तिरिति, सूत्रे भष्ये च चशब्देन भाव्यम्, तथापि स्वाप्ययादिति सूत्रस्य साक्षादभ्युच्चययुक्तिप्रतिपादकत्वाभावात्सूत्रे भाष्ये च चशब्दाभाव इति भावः ।

## वाक्यार्थमुक्तावली

ॐ स्वाप्ययात् ॐ । श्रुत्युक्तत्वाच्चेत्यध्याहरिष्यमाणसूत्रे 'च'शब्दसद्भावविवक्षयाह **युक्त्यन्तरेणेति** । नकेवलमीक्षणीयत्वयुक्त्येत्यर्थः । पूर्णमद इति श्रुत्यर्थोक्त्यैव स आत्मन इत्यादिरुक्तार्थ इति भावेन न व्याख्यातः । भाष्ये इत्यादीत्यनन्तरं शेषमाह । **श्रुत्युक्तत्वादिति** । भवत्येवासौ वाच्य इत्यनेन नावाच्य इति लाभात् पूर्वसूत्रादशब्दं नेत्यनुवृत्या योजनेत्युक्तं भवति । स्वाप्ययादिति सूत्रमुपलक्षणं पूर्णत्वादिति च ग्राह्यमिति भावेनाह पूर्णत्वादिति । न चायं गौण इत्यनेन गौणश्चेत्यनुवर्तत इत्युक्तं भवति । अत्र पूर्णत्वस्य स्पष्टत्वादाद्यश्रुत्युदाहरणम् । लयस्य स्पष्टत्वाद्द्वितीयस्य प्रवृत्तिः । लयविवरणार्थं तृतीयवचनप्रवृत्तिरिति बोध्यम् । इदं वाऽग्र इति । तत्र सर्वनिषेधपूर्वकमवस्थानोक्तेरिति भावः । **श्रुतिविरोधादिति** । यत्प्रयन्ति तद्ब्रह्मेति सर्वजीवानां निर्दोष एव लयोक्तेरिति भावः ।

ननु सूत्रभाष्ययोः वाच्यत्वे युक्त्यन्तरोपन्यासाय प्रवृत्तत्वात् चशब्दाभावः कुतः इत्याशङ्क्य युक्तेर्बहिरेवोक्तत्वान्नानुपपत्तिरिति परिहरति **यद्यपीत्यादिना** ।। अत्र गौणादीत्यादिपदेन निर्गुणव्यपदेशो गृहीते सत्वादिधर्मवत्वेऽपि । उपलक्षणमेतत् । तदभावविषयश्चेति द्रष्टव्यम् ।। **निर्दोषस्येतीति** ।। सत्वादिधर्मवतो दोषनियमादिति भावः ।

## तत्त्वसुबोधिनी

**यत्प्रयन्तीत्यादि इति** । तद्विजिज्ञासस्वेति जिज्ञास्यनिर्गुण एव जीवानां लयोक्तेरित्यर्थः । ननु स्वाप्ययवचनस्य निर्गुणस्य वाच्यत्वसाधने युक्त्यन्तरत्वाच्चशब्देन भाव्यमत एव सूत्रकृता श्रुतत्वाच्चेत्यत्र

(तत्त्वसुबोधिनी)

न साक्षात् निर्गुणवाचकनामात्मकपदोपेतश्रुतिप्रतिपाद्यत्वमभिप्रेतमत आह ॥ **तत्र भाष्ये च चशब्दाभाव इति** ॥ निर्गुणस्य 'पूर्णमद' इति श्रुतिप्रतिपादितत्वन्तु इतः पूर्वं सूत्रान्तरेण न प्रतिपादितमिति भावः । न चेदं श्रुतत्वादित्यनेन पुनरुक्तं तत्राप्यस्यैवार्थस्य विवक्षितत्वादिति वाच्यम् । अत्र स्वाप्ययवत्व-पूर्णत्वरूपनिर्गुणधर्मप्रतिपादनद्वारा निर्गुणस्य श्रुत्युक्तत्वमभिप्रेतम् । अत एव श्रुत्युक्तत्वादिति अध्याहृत्य सूत्रविन्यासः प्रदर्शितः । तदुक्तेः तद्धर्मवचनद्वारापि सम्भवात् । श्रुतत्वाच्च इत्यत्र तु साक्षान्निर्गुणवाचक-नामात्मकपदोपेतश्रुतिप्रतिपाद्यत्वमभिप्रेतम् । अत एव सूत्राक्षरस्वारस्याय एको देव इति निर्गुणपदोपेत-श्रुत्युदाहरणं भाष्ये कृतम् । अनुव्याख्याने च 'पदं निर्गुणमिति कथं गौणं वदिष्यति' इत्युक्तम् ॥ **अत्र गौणादीति** ॥ निर्गुणस्येति वक्तव्ये यदा निर्दोषस्येत्युच्यते तदा निर्गता गुणा दोषरूपा सत्त्वादय एव न तु शुभा आनन्दादय इति सूचितं स्यात् । तथा च गौणपदेन निर्गुणविरुद्धस्य विवक्षि-तत्वात्सत्वादिगुणयुक्तत्वमेव गौणत्वमित्यप्यर्थात् सूचितमिति भावः ।

## वाक्यार्थमञ्जरी

ॐ स्वाप्ययात् ॐ ॥ आत्मन्येवात्मानं विलापयतीति श्रुतिप्रतिपाद्यत्वान्न निर्गुणमवाच्यम् । श्रुत्युक्तं निर्गुणं कुत इति चेत् । स्वाप्ययात् स्वस्य स्वस्मिल्लँयाभिधानादित्यर्थः । तदवतारारव्यम् । उद्रिच्यते बहिर्निःसरति । स्वस्य मूलरूपस्य । स्मृत्यनुसारेण तात्पर्यमाह ॥ **एकीभूय** इति ॥ अनेन भगवद्रूपाणामेकीभाव एव लय इत्युक्तं भवति । अवधारणार्थो अन्यत्रालीन एवेति ॥ **श्रुत्युक्तत्वादिति** ॥ अवाच्ये वृत्त्यन्तरायोगात् श्रुत्युक्तत्वं वाच्यत्वं गमयतीति भावः ॥ **पूर्णत्वादिति** ॥ अनेन सूत्रोक्तस्वाप्यय उपलक्षक इति सूचितम् ॥ **अपूर्णत्वादिति** ॥ तथाऽनुभवादित्यर्थः ॥ **अन्यस्मिन्निति** ॥ यत्प्रयन्ती-त्यादेरिति भावः ॥ **अन्यत्रालीनोऽपीति** ॥ तथा च गौणो द्विविधः । **अन्यत्र लीनोऽन्यत्रालीनश्चेति** । तत्राद्य उक्तप्रकारेणानुभवसिद्धः । द्वितीयस्तु एतच्छ्रुत्युक्त इति भावः । तर्हि निर्गुणाभावप्रसङ्ग इत्यत आह ॥ **निर्गुण इति** ॥ एतच्छ्रुत्युक्तादन्य एव कश्चिदस्तीति भावः । इदमस्य जगतः । तत्र निर्गुणादन्यस्य लयं विनाऽवस्थाननिषेधादिति भावः ॥ **अवस्थानेति** ॥ अन्यत्रालीनतेत्यर्थः ॥ **यत्प्रयन्तीति** ॥ तदुक्तस्य तद्विजिज्ञासस्वेति जिज्ञास्यत्वोक्त्या निर्गुणत्वावगमात्तस्मिन्सगुणानामिमानि भूतानीत्युक्तानां लयोक्तेरिति भावः । इयं स्वाप्ययरूपा । तथा च सूत्रे चशब्देन भाव्यमिति भावः । तत्र सूत्रे प्रकृतत्वान्निर्गुणस्येति वक्तव्ये निर्दोषस्येति वचनं किमर्थमत आह ॥ **अत्रेति** ॥ सूत्रादावित्यर्थः ।

## विवृतिः

**यत्प्रयन्तीत्यादीति ॥** तद्विजिज्ञासस्वेति जिज्ञास्यनिर्गुण एव जीवानां लयोक्तेरित्यर्थः । ननु स्वाप्ययवचनस्य निर्गुणस्य वाच्यत्वसाधने युक्त्यन्तरत्वाच्चशब्देन भाव्यमित्यत आह ॥ **यद्यपीयमिति ॥** निर्गुणस्य 'पूर्णमदः' इति श्रुतिप्रतिपादितत्वन्त्वितः पूर्वं सूत्रान्तरेण न प्रतिपादितमिति भावः । न चेदं श्रुतत्वादित्यनेन पुनरुक्तं, तत्राप्यस्यैवार्थस्य विवक्षितत्वादिति वाच्यम् । अत्र स्वाप्ययवत्व पूर्णत्वरूपनिर्गुणधर्मप्रतिपादनद्वारा निर्गुणस्य श्रुत्युक्तत्वमभिप्रेतम् ॥ अत एव श्रुत्युक्तत्वादित्यध्याहृत्य, सूत्रविन्यासः प्रदर्शितः ॥ श्रुतत्वाच्चेत्यत्र तु साक्षान्निर्गुणवाचकनामात्मकपदोपेतश्रुतिप्रतिपाद्यत्वमभिप्रेतम् । अत एव सूत्राक्षरस्वारस्याय एको देव इति निर्गुणपदोपेतश्रुत्युदाहरणं भाष्ये कृतम् । **अत्र गौणादीति ।** निर्गुणस्येति वक्तव्ये यदा निर्दोषस्येत्युच्यते तदा निर्गता गुणादोषरूपाः सत्वादय एव न तु शुभानन्दादय इति सूचितं स्यात् । तथा च गौणपदेन निर्गुणविरुद्धस्याविवक्षितत्वात् । सत्वादि गुणयुक्तत्वमेव गौणत्वमित्यप्यर्थात्सूचितमिति भावः ।

## सूत्रभाष्यम्

**न च कासुचिच्छाखास्वन्यथोच्यते ।**

**॥ ॐ गतिसामान्यत् ॐ ॥ १० ॥**

**'सर्वे वेदा युक्तयः सुप्रमाणा ब्राह्मं ज्ञानं परमं त्वेकमेव ।**
**प्रकाशयन्ते न विरोधः कुतश्चिद्वेदेपु सर्वेपु तथेतिहासः'**

**इति पैङ्गिश्रुतेर्गतेर्ज्ञानस्य साम्यमेव ॥ १० ॥**

## सत्तर्कदीपावली

प्रागुक्तार्थस्य शाखान्तरे अन्यथोक्तिसम्भावनयाऽनिश्चितत्वशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ **गतीत्यादिना ॥** सर्वज्ञेन भगवता सूत्रकारेण सर्ववेदानां वृत्तौ विष्णौ गतिसामान्यस्योक्तत्वात् । सर्वे वेदा युक्तय इत्यादिश्रुतिबलाच्च तस्य निश्चितत्वान्नादृष्टशाखावचनं विष्णोः संवलितप्रतिपादकं भविष्यतीति शङ्कनीयमित्यर्थः ।

## तत्त्वप्रदीपिका

न च सगुणं निर्गुणं चेति द्विविधं ब्रह्म वेदेषु प्रतिपाद्यत इत्याह– न च कासुचिदिति ॥ गतिसामान्यात् । सुप्रमाणाः सुष्ठु प्रमाणाः सुष्ठु प्रमाणान्तरसहिताः । प्रकाशयन्ते उत्पादयन्ति । गतेर्ज्ञानस्य साम्यमेव, ब्रह्मज्ञानस्य सर्ववेदेषु साम्यमेव । गुणानामनन्यथोक्त्या साम्यम् । न ह्येकत्र ज्ञानानन्दादिकमुक्त्वाऽन्यत्राज्ञानदुःखादिरूपत्वं ब्रह्मण उच्यते ।

## तत्त्वप्रकाशिका

नन्वस्त्वेवं निर्गुणस्य वाच्यत्वोपपत्तौ युक्तं तस्य कारणत्वेन शास्त्रयोनित्वम् । तच्च प्रसिद्धशाखासूपक्रमादिविचारेऽस्तु ब्रह्मणः कारणत्वेन प्रतिपाद्यत्वम् । अप्रसिद्धशाखासु पुनरन्योऽपि कारणतयोच्यताम् । तासामानन्त्येनाऽनिश्चयादित्यत आह ॥ **न चेति** ॥ तत्र हेत्याकाङ्क्षायां सूत्रमुपन्यस्य व्याचष्टे ॥ **गतीति** ॥ सर्वे वेदाः सुष्ठु प्रमाणं मूलभूतं यासां ता युक्तय इतिहासश्च ब्रह्मविषयमेकविधमेव ज्ञानमुत्पादयन्ति । न पुनर्वेदादिषु कश्चिद्विरोधोऽस्तीति श्रुत्या स्वयमेव सर्वशाखाद्युत्पादज्ञानस्यैकविधत्वकथनान्न कासुचिच्छाखासु अन्यथोच्यत इत्यर्थः । एवं ब्रह्मणोऽवाच्यत्वं निराकृत्य तदेव शास्त्रयोनीत्युक्तम् ॥ १० ॥

## गुर्वर्थदीपिका

विचित्रानन्तवाक्यैरेकज्ञानजननायोगात् एकविधमित्युक्तम् । तच्चैकविधत्वं प्रकारैक्यस्याप्ययोगादेकवाक्यस्यापरवाक्यानुकूलार्थकत्वमेवेति ज्ञेयम् ।

## भावबोधः

तथेतिहास इति वक्ष्यमाणानुरोधादाह– **इतिहासश्चेति** ॥ वेदाद्युत्पन्नज्ञानव्यक्त्यैक्याभावादाह– **एकविधमिति** । **वेदादिष्विति** । अनेन सुप्रमाणयुक्तयोऽप्यत्र सङ्ग्राह्या इत्युक्तं भवति । अन्यथा इतिहासस्यैवोक्तत्वाद् बहुवचनानुपपत्तिरिति ज्ञेयम् ।

## भावदीपः

॥ ॐ गतिसामान्यात् ॐ ॥ सर्वशास्त्रयोनित्वे साधकं गतिसूत्रसम्बन्धभाष्यमवतारयन्नेव व्यनक्ति ।

(भावदीपः)

**नन्वस्त्वेवमिति** ॥ भाष्यस्थान्यथापदार्थमाह ॥ **अन्योऽपीति** ॥ तथा चातिव्याप्तं लक्षणमिति भावः । अनन्ता वै वेदा इति श्रुतेराह ॥ **आनन्त्येनेति** ॥ तथेतिहास इत्युपरिश्रवणादाह ॥ **इतिहासश्चेति** ॥ **वेदादिष्विति** ॥ प्रागुक्तयुक्तयः इतिहासश्चादिपदार्थः । तेद श्रुतौ वेदेषु युक्तिषु इतिहासे चेत्यर्थो दर्शितः । कथनादित्यनेन सूत्रे गतिसामान्यश्रवणादित्यर्थः सूचितः ॥ १० ॥

## अभिनवचन्द्रिका

(सू.१०) **पुनरन्योऽपि कारणतयोच्यतामिति** ॥ अन्यस्य रुद्रादेः कारणताप्रतिपादनव्याजेन विष्णुरकारणतयोच्यतामिति भावः । एतेन भाष्येऽन्यथोच्यत इत्युक्तत्वात्, 'ब्राह्मं ज्ञानं परमं त्वेकमेवे'ति प्रमाणस्योदाहृतत्वाच्च, विष्णुरेवाऽन्यथोच्यतामिति वक्तव्यम्, न तु अन्योऽपि कारणतयोच्यतामिति वक्तव्यमिति परास्तम् । एवं **ब्रह्मणोऽवाच्यत्वमिति** ॥ अनेन सूत्रेण ब्रह्मणः शाखान्तरेषु अन्यथा प्रतिपाद्यत्वं निराकृत्य तदेव शास्त्रयोनीत्युक्तमित्यर्थः ।

## वाक्यार्थमुक्तावली

ॐ गतिसामान्यात् ॐ । समन्वयसूत्रे शास्त्रसाकल्याभिधायकसंशब्दाक्षेपपूर्वकपक्षान्तरव्यावर्तकतया गतिसामान्यसूत्रं प्रवृत्तमित्याशयेन सम्बन्धभाष्यमवतारयति ॥ **नन्वित्यादिना** ।

नन्वेवमेव कारणतया प्रसिद्धशाखास्वप्युच्यत इत्यत आह **तासामिति** । इतिहास इत्युपरि श्रवणादाह । **इतिहासश्चेति** । भाष्ये परमं त्वेकमेवेत्यत्र वेदाद्युत्पन्नज्ञानानामैक्यायोगाद्विषयैक्यस्य ब्राह्मपदेनैव लब्धत्वात्प्रकारैक्यमर्थ इत्याह एकविधमिति । न पुनस्तत्तद्बाधापातप्रतीत्यनुसारेणानेक-विधमित्यर्थः । इति श्रुत्या स्वयमेवेति । एतेन गतिसामान्यादित्येतद्गतिसामान्यश्रुतेरिति व्याख्यातं भवति । तदुक्तं सुधायामुपासनापादे । तथा भाष्योक्तं गतिसामान्यादिति भाष्योक्तं तृतीयं व्याख्यानमिति ।

## तत्त्वसुबोधिनी

तथा इतिहास इति वक्ष्यमाणानुरोधादाह । **इतिहासश्चेति** । वेदाद्युत्पन्नज्ञाननव्यक्त्यैक्याभावादाह । **एकविधमिति** । **वेदादिष्विति** । अनेन सुप्रमाणयुक्तयोऽप्यत्र सङ्ग्राह्या इत्युक्तं भवति । अन्यथेतिहास इत्येवोक्तत्वाद्बहुवचनानुपपत्तिरिति ज्ञेयम् ।

## वाक्यार्थमञ्जरी

**युक्तमस्त्वित्यन्वयः** । तच्च प्रतिपाद्यत्वमिति सम्बन्धः । तथाप्युपक्रमादिभिर्विचारे विष्णोरेव तत्सेत्स्यतीत्यत आह ॥ **तासामिति** ॥ अनन्ता वै वेदा इति श्रुतेरिति भावः ॥ ॐ गतिसामान्यात् ॐ ॥ नान्यत्रान्यथोच्यते । गतेः सर्वशाखोत्पाद्यज्ञानस्य सामान्यात् समानत्वात् । सर्वे वेदा इत्यादावेक-रूपत्वश्रवणादित्यर्थः । तथेतिहास इति वक्ष्यमाणानुरोधेनाह ॥ **इतिहासश्चेति** ॥ वेदादिजन्यज्ञानानां व्यक्त्यैक्यायोगादाह ॥ **एकविधमेवेति** ॥ गतिसामान्यादिति सूत्रस्यान्ते निवेशे पृथगधिकरणभ्रमः स्यादतो मध्ये निवेशः । न चाधिकरणान्तरत्वमिष्टम् । तस्यापि संशब्दार्थसमर्थनपरत्वेन पृथक् प्रयोजनशून्यत्वादिति सुधायां व्यक्तम् ॥

## विवृतिः

तथा इतिहास इति वक्ष्यमाणानुरोधादाह ॥ **इतिहासश्चेति** ॥ वेदाद्युत्पन्नज्ञानस्य व्यक्त्यैक्याभावा-दाह ॥ **एकविधमिति** ॥ **वेदादिष्विति** ॥ अनेन सुप्रमाणयुक्तयोऽप्यत्र सङ्ग्राह्या इत्युक्तं भवति । अन्यथा इतिहासस्यैकोक्तत्वाद्बहुवचनानुपपत्तिरिति ज्ञेयम् ॥

## सूत्रभाष्यम्

**॥ ॐ श्रुतत्वाच्च ॐ ॥ ११ ॥**

**एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।**

**कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्चेति (श्वे.उ. ६-११) ॥ न ह्यशब्दः श्रूयते । न चाप्रसिद्धं कल्प्यम् । सर्वशब्दावाच्यस्य लक्षणाऽयुक्तेः ॥ ११ ॥**

## सत्तर्कदीपावली

त्रिगुणातीत एवोपनिषद्वाच्यः परमात्मेत्येतद्धेत्वन्तरेण साधयत् सूत्रमुपन्यस्य व्याचष्टे । **श्रुतत्वा-च्चेत्यादिना** ॥ साक्षी चेता केवलो निर्गुणश्चेत्यस्यां श्रुतौ निर्गुणशब्देनोक्तत्वान्न श्रुत्युक्तो विष्णुस्त्रिगुण-संवलितो विरोधात् । त्रिगुणातीतस्यावाच्यत्वे निर्गुणशब्देन श्रवणं न स्यात् । न चावाच्यमुच्यते विरोधात् । न चावाच्यं गुणातीतमत्र शब्दैर्लक्ष्यत इति कल्प्यम् । सर्वशब्दावाच्यस्य लक्ष्यत्वायोगात् । तीरादि-

(सत्तर्कदीपावली)

शब्दवाच्यस्यैव लोके गङ्गादिशब्दलक्ष्यत्वदर्शनात् । गङ्गापदावाच्यस्य गङ्गापदालक्ष्यत्ववत् आत्मपदेनावाच्यत्वे गुणातीतस्यालक्ष्यत्वप्रसङ्गात् । अतस्त्रिगुणवर्जिते ब्रह्मणि नारायणाख्ये जगत्कर्तरि आत्मशब्दमुख्यार्थे निखिलश्रुतीनां मुख्यवृत्त्या समन्वयो नानुपपन्न इति सिद्धम् । (१।१।५)

## तत्त्वप्रदीपिका

सर्वभूतस्थानभेदेऽपि भेदरहित एकः । द्योतनाद्देवः । देशतः कालतो गुणतो व्याप्नोतीति सर्वव्यापी । अन्तस्स्थित्वा, आ सम्यक् तन्नियन्ता च माता चेत्यन्तरात्मा, आदानादिकर्तृत्वाद्वा । कर्माध्यक्षः कर्माधिपतिः प्रवर्तकः । उपर्यस्याक्षाणीन्द्रियाणि वर्तन्त इति 'अध्यक्षः' । सर्वभूतानामधिवासः । साक्षादीक्षत इति साक्षी । साक्षादीक्षणं प्राकृतज्ञानेनापि भवतीति तन्निवृत्त्यर्थं चेतेति । चैतन्यरूप इत्यर्थः । केवलोऽविमिश्रः समाधिकरहितो वा । केवलचैतन्येनेक्षणमसम्प्रज्ञातसमाधिस्थस्य योगिनोऽपि भवति । स हि स्वरूपचैतन्येनैवाऽत्मानमीश्वरं च योगस्थः पश्यति । न च तदा गुणाभिमानी । सा तुर्यावस्था नाम । तथापि सगुण एवासौ । प्रारब्धकर्मणोऽप्रनष्टत्वात् । तद्व्यावृत्त्यर्थो निर्गुणशब्दः प्राकृतगुण-निषेधात्मकः । एकत्वादिशब्दैरनेकगुणत्वप्रतीतेर्न स्वाभाविकगुणनिषेधः । एवं श्रुतत्वाच्च न गौण आत्मा ।

नाप्यशब्दः । न ह्यशब्दः श्रूयते । अशब्देऽपि लक्षणया श्रुतिर्वर्तत इत्यत आहन **चाप्रसिद्धं कल्प्यमिति ॥** अयमर्थः । न चावाच्यं ब्रह्मास्तीति शक्यं कल्पयितुं, प्रमाणाभावात् । अवाच्ये शब्दस्य वृत्त्यभावात् । ब्रह्मणि प्रमाणान्तरानभ्युपगमाच्च । न च सगुणं ब्रह्म वाच्यं, निर्गुणं लक्ष्यमिति कल्प्यम् । अप्रसिद्धत्वादेव । न ह्यनिर्वाच्यं मायाशबलं ब्रह्म जगत्कारणं प्रसिद्धम् । न च ज्ञानानन्दादिगुणशून्यं निर्गुणं शुद्धं ब्रह्म प्रसिद्धम् ।

न च तस्य निर्गुणस्य लक्ष्यत्वम् । वाच्यसम्बन्धायत्तायाः लक्षणावृत्तेः असङ्गे तस्मिन्नसम्भवात् । अविद्यासङ्कल्पितसम्बन्धाभ्युपगमे, सगुणत्वप्रसङ्गात् । न चावाच्यं वेदसमन्वयसिद्धमिति कल्प्यम् । सर्वशब्दावाच्यस्य लक्षणायुक्तेः । न ह्यवाच्यस्य लक्ष्यत्वं दृष्टम् । वाच्यमेव शब्दान्तरेण लक्ष्यते । यथा मञ्चादिशब्दैः पुरुषादयः । वाच्यत्वे प्रमाणान्तरगम्यत्वापात इति चेन्न । धर्मादिवदगम्यत्वोपपत्तेः । समानश्चायं न्यायो लक्ष्यत्वपक्षेऽपि । मानान्तरवेद्यमेव हि तीरादिकं लक्ष्यमीक्षामहे । तस्मान्न तस्मिन्ब्रह्मणि लक्षणयाऽपि शब्दो वरीवर्तीत्यभ्युपगन्तव्यम् । एवञ्च, न कयाचिदपि विधया तस्य सिद्धिः । अत एव चैतदाह– **न चाप्रसिद्धं कल्प्यमिति ॥**

ननु हन्त ! एवं तर्हि, प्रकटमेतानि सूत्राणि ब्रह्मावाच्यत्वपक्षप्रतिपक्षभूतानि, यावताऽत्र तत्पक्षीयाः पूर्वपक्षीक्रियन्त इति किमिदमिह कुतूहलम् ? प्रतीयन्ते हि तन्निराकरणपराणि मुखत एव कात्स्न्र्येन । तथाहि–

(तत्त्वप्रदीपिका)

'अथातो ब्रह्मजिज्ञासा' इति सूत्रे तावद्ब्रह्मजिज्ञासा विषयः । सा किं कर्तव्या न वेति सन्देहः । तत्र तावदाचक्षते– ब्रह्मजिज्ञासा न कर्तव्या, अविषयत्वाद्ब्रह्मणः । विषयभूते हि वस्तुनि जिज्ञासादयो घटेरन् । विषयत्वे तु घटादिवदब्रह्मत्वप्रसङ्गो दुष्परिहरः । न च ब्रह्मणि जिज्ञासया किञ्चित्प्रयोजनं प्रेक्षामहे । न हि स्वयं प्रकाशमानस्य तस्य कदाचिदपि तिरोभावः । न चाज्ञानात्स सम्भाव्यते । अज्ञानस्य सत्यत्वे श्रुत्युदिताद्वैतहानेः निवृत्त्ययोगाच्च, भ्रममात्रादज्ञानसद्भावोऽभ्युपगन्तव्यः । न च स घटनामाटीकते । न हि शश्वद्विज्ञानरूपं ब्रह्म तत्त्वतो भ्रान्तं भवितुमर्हति । न च जीवस्य भ्रमादज्ञानसद्भावः सम्भोभवीति । ब्रह्मव्यतिरिक्तस्य जीवस्य तत्त्वतोऽभावात् ।

तस्मादेवमधिकारिविषयप्रयोजनाद्यनुपलम्भान्न सुघटत्वबुद्ध्याऽऽरम्भणीयाऽसौ मीमांसेति ससंरम्भमुत्प्रेक्षितं पूर्वपक्षं प्रतिक्षिपति अथातो ब्रह्मजिज्ञासेति । यत एवं सर्वस्याऽऽशीर्दुःखं नानुभूयासं, सुखमाप्नुवानीति । अतो ब्रह्मजिज्ञासा कर्तव्या । न हि तामन्तरेण तयोरत्यन्तपरिहारप्राप्ती स्याताम् । जिज्ञासासमनन्तरसमुद्भूतसम्यग्दर्शनसञ्जातप्रसादपरमपुरुषानुगृहीतो हि जीवः सकलपरिक्लेशप्रहाणेन प्रभूतानन्दानुभवोऽवतिष्ठते ।

न चाविषयत्वं ब्रह्मणः । 'सर्वे वेदा यत्पदमामनन्ति' 'वेदैश्च सर्वैरहमेव वेद्यः' इत्यादिश्रुतिस्मृतिभिर्विषयत्वावधारणात् । अपि चायमविषयत्वप्रतिपादनप्रयासः किं ब्रह्मणि स्यादाहोस्विन्नेति वक्तव्यम् । यदि तावदाद्यं पक्षमुत्प्रेक्ष्येत, न तर्हि ब्रह्मणो विषयत्वं प्रत्याख्यातं स्यात् । प्रत्युतान्वाख्यातमेव स्यात् । अविषयत्वप्रतिपादनप्रतिज्ञा च हीयेत । तद्विषयत्वाङ्गीकारात् । अथान्यतरं पक्षं मान्यं मन्येत, एवमपि सैव विषयता द्रढिमानमानीता । तदुपपादकान्पुरुषान्प्रत्यपि तत्प्रत्यादेशात् । प्रत्यादेशः क्रियमाणस्त्वविषयीकुर्वन्ब्रह्म न स्वोत्पत्तिमेव लभेत । तथा च स्वव्याहतिर्व्याहता तस्य जातिजाताकरस्य शिरश्शेखरीभूता भाति । अथ सर्वथाऽपि विषयत्वनिषेधे सत्यविषयत्वमत्रापततीति मतम्, अविषयत्वधर्माङ्गीकारे विषयत्वस्य कोऽपराधः ? न चाविषयत्वं चाध्यस्तमिति युक्तं वक्तुम् । भावाभावरूपयोर्विरुद्धधर्मयोर्द्वयोरेकस्यैवैकत्राध्यासासिद्धेः । न हि रजतत्वाध्यासाधिष्ठाने शुक्तिकादावरजतत्वाद्यध्यासोऽध्यवसीयते । अपरथा नेदं रजतमित्युदीयमानं मानमप्यमानतामानीयेत । न च वचनं सध्रीचीनं भावधर्माणामेव विषयत्वादीनामभावं ब्रह्मणि ब्रूमो न पुनरभावरूपाणामविषयत्वादीनामपीति । अविषयत्वयोगस्य भावधर्मस्याभ्युपगमात् । या पुनरविषयत्वयुक्तिरुक्ता साऽनुभवानुमानागमविरोधादमानम् । घटस्य विषयत्वे पटादिवदघटत्वप्रसङ्ग इतिवदित्यास्तामयमविषयत्वनिराकरणविस्तरः ।

न च वाच्यमद्वितीयत्वाद्ब्रह्मणस्तद्व्यतिरिक्तस्याज्ञानादेर्मिथ्यात्वमिति । प्रत्यक्षादिसिद्धवस्तुभेद स्यानपलपनीयत्वात् । न च सजातीयादिभेदराहित्यमद्वितीयत्वं; किन्तु समाधिकराहित्यमेव । तस्मादज्ञानसत्यत्वेऽप्यद्वैतहानिभयभरेण न मनः खेदनीयम् ।

(तत्त्वप्रदीपिका)

यदप्यवादि— अज्ञानस्य सत्यत्वे निवृत्त्ययोगान्मिथ्यैवाज्ञानमिति, तदपि न घटनामश्नुते। सत्यस्यैव निवृत्त्युपपत्तेः। मिथ्याभूतस्य नित्यनिवृत्तत्वान्न कादाचित्कनिवृत्तिः। न च मिथ्याशब्दस्यार्थान्तरमभिधीयेत। सदसद्विलक्षणवचनस्य स्वव्याहतत्वेनानुत्तरावसरदत्वात्।

यच्चोक्तं— ब्रह्मव्यतिरिक्तस्य जीवस्यैवाभावाद् ब्रह्मैवाज्ञं भवेदिति, तदपि भेदविद्वेषदोषविषयदूषितत्वात्प्रमुषितशेमुषीगुणोन्मेषैरभिलषितमिति मनीषिणो मन्यन्ते।

'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्' 'द्वा सुपर्णा' इत्यादिश्रुतेर्जीवब्रह्मभेदावगमात्। शकुनिसूत्रादिदृष्टान्तनवकेन 'अतत्त्वमस्यतत्त्वमसि' इति तत्तद्भ्रमापनोदेन नवकृत्वस्स्ततात्पर्यं भेदोपदेशाच्च।

अथोच्येत— जीवो ब्रह्म भवितुमर्हति, चेतनत्वाद् ब्रह्मवदिति; तदनुभवादिविरोधात्कालात्ययापदिष्टम्। तस्मादस्ति ब्रह्मव्यतिरिक्तो जीवः। तस्य चाज्ञानिनो जिज्ञासया विज्ञायमाने सर्वज्ञे हरावज्ञाननिवृत्तिः, परमसुखावाप्तिरिति सकलमनाकुलम्। अतः कर्तव्या ब्रह्मजिज्ञासा। तदुपन्यस्तो विषयाद्यभावदोषस्तत्पक्ष एवाकर्तव्यतां विधत्ते। नास्मत्पक्षं कटाक्षेणापि वीक्षितुं क्षमते।

न च तस्य दुर्घटाऽपि जिज्ञासाऽऽरम्भणीया। अवास्तवत्वप्रसङ्गात्। ननु हन्त ! इदमियन्तं कालं न जानीषे यदिह वयमिदमखिलमत एव दुर्घटत्वादविद्यामयं प्रतिपद्यामह इति। तत्र पृच्छामः। किमेषा भाषिता युक्तिस्सुघटा, किंवा दुर्घटेति। न तावत्सुघटता जाघटीति, सत्यत्वप्रसङ्गादात्मवत्। सुघटस्यापि मिथ्यात्वोररीकारे, आत्मनोऽपि मिथ्यात्वमनिवारितमापतेत्। भेदप्रपञ्चदौर्घट्यापादनायासश्च व्यर्थस्स्यात्। सौघट्येऽपि वैतथ्यसौलभ्यात्। 'अथोक्तदोषपरिजिहीर्षया मिथ्यात्वसाधने युक्तिर्दुर्घटेति मन्वीत, तर्हि न सा तत्साधयेत्; तत्साधने दुर्घटत्वात्। को नु खलु लोके घटनापरपर्यायां युक्तिं निजामपेतत्रपो दुर्घटां ब्रुवीत स्वव्याघातध्वजधरमेनमेकमृते ? उक्तन्यायेन मिथ्यात्वमपि जगतस्सुघटं चेन्न कल्पनीयम्। दुर्घटं चेत्तदा तस्य सत्यत्वमेव। तस्मादस्माकमेव जिज्ञासाऽऽरम्भणीयेति सिद्धम्॥

इदमिदानीं चिन्त्यते— किं तद् ब्रह्म निर्गुणमुत सगुणमिति। भेदे चाभेदे च गुणगुणिभावस्यायुक्तत्वात्; भेदाभेदपक्षस्य स्वव्याहतत्वात्;

'केवलो निर्गुणश्च' इति श्रुतेश्च; निर्गुणमेव तदिति केचिदूचिरे। तत्र सूत्रमवतारयति— **जन्माद्यस्य यत इति।** यतोऽस्य जगतो जन्मस्थितिनाशनियमनादयः तत्स्रष्टृपातृसंहर्तृनियन्तृत्वादिगुणगणलक्षितं ब्रह्म जिज्ञास्यमिति। 'यतो वा इमानि भूतानि जायन्ते' 'यो नः पिता जनिता यो विधाता' इत्यादिश्रुतेः। गुणगुणिभावस्त्वेकत्रैव ब्रह्मणि विशेषाद्युज्यते। भेदभेदिभाववत्स्वरूपस्वरूपिभाववच्च। न च ब्रह्मणो

(तत्त्वप्रदीपिका)

निर्विशेषत्वं वाच्यम् । अखण्डवाक्यार्थखण्डनप्रसङ्गात् । सविशेषत्व एव हि सत्यज्ञानादिपदानामपुनरुक्त्या ब्रह्मणि प्रवृत्तिस्सम्भवति, अपरथा ब्रह्मपदेनैव स्वरूपसिद्धेः, पदान्तराणां वैय्यर्थ्यं प्रसज्येत । सत्यादिशब्दाः पर्यायाश्च स्युः, निर्विशेषैकार्थवृत्तित्वात् । निर्विशेषं ब्रह्मेति वचनादेव सविशेषत्वं प्राप्तं; निर्विशेषत्व-विशेषाभ्युपगमात् । न च वाच्यं निर्विशेषत्वं नाम ब्रह्मस्वरूपमेव केवलं, न विशेष इति । तथा सति, ब्रह्मशब्दावृत्तिवन्निर्विशेषं ब्रह्मेति पर्यायोक्तिस्स्यात् । न च तथा प्रसिद्धिः । तस्माद् 'अहं मौनी' इतिवादिवदयमहो मोहान्मुहुर्मुहुरपि तामेव जातिं निर्विशङ्कमङ्कमारोहयति, यामिह तज्जन्मलक्षणस्थिति-विशेषज्ञा दोषज्ञा दोषशरीरां दूरादेव परिहरन्ति । तस्मादुक्तयुक्तिबलेन सविशेषत्वाद् ब्रह्मणो गुणवत्त्ववाद एव गुणवान् ।

या चोपन्यस्ता निर्गुणत्वे श्रुतिः, सा प्राकृतगुणविरहार्था । तस्मात्प्रथमसूत्रे जिज्ञास्यत्वेन प्रतिज्ञातं ब्रह्म स्रष्टृत्वादिगुणगणलक्षितमनेन सूत्रेणेत्यनवद्यम् ।

जगत्कारणं ब्रह्म विषयः । तत्किं तत्त्वमुतातत्त्वमिति संशय्यते । 'न तस्य कार्यं करणं च विद्यते' 'निष्कलं निष्क्रियं शान्तम्' 'अप्राणो ह्यमनाः शुभ्र' इत्यादिश्रुतेर्न तत्वस्य कार्यकरणबुद्धिः । कर्तृत्वाद्यभावात् । कारणस्य च तदपेक्षणान्न जगत्कारणं तत्त्वमिति पूर्वपक्षे प्राप्ते प्रतिविधीयते– **शास्त्रयोनित्वादिति ॥** जगत्कारणं ब्रह्म तत्वमेव । 'सत्यं ज्ञानमनन्तं ब्रह्म' 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः' 'स कारणं कारणाधिपाधिपः' 'यदा पश्यः पश्यते रुग्मवर्णं कर्तारं' 'स इमाँल्लोकानसृजत' 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुः' इरित्यादिशास्त्र-गम्यत्वात्तस्य । न खलु शास्त्रगम्यमतत्वं वक्तुं पार्यते ।

न च वाच्यमेवंवादिवाक्यं वैदिकमपि द्वैतगोचरत्वादतत्वावेदकमिति । शास्त्रस्य तत्र तात्पर्यावगमात् । सकलजगत्सम्भवसंरक्षणसंहारैककर्तृत्वेनाखिलोत्कर्षवति वासुदेवे तात्पर्यं पर्यवसीयते वेदानाम् ।

'सर्वोत्कर्षे देवदेवस्य विष्णोर्महातात्पर्यं नैव चान्यत्र सत्यम् ।'
'अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः' इत्यादिश्रुतिस्मृतिभ्यः ।

वेदतात्पर्यार्थो हि तत्वं नाम । विप्रतिषिद्धं चेदमागमः प्रमाणमतत्त्वावेदकमिति । प्राकृतकार्यकारणाद्य-भावेऽपि न ब्रह्मणः कारणत्वविरोधः । 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' 'यः सर्वज्ञः सर्ववित्' इत्यादिश्रुतेः । 'निष्कलं निष्क्रियं शान्तम्' इति श्रुतिर्न विरुद्ध्यते । कलारहितत्वाद क्रियमाणत्वाच्च ब्रह्मणः । तस्माज्जगत्कारणं तत्वमेवेति स्थितम् ।

जगत्कारणस्य तत्त्वभावप्रदर्शनेनैव तदेव शास्त्रगम्यमित्युपक्षिप्तम् । तत्स्पष्टमिदानीमाचष्टे तत्तु

(तत्त्वप्रदीपिका)

समन्वयादिति। 'द्वे वाव ब्रह्मणो रूपे, मूर्तं चामूर्तं च' इत्यादिश्रुतेर्मायाशबलं शुद्धं चेति द्विविधं ब्रह्म, विद्याऽविद्यावस्थाभेदेन। तदुभयमपि शास्त्रात्सिद्ध्यतीति प्राप्त आह– यज्जिज्ञास्यं जगत्कारणत्वलक्षणं तत्वभूतं ब्रह्म, तदेव सर्ववेदसमन्वयादवगम्यते। न हि मायाशवलं नामास्ति, प्रमाणाभावात्। न च मायिनामभिमता माया प्रमाणपद्धतिमध्यास्ते। या तु वैदिकपौराणिकवचनगृहीता माया, सा भगवदिच्छा। तथा चोक्तं स्कान्दे–

'महामायेत्यविद्येति नियतिर्मोहिनीति च।
प्रकृतिर्वासनेत्येवं तवेच्छाऽनन्त कथ्यते' इति।

सा च ज्ञानरूपा। 'मायेति भगवत्प्रज्ञा प्रकृष्टं हि मयाभिधम्' इति वचनात्। न च सा मिथ्या, तदभिन्नत्वात्। न हि ब्रह्मणो ज्ञानेच्छादयस्तद्व्यतिरेकिणो भवितुमर्हन्ति। 'सोऽभिध्या स जूतिः' 'विज्ञानमानन्दं ब्रह्म' इत्यादिश्रुतेः। या च कचिज्जगदुपादानात्मिका माया श्रूयते स्मर्यते वा साऽपि नानिर्वाच्या; प्रमाणाभावादेव। तस्मादनिर्वाच्यभूताया मायाया मनोरथमात्रत्वाद्गगननलिनसदृशं मायाशवलं ब्रह्म। न च ब्रह्मद्वयाभिधायकं वचनमुपलभामहे। यत्पुनरुपन्यस्तं 'द्वे वाव ब्रह्मणो रूपे' इत्यादि, तत्र मूर्तशब्दशब्दितं तु पृथिव्यप्तेजः। अमूर्तं वाय्वन्तरिक्षम्। इह हि, हरहिरण्यगर्भहरिहयदहनपवनादिभिरमरवरैरहरहरतिमहीयमानमहिमा मुरमथनो रूप्यते। तस्मादस्येदमुभयमपि रूपमिति भण्यते, प्रतिमात्वेन। अपरथा, रूपशब्दोऽपार्थस्स्यात्। अचेतनस्य ब्रह्मस्वरूपत्वासम्भवात्। तस्माच्छुद्धमेव ब्रह्म समन्वयावगम्यमिति सिद्धम्।

अथोत्तराधिकरणे ब्रह्म विषयः। तद्धि पूर्वसूत्रे समन्वयगम्यत्वेन प्रतिज्ञातम्। तच्छब्दगोचरो वा न वेति सन्देहः। वादिविप्रतिपत्तिरेवात्रापि संशयकारणम्। केचिदशब्दगोचरं ब्रह्म ब्रुवन्ति। 'यतो वाचो निवर्तन्ते' 'यद्वाचाऽनभ्युदितम्' इत्यादीनि वाक्यान्यत्र प्रमाणम्। न च मुख्ये सम्भवत्यमुख्योऽर्थो ग्राह्यः। येनैषामुपनिषद्वाक्यानामन्यमर्थं प्रतिपद्येमहि। न चान्योऽर्थः प्रतीतिपथमवतरति। न चैतावता ब्रह्मप्रतिपादकानां शब्दानामानर्थक्यप्रसङ्गः। लक्षणया हि वृत्त्या तत्प्रतिपादयन्ति वेदान्ताः। न च वचनीयं सम्भवति मुख्ये नामुख्यकल्पना न्याय्येति। असम्भवादेव ब्रह्मणि मुख्यवृत्तेः शब्दानाम्। षष्ठीगुणक्रियाजातिरूढयो हि शब्दप्रवृत्तिहेतवः न च ता ब्रह्मण्युपलभ्यन्ते। न तावच्छष्ठी सम्भाव्यते। सम्बन्धे हि सा वरीवर्ति। तं च, 'असङ्गो ह्ययं पुरुषः' इत्यादिकोपनिषदेव विरुणद्धि। 'केवलो निर्गुणश्च' इत्यादिवेदवादैर्निरस्तत्वात्समस्तगुणस्य गुणाभ्युपगमो न गुणमावहति। 'निष्कलं निष्क्रियम्' इति च क्रियाऽस्य निषिद्ध्यते। जातिस्तु बहुव्यक्तिनिष्ठा परमात्मन्यद्वितीये दूरतो निवारिता। सङ्केतकर्तॄणां बहुलप्रयोक्तॄणां चाभावाद्रूढिरपि नैनमारोढुमर्हति। अतो न शब्दवाच्यं ब्रह्मेत्येतं पक्षं प्रतिक्षेप्तुं ईक्षतेर्नाशब्दमिति भगवान्सूत्रकार आह।

(तत्त्वप्रदीपिका)

'स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते' 'यदैनमनुपश्यन्त्यात्मानं देवमञ्जसा' 'आत्मा वा अरे द्रष्टव्य' इत्यादिश्रुतेर्न ब्रह्मावाच्यं भवितुमर्हति । एषु हि वाक्येषु ब्रह्मविषयमीक्षणं प्रतीयते । न चाप्रत्यक्षस्य वस्तुन आगममन्तरेणेक्षणीयत्वं सम्भवति । औपनिषदत्वं च तस्यावगम्यते । 'सर्वे वेदाः' 'वेदा ह्येवैनम्' इत्यादिश्रुतिबलात् । अत ईक्षणीयत्वश्रवणाच्छब्दवाच्यमेव ब्रह्म ।

'यतो वाचो निवर्तन्त' इत्यादिश्रुतिबलादवाच्यत्वमुपपादितमिति चेद्दुरुपपादमेवैतन्मन्यामहे । अवाच्यत्वादिशब्दोऽप्रसिद्धत्वादेव हि युज्यते । 'अप्रसिद्धेरवाच्यं तदित्' इत्यादेः । अद्भुतमपि चावाच्यमिति लौकिका वदन्ति । तस्मादवाच्यत्वादिवचनानामेवमेवाभिसन्धिः । अन्यथा, 'यतो वाचो निवर्तन्त' इत्यत्र यत्पदाविषयत्वाद्ब्रह्मणस्तस्यावाच्यत्वं न वेदोदितं स्यात् । अपिच, ब्रह्मावाच्यमिति वदन्वादी, ब्रह्म वक्ति वा न वेति विकल्पयामः । यद्याद्यपक्षकक्षीकारस्तर्ह्यवाच्यत्वं विवदिषतोऽस्मदभिमतवाच्यत्वानुमोदनात्स्वव्याहत्यादिनिग्रहमहाग्रहग्रस्ततया पृथुलकथाप्रपथसागरे प्रमाणतर्कतदाभासवीचीतरङ्गमालाजालावलोलिते निमज्जतो वादिनो निर्णयपारदर्शनं दुःशकं प्रसज्येत । अथ द्वितीये पक्षे पक्षपातं करोति, तदा कस्य वाच्यत्वमयं प्रतिजानीते? न ह्यनभिधीयमानस्य धर्मिणो धर्मविधानमुपपद्यते । किञ्च, ब्रह्मशब्दोऽपि लक्षयति केवलं न पुनर्ब्रवीतीति चेत्, किं तल्लक्ष्यमिति वक्तव्यम् । येन केनापि वचनेनाभिधीयमाने, नावाच्यत्वं स्यात् । अतो 'माता मे वन्ध्या' इतिवदत्यन्तविरुद्धोऽयमीदृशः प्रलापः ।

यदपीदमुदितं षष्ठ्यादीनां मुख्यवृत्तिहेतूनामभावादशब्दं ब्रह्मेति च, तदपि निखिलवेदवाक्यसमन्वयपरिनिर्णीयमानपरमपुरुषगतगुरुतरगुणगणागण्यताकर्णनं कर्णशूलमिव दुःसहमसहमानानां स्वमतमानदुर्बलानां वालिशानामिवाऽक्रोशमात्रमुत्पश्यामः । 'यस्सर्वज्ञः' 'एष सर्वेश्वर एष भूताधिपतिः' 'गुणाश्श्रुतास्सुविरुद्धाश्च देवे' 'अथैनमाहुस्सत्यकर्मेति' 'सत्यं ह्येवेदं विश्वमसौ सृजते' 'नित्यो नित्यानां चेतनश्चेतनानां' 'कश्छन्दसां योगमावेद धीरः' 'वचसां वाच्यमुत्तमम्' इत्यादिस्मृतिभ्यः सम्बन्धगुणक्रियाजातियोगरूढिसम्भवात् । न च वेदस्य मिथ्यावादित्वम् । तत्त्वमसिवाक्यस्यापि तथात्वप्रसङ्गात् । अपि च, षष्ठीगुणक्रियाजातिरूढयो हि शब्दवृत्तिहेतवः । तेषामन्यतमोऽपि नाऽत्मनीति चेन्नैष लक्ष्यः । न हि सम्बन्धादिभिर्विना लक्षणावृत्तिर्दृष्टा । न चावाच्यस्य लक्ष्यत्वम् । माधुर्यविशेषोऽपि नावाच्यो लक्ष्यते । माधुर्यविशेषशब्दवाच्यत्वात् । विविच्यानभिधानं तु विवेकापरिज्ञाननिबन्धनमेव, न पुनरवाच्यत्वात् । वदन्ति च तद्विदो माधुर्यविशेषान्विविच्य–

'विशदं क्षीरमाधुर्यं स्थिरमाज्यस्य तीक्ष्णकम् ।
गुडस्य पनसादीनां निर्हारीत्यभिधीयते ।।' इत्यादि सूदशास्त्रे ।

तस्मान्नावाच्यस्य लक्ष्यत्वमिति सिद्धम् ।।

(तत्त्वप्रदीपिका)

यदपीदमधिकरणं साङ्ख्यपरिकल्पितप्रधानशाब्दत्वनिराकरणपरमपरे मन्यन्ते । तदपि मुखतः पौर्वापर्यानुसन्धानाच्च सुप्रतीतं स्वमतनिरासमात्रपरत्वं सूत्राणां संवरीतुमुत्प्रेक्षितं; न पुनः सूत्रतात्पर्य-पर्यालोचनयेति न बहुमन्यामहे ।

न हि साङ्ख्यानां प्रधानस्याशाब्दत्वं सिद्धम् । सिद्धवदेव च तैः 'अशब्दं हि तत्' इति हेतुत्वेनोच्यते । अतः प्रकृताननुसारित्वाच्चायं प्रलापो महोन्मत्तानामिवावभाति । प्रधाने त्वसमन्वय उपरिष्टात्प्रतिपादयिष्यते सूत्रकारेणैव– 'ईक्षतिकर्मव्यपदेशात्सः' 'न च स्मार्तम्' 'आनुमानिकम्' इत्यादिसूत्रेषु । तस्मात् 'ईक्षतेर्नाशब्दम्' इति ब्रह्मणोऽशब्दत्वमेव निराक्रियते ।

इतश्च तदेवाभ्युपगन्तव्यम् । अन्वयो हि नाम शब्दानां मुख्यवृत्तिः । समन्वयस्तु परममुख्यवृत्तिः । तत्र शब्दानां ब्रह्मण्यनन्वयवादिनोऽन्वयमात्रप्रतिज्ञानेऽपि संरम्भमारभन्ते । किं पुनः समन्वयप्रतिज्ञायाम् ? अतः 'तत्तु समन्वयात्' इति समन्वयं सूत्रितमाकर्ण्य, ब्रह्मावाच्यत्ववादिनः प्रत्यवतिष्ठन्ते । यावत्तदभिमतं ब्रह्मणोऽशब्दत्वं न निराकृतं, तावदन्वयोऽपि दूरस्थः । किमुत पुनस्समन्वयस्सन्निधीयेत । अतो मुखत एव तन्मतव्युदासेन समन्वयप्राप्त्यसम्भवाशङ्कामुच्छिनत्त्यनेनाधिकरणेनेति श्लिष्यते ।

आनन्दमयाधिकरणे तु, अन्नमयाद्यानन्दमयान्तमब्रह्मरूपं कोशपञ्चकमत्यन्तहेयमुपन्यस्यन्नानन्दमयस्य ब्रह्मत्वमुपदिदिक्षूणि 'आनन्दमयोऽभ्यासात्' इत्यादीनि सूत्राणि स्वयमेव मायी पूर्वपक्षीचकार । अनयैव दिशा उत्तरसूत्रेष्वपि सुखतरमूहनीयोऽयं न्यायः । प्रकटभावाद्ग्रन्थबाहुल्यभयाच्चैवमुपरम्यते ।

## तत्त्वप्रकाशिका

पुनः सिंहावलोकनन्यायेन निर्गुणस्य ब्रह्मणो वाच्यत्वं युक्त्यन्तरेण प्रतिपादयत्सूत्रमुपन्यस्य तदुपात्तश्रुतिमेवोदाहरति ॥ **श्रुतत्वाच्चेति** ॥ एकः प्रधानः सर्वभूतेषु गुप्ततयाऽवस्थितः । न केवलं भूतेषु सर्वव्यापी च । न सर्वभूतेषु स्थितिमात्रं सर्वभूतान्तर्यामी च । अध्यक्षोऽधिपतिः । सर्वभूतानामाश्रयः । सर्वं साक्षादीक्षत इति साक्षी । चेता ज्ञानरूपः । केवलो जडामिश्रः । निर्गुणः सत्त्वादिगुणहीन इति श्रुतौ निर्गुणस्य श्रुतत्वाच्च नासावशब्द इत्यर्थः । श्रुतत्वेऽप्यशब्दः किं न स्यादित्यत आह ॥ **न हीति** ॥ अशब्दस्यापि ब्रह्मणो लक्षणया श्रुतत्वं किं न स्यादित्यत आह ॥ **न चेति** ॥ अवाच्यस्य लक्ष्यत्वा-प्रसिद्धेः । नाप्रसिद्धमवाच्यस्य ब्रह्मणो लक्ष्यत्वं कल्प्यमित्यर्थः । ननु गङ्गापदावाच्यस्यापि तीरस्य तल्लक्ष्यत्वं प्रसिद्धमिति वेदावाच्यस्यापि ब्रह्मणस्तल्लक्ष्यत्वं किं न स्यादित्यत आह ॥ **सर्वेति** ॥ भवेदेव तीरादेर्गङ्गादिपदावाच्यस्यापि लक्ष्यत्वं पदान्तरवाच्यत्वान्न तु ब्रह्मणः । तस्य सर्वशब्दावाच्यत्वात् । सर्वशब्दावाच्यस्यापि लक्षणायां 'विप्रतिपन्नं न लक्ष्यं केनापि पदेनावाच्यत्वाद्वैधर्म्येण तीरवदिति' युक्तिविरुद्धत्वादित्यर्थः । सर्वपदार्थानां लक्षणायोग्यत्वान्न सपक्षसत्त्वम् ।

(तत्त्वप्रकाशिका)

ननु वाच्यत्वं लक्षणायां कथमुपयोगि येन तदभावेन लक्षणाऽयोगः । किं प्रयाजकान्तरमाशङ्कसे प्रयोजकत्वप्रकारमेव वा पृच्छसि । नाद्यः । केवलान्वयिनि केवलव्यतिरेकिणि चोपाधिशङ्कानुदयात् । केवलान्वयिनि साध्याभावाभावेन तदविनाभाव्यभावत्वाभावात् । केवलव्यतिरेकिणि च सपक्षाभावेन व्याप्त्यनिश्चयात् । द्वितीये व्याप्तिरेवेति ब्रूमः । किंनिबन्धनाऽसावपीति चेत् । द्रव्यत्वसंयोगित्वादौ किंनिबन्धना । अवाच्यस्य लक्षणायां किं लक्ष्यमिति प्रश्नस्य निरुत्तरत्वात् । न च तदेव पदं वक्तुं युक्तम् । न हि गङ्गापदेन किं लक्ष्यमिति प्रश्नस्य गङ्गेवेत्युत्तरम् । अथ तत्र पदान्तरम् । तेनापि किं लक्ष्यमिति प्रश्नस्योत्तराभावात् । अथ किञ्चित्पदमस्ति वाचकमिति चेत् । किं पदान्तरेणापराद्धम् । लक्ष्यपरपदस्य स्वरूपमात्रपरस्य वाचकत्वं युक्तम् । पदान्तराणां गुणाभिधायिनां निर्गुणे वृत्तौ लक्षणैव शरणमिति चेन्न । लक्षणपदानामपि लक्ष्यगतविशेषावलम्बेन वाचकत्वोपपत्तेः । लक्षणपदानां स्वरूपमात्रपरतेति चेन्न । पर्यायतापातात् । प्रयोजनबाहुल्यादपर्यायतेति चेन्न । वाच्यविशेषराहित्ये प्रयोजनशतेनापि पर्यायताऽपरिहारात् । स्वरूपमात्रकथनस्य प्रश्नानानुगुण्याच्च । न हि स्वरूपमज्ञात्वा कश्चन्द्र इति प्रश्नो युज्यते । अतो न लक्षणपदानामपि लक्षकत्वमित्यस्त्येव वाच्यत्वस्य लक्षणोपयोगः । तस्माद्वाच्यत्वाद्ब्रह्मणोऽखिलजगत्कारणतया शास्त्रयोनिता युक्तेति लक्षणं नातिव्याप्तम् । ततश्च तद्युक्त-ब्रह्मणो विष्णुत्वाद्युक्तैव तज्जिज्ञासेति सिद्धम् ॥ ११ ॥

## गुर्वर्थदीपिका

द्रव्यत्वसंयोगित्वादावित्यत्रादिपदेन रसत्वरूपत्वयोर्ग्रहणम् । यद्यपि किमनेन पदेन लक्ष्यमिति प्रश्नपरम्परया लक्षणायामनवस्थानवत्किमनेन पदेन वाच्यमिति प्रश्नपरम्परया वाच्यत्वेऽपि स्यादेवानवस्था । तथापि पदद्वयशक्तिग्रहणमात्रेणापूर्णसंसर्गरूपार्थाभिधायकवाक्यात्मकनारायणादिपदेन वाच्यसमर्पणेऽ-नवस्थापरिहारसम्भवान्न प्रतिबन्दी । नारायणपदेनापि किं वाच्यमिति प्रश्नस्य पदद्वयसमाहारलब्ध-संसर्गमर्यादया सिद्ध्यन्नर्थो वाच्य इत्येतावतैव प्रश्नस्य समाहितत्वात् । प्रत्येकं तत्त्वंपदार्थनिष्ठपदानां तत्त्वमसीत्यादिपदद्वयात्मकमहावाक्यानां च ब्रह्मणि लक्षणैवेति वदतस्तव तु लक्षणामूलशक्यसम्बन्ध-बोधनाय औपनिषदे ब्रह्मणि पुनर्लक्षकपदपरम्पराया वक्तव्यत्वाद्परिहार्यैवानवस्था । किञ्च वाचकत्वपक्षे न सर्वाणि पदानि भगवत्यप्रसिद्धानि केशवनारायणादिपदानां सार्वजनीनत्वेनाभिधानादेव भगवत्परत्वे सन्देहाभावात् । अतोऽप्रसिद्धाकाशादिपादानां किं वाच्यमिति प्रश्ने नारायणेत्यादिसार्वजनीनपदैरुत्तर-दानेऽस्यापि पदस्य किं वाच्यमिति निर्मूलशङ्काया अनुत्थानेन पदान्तरानपेक्षणान्नानवस्था । सर्वाणि पदानि भगवति लक्षणया प्रवृत्तानीति मते तु सर्वमपि पदं ब्रह्मणि लक्षकतया कल्प्यमेव न त्वनुशासना-दावस्यार्थस्य सिद्धिरस्तीत्यौपनिषदेऽप्रत्यक्षे च ब्रह्मणि लक्षणाबीजशक्यसम्बन्धबोधनाय

(गुर्वर्थदीपिका)

पदपरम्पराऽऽवश्यकीति कथं नानवस्था । यद्वाऽप्रसिद्धलक्षणाबोधनाय पदान्तरमावश्यकम् । तदपि लक्षकं चेत्पूर्वोक्तन्यायेन पुनः पदान्तरापेक्षेति सकलपदलक्ष्यत्वे कथं नानवस्था । यद्यपि लक्ष्यपरब्रह्म-पदस्य प्रवृत्तिनिमित्तब्रह्मत्वमपुरस्कृतस्वरूपमात्रपरतायां सत्यादिपदवल्लक्षकत्वमेव न वाचकत्वं तथाऽपि प्रौढिवादेन तावन्मात्रमङ्गीकृत्य लक्षणपदानां वाचकत्वं समर्थयितुमाह लक्ष्यपरपदस्येति ।

## भावबोधः

**युक्तिविरुद्धत्वादिति** ।। अनेन नञो विरुद्धार्थत्वाभिप्रायेणायुक्तेरित्येतद्व्याख्यातं भवति । **न सपक्षसत्त्वमिति** । तेन नासाधारण्यमिति भावः ।। **केवलान्वयिनीति** ।। दृष्टान्ततया वा ब्रह्म वाच्यं लक्ष्यत्वादित्यभिप्रेतकेवलान्वयिनिर्वाहार्थं वोक्तमिति द्रष्टव्यम् ।। **तदविनाभावीति** ।। अन्यथा प्रतिपक्षो-त्थापकत्वाभावादिति भावः ।। **व्याप्त्यनिश्चयादिति** ।। साध्यस्योपाधिनेत्यर्थः । कार्यकारणभावादेरेव व्याप्तिनिबन्धनत्वे तदभावात् द्रव्यत्वसंयोगित्वयोरपि सा न स्यादित्याह– **द्रव्यत्वेनि** ।।

ननु संयोगिताया द्रव्यत्वावच्छेद्यत्वहानिरेव विपक्षे बाधिका; यदि तयोर्व्याप्तिस्सा किंनिबन्धनेत्याशङ्क्य तर्हि इहाप्यनवस्था विपक्षे बाधिकेत्यभिप्रेत्याह– **अवाच्यस्य लक्षणायामित्यादिना** ।।

ननु सत्यज्ञानादिवाक्ये लक्ष्यार्पकं ब्रह्मपदं वाचकमेव । सत्यमित्यादिलक्षणपदानि तु न वाचकानीति शङ्कते– **लक्ष्यपरपदस्येति** ।। **प्रयोजनशतेनापीति** ।। पदेन वाच्यगतविशेषाप्रतिपादनेऽसत्यत्वादि-व्यावृत्तिरूपप्रयोजनमपि न सम्भवतीति सूचितम् ।

अत्र वाच्यत्वसाधकनामीक्षणीयत्वस्य बहुसंविधानसाध्यत्वेन प्रथमसूत्रे तदुक्तिः । द्वितीये— तस्यासिद्धि-माशङ्क्य पक्षधर्मतासिद्ध्ये ईक्षतिश्रुतेः शुद्धब्रह्मपरत्वसमर्थनम् । तृतीये 'आत्मन्येवात्मानं पश्येत्' इत्यादीक्षणीयत्वप्रतिपादकश्रुतेरात्मशब्दोपेतत्वेऽपि गौणस्यात्मशब्दवाच्यत्वात्तदुपेतश्रुतेः कुतः शुद्धब्रह्मपरत्वमित्यन्यथासिद्धिशङ्कानिरासायाऽऽत्मशब्दोपेतेक्षणीयत्वप्रदिपादकश्रुतेर्गौणपरत्वाभाव ईक्षणीयात्मनिष्ठस्य मोक्षोपदेशरूपहेतूक्तिः । चतुर्थे– तत्रैवात्मशब्दवाच्यस्याहेयत्ववचनहेयत्वावचनरूप-भावाभावरूपहेतूक्तिः । पञ्चमे ईक्षणीयत्वापेक्षया लयसंविधानस्य शुद्धब्रह्मणो वाच्यत्वसाधकत्वेनाभिप्रेतस्य श्रुत्युक्तत्वस्यासिद्धिपरिहाराय तत्साधकस्वाप्ययलक्षणहेतूक्तिः । षष्ठे ब्रह्मणः सकलवेदप्रतिपाद्यत्व-रूपसमन्वयसूत्रगत'सं'शब्दार्थसमर्थनम् । अस्य च वाच्यत्वसाधकसूत्रस्य 'सं'शब्देन प्रकरणसाङ्कर्ये निमित्तं प्रागेवोक्तम् । सप्तमे ब्रह्मणो वाच्यत्वे सन्निधाननिरपेक्षश्रुतत्वलक्षणहेतूक्तिरिति सूत्रक्रमः ।।

## भावदीपः

॥ ॐ श्रुतत्वाच्च ॐ ॥ **श्रुतिमेवेति** ॥ एवकारो नत्वर्थमित्याचष्टे । तेन एको देव इति श्रुतिरिति सूचितम् । इति शब्दान्तभाष्यस्य सूत्रेणान्वयः । भाष्ये केवलो निर्गुणश्चेत्येतावत्येव वाच्ये एको देव इत्यादिशेषोक्तिर्गुणपदेन सत्त्वादिरेव ग्राह्यो न धर्ममात्रं धर्मविधायकपूर्ववाक्यविरोधादित्यभि-प्रायेणेति मत्त्वा पदानां पौनरुक्त्यनिरासायार्थमाह ॥ **एकः प्रधान इत्यादिना** ॥ **जडामिश्रः प्राकृतदेहहीनः** । तत्र हेतुर्निगुण इति । व्यक्तं कर्मनिर्णयटीकायाम् । भाष्ये श्रुताविति निर्गुणस्येति च पदद्वयं योज्यमिति मत्वाऽन्वयमाह ॥ **इति श्रुताविति** ॥ **श्रुतत्वाच्चेति** ॥ न केवलमीक्षतेः श्रुत्युक्तत्वाच्चेत्युक्तहेतुद्वयेनेत्यर्थः । अत्रापि तन्नाशब्दमित्याद्यसूत्रादनुमित्युत्तरभाष्येण सूचनादाह ॥ **नासावशब्द इत्यर्थ इति** ॥ भाष्ये लक्षणाऽयुक्तेरित्यत्र लक्षणाया अयुक्तेर्युक्तिविरुद्धत्वादित्यर्थ इत्याह ॥ **लक्षणाया इति** ॥ **केनापीति** ॥ एतेन भाष्ये सर्वशब्दावाच्यस्येति पूर्वभागो हेतुसमर्पक इति सूचितम् ॥ **वैधर्म्येणेति** ॥ यल्लक्ष्यं तत्केनापि पदेन वाच्यं यथा तीरादीत्यर्थः ॥ **लक्षणेति** ॥ लक्षणां प्रति योग्यत्वादित्यर्थः ॥ **न सपक्षसत्त्वमिति** ॥ सति सपक्षे तत्रावर्तमानो हेतुरसाधारण इत्युक्तेरिह निश्चितसाध्यवतः सपक्षस्यैवाभावान्नासाधारण इति भावः ॥ **केवलान्वयिनीति** ॥ दृष्टान्तत्वेन वा ब्रह्म वाच्यं लक्ष्यत्वादित्यभिप्रेतकेवलान्वय्युपयोगतया वा तदुक्तिः । तद्व्यनक्ति ॥ **केवलेति** ॥ **तदविनाभावीति** ॥ साध्याभावाविनाभूताभावप्रतियोगिन एव उपाधित्वादिति भावः ॥ 'साध्याभावा-विनाभावी स उपाधिर्यदत्यय' इत्युक्तेः ॥ **व्याप्तीति** ॥ सव्यापकत्वानिश्चयादित्यर्थः ॥ **द्वितीय इति** ॥ प्रयोजकत्वप्रकारप्रश्न इत्यर्थः । कार्यकारणभावादेरेव धूमाग्न्यादाविव व्याप्तिनिबन्धनत्वं मत्त्वा पृच्छति ॥ **किंनिबन्धनेति** ॥ तथात्वे द्रव्यत्वादौ तदभावात्सा न स्यादिति भावेनाह ॥ **द्रव्यत्वेति** ॥ संयोगितायाः द्रव्यत्वावच्छेद्यत्वहानिरेव विपक्षे बाधिका तयोर्व्याप्तिनिबन्धनं चेत्तर्हीहापि किन्तदित्यनवस्थितिरित्यनुभाष्योक्तानवस्था विपक्षे बाधिकेति तां व्यनक्ति ॥ **अवाच्यस्येति** ॥ वाच्य-सम्बन्धितया ज्ञातस्यैव लक्ष्यत्वादौपनिषदस्य चाशब्देनाज्ञानात्किं लक्ष्यमिति प्रश्नो निरुत्तरः स्यादित्यर्थः । ननु कुतो निरुत्तरत्वं तज्ज्ञानार्थं यल्लाक्षणिकमित्युक्तं तदेव पदं वा पदान्तरं वोत्तरमुच्यत इत्यतो न द्वयमपीति क्रमेणोपपादयति ॥ **न च तदेवेत्यादिना** ॥ **उत्तरमिति** ॥ तदर्थस्यैवाज्ञानादिति भावः । ननु सत्यज्ञानादिरूपलक्षणवाक्ये लक्ष्यार्पकं ब्रह्मपदं वाचकम् । सत्यादिपदानि लाक्षणिकानीति शङ्कते ॥ **अथ किञ्चिदिति** ॥ तथा च नानवस्थेति भावः । ननु वाचकपदस्यापि गृहीतशक्तिकस्यैव

(भावदीपः)

बोधकत्वाज्ज्ञात एवार्थे शक्तेर्ग्राह्यत्वेन किमस्य वाच्यमिति प्रश्नापर्यवसानेनानवस्थेति चेन्न । अभिमान्यधिकरणे शास्त्रोक्तवस्तुनश्चैव व्युत्पत्तिः शास्त्रलिङ्गत इत्यनुव्याख्यानसुधयोरुक्तदिशा यौगिकानां पदानां वाक्यतुल्यतया पृथक्सङ्गतिग्रहानपेक्षणात् । एवं च प्रागभिप्रेतकेवलान्वयिन्यनवस्थारूपतर्कपराहतिरपास्तेति बोध्यम् । लक्ष्यस्वरूपमात्रपरस्यापि प्रवृत्तिहेतुविशेषाभावेन न तस्यापि वाचकत्वम् । तथाप्यभ्युपेत्य लक्षणपदानां तत्साधयति ॥ **लक्षणेति** ॥ ननु

> लक्ष्यार्थभेदाभावेऽपि व्यवच्छेद्यविभेदतः ।
> विज्ञानानन्दपदयोः पर्यायत्वर्थते कुतः ॥

इत्युक्तेस्सत्यादिपदानामनृतादिव्यावृत्तिबोधः प्रयोजनमस्तीति शङ्कते ॥ **प्रयोजनेति** ॥ **वाच्यविशेषेति** ॥ तदुक्तमनुव्याख्याने ।

> सत्याज्ञानादिकेऽप्येवं न व्यावृत्त्या प्रयोजनम् ।
> व्यावृत्तस्याविशेषत्वे तदखण्डं च खण्डितमिति ॥

प्रश्नेति ॥ ब्रह्मविदाप्नोति परमित्युक्तौ किं ब्रह्मेति लक्षणप्रश्ने 'सत्यं ज्ञानमनन्तं ब्रह्म'' लक्षणवाक्यस्य प्रवृत्तेरिति भावः । स्वरूपमात्र एव प्रश्नोऽस्त्वित्यत आह ॥ **न हीति** ॥ अधिकरणार्थं फलोक्त्योपसंहरति ॥ **तस्मादिति** ॥ ईक्षणीयत्वयुक्त्यनुगृहीतवाच्यत्वबोधकश्रुतिस्मृतिरूपश्रुत्युक्तत्वरूपश्रुतत्वरूपसाधकसद्भावादिति ईक्षतेरित्याद्युक्तहेत्वर्थानुवादः । तत्सिद्धं नाशब्दं हि तदिति साध्यांशार्थं हेतूकृत्य फलमाह ॥ **वाच्यत्वादित्यादिना** ॥ अत्र सूत्राणां पौर्वापर्यबीजं टीकायां प्रतिसूत्रमवतारिकादिभिरेवोपलक्ष्यते । स्पष्टीकृतं च चन्द्रिकायाम् ॥ छ ॥ यदत्र केनचिद्रामानुजीयेन पाराशर्यविजये सूत्राक्षराणां स्वमते स्वारस्यमस्मन्मतार्थे चास्वारस्यमुत्प्रेक्षितम् । तदसमञ्जसम् ।

> 'प्रतिसूत्रं प्रकाश्येते घटनाघटने मया ।
> स्वीयान्यपक्षयोः सम्यग्विदाङ्कुर्वन्तु सूरयः' ॥

इति प्रतिज्ञाय तथैव प्रतिसूत्रं चन्द्रिकायां प्रतिपादितत्वात् । किञ्च । यदुक्तमाद्यसूत्रे ज्ञानादित्येव वाच्यम् । **न त्वीक्षतेरिति** । ज्ञानकर्मत्वस्य हेतुत्वेनेक्षणपर्यन्तत्वस्य व्यर्थत्वादिति । तन्न । तस्यैव तदर्थत्वात् । पुरुषमीक्षत इति श्रुत्यनुसारार्थत्वात् । श्रुतावीक्षत इत्येतदौपदेशिकज्ञानपरमिति सूचनार्थत्वाच्च । यदप्यशब्दमिति पदं शब्दगुणकं नेत्यर्थस्यैवोपस्थापकं न तु वाच्यं नेत्यर्थस्य अशब्दमस्पर्शमिति

(भावदीपः)

श्रुतौ स्पर्शादिगुणराहित्यप्रायपाठादिति । तदपि न । अशब्दमित्यादेर्व्यर्थतायाः टीकायामेवोक्तत्वात् । परैस्तथा व्याख्यानाच्च । यदपि गौणश्चेदिति सूत्रे जीव एव दृश्यो न ब्रह्मेति शङ्का ब्रह्मणो दृश्यत्वा-दृश्यत्वाभ्यां व्याहत्या नोदेतुमर्हतीति तदपि परेण स्वतःसिद्धब्रह्मणः स्वव्यतिरिक्तसंवित्कर्मत्वानङ्गीकारेण तदीयशङ्काया एव सूत्रेऽनुवादादित्याद्यूह्यम् । अधिकं चन्द्रिकाप्रकाशेऽस्माभिः कृतं ध्येयम् । यदपि केनचिच्छैवेन पञ्चाधिकरणीप्रमेयदूषणमुत्प्रेक्षितं तदपि गुरुपादकृतकण्टकोद्धारे निपुणतरं निरस्तम् । तस्मात्-

देवोत्तमैर्लालनीयो भाष्यकारनिरूपितः ।
सूत्रार्थोऽनेकमानेतः सर्वैर्ग्राह्यो बुभुक्षुभिः ॥ अ. ॥ ५ ॥

## अभिनवचन्द्रिका

(सू.११) **तदुपात्तश्रुतिमेवेति** ॥ रूढशब्दोपेतां सूत्रेपात्तां श्रुतिमित्यर्थः । **निर्गुणस्य श्रुतत्वाच्चेति** ॥ रूढशब्दोक्तत्वादित्यर्थः । तदुक्तम् – 'इति श्रुतौ श्रुतत्वाच्चे'ति ॥ अन्यथा – श्रुतौ श्रुतत्वादित्यस्यायोगेन श्रुत्युक्तत्वादित्येव ब्रूयात् ॥ न हि श्रुतौ श्रुत्युक्तत्वमिति सम्भवति । किंतु श्रुतावुक्तमित्येव । ननु निर्गुणपदस्य यौगिकत्वात्कथं श्रुत्युक्तत्वम् । मैवम् । तस्य केवलयौगिकत्वे ज्ञानानन्दादिगुणशून्यत्वस्यापि प्रसङ्गेन योगरूढत्वस्यावक्तव्यत्वात् । **श्रुतत्वेऽपीति** ॥ रूढशब्दोक्तत्वेऽप्यवाच्यः किं न स्यादित्यर्थः । **वेदावाच्यस्यापीति** ॥ पदावाच्यस्यापीत्यर्थः । वेदवत्पदानामपि अपौरुषेयत्वज्ञापनाय वेदशब्दप्रयोगः । **विप्रतिपन्नमिति** ॥ विप्रतिपन्नं न लक्ष्यं स्यादित्यर्थः । **केनापि पदेनावाच्यत्वादिति** ॥ दूषणानुमाने पराङ्गीकारस्यैव सिद्धिपदार्थत्वात्परेण तदङ्गीकारान्नासिद्धिरिति भावः । ननु वैधर्म्येण तीरवदिति व्यतिरेकदृष्टान्ताभिधानमयुक्तम् । सपक्षासम्भव एव तस्य वक्तव्यत्वात् । न ह्यनन्तेषु पदार्थेषु सपक्षो नाम न लक्ष्यत इति सम्भवतीत्यत आह – **सर्वपदार्थानामिति** ॥ सपक्षस्य सत्त्वं विद्यमानतालाभ इति यावत् । 'न सपक्षत्व'मिति पाठे सर्वपदार्थानां लक्षणायोग्यत्वात् कस्यापि न सपक्षत्वं सम्भवतीत्यर्थो ज्ञेयः । **ननु वाच्यत्वमिति** ॥ यदि वाच्यत्वं लक्षणायामुपयुक्तं स्यात् तर्हि वाच्यत्वाभावे लक्षणाया अयोगः स्यात्, तदेव कथमित्यर्थः । **किं प्रयोजकान्तरमिति** ॥ लक्षणायां वाच्यत्वमिव मुख्यार्थसम्बन्धरूपं प्रयोजकान्तरमस्ति । तस्य किमुपाधित्वमाशङ्कसे, उत वाच्यत्वमग्निधर्ममिव स्वाधिकरणे लक्ष्यत्वं प्रयोजयति । उत वृष्टिर्नदीपूरमिव स्वानधिकरणे लक्ष्यत्वं प्रयोजयतीति । प्रयोजकत्वे प्रकारमेव वा पृच्छसीत्यर्थः । 'वाच्यत्वं लक्षणायां कथमुपयोगी'ति वाक्यस्थकथंशब्दस्य उपाध्युद्भावनं मनसि निधायाक्षेपार्थत्वस्य, प्रश्नार्थकत्वस्य च सम्भवाद्विकल्पः कृतः । **केवलान्वयीति** ॥

(अभिनवचन्द्रिका)

व्यतिरेकिग्रहणं दृष्टान्तार्थः । यथा केवलव्यतिरेकिणि उपाधिशङ्कानुदयः तथा केवलान्वयिनि उपाधिशङ्कानुदय इत्यर्थः । यद्यपि यल्लक्ष्यं तद्वाच्यमिति व्याप्तेः केवलान्वयित्वं परो न मन्यते तथाप्यस्माभिः केवलान्वयित्वेनाङ्गीकृतत्वादस्मान्प्रति उपाध्युद्भावनं न युक्तमिति भावः । कथं तर्हि वाच्यत्वाभावेन लक्ष्यत्वाभावसाधनमिति चेत्, उक्तं, किमुक्तम्, नेदं साधनानुमानम् । अपि तु दूषणानुमानम् । दूषणानुमाने च न बाधो दूषणम् । लक्ष्यं न भवतीत्यसाधनात् । कथं तर्हि साधनमभिहितमिति चेत्, लक्ष्यं न स्यादित्यभिमतम् । नापि हेतोरसिद्धिर्दूषणं दूषणानुमाने । पराभ्युपगमस्यैव सिद्धिपदार्थत्वात् । **साध्याभावेनेति** ॥ केवलान्वयिनि साध्याभावाभावेन उपाध्यभावस्य साध्याभावव्याप्यत्वाभावात्, उपाधिव्यतिरेकेण साध्याभावसाधनासम्भवेन न तत्रोपाधिरिति भावः । व्यतिरेकिणि उपाधिशंकानुदय इत्यस्मिन्नर्थे विवदमानं प्रत्याह– **केवलव्यतिरेकिणि चेति** ॥ उपाधेः साध्यव्यापकत्वानिश्चयात् नोपाध्युद्भावनमिति भावः । **व्याप्तिरेवेति** ॥ यल्लक्ष्यं तद्वाच्यमितिव्याप्तेः समानदेशकालघटितत्वात् वाच्यत्वं स्वाधिकरण एव लक्ष्यत्वं प्रयोजयतीति भावः । **किंनिबन्धनेति** ॥ कार्यकारणभावाभावात् वाच्यत्वमन्तरा लक्ष्यत्वस्यानुपपत्तिरुचिता । तदभावे तु निर्निवन्धनत्वात् । तेन विनाऽनुपपत्तिरूपा व्याप्तिरेव न युक्तेति भावः । कार्यकारणभावाभावेऽपि साध्यमन्तरा साधनस्यानुपपत्तिरूपव्याप्तेः द्रव्यत्वसंयोगित्वादौ दृष्टत्वात् इहापि वाच्यत्वमंतरा लक्ष्यत्वस्यानुपपत्तिरूपा व्याप्तिः स्यादेवेति भावेनाह – **द्रव्यत्वेति** ॥ इति प्रश्नस्य, 'निरुत्तरत्वप्रसङ्गा'दिति वक्ष्यमाणमत्रापि सम्बध्यते । ततश्च कार्यकारणभावाभावे सामानाधिकरण्यरूपा व्याप्तिरेव नेति न वक्तव्यमित्यर्थः । एतेन 'द्रव्यत्वसंयोगित्वादा'विति वाक्ये हेतोरनभिधानात् पूर्वेणानन्वयशंका परास्ता । मा भूत्पदार्थान्तरस्य लक्ष्यतायां वाच्यत्वमुपयोगि । प्रत्यक्षादिनापि मुख्यार्थसम्बन्धितया लक्ष्यज्ञानसम्भवात् । ब्रह्मणो लक्ष्यतायां तु वाच्यत्वमुपयोग्येव । तेन विना लक्ष्यत्वस्य सर्वथाऽसम्भवादिति भावेनाह– **अवाच्यस्येति** ॥ वाच्यत्वमुपयोग्येवेति शेषः । अवाच्यस्य ब्रह्मणो लक्ष्यतायां अंगीकृतायां किमस्य लक्ष्यमिति प्रश्नपूर्वकं उपदेशेनैव ब्रह्म प्रतिपत्तव्यम् । न चोपदेशः सम्भवति । वाचकपदाभावात् । तदभावे च ब्रह्मज्ञानाभावेन लक्षणैव न प्रवर्तेत । लक्षणायाः वाच्यार्थसम्बन्धितया विज्ञात एव ज्ञानजनकत्वस्वाभाव्यत् । न च ब्रह्मज्ञानं शब्देन विना सम्भवति । तस्यौपनिषदत्वादिति भावः । ननु अस्तु पश्नपूर्वकमुपदेशेनैव ब्रह्मज्ञानं तथापि न ब्रह्मज्ञानासम्भवः ब्रह्मपदलक्ष्यं ब्रह्मैवेत्युपदेशसम्भवादित्यत आह – **न च तदेवेति** ॥ मा भूद्ब्रह्मेत्युपदेशो ब्रह्मपदेन, पदान्तरेण तु उपदेशः स्यादिति शङ्कते – **अथ तत्र पदान्तरमिति** ॥ इति चेन्नेति शेषः । एतेन तेनेत्युत्तरवाक्येनानन्वय इति परास्तम् । तदपि पदं न

(अभिनवचन्द्रिका)

ब्रह्मज्ञानजनकं मख्यार्थसम्बन्धितया ब्रह्मज्ञानाभावादिति भावेनाह – **तेनापीति** ।। अस्त्येव निर्गुणस्य किञ्चिद्वाचकं पदं न तु घटादिवत् अनेकपदवाच्यत्वमिति मन्यमानस्तटस्थः शङ्कते – **अथ किञ्चिदिति** ।। एतेन यत्किञ्चित्पदवाच्यत्वसाधनस्यैवाधिकरणप्रमेयत्वात् तस्य पूर्वपक्षिणाङ्गीकृतत्वेन समीहितसिद्धेः 'किं पदान्तरेणापराद्ध' मित्युत्तरग्रन्थवैयर्थ्यमिति परास्तम् । अधिकरणप्रमेयस्य तावता सिद्धत्वेऽपि सिद्धान्तविरुद्धस्य तटस्थचोद्यस्य निराकर्तव्यत्वेनोत्तरग्रन्थस्य सार्थकत्वात् । **लक्ष्यपरपदस्येति** ।। लक्ष्यपरपदस्य धर्मानभिधायकस्य ब्रह्मवाचकत्वमुपपद्यते । ब्रह्मणः तत्प्रतिपाद्यस्वरूपत्वात् । प्रतिपाद्यार्थाभाव एव लक्षणायाः स्वीकर्तव्यत्वात् । 'सत्यं ज्ञान'(तै.उ.२)मिति लक्षणपदानां तु गुणाभिधायकत्वान्न ब्रह्मवाचकत्वम् । सत्यादिपदप्रतिपाद्यानां सत्यत्वादिधर्माणां ब्रह्मण्यभावात्, प्रतिपाद्यार्थाभावे च लक्षणाया आश्रयणीयत्वादिति वैषम्यमिति भावः । **लक्षणपदानामपीति** ।। सत्यज्ञानादिपदानाम् । अन्यत्र सत्यत्वाद्यवच्छिन्नधर्मिवाचकत्वेऽपि ब्रह्मणि ब्रह्मगतविशेषावलम्बनेन प्रवृत्तानां वाचकत्वोपपत्तेः । नहि नानार्थाः सैन्धवादिशब्दाः समुद्रोत्पन्नत्वादिनिमित्तमालम्ब्य लवणादौ प्रवृत्ताः । तदपहाय सिन्धुदेशोत्पन्नत्वादिकं निमित्तीकृत्य तुरगादौ प्रवृत्ता इत्येतावता न तद्वाचका भवन्ति । येन सत्यज्ञानादिशब्दा न ब्रह्मवाचका भवेयुरिति भावः । **लक्षणपदानामिति** ।। भवेत्सत्यज्ञानादिपदानां ब्रह्मावाचकता यदि ब्रह्मगतविशेषावलम्बनेन ब्रह्मणि तेषां प्रवृत्तिः स्यात् । न चैवं किं नाम तेषां ब्रह्मस्वरूपमात्रावलम्बेन प्रवृत्तिरिति लक्षणैव शरणमिति भावः । **पर्यायतापातादिति** ।। पर्यायेणैव प्रयोगः स्यात्, सहप्रयोगो न स्यादिति भावः । एतेन एकार्थवाचित्वस्यैव पर्यायताप्रयोजकत्वेन एकार्थलक्षकत्वस्य तदप्रयोजकत्वात् पर्यायतापातादित्ययुक्तमिति परास्तम् । **प्रयोजनबाहुल्यादिति** ।। सत्यज्ञानादिपदानां अनृतादिव्यावृत्तिज्ञापनरूपपृथक्पृथक्प्रयोजनसद्भावात् सहप्रयोग इति भावः । **वाच्यविशेषराहित्य इति** ।। सत्यादिपदानां ब्रह्मणि अर्थविशेषसमर्पकत्वाभावे अनृतादिव्यावृत्तिज्ञापनरूपप्रयोजनासिध्या प्रयोजनशतानुसन्धानेऽपि सहप्रयोगो नेत्यर्थः । **अत इति** ।। पर्यायत्वप्रसङ्गस्यावर्जनीयत्वात् सत्यज्ञानादिपदानां न लक्षकत्वम् ।ः अपि तु वाचकत्वमित्यर्थः । वाच्यत्वस्य लक्षणोपयोगोऽस्त्येवेत्यर्थः । एतेन लक्षणपदानां लक्षकत्वाभावस्य वाच्यत्वस्य लक्षणोपयोगं प्रति हेतुत्वाभावात्, तयोर्हेतुहेतुमद्भावकथनमयुक्तमिति परास्तम् । हेतुहेतुमद्भावस्यानुक्तत्वात् ।

**पूर्वपक्षस्तु–** न ब्रह्मणः शास्त्रमुख्यार्थत्वम्, अवाच्यत्वात् । न चासिद्धो हेतुः । 'यतो वाचो निवर्तन्त' इत्यादिश्रुतेः । न ह्यवाच्यस्य शास्त्रमुख्यार्थता सम्भवतीति न शास्त्रोक्तजगत्कारणत्वं तस्येति ।

(अभिनवचन्द्रिका)

**सिद्धान्तस्तु–** अवाच्यत्वाद्ब्रह्मणो न शास्त्रमुख्यार्थत्वमिति यदुक्तं न तद्युक्तम् – ईक्षणीयत्वान्यथानुपपत्त्या वाच्यत्वस्य सिद्धत्वात् । न चेक्षणीयत्वमसिद्धमिति वाच्यम् । 'स एतस्मा'-दित्यादिश्रुतिसिद्धत्वात् । न च वाच्यत्वानुमानस्य 'यतो वाचो निवर्तन्त' इत्यादिश्रुतिबाधः । 'यतो वाच' इति श्रुतेः अप्रसिद्धत्वाभिधायकत्वेन अवाच्यत्वानभिधायकत्वात् । तदुक्तम् – 'अप्रसिद्धेरवाच्यं तद्वाच्यं सर्वागमोक्तित' इति । (६) ननु – भवत्येव ब्रह्म वाच्यं तथापि नेक्षणीयत्वान्यथानुपपच्या वाच्यत्वसाधनं युक्तं तदीक्षणीयत्वस्यासिद्धत्वात् । न च – 'स एतस्मा'दिति श्रुतिसिद्धं तस्येक्षणीयत्वमिति वाच्यम् । तस्या गौणात्मपरत्वात् इति चेत् । न 'आत्मन्येवात्मानं पश्ये'दिति श्रुत्या ईक्षणीये आत्मशब्दश्रवणात् । ईक्षणीयस्य निर्गुणत्वसिद्धेः 'स एतस्मा'दिति श्रुतेः तत्परत्वस्यैव वक्तव्यत्वात् । समाख्यालब्धस्यैव श्रुत्यर्थत्वात् । (७) 'ननु – आत्मन्येवात्मानं पश्ये' दिति श्रुतौ आत्मशब्दश्रवणेऽपि सगुणपरत्वमेवास्तु । न हि आत्मशब्दो विष्णौ परममुख्य इत्येतावता आत्मशब्दघटितवाक्ये न गौणपरमिति सम्भवति । 'हृदि ह्येष आत्मे'त्यादावपि गौणपरत्वाभावादिति चेत्, न – 'यस्यानुवित्त' इति श्रुतौ तन्निष्ठस्य मोक्षोपदशात् । न हि बद्धात्मज्ञानेन बन्धनिवृत्तिरूपमोक्षः सम्भवति । (८) अन्या वाचो विमुञ्चथेति हेयत्वप्रतिपादकवचनविषयत्वाभावप्रसङ्गाच्च, न गौण आत्मा ईक्षणीय श्रुतिप्रतिपाद्यः । मोक्षसाधनीभूतज्ञानविषयस्य हेयत्वप्रतिपादकवचनविषयत्वासम्भवात् । (९) न केवलं ईक्षणीयत्वान्यथानुपपत्त्या ब्रह्म वाच्यं प्रतिपत्तव्यम् । (१०) नन्वस्तु निर्गुणस्य वाच्यत्वसिध्याऽवाच्यत्वानुपपत्तिरूपबाधकाभावात् श्रुतिप्रतिपाद्यत्वम्, तथापि न काराणत्वं प्रसिद्धशाखासु कारणत्वेनोक्तत्वेऽपि अप्रसिद्धशाखासु अकारणत्वेनोक्तिसम्भवादिति चेत्; न । सर्ववेदोत्पाद्यज्ञानस्यैकविधत्वेन विरोधशङ्कानवकाशात् । तदुक्तं – 'सर्वे वेदा युक्तयः सुप्रमाणाः ब्राह्मं ज्ञानं परमं त्वेकमेव । प्रकाशयन्ते न विरोधः कुतश्चित् वेदेषु सर्वेषु तथेतिहासे' इति । (११) न केवलं ईक्षणीयत्वश्रुत्युक्तत्वयोरन्यथानुपपत्त्या ब्रह्मणो वाच्यत्वम्, अपि तु 'साक्षी चेता केवलो निर्गुणश्चे'ति निर्गुणपदविषयत्वान्यथानुपपत्त्या ब्रह्म वाच्यं प्रतिपत्तव्यम् । ततश्च अवाच्यत्वरूपबाधकाभावात्, उपक्रमादिलिङ्गैर्विचारे क्रियमाणे तस्यैव कारणत्वावगतेः, गतिसामान्याच्च, कारणत्वं तस्यैवेति सिद्धम् । (अ.५)

## वाक्यार्थमुक्तावली

ॐ श्रुतत्वाच्च ॐ । **सिंहावलोकनेति** । अतो न गतिसूत्रे व्यववधानं दोषायेति भावः । एतेनैतन्निरस्तम् । श्रुत्युक्तत्वाच्चेत्यध्याहृतसूत्रेणेदं गतार्थमिति । निर्गुणस्य श्रुत्युक्तस्य स्वाप्ययेन प्रसाध्यतया

(वाक्यार्थमुक्तावली)

अश्रेष्ठत्वात् । अत्र तु साक्षान्निर्गुणवाचकनामात्मकपदोपेतश्रुत्युक्तत्वस्य हेतुत्वेन विवक्षितत्वेनासन्दिग्धतया श्रेष्ठत्वेनागतार्थत्वमिति । यथोक्तं यत्र पश्चात्तनः श्रेष्ठस्तत्र सिंहावलोकनमिति । नन्वथापीदं सूत्रद्वयमाद्य-सूत्रेण गतार्थम् । तत्रेक्षणीयत्वं नाम प्रत्यक्षाद्यवेद्यत्वे सत्यागमेनापि लक्षणादिवृत्त्यन्तरेणाप्रतिपाद्यत्वे सतीक्षणीयत्वं विवक्षितम् । तच्च श्रुतिजन्यज्ञानकर्मत्वापरपर्यायश्रुत्युक्तत्वानतिरिक्तमिति चेन्न । तत्र श्रुतौ पुरुषमीक्षत इत्युक्तमीक्षणीयत्वलिङ्गमर्थापत्तिरूपं परिशेषरूपं वा वाच्यत्वे हेतुतयोपन्यस्तम् । श्रुतावीक्षणीयत्वोक्तेस्तस्य च वाच्यत्वं विनाऽयोगादिति । अत्र पुनः पुनः श्रुतौ साक्षान्निर्गुणस्य प्रतिपादितत्वात् लक्षणया प्रतिपादनस्यायुक्तत्वात् वाच्यत्वमित्युच्यत इति भेदात् । इदमप्युक्तं सिंहावलोकनेति । केवलो निर्गुणश्चेत्यत्र सत्वादिराहित्यमेव विवक्षितम् । न तु निर्धर्मकत्वमित्यभिप्रायेण एको देव इत्यादिपूर्वशेषोदाहरणमिति भावेन पौनरुक्त्यपरिहाराय पदानामर्थानाह । **एकः प्रधान इत्यादिना ।**

ननु घटपदेनालक्ष्ये घटे घटपदवाच्यत्वदर्शनात् सति सपक्षे तत्राविद्यमाने हेतुरसाधारण इत्यसाधारणानैकान्त्यमित्यत आह **सर्वपदार्थानामिति** । यद्वा ननूक्तविधया घटस्य सपक्षत्वात्कथमिदं केवलव्यतिरेकि तस्यासपक्षत्वादित्यत आह ॥ **सर्वेति** ॥ **कथमुपयोगीति** ॥ कथं प्रयोजकमित्यर्थः । वाच्यत्वस्य प्रयोजकत्वप्रश्नोऽसङ्गत इत्यत आह **येनेति** । लक्षणायोगः साध्यत इति शेषः । तथा च विप्रतिपन्नं न लक्ष्यमित्यनुमानेऽप्यलक्ष्यत्वं केनापि पदेनावाच्यत्वे कथमुपयोगीति भावः ॥ **प्रयोजकान्तर-मिति** । साध्यातिरिक्तं प्रयोजनमुपाधिमिति यावत् । केवलान्वयिनीति दृष्टान्तत्वेनोक्तमिति ज्ञेयम् । यद्वा ब्रह्म वाच्यं लक्ष्यत्वादित्यभिप्रेतकेवलान्वयिनीत्यर्थः । ननु कथमेतत्केवलान्वयि । वाच्यत्वभावे लक्ष्यत्वाभावस्य येन तदभावेन लक्षणायोग इति टीकायामेवोक्तत्वादिति चेन्न । सिद्धान्ते वाच्यत्व-लक्ष्यत्वयोः केवलान्वयित्वमेव ब्रह्मणोऽपि लक्ष्यत्वस्य देवताधिकरणे वक्ष्यमाणत्वात् । परेण परमेश्वरस्य लक्ष्यत्वमङ्गीकृत्य वाच्यत्वानाङ्गीकारे परन्यायेन ब्रह्म न लक्ष्यं भवितुमर्हति अवाच्यत्वादिति केवल-व्यतिरेकिलक्षणं दूषणानुमानमुच्यते । अत एव व्यतिरेकप्रसिद्ध्यभावादेव वाच्यत्वलक्ष्यत्वयोः केवलान्वयित्वमिति ॥ **तदविनाभावीति** ॥ साध्याभावाविनाभूताभावप्रतियोगिन एवोपाधित्वादित्यर्थः । तदुक्तं वरदराजेन । 'साध्याभावाविनाभावी स उपाधिर्यदत्ययः' इति । अन्यथा सत्प्रतिपक्षोन्नायकत्वा-सम्भवादिति भावः । **व्याप्त्यनिश्चयादिति** । साध्यस्योपाधिनेति शेषः । **किंनिबन्धनेति** । कार्यकारण-भावादेर्व्याप्तिनिबन्धनस्याभावादिति भावः । प्रतिबन्द्या परिहरति **द्रव्यत्वेति** । अनयोः कार्यकारणभावादि-

(वाक्यार्थमुक्तावली)

वत्वादिति भावः । संयोगितायाः द्रव्यत्वावच्छेद्यत्वाहानिरेव तयोर्व्याप्तिनिबन्धना विपक्षे बाधकतर्करूपेति चेन्न । तर्हीहापि 'किं तदित्यनवस्थितिः' इत्यनुव्याख्यानोक्तानवस्था विपक्षे बाधिकेति भावेन तां व्यनक्ति । **अवाच्यस्येति** । ननु कुतो निरुत्तरत्वं यल्लाक्षणिकमित्युक्तं तदेव पदं पदान्तरं वोत्तरमुच्यत इत्यतो न द्वयमपीति क्रमेणाह न च तदेवेत्यादिना । **उत्तरमिति** । तदर्थस्यैवाज्ञानादिति भावः ।

ननु किं लक्ष्यमिति प्रश्नस्य नोत्तराभावः ब्रह्म लक्ष्यमित्युत्तरसम्भवाद् ब्रह्मपदस्य वाचकत्वोपपत्तेरित्याशङ्क्य परिहरति अथेत्यादिना । पदान्तरेण सत्यज्ञानादिपदेन । अपराधे निमित्तमाशङ्क्य परिहरति । **लक्ष्यपदस्येति** । लक्ष्यार्पकपदस्येत्यर्थः । **स्वरूपमात्रपरस्येति** । तस्यापि धर्मपरत्वे विशेष्यमात्रार्पकपदाभावप्रसङ्गेन तमुद्दिश्य धर्मविधानायोगादिति भावः । **लक्षणपदानामपीति** ॥ लक्ष्यपदस्य शक्यतावच्छेदक यत्किञ्चिद्धर्मपुरस्कारेणैव वाचकत्वाद्वाच्यत्वमन्यथाऽतिप्रसङ्गात् । तथा च यथा यत्किञ्चिद्विशेषमवलम्ब्य वाचकत्वं तथा अवान्तरविशेषावलम्बनेन लक्षणपदानामपि वाचकत्वोपपत्तेः । न लक्षणाश्रयणीयेति भावः ।

ननु निर्गुणत्वस्य प्रमितत्वाद् यतो वाचो निवर्तन्त इत्यवाच्यत्वस्यापि प्रमितत्वात्र लक्षणपदानां विशेषावलम्बनेन वाचकत्वं किन्तु स्वरूपमात्रलक्षकत्वमेव । लक्ष्यपदमपि निर्गुणत्वश्रुतिबाधकवशेन कमपि विशेषमवलम्ब्य स्वरूपमात्रवाचकमित्यङ्गीकार्यम् । तस्यापि लक्ष्यकत्वेऽनवस्थापत्तेः । यथाप्रमाणं ग्राह्यत्वेन अतिप्रसङ्गानवकाशादित्यभिप्रेत्य शङ्कते **लक्षणपदानामिति** ॥ लक्ष्यपदस्येति ग्राह्यम् । परिहरति । सत्यज्ञानादिपदानामुक्तरीत्यास्वरूपमात्रपरत्वेन पर्यायतापत्तेरित्यर्थः । **प्रयोजनेति** । असत्यत्वादिव्यावृत्तिरूपप्रयोजनबाहुल्यादित्यर्थः ॥ **वाच्येति** ॥ वाच्यविशेषराहित्ये प्रतिपाद्यप्रमेये च भेदाभावे एकस्यैव ब्रह्मणः सर्वपदप्रतिपाद्यत्वे प्रयोजनशतेनापि पर्यायता न हीयते । न हि घटकरीरादिशब्दानां घटः करीरः कोकिलः पिक इत्यादिप्रयोगे व्युत्पित्सुव्युत्पत्तिलक्षणप्रयोजनमस्तीत्येतावता पर्यायता हीयत इति भावः । यद्वा किं ब्रह्मविशेषणत्वेनासत्यत्वादिव्यावृत्तिबोधः प्रयोजनं किं वा स्वतन्त्र एव व्यावृत्तिबोधः । नाद्योऽपसिद्धान्तात् । अभावरूपधर्माङ्गीकारे भावरूपधर्मैः किमपराद्धम् । द्वितीये बाधकमाह वाच्येति । वाच्यानां प्रतिपाद्यानां व्यावृत्तिरूपविशेषाणां ब्रह्मणि राहित्येऽङ्गीकृते सति तटस्थेन प्रयोजनशतेनापि ब्रह्मस्वरूपार्थकपदानां पर्यायतापरिहारादित्यर्थः । यद्वा सत्यादिपदानि किं ब्रह्मणि सत्यत्वादिधर्मानभिदधति सत्यत्वादिव्यावृत्तिप्रयोजनानि अन्यथा वा । नाद्योऽनङ्गीकारात् । नापि द्वितीय इत्याह **वाच्येति** । वाच्या ये विशेषाः सत्यत्वादयस्तद्राहित्ये ब्रह्मण्यङ्गीकृते सति

(वाक्यार्थमुक्तावली)

सत्यादिशब्दैर्ब्रह्मणि सत्यत्वादिधर्माप्रतिपादने इति यावत् । व्यावृत्तेरेव बोधयितुमशक्यत्वेन तदभिमानमुखेन पर्यायतापरिहारः । विरोध्याकारसमर्पणेन हि विरोध्याकारान्तरं व्यावर्तनीयमिति भावः । तदुक्तम् । 'न व्यावृत्या प्रयोजनम् । व्यावर्त्यस्याविशेषत्व' इति ॥ **प्रश्नेति** ॥ ब्रह्मविदाप्नोति परमिति उक्ते किं लक्षणकं ब्रह्मेति प्रश्ने सत्यं ज्ञानमित्यादिना स्वरूपमात्रोक्तौ प्रश्नानानुगुण्यादित्यर्थः । स्वरूपप्रश्ने वाऽयमिति शङ्का दृष्टान्तेनाकरोति न हीति । वाच्यत्वे हेतुत्रयम् ईक्षणीयत्वं श्रुत्युक्तत्वं श्रुतत्वं च तत्रेक्षणीयत्वानुबन्धितया गौण इत्यादिसूत्रत्रयं पञ्चमे ईक्षणीयत्वापेक्षयाल्पसंविधानसाध्यश्रुत्युक्त-हेतुसाधकस्वाप्ययोक्तिः । सप्तमे साक्षान्निर्गुणस्य वाच्यत्वसाधकहेतूक्तिरित्युपादानाल्लाघवक्रमेण सूत्रक्रमः । गतिसूत्रस्य मध्ये निवेशो कारणं तूक्तमिति । ईक्षत्यधिकरणं समाप्तम् ।

## तत्त्वसुबोधिनी

**युक्तिविरुद्धत्वादिति ।** अनेन नञो विरुद्धार्थत्वाभिप्रायेणायुक्तेरित्येतत् व्याख्यातं भवति । ननु घटादौ लक्ष्यत्वाभावोऽस्ति न वाच्यत्वाभावः । तथा च सति सपक्षे तत्राप्रवेशो हेतुरसाधारण इत्यसाधारण्यमित्याशङ्क्य सर्वपदार्थजातस्य लक्ष्यत्वात् सपक्षाभावादेव नासाधारण्यमित्याह ॥ **सर्वपदार्थानामिति ॥** तदभावेनावाच्यत्वाभावेन । उत्तरमाह ॥ **किं प्रयोजकान्तरमिति ॥** लक्ष्यत्वाभाव इति शेषः । प्रयोजकत्वप्रकारमेव वेति । लक्ष्यत्वाभाववाच्यत्वाभावयोरिति शेषः । **केवलान्वयिनीति ।** दृष्टान्ततया वा ब्रह्म वाच्यं लक्ष्यत्वादित्यभिप्रेतकेवलान्वयिनिर्वाहार्थं वोक्तमिति द्रष्टव्यम् ॥ **तदविना-भावीति ॥** साध्याभावाविनाभूताभावप्रतयोगिन एव उपाधित्वादिति भावः ॥ **व्याप्त्यनिश्चयादिति ॥** उपाधेः साध्यव्यापकत्वानिश्चयादित्यर्थः । कार्यकारणभावादेः एव व्याप्तिनिबन्धनत्वे तदभावात् द्रव्यत्व-संयोगित्वयोरपि साम्यादित्याह ॥ **द्रव्यत्वसंयोगित्वयोरिति ॥** ननु संयोगितायाः द्रव्यत्वाद्यवच्छेद्यत्व-हानिरेव विपक्षे बाधिका यदि तयोः व्याप्तिस्सा किंनिबन्धनेत्याशङ्क्य तर्हि इहापि अनवस्था विपक्षे बाधिका इत्यभिप्रेत्याह ॥ **अवाच्यस्य लक्षणायामिति ॥** ननु सत्यज्ञानादिवाक्ये लक्ष्यार्पकं ब्रह्मपदं वाचकमेव । सत्यादीनि लक्षणपदानि तु न वाचकानीति शङ्कते ॥ **लक्ष्यपरपदस्येति ॥ पर्यायतापाता-दिति ॥** तथा च सहप्रयोगो न स्यादिति भावः ॥ **प्रयोजनबाहुल्यादिति ॥** तथा च न सहप्रयोगा-नुपपत्तिरिति भावः । प्रयोजनशतेनापीत्यपिशब्देन वाच्यगतविशेषाप्रतिपादने असत्यत्वादिव्यावृत्तिरूप-प्रयोजनमपि न सम्भवतीति सूचितम् ॥ **स्वरूपमात्रकथनस्येति ॥** तस्य पूर्वमेव ज्ञातत्वात् । अन्यथा धर्मिज्ञानाभावेन प्रश्नस्यैवानुपपत्तेरिति भावः । लक्ष्यत्वे वाच्यत्वोपयोगोपपादनमुपसंहरति ॥

(तत्त्वसुबोधिनी)

**अत इति** ॥ अधिकरणार्थमुपसंहरति ॥ **तस्मादिति** ॥ अत्राद्यसूत्रे साक्षाद्ब्रह्मवाच्यत्वसाधकेक्षणीयत्वोक्तिः । द्वितीये तस्यासिद्धिशङ्कानिरासाय आत्मशब्दरूपहेतूक्तिः । तृतीये आत्मशब्दस्य गौणपरत्वनिरासाय आत्मनिष्ठस्य मोक्षोपदेशोक्तिः । चतुर्थे तत्रैव आत्मशब्दवाच्यस्य अहेयत्ववचनं हेयत्वावचनोक्तिः । पञ्चमे ब्रह्मणो वाच्यत्वसाधकश्रुत्युक्तत्वस्यासिद्धिपरिहाराय स्वाप्ययवचनोक्तिः । षष्ठे समन्वय-सूत्रगतसंशब्दार्थसमर्थनम् । सप्तमे वाच्यत्वसाधकश्रुतत्वरूपहेतूक्तिः । तस्यां इत्यन्यानुगतिसामान्यस्य श्रुतत्वात् इत्यर्थस्यापि विवक्षितत्वादिति द्रष्टव्यम् ॥ ५ ॥

## वाक्यार्थविवरणम्

**केवलान्वयीति** ॥ 'एकसाध्याविनाभावी मिथः सम्बन्धशून्ययोः । साध्याभावाविनाभावी स उपाधिर्यदत्यय' इत्युपाधिलक्षणादित्यर्थः ॥ ५ ॥

## वाक्यार्थमञ्जरी

ॐ श्रुतत्वाच्च ॐ ॥ केवलो निर्गुणश्चेति सत्वादिगुणहीनस्य श्रुतत्वात् श्रुतिप्रतिपाद्यत्वाच्च नाशब्दमित्यर्थः । स्थितिमात्रम् । आकाशवत् ॥ **श्रुतत्वाच्चेति** ॥ नन्वेतत्स्वाप्ययादित्यनेन पुनरुक्तमिति चेन्न । तत्र स्वाप्ययत्वपूर्णत्वरूपनिर्गुणधर्मप्रतिपादनद्वारा निर्गुणस्य श्रुत्युक्तत्वमभिप्रेतम् । अत एव तत्र श्रुत्युक्तत्वाच्चेत्यध्याहृतसूत्रविन्यासः प्रदर्शितः । अत्र तु साक्षादेव निर्गुणस्य श्रुतिप्रतिपाद्यत्वमभिप्रेतम् । अत एवात्र निर्गुणपदोपेतश्रुत्युदाहरणमिति ध्येयम् ।

**वेदावाच्येति** ॥ वेदगतपदवाच्येत्यर्थः । ननु घटादिपदार्थानामलक्ष्यत्वेन सपक्षत्वात्तत्रावर्तमानो हेतुरसाधारण इत्यत आह ॥ **सर्वपदार्थानामिति** ॥ प्रयोगविशेष इति शेषः । परिहरति ॥ **किं प्रयोजकान्तरमिति** ॥ लक्ष्यत्व इति शेषः । प्रयोजकत्वप्रकारं वाच्यत्वस्य । केवलान्वयिनीति । दृष्टान्तार्थं ब्रह्म वाच्यं लक्ष्यत्वादित्यभिप्रेतकेवलान्वयिनिर्वाहार्थं वा । तदेव व्यनक्ति ॥ **केवलान्वयि-नीति** ॥ **तदिति** ॥ तेन साध्याभावेनाविनाभावी व्याप्तो योऽभाव उपाधेः प्रतियोगितासम्बन्धेन तद्वत्त्वा-भावादित्यर्थः । साध्याभावव्यापकाभावप्रतियोगिन एवोपाधित्वम् । 'साध्याभावाविनाभावी स उपाधिर्यदत्ययः' इत्युक्तेः । अन्यथोपाध्यभावेन साध्याभावसाधनायोग इति भावः । व्याप्त्यनिश्चयात् साध्योपाध्योरिति शेषः ॥ **व्याप्तिरेवेति** ॥ यथा धूमस्याग्निसद्भावप्रयोजकत्वे व्याप्तिरेव नियामिका तथा वाच्यत्वस्याप्युक्तलक्ष्यत्वप्रयोजकत्वे उक्ता व्याप्तिरेव प्रयोजिकेत्यर्थः । धूमादिस्थले च कार्यकारण-

(वाक्यार्थमञ्जरी)

भावनिबन्धना । न चात्र तथेति भावः ॥ **किंनिबन्धनेति** ॥ तयोः कार्यकारणभावादिति भावः । ननु संयोगितायाः द्रव्यत्वाद्यवच्छेद्यत्वहानिरेव विपक्षे बाधिका तयोर्व्याप्तिनिबन्धनमिति चेत् । तर्हीहाप्यनवस्था विपक्षे बाधिका व्याप्तिनिबन्धनमित्यभिप्रेत्याह ॥ **अवाच्यस्येत्यादिना** ॥ **किं लक्ष्यमिति प्रश्नस्येति** ॥ सत्यज्ञानादिवाक्ये सत्यपदेन किं लक्ष्यमिति प्रश्नस्येत्यर्थः । ननु न प्रश्नस्य निरुत्तरत्वम् । तज्ज्ञापनाय लाक्षणिकसत्यपदस्यैव प्रयोगादित्यत आह ॥ **न चेति** ॥ कुत इत्यत आह ॥ **न हीति** ॥ तर्हि ज्ञानपदप्रयोगो स्त्वित्याशङ्क्याह ॥ **अथेति** ॥ न चानन्तमिति वाच्यम् । तेनापि किं लक्ष्यमिति प्रश्नापर्यवसानेनानवस्थानादिति भावः । ननु न प्रश्नोत्तरपरम्परयाऽनवस्था वक्तुं शक्या । यत्र कोटिस्मरणादिविरहेण सन्देहानुदयात्प्रश्नानुदयस्तत्र परम्पराविच्छेदादिति चेन्न । तात्पर्यानवबोधात् । तथाहि । गङ्गापदवाच्यप्रवाहसम्बन्धितया ज्ञातस्यैव तीरादेर्लक्ष्यतया दृष्टत्वाद् ब्रह्मणोऽपि लक्ष्यत्वे वाच्यसम्बन्धित्वेन तज्ज्ञानमावश्यकम् । न च तज्ज्ञानं प्रत्यक्षादिना शास्त्रयोनित्वादतः शब्देनैव तज्ज्ञानं वाच्यं सोऽपि शब्दोलक्षक एव । अतस्तत्रापि वाच्यसम्बन्धितया ब्रह्मज्ञानाय पदान्तरं प्रयोक्तव्यम् । तदपि लक्षकमेवेति परम्पराऽपर्यवसानेऽनवस्थेत्यत्र तात्पर्यात् । यथोक्तं सुधायाम् । न हि प्रश्नपरिहारक्रमनिमित्तेयमनवस्था किन्तु लक्षणायाः प्रतीतिपूर्वकत्वाच्छब्देन विना प्रत्यायकान्तराभावात् । तत्रापि लक्षणाश्रयणे मूलक्षतिरिति । ननु सत्यादिपदेषु ब्रह्मपदं वाचकम् । अतोऽत्र परम्पराविच्छेदान्नानवस्थेति शङ्कते ॥ **अथेति** ॥ **किमपराद्धमिति** ॥ अविशेषादिति भावः । विशेषं शङ्कते ॥ **लक्ष्यपरेति** ॥ ब्रह्मपदप्रतिपाद्यब्रह्मस्वरूपलक्षणमुख्यार्थबाधो नास्तीति तस्य वाचकत्वम् । सत्यादिपदानां सत्यत्वादिगुणाभिधायकत्वेन गुणानाञ्च निर्गुणे ब्रह्मण्यसम्भवान्मुख्यार्थबाधोऽस्तीति तेषां लक्ष्यकत्वमित्यर्थः । गूढाभिसन्दिराह ॥ **लक्षणपदानामपीति** ॥ सत्यादिपदानां सत्यत्वादिविशेषानर्प्य स्वरूपमात्रपरत्वे पर्यायत्वप्रसङ्गाद् ब्रह्मणि विशेषसमर्पकत्वेनैव तेषां प्रवृत्तिरङ्गीकार्या । अतो मुख्यार्थबाधकाभावाद्वाचकत्वमेवेत्यर्थः । विशेषानर्पकत्वे पर्यायत्वमित्यभिप्रायोऽत्र गूढः । अभिप्रायमविद्वान् शङ्कते ॥ **लक्षणपदानामिति** ॥ तथा च विशेषावलम्बनमप्रसिद्धमिति भावः । आशयमुद्घाटयति ॥ **पर्यायतेति** ॥ स्वरूपलक्षणैकार्थत्वात् । तथा च सहप्रयोगानुपपत्तिरिति भावः ॥ **प्रयोजनबाहुल्यादिति** ॥ सत्यपदेनासत्यव्यावृत्तिः क्रियते । ज्ञानपदेनाज्ञानव्यावृत्तिरित्यादिप्रयोजनभेदादित्यर्थः ॥ **प्रश्नानानुगुण्याच्चेति** ॥ ब्रह्मविदाप्नोति परमिति ब्रह्मज्ञानेन मोक्षेऽभिहिते किन्तद् ब्रह्मेति प्रश्ने लक्षणकथनस्यैव सङ्गतत्वादिति भावः । तर्हि स्वरूपविषय एवायं प्रश्नोऽस्त्वित्यत आह ॥ **न हीति** ॥ स्वरूपज्ञानाभावे धर्मिज्ञानाभावादिति भावः । अतः पर्यायतापत्तेः । ननु वाच्यत्वपक्षेऽप्यनवस्था । तथाहि । वाच्यत्वेऽपि

(वाक्यार्थमञ्जरी)

सत्यादिपदस्य वाच्यवाचकसम्बन्धरूपसङ्गतिज्ञानसहकृतस्यैव तत्प्रबोधकत्वं वाच्यम् । अन्यथाऽतिप्रसङ्गात् । वाच्यवाचकसम्बन्धज्ञानञ्च सम्बन्धिज्ञानं विना न जायते । सम्बन्धिनौ वाच्यवाचकावेव । वाच्यञ्च ब्रह्मैव । न च तदज्ञानं प्रत्यक्षादिनेति वाचकपदान्तरं वाच्यम् । तदपि वाच्यवाचकसम्बन्धज्ञानपूर्वकमेव बोधकमिति परम्परापर्यवसानादिति चेन्न । सत्यज्ञानादिपदानां यौगिकत्वेन वाक्यतुल्यत्वात् । वाक्ये च वाच्यवाचकसम्बन्धज्ञानानपेक्षणात् । स्पष्टश्चैतदभिमान्यधिकरणसुधायाम् ॥ ५ ॥

## विवृतिः

**युक्तिविरुद्धत्वादिति** ॥ अनेन नञो विरुद्धार्थत्वाभिप्रायेणायुक्तेरित्येतद्व्याख्यातं भवति । ननु घटादौ लक्ष्यताभावोऽस्ति न वाच्यत्वाभावः । तथा च सति सपक्षे तत्राप्रवेशे हेतुरसाधारण इत्यसाधारण्यमाशंक्य सर्वपदार्थजातस्य लक्ष्यत्वात् ।

सपक्षाभावादेव नासाधारण्यमित्याह ॥ **सर्वपदार्थानामिति** ॥ **तदभावेन** ॥ वाच्यत्वाभावेन । उत्तरमाह ॥ **किं प्रयोजकान्तरमिति** ॥ लक्ष्यत्वाभाव इति शेषः ॥ **केवलान्वयिनीति** ॥ **प्रयोजकत्वप्रकारमेव वेति** ॥ लक्ष्यत्वाभाववाच्यत्वाभावयोरिति शेषः ॥ **केवलन्वयिनीति** ॥ दृष्टान्ततया ब्रह्म वाच्यं लक्ष्यत्वादित्यभिप्रेतकेवलान्वयिनिर्वाहार्थं वोक्तमिति द्रष्टव्यम् । **तदविनाभावीति** ॥ साध्याभावाविनाभूताभावप्रतियोगिन एवोपाधित्वादिति भावः ॥ **व्याप्त्यनिश्चयादिति** ॥ साध्यव्यापकत्वानिश्चयादित्यर्थः । कार्यकारणभावादेरेव व्याप्तिनिबन्धनत्वे तदभावात् द्रव्यत्वसंयोगित्वयोः सा न स्यादित्याह ॥ **द्रव्यत्वसंयोगित्वयोरिति** ॥ ननु संयोगितायाः द्रव्यत्वावच्छेद्यत्वहानिरेव विपक्षे बाधिका तयोर्व्याप्तिनिबन्धनेत्याशङ्क्य तर्हीहाप्यनवस्था विपक्षे बाधिकेत्यभिप्रेत्याह ॥ **अवाच्यस्य लक्षणायामित्यादिना** ॥ ननु सत्यज्ञानादिवाक्ये लक्ष्यार्थकब्रह्मपदं वाचकमेव, सत्यादीनि लक्षणपदानि तु न वाचकानीति शङ्कते ॥ **लक्ष्यपरपदस्येति** ॥ **पर्यायतापातादिति** ॥ तथा च सहप्रयोगो न स्यादिति भावः ॥ **स्वरूपमात्रकथनस्येति** ॥ तस्य पूर्वमेव ज्ञातत्वात् । अन्यथा धर्मिज्ञानाभावेन प्रश्नस्यैवानुपपत्तेरिति भावः ॥ लक्ष्यत्वे वाच्यत्वोपयोगोपपादनमुपसंहरति ॥ **अत इति** ॥ अधिकरणार्थमुपसंहरति ॥ **तस्मादिति** ॥ अत्र आद्यसूत्रे साक्षाद्वाच्यत्वसाधकेक्षणीयत्वोक्तिः ॥ द्वितीये तस्यासिद्धिशङ्कानिरासाय आत्मशब्दरूपहेतूक्तिः । तृतीये आत्मशब्दस्य गौणपरत्वनिरासाय आत्मनिष्ठस्य मोक्षोपदेशोक्तिः । चतुर्थे तत्रैवात्मशब्दवाच्यस्याहेयत्ववचनं, हेयत्वावचनोक्तिः । पञ्चमे ब्रह्मणो वाच्यत्वसाधक-

(विवृतिः)

श्रुत्युक्तत्वस्यासिद्धिपरिहाराय स्वाप्ययवचनोक्तिः । षष्ठे ब्रह्मणो वाच्यत्वसाधकसमन्वयसूत्रगतसंशब्दार्थसमर्थनम् । सप्तमे वाच्यत्वसाधक श्रुतत्वरूपहेतूक्तिः ॥ तस्यान्तत्वात्, गतिसामान्यस्य श्रुतत्वादित्यर्थस्य विवक्षितत्वादिति द्रष्टव्यम् ॥

॥ इति ईक्षत्यधिकरणम् ॥

## ६. आनन्दमयाधिकरणम्

तमेव समन्वयं प्रकटयत्यानन्दमयोऽभ्यासादित्यादिना समस्तेनाध्यायेन प्रायेण । प्रायेणान्यत्र प्रसिद्धानां शब्दानां परमात्मनि समन्वयः प्रदर्श्यतेऽस्मिन् पादे । नान्यथा तद्दृष्टेः । ब्रह्मजिज्ञासा कर्तव्येत्युक्तम् । तच्च ब्रह्म 'ब्रह्म पुच्छं प्रतिष्ठा' (तै.उ. २-५-२) इत्यानन्दमयावयवरूपं प्रतीयते । न ह्यवयविनं विना अवयवमात्रस्य ज्ञेयतेत्यत आह ॥

**ॐ आनन्दमयोऽभ्यासात् ॐ ॥ १२ ॥**

आनन्दमयो ब्रह्मादिः प्रकृतिर्विष्णुर्वा । ब्रह्मशब्दाद्धिरण्यगर्भस्य प्राप्तिः शतानन्दनाम्ना च । अष्टमूर्तित्वात्सूर्ये प्रोक्तत्वाच्च रुद्रस्य । एवमन्येषामपि । 'मम योनिर्महद् ब्रह्म' इति (भ.गी.१४-३) ब्रह्मशब्दाद्बहुभावाच्च प्रकृतेः । 'बृह जातिजीवकमलासनशब्दराशिषु' इति ब्रह्मशब्दादेव सर्वजीवानाम् । अन्नमयत्वादेश्च । तथापि न त आनन्दमयशब्देनोच्यन्ते । किन्तु विष्णुरेव । 'तदेव ब्रह्म परमं कवीनाम्' (म.ना.उ. १-६) 'एतमेव ब्रह्मेत्याचक्षते' (ऐ.आ. ३-२-३-१२) ।

'ब्रह्मशब्दः परे विष्णौ नान्यत्र क्वचिदिष्यते ।
असम्पूर्णाः परे यस्मादुपचारेण वा भवेत्' ।
'ब्रह्मेति परमात्मेति भगवानिति शब्द्यते' ।
'वासुदेवात्मकं ब्रह्म मूलमन्त्रेण वा यतिः' ॥

इत्यादिषु तस्मिन्नेव प्रसिद्धब्रह्मशब्दाभ्यासात् ॥ १२ ॥

## सत्तर्कदीपावली

वृत्तवर्त्तिष्यमाणग्रन्थसङ्गतिमाह ॥ **तमेवेत्यादिना ॥** सर्ववेदसमन्वयप्रतिपादके प्रथमाध्याये तदुपर्यपि बादरायण इत्यादिषु केषुचित्सूत्रेषु तत्प्रतिपादनाभावात् । ब्रह्मण्यर्थान्तरनिरूढशब्दसमन्वयप्रतिपादके प्रथमपादे आनन्दमयादिशब्दानां केषाञ्चिदर्थान्तरानिरूढानां समन्वयप्रतिपादनात्प्रायेणेत्युक्तम् । न च स्पष्टब्रह्म-लिङ्गानामस्मिन्पादे उपरि चास्पष्टब्रह्मलिङ्गानां समन्वयोऽभिधीयत इति कथनीयम् । एतत्कथनस्या-प्रामाणिकत्वात् । एतदमृतमभयमेतद्ब्रह्मेत्यादीनाम् उपरितनपादाधिकरणोदाहृतवाक्यानामपि स्पष्टब्रह्मलिङ्गा-नामेवोपलम्भाच्चेत्याह ॥ **नान्यथेति ॥** नन्वयं निर्दिष्टश्रुतिसमन्वयो जिज्ञास्यतया प्रतिज्ञाय आनन्दमय एव तस्मिन् अभिधातव्यः न तु ब्रह्मणि तस्य ब्रह्मपुच्छं प्रतिष्ठेति आनन्दमयावयवत्वश्रवणात् कृत्स्नानन्दमयावयविनं विहाय न हि तत्पुच्छरूपं ब्रह्म जिज्ञासितुं शक्यते । आनन्दमयस्य तु कृत्स्नस्य जिज्ञासया तु पुच्छरूपं ब्रह्म जिज्ञासितं भवत्येवेत्याशङ्कायां सूत्रमवतार्य व्याचष्टे । **आनन्दमयोऽभ्यासा-दित्यादिना ।** अस्मिन्नधिकरणे विष्ण्वाख्यं ब्रह्मैवानन्दमय इति प्रतिपाद्यते । एकस्यैवावयवावयविभावाभि-प्रायेणानन्दमयपुच्छत्वश्रवणं न विरुद्धमिति वक्ष्यति । अतो विष्ण्वाख्ये ब्रह्मणि निखिलश्रुतिसमन्वय-प्रतिज्ञानानुपपन्ना तैत्तरीयके विज्ञानमय अन्योन्तरात्माऽनन्दमयो ब्रह्म भवितुमर्हति आनन्दमयमधिकृत्यास्ति ब्रह्मेति चेद्वेदेति श्रवणाद् ब्रह्मशब्दस्य हिरण्यगर्भे प्रसिद्धत्वान्मानुषाधिपादिषु शतोत्तरादिष्वन्त्यत्वेन हिरण्यगर्भस्य ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्द इति श्रूयमाणत्वात्तस्यानन्दमयत्वं सिद्ध्यति । पद्मभूश्च शतानन्द इत्यभिधानात् प्रकृतस्यानन्दमयस्य यश्चासावादित्य इत्यादित्यगतत्वेन श्रवणात् स रुद्र एव स्यात् । आदित्यस्य रुद्रमूर्त्यष्टकप्रविष्टत्वात् । रुद्रसर्गं प्रवक्ष्यामीत्यारभ्य–

> सूर्यो जलं मही वह्निर्वायुराकाशमेव च ।
> दीक्षितो ब्राह्मणः सोम इत्येतास्तनवः क्रमादित्युक्तं विष्णुपुराणे ।

एवमेव बृहस्पतिरन्यो वाऽनन्दमयः स्यात् शतोत्तरानन्दमयत्वेन श्रूयमाणत्वात् । चित्प्रकृतिर्वाऽ-नन्दमयः मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहमिति भगवता ब्रह्मशब्दस्यानन्दमयविषयत्वेन श्रुतस्यैव प्रकृतौ प्रयुक्तत्वात् सैवानन्दमयः स्यात् । सोऽकामयत बहु स्यामित्यानन्दमयस्य बहुभावश्रवणाच्च प्रकृतिरेवासौ तस्या एव महदादिरूपेण बहुभावः श्रुतिप्रमाणसिद्धः । आनन्दमयविषयत्वेन श्रुतस्य ब्रह्मशब्दस्य जीवेष्वपि विद्यमानत्वात्तेषां वाऽऽनन्दमयत्वम् । जातिजीवकमलासनशब्दराशिषु ब्रह्मशब्द इत्यभिधानात् । एष पुरुषोऽन्नरसमयः प्राणमयो मनोमय इत्यादयो हि प्राणादिसम्बन्धित्वाज्जीव एव । अतस्तत्प्रायपठितानन्दमयोऽपि प्रियमोदादिसम्बन्धिजीवः स्यात् । इदमेवानन्दमयो ब्रह्मादिरित्यादिनोक्त्वा तथापीत्यनेन प्रतिषेधति । विष्णुरेवायमानन्दमयः । विष्णुवाचिनो ब्रह्मशब्दस्य आनन्दमयेऽभ्यासात् ।

(सत्तर्कदीपावली)

असन्नेव स भवति । असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद । सन्तमेनं ततो विदुरित्यानन्दमयं प्रक्रम्य श्रूयते । न चात्र ब्रह्मशब्दादेव हिरण्यगर्भादीनामानन्दमयत्वप्राप्तिरिति वाच्यम् । मुख्ये सम्भवत्यमुख्यकल्पनाऽयोगात् विष्णावेव ब्रह्मशब्दो मुख्यो नान्यत्र मुख्य इति श्रुतिपुराणवाक्यैर्दर्शयति ॥ तदेवेत्यादिना ॥ वुद्ध्या विहितसत्पुष्पैः प्रणवेन समर्चयेत् । वासुदेवात्मकं ब्रह्मेति एतद्वचनम् ।

## तत्त्वप्रदीपिका

तमेवेत्यादिनोत्तराधिकरणजातस्य सङ्गतिं दर्शयति । समन्वयसूत्रेण यस्सामान्योक्तस्समन्वयः तमेव विशेषतः पृथक् पृथक्कथयतीति । ब्रह्मविचारे च प्रथमप्रतिज्ञाते प्रत्यधिकरणं सङ्गतिः समस्ति । जन्मादिसूत्रेण च तत्र ब्रह्मणोऽनन्तगुणत्वप्रदर्शनात्तेषां च गुणानामुत्तरसूत्रैरनुवर्ण्यमानत्वात् । शास्त्रयोनि-सूत्रेणापि तत्र तत्र शास्त्रयोनित्वप्रसाधकानामधिकरणानामस्त्येव सङ्गतिः । समस्तेनाध्यायेन समन्वयं वक्ति । प्रायेणेति देवताधिकरणादौ प्रासङ्गिकाधिकारादिविचारात्तत्र गत्यन्तराभावात् । प्रायेणान्यत्र प्रसिद्धानां शब्दानामिति च सम्बन्धः । आनन्दादिगुणवाचिनामानन्दमयादिगुणिवाचिनां च शब्दानां समन्वयसिद्ध्यर्थ-मानन्दमयाधिकरणे लिङ्गविचारादिन्द्राग्न्यादिबहुनाम्नां समन्वयसौलभ्यायोत्तरेऽन्तस्थत्वलिङ्गविचारात् । तस्मात्प्रायेणान्यत्र प्रसिद्धानां नामशब्दानां ब्रह्मणि समन्वयं वक्त्यास्मिन्पादे । ब्रह्मणि वृत्तिहेतूनां विद्यमानत्वाद्योगवृत्त्या वैदिकप्रयोगबाहुल्याद्विद्वद्रूढ्या चैवं प्रथमपादे साधितेऽप्यन्यत्र प्रसिद्धलिङ्गेभ्यः सावकाशत्वं श्रुतीनां स्यादिति लिङ्गरूपाणां द्वितीये प्रदर्श्यते । ततश्चान्यत्र प्रसिद्धत्वेन प्रतीयमानानां लिङ्गानां ब्रह्मणि समन्वयप्रदर्शनेन पूर्वोक्तौ नाम्नां रूढियोगौ बलिष्ठौ भवतः । अथाप्युभयत्र प्रसिद्धत्वेन प्रतीयमानानां नामलिङ्गानामन्यत्र वृत्तिहेतोरल्पस्यापि निरासेन रूढेश्चाङ्गसम्बन्धिन्या आभासत्वेन विष्णावेव समन्वयं वक्ति तृतीयपादे । एवं वाक्यसमन्वये सिद्धे सति अवरादिपदानां दोषादिवाचकत्वेन श्रुतिलिङ्गादिभिरन्यत्रैव प्रसिद्धानां सर्वेषामपि विष्णावेव प्रवृत्तिं प्रतिपादयति चतुर्थे पाद इति पादसङ्गतिः ।

नान्यथा तदृष्टेः । अयं भावः । न माय्युक्तप्रकारेण पादसङ्गतिर्युक्ता । द्वितीयतृतीयपादयोरु-भयोरप्यस्पष्टब्रह्मलिङ्गत्वे पादभेदाभावप्रसङ्गात् । गत्यन्तराभावाच्च । तन्नियमादृष्टेश्च । पादाभिधानादिलिङ्गेभ्यः प्रसिद्धोपदेशोपपत्त्यम्बरान्तधृत्यादिलिङ्गानां स्पष्टत्वात् । ज्योतिश्चरणाभिधानादित्यत्र पादाभिधानादिति हि पुनरुक्तिदोषनिर्भयेन मायिनाऽभिहितम् । चतुर्थपादस्य सङ्गत्यदर्शनाच्च तन्मते ।

ब्रह्मजिज्ञासा कर्तव्येत्युक्तमित्यादिनाऽधिकरणमवतारयति । यज्जिज्ञास्यत्वेन प्रतिज्ञातं तद् ब्रह्माऽनन्दमयावयवरूपं प्रतीयते तैत्तिरीयश्रुतौ । तथाहि– 'विज्ञानमयादन्योऽन्तर आत्माऽऽनन्दमयः' इत्यादिनाऽऽनन्दमयं प्रस्तुत्य श्रूयते, 'तस्य प्रियमेव शिरः, मोदो दक्षिणः पक्षः, प्रमोद उत्तरः पक्षः,

(तत्त्वप्रदीपिका)

आनन्द आत्मा, ब्रह्म पुच्छं प्रतिष्ठा' इति । न ह्यवयविनं विनाऽवयवमात्रज्ञानेन पुरुषार्थः । तस्माद्यस्यावयवो ब्रह्म स आनन्दमयो विचार्यस्स्यादित्यत आनन्दमयस्य ब्रह्मत्वं प्रथमतस्साधनीयम् । तत्साधयति ॥ **आनन्दमयोऽभ्यासात्** ॥ आनन्दमयो विषयः, स संशय्यते ब्रह्मादिः प्रकृतिर्विष्णुर्वेति । ब्रह्म आदिर्यस्य देवतासङ्घस्य रुद्रशक्तिस्कन्दसूर्यविघ्नादेः स ब्रह्मादिः । अतस्संशयाद्विचार्यते । तत्र ब्रह्मादिः प्रकृतिर्वाऽऽनन्दमय इति पूर्वः पक्षः । विष्णुरेवेति सिद्धान्तः ॥ ब्रह्मशब्दादित्यादिना पूर्वपक्षयुक्तिमाह । शतानन्दनाम्ना चाऽनन्दमयपर्यायेण तस्यैव प्रसिद्धेन हिरण्यगर्भस्याऽनन्दमयत्वप्राप्तिः । 'ते ये शतं प्रजापतेरानन्दाः, स एको ब्रह्मण आनन्द' इति सूचितेन शतानन्दनाम्ना च तस्य प्राप्तिः । 'स यश्चायं पुरुषे यश्चासावादित्य' इति सूर्ये पुरुषे चाऽनन्दमयस्य प्रोक्तत्वाद्रुद्रस्य प्राप्तिः । अत एवान्यदेवतानां च । मम योनिर्महद्ब्रह्मेति प्रकृतेरपि ब्रह्मशब्दवाच्यत्वादत्रापि ब्रह्मशब्दात्प्रकृतेः प्राप्तिः । सोऽकामयत, बहु स्यां प्रजायेयेत्यादेरानन्दमयस्य बहुभावाज्जडप्रकृतेश्च परिणममानाया बहुभावात्तस्याश्च प्राप्तिः । बृह जातिजीवकमलासनशब्दराशिष्विति धातोः ब्रह्मशब्दवाच्यत्वाज्जीवमात्रस्य प्राप्तिः । एवं प्राप्ते सिद्धान्तमारभते– तथाऽपीत्यादिना ।

> बुद्ध्याऽविहिंसन्पुष्पैर्वा प्रणवेन समर्चयेत् ।
> वासुदेवात्मकं ब्रह्म मूलमन्त्रेण वा यतिः ॥ इति व्यासस्मृतिः ।

एवमादिवाक्येषु विष्णावेव प्रसिद्धस्य ब्रह्मशब्दस्याऽनन्दमयश्रुतावभ्यासाद्विष्णौ तात्पर्यावगमादानन्दमयशब्देन विष्णुरेवोच्यते ।

## तत्त्वप्रकाशिका

अथ ब्रह्मस्वरूपनिरूपणेऽनवशेषात्किमध्यायशेषेणेत्यतस्तत्कृत्यमाह ॥ **तमेवेति** ॥ कृत्यान्तराभावेऽपि 'तत्तु समन्वयात्' इत्युक्तमेवोपक्रमाद्यन्वयात्सम्यङ्निरूपणं शास्त्रीयशब्दानां प्रतिवाक्यग्रहणेन प्रकटयत्यनेनाध्यायेन सूत्रकारः । अन्यथा प्रतिज्ञामात्रस्यासाधकत्वेनान्यदेव समन्वयादित्यपि वक्तुं शक्यत्वादिति भावः । एतदधिकरणसङ्गतिशङ्कोत्थापनाय सूत्रोदाहरणम् । चतुर्थपादे तु न समन्वय इत्येतदश्रद्धेयमिति भावेनोक्तं **समस्तेनेति** । प्रायेणेति देवताद्यधिकरणव्यावृत्तये । तर्ह्यध्यायस्यैकार्थत्वात्पादभेदः किंनिबन्धन इत्यतः समन्वयेऽप्यवान्तरभेदेनेति भावेनैतत्पादप्रतिपाद्यं दर्शयति ॥ **प्रायेणेति** ॥ शब्दास्तावच्चतुर्विधाः । अन्यत्रैव प्रसिद्धाः उभयत्र प्रसिद्धाः अन्यत्र प्रसिद्धाः तत्र प्रसिद्धाः इति । सर्वेऽपि नामलिङ्गात्मकतया प्रत्येकं द्विविधाः । तेषु तत्र प्रसिद्धानां न समन्वयो वाच्यः । तेषु अन्यत्रैव प्रसिद्धशब्दसमन्वयस्य प्रथममबुद्ध्यारोहाच्चतुर्थे तदुक्तिः । उभयत्र प्रसिद्धानामन्यत्र प्रसिद्धिपराकरणमात्रस्यान्यत्र प्रसिद्धानां तत्प्रसिद्धि-

(तत्त्वप्रकाशिका)

निराकरणपूर्वकं भगवत्परत्वप्रतिपादनादमुख्यत्वेन प्राथम्यायोगात्तृतीये तदुक्तिः । अन्यपराणां मध्ये लिङ्गात्मकानां धर्मवाचित्वान्नामात्मकेभ्यो धर्मिवाचिभ्योऽमुख्यत्वेनाप्राथम्यात्तत्समन्वयोक्तिर्द्वितीये । ततोऽन्यत्र प्रसिद्धानां नामात्मकानां शब्दानां भगवति समन्वयः प्रदर्श्यतेऽस्मिन्पाद इति भावः । अत्रान्तस्थत्वलिङ्गसमन्वयप्रतिपादनात्प्रायेणेति । अन्ये तु ब्रह्मनिष्ठतया स्पष्टलिङ्गानां प्रथमे द्वितीयतृतीययोरस्पष्टानां समन्वयः प्रतिपाद्यत इत्यन्यथा पादार्थानाचक्षते तन्निराचष्टे ॥ **नान्यथेति** ॥ एतदमृतमभयमेतद्ब्रह्मेत्युत्तराधिकरणोदाहृतवाक्येष्वपि स्पष्टब्रह्मलिङ्गानामुपलम्भेन तन्नियमादृष्टेर्नान्यथा पादार्थ इत्यर्थः । नन्वत्रान्यत्र प्रसिद्धानन्दमयनाम्नो ब्रह्मणि समन्वयसमर्थनादस्तु शास्त्राध्यायपादसङ्गतिः । तथापि आनन्दमयस्य विष्णुत्वसमर्थने का पूर्वसङ्गतिरित्यतः श्रुत्यधिकरणसङ्गती दर्शयति ॥ **ब्रह्मेति** ॥ 'अथातो ब्रह्मजिज्ञासा' इति यस्य ब्रह्मणो जिज्ञासा कर्तव्यतयोक्ता तत्र ब्रह्म तैत्तिरीयश्रुतावानन्दमयस्य पुच्छाख्यावयवरूपं प्रतीयते । 'तस्माद्वा एतस्माद्विज्ञानमयात् अन्योऽन्तर आत्माऽनन्दमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य प्रियमेव शिरः । मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः । आनन्द आत्मा । ब्रह्म पुच्छं प्रतिष्ठा ।' इति । अतः सङ्गतिसद्भावादानन्दमयस्य ब्रह्मत्वमत्र समर्थ्यत इति भावः । तेनानन्दमयेनैष विज्ञानमयो निश्छिद्रतया पूर्णः स एष आनन्दमयः पुरुषाकारं एव । तस्यानन्दमयस्य पुरुषाकारतानुसारेणायं विज्ञानमयः पुरुषाकारस्तस्मादुद्भूतः । उपकारजं प्रियम् । प्रकृष्टाप्रकृष्टविषयोत्थौ मोदप्रमोदौ । स्वरूपभूत आनन्दः । यत्वा श्रवणोत्थं प्रियम् । दर्शनोत्थो मोदः । भोगोत्थः प्रमोदः । स्वरूपभूत आनन्दः । तत्त्वत्प्रवर्तकतया च तत्तद्व्यपदेश इति । ब्रह्मणोऽवयवत्वोक्तावपि किमर्थमानन्दमयस्य विष्णुत्वसमर्थनमित्यत आह ॥ **न हीति** ॥ यद्यानन्दमयो ब्रह्मणोऽन्यस्तदा न ब्रह्मजिज्ञासा सम्भवति । अवयविन एवानन्दमयस्य जिज्ञास्यत्वप्राप्तेः । अवयविजिज्ञासां विना अवयवमात्रजिज्ञासाऽयोगात् । ब्रह्मजिज्ञासा च श्रुत्युक्ता न हातुं शक्या । अत आनन्दमयस्य विष्णोरन्यत्वे न ब्रह्मजिज्ञासा सम्भवतीति यतोऽतो ब्रह्मजिज्ञासासिद्ध्यर्थमानन्दमयोऽभ्यासादित्यानन्दमयस्य विष्णुत्वमाह सूत्रकार इति भावः । एवं सङ्गतिमुक्त्वा विषयसंशयौ दर्शयति ॥ **आनन्दमय इति** ॥

अत्राऽऽनन्दमयो विषयः । स किं ब्रह्मादिजीवसमूह उत चेतनप्रकृतिः अथाचेतना किं वा विष्णुः । 'ब्रह्माणि जीवाः' । 'मम योनिर्महद्ब्रह्म' 'पञ्चभिः पञ्चभिर्ब्रह्म' इत्यादिना जीवादिषु ब्रह्मशब्दप्रयोगः सन्देहबीजमिति भावः । तत्र सयुक्तिकं पूर्वपक्षानाह ॥ **ब्रह्मशब्दादित्यादिना** ॥ आनन्दमयमधिकृत्य 'अस्ति ब्रह्मेति चेद्वेद' इति हिरण्यगर्भनिष्ठब्रह्मशब्दश्रवणात्तस्याऽऽनन्दमयत्वं युज्यते । ब्रह्मशब्दस्यान्यत्रापि वृत्तेः कथं तेन तन्निश्चय इति चेत् आनन्दमयशब्दार्थवच्छतानन्दनाम्ना च हिरण्यगर्भे विद्यमानेन तस्य प्राप्तेः । रुद्रस्य वाऽऽनन्दमयत्वप्राप्तिः । यश्चासावादित्ये इत्यानन्दमयस्य सूर्ये प्रोक्तत्वाद्रुद्रस्य सूर्याद्यष्टप्रतिमत्वात् । तथा च विष्णुपुराणे ।

(तत्त्वप्रकाशिका)

सूर्यो जलं मही वह्निर्वायुराकाशमेव च ।
दीक्षितो ब्राह्मणः सोम इत्येतास्तनवः क्रमाद् । इति ।

एवमिन्द्रवृहस्पत्यादीनामपि सूर्याधिष्ठातृत्वादिनाऽऽनन्दमयत्वप्राप्तिः । चित्प्रकृतेर्वा आनन्दमयत्वप्राप्तिः । आनन्दमयनिष्ठब्रह्मशब्दस्य मम योनिर्महद्ब्रह्म इति चित्प्रकृतौ प्रयोगात् । कथं सावकाशब्रह्मशब्देनायं निर्णय इति चेत् । 'सोऽकामयत बहु स्याम्' इत्यानन्दमयस्य बहुभावश्रवणात् । तदभिमानित्वाच्चित्प्रकृतेः । अचित्प्रकृतेर्वाऽऽनन्दमयत्वप्राप्तिः । बहुभावादेव । तत्तद्देहगतसर्वजीवानां वाऽऽनन्दमयत्वप्राप्तिः । बृह जातिजीवक्रमलासनशब्दराशिष्विति धातोर्जीवेष्वपि ब्रह्मशब्दात् । न च वाच्यं ब्रह्मशब्दस्य साधारण्यान्न निश्चायकत्वमिति । अन्नरसमयः प्राणमय इत्युक्ताऽन्नमयादीनामन्नादिविकाराभिमानित्वेन जीवत्वात् । तत्प्रायपठितानन्दमयत्वेऽपि जीवानां प्राप्तेः । यद्यपि ब्रह्मशब्देन विष्णोरप्यस्ति प्राप्तिस्तथापि नासावानन्दमयः । विष्णोरानन्दमयावयवत्वोक्तेः । तस्य चाऽऽनन्दमयत्वे तदवयवत्वविरोधात् । तथा चाऽऽनन्दमयस्याब्रह्मत्वेन न तदवयवब्रह्मजिज्ञासा सम्भवतीत्याशयः ।

सिद्धान्तयति ॥ **तथापीति** ॥ यद्यप्येवमन्येषां प्राप्तिस्तथापीत्यर्थः । कस्तर्हीत्याशङ्क्य सङ्गत्यर्थमुदाहृतसूत्रप्रतिज्ञाभागं व्याचष्टे ॥ **किंत्विति** ॥ कुतो विष्णुरेवानन्दमय इत्यतः सौत्रं हेतुं व्याचष्टे ॥ **तदेवेति** ॥ 'असन्नेव स भवति । असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद ।' इत्यानन्दमये ब्रह्मशब्दाभ्यासाद्विष्णुरेवानन्दमयः । ब्रह्मशब्दस्य तदेव ब्रह्मेत्यादिश्रुतिस्मृतिषु विष्ण्वेकनिष्ठत्वोक्तेः । न च तत एव हिरण्यगर्भादीनां प्राप्तिः शङ्क्या । तेषामपूर्णत्वेन ब्रह्मशब्दमुख्यार्थत्वाभावस्योदाहृतश्रुत्यादिसिद्धत्वात् । मुख्यार्थत्यागेनामुख्यार्थग्रहणायोगादिति भावः ॥ १२ ॥

## गुर्वर्थदीपिका

शब्दास्तावच्चतुर्विधा इत्यत्रान्यत्र प्रसिद्धानामिन्द्रादिशब्दानां हरावपि प्रसिद्धिसद्भावे उभयत्र प्रसिद्धत्वप्रसङ्गेन हरौ प्रसिद्धिरहितत्वे सतीन्द्रादिषु प्रसिद्धिर्वक्तव्या । एवं चेयमन्यत्रैव प्रसिद्धिर्जाता । अतः कथं चतुर्थपादाद्भेदसिद्धिरिति चेत्सत्यं यद्यप्युक्तरीत्या इयमपि प्रसिद्धिरन्यत्रैव प्रसिद्धिस्तथाऽपि व्यवहर्तृलोकत एव । न त्वानन्दादिशब्दश्रवणे सत्येव हरौ किञ्चिद्बाधकवशान्निरवधिकपरमानन्दमये निरवधिकैश्वर्यादिगुणे भगवत्यपि प्रसिद्धौ शाब्दबाधकस्यादर्शनात् । लोकास्तु भगवन्महिमानमजानानास्तान् शब्दांस्तत्र प्रयुञ्जते । अत इयमन्यत्र प्रसिद्धिर्लोकत एव न तु शब्दबाधकवशात् । चतुर्थपादे तु समन्वीयमानदु:खिबद्धावरादिशब्दा दोषवाचित्वाच्छब्दश्रवणमात्रे सति निरवद्ये हरौ शाब्दबाधकादेवाप्रसिद्धाः न तु केवललोकात् । अत एवोक्तमाचार्यैः ।

(गुर्वर्थदीपिका)

'दोषशब्दास्तु विष्णवि ।
अमङ्गलत्वाच्छब्दानां राज्ञो योगादमङ्गले ।
अप्रियत्वात्तु शब्दस्य स्यात्प्रयोगनिवर्तनम्' ।

इत्यादि । 'ज्योतिरुपक्रमात्तु तथा ह्यधीयत एक' इति चतुर्थपादस्थद्वितीयाधिकरणे हरौ समन्वीयमानकर्मकाण्डस्थाशेषशब्देषु प्रधानभूतज्योतिष्टोमादिकर्मवाचकशब्दवाच्यत्वे यागं कुर्यादित्यर्थक-यजेतेति क्रियायोगेनोत्पत्तिविनाशादिदोषप्राप्तेः । 'व्रीहीन्प्रोक्षति' 'व्रीहीनवहन्यात्' 'तण्डुलान्पिनष्टि' 'पशूनालभेत भूतिकामः' 'स्वर्गकाम' इत्याद्यङ्गप्रतिपादकशब्दवाच्यत्वे चाशुद्धत्वावहननपेषणालम्भना-पूर्णत्वादिदोषाणां स्पष्टमेकवाक्यतयैव प्राप्तेस्तेऽपि शब्दा अव्यक्तादिशब्दवद्दोषशब्दा एव । एवं च हरौ श्रवणत एव बाधसहिताश्शब्दा अन्यत्रैव प्रसिद्धाः केवलं लोकतोऽन्यत्रैव प्रसिद्धास्त्वन्यत्र प्रसिद्धा इति विवेकसम्भवान्न कश्चित् क्षुद्रोपद्रवः ।

धर्मवाचित्वादित्यत्र पङ्कजादिशब्दवत्पदद्वयसमाहारेण लभ्यो योऽर्थस्तद्वचनपुरस्कारेणैव धर्मिवाचित्व-मित्यर्थः । धर्मवाचित्वादिति तु धर्मस्यैव प्राधान्यादिति ज्ञेयम् । नामात्मकेभ्यो धर्मिवाचिभ्य इत्यत्र पद्मादिपदवत्केवलं धर्मिवाचिभ्य इत्यर्थः । 'तदृष्टेः' इत्युपलक्षणम् । लिङ्गानां पूर्वमेव स्पष्टत्वे वैयर्थ्यात्सर्वाण्यपि लिङ्गानि प्रागस्पष्टानि । सौत्रव्यपदेशे सत्येव स्पष्टीक्रियन्ते । तस्मात्सूत्रगृहीत-तत्तत्प्रकरणस्थलिङ्गानां प्रागेव स्पष्टत्वात् स्पष्टत्वोक्त्या पादभेदकथनं विदुषां वामपादात्स्वस्यैव भेदप्रथनमिति द्रष्टव्यम् ।

उपकारजमित्यस्य स्वेनोपकृतैः परैः धनदानादिना यत्प्रत्युपकारः क्रियते तदभिव्यक्तमित्यर्थः । प्रकृटाप्रकृष्टविषयौ मोदप्रमोदावित्यादि । जलपानादिरूपेण क्षीरपानादिरूपेण प्रकृष्टाप्रकृष्टौ विषयौ ययोस्तौ प्रकृष्टाप्रकृष्टविषयाविति विग्रहः । 'मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यह' मिति वचनात् मम योनिरिति वाक्ये भगवद्गर्भाधानयोग्या चेतनप्रकृतिरेवोच्यते । पञ्चभिः पञ्चभिर्ब्रह्मेत्यस्य पञ्चभिः पृथिव्यादिभूतैः प्रतिशरीरं ब्रह्मपदवाच्या प्रकृतिस्तिष्ठतीत्यर्थः । अत इदं वाक्यमचेतनप्रकृतेः प्रापकमिति भावः । आनन्दमयशब्दस्यार्थोऽस्य वर्तत इत्यानन्दमयशब्दार्थवत् । तच्च तच्छतानन्दनाम चेति विग्रहः । बहुभावादेवेत्युपलक्षणम् । पञ्चभिः पञ्चभिर्ब्रह्मेति ब्रह्मशब्दाच्चेति द्रष्टव्यम् । स्वमूलभाष्यसम्पुटिकायां पृथक्सूत्रपाठाभावात् सङ्गत्यर्थमुदाहृतेत्युक्तम् । यत्र तु पृथक्सूत्रपाठोऽप्यस्ति तत्र तूदाहृतप्रतिज्ञाभागमित्येव वाक्यं द्रष्टव्यम् । यद्यपि ब्रह्मशब्दस्य तु विष्णावेव मुख्यतायाः प्रथमसूत्रे समर्थितत्वात् 'अत एव

(गुर्वर्थदीपिका)

प्राण' इति वदत एवेत्यतिदेशमात्रमप्यत्रालम् । तथाऽप्यभ्यासाख्यतात्पर्यलिङ्गस्य सत्त्वात्सुतरां निर्णय इति भावेन तस्यैव हेतोर्विवेचनम् ।

## भावबोधः

॥ ॐ आनन्दमयोऽभ्यासात् ॐ ॥ **सम्यङ्निरूपणमिति** । अनेन 'तमेव समन्वयम्' इति भाष्यगतसमन्वयशब्देनोपक्रमादिलिङ्गग्रहणेऽध्यायशेषेणोपक्रमादिप्रपञ्चनाभावात् प्रकटयतीतत्यस्यानुपपत्तेः, सुधोक्तरीत्या शक्तितात्पर्यलक्षणसम्बन्धावगमग्रहणेऽपि तथात्वात्, सम्यगन्वयः शक्तितात्पर्यावगमो येन निरूपणेन भवतीति योगेन वा हेतुभूतोपक्रमादिलिङ्गवाचकेन समन्वयपदेन लक्षणया वा तत्साध्य-निरूपणं ग्राह्यमित्युक्तं भवति । **शङ्कोत्थापनायेति** । सूत्रानुदाहरण आनन्दमयरूपविषयापरिज्ञानेऽस्य विष्णुत्वसमर्थने का पूर्वसङ्गतिरित्येवंरूपशङ्कानुदयादिति भावः ॥

इतोऽत्यभ्यधिकत्वेऽपि तुर्यपादोदितस्य तु ।
महासमन्वये तस्मिन्नाधिकारोऽखिलस्य हि ॥

ब्रह्मैवाधिकृतस्तत्र मुख्यतोऽन्ये यथाक्रमम् ।
दुर्गमत्वाच्च नैवात्र प्राथम्येनोदितोऽञ्जसा ॥

इत्यानुव्याख्यानं मनसि निधायाह– **तेष्वन्यत्रैवेति ॥** 'तत्र प्रथमतोऽन्यत्र प्रसिद्धानां समन्वयः । शब्दानां वाच्य एवात्र महामल्लेशभङ्गवत्' इत्यनुव्याख्यानानुसारेण आद्यपादत्रयक्रमे निमित्तमाह– **उभयत्र प्रसिद्धानामित्यादिना** । **नामात्मकानां शब्दानामिति** । अनेन मूले नामात्मकानामिति संयोज्यमित्युक्तं भवति । अत एव लिङ्गात्मकानामिति द्वितीयपादे वक्ष्यतीति भावः ॥ **अत्रान्तः-स्थत्वलिङ्गेति** ॥ सूत्राक्षरार्थाभिप्रायेणैवमुक्तम् । फलतस्तत्रापि नामसमन्वयसिद्ध्यङ्गीकारादिति बोद्धव्यम् ॥ **उत्तराधिकरणेति** ॥ उत्तरपादगताधिकरणेत्यर्थः । **अन्यत्र प्रसिद्धेति** ॥ 'ब्रह्मणि' इति शास्त्रेण, 'समन्वय' इति अध्यायेन, लोकतोऽन्यत्र प्रसिद्धनाम्नः' इति पादेन, चान्तर्भावलक्षणा सङ्गतिरुक्ता । तत्रापि 'लोकतः' इति चतुर्थपादीयानाम् 'अन्यत्र' इति तृतीयपादीयानाम् 'नाम्नः' इति द्वितीयपादीयानां शब्दानां निरास इति ज्ञेयम् । एवमुत्तरत्रापि ज्ञातव्यम् । **श्रुत्यधिकरणसङ्गती इति** । पूर्वाधिकरण-तदुपात्तश्रुतिभ्यामेव सङ्गतिर्वक्तव्याः, न त्वव्यवहितपूर्वाधिकरणेनैवेति नियम इति भाष्याभिप्राय इति भावः । पूर्वाधिकरणस्थ'तन्निष्ठस्य मोक्षोपदेशात्' इति सूत्रोक्तमोक्षजनकज्ञानविषयत्वस्यात्र 'नेतरोऽनु-पपत्तेः' इति परपक्षप्रतिक्षेपहेतुत्वेनोपपादानादव्यवहितपूर्वाधिकरणसङ्गतिरपि द्रष्टव्या ।

(भावबोधः)

उत्तरैः पूरिताः पूर्वे निश्छिद्रत्वेन सर्वशः ।
सर्वेऽपि पुरुषाकारा उत्तरात् पूर्वसम्भवाः ॥

इति तैत्तिरीयभाष्यं मनसि निधाय श्रुतिं व्याचष्टे– **तेनेत्यादिना** ॥ तस्य पुरुषविधतामनु एतस्य पुरुषविधत्वं किं विवक्षितमित्यत आह– **तस्मादुद्भूत इति** । शरीरिस्थानीयान्नारायणाख्यादानन्दमयाच्छरीरस्थानीयो बाह्यो वासुदेवाख्यो विज्ञानमयः प्रादुर्भूत इत्यर्थः । यथोक्तं तैत्तिरीयभाष्ये–

देहदेहिवदेवासौ पञ्चधाऽवस्थितो हरिः ।
बहिस्स्थो देहवद्विष्णुरन्तस्थो देहिवत् स्मृतः ॥ इति ॥

'परेयं प्रियनामकं' 'मोदो भोगनिमित्तकः । प्रमोदस्तद्विशेषोत्थः' 'मुन्नाम विषयोत्थं यत् प्रकृष्टविषयात् प्रमुत्' इत्यादिवचनानुसारेणाह– **उपकारजं प्रियमित्यादि** । जीववैषयिकसुखाभिप्रायेणोक्तम् । तच्छब्दवाच्यत्वादिना तज्जातीयं प्रियादिकं विष्णौ बोद्धव्यम् ॥ **स किमिति** ॥ अत्रान्नमयादिपञ्चकं किं जीवादिरुत विष्णुरिति चिन्ता । तदर्थं येऽन्नं ब्रह्मेत्याद्यन्नमयादिविषयश्लोकस्था ब्रह्मशब्दा किममुख्यवृत्त्या जीवादिविषया उत मुख्यवृत्त्या विष्णुविषया इति । तदर्थं ब्रह्मशब्दस्य मुख्यवृत्त्यङ्गीकारे बाधकमस्त्युत नास्तीति । तदर्थं 'मयट्'प्रत्यय अन्योऽन्तर आत्मा इत्यन्यान्तरशब्दाः ब्रह्म पुच्छं प्रतिष्ठा इति ब्रह्मण आनन्दमयावयवत्वोक्तिरन्नमये 'तस्येदम्' इति प्रत्यक्षनिर्देशश्चेत्येतत् किं विकारभेदाद्यर्थकमुत प्राचुर्यविशेषाद्यर्थकमिति । तदर्थं हेतुव्यपदेशभृगुवल्लीसमाख्या मन्त्रवर्णसमाख्या चेति स्वपक्षसाधकमनुपपत्तिर्भेदव्यपदेश अन्नमयादिप्राप्ते फलत्वकथनं चेति परपक्षबाधकञ्च किं सावकाशमुत निरवकाशमिति ॥ **आनन्दमयशब्दार्थवदिति** ॥ अनेन हिरण्यगर्भ आनन्दमयशब्दवाच्यः तत्समानार्थकशतानन्दशब्दवाच्यत्वादिति वा आनन्दमयशब्दो हिरण्यगर्भवाचकः तद्वाचकशतानन्दशब्दसमानार्थकत्वादिति वा मूलाभिप्राय इत्युक्तं भवति । **इन्द्रबृहस्पत्यादीनामिति** । तेषां सूर्यादुत्तमतया तन्नियामकत्वेनावस्थानं तदधिष्ठातृत्वम् । आदिपदेन साधारणो ब्रह्मशब्दो विवक्षितः ।

यद्वा आनन्दमयस्य सूर्ये प्रोक्तत्वग्रहणायाऽऽदिपदम् । अनेन 'एवमन्येषाम्' इत्येतचतुर्मुखरुद्रव्यतिरिक्तसूर्याधिष्ठातृमात्रपरम् । 'इतरेषां' सर्वजीवानामिति, पृथगुक्तेरित्युक्तं भवति । **बहुभावादेवेति** । न त्वभिमानित्वेनेत्येवशब्दार्थः । **तत्र देहगतेति** । अनेनान्नमयत्वादेश्चोक्ते हेतुर्देहाभिमानित्वेन जीवे वर्तत इत्युपपादितं भवति । 'अवयवत्वविरोधः' इति न्यायविवरणोक्तहेतुमुपपादयति– **यद्यपि ब्रह्मशब्देनेति** ॥ सूत्रानुदाहरणेन कथं तद्व्याख्यातमित्यत आह– **सङ्गत्यर्थमुदाहृतेति** ॥ सङ्गतिप्रदर्शनार्थमित्यर्थः ।

(भावबोधः)
यद्वा सङ्गत्यर्थं व्याचष्ट इत्यन्वयः । तथा च 'किन्तु विष्णुरेव' इत्यनुक्तौ साध्यधर्मांशालाभेन 'पर्वतो धूमवत्त्वात्' इत्यनयोरिव 'आनन्दमयोऽभ्यासात्' इत्यनयोरप्यसङ्गतिः स्यात् । तदुक्तौ तु वह्निमानित्युक्ते कुतः पर्वतो वह्निमानित्याकाङ्क्षायां हेतुवाक्यसङ्गतिवदत्राप्यभ्यासादित्यस्यानन्दमय इत्यनेन सङ्गत्यर्थं समन्वयसूत्रात्तदेवेत्यनुवर्त्यानन्दमय इति प्रतिज्ञाभागं व्याख्यातीत्यर्थः । एवम् 'एवम्भूतः श्रूयमाणो विष्णुरेव' इत्यादावपि द्रष्टव्यमिति भावः । भाष्य इत्यादिषु ब्रह्मशब्दाभ्यासादित्यन्वयभ्रमं वारयंस्तदर्थमाह– **असन्नेवेत्यानि** ॥ आनन्दमये ब्रह्म शब्दाभ्यासादिति । अनेन 'तस्मिन्' इत्यस्यानन्दमयपरत्वेनावर्त्याभ्यासादित्यत्राप्यन्वय इत्युक्तं भवति । 'असन्नेव' इत्यादेरध्याहारो वार्थलब्ध-त्वञ्चेति द्रष्टव्यम् । श्रुति स्मृतिषु विष्ण्वैकनिष्ठत्वोक्तेरिति । अनेन 'इत्यादिषु' इत्यस्य प्रसिद्धपदेनान्वयः प्रदर्शितो भवति । 'तस्मिन्नेव, इत्येतद्विष्णावेवेति व्याख्यातं भवति ।

ननु विज्ञानमयानन्दमययोर्ब्रह्मशब्दाभ्यासेऽपि नान्नमयादिषु त्रिषु तदभ्यासः । अतो भागासिद्धिः । तेषामपि पक्षत्वस्योत्तरत्र वक्ष्यमाणत्वादिति चेत्, अभ्यासशब्देन तदुक्तिमात्रं विवक्षितम्; न त्वेकप्रकारासकृदुक्तिरित्यभिप्रायात् । अत एवोत्तरत्र 'योऽन्नं ब्रह्मोपसते' इत्यादिब्रह्मशब्दादित्येव वक्ष्यत्याचार्यः । अत एव च तट्टीकायां तद्विषयत्वेन ब्रह्मशब्दश्रवणादित्येवोक्तम् । सुधायामप्य-नुव्याख्यानगत येऽन्नं ब्रह्म' इत्यादिरूपादिति रूपशब्दप्रयोगप्रयोजनं वदतायमेवाभिप्रायः स्पष्टीकृतः ।

## भावदीपः

॥ ॐ आनन्दमयोऽभ्यासात् ॐ ॥ **अथेति** ॥ अधिकरणपञ्चकोक्तप्रमेयानन्तरमित्यर्थः ॥ **शेषेणेति** ॥ यद्यप्येतदादिरेवाध्याय इति जिज्ञासासूत्रे व्यक्तं तथापि सुधारीत्या समन्वयसूत्र-मारभ्यायान्तर्भावोऽस्तीत्यभिप्रेत्य शेषेणेत्युक्तम् । एवकारार्थमाह ॥ **कृत्यान्तरेति** ॥ तमित्यस्यार्थ इत्युक्तमेवेति । समन्वयमित्यत्रान्वयशब्दार्थमाह ॥ **उपक्रमेति** ॥ अन्वयशब्दोऽत्र करणव्युत्पत्त्या वाक्यानां शक्तितात्पर्यविषयेण सम्बन्धरूपान्वयज्ञापकपरः । तथा चोपक्रमादिरूपादन्वयादन्वयज्ञा-पकादित्यर्थः । अन्वयज्ञापकैरुपक्रमादिभिरिति यावत् । संशब्दार्थः सम्यङ्निरूपणमिति । शक्तितात्पर्याभ्यामर्थप्रतिपादनप्रकारमित्यर्थः ॥ **प्रतिवाक्येति** ॥ इदं वाक्यं तत्स्थं पदं वैतदुपक्रमादिनैतमर्थं शक्तितात्पर्याभ्यां गोचरयतीत्येवं रूपेण प्रकटयतीत्यर्थ; । विभागेन समन्वयमित्यनुव्याख्यानसुधयोस्तु न केवलमुपक्रमादिकमन्वयशब्दार्थः किन्तु तन्निर्णीततत्परसम्बन्धोऽपीत्युक्तम् ॥ **सङ्गतिशङ्केति** ॥ तथा च वक्ष्यति स्वयमेव शङ्कोत्थापनप्रकारं तथाप्यानन्दमयस्य विष्णुत्वे का पूर्वसङ्गतिरिति ।

(भावदीपः)

सूत्रानुदाहरणे विषयाज्ञानेन शङ्काया अनुदयादिति भावः ॥ **इत्येतदिति** ॥ परोक्तमित्यर्थः । तच्चान्यत्र निरस्तमिति भावः ॥ **देवतेति** ॥ तदुपरीत्यत्र शुगस्येत्यत्र च देवतापशूद्रनययोरधिकारतदभावचिन्तनादिति भावः ॥ **एकेति** ॥ 'अर्थैकत्वादेकं पादक्रमबीजं चाह ॥ **शब्दा इति** ॥ वैदिका इति योज्यम् । तथैव सुधोक्तेः । समन्वयस्तु त्रिविधानामेवेति तावच्छब्दः ॥ **अन्यत्रैवेति** ॥ व्युत्क्रमेणायं निर्देशोऽग्रे क्रमबीजोक्तिसौकर्याय । एतेषामसाङ्कर्यं चन्द्रिकायां व्यक्तम् ॥ **तत्रेति** ॥ तत्रैवेत्यर्थः । तथैव सुधोक्तेः । तेन न पाञ्चविध्यं शङ्क्यम् । अन्यथा तत्रापीति विवक्षापत्त्योभयत्रान्तर्भावेन त्रैविध्यमेव स्यात् । **नामलिङ्गेति** ॥ तत्स्वरूपमग्रे व्यक्तम् ॥ **न तत्रेति** ॥ अन्यपरत्वशङ्काशून्यानामेव तत्र प्रसिद्धशब्देन विवक्षितत्वादिति भावः । तेन जनितोतविष्णोरित्यादौ अन्यपरत्वव्युदासाय समन्वयो वाच्य इति न शङ्क्यम् ॥ **प्रथममिति** ॥ दुर्गमत्वाच्च नैवात्र प्राथम्येनोदितोऽअसेत्युपासनापादीयानुव्याख्यानोक्तरीत्या पदवर्णस्वरादिसमन्वयरूपत्वेन वाक्यसमन्वयाभावादिति भावः । असर्वाधिकारत्वाच्चेत्युपलक्ष्यं महासमन्वये तस्मिन्नाधिकारोऽखिलस्य हीत्युक्तेः । तत्र प्रथमतोऽन्यत्र प्रसिद्धानां समन्वयः । शब्दानां वाच्य एवात्र महामल्लेशभङ्गवदित्यनुभाष्योक्तदिशोभयत्र प्रसिद्धानामप्राथम्ये बीजमाह ॥ **उभयत्रेति** ॥ **मात्रस्येति** ॥ विष्णावपि दत्तपदत्वेन तत्र वृत्तेरव्युत्पाद्यत्वादिति भावः । नामलिङ्गयोरपि तन्न्यायेनैव क्रममाह ॥ **अन्येति** ॥ **धर्मेति** ॥ लिङ्गानां यौगिकत्वान्नाम्नां रूढत्वादिति भावः । तथा च सुधोक्तदिशा नाम्नामन्यबुद्धिजनकत्वं साक्षादेव । लिङ्गानां तु व्यवधानेनेति नामसमन्वये यत्नगौरवात्प्राथम्यमिति । एतच्चोपलक्षणम् ।

तेषामन्यगतत्वे तु न स्यात्सम्यक्समन्वयः ।
इत्येवाशेषलिङ्गानां ब्रह्मण्येव समन्वयम् ।

आहेत्यनुभाष्योक्तदिशा लिङ्गैर्नामसमन्वयोक्तौ तेषां विष्ण्वेकनिष्ठतासाधकत्वाच्चेत्यपि ज्ञेयम् । एतेन यौगिकानि लिङ्गानि रूढानि नामानि योगरूढानि तूभयात्मकानीति सूचितम् । तद्विवृतं चन्द्रिकायाम् ॥ **अत्रेति** ॥ पाद इत्यर्थः । साक्षात्त्वाशयेनेदं फलितस्तत्रापि नामसमन्वयात् ॥ **स्पष्टेति** ॥ स्पष्टत्वं नाम वाक्यान्तरे ब्रह्मधर्मतया निर्णीतत्वं वा जीवादौ स्वारस्येनानुपपद्यमानत्वं वा ज्ञेयम् ॥ **उत्तरेति** ॥ द्वितीयतृतीयपादस्थेत्यर्थः । अन्तर उपपत्तेरिति द्वितीयपादस्थाधिकरणविषयवाक्ये 'य एषोऽन्तरक्षिणि पुरुषो दृश्यते । एष आत्मेति होवाच । एतदमृतमभयमेतद्ब्रह्म' इत्यत्रामृतत्वादिलिङ्गानां ब्रह्मणि स्पष्टत्वादित्यर्थः । वाक्येष्विति बहुवचनं बह्वधिकरणवाक्येषु व्यभिचारप्रदर्शनाय । तत्र विवृतं

(भावदीपः)

चन्द्रिकायाम् । एतद्वाक्योक्तिस्तु उदाहरणे समीप एव स्पष्टलिङ्गानां श्रवणादुदाहरणस्योभयसंमतत्वाद्वेति । तेन भवतामिवास्माकमपि प्रायिकत्वात्पादव्यवस्थेति कस्यचिच्चोद्यं निरस्तम् ॥ **सङ्गतिरिति** ॥ शास्त्राध्याय-पादेष्वन्तर्भाव इत्यर्थः । तदुपपादनमन्यत्र प्रसिद्धेत्यादि । तत्र ब्रह्मणीत्युक्त्या शास्त्रे, समन्वयेत्युक्त्या अध्याये, अन्यत्रेत्युक्त्या पादे, नाम्न इत्युक्त्या प्रथमपादेऽन्तर्भाव उपपादितः । समन्वयो नामोपक्रमा-द्यन्यतमप्रमाणकशक्तितात्पर्याभ्यामभिधानं वा । तादृगभिधानप्रयोजकोपक्रमाद्यन्यतमप्रमाणं वा । तस्य ब्रह्मविषये समर्थनात् विषयवाक्यसद्भावप्रतिपादनादित्यर्थः । एवमग्रेऽपि प्रतिनयं बोध्यम् । आनन्दमयनाम हीत्यनुभाष्योक्तेर्नामेत्युक्तम् । तत्वप्रदीपे तु उत्तराधिकरणेऽन्तस्थत्वमिवैतदपि लिङ्गमित्युक्तम् । एतदन्नमयादिनाम्नामुपलक्षणम् । आनन्दमयस्य मुखत उक्तिः सङ्गतिसूचनायेत्यग्रे व्यक्तम् । तस्यान्यत्र प्रसिद्धिस्तु 'अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुध्यन्ताम्' इति अब्रह्मणि प्रयोगाद्वा निर्बाधरूढ्या जीवादौ प्रसिद्धब्रह्मपदसाहित्याद्वा विकारार्थकमयट्शब्दोपेतत्वाद्वेति ज्ञेयम् ॥ **का पूर्वेति** ॥ एतेन सङ्गतिशङ्कोत्थापनायेति प्रागुक्तं विवृतम् ॥ **श्रुतीति** ॥ पूर्वेति योज्यं अत्रेत्यनुषङ्गः ॥ **यस्येति** ॥ भाष्ये यद्ब्रह्मेति योज्यमिति भावः ॥ **तैत्तिरीयेति** ॥ ब्रह्म पुच्छं प्रतिष्ठेतीति वक्ष्यमाणेतिशब्दस्येनि तैत्तिरीयश्रुताविति पूर्वेणान्वयः । एतेन भाष्ये इतिशब्दानन्तरं तैत्तिरीयश्रुताविति शेष इति इत्यत इत्यत्र इति सङ्गतिसम्भवादिति सङ्गत्यर्थोऽतःशब्द इति सूचितम् । न ह्यवयविनं विनेत्यादिवाक्यं तु फलोपपादकतया करिष्यमाणव्याख्यानदिशा सङ्गत्युपपादकमिति व्यक्तमिति भावः । अत इत्यनुवादेन सङ्गतिसम्भवादिति व्याख्यानम् । पूर्वोक्तब्रह्मजिज्ञासा न युक्ता । जिज्ञास्यत्वेनोक्तब्रह्मणोऽन्यावयवत्वेन श्रवणादवयविनं विना अवयवजिज्ञासामात्रस्यापुमर्थत्वेनायोगादिति पूर्वाक्षेपरूपसङ्गतिसम्भवादित्यर्थः । एतेन तद्विजिज्ञासस्वेति श्रुत्युक्तजिज्ञासा न युक्ता । जिज्ञास्यत्वेन भृगुवल्ल्युक्तब्रह्मणो ब्रह्मवल्ल्यां पूर्वत्रान्यावयवत्वोक्तेरिति श्रुतिसङ्गतिरप्युक्ता भवति । अथातो ब्रह्मजिज्ञासेतीति टीकायां तद्विजिज्ञासस्व तद्ब्रह्मेति श्रुतेरप्युपलक्षणात् । अत एव भाष्ये श्रुतिसूत्रसाधारण्येन ब्रह्मजिज्ञासा कर्तव्येत्युक्त-मित्येवानुवादः । विप्रकीर्णनानाशाखास्थवाक्यनिर्णायकेष्वधिकरणेषु वाचः क्रमवृत्तित्वेन क्रमे सिद्धे येन केनचित्पूर्वेणाक्षेपादिरूपैव सङ्गतिरपेक्षिता । तावतैव चिन्तायाः साफल्यसिद्धेर्न त्वव्यवहितेनैव पूर्वेणेति निर्बन्ध इति जिज्ञासाधिकरणतद्विषयवाक्याभ्यां सङ्गतिरुक्तेत्युक्तं चन्द्रिकायाम् । व्यक्ता न तत्रैवाव्यवहितपूर्वेणापि सङ्गतिः प्रत्यधिकरणमिति नेहास्माभिरुच्यते । आहेत्यस्य कर्माकाङ्क्षां सूत्रोक्त्या पूरयन्विवक्षितार्थमाह ॥ **आनन्दमयस्येति** ॥ सूत्रेऽभ्यासादित्यादिना प्रमाणोक्तेः सामर्थ्यत इत्युक्तम् । भाष्यटीकयोः श्रुतिसङ्गतिफलयोरपि लाभायैवं सङ्गत्युक्तावपि । तत्रानन्दादयो गुणाः । ईशस्यैवेति

(भावदीपः)

निर्णीताः श्रुतियुक्तिसमाश्रयादिति उपासनापादीयानुभाष्यसुधायामानन्दमयाधिकरणस्याद्यत्वे हेतुं सूचयन्ना-हेत्यवतार्य सर्वेषु हि मूर्धाभिषिक्ता आनन्दविज्ञानादयः अतो माङ्गलिक आचार्यस्तच्छब्दसमन्वयमादावा-हेत्युक्तदिशा सर्वापेक्षितानन्दप्रदोपासनाविषयपूर्णानन्दत्वरूपमहागुणस्यादौ वक्तव्यत्वाच्चेत्यपि सङ्गतिरुपलक्ष्या ।

उत्तरैः पूरिताः पूर्वे निश्छिद्रत्वेन सर्वशः ।
सर्वेऽपि पुरुषाकारा उत्तरात्पूर्वसम्भवाः ॥

इति तैत्तिरीयभाष्यदिशा श्रुत्यर्थमाह ॥ **तेनेति** ॥ **तस्माद्भूत इति** ॥ शरीरिस्थानीयादान्तरा-न्नारायणाख्यादानन्दमयकोशस्थादानन्दमयनामकाच्छरीरस्थानीयो बाह्यो वासुदेवो विज्ञानमयकोशस्थो विज्ञानमयनामकः प्रादुर्भूत इत्यर्थः ॥ **उपकारजमित्यादि** ॥ 'परेयं प्रियनामकम्' इति तैत्तिरीयभाष्योक्तेः । मोदो भोगनिमित्तक इत्याद्यैतरेयभाष्यान्तिमाध्यायोक्तेः ।

सुखं स्वरूपभूतं यदानन्द इति कथ्यते ।
मुन्नाम विषयोत्थं यत्प्रकृष्टविषयात्प्रमुत् ॥

इति षष्ठे बृहद्भाष्योक्तेरिति भावः । भाष्येऽनुक्तस्यापि समग्रवाक्यस्यात्रोक्तिस्तु स शिरः स दक्षिणः पक्ष इत्यादिभाष्योपयोगार्था ॥ **किमर्थमिति** ॥ किंनिमित्तं किम्प्रयोजनमिति वाऽर्थः ॥ **ब्रह्मणोऽन्य इति** ॥ ब्रह्मत्वे तु एकैकशोऽङ्गानि धिया विभावयेत्पादादियावद्धसितं गदाभृत इत्युक्तदिशा वा वक्ष्यमाणदिशाऽवयवावयविनोर्भेदाभावेन वा तस्य जिज्ञास्यत्वं सेत्स्यतीति भावः । ननु लोके जीवशरीरेऽप्यवयवावयविनोर्भेदो नास्त्येव समवायस्य निरासात् । सत्यम् । सर्वैरवयवैरवयविनोऽत्यन्ता-भेदेऽप्येकैकेन भेदस्यापि सत्वादिति भावः । एवं परिष्कृत्य न हीति वाक्यार्थमाह ॥ **अवयवीति** ॥ तन्मात्रज्ञानस्यापुमर्थत्वादिति भावः । अयुक्ता चेत्त्यज्यतामित्यत आह ॥ **ब्रह्मेति** ॥ न हीति वाक्यं न केवलं प्रागुक्तसङ्गत्युपपादकम् । किन्तु पूर्वपक्षे प्रागुक्तजिज्ञासाऽऽक्षेपः फलं सिद्धान्ते च तत्समाधिः फलमित्येतदधिकरणप्रयोजनोपपादकमपीति भावेन इत्यत आहेत्येतत्पूर्वं सङ्गतिपरं व्याख्यातमपि प्रकारान्तरेण व्याचष्टे ॥ **अत इति** ॥ एतेन भाष्येऽत इत्यावर्तते द्वितीयं चतुर्थ्यर्थकं तस्य तस्आद्यादिभ्य उपसङ्ख्यानमित्युक्तेः । न हीति हिशब्दो हेतौ । तथा च हि यतः अत एतस्मात्कारणात् अत एतदर्थजिज्ञासासिद्ध्यर्थमित्यर्थो दर्शितः । ज्ञेयतेत्यस्य जिज्ञास्यतेति व्याख्यानात् ॥ **सङ्गतिमिति** ॥ एतद्विचारस्य पूर्वसङ्गतत्वं पूर्वाक्षेपसमाधिरूपप्रयोजनं चोक्त्वेत्यर्थः । आनन्दमयो विषय इत्यन्नमयादेर्गुणि-

(भावदीपः)

सामान्यवाचिन उपलक्षणम् । ब्रह्मादिरिति भाष्यस्थादिपदार्थो जीवेति । प्रकृतिशब्दार्थं द्वेधाह ॥ **उतेति** ॥ **ब्रह्माणीति** ॥ 'ब्रह्माणि जीवाः सर्वेऽपि परब्रह्माणि मुक्तिगा' इति परमश्रुतौ, 'मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम्' इति गीतायाम्,

> ''पञ्चभिः पञ्चभिर्ब्रह्म चतुर्भिर्दशभिस्तथा ।
> एतच्चतुर्विंशतिकं गणं प्राधानिकं विदुः''

इति भागवते, जीवचिदचित्प्रकृतिषु यथाक्रमं ब्रह्मपदप्रयोग इत्यर्थः । विष्णौ तु तदेव ब्रह्म परमं कवीनामिति स्फुटत्वादादिपदेनोक्तिः । योनिर्भार्येति गीतातात्पर्योक्तिः ॥ **हिरण्यगर्भनिष्ठेति** ॥ अनेनान्नमयादावपि तत्प्राप्तिर्दर्शिता । सर्वत्र ब्रह्मशब्दश्रवणात् ॥ **शब्दार्थवदिति** ॥ शब्दार्थयुक्तेत्यर्थः । मयटः प्राचुर्यार्थत्वमुपेत्यैतदुक्तिः । 'ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्द' इति सूचितशतानन्दरूपतत्पर्यायशब्दवाच्यत्वात्तत्प्राप्तिरित्यर्थः ॥ **यश्चासाविति** ॥ आनन्दमयशब्दोक्तस्य यतो वाच इत्युत्तरत्रावाङ्मनसगोचरत्वेनानन्दानन्त्यं वक्तुं पूर्वत्र ब्रह्मादीनां तारतम्येन परिमितानन्दोक्तावानन्दमयस्यापि प्राप्तदेवानुप्राविशदिति सर्वत्र बहुरूपेण प्रविष्टस्य स्थानभेदकृतभेदशङ्कायां नेति वक्तुं 'स यश्चायं पुरुषे यश्चासावादित्ये स एक' इत्यस्य प्रवृत्तेरसावित्यानन्दमयपरामर्श इति भावः । एवमन्येषामित्येतद्व्यनक्ति ॥ **एवमिन्द्रेति** ॥ **सूर्येति** ॥ तेषां सूर्यादुत्तमत्वेन तन्नियामकतयावस्थानादित्यर्थः । आदिपदेन 'स एक इन्द्रस्य आनन्दः । स एको बृहस्पतेरानन्दः' इति । इदं बृहस्पत्यादिश्रुत्यादिकं ग्राह्यम् ॥ **आनन्दमयत्वेति** ॥ तस्यैव प्रकृतत्वात्स इति परामर्श इति भावः । प्रकृतेरित्यस्यार्थान्तरमाह ॥ **अचिदिति** ॥ **बहुभावेदेवेति** ॥ न त्वभिमानिद्वारेत्येवार्थः । एकस्य सर्वदेहस्थानन्दमयत्वाभावादाह ॥ **तत्तद्देहेति** ॥ एतेनाभिमानित्वेनेत्यग्रेतनमुपपादितं ध्येयम् । ब्रह्मशब्दस्य हिरण्यगर्भनिष्ठताद्योतनाय बृहजातीत्यादिसर्वांशोक्तिः । अन्नमयत्वादेश्चेत्यस्य व्यावर्त्यपूर्वमर्थमाह ॥ **न चेति** ॥ **उक्तेरिति** ॥ ब्रह्मपुच्छं प्रतिष्ठेत्यनेन । अवयवत्वविरोध इति न्यायविवरणोक्तमाह ॥ **तस्य चेति** ॥ **सङ्गत्यर्थमुदाहृतेति** ॥ इत्यत आहेत्यत्रोदाहृतेत्यर्थः । हेतोरसिद्धिनिरासायानन्दमयनिष्ठतां व्यञ्जयन् व्यवहितत्वात्प्रतिज्ञाहेत्वोरन्वयमाह ॥ **असन्नेवेति** ॥ 'तदप्येषः श्लोको भवति' इति आनन्दमयं प्रत्यदाहृते 'अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः' इति श्लोके जीवान्यत्वेन ब्रह्माभावभावज्ञानिनोस्तमोमुक्तिभाक्त्वरूपफलोक्तिपरे द्विर्ब्रह्मशब्दश्रवणेन एकप्रकारासकृदुक्तिरूपब्रह्मशब्दाभ्यासादित्यर्थः । तस्मिन्नित्यस्यार्थ आनन्दमय इति । श्लोको ब्रह्मपुच्छं प्रतिष्ठेत्युक्तपुच्छं प्रत्येवोदाहृत इति तु

(भावदीपः)

अन्नमयादीन्प्रत्युदाहृतेषु पुच्छविषयत्वाभावेन प्रायपाठविरोधादयुक्त इति भावः ॥ **श्रुतिस्मृतिष्विति ॥** भाष्ये द्वे श्रुती । तिस्रः स्मृतयः इति दर्शितम् ॥ **विष्ण्वेकेति ॥** तदेवेति श्रुतौ तच्छब्देन विष्णुपरामर्श-स्यावधारणेन तदेकनिष्ठतायाः प्रागेवोक्तत्वात् एतमेवेति श्रुतौ सावधारणब्रह्मशब्दस्य विष्णोरन्यत्र मुख्यत्वायोगेन तदेकनिष्ठतायाः शब्दविशेषादित्यत्र वक्ष्यमाणत्वात् स्मृतौ च नान्यत्रेति निषेधादिति भावः । ब्रह्मेति परमात्मेतीति भागवते । 'बुध्याऽविहिंसन् पुष्पैर्वा प्रणवेन समर्चयेत् । वासुदेवात्मकम्' इति व्यासस्मृतिः । सावधारणश्रुत्युक्तेः असम्पूर्णा इति स्मृतिशेषोक्तेश्चोपयोगं शङ्कापूर्वमाह ॥ **न च तत एवेति ॥** ब्रह्मशब्दादेवेत्यर्थः ॥ **अयोगादिति ॥** असन्नेवेति श्लोक इत्यर्थः । एतेन भाष्ये तस्मिन्नेवेत्यवधारणं विवृतं ध्येयम् ॥ १२ ॥

## अभिनवचन्द्रिका

**किमध्यायशेषेणेति ॥** ननु ब्रह्मणः शास्त्रविषयत्वात् ब्रह्मस्वरूपनिरूपणानवशेषे शास्त्रशेषवैयर्थ्यस्यै-वोचितत्वेन किं शास्त्रशेषेणेत्येव वक्तव्यम्, नतु अध्यायशेषेणेति । किं च इतः प्राक्तनानामधिकरणानाम्, अध्यायपादपीठत्वेनाऽनध्यायत्वात् किमध्यायेनेत्येव वक्तव्यम्, न त्वध्यायशेषेणेतीति चेत्, न । नैतदेवं विज्ञायते अध्यायस्य शेषः अध्याय शेष इति । किं तर्हि अध्यायरूपः शेषोऽध्यायशेष इति । ततश्च 'आनन्दमयोऽभ्यासा' दित्यारभ्य 'अनावृत्तिः शब्दादनावृत्तिः शब्दा'(४-४-२३)दित्यन्तः शास्त्रशेषः अध्यायसंज्ञक इति 'किमध्यायशेषेणे'त्येवोक्तं भवतीति नोक्तदोषः । **तत्कृत्यमाहेति ॥** अध्यायचतुष्टय-कृत्यस्य परस्परं विलक्षणत्वेन पृथगेव वक्तव्यत्वात् । उत्तराध्यायस्य कृत्यन्तु तत्र तत्रैव वक्ष्याम इति भावेन प्रथमाध्यायकृत्यं तावदाह आचार्यो भाष्यकार इत्यर्थः । अत एव उत्तराध्यायनिरूपणभाष्यस्य व्यावर्त्यशंकायाः अत्रैवोक्तत्वेन उत्तराध्यायटीकायां तामप्रदर्शयित्वा एतदध्यायप्रतिपाद्यं दर्शयतीत्येवाव-तारितम् । अन्यथा इहैव गतार्थतामाशंक्य किमध्यायेनेति तत्रापि ब्रूयादिति द्रष्टव्यम् । **कृत्यान्तरा-भावेऽपीति ॥** अनुक्तार्थनिरूपणरूपप्रयोजनान्तराभावेऽपि उपक्रमाद्यन्वयाच्छास्त्रीयशब्दानां सम्यक् निरूपणमनेनाध्यायेन कुर्वन्सूत्रकारः, अन्यपरत्वसन्देहविषयेषु वाक्येषु भगवत्परत्वसाधकोपक्रमादि-लिङ्गयोगरूपो यः समन्वयः 'तत्तु समन्वया'(ब्र.सू.१-१-४)दिति सूत्रे समन्वयशब्देनोक्तः तमेव समन्वयं भगवत्परत्वसाधकोपक्रमादिलिङ्गयोगं प्रतिवाक्यग्रहणेन दर्शयति । ततश्च अनुक्तार्थप्रतिपादनरूप-प्रयोजनान्तराभावेऽपि समन्वयप्रकटनरूपप्रयोजनसद्भावान्नाध्यायशेषस्य वैयर्थ्यमिति भावः । एतेन यदि उक्तसमन्वयनिरूपणमेव अध्यायप्रयोजनं स्यात् तर्हि आनन्दमयादिसूत्रेषु 'अभ्यासः, लिङ्ग'मित्यादिरूपेण

(अभिनवचन्द्रिका)

प्रतिवाक्यग्रहणपूर्वकं उपक्रमादिकमेव प्रदर्शनीयं स्यात्, न तु 'आनन्दमय' इत्यादिसाध्यांशप्रदर्शनमिति परास्तम् । उपक्रमादिलिङ्गानि, वाच्यवाचकभावसम्बन्धश्चेत्युभयप्रदर्शनस्य इहाभिमतत्वात् । कुतः समन्वयसूत्रोक्तं समन्वयं प्रतिवाक्यग्रहणेन प्रदर्शयतीत्यत आह– **अन्यथेति** ॥ अत्र वाक्ये 'अन्यथे'ति 'अन्यदेव समन्वयादित्यपि वक्तुं शक्यत्वा'दिति च, प्रक्षिप्तम् । ततश्चैवं टीकावाक्यपाठः – प्रतिज्ञामात्रस्य हेतूपन्यासमात्रस्य हेत्वसाधकत्वात्, प्रतिवाक्यग्रहणेनोपक्रमादिकं प्रकटयतीति पूर्वेण सम्बन्धः । अवश्यं चैतदेवं विज्ञेयम्, 'अन्यदेव समन्वयादित्यपि वक्तुंशक्यत्वात्' इत्यस्य अन्यथा प्रतिज्ञामात्रस्य असाधकत्वा'दित्यनेनान्वयाभावात् । न हि यो हि प्रतिज्ञामात्रमसाधकमिति ब्रूते स स्वयम् अर्थसाधनाय प्रतिज्ञामात्रं करोतीति सम्भवति । येनेदं अन्यदेव समन्वयादित्यपि वक्तुं शक्यत्वा-दित्येतत् पूर्वेण सङ्गतं स्यात् । सूत्रोदाहरणकृत्यमाह– **एतदधिकरणेति** ॥ एतदधिकरणमारभ्य अध्याय-पादाभ्यामन्तर्भावसङ्गतिप्रसक्तिसूचनाय सूत्रोदाहरणमित्यर्थः । अत एव प्राक् 'अध्यायपादसङ्गतिस्तु आनन्दमयाधिकरणमारभ्य गवेषणीये'त्युक्तम् । समस्तेनेति प्रायेणेति च माता वन्ध्येतिवद्व्याहतमित्याशङ्कां विषयव्यवस्थया परिहरति – **चतुर्थपादे त्वित्यादिना ॥ नहीति** ॥ यदि समस्तेनाध्यायेन समन्वयो निरूप्यते तर्हि अध्यायस्य एकार्थत्वं प्राप्तमेवेति पादभेदो न स्यात् । प्रतिपाद्यभेदायत्तत्वात् पादभेदस्येति भावः । **शब्दास्तावच्चतुर्विधा इति** ॥ सूत्रनिष्पत्तेः पुरा चतुर्विधाः शब्दा आसन्, चतुर्विधप्रतिपत्तिविषया आसन्निति यावत् । एतेन – शब्दानां स्वतः चातुर्विध्याभावात् शब्दाश्चतुर्विधा इत्ययुक्तमिति परास्तम् । स्वतः चातुर्विध्याभावेऽपि चतुर्विधप्रतिपत्तिविषयत्वेन चतुर्विधा इत्युपचारविषयत्वसम्भवात् । **अन्यत्रैव प्रसिद्धा इति** ॥ प्रबलश्रुतिलिङ्गादिभिः अन्यपरा एवेति विज्ञाताः अन्यत्रैव प्रसिद्धाः । कस्मिंश्चिद्वाक्ये विद्यमानाः अन्यपरा इत्येवं विज्ञाता उभयत्र प्रसिद्धाः । लोकव्यवहारबलेन वा, श्रुत्यादिबलेन वा, अन्यपरा एवेति विज्ञाता अन्यत्र प्रसिद्धाः । भगवद्वाचकत्वेन विज्ञाताः तत्र प्रसिद्धा इत्यर्थः । एतेन अन्यत्र प्रसिद्धानाम्, अन्यत्रैव प्रसिद्धेषु अन्यत्रापि प्रसिद्धेषु वा अन्तर्भावो भवेत् अन्यत्रेत्यस्य अन्यत्रैव अन्यत्रापीति पक्षद्वयव्यतिरेकेण विधान्तरत्वाभावात् चातुर्विध्याभिधानमयुक्तमिति परास्तम् । अन्यत्र प्रसिद्धा इत्यनेन लोकव्यवहारबलेन श्रुत्यादिबलेन वा अन्यपरा एवेति विज्ञाता इति शब्दविशेषाणां विवक्षितत्वात् । नन्वेवमपि – अन्यत्र प्रसिद्धा उभयत्र प्रसिद्धा इति विभागो नोपपद्यते । अन्यत्र प्रसिद्धानां शब्दानामपि बलवच्छ्रुतिलिङ्गादिभिः अन्यत्रैव प्रसिद्धत्वात् । कथमन्यथा आनन्दमयाद्यधि-करणपूर्वपक्षेषु ब्रह्मादिश्रुतीनां, सूर्ये प्रोक्तत्वादिलिङ्गानां चोपन्यासः । न च – ब्रह्मश्रुत्यादीनां न बलवत्वमिति वक्तुं युक्तम् । पूर्वपक्षदाढ्याभावप्रसङ्गात् । न च पूर्वपक्षिभिन्नस्य अन्यत्र प्रसिद्धत्वं

(अभिनवचन्द्रिका)

उभयत्र प्रसिद्धत्वं विवक्षितम् । पूर्वपक्षिणः श्रुत्यादिभिः प्रसिद्धत्वेऽपि नान्यत्र प्रसिद्धत्वहानिरिति वाच्यम् – अन्यत्रैव प्रसिद्धाऽव्यक्तादिशब्दानां पूर्वपक्षिभिन्नस्य पुरुषस्य श्रुत्यादिभिरन्यत्र प्रसिद्धत्वाभावेन अन्यत्रैव प्रसिद्धत्वाभावापातात् । न च 'अव्यक्तात्पुरुषः पर' इत्याद्युक्तावरत्वादिलिङ्गपर्यालोचनयैव पूर्वपक्षिभिन्नस्य ते अन्यत्र प्रसिद्धा इति तेषां अन्यत्रैव प्रसिद्धत्वमिति वाच्यम् । अवरत्वादिलिङ्गबलेन अन्यत्रैव प्रसिद्धा इति ज्ञातुः पूर्वपक्षित्वानपायात् । न हि पूर्वपक्षिणः शृङ्गमस्ति, यद्व्यतिरेकान्नायं पूर्वपक्षीति प्रतीमः । किं च यथा आनन्दमयादिशब्दा लोकतोऽन्यत्र प्रसिद्धाः, तथा चतुर्थपादव्युत्पाद्या अव्यक्तादिशब्दा अपि लोकतोऽन्यत्र प्रसिद्धाः, कथमन्यथा चतुर्थपादीयाऽव्यक्ताद्यधिकरणेषु समन्वयसूत्रमन्यत्रैव प्रसिद्धिं सन्देहबीजत्वेनाभिदध्यात् । न च लोकतोऽन्यत्रैव प्रसिद्धिः सन्देहबीजम् । अपि तु श्रुतियुक्त्यदिभिरन्यत्रैव प्रसिद्धिः सन्देहबीजमिति वाच्यम्, तस्या एव पूर्वपक्षनिश्चयत्वेन संशयहेतुत्वासम्भवात् । न च लोकप्रसिद्धेरपि संशयहेतुत्वासम्भवः – अन्यमात्रपरत्वेन लोकविज्ञानस्य श्रुत्यादिमूलत्वेन दार्ढ्याभावात् । इदं रजतमिति जानातीति भ्रान्तिज्ञस्य संशयवत् संशयहेतुत्वोपपत्तेः । एवमुभयत्र प्रसिद्धा अपि अन्यत्रैव प्रसिद्धाः । अतः परविद्याविषयो द्युभ्वाद्याश्रयो विष्णोरितर एवेति पूर्वपक्षिणाऽवधृतत्वात् । 'अन्यपरा एवे'ति अवधारणविषयत्वस्यैव अन्यत्रैव प्रसिद्धिशब्दार्थत्वात् । न हि वाक्यविशेषान्तर्गतो विष्णुपरः तदन्यवाक्यविशेषान्तर्गतोऽन्यपर इति प्रतीतिविषयत्वमात्रेण उभयत्र प्रसिद्धत्वेन भाव्यं, न भाव्यं च विषयवाक्यान्तर्गतो न विष्णुपरः किं तु तदन्यपर एवेति निश्चय-विषयत्ववशात् अन्यत्रैव प्रसिद्धत्वे नेति राज्ञामाज्ञाऽस्तीति चेत् सत्यम् । अन्यत्रोभयप्रसिद्धाः अन्यत्रैव प्रसिद्धाः, अन्यत्रैव प्रसिद्धाः अपि लोकतोऽन्यत्र प्रसिद्धा भवन्तीति । तथापि विभागो युज्यते पृथापुत्रत्वसाम्येऽपि अर्जुने पार्थत्वेन प्रसिद्धिवत् येषु लोकतः श्रुत्यादिना वाऽन्यत्र प्रसिद्धत्वेन प्रसिद्धिः, ते शब्दा अन्यत्र प्रसिद्धशब्देन सङ्गृहीताः । येषु अन्यत्रैव प्रसिद्धत्वेन प्रसिद्धिः, ते शब्दा अन्यत्रैव प्रसिद्धशब्देन सङ्गृहीता इत्यङ्गीकारात् । एवं च सति येऽन्यत्र प्रसिद्धत्वेन प्रसिद्धाः तानुपादाय प्रथमद्वितीययोः पादयोः, ये उभयत्र प्रसिद्धत्वेन प्रसिद्धाः तानुपादाय तृतीयपादस्य, ये त्वन्यत्रैव प्रसिद्धत्वेन प्रसिद्धाः तानुपादाय चतुर्थपादस्य प्रवृत्तिः । एकस्यैवेंद्रस्य शचीपतित्वेन सहस्राक्षत्वेन पुरंदरत्वेन प्रसिद्धिवत् । एकस्यैव आकाशशब्दस्य अन्यत्रोभयत्र अन्यत्रैव प्रसिद्धत्वात् 'आकाश-स्तल्लिङ्गा(१-२२)दिति प्रथमे 'आकाशोऽर्थांतरत्वादिव्यपदेशा'(३-४१)दिति तृतीये, कारणत्वेन चाकाशादि'ष्विति चतुर्थे च, समन्वयो निरूपितः । अत एव ज्योतिःशब्दस्य 'ज्योतिश्चरणाभि-धाना'(१-२६)दिति प्रथमे, 'ज्योतिर्दर्शना'(३-४०)दिति तृतीये, 'ज्योतिरुपक्रमात् तु तथा ह्यधीयत

(अभिनवचन्द्रिका)

एक' (४-१०) इति चतुर्थे च समन्वयोक्तिरुपपन्ना । **सर्वेऽपि नामलिङ्गात्मकतयेति** ॥ स्वशक्त्यार्थ-बोधका नामात्मकाः, अवयवशक्त्यार्थऽबोधका लिङ्गात्मका इत्यर्थः । इदं च लिङ्गात्मकत्वं पङ्कजादिपदेषु 'यस्मिन् द्यौ'रित्यादिवाक्येषु चाऽविशिष्टं पङ्कजादिपदानामिव, 'यस्मिन् द्यौ'रित्यादिवाक्यानामपि स्वावयवशक्त्याऽर्थबोधकत्वादिति बोध्यम् । **तेषु न तत्र प्रसिद्धानामिति** ॥ यद्वाक्यान्तर्गता भगवत्प्रसिद्धाः । तद्वाक्यं विषयवाक्यत्वेनोदाहृत्य तदन्तर्गतानां तेषां समन्वयो न वाच्य इत्यर्थः । एतेन 'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतं विरूपाक्षं शङ्करं नीललोहित'मिति वाक्यान्तर्गतब्रह्मशब्दस्य शङ्करादिश्रुतिबलेन 'अन्यपर एवायं ब्रह्मशब्द' इति प्राप्तपूर्वपक्षस्य परिहाराय समन्वेतव्यत्वात् । तत्र प्रसिद्धानां समन्वयो न वाच्य इत्ययुक्तमिति परास्तम् । एतद्वाक्यान्तर्गतपदस्य अन्यत्रैव प्रसिद्धत्वेन तत्र प्रसिद्धत्वभावात् । **अमुख्यत्वेन प्राथम्यायोगादिति** ॥ ननु उभयत्र प्रसिद्धशब्दा-नामपि अन्यत्र प्रसिद्धशब्दानामिवान्यत्र प्रसिद्धिपराकरणपूर्वकं भगवत्परत्वं समर्थनीयं, समर्थ्यते च 'द्युभ्वाद्यायतनं स्वशब्दा'(१-३-१)दित्यादौ, अन्यथा– 'नानुमानमतच्छब्दात्; प्राणभृच्चे' (ब्र.सू.१.३.२.३)त्येतावन्मात्रेण अन्यत्रप्रसिद्धिपराकरणसम्भवात्, 'द्युभ्वाद्यायतनं स्वशब्दा'दित्यस्य वैयर्थ्यं स्यात् । किं चैवं सति तृतीयपादस्य समन्वयाप्रतिपादकत्वेन समन्वयाध्याये अन्तर्भावो न स्यात् इति चेत् स्यादयं दोषः, यदि तृतीयपादे समन्वयो न व्युत्पादनीयो, न व्युत्पाद्यते चेति ब्रूमः, न चैवं किं नाम समन्वेतव्यशब्दोक्तगुणलाभाय समन्वयो न व्युत्पादनीय इति । समन्वेतव्यशब्दस्य उभयत्र प्रसिद्धित्वेन तद्वाच्यगुणस्य परमात्मनि पूर्वपक्षिणा अङ्गीकृतत्वात् । किमर्थं तर्हि समन्वय उच्यते इति चेत् समन्वेतव्यशब्दवाच्यगुणस्य अन्येषु योगनिरासायेति ब्रूमः । विष्ण्वन्यपरत्वेनाभिमत-यावद्वाक्यान्तर्गतसमन्वेतव्यशब्दस्य भगवति समन्वये भगवदन्यस्य समन्वेतव्यशब्दोक्तगुणयोगो निराकृतो भवति । **प्रमाणवैधुर्यादिति** ॥ ततश्चैवं योजना – उभयत्रप्रसिद्धशब्दानां समन्वयफलस्य अन्यत्रप्रसिद्धिपराकरणमात्रस्य, अन्यत्रप्रसिद्धशब्दसमन्वयप्रतिपादनलभ्यफलादमुख्यत्वेन प्राथम्यायोगात् तृतीयपादे तत्समन्वयोक्तिरिति । इदमुक्तं भवति – अन्यत्रप्रसिद्धशब्दस्य समन्वयोक्तेः फलद्वयं, भगवति समन्वेतव्यशब्दोक्तगुणलाभः अन्यत्र तद्योगनिरासश्चेति । उभयत्रप्रसिद्धशब्दसमन्वयस्य तु भगवति तदभिधेयगुणयोगस्य पूर्वपक्षिणा कृतत्वात् अन्यत्रतद्गुणयोगानिरास एव फलमिति । **अन्यपराणां मध्य इति** ॥ लिङ्गात्मकानामवयवशक्तिमालम्ब्य धर्मवाचिनां, स्वशक्त्या धर्मिवाचिभ्यो नामात्मकेभ्योऽ-मुख्यत्वेन तत्समन्वयोक्तिः द्वितीयपाद इत्यर्थः । एतेन लिङ्गात्मकानामपि धर्मिवाचिभ्यः अमुख्यत्व-कथनमयुक्तमिति परास्तम् । **ततोऽन्यत्रेति** ॥ स्वशक्त्यार्थप्रतिपादकत्वेन प्राधान्यात् तत्समन्वयः प्रथमपादे

(अभिनवचन्द्रिका)

प्रदर्श्यत इत्यर्थः । लोकतोऽन्यत्रप्रसिद्धानां प्रथमपादे, श्रुत्यादिभिरन्यत्रप्रसिद्धानां द्वितीयपादे समन्वयः प्रतिपाद्यत इति भावः । एतेन समन्वेतव्यशब्दानां नामात्मकत्वलिङ्गात्मकत्वभेदेन पादभेदनिरूपणमयुक्तं, नामलिङ्गात्मकत्वादिति परास्तम् । लोकतोऽन्यत्रप्रसिद्धत्वश्रुत्यादिभिरन्यत्रप्रसिद्धत्वरूपभेदस्यैव पादभेदप्रयोजकतयाऽभिमतत्वात् । नामलिङ्गात्मकत्वोक्तेः स्वरूपकथनार्थत्वात् । अत एव टीकायां 'प्रथमपादे लोकतोऽन्यत्र प्रसिद्धाऽऽनन्दमयनाम्न' इत्युक्तं, द्वितीयपादे तु लोकतोऽन्यत्र प्रसिद्धाऽऽदित्य-श्रुतिसहपठितसर्वगतत्वलिङ्गात्मकस्येत्युक्तम् । अन्यत्रप्रसिद्धानां नामात्मकानां प्रथमपादे, लिङ्गात्मकानां द्वितीयपाद इत्यादिनियमस्तु सूत्रे उदाहरणतयोपादानविषय एवेति बोध्यम् । एतेन आनन्दमयशब्द-समन्वयोक्तौ, समानन्यायत्वात् अन्यत्रप्रसिद्धनामात्मकाऽन्नमयादिशब्दसमन्वयसिद्धिवत्, समानन्याया-क्रान्तानामुभयत्र अन्यत्रैव प्रसिद्धशब्दानां समन्वयसिद्धिर्भवेदेवाऽविशेषात् । एवं च प्रथमपादे अन्यत्र-प्रसिद्धनामात्मकानां समन्वयो निरूप्यत इत्यादिपादार्थकथनमयुक्तमिति परास्तम् । **अन्ये त्विति** ॥ स्पष्टलिङ्गानां, स्पष्टलिङ्गं समन्वयज्ञापकं येषां ते स्पष्टलिङ्गाः तेषां शब्दानां ब्रह्मनिष्ठतया प्रथमे समन्वयः प्रतिपाद्यते । द्वितीयतृतीययोस्तु अस्पष्टानां – न विद्यन्ते स्पष्टानि येषां तेऽस्पष्टाः तेषां शब्दानां समन्वयः प्रतिपाद्यत इति पादार्थानाचक्षत इत्यर्थः । प्रायेणान्यत्रप्रसिद्धानामिति भाष्येण शास्त्राध्यायपादसम्भवेऽपि न श्रुत्यधिकरणसङ्गातिसूचनं सम्भवतीति भावेन शङ्कते । **नन्विति** ॥ अन्यत्रप्रसिद्धानां शब्दानां समन्वयः प्रतिपाद्यतेऽस्मिन् पादे इत्यभिधानात् अस्मिन् अधिकरणे आनन्दमय-नाम्नो ब्रह्मणि समन्वयसमर्थनात्, शास्त्राध्यायपादसङ्गतिः सूचिताऽस्तु, तथापि न कृतार्थता श्रुत्यधिकरण-सङ्गत्योरसूचनात् । एवं चानन्दमयस्य विष्णुत्वसमर्थनरूपस्य अधिकरणप्रमेयस्य पूर्वस्य सङ्गतिर्वक्तव्या । सा च केत्यतः श्रुत्यधिकरणाभ्यां सङ्गतिं दर्शयतीत्यर्थः । एतेन आकाशाद्यधिकरणोपक्रम इव अस्ति शास्त्रादिसङ्गतिरित्युक्त्या श्रुत्यधिकरणसङ्गतिं दर्शयतीति वक्तव्यं न तु 'नन्वस्तु शास्त्राध्यायपादसङ्गातिः तथापि का पूर्वसङ्गति'रिति प्रष्टव्यं, शास्त्रादिसङ्गतेरनुक्तत्वेन अर्धाङ्गीकारायोगात्, 'तथापि' इत्यस्य अनन्वयाच्चेति परास्तम् । पादप्रतिपाद्यं वदता भाष्यकृता सङ्गतेः सूचितत्वेन सर्वाः सङ्गतिः सूचितेति मन्यमानस्य शङ्कोदयसम्भवात् । यद्यपि समन्वयसूत्रेण प्रपञ्च्यप्रपञ्चकभावलक्षणसङ्गतेरुक्तत्वात् का पूर्वसङ्गतिरिति प्रश्नोऽनुपपन्नः, तथापि तस्याः सङ्गतेः सर्वाधिकरणसाधारणत्वात् असाधारणसङ्गतेरनुक्त-त्वात् प्रश्नो नानुपपन्नः । यद्यपि पादस्य शास्त्राध्यायपादसङ्गतित्वेनोपचरिता । अत एव अस्तु शास्त्राध्यायपादसङ्गतिरित्येकवचनम् । अन्यथा 'श्रुत्यधिकरणसङ्गती' इत्यत्र द्विवचननिर्देशवत् इहापि 'सङ्गतय' इति बहुवचननिर्देशं कुर्यादिति । **अतः सङ्गातिसद्भावादिति** ॥ जिज्ञासाधिकरणे प्रतिपाद्यस्य

(अभिनवचन्द्रिका)
ब्रह्मणः आनन्दमयाधिकरणप्रतिपाद्यस्य आनन्दमयस्य च अवयवावयविभावलक्षणसम्बन्धसद्भावादित्यर्थः प्रतिपाद्ययोः सम्बन्धस्यैव सङ्गतित्वादिति भावः । तेन जिज्ञासाधिकरणप्रतिपाद्यस्य ब्रह्मणः तैत्तिरीयश्रुतौ आनन्दमयपुच्छत्वश्रवणेऽपि तयोरधिकरणयोः सङ्गतिलाभः । पुच्छत्वेन प्रतीतिमात्रस्य सङ्गतिं प्रति अप्रयोजकत्वादिति परास्तम् । 'तस्य प्रियमेव शिर' इत्यादिना शिरआद्यवयवादीनाम् उपकारादिसाधन-जन्यसुखविशेषात्मकत्वमुच्यत इति प्रतीतिनिरासायाह – **तत्तत्प्रवर्तकतयेति** ॥

यद्यपि 'तत्तत्प्रवर्तकतया तत्तद्व्यपदेश' इति वाक्यं सर्वपुस्तकेषु न दृश्यते, तथापि एतद्वाक्योक्त-तत्तद्व्यपदेशगतिकथनस्य ग्राह्यत्वादिदं वाक्यं व्याख्यातम् । प्रियादिप्रवर्तकतया 'प्रियमेव शिर' इत्यादिव्यपदेश इति भावः । न ह्यवयविनं विनेति भाष्यमयुक्तं विष्णुत्वसमर्थनस्य आवश्यकत्वा-निरूपणादित्यत आह – **यद्यानन्दमय इत्यादिना ॥ तदा न ब्रह्मजिज्ञासेति ॥** भिन्नांशत्वे जीववत् सर्वोत्तमत्वेन जिज्ञास्यत्वं न स्यादिति भावः । आनन्दमयस्य ब्रह्मणोऽन्यत्वेऽपि 'तद्विजिज्ञासस्वे'ति श्रुतिविहितत्वात् ब्रह्मजिज्ञासा भवेदेवेत्यत आह– **अवयविन एवेति ॥** जिज्ञासाविधिगतस्य ब्रह्मशब्दस्य आनन्दमये लक्षणसम्भवेन आनन्दमयजिज्ञासैव विध्यर्थः स्यादिति भावः । मुख्यार्थबाधाभावाल्लक्षणा न युक्तेत्यत आह– **अवयविजिज्ञासां विनेति** ॥ अवयवस्य प्राधान्येन जिज्ञासायोगात् मुख्यार्थबाध इति भावः । अस्तु तर्हि आनन्दमयजिज्ञासैव श्रुत्यर्थः, तथा च तस्य विष्णुत्वसमर्थनं व्यर्थमित्यत आह– **ब्रह्मविज्ञासा चेति ॥** श्रुत्युक्ता ब्रह्मशब्दरूढिलभ्या ब्रह्मजिज्ञासा आनन्दमयस्य विष्णुत्वसमर्थनेन सम्भवे सति न हातुं शक्या । सर्वथा मुख्यार्थासम्भव एव लक्षणायाः स्वीकर्तव्यत्वादिति भावः । उपसंहरति– **अत इति ॥** आनन्दमयस्य अतः पुच्छरूपाद्विष्णोरन्यत्वे सति ब्रह्मजिज्ञासा न सम्भवति इति यतः अतो ब्रह्मजिज्ञासासिध्यर्थमित्यन्वयः । **अत्र आनन्दमयो विषय इति ॥** अत्र द्वे दर्शने– आनन्दमयशब्दो लिङ्गात्मक इति एकं दर्शनम्, नामात्मकमिति अपरम् । तत्राद्यं सत्तर्कदीपावलितत्व-प्रदीपकृतोर्दर्शनम् । 'ब्रह्मणि अर्थान्तरनिरूढसमन्वयप्रतिपादनात् प्रायेणेति' इति सत्तर्कदीपावल्याम्, 'आनन्दादिगुणवाचिनां आनन्दमयादिगुणिवाचिनां स्वशब्दानां समन्वयसिध्यर्थम् आनन्दमयाधिकरणे लिङ्गविचारात्, इन्द्रादिबहुनाम्नां समन्वयसौलभ्याय उत्तरत्रान्तस्थत्वलिङ्गविचारात् । तस्मात् प्रायेण अन्यत्र प्रसिद्धानां नामशब्दानां ब्रह्मणि समन्वयं वक्ति अस्मिन् पाद' इति तत्वप्रदीपे च आनन्दमय-शब्दस्य लिङ्गात्मकत्वोक्तेः । द्वितीयं तु – टीकाकृतो दर्शनम् – अत्रान्तस्थत्वलिङ्गसमन्वयप्रतिपादना-त्प्रायेणेतीति अंतस्थत्वाधिकरणस्यैव व्यावर्त्यत्वोक्तेः । अन्यथा आनन्दमयाधिकरणस्यापि व्यावर्त्यत्व-

(अभिनवचन्द्रिका)

मवक्ष्यत् । तत्राद्यमतस्य 'गुणिसामान्यवाचिनाम् । गुणवाचिनां च प्रथममाह देवः समन्वय'मित्यनुव्याख्याने आनन्दमयशब्दस्य धर्मविशिष्टधर्मिवाचकत्वोक्तिर्मूलम् । द्वितीयमतस्य तु – 'आनन्दमयरूपे तु ब्रह्मणः पुच्छतोक्तितः । समस्ताब्रह्मताप्राप्तेरानन्दमयनाम ही'त्यनुव्याख्याने नामत्वोक्तिर्मूलम् । न च परस्परविरोधादन्यतरस्याऽप्रामाण्यं वाच्यम् – आनन्दमयशब्दस्य योगरूढत्वेन मतद्वयोक्तनामात्मकत्वलिङ्गात्मकत्वयोर्भावात् । पूर्वमते नामात्मकत्वस्याऽनिषेधात्, द्वितीयमते च लिङ्गात्मकत्वस्याऽनिषेधात् । कथं तर्हि टीकायां अन्तःस्थत्वाधिकरणस्यैव प्रायशब्दव्यावर्त्यत्वोक्तिरिति चेत्, तस्य केवललिङ्गात्मकत्वेन पादेऽन्तर्भावो नेति सूचनायेति ब्रूमः । कथं तर्हि तत्वप्रदीपे आनन्दमयाधिकरणस्य प्रायशब्दव्यावर्त्यत्वोक्तिरिति चेत्, आकाशाद्यधिकरणेष्विव आनन्दमयाधिकरणे केवलनामात्मकसमन्वयो नेति सूचनार्थमिति ब्रूमः । **किं वा विष्णुरिति** ॥ 'इति सन्देह' इति शेषः । हिरण्यगर्भनिष्ठब्रह्मशब्दस्य आनन्दमये श्रवणात् आनन्दमयशब्दपर्यायस्य शतानन्दशब्दस्य हिरण्यगर्भे श्रवणात् तयोरैक्यमिति गूढाभिसन्धिः । पूर्वपक्षमाह– **आनन्दमय इति** ॥ ब्रह्मशब्द एवाऽऽनन्दमयस्य हिरण्यगर्भत्वसाधनायोपन्यस्त इति मन्यमानः शङ्कते – **ब्रह्मशब्दस्येति** ॥ भवेद्ब्रह्मशब्द आनन्दमयस्य हिरण्यगर्भत्वसाधकः यदि तन्मात्रनिष्ठः स्यात्, न चैवमिति भावः । 'इति चेत्' इत्यनन्तरं नेति शेषो बोध्यः । पूर्वपक्षी स्वाऽभिसन्धिमुद्घाटयति । **आनन्दमयशब्दार्थवदिति** ॥ नाऽस्माभिर्ब्रह्मशब्दमात्रेण हिरण्यगर्भत्वं साधितं येनोक्तदोषः स्यात्, किं तु परस्परनामसाङ्कर्येण तयोरैक्यमिति साधयाम इति भावः । एतेन शतानन्दनाम्नः पक्षधर्मताभावात् ब्रह्मशब्दस्य जीवादावपि सत्त्वात् व्याप्त्यभावेनहिरण्यगर्भत्वसाधनाय तयोरुपन्यासोऽनुपपन्न इति परास्तम् । आनन्दमय हिरण्यगर्भयोरभेदसाधनाय नामसाङ्कर्यस्य हेतुत्वेनेहाभिमतत्वात् । ययोर्नामसाङ्कर्यमसति बाधके तयोरभेद इति व्याप्तिसद्भावात् । नासत्यदस्रयोर्नामसाङ्कर्येऽपि बाधकवशात् नाभेद इति भावः । **सूर्ये प्रोक्तत्वादिति** ॥ सूर्यान्तर्गतत्वादित्यर्थः । अप्रयोजकताशङ्कापरिहाराय तस्य रुद्रलिङ्गत्वमाह – **रुद्रस्येति** ॥ सूर्यान्तर्गतत्वं न रुद्रस्य, नापि बृहस्पतेः, किं तु इन्द्रस्यैवेति मन्यन्ते । अपरे बृहस्पतेरेव न रुद्रेन्द्रयोः । अन्ये तु – अन्यस्यैव न रुद्रेन्द्रबृहस्पत्यादीनां मन्यन्ते । तेषां पूर्वपक्षमाह । ययोरिति ॥ एतेन सूर्यान्तर्गतत्वस्य रुद्रादिसाधारण्ये रुद्र एव आनन्दमय इत्याद्यवधारणार्थं हेतुतया तस्योपादानमयुक्तमिति परास्तम् । तस्य रुद्राद्यसाधारण्यं मन्यमानैर्हेतुतया उपादानस्योचितत्वात् । आनन्दमयः चित्प्रकृतिर्भवितुमर्हति, ब्रह्मशब्दविषयत्वेन बाधकाभावात् जगदुपादानत्वेन साधकसद्भावादिति गूढाभिसन्धिः । पूर्वपक्षमाह– **चित्प्रकृतिर्वेति** ॥ ब्रह्मशब्दस्य चित्प्रकृतिरूपसाध्यसामानाधिकरण्यज्ञापनायाह– **आनन्दमयनिष्ठेति** ॥ एतेन आनन्दमयस्य चित्प्रकृतित्वसाधनाय तत्रैव

(अभिनवचन्द्रिका)

हेतोर्वक्तव्यत्वेनाचित्प्रकृतेर्हेतुविधानमयुक्तमिति परास्तम् । ब्रह्मशब्दो हेतुत्वेनोक्त इति मन्यमानः शङ्कते– **कथमिति** ॥ इति चेत् इत्यनन्तरं'ने'ति शेषः । पूर्वपक्षी स्वाऽभिसन्धिमुद्घाटयति **सोऽकामयत इति** ॥ ब्रह्मशब्दविषयत्वं बाधकाभावप्रदर्शनायोपन्यस्तम् । बहुभाव एव हेतुवेन उपन्यस्त इति भावः । साध्यसहचाराभावात् व्याप्यत्वासिद्धो हेतुरित्यत आह – **तदभिमानत्वादिति** ॥ मुख्योपादानत्वस्य साध्यसहचाराभावेऽपि 'सोऽकामयते'ति श्रुत्युक्तकामनोपपत्तये हेतुत्वेनाभिमतस्यौपचारिकोपादानत्वस्य साध्यसहचारित्वात् न व्याप्यत्वासिद्धिरिति भावः । **बहुभावादेवेति** ॥ 'बहुस्या'मिति वाक्ये मुख्य एव बहुभावो विवक्षितः । कामनाया अभिमानिद्वारा सम्भवात् । ततश्च अचित्प्रकृतित्वसाधन-मेवोचितमिति भावः । आनन्दमया जीवाः । जीवात्मकाऽन्नमयादिप्रायपठितत्वात् इति मन्यमानस्य पूर्वपक्षमाह– **तत्तद्देहगतेति** ॥ नानन्दमया जीवत्वेन अभ्युपगन्तुं युक्ताः ब्रह्मशब्दाविषयत्वादित्यत आह – **वृहजातीति** ॥ तस्य जीवेऽपि सद्भावात् न ब्रह्मशब्दविषयत्वं बाधकमिति भावः । ब्रह्मशब्द एव हेतुत्वेनोक्त इति मन्यमानस्य शङ्कामनूद्य निषेधति – **न च वाच्यमिति** ॥ स्वाभिप्रेतं हेतुमाविष्करोति **अन्नरसमय इति** ॥ सर्वपूर्वपक्षसाधारणम् अवधारणव्यावर्त्यमाह– **यद्यपीत्यादिना** ॥ तत्तद्देवतालिङ्ग-सद्भावात् यथा तत्तद्देवानां प्राप्तिः, एवं मुख्यतो विष्णुवाचकब्रह्मशब्दसद्भावात् विष्णोरप्यस्ति प्राप्तिरित्यर्थः । ननु आनन्दमयेति प्रतिज्ञाभागो विष्णुरेवेति व्याख्यातव्यः, किन्त्विति व्यर्थमित्या-शङ्कायामाह– **कस्तर्हीति** ॥ 'न ते आनन्दमयशब्देनोच्यन्त' इत्यनन्तरं हेतोरेवाऽऽकाङ्क्षितत्वेत विष्णुरेवेत्यस्याऽनाकाङ्क्षितत्वादवक्तव्यत्वं स्यादिति न त आनन्दमयशब्देनोच्यन्त इति उक्त्यनन्तरं विष्णुरेवेत्युक्तेः सङ्गत्यर्थं किंचिदनेनाकाङ्क्षामुत्पाद्य सूत्रप्रतिज्ञाभागं व्याचष्ट इत्यर्थः । ब्रह्मशब्दाभ्यासं दर्शयति– असन्नेवेति ॥ अत्र सूत्र आनन्दमयशब्दस्य उदाहरणमात्रत्वात् । अन्नमयादिषु यद्विष्णुत्वसाधकं प्रसिद्धं तदेव हेतुत्वेन ग्राह्यम् । एवं च आनन्दमयेऽभ्यासो हेतुः, अन्नमयादिषु ब्रह्मशब्द एव हेतुरिति बोध्यम् । एतेन आनन्दमये विज्ञानमये च अभ्याससद्भावेऽपि, अन्नमयदिषु अभ्यासाभावात् भागासिद्धोहेतुरिति परास्तम् ॥

'येऽन्नं ब्रह्मे'त्यादिरूपादभ्यासात्तैतरीयके ।
अन्यासु चैतद्रूपासु शाखास्वपि सहस्रशः ।
आनन्दमय इत्याद्यैः शब्दैर्वाच्यो हरिः स्वयम् ।'

इत्यनुव्याख्यानस्य तैत्तरीयके विद्यमानात् । 'येऽन्नं ब्रह्मोपासते, ये प्राणं ब्रह्मोपासते, आनन्दं

(अभिनवचन्द्रिका)

ब्रह्मणो विद्वान्, विज्ञानं ब्रह्मेति चेत् वेद, विज्ञानं देवाः सर्वे ब्रह्म ज्येष्ठमुपासते, असत् ब्रह्मेति वेद चेत्, अस्ति ब्रह्मेति चेद्वेदे'(तै.उ.२.)त्यादिब्रह्मशब्दाभ्यासात्, उपलक्षणतया सूत्रगृहीता ब्रह्मशब्दादयश्च एतद्रूपासु सहस्रशाखासु 'आनन्दमयः विज्ञानमयः' इत्याद्यैः शब्दैर्हरिः स्वयं वाच्य इत्यर्थः। ब्रह्मशब्दस्य चाभ्यासात् पञ्चरूपादिषु स्फुटमिति अनुव्याख्यानस्यापि अन्नमयादिपञ्चरूपेषु अन्नादिषु मध्ये आनन्दमयवत् विज्ञानमयेऽभ्यासात् सूत्रस्थाऽऽनन्दमयशब्दोऽन्नमयादीनाम् उपलक्षको बोध्यः। अन्यथा – अन्नमयादीनामब्रह्मत्वप्राप्त्या तदन्तर्गतविज्ञानमये व्यभिचरितो ब्रह्मशब्दस्याभ्यासः कथमानन्दमयस्य ब्रह्मत्वं साधयेदित्येवाऽऽशयः। न त्वन्नमयादिषु सर्वत्र ब्रह्मशब्दाभ्यासोऽस्तीत्याशयः। अन्नमयादिषु सकृदेव ब्रह्मशब्दश्रवणेनाभ्यासस्याऽभावात्। न वा सूत्रकृता ब्रह्मशब्द एव हेतुत्वेनोक्तोऽभ्यास इत्याशयः। आनन्दमयशब्दस्योपलक्षकत्वसिद्धौ अन्नमयादिषु असिद्धिपरिहाराय ब्रह्मशब्दो हेतुत्वेन विवक्षित इत्यर्थसिद्धिः। ब्रह्मशब्दमात्रस्य हेतुत्वसिद्धौ च व्यभिचारप्रसङ्गेनाऽसाधकत्वापत्त्या तत्परिहारायाऽऽनन्दमयशब्दस्योपलक्षकत्वसिद्धिरिति अन्योन्याश्रयप्रसङ्गात्। ननु 'आनन्दमयोऽभ्यासात्' इत्यत्राऽभ्यासस्य हेतुत्वं सूत्रकृता विविक्षितमित्ययुक्तम्। सुधाविरुद्धत्वात्। तथा हि 'एकविषया-सकृदुक्तिर्मुख्योऽभ्यासः। न चैवमत्रास्ति। किंतु – असकृदुक्तिमात्रमिति विज्ञापयितुं 'इत्यादे'रित्यनुक्त्वा इत्यादिरूपा'दित्युक्तम्। अन्नमयादिविषयत्वेन ब्रह्मशब्दस्य श्रुतत्वादित्युक्तं भवतीति ब्रह्मशब्दस्य हेतुत्वाभिधानादिति चेत्, स्यादयं दोषः यदि ब्रह्मशब्दाभ्यासो न हेतुरिति सुधाशयः स्यात्, न चैवं, किंनाम ब्रह्मशब्दाभ्यासः ब्रह्मशब्दश्च हेतुरित्याशयः। तत्राऽऽद्यः सूत्रे कण्ठोक्तः। द्वितीयस्तु उपलक्षण-तया सूचित इति विवेकः। ततश्च एवं सुधावाक्ययोजना – नन्वनुव्याख्याने 'येऽन्नं ब्रह्मे'त्यादिरूपा-दभ्यासादित्युक्तं येऽन्नं ब्रह्मेत्यादेः सकृदुक्तत्वेन अभ्यासत्वाभावादित्यत आह– **एकविषयाऽसकृदुक्ति-रिति**। एकविषयाऽसकृदुक्तिः सौत्राऽभ्यासपदस्य मुख्योऽर्थः। न चैवंरूपोऽभ्यासोऽन्नमयादिषु सर्वत्रास्ति, किंतु अन्नमयादिपञ्चविषयेषु मिलित्वा बहुवारमुक्तिरस्तीति न सौत्रहेतोरसिद्धिः शङ्कनीयेति सूत्रकृता ब्रह्मशब्दोऽभ्यासश्चेति हेतुद्वयं विवक्षितम्। अन्नमयादिषु आनन्दमयविज्ञानमययोरिव ब्रह्मशब्दाभ्यासरूपहेत्वभावेऽपि उपलक्षणतयोक्तब्रह्मशब्दरूपहेतुसद्भावात् नासिद्धिरिति ज्ञापयितुं इत्यादेरित्यनुक्त्वा इत्यादिरूपादित्युक्तमिति भावः। 'येऽन्नं ब्रह्मे' त्यनुव्याख्याने अभ्यासादित्युक्ते-र्भावमाह– **अन्नमयादिविषयत्वेनेति**॥ उदाहरणत्वेन सूत्रोपात्तादभ्यासपदात्सूचितो ब्रह्मशब्दरूपो हेतुः अत्र अनुव्याख्याने अभ्यासपदेनोक्त इति भावः। ननु आनन्दमयशब्दस्य अन्नमयादिशब्दोदाहरण-त्वाभिधानमयुक्तम्। अनुव्याख्यानसुधाविरुद्धत्वात्। 'उपलक्षणत्वं शब्दानामानन्दमयपूर्विणाम'

(अभिनवचन्द्रिका)

इत्यनुव्याख्याने आनन्दमयशब्दस्य अन्नमयादिशब्दोपलक्षकत्वोक्तेः । 'अजहल्लक्षणा चैषा तेनाऽऽनन्दमयस्य त्यागो न मन्तव्य' इति सुधायामुक्तत्वादिति चेत् स्यादयं दोषः, यदि आनन्दमयशब्द अन्नमयादिशब्दोपलक्षकत्वमिति सुधानुव्याख्यानयोराशयोऽर्थः । 'अजहल्लक्षणा चैषे'ति सुधावाक्यस्य सूत्रकारीयाऽऽनन्दमयशब्दोच्चारणस्य एषा अन्नमयादिशब्दोदाहरणे च, अजल्लक्षणा तुल्या, यथा छत्रिणः समायान्तीत्यत्र छत्रिशब्दस्य शक्यतत्सम्बंध्युभयग्राहकत्वं, एवं आनन्दमयशब्दोच्चारणस्य उच्चार्यमाणानन्दमयशब्दस्य तत्समानन्यायाऽन्नमयशब्दस्य च ग्राहकत्वं, न तु 'सभाराजाऽमनुष्यपूर्वे(पा.सू.२.४.२३')त्यत्र राजशब्दोच्चारणस्येव पर्यायमात्रस्य ग्राहकत्वमित्याशयो बोध्यः । एतेन उच्चारणस्योच्चार्यमाणशब्दस्य परित्यागेन समानन्यायशब्दग्राहकत्वस्य क्वाप्यदर्शनात् अजहल्लक्षणातुल्यत्वाभिधानमयुक्तमिति परास्तम् । उच्चारणेऽपि उच्चार्यमाणशब्दपरित्यागस्य सभाराजेत्यादौ दर्शनात् । इदमत्र तत्वम् 'आनन्दमयोऽभ्यासा'दित्यादिसूत्रे सूत्रकारीयमानन्दमयादिशब्दोच्चारणं न समन्वेतव्यशब्दानां परिगणनाय । अनन्तशाखानिर्णयाभावप्रसङ्गात् । किंतु समन्वेतव्यशब्दानामुच्चारणमात्रम् । एवं सति 'अग्नये त्वा जुष्टं निर्वपामी'त्यत्र अग्निपदस्थाने सूर्यपदोहवत् आनन्दमयोऽभ्यासादित्यादिसूत्रेषु समन्वेतव्यशब्दस्थाने समानन्यायानामन्नमयादिशब्दानमूहः कार्यः । ततश्चैवं सूत्रपाठो भवति– 'आनन्दमयोऽभ्यासात्, अन्नमयो ब्रह्मशब्दात्, विज्ञानमयोऽभ्यासा'दित्यादि । अत एव सुधायां – 'यद्यत्र आनन्दमयशब्दः स्वमात्रस्य ग्राहकः स्यात्, न चैवं किं त्वत्रानन्दमयशब्दस्य समानन्यायानामन्नमयादिशब्दानामुपलक्षकत्व'मित्युक्तम् । न हि आनन्दमयशब्दोच्चारणमन्नमयादिशब्दानामपि अस्मिन् सूत्रे उच्चार्यत्वमिति ज्ञापनार्थमित्यभिप्रायाभावे आनन्दमयशब्दः स्वमात्रस्य ग्राहकः स्यादि'ति सुधावाक्यं युज्यते । आनन्दमयशब्दस्यार्थवाचित्वेन शब्दपदार्थकत्वाभावात् । कथमन्यथा 'तत्त्वि'त्यनेन आनन्दमयशब्दस्य सम्बन्धः स्यात् । तस्मात् आनन्दमयशब्दोच्चारणस्य अन्नमयादिशब्दग्राहकत्वमिति सुधाशयो बोध्यः । एवमन्यान्यपि सुधावाक्यानि योज्यानि । अवश्यं चैतदेवं विज्ञेयम् 'आनन्दमयो विष्णुरभ्यासात्, अन्नमयो विष्णुर्ब्रह्मशब्दात्' इत्यादियोजनासम्भवात् । आनन्दमयशब्दस्याऽन्नमयादिशब्दोपलक्षकत्वाङ्गीकारे तु आनन्दमयशब्दस्य अजहल्लक्षणया आनन्दमयरूपार्थान्नमयादिशब्दोभयपरत्त्वापत्त्या पदतात्पर्यविषयस्य वाक्यार्थसमन्वयनियमेनानन्दमयरूपोऽर्थः, अन्नमयादिशब्दा विष्णुरेवेति वाक्यार्थः स्यात्, न चासौ युक्तः, 'ब्रह्मणोऽन्नमयादिशब्दरूपत्वाभावात् । वाक्यविशेषग्रहणस्य पूर्वपक्षविशेषोपादानस्य सिद्धान्तप्रमाणविशेषस्वीकारस्य च उदाहरणार्थत्वादिति सुधायामुक्तत्वाच्चेति' ब्रह्मशब्दाभ्यासब्रह्मशब्दयोरन्नमयादिषु श्रवणेऽपि कुतोऽन्नमयादयो विष्णुत्वेन प्रतिपत्तव्या इत्यत आह टीकायाम् – ब्रह्मशब्दस्येति ॥

(अभिनवचन्द्रिका)

भाष्ये 'तदेव ब्रह्म परमं कवीना'मित्यादिश्रुतिरस्मृत्युदाहरणं यथा 'किंतु विष्णुरेवे'ति प्रतिज्ञातार्थ-सिध्युपयोगि तथैव 'न ते आनन्दमयशब्देनोच्यन्त' इति प्रतिज्ञातार्थसिद्धेरप्युपयोगीति भावेन 'तथापि न त आनन्दमयशब्देनोच्यन्त' इति वाक्यम् अर्थतोऽनुवदति – **न च तत एवेति** ॥ तत एव तथापि हिरण्यगर्भादीनां प्राप्तिः आनन्दमयशब्दवाच्यत्वप्राप्तिर्नाशङ्क्येत्यर्थः । एतेन हिरण्यगर्भादीनां प्राप्तिमाशङ्क्य तथापि न ते आनन्दमयशब्देनोच्यन्त इति भाष्ये निषिद्धत्वेन च 'तत एवे'त्यनेन पुनराशङ्क्य निराकरणमनुपपन्नमिति परास्तम् । अस्य ग्रन्थस्य 'न ते आनन्दमयाशब्देनोच्यन्त' इति भाष्यस्योपयोगोऽस्तीति सूचनार्थत्वात् । यदर्थमनुवादः तदाह – **अपूर्णत्वेति** ॥ भाष्ये – **वासुदेवात्मक-मिति** ॥ यतिः वासुदेवात्मकं ब्रह्म, मूलमन्त्रेण प्रणवेन वा पूजयेदित्यर्थः ।

## वाक्यार्थमुक्तावली

ॐ आनन्दमयोऽभ्यासात् ॐ ॥ **अथेति** ॥ अधिकरणचतुष्टये प्रमाणाभ्यां वस्तुनिर्णयानन्तरं पञ्चमे चावाच्यतया शब्दलेशसञ्चाराविषयस्य शास्त्रावगम्यत्वमसम्भावितमित्यसम्भावनाशङ्कानिवृत्यनन्तर-मित्यर्थः ॥ **शेषेणेति** ॥ यद्यप्येतदादिरेवाध्याय इति जिज्ञासाधिकरणे व्यक्तं तथापि सुधारीत्या समन्वयसूत्रमारभ्याध्यायान्तर्भावोऽस्तीत्यभिप्रेत्य शेषेणेत्युक्तम् । यद्वा पञ्चाधिकरण्या अन्तर्भावेना-सङ्गतत्वेऽप्युपोद्घातरूपेण सङ्गतत्वात्तद्विवक्षया शेषग्रहणम् ।

ननु भाष्ये समन्वयपदेन पूर्वभाष्यदिशा नोपक्रमादिलिङ्गमुच्यते । उपक्रमादिमात्रस्यात्र अनिरूपणा-दित्यत आह **तत्तु समन्वयादित्युक्तमिति** ॥ तत्तु समन्वयादित्यत्रान्वयादुपक्रमादिलिङ्गसमुदायबलात्सम्यक् शास्त्रे निरूप्यमाणे विचार्यमाणे सति समन्वयात् सर्वशास्त्रस्य भगवत्येव सम्यग्वचनवृत्या शक्तितात्पर्य-लक्षणसम्बन्धावगमादित्यन्वयशब्दस्य द्विरावृत्या निरूप्यमाणे इत्यध्याहारेण च लब्धं करणावान्तर-फललक्षणं समन्वयपदार्थप्रतिवाक्यग्रहणेन प्रकटयतीत्यर्थः । सम्यङ्निरूपणमिति सम्यक्प्रविचारणं तत्साध्यं शक्तितात्पर्यलक्षणसम्बन्धं चेत्यर्थः । अवान्तरव्यापारस्य समन्वयत्वं समन्वयशब्दितलिङ्गसाध्यतयेति ध्येयम् । व्यक्तमेतत्सुधायाम् । 'विभागेन समन्वयम् । आनन्दमय इत्यादिनाऽध्यायेन वदत्यजः' इति व्याख्यावसर इति ज्ञेयम् । सङ्गतिशङ्कोत्थापनायेति । आनन्दमयरूपविषयापरिज्ञाने अस्य विष्णुत्व-मसमर्थने का पूर्वसङ्गतिरित्येवंरूपशङ्कानुदयादिति भावः ॥ **अश्रद्धेयमिति** ॥ अध्यायानन्तर्भावप्रसङ्गात् प्रधानशाब्दत्वनिरासस्येक्षत्यधिकरणानन्तर्यौचित्येन व्यवधानकारणाभावाच्चेति भावः ॥ **एकेति** ॥

(वाक्यार्थमुक्तावली)

अर्थैक्यादेकं वाक्यमिति जैमिन्युक्तेरिति भावः ॥ **अन्यत्रैवेति** ॥ बलवत् श्रुतिलिङ्गाद्यैरिति शेषः । श्रुत्यादेः प्राबल्यं चान्यपरत्वात्याजकत्वम् अव्यक्तजीवादिसमन्वये ह्यवरत्वदुःखित्वाद्यन्यप्रापकलिङ्गादि-विरोधे लिङ्गस्याप्यन्यगतावरत्वदुःखादिस्वामित्वेन भगवति सावकाशत्वे वाच्ये अवरत्वदुःखादि-समवायिन्यपि लिङ्गादिवृत्या अव्यक्तादिशब्दानां तत्परत्वत्यागायोगात् । तथा च येषां शब्दानां सिद्धान्तिनापि प्रबलबाधकवशादन्यपरत्वमत्याजयित्वा भगवत्परत्वमुच्यते ते अन्यत्रैव प्रसिद्धा इति भावः ॥ **उभयत्रेति** ॥ उभयप्रापकवशादिति शेषः ॥ **अन्यत्रेति** ॥ लोकतो वा लोकप्रसिद्ध-श्रुतिलिङ्गादिभिर्वेति शेषः । एतेनान्यत्रेति सावधारणं न वा आद्ये चतुर्थपादसाङ्कर्यं द्वितीये तृतीयपाद-साङ्कर्यमिति निरस्तम् । सावधारणत्वेऽपि विवक्षातिशयेन चतुर्थपादसाङ्कर्यात् । व्युत्क्रमेणोक्तिस्तु तेष्वित्यादिना क्रमबीजोक्तिसौकर्यायेति ज्ञेयम् ॥ **तत्रेति** ॥ तत्रैवेत्यर्थः । तेन न पार्श्वविध्यम् ॥ **नामेति** ॥ नामात्मकाः रूढाः यौगिका लिङ्गात्मका इत्येके । सुधायां साक्षाद्धर्मिवाचिनो नामात्मकाः धर्मद्वारा धर्मिणि । वर्तमाना लिङ्गात्मका इति । तेनान्तःप्रविष्टं यस्मिन्द्यौरित्यादिवाक्यरूपलिङ्गस्यापि सङ्ग्रहो भवति ॥ **प्रथममिति** ॥ दुर्गमत्वाच्च नैवात्र प्राथम्येनोदितोऽअसेत्यनुव्याख्यानदिशा पदवर्णस्वरादि-समन्वयरूपत्वेन दुर्गमत्वादिति भावः ॥ **उभयत्रेति** ॥ अन्यत्र प्रसिद्धानामन्यत्र प्रसिद्धित्याजनं भगवति प्रसिद्धिसम्पादनं चेति द्वयं कर्तव्यमिति तत्र प्रयत्नाधिक्यम् उभयत्र प्रसिद्धानां नान्यत्र प्रसिद्धित्याजनं कार्यमिति प्रयत्नलाघवादानंतर्यमिति भावः ॥ **अन्यपराणां मध्य इति** ॥ लोकतोऽन्यत्र प्रसिद्धानां मध्य इत्यर्थः ॥ **अन्तस्थत्वेति** ॥ सूत्राक्षरार्थाभिप्रायेणैवमुक्तम् । फलतस्तत्रापि नामसमन्वय-सिद्ध्यङ्गीकारात् ॥ **स्पष्टेति** ॥ जीवादावनुपपद्यमानतया ब्रह्मतया निर्णीतलिङ्गवतामित्यर्थः ॥ **उत्तराधि-करणेति** ॥ उत्तरपादीयाधिकरणेष्वित्यर्थः । वाक्येष्विति बहुवचनेन नास्माभिरिव तेन प्रायिकतया पादव्यवस्था वक्तुं शक्यत इति सूचितं भवति ॥ **नन्वन्यत्रप्रसिद्धेति** ॥ अत्र ब्रह्मणीति शास्त्रसङ्गतिः । समन्वयेत्यध्यायसङ्गतिः । तेनैवान्यत्रैव प्रसिद्धशब्दसमन्वयात्मकः । चतुर्थपादे तृतीयपादे चोभयत्र प्रसिद्धविषये द्वितीयपादे चान्तर्भावनिरास इति विवेकः । आनन्दमयनाम्न इति द्रष्टव्यम् । एतच्चाग्रे व्यक्तीभविष्यति । आनन्दमयशब्दस्य नामात्मकत्वनिर्वाहश्चास्माभिः प्रमेयमुक्तावल्यां कृतोऽनुसन्धेयः ॥ **समन्वयप्रतिपादनादिति** ॥ अभ्यासाद्यन्वयमनुसृत्य शक्तितात्पर्यलक्षणसम्बन्धनिरूपणादित्यर्थः ॥ **श्रुत्यधिकरणसङ्गती इति** ॥ पूर्वाधिकरणादुपात्तश्रुतिभ्यामेव सङ्गतिर्वक्तव्या न त्वव्यवहितपूर्वाधिकरणेनेति नियम इति भावेन भाष्ये जिज्ञासाधिकरणेन सङ्गतिरुच्यत इत्यर्थः । अव्यवहितसङ्गतिस्तु पूर्वाधिकरणे ब्रह्मणो वाच्यत्वं 'यतो वाचो निवर्तन्त' इति श्रुतिबलेनाक्षिप्य समाधानमयुक्तम् । तस्याः श्रुतेर्मनोमय-

(वाक्यार्थमुक्तावली)

विषयत्वात् । मनोमयादीनां चाब्रह्मत्वादित्याक्षेपपरिहारायास्याधिकरणस्य प्रवृत्तिरिति । अथवा तत्र ब्रह्मानन्दस्यावाच्यत्वमुच्यते न तु ब्रह्मणः । न चानन्दशब्देनापि ब्रह्मोच्यते इति वाच्यम् । गुणवाचिनां गुणिनि हरौ वृत्तेरेवायुक्तत्वात् । ब्रह्मणो ब्रह्मेत्यन्वयप्रसङ्गाच्चेत्याशङ्क्य गुणगुणिनोरभेदघटकं विशेषं चाश्रित्यानन्दादिगुणवाचिशब्दसमन्वयस्याप्यत्र समन्वयप्रतिपादनाद्वा सङ्गतिरिति । तदुक्तं

'गुणिसामान्यवाचिनाम् ।
गुणवाचिनां च प्रथममाह देवः समन्वयम्' । इति ।

'उत्तरैः पूरिताः पूर्वे निश्छिद्रत्वेन सर्वशः ।
सर्वेऽपि पुरुषाकारा उत्तरात्पूर्वसम्भवाः' ॥

इति तैत्तिरीयभाष्यानुसारेण श्रुत्यर्थमाह **तेनेत्यादिना** । तस्य पुरुषविधतामन्वयमित्यस्य तात्पर्यं **तस्मादुद्भूत इति** । शरीरिस्थानीयादान्तरान्नारायणाख्यात् आनन्दमयकोशगतानन्दमयाख्यात् शरीरस्थानीयो बाह्यो वासुदेवो विज्ञानमयकोशगतो विज्ञानमयनामकः प्रादुर्भूत इत्यर्थः ॥ **उपकारजम् इति** ॥ 'परेयं प्रियनामकम्' इत्युक्तेः । 'मोदो भोगनिमित्तकः' इत्यैतरेयभाष्योक्तेः ।

सुखं स्वरूपभूतं यदानन्द इति कथ्यते ।
मुन्नाम विषयोत्थं यत्प्रकृष्टविषयात्प्रमुत् ॥ इति ।

बृहद्भाष्योक्तेरिति भावः ॥ **ब्रह्मणोऽन्य इति** ॥ ब्रह्मत्वे तु एकैकशोऽङ्गानि धिया विभावये-त्पादादियावद्धसितं गदाभृत इत्युक्तदिशावयवावयविनोर्भेदाभावेन जिज्ञास्यत्वं सम्भवतीति भावः ॥ **अयोगादिति** ॥ प्रधानपरित्यागेनाप्रधानस्वीकारस्यानुचितत्वादित्यर्थः । स किं ब्रह्मादिजीवसमूह इति । आनन्दमयादिपञ्चकं किं जीवादिरुत विष्णुरिति चिन्ता । तदर्थं तत्र श्रूयमाणो ब्रह्मशब्दः किममुख्यवृत्या जीवादिविषयः उत मुख्यवृत्या विष्णुविषय इति । तदर्थं ब्रह्मशब्दस्य मुख्यवृत्यङ्गीकारे किं बाधकमस्त्युत नास्तीति । तदर्थं मयट्प्रत्ययः, अन्योन्तरात्मेत्यन्यतरशब्दः, ब्रह्म पुच्छमिति ब्रह्मण आनन्दमया-वयवत्वोक्तिः, अन्नमये तस्येदमिति निर्देशश्चेत्येतत्किं विकारभेदाद्यर्थकमुत प्राचुर्यविशेषाद्यर्थकमिति । तदर्थं हेतुव्यपदेशः भृगुवल्लीसमाख्या मन्त्रवर्णसमाख्या चेति स्वपक्षसाधकम् अनुपपत्तिः भेदव्यपदेशः **सुधोक्तशासनं** चेति परपक्षबाधकं च किं वा सावकाशमुत निरवकाशमिति ॥ **मम योनिर्महद्ब्रह्मेति** ॥ महद्ब्रह्म चेतनप्रकृतिर्मम भार्येति कृष्णवाक्यम् । पञ्चभिः पञ्चभिर्ब्रह्मेति । पञ्चभूतादिसूक्ष्मात्मकजडप्रकृति-

(वाक्यार्थमुक्तावली)

विषयम् ॥ **हिरण्यगर्भनिष्ठेति** ॥ न च तस्य नपुंसकलिङ्गब्रह्मशब्दवाच्यत्वं नास्तीति भ्रमितव्यम् । तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते । द्वे ब्रह्मणीत्यादिप्रयोगात् । **आनन्दमयशब्दार्थेति** । अनेन चतुर्मुखवाचकशतानन्दशब्दवाच्यत्वादिति मूलाभिप्राय उक्तो भवति । पर्यायत्वं च मयटः प्राचुर्यार्थत्वात् । आनन्दमयः शतानन्द इत्यर्थैक्यत इति द्रष्टव्यम् ॥ **सूर्याधिष्ठातृत्वादिनेति** ॥ इन्द्रादीनां सूर्याद्युत्तमत्वेन तदधिष्ठातृत्वं । बृहस्पतेर्ब्रह्मशब्दवाच्यत्वस्य ब्रह्मापि तन्न जानातीत्यादौ टीकाकारैरेवोक्तत्वात् । तदादिशब्दगृहीतम् । **तदभिमानित्वादिति** ॥ बहुभाववदचित्प्रकृत्यभिमानित्वादित्यर्थः ।

ननु जीवानां समुदायरूपेण ब्रह्मशब्दवाच्यत्वात् एकस्मिन्देहे जीवसमुदायाभावादन्योन्तर आत्माऽनन्दमय इति कथमुक्तमित्यत आह– **तद्देहेति** ॥ देहादिसमुदायविवक्षया जीवसमुदायस्यान्योन्तर आत्मेति युक्तिविषयत्वमिति भावः । अन्नमयत्वादेश्चेत्येतदवतार्य व्याचष्टे– **न चेति** ॥ **साधारण्यादिति** ॥ जात्यादिसाधरण्यादित्यर्थः । न तु विष्णुसाधरण्यादिति भ्रमितव्यम् । यद्यपीति पुनः शङ्कनात् । अन्नादिविकारान्नमयादिशब्दितदेहाद्यभिमानित्वेनेत्यर्थः ॥ **तत्प्रायपठितेति** ॥ तत्सहपठितान्नमयशब्दविषयत्वेत्यर्थः । न ह्यवयविनं विनेति सङ्गतिग्रन्थसूचितपूर्वपक्षमाह **यद्यपीति** । एतदनुदाहरणेन कथं तद्व्याख्यानमित्यत आह सङ्गत्यर्थमुदाहृतेति । आनन्दमयोऽभ्यासादित्यादिनेत्यत्र सङ्गतिशङ्कोत्थापनार्थं वा न ह्यवयविनं विनाऽवयवमात्रस्य जिज्ञास्यतेत्यत आह । आनन्दमयोऽभ्यासादित्यत्र श्रुत्यादिसङ्गतिप्रदर्शनार्थं चोदाहृतसूत्रप्रतिज्ञाभागमित्यर्थः । यद्वा सङ्गत्यर्थं व्याचष्ट इत्यन्वयः । आनन्दमय इत्यत्र साध्यस्यानुक्तेः पर्वतो धूमवत्वादितिवदभ्यासादानन्दमय इत्येतयोरसङ्गतिः स्यादतः सङ्गत्यर्थं समन्वयसूत्रात्तदेवेत्यनुवृत्याऽनन्दमय इति प्रतिज्ञाभागं व्याचष्टे इत्यर्थः । भाष्य इत्यादिषु ब्रह्मशब्दाभ्यासादित्यन्वयभ्रमं निवारयंस्तदर्थमाह असन्नेवेत्यादिना विष्ण्वेकनिष्ठत्वोक्तेरित्यन्तेन । तदेव ब्रह्मेत्यारभ्य पठितेष्वित्यादिषु वाक्योत्तरेषु तस्मिन्नेव प्रसिद्धब्रह्मशब्दस्य तस्मिन्नानन्दमयविषयतयोदाहृते असन्नेवेति श्लोके तस्मिन्नानन्दमयविषये अभ्यासादिति योजनोक्ता भवति । आनन्दमये शब्दाभ्यासादित्युपलक्षणमेतत् । विज्ञानमये चेति ग्राह्यम् । अन्नमयादित्रिके तु ब्रह्मश्रवणादिति च । एतच्च पञ्चानां पृथक् पक्षत्वे अन्नमयादयः पञ्च विष्णुरिति प्रतिज्ञायां तु अभ्यासादित्यस्य श्रुतत्वादित्यर्थः । अन्यथा भागासिद्धिप्रसङ्गात् । अत एव येऽन्नं ब्रह्मोपासत इत्यादिब्रह्मशब्दादित्युत्तरभाष्यटीकायां तद्विषयत्वेन ब्रह्मशब्दश्रवणादित्येव वक्ष्यति । स्पष्टं च सुधायाम् । अत्र वक्तव्यमुक्तं मुक्तावल्याम् । श्रुतिसिद्धत्वादिति । श्रुतौ तदेव परमं ब्रह्मेत्युक्तेऽन्यममुख्यमिति लाभात् ब्रह्मशब्दः परे विष्णाविति स्मृतेश्च स्पष्टत्वादिति भावः । ब्रह्मेति परमात्मेतीति भागवतस्थम् ।

(वाक्यार्थमुक्तावली)

बुद्ध्याविर्हिंसन् पुष्पैर्वा प्रणवेन समर्चयेत् ।
वासुदेवात्मकं ब्रह्म मूलमन्त्रेण वा यतिरिति व्यासस्मृतिः ।

## तत्त्वसुबोधिनी

॥ ॐ आनन्दमयोऽभ्यासात् ॐ ॥ **ब्रह्मस्वरूपनिरूपणेऽनवशेषादिति** ॥ अथातो ब्रह्मजिज्ञासा इति यस्य ब्रह्मणो जिज्ञासा विहिता तत्स्वरूपं जन्माद्यस्य यतः, शास्त्रयोनित्वादिति लक्षणप्रमाणाभ्यां स्वेतरसमस्तवस्तुव्यावृत्ततयाऽवधारितम् । प्रमाणस्यान्यपरत्वशङ्कया लक्षणस्यातिव्याप्तिः समन्वयसूत्रेण निराकृता । ब्रह्मणश्च सकलशास्त्रप्रमाणकत्वासम्भावनाशङ्का ईक्षत्यधिकरणे निराकृता । न च प्रमाण-निरूपणव्यतिरेकेण वस्तुविचारणं नामास्ति । तत्र च लक्षणप्रमाणाभ्यामेव वस्तुव्यवस्थितेः न ब्रह्मस्वरूप-निरूपणे किमप्यवशिष्यते । यदर्थमध्यायशेषप्रवृत्तिरित्याशयः । सम्यङ्निरूपणमिति । अनेन तमेव समन्वयमिति भाष्यगतसमन्वयशब्देन यदि उपक्रमादिलिङ्गग्रहणं तदा अध्यायशेषेण उपक्रमादि-प्रपञ्चनाभावात् प्रकटयतीत्यनुपपन्नम् । सुधोक्तरीत्या शक्तितात्पर्यलक्षणसम्बन्धावगमग्रहणेऽप्येवमेव । तस्मात्सम्यगन्वयः शक्तितात्पर्यावगमो येन निरूपणेन भवतीति योगेन वा तद्धेतुभूतोपक्रमादिलिङ्गवाचकेन समन्वयपदेन लक्षणया वा तत्साध्यं निरूपणं ग्राह्यमित्युक्तं भवति । अन्यथेति । प्रकाशनाभाव इत्यर्थः ॥ **अन्यदेव** ॥ रुद्राद्येव । जगत्कारणमिति शेषः । ननु सूत्रोदाहरणं मध्ये कुत इत्यत आह ॥ **एतदधिकरणेति** ॥ सुत्रानुदाहरणे आनन्दमयरूपविषयापरिज्ञाने अस्य विष्णुत्वसमर्थने का पूर्वसङ्गतिरिति शङ्कानुदयादिति भावः । अन्यत्रैव प्रसिद्धा इति । येषां ब्रह्मण्यप्रसिद्धिः अन्यत्र च प्रसिद्धिः **ब्रह्मपरत्वेत्यशक्यत्वं** चेत्येतत्त्रितयं समन्वयविरोधि ते अन्यत्रैव प्रसिद्धा इत्यर्थः । **उभयत्र प्रसिद्धा इति** ॥ येषां ब्रह्मणि समन्वये अन्यत्र प्रसिद्धिमात्रं विरोधि ते तथोक्ता इत्यर्थः ॥ **अन्यत्रेति** ॥ येषां ब्रह्मणि समन्वये अन्यत्र प्रसिद्धिब्रह्मण्यप्रसिद्धिभ्यां विरोधस्तेऽन्यत्र प्रसिद्धा इति भावः । चतुर्विध-शब्दसमन्वयः पादचतुष्ट्य इति प्रतीतिनिरासायाह ॥ **तेष्विति** ॥ तेषां भगवत्परत्वस्य सिद्धत्वादिति भावः । नन्वत्र पादक्रमः किं महामल्लभङ्गन्यायेन उत सोपानारोहणन्यायेन । नाद्यः । तथात्वे अन्यत्रैव प्रसिद्धपादस्य प्राथम्यापातात् । न द्वितीयः । उभयत्र प्रसिद्धपादस्य प्राथम्यं स्यात् । तथा चान्यत्र प्रसिद्धानां पूर्वसमन्वयः । तत्रापि नाम्नां पूर्वम्, अनन्तरं लिङ्गानां, तदनन्दरम् उभयत्र प्रसिद्धानाम्, अन्ते अन्यत्रैव प्रसिद्धानां इति क्रमानुपपत्तिरित्याशङ्क्य पादत्रये व्युत्पाद्यसमन्वयापेक्षया चतुर्थपादे व्युत्पाद्यस्यान्यत्रैव प्रसिद्धशब्दसमन्वयस्य अत्यधिकत्वेऽपि तस्मिन्महासमन्वये मुख्यतो ब्रह्मण

(तत्त्वसुबोधिनी)

एव अधिकारात् तस्य दुर्गमत्वेन प्रथमं बुद्ध्यारोहासम्भवाच्च सर्वाधिकारिसाधारणं सुगमं चार्थमादावभिधायासाधारणं पश्चाद्वदिष्यामीत्याशयेन तस्यान्त्यत्वमित्यभिप्रेत्याह । **तेष्वन्यत्रैवेत्यादिना** ॥ प्रथममबुद्ध्यारोहादित्युपलक्षणम् । असर्वाधिकारिकत्वादित्यपि द्रष्टव्यम् । (नन्वेवं सोपानारोहणन्यायेनातिप्रयत्नसाध्यस्यैव प्राथम्यमित्याशयेन उभयत्र प्रसिद्धानाम् अन्यत्र प्रसिद्धापेक्षया अन्यत्र प्रसिद्धानामुक्तन्यायेन प्राथम्येऽपि नान्यत्रप्रसिद्धलिङ्गापेक्षया अन्यत्रप्रसिद्धानां प्राथम्यस्य विशेषणनाम्नामेव प्राथम्ये नियामकाभावादित्यतस्तत्रापि महामल्लभङ्गन्यायेनातिप्रयत्नसाध्यतया प्राथम्यं नाम्नां इत्याशयेन नामलिङ्गयोः प्राबल्यदौर्बल्ये व्युत्पादयति । **अन्यपराणामिति** ।) नाम्नां प्रधानभूतधर्मिणि साक्षाद्बीजनकत्वात् यौगिकस्यावयवार्थे रूढ्यपेक्षावत् रूढस्य योगापेक्षाया अभावाच्च नाम्नां लिङ्गापेक्षया प्राथम्यं युक्तमिति भावः । **नामात्मकानामिति** ॥ अनेन मूले नामात्मकानामिति संयोज्यमित्युक्तं भवति । अत एव लिङ्गात्मकानामिति द्वितीयपादे वक्ष्यतीति भावः ॥ **अत्रान्तस्थत्वेति** ॥ सूत्राक्षराभिप्रायेणैवमुक्तं फलतः तत्रापि नामसमन्वयसिद्ध्यङ्गीकारादिति बोद्धव्यम् । स्वमतेन पादार्थानभिधाय अन्योक्तान् पादार्थान्निराकर्तुं तन्मतमनुवदति ॥ **अन्ये त्विति** ॥ **द्वितीयतृतीययोरिति** ॥ सविशेषनिर्विशेषविषयतया च तयोर्भेद इति भावः । उत्तराधिकरणेति ॥ उत्तरपादगताधिकरण इत्यर्थः । यथाश्रुते तु अन्तराधिकरणादौ स्पष्टब्रह्मलिङ्गसमन्वयस्यैव प्रतिपादनेनासङ्गतमेतत्स्यादिति भावः । अन्यत्र प्रसिद्धानन्दमयनाम्न इत्यादि । अत्र टीकायाम् आनन्दमयनाम्न इत्यानन्दमयशब्दः आनन्दमयाधिकरणे लिङ्गविचारादिति तत्वप्रदीपानुसारेणानन्दादिनामपरो योज्यः । तथा च आनन्दादिनामसमन्वयस्यापि इह समर्थनात् फलतः पादसङ्गतिरिति द्रष्टव्यम् । वस्तुतः आनन्दमयादिशब्दाः योगरूढाः । यान्यापाततो रूढान्येव तानि नामानीति पक्षे आनन्दमयादेः नामत्वाभावेऽपि यान्यापाततो रूढानि तानि नामानि यानि तु यौगिकानि लिङ्गानीति पक्षे आनन्दमयादिशब्दानाम् उभयात्मकत्वात् तद्विचारस्य पादद्वयसङ्गतिसम्भवेन इहापि विचारसम्भवात् प्रथमातिक्रमे कारणाभावाच्च आद्यपादे तत्समन्वय इति ध्येयम् । ब्रह्मणीति शास्त्रेण, समन्वयेति अध्यायेन, लोकतोऽन्यत्र प्रसिद्धनाम्न इति पादेन च अन्तर्भावलक्षणसङ्गतिरुक्ता । लोकत इति चतुर्थपादीयानां नाम्न इति द्वितीयपादीयानां शब्दानां निरास इति ज्ञेयम् । एवमुत्तरत्रापि ज्ञेयम् । शास्त्राध्यायाभ्यां सहिता पादसङ्गतिरिति विग्रहः । श्रुत्यधिकरणसङ्गती इति । येन केनचित् पूर्वाधिकरणेन तद्विषयश्रुत्याच सङ्गतिरेवापेक्षितेति आद्यसूत्रेण तद्विषयवाक्येन च आक्षेपिकी सङ्गतिरस्तीत्यर्थः । अत एव उत्तरत्र टीकायां किमर्थम् आनन्दमयस्य विष्णुत्वमसर्थनमिति प्रश्नः । ब्रह्मजिज्ञासासिद्ध्यर्थमिति परिहारश्च । एवमुत्तरत्रापि सङ्गतिटीका द्वेधा व्याख्येरा । पूर्वाधिकरणस्थ

(तत्त्वसुबोधिनी)
''तन्निष्ठस्य मोक्षोपदेशादिति'' सूत्रोक्तमोक्षजनकज्ञाविषयत्वस्यात्र 'नेतरोऽनुपपत्तेः' इति परपक्षप्रतिक्षेपहेतुत्वेनोपपादनादव्यवहितपूर्वाधिकरणसङ्गतिरपि द्रष्टव्या । अप्रतीतार्थत्वात् विषयवाक्यं व्याचष्टे । **तेनेत्यादिना** ॥ तस्य पुरुषविधतामनुतस्य पुरुषविधत्वं किं विवक्षितमित्यत आह ॥ **तस्मादुद्भूत इति** । शरीरिस्थानीयादान्तरान्नारायणाख्यादानन्दमयात् शरीरस्थानीयो बाह्यो वासुदेवाख्यो विज्ञानमयः प्रादुर्भूत इत्यर्थः । उपकारजं **प्रियमित्यादि** । जीवगतवैषयिकसुखाभिप्रायेणोक्तम् । तच्छब्दवाच्यत्वादिना तज्जातीयं प्रियत्वादिकं विष्णौ **बौद्धव्यम्** ॥ **प्रकृष्टेति** ॥ यथायोग्यमन्वयः । न तु यथाक्रमम् ॥ **आनन्दमयशब्दार्थवदिति** ॥ अनेन हिरण्यगर्भः आनन्दमयशब्दवाच्यः तत्समानार्थकशतानन्दशब्दवाच्यत्वात् इति वा आनन्दमयशब्दः हिरण्यगर्भवाचकः तद्वाचकशतानन्दशब्दसमानार्थत्वादिति वा मूलाभिप्रायः इत्युक्तं भवति ॥ **इन्द्रबृहस्पत्यादीनामिति** ॥ तेषां सूर्यादुत्तमतया तन्नियामकत्वेन अवस्थानं तदधिष्ठातृत्वम् । आदिपदेन 'स एक इन्द्रस्यानन्दः स एको बृहस्पतेरानन्दः' इति इन्द्रश्रुत्यादिकं साधारणो ब्रह्मशब्दश्च विवक्षितः । अनेनैवमन्येषामपीत्येतत् भाष्यं चतुर्मुखरुद्रव्यतिरिक्तसूर्याधिष्ठातृमात्रपरम् । इतरसर्वजीवानामिति पृथगुक्तेरित्युक्तं भवति ॥ **बहुभावादेवेति** ॥ न त्वभिमानित्वेनेत्येवशब्दार्थः ॥ **तत्तद्देहगतेति** ॥ अनेनान्नमयत्वादेश्चेत्युक्तो हेतुः देहाभिमानित्वेन जीवे वर्तते इत्युपपादितं भवति । ननु महायोगविद्वद्रूढिभ्यां ब्रह्मशब्दस्य विष्णुपरत्वसमर्थनात् विष्णुः ब्रह्मशब्देन कुतो न गृह्यत इत्यत आह ॥ **यद्यपीति** ॥

अस्तु आनन्दमयावयवत्वं ततः किमित्यत आह ॥ **तस्य चेति** ॥ एकस्यैव अवयवित्वम् अवयवत्वं च विरुद्धमिति भावः । सूत्रानुदाहरणेन कथं तर्हि व्याख्यानमित्यत आह ॥ **सङ्गत्यर्थमुदाहृतेति** ॥ सङ्गतिप्रदर्शनार्थमित्यर्थः । यद्वा सङ्गत्यार्थं व्याचष्टे इत्यन्वयः । तथा च किन्तु विष्णुरेवेत्यनुक्तौ साध्यधर्मांशालाभेन पर्वतो धूमवत्वादित्यनयोरिव आनन्दमयोऽभ्यासादित्यनयोरप्यसङ्गतिः स्यात्, तदुक्तौ तु वह्निमानित्युक्ते कुतः पर्वतो वह्निमानित्याकाङ्क्षया हेतुवाक्यसङ्गतिवत् अत्राभ्यासादित्यस्य आनन्दमय इत्यनेन सङ्गत्यर्थं समन्वयसूत्रात्तदेवेत्यनुवृत्त्य आनन्दमय इति प्रतिज्ञाभागं व्याख्यातीत्यर्थः । एवमन्तः श्रूयमाणो विष्णुरेवेत्यादावपि द्रष्टव्यमिति । भाष्ये इत्यादिषु ब्रह्मशब्दाभ्यासादित्यन्वयभ्रमं वारयन् तदर्थमाह ॥ **असन्नेवेत्यादिना** ॥ आनन्दमये ब्रह्मशब्दाभ्यासादिति । अनेन तस्मिन्नित्यस्यानन्दमयपरत्वेन आवृत्त्या अभ्यासादित्यत्राप्यन्वय इत्युक्तं भवति । असन्नेवेत्यादेः अध्याहारो वाऽर्थलब्धत्वादिति द्रष्टव्यम् । अस्तु ब्रह्मशब्दाभ्यासः तावता विष्णुः आनन्दमयः कुतः इत्यत

(तत्त्वसुबोधिनी)

आह ॥ **ब्रह्मशब्दस्येति** ॥ **श्रुतिस्मृतिष्विति** ॥ अनेन इत्यादिषु इत्यस्य प्रसिद्धपदेनान्वयः प्रदर्शितो भवति । तस्मिन्नेवेत्येतत् विष्णावेवेतिव्याख्यातं भवति । ननु अन्नमयादिपञ्चकस्य ब्रह्मत्वमत्राभिमतम् । तथा च अभ्यासरूपहेतोः विज्ञानमयानन्दमययोः सत्त्वेऽपि अन्नमयादित्रिकेऽभावात् हेतुः भागासिद्धः इति कथं तेन ब्रह्मत्वसिद्धिरिति चेत् । मैवम् । न ह्यत्र एकप्रकारासकृदुक्तिरूपोऽभ्यासो विवक्षितः किन्तु अभ्यासशब्देन तदुक्तिमात्रम् । अत एव भाष्ये येऽन्नं ब्रह्मेति ब्रह्मशब्दादिति, टीकायां च ब्रह्मशब्दश्रवणादित्येवोक्तमिति ध्येयम् ।

## वाक्यार्थविवरणम्

अन्यत्र प्रसिद्धा इत्यस्यान्यत्रैव प्रसिद्धा इत्येवार्थः । न चतुर्थपादसाङ्कर्यम् । श्रुतिलिङ्गादिभिरन्यत्रैव प्रसिद्धास्ते । अत एव श्रुतिलिङ्गादिभिरिति वक्ष्यते । एते तु लोकत इति न साङ्कर्यम् । एवं सति अन्यत्र प्रसिद्धा इत्यस्य यद्यन्यत्रैव प्रसिद्धा इत्यर्थः तदा चतुर्थपादसाङ्कर्यम् । यद्यन्यत्रापीत्यर्थस्तदा तृतीयपादसाङ्कर्यम् इति चोद्यानवकाश इति ।

## वाक्यार्थमञ्जरी

**ब्रह्मस्वरूपनिरूपण इति** ॥ आद्यसूत्रे जिज्ञास्यतयोक्तब्रह्मस्वरूपस्य द्वितीयतृतीयसूत्रोक्तलक्षण-प्रमाणाभ्यां स्वेतरसकलवस्तुव्यावृत्ततया निश्चितत्वात्तत्र प्रवृत्तबाधकानां चतुर्थपञ्चमयोर्निरासान्न किमपि निरूप्यमवशिष्टमित्यर्थः । एवकारार्थमाह ॥ **कृत्यान्तराभावेऽपीति** ॥ अभ्युपगम्येदमुदितम् । ब्रह्मणोऽवयवत्वश्रवणान्न जिज्ञास्यत्वमित्यादिबाधकानां तत्र तत्र परिहारादिति ध्येयम् । समन्वयशब्दार्थः शास्त्रीयशब्दानामुपक्रमाद्यन्वयात्सम्यङ्निरूपणमिति । अनेन सम्यगन्वयः शक्तितात्पर्यावगमो येन निरूपणेन भवतीति योगेन वा हेतुभूतोपक्रमादिलिङ्गवाचकसमन्वयपदेन लक्षणया वा तत्साध्यं निरूपणं ग्राह्यमित्युक्तं भवति । तेनान्वयोपपत्त्यादिलिङ्गमिति भाष्यदिशा समन्वयशब्देनोपक्रमादिलिङ्गग्रहणेऽध्याय-शेषेणोपक्रमादिलिङ्गप्रकटनाभावात्प्रकटयतीत्यस्यानुपपत्तिः । सुधोक्तरीत्या शक्तितात्पर्यलक्षणावगम-सम्बन्धज्ञानेऽपि तथैवेति निरस्तम् ॥ **प्रतिवाक्यग्रहणेनेति** ॥ उदाहरणत्वेनेति शेषः । अन्यदेव रुद्राद्येव कारणमिति । शेषः ॥ **शङ्कोत्थापनायेति** ॥ सूत्रानुदाहरणे आनन्दमयरूपविषयपरिज्ञानाभावेन अस्य विष्णुत्वसमर्थने का पूर्वसङ्गतिरित्येवंरूपशङ्कानुदयादिति भावः ॥ **चतुर्थपाद इति** ॥ आद्यपादत्रये स्पष्टास्पष्टलिङ्गसमन्वयः । चतुर्थे तु प्रधानस्य अशब्दत्वनिराकरणमिति परैरङ्गीकारादिति भावः ॥

(वाक्यार्थमञ्जरी)

**देवतायधिकरणेति** ॥ तदुपर्यपि शुगस्येत्यनयोः क्रमेण देवशूद्रयोर्वेदविद्याधिकारविचारेण समन्वयानुक्तेरिति भावः ॥ **एकेति** ॥ समन्वयरूपेत्यर्थः । अस्मिन्पादे अन्यत्र प्रसिद्धनामात्मकशब्दसमन्वयनिरूपणे निमित्तं वक्तुमाह ॥ **शब्दास्तावदित्यादिना** ॥ नन्वन्यत्र प्रसिद्धा इति कोऽर्थः । किमन्यत्रैव प्रसिद्धा इत्युतान्यत्रापि प्रसिद्धा इति । प्रकारान्तराभावात् । तत्र नाद्यः । चतुर्थपादे समन्वेतव्यान्यत्रैव प्रसिद्धशब्दसाङ्कर्यात् । नापि द्वितीयः । उभयत्र प्रसिद्धशब्दसाङ्कर्यात् । न च लोकतोऽन्यत्रैव प्रसिद्धाः अन्यत्र प्रसिद्धाः । श्रुत्यादितोऽन्यत्रैव प्रसिद्धाः अन्यत्रैव प्रसिद्धाः । अत एव लोकप्रसिद्ध्या अन्यत्र निरूढानामिन्द्रादिशब्दानां श्रुतिलिङ्गादिबलाद्विष्णौ समन्वयः प्राक् प्रतिपादितः । इदानीं श्रुतिलिङ्गादिभिरेवान्यत्रप्रसिद्धानामपि शब्दानां समन्वयनिरूपणान्नैतत्पादवैय्यर्थ्यम् । अनेनैवाभिप्रायेणान्यत्रैवेत्युक्तिरिति चतुर्थपादीयटीकेति वाच्यम् । तथात्वे अन्यत्र प्रसिद्धत्वेनाभिमतसर्वगतत्वादेरादित्यश्रुत्यादिनाऽन्यत्र प्रसिद्धेर्वक्ष्यमाणत्वेन तस्यान्यत्रैव प्रसिद्धतापत्तेः । न च प्रबलश्रुतिलिङ्गादिभिरन्यत्र प्रसिद्धा अन्यत्रैव प्रसिद्धाः । श्रुतिलिङ्गादिमात्रेणान्यत्र प्रसिद्धा अन्यत्र प्रसिद्धा इति भेद इति वाच्यम् । अन्यत्रैव प्रसिद्धाव्यक्तादिशब्दानामन्यत्र प्रसिद्धिसाधकावरत्वादीनामिवान्यत्र प्रसिद्धगुहाप्रविष्टत्वादेरन्यत्र प्रसिद्धिसाधकद्वित्वादीनामप्येकस्मिन्ब्रह्मण्यसम्भवाद्बलवत्वेन तस्याप्यन्यत्रैव प्रसिद्धतापातात्तस्मात्रान्यत्र प्रसिद्धानामन्यत्रैव प्रसिद्धेभ्यो भेद इति चेत् । उच्यते । श्रुत्यादितो लोकतो वा अन्यत्र प्रसिद्धा अन्यत्र प्रसिद्धाः । बलवल्लिङ्गश्रुत्यादिभिरन्यत्र प्रसिद्धाः अन्यत्रैवप्रसिद्धाः । यथोक्तम्–

> श्रुत्यादितो लोकतो वाऽपीतरेषु प्रसिद्धता ।
> बलवच्छ्रुतिलिङ्गाद्यैरन्येष्वेव प्रसिद्धता । इति ।

अत एव पूर्वं क्वचित् श्रुत्यादिनैवान्यत्र प्रसिद्धशब्दसमन्वयोक्तावपि एतत्पादीयश्रुत्यादीनां प्राबल्यादियमुक्तिरिति चतुर्थपादीयटीका । बलवत्त्वं च मुख्यतो भगवत्परत्वेऽपि अमुख्यतोऽन्यपरत्वं विनाऽनुपपद्यमानत्वम् । यथेन्द्रियेभ्यः परा ह्यर्था इत्यत्रेन्द्रियादिशब्दानां मुख्यतो भगवत्परत्वेऽपि अमुख्यत इन्द्रियाद्यभिमानिदेवतापरत्वम् । अन्यथा देवतातारतम्याद्यसिद्धेः । न चैवं गुहाप्रविष्टत्वादेरन्यत्र प्रसिद्धत्वसम्पादकद्वित्वस्यान्यपरत्वं विनाऽनुपपद्यमानत्वमस्ति । येन तस्य प्राबल्यं स्यात् । अथवा येषां शब्दानां ब्रह्मण्यप्रसिद्धिः अन्यवस्तुषु प्रसिद्धिश्चेति द्वयं समन्वयविरोधि ते अन्यत्र प्रसिद्धाः । येषां ब्रह्मण्यप्रसिद्धिरन्यत्र प्रसिद्धिर्ब्रह्मपरत्वेऽत्यशक्यतेति त्रयं समन्वयविरोधि ते अन्यत्रैव प्रसिद्धाः । यथोक्तम्

(वाक्यार्थमञ्जरी)

'येषां ब्रह्मण्यप्रसिद्धिः प्रसिद्धश्चान्यवस्तुषु ।
विरोधिन्योहितेऽन्यत्र प्रसिद्धाः कथिता इह ॥

येषामुक्तद्वयं ब्रह्मपरत्वस्यात्यशक्यता ।
इति तिस्रोविरोधिन्यस्तेऽन्यत्रैव प्रसिद्धका' ॥ इति ।

**तत्र प्रसिद्धा इति** ॥ तत्रैव प्रसिद्धा इत्यर्थः । तत्रापीत्यर्थत्वे उभयत्र प्रसिद्धिसाङ्कर्यात् । अत एव सुधायां ब्रह्मण्येव प्रसिद्धेत्युक्तम् ॥ **नामलिङ्गात्मकतयेति** ॥ साक्षाद्धर्म्युपस्थापकाः नामात्मकाः धर्मद्वारा धर्म्युपस्थापकाः लिङ्गात्मकाः ॥ **न तत्रेति** ॥ ननु तत्रैव प्रसिद्धानामपि जनितोत विष्णो-रित्यादाविवान्यपरत्वशङ्कायां समन्वयो व्युत्पाद्यत एवेति चेन्न । तत्र प्रसिद्धेत्यनेन अन्यपरत्वशङ्का-राहित्यस्योक्तत्वात् । नन्वत्र कथं पादक्रमः । किं महामल्लभङ्गन्यायेन अथ प्रथममल्पसोपानमारोहति अनन्तरं स्थूलमनन्तरं स्थूलतरं ततः स्थूलतममिति सोपानारोहणन्यायेन । नाद्यः । तथात्वे अन्यत्रैव प्रसिद्धानां समन्वयस्य बहुप्रयत्नसाध्यत्वेन तस्यैव प्राथम्यप्रसङ्गात् । न द्वितीयः । उभयत्र प्रसिद्धस्य अल्पप्रयत्नसाध्यत्वेन तस्यैव प्राथम्यप्रसङ्गादित्यत आह ॥ **तेष्वन्यत्रेति** ॥ त्रिविधेष्वित्यर्थः । तथा च महामल्लभङ्गन्यायेनान्यत्रैव प्रसिद्धसमन्वयस्य प्रथमं प्राप्तत्वेऽपि प्रथमं बुद्ध्यनारोहादेव तत्परित्याग इति भावः । पादत्रये महामल्लभङ्गन्यायेन क्रम इत्याह । **उभयत्र प्रसिद्धानामित्यादिना** । पराकरण-मात्रस्य अमुख्यत्वेनेति सम्बन्धः । अयमर्थः । उभयत्र प्रसिद्धानां हि शब्दानां अन्यपरत्वमात्रं निरसनीयम् । न तु भगवत्परत्वमुपपादनीयं स्वतः सिद्धत्वात् । अन्यत्र प्रसिद्धानां चान्यपरत्वं निरस्य भगवत्परत्वञ्च व्युत्पादनीयं तस्यासिद्धत्वात् । अन्यत्र प्रसिद्धिनिरासपूर्वकं भगवत्प्रसिद्धिव्युत्पाद-नापेक्षया अन्यप्रसिद्धिनिरसनमात्रपरत्वममुख्यमिति तृतीये तदुक्तिरिति ॥ **अमुख्यत्वेनेति** ॥ धर्मधर्मिणोर्धर्मिण एव प्रधानत्वादिति भावः । ततः परिशेषात् । अन्ये मायावादिनः ॥ **उत्तराधि-करणेति** ॥ उत्तरपादीयाधिकरणेत्यर्थः । एतदुत्तराधिकरणे एतद्वाक्योदाहरणाभावात् । शास्त्राध्यायपाद-सङ्गतिः शास्त्राध्यायपादेष्वन्तर्भावः । तेन नैकवचनानुपपत्तिः शङ्क्या । अत्र ब्रह्मणीति शास्त्रे, समन्वय इत्यध्याये, अन्यत्र प्रसिद्धानामिति पादेऽन्तर्भावः । तत्रापि लोकत इति चतुर्थादन्यत्रेति तृतीयान्नामेति द्वितीयाद्भेदः सूचितः । एवमग्रेऽपि । अत इत्यस्य विवरणं सङ्गतिसद्भावादिति ।

यद्वा अतः प्रथमाधिकरणादित्यर्थः । अत्र विप्रकीर्णनानाशाखास्थवाक्यविचारपराधिकरणेषु नाव्यवहितपूर्वाधिकरणसङ्गतिनियमः । किन्तु येन केनचित्पूर्वाधिकरणेनापीत्यतोऽत्र जिज्ञासाधि-

(वाक्यार्थमञ्जरी)

करणतद्विषयवाक्याभ्यामेवाक्षेपिकी सङ्गतिरुक्ता । प्रत्यधिकरणमव्यवहितपूर्वाधिकरणसङ्गतिरपि चन्द्रिकाभावबोधयोर्व्यक्ता तत्रैवानुसन्धेया । निश्छिद्रतया निरवकाशतया । तस्य पुरुषविधतामन्वेतस्य पुरुषविधत्वं किं विवक्षितमित्यत आह ॥ **तस्मादुद्भूत इति** ॥ प्रादुर्भूत इत्यर्थः । परेषामुपकारे तत्कृतप्रत्युपकारेण यत्सुखमुत्पद्यते तत्प्रियम् । क्षीरपानादिप्रकृष्टविषयजः प्रमोदः । जलपानाद्यप्रकृष्टविषयजन्यो मोदः । अत्रेदं बोध्यम् । प्रतीयमानेऽन्नविकारे पुरुषशरीरे अन्नमयनामाऽनिरुद्धो वर्तते । तन्मध्ये प्राणमयनामकः कोशः तत्र प्राणमयनामा प्रद्युम्नः । तन्मध्ये मनोमयनामकः कोशः तत्र मनोमयनामा सङ्कर्षणः । तन्मध्ये विज्ञानमयनामकः कोशः तत्र विज्ञानमयनामा वासुदेवः । तन्मध्ये चानन्दमयनामकः कोशः तत्रानन्दमयनामा नारायणः । तत्र पूर्वपूर्वोक्तानां देहत्वम् । उत्तरोक्तानां देहित्वम् । तत्रानन्दमयो देही विज्ञानमयाख्यं देहं व्याप्य तिष्ठति । एवमन्येऽपि । तत्रानन्दमयाद्विज्ञानमयस्यावतारः ॥ **एवमन्येषामपीति** ॥ ततश्चायमर्थः । ब्रह्मविदाप्नोति परमित्युक्तब्रह्मणः सत्यं ज्ञानमनन्तमिति लक्षणमुक्तम् । तत्र सत्यत्वमन्नमयप्राणमयप्रकरणाभ्यां ज्ञानत्वं मनोमयविज्ञानमयप्रकरणाभ्यां व्याख्यातम् । अनन्तत्वं गुणतोऽपरिच्छिन्नत्वमित्याशयेन तत्प्रतिपादनायानन्दमयप्रकरणं प्राप्तम् । तस्माद्वा एतस्मादित्यादि । तस्मात्सत्यत्वादिलक्षणोपेतादेतस्मात्प्रकृताद्विज्ञानमयात् अन्यः आनन्दमयः विज्ञानमयस्यान्तरः अन्तर्विद्यमानः । अभेदेऽपि विशेषबलाद्भेदव्यवहारः । तेनानन्दमयेनैव विज्ञानमयः पूर्णः ईषदवकाशराहित्येन व्याप्तः । स एष आनन्दमयः पुरुषविधः पुरुषाकार एव । वाशब्दः प्रसिद्धौ । अयं विज्ञानमयः तस्यानन्दमयस्य पुरुषविधतां पुरुषाकारताम् अनु अनुसृत्य पुरुषविधः पुरुषाकारः तस्मात्प्रादुर्भूत इति यावत् । तस्यानन्दमयस्य प्रियं शिरः मोदो दक्षिणबाहुः प्रमोदो वामबाहुः आनन्दो मध्यभागः ब्रह्म पुच्छाख्योऽवयवः । पुच्छं न लाङ्गूलमित्याह । **प्रतिष्ठेति** ॥ प्रतितिष्ठात्याभ्यामिति प्रतिष्ठा पादौ । सुपां सुलुगिति द्विवचनस्याकार इति ॥ **ब्रह्मणो न्य इति** ॥ अनन्यत्वे त्वेकैकावयवं ध्यायेदित्युक्तरीत्या नानुपत्तिरिति भावः ॥ **अयोगादिति** ॥ अवयवमात्रस्य फलदानासमर्थत्वादिति भावः । अयुक्ता चेन्मास्तु ब्रह्मजिज्ञासेत्यत आह ॥ **ब्रह्मजिज्ञासेति** ॥ **यतोऽत इति** ॥ अनेनेत्यत आहेति भाष्यम् इति यतः शङ्का प्राप्ता अत आहेति यतःशब्दाध्याहारेण योजितं भवति । ब्रह्माणि जीवाः सर्वेऽपि परब्रह्माणि मुक्तिगा इति श्रुतिः । ब्रह्माणि ब्रह्मशब्दवाच्या इत्यर्थः । 'मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम्' इतिगीतावचनम् । महद्ब्रह्म चित्प्रकृतिः । 'महती ब्रह्मणी द्वे तु प्रकृतिश्च महेश्वर' इत्युक्तेः । मम योनिर्भार्या । योनिर्भार्येति गीतातात्पर्योक्तेः । तस्मिन्ब्रह्मणि अहं गर्भं दधामीत्यर्थः ।

(वाक्यार्थमञ्जरी)

'पञ्चभिः पञ्चभिर्ब्रह्म चतुर्भिर्दशभिस्तथा ।
एतच्चतुर्विंशतिकं गणं प्राधानिकं विदुः'

इति भागवतवचनम् । पञ्चभिः महाभूतैः । पञ्चभिः तन्मात्राभिः । चतुर्भिः महदहङ्कारमनोबुद्धिभिः । दशभिरिन्द्रियैश्च ब्रह्म पूरितमेतच्चतुर्विंशतिकं गणं प्रधानकार्यं विदुरित्यर्थः । तदेव ब्रह्म परमं कवीनामिति हरौ प्रयोगः स्फुट इत्यादिशब्देन तद्ग्रहणम् । इत्यादिना क्रमेण जीवादिषु प्रसिद्धब्रह्मशब्दस्य आनन्दमये प्रयोग इत्यर्थः । अधिकृत्य उद्दिश्य ॥ **आनन्दमयशब्दार्थवदिति** ॥ आनन्दमयशब्दस्य बह्वानन्दत्वं तद्युक्तेत्यर्थः ॥ मयट्शतशब्दयोः बह्वर्थकत्वादिति भावः ॥ **हिरण्यगर्भे विद्यमानेनेति** ॥ शतानन्दः शतधृतिरित्युक्तेरिति भावः ॥ **सूर्याधिष्ठातृत्वादिनेति** ॥ तेषां सूर्यादुत्तमत्वेन नियामकतया तदन्तर्गतत्वादिनेत्यर्थः । आदिशब्देन साधारणब्रह्मशब्दो विवक्षितः । अनेनैवमन्येषां इत्येतच्चतुर्मुखरुद्रव्यतिरिक्तसूर्याधिष्ठातृमात्रपरम् । अन्येषां सर्वजीवानामिति पृथगुक्तेरित्युक्तं भवति । बहुधा विकारित्वाख्यबहुभावः कथं निर्विकारचित्प्रकृतौ सम्भवतीत्यत आह ॥ **तदभिमानित्वादिति** । **बहुभावादेवेति** ॥ न त्वभिमानित्वेनेत्येवार्थः ॥ **तत्तद्देहगतेति** ॥ अनेन अन्नमयात्वादेश्चेत्युक्तो हेतुर्देहाभिमानित्वेन जीवे वर्तत इत्युपपादितं भवति ॥ **प्रायपठितेति** ॥ सहपठितेत्यर्थः ॥ **विरोधादिति** ॥ अवयवावयविभावस्य भेदव्याप्तत्वादिति भावः ॥ **अब्रह्मत्वेनेति** ॥ एतेनेदं निरस्तम् । अत्र चतुर्मुखादिष्वेक एवेति न पूर्वपक्षः । अनेकप्रापकसद्भावे निर्णयायोगात् । नापि सर्वेऽपीति विरोधात् । न तेष्वन्यतम इति अनिर्धारणे संशयविशेषप्रसङ्गादिति । विशिष्टनिर्णयायोगेऽपि ब्रह्मान्यत्वप्रकारेणान्य एवेति निर्णयोपपत्तेः । सूत्रमनुपन्यस्य व्याख्याने न्यूनता स्यादित्यत उक्तम् ॥ **उदाहृतेति** ॥ तत्र व्याख्यानस्याकृतत्वादुदाहरणं व्यर्थमित्यत उक्तम् ॥ **सङ्गत्यर्थमिति** ॥ श्रुत्यधिकरणसङ्गतिप्रदर्शनार्थमित्यर्थः ।

ॐ आनन्दमयोऽभ्यासात् ॐ ॥ आनन्दमय इत्युपलक्षणम् । अन्नमयादयः पञ्च ब्रह्मैव अभ्यासात् ब्रह्मशब्दाभ्यासात् । अभ्यासशब्दार्थं चाग्रे विवेचयामः । भाष्ये इत्यादिषु ब्रह्मशब्दाभ्यासादित्यन्वयभ्रमं वारयंस्तदर्थमाह ॥ **असन्नेवेत्यादिना** ॥ ब्रह्म जीवादन्यं नास्तीति वेद जानाति चेत्सोऽधिकारी । असन् दुःख्येव भवति यदि ब्रह्म जीवातिरिक्तमस्तीति वेद तत एव एनमधिकारिणं सन्तं सुखिनं विदुरित्यर्थः । बुद्ध्याऽविहिंसन् पुष्पैर्वा प्रणवेन समर्चयेत् । वासुदेवात्मकमिति व्यासस्मृतिः ।

# विवृतिः

**सम्यङ्निरूपणमिति ॥** तमेव समन्वयमिति भाष्ये समन्वयशब्देन यद्युपक्रमादिलिङ्गग्रहणं तदाऽध्याय शेषेणोपक्रमादिप्रपञ्चनाभावात् प्रकटयतीत्यनुपपन्नम् । सुधोक्तरीत्या शक्तितात्पर्य लक्षणसम्बन्धावगम-ग्रहणेऽप्येवमेव । **तस्मात्सम्यगन्वयः** शक्तितात्पर्यावगमो येन निरूपणेन भवति, इति योगेन वा, तद्धेतुभूतोपक्रमादिलिङ्गवाचकेन समन्वयपदेन लक्षणया वा तत्साध्यं निरूपणमित्युक्तं भवति । प्रकाशनं किमर्थं कर्तव्यमत आह ॥ **अन्यथेति** ॥ प्रकाशनाभाव इत्यर्थः ॥ अन्यदेव रुद्राद्येव, जगत्कारणमिति शेषः । ननु भाष्यकारेणानन्दमयोऽभ्यासादिति सूत्रोदाहरणं मध्ये कुत इत्यत आह ॥ **एतदधिकरणेति** ॥ सूत्रानुदाहरणे आनन्दमयरूपविषयाज्ञाने अस्य विष्णुत्वसमर्थने का पूर्वसङ्गतिरिति शङ्कानुदयादिति भावः । चतुर्विधशब्दसमन्वयः पादचतुष्टय इति प्रतीतिनिरासायाह ॥ **तेष्विति** ॥ तेषां भगवत्परत्वस्य सिद्धत्वादिति भावः । नन्वत्र पादक्रमः महामल्लभङ्गन्यायेन, उत, सोपानारोहणन्यायेन ॥ नाद्यः तथात्वेऽन्यत्रैव प्रसिद्धपादस्य प्राथम्यापातात् । **न द्वितीयः** । उभयत्र प्रसिद्धपादस्य तथात्वापातादित्या-शङ्क्य, पादत्रये महामल्लभङ्गन्यायेन पादक्रमः । अन्यत्रैव प्रसिद्धपादस्य तु चतुर्थत्वमित्युत्पाद्य समन्वये मुख्यतो ब्रह्मण एवाधिकारात् तस्य दुर्गमत्वेन प्रथमं बुध्यारोहाभावाच्चेत्यभिप्रेत्याह ॥ **तेष्वन्यत्रै-वेत्यादिना** ॥ ननु प्रथमपादे लिङ्गसमन्वय एव किं न प्रतिपाद्यत इत्यत आह ॥ **अन्यपराणामिति** ॥ अनेन धर्मवाचित्वं लिङ्गत्वं धर्मिवाचित्वं नामत्वमित्यनयोर्लक्षणमुक्तं भवति ॥ **नामात्मकानामिति** ॥ अनेन मूले नामात्मकानामिति संयोज्यमित्युक्तं भवति ॥ अत एव लिङ्गात्मकानामिति द्वितीयपादे वक्ष्यतीति भावः ॥ **अत्रान्तस्थत्वेति** ॥ सूत्राक्षरार्थाभिप्रायेणैवमुक्तम् । फलतस्तत्रापि नामसमन्वय-सिध्यङ्गीकारादिति बोध्यम् । स्वमतेन पादार्थानभिधायान्योक्तान् पादार्थान्निराकर्तुं तन्मतमनुवदति ॥ **अन्ये त्विति** ॥ **उत्तराधिकरण इति** ॥ उत्तरपादगताधिकरण इत्यर्थः ॥ यथाश्रुते तु, अन्तरधिकरणादौ स्पष्टब्रह्मलिङ्गानां समन्वयस्यैव प्रतिपादनेनासङ्गतमेतत्स्यादिति भावः ॥ **अन्यत्र प्रसिद्धेति** ॥ ब्रह्मणीति शास्त्रेण, समन्वयेत्यध्यायेन, लोकतोऽन्यत्र प्रसिद्धनाम्न इति पादेन चान्तर्भावलक्षणा सङ्गतिरुक्ता ॥ लोक इति चतुर्थपादीयानां (शब्दानां) नाम्न इति द्वितीयपादीयानां शब्दानां निरास इति ज्ञेयम् ॥ एवमुत्तरत्रापि ज्ञातव्यम् ॥ शास्त्राध्यायाभ्यां सहिता पादसङ्गतिरिति विग्रहः ॥ **श्रुत्यधिकरणसङ्गती इति** ॥ येनकेनचित्पूर्वाधिकरणेन तद्विषयश्रुत्या च सङ्गतिरेवापेक्षितेति आद्यसूत्रेण तद्विषयवाक्येन चाक्षेपिकी सङ्गतिरस्तीत्यर्थः । यद्वाऽत्र पूर्वपक्षे आद्यसूत्रे तद्विषयवाक्योक्तजिज्ञासाक्षेपात्सिद्धान्ते च

(विवृतिः)

तत्समाधानात्तत्सङ्गती स्त इति प्रयोजनवानेवायं विचार इत्यर्थः । अत एवोत्तरत्र टीकायां किमर्थमानन्दयस्य विष्णुत्वसमर्थनमिति प्रश्नः, ब्रह्मजिज्ञासासिध्यर्थमिति परिहारश्च । एवमुत्तरत्रापि सङ्गतिटीका द्वेधा व्याख्येया । पूर्वाधिकरणस्थ, तन्निष्ठस्य मोक्षोपदेशादिति, सूत्रोक्त-मोक्षजनकज्ञानविषयत्वस्यात्र नेतरोनुपपत्तेरिति परपक्षप्रतिपक्षहेतुत्वेनोपादानादव्यवहितपूर्वाधिकरणसङ्गतिरपि द्रष्टव्या । अप्रतीतार्थत्वाद्विषयवाक्यं व्याचष्टे ॥ **तेनेत्यादिना** ॥ तत्पुरुषविधतामनु एतत्पुरुषविधत्वं किं विवक्षितमित्यत आह ॥ **तस्मादुद्भूत इति** शरीरस्थानीयादान्तरान्नारायणाख्यादानन्दमयाच्छरीरस्थानीयो बाह्यो वासुदेवाख्यो विज्ञानमयः प्रादुर्भूत इत्यर्थः ॥ **उपकारजं प्रियमित्यादि** ॥ जीवगत-वैषयिकसुखाभिप्रायेणोक्तं तच्छब्दवाच्यत्वादिना तज्जातीयं प्रियादिकं विष्णौ बोद्धव्यम् ॥ **प्रकृष्टेति** ॥ यथायोग्यमन्वयः न तु यथाक्रमम् । **आनन्दमयशब्दार्थवदिति** ॥ अनेन हिरण्यगर्भः, आनन्दमय-शब्दवाच्यः, तत्समानार्थकशतानन्दशब्दवाच्यत्वादिति वा, आनन्दमयशब्दः हिरण्यगर्भवाचकः, तद्वाचकशतानन्दशब्दसमानार्थत्वादिति वा मूलभिप्राय इत्युक्तं भवति ॥ **इन्द्रबृहस्पत्यादीनामिति** ॥ तेषां सूर्यादुत्तमतया तन्नियामकत्वेनावस्थानं तदधिष्ठातृत्वम् । आदिपदेन ''स एक इन्द्रस्यानन्दः स एको बृहस्पतेरानन्द इतीन्द्रश्रुत्यादिकं, साधारणो ब्रह्मशब्दश्च विवक्षितः । अनेन ''एवमन्येषामपि'' इत्येतद्भाष्यं, चतुर्मुखरुद्रव्यतिरिक्तसूर्याधिष्ठातृमात्रपरम् । इतरेषां 'सर्वजीवानाम्' इति पृथगुक्तेरित्युक्तं भवति ॥ **बहुभावादेवेति** ॥ न त्वभिमानित्वेनेत्येवशब्दार्थः । **तत्तद्देहगतेति** ॥ अनेनान्नमयत्वादेश्चेत्युक्तो हेतुर्देहाभिमानित्वेन जीवे वर्तत इत्युपपादितं भवति । ननु महायोगविद्वद्रूढिभ्यां ब्रह्मशब्दस्य विष्णुपरत्व-समर्थनाद्विष्णुर्ब्रह्मशब्देन कुतो न गृह्यत इत्यत आह ॥ **यद्यपीति** ॥ अस्त्वानन्दमयत्वं ततः किमित्यत आह ॥ **तस्य चेति** ॥ एकस्यैवावयित्वमवयवत्वं च विरुद्धमिति भावः । सूत्रानुदाहरणेन कथं तद्व्याख्यानमित्यत आह ॥ **सङ्गत्यर्थमुदाहृतेति** ॥ सङ्गतिप्रदर्शनार्थमित्यर्थः । यद्वा सङ्गत्यर्थं व्याचष्ट इत्यन्वयः । तथा च 'किं तु विष्णुरेव' इत्यनुक्तौ साध्यधर्मांशालाभेन पर्वतो धूमवत्वादित्यनयोरिवानन्द-मयोऽभ्यासादित्यनयोरप्यसङ्गतिः स्यात् । तदुक्तौ तु वह्निमानित्युक्ते कुतः पर्वतोऽग्निमानित्याकांक्षायां हेतुवाक्यसङ्गतिवदत्राप्यभ्यासादित्यस्यानन्दमय इत्यनेन सङ्गत्यर्थं समन्वयसूत्रात्तदेवेत्यनुवर्त्यानन्दमय इति प्रतिज्ञाभागं व्याख्यातीत्यर्थः । एवमन्तः श्रूयमाणो विष्णुरेवेत्यादावपि द्रष्टव्यमिति भावः । भाष्ये ''इत्यादिषु ब्रह्मशब्दाभ्यासात्'' इत्यन्वयभ्रमं वारयन् तदर्थमाह ॥ **आनन्दमये ब्रह्मशब्दाभ्यासादिति** ॥ अनेन तस्मिन्नित्यस्यानन्दमयपरत्वेनावृत्याऽभ्यासादित्यत्राप्यन्वय इत्युक्तं भवति । अस्तु ब्रह्मशब्दाभ्यासः, तावता विष्णुरानन्दमयः कुत इत्यत आह ॥ **ब्रह्मशब्दस्येति** ॥ **श्रुतिस्मृतिष्विति** ॥ अनेन

(विवृतिः)

इत्यादिष्वित्यस्य प्रसिद्धपदेनान्वयः प्रदर्शितो भवति । तस्मिन्नेवेत्येतद्विष्ण्वैकेति व्याख्यातं भवति । नन्वन्नमयादिपञ्चकस्य ब्रह्मत्वमत्राभिप्रेतम् । तथा चाभ्यासरूपहेतोः विज्ञानानन्दमययोः सत्वेऽपि अन्नमयादित्रिकेऽभावात् हेतुर्भागासिद्ध इति कथं तेन तेषां ब्रह्मत्वंसिद्धिरिति चेत् मैवम् । न ह्यत्रैकप्रकारासकृदुक्तिरूपोऽभ्यासो विवक्षितः किं त्वभ्यासशब्देन तदुक्तिमात्रम् । अत एव भाष्ये येऽन्नं ब्रह्मेति ब्रह्मशब्दादिति, टीकायां ब्रह्मशब्दश्रवणादिति चोक्तम् ॥

## सूत्रभाष्यम्

### ॥ ॐ विकारशब्दान्नेति चेन्न प्राचुर्यात् ॐ ॥ १३ ॥

**विकारात्मकत्वात्तदभिमानित्वाच्च युज्यते प्रकृत्यादीनां मयट्शब्दः । न तु परमात्मन इति मा भूत् । प्रचुरानन्दत्वाद्धि आनन्दमयः । न तु तद्विकारत्वात् । अन्नादीनां च प्राचुर्यमेव । 'अद्यतेऽत्ति च' इति (तै.उ. २-२) व्याख्यानात्तत्प्राचुर्यं च युज्यते ।**

**उपजीव्यत्वमेवाद्यत्वम् । 'स वा एष' (तै.उ. २-२) इत्यन्यप्रारम्भात् । 'येऽन्नं ब्रह्मोपासत' (तै.उ. २-२) इत्यादिब्रह्मशब्दाद्बहुरूपत्वाच्च न विकारित्वमविरोधश्च । न च पृथक्कल्पना युक्ता । स्वरूपे च युज्यते प्रचुरप्रकाशो रविरितिवत् ॥ १३ ॥**

## सत्तर्कदीपावली

उक्तार्थमाक्षिप्य समादधत्सूत्रमवतार्य व्याचष्टे ॥ **विकरशब्दादित्यादिना ॥** ननु मयटो विकारार्थत्वादानन्दमयशब्दो विकारात्मिकायां प्रकृतौ विकाराभिमानिषु ब्रह्मादिजीवेषु च युज्यते । न त्वविकारिणि परमात्मनि इति चेत् मैवम् । आनन्दादिविकारित्वाभावेऽपि परमात्मन आनन्दप्रचुरत्वसद्भावात्तद्विषयतया आनन्दमयशब्दोपपत्तेः । अन्नमयो यज्ञ इत्यादौ प्राचुर्येऽपि मयट्प्रयोगदर्शनात् । न चान्नमयादिषु मयटो विकारार्थत्वेन तत्सन्निधिपठितानन्दमयशब्देऽपि तस्य विकारार्थत्वमेवेति वाच्यम् । अन्नमयादिपदेष्वपि मयटः प्राचुर्यार्थत्वाद्युपगमेन विकारार्थत्वाभावात् । न चाप्राकृतविग्रहे परमात्मन्यन्नादिप्राचुर्यं विरुद्धमिति वाच्यम् । अद्यतेऽत्ति च भूतानि । तस्मादन्नं तदुच्यत इति श्रुत्या अद्यत्वात्तृत्वयोस्तत्रान्नशब्दार्थत्वेनोक्तत्वात् प्राचुर्यस्य विष्णावविरोधात् । एवं प्राणादिप्राचुर्यमपि तस्मिन्युज्यते । निखिलभूतात्तृत्वेन परमात्मन्यवगते तस्मिन्नद्यत्वं नाम न भक्ष्यत्वं किन्तूपजीव्यत्वमेवेत्यवगन्तव्यम् । तत्रौषधीभ्योऽन्नमिति प्रकृतान्नपरित्यागेन परमात्मविषयत्वस्यावश्यम्भावित्वात् अन्नमयादीन्प्रत्युदाहृतश्लोकेषु तद्विषयत्वेन येऽन्नं ब्रह्मोपासते ये प्राणं ब्रह्मोपासते

(सत्तर्कदीपावली)
आनन्दं ब्रह्मणो विद्वान् । विज्ञानं ब्रह्म चेद्वेद । अस्ति ब्रह्मेति चेद्वेदेति ब्रह्मशब्दश्रवणाच्च । अन्नमयादीनां न विकारित्वम् । एकस्यैव ब्रह्मणो बहुभवनसामर्थ्यादन्नमयादिपञ्चरूपत्वाविरोधः । यत्तु कल्पनम् अन्नमयादिषु चतुर्षु मयटो विकारार्थत्वमानन्दमय एव तु प्राचुर्यार्थकत्वमिति तद्युक्तिशून्यमित्युपेक्षणीयम् । प्रकाशरूपस्य रवेः प्रकाशप्राचुर्यवदानन्दादिरूपस्य हरेरानन्दप्राचुर्यं न विरुद्ध्यते । इतोऽप्यत्रानन्दमयपदोक्तः आनन्दप्रचुर एव परमात्मा ।

## तत्त्वप्रदीपिका

विकारशब्दान्नेति चेन्न प्राचुर्यात् । विकारात्मकत्वात्प्रकृतेः कार्याभेदेन सत्त्वार्थत्वादानन्दमयशब्दस्याऽनन्दमयत्वं जडप्रकृतेर्युज्यते । विकारभूतशरीराद्यभिमानित्वादन्येषां च । न तु परमात्मन इति शङ्का मा भूत् । आनन्दमयशब्देनाऽनन्दप्रचुरत्वं ह्युच्यते । आनन्दमहान् आनन्दप्रचुरः विद्यामहान् धनमहानितिवत् । स्पष्टत्वाय प्रचुरानन्दत्वाद्ध्यानन्दमय इत्युक्तम् । प्रचुरानन्दत्वमेवाऽनन्दप्रचुरत्वम् । न ह्यल्पानन्द आनन्दमहान् भवति ॥

अन्नादीनां चेत्यादेरयमर्थः । अत्र ह्यन्नमयः प्राणमयो मनोमयो विज्ञानमय आनन्दमयश्च श्रूयन्ते । तेषामन्नादीनां च प्राचुर्यमेव मयट्शब्दार्थः । 'अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यत' इत्यन्नशब्दव्याख्यानाद् भूताद्यत्वभूतात्तृत्वाच्चान्नम् । न ह्यन्यान्नस्य भूतात्तृत्वं, 'प्राणं देवा अनुप्राणन्ति मनुष्याः पशवश्च ये' इति सर्वप्राणनहेतुत्वं च न ब्रह्मणोऽन्यस्य युज्यते । 'यतो वाचो निवर्तन्त' इत्यादि मनोमयस्योच्यमानं वाङ्मनसागोचरत्वं च नान्यस्य युज्यते । विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च' इत्यादिना कर्मकरणहेतुत्वं सर्वदेवोपास्यत्वं च । अतः पञ्चस्वपि प्राचुर्यमेव मयट्शब्दार्थः ।

> अत्तृत्वात्सर्वलोकानामन्नमित्युच्यते हरिः ।
> उपजीव्यश्च भूतानामिति चान्नं जनार्दन ॥ इति यजुस्संहितायाम् ।

तस्मान्नेदं प्रसिद्धान्नं, कुतः? 'स वा एष पुरुषोऽन्नरसमय' इत्यन्यस्यैव प्रारम्भात् । 'पृथिव्या ओषधयः, ओषधीभ्योऽन्नम्, अन्नात्पुरुषः, स वा एष पुरुषोऽन्नरसमय' इत्यत्र नह्योषधिप्रसूतान्नकार्यशरीरं तदभिमानी जीवो वोच्यते । किं तर्हि? 'तस्माद्वा एतस्मादात्मन' इति प्रारम्भः । एतदुक्तं भवति । 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूत' इत्यारभ्याऽकाशादिशब्दैराकाशादिभूतभौतिकानां पुरुषपर्यन्तानां परमात्मन उत्पत्तिं, तदभिमानिजीवानां देहोत्पत्तिं, तेषां तदभिमानोत्पत्तिं, परमात्मनस्तत्प्रवर्तकत्वेन तत्राभिव्यक्तिविशेषं चोक्त्वा 'स वा एष पुरुषोऽन्नरसमयः' इति तत्तत्सारभूतत्वेन तत्तच्छब्दपरमवाच्यस्य जीवपर्यन्तमनुगतस्य परमस्योपासनार्थं पञ्चरूपप्रतिपादनं प्रारभ्यते । न त्वन्यदुच्यते । अतो विष्णुरेवान्नमयादिशब्दोक्तः ॥

(तत्त्वप्रदीपिका)

येऽन्नं ब्रह्मोपासत इत्यादिब्रह्मशब्दाद्बहुरूपत्वाच्च न विकारत्वमविरोधश्चेति । 'येऽन्नं ब्रह्मोपासते, ये प्राणं ब्रह्मोपासते, आनन्दं ब्रह्मणो विद्वान्, न बिभेति; विज्ञानं देवास्सर्वे ब्रह्म ज्येष्ठमुपासते, असन्नेव स भवति असद्ब्रह्मेति वेद चेत्, अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः' इति तत्र तत्र ब्रह्मशब्द-प्रयोगान्नान्नमयादीनां विकारत्वम् । न चाब्रह्मणि ब्रह्मत्वोपासनं युक्तमित्यभिधास्यते । न च बहुत्वेऽप्यन्न-मयादीनां ब्रह्मत्वविरोधः । एकस्यैव ब्रह्मणो बहुरूपत्वसम्भवात् । चशब्दादेकस्यैव चेदं बहुरूपत्ववचनम्, एतमन्नमयमात्मानमुपसङ्क्रामति, एतं प्राणमयमात्मानम्' इत्येकस्यैवाऽऽदानादिकर्तुः सविशेषमनुकर्षणात् । न च पृथक्कल्पना युक्ता । अयमर्थः । अन्नमयादिषु विकारार्थो मयट्शब्दः । आनन्दमये प्राचुर्यार्थ इति या भास्करीयकल्पना सा न युक्ता । सम्भवत्येककल्पने न च पृथक्कल्पना युक्ता । 'येऽन्नं ब्रह्मोपासत' इत्यादिषु मयट्शब्दाभावान्नान्नमयादिरुच्यत इति वाक्यभेदप्रसङ्गात् । प्रचुरान्नस्यैवान्नशब्दमुख्यार्थत्वाच्च । 'अद्यतेऽत्ति च' इत्युक्तत्वाच्च ।

न च मायिनामन्या पृथक्कल्पना युक्ता 'सत्यं ज्ञानमनन्तं ब्रह्म, तस्माद्वा एतस्मादात्मन' इत्यत्र ब्रह्मोच्यते, अन्नमयादयः पञ्चकोशा मिथो भिन्नाः, तेषां ब्रह्मशब्दोक्तत्वेऽप्यब्रह्मत्वमन्त्यपुच्छस्य ब्रह्मत्वं, श्रुतिप्रसिद्धादन्नमयाद्युपसङ्क्रमणादन्यस्तदतिक्रमो मोक्षः, 'अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचम्' इति वरुणोक्तानां चक्षुःश्रोत्रवाचां नान्नमयादिष्वनुवृत्तिः, 'अन्नं ब्रह्मेति व्यजानात्' इत्यादौ पञ्चमस्याऽऽनन्दस्य ब्रह्मत्वम् 'एतमानन्दमयमात्मानमुपसङ्क्रम्य' इत्येतस्मादब्रह्मानन्दातिक्रमनिर्गुणवाक्यात्पृथगेव 'इमांल्लोका-न्कामान्नी कामरूप्यनुसञ्चरन्' इत्यादिको वाक्यशेषः श्रुत्यन्तरगतसगुणब्रह्मोपासनवाक्येनैकवाक्यतया तत्फलप्रतिपादक इत्यादिका । उक्तहेतुभिरत्यन्तासङ्गतत्वात् श्रुतहान्यश्रुतकल्पनाप्रसङ्गाच्च । 'तस्माद्वा एतस्मादन्नरसमयादन्योऽन्तर आत्मा वाङ्मयः, तस्माद्वा एतस्माद्वाङ्मयादन्योऽन्तर आत्मा चक्षुर्मयः, तस्माद्वा एतस्माच्चक्षुर्मयादन्योऽन्तर आत्मा श्रोत्रमयः, तस्मात्प्राणमयः, तस्मान्मनोमयः, तस्मा-द्विज्ञानमयः, तस्मादानन्दमय' इति हि वाधूलकश्रुतिः वाक्चक्षुश्श्रोत्राणि चान्नमयादिष्वनुवर्तयति ।

ननु प्रतियोग्यल्पत्वापेक्षया प्रचुरशब्दः प्रयुज्यते, यथा दुःखप्रचुरः संसार इति । अत आनन्दप्रचुर इत्युक्ते दुःखलवकलिलत्वं च प्रतीयत इत्यत आह– **स्वरूपे चेति** । स्वरूपे च युज्यते प्रचुरशब्दः । न हि प्रचुरप्रकाशो रविरित्युक्तेऽल्पान्धकारसाहित्यमादित्ये प्रतीयते, किं तर्हि महाप्रकाशस्वरूपत्वमेव । 'आनन्दमयोऽभ्यासात्' इत्यत्राऽऽनन्दमयशब्दोऽन्नमयाद्युपलक्षणार्थः । पूर्णानन्दवाचिनः आनन्दमयशब्दस्य 'भूमैव सुखम्' इति श्रुतेरत्यन्तभूमार्थत्वाद्भूमा च समस्तगुणोत्कर्षात्मकत्वादानन्दमयपदेनान्नमयादयस्सूत्रिता भवन्ति ।

## तत्त्वप्रकाशिका

उक्तार्थमाक्षिप्य समादधत्सूत्रं पठित्वा व्याचष्टे ॥ **विकारेति** ॥ नायमानन्दमयो विष्णुः किन्तु प्रागुक्तप्रकृत्यादय एव । विकाराभिधायकमयट्शब्दप्रयोगात् । विकारार्थशब्दवाच्यत्वं हि विकारित्व-विकाराभिमानित्वाभ्यां सम्भवति । तथा च विकारात्मकत्वादचित्प्रकृतेश्चेतनप्रकृत्यादीनां विकाराभिमानि-त्वात्तेषु मयट्शब्दो युज्यते न विष्णोस्तस्याविकारित्वादतदभिमानित्वाचेति शङ्का मा भूत् । यतः प्रचुरानन्द-त्वादानन्दमयपदेनानन्दमयः कथ्यते न त्वानन्दविकारत्वात् । 'तादात्म्यार्थे विकारार्थे प्राचुर्यार्थे मयट् त्रिधा' इति प्राचुर्येऽपि मयट्प्रयोगादिति भावः । आनन्दप्रचुर इति यद्युच्यते ब्राह्मणप्रचुरो ग्राम इत्यादिवदना-नन्दस्यापि प्राप्तेः प्रचुरानन्द इति विपरीतसमासः कृतः । प्रचुरानन्द इत्यभिधाने पूर्णानन्द इत्येव प्रतीतेः । नायमानन्दमयशब्दः प्रचुरानन्दतामभिधत्ते किन्तु विकारार्थत्वमेव । अन्नादिविकारार्थान्नमयादिशब्दैः सह पठितत्वादित्यत आह ॥ **अन्नादीनां चेति** ॥ भवेत्प्रायपाठविरोधो यद्यानन्दमयपदेनैवानन्दप्राचुर्यमुच्यत इत्यभ्युपगतिः । नासावस्ति । अन्नादीनां च प्राचुर्यमेवान्नमयादिशब्दार्थ इत्यभ्युपगमादिति भावः । ननु कथमत्रान्नमयशब्दोऽन्नप्राचुर्यार्थः । अन्नप्राचुर्यकथनस्यात्यल्पत्वादित्यत आह ॥ **अद्यत इति** ॥ अन्नप्राचुर्यं चान्नमयशब्दार्थो युज्यते । अत्रान्नशब्देन भूताद्यत्वतदत्तृत्वस्याभिधानेनाल्पार्थत्वाभावात् । प्रसिद्धान्नार्थत्व एव तत्प्राप्तेः । कुतोऽयमन्नशब्दार्थो न प्रसिद्धान्नं येनाल्पार्थत्वाभावः । 'अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यत' इत्यन्नशब्दव्याख्यानात्प्रसिद्धान्नस्य भूतात्तृत्वायोगादिति भावः ।

ननु प्रचुरभूताद्यत्वं कथमभिसंहितं ब्रह्मण इत्यत आह ॥ **उपजीव्यत्वमेवेति** ॥ 'ओषधीभ्योऽन्नम् अन्नात् पुरुषः' इति प्रसिद्धान्नविकारदेहमुक्त्वा स वा एष पुरुषोऽन्नरसमय इति तत्परामर्शात्कथमन्नमय-शब्दस्तत्प्राचुर्यार्थ इत्यत आह ॥ **स इति** ॥ भवेदेतद्यदि प्रसिद्धान्नविकारपुरुषपरामर्शोऽयं भवेत् । न चैवं यस्मादात्मन आकाशादिकम् उत्पन्नं स एष इत्यात्मपरामर्शोपपत्तेरित्यर्थः । किमर्थमसौ परामृश्यत इत्याशङ्कापनोदाय परामर्शादिति वक्तव्ये प्रारम्भादित्याह । आत्मन आकाशादिकारणत्वमुक्त्वा तस्यैवान्नमयादिपञ्चरूपत्वप्रदर्शनाय पुनः प्रक्रान्तत्वान्न तत्परामर्शवैयर्थ्यमिति भावः । एवं प्राणमनश्शब्द-योश्चेष्टकत्वावबोधार्थत्वेन प्राचुर्यार्थतयाऽल्पार्थता परिहरणीयेति । नन्वेवं मयट्शब्दस्योभयार्थे प्रयोगा-दत्राप्युभयपक्षे दोषादर्शनात्किं प्राचुर्यमेवार्थो न विकारित्वं पञ्चमयटामित्यत्र नियामकम् । अन्नमयादिपञ्चानां ब्रह्मताभ्युपगतावेकमेवाद्वितीयमित्यादिश्रुतिविरोधश्च स्यादित्यत आह ॥ **येऽन्नमिति** ॥ 'येऽन्नं ब्रह्मोपासते' 'ये प्राणं ब्रह्मोपासते' 'आनन्दं ब्रह्मणो विद्वान्' 'विज्ञानं ब्रह्म चेद्वेद' 'अस्ति ब्रह्मेति चेद्वेद' इत्यन्नमया-दीन्प्रत्युदाहृतश्लोकेषु तद्विषयत्वेन ब्रह्मशब्दश्रवणादुभयथापि सम्भवतां मयटामनन्यथासिद्धतत्समभिव्याहारान्न विकारित्वमर्थोऽपि तु प्राचुर्यमेवेति निश्चीयते । न चान्नमयादीनां पञ्चानामपि ब्रह्मत्वाभ्युपगतावेक-

(तत्त्वप्रकाशिका)

मेवाद्वितीयमित्यादिश्रुतिविरोधः । एकस्यैव ब्रह्मणो बहुरूपत्वेन पञ्चत्वोपपत्त्या श्रुत्यविरोधादिति भावः । एवमन्नमयादिपञ्चकमपि ब्रह्म तद्गतमयटां प्राचुर्यार्थतैव सावकाशस्य निरवकाशब्रह्मशब्दबलादेकार्थत्वोपपत्तिरित्युक्तम् । अन्ये त्वानन्दमय एव ब्रह्म तद्गतमयट एव प्राचुर्यार्थतेति कल्पयन्ति तदयुक्तमित्याह ॥ **न चेति ॥** न चेयं कल्पना युक्ता । प्रायपठितमयटामर्थद्वैविध्यकल्पनस्य क्लिष्टत्वात् । ततश्चैकस्यैव ब्रह्मत्वं क्लिष्टमिति भावः । न च सूत्रविरोधः । यदा खलु ब्रह्मशब्दादानन्दमयस्य ब्रह्मतामसाधयत्सूत्रकारस्तदा ब्रह्मशब्दवतामन्नमयादीनां च ब्रह्मतामनुजज्ञे । तथैव द्वितीयं सूत्रं नेयमन्यथाऽन्नमयादिषु सन्नपि ब्रह्मशब्दो ब्रह्मतामसाधयन् कथमानन्दमयस्यापि साधयेत्कथं चान्नमयादिषु स्थितो मयट्शब्दः प्राचुर्यार्थतामलभमान आनन्दमये श्रुतो लभेत । न चास्ति तत्र बाधकविशेषो स्थितो मयट्शब्दः प्राचुर्यार्थतामलभमान आनन्दमये श्रुतो लभेत । न चास्ति तत्र बाधकविशेषो येन द्वैविध्यं कल्प्येत । अन्नमयादीनामपि तर्हि ब्रह्मतां किं नासूत्रयदिति चेत् । सूत्रस्याल्पाक्षरत्वादेव । आदिमत्त्वेऽप्यन्नमयादीनामानन्दमयस्य सङ्गतत्वेन ग्रहणम् । यस्त्वन्नमयादीनां पञ्चानामप्यब्रह्मतां ब्रूते स तु सूत्रकारेणैव पूर्वपक्षीकृत इति न तत्पक्षं प्रत्याक्षिपद्भाष्यकारः । नन्वानन्दादिस्वरूपस्य ब्रह्मणः कथं प्रचुरानन्दत्वादिकं घृतप्रचुर ओदन इत्यादौ भेद एव प्रयोगादित्यत आह ॥ **स्वरूपे चेति ॥** यथा प्रकाशस्वरूपेऽपि रविबिम्बे विशेषेण प्रचुरप्रकाशो रविरिति व्यपदेशस्तथाऽऽनन्दादिरूपेऽपि हरौ विशेषेण तद्व्यपदेशो युज्यत इत्यर्थः ॥ १३ ॥

## गुर्वर्थदीपिका

धातूनामनेकार्थत्वात्सर्वात्तरि ब्रह्मणि प्रयुज्यमानमिदमद्यत्वमुपजीव्यत्वमिति भावेनोक्तम् । उपजीव्यत्वमेवाद्यत्वमिति । प्रचुरश्वासवत्त्वस्य श्वासाख्यव्याधिसूचकतया प्रचुरमनोवत्त्वस्य च बहुविषयाभिलाषित्वाख्यदूषणसूचकतयाऽल्पार्थत्वं मा भूदिति भावेनाह ॥ **एवमिति ॥** ब्रह्मशब्दबलादन्नमयादीनामपि ब्रह्मत्वाङ्गीकारे मयटः प्राचुर्यार्थत्वावश्यम्भावेन विकाराख्यदोषस्य गर्भस्रावेणैव गतत्वेऽपि दोषान्तरं शङ्कते । **अन्नमयादीनामिति ॥** एकस्मिन्नेव नटे सौभर्यादौ च स्वस्वकार्यार्थं बहुरूपत्वदर्शनान्न तदैक्यविरोधीति स्मारयितुं बहुरूपत्वादविरोध इत्याह भगवान्भाष्यकारः । एकस्मिन्नेव प्रकरणे पृथगर्थकल्पनाया एव वाक्यभेदाख्यदोषापादकत्वान्न पुनर्दोषान्तरं वाच्यमिति भावेनाह । **न च पृथक्कल्पना युक्तेति ॥** ननु ब्रह्मशब्दाभ्यासस्याऽऽनन्दमयप्रकरण एव सत्त्वात्तस्यैव ब्रह्मता सूत्रकृतोऽभिमता नान्येषामिति चेत् ब्रह्मशब्दस्य परब्रह्मणि मुख्यत्वमाश्रित्य सिद्धान्तश्चेदेकोऽपि ब्रह्मशब्दोऽलम् । अमुख्यार्थत्वे तु शतमप्यन्धानां न पश्यतीति न्यायेनाभ्यासशतकस्यापि वैयर्थ्यम् । अत आदिसूत्रे ब्रह्मशब्देनैव जीवव्यतिरिक्तपरब्रह्मविषयतां सूचयता सूत्रकारेणेहापि तदेव ब्रह्मेत्यादिश्रुत्या विष्णोरेव

(गुर्वर्थदीपिका)

ब्रह्मत्वस्यावधारणात्परब्रह्मासाधारणब्रह्मशब्दादेवाऽऽनन्दमयादीनां ब्रह्मताऽभिमता । अभ्यासस्तु वैभवादेव कथित इति भावेनोक्तं यदा खलु ब्रह्मशब्दादिति । घृतप्रचुर ओदन इत्यत्र घृते प्रचुरशब्दप्रयोगादन्ने तदप्रयोगाच्च यथा भेदः । एवमानन्दे प्रचुरशब्दप्रयोगे ब्रह्मणि च तदप्रयोगे तयोरपि भेदः स्यादिति शङ्कते । **नन्विति** । यद्वा विशेषणकोटौ प्रविष्टत्वाद्यथा घृतस्य विशेष्यभूतान्नाद्भेदः तथाऽऽनन्दस्यापि ब्रह्मणो भेद इति शङ्कितुरभिप्रायः ।

## भावबोधः

विपरीतसमासः कृत इति । सूत्रे प्राचुर्यादित्युक्तत्वादानन्दस्येत्यर्थलब्धम् । एतदर्थकभाष्ये समासकरणेऽपि प्राचुर्यपदस्य परनिपात एव कर्तव्यो यद्यपि, तथाप्युक्ताभिप्रायेण भाष्ये विपरीतसमासः कृत इत्यर्थः । प्रचुरानन्द इत्यभिधान इति । सूत्रे प्राचुर्यस्य विशेष्यतयोक्तावपि स्वयं विशेषणत्वेन तदभिदधता यथा प्रचुरप्रकाशो रविरित्युक्ते प्रकाशविरोध्यन्धकारलेशाप्राप्तिवत् प्रकाशप्रचुर इत्युक्तेऽपि तदप्राप्तिः प्रत्यक्षविरोधात् तथा प्रचुरानन्द इत्युक्ते दुःखलेशाप्राप्तिवद् आनन्दप्रचुर इत्युक्तेऽपि तदप्राप्तिः श्रुत्यादिविरोधादिति सूचितं भवतीत्यर्थः ।

एवं देहादिपर्यन्तमागतं हरिमेव तु ।
परामृशति तस्यैव पञ्चरूपत्ववित्तये ॥

इत्यनुव्याख्यानं मनसि निधायाह– **आत्मन आकाशादिकारणत्वमिति** । प्रारम्भशब्दस्यार्थमाह प्रक्रान्तत्वादिति । विज्ञानप्राचुर्यस्य सार्वज्ञ्यपर्यवसानेनाऽल्पार्थत्वाभावेऽपि प्राणमनश्शब्दयोः श्वासरूप-वाय्वन्तःकरणार्थत्वे तत्प्राचुर्यस्याल्पत्वेन कथं तद्गतमयटोः प्राचुर्यार्थत्वं स्यादित्यत आह एवं **प्राणमनः-शब्दयोरिति** । 'उपलक्षणत्वं शब्दानामानन्दमयपूर्विणाम्' इत्यनुव्याख्यानं मनसि निधायाऽऽह यदा खल्वित्यादि । अनुजज्ञ उपलक्षणतयेत्यर्थः । कथमानन्दमयस्यापि साधयेदिति ।

ननु सूत्रे ब्रह्मशब्दाभ्यासो हेतूकृतः । अभ्यासपदमुख्यार्थश्चैकप्रकारासकृदुक्तिरूपः । स एवास्तु प्रकृते विवक्षितः; न तु ब्रह्मशब्दमात्रम् । तथा च कथमतिप्रसङ्ग इति चेत्, न । तथापि विज्ञानमयेति प्रसङ्गतादवस्थ्यात् । तत्रापि विवक्षिताभ्यासस्य विद्यमानत्वादिति भावः । 'सूत्रस्याल्पाक्षरत्वेन' इत्यनुव्याख्यानं मनसि निधायाह– **सूत्रस्याल्पाक्षरत्वादेवेति** ॥ तर्हि प्रथमातिक्रमे कारणा-भावात्ततोऽल्पाक्षरत्वाच्चान्नमयोऽभ्यासादित्येव सूत्रणीयमित्याशङ्क्य,

(भावबोधः)

आनन्दमयरूपे तु ब्रह्मणः पुच्छतोक्तितः ।
समस्ताब्रह्मताप्राप्तेरानन्दमयनाम हि ॥

इत्यनुव्याख्यानं मनसि निधाय समाधानमाह– आदिमत्त्वेऽप्यन्नमयादीनामिति । **विशेषेणेति** । विशेषबलादित्यर्थः ।

## भावदीपः

॥ **ॐ विकारशब्दान्नेति चेन्न प्राचुर्यात् ॐ** ॥ उपलक्षितान्नमयादेर्ब्रह्मत्वप्रकारश्चाग्रे वक्ष्यते । भाष्ये उक्तार्थाक्षेपाप्रतीतेराह ॥ **नायमिति** ॥ पूर्वसूत्रादनुवृत्तस्यानन्दमयो विष्णुरित्यस्य सौत्रनत्राऽन्वय इति भावः । सूत्राक्षरार्थमुक्त्वा भाष्यं योजयति ॥ **विकारार्थेति** ॥ प्रकृत्यादीनामित्यत्र यथायोगं हेत्वोरन्वयमाह ॥ **तथा चेति** ॥ **अविकारित्वादिति** ॥ अविकारोऽक्षरः शुद्ध इत्यादेरिति भावः । अभिमानित्वं पराधीननियन्तृत्वम् । तच्च हरौ नेति प्रागुक्तहेत्वोर्विपर्ययेण न तु परमात्मन इत्यत्रान्वय इति भावः । इति चेन्नेति सौत्रांशार्थः ॥ **इति शङ्का मा भूदिति** ॥ भाष्ये शङ्केति शेष इति भावः । भाष्यस्थहिशब्दार्थो यत इति । तेन प्राचुर्यादिति सूत्रांशः आनन्दप्राचुर्यादानन्दमय इति व्याख्यातः । मयटो वैयर्थ्यापत्तेस्तादात्म्यार्थो नेति भावः । गीताभाष्योक्तं वाक्यमाह ॥ **तादात्म्यार्थ इति** ॥ **आनन्दप्रचुर इतीति** ॥ ननु भाष्ये विपरीतसमासेन दुःखासम्भिन्नपूर्णानन्दप्रतीतावपि श्रुतिसूत्रयोरेव-मभावादनानन्दधीस्तत्र परैरुच्यते । तथा आनन्दप्रचुर इत्युक्तावपि । नक्षत्रादिप्रकाशापेक्षया प्रचुरप्रकाशो रविरितिवत् जीवगतानन्दाल्पत्वापेक्षया दुःखास्पृष्टपूर्णानन्दस्यैव प्रतीतेः । अन्यथा सवितर्यन्धकारलेशधीः स्यादिति । तदुक्तं सुधायां 'प्राचुर्यार्थश्च मयट' इत्यादेर्व्याख्यावसरे पदार्थान्तरगताल्पतद्धर्मपेक्षयो-पपत्तेरिति । आनन्दप्रचुर इति यद्युच्यते इत्येव पाठः । आनन्दप्रचुर इति यथास्थिताभिधान इत्यपि क्वचित्पाठः । भाष्यास्थचशब्दार्थं व्यनक्ति ॥ **यद्यानन्दमयपदेनैवेति** ॥ भाष्ये शेषोक्तिः **अन्नमयादीति** । तत्प्राचुर्यं च युज्यत इत्यस्यार्थोऽन्नेति । व्याख्यानादित्यस्यार्थोऽभिधानेनेति । भूताद्यत्वतदत्तृत्वस्येति समाहारद्वन्द्वः । तदेव वाक्यमन्यथापि व्याचष्टे कुतोऽयमित्यादिना ॥ **प्रसिद्धेति** ॥ अन्नशब्दस्यौदने रूढत्वेऽपि श्रौतस्मार्तयोगापेक्षया अज्ञरूढेर्दौर्बल्यस्य कम्पनादित्यत्र वक्ष्यमाणत्वाद्रूढिः प्रबलेति न शङ्क्यमिति भावः ।

॥ **पुरुपेति** ॥ जीवच्छरीरेत्यर्थः ॥ **यस्मादिति** ॥ 'य एष भगवान्विष्णुर्भूतस्रष्टा गुणाधिकः ।

(भावदीपः)

स एव' इति तैत्तिरीयभाष्योक्तेरिति भावः । परामृशति तस्यैव पञ्चरूपत्ववित्तय इत्यनुभाष्योक्तेराह ॥ **पञ्चरूपत्वेति** ॥ **चेष्टकत्वेति** ॥

प्राणं देवा अनुप्राणन्ति मनुष्याः पशवश्च ये ।
आयुः प्राणो हि भूतानामिति यद्गतिजीवने ॥

इत्यनुभाष्यदर्शितवाक्यशेषोक्तचेष्टकत्वतदुपलक्षितजीवनप्रदत्वेत्यपि ग्राह्यम् ॥ **अवबोधेति** ॥ अवबोधार्थो मनुधातुः प्रकीर्तित इत्युक्तदिशेति भावः । एतच्चाग्रे सर्वत्र रसपदविशेषणोक्त्या लभ्यत इति भावः । विज्ञानप्राचुर्यस्य सर्वज्ञतया अल्पताशङ्कानुदयात् श्वासवाय्वन्तःकरणभ्रान्तिनिरासाय द्वयोरेवोक्तिः ॥ **प्राचुर्येति** ॥

महाप्राणो महाबोधो महाविज्ञानवानपि ।
विशेषसामान्यतया विज्ञानमय इत्यपि ॥

इत्यनुभाष्योक्तदिशेति भावः ॥ **एकमेवेति** ॥ एकमेवाद्वितीयं स्वगतभेदविवर्जितमित्यादिछान्दोग्यभाष्यदिशा एकं स्वगतभेदवर्जितम् । भेदाभेदवर्जितं समाधिकवर्जितमित्यर्थादिकपदेन न विरोध इत्यर्थः । एक एवाद्वितीयो भगवानित्यादिरादिपदार्थः पञ्चसु प्रकरणेषु तैत्तिरीयभाष्यप्रदर्शितब्रह्मशब्दानाह ॥ **येऽन्नमिति** ॥ ब्रह्मशब्दादित्यस्य ब्रह्मशब्दश्रवणादित्यर्थमुक्त्वा साध्यं सङ्गमयति ॥ **उभयथेति** ॥ **बहुरूपत्वेनेति** ॥ गुहां प्रविष्टावित्यत्र 'द्वित्वं चैकस्य युज्यत' इत्यनुभाष्योक्तदिशा एकस्यानेकरूपत्वेनानेकत्वं व्युत्पाद्यमपीह तदेव शिष्यहिताय भाष्यकृतोच्यत इति ज्ञेयम् । विवरिष्यते चैतदुत्क्रान्तिगत्यागतीनामित्यधिकरणभाष्ये द्वितीये 'एकशब्दैर्द्विशब्दैश्च बहुशब्दैश्च केशव' इत्यादिना ॥ **न च सूत्रेति** ॥ आनन्दमयोऽभ्यासादित्येकस्यैव ब्रह्मताया द्वितीये तद्गतमयट एव व्याख्यानस्य तृतीये तस्यैव ब्रह्मत्वे जगच्चेष्टकत्वहेतूक्तेश्चेति भावः । पञ्चकस्यापि ब्रह्मत्वं सूत्रकृद्विवक्षितमित्येतज्ज्ञापकोक्त्याऽऽह ॥ **यदेति** ॥ **ब्रह्मशब्दादिति** ॥ सूत्रेऽभ्यासादित्युक्तिस्तु एकविषयासकृदुक्तिरूपमुख्याभ्यासाभावेऽपि पञ्चप्रकरण्यामाहत्यासकृदुक्तिमात्रमस्तीत्यानन्दमयादिविषयत्वेन ब्रह्मशब्दश्रवणादित्यभिप्रायात्पूर्वोक्तदिशा आनन्दमये विज्ञानमये च सोऽस्तीत्यभिप्रायाच्चेति भावः ॥ **नेयमिति** ॥ सर्वमयट्परत्वेन नेयमित्यर्थः ॥ **कथमिति** ॥ व्यभिचारादिति भावः । ननु सूत्रोक्तो मुख्योऽभ्यास आनन्दमयस्थोऽन्यत्रावर्तमानः साधयिष्यतीति चेन्न । विज्ञानं देवाः सर्वे ब्रह्म ज्येष्ठमुपासते । विज्ञानं ब्रह्म चेद्वेदेति

(भावदीपः)

विज्ञानमयेऽपि मुख्याभ्यासश्रवणेन तत्र ब्रह्मत्वावश्यम्भावाच्च । ब्रह्मवल्लीभृगुवल्ल्योः श्रुतस्यान्नमयादेरन्नादेश्चैकत्वेन येऽन्नं ब्रह्मोपासते अन्नं ब्रह्मेति व्यजानादिति श्रवणेन मिलित्वा प्रतिप्रकरणं द्विर्ब्रह्मशब्दश्रवणस्य चन्द्रिकायां प्रदर्शितत्वेनान्नमयादावपि मुख्यस्य ब्रह्मशब्दाभ्यासस्य सत्त्वाच्च । एतेनोपलक्षणत्वं शब्दानामानन्दमयपूर्विणामित्यनुभाष्योक्तिरप्युक्तरीत्या सूत्रकृदनुमतिमूलेति सूचितम् । एतेनोपलक्षणत्वपक्षे सौत्राभ्यासादिति हेतुरस्वरस इति कस्यचिद्दूषणमलग्नं बोध्यम् । भाष्ये अन्नादानां चेत्यादिना द्वितीयसूत्रं सर्वमयट्परतया नीतम् । तत्र सूत्रकृद्विवक्षाज्ञापकमाह ॥ **कथं चेति** ॥ **न चास्ति तत्रेति** ॥ विवृतमेतदुत्तरप्रस्थान इति भावः । अत्रापि किञ्चिद्बाधकमाशङ्क्य निराह ॥ **अन्नमयेति** ॥ **सूत्रस्याल्पाक्षरत्वेनेत्यनुभाष्योक्तेरिति** भावः ॥ **आदिमत्त्वेऽपीति** ॥ अल्पाक्षरत्वेऽपीत्यपि ज्ञेयम् ॥ **सङ्गतत्वेनेति** ॥ ब्रह्मजिज्ञासा कर्तव्येत्युक्तमित्यादिना सङ्गतिमत्त्वेनेत्यर्थः ।

आनन्दमयरूपे तु ब्रह्मणः पुच्छतोक्तितः ।
समस्ताब्रह्मताप्राप्तेरानन्दमयनाम हि ॥

इत्यनुभाष्योक्तेरिति भावः । यद्वा तत्रानन्दादयो गुणा इत्युक्तदिशा माङ्गलिकतया आदौ वक्तव्यतया सङ्गतत्वेनेत्यर्थः । यद्वा आप्तकामस्य ब्रह्मणो जन्मादिसूत्रोक्तजगत्सृष्ट्यादिरयुक्त इति न शङ्क्यम् । आनन्दोद्रेकादेव मत्तस्य नृत्तगानादिवदुपपत्तेरिति वक्तुं सङ्गतत्वेनेत्यर्थः । यद्वा 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान्' इत्यादिपूर्वनयशङ्कितश्रुतीनामपरिच्छिन्नत्वरूपप्राचुर्यादेवावाङ्मनसगोचरत्वम् आनन्दस्य न तु सर्वथेति पूर्वनयेन, तथा भाष्ये वक्ष्यमाणदिशा अन्तराकाशप्राणादिनयैश्च सङ्गतिमत्त्वेनेत्यर्थः । तथाऽवयवत्वविरोधरूपपूर्वपक्षयुक्तिविशेषेण तद्धेतुव्यपदेशरूपसिद्धान्तयुक्तिविशेषेण च सङ्गतत्वेनेत्यर्थः । भाष्यकार इत्युक्त्या अनुव्याख्यानकारस्तु

योगमन्नमयाद्यैर्यत्फलत्वेनास्य शंसति ।
स्थानद्वयेऽप्यतः कोशा एत इत्यतिसाहसम् ॥

इत्यादिनाऽन्यत्र प्रत्याक्षिपदिति सूचितम् । तद्विवृतं चन्द्रिकायाम् । तत्वप्रदीपे च । **यथा प्रकाशेति** ॥ एतत्तृतीये उभयव्यपदेशात्त्वहिकुण्डलवदिति नये प्रकाशाश्रयवद्वा तेजस्त्वादिति गुणसूत्रे व्युत्पादयिष्यमाणमिह शिष्यहितायोच्यत इति भावः । **विशेषेणेति** ॥ विशिष्यते अयं गुणोऽयं गुणीत्यादिरूपेण वस्तु येन स विशेषो वस्तूनां तादृशस्वरूपसामर्थ्यं तेनेत्यर्थः । यथोक्तम् । 'अभिन्नेऽपि

(भावदीपः)

विशेषोऽयं बलादापतति ह्यत' इति जन्मादिसूत्रानुव्याख्यानसुधायाम् । विशेषो नाम शक्तिविशेषोऽङ्गीकरणीय इति भेदहीनेऽपि वस्तुन्यस्ति कश्चिच्छक्तिविशेष इति च । तथा 'गुणक्रियादयो विष्णोः स्वरूपं नान्यदिष्यत' इत्यादितृतीयपरिच्छेदस्थतत्त्वनिर्णयवाक्यस्य टीकायामपि विशेषो नाम कश्चिद्वस्तुनः शक्तिरिति । समर्थितश्चायं विशेषोऽनुव्याख्यानादौ तत्र तत्र । तद्विवरणं चोपाधिखण्डनभावप्रकाशिकायां व्यक्तम् ॥ १३ ॥

## अभिनवचन्द्रिका

टीकायाम् (१३.सू.) **उक्तार्थमाक्षिप्येति** ॥ तटस्थरीत्या उक्तार्थमाक्षिप्येत्यर्थः । एतेन यथा अविकारित्वान्नानन्दमयो विष्णुः, तथाऽऽनन्दमयस्य पुच्छमपि अविकारिणः विकार्यवयवत्वायोगात् । ततश्च न जिज्ञासाक्षेप इति परास्तम् । अस्य तटस्थत्वेन जिज्ञासाक्षेपानाग्रहात् । अत्र गुणसूत्रम् । 'विकारशब्दान्नेति चेन्न प्राचुर्या'दिति विकारार्थकमयडन्तशब्दाऽभिधेयत्वेन दोषवानानन्दमयो न विष्णुः, सदोषनिर्दोषयोरभेदायोगादिति चेत्, न – प्रकृत्यर्थानन्दप्राचुर्यान्निमित्तादानन्दमयशब्दवाच्यस्य दोषित्वाभावादिति सूत्रार्थः (१३.सू०) । **नायमानन्दमय इति** ॥ आनन्दमयशब्दघटितैतद्वाक्यप्रतिपाद्यो न विष्णुः, किंतु प्रकृत्यादय एवेत्यर्थः । **विकारेति** ॥ एतद्वाक्यप्रतिपाद्ये विकाराभिधायकमयट्प्रत्ययप्रयोगादित्यर्थः । मयट्प्रत्ययप्रयोगायोगादिति वक्तव्ये मयट्शब्दप्रयोगादित्युक्तिः शब्दात्मकोऽयं प्रत्यय इति ज्ञापनाय । 'सन्ति हि शब्दात्मका अपि प्रत्ययाः । द्वित्वे गोयुगच्छब्दः प्रत्ययो वक्तव्यः । उष्ट्रगोयुगम्; खरगोयुगम् । स्नेहने तैलच्शब्दश्च प्रत्ययो वक्तव्यः । इङ्गुदतैलम् । भवने क्षेत्रे शाकटशब्दश्च प्रत्ययो वक्तव्यः । इक्षुशाकटम्, मूलशाकटम्' इति महाभाष्योक्तेः । **प्रचुरानन्दत्वादिति** ॥ आनन्दमयस्य आनन्दमयपदवाच्यत्वे यद्यानन्दविकारित्वं प्रवृत्तिनिमितं स्यात्, तदा विष्णोस्तदभेदो न स्यात्, न चैवं किं नाम प्रचुरानन्दत्वं प्रवृत्तिनिमित्तं 'द्व्यचः छन्दसी'(पां.सू.४-३)ति सूत्रेण विकारावयवार्थकमयटः छंदसि द्व्यच एव विधानात् आनन्दशब्दस्य त्र्यच्त्वेन विकारार्थकमयट्प्रत्ययायोगादिति भावः । ननु प्राचुर्यार्थको मयडित्ययुक्तम् । मयटः प्राचुर्येऽनुशासनाभावादित्यत आह– **तादात्म्यार्थ इति** ॥ प्रयोगसिद्धत्वात् नानुशासनापेक्षेति भावः । उक्तं च महाभाष्ये – 'यथा लक्षणमप्रयुक्त' इति अप्रयुक्ते लौकिकप्रयोगेणाऽनिश्चिते यथा लक्षणं प्रयोक्तव्यं नियमेन लक्षणमनुसर्तव्यम्, लौकिकप्रयोगेण निश्चिते तु न नियमेन लक्षणापेक्षेत्यर्थः । ननु – आनन्दप्रचुरत्वाध्यानन्दमय इति न वक्तव्यं तत्कथं प्रचुरानन्दत्वादिति आनन्दमयपदव्याख्यानमित्यत आह – आनन्देति ॥

(अभिनवचन्द्रिका)

आनन्दमयपदार्थप्रदर्शनाय प्रकृतिप्रत्ययक्रमानुसारेण आनन्दप्रचुर इत्यभिधाने ब्रह्मण्यनानन्दस्य प्राप्तिः स्यात् । प्रचुरान्तसमासस्य समानाधिकरणाऽल्पविरोध्यतिशयवाचित्वस्य 'ब्राह्मणप्रचुरो ग्राम' इत्यादौ दर्शनात्, ब्रह्मणि अनानन्दप्राप्तिर्मा भूदित्येतदर्थं प्रचुरानन्द इति विपरीतसमासः कृतः । प्रचुरपूर्वपदं समासपदं प्रयुक्तमित्यर्थः । एतेन – आनन्दमयपदस्य एकत्वेन असमासत्वात् 'विपरीतसमासः कृत' इत्ययुक्तमिति परास्तम् । आनन्दमयशब्दार्थनिरूपणाय प्रचुरपूर्वपदसमासपदप्रयोगस्य इहाभिमतत्वात् । ननु आनन्दप्रचुर इत्युक्ते विरोधिनोऽन्यस्य प्राप्तिः प्रचुरानन्द इत्युक्ते नेति वैषम्यं कुत इत्यत आह– **प्रचुरानन्द इति** ॥ प्रतीत्यनुसारेण व्यवस्थाऽभ्युपगन्तव्येति भावः । अङ्गीकृत्य चेदमुक्तम् । वस्तुतस्तु – आनन्दप्रचुर इत्युक्तेऽपि नाऽनानन्दस्य प्राप्तिः, 'अन्नप्रचुरो मखः, प्रकाशप्रचुरः सविता' इत्युक्ते मखे सवितरि च दुर्भिक्षान्धकारलेशाप्रतीतेः । अत एव सुधायां 'विरुद्धार्थप्राप्तेरशाब्दत्वात् तत्प्रचुरशब्दो हि तस्य तस्मिन् महत्वमात्रमाह । विरुद्धार्थसद्भावस्तु प्रमाणान्तरगम्य' इत्युक्तम् । ननु विकारार्थत्वे मयडनुपपत्तिवत् प्राचुर्यार्थत्वेऽपि प्रायपाठानुपपत्तिलक्षणबाधकसद्भावात् न प्राचुर्यार्थत्वमिति भावेन शङ्कते – **नायमानन्दमयेति** ॥ **अत्यल्पत्वादिति** ॥ अन्नमयशब्देन गुणलाभात् तत्समन्वयस्य वैयर्थ्यं स्यादिति भावः । **कुतोऽयमिति** ॥ 'भाव' इत्यनन्तरम् 'इति चेन्न'ति शेषः । **कथमन्नमयशब्द इति** ॥ सर्वभूताद्यत्वसर्वभूतात्तृत्वप्रचुरान्नत्ववाची कथं स्यादित्यर्थः । **भवेदेतदिति** ॥ प्रचुरान्नार्थकत्वं तदाऽनुपपन्नं भवेदित्यर्थः । **न चैवमिति** ॥ आद्यसूत्रोक्तमन्नमयादीनां ब्रह्मत्वमयुक्तम् । अनेकेश्वरापातात्, विकारशब्दादिति सूत्रोक्तो बाधकोद्धारश्चाऽनुपपन्नः । अनेकार्थकस्य मयटः प्राचुर्यार्थकत्वमेवेत्यत्र नियामकाभावेन प्राचुर्यादिति हेतोः सन्दिग्धाऽसिद्धत्वादिति भावः । एतेन उभयपक्षे दोषदर्शनादित्ययुक्तम् । आनन्दमयसूत्रे अन्नमयादीनां ब्रह्मत्वस्य निर्णीतत्वेन मयटो विकारार्थकत्वे ब्रह्मत्वानुपपत्तिरूपबाधकस्य विद्यमानत्वादिति परास्तम् । 'एकमेवाद्वितीय'(छां. ६.२.१)मिति श्रुतिविरोधेन पञ्चानां ब्रह्मत्वनिरासानन्तरं मयटोऽर्थद्वयेऽपि दोषादर्शनसद्भावत् ॥ **येऽन्नं ब्रह्मेति** ॥ न मयटः प्राचुर्यार्थकत्वनिर्णयाय हेत्वन्तरं मृग्यं, ब्रह्मशब्दस्यैव अन्नमयादीनां ब्रह्मत्वसाधनद्वारा मयडर्थनिर्णायकत्वात् । न चानेकेश्वरापत्तिप्रसङ्गाद्ब्रह्मशब्दस्यान्नमयादीनां ब्रह्मत्वसाधकत्वासम्भवः । ब्रह्मणो बहुरूपत्वेन पञ्चानां ब्रह्मत्वेऽपि अनेकेश्वरप्रसङ्गाभावादिति भावः । **एकार्थत्वोपपत्तेरिति** ॥ प्राचुर्यार्थकत्वनिर्णयोपपत्तेरित्यर्थः । **यदा खल्विति** ॥ 'अनुजज्ञे' इत्यनन्तरं 'तस्मा'दिति शेषः ॥ एतेन अस्य वाक्यस्य 'न च सूत्रविरोध' इति पूर्ववाक्येनाऽनन्वय इति परास्तम् । यद्यपि आनन्दमयस्य अभ्यासादेव ब्रह्मत्वमसाधयत्, तथापि – अभ्यासस्य साधकत्वं ब्रह्मशब्दस्यसाधकत्वेन विनाऽनुपपन्नमिति ज्ञापनाय

(अभिनवचन्द्रिका)

ब्रह्मशब्दात् आनन्दमयस्य ब्रह्मतामसाधयदित्युक्तम् । **अन्यथेति** ॥ ब्रह्मशब्दस्याऽन्नमयादीनां ब्रह्मत्व-साधकत्वाभावे अभ्यासशतसाहित्येऽपि आनन्दमयस्य ब्रह्मत्वसाधको न स्यात् इति भावः । **इति चेदिति** ॥ उच्यत इति शेषः । **अल्पाक्षरत्वादेवेति** ॥ 'नासूत्रय'दिति पूर्वेण सम्बन्धः । तर्हि 'अन्नमयो ब्रह्मशब्दा'दिति सूत्रमस्तु इत्यत आह– **आदिमत्वेऽपीति** ॥ **सङ्गतत्वेनेति** ॥ विस्पष्टसङ्गतिसद्भावेनेत्यर्थः । तदुक्तं 'आनन्दमयरूपे तु ब्रह्मणः पुच्छतोक्तितः । समस्ताब्रह्मता प्राप्तेरानन्दमयनाम ही'ति । एतेन – अन्नमयादीनां ब्रह्मत्वनिरूपणे सङ्गतिरस्ति न वा, आद्ये आनन्दमयस्य सङ्गतत्वेनेति विशेषोक्तिर्न स्यात् । 'अन्नमयो ब्रह्मशब्दा'दिति सूत्रप्रसङ्गाच्च । न द्वितीयः – अन्नमयादीनां समन्वयोक्तिवैयर्थ्यप्रसङ्गात् । 'जन्माद्यस्य यत' इति सूत्रोक्तजगत्कारणत्व-लक्षणस्यान्नमये श्रूयमाणत्वेन सङ्गतिसद्भावाच्चेति निरस्तम् ।

## वाक्यार्थमुक्तावली

ॐ विकारशब्दान्नेति चेन्न प्राचुर्यात् ॐ । **विकारात्मकेति** ॥ प्रकृतेरानन्दात्मना परिणामश्च मनोरूपेणेति बोध्यम् । अत्र तत्विति आनन्दमय इति च पदद्वयानुवृत्तिमभिप्रेत्य व्याचष्टे **नायमिति** ॥ प्रचुरानन्दत्वाद्ध्यानन्दमय इति हिशब्दार्थमाह यत इति । अनेन प्राचुर्यादिति सूत्रांशः आनन्दस्य प्राचुर्यादिति व्याख्यातो बोध्यः । ननु सूत्रे प्राचुर्यादित्युक्तत्वादानन्दस्येति योग्यतया लभ्यते । तदर्थकभाष्ये आनन्दप्रचुरत्वादिति समस्तपदेन भाव्यं कथं प्रचुरानन्दत्वादिति तद्विपरीतसमस्तपदप्रयोग इत्यत आह **आनन्दप्रचुर इति** । यद्वा आनन्दमय इति श्रौतशब्दानुसारेणानन्दमयप्रचुरत्वादिति वक्तव्ये प्रचुरानन्दत्वादिति विपरीतसमासः कुत इत्यत इदमुक्तम् । एतेनैतन्निरस्तम् । आनन्दमय इत्यत्र मयटः प्रत्ययत्वेन समासाभावाद्वा विपरीतसमास इत्येतदनुपपन्नमिति । श्रौतपदसमासापेक्षया विपरीतसमास इत्यत्र विवक्षितत्वात् । **पूर्णानन्द इत्येवेति** । प्रचुरप्रकाशो रविरितिवदिति भावः । अन्नप्राचुर्यस्याप्राकृतविग्रह इति प्राकृतदेहस्य प्राचुर्येणान्नोपचितत्वेनान्नप्राचुर्यवदप्राकृतविग्रहसम्भवादित्यर्थः । अन्नप्राचुर्यकथनस्याल्पत्वादिति बहुकोशपाठः । बहुत्वादेस्सर्वसाधारण्येनालौकिकमिति मानापादकतयाल्प-त्वादित्यर्थः । **अन्नप्राचुर्यं चेति** । न केवलमानन्दप्राचुर्यमानन्दमयशब्दार्थ इति चार्थः । भूताद्यत्व-तदत्तृत्वस्येति समाहारद्वन्द्वः । भगवत्यन्नप्राचुर्यघटकतया योजितं वाक्यं प्रसिद्धान्नपरत्वे बाधकतया योजयितुमाशङ्कते कुत इति । एतेन तत्प्राचुर्यं च तत्प्राचुर्यमेव युज्यते न प्रसिद्धान्नप्राचुर्यमित्यर्थ उक्तो भवति । **आत्मपरामर्शेति** । य एष भगवान् विष्णुर्भूतस्रष्टा गुणाधिक इति तैत्तिरीयभाष्यो-

(वाक्यार्थमुक्तावली)

दाहृतप्रमाणादिति भावः । **आकाशादिकारणत्वमिति** । आकाशादिदेहान्तकारणत्वमुक्त्वा तस्यैव देहगतस्यैवात्मनः स्पष्टीभविष्यत्येतत् । रसशब्देन विशेषणादित्युत्तरभावसार्थक्यायात्र सामान्येन तस्यैवेत्युक्तं बोध्यम् । ननु विज्ञानप्राचुर्यस्य सर्वत्र पर्यवसानेनाल्पार्थत्वाभावेऽपि प्राणमनश्शब्दयोः श्वासवाय्वन्तः-करणार्थत्वे तत्प्राचुर्यस्याल्पत्वेन कथं तद्गतमयटः प्राचुर्यार्थत्वं स्यादित्यत आह **एवमिति** । चेष्टकत्वेऽप्युप-लक्षणम् । जीवनप्रदत्वमपि ग्राह्यम् । इति यद्गतिजीवने । युक्तेत्यनुव्याख्यानोक्तेः ॥ **अवबोधेति** ॥ अवबोधार्थो मनुधातुः प्रकीर्तित इति तत्रैवोक्तेरिति भावः । एवमित्यादिकं तत्प्राचुर्यश्चेति चशब्दार्थ एवेति ज्ञेयम् । स्पष्टमेतन्मुक्तावल्याम् । उभयपक्षे दोषादर्शनादिति । अन्नमये देहेऽप्यद्यत्वस्य चैतन्य-समावेशेनात्तृत्वस्योपपन्नत्वेन विरोधाभावादिति भावः । एकस्यैवेति । नात्र ब्रह्मपञ्चकमुच्यते येनैकमेवा-द्वितीयं ब्रह्मेति श्रुतिविरोधः । किं त्वेकस्य ब्रह्मणो रूपपञ्चक इत्यर्थः । अन्ये भास्करादयः ॥ **न च सूत्रेति** ॥ आद्ये आनन्दमयनामग्रहणात् तद्विषयश्लोकस्याभ्यासोपादानात् द्वितीये तद्गतमयट एव व्याख्यानात् । तृतीये तस्यैव ब्रह्मत्वेन जगच्चेष्टकत्वहेतूक्तेरिति भावः । पञ्चकस्यापि ब्रह्मत्वे सूत्रकृद्विवक्षा-स्तीत्यत्र ज्ञापकमाह पदेति ॥ **ब्रह्मशब्दादिति** ॥ सूत्रेऽभ्यासादिति उक्तिस्त्वेकविषयासकृदुक्तिरूप-मुख्याभ्यासाभावेऽपि पञ्चप्रकरण्याभ्यासविवक्षया वा आनन्दमयविज्ञानमयप्रकरणद्वयविवक्षया वा ब्रह्मवल्लीभृगुवल्लीश्रुतान्नमयादेरन्नादेश्चैकत्वेन ये ब्रह्मोपासते अन्नं ब्रह्मेति व्यजानात् । ये प्राणं ब्रह्मोपासते प्राणं ब्रह्मेति व्यजानादित्यादौ एकविषय एव प्रकरणद्वयैक्येन ब्रह्मशब्दाभ्यासादुपपद्यत इति ज्ञेयम् ॥ **तथैव सूत्रमिति** ॥ उपलक्षणत्वेन नेयमित्यर्थः ॥ **कथमिति** ॥ व्यभिचारादित्यर्थः । द्वितीयमपि सूत्रं सर्वमयट्परतया नीतं तत्र सूत्रकृद्विवक्षाज्ञापकमाह– **कथञ्चेति** । तथा च सहपाठविरोधः स्यादिति भावः । तर्हि प्रथमातिक्रमे कारणाभावादन्नमय इत्युक्ते एकाक्षरलाघवाच्चान्नमयोऽभ्यासादिति किं नासूत्रयदित्यत आह । **आदिमत्वेऽपीति** ॥ आदौ विद्यमानत्वेऽपीत्यर्थः । अल्पाक्षरत्वमपि-पदात्समुच्चिनोति । **एतत्सङ्गतत्वेनेति** । आनन्दमयस्य हि ब्रह्मपुच्छत्वमुक्तं, तथा चावयविनं विना न अवयवस्य जिज्ञास्यतेति सङ्गतत्वेनेत्यर्थः । यद्वा 'तत्रानन्द्रादयो गुणाः । ईशस्यैवेति निर्णीता' इत्युक्तरीत्याऽनन्दादयः प्रधानस्येति वक्ष्यमाणोपासनासङ्गतत्वेन वा आनन्दोद्रेकादेवाकामस्य सृष्टिरिति जन्मादिसूत्रगतत्वेन वा आनन्दोद्रेकादेव कालैक्येन वाङ्मनसागोचरत्वं न तु सर्वथा अवाच्यत्वेनेतीक्ष्यत्यधिकरणसङ्गतत्वेन वा शास्त्राद्यधिकरणसङ्गतत्वमेवेत्यर्थः । यस्त्विति सङ्कर इत्यर्थः । **सूत्रकारेणैवेति** ॥ आनन्दमय इति सूत्रकृता । अस्मिन्नस्य च तद्योगमिति पञ्चानामपि सूत्रकारेणेत्यर्थः ।

(वाक्यार्थमुक्तावली)

ननु तर्हि भास्करपक्षोऽपि न दूषणीयः । चरमसूत्रपश्चानामपि कोशत्वव्यावृत्या ब्रह्मत्वसाधनेन तत्रापि कृत्याभावादिति चेन्न । चरमसूत्रस्याप्यानन्दमयमात्रपरत्वमिति वदतो भास्करस्य भाष्यकारेण दूषणीयत्वादिति भावः । **विशेषेणेति** ॥ विशेषबलेनेत्यर्थः ।

## तत्त्वसुबोधिनी

अस्तु विकारार्थकमयट्प्रयोगः तथापि कुतो नानन्दमयो विष्णुरित्याशङ्क्य विकारार्थकमयट्शब्दवाच्यं द्वेधा सम्भवति । विकारित्वेन तदभिमानित्वेन वा । नोभयं विष्णौ युज्यत इत्याह ॥ **विकारार्थकशब्दवाच्यत्वं हीति** ॥ सति हि मयटो विकारार्थत्वे एतत् स्यात् तदेव नेत्याह । **इति शङ्का माभूदित्यादिना** ॥ ननु कथमेतत् प्राचुर्ये मयटोऽनुदाहृतत्वादित्यत आह । **तादात्म्यार्थ इति** ॥ ननु प्रचुरानन्दत्वादित्ययुक्तं तथात्वे प्राचुर्यपदस्य परनिपातस्य कर्तव्यत्वात् । तथा चानन्दमय इति यथास्थितमेवास्तु किं विपरीतसमासेन इत्यत आह । **आनन्दप्रचुर इति** ॥ यथास्थिताभिधाने हि उक्ताभिप्रायालाभात्तथोक्तमिति भावः । सूत्रे प्राचुर्यादित्युक्तत्वादानन्दस्येत्यर्थलब्धम् । **विपरीतेति** ॥ ननु तदकरणेन यथास्थिताभिधानेऽपि नानन्दप्राप्तिः । प्रकाशप्रचुरः सवितेत्युक्तेऽपि सवितरि अन्धकारलेशाप्राप्तेः । नापि प्राचुर्यस्य विशेषणत्वेनोक्तौ प्रतियोगिन ईषदनुवृत्त्यभावनियमोऽस्ति । प्रचुरब्राह्मणो ग्राम इत्यादौ अब्राह्मणाल्पत्वस्य प्रतीतेरिति चेत् सत्यं तथापि प्राचुर्यस्य विशेषणत्वे प्रतियोगिन ईषदनुवृत्तिनियमाभावेऽपि विशेष्यत्वे तन्नियमः । ब्राह्मणप्रचुर इत्यादौ तद्दर्शनात् आनन्दमय इत्यत्र प्राचुर्यं विशेष्यमिति कल्पतरूक्तमभिप्रेत्यास्य ग्रन्थस्य प्रवृत्तेरदोषः । अत एव सुधायां प्रचुरशब्दः तस्य तत्र महत्वमात्रमाह । विरोधप्रतीतिस्तु मानान्तरादित्युक्तमिति ध्येयम् । प्रचुरानन्द इत्यभिधान इति । सूत्रे प्राचुर्यस्य विशेष्यतयोक्तावपि स्वयं विशेषणत्वेन तदभिदधता यथा प्रचुरप्रकाशो रविरित्युक्ते प्रकाशविरोध्यन्धकारलेशाप्राप्तिवत् प्रकाशप्रचुर इत्युक्तेऽपि न तदप्राप्तिः प्रत्यक्षविरोधात् तथा प्रचुरानन्द इत्युक्ते दुःखलेशाप्राप्तिवत् आनन्दप्रचुर इत्युक्तेऽपि तदप्राप्तिः श्रुत्यादिविरोधादिति सूचितमित्यर्थः । **अन्नादीति** ॥ तथा अत्रापि मयटो विकारार्थत्वमेव वक्तव्यम् । अन्यथा प्रायपाठविरोधादिति सूचितमित्यर्थः स्यादिति भावः । **तत्प्राप्तेरिति** ॥ **अल्पत्वप्राप्तेरित्यर्थः** । शङ्कते ॥ **कुतोऽयमिति** ॥ परिहरति । **अयत इति** ॥ अस्त्वेवमन्नशब्दव्याख्यानं तथाप्यन्नशब्दः प्रसिद्धान्नार्थक एव किं न स्यादित्यत आह । **प्रसिद्धान्नस्येति** ॥ तस्य जडत्वेन भूतसंहर्तृत्वरूपभूतात्तृत्वासम्भवादिति भावादित्यर्थः । **कथमभिसंहितमिति** ॥ कथमभिप्रेतमित्यर्थः । अन्नप्राचुर्यं अन्नमयशब्दार्थ इत्यत्रानुपपत्तिं शङ्कते ॥

(तत्त्वसुबोधिनी)

**ओषधीभ्य इति ॥ तत्परामर्शादिति ॥** प्रसिद्धान्नविकारदेहपरामर्शादित्यर्थः । एवं च सन्निहितपरामर्श इति हृदयम् ॥ **किमर्थमिति** ॥ तथा चात्मपरामर्शो व्यर्थ इति भावः । ननु विज्ञानप्राचुर्यस्य सार्वज्ञपर्यवसानेनाल्पार्थत्वाभावेऽपि प्राणमनःशब्दयोश्चात्मरूपवाय्वन्तःकरणार्थत्वे तत्प्राचुर्यस्याल्पत्वेन कथं तद्गतमयटः प्राचुर्यार्थत्वं स्यात् इत्यत आह । **एवं प्राणमनःशब्दयोरिति** । **अत्रापीति** ॥ अन्नमयादिशब्देष्वित्यर्थः । उभयपक्षे प्राचुर्यार्थत्वे विकारार्थत्वे च ॥ **सावकाशस्येति** ॥ मयट इति शेषः । **एकार्थत्वेति** । अन्नमयादिशब्दपञ्चकस्य ब्रह्मशब्देन विष्णुरूपैकार्थत्वोपपत्तेरित्यर्थः । कुतो नेत्यत आह । **प्रायेति ॥ ततश्चेति** ॥ प्रायपाठविरोधादित्यर्थः । ननु सूत्रे आनन्दमयशब्दस्य गृहीतत्वात् तदनुसारेण आनन्दमयस्यैव ब्रह्मत्वकल्पनं युक्तम् । अन्यथा सूत्रविरोधः स्यादित्याशङ्क्य निषेधति ॥ **न चेति** ॥ अनुजज्ञे उपलक्षणत्वेनेत्यर्थः ॥ **कथमानन्दमयस्यापीति** । ननु सूत्रे ब्रह्मशब्दाभ्यासमात्रं हेतूकृतम् । तत्र एकप्रकाराराकृदुक्तिरूपमुख्यार्थ एव अभ्यासशब्दस्य प्रकृते विवक्षितः । न नु ब्रह्मशब्दमात्रं तथा च अन्यत्र ब्रह्मशब्दमात्रसद्भावेऽपि विवक्षिताभ्यासाभावादानन्दमये च तत्सत्वात्तस्यैव ब्रह्मत्वमुच्यत इति चेत् न तथापि विज्ञानमये विवक्षिताभ्याससत्वेन नानन्दमयस्यैव ब्रह्मत्वसमर्थनं युक्तम् । अन्यथा हेतोरनैकान्त्यं स्यादिति भावः । तर्हि प्रथमातिक्रमे कारणाभावात्ततोऽप्यल्पाक्षरत्वाच्च अन्नमयोऽभ्यासादित्येव सूत्रणीयमित्याशङ्क्याह ॥ **आदिमत्वेऽप्यन्नमयादीनामिति** ॥ जिज्ञास्यतयोक्तब्रह्मण एव आनन्दमयपुच्छत्वस्योक्तत्वेन कथमानन्दमयस्य ब्रह्मत्वम् । अवयविनं विहाय अवयवमात्रजिज्ञासायोगान्न ब्रह्मणो जिज्ञास्यत्वं इत्येवंरूपसङ्गतेः लाभादन्यथा अलाभादानन्दमयस्यादित्वमिति नानुपपत्तिरिति भावः ।

## वाक्यार्थमञ्जरी

ॐ विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ ॐ विकारार्थकमयट्शब्दान्नान्नमयं ब्रह्मेति चेन्न प्राचुर्यात् प्राचुर्यार्थत्वादत्र मयट्शब्दजातस्येत्यर्थः । अविकारित्वादतदभिमानित्वाच्चेति । निर्विकारोऽक्षरः शुद्ध इत्यादेर्विकारित्वं स्वतन्त्रे हरौ पराधीननियामकत्वरूपमभिमानित्वं च न सम्भवतीत्यर्थः । तत्र गीताभाष्योक्तप्रमाणमाह ॥ **तादात्म्यार्थ इति** ॥ ननु सूत्रे प्राचुर्यादित्युक्तेरानन्दस्येत्यर्थाल्लभ्यते । तथा च तद्व्याख्यानभाष्ये आनन्दप्रचुरत्वादित्येव वक्तव्ये कुतः प्रचुरानन्दत्वादिति विपरीतोक्तिरित्यत आह ॥ **आनन्दप्रचुरइति ॥ इत्यादिवदिति** ॥ तत्र यथा प्राचुर्यस्य ब्राह्मणविशेषणत्वेन तद्विरोधिईषच्छूद्रप्रसक्तिरेवमत्र प्राचुर्यस्यानन्दविशेषणत्वे तद्विरोध्यनानन्दस्याप्यल्पस्य प्रसक्तिरित्यर्थः ॥ इत्येव

(वाक्यार्थमञ्जरी)

प्रचुरप्रकाशो रविरित्युक्ते प्रकाशविरोध्यन्धकारलेशाप्राप्तिवत्प्रकाशप्रचुर इत्युक्तेऽपि तदप्राप्तिः प्रत्यक्षविरोधात्। तथा प्रचुरानन्द इत्युक्ते दुःखलेशाप्राप्तिवदानन्दप्रचुर इत्युक्तेऽपि तदप्राप्तिः श्रुत्यादिविरोधादिति सूचितं भवतीत्यर्थः । शङ्कते ॥ **नायमिति** ॥ **सहपठितत्वादिति** ॥ तथा च प्रायपाठविरोध इति भावः । **अल्पत्वादिति** ॥ तस्य लोकसाधारण्यादिति भावः । कुत इति प्रश्नस्योत्तरमाह ॥ **अद्यतेऽत्ति चेति** ॥ स्वयं प्राणिभिर्भुज्यते प्राणिनो भुङ्क्ते च यस्मात्तस्मात्तद्ब्रह्मान्नमित्युच्यत इत्यर्थः । अभिसंहितम् अभिमतम् । नाशप्रसङ्गादिति भावः । शङ्कते । **ओषधीभ्य इति** ॥ धान्येभ्योऽन्नं समुद्भूतं तस्मात्पुरुषदेहः समुद्भूत इत्यर्थः । उक्त्वा आत्मन आकाश इत्यादिना । नन्वथापि प्राणमनःशब्दयोः श्वासवाय्वन्तःकरणपरत्वेन तदुभयप्राचुर्योक्तावल्पार्थत्वं स्यादित्यत आह ॥ **एवमिति** ॥ **चेष्टकत्वावबोधनार्थत्वेति** ॥ अन चेष्टायां, मन्ववबोधन इति धातुव्याख्यानादिति भावः । विज्ञानप्राचुर्यस्य सार्वज्ञतयाऽल्पताशङ्कानुदयाद्द्वयोरेवोक्तिः ॥ **श्रुतिविरोध इति** ॥ तस्य छान्दोग्यभाष्यदिशा स्वगतभेदानिषेधार्थकत्वादिति भावः । **येऽन्नमित्यादि** ॥ एतेषां तेऽन्नमाप्नुवन्ति ते आयुर्यन्तीति पूर्ववाक्याभ्यां न बिभेति न प्रमाद्यति सन्तमेनं ततो विदुरित्युत्तरैः क्रमेणान्वयो बोध्यः ॥ **अन्नमयादीनीति** ॥ अन्नमयादिपञ्चकं निरूप्य तज्ज्ञातुः फलनिरूपणायोदाहृतेत्यर्थः ॥ **अनन्यथासिद्धेति** ॥ **विष्णुमात्रनिष्ठेत्यर्थः** । समभिव्याहारात् सहोच्चारात् । सावकाशस्य मयट्पदस्य । अन्ये रामानुजाः ॥ **आनन्दमय एवेति** ॥ विज्ञानमयो जीवः अन्नमयादित्रयःकोशा इत्येवशब्दार्थः ॥ **क्लिष्टत्वादिति** ॥ प्रायपाठविरोधादेवेति भावः ॥ **सूत्रविरोध इति** ॥ तत्रानन्दमयमात्रस्य ब्रह्मत्वोक्तिविरोधः । अनुजज्ञे ज्ञापयामास । तथैव पञ्चमयटां प्राचुर्यपरत्वेन । अन्यथा पञ्चानामब्रह्मत्वे ॥ **कथमिति** ॥ व्यभिचारादिति भावः । ननु सूत्रकारेणानन्दमयस्य ब्रह्मत्वे ब्रह्मशब्दाभ्यासस्यैव हेतूकृतत्वेन तस्यान्नमयादिष्वभावात्कथं व्यभिचार इति चेत् । 'विज्ञानं देवाः सर्वे ब्रह्म ज्येष्ठमुपासते विज्ञानं ब्रह्म चेद्वेद' इति विज्ञानमये ब्रह्मशब्दाभ्याससद्भावात् । तथा ब्रह्मवल्लीभृगुवल्ल्योः श्रुतान्नमयादेश्चैकत्वेन येऽन्नं ब्रह्मोपासते अन्नं ब्रह्मेति व्यजानादित्यादिश्रवणेन मिलित्वा प्रतिप्रकरणं द्विर्ब्रह्मशब्दश्रवणस्य चन्द्रिकायां प्रदर्शितत्वेन अन्नमयादावपि ब्रह्मशब्दाभ्याससद्भावात् । यत्तु सुधायां अन्नमयादिषु असकृदुक्तिमातृरूपामुख्याभ्यासप्रदर्शनं तदेकप्रकरण्यामेवाभ्यासप्रदर्शनायेत्यदोषः । यद्वा सूत्रकृतोऽपि ब्रह्मशब्द एव हेतुत्वेनाभिमतः । तस्य विष्ण्वेकनिष्ठत्वेन व्यभिचाराभावात् । अभ्यासोक्तिश्च यदा श्रुतित एव विष्णुत्वनिश्चयस्तदाऽभ्यासरूपतात्पर्यलिङ्गात्सुतरामित्यभिप्राय इति न कोऽपि दोषः । तत्र पञ्चानामपि ब्रह्मत्वे पञ्चमयटां प्राचुर्यार्थत्वे च बाधकं शङ्कते ॥ **अन्नमयादीनामपीति** ॥ तर्हि अन्नमयोऽभ्यासादिति वाच्यं प्रथमातिक्रमे

(वाक्यार्थमञ्जरी)

कारणाभावादित्यत आह ॥ **आदिमत्वेऽपीति** ॥ अल्पाक्षरत्वेऽपीत्यपि ज्ञातव्यम् ॥ **सङ्गतत्वेनेति** ॥ जिज्ञास्यब्रह्मण आनन्दमयावयवत्वेनोक्तत्वान्न तस्य जिज्ञास्यत्वमिति शङ्कापराकरणायानन्दमयस्य विष्णुत्वसमर्थनस्य पूर्वसङ्गतत्वमित्यर्थः । रामानुजमतवन्मायिमतं कुतो न निराक्रियत इत्यत आह ॥ **यस्त्विति** ॥ पूर्वपक्षीकृतः पूर्वपक्षित्वेन कृतः । निराकृत इति यावत् । आनन्दमयस्य ब्रह्मत्वं साधयता पञ्चानामब्रह्मत्वपक्षनिराकरणादिति भावः । प्रत्याक्षिपत् निराचक्रे । प्रयोगात् विशेषणविशेष्य-भावव्यवहारात् । यद्वा भिन्ने विशेषणे प्रचुरशब्दप्रयोगादिति ॥ **विशेषेणेति** ॥ विशिष्यते विविच्यते अयं गुणः अयं गुणीत्यादिरूपेण वस्तु येन स विशेषः वस्तुनः स्वरूपसामर्थ्यं तेनेत्यर्थः । विशेषो नाम काचन वस्तुनः शक्तिरिति तत्त्वनिर्णयटीकोक्तेः ॥

## विवृतिः

अस्तु विकारार्थकमयट्प्रयोगः तथापि कुतो नानन्दमयो विष्णुरित्याशङ्क्य, विकारार्थमयट्शब्दवाच्यत्वं द्वेधा सम्भवति । विकारित्वेन तदभिमानित्वेन वा नोभयमपि विष्णौ युज्यत इत्याह ॥ **विकारार्थक-शब्दवाच्यत्वं हीति** ॥ सति हि मयटो विकारार्थत्व एतत्स्यात् । तदेव नेत्याह ॥ **इति शङ्का मा भूदित्यादिना** ॥ ननु कथमेतत्, प्राचुर्ये मयटोऽननुशासनादित्यत आह ॥ **तादात्म्यार्थ इति** ॥ ननु प्रचुरानन्दत्वादित्ययुक्तं, तथात्वे प्राचुर्यपदस्य सूत्रानुसारेण परनिपातः कर्तव्य इत्यानन्दप्रचुर इति यथास्थितमेवास्तु किं विपरीतसमासेनेत्यत आह ॥ **आनन्दप्रचुर इति** ॥ यथास्थिताभिधाने हि उक्ताभिप्रायालाभात्तथोक्तमिति भावः । सूत्रे प्राचुर्यादित्युक्तत्वादानन्दस्येत्येतदर्थलब्धम् ॥ **प्रचुरानन्द इत्यभिधान इति** ॥ सूत्रे प्राचुर्यस्याविशेषणतयोक्तत्वेऽपि स्वयं विशेषणत्वेन तदभिदधता, प्रचुरप्रकाशो रविरित्युक्ते प्रकाशविरोध्यन्धकारलेशाप्राप्तिवत्प्रकाशप्रचुर इत्युक्तेऽपि तदप्राप्तिः । प्रत्यक्षविरोधात् ॥ तथा प्रचुरानन्द इत्युक्ते दुःखलेशाप्राप्तिवदानन्दप्रचुर इत्युक्तेऽपि तदप्राप्तिः । श्रुत्यादिविरोधादिति सूचितमित्यर्थः ॥ **अन्नादीति** ॥ तथा चात्रापि मयटो विकारार्थत्वमेव वक्तव्यम् । अन्यथा प्रायपाठ-विरोधः स्यादिति भावः ॥ **तत्प्राप्तेरिति** ॥ अल्पत्वप्राप्तेरित्यर्थः ॥ शङ्कते ॥ **कुतोऽयमिति** ॥ परिहरति ॥ **अद्यतेऽत्ति चेति** ॥ अस्त्वेवमन्नशब्दव्याख्यानं तथाप्यन्नशब्दः प्रसिद्धान्नार्थक एव किं न स्यादित्यत आह ॥ **प्रसिद्धान्नस्येति** ॥ तस्य जडत्वेन भूतसंहर्तृत्वरूपभूतात्तृत्वासम्भवादित्यर्थः ॥ **कथमभिसंहितमिति** ॥ कथमभिप्रेतमित्यर्थः । अन्नप्राचुर्यम् अन्नमयशब्दार्थ इत्यत्रानुपपत्तिं शङ्कते ॥ **ओषधीभ्य इति** ॥ **तत्परामर्शादिति** ॥ प्रसिद्धान्नविकारदेहपरामर्शादित्यर्थः । एवं च सन्निहितपरामर्श

(विवृतिः)

इति हृदयम् ॥ **किमर्थमिति** ॥ तथा चात्मपरामर्शो व्यर्थ इति भावः । ननु विज्ञानप्राचुर्यस्य सार्वज्ञपर्यवसानेनाल्पार्थत्वाभावेऽपि प्राणमनःशब्दयोः श्वासरूपवाय्वन्तःकरणार्थत्वेन प्राचुर्याल्पत्वेन कथं तद्गतमयटः प्राचुर्यार्थत्वं स्यादित्यत आह ॥ **एवं प्राणमनःशब्दयोरिति** ॥ **अत्रापीति** ॥ अन्नमयादि शब्देष्वित्यर्थः ॥ उभयपक्षे, प्राचुर्यार्थत्वे, विकारार्थत्वे, च दूषणान्तरमाह ॥ **अन्नमयादि-पञ्चानामिति** ॥ **सावकाशस्येति** ॥ मयट इति शेषः । एकार्थत्वेऽन्नमयादिशब्दपञ्चकस्य ब्रह्मशब्देन विष्णुरूपैकार्थत्वोपपत्तेरित्यर्थः । कुतो नेत्यत आह ॥ **प्रायेति** ॥ **ततश्चेति** ॥ प्रायपाठविरोधादित्यर्थः ॥ ननु सूत्रे आनन्दमयशब्दस्य गृहीतत्त्वात्तदनुसारेणानन्दमयस्य ब्रह्मत्वं कल्प्यते । अन्यथा सूत्रविरोधः स्यादित्याशङ्क्य निषेधति ॥ **न चेति** ॥ अनुजज्ञे उपलक्षणत्वेनेत्यर्थः ॥ **कथमानन्दमयस्यापीति** ॥ ननु सूत्रे ब्रह्मशब्दाभ्यासमात्रं हेतूकृतम् । तत्र एकप्रकारासकृदुक्तिरूपमुख्यार्थ एवाभ्यासशब्दस्य प्रकृते विवक्षितः, न तु ब्रह्मशब्दमात्रम् । तथा चान्यत्र ब्रह्मशब्दमात्रसद्भावेऽपि विवक्षिताभ्यासाभावात् । आनन्दमये च तत्सत्वात्तस्यैव ब्रह्मत्वमुच्यत इति चेत् तथापि विज्ञानमये विवक्षिताभ्याससत्वेनानन्दमयस्यैव ब्रह्मत्वसमर्थनमयुक्तम् । अन्यथा हेतोरनैकान्त्यं स्यादिति भावः । बाधकवशादानन्दमयस्थो मयट् प्राचुर्यार्थः, अन्नमयादिस्थस्तु विकारार्थक इति कल्प्यत इत्यत आह ॥ **कथं चेति** ॥ तर्हि प्रथमातिक्रमे कारणाभावात्ततोऽल्पाक्षरत्वाच्चान्नमयोऽभ्यासादित्येव सूत्रणीयमित्यत आह ॥ **आदि(म)त्वेऽप्यन्न-मयादिनामिति** ॥ **सङ्गतत्वेन ग्रहणमिति** ॥ जिज्ञास्यतयोक्तब्रह्मण एवानन्दमयपुच्छत्वोक्त्या कथ-मानन्दमयस्य ब्रह्मत्वम् । अवयविनं विहायावयवमात्रजिज्ञासाऽयोगात् । न ब्रह्मणो जिज्ञास्यत्वमित्येवंरूप-सङ्गतेर्लाभादन्यथाऽलाभादानन्दमयस्यादित्वमिति नानुपपत्तिरिति भावः । ननु भाष्यकारः आनन्दमयस्यैव ब्रह्मत्वमभ्युपगम्य भास्करस्य मतं निराकृतवान् । सङ्करमतं कुतो न निराकृतमित्यत आह ॥ **यस्त्वन्नमयादिपञ्चानमपीति** ॥

## सूत्रभाष्यम्

**॥ ॐ तद्धेतुव्यपदेशाच्च ॐ ॥ १४ ॥**

**'को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्'** इति (तै.उ. २-७) ॥१४॥

## सत्तर्कदीपावली

**को ह्येवान्यादिति वाक्यशेषादित्येतमर्थं प्रतिपादयत्सूत्रमुपन्यस्य व्याचष्टे ॥ तद्धेत्वित्यादिना ॥**

(सत्तर्कदीपावली)

आ समन्तात् प्रकाशमानत्वादाकाशशब्दोक्तः परमात्मा प्रचुरानन्दो यदि न स्यात् तर्ह्यसावशक्तः स्यात्। तथा सति सर्वं न चेष्टयेत्। तेनाप्रेरितो लोकः न लौकिकचेष्टां प्रकृष्टां च धर्मचेष्टां च कुर्यात्। ततो लोकचेष्टान्यथानुपपत्त्या तत्कारणस्य विष्णोः सर्वशक्तत्वम् अत एव बहुलानन्दत्वं च सिद्ध्यति। न हि स्वानन्दस्य अल्पत्वं भवन्निवारयितुमसमर्थस्य सर्वशक्तत्वं सम्भवतीत्यर्थः।

## तत्त्वप्रदीपिका

तद्धेतुव्यपदेशाच्च ॥ इतश्चाऽऽनन्दमयो विष्णुः, यतस्तस्याऽऽनन्दप्रचुरत्वहेतुर्व्यपदिश्यते को ह्येवान्यादित्यादिना। क एव हि सामान्यतो विशेषतश्च लौकिकं वैदिकं वा प्रवर्तेत। यद्येष आ समन्तात्काशमान 'आकाशः' पूर्णज्योतिः पूर्णानन्दो न स्यात्। तत्कुत उच्यते ? न तावत्परतन्त्राणां जीवानां प्रवर्तकमीश्वरमन्तरेण प्रवृत्तिस्सम्भवति। न चाप्रवृत्तस्य प्रवर्तकत्वम्। प्रवृत्तिश्चतुर्विधा। सुखार्था दुःखपरिहारार्था सुखोद्रेकनिमित्ता दुःखोद्रेकनिमित्ता चेति। तत्रेश्वरस्य सुखार्था दुःखनिवृत्त्यर्था दुःखोद्रेकनिमित्ता च न युक्ता। आप्तव्याप्तेर्निर्दोषत्त्वाच्च। तस्मात्प्रचुरानन्दत्वेनैव प्रवर्तकत्वम्। अतश्च मयट्प्रत्ययोऽपि प्राचुर्यार्थ एव॥

## तत्त्वप्रकाशिका

एवं प्रचुरानन्दत्वेनानन्दमयपदवाच्यो विष्णुरेव ब्रह्मशब्दाभ्यासादित्युक्तं तदेव हेत्वन्तरेण प्रतिपादयत्सूत्रमुपन्यस्य तदुपात्तश्रुतिमेवोदाहरति॥ तद्धेत्विति॥ आ समन्तात्काशमानो विष्णुर्यदि पूर्णानन्दो न स्यात्तदाऽसौ न लोकं प्रवर्तयेत्। आनन्दोद्रेकमन्तरेण तत्प्रवृत्तौ कारणाभावात्। तथा च को लोकं चेष्टयेद्धर्मादौ च कः प्रवर्तयेत्। अन्यस्यास्वातन्त्र्यात्। अतो लोकचेष्टाऽन्यथानुपपत्त्या तत्कर्ता विष्णुः पूर्णानन्दः स्यादित्यानन्दमयप्रकरणे विष्णोरेवाऽऽनन्दपूर्णत्व एव लोकचेष्टकत्वाख्यहेतुव्यपदेशाद्विष्णुरेव पूर्णानन्दतयाऽऽनन्दमयः इति भावः॥ १४॥

## गुर्वर्थदीपिका

लोकस्य लौकिकचेष्टान्यथानुपपत्त्या लोकचेष्टकत्वं विष्णोः कल्पनीयम्। अस्मदादिवदल्पानन्दस्य लोकचेष्टकत्वान्यथानुपपत्त्या तस्य पूर्णानन्दत्वं च वक्तव्यम्। अत आनन्दपदमपि पूर्णानन्दत्ववाचि। अत एव आ समन्तात् काशमानादाकाश इति व्युत्पत्त्याऽऽकाशपदमपि पूर्णानन्दत्वयोग्यविष्णोरेव वाचकमिति भावेनाऽऽह– **अतो लोकचेष्टेत्यादिना।**

## भावबोधः

'आ समन्तात् काशते यदाकशो मुख्यतो हरिः' इत्यनुव्याख्यानं मनसि निधायाह– **आसमन्तात् काशमान** इति । यस्मात् सुखं लब्ध्वा करोत्ययमित्यनुव्याख्यानं मनसि निधायाह– **आनन्दोद्रेकेति** । सर्वशक्त्यादिमतस्तस्य प्रवृत्तौ सुखरागदुःखोद्रेकदुःखद्वेषलक्षणकारणान्तरस्यासम्भवादिति भावः ।

'प्रवर्तको न चेदेष प्राण्यादन्याच्च कः पुमान् ।'

इत्यनुव्याख्यानं मनसि निधायेष्टापत्तिं परिहरति तदा चेति । 'तद्धेतुव्यपदेशात्' इत्यत्र तन्त्रेणोपात्तस्य तच्छब्दस्य तस्मिन्नानन्दमयप्रकरणे तस्य विष्णोस्तस्मिन् पूर्णानन्दत्व इत्यर्थत्रयमभिप्रेत्य व्याचष्टे– **आनन्दमयप्रकरण इत्यादिना** । 'महानन्दत्व एवास्य' इत्यनुव्याख्यानमूलकेन पूर्णानन्दत्वे लोकचेष्टकत्व-हेतुप्रदर्शनार्थं सूत्रमिति प्रतिपादकेनानेन न केवलमानन्दमयस्य विष्णुत्वमनेन सूत्रेण प्रतिपाद्यते; किन्तु मयटः प्राचुर्यार्थत्वमपि । विकारार्थत्वे तदन्तशब्दवाच्ये लोकचेष्टकत्वाद्ययोगादित्युक्तं भवति ।

## भावदीपः

।। ॐ तद्धेतुव्यपदेशाच्च ॐ ।। **अभ्यासादिति** ।। एकविषयासकृदावर्तनरूपादित्यर्थः । उत्तरत्रेवात्रापि ब्रह्मशब्दादित्येव वाच्ये अभ्यासादित्युक्तिरानन्दमयाभिप्रायेति सूचयति ।। **इत्युक्तमिति** ।। साक्षादिति भावः । सूत्रे चशब्दादाह । **तदेव हेत्वन्तरेणेति** ।। 'आ समन्तात्काशते यदाकाशो मुख्यतो हरिः' इत्यनुभाष्योक्तेराह ।। **आ समन्तादिति** ।। **पूर्णानन्देति** ।। 'मुख्यस्य निर्विशेषेण शब्द' इत्युक्तदिशा निरुपपदानन्दपदस्य पूर्णानन्दवाचित्वाद्वा 'अल्पात्सुखादल्पकर्मा पूर्णानन्दाद्धि सर्वकृत्' इति तैत्तिरीयभाष्योक्त्या विश्वचेष्टकत्वबलाद्वा लभ्यत इति भावः । श्रुतावापाद्यापादकयोरन्वयाय शेषमाह ।। **तदाऽसाविति** ।। **कारणाभावादिति** ।। 'प्रवृत्तिश्च नृत्तगानादिका सुखात् । दुःखाद्रोदादिका च' इत्यनुभाष्योक्तदिशा रागद्वेषदुःखसुखोद्रेकाणां चतुर्णामेव प्रवृत्तिहेतुत्वेन विष्णावाद्यत्रयस्य निरनिष्ठो निरवद्य इत्यादिश्रुतिभिर्बाधितत्वात् । 'सुखं लब्ध्वा करोति नासुखी करोति' इति छान्दोग्ये पूर्णसुखस्य **स्पष्टं विष्णौ प्रवृत्तिहेतुत्वेनोक्तेरिति** भावः । एवं भाष्योक्तश्रुतिं व्याख्याय भाष्यं सूत्रेण सङ्गमयन्सूत्रार्थ-माह ।। **इत्यानन्दमयेति** ।। सूत्रे तदिति तन्त्रम् । तत्रानन्दमयप्रकरणे । तस्य विष्णोस्तत्रानन्दप्राचुर्य-शब्दितपूर्णानन्दत्व इति भावः । आद्येनैवकारेण चतुर्मुखादिरन्त्येन तु विकारादिर्व्यावर्त्यः । आनन्दमयस्तत्त्विति प्रतिज्ञाभागोऽत्रानुवर्त्य इति मत्वाऽऽह ।। **विष्णुरेवेति** ।। पूर्णानन्दतया न तु

(भावदीपः)

विकारतयेत्यर्थः । अत्र विष्णुरेवानन्दमय इति वाच्ये पूर्णेत्युक्तिर्महानन्दत्व एवास्य हेतुः कोऽन्यादिति स्फुटमित्यनुभाष्यसुधयोरुक्तदिशा विष्णुरानन्दमय इत्यत्रैव नायं हेतुव्यपदेशः किन्तु पूर्वोक्तमयट्प्राचुर्यार्थ इत्यपि साध्यं पूर्वसूत्रादनुवर्त्यमिति द्योतयितुम् ॥ १४ ॥

## अभिनवचन्द्रिका

(सू.१४) **तदेव हेत्वन्तरेणेति** ॥ विष्णुरेवानन्दमय इत्युक्तमेवार्थं हेत्वन्तरेण 'अन्योंऽतर आत्मा आनन्दमय' इत्युक्तस्याऽन्तरात्मनः पूर्णत्वसाधनायोपन्यस्तेन जगच्चेष्टकत्वहेतुना प्रतिपादयत् सूत्रमित्यर्थः । अन्तरात्मनः पूर्णानन्दत्वसिद्धये विष्णुलिङ्गं जगच्चेष्टकत्वं हेतुतयोच्यते । न च तयोर्भेदे विष्णुलिङ्गेनाऽन्तरात्मनः पूर्णानन्दत्वसिद्धिः सम्भवतीति तयोरैक्यमभिप्रेनमिति ज्ञायत इति भावः । एतेन जगच्चेष्टकत्वान्यथानुपपत्त्या विष्णुः पूर्णनन्दोऽस्तु तथापि न पूर्वोक्तस्याऽऽनन्दमयस्य विष्णुत्वं सिध्यति । विष्णोः प्रागुक्तानन्दमयशब्दवाच्यत्वे प्रमाणानुपन्यासादिति परास्तम् । अत्र गुणसूत्रम् – 'तद्धेतुव्यपदेशाच्चे'ति । तस्याऽन्तरात्मनः पूर्णानन्दत्वसिद्धये तद्धेतोः=विष्णुलिङ्गस्य व्यपदेशात् विष्णुरेव पूर्णानन्दः, न ह्यन्यस्य पूर्णानन्दत्वसिद्धये अन्यलिङ्गव्यपदेशो युज्यते, असिद्धिप्रसङ्गादिति भावः । श्रुत्यर्थमाह– **आसमन्तादिति** ॥ यद्यपि– आसमन्तात् काशमानोऽन्तरात्मेति वक्तव्यम् । तस्यैवानन्दमयत्वप्रतिज्ञानात् । तथापि अन्तरात्मनः पूर्णानन्दत्वसिद्धये उपन्यस्तेन लिङ्गेन तस्य विष्णुत्वमपि सिद्धं भवति इति द्योतनाय विष्णुरित्युक्तम् । जगच्चेष्टकत्वान्यथानुपपत्त्या आकाशशब्दोक्तस्याऽन्तरात्मनः पूर्णानन्दत्वसिद्धावपि न विष्णुत्वसिद्धिरित्यत आह– **अन्यस्येति** ॥ जगच्चेष्टकत्वस्य स्वतन्त्रधर्मत्वात्, अन्यस्य स्वातन्त्र्याभावात्, पूर्णत्वसिध्यर्थमुपन्यस्तं जगच्चेष्टकत्वं विष्णुत्वमन्तराऽनुपपन्नं विष्णुत्वमपि साधयतीति भावः । इममेवाभिप्रायं व्यनक्ति – **अत इति** ॥ श्रुत्युक्तलोकचेष्टकत्वाऽन्यथानुपपत्त्या अन्तरात्मा विष्णुरानन्दमयश्च स्यादित्यर्थः । पूर्णानन्दत्वसिद्धये लोकचेष्टकत्वहेतोरनुपन्यासात् अन्तरात्मनः पूर्णानन्दत्वसिद्धिरस्तु, न विष्णुत्वसिद्धिः । अन्यसाधनायोपन्यस्तेन अन्यसिध्ययोगादित्यत आह – **आनन्दमयप्रकरण इति** ॥ आनन्दमयप्रकरणे अन्तरात्मनः पूर्णानन्दत्व एव पूर्णानन्दत्वसिध्यर्थमेव । विष्णोरेव चेष्टकत्वाख्यहेतुव्यपदेशात् । विष्ण्वसाधारणधर्मव्यपदेशात्, पूर्णानन्दतया प्रवृत्तिनिमित्तेन आनन्दमयशब्दवाच्यः अन्तरात्मा विष्णुरेवेति सिध्यतीत्यर्थः । यद्यपि – आनन्दमयप्रकरणे अन्तरात्मनः पूर्णानन्दत्वसिध्यर्थमेव हेतुरुपन्यस्तः तथापि तेन विष्णुत्वमपि सिध्यति । तस्य विष्ण्वसाधारणधर्मत्वेन विष्णुत्वं विनाऽनुपपन्नत्वात् । उक्तं च महाभाष्ये – अन्यार्थ उपात्तस्यापि अन्यसाधकत्वम् । 'शाल्यर्थं कुल्याः

(अभिनवचन्द्रिका)

प्रणीयन्ते ताभ्यश्च पानीयं पीयते उपस्पृश्यते च शालयश्च भाव्यन्त' इति । एतेन – 'विष्णोरेव पूर्णानन्दत्व एव लोकचेष्टकत्वाख्यहेतुव्यपदेशात्' इत्यत्र एवकारद्वयवैयर्थ्यमिति परस्तम् । पूर्णानन्दत्वसिध्यर्थमेवोपन्यस्तस्य अन्यत्रापि उपयोग इति सूचनाय द्वितीयैवकारस्याऽऽवश्यकत्वात्, विष्णोरेवाऽयं हेतुः विष्ण्वसाधारणधर्म इति यावत् । तस्य व्यपदेशादिति ज्ञापनाय प्रथमैवकारस्याप्यावश्यकत्वात् । नन्विदं सुधाविरुद्धम् । तथा हि– 'महानन्दत्व एवास्य हेतुः कोऽन्यादिति स्फुट'-मित्यनुव्याख्यानसुधायाम् 'इदानीमानन्दमयशब्दस्य विष्णुवाचित्वं तद्गतमयटश्च प्राचुर्यार्थत्वं हेत्वन्तरेणोपपादयत् 'तद्धेतुव्यपदेशाच्चे'ति सूत्रं व्याख्याति – **महानान्दत्व एवेति** ॥ आनन्दमयप्रकरणे 'को ह्येवान्यात् कः प्राण्याद्यदेष आकाश आनन्दो न स्या'दिति । अस्य विष्णोरेव महानन्दत्व एव च हेतुरुक्तः । तेन ज्ञायते विष्णुरेवानन्दमयशब्दार्थः मयट् प्राचुर्यार्थ इति । यदि हि आनन्दमयो विष्णोरन्यः स्यात्, मयट् च विकारार्थो भवेत्, तदा श्रुतिः अन्यस्य आनन्दविकारित्वं कमपि हेतुं ब्रूयात्, विष्णोर्महानन्दत्वे हेतुकथनं त्वसङ्गतमेव । अनेन तदिति षष्ठ्यन्तं सप्तम्यन्तं च तन्त्रेणोपात्तमित्युक्तं भवति । तस्य विष्णोः । तत्र महानन्दत्व इत्युक्तत्वात् । नन्वत्र आकाशस्य आनन्दत्वभावे अननं प्राणनं च कस्यापि न स्यादित्येतावदुच्यते न तु विष्णोर्महानन्दत्वे कश्चिदपि हेतुरुच्यत्त इत्यत उक्तं स्फुटमिति, तत्कथमिति चेत् आकाशशब्दस्तावद्विष्णुपर इति वक्ष्यते, 'आकाश-स्तल्लिङ्गा'(ब्र.सू.१.१.२२)दिति । तथा च विष्णोरानन्दत्वे जगतो निश्चेष्टकत्वप्रसङ्गमापादयन्त्या जगच्चेष्टकत्वं हेतुत्वेन विवक्षितमिति विवक्षुः तस्याऽऽनन्दत्वेन व्याप्तिमुपपादयतीत्युक्तेरिति चेत्, स्यादयं दोषः यदि सुधाग्रन्थस्य 'को ह्येवान्या'दिति वाक्ये अन्तरात्मनः प्रागुक्तानन्दमयत्वे हेतुर्नोच्यत इत्यर्थः स्यात्, न चैवं किं नाम अन्तरात्मनः आनन्दमयत्व एव हेतुरुच्यत इत्याशयः । सुधार्थपर्यालोचनया तथैव प्रतीतेः । तथा हि – आकाशे जगच्चेष्टकत्वरूपविष्णुलिङ्गश्रवणात् आकाशो विष्णुरस्तु, आनन्दमयः कुतो विष्णुरित्यत आह– **आनन्दमयप्रकरण इति** ॥ को ह्येवान्यादिति वाक्ये अन्तरात्मन एव पूर्णानन्दत्वे हेतुरुच्यते, 'को ह्येवान्या'दिति वाक्यस्य आनन्दमयप्रकरणत्वात् नहि अन्तरात्मन आनन्दमयत्वं प्रतिज्ञाय तत्प्रकरण एवाऽन्यस्याऽऽनन्दमयत्वे हेतुरुच्यत इति सम्भवतीति भावः । एतेन 'कोह्येवान्या'दिति श्रुत्या आकाशशब्दवाच्यस्य विष्णोः पूर्णानन्दत्वे हेतुरुच्यते चेत् विष्णुरानन्दमयो भवेदेव, श्रुत्युपपादितस्य तद्भावाभावे कारणाभावात् । एवं च सति आनन्दमयप्रकरण इत्यभिधानं व्यर्थमिति परास्तम् । विष्णुलिङ्गत्वेनाभिमतस्य जगच्चेष्टकत्वस्याऽऽनन्दमयशब्दवाच्याऽन्तरात्मगतत्व-ज्ञापनाय आनन्दमयप्रकरण इत्युक्तेरावश्यकत्वात् । अन्यथा – जगच्चेष्टकत्वरूपविष्णुलिङ्गस्य आकाशे

(अभिनवचन्द्रिका)

श्रुतत्वात् आकाशस्य विष्णुत्वमस्तु आनन्दमयस्य कुतो विष्णुत्वमिति शङ्का दुर्वारा स्यात् । 'महानन्दत्व एवाऽस्ये'ति मूलं योजयति– **अस्येति** ॥ अस्य महानन्दत्व एव चेति सम्बन्धः । ततश्चैवं योजना– अस्य अन्तरात्मनः महानन्दत्व एव हेतुरुक्तः, न त्वानन्दविकारित्वे । स च हेतुः विष्णोरेव लिङ्गम् । महानन्दत्वसाधनायोपन्यस्तस्य जगच्चेष्टकत्वस्य विष्ण्वसाधारणधर्मत्वात् । एतेन – 'अस्य विष्णोः महानन्दत्व एव हेतुरुक्त इत्येतावता पूर्णत्वात् विष्णोरेवेत्येवकारो व्यर्थ' इति परास्तम् । जगच्चेष्टकत्वस्य विष्णुलिङ्गत्वज्ञापनाय विष्णोरेवेत्यवधारणस्यावश्यकत्वात् । **तेन ज्ञायत इति** ॥ अन्तरात्मनः प्रतिज्ञातमहानन्दत्वे विष्णुलिङ्गव्यपदेशात् विष्णुरेवानदमयशब्दवाच्याऽन्तरात्मा, महानन्दत्व एव हेतुव्यपदेशात् प्राचुर्यमेव मयडर्थः न विकारित्वमिति विवेकः । **किमपि हेतुं ब्रूयादिति** ॥ पूर्णानन्दत्वसाधकं विष्णुलिङ्गं न ब्रूयादिति भावः । **विष्णोर्महानन्दत्व इति** ॥ यदि विष्ण्वन्यस्यानन्द-विकारित्वसाधनाय प्रवृत्तः स्यात् तर्हि महानन्दत्वव्याप्यविष्णुलिङ्गकथनमसङ्गतं स्यात् । न हि विष्ण्वन्यस्यानन्दविकारित्वसाधनाय प्रवृत्तस्य विष्णुलिङ्गकथनं महानन्दत्वव्याप्यकथनं उपयुज्यत इति भावः । **तस्य विष्णोरिति** ॥ 'तस्य विष्णोस्तत्रे'ति प्रक्षिप्तं, 'अस्य महानन्दत्व इत्युक्त्वा'दित्येव पाठः । एतेन महानन्दत्व एवाऽस्येति मूले 'तस्य विष्णोः तत्रे'त्यदर्शनात् अन्यथाऽनुवाद इति परास्तम् । **तत्कथमिति** ॥ विष्णुलिङ्गसद्भावात् अन्तरात्मा विष्णुरिति कथं न कथमपि विरोधि । आकाशश्रुतिसद्भावात् । लिङ्गापेक्षया श्रुतेर्बलवत्त्वादिति भावः । सिंहावलोकनन्यायेन स्फुटमित्युक्तस्य विवरणं करोति – **तथा चेति** ॥

## वाक्यार्थमुक्तावली

ॐ तद्धेतुव्यपदेशाच्च ॐ । पूर्णानन्द इति निरुपपदानन्दशब्दस्य बाधाभावे पूर्णानन्दे शक्तत्वादिय-मुक्तिः । श्रुतावापाद्यापादकयोरन्वयसिध्यर्थं शेषमाह तदाऽसाविति ॥ **आनन्दोद्रेकमिति** ॥ रागद्वेषदुःखोद्रेकसुखोद्रेकाणां चतुर्णामेव प्रवृत्तिहेतुत्वेन विष्णावाद्यत्रयस्य 'निरनिष्टो निरवद्य' इत्यादिश्रुतिबाधितत्वात् । सुखं लब्ध्वा करोतीति छन्दोगश्रुतौ सुखोद्रेकस्य प्रवर्तकत्वोक्तेश्चेति भावः । तर्कस्येष्टापत्तिनिरसनपरतया श्रुतिशेषं व्याचष्टे– **तदेति** ॥ सामान्यचेष्टा धर्माश्च कस्य स्युस्तमृते प्रभुमिति तैत्तिरीयभाष्यं मनसि निधाय अन्यात्प्राण्यादित्यनयोरर्थमाह चेष्टयेद्धर्मादौ चेति । यद्यपि तैत्तिरीयभाष्ये सुधायां च एष परमात्मा आसंमतात्काशनादाकाशः पूर्णानन्दो न चेत् तदा कारणान्तराभावान्न कश्चित्प्रवर्तयेत् । न चेदेष किञ्चित्प्रवर्तयेत् तदा कः प्राण्यादन्याच्च । न कोऽपि लौकिकीं वैदिकीं

(वाक्यार्थमुक्तावली)
प्रवृत्तिं कुर्यादिति यथाश्रुतं व्याख्यातं भगवतः प्रवर्तकत्वाभावेऽप्यन्यस्याप्रवर्तकत्वेन लोकस्य प्रवृत्युपपत्तिरित्याशङ्कापनोदाय टीकायां तदा च को वा हरहिरण्यगर्भादिर्लोकं चेष्टयेद्धर्मादौ च प्रवर्तयेदिति णिजर्थतया व्याख्यातम् । तथा चात्रापि यदि न कोऽपि प्रवर्तयेत्तदा लोके कोऽन्यात्प्राण्यादिति यथाश्रुतयोजना च कार्येति श्रुतिं व्याख्याय भाष्यं सूत्रेण सङ्गमयति इत्यानन्दमयेति । एतेन सूत्रे तच्छब्दस्य तत्रानन्दमयप्रकरणे तस्य विष्णोः तत्र पूर्णानन्दत्वे स चासौ हेतुश्च तद्धेतुः लोकचेष्टकत्वाख्यहेतुरित्यर्थचतुष्टयमुक्तं भवति ।

## तत्त्वसुबोधिनी

तद्धेतुव्यपदेशादित्यत्र तन्त्रेणोपात्तस्य तच्छब्दस्य तस्मिन्नानन्दमयप्रकरणे तस्य विष्णोः तस्मिन्पूर्णानन्दत्वे इत्यर्थत्रयमभिप्रेत्य व्याचष्टे ॥ **आनन्दमयप्रकरण इत्यादिना** ॥

## वाक्यार्थमञ्जरी

ॐ तद्धेतुव्यपदेशाच्च ॐ ॥ आनन्दमयो ब्रह्मैव तस्य विष्णोस्तत्र पूर्णानन्दत्वे तत्रानन्दमयप्रकरणे को ह्येवान्यात्कः प्राण्यादिति लोकचेष्टकत्वाख्यहेत्वभिधानादित्यर्थः ॥ **कारणाभावादिति** ॥ सुखोद्रेकान्नृत्यगानादौ प्रवृत्तिः ॥ सुखार्थं भोजनादौ दुःखोद्रेकाद्रोदनादौ दुःखनिवृत्तये कण्टकोद्धरणादौ वेति कारणचतुष्टयं प्रवृत्तौ कारणं दृष्टम् । तत्रोत्तरत्रयाणामभावादित्यर्थः । अन्यादित्यस्यार्थश्चेष्टयेदिति । प्राण्यादित्यस्यार्थः प्रवर्तयेदिति । अन चेष्टायामिति धातोः । सूत्रे तदिति तन्त्रमित्याशयेन त्रेधार्थमाह ॥ **आनन्दमयप्रकरण इति** ॥

**आनन्दपूर्णत्व एवेति** ॥ अनेन न केवलमत्र सूत्रे आनन्दमयस्य विष्णुत्वं समर्थ्यते किन्तु मयटः प्राचुर्यार्थत्वमेव । आनन्दपूर्णत्वाभावे उक्तरीत्या लोकचेष्टकत्वानुपपत्तेरिति सूचयति । स्पष्टं चैतन्महानन्दत्व एवास्येत्याद्यनुव्याख्याने ।

## विवृतिः

तद्धेतुव्यपदेशादित्यत्र तन्त्रेणोपात्तस्य तच्छब्दस्य तस्मिन्नानन्दमयप्रकरणे तस्य विष्णोस्तस्मिन् पूर्णानन्दत्व इत्यर्थत्रयमभिप्रेत्य व्याचष्टे ॥ **आनन्दमयप्रकरण इत्यादिना** ।

## सूत्रभाष्यम्

**॥ ॐ मान्त्रवर्णिकमेव च गीयते ॐ ॥**

'ब्रह्मविदाप्नोति परम्' इति सूचयित्वा 'सत्यं ज्ञानमनन्तं ब्रह्म' इति (तै.उ. २-१) मन्त्रवर्णलक्षितं परमेव ब्रह्म शब्दानुसन्धानाद्गीयते । न चावयवत्वविरोधः । 'स शिरः स दक्षिणः पक्षः स उत्तरः पक्षः स आत्मा स पुच्छम्' इति तस्यैवावयवत्वोक्तेश्चतुर्वेदशिखायाम् ।

शिरो नारायणः पक्षो दक्षिणः सव्य एव च ।
प्रद्युम्नश्चानिरुद्धश्च सन्दोहो वासुदेवकः ॥

नारायणोऽथ सन्दोहो वासुदेवः शिरोऽपि वा ।
पुच्छं सङ्कर्षणः प्रोक्त एक एव तु पञ्चधा ॥
अङ्गाङ्गित्वेन भगवान् क्रीडते पुरुषोत्तमः ॥

ऐश्वर्यान्न विरोधश्च चिन्त्यस्तस्मिञ्जनार्दने ।
अतर्क्ये हि कुतस्तर्कस्त्वप्रमेये कुतः प्रमा' इति बृहत्संहितायाम् ॥

रसशब्देन विशेषणात्तत्तत्सारभूतं चिन्मात्रमेवोच्यते । इदमिति च दृश्यमानसन्निहितत्वात् ।

'अनन्योऽप्यन्यशब्दे तथैको बहुरूपवान् ।
प्रोच्यते भगवान् विष्णुरैश्वर्यात्पुरुषोत्तमः ॥'

इति ब्रह्माण्डपुराणे (ब्रह्माण्डे. पा.) ॥ १५ ॥

## सत्तर्कदीपावली

एतदानन्दमयादिपञ्चकं ब्रह्मशब्देन निर्दिष्टं श्रुतौ न तदपरं ब्रह्मेति शङ्क्यम् । तदुपक्रमे ब्रह्मविदाप्नोति परम् । तदेपाऽभ्युक्ता । सत्यं ज्ञानमनन्तं ब्रह्मेति परब्रह्मनिर्देशादित्येतमर्थं साधयत्सूत्रमुपन्यस्य व्याचष्टे । **मान्त्रवर्णिकमेवेत्यादिना** ॥ नन्वानन्दमयवत्तत्पुच्छस्यापि ब्रह्मत्वं श्रुत्यैव अभ्युपगन्तव्यम् । न च तद्युज्यते । एकदेशरूपस्य पुच्छस्य ब्रह्मत्वविरोधादिति । तन्नैवम् । स शिर इत्यादिश्रुत्या पूर्णेन परमात्मना तच्छिरोहस्तमध्यदेहपुच्छशब्दाभिधेयपादानाम् अत्यन्ताभिन्नतया प्रतिपादितत्वेन ब्रह्मत्वाविरोधात् ।

(सत्तर्कदीपावली)
करचरणादिसमग्रावयवविभागसमर्थनाय प्रतिपादितत्वाच्च शिरो नारायण इत्यादिवचनेन नैतद्विरुद्धं भवति । तावष्टगुणमैश्वर्यं नाथं स्वाभाविकं परमित्यादिवचनसिद्धाणिमाद्यष्टैश्वर्ययोगादघटितघटकत्वेन अतर्क्यशक्तेः अपरिमेयप्रभावाच्च । तदाह । **न चेत्यादिना** । उक्तन्यायेनान्नरसमयस्यापि ब्रह्मत्वात् । तत्रान्नमेव रसोऽन्नरस इति व्याख्येयम् । न त्वन्नस्य रस इति । ततश्च रसशब्देन सारवाचिना विशेषितत्वादत्तृत्त्वादि-प्रचुरं सर्वसारभूतं चिन्मात्ररूपम् अन्नरसशब्देनोच्यते । न त्वन्नसारमेव भौतिकम् । एवं प्राणमयादि सर्वमपि चिन्मात्रमेवेत्यवगन्तव्यम् । रसो वै स इत्युत्तरत्र श्रवणात् । अन्नरसमयस्य ब्रह्मणोऽवयवयेष्वपि मनुष्य-मस्तकादिसन्निहितेषु तस्येदमेव शिरः । अयं दक्षिणः पक्षः । इत्यादिव्यपदेशो वस्त्रप्रावृतदेवदत्तावयवेष्विव युज्यते । अन्नरसमयादन्योऽन्तर आत्मा प्राणमय इति व्यपदेशः स्वगतभेदवर्जितेऽपि ब्रह्मणि विशेष-बलादघटितघटकैश्वर्याद्युज्यते । तदेतदाह । रसशब्देनेत्यादिना ।

## तत्त्वप्रदीपिका

मान्त्रवर्णिकमेव च गीयते । इतश्चान्नमयादिशब्दवाच्यो विष्णुरेव । यत 'सत्यं ज्ञानमनन्तं ब्रह्म' इति मन्त्रवर्णे यल्लक्षणं ब्रह्मोक्तं तदेवान्नमयादिशब्दैर्गीयत इति गम्यते । कुतः? शब्दानुसन्धानात् अन्नमयादिशब्देषु सत्यादिशब्दार्थानुसन्धानात् । तथाहि– सत्त्वं यापयतीति सत्यम् । तच्च सत्त्वं त्रिविधमुद्भवजीवनविनाशभेदेन । षदलृ विशरणगत्यवसादनेष्विति धातोर्विशीर्णताया अपि सत्त्वशब्द-वाच्यत्वात् । सृष्टिपालनसंहारैः तद्यापनात् सत्यत्वम् । तत्त्रिविधमप्यन्नप्राणयोः श्रूयते 'अन्नाद्भूतानि जायन्ते, जातान्यन्नेन वर्धन्ते, अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यत इति' 'प्राणं देवा अनुप्राणन्ति मनुष्याः पशवश्च ये, प्राणो हि भूतानामायुः, तस्मात्सर्वायुषमुच्यते' 'यद्वा ऋते प्राणाद्रेतस्सिच्येत, पूयेन्न सम्भवेत्' इत्यादौ । तस्मादन्नप्राणयोस्सत्यत्वम् । सामान्यविशेषमात्रभेदान्मनोविज्ञानयोर्ज्ञानत्वमेव । आनन्दस्तु भूमत्वादनन्तपदार्थो वेदितव्यः । लक्ष्यत्वेन निर्दिष्टस्य ब्रह्मशब्दस्य प्रतिश्लोकमनुसन्धानाच्चैव-मवसीयते ।

नन्वानन्दमयस्य ब्रह्मत्वे 'ब्रह्म पुच्छं प्रतिष्ठा' इति श्रुतेः सिद्धस्य ब्रह्मण आनन्दमयावयवत्वस्य विरोधः । अवयवत्वे चावयवीत्यस्य विरोधस्स्यादित्यत आह न चावयवत्वविरोध इति । पादः पुच्छं, प्रतिष्ठा हि पुच्छं, 'द्विप्रतिष्ठो वै पुरुष' इत्यादिश्रुतेः । ऐश्वर्यान्न विरोधश्च, विरुद्धमप्यविरोधं नेतुमीशत्वात् । न चैतावता तस्मिन्नीश्वरे निष्प्रमाणकधर्मकल्पनास्सम्भावयितुं शक्येरन् । अप्रामाणिकत्वादेव तेषाम् । अन्यथाऽतिप्रसङ्गात् । अतो यावत्प्रमाणप्राप्तं तावल्लोकविरुद्धमपि न विरुद्धतया चिन्तनीयमित्यर्थः । एकैकस्य चावयवस्य सर्वेश्वरत्वान्न विरोधः । अप्रमेये कुतः प्रमा, एतावदेव सामर्थ्यं नातोऽधिकमिति परिच्छेदः कथमपरिच्छेद्ये । रसशब्देन विशेषणात्तत्तत्सारभूतं चिन्मात्रमेवोच्यते । अयं भावः ।

(तत्त्वप्रदीपिका)

'अन्नरसमयः' 'रसो वै स' इत्यादावन्ते च विशेषणान्मध्येऽपि 'प्राणरसमय' इत्याद्युपपत्तेः रसशब्दस्य सारवाचित्वात्प्रचुरान्नादिसारं चैतन्यमात्रदेहं ब्रह्मान्नरसमयादिशब्दार्थः, न भौतिकान्नादिः ।

'तस्येदमेव शिरः, अयं दक्षिणः पक्षः, अयमुत्तरः पक्ष' इत्यादिप्रत्यक्षसिद्धभौतिकावयवाभिधानान्न तत्साराभिधानमित्याशङ्क्याऽह इदमिति च दृश्यमानसन्निहितत्वादिति । दृश्यमानशिरआद्यवयवान्तर्व्यापित्वेन तत्सन्निहितत्वादन्नमयावयवानां युक्त इदमादिव्यपदेशः । वर्मान्तर्वर्तिवीरावयवव्यपदेशवत् ।

'तस्माद्वा एतस्मादन्नरसमयादन्योऽन्तर आत्मा प्राणमयः, तस्माद्वा एतस्मात्प्राणमयादन्योऽन्यर आत्मा मनोमय' इत्याद्यन्यत्वश्रुतेर्नैकस्यैवेदं बहुरूपत्वमित्यत आह– **अनन्योऽप्यन्यशब्देनेत्यादि ।** अनन्योऽप्यन्यशब्देन तथाऽन्यवदुच्यते ।

## तत्त्वप्रकाशिका

यदुक्तं ब्रह्मशब्दादन्नमयादीनां विष्णुत्वमिति न तद्युक्तम् । ब्रह्मशब्दस्यापरब्रह्मण्युपपत्तेः । ब्रह्मशब्दस्य परब्रह्मणि मुख्यत्वेऽपि विष्णोरानन्दमयावयवत्वोक्त्यादिनाऽमुख्यस्यैव ग्रहणोपपत्तेरित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ।। **मान्त्रवर्णिकमेव चेति ।।** नेदमानन्दमयादिपञ्चकमपरं ब्रह्म । यतः सत्यं ज्ञानमनन्तं ब्रह्म इति मन्त्रवर्णे लक्षणवत्तयोक्तं परमेव ब्रह्मान्नमयादिशब्दपञ्चकेन गीयते । तत्कुत इत्यत उक्तम् ।। **शब्दानुसन्धानादिति ।।** सत्यज्ञानानन्तशब्दानामन्नमयादिशब्दानां चार्थानुसन्धाने सत्येकार्थत्वप्रतीतेः । मन्त्रवर्णेऽपि ब्रह्मेत्येवोक्तत्वात् कथं तदर्थभूतानामप्यन्नमयादिशब्दानां परब्रह्मार्थतेत्यत उक्तम् ।। **ब्रह्मविदिति ।।** 'ब्रह्मविदाप्नोति परम्' इति सूचनया परब्रह्मतज्ज्ञानतत्प्राप्तिकथने किं तत्परं ब्रह्म कथं च तद्वेदनं कीदृशी च तत्प्राप्तिरिति शङ्कात्रयमुदेति । तत्रादिशङ्कापनोदाय परब्रह्मणो लक्षणमुच्यते ।। **सत्यमिति ।।** यो वेदेति वेदनम् । सोऽश्नुत इति प्राप्तिः । अतो मन्त्रवर्णे परं ब्रह्मैवोच्यत इति तदुक्तं परमेव ब्रह्म शब्दानुसन्धानादन्नमयादिशब्दैर्गीयते इति नापरब्रह्मशङ्काऽत्र कार्येति भावः । चशब्दो विष्णोरानन्दमयत्वे युक्तिसमुच्चयार्थः । ननु कथं विष्णोरानन्दमयत्वं तस्यानन्दमयात्रयवत्वादवयविनश्चा-वयवत्वविरोधादित्यत आह ।। **न चेति ।।** न विष्णोरानन्दमयत्वे तदवयवत्वविरोधः । स शिर इत्यादिश्रुतावयविन एवावयवत्वोक्तेरवयवाद्यभेदादिति भावः । अवयविनोऽवयवत्वं विरुद्धमित्याशङ्कां परिहर्तुं स्मृतिं चाह ।। **शिर इति ।।** अघटितघटकेश्वरशक्त्या नावयविनोऽवयवत्वं विरुद्धमित्यर्थः । किञ्च किं प्रमाणेनावयविनोऽवयवत्वं विरुद्धमुत 'अवयवी नावयवोऽवयवित्वाल्लोकवत्' इति तर्केण । नाद्यः । असिद्धत्वात् । द्वितीयं निराचष्टे ।। **अतर्क्य इति ।।** अतर्क्यत्वात् कुतस्तस्मिंस्तर्कः साधको बाधको वा भवेदित्यर्थः । अस्तु वा तस्य तर्क्यत्वं तथापि न तद्विरोधः । लोके परिमितशक्तित्वेन

(तत्त्वप्रकाशिका)
विरोधात् । विरोधोपयोगिपरिमितशक्तेरपरिमिते भगवत्यभावादिति भावेनाह ॥ **अप्रमेय इति** ॥ यदवादि स वा एष इत्यन्यपरामर्शो नान्नात्पुरुष इत्युक्तपरामर्श इति तदयुक्तम् । आत्मनो दूरस्थत्वात् । देहस्य समीपस्थत्वात् समीपोक्तपरित्यागेन दूरस्थपरामर्शग्रहणे कारणाभावात् । प्रकृतस्यैव पुरुषशब्देनोक्ते-रात्मनस्तदभावाच्च । एकेनैव शब्देन द्विरुक्तेन भेदश्रुतिं विना वस्तुद्वयोक्तिग्रहणायोगादित्यत आह ॥ **रसेति** ॥ स वा एष पुरुष इति वाक्येन ब्रह्मचैतन्यमेव परामृश्यते न देहः । न च तस्य दूरोक्तिविरोधः पुरुषपदेनाप्रकृतत्वविरोधश्च । यत आकाशादिपुरुषान्तशब्दैरुक्तमाकाशादिसारभूतं ब्रह्मचैतन्यमेव परामर्श-वाक्येनोच्यते । एवं तर्हि पुरुषपदेन द्वयोरप्युक्तत्वादुभयपरामर्शोऽयमस्त्विति न वाच्यं किं तु पुरुषसारभूतं ब्रह्मचैतन्यमात्रमेवान्यद्विहायोच्यते । कुत एतत् । रसशब्देन विशेषणात् । यथा प्रकृतिं पुरुषं चेति पुरुषशब्देन द्वयोः प्रकृतत्वेऽपि दुःखानुभवितृत्वविशेषणेन 'पुरुषः प्रकृतिस्थो हि' इति जीव एवोच्यते । एवमन्नात्पुरुष इत्युभयोः प्रकृतत्वेऽपि स वा एष पुरुषोऽन्नरसमय इति सारान्नमयत्वविशेषणेन परमात्मपरामर्श एवेति ज्ञायत इति भावः । उक्तं च ।

'बहूनां सह निर्देश एकयाऽभिधयैव तु ।
तयैवाभिधया तेषां परामृश्यैकमुच्यते'

इति । एतच्च सविस्तरमुक्तमुत्तरप्रस्थाने 'ब्रह्मशब्दोदिते तस्मिन्' इत्यादिना । नन्वन्नमयप्राणमय-मनोमयविज्ञानमयानन्दमया मे शुध्यन्तामिति स्थानान्तरे प्रार्थितशुद्धीनामन्नमयादीनां कथं ब्रह्मतोच्यत इत्यतो वाऽऽह ॥ **रसेति** ॥ भवेदेतद्यदि प्रार्थितशुद्धयोऽन्नमयादयोऽप्यत्रोच्यन्ते । नैतदस्ति किन्तु तत्तत्कोशगतं तत्तन्नियामकं ब्रह्मचैतन्यमेवोच्यते । कुतः । अन्नरसमय इत्यादौ 'रसो वै स' इत्यन्ते चैतेषां कोशव्या-वृत्त्यर्थमेव रसशब्देन विशेषणादित्यर्थः । ननु यदि परिदृश्यमानदेह एव नान्नमयः किन्तु ब्रह्मैव । कथं तर्हि तस्येदमेव शिर इति प्रत्यक्षनिर्देशो युज्यते । न च वाच्यमुपनिषद्द्रष्टा मुनिर्ब्रह्माऽपरोक्षीकृत्य प्रत्यक्षतो निर्दिशतीति । तथा सति तेनापरोक्षीकृतप्राणमयादौ तत्प्रसङ्गात् । निर्देशवैयर्थ्याच्चेत्यत आह ॥ **इदमिति** ॥ दृश्यमानशिरःपक्षादावन्नमयभगवच्छिरःपक्षादेः संनिहितत्वाद्वस्त्रप्रावृतजानुवदिदमिति च निर्देशो युज्यत इत्यर्थः । ननु तथापि 'तस्माद्वा एतस्मादन्नरसमयादन्योऽन्तर आत्मा प्राणमयः' इत्यन्योन्यमन्यतयोक्तान्न-मयादीनां कथं ब्रह्मतेत्यत आह ॥ **अनन्योऽपीति** ॥ अन्यशब्देन प्रोच्यत इत्यन्वयः । एको बहुरूपवान् भवतीत्यनेन बहुरूपत्वान्न विरोध इत्येतदपि प्रमापितं स्यात् ॥ १५ ॥

## गुर्वर्थदीपिका

पुच्छस्यैव ब्रह्मत्वे आनन्दमयादीनां ब्रह्मत्वानिर्णयेन विकारापवादकाभावान्मयट्शब्दोऽपि बाधक एवेति भावेनोक्तम् अवयवोक्त्यादिनेति । यद्यपि 'ब्रह्मविदाप्नोति परम्' इति श्रुतौ वेदनविषयतया

(गुर्वर्थदीपिका)
ब्रह्मेत्येव श्रवणेन आप्तिविषयतया परमित्येव श्रवणेन च साक्षात्परं ब्रह्मेति न श्रूयते । तथाऽप्यन्यविषय-वेदनेनान्यस्य प्राप्त्ययोगाद्वेदनविषयगमनविषययोरैक्ये अर्थात्परब्रह्मैव तत्स्यादिति भावेनाऽऽह भगवान् भाष्यकारः 'ब्रह्मविदाप्नोति परमिति सूचयित्वा' इति । परं ब्रह्म सूचयित्वेत्यर्थः । अप्रमेयेऽपरिच्छेद्ये प्रमा प्रमाणं परिच्छेदः शक्तेरियत्ता कुत इत्यर्थः । अन्नरसमय इत्यत्र रसशब्दस्य पूर्वनिपातेन सारान्नमय इत्येवार्थः । न तु यथाश्रुतः । तथा सत्यन्नरसस्यैव विशेष्यत्वेन प्रधानत्वात्तत्रैवोदाहृतश्लोके 'अन्नरसाद्ध्येव खल्विमानि भूतानि जायन्त' इति प्रयोगप्रसङ्गात् । अस्माकं तूक्तविधयाऽन्नस्यैव विशेष्यत्वे विशेषणप्रत्ययार्थयोरुभयोरप्युपसर्जनतया प्रधानभूतान्नस्यैव श्लोकेऽपि प्रसूतिरिति भावेनाऽऽह रसशब्देन विशेषणादिति । ओषधीभ्योऽन्नमित्यत्रान्नपदेन प्राकृतान्नं तत्र श्रेष्ठत्वात्सारभूतं ब्रह्म च प्रस्तुतम् । तस्यान्नस्य परामर्शप्रकरणे रसशब्देन विशेषणात्सारभूतमन्नमेव परामृश्यत इति गम्यते । अन्नशब्देन च 'अद्यतेऽत्ति च भूतानि' इति व्याख्यानात् भूतात्तृत्वमुच्यते । प्राचुर्यार्थकमयटा च सारान्नस्य तस्यान्नपदप्रवृत्तिहेतुभूतभूतात्तृत्वे प्राचुर्यमुच्यते । एवं च सारान्नमयपदेन प्राक्प्रस्तुतसारा-सारान्नयोः साररूपः अत एव भूतात्तृत्वेनान्नपदवाच्यः अन्नपदार्थभूतभूतात्तृत्वे प्राचुर्यवांश्च परमात्मा लभ्यते । अतः पुरुषःपदमपि सारभूतं पूर्णत्वात्पुरुषपदवाच्यं विष्णुमेव वक्ति । 'षद्‌लृविशरण गत्यवसादनेषु' इति धातोः सद्भावमवसादनं संसारं यापयतीत्यर्थकसत्यशब्दार्थप्रपञ्चनरूपत्वाद्रसशब्देन विशिष्य दूरस्थान्नस्यैव प्रपञ्चनम् । न तु समीपस्थपुरुषस्येति च भावो भाष्यकारस्य । परबोधनार्थं खलूपदेशस्तेनापि साक्षात्कृतेऽर्थे पुनरुपदेशवैयर्थ्यमेव । असाक्षात्कृतेऽपीदंपदस्य तं प्रति स्वार्थासमर्पकत्वादिदमित्युपदेशो व्यर्थ एवेति भावेनोक्तं निर्देशवैयर्थ्याच्चेति । साक्षादुपयोगाभावेऽपि परम्परयोपयोग इति भावेनोक्तं 'दृश्यमानेति' । वस्तुगत्या भेदाभावेऽप्येकसत्त्वेऽप्यपरनाशाख्य-भेदासाधारणकार्यान्यसकलभेदकार्यकारिणा विशेषेणान्यत्वव्यवहारादेः कर्तुं शक्यत्वादिति भावेनोक्तम् 'अनन्योऽपि' इति ।

## भावबोधः

**युक्तिसमुच्चयार्थ इति** । अनेन 'गीयते च' इति चशब्दान्वयः सूत्रे सूचितो भवति । तथा चान्नमयादिप्रकरणजातं परब्रह्मपरम् । तदर्थकमन्त्रवर्णव्याख्यानरूपत्वादिति वाऽनन्दमयादिः, ब्रह्म, तत्प्रतिपादकमन्त्रवर्णव्याख्यानरूपान्नमयादिप्रकरणप्रतिपाद्यत्वादिति वा सूत्रार्थ उक्तो भवति । 'अवयवाद्य-भेदात्' इति न्यायविवरणं 'तस्यैवावयवत्वोक्तेः' इति भाष्योक्तहेतुं प्रति साध्यपरत्वेन संयोजयति र

(भावबोधः)

शिर इत्यादिश्रुताविति । अवयवाद्यभेदे 'नेह नानास्ति किञ्चन' इति श्रुतिरपि न्यायविवरणोदाहृता द्रष्टव्या । बाधको वेति । प्रकृते तर्कस्य बाधकत्वेन शङ्कितत्वादिति भावः । चिन्मात्रमेव इत्येव-शब्दार्थोऽन्यद्विहायेति । दुःखानुभवितृत्वविशेषेणेति । 'भुङ्क्ते प्रकृतिजान् गुणान्' इति वाक्यशेषादित्यर्थः । 'रसशब्देन विशेषणात्' इति भाष्ये रसत्वं न साक्षात् पुरुषविशेषणं किन्तु प्राचुर्यविशिष्टान्नरूप-विशेषणद्वारेत्यभिप्रेत्याह– **सारान्नमयत्वविशेषणेनेति** ।

सारान्नमय एवायं न लोकान्नमयः प्रभुः ॥

इत्यनुव्याख्यानानुसारेण श्रुतितात्पर्यकथनमिदम् । एवञ्च 'रसशब्दः सारवाची,

'रसः सारो वरश्चेति शब्दाः पर्यायवाचकाः'

इत्यभिधानात् । ततश्चान्नरसोऽन्नसारः, अन्नशब्दार्थेषु मुख्यार्थोऽत्तृत्वादिलक्षणः तत्प्रचुर' इति सुधोक्तः श्रुत्यर्थो ज्ञेयः । **निर्देशवैयर्थ्याच्चेति** । स्वस्यापरोक्षतो ज्ञातृत्वेन शब्दानपेक्षणात् । उपदेश्य-पुरुषाणाञ्च प्रत्यक्षायोग्यत्वादित्यर्थः ॥ इदमित्येव निर्देशो वस्त्रप्रावृतवद्विभोः । शिरआदेर्भवेज्जीवशिरआदौ व्यवस्थितेः इत्यनुव्याख्यानं मनसि निधाय भाष्यं व्याचष्टे– **दृश्यमानेति** ।

## भावदीपः

॥ ॐ मान्त्रवर्णिकमेव च गीयते ॐ ॥ अत्रैवकारव्यावर्त्यमाह ॥ **यदुक्तमित्यादिना** ॥ **ब्रह्म-शब्दादिति** ॥ आनन्दमयाभिप्रायेण सूत्रे मुखतोऽभ्यासोक्तावपि उपात्तोपलक्षितसर्वाभिप्रायेण तु पञ्चस्वपि ब्रह्मशब्दसत्वेनासकृदावृत्तिमात्राभिप्रायाभ्यासोक्तिरिति भावेनैवमुक्तिः ॥ **मुख्यत्वेऽपीति** ॥ प्रागुक्तश्रुति-स्मृतिभिरिति भावः । न चावयवत्वेत्यादिभाष्यानुरोधादाह ॥ **अवयवत्वोक्त्यादिनेति** ॥ आदिपदे-नान्योऽन्तर आत्मेत्यादिनोक्तान्यत्वादेर्ग्रहः । भाष्यस्थैवकारव्यावर्त्यमाह ॥ **नेदमिति** ॥ **पञ्चकमिति** ॥ एतेनेदं सूत्रमाद्यसूत्रमिव पञ्चानामपि ब्रह्मत्वसाधकं न तु तद्धेतुसूत्रमिवानन्दमयमात्रस्येति सूचितम् । तत्र हेतुत्वेन भाष्यं योजयति ॥ **यत इति** ॥ **एकार्थेति** ॥ तत्र सत्यत्वं सृष्ट्याऽन्नप्राणयोरपि । उक्तं ज्ञानं तु मनसा विज्ञानेनाप्युदीरितम् । अनन्तत्वं तथाऽऽनन्दमयवाचाऽप्युदाहृतमित्यादिनाऽनुभाष्योक्त-दिशेति भावः । विवरिष्यते चैतदग्रे । सूचनया संक्षिप्योक्तया ॥ **परब्रह्मेति** ॥ अन्यवेदनेनान्य-प्राप्त्ययोगाद्वेदनाप्त्योर्विषयैक्यावश्यम्भावेन परब्रह्मवित्परब्रह्माप्नोतीत्यभिमतत्वादिति भावः ॥ **तदुक्तमिति** ॥

(भावदीपः)

तत्र मन्त्रवर्णे लक्षणवत्तयोक्तमित्यर्थः । ननूक्तरीत्याऽस्य सूत्रस्य आद्यसूत्रस्थहेतुभूतब्रह्मशब्दस्यान्यथा-सिद्धिनिरासकत्वात् । तन्निष्ठस्येत्यादिसूत्र इव चशब्दो न स्यादित्यत आह ॥ **चशब्द इति** ॥ एवकारेणैव तन्निरासादवशिष्टश्चशब्दो न केवलमभ्यासादानन्दमयो ब्रह्म किन्तु मान्त्रवर्णिकगानाच्चेति समुच्चयार्थ इत्यर्थः । प्राक्साक्षात्श्रुताभ्यासरूपहेतुसमुच्चयलाभाय न चावयवत्वेत्यादिभाष्यघटनाय चानन्दमयत्व इत्येवोक्तिः । अभिप्रेतब्रह्मशब्दादिति हेतुपक्षे तु आनन्दमयादित्व इति व्याख्येयम् । न चेति साध्यांशं व्याख्यां हेत्वंशं व्यनक्ति ॥ **स शिर इति** ॥ श्रुत्युक्तत्वमात्रेण कथं विरोधनिरास इत्यतो न्यायविवरणोक्ततात्पर्यमाह ॥ **अवयवाद्यभेदादिति भाव इति** ॥ श्रुतौ पक्षो बाहुः । आत्मा मध्यदेहः । पुच्छं पादावित्यर्थः । ऐश्वर्यात् न विरोध इत्येतद् व्यनक्ति ॥ **अघटितेति** ॥ अनेन भाष्ये श्रुत्युक्तिरवयवाद्यैक्याभिप्रायेण । स्मृत्युक्तिस्तु विरोधशामकाघटितघटकशक्तिं वक्तुमिति सूचितम् । श्रुतावुपासकभेदेन नारायणोऽथ सन्दोहः मध्यदेह इति पक्षभेदोक्तिः अत्र नारायणादिरूपाणामानन्दमय-शब्दितानन्दमयाकोशस्थनारायणाख्यमूर्त्यवयवत्वं च

'अङ्गाङ्गित्वेन भगवान्स्वानन्दानुभवे स्थितः ।
स एव व्यूह्य चात्मानं पृथग्रूप इव स्थितः ।'

इत्यैतरेयभाष्यदिशा तथा

'सर्वतः पाणिपादादिर्यतः पाण्यादिशक्तिमान् ।
केशादिष्वपि सर्वत्र कृष्णकेशो हि यादवः ।
अणोरणुतरै रूपैः पाणिपादादिसंयुतैः ।
सर्वत्र संस्थितत्वाद्वा सर्वतः पाणिपादवान्'

इति त्रयोदशगीतातात्पर्योक्तदिशा चानेकमुक्तारत्ननिर्मितप्रतिमायां मुक्तादेरिव ज्ञातव्यम् । वचने सर्वत्रेत्यस्य हस्तपादाद्यवयवस्थान इत्यप्यर्थ इत्याहुः ॥ अप्रमेयं अपरिमिते । प्रमा परिमितिरित्यर्थं व्यञ्जयन्नवतारयति ॥ **विरोधोपयोगीति** ॥ **प्रकृतस्येति** ॥ अन्नात्पुरुष इति पुरुषपदेन प्रकृतस्यैव देहस्य स वा एष पुरुष इति पुरुषशब्देनोक्तेः आत्मनः पुरुषशब्देन प्रकृतत्वाभावादित्यर्थः ॥ **वस्तुद्वयेति** ॥ देहपरमात्मरूपेत्यर्थः । अदृश्यत्वादिगुणक इत्येतद्विषयवाक्ये श्रुताक्षरशब्दयोरर्थ-भेदोऽङ्गीक्रियत इत्यतो वा वक्ष्यमाणपुरुषशब्दे व्यभिचारनिरासाय वा भेदश्रुतिं विनेत्युक्तम् । सोपस्कराणि वाक्यानीति न्यायेन भाष्यमुपस्कृत्य व्याचष्टे ॥ **स वा एष इति** ॥ **आकाशादीति** ॥ आकाशाद्वायु-

(भावदीपः)

रित्यादिवाक्यस्थैरित्यर्थः ॥ **सारेति** ॥ नियामकभूतमित्यर्थः । एवकारस्य व्यावर्त्यशङ्कापूर्वमर्थमाह ॥ **एवं तर्हीति** ॥ **प्रकृतिमिति** ॥ 'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि' इति गीतायां त्रयोदशेऽध्याये पुरुषपदेन जीवपरयोः प्रकृतिपदेन चेतनाचेतनप्रकृत्योः स्वीकारायोभावपीत्युक्तमिति गीतातात्पर्योक्तेः द्वयोः प्रकृतत्वेऽपीत्युक्तम् । पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान्गुणानित्युत्तरतृतीयश्लोके प्रकृतिजान्गुणान् दुःखादीन्भुङ्क्त इति दुःखानुभवितृत्वविशेषणेन जीव एवोच्यत इत्यर्थः । पुरुषः प्रकृतिस्थ इत्यत्र पुरुषशब्दो जीव इति तात्पर्योक्तेरिति भावः ॥ **उभयोरिति** ॥ देहपरमात्मनोरित्यर्थः ॥ **सारान्नेति** ॥ 'सारान्नमय एवासौ' इत्यनुभाष्यसुधोक्तदिशा सारान्नत्वं श्रेष्ठान्नत्वं भूताद्यत्वादिकं तत्प्रचुरत्वविशेषणेनेत्यर्थः ॥ **उक्तं चेति** ॥ एकादशस्कन्धतात्पर्ये तेषां मध्य इत्यर्थः । एवमनुव्याख्यानानुरोधेन भाष्यस्यैकमर्थमुक्त्वा

> 'अन्नस्य सारभूतोऽयं शरीरस्य च केशवः ।
> अन्ननामा चान्नसंस्थः शरीरेषु च संस्थित'

इति तैत्तिरीयभाष्यानुरोधेन व्यावर्त्यपूर्वमर्थान्तरमाह ॥ **नन्वन्नमयेति** ॥ **स्थानान्तरेति** ॥ नारायणेत्यध्यापकप्रसिद्धोपनिषदीत्यर्थः । विरजाहोमप्रकरणस्थमिदं वाक्यम् ॥ **तेषामिति** ॥ तेन पञ्चानामप्यन्नरसमयः प्राणरसमयो मनोरसमयो विज्ञानरसमय आनन्दरसमय इति विशेषणार्थमेवाद्यन्तयोः रसपदोक्तिः । तथा च प्राणरसादिपदेन सारप्राणादिरूपचेष्टकत्वादिरेव लभ्यते । न तु प्रसिद्धवाय्वादिरिति भावः ॥ **निर्देशेति** ॥ तस्य परार्थत्वेन परस्यानपरोक्षत्वादिति भावः ॥ **वस्त्रेति** ॥ 'इदमित्येव निर्देशो वस्त्रप्रावृतवद्विभोः' इत्यनुभाष्योक्तेरिति भावः । प्रमापितं प्रमाणेन स्थापितमित्यर्थः । तेन च पौनरुक्त्यमिति भावः । अत्र भाष्ये ऐश्वर्यादित्युपलक्षणम् । तृतीये 'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि' इत्यधिकरणभाष्ये अभेदेऽपि भेदव्यपदेशः स्थानभेदादैश्वर्ययोगाच्च युज्यत इति वक्ष्यमाणदिशा कोशादिस्थानभेदादपीति ज्ञेयम् । तत एव प्राक्टीकायां तत्तत्कोशगतमित्युक्तम् । ननु विकारशब्दादिति सूत्रे मयड्विषयशङ्कासमाध्योरशेषबाधकशङ्कासमाध्युपलक्षणत्वेनानुव्याख्यानसुधयोर्व्याख्यानात् बहुरूपत्वान्न विरोधः । स्वरूपे च युज्यत इत्यादिवदवयवान्यत्व इमिति निर्देशादिविरोधा अपि तत्रैव शङ्कित्वा निरस्याः न त्विह सूत्रे तन्निरासकस्य कस्याप्यदृष्टेरिति चेत्सत्यम् । तथापि ब्रह्मशब्दस्यामुख्यार्थत्व शङ्काया अत्र सूत्रे निरासात् । तस्याश्च निर्बीजत्वव्युदासाय भाष्ये अवयवत्वादिविरोधोऽत्र निरस्त इत्यदोषः । केचित्तु अवयवत्वप्रत्यक्षनिर्देशौ आनन्दमयान्नमययोर्ब्रह्मत्वे असाधारण्येन बाधकाविति द्योतनाय व्यवधानेन तन्निरास इत्याहुः ॥ १५ ॥

## अभिनवचन्द्रिका

टीकायाम् इत्याशङ्क्यां **परिहरन् इति** ॥ इत्याशङ्क्यां परिहरिष्यन् भाष्यकार अन्नमयादीनां पञ्चानामपि ब्रह्मत्वं प्रतिपादयत् सूत्रं पठित्वा व्याचष्ट इत्यर्थः । एतेन अस्मिन् सूत्रे विष्णोरानन्दमयावयत्वोक्त्यादिनेति पूर्वोक्तबाधकानुद्धारात्तत्सूत्रस्यैतच्छङ्कानिवर्तकत्वं नास्तीति 'यदुक्त'मित्यादिनोक्ताऽवतारिका अनुपपन्ना, सूत्रनिवृत्याऽऽशङ्काया एव अवतारिकात्वादिति परास्तम् । यदुक्तमित्याद्यवतारिकाग्रन्थस्य 'न चावयवत्व विरोध' इत्यादिभाष्यप्रयोजनवर्णनपरत्वेन सूत्राऽवतारिकारूपत्वाभावात् । अत एव सुधायाम् अन्नमयादीनां पञ्चानामुक्त्यन्तरेण परब्रह्मत्वं प्रतिपादयितुं सूत्रमित्युक्तम् । अन्यथा विष्णोरानन्दमयावयवत्वोक्तेः नान्नमयादीनां परब्रह्मत्वमित्याशङ्क्यां परिहरन् सूत्रमित्यवक्ष्यत् । 'मान्त्रवर्णिकमेवे'ति सौत्रैवकार-प्रयोजनाऽनिरूपणात् भाष्यं न्यूनमित्यतः 'ब्रह्मविदाप्नोति परम्' इति भाष्याभिप्रायमाह – **आनन्दमिति** ॥ एतेन भाष्ये मन्त्रवर्णोपलक्षितमेव 'ब्रह्मशब्दानुसन्धानाद्गीयत' इति उक्तार्थस्य रूढत्वात् नेदमानन्दमयादि-पञ्चकपरं ब्रह्मेति तात्पर्यवर्णनमयुक्तं, तस्यैवकारालभ्यत्वादिति परास्तम् । तस्यैवकारलभ्यत्वात् । **एकार्थत्वप्रतीतेरिति** ॥ जीवकत्वं, विनाशकत्वं च तावत् सत्यशब्दार्थः । तथा हि – अस्ति देवदत्त इत्युक्ते जीवतीति प्रतीतेर्जीवनं सच्छब्दार्थः । तथा विशीर्णता च सच्छब्दार्थः । सन्नमित्युक्ते विशीर्णतायाः प्रतीतेः । तथा च अस्तेः शत्रंतस्य, सदेः क्विबन्तस्यावासदिति रूपम् । भावसाधनं चैतत् । सत्त्वं जीवनं विशरणं च यापयतीति सत्यं ब्रह्म । तथा जीवनवाचिनि विशीर्णवाचिनि वा सच्छब्दे कर्मण्युपपदे यातेरन्तर्णीतण्यर्थात् 'आतोऽनुपसर्ग' (पा.३-२) इति कप्रत्ययः । 'उभयसंज्ञान्यपि छन्दसि दृश्यन्त' इति (पा.सू.१-५-१) महाभाष्योक्तेः, उपपदस्य भसंज्ञायां सत्यमिति रूपम् । अन्नशब्दार्थश्च अद्यते उपजीव्यत इति जीवकत्वं, अत्ति संहरति इति संहारकत्वं चेति तयोरैकार्थ्यम् । प्राणशब्दार्थश्च प्राणंति चेष्टन्ते जीवंति अनेनेति प्राण इति सर्वभूतानां गतिजीवनदातृत्वम् । तथा सदिति धात्वर्थो गतिः । जीवनं चाऽस्तिधात्वर्थः । ताभ्यां यथासम्भवं शतरि क्विपि च कृते सदिति भवति । ततश्च भावसाधनं सत् सत्त्वं गतिर्जीवनं तदुभयं यापयतीति सत्यमिति सत्यशब्दार्थोऽपि गतिजीवनप्रदत्त्वमेव । ततश्च प्राणमयसत्यशब्दयोरेकार्थत्वम् । मनःशब्दो ज्ञानार्थः, मनु अवबोधन इति धातुव्याख्यानात् । तस्मादसुन्प्रत्यये मन इति भवति । ततश्च मनोमयज्ञानशब्दयोरेकार्थत्वम् । विज्ञानमयज्ञानशब्दयोरेकार्थत्वं स्पष्टम् । आनन्दमयप्रकरणं च नाऽऽनन्दशब्दार्थकथनरूपं, किंतु 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति ब्रह्मणोऽभिहिते लक्षणे तत्राऽन्त्यलक्षणस्याऽसम्भवशङ्कानिरासाय आनन्दमयप्रकरणे

(अभिनवचन्द्रिका)

आनन्दपूर्णत्वेन हेतुनाऽनन्तत्वं प्रसाध्यत इति द्रष्टव्यम् । **तदर्थभूतानामिति** ॥ मन्त्रवर्णार्थवाचकाना-मित्यर्थः । **युक्तिसमुच्चयार्थ इति** ॥ समाख्यायुक्तेः, अभ्यासलिङ्गाभ्यां समुच्चयार्थः चशब्द इत्यर्थः । 'न च – अवयवत्वविरोध' इति भाष्यस्य प्रागुक्तशङ्कानिवर्तकत्वज्ञापनाय प्रागुक्तशङ्कामनुवदति – **नन्विति** ॥ **अवयवाद्यभेदादिति** ॥ अवयवः आदिः यस्येति तद्गुणसंविज्ञानबहुव्रीहिणा अवयवावयविनौ गृहीत्वा तयोरैक्यमुक्तमिति बोध्यम् । **अवयविन इति** ॥ श्रुत्युदाहरणात् प्रागुत्पन्नां शङ्कां परिहर्तुं प्राक् श्रुतिरुदाहृता । इदानीं तामेव शङ्कां परिहर्तुं स्मृतिं चाहेत्यर्थः । एतेन श्रुत्युदाहरणानन्तरम् अवयविनोऽवयवत्वं न सम्भवतीति शङ्कायाः अनुदयात् तत्परिहाराय स्मृत्युदाहरणमयुक्तमिति परास्तम् । **अघटितघटकेति** ॥ शक्तेत्यतः परं विरोधशान्तेरिति शेषः । प्रत्यक्षागमाभ्यां विरोधाऽपरिहारात् भाष्यस्य न्यूनतां परिहर्तुमाह – **किं च किं प्रमाणेनेति** ॥ प्रमाणेन प्रत्यक्षागमरूपेण । 'अतर्क्ये हि कुतस्तर्क' इत्यस्यापूर्णत्वात् शेषं पूरयति । **साधको बाधको वेति** ॥ **तथापीति** ॥ परमात्मनः अतर्क्यत्वेऽपि न तर्कविरोधः । अवयवित्वस्य स्वावयवत्वाभावेन सह व्यात्यभावेन तर्कस्य आभास-त्वादिति भावः । ननु – स्वस्य स्वावयवत्वस्य क्वाप्यदर्शनेन विरुद्धत्वात् कथमवयवित्वस्य न स्वावयवत्वाभावेन व्याप्तिरित्यत आह– **लोक इति** ॥ लोके परिदृश्यमानावयवत्वविरोधस्य परिमितशक्ति-प्रयुक्तत्वेन स्वाभाविकत्वाभावात् नावयवित्वस्य स्वावयवत्वाभावेन व्याप्तिरिति भावः । एतेन 'तथापि न तद्विरोध' इत्यस्य लोके परिमितशक्तित्वेन विरोधा'दित्यनेनाऽनन्वय इति परास्तम् । अवयवित्वस्य 'न स्वावयवित्वाभावेन व्याप्ति'रित्यध्याहृतसाध्येनाऽन्वयाङ्गीकारात् । ननु मा भूदवयवित्वानुमानविरोधः । तथापि ईश्वरो नावयवित्वे सत्यवयवः । परिमितशक्तित्वादित्यनुमानविरोधस्तु स्यादेवेत्यत आह– **विरोधोपयोगीति** ॥ असिद्धत्वान्न परिमितशक्तित्वानुमानं बाधकमिति भावः । **भाष्ये अप्रमेयेति** ॥ अप्रमेये अपरिछिन्नशक्तिमति हरौ परिमितशक्तिः कुतः न कुतोऽपीत्यर्थः । ऐश्वर्यान्न विरोधश्चेति मूले – अचिन्त्यशक्त्या विरोधपरिहारो भवतीत्युक्तम्, इह तु परोक्ताऽनुमानस्यासिद्धिरुच्यत इति भेदः । **प्रकृतस्यैवेति** ॥ अव्यवधानेन प्रकृतदेहस्य पुरुषशब्देनोक्तत्वादात्मनः तदभावात् 'स वा एष' इत्यनेन देहस्यैव परामर्शो नात्मन इत्यर्थः । पुरुषशब्देन देहस्य प्रकृतत्वेऽपि आत्मपरामर्शोऽयं किं न स्यादित्यत आह– **एकेनैवेति** ॥ स वा एष इत्यनेन देहपरामर्शो द्विवारमुच्चरितस्य पुरुषशब्दस्य ऐकार्थ्यं भवतीति देहपरामर्श एवाऽभ्युपगन्तव्यः नात्मपरामर्शः । तथा सति एकस्यैव द्विरुक्तस्य पुरुषशब्दस्य भिन्नार्थकत्वप्रसङ्गादिति भावः । **यथा प्रकृतिमिति** ॥ 'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपी'(१३-)ति गीतायां पुरुषपदेन जीवपरयोः प्रकृतत्वेऽपि 'पुरुषः प्रकृतिस्थोऽपि भुङ्क्ते प्रकृतिजान्

(अभिनवचन्द्रिका)

गुणान्' इत्युत्तरश्लोके पुरुषशब्देन परमात्मपरित्यागेन जीव एवोच्यते 'प्रकृतिजान् गुणान्' (गी.१३) इति दुःखानुभवितृत्वविशेषणादिति यथा अभ्युपगम्यते, तथा इहापि 'अन्नात्पुरुष' इति पुरुषशब्देन परमात्मदेहयोः प्रकृतत्वेऽपि 'स वा एष पुरुषोऽन्नरसमय' इत्यत्र देहपरित्यागेन परमात्मैवोच्यत इत्यभ्युपगन्तव्यम् । रसशब्देन विशेषणादिति भावः । **निर्देशवैयर्थ्यादिति** ॥ अनपरोक्षीकृतब्रह्माणं पुरुषं प्रति इदमेव शिर इत्याद्यपरोक्षनिर्देशस्य । बोधानुपयोगित्वेन वैयर्थ्यमिति भावः ।

## वाक्यार्थमुक्तावली

ॐ **मान्त्रवर्णिकमेव च गीयते** ॐ । **अवयत्वोक्त्यादिनेति** । आदिपदेनान्योऽन्तर आत्मेत्याद्यन्यत्वोक्त्यादेर्ग्रहणम् । एवकारव्यावर्त्यं दर्शयति नेदमिति । पञ्चकमित्युक्त्या तद्धेतुसूत्रवन्नेदमानन्दमयमात्रविषयं सूत्रमित्युक्तं भवति । **अर्थानुसन्धान इति** । सत्यत्वविवरणाय अन्नमयप्रकरणं प्राणमयप्रकरणं च । अस्ति देवदत्त इत्युक्ते जीवतीति प्रत्ययात् सच्छब्दो जीवनवाची । सदेर्विशरणार्थत्वादवयवशैथिल्यलक्षणविनाशवाची च । तथा च जीवनं विनाशं च प्रापयतीति सत्यं तदेवान्नशब्देनोच्यते । अद्यते जीवनहेतुतयोपजीव्यत इत्यन्नशब्दव्याख्यानात् । सत्वं गतिं जीवनं च यापयतीति गतिप्रदत्वं जीवनप्रदत्वं च सत्यशब्दार्थः । तदेव प्राणपदेनोच्यते । सदेर्गत्यर्थत्वात् । अस्तिरूपस्य सच्छब्दस्य जीवनार्थत्वाच्च । प्राणशब्देनापि प्राणन्ति प्रवर्तन्ते जीवन्ति वेति व्युत्पत्या तदेवोच्यत इति । ज्ञानशब्देन मनोविज्ञानशब्दयोरेकार्थत्वं स्फुटम् । मनश्शब्दस्य सामान्यज्ञानपरत्वात् । अनन्तत्वं चानन्दपूर्त्या आनन्दमयशब्देन व्यक्तमित्यनुव्याख्याने स्फुटम् ॥ **सूचनयेति** ॥ एतेन भाष्यस्य ब्रह्मतज्ज्ञानतत्प्राप्तीन् सूचयित्वा सङ्क्षेपतो ज्ञापयित्वेत्यर्थ उक्तो भवति । शङ्कापरिहाराय मान्त्रवर्णिकसूत्रस्यावतारितत्वात् चशब्दो व्यर्थ इत्यत आह **चशब्द इति** । एतेन न केवलं शब्दादानन्दमयादिः ब्रह्म किन्तु गीयते च मान्त्रवर्णिकगानाच्चेत्यर्थ उक्तो भवति । **नन्विति** । ननु विकारशब्दादिति सूत्रे पूर्वपक्षस्यानन्दमयस्य विष्णुत्वे यावद्बाधकलक्षकत्वात्परिहारस्यापि सर्वपरिहारोपलक्षकत्वादत एव ब्रह्मशब्दाद् बहुरूपत्वाच्च न विकारित्वमविरोधश्च स्वरूपे च युज्यत इत्यादिवदवयवित्वान्यत्वेदमिति निर्देशादिविरोधा अपि शङ्कित्वा निरस्याः । न त्विह सूत्रे तन्निरासकस्याप्यदृष्टेरिति चेन्न । स्वपक्षसाधनान्ते बाधकोद्धारस्य कर्तव्यत्वेनाद्यतृतीयचतुर्थसूत्रेषु श्रुतिलिङ्गसमाख्यालक्षणस्वपक्षसाधनान्ते चशब्दसूचितो बाधकोद्धारो भाष्यकारेणात्र क्रियते । द्वितीयसूत्रे विकारार्थकमयटो विषयान्तर्गतत्वेन विलम्बमसहमानेन शङ्कितेऽव्यवहितप्रकृतब्रह्मश्रुत्यैव प्राचुर्यार्थत्वमुक्तम् । प्राचुर्यस्य च स्वरूपेऽपि विशेषेण घटनं कृतम् ।

(वाक्यार्थमुक्तावली)

अन्नमयादौ प्राचुर्यार्थत्वाभावात्तत्प्रायपठितानन्दमयटः कथं प्राचुर्यार्थत्वमित्युक्तेः पञ्चानामपि ब्रह्मत्वेन सर्वत्र मयटः प्राचुर्यार्थत्वात्प्रायपाठविरोधो नेत्युक्तम् । तर्हि ब्रह्मपञ्चकस्वीकारे एकमेवेति सूत्रविरोध-परिहारस्तत्प्रसङ्गात्कृत इति विषयशरीरान्तर्गतबाधकस्यैव तत्र परिहृतत्वेन स्वपक्षसाधनावसाने शिष्टदोष-परिहारस्यावसरप्राप्तस्येह करणमविरुद्धमिति । अत्र भाष्ये 'स शिर' इत्यादिश्रुतौ अवयवावयव्यभेद-निर्धारणेनावयवत्वावयवित्वयोः सहैकत्र प्रमितत्वान्न विरोधः । विरोधाविरोधयोर्दर्शनमूलकत्वादित्युक्तं भवति । स्मृतौ त्ववयवावयव्यभेदेऽप्यवयवित्वाद्यपर्यायशब्दव्यवहारादेरलौकिकविशेषघटकैः यौक्त्या घटनोक्ता ज्ञेया । उपासकभेदान्नारायणोऽथ सन्दोह इति पक्षभेदोक्तिः । परिमितशक्तेरित्यनेन प्रमेयत्वस्य परिमितिरित्यर्थ उक्तो भवति ॥ **प्रकृतस्यैवेति** ॥ अन्नात्पुरुष इति पुरुषपदेन प्रकृतस्यैव देहस्य स वा एष पुरुष इति पुरुषपदोक्तेनात्मनः पुरुषपदेन प्रकृतत्वाभावादिति भावः ॥ **वस्तुद्वयेति** ॥ देह-परमात्मारूपवस्तुद्वयेत्यर्थः ॥ **आकारादिसारभूतमिति** ॥ आकाशादिशब्दप्रवृत्तिनिमित्तसारार्थपूर्णमित्यर्थः । ब्रह्मचैतन्यमेवेत्येवकारेण पूर्तेः मात्रशब्दो व्यर्थ इत्याशङ्क्य सिद्धे सत्यारम्भो नियमार्थ इति न्यायमनुसृत्य नियममाशङ्क्य तत्परिहारत्वेन योजयति **एवं तर्हि इत्यादिना** । **द्वयोरिति** ॥ जीवपरमात्मनोरित्यर्थः ॥ **दुःखानुभवितृत्वविशेषणेति** ॥ भुङ्क्ते प्रकृतिजान् गुणान् इति वाक्यशेषादिति भावः । **सारान्नमयेति** ॥ सारान्नमय एवासावित्यनुभाष्यसुधारीत्या सारान्नत्वं भूताद्यत्वादिकं तत्प्रचुरत्वविशेषणेत्यर्थः । **बहूनामिति** ॥ एकयैवाभिधया सह युगपद्बहूनां निर्देशे पूर्वं प्रसक्तेऽपि तु बाधकलक्षणविशेषे सति तेषां मध्ये तयैवाभिधयैकमेव परामृश्योच्यत इत्यर्थः । एवमनुभाष्यानुसारेण भाष्यार्थमुक्त्वा

अन्नस्य सारभूतोऽयं शरीरस्य च केशवः ।
अन्ननामा चान्नसंस्थः शरीरेषु च संस्थित

इति तैत्तिरीयभाष्यानुसारेण व्यावर्त्यपूर्वमर्थान्तरमाह **नन्वित्यादिना** । **निर्देशवैय्यर्थ्याच्चेति** । स्वस्यापरोक्षज्ञानित्वेन सम्प्रति शब्दानपेक्षणात् उपदेश्यपुरुषामसाक्षात्कर्तृत्वेन तान्प्रति प्रत्यक्षोपदेशानुपपत्तेः । साक्षात्कर्तृत्वे वोपदेशवैय्यर्थ्यादित्यर्थः । प्रमापितः स्यादिति । प्रमाणेन स्थापितं भवति इत्यर्थः । एवं च न पौनरुक्त्यमिति भावः ।

## तत्त्वसुबोधिनी

ननु मुख्यामुख्ययोः मध्ये कार्यसम्प्रत्यय इति न्यायेन ब्रह्मशब्दमुख्यार्थो विष्णुरेव ब्रह्मशब्देन

(तत्त्वसुबोधिनी)

ग्राह्य इत्यत आह ॥ **ब्रह्मशब्दस्येति** ॥ **तदर्थभूतानामपीति** ॥ सत्यज्ञानादिशब्दानामित्यर्थः । **अतो मन्त्रवर्ण इति** । यथा च मन्त्रवर्णे परब्रह्मण एव उक्तत्वादन्नमयादिशब्दानां परब्रह्मपरत्वं युक्तमिति भावः । **युक्तिसमुच्चयार्थ इति** ॥ अनेन गीयते चेति चशब्दान्वयः सूत्रे सूचितो भवति । तथा चान्नमयादिप्रकरणजातं परब्रह्मपरं तदर्थकमन्त्रवर्णव्याख्यानरूपत्वादिति वा आनन्दमयादिः ब्रह्म तत्प्रतिपादकमन्त्रवर्णव्याख्यानरूपान्नमयादिप्रकरणप्रतिपाद्यत्वात् इति वा सूत्रार्थ उक्तो भवति । **बाधको वेति** । प्रकृते तर्कस्य बाधकत्वेन शङ्कितत्वादिति भावः । सर्वथा तर्काविषयत्वे मीमांसावैयर्थ्यमित्यत आह । **अस्तु वेति** । किञ्च 'अन्नात्पुरुष इत्यत्र पुरुषशब्दवाच्यत्वेन देहस्य प्रकृततत्वात्' स वा एषः इत्यत्रापि पुरुषशब्देन देह एव ग्राह्यः न त्वात्मा । तस्य पुरुषशब्दवाच्यत्वेन अप्रकृतत्वादित्याह ॥ **प्रकृतस्यैवेति** ॥ ननु पुरुषशब्देन देहस्य पूर्ववाक्ये प्रकृतत्वेऽपि उत्तरवाक्ये पुरुषशब्दस्यात्मार्थत्वमेव किं न स्यादित्यत आह ॥ **एकेनैवेति** ॥ **चिन्मात्रमेवेत्येवशब्दार्थोऽन्यद्विहायेति** ॥ ननूभयोः प्रकृतत्वेऽपि एकप्रापकविशेषबलात् एकस्यैव ग्रहणमित्येत्कोपलब्धमित्यत आह ॥ **यथेति** ॥ **दुःखानुभवितृत्वविशेषणेनेति** ॥ 'भुङ्क्ते प्रकृतिजान्गुणान्' इति वाक्यशेषादित्यर्थः । रसशब्देन विशेषणादिति भाष्ये रसत्वं न साक्षात् पुरुषविशेषणं किन्तु प्राचुर्यविशिष्टान्नरूपविशेषणद्वारेत्यभिप्रेत्याह । सारान्नमयत्वेति । एवं च रसशब्दः सारवाची । 'रसः सारो वरश्चेति शब्दाः पर्यायवाचका' इत्यभिधानात् । ततश्चान्नरसोऽन्नसारः अन्नशब्दार्थेषु मुख्यार्थोऽचृत्वादिलक्षणः तत्प्रचुर इति श्रुत्यर्थो ज्ञेयः ॥ **तत्प्रसङ्गादिति** ॥ इदमिति निर्देशप्रसङ्गादित्यर्थः ॥ **निर्देशवैय्यर्थ्याच्चेति** ॥ स्वस्यापरोक्षतो ज्ञातृत्वेन शब्दानपेक्षणादुपदेश्यपुरुषाणां च प्रत्यक्षायोग्यत्वादित्यर्थः । नन्वेकस्य ब्रह्मणः पञ्चरूपत्वं विरुद्धम् । कथमुपपद्यते इत्यत आह– **एक इति** ।

## वाक्यार्थविवरणम्

भाष्ये सूचयित्वेति ॥ 'ब्रह्मविदाप्नोति परम्' इति परब्रह्मणः प्राप्यत्वोक्त्या तत्प्राप्तिरूप-मोक्षजनकज्ञानविषयस्यापि तस्य परब्रह्मत्वं सूचितम् । न ह्यन्यविद्ययाऽन्यगतिर्युक्तेत्याशयः ।

## वाक्यार्थमञ्जरी

अपरब्रह्मणि प्रकृत्यादौ । ॐ मान्त्रवर्णिकमेव च गीयते ॐ ॥ मन्त्रवर्णः सत्यं ज्ञानमनन्तं ब्रह्मेति लक्षणवाक्यात्मको वेदः तेन प्रोक्तं मान्त्रवर्णिकम् । तथा च मन्त्रवर्णे सत्यत्वादिलक्षणवत्तया

(वाक्यार्थमञ्जरी)

प्रोक्तं परं ब्रह्मैवान्नमयादिशब्दपञ्चकेन प्रतिपाद्यते यतोऽतश्च पश्चाप ब्रह्मैवेत्यर्थः। अनुसन्धाने आलोचने। एकार्थत्वप्रतीतेरिति ॥ **अस्तेः** शत्रन्तस्य रूपं सदित्येतज्जीवनवाचि। अस्ति देवदत्त इत्युक्ते जीवतीति प्रत्ययात्। तथा षदॢ विशरणगत्यवसादनेषु' इति स्मरणात्। क्विबन्तस्य सदेश्च रूपमेतच्छैथिल्यलक्षण-विशीर्णत्वं वक्ति। भावप्रधानं चैतत्' नथा च सत् सत्वं जीवनं विशरणं वा भूतानां यापयति प्रापयतीति सत्यशब्दार्थः सर्वभूतानां जीवनविनाशहेतुत्वम्। अन्नशब्दस्योपजीव्यतालक्षणादद्यता-विनाशकत्वलक्षणातृत्वार्थेति सत्यान्नशब्दयोरेकार्थत्वम्। सदेर्गत्यर्थेऽपि पाठात् सत्यं भूतानां गतिं यापयति प्रापयतीति गतिप्रदत्वं सत्यशब्दार्थः। प्रपूर्वादनचेष्टायामित्यस्मान्निष्पन्नप्राणशब्दस्यापि स एवार्थ इति तयोरेकार्थत्वम्। मन्ववबोधन इत्यस्माद्भावे असुन्प्रत्यये मन इति निष्पन्नत्वान्मनोज्ञान-शब्दयोरेकार्थत्वं ज्ञानविज्ञानशब्दयोरेकार्थत्वं स्फुटमेव। अनन्तत्वश्च गुणतोऽपरिछिन्नत्वम्। आनन्दमयत्वं तदेकदेशभूतमिति सत्यज्ञानानन्तपदानामन्नमयादिपदानां चैकार्थत्वप्रतीतेरित्यर्थः ॥ **परब्रह्मेति** ॥ अन्यवेदनेनान्यप्राप्तेरयोगाद्वेदनाप्त्योर्विषयैक्यावश्यम्भावेन परब्रह्मवित्परं ब्रह्माप्नोतीत्यभिमतत्वादिति भावः ॥ **किं तदिति** ॥ किंलक्षणकमित्यर्थः। न हि लक्षणेन विना वस्तुसमस्तव्यावृत्ततया ज्ञातुं शक्यमित्यर्थः ॥ **कथं तद्वेदनमिति** ॥ न ह्यपरिच्छिन्नपरिमाणस्य तस्य ज्ञानमस्माकं युज्यत इति भावः ॥ **कीदृशी च तत्प्राप्तिरिति** ॥ तस्य सर्वगतत्वेन नित्यप्राप्तत्वादिति भावः ॥ **यो वेदेति वेदनमिति** ॥ अपरिच्छिन्नपरिमाणस्यापि भक्तानुकम्पयाऽल्पपरिमाणप्रकटनसम्भवादित्याशयेन तत्र गुहानिहितत्वोक्तेरिति भावः ॥ **सोऽश्नुत इति प्राप्तिरिति** ॥ न तत्संयोगमात्रं तत्प्राप्तिः किन्तु तद्व्यक्तिस्थाने सत्यकामत्वादि-तत्सारूप्याभिव्यक्तिरेवेत्याशयेन तत्र सर्वकामभोगोक्तेरिति भावः ॥ **युक्तिसमुच्चयार्थ इति** ॥ न केवलमभ्यासादेः किन्तु मान्त्रवर्णिकगानाच्चेति समुच्चयार्थ इत्यर्थः। भाष्ये सन्दोहो मध्यभागः प्रमाणेन आगमेन। असिद्धत्वात् अभावात् ॥ **बाधकोऽवेति** ॥ प्रकृते तर्कस्य बाधकत्वेनाशङ्कितत्वादिति भावः ॥ **इति भावेनेति** ॥ अनेनाप्रमेये अपरिमितशक्तिमति प्रमा परिमितशक्तिः कु इति भाष्यार्थ उक्तो भवति। तदभावात्। पुरुषपदेनाप्रकृतत्वात्। द्विरुक्तेन द्विवारमुक्तत्वेन निमित्तेन। भेदश्रुतिं भेदबोधकशब्दम् ॥ **आकाशादीति** ॥ 'आत्मन आकाशः सम्भूतः आकाशाद्वायुः वायोरग्निरग्नेरापः, अद्भ्यः पृथिवी, पृथिव्या ओषधयः, ओषधीभ्योऽन्नम्, अन्नात्पुरुष' इत्यत्रोक्तिरित्यर्थः ॥ **सारभूतमिति** ॥ आकाशादिशब्दार्थानां भूततदभिमानितदेहतदन्तर्नियामकहरिरूपाणां मध्ये श्रेष्ठमित्यर्थः। चिन्मात्रमेवेत्येवशब्दार्थोऽन्यद्विहायेति। 'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि' इति गीतावाक्यम्। द्वयोः जीवपरयोः ॥ **दुःखानुभवितृत्वविशेषणेनेति** ॥ 'भुङ्क्ते प्रकृतिजान् गुणान्' इति वाक्यशेषादिति

(वाक्यार्थमञ्जरी)

भाव: ॥ **सारान्नमयेति** ॥ अन्नशब्दार्थेषु यत्सारं श्रेष्ठं भूताद्यत्वं तदन्नत्वरूपं तत्प्रचुरत्वविशेषणेनेत्यर्थ: । रस: सारो वरश्रेति शब्दा: पर्यायवाचिन' इत्युक्ते: । दृष्टान्तमात्रं न साधकमित्यतोऽत्र एकादशतात्पर्य-संमतिमाह ॥ **उक्तश्चेति** ॥ बहुपदार्थानामेकेन शब्देनोद्देशेऽपि तेषां मध्ये एकं तेनैव शब्देन परामृश्य तस्य किञ्चिद्विधीयत इत्यर्थ: । नन्वाकाशदिपुरुषान्तपदैर्ब्रह्मग्रहणे सम्भूतशब्दोक्तसृष्ट्यनुपपत्तिरित्यत आह ॥ **एतच्चेति** ॥ उत्तरप्रस्थाने अनुव्याख्याने । तदेवाह ॥ **ब्रह्मशब्देति** ॥

'ब्रह्मशब्दोदिते तस्मिन्नात्मशब्दं प्रयुज्य च ।
तस्मादाकाशसृष्टिं च प्रोवाचात्र चतुर्विधाम् ॥
भूतं भूताभिमानी च तद्देहोऽन्तर्नियामक: । हरिश्चाकाशशब्दोक्त' ।

इत्यादिनाऽकाशपुरुषान्तशब्दवाच्यभगवद्रूपाणामपि प्रादुर्भावोक्तेर्नोक्तशङ्कावकाश इति भाव: । स्थानान्तरे नारायणनये ॥ **प्रार्थितशुद्धीनामिति** ॥ येऽन्नमयादय: कोशा: शुद्ध्यन्तामिति जीवेन प्रार्थितपावित्र्यवतामित्यर्थ: । अत्र ब्रह्मवल्ल्याम् । तत्तत्कोशगतम् । अन्नमयादिसंज्ञकदेहगतम् । आदौ अन्नमयप्रकरणे । अन्ते आनन्दमयप्रकरणे ॥ **वैय्यर्थ्याचेति** ॥ स्वस्यापरोक्षीकृतब्रह्मत्वेन शब्दानपेक्षणात्परस्य चापरोक्षशून्यत्वेन तं प्रति तथा निर्देशायोगादिति भाव: ॥ **वस्त्रप्रावृतजानुवदिति** ॥ वस्त्रेणावृतस्य जानोरप्रत्यक्षत्वेऽपि प्रत्यक्षीभूतवस्त्रान्तर्गतत्वात् यथेदं जान्विति निर्देशस्तथेत्यर्थ: । अन्नादिशब्दानां प्रसिद्धार्थत्यागात्कथश्चिदित्युक्तम् । अर्थान्तरम् उपजीव्यत्वरूपम् ॥ लाक्षणिकत्वमिति ॥ इदंशब्दस्य तदन्तर्गते लक्षणाङ्गीकारादिति भाव: ॥ **स्पष्टमिति** ॥ आकाशपदेन तल्लाभेऽपि स्फुटं तद्वाचकपदाभावादिति भाव: । दुर्बलत्वेन स्वभावात् ॥ **सावकाशत्वादिति** ॥ विरिश्चादावपि स्रष्टृत्वादिसत्वादिति भाव: ॥

## विवृति:

ननु मुख्यामुख्ययोर्मुख्ये कार्यसम्प्रत्यय इति न्यायेन ब्रह्मशब्दमुख्यार्थो विष्णुरेव ब्रह्मशब्देन ग्राह्य इत्यत आह ॥ **ब्रह्मशब्दस्येति** ॥ तदर्थभूतानामपीति ॥ सत्यज्ञानादिशब्दार्थकानामित्यर्थ: ॥ **अतो मन्त्रवर्ण इति** ॥ तथा च मन्त्रवर्णे परब्रह्मण एवोक्तत्वादन्नमयादिशब्दानां परब्रह्मपरत्वं युक्तमिति भाव: ॥ **युक्तिसमुच्चयार्थ इति** ॥ अनेन गीयते चेति शब्दान्वय: सूचितो भवति । तथा चान्नमयादि-प्रकरणजातं ब्रह्मपरं तदर्थकमन्त्रवर्णव्याख्यानरूपान्नमयादिप्रकरणप्रतिपाद्यत्वादिति वा सूत्रार्थ उक्तो भवति । **बाधको वेति** ॥ प्रकृते तर्कस्य बाधकत्वेन शङ्कितत्वादिति भाव: । सर्वथा तर्काविषयत्वे

(विवृतिः)

मीमांसावैयर्थ्यमित्यत आह ॥ **अस्तु वेति** ॥ किं चान्नात्पुरुष इत्यत्र पुरुषशब्दवाच्यत्वेन देहस्य प्रकृतत्वात्स वा एष इत्यत्रापि पुरुषशब्देन देह एव ग्राह्यो न त्वात्मा । तस्य पुरुषशब्दवाच्यत्वेन प्रकृतत्वादित्याह ॥ **प्रकृतस्यैवेति** ॥ ननु तर्हि द्विरुक्तेनाप्येकेन पुरुषशब्देन देहपरमात्मनोरुभयोरपि ग्रहणात्त्राप्रकृतपरत्वं सवा एतस्येत्यत आह ॥ **एकेनैवेति** ॥ **द्विरुक्तेनेति** ॥ अन्नात्पुरुषः स वा एष पुरुषोऽन्नरसमय इति द्विरुक्तेनैकेन पुरुषशब्देनेत्यर्थः । चिन्मात्रमेवेत्येवशब्दार्थोऽन्यद्विहायेति । ननु उभयोः प्रकृतत्वेऽप्येकप्रापकविशेषणबलादेकस्यैव ग्रहणं लब्धमित्येतत् क्वोपलब्धमित्यत आह ॥ **यथेति** ॥ **दुःखानुभवितृत्वविशेषणेनेति** ॥ भुङ्क्ते प्रकृतिजान् गुणान् इति वाक्यशेषादित्यर्थः । रसशब्देन विशेषणादिति भाष्ये रसत्वं न साक्षात्पुरुषविशेषणं, किन्तु प्राचुर्यविशिष्टान्नरूपविशेषणद्वारेत्यभिप्रेत्याह ॥ **सारान्नमयत्वेति** ॥ एवं च रसशब्दः सारवाची, "रसः सारो वरश्चेति शब्दाः पर्यायवाचकाः" इत्यभिधानात् । ततश्चान्नरसोऽन्नसारः अन्नशब्दार्थेषु मुख्यात्तृत्वादिलक्षणस्तत्प्रचुर इत्यर्थो ज्ञेयः । अत्र सम्मतिमाह ॥ **उक्तं चेति** ॥ नन्वेतत्सविस्तरं कुतो न कथ्यत इत्यत आह ॥ **एतच्चेति** ॥ **उत्तरप्रस्थाने** अनुव्याख्याने ॥ **स्थानान्तरे** नारायणोपनिषदि ॥ **तत्प्रसङ्गादिति** ॥ इदमिति निर्देशप्रसङ्गादित्यर्थः ॥ **निर्देशवैयर्थ्याच्चेति** ॥ स्वस्यापरोक्षतो ज्ञातृत्वेन शब्दानपेक्षणात् ॥ उपदेश्यपुरुषाणां च प्रत्यक्षयोग्यत्वादित्यर्थः । नन्वेकस्य ब्रह्मणः पञ्चरूपत्वं विरुद्धं कथमुपपद्यत इत्यत आह ॥ एक इति ॥

## सूत्रभाष्यम्

**न चोक्तप्राप्त्या विरिञ्चादिरुच्यते ।**

**॥ ॐ नेतरोऽनुपपत्तेः ॐ ॥ १६ ॥**

**न ह्यन्यज्ज्ञानान्मोक्ष उपपद्यते । 'तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यत' (तै.आ.३-१२-७) इति ह्युक्तम् ॥ १६ ॥**

## सत्तर्कदीपावली

कस्यचिदानन्दमयत्वं न स्यात् । तमेवं विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यत इति श्रुत्या पुरुषोत्तमत्वेन मुख्यपुरुषाद्विष्णोरन्यज्ज्ञानस्य मोक्षमार्गत्वनिषेधात् । अतोऽनन्यथासिद्धेन मोक्षश्रवणेनान्यथासिद्धहिरण्यगर्भादिप्रापकं बाध्यत इत्यर्थः ।

## तत्त्वप्रदीपिका

नेतरोऽनुपपत्तेः । 'ब्रह्मविदाप्नोति परं' 'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते, अथ सोऽभयं गतो भवति' इत्यानन्दमयज्ञानान्मोक्ष उच्यते । न च विष्णोरन्यज्ञानान्मोक्ष उपपद्यते । तमेवं विद्वानित्यादिविष्णुप्रतिपादकपुरुषसूक्तवाक्येऽन्यनिषेधात् ।

## तत्त्वप्रकाशिका

नन्वेवं मयटां प्राचुर्यार्थत्वमुक्त्वा तथात्वे कथञ्चिदल्पार्थतां परिहृत्य भूताद्यत्वस्यार्थान्तरमभिधाय परामर्शस्यान्यपरत्वं समर्थ्य बहुभावस्य स्वरूपविषयत्वं गृहीत्वा पुच्छत्वोक्तेरविरोधमापाद्येदमिति निर्देशस्य लाक्षणिकत्वमङ्गीकृत्यापि किमन्नमयादीनां विष्णुत्वग्रहणेन विरिञ्चादय एव आनन्दमयादयः सन्तु तत्प्रापकसद्भावात् । न चोक्तहेतुभ्यस्तद्ग्रहणम् । ब्रह्मशब्दस्यापरब्रह्मस्वपि सम्भवात् हेतुव्यपदेशस्य च विष्णुनिष्ठतया स्पष्टमप्रतिभानात् । मन्त्रवर्णाधिकसमाख्यायाश्च सूर्ये प्रोक्तत्वादिलिङ्गेभ्यो दुर्बलत्वेन सावकाशत्वात् अनन्यथासिद्धहेत्वन्तरस्य चाभावादित्यत आह ॥ **न चेति** ॥ तत्र हेत्वाकाङ्क्षायां सूत्रमुपन्यस्य प्रतिज्ञांशस्य प्राचीनभाष्येणैव व्याख्यातत्वात् सौत्रमनन्यथासिद्धहेतुमेव व्याचष्टे ॥ **नेतर इति** ॥ नानन्दमयादिर्विष्णोरितरः । ब्रह्मविदाप्नोति परमित्यादावानन्दमयादिज्ञानेन मोक्षश्रवणात् । न चान्यज्ञानान्मोक्ष उपपद्यत इत्यर्थः । विष्णुज्ञानादेव मोक्षो नान्यज्ञानादिति कुत इत्यत आह ॥ **तमेवमिति** ॥१६॥

## भावबोधः

कथञ्चित् अल्पार्थतां परिहृत्येति । अन्नप्राणमनश्शब्दानां प्रसिद्धार्थतां परित्यज्यात्तृत्वचेष्टाज्ञानरूपार्थत्वमङ्गीकृत्य विज्ञानशब्दपौनरुक्त्यपरिहाराय मनश्शब्दस्य सामान्यविषयकत्वेन रूपेण विष्णुज्ञानार्थत्वमङ्गीकृत्याल्पार्थतां परिहृत्येत्यर्थः ॥ **दुर्बलत्वेन सावकाशत्वादिति** ॥ अन्नमयादिप्रकरणानां विष्णुपरत्वेन निर्णीतमन्त्रवर्णगतसत्यादिपदार्थजीवनकर्तृत्वादिप्रतिपादकत्वेन याऽर्थिकसमाख्या तस्याश्चतुर्मुखरुद्रादावपि स्वस्वावरापेक्षया जीवनकर्तृत्वादिप्राचुर्यसम्भवेन सावकाशत्वादित्यर्थः । 'ब्रह्मविदाप्नोति परम्' इत्यादाविति । अत्रादिपदेन 'सर्वं वै तेऽन्नमाप्नुवन्ति । येऽन्नं ब्रह्मोपासते । सर्वमेव त आयुर्यन्ति । ते प्राणं ब्रह्मोपासते । आनन्दं ब्रह्मणो विद्वान् । न बिभेति कदाचन' इति । 'शरीरे पाप्मनो हित्वा । सर्वान् कामान् समश्नुते' इति । 'रसँ ह्येवायं लब्ध्वाऽऽनन्दी भवति । अथ सोऽभयं गतो भवति' । इत्यादितत्प्रकरणगतानाम् अन्नमयादिज्ञानान्मोक्षप्रतिपादकवाक्यानां ग्रहणम् । अत्र यद्यप्येतदेव वाक्यजातमुदाहर्तव्यं; साक्षादन्नमयादिगतत्वात् । सुधायामेतद्वाक्यस्योदाहृतत्वाच्च ।

(भावबोधः)
तथापि ब्रह्मविदित्यस्यापि वाक्यस्यान्नमयादिपरत्वं मान्त्रवर्णिकसूत्रसिद्धमिति सिद्धवत्कृत्य अन्नमयादिपञ्चकसाधारणत्वादेतदुदाहृतमिति ध्येयम् ।

## भावदीपः

॥ ॐ नेतरोऽनुपपत्तेः ॐ ॥ **कथञ्चिदिति** ॥ अन्नप्राणादिपदानामत्तृत्वचेष्टकत्वाद्यर्थमुपेत्येत्यर्थः । अर्थान्तरमुपजीव्यत्वरूपम् । बहुभावस्य पञ्चत्वलक्षणबहुत्वस्य । यद्वा बहु स्यामित्युक्तबहुभावस्येत्यर्थः । तेन बहुरूपत्वाच्च न विकारित्वमिति पूर्वभाष्यस्थबहु स्यामिति बहुभवनं बहुरूपत्वान्न तु जगदात्मना विकारित्वमित्यपि योजना सूचिता । पुच्छत्वोक्तेः अवयवत्वोक्तेरित्यर्थः । सूत्रे अनुपपत्तेरिति हेत्वन्तरोक्तेश्चशब्दाभावाच्च तदनुरोधेन क्रमेण सूत्रत्रयोक्तहेतूनन्यथयति ॥ **ब्रह्मशब्दस्येति** ॥ प्रोक्तत्वलिङ्गादिभ्य इत्यादिपदेन बहुभावान्यत्वादेर्ग्रहः ॥ सावकाशत्वादर्थान्तरपरत्वादित्यर्थः । अनुपपत्तेरिति सौत्रहेतुव्यावर्त्यमाह ॥ **अनन्यथेति** ॥ **प्राचीनेति** ॥ न चेत्यादिनेत्यर्थः । सूत्रे सोपलक्षितमानन्दमयपदं तत्पदं चानुवर्तते । तत् तस्माद्विष्णोरितर इत्यर्थ इति मत्वा सूत्राक्षराणि योजयति ॥ **नाऽऽनन्दमयादिरिति** ॥ भाष्यसङ्गत्यर्थमपेक्षितमाह ॥ **ब्रह्मेति** ॥ आदिपदेन 'येऽन्नं ब्रह्मोपासते सर्वमेव त आयुर्यन्ति' इत्यादिरूपेण सुधोक्तदिशा प्रतिप्रकरणस्थवाक्यानि गृह्यन्ते ॥ **आनन्दमयादीति** ॥ पूर्वोक्तदिशा अत्रोक्तस्यैव ब्रह्मणोऽन्नमयादिशब्दैर्गीयमानत्वादिति भावः ॥१६॥

## अभिनवचन्द्रिका

(सू.१६) **हेतुव्यपदेशास्येति** ॥ हेतुव्यपदेशस्यापि न साधकत्वम् । हेतुत्वेनाभिमतस्य जगच्चेष्टकत्वस्य विष्णुलिङ्गतया स्पष्टमप्रतिभानात् । श्रीपतित्वादिवद्विस्पष्टब्रह्मलिङ्गत्वाभावादिति भावः । ब्रह्मविदाप्नोति परमित्यादाविति ॥ आदिशब्देन 'अदृश्येऽनात्म्य' इत्यादिवाक्यग्रहणम् ।

## वाक्यार्थमुक्तावली

ॐ नेतरोऽनुपपत्तेः ॐ ॥ **कथञ्चिदल्पार्थतामिति** ॥ बह्वन्नवत्वादेः सर्वसाधारण्येन प्राप्तार्थान्तरमद्यर्थत्वाद्यर्थग्रहणेन परिहृत्येत्यर्थः । प्रसिद्धान्नार्थत्वाग्रहणात् प्रसिद्धविरोधप्रसङ्गात्कथञ्चि-दित्युक्तम् । योगेनेत्यर्थः । बहुभावस्य बहुत्वस्य पञ्चत्वलक्षणस्य । यद्वा बहु स्यामित्युक्तबहुत्वस्येत्यर्थः । तेन बहुरूपत्वाच्च न विकारित्वमिति प्राचीनभाष्यस्य बहु स्यामित्युक्तबहुरूपत्वान्न तु जगदात्मनो

(वाक्यार्थमुक्तावली)

विकारित्वमित्यपि योजना सूचिता भवति ॥ **पुच्छत्वोक्तेरिति** ॥ अवयवत्वोक्तेरित्यर्थः ॥ **लाक्षणिकत्वमिति** ॥ मञ्चशब्दस्य मञ्चस्थे लक्षणावदिदंशब्दस्य दृश्यमानान्तर्गते लक्षणेत्यर्थः ॥ **स्पष्टमप्रतिभासादिति** ॥ आकाशशब्दस्याद्य निर्णीतत्वादभिमानिपरत्वोपपत्तेर्वक्ष्यमाणमर्थं सिद्धवृत्कृत्य सूत्रकृता हेतुव्यपदेशोक्तेरिति भावः ॥ **लिङ्गादिभ्य इति** ॥ आदिपदेन बृहस्पत्यादिसाधारणब्रह्मस्तुतिः शतानन्दानामाख्येदमिति निर्देशान्यत्वान्तरत्वादयो गृह्यन्ते । **प्राचीनेति** ॥ न चोक्तप्राप्त्येति सम्बन्धभाप्येणेत्यर्थः । ब्रह्मविदाप्नोति परमित्यदाविति । उपक्रम इत्यर्थः । इत्यादौ वाक्य इति वा । सर्वं वै तेऽन्नमाप्नुवन्ति येऽन्नं ब्रह्मोपासते सर्वमेव ते आयुर्यन्ति ये प्राणं ब्रह्मोपासत इत्याद्यन्नमयादिज्ञानान्मोक्षप्रतिपादकतत्तत्प्रकरणगतवाक्येष्विति भावः । यद्यपि साक्षादन्नमयादिप्रकरणगतत्वादेतदेव वाक्यजातमुदाहर्तव्यम् । तथापि सर्वायुस्सर्वान्नमोक्षाप्रतीतेरुपक्रमवाक्यस्य स्वपदेन ग्रहणम् । तस्य च मान्त्रवर्णिकसूत्रोक्तन्यायेनानन्दमयादिपरत्वमिति भावः ।

## तत्त्वसुबोधिनी

**कथञ्चिदल्पार्थतामिति** । अन्नप्राणमनःशब्दानां प्रसिद्धार्थतां परित्यज्य अचृत्वचेष्टाज्ञानरूपार्थत्वमङ्गीकृत्य विज्ञानशब्देन पौनरुक्त्यपरिहाराय मनःशब्दस्य सामान्यविषयकत्वेन रूपेण विष्णुज्ञानार्थत्वमङ्गीकृत्य अल्पार्थतां परिहृत्येत्यर्थः । दुर्बलत्वेन सावकाशत्वादिति । अन्नमयादिप्रकरणानां विष्णुपरत्वेन निर्णीतमन्त्रवर्णगतसत्यादिपदार्थसृष्टिकर्तृत्वादिप्रतिपादकत्वेन याऽर्थिकसमाख्या तस्याश्चतुर्मुखरुद्रादावपि स्वस्वावरापेक्षया सृष्टिकर्तृत्वादिप्राचुर्यसम्भवेन सावकाशत्वादित्यर्थः । ननु हेत्वन्तरबलात्केषां ब्रह्मत्वं अङ्गीक्रियते इत्यत आह ॥ **अनन्यथासिद्धेति** । **ब्रह्मविदिति** । अत्रादिपदेन 'सर्वं वै तेऽन्नमाप्नुवन्ति येऽन्नं ब्रह्मोपासते आनन्दं ब्रह्मणो विद्वान् न बिभेति कदाचन' । 'शरीरे पाप्मनो हित्वा सर्वान्कामान् समश्नुत इति । रसं ह्येवायं लब्ध्वाऽनन्दी भवति । अथ सोऽभयङ्गतो भवति' इत्यादितत्प्रकरणगतानां अन्नमयादिज्ञानान्मोक्षप्रतिपादकवाक्यानां ग्रहणम् ।

## वाक्यार्थमञ्जरी

ॐ नेतरोऽनुपपत्तेः ॐ ॥ विष्ण्वितरश्चतुर्मुखादिर्नान्नमयादिशब्दवाच्यः । तस्य ब्रह्मविदाप्नोति परमित्युक्तमोक्षहेतुज्ञानविषयत्वानुपपत्तेरित्यर्थः । इत्यादावित्यादिपदेनैतमन्नमयमात्मानमुपसङ्क्रामतीत्यादिग्रहणम् ॥

## विवृतिः

**कथञ्चिदल्पार्थतामिति** ॥ अन्नप्राणमनःशब्दानां प्रसिद्धार्थतां परित्यज्यात्तृत्वचेष्टाज्ञानरूपार्थत्वमङ्गीकृत्य विज्ञानशब्देन पौनराक्त्यपरिहाराय मनःशब्दस्य सामान्यविषयकत्वेन रूपेण विष्णुज्ञानार्थत्वमङ्गीकृत्याल्पार्थतां परिहृत्येत्यर्थः ॥ **दुर्बलत्वेन सावकाशत्वादिति** ॥ अन्नमयादिप्रकरणानां विष्णुपरत्वेन निर्णीतमन्त्रवर्णगतसत्यादिपदार्थसृष्टिकर्तृत्वादिप्रतिपादकत्वेन या आर्थिका समाख्या । तस्याश्चतुर्मुखे रुद्रादावपि स्वस्यावरापेक्षया सृष्टिकर्तृत्वादिप्राचुर्यसम्भवेन सावकाशत्वादित्यर्थः । ननु हेत्वन्तरबलात्तेषां ब्रह्मत्वमङ्गीक्रियत इत्यत आह ॥ **अनन्यथासिद्धेति** ॥ ब्रह्मविदिति ॥

## सूत्रभाष्यम्

**॥ ॐ भेदव्यपदेशाच्च ॐ ॥ १७ ॥**

'ते ये शतं प्रजापतेरानन्दाः' (तै.उ. २-८) ॥ 'अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति' (तै.उ. २-७) । 'स यश्चायं पुरुष' (तै.उ. २-८) इत्यादिभेदव्यपदेशात् । न च तत्त्वमसि (छां.उ. ६-८) अहं ब्रह्मास्मि (बृ.उ. ३-४-१०) इत्यादिश्रुतिविरोधः ॥ 'नामानि सर्वाणि यमाविशन्ति' इति (भाल्लवेयश्रुतिः) तत्तच्छब्दवाच्यत्वोक्तेः ॥ 'इदं हि विश्वं भगवानिवेतरो यतो जगत्स्थाननिरोधसम्भवः' (भागवते) ॥ 'असर्वः सर्व इत्यपि' (तुरश्रुतिः) ॥ 'विद्याऽऽत्मनि भिदाबोधः' (भागवते) ॥

'भेददृष्ट्याऽभिमानेन निस्सङ्गेनापि कर्मणा' (भागवते) ।

'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः' (मु.उ. ३-१-२) । 'असर्वः सर्व इवात्मैव सन्ननात्मेव प्रत्यङ्पराङिवैक ईयते बहुधेयते' 'स पुरुषः' 'स ईश्वरः स ब्रह्म' ।

'सर्वान्तर्यामिको विष्णुः सर्वनाम्नाऽभिधीयते ।
एषोऽहं त्वमसौ चेति न तु सर्वस्वरूपतः' ॥

'नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह' (मोक्षधर्मे) इत्यादेश्च ।

उक्ता च प्राप्तिः । 'ब्रह्मैव सन्' (बृ.उ. ६-४) इत्यपि जीव एव ब्रह्मशब्दः । उपपद्यते च विरोधे । प्रमादात्मकत्वाद्बन्धस्य विमुक्तत्वं च युज्यते ।

'मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिः' इति हि भागवते ॥ १७ ॥

## सत्तर्कदीपावली

अतोऽप्यत्र हिरण्यगर्भादिभ्योऽन्य एवानन्दमयः परमात्मा प्रतिपाद्यते तेभ्यस्तस्य भेदव्यपदेशादित्येतमर्थं प्रतिपादयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **भेदेत्यादिना** ॥ अयमर्थः । ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मणः आनन्द इति परिमितानन्दत्वेन निर्दिष्टेभ्यो हिरण्यगर्भादिभ्योऽपरिमितानन्दत्वेन आनन्दमयस्य भेदं व्यपदिशति । यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् इति श्रुतिः । यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दत इत्यनेन । तत्राप्यानन्दमयोऽदृश्यत्वेन स्वामिरहितत्वेनानिरुक्तत्वेन सामस्त्येनाश्रयरहितत्वेन प्रकृत्यादिप्रपञ्चाद्भिन्नः । जीवो ध्यानरूपां निष्ठां लब्ध्वा तमेव प्राप्नोतीति व्यपदिश्यते । अतो ब्रह्मादिजीवेभ्य आनन्दमयस्य भेदः सिद्ध्यति । स यश्चायं पुरुषे यश्चासावादित्ये स एक इत्यादिना स एक इत्यनेन आनन्दमयस्य मनुष्यादित्योपलक्षितोत्कृष्टापकृष्टजीवेभ्यो नियम्येभ्यस्तदन्तर्यामितया भेदोऽप्युपदिश्यते । अत्र जीवपरमात्माभेदवाक्यविरोधशङ्कां प्रमाणेनैव परिहरति । **न चेत्यादिना** । अयमर्थः । तत्वमस्याद्यभेदव्यपदेशमात्रेण दुःखिजीवस्य परमात्माभेदे पृथिव्यादेरपि जडस्य तेनाभेदः स्यात् । सर्वं खल्विदं ब्रह्मेति वाक्यात् । ततश्च दुःखित्वजडत्वादिदोषः परमात्मनोऽपि स्यात् । नेति नेतीत्यादिवाक्यवैय्यर्थ्यं च स्यात् । अतो नामानि सर्वाणि यमाविशन्तीति श्रुत्या सर्वपदवाच्यो विष्णुरित्युक्तत्वात्तत्त्वमस्यादिवाक्यगतपदैस्तत्वादिगुणयोगाद्विष्णुरुच्यते । न तु तस्य जीवादिभिरभेद इत्यङ्गीकरणीयम् । अभेदव्यपदेशमात्रेणाभेदे ग्रामो नामायमिति ग्रामाधिपतेः ग्रामस्य सामानाधिकरण्येन ग्रामाभेदः स्यात् । इदं हि विश्वं भगवानिवेतरः असर्वः सर्व इत्यनेनापि पुराणगतवचनेन सर्वं परमात्मव्यतिरिक्तमपि परमात्माधीनत्वात्परमात्माभिन्नमिव वक्तुं शक्यमित्युच्यते । जीवपरमात्मभेदस्य काल्पनिकत्वे विद्याऽऽत्मनि भिदाबोध इत्यनेन भागवतवचनेन विरोधः स्यात् । न च जीवेशभेदज्ञानस्यानर्थहेतुत्वादविद्यामयत्वमिति वाच्यम् ।

> आद्यः स्थिरचराणां यो वेदगर्भः सहर्षिभिः ।
> भेददृष्ट्याऽभिमानेन निःसङ्गेनापि कर्मणा ।

कर्तृत्वात्सगुणं ब्रह्म इत्यादिभागवतवचनविरोधात् । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोक इत्यादिश्रुतिविरोधाच्च । अत्र जीवेश्वरभेदज्ञानस्य परमपुरुषार्थसाधनत्वावगमात् । भारतेऽपि जीवपरमात्मैक्यं निषिद्धम् । बहवः पुरुषा ब्रह्मन्नुताहो एक एव त्विति प्रश्नस्य नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वहेति परिहारश्रवणात् । असर्वः सर्व इव, सर्वान्तर्यामिक इत्येतद्वचनोक्तप्रकारेण जीवाद्यभेदवचनं योजयितव्यम् । ब्रह्मैव सन् ब्रह्माप्येतीत्येषा श्रुतिः न जीवेशभेदं निषेद्धुं शक्नोति । गौणवृत्त्या जीवे ब्रह्मशब्दसम्भवात् । मुख्यार्थे विरोधे गौण्या वृत्तेरुपपद्यमानत्वात् । न हि नित्यमुक्तत्वादिलक्षणब्रह्मभावः

(सत्तर्कदीपावली)
संसारिणो जीवस्य न विरुद्ध्यते। मुख्यतो ब्रह्मत्वे जीवस्य ब्रह्माप्येतीति ब्रह्मप्राप्तिश्रवणविरोधस्य स्यात्। जीवो न मुक्तश्चेद्विमुक्तश्च विमुच्यत इति श्रुतिः कथं युज्यत आह **प्रमादात्मकत्वादिति** ॥

## तत्वप्रदीपिका

भेदव्यपदेशाच्च। इतश्च न प्रकृतिविरिश्चादीनामानन्दमयत्वम्। 'ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्द' इति पशुपतिविरिश्चयोः 'यतो वाचो निवर्तन्त' इत्यानन्दमयत्वसाधकश्लोकनिर्दिष्टादमितानन्दाद् ब्रह्मणो भेदव्यपदेशात्।

प्रजापतिः शिवः शेफो लिङ्गमित्यभिधीयते।
लिङ्गाभिमानी लोकस्य स्रष्टा गिरिश एव हि ॥ इति शैवपुराणे।

'यदा ह्येवैष' इत्यादेरयमर्थः। आत्मीया जीवधर्मास्तद्रहिते 'अनात्म्ये', अस्वामिसम्बन्धिनि वा। अन्यनिलयनहीने ब्रह्मणि यदा ह्येष जीवो निर्भयं निष्ठां विन्दतेऽथ स निर्भयं ब्रह्म प्राप्नोति। अयमेव प्रकृतेरपि भेदव्यपदेशः। दृश्यत्वान्निर्वक्तुं शक्यत्वादन्यनिलयनवत्त्वाच्च तस्याः। 'स यश्चायं पुरुषे यश्चासावादित्य' इति च सर्वजीवेभ्यो भेदव्यपदेशः।

अत्राऽह, नायं जीवेशभेदव्यपदेशस्साधीयान्। 'तत्त्वमसि' 'अहं ब्रह्मास्मि' 'तयोऽहं सोऽसौ योऽसौ सोऽहं' 'योऽसावसौ पुरुषस्सोऽहमस्मि' इत्यादिश्रुतिभिरभेदावधारणात्। न ह्येता भेदमणुमात्रमपि सहेरन्। पूर्वापरपर्यालोचनया तत्रैव तात्पर्यपर्यवसानात्। अतस्सौत्रमपि भेदव्यपदेशं न पारमार्थिकगोचरमनुजानीमहे। काल्पनिकभेदानुवादित्वात्सूत्राणाम्। अपरथा कथमिवारचितानां श्रुतीनामविरोधस्सुसाध्यस्स्यादित्यत आह—**न चेति**। न च 'तत्त्वमसि' 'अहं ब्रह्मास्मि' 'तयोऽहं सोऽसौ योऽसौ सोऽहं' 'योऽसावसौ पुरुषस्सोऽहमस्मि' इत्यादिश्रुतिविरोधः। 'नामानि सर्वाणि यमाविशन्ति' इति विष्णोरेव तत्तच्छब्दवाच्यत्वोक्तेः। ततत्त्वात्तत्, तवस्तेजः, तद्रूपत्वात्त्वम्, असनादसि। अहेयत्वादहं, न हन्यत इति वा। अस्तीति मेयत्वादस्मि, ज्ञानरूपो नियन्तृरूपश्च। परोक्षत्वादसौ, असुष्वोतत्वादमुष्मिन् स्थितत्वाद्वासावसावित्युच्यते। 'सप्तसु प्रथमा' इति सूत्रादसाविति सप्तमी वा। आ समन्तादीष्ट इत्येषः। अयनादयम्। सरणात्सारत्वाच्च स इति।

'इदं हि विश्वं भगवानिवेतरो यतो जगत्स्थाननिरोधसम्भवः' इति हि भागवते। इदं विश्वं भगवानिव, तदधीनत्वात्तत्, न त्वितरः, यस्माद्भगवतो जगत्सृष्ट्यादिकम्। असर्वस्सर्व इत्यपीति तुरश्रुतिः।

भेददृष्ट्याऽभिमानेन निस्सङ्गेनापि कर्मणा।
कर्तृत्वात्सगुणं ब्रह्म पुरुषं पुरुषर्षभ।

(तत्त्वप्रदीपिका)

स सङ्गत्य पुनः काले कालेनेश्वरमूर्तिना ।
जाते गुणव्यतिकरे यथापूर्वं प्रजायते ॥

अभितो मानेन विशेषज्ञानेन । जगत्कर्तृत्वाज्ज्ञानैश्वर्याद्यनन्तगुणं ब्रह्म । 'सः' ब्रह्मादिजीवसङ्घः प्रलये सङ्गत्य पुनस्सृष्टिकाले कालात्मना ज्ञानात्मना ईश्वरमूर्तिना गुणव्यतिकरे जाते यथापूर्वं ज्ञानादिगुणतारतम्येन विशिष्टोऽत्यन्तान्योन्यभेदेन 'प्रजायते' प्रकृष्टो मुक्तोऽभिव्यज्यते, न तु तदभिन्नो भवतीत्यर्थः । जुष्टं यदा पश्यत्यन्यमीशमित्यादेरयमर्थः । यदा जीवसेव्यमीश्वरमन्यं पश्यति, अस्य महिमानं च 'इति' उक्तप्रकारेण, 'द्वा सुपर्णा' इत्यादिपूर्ववाक्ये समानशरीरस्थत्वेऽप्यकर्मफलभुक् सर्वसाक्षीत्यादिरुक्तप्रकारः । तदा विशोको भवति । प्रत्यङ्परागिव अभिमुखोऽप्यनभिमुख इव एक एव बहुधा ज्ञायते प्राप्यते च । तत्तदन्तर्यामित्वेनापि तत्तच्छब्दवाच्यत्वं विष्णोरस्तीत्याह सर्वान्तर्यामको विष्णुरित्यादिना ।

'बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु ।
को ह्यत्र पुरुषश्रेष्ठस्तद्भवान्वक्तुमर्हति ॥

नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह ।
बहूनां पुरुषाणां हि यथैका योनिरुच्यते ।

तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकम्' इति मोक्षधर्मे ।

एवं तर्हि विष्णोस्सर्वनामवाच्यत्वश्रुतेस्सर्वान्तर्यामित्वाच्च सर्वनामत्वोपपत्तेः सर्वश्रुतिस्मृतिप्रसिद्धत्वाच्च भेदस्य नाभेदनिरासप्राप्तिरित्याशङ्क्याऽह– **उक्ता च प्राप्तिरिति** । एतदुक्तं भवति, कानिचिद्वाक्यानि कैश्चिन्मन्दमतिभिरतिदीर्घभ्रान्तिभिरभेदवाचकान्यभिधीयमानानि साक्षाद्भेदसाधकान्यपि मृदुहृदयानां सन्देहमावहेयुरिति । 'ब्रह्मैव सन्ब्रह्माप्येति' इति जीव एव सन्ब्रह्माप्नोतीत्यर्थः, न तु ब्रह्मैव सन्निति । ब्रह्मत्वे तत्प्राप्त्ययोगात् । न हि स्वयमेव स्वात्मानं प्राप्नोतीति समञ्जसम् ।

ब्रह्माणि जीवास्सर्वेऽपि परब्रह्माणि मुक्तिगाः ।
प्रकृतिः परमं ब्रह्म परमं महदच्युत इति परमश्रुतिः ॥

उपपद्यते च अमुख्यार्थत्वं मुख्यविरोधे । 'विमुक्तश्च विमुच्यत' इति श्रुतिः कथमवितथार्था स्यादित्यत आह– **प्रमादात्मकत्वाद्बन्धस्येति** । प्रमादस्वरूपत्वात् प्रमादनिमित्तत्वाद्वा बन्धस्य विमुक्तत्वं च युज्यते । प्रमादोऽज्ञानम् ।

सनत्सुजात यदिदं शृणोमि मृत्युर्न चास्तीति तवोपदेशम् ।
देवासुरा ह्यचरन्ब्रह्मचर्यममृत्यवे तत्कतरन्नु सत्यम् ॥

(तत्त्वप्रदीपिका)

उभे सत्ये क्षत्रियाद्यप्रवृत्ते मोहान्मृत्युस्संमतोऽयं कवीनाम् ।
प्रमादं वै मृत्युमहं ब्रवीमि तथाऽप्रमादममृतत्वं ब्रवीमि इति हि भारते ॥

## तत्त्वप्रकाशिका

हेत्वन्तरेण ब्रह्मादीनामानन्दमयत्वं निराकुर्वत्सूत्रं पठित्वा व्याचष्टे ॥ **भेदेति ॥** नेतर इत्यनुपज्जते । 'ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्दः' इति रुद्राच्छतगुणमात्रानन्दत्वोक्तेर्न तावदानन्दमयो विरिञ्चः । 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान्' इत्यानन्दमयास्यापरिमितानन्दत्वोक्तेः । अत एव न रुद्रः तस्य हिरण्यगर्भाच्छतांशोनानन्दत्वोक्तेः । एवं नेन्द्रबृहस्पत्यादयोऽपि । अदृश्येऽनात्म्ये स्वामिरहिते जैवगुणविधुरे वा । साकल्येन निर्वचनागोचरे । अपराश्रये तस्मिन्नानन्दमये योऽभयतया ध्यानरूपां प्रतिष्ठां विन्दते अनन्तरं स उपासकोऽभयं भगवन्तं गतो भवतीति श्रुतौ प्रकृत्याद्ययोग्यस्वातन्त्र्यादिश्रवणान्न प्रकृत्यादीनामानन्दमयत्वम् । 'स यश्चायम्' इत्यानन्दमयस्यापकृष्टजीवेषु पुरुषादित्यपदोपलक्षितेषु स्थितिकथनान्नाऽऽनन्दमयो ब्रह्मादिजीवसमूह इत्याशयः । नन्वस्त्वानन्दमयः परं ब्रह्म तथापि कथं तेन ब्रह्मादीनां भेदः सम्भवति । तद्भेदस्य तत्त्वमसीत्यादिश्रुतिविरोधादित्यत आह ॥ **न चेति ॥** भवेदेतद्यद्येतच्छ्रुतीनामद्वैतार्थता स्यात् । न चैवम् । 'नामानि सर्वाणि' इति श्रुत्या तत्त्वमस्यादिशब्दैर्विष्णोरेव वाच्यत्वोक्तेरित्यर्थः । सन्तु चैताः श्रुतयोऽद्वैतपरास्तथापि नोक्तभेदस्य तद्विरोधः । भगवतः सकलस्वामित्वेनैक्यव्यपदेशोपपत्तेरित्येतत्प्रमाणेनाह ॥ **इदमिति ॥** इदं विश्वं भगवानिवोच्यते स्वयमितरोऽपि सन् । यतः कारणाज्जगत्स्थाननिरोधोत्पत्तिकर्तेत्यर्थः । एतदेवाह । असर्व इति वाक्यं च । ननु भेदज्ञानस्य मिथ्याज्ञानत्वात्कथं तदनुसारेणैक्यश्रुतयो योज्यन्त इत्यत आह ॥ **विद्येति ॥** न च भिदाया अबोध इति व्याख्येयम् । अज्ञानस्य विद्यात्वाभावात् । ननु भेदज्ञानस्यापुरुषार्थहेतुत्वात्कथं तस्य विद्यात्वमित्यत आह ॥ **भेददृष्ट्येति ॥** वेदगर्भो जीवेश्वरभेदज्ञानेन परमेश्वरबहुमानेन चानन्दादिगुणपूर्णं ब्रह्म प्राप्त इति स्मृत्यर्थः । सर्वसेव्यमीशं जीवादन्यं तदेतत्सत्यमित्यादिश्रुत्या प्रागुक्तप्रकारेणास्य महिमानं च यदा पश्यति तदा मुक्तो भवतीति श्रुत्यर्थः । एवं स्वामित्वार्थतयाऽद्वैतश्रुतीर्व्याख्यायान्तर्यामित्वार्थतयाऽपि ताः श्रुतिस्मृतिभ्यां व्याचष्टे ॥ **असर्व इति ॥** असर्वात्मकोऽपि सर्वात्मकत्वेनान्तर्याम्यप्यनन्तर्यामित्वेन देहान्तर्गतोऽपि बहिर्मात्रवृत्तित्वेन ज्ञायते तथैक एव बहुधा ज्ञायत इत्यर्थः । अनेनान्तर्यामित्वादसर्वस्य सर्वत्वोक्तिरिति सिध्यति । विशिष्टैक्यार्थतया च ताः स्मृत्या व्याख्याति ॥ **नैतदिति ॥** एतदित्यस्य विवरणं पुरुषमेकमिति । अत्र पुरुषैक्यं निराकृत्याद्वैतश्रुतिविरोधपरिहाराय तदर्थत्वेन बहूनामिति विशिष्टैक्यमुच्यते । नन्वेवमद्वैतश्रुत्यभावे कथमद्वैतं श्रुत्यादिना निषिध्यते तस्याप्रत्यक्षत्वेन श्रुतिं विना प्राप्त्यभावात् । अप्राप्तस्य च निषेधायोगादित्यत आह ॥ **उक्ता**

(तत्त्वप्रकाशिका)

**चेति ॥** न च तत्त्वमस्यहं ब्रह्मास्मीत्यादिश्रुतिविरोध इति भाष्येऽद्वैतनिषेधाय श्रुत्यर्थापरिज्ञाननिमित्त-प्राप्तेरुक्तत्वाद्युज्यते तन्निषेध इत्यर्थः । नन्वेतच्छ्रुतीनामविरोधकत्वेऽपि ब्रह्मैव सन् ब्रह्माप्येतीति श्रुतिविरोधस्तु भविष्यति । अत्र ब्रह्मैवेत्यब्रह्मतानिषेधेन तदधीनत्वादिनाऽतद्भूते तद्व्यपदेश इत्युक्तगतेरसम्भवादित्यत आह ॥ **ब्रह्मैवेति ॥** नात्र परब्रह्मत्वाभिप्रायोऽयमाद्यो ब्रह्मशब्दः किन्तु 'ब्रह्माणि जीवाः सर्वेऽपि' इति श्रुतेर्जीवपर एव । तथा च जीवभावमविहायैव ब्रह्माऽऽप्नोतीत्यर्थोपपत्तेर्नोक्तभेदस्यै-तच्छ्रुतिविरोध इत्यर्थः । ब्रह्मशब्दस्य परब्रह्मणि मुख्यत्वान्न जीवेऽसावुपपद्यत इत्यत आह ॥ **उपपद्यते चेति ॥** परब्रह्मणि मुख्योऽपि ब्रह्मशब्दो जीवेऽप्युपपद्यते । जीवस्य परब्रह्मत्वार्थतास्वीकारे ब्रह्माप्येतीति श्रुतब्रह्मप्राप्तिविरोधात् प्रामाणान्तरविरोधाच्चेत्यर्थः । ननु विस्मृतकण्ठमणिरपि स्मृतकण्ठमणिरित्येवोच्यते न तु प्राप्तमणिरिति । परमं साम्यमुपैतीत्यादावप्राप्तभोगादेरपि प्राप्त्युक्तेः । ननु संसारिणोऽपि 'विमुक्तश्च विमुच्यत' इति विमुक्तत्वश्रवणात्तदन्यथानुपपत्त्या तस्य परब्रह्मत्वसिद्धेस्तद्विरोधो भेदाभिधानस्येत्यत आह ॥ **प्रमादेति ॥** जीवस्य परब्रह्मत्वाभावेऽपि विमुक्तत्वोक्तिर्युज्यते । तद्गतबन्धस्याज्ञानमूलत्वेना-स्वाभाविकत्वात् । अस्वाभाविके चाविद्यमानप्रयोगदर्शनादिति भावः । बन्धस्यास्वाभाविकत्वं कुत इत्यत आह ॥ **मुक्तिरिति** ॥ १७ ॥

## गुर्वर्थदीपिका

शतगुणानन्दत्वोक्तेरपरिमितानन्दत्वोक्तेरिति व्यावर्तकधर्मं वदता भिद्यतेऽनेनेति भेद इति सूत्रार्थः सूचितः । व्यावर्तकधर्मकथने भेदस्याप्यर्थात्कथनेन भेदनं भेदस्तस्यैव व्यपदेशादिति वा । चतुर्वर्णा एव चातुर्वर्ण्यमितिवदात्मैवाऽऽत्म्यमिति भावेनोक्तं स्वामिरहित इति । अपराश्रये पराश्रयरहिते । अभयतयेति वदताऽभयं यथा भवति तथेति क्रियाविशेषणत्वं सूचितम् । तत्तच्छब्दवाच्यत्वोक्तेरिति वदता भाष्यकृता व्याप्तत्वात्तच्छब्दनामा भगवान् । 'तनु विस्तारे' । 'वा गतिगन्धनयोः' इति धातोस्त्वंनामाऽपि भगवान् । 'अस भुवि' इति धातोरसोऽसनं सर्वत्र सत्ता सोऽप्यस्तीति 'असु निरसन' इति धातोरसः दुर्जनसंहारादिः सोऽस्यास्तीति वाऽसिनामाऽपि भगवानिति श्रुतेरर्थः सूचितः । जगत्स्थाननिरोधोत्पत्तिकर्तेत्यनेन स्थीयते निरुध्यते सम्भूयते अनेनेति व्युत्पत्तिं सूचयति । 'असर्वः सर्व इत्यपि' इति श्रुतौ सर्वभिन्नस्य पुनः सर्वत्वोक्तिस्साक्षात्सर्वस्वरूपत्वं न वदति । विरोधात् । किन्तु प्रागुक्तस्मृतिसमाख्यया सर्वस्थितिनिरोधोत्पत्तिकारणत्वाद्राजा राष्ट्रमितिवत्सर्व इत्यपि कथितः । अपिपदेन मुख्यार्थे गर्हाऽपि सूचिता । अत इयमपि श्रुतिः स्मृतिसमानार्थेति भावेनाऽऽह एतदेवाऽऽ-हेति । असर्वः परमात्मा सर्व इवेयते यथा सर्वः सर्वत्वेनेयते तथाऽयमपि सर्वत्वेनेयते । एवमुत्तरत्रापि

(गुर्वर्थदीपिका)
श्रौतपदयोजनायां सर्वत्र फलितमर्थमाह **असर्वात्मकोऽपि सर्वात्मकत्वेनेत्यादिना**। क्वचिदेक ईयते तथैकोऽपि सन्कचिद्बहुधेयत इत्यन्तिमवाक्यखण्डस्य योजना। 'प्रत्यङ्पराङ्च' इत्यत्र प्रत्यङ्पदेन देहान्तस्थितत्वोक्तेस्तत्प्रकरणस्थमात्मपदमपि तस्याः स्थितेर्वैयर्थ्यपरिहारायान्तर्यामिपरम्। एवं चोपस्थितपरित्यागे कारणाभावादेतद्वाक्यस्थसर्वत्वोक्तिरप्यन्तर्यामित्वनिमित्तैवेति भावेनोक्तं– **अनेनेति**। विशिष्टैक्यार्थतयेत्यत्र विशिष्टः सर्वोत्तमः। तस्यैक्यमैक्यव्यवहारः। क्षीरान्तर्निविष्टनीरवत्प्रलये पृथगदृश्यतया भगवदुदरे निविष्टस्य जगतो वा ऐक्यमैक्यव्यवहार इत्यर्थः। ननु द्वितीयब्रह्मपदस्य भावप्रधानमङ्गीकृत्य संसारदशायां विस्मृतब्रह्मभावं मुक्तिदशायामाप्नोति स्मरतीत्यर्थो ममापि भवेदिति चेन्न। श्रुतावनुपपत्तिं विना स्वप्रयोजनमात्रेण भावप्राधान्यायोगात्। मुख्ये सम्भवत्यमुख्यार्थाङ्गीकारायोगाच्च। दोषान्तरं चाह– **विस्मृतेति**। सर्वथाऽनुपनीते शूद्रेऽब्राह्मणत्वोक्तिवत्कदाचिदनुपनीते ब्राह्मणकुमारेऽनुपनीतत्वोपाधिकतातत्कालिकाब्राह्मणत्वसद्भावेऽप्यब्राह्मणत्वोक्तेरदर्शनादिति भावेनोक्तं अस्वाभाविके इति।

## भावबोधः

तस्माददृश्ये जैवानां गुणानामप्यसङ्गतेः।
अनात्म्येऽथ गुणानन्त्यादनिरुक्ते निराश्रयात्॥

अनिलयनेऽभयत्वेन यदा ज्ञानेन तिष्ठति।
तदाऽभयं हरिं गच्छेत्॥

इति वचनानुसारेण श्रुत्यर्थमाह– **अदृश्य इति**। अनात्म्य इत्यस्य स्वामिरहित इति व्याख्याने प्रत्ययस्य स्वार्थिकत्वं भवतीत्यर्थान्तरमाह– **जैवगुणविधुरे वेति**। वैकुण्ठादिनिलयनस्य सत्त्वात् कथमनिलयन इत्युक्तमित्यत आह– **अपराश्रय इति**। 'अभयतया' इत्यनेनाभयमिति क्रियाविशेषणमित्युक्तं भवति।

'स विष्णुः सर्वजीवेषु नृषु देवेषु च स्थितः।

एक एव' इति प्रमाणं मनसि निधायाह– **अपकृष्टोत्कृष्टजीवेष्विति**। ननु श्रुतौ पुरुषे आदित्ये इत्येव श्रवणात् अपकृष्टोत्कृष्टजीवेष्विति कथमुक्तमित्यत आह– **पुरुषादित्यपदोपलक्षितेष्विति**। तथा चानया श्रुत्या पुरुषादित्ययोरेवानन्दमयाद् भेदसिद्धिर्न सर्वजीवानामिति शङ्कानवकाश इति द्रष्टव्यम्। 'भेदव्यपदेशाच्च' इति सूत्रेणोक्तो भेदः किमानन्दमयचतुर्मुखादिरूपविशिष्टयोरुत तच्चैतन्ययोः। नाद्यः।

(भावबोधः)

विशिष्टभेदस्य मिथ्यात्वेन स्वरूपाभेदाविरोधित्वाच्चतुर्मुखादीनामानन्दमयत्वं हि तच्चैतन्याभिन्नचैतन्यकत्वं विवक्षितम् । न द्वितीयः । असिद्धेः । चैतन्याभेदस्य श्रुतिसिद्धत्वादित्यभिप्रेत्य शङ्कते– **नन्वस्त्विति ।** एतेनैतदपि परास्तम् । यदनेन सूत्रेण च चतुर्मुखादीनामेवानन्दमयाद् भेदः प्रतिपाद्यते न जीवब्रह्मणोः । तथा च 'न च तत्त्वमसि' इत्यादिभाष्यं न सङ्गच्छत इति ।

अत एवानुव्याख्याने
आदित्ये पुरुषे चायमिति भेदोपदेशतः ।
नास्याभेदोऽस्ति जीवेन ।

इतीदं सूत्रं जीवब्रह्मभेदप्रतिपादकत्वेनापि व्याख्यातम् । अत एव च तत्र 'न जीवभेदसूत्राणां शङ्क्याऽत्र पुनरुक्तता' इत्येतत्सूत्रव्याख्यानावसर एवोक्तम् । 'भगवानिदं विश्वमिवोच्यते' 'पुरुष एवेदं सर्वम्' इत्यादाविति योजना । जगत्स्थाननिरोधोत्पत्तिकर्तेति । अनेन जगतः स्थाननिरोधसम्भवा यस्मादिति बहुव्रीहिरित्युक्तं भवति ।

'आद्यः स्थिरचराणां यो वेदगर्भः सहर्षिभिः' ॥ इति पूर्ववाक्यानुसारेणोक्तं **वेदगर्भ इति ॥** 'कर्तृत्वात्सगुणं ब्रह्म पुरुषं पुरुषर्षभम् । स सङ्गत्या' इत्युत्तरवाक्येनान्वयमाह– **गुणपूर्णमिति । ईशं जीवादन्यमिति ॥** एवं व्यत्यस्तान्वयप्रदर्शनेन जुष्टत्ववदीशत्वमपि जीवादन्यत्वे हेतुरिति सूचितं भवति । इत्यादिश्रुत्या प्रागुक्तप्रकारेणेति । अनेन महिमानमितीति इतिशब्दस्य प्रकारवाचिनः 'इति महिमानम्' इति व्यत्यासेनान्वय उक्तो भवति । वीतशोक इत्यस्यार्थो मुक्त इति । बहिर्मात्रवृत्तित्वेन ज्ञायत इति । अनेनैकशब्दात् 'परस्य ईयते' इत्यस्यान्वय उक्तो भवति । अत एव क्रियासमुच्चयार्थम् 'तथा एक एव' इति तथाशब्दः प्रयुक्तः ॥ **अनेनान्तर्यामित्वादिति ॥** तथा च 'सर्वः' इति श्रुतिवाक्यमेवं योजितं भवति— असर्वोऽपि सर्वात्मकत्वेन प्रतीयत इत्यत्र हेत्वाकाङ्क्षायाम् अन्तर्यामित्वं हेतुत्वेनाभिप्रेत्य, सिद्धमन्तर्यामित्वम् अनन्तर्यामित्वेन प्रतीतेरिति शङ्कायां तत्परिहारार्थमात्मैवेत्युक्तम् ।

नन्वन्तर्यामित्वे प्रत्यक्त्वं स्यात् । न च तद्युज्यते । बहिर्मात्रवृत्तित्वेन प्रतीयमानत्वादित्याशङ्कायां प्रत्यगित्यभिहितम् ।

ननु देहान्तरित्युक्तरीत्यान्तर्बहिर्वर्तमानस्य हरेर्यदेकत्वमुक्तं तत्र सम्भवति । भिन्नभिन्नस्थानादित्वेन तस्य भिन्नत्वादित्यत उक्तम् ॥ एक इति ॥ अन्यत्रादृष्टमेतत् सर्वं कथमित्यत उक्तम् ॥ स पुरुष इत्यादीति ॥ एवं सत्यसर्वात्मकस्य सर्वात्मकत्वोक्तौ कथमन्तर्यामित्वं हेतुर्न भवतीति भावः ।

(भावबोधः)

ननु 'नैतदिच्छन्ति' इति वाक्ये अर्थादैक्यनिराकरण प्रतीयते । नाद्वैतश्रुतिव्याख्यानम् । तत्कथमेवमवतारितमित्यत आह– **अत्रेति** ।। विवक्षितार्थप्रतिपादकस्यादिपदेनोपात्तत्वादित्यर्थः । तर्हि बहूनामित्येवोदाहर्तव्यं; किमर्थमिदमुदाहृतमित्यत उक्तं– **पुरुषैक्यं निराकृत्येति** । **श्रुत्यर्थापरिज्ञानेति** । एतच्छ्रुत्यर्थापरिज्ञानेनाद्वैतप्राप्त्यभावे भेदव्यपदेशस्यैतच्छ्रुतिविरोधाभावात् परिहारोऽनर्थकः स्यादिति भावः ।।

ननु जीवस्य परब्रह्मत्वेऽपि न तत्प्राप्तिकथं विरुद्धं; पूर्वमज्ञातपरब्रह्मत्वो जीवः स्वस्य विद्यमानं परब्रह्मत्वं जानातीत्यभिप्रायेण प्राप्तिकथनोपपत्तेः । यथा कश्चिदज्ञातस्वस्थितकण्ठमणिः पूर्वमेव विद्यमान-कण्ठमणिज्ञानाल्लब्धकण्टमणिरित्युच्यत इत्यतो 'विस्मृतकण्ठमणिरपि ज्ञात इत्येवोच्यते; न तु प्राप्त' इति बृहदारण्यकभाष्यं मनसि निधायाऽऽह ननु विस्मृतकण्ठमणिरिति । तथा च ज्ञानाभिप्राये ब्रह्म जानातीत्येव निर्देशः स्यात् । न प्राप्नोतीति भावः । 'परमं साम्यमुपैति' इत्यत्र यथा प्रागपि विद्यमानस्य साम्यस्य प्राप्तिरुच्यते । तथाऽत्रापि प्रागेव विद्यमानस्य ब्रह्मत्वस्य प्राप्तिरुच्यतामित्यत आह परमं साम्यमुपैतीत्यादावपीति ।

## भावदीपः

।। ॐ भेदव्यपदेशाच्च ॐ ।। सूत्रे चशब्दाश्रवणादाह ।। **हेत्वन्तरेणेति** ।। **आनन्दमयत्वमिति** । भाष्ये ब्रह्मादिपूर्वपक्षकोटेरानन्दमयादेरभेदोक्तिपरश्रुतिवाक्यानामुक्तत्वेन पूर्वत्रानन्दमयादिरित्युक्तावपीहा-नन्दमयत्वमित्येवोक्तम् । तथा चेदं तद्धेतुसूत्रमिवानन्दमयमात्रपरमिति सूचितम् ।। **नेतर इतीति** ।। आनन्दमयो विष्णोरितरो नेत्यनुषज्यत इत्यर्थः ।। **रुद्रादिति** ।। तस्मात्प्रजापतिर्मुक्तो रुद्रः प्रजननेशितेति तद्भाष्योक्तेरिति भावः । इतरशब्दार्थो विरिञ्च इति । एवमग्रेऽपि भेदकोक्त्या भेदोऽर्थादुक्त इति भावः ।। **न रुद्र इति** ।। आनन्दमय इत्यत्रोत्तरत्र चानुवर्त्यम् ।। **एवमिति** ।। 'स एको बृहस्पतेरानन्दः । स एक इन्द्रस्यानन्द' इति तेषामपि परिमितानन्दश्रुतेरिति भावः । तस्माददृश्ये जैवानां गुणानामप्यसङ्गते-रित्यादितैत्तिरीयभाष्यदिशा पदानामर्थं भेदकज्ञानायाह ।। **अदृश्य इति** ।। अनात्म्य इत्यस्यार्थद्वयं **स्वामीत्यादि** । आत्मनः स्वामिनः अयमात्म्यः स नेत्यनात्म्य इत्यस्य फलितार्थः स्वामिरहित इति । आत्मनो जीवस्येमे आत्म्या स नेत्यनात्म्य इत्यस्य फलितार्थः स्वामिरहित इति । आत्मनो जीवस्येमे आत्म्या जीवसम्बन्धिगुणाः । ते न सन्ति यस्येति वा अनात्म्यशब्दार्थ इति भावः । अभयमिति क्रियाविशेषणं मत्वाऽऽह **अभयतयेति** । 'अथ सोऽभयं गतो भवति' इति शेषस्यार्थमाह ।।

(भावदीपः)

**अनन्तरमिति** ॥ **स्वातन्त्र्येति** ॥ अनात्म्ये स्वामिरहित इत्युक्तत्वादिति भावः ॥ **इत्याशय इति** ॥ एतेन भेदव्यपदेशादिति पदं भाष्ये प्रतिवाक्यमन्तेऽन्वेति आनन्दमयो नेतर इति च । तथा चाद्यं वाक्यं ब्रह्मरुद्रार्थं द्वितीयं प्रकृत्याद्यर्थं तृतीयं जीवसमूहव्यावृत्त्यर्थमिति दर्शितम् ॥ **तत्वमसीत्यादिश्रुतिविरोधादिति** ॥ ननु कामाच्चेति सूत्रे अद्वैते प्रत्यक्षस्याप्रसक्तेरद्वैतश्रुतीनां तद्गुणसारत्वादिति द्वितीये व्याकरिष्यमाणत्वेनानुमानमात्रनिरासोपपत्तेः पुनरत्र भाष्येऽद्वैतश्रुतिविरोधशङ्कासमाधिर्व्यर्थ इति चेदुच्यते । तद्गुणसूत्रेऽद्वैतश्रुतीनां सादृश्यार्थतया व्याख्यानेऽपि नामानि सर्वाणीत्यादिश्रुत्या पदसमन्वयरूपं तथा

'स्वातन्त्र्ये च विशिष्टत्वे स्थानमत्यैक्ययोरपि ।
सादृश्ये चैक्यवाक्सम्यक्सावकाशा यथेष्टत'

इत्युक्तदिशा स्वातन्त्र्याद्यर्थान्तरपरत्वरूपं च समाधिं वक्तुमिति । तथा च तद्गुणसारत्त्वात्तद्व्यपदेशः प्राज्ञवदित्युक्त्युपलक्षित एव समाधिरत्र सूत्रकृन्निरस्यानुमानमूलभूतश्रुत्यभावद्योतनार्थमियं शङ्का कृतेत्यदोषः ॥ **विष्णोरेवेति** ॥ एतच्च ज्योतिरुपक्रमादित्यत्र व्यक्तम् । वाक्यान्वयपक्षमुपेत्याह ॥ **सन्तु वेति** ॥ स्वामित्वेन स्वातन्त्र्येण भगवानिवोच्यते । उपचारेण भगवानुच्यते तत्त्वमस्यहं ब्रह्म पुरुष एवेदं सर्वमित्यादिष्वित्यर्थः । मुख्यमेवैक्यं कुतो नेत्यत आह ॥ **इतरोऽपीति** ॥ जगत्स्थाननिरोधसम्भवा यतो भवन्तीति व्यधिकरणबहुव्रीहिमाश्रित्याऽऽह ॥ **जगत्स्थानेति** ॥ तत्वप्रदीपे तु यतो यस्माद्भगवतो जगत्स्थानादिस्स त्वितर इत्युक्तम् । एतच्च प्रथमस्कन्धस्थं वाक्यम् ॥ **एतदेवेति** ॥ असर्वः सर्व एवेति वक्ष्यमाणदिशा असर्वः सर्वभिन्नोऽपि सर्व इत्युच्यते स्वातन्त्र्यादिति श्रुत्यर्थः ॥ **विद्येतीति** ॥ एकादशस्कन्धे का विद्येत्युद्धवप्रश्नं प्रत्युत्तरमिदम् ॥ **अपुरुषार्थेति** ॥ पुरुषार्थहेतुत्वात्प्रत्युतानर्थहेतुत्वाच्चेत्यर्थः । तत्राद्यं भेददृष्ट्येति तृतीयस्कन्धस्थस्मृत्या द्वितीयं तु श्रुतौ वीतशोक इत्युक्त्या निरसिष्यत इति ज्ञेयम् ॥ **वेदगर्भ इति** ॥ आद्यः स्थिरचराणां यो वेदगर्भः सहर्षिभिरिति पूर्ववाक्योक्तरिति भावः ॥ **परमेश्वरबहुमानेन चेति** ॥ तत्वप्रदीपे तु अभिमानेन पूर्णज्ञानेनेति तात्पर्यदिशा अभितो मानेन विशेषज्ञानेनेत्यर्थ उक्तः ।

कर्तृत्वात्सगुणं ब्रह्म पुरुषं पुरुषर्षभम् ।
स सङ्गत्य पुनःकाले कालेनेश्वरमूर्तिना ॥
जाते गुणव्यतिकरे यथापूर्वं प्रजायत

इत्युत्तरवाक्ये भेदज्ञानस्य ब्रह्मप्राप्तिफलमुक्तमिति मत्वा तेनान्वयमाह ॥ **आनन्दादीति** ॥ एतेन

(भावदीपः)

सगुणमित्यनेन गुणपूर्णत्वमुक्तं ब्रह्मेति तु विशेष्यमिति सूचितम् ॥ **प्राप्त इति** ॥ यद्यपि कर्मनिर्णयटीकायां न केवलं सगुणं किं तु ब्रह्म पूर्णं पुरुषमिति भगवतो नामसङ्कीर्तनम् । पुरुषत्वोक्त्या प्राप्तास्मदादि-साधारण्यव्युदासाय पुरुषर्षभमिति । तदुपपादनाय कर्तृत्वात्सगुणं ब्रह्मेति ॥ सङ्गत्येति द्वितीयान्वय इत्युक्त्या सुधातत्वप्रदीपयोरुक्त्यनुरोधेन च स प्रलये ब्रह्म सङ्गत्य पुनः सृष्टिकाले कालात्मना ज्ञानात्म-नेश्वरमूर्तिना गुणव्यतिकरे जाते यथापूर्वं ज्ञानादिगुणतारतम्यविशिष्टः प्रजायते प्रकृष्टो जायते मुक्तः सन् स्वरूपानन्दाद्यात्मनाऽभिव्यज्यत इत्येवोच्यते न तु प्राप्त इति । तथापि फलितार्थोक्तिरियं प्रकृतोप-योगित्वेन कृतेत्यदोषः । क्वचित्प्राप्येत्येव पाठः ॥ **सर्वसेव्यमिति** ॥ जुषी प्रीतिसेवनयोरिति धातोर्जुष्टमिति रूपात् ॥ **जीवादन्यमिति** ॥ पश्यतीति प्रकृतो जीवः यदि न्यायेन प्रतियोगित्वेनान्वेति । तया मुह्यति जीवस्तमन्यं ज्ञात्वा विमुच्यते । जीवादन्यः स्वतन्त्रोऽयमित्याथर्वणभाष्योक्तेरिति भावः ॥ **तदेतदिति** ॥ तदेतत्सत्यं मन्त्रेषु कर्माणि कवयो यान्यपश्यन्नित्यादिना अखिलकर्माराध्यत्वादेः तथा तदेतत्सत्यं यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः । तथाऽक्षराद्विविधाः सोम्य भावा इत्यादिना सृष्ट्यादेर्महिम्नः पूर्वमुक्तेः इतिशब्दः पूर्वोक्तप्रकारवाचीति भावः । तेन भेदकज्ञानस्यापि पुरुषार्थहेतुत्वं प्राप्तमिति ते ये शतमित्यादिनोक्तभेदकज्ञानस्यापि विद्यात्वं सूचितम् । वीतशोको मुक्त इत्यर्थः ॥ **अन्तर्यामित्वार्थतयेति** ॥ तत्त्वमसीत्यत्र त्वं त्वदन्तर्यामी । अहं ब्रह्मेत्यत्र अहं मदन्तर्यामीत्यर्थतयेत्यर्थः । यथाक्रमं श्रुतिस्थपदानामर्थमाह ॥ **बहिर्मात्रवृत्तित्वेन ज्ञायत इति** ॥ अनेनैकशब्दात्परस्य ईयत इत्यस्यात्रान्वय उक्तो भवति । अत एव क्रियासमुच्चयार्थं तथा एक एवेति तथाशब्दः प्रयुक्तः ॥ **अनेनान्तर्यामित्वादिति** ॥ तथा चासर्व इति श्रुतिवाक्यमेवं योजितं भवति । असर्वोऽपि सर्वात्मकत्वेन प्रतीयत इत्यत्र हेत्वाकाङ्क्षायामन्तर्यामित्वं हेतुत्वेनाभिप्रेत्यासिद्धमन्तर्यामित्वम् अनन्तर्यामित्वेन प्रतीतेरित्याशङ्कायां तत्परिहारार्थमात्मैवेत्युक्तम् । नन्वन्तर्यामित्वं प्रत्युक्तं स्यात् । न च तद्युज्यते । बहिर्मात्रवृत्तित्वेन प्रतीयमानत्वादित्याशङ्कायां प्रत्यगित्यभिहितम् । ननु देहान्तरित्युक्त-रीत्याऽन्तर्बहिर्वर्तमानस्य हरेर्यदेकत्वमुक्तं तन्न सम्भवति । भिन्नभिन्नस्थानादित्वेन तस्य भिन्नत्वादित्यत उक्तम् ॥ **एक इति** ॥ अन्यत्रादृष्टमेतत्सर्वं हेतुर्न भवेदिति भावः ॥ **असर्वेति** ॥ विशिष्टेति विशिष्टमुत्तमं वस्तु एकमेवेत्यर्थकतयेत्यर्थः । अत्र विशिष्टैक्यं न भातीत्यतोऽस्योपयोगं वदन्नुत्तरश्लोकेन तदुक्तं व्यनक्ति ॥ **अत्रेत्यादिना** ॥ मोक्षधर्मे हि

बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु ।
को ह्यत्र पुरुषश्रेष्ठस्तं भवान्वक्तुमर्हति ॥

(भावदीपः)

इति जनमेजयेन पृष्टो वैशम्पायनः नैतदिच्छन्तीत्यर्धेन पुरुषैक्यमतं निरस्य तत्वमसीत्याद्यद्वैतश्रुतीनां

बहूनां पुरषाणां हि यथैका योनिरुच्यते ।
तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकम् ।

इत्यादिना विशिष्टैक्यमर्थमुवाच । पुरुषाणां यथैका योनिर्विशिष्टं कारणमुच्यते श्रुत्यादौ । तथा विशिष्टं तं पुरुषं वक्ष्यामीत्यर्थप्रतीतेः । अस्मिन् ग्रामेऽयमेक एव विप्र इतिवदेकमेवाद्वितीय-मित्याद्यैक्यव्यपदेश इति ॥ **अप्रत्यक्षत्वेनेति** ॥ यद्यपि

प्रेरकः सर्वजीवानां प्राणधीचोदिता च सः ।
विष्णुः संसारिणोऽन्यो यस्तमविज्ञाय मूढधीः ।
देहेन्द्रियप्राणबुद्धिनेतृत्वं मन्यते त्मनः ।

इति तत्वनिर्णयटीकायां देहादिप्रेरकत्वरूपभगवल्लक्षणस्याहङ्कारादिवशेन सर्वैरप्यात्मनो मन्यमानत्त्वा-ल्लक्षणाभिमानस्यैवैक्याभिमानित्वमित्याभिमानिकैक्यप्राप्तिरुक्ता । तथापि स्पष्टमात्मनि ब्रह्मतादात्म्याध्यारो नेति भावेनैवमुक्तिः ॥ **श्रुत्यर्थेति** ॥ स्वामित्वादिरूपार्थेत्यर्थः ॥ **श्रुतिविरोधस्त्विति** ॥ तद्भेदस्येत्यनु-कर्षः ॥ **प्राप्तिविरोधादिति** ॥ प्राप्तृप्राप्यभावस्य भेदव्याप्तत्वादिति भावः ॥ **प्रमाणान्तरेति** ॥ मुक्तौ भेदबोधकोदाहृतोदाहरिष्यमाणप्रमाणान्तरेत्यर्थः । ननु प्राग्विद्यमानस्यैव ब्रह्मभावस्य विस्मृतस्य पश्चा-त्स्मृत्या तथात्वेन प्राप्तिव्यपदेश इत्यत आह ॥ **ननु विस्मृतेति** ॥ नन्वित्यस्येत्येवोच्यते नन्वित्यन्वयः । ननु

यदा पश्यः पश्यते रुग्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ।

इत्याथर्वणे पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगादिति भाष्योक्तदिशा प्राक्सत एव ज्ञानानन्दादिरूपसाम्यस्य मुक्तावविद्यानिवृत्तिरूपाभिव्यक्त्या यथा साम्यमुपैतीत्युक्तिः तद्वदस्तु ब्रह्माप्येति इत्युक्तिरित्यत आह ॥ **परममिति** ॥ **अप्राप्तभोगादेरिति** ॥ सम्पद्याविहाय स्वेन शब्दादित्यादिना चतुर्थे वक्ष्यमाणदिशा 'स तत्र पर्येति जक्षन्क्रीडन्रममाणः स्त्रीभिर्वा यानैर्वा' इत्युक्त्या वनितादि-विषयभोगस्य तदभिव्यक्तानन्दानुभवस्य च प्रागप्राप्तस्यैव प्राप्त्युक्तेरित्यर्थः । विवृतमेतज्जिज्ञासाधिकरणे ।

(भावदीपः)

अज्ञानां ज्ञानदो विष्णुर्ज्ञानिनां मोक्षदश्च सः ।
आनन्ददश्च मुक्तानाम् ।

इत्यत्र सुधायाम् । ननु चानन्दः स्वरूपमेव । स चाविद्यानिवृत्तौ स्वतः सिद्ध एव । अनुभवोऽप्येव-मेव । विषयत्वमप्यनुभवस्वरूपमेव न त्वागन्तुको धर्मः । अतो मोक्षदानात्कथं पृथगानन्ददानमिति । उच्यते । परमेश्वरशक्तिरेव जीवस्वरूपावरणं मुख्यं अविद्या तु निमित्तमात्रम् । ततोऽविद्यायां निवृत्तायामपि नाशेषानन्दाभिव्यक्तिर्यावदीश्वर एव स्वकीयां बन्धकशक्तिं ततो न व्यावर्तयति । अत एवानन्दह्रासवृद्धी वक्ष्येते इति । तथा च तदपेक्षया परमं साम्यमुपैतीत्युक्तिरिति भावः । मोहान्मृत्युस्संमतोऽयं कवीनाम् । प्रमादं वै मृत्युमहं ब्रवीमीति तत्वप्रदीपोक्तभारतवाक्या-त्प्रमादशब्दोऽज्ञानपर्याय इति भावेनोक्तमज्ञानमूलत्वेनेति ॥ १७ ॥

## अभिनवचन्द्रिका

भाष्ये (सू.१७) 'ते ये शत'मिति श्रुत्युदाहरणमानन्दतारतम्यविधायकश्रुत्युक्तदेवानामानन्दमयात् भेदज्ञापनाय । अदृश्येऽनात्म्य इत्यादिश्रुत्युदाहरणं प्रकृत्यादीनां सर्वेषां भेदज्ञापनाय । 'स य श्चाय'मिति श्रुत्युदाहरणं तु ब्रह्मादिजीवसमूहस्य भेदज्ञापनायेति भावेनाह– **ते ये शतमित्यादिना** ॥ अदृश्ये इति अनात्म्य इत्यादि श्रुतिगतपदव्याख्यानाय श्रुतिप्रतीकधारणमेतत्, न तु व्याख्येयप्रतीकमिति बोध्यम् । एतेन 'अदृश्य' इति प्रतीकमुपादाय तस्य व्याख्यानमकृत्वा अनात्म्यपदव्याख्यानमयुक्तमिति परास्तम् । **ब्रह्मादिजीवसमूह इति** ॥ यद्यपि ब्रह्मणः एतत्कल्पीयोत्कृष्टापकृष्टजीवसमूहेषु स्थितिरस्ति, तथापि अतीतानागतकल्पस्थितजीवेषु मुक्तेषु च स्थितिर्नास्तीति तद्व्यावृत्तिः । **भवेदेतदिति** ॥ आनन्दमयस्य ब्रह्मादिभेदाङ्गीकारे भवेदेतच्छ्रुतिविरोधः । 'तत्त्वमस्या'दि श्रुतेः ब्रह्मादिजीवानां परमात्माऽभेदो वाक्यार्थः स्यात्, न चैवं किं नाम ब्रह्माद्यन्तर्यामिरूपाणां परमात्माभेदो वाक्यार्थः, न च त्वमित्यादिनिर्देशायोगः 'नामानि सर्वाणी'ति श्रुत्या विष्णोरेव तत्त्वमस्यादिवेदान्तर्गतत्वमहमादिशब्दवाच्यत्वोक्तेः । त्वमहमादि-शब्दैः अन्तर्यामिग्रहणासम्भवरूपबाधकाभावादिति भावः । एतेन यदि 'नामानि सर्वाणी'ति श्रुत्या विष्णोः सर्वशब्दवाच्यत्वोक्तेः, तत्त्वमस्यादिश्रुतेः नाद्वैतार्थकत्वं तर्हि तत एव ज्योतिष्टोमादिवाक्यानां कर्मादिविधायकत्वं न स्यात् । ततश्च कर्मक्रमादिलोप इति परास्तम् । तत्त्वमस्यादिवाक्यानामपि अविरुद्धवाक्यार्थाङ्गीकारेण पदसमन्वयमङ्गीकृत्य वाक्यार्थे वैधुर्याऽनङ्गीकारात् । सन्तु चैताः श्रुतय

(अभिनवचन्द्रिका)

**इति ॥** तत्त्वमसीत्यादिश्रुतयो ब्रह्मादीनां परमात्माभेदपराः सन्तु, तथापि ब्रह्मादिजीवानां परमात्मना सह उक्तस्य भेदस्य न 'तत्त्वमसी'त्यादिश्रुतिविरोधः । ताभिरन्योन्याभावरूपभेदमङ्गीकृत्य सकलस्वामित्वरूपपारिभषिकसर्वतादात्म्यस्य प्रतिपादनादिति भावः । एवं **स्वामित्वेति ॥** अन्तर्यामितया अन्तर्यामित्वार्थतयेत्यर्थः । 'तत्त्वमसी'त्यादिश्रुत्युक्तं पारिभाषिकं जीवपरैक्यं स्वामित्वरूपं प्रागुक्तम्, इदानीं तु श्रुत्युक्तमैक्यमन्तर्यामित्वमित्युच्यत इति भेदः । **असर्वात्मकोऽपीति ॥** सर्वप्रतियोगिकभेदवानपि अन्तर्यामित्वरूपगौणतादात्म्यप्रतिपादनाय प्रवृत्त 'तत्त्वमसी'त्यादिश्रुत्या सर्वात्मकत्वेनाऽविद्वद्भिर्ज्ञायते । तथा अन्तर्याम्यऽपि अन्तर्यामित्वरूपगौणतादात्म्यवानपि 'तत्त्वमसी'त्यादिश्रुतितात्पर्याज्ञानात् अनन्तर्यामित्वेन जीवाभिन्नत्वेनाविद्वद्भिर्ज्ञायते । तथा देहान्तर्गतोपि रामकृष्णादिः अज्ञैः प्रत्यक्षेण बहिर्मात्रवृत्तित्वेन ज्ञायते । यद्यपि ज्ञानिभिः एक एवेति ज्ञायते तथापि विशेषवलात् स बहुधा ज्ञायत इत्यर्थः । 'असर्व' इति श्रुत्युदाहरणप्रयोजनमाह– **अनेनेति ॥** 'असर्व' इति श्रुत्युदाहरणेन असर्वस्य असर्वात्मकस्य परमात्मनः, 'तत्त्वमसी'त्यादौ सर्वत्वोक्तिः अन्तर्यामित्वादेव न वास्तावतादात्म्याभिप्रायेणेति भावः । **विशिष्टैक्येति ॥** एवं तत्त्वमसीत्यादिसर्वाद्वैतश्रुतीः त्रेधा व्याख्यायेदानीमेकमेवाद्वितीयमित्यादिश्रुतीः विशिष्टैक्यार्थतया व्याचष्ट इत्यर्थः । अनेनैकमेवाद्वितीयमित्यादिश्रुतेः सर्वोत्तमवस्त्वेकमेव द्वितीयं तु नास्तीत्यर्थः सूचितः । एतेन तत्त्वमसीत्यादिश्रुतीनां विशिष्टैक्यार्थपरतया योजनाऽसम्भवात् विशिष्टैक्यार्थपरतया च तां स्मृत्या व्याख्यातीति अयुक्तमिति परास्तम् । 'एकमेवाद्वितीय'मित्यादिश्रुतेरेव विशिष्टैक्यमर्थः, न तु 'तत्त्वमसी'त्यादिश्रुतीनां विशिष्टैक्यमर्थ इत्याशयात् । 'नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह' इति स्मृतेः अद्वैतश्रुतिव्याख्यानत्वाभावात् 'स्मृत्या व्याख्याती'ति अयुक्तमित्यत आह– **अत्रेति ॥** सत्यमस्मिन्नर्थे पुरुषैक्यमेव निराक्रियते तथापि 'बहूनां पुरुषाणां हि यथैका योनिरुच्यते । तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकम्' इत्युत्तरश्लोके एकमेवाद्वितीयमित्यादिश्रुतेः विशिष्टैक्यमर्थ इति भावेन विशिष्टैक्यमुच्यत इति स्मृतेः श्रुतिव्याख्यानत्वमुपपन्नमिति भावः । 'बहवः पुरुषा ब्रह्मन् उताहो एक एव तु' इति प्रश्ने सति 'नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह' इत्यनेन पुरुषैक्यं निराकृतम् । कथं तर्हि 'एकमेवाद्वितीय'मित्यादौ पुरुषैक्यव्यपदेश इत्यत उक्तम् – **बहूनामिति ॥** कारणत्वेन अभिमतानां पुरुषाणां सत्वेऽपि 'द्यावाभूमी जनयन्देव एक' इत्यादिश्रुतौ यथा विशिष्टकारणस्यैकत्वात् एकं कारणमित्युच्यते तथा 'एकमेवाद्वितीय'मित्यादिश्रुत्यर्थत्वेन तं विश्वं पूर्णगुणाधिकं पुरुषं आख्यास्यामीति स्मृत्यर्थः । **जीवपर एवेति ॥** जीवत्ववैशिष्ट्यपर एवेत्यर्थः । **ब्रह्मशब्दस्येति ॥** ब्रह्मशब्दस्य परब्रह्मत्वावच्छिन्ने मुख्यत्वात् असौ जीवत्वे नोपपद्यते । ततश्च

(अभिनवचन्द्रिका)

'ब्रह्मैव स'न्निति श्रुतेः जीवभावं अविहायैव ब्रह्माऽप्येति इत्यर्थो नोपपद्यत इति भावः । एतेन परब्रह्मैव सन्निति श्रुत्यर्थं वदतापि ब्रह्मशब्दस्य जीवपरत्वाङ्गीकारात् न जीवेऽसावुपपद्यत इत्ययुक्तं कथमन्यथा जीवपरैक्यं सिध्येदिति परास्तम् । **परब्रह्मणीति ॥** ब्रह्मत्वावच्छिन्ने मुख्योऽपि जीवत्वे उपपद्यत इत्यर्थः । **जीवस्येति ॥** 'ब्रह्मैव सन्नि'ति ब्रह्मशब्दो जीवस्य परब्रह्मत्वप्रतिपादक इत्यर्थस्वीकारे 'ब्रह्माप्येती'त्युत्तरग्रन्थविरोधात् आद्यब्रह्मशब्दो जीवपर एवेति भावः । **प्रमाणान्तरेति ॥** प्रमाणान्तरे जीवस्य न परब्रह्मत्वमिति विस्पष्टाभिधानेन तद्विरोधाच्च जीवपर एवेति भावः । ननु यथा विस्मरणदशायां कण्ठमणेरविद्यमानप्रायत्वात् स्मरणानन्तरं विस्मृतकण्ठमणिः पुमान् प्राप्तकण्ठमणिरहमित्येव व्यपदिशति तथा संसारदशायां विद्यमानमपि ब्रह्मत्वं अनुभवाभावेनाऽविद्यमानप्रायमिति साधनसंपूर्त्यनन्तरं ब्रह्मत्वानुभवो भविष्यतीति भावेन 'ब्रह्माप्येती'ति व्यपदेशो भविष्यतीत्यत आह– **ननु विस्मृतकण्ठमणिरिति ॥** नन्वित्यव्ययं यस्मादित्यर्थे । 'न तु प्राप्तकण्ठमणि'रित्यतः परं 'तस्मात् प्राप्तमणिरिति व्यपदेश-दृष्टान्तबलेन ब्रह्माप्येतीति व्यपदेशस्य मुख्यत्वसिद्धि'रिति शेषः । सत्यं विस्मृतकण्ठमणिः स्मरणानन्तरं प्राप्तकण्ठमणिरहमिति व्यपदिशति, तथापि न तद्व्यपदेशदृष्टान्तेन ब्रह्माप्येतीति व्यपदेशस्य मुख्यत्वसिद्धिः । प्राप्तकण्ठमणिरिति व्यपदेशस्य गौणत्वात् । यतो विस्मृतकण्ठमणिर्जनैः स्मृतकण्ठमणिरित्येवोच्यते न तु प्राप्तकण्ठमणिरिति । न च 'ब्रह्माप्येती' (बृ.६-४-६)ति व्यपदेशः तद्वद्गौणोऽङ्गीकर्तुं युक्तः अस्मदुक्तरीत्या मुख्यत्वे सम्भवति गौणत्वाङ्गीकारस्य अनुचितत्वादिति भावः । एतेन प्राप्तकण्ठमणिरहमिति व्यपदेशस्य अनुभवसिद्धत्वात् प्राप्तमणिरिति नोच्यत इत्यभिधानमयुक्तमिति परास्तम् । स्मृतकण्ठमणेः पुरुषस्य व्यवहारमङ्गीकृत्य लोकव्यवहारस्यैव निषेधात् । ननु मा भूत्प्राप्त-मणिरहमिति व्यपदेशस्य गौणत्वात् तद्दृष्टान्तेन 'ब्रह्माप्येती'ति व्यपदेशस्य मुख्यत्वसिद्धिः, 'परमं साम्यमुपैती'ति व्यपदेशदृष्टान्तेन भवेदेव मुख्यत्वसिद्धिः । 'परमं साम्यमुपैती'(मु.५.६)त्यत्र प्राप्तस्यैव साम्यस्य प्राप्त्युक्तेरित्यत आह– **परमं साम्यमुपैतीत्यादाविति ॥** अप्राप्तभोगादेरपीत्यपिशब्द एवार्थे । 'प्राप्त्युक्ते'रित्यनन्तरं 'नैतद्दृष्टान्तेनापि ब्रह्माप्येतीति व्यपदेशस्य मुख्यत्वसिद्धि'रिति शेषः । भवेदेतद्दृष्टान्तेन ब्रह्माप्येतीति व्यपदेशस्य मुख्यत्वसिद्धिः । यदि प्राप्तस्यैव साम्यस्य प्राप्तिरुच्यत इति स्यात् । न चैवं, किंनाम अप्राप्तभोगादेरेव प्राप्तिरुच्यते । संसारदशायामानन्दभोक्तृत्वेन भगवत्साम्यस्य प्राप्तत्वभावात् । अत एव श्रुतौ परमं साम्यमिति साम्यस्य परमत्वं मुक्तम् । एवं च दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यात् नैतद्दृष्टान्तेन प्राप्तस्यैव ब्रह्मत्वस्य प्राप्तिप्रतिपादक 'ब्रह्माप्येती'ति व्यपदेशस्य मुख्यत्वसिद्धिरिति भावः ।

## वाक्यार्थमुक्तावली

ॐ भेदव्यपदेशाच्च ॐ । यद्यपीदं सूत्रं सुधायामनुव्याख्याने च शङ्कापरिहारकतया व्याख्यातम् । तथापि चशब्दस्वारस्याय युक्त्यन्तरपरतयाऽत्र व्याख्यायत इति ज्ञेयम् । अत्र हेत्वन्तरेण ब्रह्मादीनामन्नमयत्वमिति क्वचित्पाठः । तदप्यानन्दमयत्वादेरुपलक्षणम् । अन्यथा टीकायां 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् इत्यानन्दमयस्यापरिमितानन्दत्वोक्ते-रित्ययुक्तेः । तस्य प्रकरणस्य मनोमयविषयत्वात् । अतः प्रकरणैक्याभिप्रायेण सङ्कल्प्योक्तिरिति ज्ञेयम् । अत एव सुधायां भेदव्यपदेशं व्याख्यायातो न जीवोऽन्नमयादिशब्दवाच्य इत्युक्तम् । केचित्तु ब्रह्मादीनामानन्दमयत्वमिति पाठमाश्रित्य तद्धेतुसूत्रवदिदमानन्दमयमात्रविषयमिति व्याचक्षते ॥ **रुद्रादिति** ॥ तस्मात्प्रजापतिर्मुक्तो रुद्रः प्रजननेशितेति तद्भाष्योक्तेरिति भावः ॥ एवं **नेन्द्रेति** ॥ स एको बृहस्पतेरानन्द इत्यादिना तेषामपि परिमितानन्दोक्तेरिति भावः । स्वामिरहित इति । न विद्यते आत्मा स्वामी यस्य सोऽनात्मा तद्धितः क्तस्यार्थक इति भावः । अनयैवाऽरुच्या पक्षान्तरमाह– **जैवगुणेति** ॥ आत्मनो जीवजातस्येमे सम्बन्धिन जैवगुणास्ते न सन्ति यस्येति सम्बन्धार्थे तद्धित इति भावः ॥ **अपराश्रय इति** ॥ न पर आश्रयो यस्येति द्विपदबहुव्रीहिः ॥ **अभयतयेति** ॥ चलन-रहितत्वेनेत्यर्थः । तेनाभयमिति क्रियाविशेषणमित्युक्तं भवति ॥ **स्वातन्त्र्येति** । स्वामिरहितत्वार्थ-कानात्म्यपदेन वाऽनिलयनपदेन वेत्यर्थः । स विष्णुस्सर्वजीवेषु नृषु देवेषु च स्थित इति तद्भाष्यं मनसि निधायानया श्रुत्या ब्रह्मादिसर्वजीवानामानन्दमयभेदसिद्धये श्रुतितात्पर्यमाह– **अपकृष्टेति** ॥ इत्याशय इत्यनेन भेदव्यपदेशादिति वाक्यं भाष्ये प्रतिवाक्यमन्वेति । नेतर इति वचनेन ब्रह्मादि-सज्जीवजातं, द्वितीयेन प्रकृत्यादि, तृतीयेन जीवजातं व्यावर्त्यमिति उक्तं बोध्यम् । इत्यादिभेद-व्यपदेशादिति भाष्ये आदिपदेन रसं ह्येवायं लब्ध्वाऽनन्दी भवतीति लब्धृलब्धव्यतया यदा ह्येवैष इत्युपासकोपास्यतया उपसङ्क्रामतीति प्राप्तृप्राप्यतया भीषाऽस्मादिति नियम्यनियामकतया भेदोपदेशा द्रष्टव्या इति सुधोक्ता विवक्षिताः ।

ननु सूत्रोक्तो भेदः किमानन्दमयचतुर्मुखादिरूपविशिष्टयोरुत चैतन्ययोः । नाद्यः । विशिष्टभेदस्य मिथ्यात्वेन स्वरूपाभेदाविरोधित्वात् । न द्वितीयोऽसिद्धे चैतन्याभेदस्य श्रुतिसिद्धत्वादित्यभिप्रेत्य शङ्कते– **नन्वस्त्विति** ॥ एतेनैतन्निरस्तं तत्वमसिवाक्यस्य चैतन्याभेदपरत्वस्य तैरङ्गीकृतत्वात् । ब्रह्मादीनां विशिष्टत्वात्कथं तदभेदे इदमुदाहियत इति । यद्यपि तद्गुणसारत्वादिति सूत्रकृतैवाद्वैतश्रुतयो व्याख्यायन्ते

(वाक्यार्थमुक्तावली)

तथाप्युत्तरसूत्रे दूष्यानुमानमूलश्रुत्यभावोपपादनाय तद्गुणसूत्रोपलक्षितमर्थान्तरमद्वैतश्रुतीनां भाष्यकृताऽत्र व्युत्पाद्यन्त इति ज्ञेयम् ॥ **सकलस्वामित्वेनेति** ॥ राजा राष्ट्रमित्यादाविवेति भावः ॥ **इदमिति** ॥ यतः कारणात्स्वमितरोऽपि भगवान् जगत्सृष्ट्यादिकर्ता तस्मादिदं विश्वं भगवानिवोच्यत इत्यर्थः । जगत्स्थानेत्यत्र जगतः स्थाननिरोधसम्भवाः यस्मादिति बहुव्रीहिः । यद्वा स्वयमितरोऽपि सन् भगवानिदं विश्वमिवोच्यते पुरुष एवेदं सर्वमित्यादाविति योजना । यतो जगत्स्थाननिरोधोत्पत्तिकर्तेति तात्पर्यानुसारेण योज्यम् । भगवानिवोच्यत इत्यस्यायमर्थः । सामानाधिकरणस्यैक्ये शक्तत्वेन यथा भगवदभिन्नं रामकृष्णादिकं रामो भगवानिति सामानाधिकरण्येनोच्यते । **तथेदमपि** विश्वं भगवदभिन्नमिव तत्साम्यकत्वेनोच्यत इति । तदुक्तं सत्तर्कदीपावल्याम् । इदं विश्वं परमात्मव्यतिरिक्तमपि परमात्माधीनत्वात्परमात्माभिन्नमिव वक्तुं शक्यमिति । असर्वस्सर्व इत्यपीति वाक्यस्यानन्वितत्वादध्याहारेण योजयति ॥ **एतदेवाहेति** ॥ असर्वः सर्व इति वक्ष्यमाणवाक्यमपि स्वामित्वेनैक्यव्यपदेश इत्येतमेवार्थमाह इत्यर्थः । तत्रात्मैवेति स्वामित्वस्य हेतुत्वोक्तेरिति भावः ॥ **अबोध इति** ॥ किं ज्ञानविरुद्धभावरूपमज्ञानमुच्यते उत ज्ञानाभावः । नोभयमपीत्याह– **अज्ञानस्येति । वेदगर्भ इति** । आद्यः स्थिरचराणां यो वेदगर्भः सहर्षिभिरिति पूर्ववाक्ये प्रकृतत्वादिति भावः । कर्तृत्वात्सगुणं ब्रह्म पुरुषं पुरुषर्षभम् । स सङ्गत्येत्युत्तरवाक्येनान्वयमाह ॥ **गुणपूर्णमिति** ॥ **प्रकारेणेति** ॥ एतेन वीतशोक इत्यत्रेतिशब्दः प्रकारवाचीति व्याख्यातं भवति । तदेतत्सत्यं यथा सुदीप्तात्पावकाद्विष्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः । तथाऽक्षराद्विविधाः सौम्य भावाः प्रजायन्ते तत्र चैवापियन्तीत्यादिनाऽथर्वणे महिमोक्तेरिति भावः । **श्रुतिस्मृतिभ्यामिति** ॥ आत्मैव सन्नित्यस्य स्वाम्येवेत्यर्थविवक्षया पूर्वमुपादानं भाष्ये । इदानींत्वन्तर्यामित्वार्थतयोदाहरणमिति भावः । आधस्ये यत इत्यस्य पराङित्वेत्यनेनान्वयमाह ॥ **बहिर्मात्रेति** ॥ वासुदेवः सर्वमित्यादौ असर्वोऽपि सर्वात्मकत्वेन प्रतीयत इत्यत्र हेतुत्वेनाभिप्रेतमन्तर्यामित्वमसिद्धम् । कृष्णस्य वासुदेवस्यानन्तर्यामित्वेन प्रतीतेरिति शङ्कापरिहारार्थमात्मैवेत्युक्तम् । नन्वस्मदादिदेहात्तस्य पराक्त्वेन कथमन्तर्यामित्वमित्यत उक्तं प्रत्यङिति । ननु बहिरपि तस्य विद्यमानत्वात्पराङ्त्वं कथमित्यतः टीकायां बहिर्मात्रेति मात्रपदम् । नन्वेकस्य भगवतः कथं सर्वान्तर्यामित्वमित्यत एक एव बहुधेयत इत्युक्तम् । सर्वशरीरगतत्वेन सर्वान्तर्यामित्वे सर्वस्वामित्वे अन्तर्बहिः पूर्णत्वे च पुरुषेश्वरब्रह्मश्रुतय एव प्रमाणमिति भावेनोक्तं स पुरुष इत्यादि भाष्ये । एकस्यैव बहुत्वं चैश्वर्ययोगकृतमिति भावेन वेश्वरपदम् । अनेनान्तर्यामित्वादिति । अहं मनुरभवमिति वामदेवोपदेशस्यान्तर्यामिपरत्ववदिहापि तदन्तर्गतमिति तत्वमसीत्यभेदवाक्यप्रवृत्तिर्भवतीत्यर्थः । अत्र

(वाक्यार्थमुक्तावली)

विशिष्टैक्यं न भवतीत्यस्योपयोगं वदन् मूले आदिपदोपात्तोतरश्लोकेन तदुक्तिं व्यनक्ति ॥ **अत्रेत्यादिना ॥** पुरुषाणं यथैका योनिर्विशिष्टं कारणमुच्यते श्रुत्यादौ तथा विशिष्टं तं पुरुषं वक्ष्यामीत्यर्थप्रतीतेरिति भावः ॥ **श्रुत्यर्थेति ॥** स्वामित्वादिरूपश्रुत्यर्थापरिज्ञानानिमित्तेन प्रातीतिकार्थस्य वेदतः प्राप्तेरित्यर्थः ॥ **ब्रह्मप्राप्तिविरोधादिति ॥** परब्रह्मीभूत एव ब्रह्माप्येतीत्यर्थो न युज्यते ब्रह्मीभूतस्य पुनरभिनवतया तत्प्राप्त्ययोगात् । प्राप्तृप्राप्तव्यभावस्य भेदव्याप्तत्वेन विरोधाच्चेति भावः । जीवस्य ब्रह्मीभाव एव प्रमाणान्तरविरोधश्चेत्याह ॥ **प्रमाणान्तरेति ॥**

ननु ब्रह्मीभूतस्य पुनर्ब्रह्मत्वप्राप्तिर्नाम तदनुसन्धानं च विहितम् । यथा कश्चिद्विस्मृतकण्ठमणिः पुनस्तदनुसन्धानाल्लब्धमणिरित्युच्यत इत्यत आह– **नन्विति ॥** इति नन्वित्यन्वयः । ज्ञानाभिप्राये जानातीत्येव निर्देशः स्यात्र प्राप्नोतीति निर्देश इति भावः ।

ननु तद्गुणसारत्वादिति वक्ष्यमाणन्यायेन साम्ये विद्यमानेऽपि परमं साम्यमुपैति इति पुनस्साम्य-प्राप्त्युक्तिरनुसन्धानविवक्षया चोपपूर्वकस्येणोऽपगत्यर्थस्य ज्ञानार्थकत्वाद्वा यथा भवद्भिर्घटनीयैव ब्रह्माप्ये-तीत्यत्रापि पूर्वस्येणो ज्ञानार्थत्वं किं न स्यादित्यत आह– **परममिति ॥ भोगादेरिति ॥** अत्र भोग-पदेन स्त्रीभिर्वा यानैर्वेत्युक्तवनितादिविषयभोगः । आदिपदेन निर्दुःखत्वलिङ्गध्वंसयोर्ग्रहणम् । इणो ज्ञानार्थत्वेऽपि ब्रह्माप्येतीत्युक्ते ब्रह्म जानातीत्यर्थलाभेऽपि ब्रह्मत्वमनुसन्धत इत्यर्थालाभाद्भाव-प्रधाननिर्देशस्यागतिकत्वादिति भावः ॥ **तदन्यथानुपपत्त्येति ॥** बन्धमिथ्यात्वेन ब्रह्मचैतन्याभेदेनैव जीवचैतन्यस्य संसारे मुक्तत्वस्य घटनीयत्वादिति भावः ।

## तत्त्वसुबोधिनी

स्पष्टत्वाददृश्य इत्येतदव्याख्याय अनात्म्य इत्येतत् व्याचष्टे ॥ **स्वामिरहित इति ॥** अनात्म्ये इत्यस्य स्वामिहीन इति व्याख्याने प्रत्ययस्य स्वार्थिकत्वं भवतीत्यर्थान्तरमाह ॥ **जैवेति ॥** वैकुण्ठादिनिलयनस्य सत्वात् कथमनिलयन इत्युक्तमत आह ॥ **अपराश्रय इति ॥** तथापि जीवराशिना आनन्दमयस्याभेदः किं न स्यादित्यत आह ॥ **स यश्चायमिति ॥** ननु श्रुतौ पुरुषे आदित्य इत्येव श्रवणात्कथमपकृष्टोत्कृष्टजीवेषु इत्युच्यत इत्यत आह ॥ **पुरुषादित्यपदोपलक्षितेष्विति ॥** तथा च स यश्चायमिति श्रुत्या पुरुषादित्ययोः एव आनन्दमयाद्भेदसिद्धिर्न सर्वजीवानामिति शङ्कानवकाशः इति द्रष्टव्यम् । भेदव्यपदेशाच्च इति सूत्रेणोक्तो भेदः किं आनन्दमयचतुर्मुखादिरूपविशिष्टयोः उत

(तत्त्वसुबोधिनी)

तच्चैतन्ययोः । नाद्यः । विशिष्टभेदस्य मिथ्यात्वेन स्वरूपाभेदाविरोधात् । न द्वितीयः असिद्धेः । चैतन्याभेदस्य श्रुतिसिद्धत्वादित्यभिप्रेत्य शङ्कते ॥ **नन्वस्त्विति** ॥ 'भगवानिदं विश्वमिवोच्यते' 'पुरुष एवेदं सर्वम्' इत्यादाविति योजना । जगत्स्थाननिरोधोत्पत्तिकर्तेति । अनेन जगतः स्थाननिरोधसम्भवा यस्मादिति बहुव्रीहिरित्युक्तं भवति । आद्यः स्थिरचरणां यो वेदगर्भः सहर्षिभिः इति पूर्ववाक्यानुसारेणोक्तं वेदगर्भ इति । ''कर्तृत्वात्सगुणं ब्रह्म पुरुषं पुरुषर्षभम् । स सङ्गत्य'' इत्युत्तरवाक्येनान्वयमाह ॥ **गुणपूर्णमिति** ॥ ईशं जीवादन्यमिति । एवं व्यत्यस्तान्वयप्रदर्शनेन जुष्टत्ववत् ईशत्वमपि जीवादन्यत्वे हेतुरिति सूचितं भवति । **इत्यादिश्रुत्या प्रागुक्तप्रकारेणेति** । अनेन महिमानमितीति इतिशब्दस्य प्रकारवाचिनः 'इति महिमानं' इति व्यत्यासेनान्वय उक्तो भवति । वीतशोक इत्यस्यार्थो मुक्त इति । बहिर्मात्रवृत्तित्वेन ज्ञायत इति । अनेन एकशब्दात् परस्य ईयते इत्यस्यात्रान्वय उक्तो भवति । अत एव क्रियासमुच्चयार्थं तथा एक एवेति तथाशब्दः प्रयुक्तः । अनेनान्तर्यामित्वादिति । तथा च सर्व इति श्रुतिवाक्यमेवं योजितं भवति । असर्वोऽपि सर्वात्मकत्वेन प्रतीयते इत्यत्र हेत्वाकाङ्क्षायाम् अन्तर्यामित्वं हेतुत्वेनाभिप्रेत्य सिद्धमन्तर्यामित्वम् अनन्तर्यामित्वेन प्रतीतेरिति शङ्कायां तत्परिहारार्थम् आत्मैवेत्युक्तम् । ननु अन्तर्यामित्वे प्रत्यक्त्वं स्यात् । न च तद्युज्यते । बहिर्मात्रवृत्तित्वेन प्रतीयमानत्वादित्याशङ्कायां प्रत्यगित्यभिहितम् । ननु देहान्तरित्युक्तरीत्याऽन्तर्बहिर्वर्तमानस्य हरेः यदेकत्वमुक्तं तन्न सम्भवति । भिन्नभिन्नस्थानादित्वेन तस्य भिन्नत्वादित्यत उक्तम् ॥ **एक इति** ॥ अन्यत्रादृष्टमेतत्सर्वं कथमित्यत उक्तम् ॥ **स पुरुष इत्यादीति** ॥ एवं सति असर्वात्मकस्य सर्वात्मकत्वोक्तौ कथमन्तर्यामित्वं हेतुर्न भवेदिति भावः । ननु नैतदिच्छन्ति इति वाक्ये अर्थादैक्यनिराकरणं प्रतीयते । नाद्वैतश्रुतिव्याख्यानम् । तत्कथमेवमवतारितम् इत्यत आह– **अत्रेति** । विवक्षितार्थप्रतिपादकस्यादिपदेनोपात्तत्वादित्यर्थः । तर्हि बहूनामित्येव उदाहर्तव्यं किमर्थमिदमुदाहृतमित्यत उक्तम् ॥ **पुरुषैक्यं निराकृत्येति** ॥ बहूनामिति विशिष्टैक्यमिति । तथा च गुणपूर्णसर्वकारणत्वादिविशिष्ट एक एवेति विशिष्टैक्यं तत्वमस्याद्यर्थः ॥ **श्रुत्यर्थेति** ॥ एतच्छ्रुत्यर्थापरिज्ञानेनाद्वैतप्राप्त्यभावे भेदव्यपदेशस्य एतच्छ्रुतिविरोधाभावात्तत्परिहारोऽनर्थकः स्यादिति भावः । ननु पूर्वम् अब्रह्मभूतेऽपि जीवे तदधीनत्वेन ब्रह्मशब्दप्रयोगः किं न स्यादित्यत आह । **अत्र ब्रह्मैवेति** ॥ **जीवस्येति** ॥ प्राप्तिकर्तृप्राप्ययोः भेदादिति भावः । ननु जीवस्य परब्रह्मत्वेऽपि न तत्प्राप्तिकथनं विरुद्धम् । पूर्वमज्ञातपरब्रह्मत्वो जीवः स्वस्य विद्यमानं परब्रह्मत्वं जानातीत्यभिप्रायेण प्राप्तिकथनोपपत्तेः । यथा कश्चिदज्ञातस्वस्थितकण्ठमणिः पूर्वमेव विद्यमानकण्ठमणिज्ञानात् लब्धकण्ठ-मणिरित्युच्यत इत्यत आह ॥ **ननु विस्मृतकण्ठमणिरिति** ॥ नन्वित्यस्य इत्येवोच्यते इत्यनेनान्वयः ।

(तत्त्वसुबोधिनी)
तथा च ज्ञानाभिप्राये ब्रह्म जानातीत्येव निर्देशः स्यात् न प्राप्नोतीति भावः । ननु परमं साम्यमुपैतीत्यत्र यथा प्रागपि विद्यमानस्य साम्यस्य प्राप्तिरुच्यते तथा अत्रापि प्रागेव विद्यमानस्य ब्रह्मत्वस्य प्राप्तिरुच्यतामित्यत आह । **परमं साम्यमुपैति इत्यादाविति** ।। न चैवमुपैतीत्यनेन प्राप्तसाम्यप्राप्तिकथनमयुक्तमिति वाच्यम् । साम्यमुपैतीत्यस्यावरणाभिभवमुपैतीत्यर्थत्वादिति भावः । अस्तु अस्वाभाविकत्वं ततः किमित्यत आह ।। **अस्वाभाविके चेति** ।।

## वाक्यार्थविवरणम्

भाष्ये न च तत्वमस्यहमित्याद्युद्ग्रन्थः सौत्रचशब्दाभिप्राय इत्याहुः ।। **विशिष्टैक्यार्थतयेति** ।। सर्वोत्तमत्वविशिष्टं वस्त्वेकमेवेत्यर्थतयेत्यर्थः ।। **बहूनामिति** ।।

'बहूनां पुरुषाणां हि यथैका योनिरुच्यते ।
तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकम्'

इति वाक्ये इत्यर्थः ।

## वाक्यार्थमञ्जरी

ॐ भेदव्यपदेशाच्च ॐ ।। ते ये शतं यतो वाच इत्यादिना परिमितापरिमितानन्दत्वादिरूपविरुद्धधर्मोक्त्या आनन्दमयादेर्विरिञ्चादेर्भेदाभिधानाच्च नानन्दमयश्चतुर्मुखादिरित्यर्थः ।। **ते ये शतमिति** ।। प्रजापतेः रुद्रस्य ते प्रसिद्धाः ये शतमानन्दाः तावान्ब्रह्मणश्चतुर्मुखस्यैक आनन्दः । तथाविधशतानन्दवत्त्वं तस्येत्यर्थः ।। **यतो वाच इति** ।। ब्रह्मणः आनन्दं यो जानाति स कदाचन न बिभेति स आनन्दः किम्प्रकारो ज्ञातव्य इत्याकाङ्क्षायां वागाद्यगोचरतया ज्ञातव्य इत्याशधनोक्तम् ।। **यत इति** ।। वाचो वाक्यानि मनसा सह अप्राप्य अपरिमितत्वात्साकल्येनाविषयीकृत्य आनन्दान्निवर्तन्त इति योजना ।। **एवमिति** ।। ते ये शतं देवानामानन्दाः । स एक इन्द्रस्यानन्दः । ते ये शतमिन्द्रस्यानन्दाः । स एको बृहस्पतेरानन्द इत्यानन्दत्वोक्तिरितिभावः । 'तेभ्यो दक्षश्चेन्द्रनामा स हीन्दुं रारयत्पुरा । तस्माद्बृहस्पतिर्नाम महेन्द्रत्वात्पुरन्दर' इति तैत्तिरीयभाष्योक्तेरत्रेन्द्रबृहस्पतिशब्दाभ्यां क्रमेण दक्षशचीपत्योर्ग्रहणम् । आत्मनः स्वामिनः अयं आत्म्यः स नेत्यनात्म्य इत्यस्य फलितोऽर्थः ।। **स्वामिरहित इति** ।। आत्मनो जीवस्येमे आत्म्याः जीवसम्बन्धिगुणाः ते न सन्ति यस्येति भावेनोक्तं

(वाक्यार्थमञ्जरी)
जैवगुणविधुर इति । प्रतिष्ठां पूजां विन्दते करोति । पुरुषपदोपलक्षितेष्वपकृष्टजीवेषु आदित्यपदोपलक्षितेषूत्कृष्टजीवेष्विति विवेकः । **सकलस्वामित्वेनेति** ॥ यदधीना यस्य सत्ता तत्तदेवेति भण्यत इत्युक्तेरिति भावः ॥ **इदमिति** ॥ भगवान्स्वयमितरोऽपि सन्निदं विश्वमिवोच्यते । पुरुष एवेदमित्यादावित्यर्थः ॥ **वेदगर्भ इति** ॥ आद्यः स्थिरचराणां यो वेदगर्भः सहर्षिभिरिति पूर्ववाक्यादिति भावः ॥ **आनन्दादीति** ॥

'कर्तृत्वात्सगुणं ब्रह्म पुरुषं पुरुषर्षभम् ।
स सङ्गत्य पुनःकाले कालेनेश्वरमूर्तिना ।
जाते गुणव्यतिकरे यथापूर्वं प्रजायत'

इत्युत्तरवाक्यादिति भावः ॥ **तदेतदिति** ॥ **तदेतत्सत्यम्** । मन्त्रेषु कर्माणि कवयो यान्यपश्यन्नित्यादिनोक्ताखिलकर्माराध्यत्वप्रकारेणेत्यर्थः ॥ **अन्तर्यामितयेति** ॥ त्वमित्यस्य त्वदन्तर्यामीत्यहमित्यस्य मदन्तर्यामीत्यर्थतयेत्यर्थः । असर्वोऽपि सर्वात्मकत्वेन प्रतीयत इत्यत्र हेत्वाकाङ्क्षायामन्तर्यामित्वं हेतुत्वेनाभिप्रेत्यासिद्धमन्तर्यामित्वेन प्रतीतेरित्याशङ्कायां तत्परिहारार्थमात्मैवेत्याद्युक्तमिति पूर्वत्रोत्तरत्रोक्तानां हेतुत्वादिति भावः ॥ **विशिष्टेति** ॥ विशिष्टमुत्तमं वस्त्वेकमेवेत्यर्थतयेत्यर्थः । इदमेकमेवेत्याद्यपेक्षया । तत्त्वमसीत्यादौ विशिष्टैक्याप्रतिपादनादिति ध्येयम् । अत्र विशिष्टैक्यं न प्रतीयत इत्यत आह ॥ **अत्रेति** ॥ विवक्षितार्थप्रतिपादकस्यादिपदेनोपात्तत्वादिति भावः । तर्हि बहूनामित्यत्रेवोदाहर्तव्यम् । किमनेनेत्यत उक्तम् । **पुरुषैक्यं निराकृत्येति** ॥ मोक्षधर्मे हि

'बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु ।
को ह्यत्र पुरुषश्रेष्ठस्तं भवान्वक्तुमर्हति'

इति जनमेजयेन पृष्टे वैशम्पायनेन 'नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्भव' इति पुरुषैक्यमतं निराकृतम् । कथं तर्ह्येकमेवाद्वितीयमित्यादौ पुरुषैक्यव्यपदेश इत्यत उक्तम् ।

बहूनां पुरुषाणां वै यथैका योनिरुच्यते ।
तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकम्'

इति कारणत्वेनाभिमतानां बहूनां सत्वेऽपि द्यावा भूमी जनयन् देव एक इति श्रुतौ यथा विशिष्टकारणस्यैकत्वादेकं कारणमित्युच्यते तथैक्यश्रुत्यर्थत्वेन तं विश्वं पूर्णं गुणाधिकं पुरुषमाख्या-

(वाक्यार्थमञ्जरी)

स्यामीत्यर्थः ॥ **तस्याप्रत्यक्षत्वेनेति** ॥ ईश्वरधर्मिकेश्वरप्रतियोगिकस्य चैक्यस्येश्वराप्रत्यक्षत्वेनाप्रत्यक्षत्वादित्यर्थः । अनुमानन्तु न स्वातन्त्र्येण प्रवर्तत इति भावः ॥ **श्रुत्यर्थेति** ॥ ऐक्यश्रुतेर्योऽर्थः स्वामित्वादिरूपः तदपरिज्ञानेनेत्यर्थः ॥ **प्राप्तिविरोधादिति** ॥ प्राप्तृप्राप्यत्वयोर्भेदव्याप्तत्वादिति भावः ॥ **प्रमाणान्तरेति** ॥ भेदश्रुतीत्यर्थः । ननु जीवस्य परब्रह्मत्वेऽपि न तत्प्राप्तिकथनं विरुद्धम् । पूर्वमज्ञातब्रह्मत्वो जीवः स्वस्य विद्यमानं ब्रह्मत्वं जानातीत्यभिप्रायेण प्राप्तिकथनोपपत्तेः यथा कश्चिद्विस्मृतस्वकण्ठस्थितमणिः पूर्वमेव विद्यमानकण्ठमणिज्ञानाल्लब्धकण्ठमणिरित्युच्यते इत्यत आह । **ननु विस्मृतकण्ठमणिरिति** ॥ इत्येवोच्यते नन्विति सम्बन्धः । तथा च ज्ञानाभिप्राये ब्रह्म जानातीत्येव निर्देशः स्यान्न प्राप्नोतीति भावः । ननु परमं साम्यमुपैतीत्यत्र यथा प्रागपि विद्यमानस्यैव साम्यस्य प्राप्तिरुच्यते तथा प्रागपि विद्यमानस्य ब्रह्मत्वस्य प्राप्तिरुच्यतामित्यत आह ॥ **परमं साम्यमुपैतीति** ॥ **विमुक्तश्चेति** ॥ प्राङ्मुक्त एव मुक्तो भवतीत्यर्थः ॥ **तदन्यथानुपपत्त्येति** ॥ जीवस्य परब्रह्मत्वे खलु अबद्धे तस्मिन्बन्धस्य मिथ्यात्वात्प्रागपि मुक्तव्यवहारः सम्भवतीति भावः ॥ **बन्धस्याज्ञानमूलत्वेनेति** ॥ अनादिबन्धस्याज्ञानाधीनत्वं चाद्वैतानामविद्याधीनजीवब्रह्मविभागवत्तार्किकानां च गुणवत्त्वाधीनद्रव्यत्ववदनादेरपीश्वराधीनत्वोपपत्तेरिति सुधोक्तरीत्या ध्येयम् ॥ **दर्शनादिति** ॥ जपाकुसुमसन्निधिवशात् स्फटिके प्रतीयमानस्यापि लौहित्यस्य तत्राविद्यमानत्वव्यवहारदर्शनादित्यर्थः ॥ **आहेति** ॥ तत्र बन्धस्यान्यथारूपमित्यस्वाभाविकत्वस्मरणादिति भावः ॥ **विमतानीति** ॥ यद्यप्यनेन जीवानामन्योन्याभेदः सिध्यति । न ब्रह्मैक्यं तथापि विशिष्टरूपस्यैक्यायोगेन शुद्धस्यैक्ये वाच्ये शुद्धस्यैव ब्रह्मत्वाद् ब्रह्मैक्यमपि सिद्ध्यतीति भावः ।

## विवृतिः

अत्रादिपदेन 'सर्वं वैतेऽन्नमाप्नुवन्ति येऽन्नं ब्रह्मोपासते सर्वमेव त आयुर्यन्ति ये प्राणं ब्रह्मोपासते आनन्दं ब्रह्मणो विद्वान् न बिभेति कदाचन, शरीरे पाप्मनो हित्वा सर्वान् कामान् समश्नुत' इति ॥ रसं ह्येवायं लब्ध्वाऽऽनन्दीभवति । अथ सोऽभयं गतो भवतीत्यादि तत्तत्प्रकरणगतान्नमयादिज्ञानान्मोक्षप्रतिपादकवाक्यानां ग्रहणम् ।

स्पष्टत्वाददृश्ये इत्येतदाख्याय अनात्म्य इत्येतद् व्याचष्टे ॥ **स्वामिरहितेति** ॥ अनात्म्य इत्यस्य स्वामिरहित इति व्याख्याने प्रत्ययस्य स्वार्थिकत्वं भवतीति अर्थान्तरमाह ॥ **जैवेति** ॥ वैकुण्ठादिनिलयनस्य सत्वात्कथमनिलयन इत्युक्तमित्यत आह ॥ **अपराश्रय इति** ॥ जीवराशिना आनन्दमयस्या-

(विवृतिः)

भेदः किं न स्यादित्यत आह ॥ **यश्चायमिति** ॥ तथा च यश्चायमिति श्रुत्या पुरुषादित्ययोरेवानन्दमया-द्भेदसिद्धिर्न सर्वजीवानामिति शङ्कानवकाश इति द्रष्टव्यम् ॥ भेदव्यपदेशाच्चेति सूत्रेणोक्तो भेदः किमानन्दमयचतुर्मुखादिरूपविशिष्टयोः उत एतच्चैतन्ययोः । नाद्यः । विशिष्टभेदस्य मिथ्यात्वेन स्वरूपभेदाविरोधित्वात् । **न द्वितीयः** । असिद्धेः । चैतन्याभेदस्य श्रुतिसिद्धत्वादित्यभिप्रेत्य शङ्कते ॥ **नन्वस्त्विति** ॥ ''आद्यः स्थिरचराणां यो वेदगर्भः सहर्षिभिः'' इति पूर्ववाक्यानुसारेणोक्तं वेदगर्भ इति । कर्तृत्वात्सगुणं ब्रह्मपुरुषं पुरुषर्भ । ससङ्गत्येत्युत्तरवाक्येनान्वयमाह ॥ **गुणपूर्णमिति** ॥ ईशं जीवादन्यमित्येवं व्यत्यस्यान्वयप्रदर्शनेन जुष्टत्ववदीशत्वमपि जीवादन्यत्वे हेतुरिति सूचितं भवति ॥ इत्यादि श्रुत्या प्रागुक्तप्रकरणेति ॥ अनेन महिमानमिति शब्दस्य प्रकारवाचिन इति महिमानमिति व्यत्यासेनान्वय उक्तो भवति । विशोक इत्यस्यार्थो मुक्त इति । **बहिर्मात्रवृत्तित्वेन ज्ञायत इति** ॥ अनेनैवशब्दात्परस्य ईयत इत्यस्यात्रान्वय उक्तो भवति । अत एव 'क्रियासमुच्चयार्थ' तथा एक एव इति तथाशब्दः प्रयुक्तः ॥ **अनेनेति** ॥ तथा च सर्व इति श्रुतिवाक्यमेवं योजितं भवति ॥ असर्वोऽपि सर्वात्मकत्वेन प्रतीयत इत्यत्र हेत्वाकांक्षायामन्तर्यामित्वं हेतुत्वेनाभिप्रेत्य, सिद्धमन्तर्यामित्वम् अनन्तर्यामित्वेन प्रतीतेरित्याशङ्कायां तत्परिहारार्थमात्मैवेत्युक्तम् ॥ नचान्तर्यामित्वे प्रत्यक्त्वं स्यात् न च तद्युज्यते बहिर्मात्रवृत्तित्वेन प्रतीयमानत्वादित्याशङ्कायां प्रत्यगित्यभिहितम् । ननु देहान्तरित्युक्त-रीत्याऽन्तर्बहिर्वर्तमानस्य हरेर्यदेकत्वमुक्तं तन्न सम्भवति । भिन्नभिन्नस्थानस्थत्वेन तस्य भिन्नत्वादित्यत उक्तम् ॥ **एक इति** ॥ अन्यत्राद्दष्टमेतत्सर्वं कथमित्यत उक्तम् ॥ **स पुरुष इत्यादीति** ॥ एवं सत्यसर्वात्मकस्य सर्वात्मकत्वोक्तौ कथमन्तर्यामित्वं हेतुर्नभवेदिति भावः । ननु नैतदिच्छन्तीति वाक्ये अर्थादैक्यनिराकरणं प्रतीयते । नाद्वैतश्रुतिव्याख्यानं, तत्कथमेवमवतारितमित्यत आह ॥ **अत्रेति** ॥ विवक्षितार्थप्रतिपादकस्यादिपदेनोपात्तत्वादित्यर्थः । तर्हि बहूनामित्येवोदाहर्तव्यं किमर्थमिदमुदाहृतमित्यत उक्तं **पुरुपैक्यं निराकृत्येति** ॥ **वहूनामिति विशिष्टैक्यमिति** ॥ तथा च गुणपूर्णत्व, सर्वकारण-त्वादिविशिष्ट एक एवेति विशिष्टैक्यं तत्वमस्यादिश्रुत्यर्थ इत्यर्थः ॥ **श्रुत्यर्थेति** ॥ एतत् श्रुत्यर्था-परिज्ञानेनाद्वैतप्राप्त्यभावे भेदव्यपदेशस्यैतत् श्रुतिविरोधाभावात्तत्परिहारोऽनर्थकः स्यादिति भावः ॥ ननु पूर्वमब्रह्मभूतेऽपि जीवे तदधीनत्वेन ब्रह्मशब्दप्रयोगः किं न स्यादित्यत आह ॥ **अत्र ब्रह्मैवेति** ॥ **जीवस्येति** ॥ प्राप्तिकर्तृप्राप्ययोर्भेदादिति भावः । ननु जीवस्य परब्रह्मत्वेऽपि न तत्प्राप्तिकथनं विरुद्धं, पूर्वमज्ञातब्रह्मत्वे जीवः स्वस्य विद्यमानं परब्रह्मत्वं जानातीत्यभिप्रायेण प्राप्तिकथनोपपत्तेः ॥ यथा कश्चित् स्वस्मिन्नज्ञातकण्ठमणिः पूर्वमेव विद्यमानकण्ठमणिज्ञानाल्लब्धकण्ठमणिरित्युच्यते इत्यत आह ॥

(विवृतिः) .

**विस्मृतकण्ठमणिरिति** ॥ नन्वित्यस्य इत्येवोच्यते नन्वित्यन्वयः । तथा च ज्ञानाभिप्राये ब्रह्म जानातीत्येव निर्देशः स्यात् न प्राप्नोतीति भावः ॥ ननु परमं साम्यमुपैतीत्यत्र यथाप्रागपि विद्यमानस्य साम्यस्य प्राप्तिरुच्यते तथात्रापि प्रागेव विद्यमानस्य ब्रह्मत्वस्य प्राप्तिरुच्यतामित्यत आह । **परमं साम्यमुपैतीत्यादाविति** ॥ न चैवमप्युपैतीत्यनेन प्राप्तस्वाम्यप्राप्तिकथनमयुक्तमिति वाच्यम् । साम्यमुपैतीत्यस्यावरणाभिभवमुपैतीत्यर्थत्वादिति भावः । अस्त्वस्वाभाविकत्वं ततः किमित्यत आह ॥ **अस्वाभाविके चेति** ॥

## सूत्रभाष्यम्

**न च तत्तदनुमानविरोधः ।**

**॥ ॐ कामाच्च नानुमानापेक्षा ॐ ॥ १८ ॥**

**यथाकामं ह्यनुमातुं शक्यते । अतो न तत्त्वे पृथगनुमानमपेक्ष्यते । उक्तं च स्कान्दे**

**'यथाकामाऽनुमा यस्मात्तस्मात्साऽनपगा श्रुतेः ।**
**पूर्वापराविरोधाय चेष्यते नान्यथा क्वचित्' इति ॥**

**'नैषा तर्केण मतिराऽऽपनेया' इति (कठ.उ. २-९) च ॥ १८ ॥**

## सत्तर्कदीपावली

विमतो भेदो मिथ्या भेदत्वाच्चन्द्रभेदवत् । जीव ईशेनाभिन्नश्चेतनत्वादीशवदित्याद्यनुमानं जीवेशभेद-विरोधीत्येतन्निषेधत्सूत्रमुपन्यस्य व्याचष्टे । **कामादित्यादिना** । जीवस्येशत्वमनुभवविरुद्धम् । ईशस्य जीवत्वं श्रुतिविरुद्धम् । एवं प्रत्यक्षादिप्रमाणविरोधान्नानुमानं जीवेशभेदं निषेद्धुं शक्नोति ।

प्रमाणविरुद्धानुमानस्य प्रामाण्ये अग्निरनुष्णः पदार्थत्वादित्येतदनुमानस्यापि प्रामाण्यं स्यात् । अतोऽतीन्द्रियार्थे श्रुत्यङ्गत्वेनैवानुमानमुपादेयम् । न श्रुतिमपहायेत्यर्थः ।

## तत्त्वप्रदीपिका

अथापि स्यात्, अनुमानाज्जीवेश्वराभेदः सेत्स्यति । तथाहि— जीवो ब्रह्म चेतनत्वाद् ब्रह्मवत्, अपि चाऽत्माऽद्वितीयः वोद्धृत्वायन्नैवं तन्नैवं यथा घटः, यद्वा विमतो भेदो मिथ्या भेदत्वाद्बिम्ब-

(तत्त्वप्रदीपिका)

**प्रतिविम्बभेदवदिति प्रमाणान्तरविरोधादागमो भेदं नोपदेष्टुमर्हति । अत्रोच्यते न च तत्तदनुमानविरोध इति । आभासत्वादीदृशानाम् । कामाच नानुमानापेक्षा । श्रुत्यननुसारे यथाकाममनुमातुं शक्यते । अतोऽत्र न श्रौते तत्त्वे श्रुतिनिरपेक्षमनुमानमपेक्ष्यते । निर्विशेषचेतनत्वादिहेत्वसिद्धेश्च । अनुमेयत्वे चाज्ञेयत्वप्रतिज्ञाहानिः । शब्देनैव लक्षणया तत्सिद्ध्यङ्गीकारात् । 'नैषा तर्केण मतिराऽपनेया प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ' इति । एषा ब्रह्ममतिः, तर्केण नापनेतुं शक्या, न च तर्केण प्रापणीया । 'अन्येन' अन्यत्वज्ञानिनैव प्रोक्ता सुज्ञानाय स्यात् ॥ इत्यानन्दमयाधिकरणम् ।**

## तत्त्वप्रकाशिका

ननु भेदोक्तेः श्रुत्यविरोधेऽपि 'विमतानि शरीराणि मद्भोगायतनानि शरीरत्वात्' इत्याद्यनुमानविरोधस्तु भविष्यतीत्यत आह ॥ **न चेति** ॥ तत्र हेत्वाकाङ्क्षायां सूत्रमुपन्यस्य व्याचष्टे ॥ **कामाच्चेति** ॥ किमद्वैतं श्रुत्याद्यनुकूलेनानुमानेन साध्यते पृथगनुमानेन वा । नाद्यः । अद्वैतश्रुत्यादेरभावस्योक्तत्वात् । न द्वितीयः । पृथगनुमानस्य कामगामित्वेनादृष्टार्थविषयेऽनपेक्षिततयोक्तबाधकत्वायोगादिति भावः । अत्रैव स्मृत्यादिसंमतिमाह ॥ **उक्तं चेति** ॥ श्रुतेरनपगा तदनुकूला । एषा परब्रह्मविषया मतिस्तर्केणाऽऽनेया आपाद्या अपनेया निराकार्या च न भवतीत्यर्थः ॥ १८ ॥

## भावबोधः

'विमतानि शरीराणि मद्भोगायतनानि यत् ।
शरीराणीत्यादिका तु'

इत्यनुव्याख्यानं मनसि निधाय भाष्यमवतारयति **विमतानीति** । शरीरत्वहेतोर्जीवानामन्योन्यमभेदसाधकत्वेऽपि विशिष्टरूपस्याभेदायोगेन शुद्धस्य शुद्धेनाभेदे वक्तव्ये शुद्धस्यैव ब्रह्मत्वाद् ब्रह्माभेदोऽपि सेत्स्यतीति भावः । अत्र सूत्रे भेदव्यपदेशस्य केवलानुमानविरोधो निराक्रियते । स चागमविरोधपरिहारस्याप्युपलक्षकः । अन्यथा 'आगमेन वा तदनुकूलानुमानेन वा जीवब्रह्माभेदसिद्धिः' इत्यस्योत्तराभावप्रसङ्गात् । अतो भाष्यकृता 'न च तत्वमसि अहं ब्रह्मास्मि इत्यादिविरोध' इत्यादिना पूर्वमागमविरोधः परिहृत इत्यवधेयम् ।

## भावदीपः

॥ ॐ कामाच्च नानुमानापेक्षा ॐ ॥ **श्रुत्यविरोधेऽपीति** ॥ प्रत्यक्षस्याप्रसक्त्या प्रत्यक्षाविरोध

(भावदीपः)

इत्यपि ध्येयम् ॥ **विमतानीति** ॥ यद्यप्यनेन जीवानामन्योन्यमैक्यं सिद्ध्यति न तु ब्रह्मैक्यं तथापि विशिष्टरूपस्यैक्यायोगेन शुद्धस्य शुद्धेनैक्ये वाच्ये शुद्धस्यैव ब्रह्मत्वाद् ब्रह्मैक्यं सेत्स्यतीति भावः । साक्षात्तदैक्यसाधकं तु विमता आत्मानः परमात्मनो न भिद्यन्ते आत्मत्वात्परमात्मवदित्यादिपदोपात्तं बोध्यम् । शरीरत्वोक्तिस्तु विमतानि शरीराणि मद्भोगायतनानि यदित्यनुभाष्योक्तत्वात् । अत एव तत्र सुधायामाक्षिप्येत्थं समाहितम् । आत्मत्वानुमानं चोक्तम् । भाष्ये तत्तदित्यस्य तत् तत्र भेदोक्तावद्वैतानुमानविरोध इत्यर्थः ॥ **उक्तत्वादिति** ॥ एतेनाद्वैतश्रुतीनामनेकधा सावकाशत्वोक्तेरुपयोगो दर्शितः । अत इत्यस्यार्थः पृथगनुमानस्य कामचारित्वेनेति । तच्च विवृतं जड आत्मैव वस्तुत्वादित्यादिनाऽनुभाष्ये । आपनेयेत्यत्र आ अपेति विच्छिद्यार्थमाह ॥ **आनेयेत्यादिना** ॥ असाधकत्वाद्बाधकत्वयोर्द्वयोरप्युक्तेः श्रुत्युक्तिः । स्पष्टत्वात्स्मृत्युक्तिः । भाष्ये पूर्वापराविरोधाय च । पूर्वापराविरोधायैवेत्यर्थः ॥ १८ ॥

## अभिनवचन्द्रिका

(सू.१८) विमतानि शरीराणीति ॥ नन्वेवं जीवानामेव परस्परमैक्यसिद्धिर्भवेत्, न परमेश्वरेणेति नैतदुदाहरणमिति चेत्, न – नैतदनुमानं साक्षादुपहितस्वरूपाणां प्रतिक्षेत्रक्षेत्रज्ञानामभेदं साधयति । प्रत्यक्षविरोधात् । किंनाम निरुपाधिकेन रूपेण अभेदं साधयति । तच्च निरुपाधिकं रूपं ब्रह्मैवेति न किंचिदत्र अनुपपन्नमिति । आदिशब्देन विमतात्मानः परमात्मनो न भिद्यन्ते आत्मत्वात्परमात्मवत् इत्यनुमानं ग्राह्यम् ।

## वाक्यार्थमुक्तावली

ॐ कामाच्च नानुमानापेक्षा ॐ । **विमतानीति** ॥ यद्यप्यनेन जीवानामन्योन्यमैक्यं सिद्ध्यति न तु ब्रह्मैक्यं तथापि विशिष्टैक्यायोगेन चैतन्यमात्रैक्ये साधनीये ब्रह्मैक्यमेव पर्यवस्यतीति भावः । आदिपदेन विमता आत्मानः परमात्मनः परमार्थतो न भिद्यन्ते आत्मत्वात्परमात्मवदित्यादीनां ग्रहणम् । कामाच्चेति सूत्रे चशब्दस्यैक्ये शुष्कानुमानापेक्षा न कार्या कामात् कामानुसारित्वादनुमानस्येति श्रुत्यभावसमुच्चये वा स्मृतिसूचनाय वा चशब्दः । अत एव भाष्ये न च तत्तदनुमानविरोधः । उक्तं चेत्युभयत्र चशब्दप्रयोगः । यथाकामेत्यस्यायमर्थः । श्रुतेरनपगाऽनुकूला साऽनुमा श्रुतेः । पूर्वापराविरोधायेष्यते । अन्यथा क्वचिदपि नेष्यते । कुतः यस्मात्साऽनुमा यथाकामा तस्मादिति ।

## तत्त्वसुबोधिनी

**विमतानीति** ॥ शरीरत्वहेतोः जीवानामन्योन्यमभेदसाधकत्वेऽपि विशिष्टरूपस्याभेदायोगेन शुद्धस्य शुद्धेनाभेदे वक्तव्ये शुद्धस्यैव ब्रह्मत्वात् ब्रह्माभेदोऽपि सेत्स्यतीति भावः । अनुमानस्य कामगामित्वे धूमेन वह्न्यनुमानं स्यादित्यत उक्तम् । **अदृष्टार्थनिर्णय इति** ॥

## वाक्यार्थमञ्जरी

ॐ कामाच्च नानुमानापेक्षा ॐ ॥ चोऽवधारणे । अदृष्टेऽर्थे शुष्कानुमानापेक्षा न कार्या कुतः कामात् कामचारित्वादेवेत्यर्थः ॥ **पृथगिति** ॥ केवलेत्यर्थः । **उक्तत्वादिति** ॥ अनेनैतदर्थमेव न च तत्त्वमसीत्याद्युद्ग्रन्थप्रदर्शनमिति सूचितम् । आ अपेत्युपसर्गद्वयमित्याशयेनाह ॥ **आनेयेति** ॥

## विवृतिः

**विमतानीति** ॥ शरीरत्वहेतोर्जीवानामन्योन्यमभेदसाधकत्वेऽपि विशिष्टरूपस्य भेदायोगेन शुद्धस्य शुद्धेनाभेदे वक्तव्ये शुद्धस्यैव ब्रह्मत्वात् ब्रह्माभेदोऽपि सेत्स्यतीति भावः । अनुमानस्य कामगामित्वे धूमेन वह्न्यनुमानं न स्यादित्यत उक्तम् **अदृष्टार्थ(विषय)निर्णय** इति ।

## सूत्रभाष्यम्

**॥ ॐ अस्मिन्नस्य च तद्योगं शास्ति ॐ ॥ १९ ॥**

**अस्य जीवस्य । युक्तिसमुच्चये चशब्दः । सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता' (तै.उ.२-१) । 'अनिलयनेऽभयं प्रतिष्ठां विन्दते' (तै.उ.२-७) । 'एतमानन्दमयमात्मान-मुपसङ्क्रामति' (तै.उ. २-८) इत्यादि ॥ १९ ॥**

## सत्तर्कदीपावली

इतोऽप्यखिलजीवादिभ्यो अन्य एवानन्दमयः परमात्मा विष्णुरत्र प्रतिपाद्यते सोऽश्नुत इत्यादिना । मुक्तौ जीवप्राप्यतया व्यपदेशादित्येतमर्थं प्रतिपादयत्सूत्रमुपन्यस्य व्याचष्टे अस्मिन्नित्यादिना । (१।१।६)

## तत्त्वप्रकाशिका

नन्वस्त्वेवमानन्दमयेन परब्रह्मणा हिरण्यगर्भादिजीवानां भेदः सोऽपि सांसारिको न पारमार्थिकोऽभिहितवाक्यानां सांसारिकभेदपरत्वेनोपपत्तेरित्याशङ्कां परिहर्तुं सूत्रं पठति ॥ **अस्मिन्निति** ॥ अस्येति नानन्दमयपरामर्शोऽपि तु नेतर इत्युक्तजीवस्यैवेत्याह ॥ **अस्येति** ॥ अस्यान्यस्य चेत्यन्यथाप्रतीतिनिरासायाह ॥ **युक्तीति** ॥ न केवलं भेदव्यपदेशादानन्दमयेन जीवानां भेदः किं नामास्मिन्प्रकरणेऽस्य जीवस्यानन्दमयेन सह मुक्तावपि सम्बन्धमेव श्रुतिः शास्ति । ततश्च तयोर्भेद एव न त्वैक्यम् । नापि सांसारिक एव भेदः । सम्बन्धस्य भेदसापेक्षत्वादित्यर्थः । किं तद्योगशासनमित्यत आह ॥ **सोऽश्नुत इति** ॥ इत्यादीत्यस्य शास्तीति सूत्रपदेनान्वयः । अथवा हेत्वन्तरेण देहादीनामन्नमयादित्वनिरासकमेतत्सूत्रम् । तदुक्तम् ।

> योगमन्नमयाद्यैर्यत्फलत्वेनास्य शंसति ।
> स्थानद्वयेऽप्यतः कोशा एत इत्यतिसाहसम्'

इति । तस्मात्सकलजीवादिभिन्नं परब्रह्मैवान्नमयादिपञ्चरूपमिति युक्ता तज्जिज्ञासेति सिद्धम् ॥ (१९, अ-६ ॥)

## गुर्पर्थदीपिका

पञ्चधा निगद्य योगस्य दृढीकरणात् श्रुतिश्शासनसदृशीति सूचयितुं शास्तीत्याह भगवान्सूत्रकारः ।

## भावबोधः

**इत्यादीत्यस्येति** । अनेनेत्यादि यथा भवति तथा शास्तीति वा इत्यादि इत्यविभक्तिको निर्देशः । एवञ्चेत्यादिना शास्तीति वा सूत्रभाष्यपदयोः सम्बन्ध उक्तो भवति । यद्वा इत्यादीति प्रथमान्तम् । तथा चेत्यादि श्रुतिवाक्यम् । कर्तृशास्तीति भाष्यपदयोः सूत्रपदेनान्वय इत्यर्थः । अत एव 'श्रुतिः शास्ति' इति प्रागुक्तम् ।

ननु 'अस्य जीवस्य' इत्यादिभाष्यस्य समुग्धत्वेऽपि 'योगमन्नमयाद्यैर्यत्' इत्यनुव्याख्यानेनान्नमयादीनां कोशरूपत्वनिराकरणार्थत्वेन स्पष्टमिदं सूत्रं व्याख्यातमिति, अथवेत्यादि द्वितीयमेव भाष्यव्याख्यानमस्तु । न प्राथमिकं व्याख्यानम् । मूले तज्ज्ञापकादर्शनादिति चेत्, न; तथात्वे 'एतमानन्दमयमात्मानमुपसङ्क्रामति' इत्येव वक्तव्यम् । न तु 'सोऽश्नुते' इत्यादिरपि । मान्त्रवर्णिकमेव चेति सूत्रोक्तप्रकारेण

(भावबोधः)

जीवस्यान्नमयादियोगप्रतिपादकत्वं सम्भवति । तथाप्यविप्रतिपन्नैतमानन्दमयमात्मानम् इत्येतदुदाहरणेनैव प्रतिपादनसम्भवे सोपपादनैतद्वाक्यस्योदाहरणस्य प्रयोजनं नास्ति । अत एवानुव्याख्याने 'स्थानद्वयेऽपि' इत्यनेन 'एवमन्नमयमात्मानमुपसङ्क्रामति । एतमानन्दमयमात्मानमुपसङ्क्रामति' इत्यत्र एतदेव विवक्षितमित्यभिप्रेत्य सुधायामिदमेव वाक्यमुदाहृतम् । तेन ज्ञायते 'सोऽश्नुते' इत्याद्युदाहरणं मुक्तौ जीवेश्वरयोः भेदसमर्थनार्थमिति । अत एव

समीपे सहभोगस्य मुक्तित्वेनोक्तितोऽसकृत् ।
भेदो जीवेशयोर्मिथ्येत्येव मिथ्या स्वयं भवेत् ॥

इत्यनुव्याख्याने भेदमिथ्यात्वनिरासाय सा श्रुतिरुदाहृतेति तद्वाक्यं सूत्रस्योक्तव्याख्यानान्तरपरत्वेन 'अथवा' इत्यादिना सुधायां व्याख्यातमिति भावः ।

अत्राद्ये, सूत्रेऽन्नमयादिपञ्चकस्य विष्णुत्वे साध्ये इयं ब्रह्मशब्दरूपहेतूक्तिः । द्वितीये, विकारार्थकमयट्प्रत्ययान्तान्नमयादिशब्दवाच्यत्वं कथं निर्विकारस्य विष्णोरित्याशङ्क्य मयटः प्राचुर्यार्थत्वोक्त्या तन्निरासः । तृतीये, आनन्दमयस्य विष्णुत्वे लोकचेष्टकत्वरूपहेतुव्यपदेशलक्षणहेतूक्तिः । ननु तस्य 'विकारशब्दात्' इत्येतदानन्तर्यं कथम् ? इत्थम् 'को ह्येव प्राण्यात्' इति हेतुव्यपदेशाकाशाख्यानन्दमयस्य पूर्णानन्दत्वे तत्संवादेनानन्दमयशब्दगतमयटः प्राचुर्यार्थत्वे सिद्धे तत्प्रायपठितान्नमयादिशब्दगतमयटामपि प्राचुर्यार्थत्वमङ्गीकार्यमिति पूर्वोक्तमयटः प्राचुर्यार्थत्वेऽपि एतत्सूत्रोक्तहेतुव्यपदेशस्य हेतुत्वात् । चतुर्थे, अन्नमयादिपञ्चकस्य विष्णुत्वेऽवयवत्वविरोधादिबाधकपरिहाराय मन्त्रवर्णसमाख्यारूपहेतूक्तिः । स्वपक्षसाधनानन्तरं परपक्षप्रतिक्षेप इति । पञ्चमे, प्रतिज्ञापूर्वकं मान्त्रवार्णिकसूत्रसिद्धान्नमयादिपञ्चकनिष्ठमोक्षजनकज्ञानविषयत्वरूपहेतूक्तिः । षष्ठे, तेषामेवानन्दमयत्वनिरासे तेषां ततो भेदरूपहेतूक्तिः ।

नन्वस्य 'नेतरोऽनुपपत्तेः' इत्येतदानन्तर्यं कथम् ? इत्थम्— विरिञ्चादीनाम् आनन्दमयत्वाभावे तेषां ततो भेदव्यपदेशस्य हेतुत्वकथनवत् पूर्वसूत्रोक्तमोक्षजनकज्ञानविषयत्वस्य जीवब्रह्मणोरभेदेन ब्रह्मस्वरूपाभेदस्य विरिञ्चादिजीवसमूहस्यापि सम्भव इत्याशङ्कानिरासहेतुत्वेन जीवब्रह्मणोर्भेदव्यपदेशस्य कथनात् । अत एव सुधायामुपनिषदर्थानवबोधादित्यादिना जीवब्रह्मणोरभेदेन स्वरूपापेक्षया मोक्षजनकज्ञानविषयत्वस्यापि सम्भव इत्याशङ्कानिरासहेतुत्वेनैतत्सूत्रोक्तभेदव्यपदेशो व्याख्यातः । सप्तमे, भेदव्यपदेशविरोधकाभेदसाधकानुमानस्याभासत्वोक्तिः । अनुपपत्तिभेदव्यपदेशाभ्यां पूर्वपक्ष्यभिप्रेतानां विरिञ्चादीनां

(भावबोधः)
सर्वेषामन्नमयादिपञ्चरूपकामगामित्वोक्त्याष्टमे अनुव्याख्यानोक्तरीत्यानुपपत्त्या दूषितस्यापि शरीरादिकोशा एवान्नमयादिशब्दवाच्या इति पक्षस्य विशेषदूषणाभिधानेन निराकरणम् । भाष्यदिशा तु भेदव्यपदेशस्यानुमानविरोधाभावेऽपि तस्य सांसारिकभेदपरत्वेन पारमार्थिकाभेदविरोधित्वाभावात्, विरिञ्चादीनामानन्दमयत्वनिरासे कथं स हेतुरित्याशङ्कापरिहारार्थं तद्भेदस्य पारमार्थिकत्वसिद्ध्यर्थं मोक्षेऽपि तदुक्तिरिति सूत्रक्रमः । इत्यानन्दमयाधिकरणम् ॥ ६ ॥

## भावदीपः

॥ ॐ अस्मिन्नस्य च तद्योगं शास्ति ॐ ॥ **अभिहितेति** ॥ ते ये शतमित्यादीनामित्यर्थः । चशब्दार्थव्यक्तिपूर्वं सूत्रार्थमाह ॥ **न केवलमिति** ॥ **श्रुतिरिति** । भाष्योक्तश्रुतिरित्यर्थः । श्रुत्यर्थस्तु स ब्रह्मवित् स्वयोग्यसर्वकामान् सर्वज्ञब्रह्मणा सह अश्नुत इति । अस्यैव ब्रह्मणः आनन्दमयत्वोक्तेरिति भावः । अनिलयन इति श्रुत्यर्थः प्रागुक्तः । एतमिति वाक्ये तु स एवंवित् अस्माल्लोकात्प्रेत्येति पूर्ववाक्योक्तस्त्यक्तदेहो ब्रह्मज्ञानी उपसङ्क्रमणकर्ता बोध्यः । एवमनिलयन इति एतमिति चानन्दमयमात्रा-साधारणश्रुत्यनुरोधेन सोऽश्नुत इत्यादिवाक्यमपि तन्मात्रपरमित्युपेत्य नेतर इत्यादिसूत्रान्वितत्वेकैकां व्याख्यां कृत्वाऽधुना मान्त्रवर्णिकसूत्रोक्तदिशा अन्नमयादिपञ्चकसाधारणं सोऽश्नुत इति वाक्यमनु-रुध्यानन्दमयमिति भाष्यमुपलक्षणम् । अन्नमयमात्मानमुपसङ्क्रामतीत्यादिपञ्चवाक्यान्यपि ग्राह्याणीति भावेनार्थान्तरं सोपष्टम्भकमाह ॥ **अथवेति** ॥ तदुक्तमिति ॥ अनुभाष्य इत्यर्थः ॥ **स्थानद्वय इति** ॥ ब्रह्मवल्ल्यां भृगुवल्ल्यां चेत्यर्थः । अन्नमयमुपसङ्क्रमेत्यादिरूपेण भृगुवल्ल्यामपि श्रवणादिति भावः ॥ **तस्मादिति** ॥ साधकभावाद्बाधकाभावात्प्रकृत्यादिपक्षे बाधकभावाच्चेत्यभ्यासादिसर्वसौत्रहेत्वर्थस्य भिन्नमिति नेतर इत्यादिसूत्रचतुष्टयप्रतिज्ञाभागार्थस्य परं ब्रह्मेत्यादि तु आद्यचतुर्थाष्टमानां प्रतिज्ञाभागार्थस्योपसंहारः । युक्ता तज्जिज्ञासेति फलोक्तिः । अत्र स्वपक्षस्थापने परपक्षनिरासे च आनन्दमयसाधारणयोस्तद्धेत्विति भेदेति च हेतुविशेषयोरुक्तिः आनन्दमयस्य पुच्छब्रह्मतया विशिष्याब्रह्मत्वशङ्कायां ब्रह्मत्वदार्ढ्याय यदत्र केनचिद्दूषणमुत्प्रेक्षितं तत्तु सम्यक्भाष्यटीकारीत्या एतदधिकरणार्थावमर्शिनां सुपरिहरमिति तत्र प्रपञ्च्यते ॥ १९ ॥ अ. ६ ॥

## अभिनवचन्द्रिका

तटस्थः शङ्कते – (१९.सू) **नन्वस्त्वेवमिति** ॥ एतेन पूर्वपक्षिणा आनन्दमयपुच्छस्य ब्रह्मत्वाङ्गी-

(अभिनवचन्द्रिका)
कारेण आनन्दमयस्य ब्रह्मत्वानङ्गीकारात् आनन्दमयेन परब्रह्मणेत्युक्तमयुक्तमिति परास्तम् । युक्ता **तज्जिज्ञासेति** ॥ अवयविनं विना अवयवमात्रस्य ज्ञेयत्वायोग इति बाधकस्य परिहृतत्वादिति भावः ।

**पूर्वपक्षस्तु–** आनन्दमयचतुर्मुखावभिन्नौ नामसाङ्कर्यात्, विद्यते खलु चतुर्मुखनिष्ठो ब्रह्मशब्दः । आनन्दमयमधिकृत्य 'अस्ति ब्रह्मेति चेद्वेदे' (तै.उ.२.६) ति ब्रह्मशब्दश्रवणात् आनन्दमय-समानार्थकशतानन्दनाम च हिरण्यगर्भे । ततो हिरण्यगर्भ एव आनन्दमयो नान्य इत्येकः पूर्वपक्षः । आनन्दमयो रुद्रः 'यश्चासावादित्य' (तै.उ.२.८) इत्यानन्दमयस्य सूर्ये प्रोक्तत्वात् सूर्यांतर्गतत्वस्य रुद्रलिङ्गत्वात् । उक्तं च 'सूर्यो जलं मही वह्निर्वायुराकाशमेव च । दीक्षितो ब्राह्मणः सोम इत्येतास्तनवः क्रमात्' इति । ततश्च रुद्र एव आनन्दमय इत्यन्यः । इन्द्र एव आनन्दमयः सूर्याधिष्ठातृत्वात् तस्य इन्द्रलिङ्गत्वादित्यपरः । बृहस्पतिरेव आनन्दमयः सूर्याधिष्ठातृत्वात् । तस्य च बृहस्पतिलिङ्गत्वादित्यन्यः । चित्प्रकृतिरेव आनन्दमया: 'सोऽकामयत बहुस्या'(तै.उ.२.६)मिति स्वाभिमन्यमानस्य बहुभावकामित्वात् । न च ब्रह्मशब्दो बाधकं 'मम योनिर्महद्ब्रह्मे'ति योनिशब्दाभिधेयचित्प्रकृतौ ब्रह्मशब्दश्रवणादित्यपरः । अचित्प्रकृतिरेव आनन्दमयः । न च 'सोऽकामयते' त्युक्तकामनाविरोधः । अभिमानिद्वारा कामनोपपत्तेरित्यन्यः । तत्तद्देहगतसर्वजीवा वा आनन्दमयः 'अन्नरसमयः प्राणमय' (तै.उ.२.९) इत्युक्तजीवप्रायपाठात् अन्नमयादीनामन्नादिविकाराभिमानित्वेन जीवत्वस्य वक्तव्यत्वात् । न च ब्रह्मशब्दो बाधकं 'ब्रह्माणि जीवाः सर्वेऽपी'ति जीवेऽपि ब्रह्मशब्दश्रवणादित्यपरः ।

**सिद्धान्तस्तु–** विष्णुरेव आनन्दमयः 'असन्नेव स सभवति, असद्ब्रह्मेति वेद चेत्, अस्ति ब्रह्मेति चेद्वेदे'(तै.उ.२)ति ब्रह्मशब्दाभ्यासात् । 'तदेव ब्रह्मे'(तल.उ.१.४)त्यादिश्रुतिस्मृतिषु ब्रह्म-शब्दस्य विष्णावेव परममुख्यत्वस्य उक्तत्वात् । (१३) ननु नायमानन्दमयो विष्णुः । मयट्शब्दस्य विकारार्थत्वात् विष्णोश्चाऽविकारित्वादिति चेत्, न द्व्यचश्छन्दसी'(पा.४.३१५)ति सूत्रेण छन्दसि द्व्यच एव मयटो विधानात् । आनन्दमयशब्दस्य च त्र्यच्त्वेन ततो विकारार्थकमयटोऽसम्भवात् । कस्तर्हि मयडर्थ इति चेत्, प्राचुर्य एवेति ब्रूमः । नात्र मयटः प्राचुर्यार्थकत्वं वक्तुं युक्तम्, अन्नादि-विकारार्थकान्नमयादिशब्दांतर्गतमयट्प्रायपाठात् इति चेत् न – अन्नमयादीनामपि ब्रह्मत्वेन तद्गतमयटो विकारार्थकत्वाभावात् । न च अन्नमयादिशब्दानामन्नादिप्राचुर्यार्थत्वे अल्पार्थता । ''अद्यतेऽति च भूतानि तस्मादन्नं तदुच्यते'' इति श्रुत्या सर्वभूतोपजीव्यत्वसर्वात्तृत्वयोरेवान्नमयशब्दार्थत्वात् । ननु ''ओषधीभ्योऽन्नम् ।'' ''अन्नात्पुरुष'' (तै.उ.२.२) इति देहमुक्त्वा ''स वा एष पुरुषोऽन्नरसमय

(अभिनवचन्द्रिका)

(तै.उ.२-१) इति देहपरामर्शात् अन्नादिविकारित्वमेवान्नमयशब्दार्थ इति चेत्, न – 'स वा एष पुरुष' इत्यत्र 'आत्मन आकाशः सम्भूत' (तै.उ.२-१) इत्युक्ताऽऽत्मपरामर्शाङ्गीकारात् । (१४) अपि च – आनन्दमये 'यदेष आकाश आनन्दो न स्या'(तै.उ.२-७)दिति जगच्चेष्टकत्वरूपविष्णुलिङ्गं व्यपदिश्यते । ततोऽप्ययं विष्णुरेव प्रतिपत्तव्यः । (१५) किं च – सत्यं ज्ञानमनन्तं ब्रह्म अन्नमयादि-शब्दपञ्चकेन गीयते, सत्यज्ञानादिशब्दानामन्नमयादिशब्दानां च, अर्थानुसन्धाने सति एकार्थत्वप्रतीतेः । न चानन्दमयशब्दस्य ब्रह्मत्वे ब्रह्मणः तत्पुच्छत्वोक्तिविरोधः । 'स शिरः स दक्षिणः पक्षः (तै.उ.२) इति श्रुत्या अवयविन एवावयवत्वोक्तेः सर्वथा नाऽऽनन्दमयादिर्विष्णोरितरः । (१६-१७) ब्रह्मविदाप्नोति परम्' (तै.उ.२.१) इत्यादौ आनन्दमयज्ञानेन मोक्षश्रवणात् 'ते ये शतं प्रजापतेरानन्दाः' (तै.उ.२-८) इत्यादिना चतुर्मुखादीनां परिमितानन्दोक्त्या अपरिमितानन्दमयाद्भेदस्य सूचितत्वाच्च नाऽऽनन्द-मयादिर्विष्णोरितरः । (१८) ननु न चतुर्मुखादीनामानन्दमयाद्विष्णोर्भेदः । तस्य 'विमतात्मानः परमात्मनस्तत्वतो न भिद्यन्ते आत्मत्वात्परमात्मव'दित्यनुमानविरुद्धत्वादिति चेत्, न – श्रुतिस्मृति-साहाय्यरहितानुमानस्य कामगामित्वेनाऽनिर्णायकत्वात् । (१९) किंचास्मिन्प्रकरणे अस्य जीवस्य 'सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिते'(तै.उ.२-१)ति श्रुतिः आनन्दमयेन योगं शास्ति । ततो मन्यामहे ब्रह्मादिजीवानामानन्दमयेन भेद इति । तस्मात्सकलजीवादिभिन्नं परं ब्रह्मैवेति युक्ता तज्जिज्ञासेति सिद्धम् । (अ.६)

## वाक्यार्थमुक्तावली

ॐ अस्मिन्नस्य च तद्योगं शास्ति ॐ ॥ **इत्यादीत्यस्येति** ॥ अनेन इत्यादि यथा भवति तथा शास्तीति वा यथेत्यविभक्तिको निर्देशः । एवं चेत्यादिना शास्तीति वा इत्यादिवाक्यं शास्तीति वा सूत्रभाष्यपदयोः सम्बन्ध उक्तो भवति । **देहादीनामिति** । अन्नमयादिकोशानामित्यर्थः । परिदृश्यमान-स्थूलाकारस्यैवान्नमयकोशत्वात् । अत एव तस्येदमेव शिर इत्यादिनिर्देशः ।

नन्वनुव्याख्यानानुसारेण सूत्रभाष्ययोः द्वितीयमेव व्याख्यानमस्तु । किमाद्यव्याख्यानेनेति चेन्न । तर्ह्येतमानन्दमयमित्यादिना पूर्वैः भाष्ये सोऽश्नुते इत्याद्युदाहरणवैयार्थ्यात्तस्य स्पष्टं मुक्तौ जीवानां ब्रह्मयोगसमर्पकतया प्रतिभासेन भेदपारमार्थिकत्वव्युत्पादकत्वप्रतीतेः । यद्यपि सोऽश्नुत इत्यादिकं मान्त्रवर्णिकमेव चेत्युक्तदिशा जीवस्यान्नमयादियोगप्रतिपादकं भवति । तथापि भाष्ये आदिपदोपात्ताना-

(वाक्यार्थमुक्तावली)
मेतमन्नमयमात्मानमुपसङ्क्रामतीत्यादीनां स्पष्टवाक्यानां विद्यमानत्वेन सोऽश्नुत इत्यादिवाक्यग्रहणेन पूर्वव्याख्यानसूचनादिति । अत्राद्येऽन्नमयादीनां ब्रह्मत्वे श्रुतिः । तृतीये लिङ्गम् । चतुर्थे समाख्येति श्रुतिलिङ्गसमाख्यानां प्राबल्यानुसारेण स्वपक्षसाधकसूत्रत्रयक्रमः । विकारसूत्रं तु स्वपक्षे बाधकोद्धारकं स्वपक्षसाधनान्ते भवितव्यम् । तथापि विलम्बमसहमानेन विषयान्तर्गतविकारार्थकमयट्प्रत्ययविरोधे शङ्किते निरवकाशब्रह्मश्रुत्या तस्य प्राचुर्यार्थतया सावकाशत्वं वक्तुमभ्यासादित्युक्त्यनन्तरमेव तत्सूत्रं प्रवृत्तम् । यद्वा तद्धेतुसूत्रस्य मयटः प्राचुर्यार्थत्वेऽपि हेतुरूपत्वेन तदुक्तिसौकर्याय विकारसूत्रस्य मध्ये निवेशः । परपक्षे बाधकोपन्यासाय शिष्टसूत्राणि । तत्र पञ्चमे विरिञ्चादीनां सर्वेषामन्नमयादित्वसाधनाय मान्त्रवर्णिकसूत्रेऽन्नमयादिविषयतयावगतं ब्रह्मविदाप्नोति परमिति वाक्यमवष्टभ्यान्नमयादीनां मोक्षसाधनीभूतज्ञानविषयत्वरूपहेतूक्तिः । षष्ठे ब्रह्मादीनां जगदीश्वराणां विष्ण्वैक्येन मोक्षार्थं ज्ञेयत्वमप्यविरुद्धमिति शङ्कां वारयितुं ब्रह्मरुद्रेन्द्रबृहस्पत्यादीनां विशिष्य तारतम्यं प्राप्तानाम् आनन्दमयत्वबाधनाय भेदव्यपदेशोक्तिः । सत्यभेदविरोधकाभेदानुमानाभासतोक्तिः । अष्टमे भेदव्यपदेशस्य मिथ्याभेदविषयतया पारमार्थिकाभेदपरानुमानानां प्राबल्यशङ्कावारणाय भेदपारमार्थिकत्वे हेतूक्तिरिति सूत्रक्रमः । आनन्दमयाधिकरणम् ।

## तत्त्वसुबोधिनी

**नापीति ।** मुक्तौ सम्बन्धशासनादेव भेदस्य सांसारिकत्वं नेत्यर्थः । अस्तु सम्बन्धशासनं तथापि भेदस्य सांसारिकत्वं कुतो नेत्यत आह । **सम्बन्धस्येति ।** अनेन इत्यादि यथा भवति तथा शास्तीति वा सूत्रभाष्ययोः सम्बन्धः उक्तो भवति । आद्यसूत्रे अन्नमयादिपञ्चकसाधारणब्रह्मशब्दरूपहेतूक्तिः । द्वितीये बाधकनिरासः । तृतीये आनन्दमयासाधारणहेतूक्तिः । चतुर्थे मन्त्रवर्णरूपसमाख्योक्तिः । पञ्चमे पञ्चकसाधारणमोक्षजनकज्ञानविषयत्वरूपहेतूक्तिः । षष्ठे भेदव्यपदेशरूपहेतूक्तिः । सप्तमे अनुमानस्याभासत्वोक्तिः । अष्टमे मोक्षे आनन्दमयेन विरिञ्चादीनां सम्बन्धशासनमिति सूत्रक्रमः ।

## वाक्यार्थमञ्जरी

ॐ अस्मिन्नस्य च तद्योगं शास्ति ॐ ॥ अस्मिन् प्रकरणे अस्य जीवस्य तेन आनन्दमयादिरूपेण ब्रह्मणा सह योगं सम्बन्धं मुक्तावपि सोऽश्नुत इति श्रुतिः शास्ति शंसति । यतोऽत ऐक्यायोगान्नानन्दमयादिरितर इत्यर्थः । भेद एवेत्यत्र हेतुमाह ॥ **सम्बन्धस्येति** ॥ **सोऽश्नुत इति** ॥ स ब्रह्मवित्

(वाक्यार्थमञ्जरी)

स्वयोग्यसर्वकामान् सर्वज्ञेन ब्रह्मणा सहैव भुङ्क्ते इत्यर्थः । भाष्ये युक्तिसमुच्चय इति सामान्येनोक्तत्वा-दाह ॥ **अथवेति** ॥ तत्कथमित्यत एतत्सूत्रव्याख्यानरूपानुव्याख्यानमुदाहरति ॥ **तदुक्तमिति** ॥ यद्यस्मात् अस्य स य एवंविदित्युक्तस्य ब्रह्मविदः फलत्वेनान्नमयादिभिर्योगं तत्प्राप्तिस्थानद्वये एतमन्नमयमात्मानमुपसङ्क्रामतीत्यादौ एतमन्नमयमात्मानपुसङ्क्रम्येत्यादौ चानुवाकद्वये शंसति कथयति श्रुतिरत एतेऽन्नमयादयः कोशा इति व्याख्यानमतिसाहसं पूर्वोत्तरापरामर्शमूलमित्यर्थः । आद्यव्याख्यानन्तु मुक्तेशभेदसमर्थनाय सोऽश्नुत इति श्रुत्युदाहरणात्तत्स्वारस्यानुरोधेनेति ॥ ६ ॥

## विवृतिः

**नापीति** ॥ मुक्तौ सम्बन्धशासनादेव भेदस्य सांसारिकत्वं नेत्यर्थः ॥ अस्तु सम्बन्धशासनं तथापि भेदस्य सांसारिकत्वं नेत्यर्थः ॥ कुतो नेत्यत आह ॥ **सम्बन्धस्येति** ॥ **इत्यादीत्यस्येति** ॥ अनेन इत्यादि यथा भवति तथा शास्तीति वा इत्यादीत्यविभक्तिको निर्देशः । एवं च इत्यादिना शास्तीति वा सूत्रभाष्ययोः सम्बन्ध उक्तो भवति । अत्राद्ये सूत्रेऽन्नमयादिपञ्चकसाधारणब्रह्मशब्द-रूपहेतूक्तिः । द्वितीये बाधकनिरासः । तृतीये आनन्दमयसाधारणहेतूक्तिः । चतुर्थे मन्त्रवर्ण-समाख्यारूपहेतूक्तिः । पञ्चमे पञ्चकसाधारणमोक्षजनकज्ञानविषयत्वरूपहेतूक्तिः । षष्ठे भेदव्यपदेश-रूपहेतूक्तिः । सप्तमे अनुमानस्याभासत्वोक्तिः । अष्टमे मोक्षे आनन्दमयेन विरिञ्चादीनां सम्बन्धशासनमिति सूत्रक्रमः ।

॥ इति आनन्दमयाधिकरणम् ॥

## ७. अन्तस्थत्वाधिकरणम्

**'अदृश्येऽनात्म्ये' इत्युक्तम् । तच्चादृश्यत्वम् 'अन्तःप्रविष्टं कर्तारमेतम् । अन्तश्चन्द्रमसि मनसा चरन्तम् । सहैव सन्तं न विजानन्ति देवा' (तै.आ.३-११) इत्यन्तःस्थस्य कस्य-चिदुच्यते । स च 'इन्द्रो राजा' (तै.आ.३-११-६) 'सप्त युञ्जन्ति' (तै.आ.३-११-८) इत्यादिभिरन्यः प्रतीयते । तस्मात्स एवानन्दमय इति न मन्तव्यम् ।**

**ॐ अन्तस्तद्धर्मोपदेशात् ॐ ॥ २० ॥**

(सूत्रभाष्यम्)

अन्तः श्रूयमाणो विष्णुरेव । 'अन्तस्समुद्रे मनसा चरन्तम् । ब्रह्मान्वविन्दद्दश-होतारमर्णे' (तै.आ.३-११-१) । 'समुद्रेऽन्तः कवयो विचक्षते मरीचीनां पदमिच्छन्ति वेधसः' (तै.आ.३-११-११) । 'यस्याण्डकोशं शुष्ममाहुः' (तै.आ. ३-११-४) इत्यादितद्धर्मोपदेशात् । स हि क्षीरसमुद्रशायी । तस्य च वीर्यमण्डकोशः ।

'सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः ।
अप एव ससर्जादौ तासु वीर्यमवासृजत् ॥
तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ।
यस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ॥
आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
अयनं तस्य ताः पूर्वं तेन नारायणः स्मृत' ॥ इति व्यासस्मृतौ ।

'अहं तत्तेजो रश्मीन्नारायणं पुरुषं जातमग्रतः । पुरुषात्प्रकृतिर्जगदण्डमि'ति चतुर्वेद-शिखायाम् ॥ २० ॥

## सत्तर्कदीपावली

गताधिकरणेनोत्तराधिकरणस्य सङ्गतिं तावदारभते । **अदृश्य इत्यादिना** । इदमाम्नायते ॥ अन्तः-प्रविष्टं कर्तारमेतमिति । अत्रान्तःस्थितस्य पुरुषस्यानन्दमयधर्मत्वेन तत्प्रकरणपठितमदृश्यत्वं श्रूयते सहैव सन्तं न विजानन्ति देवा इति । तेनैतद्विचारो गताधिकरणेन सङ्गतः । अत्र देवैरविज्ञायमानोऽन्तःप्रविष्टः कर्ता इन्द्रो वा सूर्यो वा अग्न्यादिर्वा भवेत् । अन्तःप्रविष्टस्य कर्तुः प्रकरणे इन्द्रो राजा जगतो य ईशे इतीन्द्रशब्दश्रवणात् । सप्त युञ्जन्ति रथमेकचक्रमिति सूर्यलिङ्गश्रवणात् । ब्रह्मेन्द्राग्न्यादिशब्दश्रवणात् । अतोऽर्थादानन्दमयोऽपि इन्द्राद्यन्यतम इति प्रतिक्षिपत्सूत्रमुपन्यस्यति अन्तरिति । व्याचष्टे । **अन्तः श्रूयमाण इत्यादिना** । अयमर्थः । अन्तःप्रविष्टं कर्तारमेतम् इत्येतद्वाक्योक्तो विष्णुरेव तत्प्रकरणवाक्येषु अन्तःसमुद्र इत्यादिविष्णुलिङ्गश्रवणात् । एतच्च विष्णोरेव लिङ्गमित्येतद्व्यासस्मृत्या दर्शयति ॥ **सोऽभिध्यायेति** ॥ एतदेव श्रुत्यन्तरेण द्रढयति ॥ **अहं तत्तेज इति** ॥ अहेयत्वादहंनामकं रश्मीनीरयति प्रेरयतीति रश्मीच्छब्दवाच्यम् । रश्मीनां मध्ये तपन्तमित्याद्युक्तं जलायनत्वान्नारायणनामकं तत्तेजोऽग्र आसीत् तस्मात्पुरुषशब्दाभिधेयात् प्रकृतिः जगदण्डं च जातमित्यर्थः । एतेनान्यसिद्धेन विष्णुलिङ्गेनेन्द्रादि-श्रुतिलिङ्गानामन्यथासिद्धानां बाधितत्वान्नेन्द्राद्यन्यतमोऽन्तरित्यादिवाक्ये शङ्कनीयः ।

## तत्त्वप्रदीपिका

एवं तावदानन्दमयादिशब्दसमन्वयप्रतिपादनमुखेन तैत्तिरीयशाखागतानां तद्रूपशाखान्तरगतानां च नामशब्दानां विष्णौ समन्वयो दर्शितः। तेषां तद्गतलिङ्गानां वा पुनः श्रुतिष्वितरशब्दादियोगेन वृत्तेस्संशयप्राप्तौ विशेषन्यायविवक्षयाऽधिकरणान्तराण्यारभ्यन्त इत्यत्र च सम्बन्धः प्रायस्समन्वयाधिकरणानां विद्यते। तं च क्वचित्क्वचिदाचार्यः स्पष्टं दर्शयति। यथेह अदृश्य इत्यादिना। अयमर्थः, 'अदृश्येऽनात्म्य' इत्यानन्दमयस्यादृश्यत्वमुक्तम्। तच्च अन्तःप्रविष्टस्य चन्द्रादिषु स्वेच्छया चरतः प्रतीयते न विजानन्तीति। स च 'इन्द्रो राजा जगतो य ईशे सप्तहोता सप्तधा विक्लृप्तः,' 'सप्त युञ्जन्ति,' 'ब्रह्मेन्द्रमग्निं जगतः प्रतिष्ठां दिव आत्मानं सवितारं बृहस्पतिम्' इत्यादिष्वन्योऽन्यः प्रतीयते। सप्तबुद्धीन्द्रियाणि विषयेषु जीवेन जुहोतीति 'सप्तहोता', विषयानिन्द्रियैर्जीवे वा। सप्तगणा रथं प्रत्यात्मानं युञ्जन्ति, रथे युक्ता इत्यर्थः। एकोऽश्वो वेदः सप्तच्छन्दोनामा। छन्दोभिमानिनां पृथक्त्वेऽपि वेदाभिमानी सप्तस्वेकोऽस्ति। मासचतुष्कैस्त्रिभिः 'त्रिनाभि'। 'अनर्व'मर्वभ्यो दूरस्थचक्रं मानसोत्तरगिरिशिखरवलयपरिवर्ति, अर्वन्तो मेरुमानसोत्तरमध्याकाशगाः। अन्तस्तद्धर्मोपदेशात्। 'अन्तः समुद्रे मनसा चरन्तं ब्रह्मान्वविन्दद्दशहोतारमर्णे' 'समुद्रेऽन्तः कवयो विचक्षते मरीचीनां पदमिच्छन्ति वेधसः'। कवयः सन्तो वेधसः, मरीचीनामाश्रयभूतं विचक्षणायेच्छन्ति। 'मरीचिर्मितरुक्त्वत' इति वचनान्मरीचिर्जीवः। 'यस्याण्डकोशं शुष्ममाहुः प्राणमुल्वं, तेन क्लृप्तोऽमृतेनाहमस्मि' इति विरिञ्चवाक्यम्। शुष्मं वीर्यम्, उल्वं जरायोरन्तःप्रावरणं, येन सहैव जायते। 'अहं तत्तेजो रश्मीन्नारायणं पुरुषं जानमग्रतः। पुरुषात्प्रकृतिर्जगदण्डं त्रिपुरुषं मायाबीजं जायत' इति। रश्मीनिन्दयतीति रश्मीत्, इन्द प्रेरण इति धातोः। रतिः शं च मितमस्येति रश्मिर्जीवः। अग्रतः पुरुषाज्जातं प्रकृतिर्जगच्च। जगदिति जीवसमुदाय उच्यते। ततः प्राप्तविशेषमित्यर्थः। पश्चादण्डं त्रिपुरुषयुक्तं प्रकृत्युपादानं जायते। ब्रह्मवायुरुद्रास्त्रयः पुरुषाः।

## तत्त्वप्रकाशिका

अत्र परमात्मन्यन्यत्र प्रसिद्धेन्द्रादिनामसमन्वयसिद्ध्यर्थमन्तःस्थत्वलिङ्गसमन्वयसमर्थनादस्ति शास्त्रादिसङ्गतिः। श्रुत्यधिकरणसङ्गती दर्शयति ॥ अदृश्य इति ॥ 'अदृश्येऽनात्म्येऽनिरुक्ते' इत्यानन्दमयस्य यददृश्यत्वमुक्तं तच्चान्तःप्रविष्टमिति वाक्ये कस्यचिदन्तःप्रविष्टस्य 'सहैव सन्तं न विजानन्ति देवा' इत्युच्यते। सोऽन्तस्थो निर्णेयो भवति। तस्य विष्णोरन्यत्वेऽदृश्यत्वं च तस्यैवेत्यानन्दमयस्यान्यत्वप्रसङ्गात्। सोऽन्तःस्थो विषयः। विष्णुरन्यो वेति सन्देहः। अदृश्यत्वलिङ्गमिन्द्रादिश्रुतिश्च प्राबल्याद्यविवेकेन सन्देहबीजमिति भावः।

(तत्त्वप्रकाशिका)

तत्र सयुक्तिकं पूर्वपक्षयति ॥ **स चेति** ॥ सोऽन्तःस्थोऽन्य इन्द्रादिः स्यात् । 'इन्द्रो राजा जगतो य ईशे' इतीन्द्रश्रुतेः । 'सप्त युञ्जन्ति रथमेकचक्रम्' इति सूर्यलिङ्गात् । 'अपां नेतारम्' इति वरुणलिङ्गात् । 'त्वष्टारं रूपाणि विकुर्वन्तम्' इति त्वष्टृश्रुतेः । 'ब्रह्मेन्द्रम्' इत्यादिश्रुतिलिङ्गेभ्यश्च । न चेन्द्रादिशब्दा अन्यत्र नेतुं शक्यन्ते । तेषां देवेष्वेव रूढत्वात्तेषामैश्वर्यादिशब्दप्रवृत्तिनिमित्तवत्त्वाच्च । न चादृश्यत्वलिङ्गेनान्तःस्थो विष्णुः । श्रुत्यादिभ्यो लिङ्गमात्रस्य दुर्बलत्वात् । अतोऽन्यपरश्रुत्यादिबलादन्तःस्थोऽन्य एवेत्यर्थः । पूर्वपक्षफलमाह ॥ **तस्मादिति** ॥ यतोऽन्तःस्थोऽन्यस्तत एवादृश्यत्वं चान्यस्य तस्माददृश्यत्वयुक्तानन्दमयोऽपि कश्चिदिन्द्राद्यन्यतमः । तथा चान्यावयवस्य ब्रह्मणो न पृथग्जिज्ञास्यतेत्यर्थः ।

सिद्धान्तयति ॥ **इतीति** ॥ तत्र हेत्वाकाङ्क्षायां सूत्रमुपन्यस्य व्याचष्टे ॥ **अन्तरिति** ॥ समुद्रेऽन्तरर्णे जले यथेष्टं चरन्तं दशेन्द्रियेषु विषयहोतारं ब्रह्मा व्यजानात् । मरीचीनां जीवानामाश्रयं वेधसो भूतभविष्यद्ब्रह्माण इच्छन्ति । ब्रह्माण्डकोशं यस्य वीर्यमाहुरिति समुद्रस्थत्वब्रह्माण्डवीर्यत्वादिविष्णुलिङ्गानामन्तःप्रविष्टनिष्ठतयोपदेशादन्तःप्रविष्टं कर्तारमित्यन्तःश्रूयमाणो विष्णुरेव । ततश्च तस्यैवादृश्यत्वमानन्दमयत्वं चेति नान्यस्य तन्मन्तव्यमित्यर्थः । अत्र समुद्रस्थत्वं नाम क्षीराब्धिशायित्वं प्रलयसमुद्रशायित्वं च विवक्षितम् । समुद्रस्थत्वादेर्विष्णुधर्मत्वं कुत इत्यत आह ॥ **स हीति** ॥ अस्तु विष्णोः क्षीरसमुद्रशायित्वं लिङ्गम् । प्रसिद्धत्वात् । प्रलयार्णवस्थत्वस्य ब्रह्माण्डवीर्यत्वस्य च कुतो विष्णुधर्मत्वमित्यत आह ॥ **स इति** ॥ तदहेयं रश्मिप्रेरकं पूर्णषड्गुणं नारायणाख्यं तेजः प्रलये स्थितं तस्मात्पुरुषात्प्रकृतिश्चेतना जगत् ब्रह्माण्डं च जातमित्यर्थः ॥ २० ॥

# गुर्वर्थदिपिका

रश्मीन्नयतीति रश्मीन् इति द्वितीयाया अलुक्समासमभिप्रेत्यार्थमाह रश्मिप्रेरकमिति । अन्यथा रश्मिन्निति प्रयोगः स्यात् ।

## भावबोधः

॥ ॐ अन्तस्तद्धर्मोपदेशात् ॐ ॥ इन्द्रादिनामसमन्वयसिद्ध्यर्थमिति । तेनान्तर्भावलक्षणपादसङ्गतिरप्यस्तीत्युक्तं भवति । **श्रुत्यधिकरणसङ्गती दर्शयतीति** । अव्यवहितपूर्वाधिकरणस्थ 'भेदव्यपदेशात्' इति सूत्रतदुक्तश्रुतिभ्यामित्यर्थः ॥

यद्वा ''..... देवानां तत्र शक्तताम् । आशङ्क्य तत्र रूढिश्च तच्छब्दानामपि स्वयम् ॥'' इत्यनुव्याख्यानरीत्या सन्त्वन्नमयादिशब्दा विष्णुपरास्तेषां गुणिसामान्यवाचिनामित्युक्तत्वेन गुणिविशेषे

(भावबोध:)

निरूढत्वाभावात् । इन्द्रादिशब्दास्तु पुरन्दरादिव्यक्तिविशेषे योगरूढिभ्यां प्रवर्तमानाः कथं विष्णुपरा इति पूर्वाधिकरणवैषम्येणात्र पूर्वपक्षोत्थानादनन्तरसङ्गतिरिति ज्ञातव्यम् ॥ विष्णुरन्यो वेति ॥ अत्रान्तःस्थत्वं किमिन्द्रादीनां सम्भवत्युत विष्णोरेवेति चिन्ता । तदर्थमुभयप्रापकश्रुतिलिङ्गानामन्तःस्थैक-निष्ठताप्रतीत्यन्यथानुपपत्त्याऽन्तस्थेन परस्परमभेदः उतेन्द्रस्यात्मेत्यादिभेदव्यपदेशाद्भेद इति । तदर्थमुभयप्रापकश्रुतिलिङ्गानां परस्परं साम्यमुत निरवकाशविष्णुलिङ्गेन सावकाशेन्द्रादिश्रुतिबाधः इति । तदर्थं श्रुतित्वादिजातिप्रयुक्तप्राबल्यं निरवकाशत्वप्रयुक्तप्राबल्यसममुत ततो दुर्बलमिति । अथवा अन्तस्थः किमिन्द्रादिरुत विष्णुरिति चिन्ता । तदर्थमिन्द्रादिश्रुत्यनुसारेण विष्णुलिङ्गं नेयमुत विष्णुलिङ्गानु-सारेणेन्द्रश्रुत्यादिकं नेयमिति । तदर्थं किं श्रुतिर्निरवकाशा लिङ्गं सावकाशमुत विपरीतम् ? लिङ्गस्य निरवकाशत्वेऽपि किं श्रुतित्वप्रयुक्तप्राबल्यं बलवत्, उत निरवकाशत्वप्रयुक्तप्राबल्यं बलवदिति । प्राबल्याद्यविवेकेनेति । 'श्रुतिर्लिङ्गम्' इति वाक्ये पूर्वं पूर्वं बलीयः स्यादित्युक्तश्रुतिलिङ्गगतजातिकृत-प्राबल्यदौर्बल्याविवेकेनेति वा नामानि सर्वाणीत्यादिना इन्द्रादिश्रुतीनां विष्णौ यत्सावकाशत्वलक्षणं दौर्बल्यम् 'अतर्क्यं तर्क्यमज्ञेयम्' इत्युक्तरीत्या 'विवक्षितगुणोपपत्तेः' इत्यादिवक्ष्यमाणरीत्या च यदद्दश्यत्वलिङ्गस्य विष्णोरन्यत्र निरवकाशत्वलक्षणं प्राबल्यं चोक्तं तयोरविवेकेनेत्यर्थः । 'इत्यादिभिः' इति भाष्यगतादिशब्दोपात्तमाह अपां नेतारमित्यादिना । ''न च–

'ब्रह्मेन्द्रमग्निं जगतः प्रतिष्ठां दिव आत्मानं सवितारं बृहस्पतिम् ।
चतुर्होतारं प्रदिशोऽनुक्लृप्तं वाचो वीर्यं तपसाऽन्वविन्दत्'

इत्यादिशब्दानामन्यविषयत्वम्'' इति न्यायविवरणं मनसि निधायाऽऽह ब्रह्मेन्द्रमिति । दिव आत्मत्वादिकं वायुलिङ्गमिति ज्ञातव्यम् । '... देवानां तत्र शक्तताम् । आशङ्क्य तत्र रूढिं च तच्छब्दानामपि स्वयम्' इत्यनुव्याख्यानं मनसि निधायाह । **तेषां देवेष्वेवेत्यादि** । तस्यार्थो यथेष्टमिति । ब्रह्माण्डवीर्यत्वादि इत्यादिपदेन न्यायविवरणोदाहृतश्रुत्युक्तब्रह्मतपोलभ्यत्वादिलिङ्गग्रहणम् । **अत्र समुद्रान्तस्थत्वं नामेति** । अत एवार्णवपदोपेततत्वेन विशिष्य प्रलयसमुद्रशायित्वप्रतिपादकवाक्यमुदा-हृतम् । सामान्यतः समुद्रस्थत्वप्रतिपादकस्य समुद्रेऽन्तरिति वाक्यस्याप्युदाहरणं भाष्ये कृतम् । तथा च 'स हि क्षीरसमुद्रशायी' इति प्रसिद्धयुक्तिः 'आपो नाराः' इति प्रलयसमुद्रशायित्वे प्रमाणोदाहरणञ्च युक्तमिति भावः । **प्रसिद्धत्वादिति** ॥ अनेन 'स हि' इति 'हि'शब्दार्थ उक्तो भवति । **प्रलये स्थितमिति** । अनेन 'जातमग्रतः' इत्येतद्व्याख्यातं भवति । **जातमित्यर्थ इति** । अनेन जातमित्येतदनुवर्त्य व्याख्यातं भवति ।

## भावदीपः

।। ॐ अन्तस्तद्धर्मोपदेशात् ॐ ।। परमात्मनीति समन्वयेति अन्यत्र प्रसिद्धेन्द्रादिनामेति चोक्त्या क्रमेण शास्त्राध्यायपादेष्वन्तर्भावः । सिद्ध्यर्थमित्युक्त्या फलत एव पादान्तर्भावः न साक्षात् । साक्षात्तु लिङ्गस्येति सूचितम् । लिङ्गसमन्वयोक्तेस्तु कृत्यमन्ते व्यक्तम् । सङ्गतिपरत्वेन तावद्भाष्यं विवरितुमुक्त-मित्यन्तस्यार्थमाह ।। **अदृश्य इति** ।। अनिरुक्त इत्यन्तोक्तिरदृश्यत्वमज्ञेयत्वं न त्वप्रत्यक्षत्वं अनिरुक्ते-र्ज्ञानाभावहेतुकत्वादिति द्योतनाय । अन्यथाऽसङ्गतेः । तच्चेत्यादेरुच्यत इत्यन्तस्यार्थमाह ।। **तच्चेति** ।। **इत्युच्यत इति** ।। देवा अपि न जानन्ति किम्वन्य इति कैमुत्येन सर्वाज्ञेयत्वरूपमदृश्यत्वमुच्यत इत्यर्थः । अदृश्यत्वं कात्स्न्र्येनाज्ञेयत्वम् । भाष्ये इति न मन्तव्यमित्यतःप्राक्प्रसज्यत इति संयोज्य तदन्तभाष्यस्य सङ्गत्यर्थतया तात्पर्यमाह ।। **तस्य विष्णोरिति** ।। **अन्यत्व इति** ।। स चेन्द्रो राजेत्यादिभाष्यवाक्योक्तेन्द्रादिश्रुत्या इन्द्रादित्व इत्यर्थः । प्रसङ्गादित्यस्य सोऽन्तस्थो निर्णेयो भवतीति पूर्वेण भाष्येऽध्याहृतसाध्येनान्वयः । तथा च पूर्वाधिकरणतद्विषयवाक्याभ्यामाक्षेपिकी सङ्गतिरे-तदधिकरणैतद्विषयवाक्ययोरिति भावः ।। **स इति** ।। अन्तःप्रविष्टमित्यादिश्रुत्युक्त इत्यर्थः । अन्यः प्रतीयत इति भाष्योक्तेराह ।। **अन्यो वेतीति** ।। **प्रावल्यादीति** ।। श्रुतिः प्रबला लिङ्गं दुर्बलमित्यविवेकेनेति वा । श्रुतेः श्रुतित्वेन लिङ्गस्य निरवकाशत्वेन प्रबलत्वात्किं तयोः प्रबलमित्यविवेकेनेति वाऽर्थः । स चेत्यारभ्य प्रतीयत इत्यन्तं भाष्यं पूर्वपक्षतद्युक्तिपरतयाऽपि व्याचष्टे ।। **सोऽन्तस्थोऽन्य इत्यादिना** ।। जगतो य ईशे ईष्टे स्वामीत्यर्थः ।। **सूर्येति** ।। सप्ताश्वत्वैकचक्ररथत्वरूपलिङ्गद्वयादित्यर्थः । भाष्यस्थादि-पदार्थमाह ।। **अपामिति** ।। अब्नेतृत्वलिङ्गादित्यर्थः । अस्य चैकत्वेऽपि अन्ते श्रवणात्परप्रावल्यन्यायेन विष्णुलिङ्गात्पूर्वस्मात्प्राबल्यमिति भावः । विष्णुलिङ्गेभ्य इन्द्रादिश्रुतिलिङ्गयोः प्राबल्याय वा अग्न्यादयोऽप्यत्र ग्राह्या इति भावेन वा न च ब्रह्मेन्द्रमग्निं जगतः प्रतिष्ठां दिव आत्मानं सवितारं बृहस्पतिम् । चतुर्होतारं प्रदिशोऽनुक्लृप्तं वाचो वीर्यं तपसाऽन्वविन्ददित्यादिशब्दानामन्यविषयत्वमिति न्यायविवरणमत्र योजयति ।। **ब्रह्मेन्द्रमिति** ।। तथा च इन्द्रश्रुतेर्जात्याऽभ्यासेन च सूर्यलिङ्गस्य च सवितृश्रुत्यनुगृहीतत्वेन प्रावल्यमिति भावः । एतेन ब्रह्मश्रुत्या विष्णुः किं नेति निरस्तम् । ब्रह्मा तपसाऽन्वविन्ददिति सुधोक्तदिशा वाक्यशेषस्य क्रियापेक्षितकर्त्रर्पकत्वेन प्रथमान्तपुल्लिङ्गत्वेन विरिञ्चिपरत्वादिति । उक्तश्रुत्यादेः सावकाशत्वेन दौर्बल्यनिरासाय

(भावदीपः)

देवानां तत्र शक्तताम् ।
आशङ्क्य तत्र रूढिं च तच्छब्दानामपि स्वयम् ।

इत्यनुभाष्यमात्रव्यावर्त्यशङ्कापूर्वं योजयति ॥ **न चेति** ॥ तत्र रूढिं च तच्छब्दानामित्यस्यार्थः देवेष्विति । देवानां तत्र शक्ततामित्यंशस्य तत्रैश्वर्यादिरूपशब्दप्रवृत्तिनिमित्तवत्तायां शक्ततामित्यर्थकस्य तात्पर्यं तेषामिति । भाष्ये स एवेत्यवधारणादन्य इत्यत्राप्यन्य एवेति संयोज्यमिति भावेन तदवधारण-व्यावर्त्यमाह ॥ **न चेति** ॥ **अदृश्यत्वेति** ॥ सिद्धान्तीयलिङ्गानामप्युपलक्षणम् । अतो लिङ्गमात्रस्येत्याह न त्वेकस्येति । एतेन तेषां बहुत्वेन प्राबल्यमिति निरस्तम् । श्रुतित्वरूपस्वभावप्राबल्यस्य बलवत्वादिति । तदप्याह श्रुत्यादिभ्य इति श्रुतिग्रहणेन ॥ **अत इति** ॥ निर्बाधरूढियोगसद्भावादन्यपरेत्यर्थः । पूर्वपक्षस्य नानाकोटित्वात्सन्देहादविशेषः स्यादित्यत उक्तम् ॥ **अन्य एवेति** ॥ इन्द्रादिप्रापकाणां बलाबलानिर्णयेनेन्द्र एवेत्याद्यनिर्णयेऽपीह विष्णोरन्य एव यः कश्चित्सर्वथा विष्णुर्नेति विष्ण्वन्यत्वेन निर्धारणसम्भवादिति भावः । अत एव संशयेऽप्यन्य इत्येवोक्तम् । एवमन्यत्राप्यनेककोटिकस्थले बोध्यम् । सङ्गतिपरतया तात्पर्यतो व्याख्यातमपि भाष्यशेषं पूर्वाक्षेपबीजं वदन्फलपरत्वेनापि व्याचष्टे ॥ **पूर्वपक्षेति** ॥ तदाक्षेपस्यापि किं फलमित्यतः पूर्वभाष्योक्तमाह ॥ **तथा चेति** ॥ श्रुत्यर्थोक्तिपूर्वं हेत्वर्थं व्यञ्जयन्व्यवहितत्वाद्भाष्ये हेतुसाध्यान्वयमाह ॥ **समुद्र इति** ॥ वीर्यत्वादीत्यादिपदेन ब्रह्मज्ञेयत्वब्रह्मतपोलभ्यत्वादेर्ग्रहः । तद्धर्मेत्यत्र तदिति तन्त्रं षष्ठ्यन्तं सप्तम्यन्ते चेत्युपेत्यार्थमाह ॥ **विष्णुलिङ्गानामन्तःप्रविष्टनिष्ठतयेति** ॥ समन्वय-सूत्रात्तत्त्विति पदं साध्यार्पकं सत् अध्यायसमाप्ति प्रतिनयमनुवर्तत इति भावेन विष्णुरेवेत्युक्तिः । एवमग्रेऽपि ज्ञेयम् । वक्ष्यमाणभाष्यानुगुण्यादाह ॥ **अत्रेति** ॥ हिशब्दार्थमनुवदति ॥ **प्रसिद्धत्वादिति** ॥ **प्रलयेति** । अपो नारा इत्यत्र तत्प्रतीतेरिति भावः । स्मृतिः निगदव्याख्येति श्रुतिमेव व्याचष्टे ॥ **तदिति** ॥ अहमित्यस्यार्थोऽहेयमिति । नञुपपदादोहाक्त्याग इति धातोः कर्मणि डप्रत्यये अहमिति रूपमिति भावः ॥ **रश्मिप्रेरकमिति** ॥ रश्मीनिन्धयति दीपयतीति रश्मीत् । अग्नीदितिवत् रश्मिप्रेरकमिति यावत् । पुरुषपदार्थः पूर्णेति । जातमग्रत इत्यस्यार्थः प्रलये स्थितमिति । जातमिति पूर्वस्मादनुवृत्तमिति भावः । उत्पन्नमित्यर्थः । एतेन श्रुतिसन्देहे अनन्यथासिद्धलिङ्गेन निर्णयोपपत्तेरिति न्यायविवणोक्त-मनन्यथासिद्धत्वमुपपादितं ज्ञेयम् ॥ २० ॥

## अभिनवचन्द्रिका

**अस्ति शास्त्रादिसङ्गतिरिति** ॥ अस्याधिकरणस्य शास्त्राध्याययोरन्तर्भावः, पादेन त्वौपोद्घातिकी

(अभिनवचन्द्रिका)

सङ्गतिः । एतदधिकरणस्य लिङ्गसमन्वयद्वारा अन्यत्रप्रसिद्धेन्द्रादिनामसमन्वयसिध्युपयोगित्वादिति भावः । एतेन अस्याधिकरणस्य पादसङ्गतिर्नास्तीति भाष्यकृतैवोक्तत्वात् पादसङ्गतिसूचकस्य 'इन्द्रादिनामसमन्वयसिध्यर्थ'मिति विशेषणस्य वैयर्थ्यमिति परास्तम् । भाष्यकारोक्तांऽतर्भावलक्षणसङ्गत्यभावमङ्गीकृत्य सङ्गत्यन्तरसूचनाय विशेषणस्य प्रयुक्तत्वात् । इत्युच्यत इति ॥ अनेन आनन्दमयाधिकरणतद्विषयवाक्योक्तस्यानन्दमयस्यैतदधिकरणोक्तान्तस्थस्य चाऽदृश्यत्वरूपैकधर्माक्रान्तत्वमेवाऽस्याधिकरणस्य पूर्वाधिकरणतद्विषयवाक्याभ्यां सङ्गतिरुक्तेति ज्ञातव्यम् । एवमुत्तरत्रापि द्रष्टव्यम् । एतेन अदृश्यत्वमन्तस्थस्योच्यते इत्युक्त्या सङ्गतिविशेषस्यानिरूपणात् श्रुत्यधिकरणसङ्गती दर्शयतीत्ययुक्तमिति परास्तम् । अस्तु सङ्गतिः तथापि नेदमधिकरणमारम्भणीयम् । अन्तस्थो विष्णुरिति निर्णयस्याऽनावश्यकत्वात् इत्यत आह– **तस्येति** ॥ अन्तस्थस्य विष्णोरन्यत्वे अन्तस्थवाक्योक्तमदृश्यत्वं च तस्यैव स्यात् । ततश्च अदृश्यत्वेनोक्तानन्दमयस्य प्रत्यभिज्ञानात् विष्ण्वन्यत्वप्रसङ्गः स्यादित्यर्थः । एतेन तस्य विष्णोरन्यत्वे अदृश्यत्वं च अन्यस्यैवेत्ययुक्तं, घटपटयोरदृश्यत्ववत् अन्तस्थानन्दमययोरुभयोरपि अदृश्यत्वसम्भवात् । अत एव आनन्दमयस्याप्यन्यत्वप्रसङ्गादित्ययुक्तमिति परास्तम् । अन्तस्थवाक्योक्तमदृश्यत्वमन्यस्यैवेत्याशयात् । आनन्दमयस्याऽन्यत्वं तु प्रत्यभिज्ञावशेन । प्रत्यभिज्ञायाः तादात्म्यसाधकत्वमित्यङ्गीकारात् । पूर्वाधिकरणोक्तब्रह्मशब्दाभ्यासादेः प्रत्यभिज्ञातो दुर्बलत्वशङ्काप्रतिरुद्धत्वेन अबाधकत्वात् । **विष्णोरन्यो वेतीति** ॥ अन्यो वेत्यनेन इन्द्रो वा, सूर्यो वा, वरुणो वा, त्वष्टा वा, अग्निर्वा, बृहस्पतिर्वेति कोटीनां ग्रहणम् । अन्यः प्रतीयते इति भाष्ये अन्तस्थ इन्द्रः, अन्तस्थः सूर्यः, अन्तस्थो वरुणः, अन्तस्थस्त्वष्टा, अन्तस्थोऽग्निः, अन्तस्थो बृहस्पतिः इति पूर्वपक्षाः प्रतिज्ञाता इत्यभिप्रायेण अन्यशब्दं व्याचष्टे – **अन्य इन्द्रादिरिति** ॥ आद्यपूर्वपक्षे हेतुरिन्द्रेति । एतेन इन्द्रश्रुतेरित्यस्य इन्द्रादिः स्यादित्यनेन अनन्वय इति परास्तम् । इन्द्रश्रुतेरित्यस्य इन्द्रादिः स्यादिति प्रतिज्ञवाक्यं इन्द्रः स्यादिति रूपेण विभज्य अङ्गीकारात् । एवमुत्तरत्रापि द्रष्टव्यम् । द्वितीय आह– **सप्तेति** ॥ तृतीय आह– **अपामिति** ॥ चतुर्थे त्वाह– **त्वष्टेति** ॥ 'ब्रह्मेन्द्रमग्निं जगतः प्रतिष्टां दिव आत्मानं सवितारं बृहस्पतिम्, चतुर्होतारं प्रदिशोनुक्लृप्तं वाचो वीर्यं तपसा अन्वविन्द'(तै.आ.)-दित्यादिशब्दानामन्यविषयत्वमिति न्यायविवरणानुसारेण अग्निरेव अन्तस्थ इति पूर्वपक्षे अग्निश्रुतिः जगत्प्रतिष्ठापकत्वं न लिङ्गं साधकम् । बृहस्पतिरेव अन्तस्थ इति पूर्वपक्षे तु बृहस्पतिश्रुतिः, वाग्वीर्यत्वं च, लिङ्गं साधकम् । इन्द्र एवांतस्थ इति प्रागुक्तपूर्वपक्षे सवितृश्रुतिः 'दिव आत्मान' मित्युक्तदिवस्पतित्वं च साधकमित्यभिप्रेत्याह– **ब्रह्मेन्द्रमिति** ॥ अत्रापि इन्द्रादिः स्यादिति प्रतिज्ञावाक्यं

(अभिनवचन्द्रिका)

बुद्ध्या विभज्य इत्यादिश्रुतिलिङ्गेभ्यश्चेति हेतुवाक्यमपि विभज्य यथासम्भवमन्वयो द्रष्टव्यः । प्रागुक्तपूर्वपक्षे हेत्वन्तराभिधायकत्वाच्चशब्दः । एतेन – 'ब्रह्मेन्द्रमग्नि'मित्यादिश्रुतिलिङ्गेभ्यश्च इन्द्रादिः स्यादित्ययुक्तम् । एकस्य अनेकतादात्म्यायोगेन अन्तस्थस्य इन्द्रत्वे सूर्यादित्वस्य, सूर्यादित्वे तु इन्द्रादित्वस्य च अयोगादिति परास्तम् । न केवलमिन्द्रादिशब्दानामिन्द्रादौ रूढिः अपि तु योगोऽप्यस्ति इत्याह– **केषामिति** ॥ **पूर्वपक्षफलमाहेति** ॥ सर्वेषां पूर्वपक्षाणां फलमाहेत्यर्थः । **तस्मादिति** ॥ यस्माददृश्यत्वमन्यस्य प्राप्तं, तस्मादेव आनन्दमयत्वं प्राप्नोति प्रत्यभिज्ञानादेवेत्यर्थः । एतेन इन्द्रादीनामदृश्यत्वेऽपि आनन्दमयस्य नेन्द्रादित्वं साधकाभावात् । न हि घट इत्येतावता पार्थिवत्वेनोक्ताः पटादयोऽपि घटा भवन्ति । येनेन्द्रादीनामदृश्यत्वे अदृश्यत्वेनोक्तानन्दमयस्य इन्द्रादित्वं स्यादिति परास्तम् । प्रत्यभिज्ञाप्रत्यक्षस्य साधकत्वेनेहाभिमतत्वात् । 'अन्तः समुद्रे मनसा चरन्त'मिति श्रुत्युदाहरणेनैव समुद्रस्थत्वलिङ्गलाभात्, 'समुद्रे अन्तः कवयो विचक्षते' इति श्रुत्युदाहरणं व्यर्थमित्यत आह– **अत्रेति** ॥ अत्र सूत्रे विष्णुत्व-साधकतया क्षीराब्धिशायित्वं प्रलयोदकशायित्वं च लिङ्गत्वेन विवक्षितम् । प्रलयोदकशायित्वलिङ्गदर्शनाय 'अन्तः समुद्रे मनसे'ति श्रुत्युदाहरणम् । तत्र जलवाच्यर्णवशब्दसद्भावात् । क्षीराब्धिशायित्वलिङ्गप्रदर्शनाय 'समुद्रेऽन्तः कवय' इति श्रुत्युदाहरणम् । क्षीरसमुद्रशायिनः कविभिरीड्यत्वादिति भावः ।

## वाक्यार्थमुक्तावली

ॐ अन्तस्तद्धर्मोपदेशात् ॐ ॥ **नामसमन्वयसिद्ध्यर्थमिति** । प्रकृतनामसमन्वयसिद्ध्यर्थं लिङ्गसमन्वयचिन्तनादौपोद्घातकी पादसङ्गतिर्न पादान्तर्भावरूपा । चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं प्रचक्षत इति वचनादिति भावः । अदृश्येऽनात्म्येऽनिरुक्त इति । अत्रानिरुक्त इत्यन्तोक्तिस्तु अदृश्यत्वमज्ञेयत्वमेव न त्वप्रत्यक्षत्वम् । अनिरुक्तेर्ज्ञानाभावहेतुकत्वादिति द्योतनाय, न विजानन्ति देवा इति भाष्ये तच्च दृश्यत्वमित्यर्थः । न च तत्रादृश्यत्वसामान्यमुक्तमत्र तु देवाज्ञेयत्वमतः कथं तदेवादृश्यत्वमत्रोच्यते । तथा चान्तस्थस्य विष्ण्वन्यत्वे आनन्दमयस्य विष्ण्वन्यत्वं कथमिति वाच्यम् । देवा अपि कार्त्स्न्येन न जानन्ति किम्वन्य इति कैमुत्येनात्रापि साकल्येन सर्वाज्ञेयत्वमेवोच्यत इति तदाक्षेपो युज्यत एवाप्रसङ्गादिति । तथा च पूर्वाधिकरणेनास्याक्षेपकी सङ्गतिरिति भावः । **विष्णुरन्यो वेति** । अत्रान्तस्थः किमिन्द्रादिरुत विष्णुरिति चिन्ता । तदर्थं विष्णुप्रापकलिङ्गानां समुद्रान्तस्थत्वादीनां सावकाशत्वेन स्वभावदौर्बल्येन किं पूर्वपक्षप्रापकेन्द्रादिश्रुतिलिङ्गेभ्यो दौर्बल्यमुत निरवकाशत्वेन प्राबल्यमिति । तदर्थं किमिन्द्रादीनामन्तस्थेनाभेद उत भेद इति ॥ **प्राबल्यायविवेकेनेति** ॥ श्रुतिः प्रबला लिङ्गं दुर्बलमिति

(वाक्यार्थमुक्तावली)

जातिकृतप्राबल्याद्यविवेकेनेत्यर्थः । यद्वा नामानीत्याद्युक्तरीत्या इन्द्रादिश्रुतीनां सावकाशतया विवक्षितगुणोपपत्तेश्चेति वक्ष्यमाणन्यायेन चाज्ञेयत्वलिङ्गस्य विष्णोरन्यत्र निरवकाशत्वेन प्राबल्यमिति तयोरविवेकेनेत्यर्थः । ईशे ईष्टे अतो राजेत्यर्थः । इत्यादिभिरित्यादिशब्दार्थमाह– **अपामित्यादिना** । एवं विशकलितानेकवाक्यस्थश्रुतिलिङ्गान्युक्त्वा तत्प्राबल्याय देवतान्तरग्रहणाय वा एकवाक्यगृहीतानि दर्शयति– **ब्रह्मेति** ॥ एतेन न च ब्रह्मेन्द्रमग्निं जगतः प्रतिष्ठां दिव आत्मानं सवितारं बृहस्पतिम् । चतुर्होतारं प्रदिशोऽनुक्लृप्तं वाचो वीर्यं तपसाऽन्वविन्ददित्यादिशब्दानामन्यविषयत्वमिति न्यायविवरण-मप्यादिशब्दार्थतया योजितं भवति । तथा चेन्द्रश्रुतेर्जत्या अभ्यासेन च सूर्यलिङ्गयोश्च सवितृश्रुत्यनुगृहीतत्वेन प्राबल्यमिति भावः । ब्रह्मेन्द्रमिति श्रुतौ ब्रह्म तपसाऽन्वविन्ददिति सुधोक्तरीत्याऽन्वयः । तेन ब्रह्मश्रुते-रन्तस्थो विष्णुरिति चोद्यानवकाश इति ज्ञेयम् । नन्वतीताधिकरणे ब्रह्मशब्दाद्धिरण्यगर्भस्य प्राप्तिरित्यादिना पदार्थान्तरविषयौ रूढियोगावाश्रित्य पूर्वपक्षितेऽन्नमयादिशब्दानां महायोगविद्वद्रूढिभ्यां विष्णुपरत्वं सिद्धान्तितम् । तथा च तन्न्यायेनेन्द्रादिशब्दसमन्वयलाभात्किमनेनाधिकरणेनेत्याशङ्क्य देवानां तत्र शक्ततामित्यनुव्याख्यानानुसारेणाभ्यधिकाशङ्कामाह । न चेत्यादिना देवेष्वेव रूढत्वादिति । विद्वद्रूढत्वा-दित्यर्थः । इन्द्रस्य नु वीर्याणि प्रवोचमित्यादिमन्त्रेषु बहुलप्रयोगदर्शनेन रूढेर्विद्वत्सम्बन्धित्वादन्यथा तद्यजनादौ विधिनियोगानुपपत्तेरिति भावः । **तेषामैश्वर्यादीति** ॥ तेषां देवत्वेन निरवधिकापरायत्तैश्वर्यादि-मत्वेन महायोगस्यैवाभावादशक्तेषु खलु सामन्तादिषु ऐश्वर्यादिकमल्पं परायत्तं भवति । देवास्त्वप्रतिहत-शक्तयः कथमेवं भवेयुः । तथा च श्रुतिः । इन्द्रो वै देवानामोजिष्ठतम इत्येवं जातीयका । अन्नौषध्या-दीनां त्वदेवत्वेन प्रवृत्तिनिमित्तस्य तत्र पौष्कल्यं परायत्तत्वं सम्भवतीति भावः । मनसेत्यस्यार्थो यथेष्टमिति । मरीचीनां जीवानामिति । मरीचिभिर्मरुत्व इति भावः । ब्रह्माण्डवीर्यत्वादीत्यादिपदेन ब्रह्मज्ञेयत्वब्रह्मतपोलभ्यत्वादेर्ग्रहः । तद्धर्मेत्यत्र तदिति तन्त्रं षष्ठ्यन्तं सप्तम्यन्तं चोपेत्यार्थमाह । विष्णुलिङ्गानाम् अन्तःप्रविष्टतयेति । स हि क्षीरसमुद्रशायी आपो नारा इति वक्ष्यमाणमनुस्मृत्यार्थमाह समुद्रान्तस्थत्वं नामेति । **रश्मिप्रेरकमिति** ॥ रश्मीनिन्धयति दीपयतीति रश्मीत् । अग्नीदितिवत् । प्रेरितमिति फलितकथनम् । अग्रत इत्यस्यार्थो प्रलय इति । जातमित्यस्य स्थितमिति पुरुषात्प्रकृति-र्जगदण्डमित्यत्रार्थविशेषस्तु मुक्तावल्यां बोध्यः । भावबोधे तु ब्रह्माण्डं च जानातीत्यनेन जातमित्यस्यानुवृत्यार्थ इत्युक्तम् ।

## तत्त्वसुबोधिनी

ॐ अन्तस्तद्धर्मोपदेशात् ॐ ॥ इन्द्रादिनामसमन्वयसिद्ध्यर्थमिति । तेनान्तर्भावलक्षणा पादसङ्गतिरप्यस्तीत्युक्तं भवति । श्रुत्यधिकरणसङ्गती इति । अव्यवहितपूर्वाधिकरणस्थ ''भेदव्यपदेशात्'' इति सूत्रतदुपात्तश्रुतिभ्यामित्यर्थः । अत्रानन्दमयधर्मस्यादृश्यत्वस्य अन्तस्थे श्रवणात् तस्य चाविष्णुत्वात् आनन्दमयत्वमपि अन्यस्यैवेति नान्यावयवस्य ब्रह्मणोजिज्ञास्यत्वं युक्तमिति पूर्वाधिकरणाक्षेपेण पूर्वपक्षोत्थानात् अनन्तरसङ्गतिः ॥ **प्राबल्याद्यविवेकेनेति** ॥ श्रुतिर्लिङ्गमिति वाक्ये पूर्वं पूर्वं बलीयः स्यादित्युक्तश्रुतिलिङ्गगतजातिकृतप्राबल्यदौर्बल्याविवेकेनेत्यर्थः । यद्वा श्रुतेः स्वतो बलवत्वात् इदं दुर्बलम् इदं प्रबलम् इति प्राबल्याद्यविवेकेनेत्यर्थः । इत्यादिभिरिति भाष्यगतादिशब्दार्थमाह । **अपां नेतारमिति** ॥ ननु इन्द्रादिशब्दानां विष्णुपरत्वात् न तत्प्रापकश्रुतिविरोध इत्यत आह ॥ **न चेति** ॥ कुतो देवेष्वेव रूढः इत्यत आह ॥ **तेषामिति** ॥ मनसेत्यर्थो यथेष्टं चरतामिति । शुष्ममित्यस्यार्थो वीर्यमिति । ब्रह्माण्डवीर्यत्वादि इत्यादिपदेन न्यायविवरणोदाहृतश्रुत्युक्तब्रह्मतपोलभ्यत्वादिलिङ्गग्रहणम् । नन्वग्रिमभाष्ये प्रलयसमुद्रशायित्वे प्रमाणकथनम् अयुक्तं प्रलयसमुद्रस्थत्वस्य पूर्वमुक्तत्वादित्यत आह ॥ **अत्र समुद्रान्तस्थत्वं नामेति** ॥ तथा च स हि क्षीरसमुद्रशायीति प्रसिद्ध्युक्तिः । आपो नारा इति प्रलयसमुद्रशायित्वे प्रमाणोदाहरणं च युक्तमिति भावः । **प्रसिद्धत्वादिति** ॥ अनेन स हीति हिशब्दार्थ उक्तो भवति । जातमग्रतः इत्यस्यार्थः प्रलये स्थितमिति ॥ **जातमित्यर्थ इति** ॥ अनेन जातमित्येतदनुवर्त्य व्याख्यातं भवति ।

## वाक्यार्थमञ्जरी

**नामसमन्वयसिद्ध्यर्थमिति** ॥ अत एव तत्पादान्तर्भाव इति भावः । श्रुतेः स्वभावतः प्राबल्याल्लिङ्गस्यापि वक्ष्यमाणरीत्या निरवकाशत्वेन श्रुतितः प्राबल्यादन्यतरनिर्णय एव स्यान्न सन्देह इत्यत उक्तम् ॥ **प्राबल्याद्यविवेकेनेति** ॥ ईशो ईष्टा स्वांमी यः तं न विजानन्तीत्यन्वयः । अदृश्यत्वाद्यभिधायि पदं नास्तीत्यत आह ॥ **सहैवेति** ॥ स्वैः सहैवेत्यर्थः ॥ **सूर्यलिङ्गादिति** ॥ एकचक्ररथं प्रति सप्तनामाऽश्वः सम्बध्यत इति सप्ताश्ववत्वैकचक्ररथित्वरूपादित्यर्थः ॥ **वरुणलिङ्गादिति** ॥ जलनियामकत्वरूपादित्यर्थः ॥ **त्वष्टारमिति** ॥ रूपाणि विविधतया कुर्वन्तं त्वष्टारं निचिक्युरित्यन्वयः ॥ **ब्रह्मेन्द्रमित्यादीति** ॥ ''ब्रह्मेन्द्रमग्निं जगतः प्रतिष्ठां दिव आत्मानं सवितारं बृहस्पतिम्'' इत्यादीत्यर्थः ।

(वाक्यार्थमञ्जरी)

अत्र दिव आत्मत्वं वायुलिङ्गम् । योगेनैतेषां विष्णुपरत्वमित्यत आह ॥ **न चेति** ॥ **तेपामित्यादि** ॥ तथा च योगरूढिभ्यां योगमात्रस्य बाध इति भावः । पृथक् स्वातन्त्र्येण ।

ॐ अन्तरस्तद्धर्मोपदेशात् ॐ ॥ अन्तप्रविष्टमित्यादौ अन्तःप्रविष्टतया श्रुतं ब्रह्मैव । तस्य ब्रह्मणो धर्माणां समुद्रस्थत्वब्रह्माण्डवीर्यत्वादीनाम् अन्तः श्रुतेरन्तः समुद्रे यस्याण्डकोशमित्यादिनाऽभिधानादित्यर्थः । होतारं दातारं 'हू'तुदानादनयोरिति धातोः । बहुवचनं घटयति ॥ **भूतेति** ॥ न चात्र समुद्रस्थत्वं नाम क्षीरसमुद्रशायित्वं वा प्रलयसमुद्रशायित्वं वा । नाद्यः । अपो नारा इति प्रमाणोदाहरणासङ्गतेः । न द्वितीयः । स हि क्षीरसमुद्रशायीति प्रतिज्ञासङ्गतेरित्यत आह ॥ **अत्रेति** ॥ भाष्ये अभिध्याय ध्यात्वा । अहमित्यस्यार्थः अहेयमिति । नञुपपदादोहाक्त्याग इत्यस्मात्कर्मणि डप्रत्यय इति भावः । रश्मीनिन्धयति दीपयतीति रश्मीत् । तत्फलितप्रदर्शनं रश्मिप्रेरकमिति ।

## विवृतिः

**इन्द्रादिनामसमन्वयसिद्धर्थमिति** ॥ तेनान्तर्भावलक्षणपादसङ्गतिरप्यस्तीति सूचितं भवति ॥ **श्रुत्यधिकरणसङ्गतीति** ॥ अव्यवहितपूर्वाधिकरणस्य भेदव्यपदेशादिति सूत्रतदुपात्तश्रुतिभ्यामित्यर्थः । आनन्दमयधर्मस्यादृश्यत्वस्यान्तस्थे श्रवणात्तस्य चाविष्णुत्वादानन्दमयत्वमप्यन्यस्यैवेति । नान्यावयवस्य ब्रह्मणो जिज्ञास्यत्वं युक्तमिति पूर्वाधिकरणाक्षेपेण पूर्वपक्षोत्थानादनन्तरसङ्गतिः ॥ **प्रावल्याद्यविवेकेनेति** ॥ श्रुतिर्लिङ्गमिति पूर्ववाक्ये पूर्वं पूर्वं बलीयः स्यादित्युक्तश्रुतिलिङ्गगतजातिकृतप्राबल्यदौर्बल्याद्यविवेकेनेत्यर्थः । यद्वा श्रुतेः स्वतो बलवत्वाल्लिङ्गस्य च निरवकाशत्वेन प्रबलत्वादिदं प्रबलं इदं दुर्बलमिति प्राबल्याद्यविवेकेनेत्येत्यर्थः ॥ **इत्यादिरिति** । भाष्यगतादिशब्दार्थमाह ॥ **अपां नेतारमिति** ॥ नन्विन्द्रादिशब्दानां विष्णुपरत्वान्न तत्प्रापकश्रुतिविरोध इत्यत आह ॥ **न चेति** ॥ तथापि योगेन विष्णुपरं किं न स्यादित्यत आह ॥ **तेपामिति** ॥ **मनसेत्यस्यार्थो यथेष्टं चरन्तमिति** ॥ ब्रह्माण्डवीर्यत्वादीत्यादिपदेन श्रुत्युक्तब्रह्मतयोपलभ्यत्वादिति ग्रहणम् । नन्वग्रिमभाष्ये प्रलयसमुद्रशायित्वे प्रमाणकथनमयुक्तम् । प्रलयसमुद्रस्थत्वस्य पूर्वमनुक्तत्वादित्यत आह ॥ **अत्र समुद्रान्तस्थत्वं नामेति** ॥ तथा च स हि क्षीरसमुद्रशायीति प्रसिध्या धिशयोऽनारायण इति प्रलयसमुद्रशायित्वे प्रमाणोदाहरणं च युक्तमिति भावः ॥ **प्रसिद्धत्वादिति** ॥ अनेन सहीतिशब्दार्थ उक्तो भवति ॥ जातमग्रत इत्यस्यार्थो **प्रलये स्थितमिति** ॥ **जातमित्यर्थ इति** ॥ अनेन जातमित्येतदनुवृत्या व्याख्यातं भवति ॥

## सूत्रभाष्यम्

**॥ ॐ भेदव्यपदेशाच्चान्यः ॐ ॥ २१ ॥**

'इन्द्रस्यात्मा निहितः पञ्च होता' 'वायोरात्मानं कवयो निचिक्युः' 'अन्तरादित्ये मनसा चरन्तम्, देवानां हृदयं ब्रह्मान्वविन्दत्' (तै.आ. ३-११) इत्यादिभेदव्यपदेशात् ॥ २१ ॥

## सत्तर्कदीपावली

इन्द्रादिश्रुतिलिङ्गानि तु इन्द्राद्यन्तर्यामिपराणीत्युपपद्यन्ते । इत्यतोऽपीन्द्रादिभ्यो भेदेन तदन्तर्यामिणोऽत्र व्यपदेशात् स एव विष्णुः प्रतिपाद्यते न त्विन्द्रादिरित्येतत्प्रतिपादकं सूत्रमुपन्यस्य व्याचष्टे भेदेत्यादिना । पञ्चेन्द्रियवदेव वृत्तियोगाच्छब्दादिविषयैराहुतिभिर्वा होतारो यष्टारो वा यस्य असौ पञ्चहोता । हृदि अयनत्वाद्धृदयमित्यन्तःप्रविष्टः शास्तोच्यत इत्यर्थः । (१।१।७)

## तत्त्वप्रदीपिका

भेदव्यपदेशाच्चान्यः ॥ 'इन्द्रस्याऽत्मा निहितः पञ्च होता' 'अमृतं देवानामायुः प्रजानां' 'इन्द्रं राजानं सवितारमेतं वायोरात्मानं कवयो निचिक्युः' । आदानादिकर्तृत्वाद्विष्णुरात्मा । नाऽत्मशब्दो जीवस्वरूपवाची । 'द्युभ्वाद्यायतनं स्वशब्दात्' इत्यादेः । हृद्ययनात् 'हृदयः' । एवं भेदव्यपदेशाच्च जीवेभ्यो, विष्णुरेवायमन्तःप्रविष्टः पुरुषः । यद्यपि विष्णुधर्मोपदेशादन्तस्थो विष्णुः । तथाऽपि स इन्द्रादिजीवाभिन्नोऽपि स्यात् । जीवपरयोर्भेदस्य काल्पनिकत्वादित्याशङ्कानिरासातितात्पर्यप्रकटनाय 'अन्य' इत्युक्तम् । एतन्न्यायेन सर्वदेवनाम्नां समन्वय उक्तः स्यात् । **इत्यन्तरधिकरणम् ।**

## तत्त्वप्रकाशिका

यद्येवं समुद्रस्थत्वादिलिङ्गादन्तःस्थो विष्णुस्तर्हि तेनान्तःस्थेन विष्णुना इन्द्रादिनामभेदोऽत्रास्तु विवक्षितः । तत्प्रापकश्रुत्यादेरपि सद्भावात् । न च श्रुत्यादिना लिङ्गबाधेनान्यतरनिर्णयः । लिङ्गस्य निरवकाशत्वात् । नापि लिङ्गेन श्रुत्यादिबाधः । श्रुत्यादेर्बलवत्त्वात् । एवं च पक्षद्वयेऽन्योन्यं बाध्यबाधकभावशून्ये तदन्यथानुपपत्त्याऽन्तःस्थेन विष्णुना इन्द्रादीनामभेदः प्राप्त इत्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ **भेदेति ॥** नात्रान्तःस्थेनेन्द्रादीनामभेदो विवक्षितः शङ्कनीयः किं त्वसाविन्द्रादिभ्योऽन्यश्च । तस्येन्द्राद्यन्तर्यामित्वतदन्तःस्थत्वकथनेन तेभ्यो भेदव्यपदेशात् । न चोभयप्रापकाऽन्यथानुपपत्त्यैतत्कल्प्यम् । लिङ्गेन श्रुत्यादिबाधोपपत्तेः । न च श्रुत्यादीनां बलवत्त्वेनाबाध्यत्वम् । इन्द्रादिशब्दानां भगवति

(तत्त्वप्रकाशिका)

सावकाशत्वाल्लिङ्गानां तु निरवकाशत्वात् । दुर्बलेनापि निरवकाशेन प्रबलस्यापि सावकाशस्य बाधोपपत्तेः । न चेन्द्रादिषु योगरूढिभ्यां प्रवृत्तत्वात् शब्दानां हरावमुख्यतेति वाच्यम् । परमैश्वर्यादिर्भगवति निरवधिकत्वेन महायोगसम्भवात् अङ्गरूढितोऽपि विद्वद्रूढेरेव प्राबल्यात् अन्यगतप्रवृत्तिनिमित्तस्यापि भगवदधीनत्वाच्च तत्रैव मुख्यत्वोपपत्तेरिति भावः । आत्माऽन्तर्यामी । निहितः सर्वहृदयेषु । पञ्च होता पञ्चेन्द्रियेषु विषयहोता । निचिक्युः ददृशुः । हृदयनाद्धृदयम् । न चात्रात्मशब्दः स्वरूपपरः । षष्ठ्या औपचारिकत्वप्रसङ्गात् । तस्मादशेषाधिदैवगततत्तच्छब्दवाच्यो हरिरेवान्तःप्रविष्टोऽदृश्योऽतः स एवाऽऽनन्दमय इति सिद्धम् । अत्र लिङ्गसमन्वयसमर्थनं बहुनामसमन्वयसिद्ध्यर्थम् । नामनिर्णयेन लिङ्गनिर्णयेऽपि लिङ्गस्य सङ्गतत्वाद् ग्रहणमिति ॥ २१, अ-७ ॥

## गुर्वर्थदीपिका

एकप्रकरणे स्वतन्त्रप्रतिपाद्यद्वयायोगादिति भावेनोक्तं तदर्थानुपपत्त्येति । षष्ठ्या औपचारिकत्वप्रसङ्गादित्युपलक्षणम् । 'अन्तःप्रविष्टं कर्तारमेतम्' 'अन्तरादित्ये मनसा चरन्तम्' 'अन्तश्चन्द्रमसि मनसा चरन्तं' 'सहैव सन्तं न विजानन्ति देवा' इति स्पष्टभेदश्रुत्यनुसारेणेन्द्रस्याऽऽत्माऽन्तर्यामीत्येवार्थो वक्तव्य इत्यपि द्रष्टव्यम् । यद्यपि सूचनात्सूत्रं तथाप्येकत्रैव भेदव्यपदेशादिति सूत्रे रचिते स्पष्टप्रसिद्ध 'द्वा सुपर्णा' इत्यादिभेदश्रुतावेव दृष्टिः पतेन्नान्यत्र । अतः आनन्दमयाधिकरणस्थबहुभेदश्रुतीः सूचयितुं प्रथमं तावदानन्दमयाधिकरणे 'भेदव्यपदेशात्' इत्येकं सूत्रमरचयत् । अन्तस्थश्रुतिप्रकरणस्थितबहुभेदवाक्यसूचनाय पुनरन्तस्थाधिकरणेऽपि 'भेदव्यपदेशाच्चान्य' इत्यपरं सूत्रमसूत्रयत् । एवमुत्तरत्रापि तत्तत्प्रकरणस्थबहुवाक्यसूचनाय 'भेदव्यपदेशाच्च' 'शारीरश्चोभयेऽपि हि भेदेनैनमधीयते' 'सुषुप्त्युत्क्रान्त्योर्भेदेन' 'पृथगुपदेशात्' इत्यादिरूपेण बहुष्वधिकरणेषु भेदसूत्ररचना । भेदकयुक्तिसूचनाय च 'जन्माद्यस्य यत' इत्यारभ्य तत्र तत्र 'नेतरोऽनुपपत्तेः' 'अनुपपत्तेस्तु न शारीरः' 'स्थित्यदनाभ्यां च' 'मुक्तोपसृप्यव्यपदेशात्' 'विशेषणभेदव्यपदेशाभ्यां च नेतरौ' 'सम्पद्याविहाय स्वेन शब्दात्' 'जगद्व्यापारवर्जम्' इत्यादिसूत्ररचना । अतः सयुक्तिकानन्तश्रुतिभिर्निर्णीते मुक्तावप्यनुवर्तमाने परमतत्वेऽस्मिन्भेदे न क्षुद्रमतीनां कुचोद्यावकाश इति स्वपरमतरक्षणशिक्षणविचक्षणः सूत्रकृदयं भेदवादिनामग्रेसरस्य मध्वगुरोरेव मूलगुरुर्नान्येषामिति प्रेक्षावद्भिरनुसन्धेयम् ।

## भावबोधः

इन्द्रादिशब्दानां भगवति सावकाशत्वाल्लिङ्गानां तु निरवकाशत्वादिति । अनेन श्रुतिसन्देहे

(भावबोधः)

अनन्यथासिद्धलिङ्गेन निर्णयोपपत्तेरिति न्यायविवरणमुक्ताभिप्रायं भवति । 'तच्छब्दानां विष्णुरूढतां साधयित्वा' इत्यनुव्याख्यानम् उपलक्षणपरमित्यभिप्रेत्य तन्मनसि कृत्वाऽऽह **परमैश्वर्यादेरिति** । अत्रेन्द्रादिशब्दाः सजातीयोपलक्षणपरा इति भावेनाह **अशेषाधिदैवेति** । अनेनाधिभूताध्यात्माधिदैवगतानामित्युत्तराधिकरणीयन्यायविवरणोक्तमधिकरणान्तरेऽप्यनुसन्धेयमिति भावः । इन्द्रादिनामसमन्वयसिद्ध्यर्थमिति प्रागुक्तमेवार्थमुपपादयितुं स्मारयति– **अत्र लिङ्गसमन्वयेति** । नन्वानन्दमयाधिकरणेऽन्नमयादिशब्दानामिवात्रापि वक्तव्यसमन्वयानामेवेन्द्रादिनाम्नां साक्षात् समन्वयः प्रतिपाद्यताम् । किम् उक्तपरम्पराश्रयणेन ? यदि च सूत्रस्याल्पाक्षरत्वार्थं प्राकरणिकलिङ्गसमन्वयोक्त्या तत्समभिव्याहृतानेकशब्दसमन्वयसाधनायैवमाश्रीयत इति । तदापि तत्प्रकरणगतनाम्न एव कस्यचित् समन्वयः प्रतिपाद्यताम् । पादसङ्गतिरप्येवं सति साक्षात् सिद्ध्यतीत्याशङ्क्याह **लिङ्गस्य सङ्गतत्वादिति** । आनन्दमये प्रतीतस्यादृश्यत्वस्यान्तःस्थे श्रवणेनान्तःस्थस्य विष्णुभिन्नत्वे आनन्दमयस्यापि विष्णुभिन्नत्वं स्यादित्यवश्यमयमन्तःस्थः क इति विचारणीय इत्याक्षेपकसङ्गतेरन्तःस्थत्वलिङ्ग एव भावात् इन्द्रादिनाम्नि चाभावात् अदृश्यत्वस्य साक्षादिन्द्रादिनामसमभिव्याहाराभावादित्यर्थः ।

ननु अत्तृत्वाधिकरणवज्जगज्जन्मादिकारणत्वं विष्णोरुक्तम् । तत्र स्थितिकर्तृत्वं 'ब्रह्मेन्द्रमग्निं जगतः प्रतिष्ठाम्' इत्यत्र कस्यचिदिन्द्रादेर्जगतः प्रतिष्ठामिति प्रतीयत इत्यादिरूपेण वा गायत्रीचक्षुरन्तःस्थत्वाधिकरणयोरिवादृश्यत्वयुक्तान्तःस्थेन्द्रादीनामेकप्रकरणप्रतिपाद्यत्वेनैकत्वादिन्द्रादिशब्दवाच्येष्वप्यदृश्यत्वस्य वक्तुं शक्यत्वेन वेन्द्रादिनामसमन्वयकथनेऽपि पूर्वाधिकरणसङ्गतिसम्भवात् किमर्थमन्तःस्थत्वलिङ्गसमन्वयकथनमित्यतो वाऽऽह लिङ्गस्य सङ्गतत्वादिति ऊहेनेति शेषः । ततश्चायमर्थः । अस्मिन्नध्याये सूत्रकारस्यानन्दमयोऽभ्यासादित्यादिसूत्रैर्न सूत्रोपात्तशब्दमात्रसमन्वयो विवक्षितः । किन्तु तच्छब्दयुक्तप्रकरणगतसन्दिग्धान्यशब्दानामपि । एवञ्च यद्युक्तरीत्या इन्द्रादिनाम्न एव समन्वय उच्यते, तदा पादेऽन्तर्भावरूपसङ्गतिसम्भवेन किमर्थमिदमुच्यत इति कैम(मु)त्यचिन्तायां तत्प्रकरणगतसकलशब्दसमन्वयसिद्ध्यर्थमिदमुच्यत इत्यूहसूचनेन स्वविवक्षा ज्ञापिता स्यात् । अत एवासाधारण्येन लिङ्गात्मकशब्दसमन्वयप्रतिपादकद्वितीयपादेऽपि वैश्वानरनाम्नः समन्वयकथनम् । तथा चैतदधिकरणद्वयरीत्या सर्वेष्वपि समन्वयाधिकरणेषु न तत्तत्सूत्रोपात्तशब्दसमन्वयमात्रं साध्यते; किन्तु प्राकरणिकसकलशब्दसमन्वय इत्युक्तं भवति । अत एवानुव्याख्याने 'उपलक्षणत्वं शब्दानामानन्दमयपूर्विणाम्' इत्याद्युक्तम् ॥

अत्राद्ये अन्तस्थस्य विष्णुत्वेऽनन्यथासिद्धलिङ्गरूपस्वपक्षसाधकोक्तिः । द्वितीये उभयप्रापकान्यथानु-

(भावबोधः)

पपत्त्या इन्द्रादीनाम् अन्तःस्थविष्ण्वभेदेनान्तःस्थत्वमित्याशङ्कापरिहाराय परपक्षे भेदव्यपदेशरूपबाधकोक्तिरिति सूत्रक्रमः ॥

## भावदीपः

॥ ॐ भेदव्यपदेशाच्चान्यः ॐ ॥ कुतोऽभेद इत्यतोऽन्यथोपपत्तिमानं वक्तुमाह ॥ **तत्प्रापकेति** ॥ **तदन्यथेति** ॥ पक्षद्वयप्रापकश्रुतिलिङ्गान्यथानुपपत्त्येत्यर्थः ॥ **अभेदः प्राप्त इति** ॥ तथा चेन्द्रबृहस्पत्यादीनां प्रागुक्तभेदव्यपदेशोऽप्ययुक्त इति भावः । नन्वेवमपि विष्णोरन्तःस्थत्वमपरिहार्यमिति वाच्यम् । अनुपहितधर्माणाम् उपहिते सम्भवादित्यादिना सुधोक्तदिशा इन्द्रादिरेवान्तःस्थो न तु विष्णुरिति तात्पर्यात् भाष्यस्य सौत्रप्रतिज्ञयाऽन्वय इति भावेनाऽऽह ॥ **इन्द्रादिभ्योऽन्यश्चेति** ॥ न केवलमन्तस्थ इत्यर्थः । सूत्रे चशब्दो भिन्नक्रम इति भावः । भाष्यं योजयति ॥ **तस्येति** ॥ आत्मा आदानादिकर्ता स्वामी अन्तर्यामीति यावदिति मत्त्वाऽऽह ॥ **इन्द्रादीति** ॥ आदिपदाद्वाय्वादिः । अन्तरादित्य इत्यस्यार्थः तदन्तःस्थत्वेति । श्रुतिसन्देहे अनन्यथासिद्धलिङ्गेन निर्णयोपपत्तेरिति वाक्यं विवृण्वानः पूर्वकृतचोद्यमनुवदति ॥ **न चेति** ॥ लिङ्गस्यानन्यथासिद्धत्वोक्त्या सूचितं प्रागसिद्धं श्रुतेस्सावकाशत्वं शङ्कापूर्वमाह ॥ **न च श्रुत्यादीनामिति** ॥ **सावकाशत्वादिति** ॥ विवरिष्यते चैतदनुपदम् । सूर्यादिलिङ्गानां च पादान्त्यप्राणनयन्यायेन सावकाशत्वं ज्ञेयमिति भावः ॥ **निरवकाशत्वादिति** ॥ उक्तश्रुतिस्मृतिप्रसिद्धिभ्य इति भावः । अन्यथासिद्धत्वानन्यथासिद्धत्वे श्रुतिलिङ्गयोर्व्यावर्त्यशङ्कापूर्वं सावकाशत्वनिरवकाशत्वपदाभ्यामुक्त्वा समग्रन्यायविवरणवाक्यार्थमाह ॥ **दुर्बलेनापीति** ॥ जात्येति भावः । अत्र प्रतिनयमाध्यायपरिसमाप्ति तत्त्वित्यवधारणार्थतुशब्दान्ततत्पदस्यानुवृत्त्या भाष्ये विष्णुरेवेत्युक्तेर्महायोगविद्वद्रूढिभ्यां हरिरेव तत्तच्छब्दमुख्यार्थ इति द्योतनं फलम् । अन्यथा कल्पनोपदेशादिति वक्ष्यमाणन्यायेनान्यत्र । मुख्यवृत्तेरपि स्वीकारेण प्रतिनयं भाष्ये विष्णुरेवेति सूत्रार्थोक्तेरयोगात् । न च विषयवाक्ये कोट्यन्तरस्य प्रतिपाद्यत्वव्युदासाय विष्णुरेवेत्युक्तिरिति युक्तम् । वाक्यविशेषोक्तेरुपलक्षणत्वेन विष्णोराधिदैविकाद्यशेषशब्दमुख्यार्थत्वव्युत्पादने तात्पर्यादिति भावेन विष्णुरेवेत्यवधारणसूचितं शब्दप्रवृत्तिहेतूनां तस्मिन्मुख्यसमन्वयात् । 'अन्यार्थेष्वल्पताहेतोस्तन्निमित्तत्वतस्तथा । तद्वाचकत्वं शब्दानाम्' इत्यानन्दमयनयानुभाष्योक्तं शङ्कापूर्वमाह ॥ **न चेन्द्रादिष्विति** ॥ **निरवधिकत्वेनेति** ॥ 'देवमहिम्नः परमन्तमाप' । 'न ते महित्वमन्वश्नुवन्ति' । 'ब्रह्मेशानादिभिर्देवैः' इत्यादेरिति भावः ॥ **महायोगेति** ॥

(भावदीपः)

''इन्द्रं मित्रं यमिन्द्रं च प्रथमा संकृतिस्तथा ।
नामधाः सर्वदेवानामेक इत्यादिका श्रुतिः''

इति चतुर्थपादीयानुभाष्योक्तविद्वद्रूढेरप्युपलक्षणम् । आद्यसूत्रभाष्ये 'यो देवानां नामधा' इति श्रुत्या विद्वद्रूढेः साधितत्वादत्र साक्षादनुक्तिः ॥ **प्राबल्यादिति** ॥ 'रूढिर्हि द्विविधा मता । अविद्वद्विद्वदाख्यैव मुख्या हि विदुषां तु सा' इत्युक्तेरिति भावः । महायोगो हि द्विविधः । शब्दप्रवृत्तिनिमित्तपौष्कल्यवत्वम् अन्यगतशब्दप्रवृत्तिनिमित्तं प्रति स्वातन्त्र्यं चेति । तत्र द्वितीयमप्यस्तीत्याह ॥ **अन्यगतेति** ॥ 'तं भूतिरिति देवा उपासाञ्चक्रिरे । ते बभूवुः' इति । 'भीषाऽस्माद्वातः पवत' इत्यादेरिति भावः । स्वातन्त्र्यं शब्दप्रवृत्तिनिमित्तमिति त्वग्रे तदधीनत्वादित्यत्र व्यक्तम् ॥ **मुख्यत्वेति** ॥ नन्वेवं 'मुख्यामुख्ययोर्मुख्ये सम्प्रत्यय' इति न्यायेनैव ब्रह्मेन्द्रमग्निमित्यादाविन्द्रादिशब्दैर्विष्णुग्रहणसिद्धौ तद्धर्मोक्तिर्व्यर्थेति चेत्सत्यम् । तात्पर्याभावो हि नेतर इत्यादिना दर्शितः शक्तिस्तूभयत्र स्यादिति तृतीयपादीयसुधोक्तिः सा त्वभ्यासादितात्पर्यलिङ्गोक्तिसिद्धतात्पर्याभिप्राया । न तु तत्त्वित्यवधारणसिद्धमहायोगादिरूपमुख्यवृत्त्यभिप्रायेत्यविरोधः । एवमग्रेऽप्येतत्सर्वं ध्येयम् ॥ हृदयनादिति ॥ तस्यैतदेव निरुक्तं हृदयमिति । तस्माद्धृदयमिति च्छान्दोग्यश्रुतौ निरुक्तेरिति भावः । भेदव्यपदेशासिद्धिमाशङ्क्य निराह ॥ **न चेति** ॥ औपचारिकत्वेत्युपलक्षणम् । 'सहैव सन्तं न विजानन्ति देवा' इति साहित्यकर्तृकर्मभावादिना स्पष्टं भेदोक्तेः । अत्रैव प्रकरणे आत्मा जनानामित्यन्तर्यामिण्यात्मपदप्रयोगाच्च न स्वरूपपर इति ज्ञेयम् । उक्तदिशेन्द्रादिशब्दानां विष्णौ मुख्यत्वेऽपि यत्र बाधकं तत्र तत्तद्देवतारूपान्यपरत्वमप्यस्त्येवेतीन्द्रस्यात्मेत्यादावन्यः प्रसिद्धेन्द्रादिरर्थो न विरुद्धोऽतोऽपि न भेदोऽसिद्ध इत्यपि बोध्यम् । सूत्रस्य विश्वतोमुखत्वं व्यञ्जयन्फलोक्त्योपसंहरति ॥ **तस्मादिति** ॥ निरवकाशलिङ्गसत्त्वादित्यर्थः । अधिभूताध्यात्मेत्याद्युत्तराधिकरणविषयोपाधीनां न्यायविवरणेऽभिधानात्तुल्यन्यायतया वा 'देवतान्तरगाः सर्वे शब्दवृत्तिनिमित्ततः । विष्णुमेव वदन्त्यद्धा' इति तार्तीयानुभाष्योक्त्या वा लब्धमिति भावः । अधिकं विवक्षुरुक्तमेवानुवदति ॥ **अत्र लिङ्गेति** ॥ अत्र लिङ्गसमन्वयो नामान्तःप्रविष्टम् अन्तश्चन्द्रमसि अन्तःप्रविष्टः शास्तेत्याद्येतत्प्रकरणस्थानःपदोपेतवाक्यतात्पर्यविषयत्वमात्रम् । व्याप्तस्य हरेरल्पदेशेऽवस्थानमयुक्तमिति चोद्यनिरासेन हरौ तस्य युक्ततासाधनं तु सर्वत्र प्रसिद्धेत्यत्र करिष्यत इति बोध्यम् । 'एतद्भावाभिधं लिङ्गम्' इति तत्रानुभाष्योक्तेः । वैपरीत्यं कुतो नेत्यत आह ॥ **नामेति** ॥ अन्तःस्थस्याविष्णुत्वे तद्गतत्वेन श्रुतादृश्यत्वस्यान्यनिष्ठत्वेन तद्युक्तानन्दमयोऽप्यन्य इति

(भावदीपः)

पूर्वोक्तरीत्या सङ्गतत्वादित्यर्थः । अर्थान्तराणि त्वस्य चन्द्रिकायामुक्तानि । यत्तु अन्तःप्रविष्टवाक्ये अन्तःस्थत्वं न प्राधान्येन श्रुतमिति नेदमुदाहरणं युक्तं सूत्रद्वयस्य परस्परानुपजीविसाध्यद्वयपरत्वे अधिकरणभेदप्रसङ्गश्च । द्वितीयचशब्दास्वारस्यं चेति । तन्न । सुवर्णघर्मानुवाकस्थमेव वाक्यमत्र चिन्त्यम् । न तु त्वदुक्तं य एषोऽन्तरादित्य इति छान्दोग्यस्थमित्यस्य चन्द्रिकायां व्यक्तत्वात् । प्राधान्येनान्तःस्थत्वाश्रवणस्यासिद्धेश्च । त्वद्वाक्येऽपि तथात्वापाताच्च । परस्परानुपजीविसाध्यद्वय-परत्वस्यासिद्धेश्च । न केवलमन्तःस्थो विष्णुः किं त्वन्यश्चेति भिन्नक्रमेण चशब्दसार्थक्याच्चेत्याद्युक्तम् ॥ २१ ॥ अ.७ ॥

## अभिनवचन्द्रिका

(सू.२१) **इत्याशङ्कामिति** ॥ अन्तस्थेन विष्णुना इन्द्रादीनामभेदः प्राप्त इत्येककोटिकसंशयं परिहरत्सूत्रमित्यर्थः । एतेन विष्ण्वादिलिङ्गश्रुतीनामन्तस्थानामनेकत्वेनाप्युपपादयितुं शक्यत्वात् अभेद एवेत्यवधारणानुपपत्तिरिति परास्तम् । अभेदसंशयस्यैवाभिमतत्वेनाभेदभ्रमस्यानभिमतत्वात् । **अन्यश्चेति** ॥ प्रतिपत्तव्य इति शेषः । एवं च – पक्षद्वय इत्यादिनोक्तां शङ्कामनूद्य निषेधति – **न चेति** ॥ एतदैक्यं कल्प्यमिति न वाच्यमित्यर्थः । एतेन – उभयप्रापकस्याऽन्तस्थस्याऽनेकत्वेनाप्युपपन्नत्वेन अन्यथाऽनुपपत्तेरभावात्, ऐक्यस्य कल्प्यत्वाभिधानमयुक्तमिति परास्तम् । तस्यैककोटिकसंशयानु-वादत्वेनाऽन्यथानुपपत्त्या ऐक्यावधारणार्थत्वाभावात् । उभयप्रापकमसिद्धमेवेत्याह – **लिङ्गेनेति** ॥ न च – **श्रुत्यादीनामिति** ॥ इन्द्रश्रुतेः लिङ्गापेक्षया स्वतो बलवत्त्वेन सप्ताश्वरथित्वदिवस्पतित्वरूप-सौरलिङ्गयोरेनेकत्वेन त्वष्टृश्रुतेः बृहस्पतिश्रुतेश्च श्रुतित्वेन बलवत्त्वात् अबाध्यत्वमिति न वाच्यमित्यर्थः । **बाधोपपत्तेरिति** ॥ इति भाव इति शेषः । ननु यत्प्रागुक्तम्, अन्तस्थत्वलिङ्गसमन्वयसमर्थनमिन्द्रादि-बहुनाम्नां समन्वयसिध्यर्थमिति तदयुक्तम् । इन्द्रादिनाम्नां भगवति योगसम्भवेन समन्वयासम्भवाभावात् तत्समन्वयस्याऽसमर्थनीयत्वादित्यतः सूत्रकाराभिप्रेतम् इन्द्रादिनामसु पूर्वपक्षसिद्धान्तमाह – **न चेन्द्रादिष्वित्यादिना** ॥ 'इन्द्रो राजा जगतो य ईश' (तै.आ.) इत्यादिवाक्यप्रतिपाद्या इन्द्रादयो विषयः । ते किं शचीपत्यादयः, उत विष्णुरूपाणीति सन्देहः । इन्द्रादिशब्दनां प्रसिद्धेन्द्रादिषु योगरूढिभ्यां प्रवृत्तत्वेन त एव इन्द्रादिशब्दाभिधेया इति पूर्वपक्षः । विष्णुरेवेन्द्रादिशब्दप्रतिपाद्यः । समुद्रशायित्वब्रह्माण्डवीर्यत्वादितद्धर्मोपदेशात् । इन्द्रादिशब्दानां विष्णौ महायोगाद्विद्वद्रूढेश्चेति 'अन्तस्तद्धर्मोपदेशा'दिति आद्यसूत्रस्य भाव इत्यर्थः । एतेन इन्द्रादिशब्दानां हरावमुख्यत्वेऽपि

(अभिनवचन्द्रिका)

सावकाशत्वानपायात्, इन्द्रादिशब्दानां हरावमुख्यत्वाशङ्का न युक्ता । अत एव महायोगरूढिभ्यां मुख्यत्वाभिधानं च व्यर्थं सावकाशत्वस्य मुख्यत्वानपेक्षणादिति परास्तम् । 'न चे'त्यादिग्रन्थस्य अधिकरणसिद्धान्तसिद्धेन्द्रादिनामसन्वयोपयोगिपूर्वपक्षसिद्धान्तप्रदर्शनार्थत्वात् । **अज्ञरूढितोऽपीति** ॥ ननु कथमिदं विज्ञायते । अज्ञमूलिका रूढिः अज्ञरूढिरिति आहोस्वित् अज्ञैर्ज्ञाता रूढिः अज्ञरूढिरिति । किंचातः यदि विज्ञायते अज्ञमूलिका रूढिः अज्ञरूढिरिति, तदा असिद्धिः प्राप्नोति । न हीन्द्रादिशब्दानां पुरन्दरादिषु रूढिरज्ञमूलिका, किन्तर्हि विद्वत्तमभगवन्मूलिका, तदुक्तम्–

'अनादिनिधाना नित्या वागुत्सृष्टा स्वयम्भुवा ।
ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः ।
वेदशब्देभ्य एवासौ निर्ममे स महेश्वर' इति ।

उग्रो भस्मधरो नग्रः कपालीति शिवस्य च
विशेपनामानि ददौ स्वकीयान्यपि केशव' इति च ।

अथ विज्ञायते अज्ञैर्ज्ञाता रूढिरिति, तदा विद्वद्रूढिरपि अज्ञैर्ज्ञाता अज्ञरूढिः स्यात् । तथा इन्द्रादिशब्दानां पुरन्दरादिगता अज्ञरूढिरपि विद्वज्ज्ञेयत्वात् विद्वद्रूढिः स्यात् । ततश्च सर्वथा विद्वदविद्वद्रूढ्योर्भेदाभावात् नाऽज्ञरूढितो विद्वद्रूढेः प्राबल्यं सम्भवति । विद्वदविद्वद्रूढ्योर्भेदपक्षेऽज्ञरूढेरेव प्राबल्यं युक्तं, बहुप्रतिपत्तिविषयत्वेन शीघ्रगामित्वात् । विद्वद्रूढेश्च बहुप्रतिपत्तिविषयत्वाभावेन मन्थरगामित्वादिति चेत्, उच्यते–

'अज्ञानां प्रतिपत्त्यर्थं विष्णुना कल्पिता तु या ।
अज्ञरूढिरिति प्रोक्ता विद्वद्रूढिस्त्वकल्पिता' ॥ इति

न ब्रूमो वयं अज्ञमूलिका रूढिरज्ञरूढिरिति नापि अज्ञैर्ज्ञाता रूढिरज्ञरूढिरिति येनोक्तदोषः स्यात्, किंनाम संज्ञैषा तत्र भगवतः कल्पितरूढेरज्ञरूढिरिति, स्वभावसिद्धाया रूढेर्विद्वद्रूढिरिति । एवं च विद्वरूढेरज्ञप्रतीतिगोचरत्वेऽपि अज्ञरूढेर्विद्वत्प्रतीतिगोचरत्वेऽपि न साङ्कर्यं नापि प्राबल्य-दौर्बल्यानुपपत्तिः । कल्पितत्वस्वाभाविकत्वाभ्यां तदुपपत्तेरिति । ननु अथापि विद्वद्रूढिर्भगवति सिद्धा न वा । आद्येऽधिकरणवैयर्थ्यं, तत्सिद्धेरधिकरणमूलत्वात् । नेति पक्षे तदुपन्यासायोग इति चेत्, उच्यते – सिद्धैवेन्द्रादिशब्ददानां भगवति विद्वरूढिः । 'नामानि सर्वाणी'ति श्रुतेः । न चाऽधिकरण-

(अभिनवचन्द्रिका)

वैयर्थ्यम् – 'इन्द्रो राजा जगतो य ईश' इत्यादिश्रुतिगतेंद्रादिशब्दानां तत्परत्वसाधनार्थमेवाधिकरण-प्रवृत्तिरित्यङ्गीकारात्। 'तस्मादशेषाधिदैवगतशब्दवाच्यो हरि' रित्युपसंहारटीका तु एतदधिकरणोक्त-न्यायेनेन्द्रादिनाम्नां भगवत्परत्वे सिद्धे 'नामानी'ति श्रुतिबलेन शक्तिरेवाभ्युपगन्तव्या न तु लक्षणेत्यर्थपरा, न तु वाच्यत्वमेवाधिकरणार्थ इत्यर्थपरा। नन्वत्र परमात्मनि 'इन्द्रादिनामसमन्वयसिध्यर्थमन्तस्थत्वलिङ्ग-समन्वयसमर्थनादस्ति शास्त्रादिसङ्गति'रित्युक्तं, तदयुक्तम्, अन्तस्थत्वेन हेतुना इन्द्रादिनाम्नां समन्वयस्य क्वाप्यनभिधानादित्यत आह– **अत्र लिङ्गसमन्वयसमर्थनमिति ॥** लिङ्गसमन्वयसमर्थनार्थकेऽस्मिन्सूत्रे लिङ्गग्रहणं इन्द्रादिनाम्नामुपलक्षणार्थमिति भावः। तदुक्तम् – 'उपलक्षणत्वं शब्दानामानन्दमय-पूर्विणा'मिति।

इदमुक्तं भवति – स्यादयं दोषो यद्यनेनाधिकरणेनाऽन्तस्थत्वलिङ्गसमन्वयः, अन्तस्थत्वलिङ्गेनेन्द्रादि-नाम्नां समन्वय इति ब्रूमः, नचैवं, किं नाम आनन्दमयनाम्नः अन्नमयादिनाम समन्वयसिध्यर्थमुदाहरणत्व-वत् अन्तस्थत्वलिङ्गस्यापि इन्द्रादिनामसमन्वयसिध्यर्थमुदाहरणत्वम्। इदमेव हि अस्य तादर्थ्यम्। यत्तत्सिध्युदाहरणत्वमिति। एतेन लिङ्गसमन्वयस्य बहुनामसमन्वयसिद्ध्यर्थत्वस्य प्रागेवोक्तत्वात् पुनरभिधाने पौनरुक्त्यमिति परास्तम्। एतेनैवान्तस्थत्वलिङ्गसमन्वयसमर्थनस्य आनन्दमयाधिकरणोक्त-स्याऽऽक्षेपपरिहारार्थत्वेन वैयर्थ्यशङ्कानुदयात् इन्द्रादिनामसमन्वयसिद्ध्यर्थमिति परास्तम्। नन्वानन्दमये श्रुतादृश्यत्वलिङ्गस्य अन्यगामित्वे आनन्दमयोऽप्यन्यः प्रसज्यत इति तल्लिङ्गमवश्यनिर्णेयं, तन्निर्णयश्च द्वेधा घटते अन्तस्थत्वलिङ्गसमन्वयेन वा इन्द्राद्यन्यतमनामनिर्णयेन वा। तथापि नामनिर्णयेनैव अदृश्यत्व-लिङ्गनिर्णयः। अधिकरणस्य पादान्तर्भावसम्भवात्। न तु अन्तस्थत्वनिर्णयेन लिङ्गनिर्णय इत्यत आह– **नामनिर्णयेनेति ॥** सत्यमिह नामनिर्णयेनापि अदृश्यत्वलिङ्गनिर्णयो भवतीति, तथापि सूत्रकृता लिङ्गनिर्णयेनैवादृश्यत्वलिङ्गनिर्णयः क्रियते। अदृश्यत्वलिङ्गेन अन्तस्थत्वलिङ्गस्य सङ्गतत्वात् सम्बद्धत्वात्। यद्यपि इन्द्रादिनामान्यपि अदृश्यत्वलिङ्गेन सम्बद्धानि तथापि न साक्षात्, किंतु अन्तस्थाभेदनिमित्तेनैवेति न तेषामुदाहणम्। एतेन अस्य पादस्य नामसमन्वयात्मकत्वात् लिङ्गसमन्वयस्याऽनावश्यकत्वेन नामनिर्णयेन लिङ्गनिर्णयोऽपीति लिङ्गनिर्णायकत्वरूपप्रयोजनवर्णनमयुक्तमिति परास्तम्।

**पूर्वपक्षस्तु–** अन्तस्थ इन्द्र एव भवेत्। 'इन्द्रो राजा जगतो य ईश' (तै.आ.३.११) इति, ब्रह्मेन्द्रमग्निं जगतः प्रतिष्ठा(तै.आ. ३-११)मिति चेन्द्रश्रुतेरित्येकः पूर्वपक्षः सूर्य एवायमन्तस्थः, 'सप्त युजन्ति रथमेकचक्र'(तै.आ. ३-११)मिति सूर्यलिङ्गात्, दिव आत्मानं सवितार'(तै.आ.

(अभिनवचन्द्रिका)

३-११)मिति दिवस्पतित्वलिङ्गात्, सवितृश्रुतेश्चेत्यपरः । वरुण एवायमन्तस्थः 'अपां नेतार'(तै.उ. ३-११-२७)मिति वरुणलिङ्गादित्यन्यः । त्वष्टैवायमन्तस्थः, 'त्वष्टारं रूपाणि विकुर्वन्त'(तै.आ.३-११)मिति त्वष्टृश्रुतेरित्यपरः । अग्निरेवायमन्तस्थः 'ब्रह्मेन्द्रमग्निं जगतः प्रतिष्ठा'(३-११-२१)मित्यग्नि-श्रुतेरित्यपरः । बृहस्पतिरेवायमन्तस्थः 'सवितारं बृहस्पति' (तै.आ.३-११-२१)मिति बृहस्पतिश्रुते-रित्यपरः । न चेन्द्रादयः शब्दा अन्यत्र नेतुं शक्यन्ते । तेषां देवेष्वेव रूढत्वात् । तेषामैश्वर्यादिशब्द-प्रवृत्तिनिमित्तवत्त्वाच्च । न चाऽदृश्यत्वादिलिङ्गात् अन्तस्थो विष्णुः – श्रुत्यादिभ्यो लिङ्गमात्रस्य दुर्बलत्वात् । ततश्च अन्तस्थस्यान्यत्वाददृश्यत्वेनाभिमताऽनन्दमयोऽप्यन्य एवेति तस्यैव जिज्ञास्यत्वमिति ।

**सिद्धान्तस्तु–** विष्णुरेवाऽन्तस्थः । प्रलयार्णवशायित्वक्षीरार्णवशायित्वब्रह्माण्डवीर्यत्वादितल्लिङ्गात् । न च – श्रुतेः स्वतः प्रबलत्वात् लिङ्गानां निरवकाशत्वेनाऽन्यतरेणाऽन्यतरबाधायोगात् विष्णु-नेन्द्रादीनामभेदो विवक्षितोऽस्त्विति वाच्यम् । 'इन्द्रस्यात्मा निहतः पञ्चहोता । वायोरात्मानं कवयो निचिक्युः । अन्तरादित्ये मनसा चरन्तं देवानां हृदयं ब्रह्मान्वविन्द'(तै.आ.३-११)दित्यादिभेदव्यप-देशात् । न चोभयप्रापकान्यथानुपपत्त्या एतत्कल्प्यम् । निरवकाशेन विष्णुलिङ्गेन सावकाशान्यप्रापकश्रुति-लिङ्गानां बाधोपपत्तेः । एवमिन्द्रादिनामस्वपि पूर्वपक्षसिद्धान्तौ द्रष्टव्यौ । ततश्च अयमन्तस्थ इन्द्रादिश्च विष्णुरेवेति सिद्धम् । (अ.७.)

## वाक्यार्थमुक्तावली

ॐ भेदव्यपदेशाच्चान्यः ॐ । अत्र तदित्यनुवृत्त्यनुसारेणान्यदिति वाच्ये इन्द्रस्यात्मेति श्रुत्यनुसारेण सूत्रेऽन्यश्चेति सम्बन्धः । न केवलमन्तस्थो विष्णुः किं त्विन्द्रादिभ्योऽन्यश्चेत्यर्थः । आत्मेत्यस्यार्थमाह ॥ **अन्तर्यामित्वेति** ॥ अन्तरादिभ्य इत्यस्यार्थस्तदन्तस्थत्वेति ॥ **श्रुत्यादिबाधेति** ॥ बाधो नाम प्रतीतार्थाप्रमापकत्वम् । **परमैश्वर्यादेर्भगवतीति** । अत्र भगवच्छब्दग्रहणेनैश्वर्यस्य समग्रस्येत्यादिना भगशब्दार्थतया महैश्वर्यस्य सुप्रसिद्धत्वादिति द्योतयति । **अज्ञरूढितोऽपीति** ॥ बहुलप्रयोगलब्धाज्ञ-रूढ्यपेक्षया इन्द्रं मित्रं वरुणम् अग्निमाहुरित्यादिना भगवति तेषां विद्वद्रूढेरतिप्रबलस्य सिद्धत्वादित्यर्थः । **अन्यगतेति** ॥ इन्द्रादिगतस्य परमैश्वर्यादेरल्पता परमेश्वराधीनता च श्रुतिपुराणादिप्रसिद्धा । शक्तेरप्य-स्मदाद्यपेक्षयाऽधिक्यमेव न तु निर्गलत्वमित्यपि प्रसिद्धम् । अन्यथाऽनेकेश्वरविरोध इति भावः । नन्विन्द्रस्यात्मा स्वरूपमिति व्यख्यानमस्त्वित्यत आह **न चेति** ॥ **षष्ठ्या इति** ॥ स्वेन स्वस्य

(वाक्यार्थमुक्तावली)

सम्बन्धायोगादिति भावः । उपलक्षणं चैतत् । सहैव सन्तं न विजानन्तीति साहित्यकर्मकर्तृभावाद्ययोगाच्चेति ज्ञेयम् । अधिकरणावच्छेदकोपाधिं वदन्नुपसंहरति **तस्मादिति** ॥ इन्द्रादिनामसमन्वय-प्रसिद्ध्यर्थमित्युक्तमेवार्थमधिकं विवक्षुरनुवदति । अत्र लिङ्गेति ।

ननु प्राचीनाधिकरणे यथोपलक्षणत्वेनानन्दमयनामसमन्वय उक्तः । तत्राप्येकनामसमन्वयोक्तौ बहुनाम्नां लिङ्गानां च समन्वयः पादान्तर्भावश्च सेत्स्यति । तथा च किं लिङ्गसमन्वयेनेत्यत आह **नामनिर्णयेनेति ॥ सङ्गतत्वादिति** ॥ आनन्दमये प्रतीतस्यादृश्यत्वस्यान्तस्थे श्रवणेनान्तस्थस्य विष्णु-भिन्नत्वे आनन्दमयस्याप्यन्यत्वं स्यादित्याक्षेपसंमतेरन्तस्थ एव भावात् । अदृश्यत्वस्यान्तः प्रविष्टं न विजानन्तीतिवदिन्द्रं न विजानन्तीति साक्षादिन्द्रादिनामसमभिव्याहाराभावान्नामसमन्वयोक्तौ पादसङ्गत्या तन्मात्रोपस्थितिसम्भवेन लिङ्गसमन्वयाज्ञानाल्लिङ्गसमन्वयोक्तौ तु पादसङ्गतिः किमर्थमुच्यत इति कैमर्थ्यचिन्तायां तत्प्रकरणगतसकलशब्दसमन्वयसिद्ध्यर्थमित्यूहसूचनेन स्वविवक्षा ज्ञापिता स्यादिति भावः । अत्राद्येऽन्तस्थस्य विष्णुत्वे लिङ्गोक्तिर्द्वितीयेऽतस्थे श्रुतिर्विष्णुलिङ्गस्येन्द्रादावभेदमुखेन सावकाशत्वे चोदिते भेदव्यपदेशेनान्तस्थनिष्ठाविष्णुलिङ्गानां निरवकाशत्वोक्तिरिति सूत्रक्रमः ॥

## तत्त्वसुबोधिनी

तथापि श्रुतेः स्वतो बलवत्वात् कथं लिङ्गैर्बाध इत्यत आह ॥ **दुर्बलेनापीति** ॥ ननु नामपादे लिङ्गसमर्थनमअसङ्गतमित्यत आह ॥ **अत्र लिङ्गेति** ॥ नन्वानन्दमयाधिकरणे अन्नमयादिशब्दानामिव अत्रापि वक्तव्यसमन्वयानामेव इन्द्रादिनाम्नां साक्षात्समन्वयः प्रतिपाद्यतां किमुक्तपरम्पाराश्रयणेन । यदि च सूत्रस्याल्पाक्षरत्वार्थं प्राकरणिकलिङ्गसमन्वयोक्त्या तत्समभिव्याहृतानेकशब्दसमन्वयसाधनाय एवमाश्रीयते इति तदापि तत्प्रकरणगतनाम्नः एव कस्यचित्समन्वयः प्रतिपाद्यताम् । पादसङ्गतिरप्येवं सति साक्षात्सिद्ध्यतीत्यत आह ॥ **लिङ्गस्य सङ्गतत्वादिति** ॥ आनन्दमये प्रतीतस्य अदृश्यत्वस्यान्तस्थे श्रवणेन अन्तस्थस्य विष्णुभिन्नत्वे आनन्दमयस्यापि विष्णुभिन्नत्वं स्यात् इत्यवश्यम् अयमन्तस्थः क इति विचारणीयः इत्याक्षेपसङ्गतेः अन्तस्थत्वलिङ्ग एव भावात् इन्द्रादिनाम्नि च अभावात् अदृश्यत्वे साक्षादिन्द्रादिनामसमभिव्याहाराभावादित्यर्थः ॥ **सङ्गतत्वादिति** ॥ अल्पाक्षरे सूत्रे एकलिङ्गसमन्वयोक्त्या अनेकनामसमन्वयस्यार्थिकसिद्धेरेव सङ्गतत्वात् । अनेन समन्वयोक्त्यात्वेकसमन्वयस्यापि आर्थिके सिद्धेरसङ्गतत्वादेक नामसमन्वयोक्त्या च उदाहरण वाक्यस्थसजातीयनामसमन्वयापेक्षस्य विजातीय

(तत्त्वसुबोधिनी)

लिङ्गसमन्वयापेक्षस्य च सङ्गतिरीत्यन्तरे गौरवापादकतया क्लिष्टत्वेनासङ्गतत्वात् सजातीयस्योपलक्षणं विजातीयस्यतु आक्षेप इत्यस्यापि वैरूप्येणासङ्गतत्वादित्यर्थः । यद्वा यत्रैकं साक्षादन्यर्थादिति नाम-लिङ्गात्मकमुभयं तत्रान्यत्रनिरूढनामसमन्वयस्य प्रथमं बुद्धावनारोहात् न तन्मुखेन लिङ्गसमन्वयोऽसङ्गतः । अनिरूढलिङ्गमुखेनतु नामसमन्वयः सङ्गतः । अत एव पूर्वत्र आनन्दमयलिङ्गसमन्वय मुखेन आनन्दादि नामसमन्वयः उक्तः । अत्राधिभौतिकसर्वशब्दोपलक्षकेत्युपसंहारटीकानुसारेण आकाशनाम इत्युपरिटीकायामपि आकाशपदस्य भूतान्तरोपलक्षणत्वाय मुखतः तस्य सङ्कीर्तनं भूतेष्वाकाशस्य प्राधान्यादित्यवगन्तव्यम् ॥ ७ ॥

## वाक्यार्थमञ्जरी

ॐ भेदव्यपदेशाचान्यः ॐ ॥ तच्चशब्दार्थो विष्णुर्न केवलमन्तःश्रुतः किं त्विन्द्रादिभ्योऽन्यश्च । इन्द्रस्यात्मेत्यादिनाऽन्तर्यामित्वोक्त्या तेभ्यो भेदाभिधानादित्यर्थः । सावकाशत्वात् परमैश्वर्यादेरिति वक्ष्यमाणरीत्या ॥ **विद्वद्रूढेरिति** ॥ इन्द्रं मित्रं वरुणमग्निमाहुरिति प्रयोगबाहुल्यश्रवणादिति भावः । किमु महायोगसहिताया इत्येवशब्दः । महायोगो द्विविधः प्रवृत्तिनिमित्तपौष्कल्यवत्त्वम् अन्यगत-प्रवृत्तिनियामकत्वं च । तत्राद्यमुक्तम् । द्वितीयमाह ॥ **अन्यगतेति** ॥ सर्वहृदयेष्विति शेषोक्तिः । अत्र श्रुतौ । तथा च भेदव्यपदेशोऽसिद्ध इति भावः ॥ **औपचारिकत्वेति** ॥ षष्ठ्यर्थसम्बन्धस्य भेदव्याप्तत्वेन तदभावे घटस्य स्वरूपमित्यादिवदिन्द्रस्येत्यादिषष्ठ्यर्थस्य चौपचारिकत्वप्रसङ्गादित्यर्थः । इन्द्रादिनामसमन्वयसिद्ध्यर्थमिति प्रागुक्तमुपपादयितुं स्मारयति ॥ **अत्रेति** ॥ नन्विन्द्रनामसमन्वयकथने तत्प्रकरणपठितसर्वनामसमन्वयः सिद्ध्यतीति किमनेनेत्यत आह ॥ **नामनिर्णयेनेति** ॥ **सङ्गतत्वादिति** ॥ अन्तस्स्थस्य विष्णुत्वे तद्गतत्वेन श्रुतादृश्यत्वस्यान्यनिष्ठत्वेन तद्युक्तानन्दमयोऽपि अन्य इति पूर्वोक्तरीत्या सङ्गतत्वादिति भावः । अत्र विशेषो भावबोधे बोध्यः ॥ **अधिदैवेति** ॥ देवाधिकाराख्यग्रन्थ-प्रतिपाद्यदैवेत्यर्थः । यथोक्तम् । अधिदैवतम् । देवाधिकारगं सर्वमिति ॥ ७ ॥

## विवृतिः

तथापि श्रुतेः स्वतो बलवत्वात्कथं लिङ्गैर्बाध इत्यत आह ॥ **दुर्बलेनापीति** ॥ ननु नामपादे लिङ्गसमन्वयकथनमनुपपन्नमित्यत आह ॥ **अत्र लिङ्गेति** ॥ नन्वानन्दमयाधिकरणे अन्नमयादिशब्दाना-मिवात्रापि वक्तव्यसमन्वयानामेवेन्द्रादिनाम्नां साक्षात्समन्वयः प्रतिपाद्यतां किमुक्तपरम्पराश्रयणेन ॥

(विवृतिः)

यदि च सूत्रस्याल्पाक्षरत्वार्थं प्राकरणिकलिङ्गसमन्वयोक्त्या तत्समभिव्याहृतानेकशब्दसमन्वयसाधनायैव-माश्रीयत इति तदपि तत्प्रकरणगतनाम्न एव कस्यचित्समन्वयः प्रतिपाद्यतां पादसङ्गतिरप्येवं सति साक्षात्सिद्ध्यतीत्यत आह ।। **लिङ्गस्य सङ्गतत्वादिति** । आनन्दमये प्रतीतस्य अदृश्यत्वस्यान्तस्थे श्रवणेन अन्तस्थस्य विष्णुभिन्नत्वे आनन्दमयस्यापि विष्णुभिन्नत्वं स्यादित्यवश्यमन्तस्थः क इति विचारणीय इत्याक्षेपसङ्गतेरन्तस्थत्वलिङ्ग एव भावात् ।। इन्द्रादिनाम्नि चाभावात् अदृश्यत्वे साक्षादिन्द्रादिनामसमभिव्याहाराभावादित्यर्थः ।। अत्राद्येसूत्रे लिङ्गरूपपक्षसाधकोक्तिः ।। द्वितीये परपक्षे भेदव्यपदेशरूपबाधकोक्तिरिति सूत्रक्रमः ।।

।। इति अन्तस्थत्वाधिकरणम् ।।

## ८. आकाशाधिकरणम्

'को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्' (तै.उ. २-७) इत्याकाश-स्याऽऽनन्दमयत्वे हेतुरुक्तः, न तु विष्णोरिति न मन्तव्यम् । यतः-

**।। ॐ आकाशस्तल्लिङ्गात् ॐ ।। २२ ।।**

'अस्य लोकस्य का गतिरित्याकाश इति होवाच' (छां.उ. १-९) इत्यत्र भूताकाशस्य प्राप्तिः । न चासौ युज्यते, किन्तु विष्णुरेव । 'स एष परोवरीयानुद्गीथः स एषोऽनन्तः' (छां.उ. १-९) इत्यादितल्लिङ्गात् ।

विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि । (ऋ. १-१५४-१)

परो मात्रया तन्वा वृधान (ऋ.सं. ७-९८-१) इत्यादिना तस्यैव (तस्य पा.) हि तल्लिङ्गम् ।

'अनन्तो भगवान्ब्रह्मा आनन्देत्यादिभिः पदैः ।
प्रोच्यते विष्णुरवैकः परेषामुपचारत' इति ब्राह्मे ।

'नामानि सर्वाणि यमाविशन्ति' इति (भाल्लवेयश्रुतिः) चोक्तम् ।। २२ ।।

## सत्तर्कदीपावली

इन्द्रादिजीवेष्वसम्भावितधर्मोपदेशात्तेभ्योऽन्यः परमात्मा विष्णुरित्युक्तम् । उपर्याकाशादिष्वसम्भावितलिङ्गनिर्देशात्तेभ्योऽन्य इत्येतत्प्रतिपादकसूत्रव्याख्यानं कर्तुमाह ॥ **को ह्येवेति** ॥ छान्दोग्ये श्रूयते । अस्य लोकस्य का गतिरिति आकाश इति होवाच सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति आकाशो ह्येवैभ्यो ज्यायान् । आकाशः परायणं स एष परोवरीयानुद्गीथः स एषोऽनन्त इति । तत्राकाशशब्दनिर्दिष्टो भूताकाश एव लोकप्रसिद्धत्वाद्भवेत् । ततश्च को ह्येवान्यात्कः प्राण्यात् । यदेष आकाश आनन्दो न स्यादित्यानन्दमयप्रकरणपठितोऽपि स एव भवेदिति । एवं प्राप्ते अभिधीयते । अत्राकाशशब्देन विष्णुरेवोच्यते । स एषोऽनन्त इत्यादिलिङ्गात् । अपरिमितगुणत्वं ह्यनन्तत्वं मुख्यतो विष्णोरेव श्रूयते विष्णोर्नु कमित्यादिश्रुतौ । भागवते चैतदुक्तम् । विष्णोर्नु वीर्यगणनां कतमोऽर्हतीह यः पार्थिवान्यपि कविर्विममे रजांसीति । अत एवानन्तशब्दो विष्णुरूढः । सर्वभूतोत्पादकत्वे हेतुः इति श्रवणात् आकाशशब्दार्थः परमात्मेति ज्ञायते । विष्णोरेव सर्वभूतोत्पादकत्वमुपनिषत्सूत्रसिद्धम् । (१।१।८)

## तत्त्वप्रदीपिका

आकाशस्तल्लिङ्गात् ॥ अस्य लोकस्य का गतिरिति शिलकप्रश्ने आकाश इति होवाच प्रवाहणः । गतिराश्रयः । 'अस्य लोकस्य का गतिरित्याकाश इति होवाच' इत्युदाहरणवाक्यम् । तत्र संशयः, किमयमाकाशशब्दो भूताकाशविषयः किं वा विष्णुविषय इति । 'यदेष आकाश आनन्दो न स्यात्' इत्याकाशशब्दस्य परविषयत्वोपलब्धिः लोकतो भूतविषयत्वोपलब्धिश्च संशयबीजम् । तदभिप्रायेण प्रावोचत् को ह्येवान्यादिति । अनेन सङ्गतिभाष्येण संशयबीजसूचनपरोऽपि गुरुतमः पूर्वत्रादिनमन्यत्रप्रसिद्धिकोटिबलदर्पादानन्दमयश्रुतौ प्रकरणबलात्प्रसाधितार्थमप्याकाशशब्दमनादरादसाधितमिव मन्वानमतिशङ्कमानमनुवदति । अनिष्णातमतयोऽनवसरेऽपि भ्रमन्तीति द्योतयन्प्रतिवदति च परमदार्ढ्याय । प्राचुर्येणान्यत्र प्रसिद्धिः पूर्वपक्षयुक्तिरनयोः पादयोः । विशेषयुक्तयश्च भगवताऽनुभाषिता एव सर्वत्र सम्यगनुव्याख्यानन्यायविवरणयोर्बुद्धिमार्गमारोहन्ति ।

परोवरीयस्त्वादेरनन्यथासिद्धलिङ्गाद्विष्णुरेवाऽकाश इति सिद्धान्तः ।

'परस्मादुत्तमं प्रोक्तं परो इति ततः परम् ।
परोवरं परं तस्मात् प्रोक्तं पारोवरीयकम् ॥' इति सामसंहितायाम् ।

उच्चत्वेन गीयत इति उद्गीथः । 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते, आकाशं प्रत्यस्तं यन्ति, आकाशो ह्येवैभ्यो ज्यायान्, आकाशः परायणम्' इति जगदुत्पादकत्वमुदीर्यमाणमादिशब्दादुपाददीत ।

(तत्त्वप्रदीपिका)

विष्णोर्नु वीर्यगणनां कतमोऽर्हतीह
यः पार्थिवान्यपि कविर्विममे रजांसि ।
चस्कम्भ यस्स्वरभसा चलितं त्रिपृष्ठं
यन्मां निशाम्य सदनादुरुकम्पमानम् ।

इति भागवतवचनाद्विष्णोर्नु कमित्यस्यार्थोऽवगम्यते । अन्यत्र प्रसिद्धेः पुनरतिदौर्बल्यं साधयति विष्णोरेव तत्तन्नामत्वने नामानि सर्वाणि यमाविशन्तीत्यादिना । आकाशशब्दः सर्वाधिभूतोपलक्षणार्थः ॥

## तत्त्वप्रकाशिका

अत्र लोकतोऽन्यत्र प्रसिद्धाकाशनाम्नो ब्रह्मणि समन्वयप्रतिपादनादस्ति शास्त्रादिसङ्गतिः । को ह्येवान्यादित्याकाशशब्द आनन्दमये प्रयुक्तः । स एव छन्दोगश्रुतौ पठ्यते । 'अस्य लोकस्य का गतिरित्याकाश इति होवाच । सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते । आकाशं प्रत्यस्तं यन्त्याकाशो ह्येवैभ्यो ज्यायानाकाशः परायणं स एप परोवरीयानुद्गीथः स एपोऽनन्तः' इति । स चाकाशो यदि विष्णोरन्यस्तदा प्रागुक्तोऽपि स एवेत्यानन्दमयोऽप्यन्यःप्रसज्येतः स निर्णेयः । स आकाशोऽत्र विपयः । विष्णुरन्यो वेति सन्देहः । आकाशशब्दस्याऽऽनन्दमये प्रयुक्तत्वमन्यत्र प्रसिद्धिश्च सन्देहबीजम् ।

भूताकाश एवायमिति पूर्वः पक्षः । आकाशशब्दस्य तत्र रूढत्वात् । न च वाच्यं योगवृत्त्याऽऽकाश-शब्दो विष्णौ सावकाश इति । बाधकं विनाऽमुख्यार्थाङ्गीकारायोगात् । न चाकाशस्य भगवदधीनत्वेन तत्रैवाऽऽकाशशब्दो मुख्य इति युक्तम् । आकाशस्याचेतनत्वेनान्याधीनत्वायोगात् । चेतनस्य हि चेष्टादावन्याधीनत्वं सम्भवतीति । आकाशशब्दस्यावकाशेऽपि रूढत्वादत्र भूताकाशग्रहणे को विशेपहेतुरिति चेत् पृथिवीगतित्वोपपादनाय सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त इत्यादिनाऽऽकाशस्य सर्वभूतकारणत्वलयाधिकरणत्वादेरुक्तत्वात् । तस्माकाशाद्वायुरित्यादिना भूताकाशस्यैव प्रसिद्धमतो भूताकाश एवायमिति मनसि निधाय पूर्वपक्षफलमाह ॥ **को हीति** ॥ एवमाकाशे छन्दोगश्रुत्युक्ते भूताकाशे सति को हीति तैत्तिरीयश्रुत्युक्तोऽपि स एव स्यात् । तथा च लोकचेष्टकत्वहेतुराकाशस्यैवाऽऽनन्दमयत्वे कथितः स्यान्न विष्णोस्ततश्च स एवाऽऽनन्दमयो भवति । आकाशस्याचेतनत्वेनाऽऽनन्दानुपपत्तावप्यभिमानिद्वारा तदुपपत्तेरिति भावः । अनेनैवाकाशशब्दस्याऽऽनन्दमये प्रयुक्तत्वाद्विष्णुराकाशः किं न स्यादिति परास्तम् । रूढेर्बलवत्त्वेन तस्यापि बाधोपपत्तेरिति ।

सिद्धान्तयति ॥ **इतीति** ॥ कुतो न मन्तव्यमित्याशङ्कायां हेतुतया सूत्रमुपादत्ते ॥ **यत इति** ॥ विपयादेः पूर्वं मुखतोऽनुक्तेस्तदनुवादपूर्वकं सूत्रं व्याचष्टे ॥ **अस्येति** ॥ यद्यप्यस्य लोकस्य का गतिरिति

(तत्त्वप्रकाशिका)

वाक्ये भूताकाशस्योक्तरीत्याऽस्ति प्रतिपाद्यत्वप्राप्तिस्तथापि नासावत्र वाच्यो युज्यतेऽपि तु विष्णुरेव युज्यते। परोवरीयस्त्वादिविष्णुलिङ्गस्याऽऽकाशनिष्ठतया श्रवणात्। एवं यतस्तल्लिङ्गाच्छन्दोगश्रुत्युक्ताऽऽकाशो विष्णुस्ततश्च को ह्येत्यत्रापि स एव प्रतिपाद्यत इति तस्यैवाऽऽनन्दमयत्वे हेतुरुक्तोऽत आकाशस्याऽऽनन्दमयत्वे हेतुरुक्त इति न मन्तव्यमित्यर्थः।

'परस्मादुत्तमं प्रोक्तं परो इति ततः परम्।
परोवरं परं तस्मात्प्रोक्तं पारोवरीयकम्'

इति स्मृतिः। उच्चत्वेन गीत उद्गीतः स एवोद्गीथः। ननु सर्वोत्तमत्वानन्तत्वयोः कुतो विष्णुलिङ्गत्वमित्यत आह॥ **विष्णोरिति**॥ विष्णोर्वीर्याणि को नु प्रवक्ति योऽपि पार्थिवपरमाणून् गणयतीति तस्यानन्तत्वमुच्यते। परो मात्रया इत्यनेन सर्वोत्तमत्वम्। नन्वनन्तत्वम् 'अनन्ताकाशवत्पश्यन्' इत्याकाशस्यापि स्मर्यतेऽतः कथं विष्णोः लिङ्गम् इत्यत आह॥ **अनन्त इति**॥ ननु श्रुत्या पूर्वपक्षिते कथं लिङ्गेन निर्णयो लिङ्गस्य श्रुतितो दौर्बल्यादित्यत आह॥ **नामानीति**॥ श्रुत्या पूर्वपक्षितेऽपि लिङ्गमात्रेण निर्णयो घटते। आकाशश्रुतेः नामानि सर्वाणीति श्रुतिबलेन विष्णौ सावकाशत्वाल्लिङ्गस्य चाऽऽकाशेऽनवकाशत्वम्। दुर्बलेनापि निरवकाशेन प्रबलस्यापि सावकाशस्य बाधोपपत्तेरिति भावः। अस्तु लिङ्गेन श्रुतेर्बाधः तथाऽपि विष्णौ श्रुतिरमुख्यैवाऽन्यत्र रूढत्वात् विष्णौ यौगिकत्वात् इति चेन्न। आकाशस्य भगवदधीनत्वेन तत्रैव मुख्यत्वात् महायोगविद्वद्रूढ्योर्भावाच्च। न चाऽऽकाशस्याऽपराधीनत्वात्। 'नभो ददाति श्वसतां मार्गं यन्नियमाददः' इत्यादेः। न च भूतकारणत्वोक्तिविरोधः। तस्य विष्णावेव सम्भवात्। तस्मादाधिभौतिकसर्वशब्दोपलक्षकाकाशशब्दवाच्यो विष्णुरेवेति स एवाऽऽनन्दमय इति स्थितम् ॥ २२, अ० ८॥

## गुर्वर्थदीपिका

रूढेर्योगापवादकत्ववद्योगस्य रूढ्यपवादकत्वाभावान्न तद्वन्मुख्यतेति भावेनोक्तम् अमुख्यार्थाङ्गीकारायोगादिति न तु सर्वथाऽमुख्यत्वम्। पाचकादिशब्दानां पाकादिकर्तरि लक्षणोपचारयोरनङ्गीकारेण योगस्यैव वक्तव्यत्वात्तस्य च मैत्रेऽपि प्रयुज्यमानत्वेन चैत्रत्वाद्यनिमित्तकस्यात एव केवलयोगवत्तया शिष्टैः परिगृहीतस्य चैत्रमैत्रनिष्ठचैत्रत्वादिरूढेरपवादकत्वात्क्वचिद्योगोऽपि बलीयानिति हेतोः मन्दस्येयमाशङ्केति ज्ञेयम्। किञ्च योगरूढिस्थलीयपङ्कजादि पदयोगस्य पद्मत्वादिरूढिमपेक्ष्य शिष्टैस्तत्रैव प्रयुज्यमानतया तदधीनत्वादस्तु तथा तस्यापहारः। आ समन्तात् प्रकाशमानत्वरूपाऽऽकाशपदयोगस्तु स्वस्याऽऽकाशे सर्वथाऽविद्यमानत्वेनाऽऽकाशत्वमपेक्ष्य शिष्टैराकाशे कदाप्यप्रयुज्यमानत्वात्कथं तदधीनः।

(गुर्वर्थदीपिका)

अतस्तामुल्लङ्घ्य यत्रातिशयेन स्वसम्भन्धोऽस्ति तत्र तमेव महाकाशं कथं न कुर्यादिति सूत्रकृतो भावः । 'अस्य लोकस्य का गतिरित्ययं लोक इति होवाच' इति पूर्ववाक्ये स्वर्गसाधनभूलोकस्य प्रस्तुतत्वादस्य लोकस्य का गतिरित्यत्रापि पृथिवीलोकगतित्वस्यैव प्रस्तुतिरिति भावेनोक्तं– **पृथिवीति** । अनन्तत्वस्य सर्वोत्तमत्वहेतुतयोक्तमात्रापरत्वात्मकत्वात् प्रथममुपपादनम् । 'सर्वाणि ह वा इमानि भूतानि' इत्युक्तसर्वभूतकारणत्वस्य भूतचतुष्टयमात्रकारणे भूताकाशे सङ्कोचनीयत्वाद्धरौ तदभावात्तस्य विष्णावेव सम्भवादित्युक्तम् । इत्याकाशाधिकरणम् ॥

## भावबोधः

सू० ॥ ॐ आकाशस्तल्लिङ्गात् ॐ ॥ श्रुत्यधिकरणसङ्गती दर्शयति– **को हीत्यादिना** ॥ साक्षादव्यवहितपूर्वाधिकरणसङ्गतिस्तु–

चेष्टा हि चेतनानां या सा भवेत् तत्प्रसादतः ।
अचेतनस्वभावस्तु विवरादिः कथं ततः ॥

इत्यनुव्याख्यानोक्तरीत्या पूर्वाधिकरणसिद्धान्तन्यायोपमर्देन पूर्वपक्षोत्थानादिति ज्ञातव्यम् । **विष्णुरन्यो वेति** । अत्राकाशः किं भूताकाशः, उत ब्रह्मेति चिन्ता । तदर्थमाकाशश्रुतिरनन्तत्वादिलिङ्गबाधिका, उत स्वयं तद्बाध्येति । तदर्थं सा श्रुतिः किं निरवकाशा, उत सावकाशेति । तदर्थम् आकाशशब्द-प्रवृत्तिनिमित्तं विवरत्वादिकं किमिन्द्रादिशब्दप्रवृत्तिनिमित्तैश्वर्यादिसमानयोगक्षेमं न भवत्युत भवतीति । तदर्थमचेतनस्वभावः किं विष्ण्वनधीन उत तदधीन इति । तदर्थं तस्य तदधीनत्व एतत्कल्पकत्वे-नाभिमतानन्तत्वादिलिङ्गनिरवकाशत्वे च प्रमाणं नास्ति उतास्तीति । 'भूताकाशस्य प्राप्तिः' इति भाष्याभिप्रायमाह आकाशशब्दस्येति ।

नन्विदं पूर्वाधिकरणन्यायेन गतार्थमित्याशङ्कानिषेधपूर्वकं तद्धेतुत्वेन 'चेष्टा हि चेतनानां या सा' इति पूर्वोदाहृतानुव्याख्यानं मनसि निधायाभ्यधिकाशङ्कामाह– **न चाकाशस्येत्यादिना** । आकशस्या-चेतनत्वेनेत्यनेनाधिभूताध्यात्माधिदैवगतानामपि शब्दानामचेतनत्वजीवान्वयव्यतिरेकनित्यत्वेषु विद्यमाने-ष्वपीति न्यायविवरणे अचेतनत्वेत्यादेः अधिभूतेत्यादिना यथाक्रमं सम्बन्धं विवक्षित्वा बुद्ध्या विविच्याचेतनत्वे विद्यमान इत्येतद्व्याख्यातं भवति । भाष्ये विषयोपस्थापकतया आकाश इति होवाचेत्ये-तावत्युदाहर्तव्येऽस्य लोकस्येत्यादिपूर्ववाक्योदाहरणप्रयोजनं तन्निरसनीयाशङ्काप्रदर्शनपूर्वकमाह–

(भाववोधः)

**आकाशशब्दस्येति** ।। पृथिवीगतित्वेति । अस्य लोकस्य का गतिरित्याकाश इति होवाचेत्यनेनोक्तपृथिवीगतित्वोपपादनायेत्यर्थः । अनुव्याख्यानोक्तविवरत्वं तु 'प्राणेन सृष्टावन्तरिक्षं च वायुश्चान्तरिक्षं वानुचरन्ति' इत्यादिश्रुत्या–

शब्दामात्रमभूत्तस्मान्नभः श्रोत्रन्तु शब्दगम् ।
भूतानां छिद्रदातृत्वम् ।।

इत्यादिस्मृत्या च सिद्धमिति तत्रापि भूताकाशग्रहणेन न तद्विरोध इति भावः । इति मनसि निधायेति । अन्यथा विषयसंशयाद्यनुक्त्वा पूर्वपक्षफलवचनस्यासङ्गतत्वादिति भावः । अपेक्षितं पूरयन् को हीति भाष्यं व्याचष्टेआकाशे छन्दोगश्रुत्युक्त इत्यादिना ।। **अनेनैवेति** ।। आनन्दमयत्वस्याप्यभिमानिद्वारा भूताकाशे वक्तुं शक्यत्वेनैवेत्यर्थः । नन्वाकाशशब्दं योगेन विष्णुपरं कृत्वाऽऽनन्दमयत्वमेव साक्षात्तन्निष्ठं क्रियताम् । अभिमानिद्वारा तदुपपाद्याकाशशब्देन भूताकाशग्रहणे को विशेषहेतुरित्यत आह– **रूढेर्वलवत्त्वेनेति** ।। आकाशशब्दस्य भूताकाश इत्यर्थः ।। **तस्यापीति** ।। आनन्दमये प्रयुक्तस्याप्याकाशशब्दस्येत्यर्थः ।। **मुखतोऽनुक्तेरिति** ।। पूर्वपक्षफलकथनेन सूचितत्वादिति भावः । 'न चासौ युज्यते' इत्यत्र 'असौ' इति प्राप्तिपरामर्शे 'किन्तु विष्णोरेव' इति स्यात् । न तु 'विष्णुरेव' इति । अतः 'असौ' इत्याकाशपरं कृत्वा तस्य स्वरूपेण निषेधायोगात् अपेक्षितमध्याहृत्य व्याचष्टे– **नासावत्र वाच्य इति ।। इति स्मृतिरिति** ।। अनेन श्रुतौ परोवरीयस्त्वं नामोक्तस्मृत्यनुसारेण परोवरीयकत्वमेव, न तु परोवरत्वमिति सूचितं भवति । अनन्तत्वमुच्यत इति । गुणतोऽनन्तत्वस्याप्यनन्तशब्दार्थत्वादिति भावः । लिङ्गस्य चाकाशे निरवकाशत्वादिति । अनेन 'अनन्यथासिद्धलिङ्गैः' इति न्यायविवरणं व्याख्यातं भवति । तत्र 'लिङ्गैः' इति बहुवचनमनित्येष्वितिवद्विवेक्तव्यम् । एवमुत्तरत्रापि ज्ञेयम् । तथापि कथं निर्णय इत्यतः सन्दिग्धश्रुतिलिङ्गाभ्यामुक्ताभ्यामप्यसन्दिग्धयोः केवलयोरेव वलवत्त्वमिति न्यायविवरणं मनसि निधायाऽऽह– **दुर्वलेनापीति** ।। अनेन 'असन्दिग्धस्य केवलस्यैव लिङ्गस्य' इति न्यायविवरणं बुद्ध्या विवेकेनात्र योजितं भवति । एवमुत्तरत्रापि नेयम् । समग्रतदक्षरयोजना तु गायत्र्यधिकरणे कथ्यते । तस्य विष्णावेवेति । सर्वाणि ह वेति सर्वभूतकारणत्वमाकाशस्योच्यते । तच्चाकाशपदेन विष्णुग्रहण एव सम्भवति । 'आत्मनः आकाशः सम्भूतः' इत्यादिना विष्णोरेव सर्वभूतकारणत्वस्य प्रमितत्वात् । भूताकाशस्य तु स्वव्यतिरिक्तभूतकारणत्वेन तद्ग्रहणे सर्वशब्दसङ्कोचः कर्तव्य इति भावः ।। ४ ।।

## भावदीपः

॥ ॐ आकाशस्तल्लिङ्गात् ॐ ॥ द्वेधा ह्यन्यत्रप्रसिद्धाः शब्दाः लोकतो वा लोकप्रसिद्धश्रुति-लिङ्गादिसाहित्येन वा । तत्राद्याः आद्यपादे द्वितीयास्तु द्वितीयपादे समन्वीयन्त इति भावेनाह ॥ **लोक इति** ॥ लोकप्रयोगत इत्यर्थः । भाष्ये पूर्वपक्षफलोक्त्या सूचिते श्रुत्यधिकरणसङ्गती स्वयमाह ॥ **को हीति** ॥ **स एवेति** ॥ इतः पूर्वं क्वापि लोकप्रसिद्धेरत्याजनेन लोकप्रसिद्ध्या सर्वत्रैकार्थत्वादिति भावः ॥ **छन्दोगेति** ॥ आद्ये अध्याये विष्णुलिङ्गानां दूरे श्रवणात् तदन्तवाक्योक्तिः ॥ प्रागुक्तोऽपि स एवेति ॥ भूते प्रसिद्धिमात्रेण ब्रह्मलिङ्गानामन्यथानयनस्य छान्दोग्य इवात्रापि सम्भवादिति भावः । वक्ष्यति च तथा च लोकचेष्टकत्वहेतुरित्यादि ॥ **स आकाश इति** ॥ शालावत्यकृतपृथिवीगतिप्रश्नं प्रत्युत्तरत्वेनोक्त इत्यर्थः । भूताकाशस्य प्राप्तिरिति भाष्यं व्याचष्टे ॥ **भूतेति** ॥ आकाशपदोक्त्या लब्धं हेतुमाह ॥ **रूढत्वादिति** ॥ विष्णौ तु न रूढिरिति भावः । पूर्वोक्तरीत्या गतार्थत्वमाशङ्कते ॥ **न चेति** ॥ तन्न्यायविषयत्वमाह ॥ **बाधकं विनेति** ॥ अनन्तत्वादिलिङ्गं तु रूढाकाशश्रुत्यनुरोधेन भूते कथञ्चिद्योज्यमिति भावः । एवं च पूर्वत्र समुद्रस्थत्वादेर्भाष्योक्तश्रुत्यादिना विष्ण्वेकनिष्ठत्वनिश्चयेन निरवकाशलिङ्गेनेन्द्रादिश्रुतेरङ्गरूढिबाधेन योगवृत्त्या विष्णुनिष्ठत्वोक्तावपीहानन्तत्वादेर्विष्णुनिष्ठत्वानिश्चयेन पूर्वन्यायाविषयत्वान्न तेनास्य गतार्थत्वमिति सूचितम् । एतेन भाष्ये पूर्वपक्षप्रापकविशेषहेत्व-नुक्तेस्तात्पर्यमुद्घाटितं ध्येयम् । एवमग्रेऽपि । सुधायां तु अनन्तत्वादिलिङ्गानां वास्तवं निरवकाशत्वमुपेत्य गतार्थतामाशङ्क्याऽभ्यधिकाऽऽशङ्कोक्ता । अत एव तत्र सुतरां निरवकाशलिङ्गादित्युक्तम् । किञ्च योगो हि प्रवृत्तिनिमित्तस्य तद्गतत्वेन वा तदधीनत्वादर्थवदिति वक्ष्यमाणन्यायेनान्यगतस्य तदधीनत्वाद्वा द्वेधा पूर्वमुक्तः । तत्राद्यस्त्वशक्यशङ्कः । आकाशपदप्रवृत्तिनिमित्तस्य विवरत्वस्याऽऽकाशस्वभावत्वात् । द्वितीयं निरसितुमाशङ्कते ॥ **न चाऽऽकाशस्येति** ॥ आकाशपदप्रवृत्तिनिमित्तविवरत्वादेराकाशस्वभावत्वात् आकाशस्य तदधीनत्वानधीनत्वाभ्यां विवरत्वस्यापि ते स्यातामिति भावेनाकाशस्येत्येवोक्तम् ॥ **न त्वाकाशत्वस्येति** ॥

''चेष्टा हि चेतनानां या सा भवेत्तत्प्रसादतः ।
अचेतनस्वभावस्तु विवरादिः कथं ततः''

इत्यनुभाष्योक्तसमाधिमाह ॥ **आकाशस्येति** ॥ यद्वा द्विविधयोगमध्ये आद्यस्य निरासो बाधकं विनेत्यादि । आकाशपदप्रवृत्तिहेतोराकाशस्वभावतया विष्णावसम्भवाच्चेत्यपि ध्येयम् । द्वितीयस्य शङ्कापूर्वं

(भावदीपः)

निरासो न चाकाशस्येत्यादि ॥ **मुख्य इतीति** ॥ 'स्वातन्त्र्यं तद्गतत्वं च शब्दवृत्तेर्हि कारणम् । स्वातन्त्र्यं तत्र मुख्यं स्यात्' इत्यनुभाष्योक्तेरिति भावः । एवं च विनैवाभ्यधिकाशङ्कां पूर्वन्यायाविषयत्वेनेह टीकायां पूर्वपक्षप्रवृत्तिरभिमतेत्याहुः । आकाशस्य प्राप्तिरित्यनुक्त्वा भाष्ये भूतेत्युक्तेर्भावं विवृण्वानः तदुपपादकत्वेनास्य लोकस्येति पूर्वांशोक्तिरिति वक्तुं तटस्थशङ्कामाह ॥ **आकाशेति** ॥ अवकाशे अव्याकृताकाश इत्यर्थः ॥ **सर्वभूतेति** ॥ स्वेतरसर्वभूतेत्यर्थः । अत्र रूढत्वादिनोक्तः पूर्वपक्षो वाचकशब्दरूपप्रमाणाश्रितः । आकाशस्याचनत्वेनेत्यादिनोक्तस्तु शब्दप्रवृत्तिहेतुरूपप्रमेयाश्रित इत्याहुः । भाष्योक्तेर्निर्बीजत्वभ्रमनिरासायाह ॥ **इति मनसीति** ॥ भूताकाश एवायमित्यादिनोक्तमित्यर्थः । स्वोक्तं सर्वं भाष्ये पूर्वत्र योज्यमिति भावेन भाष्यं योजयति ॥ **एवमिति** ॥ **स एवेति** ॥ रुढ्या भूतप्राप्तिबलेनात्रत्यानन्तत्वादिब्रह्मलिङ्गस्य च तत्रापि विश्वचेष्टकत्वरूपब्रह्मलिङ्गस्याकाशे योजनीयत्वादिति भावः ॥ **अनेनैवेति** ॥ उक्तरीत्याऽऽनन्दमयस्याप्याक्षेपसम्भवेनैवेत्यर्थः ॥ **मुखत इति** ॥ फलोक्तिपरवाक्येन सूचितत्वान्मुखत इत्युक्तिः । व्याघातादिभ्रान्तिं निरस्यन् भाष्यं व्याचष्टे ॥ **यद्यपीति** ॥ तल्लिङ्गात् इत्यत्र तदिति तन्त्रं षष्ठ्यन्तं सप्तम्यन्तं चेति मत्त्वाऽऽह ॥ **विष्णुलिङ्गस्येति** ॥ हेतुतया सूत्रमुपादत्त इत्युक्तं व्यनक्ति ॥ **एवमिति** ॥ **स एवेति** ॥ निरवकाशलिङ्गेन भूते अज्ञप्रसिद्धिबाधस्य छान्दोग्यवाक्य इव तैत्तिरीयवाक्येऽपि विश्वचेष्टकत्वरूपनिरवकाशब्रह्मलिङ्गभावेन भूते अज्ञप्रसिद्धिबाधस्य तुल्यत्वादिति भावः । भाष्ये अत्रानुक्तमपि द्वितीयछान्दोग्यभाष्योक्तमर्थं व्यनक्ति ॥ **परस्मादिति** ॥ उच्चोऽसौ गीयते चेति छान्दोग्यभाष्योक्तेः । 'उद्गीयमान उद्गीथो भगवान् पुरुषोत्तमः' इति स्मृतेश्चाह ॥ **उच्चत्वेनेति** ॥ सर्वोत्तमत्वेन परोवरीयस्त्वोद्गीथत्वयोर्द्वयोरप्युक्तिः । क कः । प्रवोचं प्रवक्ति । विममे गणयति । तत्वप्रदीपे तु

> विष्णोर्नु वीर्यगणनां कतमोऽर्हतीह
> यः पार्थिवान्यपि कविर्विममे रजांसि ।
> चस्कम्भ यः स्वरभसाचलितं त्रिपृष्ठं
> यस्मां निशाम्य सदनादुरुकम्पमानम् ॥

इति भागवतवचनादस्यार्थोऽवगम्यत इत्युक्तम् । परो मात्रयेति श्रुत्यर्थो जन्मादिनयेऽभिहितः ॥ **स्मर्यत इति** ॥ पुरुषार्थनयभाष्योक्तभविष्यत्पर्वस्मृतिकर्त्रेत्यर्थः । एतेनानन्यथासिद्धलिङ्गैरिति न्यायविवरणोक्तमनन्यथासिद्धत्वं उपपादितं भवति ॥ **श्रुतिबलेनेति** ॥ श्रुत्यर्थस्त्वाद्यनयेऽभिहितः ।

(भावदीपः)

ततश्च किमित्ययोऽनन्यथासिद्धलिङ्गैः भगवद्विषयत्वमेव इत्यन्यत्रोक्तं हृदि कृत्वाऽऽह ॥ **दुर्बलेनापीति** ॥ 'तथैव ह्यधिभूतगैः । अन्नादिशब्दैर्भगवानेको मुख्यतयोदितः । शब्दप्रवृत्तिहेतूनां तस्मिन्मुख्यसमन्वयात्' इत्याद्यनुभाष्यार्थं व्यावर्त्यशङ्कापूर्वमाह ॥ **अस्त्विति** ॥ **आकाशस्येति** ॥ तथा च तत्स्वभावस्यापि विवरत्वस्य भगवदधीनत्वमेवेत्यर्थः ॥ **मुख्यत्वादिति** ॥ ''स्वातन्त्र्यं तत्र मुख्यं स्यात्'' इत्युक्तेरिति भावः । आकाशस्यावकाशदातृत्वस्येश्वरायत्तत्वमीश्वरस्य पृथक् तद्वत्त्वं चावगम्यत इति सुधोक्तदिशा 'सर्वभूतगुणैर्युक्तं देवं त्वं ज्ञातुमर्हसि' इति स्मृत्युक्तदिशा चावकाशदातृत्वरूपविवरत्वस्य निरवधिकतया तद्गतत्वाच्चेति भावेनाऽऽह ॥ **महायोगेति** ॥ अत एव 'विद्वद्रूढिरपि सिद्धा सा योगादेव लभ्यत' इत्युक्तेः । यद्वा 'एतद्ब्रह्म इदं वाव तत् योऽयं बहिर्धा पुरुषादाकाशः । यावान्वा अयमाकाशः । आकाशो वै नाम नामरूपयोः निर्वहिता' इत्यादिप्रयोगबाहुल्याच्चेति भावः । अत्र प्रतिनयं विष्णौ योगरूढिसमर्थनं तु सर्वत्रानुवृत्ततत्त्वितिशब्दे अवधारणार्थतुशब्दसूचितं ज्ञेयम् । विष्णौ परममुख्य-वृत्त्यभावेऽन्यस्मिंस्तद्भावे वाऽवधारणायोगादाकाशस्याचेतनत्वेनान्याधीनत्वायोगादिति प्रागुक्तमनूद्यानु-भाष्योक्तसमाधिमाह ॥ **न चाऽऽकाशस्येति** ॥ **इत्यादेरिति** ॥ तृतीयस्कन्धे आदिपदेन प्राणेन सृष्टावन्तरिक्षं च वायुश्च एतस्य वाक्षरस्य प्रशासने गार्गि द्यावाभूमी विधृते तिष्ठत इत्यादिश्रुतिर्ग्राह्या । अत्र युक्तिस्तु विवरत्वादिकं कारणतः स्वरूपतोऽप्यनागन्तुकम् । तथापि धर्मिण एवाकाशादेरुत्पत्ति-विनाशवतो जन्मस्थितिलयेष्वीशाधीनत्वे धर्मस्यापि तथाभावोऽवर्जनीयः । तस्य जन्मादिस्तु 'आत्मन आकाशः सम्भूतः' इत्यादिना सिद्ध इति छन्दोनये सुधायामुक्ता । सा च विवृता चन्द्रिकायाम् ।

अस्तु सच्छिद्रमिति या हरीच्छा तद्वशान्नभः ।
छिद्रात्मकं हि सञ्जातमन्यथा निबिडं भवेद् ।

इत्यादिना ॥ **विष्णावेवेति** ॥ आत्मन आकाश इत्यत्रेवासङ्कुचितसर्वभूतकारणत्वलाभादिति भावः । विश्वतोमुखत्वं व्यञ्जयन्सूत्रार्थमुपसंहरति ॥ **तस्मादिति** ॥ निरवकाशानेकलिङ्गभावादिति तल्लिङ्गा-दित्यस्यार्थः । आकाशस्तत्त्विति प्रतिज्ञांशार्थमाह ॥ **आधिभौतिकेति** ॥ अधिभूताध्यात्माधि-वेदगतानामिति न्यायविवरणोक्तेः । एतन्न्यायविषयाणामत्रैव वाच्यत्वात्सूत्रस्याल्पाक्षरत्वेन सर्वोक्तेरयोगात् । उपलक्षणत्वेन कस्यचिदुदाहर्तव्यत्वे सर्वभूतमूलकारणत्वेन प्राधान्यात्पूर्वाक्षेपकत्वेन सङ्गतत्वाच्चाकाश एवोदाहृतः सूत्र इति भावः । एवमग्रेऽपि । महायोगविद्वद्रूढिभावादाह ॥ **वाच्य इति** ॥ स एवानन्दमय इति फलोक्तिपरभाष्यार्थोपसंहारः ॥ २२ ॥ अ. ८ ॥

## अभिनवचन्द्रिका

ननु – तल्लिङ्गग्रहणं शक्यमकर्तुम् । 'अन्तस्तद्धर्मोपदेशा'दित्यतः तद्धर्मोपदेशादित्यनुवृत्यैव तल्लिङ्गादित्यर्थलाभसम्भवात् । सूत्रं चैवं सत्यल्पाक्षरं स्यात् । यद्यनुवर्तते 'भेदव्यपदेशाच्चान्य' इत्यत्राप्यनुवर्त्तेत । नैष दोषः । तत्राऽनुवृत्यभावेऽपि उत्तरसूत्रेऽनुवृत्तिसम्भवात् । तदुक्तं – महाभाष्ये– 'मण्डूकप्लुतयोऽधिकाराः । यथा मण्डूका उत्प्लुत्योत्प्लुत्य गच्छन्ति तद्वदधिकारा' इति । तस्मात् 'आकाशश्चे'त्येव सूत्रमस्त्विति चेत्, मैवं – पूर्वसूत्रे हि धर्मपदं ब्रह्माण्डवीर्यत्वसमुद्रस्थत्वादिधर्मपरं, तदेव चेदिहानुवर्तेत । इहापि ब्रह्माण्डवीर्यत्वादिधर्मपरमेव स्यात् । न च त आकाश उपलभ्यन्त इति असिद्धिशङ्का स्यात्, तत्परिहाराय शिष्याँणां मनःखेदो मा भूदिति तल्लिङ्गग्रहणम् । कथं तीर्हि 'अत एव प्राण' इत्यादौ अत एवेत्युक्तिः, असिद्धिशङ्कासाम्यादिति चेत्, न – अत्र हि 'परोवरीयानुद्गीथः स एषोऽनन्त' (छा.१-९-१) इति परोवरीयस्त्वमुच्यते । परोवरीयस्त्वं च महालक्ष्म्युत्तमत्वम् । 'सर्वस्मादुत्तमं प्रोक्तं परो इति ततः परम् । परोवरं परं तस्मात् प्रोक्तं पारोवरीयक'मिति उत्तराधिकरणे वक्ष्यमाणं श्रीपतित्वं चैतदेवेति नासिद्धिशङ्केति न कश्चिद्दोषः । पूर्वाधिकरणसङ्गतिमाह । **को हीति** ॥ आनन्दमयाधिकरणप्रतिपाद्यैतदधिकरणप्रतिपाद्ययोराकाशशब्दविषयत्वमेव सम्बन्ध इति भावः । अस्तु सङ्गतिः, तथापि आकाशस्य कुतो विष्णुत्वं समर्थनीयमित्यत आह – **स चाऽऽकाश इति** ॥ छन्दोगश्रुत्युक्ताकाशस्य विष्ण्वन्यबुद्ध्यै तैत्तरीयश्रुत्युक्ताऽऽकाशोऽपि अन्य एवेति बुद्धिः स्यादित्ययुक्तम् । तस्य को ह्येवान्यादिति हेतुव्यपदेशपूर्वकमानन्दमयत्वस्य समर्थितत्वात् । न च आनन्दमयत्वनिश्चयेऽपि विष्ण्वन्यत्वबुद्धिर्युक्ता । ब्रह्मशब्दाभ्यासादिना आनन्दमयो विष्णुरेवेति साधितत्वादिति चेत्, स्यादयं दोषः, यदि यस्य ब्रह्मशब्दाभ्यासादिना आनन्दमयो विष्णुरिति निश्चयः स एवाऽत्राधिकरणेऽधिकारीति ब्रूमः । न चैवं किंनाम प्रत्यधिकरणमधिकारिणो भिद्यन्ते । अधिकरणानां पृथग्विद्यात्वात् । उक्तं च सुधायाम्– 'सर्वाणि हि सूत्राणि प्रत्येकमनेकवेदवाक्यविचारपरत्वात् अवान्तरब्रह्मविद्या' इति । एवं च सति एतदधिकरणाधिकारिणः ब्रह्मशब्दाभ्यासादेरानन्दमयस्य विष्णुत्वनिश्चयाभावात्, अस्याऽऽकाशस्य विष्ण्वन्यत्वबुद्धौ प्रत्यभिज्ञानात् तैत्तिरीयश्रुत्युक्ताऽऽकाशानन्दमययोरप्यन्यत्वबुद्धिः स्यादेवेति न किञ्चिदनुपपन्नम् । एवमुत्तरत्रापि द्रष्टव्यम् । **तत्र रूढत्वादिति** ॥ नन्वन्यत्रप्रसिद्धिः सन्देहबीजमिति रूढेः सन्देहबीजत्वस्योक्तत्वात् पूर्वपक्षहेतुत्वाभिधानमयुक्तमिति चेत्, न आनन्दमये प्रयोगापेक्षया रूढेः प्राबल्यज्ञानविधुरस्य रूढिः सन्देहहेतुः, प्राबल्यज्ञस्य पूर्वपक्षहेतुरित्यङ्गीकारात् । एवमुत्तरत्रापि द्रष्टव्यम् ।

(अभिनवचन्द्रिका)

चेष्टा हि चेतनानां या सा भवेत्तत्प्रसादतः ।
अचेतनस्वभावस्तु विवरादिः कथं ततः' ॥

इत्यनुव्याख्यानदिशा अभ्यधिकाशङ्कामाह– **न चेति** ॥ आकाशस्येत्यतः परं 'इन्द्रादिव'दिति ग्राह्यम् । आकाशस्येति आकाशादिशब्दप्रवृत्तिनिमित्तस्य विवरत्वादेः स्वाभाविकस्य अन्याधीनत्वा-योगादित्यर्थः । **चेतनस्य हीति** ॥ अत्र सम्भवतीत्यतःपरं दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यादिति शेषो द्रष्टव्यः । **इति चेदिति** ॥ नेति शेषः । ननु स एवाऽऽनन्दमयो भवतीत्ययुक्तम् । अचेतनस्याऽऽनन्दाऽ-सम्भवादित्यत आह– **आकाशस्येति** ॥ अचेतनत्वेन स्वत आनन्दासम्भवेऽपि अभिमान्यनुग्रहेण आनन्दो भवेदेव । अभिमानिदेवानां कर्तुमकर्तुमन्यथाकर्तुं सामर्थ्यसद्भावादिति भावः । एतेन अभिमानिनि आनन्दमयत्वेऽपि आकाशस्य तदभावात्, आकाशस्याऽऽनन्दमयत्वे हेत्वभिधानमयुक्तम्, औपचारि-कानन्दमयत्वोपपादनायाऽऽनन्दसाधकहेतूपन्यासस्याऽकर्तव्यत्वादिति परास्तम् । व्यासानुग्रहेण कीटस्य राजत्वमिव देवतानुग्रहेणाऽचेतनस्याप्याकाशस्य आनन्दो भवतीत्यङ्गीकारात् । ननु अस्तु छन्दोगश्रुत्युक्त आकाशो भूताकाशः । तस्य तत्र रूढत्वात्, बाधकाभावे मुख्यार्थत्यागायोगात् । तथापि न तैत्तिरीय-श्रुत्युक्त आकाशो भूताकाशः । ब्रह्मशब्देन विष्ण्वभिन्नतया सिद्धे आनन्दमये आकाशशब्दप्रयोगेण तत्र रूढार्थग्रहणाऽयोगात्, रूढ्ययोगे च योगस्य ग्राह्यत्वेन विष्णोरेवाऽऽकाशत्वौचित्यात् । एवं च– तत्पूर्वाधिकरणाऽऽक्षेप इत्याशङ्क्य निषेधति – **अनेनेति** ॥ अनेनेत्युक्तं हेतुं विवृणोति – **रूढेरिति** ॥ इदमुक्तं भवति – स्यादयं तैत्तिरीयश्रुत्युक्तस्याऽऽकाशस्य विष्णुत्वाभ्युपगमः, यदि तद्गताकाशशब्दस्य रूढिबाधकमानन्दमस्य विष्णुत्वसाधकमनुमानं प्रबलं स्यात्, न चैवं रूढेर्बलवत्त्वेन तद्बलेनाकाशाऽऽनन्दमययोरभेदे सिद्धे तस्य विष्णुत्वसाधकानुमानस्य बाधितविषयत्वादिति । ननु सूत्रार्थनिरूपणावसरे 'आकाश इति होवाचे'(छा.१-९)त्यत्र भूताकाशस्य प्राप्तिः । न चाऽसौ युज्यत इति न वक्तव्यम् । असूत्रार्थत्वादित्यत आह– **विषयादेरिति** ॥ सत्यं न चासौ युज्यत इत्यन्तो न सूत्रार्थः, तथापि नैतद्ग्रन्थवैयर्थ्यं, पूर्वपक्षफलाभिधानेन सूचितस्य विषयादेः मन्दानां सुबोधत्वाय विषयादेरनुवादार्थत्वात् । अस्मिन् भाष्ये प्राज्ञानां मंदानां चाऽधिकार इति द्योतनाय विषयादिकं प्राक् सूचयित्वा पश्चादनुवादः कृत इति बोध्यम् । **नासावत्र वाच्य इति** ॥ असावत्र प्रतिपाद्य इति न युज्यत इत्यर्थः । **न मन्तव्यमित्यर्थ इति** ॥ इतः परं टीकायां 'परोवरीयान् सर्वोत्तम' इति वाक्यं लेखकदोषादुच्छिन्नमिति तद्वाक्यमिह द्रष्टव्यम् । अवश्यं चैतदेवं विज्ञेयम् । अन्यथा परस्मादिति श्रुत्युदाहरणमसङ्गतं स्यात् । 'परोवरीया'निति शब्दस्य कुतः सर्वोत्तमत्वमर्थ

(अभिनवचन्द्रिका)

इत्यत आह – **परस्मादिति** । अत्र स्मृतिरिति न प्रथमान्तपाठः । किन्तु स्मृतेरिति पञ्चम्यन्तः । एतेन स्मृतिरिति प्रथमान्तस्याऽनन्वय इति परास्तम् ॥ 'विष्णोर्नु वीर्यगणनां कतमोऽर्हतीह यः पार्थिवान्यपि कविर्विममे रजांसी'(२-७)ति भागवतानुसारेण श्रुतिं व्याचष्टे– **विष्णोर्वीर्याणीति** । कमित्यस्यार्थः क इति । प्रवोचमित्यस्यार्थः प्रवक्तीति । श्रुतौ 'प्रवोच'मिति लुङ्प्रयोगेऽपि प्रवक्तीति लट्प्रयोगः । अत्र लुङो न भूतकालार्थत्वं किन्तु सर्वकालार्थत्वमिति द्योतनाय । एतेन वर्तमाननिषेधेऽपि स्यादतीतादौ कश्चिदिति परास्तम् । तिपो मिवादेशः । तदुक्तं महाभाष्ये – 'तिङां च तिङो भवन्तीति वक्तव्यम् । चषालं ये अश्वयूपाय तक्षति तक्षन्तीति प्राप्त' इति । ततश्चैवं योजना – कं कः, विष्णोः वीर्याणि प्रवोचं नु प्रवक्तुमर्हति । ज्ञानाभावात् न कोऽपीत्यर्थः । ननु यः सर्वं ज्ञातुं प्रवक्तुं चाऽर्हति, अन्यथा सर्वज्ञत्वभङ्ग इत्यत आह– **यः पार्थिवानीति** ॥ योऽपि सर्वज्ञः सोऽपि पार्थिवानिरजांसि विममे काक्का नेति गम्यते । अयं भावः – विद्यमानस्याऽज्ञत्वमेव सर्वज्ञत्वविरोधि नतु अविद्यमानाऽज्ञत्वम् । एवं च पार्थिवपरमाणूनामानंत्येन सङ्ख्यापरिच्छेदाभावात् तदज्ञत्वं यथा न दोषाय एवमीश्वरगुणानां ततोऽप्यनन्त्वात् तदज्ञानं नतदोषाय किंतु गुण एवेति । **अस्त्वियति** ॥ अस्तु विष्णुलिङ्गेन श्रुतेर्बाधः ततश्चाऽऽकाशादिशब्दानां भगवत्परत्वनिर्णयश्च, तथापि – 'नामानि सर्वाणी'ति श्रुत्यवष्टम्भेनोक्तं विष्णोराकाशादिशब्दमुख्यार्थत्वं नोपपद्यते । यतस्तवापि मते विष्णावाकाशश्रुतिरमुख्यैव, गुणपूर्तिसिद्ध्ये विष्णावाकाशादिशब्दानां यौगिकत्वाङ्गीकारात् । अन्यत्रैव रूढत्वाङ्गीकारादिति भावः । एतेन – श्रुतिरमुख्यैवेति किं श्रुतेर्विष्णौ लाक्षणिकत्वं प्रतिज्ञायते उत यौगिकत्वम् । नाद्यः – यौगिकत्वेन लाक्षणिकत्वसाधनायोगात् । न द्वितीयः – साध्यावैशिष्ट्यादिति परास्तम् । यौगिकत्वप्रयुक्तरूढ्यवधिकामुख्यत्वविशेषसाधनस्येहाभिमतत्वात् ।

**पूर्वपक्षस्तु**– 'अस्य लोकस्ये'(छा.१-९)ति श्रुत्युक्ताऽऽकाशस्तावत् भूताकाशः । आकाशशब्दस्य तत्र रूढत्वात् । न चायमाकाशो विष्णुः । आकाशशब्दस्य तत्र यौगिकत्वादिति सत्प्रतिपक्षतेति वाच्यम् । योगस्य हीनबलत्वेनाऽप्रतिपक्षत्वात् । न चाकाशशब्दप्रवृत्तिनिमित्तस्याऽवकाशत्वस्य समवायेनाकाशवृत्तित्ववत् स्वातन्त्र्यलक्षणसम्बन्धेन हरावपि सत्त्वात् उभयत्रापि रूढिरविशिष्टेति रूढ्या भूताकाशत्वानिर्णय इति वाच्यम् । आकाशस्याऽचेतनत्वाद्भगवदधीनत्वाभावेन आकाशत्वस्य स्वस्वामिभावसम्बन्धेन तद्वृत्तित्वाभावात् । एवं छन्दोगश्रुत्युक्ताकाशे भूताकाशे सति तैत्तिरीयश्रुत्युक्ता-काशोऽपि रूढिबलादेव भूताकाशः । 'सर्वाणि हवा इमानी'(छा.१.९.१)ति तस्याऽऽकाशस्य

(अभिनवचन्द्रिका)

भूतकारणतयोक्तत्वात् कार्यगतचेष्टायाः कारणाधीनतादर्शनेन 'को ह्येवान्यादि'(तै.उ.२-१५)ति तैत्तिरीयश्रुत्युक्तजगच्चेष्टकत्वलिङ्गस्य सावकाशत्वेनाऽबाधकत्वात् । एवं च आनन्दमयोऽपि स एवेति न ब्रह्मजिज्ञासा सम्भवतीति ।

**सिद्धान्तस्तु–** 'अस्य लोकस्ये' त्यत्राऽऽकाशस्तावद्विष्णुः । निरवकाशपरोवरीयस्त्वादिविष्णुलिङ्गात् । आकाशशब्दस्य हरौ महायोगविद्वद्रूढिसद्भावेन तत्रैव मुख्यत्वात् । एवं च छन्दोगश्रुत्युक्ताऽऽकाशस्य विष्णुत्वे तैत्तिरीयश्रुत्युक्ताकाशोऽपि जगच्चेष्टकत्वलिङ्गबलादेव विष्णुः । चेष्टकत्वस्य कर्त्तर्येव मुख्यत्वात् । मुख्ये सम्भवति अमुख्यग्रहणायोगात् । सर्वचेष्टकत्वस्य सर्वोत्तमत्वव्याप्यत्वेन भूताकाशे सर्वोत्तमत्वस्याभावेन सर्वचेष्टकत्वाभावाच्च, आकाशस्य सर्वोपादनत्वाभावेन असङ्कुचितसर्वचेष्टकत्वासम्भवाच्च, अचेतनस्यानन्दाऽयोगाच्च । न च – अचेतनस्यापि चेतनानुग्रहेण आनन्दः सम्भवतीति वाच्यम् – अप्रामाणिकत्वात् । तस्मादाकाश आनन्दमयश्च स एवेति युक्ता ब्रह्मजिज्ञासेति सिद्धम् । (अ.८)

## वाक्यार्थमुक्तावली

ॐ आकाशस्तल्लिङ्गात् ॐ । अन्यत्र प्रसिद्धिश्शब्दानां द्वेधा । लोकतो वा लोकतः प्रसिद्धश्रुतिलिङ्गादिना वा तत्राद्या आद्यपादे द्वितीयास्तु द्वितीयपाद इति भावेनाह ।। **लोकत इति** ।। आनन्दमयाधिकरणे लोकत इत्यनुक्तिस्तु तेषां गुणिसामान्यवाचकत्वादिति बोध्यम् । विस्तरस्त्वन्यत्र भाष्ये । पूर्वपक्षफलोक्त्या सूचितश्रुत्यधिकरणसङ्गती स्वयमाह– **को हीति** । **प्रागुक्तोऽपीति** । इतः पूर्वं प्रसिद्धेरत्याजनेन लोकप्रसद्ध्या सर्वत्रैकार्थत्वादिति भावः । अव्यवहितसङ्गतिस्तु चेतनस्य हि चेष्टादावन्याधीनत्वं सम्भवतीति पूर्वाधिकरणसिद्धान्तन्यायावकाशेनात्र पूर्वपक्षोत्थानस्य वक्ष्यमाणत्वादिति बोध्यम् । **विष्णुरन्यो वेति** । तत्राकाशः किं भूताकाश उत ब्रह्मेति चिन्ता । तदर्थमाकाशश्रुतिरनन्तत्वादिलिङ्गबाधिकोत तद्बाध्येति । तदर्थं श्रुतिर्निरवकाशा लिङ्गं सावकाशमुत विपरीतमिति । **रूढत्वादिति** । विष्णौ तु न रूढिः । न च नामानि सर्वाणीति निगमबलाद्रूढिरस्तीति वाच्यम् । गगने आकाशशब्दस्य बहुप्रयोगवद्विशिष्य रूढिज्ञापकाभावादिति भावः । पूर्वाधिकरणन्यायेन गतार्थत्वमाशङ्क्य चेष्टा हि चेतनानां या सा भवेत् तत्प्रसादतः । अचेतनस्वभावस्तु विवरादिः कथं तत इत्यनुव्याख्यानं मनसि निधायाभ्यधिकाशङ्कामाह न चाकाशस्येत्यादिना ।। **चेतनस्येति** ।। इन्द्रादिशब्दप्रवृत्तिनिमित्तमैश्वर्यं वर्षणशोषणपालनादिरूपा चेतनसम्बन्धिनी चेष्टा सा चागन्तुकज्ञानेच्छादिकारण-

(वाक्यार्थमुक्तावली)

सापेक्षत्वात्स्वयमागन्तुकत्वाच्च कारणद्वारा स्वरूपश्च परमेश्वरायत्तेति युज्यते । आकाशादिशब्दप्रवृत्तिनिमित्तं तु विवरत्वादिकं न तावदागन्तुकत्वादिति भावः । भूताकशस्य प्राप्तिरिति । विशिष्य भूतग्रहणे हेतुमाशङ्कयाह आकाशशब्दस्येत्यादिना । अवकाशेऽव्याकृताकाशे अनन्तत्वादिलिङ्गन्तु कथञ्चियोज्यमिति भावः ॥ **पृथिवीगतित्वेति** ॥ अस्य लोकस्य का गतिरिति आकाश इति होवाचेत्यत्रेत्यर्थः । अनेनैवेति 'अभिमानिन्यानन्दमयत्वसम्भवेनेत्यर्थः । नन्वाकाशशब्दस्यापि योगेन सावकाशत्वसम्भवादानन्दमयत्वमेव साक्षाद्विष्णुनिष्ठं क्रियताम् । अभिमानद्वारा तदुपपाद्याकाशशब्देन भूताकाशग्रहणे को विशेषहेतुरित्यत आह– **रूढेरिति** ॥ अथवाऽनेनैवेत्यस्य विवरणमेतदिति ज्ञेयम् ॥ **मुख्त इति** ॥ पूर्वपक्षफलोक्तिपरभाष्ये सूचितत्वादिति भावः । न चासौ युज्यत इत्यत्रासावित्यनेन प्राप्तिपरामर्शो किं तु विष्णोरेवेत्युत्तरवाक्यं स्यान्न तु विष्णुरित्यतोऽसावित्याकाशपरामर्शो इति भावेन तस्य स्वरूपेण निषेधायोगात् अपेक्षितमध्याहृत्य व्याचष्टे । **नासावत्र वाच्य इति** । तल्लिङ्गादित्यत्र तदिति तन्त्रं षष्ठ्यन्तं सप्तम्यन्तं चेति मत्वाऽह । विष्णुलिङ्गस्याकाशनिष्ठतया श्रवणादिति हेतुतया सूत्रमुगन्यस्य व्याचष्ट इत्येतद्व्यञ्जयन् यतस्तल्लिङ्गादाकाशो विष्णुरतो न गन्तव्यमित्यन्वयमभिप्रेत्य व्याचष्टे । एवं **यत इत्यादिना** । परस्मादुत्तमं प्रोक्तं परो इत्यत्र पर उ स्थिते गुणे परो इति निष्पन्नमिति ज्ञेयम् । परं तस्मादिति । परोवरशब्दादतिशयेऽर्थे ईयसुन्प्रत्यये परोवरीय इति सिद्ध्यति । परोवरीय एव पारोवरीयकमिति ज्ञेयम् । अनन्तो भगवानित्यादौ शाखान्तरनिर्णयाय भगवानित्याद्युक्तिः । अत एव यदेव आकाश आनन्दो न स्यादित्याकाशस्य विष्णुत्वे आनन्दपदोपादानम् । यद्यप्यनन्त इति श्रुतिः । तथापि यौगिकत्वाल्लिङ्गत्वोक्तिरिति ज्ञेयम् । नामानि सर्वाणीति श्रुतिबलेनेति । सर्वशब्दसङ्कोचकल्पकाभावादिति भावः ॥ **यौगिकत्वादिति** ॥ नामानि सर्वाणीति श्रुतेस्सामान्यश्रुतित्वात् योगेनाविशान्तीति श्रुत्यर्थोपपत्तेश्चेति भावः । आकाशस्य भगवदधीनत्वेनेति । तदधीनत्वादर्थवदिति वक्ष्यमाणन्यायेन तत्रैव रूढेर्मुख्यत्वादिति अर्थः । तदुक्तम् । स्वातन्त्र्यं तद्गतत्वं च शब्दवृत्तेर्हि कारणम् । स्वातन्त्र्यं तत्र मुख्यं स्यादिति । सर्वभूतगुणैर्युक्तं देवं त्वं ज्ञातुमर्हसीति स्मृतेः । अन्तरः खवदिति सङ्ग्रहभाष्योक्तेश्चावकाशदातृत्वरूपाकाशपदप्रवृत्तिनिमित्तस्य निरवधिकतया तत्र विद्यमानत्वान्महायोगोऽप्यस्तीति भावेनाह । **महायोगेनेति** ॥ अत एव विद्वद्रूढिर्वैदिका स्यात्सा योगादेव लभ्यत इत्युक्तदिशा विद्वद्रूढिरपि सिद्धा विष्ण्वावेति । आत्मन आकाशः सम्भूत इत्यादिना विष्णोरेव सर्वभूतकारणत्वस्य प्रमितत्वात् । भूताकाशस्य तु स्वव्यतिरिक्तभूतकारणत्वेन तद्ग्रहणे सर्वशब्दसङ्कोचप्रसक्तेरिति भावः ।

## तत्त्वसुबोधिनी

ॐ आकाशस्तल्लिङ्गात् ॐ ॥ **अस्ति शास्त्रादिसङ्गतिरिति** ॥ अत्र ब्रह्मणीत्यनेन शास्त्रसङ्गतिः । समन्वयेत्यनेनाध्यायसङ्गतिः । अन्यत्र प्रसिद्धनाम्नः इत्यन्तेन पादसङ्गतिः सूचिता भवतीत्येवमुत्तरत्रापि द्रष्टव्यम् । यस्तु द्वितीयपादे वैश्वानराधिकरणे नामसमन्वयमुखेन लिङ्गसमन्वय उक्तः स प्रथमपादे अन्यत्रनिरूढनामसमन्वयस्योक्तत्वेन बुद्धावारोहात् पाचकत्वादिलिङ्गानामपि अन्यत्र निरूढत्वात् बहुत्वाच्च युक्त इत्यर्थः । अत्राद्ये सूत्रे लिङ्गरूपस्वपक्षसाधकोक्तिः । द्वितीये परपक्षे भेदव्यपदेशरूपबाधकोक्तिरिति सूत्रक्रमः ॥ श्रुत्यधिकरणसङ्गती दर्शयति । **को हीति** । अव्यवहिताधिकरणसङ्गतिस्तु अधिकां शङ्कां कृत्वा पूर्वाधिकरणसिद्धान्तन्याय एवातिदिश्यत इत्यातिदेशकी । को हीति भाष्यन्तु पूर्वपक्षे आनन्दमयाधिकरणाक्षेपात् सिद्धान्ते च तत्समाधानात् सफलोऽयं विचार इति चिन्तायाः साफल्यमात्रपरमित्यवधेयम् ॥ **योगवृत्त्येति** ॥ आसमन्तात् काशते प्रकाशते इत्याकाश इति योगवृत्त्येत्यर्थः । नन्विदं पूर्वाधिकरणन्यायेन गतार्थमित्यतोऽभ्यधिकाशङ्कामाह । न चाकाशस्येत्यादिना । अचेतनत्वेऽपि कुतोऽनन्याधीनत्वमत आह– **चेतनस्य हीति** ॥ **पृथिवीगतित्वेति** ॥ 'अस्य लोकस्य का गतिरित्याकाश इति होवाच' इत्यनेनोक्तपृथिवीगतित्वोपपादनायेत्यर्थः ॥ **तच्चेति** ॥ सर्वभूतकारण-त्वादिकमित्यर्थः । इति मनसि निधायेति । अन्यथा विषयसंशयाद्यनुक्त्वा पूर्वपक्षफलवचनस्यासङ्गतत्वादिति भावः । नन्वाकाशस्य आनन्दमयत्वमयुक्तं तस्याचेतनत्वादित्यत आह । **आकाशस्येति** । **अनेनैवेति** । अभिमानिद्वारा आनन्दमयत्वोपपत्तिकथनेनेत्यर्थः । नन्वाकाशशब्दं योगेन विष्णुपरं कृत्वा आनन्दमयत्वमेव साक्षात्तन्निष्ठं क्रियताम् । अभिमानिद्वारा तदुपपाद्य आकाशशब्देन भूताकाशग्रहणे को विशेषहेतुरित्यत आह ॥ **रूढेः बलवत्त्वेनेति** ॥ आकाशशब्दस्य भूताकाश इति अर्थः ॥ **तस्यापीति** ॥ आनन्दमये प्रयुक्तस्य आकाशशब्दस्यापीत्यर्थः ॥ **मुखतोऽनुक्तेरिति** ॥ पूर्वपक्षफलकथनेन सूचितत्वादिति भावः । न चासौ युज्यते इत्यत्रासाविति प्राप्तिपरामर्शो किन्तु विष्णोरेवेति स्यात् । **न तु विष्णुरेवेति** ॥ अत असाविति आकाशपरं कृत्वा तस्य स्वरूपेण निषेधायोगादपेक्षितमध्याहृत्य व्याचष्टे ॥ **नासावत्र वाच्य इति** ॥ हेतुरुक्त उपदिष्टः । जगच्चेष्टकत्वस्य ॥ **इति स्मृतिरिति** ॥ अनेन श्रुतौ परोवरीयस्त्वं नाम उक्तस्मृत्यनुसारेण परोवरीयकत्वमेव न तु परोवरत्वमिति सूचितं भवति ॥ **अनन्तत्वमुच्यत इति** ॥ गुणतोऽनन्तत्वस्याप्यनन्तशब्दार्थत्वादिति भावः । नन्वाकाशश्रुतेः विष्णौ सावकाशत्ववत् विष्णुलिङ्गस्यापि आकाशे सावकाशत्वादयुक्तमेतदित्यत आह ॥ **लिङ्गस्य चेति** ॥ तथापि लिङ्गस्य

(तत्त्वसुबोधिनी)

द्वितीयप्रमाणत्वेन दुर्बलत्वात्कथं निर्णय इत्यत आह ॥ **दुर्बलेनापीति** ॥ **तस्य विष्णावेवेति** ॥ सर्वाणि ह वेति सर्वभूतकारणत्वमाकाशस्योच्यते । तच्चाकाशपदेन विष्णुग्रहण एव सम्भवति । आत्मन आकाशः सम्भूत इत्यादिना विष्णोरेव सर्वभूतकारणत्वस्य प्रमितत्वात् । भूताकाशस्य तु स्वव्यतिरिक्त-भूतकारणत्वेन तद्ग्रहणे सर्वशब्दसङ्कोचः कर्तव्य इति भावः ॥

## वाक्यार्थमञ्जरी

**अस्य लोकस्येति** ॥ अस्य लोकस्य पृथिव्यभिमानिनो ब्रह्मणः का गतिरिति शालावत्येन पृष्टे आदीप्तत्वादाकाशनामको विष्णुरिति होवाच प्रवाहणः । कथमेतस्य पृथिव्यभिमानिब्रह्मणो गतित्व-मित्यतस्तस्य माहात्म्यमाह ॥ **सर्वाणीति** ॥ सर्वाणि इमानि प्रमाणप्रसिद्धानि भूतानि ब्रह्मरुद्रादीनि आकाशादेव समुत्पद्यन्ते ह वा इत्यस्यार्थस्य वैदिकप्रसिद्धिमाह । आकाशं प्रति अस्तं अदर्शनं यान्ति यत्रैव प्रलये मुक्तौ च लीना भवन्ति । कुतः हि यस्मादाकाश एवैभ्यो ब्रह्मरुद्रादिभूतेभ्यो ज्यायान् । तदपि कुतः आकाशः परायणम् उत्तमाश्रयः । नैतस्मादप्युत्तमं वस्त्वाशङ्क्यमित्याशयेनाह ॥ **स इति** ॥ स एष आकाशनामा भगवान् परोवरीयान् सर्वोत्तमः उद्गीथः उच्चैर्दैवैर्गीथः स एषोऽनन्तः देशतः कालतः गुणतश्च परिच्छेदशून्यत्वादनन्तनामक इत्यर्थः ॥ **आकाशस्येति** ॥ तथा च तत्स्वभावभूत-प्रवृत्तिनिमित्तस्यापि भगवदधीनत्वमिति भावः । अवकाशे अव्याकृताकाशे ॥ अनेनैव ॥ आकाश-स्येत्यादिभाष्येणैव । कथमित्यत आह ॥ **रूढेरिति** ॥ तस्यापि आनन्दमयप्रयुक्ताकाशशब्दस्यापि ॥

ॐ आकाशस्तल्लिङ्गात् ॐ ॥ आकाश इति होवाचेत्याकाशशब्दवाच्यो विष्णुरेव स एष परोवरीयान् स एषोऽनन्त इत्यादिना आकाशे श्रुतपरोवरीयस्त्वानन्तत्वादिविष्णुलिङ्गादित्यर्थः । परोवरीयव्याख्यानरूपां छान्दोग्यभाष्योदाहृतां स्मृतिमुदाहरन्ति ॥ **परस्मादिति** ॥ परशब्दितभारत्युत्तमो ब्रह्मा पर इत्युच्यते उशब्दस्योत्तमार्थकत्वात्तदुत्तमा रमा परोवरमिति तदुत्तमो हरिः पारोवरीयक इति छान्दोग्यभाष्योदाहृत-स्मृत्यर्थः । उच्चत्वेन उत्तमत्वेन ॥ **स एवेति** ॥ निर्वचनत्वात्तकारस्य थकार इति भावः । योऽपि सोऽपि न प्रवक्तीत्यर्थः ॥ **अनन्तत्वमुच्यत इति** ॥ गुणतोऽनन्तत्वस्याप्यनन्तशब्दार्थत्वादिति भावः ॥ **सर्वोत्तमत्वमिति** ॥ मात्रशब्देन परिमितसर्वजगद्ग्रहणादिति भावः । स्मर्यते भविष्यत्पर्वणि । महायोगेऽपि । सर्वभूतगुणैर्युक्तं देव त्वं ज्ञातुमर्हसीत्युक्तेः । पुरुषादाकाशः यावान्वा अयमाकाशः आकाशो वै नामेति वैदिकप्रयोगबाहुल्याच्चेति भावः ॥ **नभ इति** ॥ आदो नभः यस्य हरेः प्रेरणाच्छ्वासं

(वाक्यार्थमञ्जरी)

कुर्वतां मार्गं ददातीति तृतीयस्कन्धवाक्यार्थः ॥ **विष्णावेवेति** ॥ सर्वाणि ह वेति भूतकारणत्वमाकाशस्योच्यते । तच्चाकाशपदेन विष्णोरेव ग्रहणे सम्भवति । आत्मन आकाशः सम्भूत इत्यादिना विष्णोरेव सर्वभूतकारणत्वेन प्रमितत्वात् । भूताकाशस्य तु स्वव्यतिरिक्तभूतकारणत्वेन तद्ग्रहणे सर्वशब्दस्य सङ्कोचः कार्य इति भावः । इदमभ्युपेत्योक्तम् । उक्तरीत्या भूतशब्दस्य ब्रह्मादिपरत्वात् । उशब्दस्योत्तमार्थत्वात् ॥ **आधिभौतिकेति** ॥ महाभूताधिकाराख्यग्रन्थप्रतिपाद्यं देहाद्बाह्यप्रकृत्यन्तजडमधिभूतं तद्गतेत्यर्थः । यथोक्तं महाभूताधिकारणम् । तत्कारणं तथा कार्यमधिभूतं तदन्तिकादिति ॥ ८ ॥

## विवृतिः

श्रुत्यधिकरणसङ्गती दर्शयति ॥ **को हीति** ॥ अव्यवहिताधिकरणसङ्गतिस्तु अधिकां शङ्कां कृत्वा पूर्वाधिकरणसिद्धान्तन्याय एवातिदिश्यत इत्यातिदेशिकी । तत्र हेतुमाह ॥ **आकाशशब्दस्येति** ॥ **योगवृत्येति** ॥ आसमन्तात्काशते, प्रकाशत इत्याकाश इति योगवृत्येत्यर्थः ॥ नन्विदं पूर्वाधिकरणन्यायेन गतार्थमित्यतोऽभ्यधिकां शकामाह ॥ **न चाकाशस्येत्यादिना** ॥ अचेतनत्वेऽपि कुतो नान्याधीनत्वमत आह ॥ **चेतनस्य हीति** ॥ पृथिवीगतित्वेति ॥ अस्य लोकस्य का गतिरित्याकाश इति होवाचेत्यनेनोक्तपृथिवीगतित्वप्रतिपादनायेत्यर्थः ॥ **तच्चेति** ॥ सर्वभूतकारणत्वं लयाधिकरणत्वादिकमित्यर्थः ॥ **इति मनसि निधायेति** ॥ अन्यथा विषयसंशयाद्यनुक्त्वा पूर्वपक्षफलवचनस्यासङ्गतत्वादिति भावः ॥ नन्वाकाशस्यानन्दमयत्वमयुक्तं तस्याचेतनत्वादित्यत आह ॥ **आकाशस्येति** ॥ **अनेनैवेति** ॥ अभिमानिद्वारा आनन्दमयत्वोपपत्तिकथनेनेत्यर्थः ॥ न चाकाशशब्दं योगेन विष्णुपरं कृत्वा आनन्दमयत्वमेव साक्षात्तन्निष्ठं क्रियताम् अभिमानिद्वारा तदुपपाद्याकाशशब्देन भूताकाशग्रहणे को विशेष इत्यत आह ॥ **रूढेर्बलवत्त्वेनेति** ॥ आकाशशब्दस्य भूताकाश इत्यर्थः ॥ **तस्यापीति** ॥ आनन्दमये प्रयुक्तस्य आकाशशब्दस्यापीत्यर्थः । त्वस्याभिमान्याद्यारकत्वरूपमुख्यत्वस्यापीत्यर्थः ॥ **मुखतोऽनुक्तेरिति** ॥ पूर्वपक्षफलकथनेन सूचितत्वादिति भावः ॥ न चासौ युज्यत इत्यत्रासाविति प्राप्तिपरामर्शो किन्तु विष्णुरेवेति स्यात् न तु विष्णुरेवेति ॥ अत असावित्याकाशपरं कृत्वा तस्य स्वरूपेण निषेधायोगादपेक्षितमध्याहृत्य व्याचष्टे ॥ **न चासावत्र वाच्य इति** ॥ हेतुरुक्त उपदिष्टः । जगच्चेष्टकत्वस्य । **स्मृतिरिति** ॥ अनेन श्रुतौ परोवरीयस्त्वं नामोक्तस्मृत्यनुसारेण पारोवरीयकत्वमेव न तु परोवरत्वमिति सूचितं भवति ॥ **अनन्तत्वमुच्यत इति** ॥ गुणतोऽनन्तत्वस्याप्यनन्तशब्दार्थत्वादिति भावः ॥ नन्वाकाशश्रुतेः विष्णाववकाशवद्विष्णुलिङ्गस्याप्याकाशे सावकाशत्वादयुक्तमेतदित्यत आह ॥

(विवृतिः)
लिङ्गस्येति ॥ तथापि लिङ्गस्य द्वितीयप्रमाणत्वेन दुर्बलत्वात् कथं निर्णय इत्यत आह ॥ दुर्बलेनापीति ॥ तस्य विष्णावेवेति ॥ सर्वाणि ह वेति सर्वभूतकारणत्वमाकाशस्योच्यते । तच्चाकाशपदेन विष्णुग्रहण एव सम्भवति ॥ आत्मन आकाशः सम्भूत इत्यादिना विष्णोरेव सर्वभूतकारणत्वस्य प्रमितत्वात् भूताकाशस्य तु स्वव्यतिरिक्तभूतकारणत्वेन तद्ग्रहणे सर्वशब्दसङ्कोचः कर्तव्य इति भावः ॥

॥ इति आकाशाधिकरणम् ॥

## ९. प्राणाधिकरणम्

### ॥ ॐ अत एव प्राणः ॐ ॥ २३ ॥

**'तद्वै त्वं प्राणो अभवः महान्भोगः प्रजापतेः । भुजः करिष्यमाणः यद्देवान्प्राणयो नव' इति (तै.आ.३-१४) महाभोगशब्देन परमानन्दत्वं प्राणस्योक्तम् । स च प्राणः प्रसिद्धेर्वायुरित्यापतति । न चैवम् । यतो विष्णुरेव प्राणः । अत एव 'श्रीश्च ते लक्ष्मीश्च पत्न्यौ अहोरात्रे पार्श्वे' (तै.आ.३-१३) इत्यादितल्लिङ्गादेव ॥ २३ ॥**

## सत्तर्कदीपावली

उक्तन्यायेन श्रुत्यन्तरस्य विष्णुपरत्वं च साधयत्सूत्रपन्यस्य व्याचष्टे । **अत एवेत्यादिना ।** इदमाम्नायते । तद्वै त्वं प्राणोऽभव इति प्राणशब्दस्य वायौ रूढत्वात्तेनात्र तावद्वायुरेवोच्यते । न च गताधिकरणन्यायेन प्राणशब्दार्थो विष्णुरिति सिद्ध्यति । यद्देवान्प्राणयो नवेति वाक्यशेषविरोधात् । नवशब्दोपलक्षितेन्द्रियदेवादिप्रणेतृत्वस्य प्राणलिङ्गत्वात् । आनन्दमयत्वं विष्णोरेवोक्तम् । तदपि न युज्यते महान् भोग इति प्राणशब्दार्थस्य वायोः परानन्दश्रवणात् । भुज्यत इति भोग इति आनन्दस्य भोगशब्देन ग्रहणादित्येतं पक्षं प्रतिक्षिपति ॥ **न चैवमित्यादिना ॥** श्रीश्च ते लक्ष्मीश्च पत्न्याविति श्रूयमाणं द्विरूपलक्ष्मीपतित्वं प्राणशब्दार्थो विष्णुरेवेति ज्ञापयति । न हि वायोर्लक्ष्मीपतित्वं युज्यते । यदुक्तं देवप्रणेतृत्वं प्राणलिङ्गं तत्प्रेरके हृषीकेश एव मुख्यं प्राणस्य प्राणमिति श्रुतेरित्यर्थः । (१।१।९)

## तत्त्वप्रदीपिका

अत एव प्राणः । तद्वै त्वमित्यादेरयमर्थः । तस्माद्धि त्वं प्राणोऽभवः । कस्मात् ? प्रजापतेर्भोगा-

(तत्त्वप्रदीपिका)

न्करिष्यमाणो नव देवान् तदिन्द्रियस्थानप्राणय इति यत् । भुज्यत इत्यानन्दो भोगः । नवत्वं पायूपस्थयोरेकीभावेन । अङ्कं श्रिता श्रीः । वक्षसि लक्षणभूता लक्ष्मीः । अहोरात्रे पुरुपकालौ पार्श्वस्थौ । 'हरिं हरन्तमनुयन्ति देवा' 'विश्वस्येशानं वृषभं मतीनाम्' इत्यादिकमादिशब्द आदापयति । सर्वाध्यात्मोपलक्षणार्थः प्राणशब्दः ।। इति प्राणाधिकरणम् ।

## तत्त्वप्रकाशिका

अन्यत्राप्येवमिति ज्ञापनार्थमत्र सूत्रमादावेव पठति ।। **अत एवेति** ।। अत्र लोकतोऽन्यत्रप्रसिद्धप्राणनाम्नो विष्णौ समन्वयसमर्थनादस्ति शास्त्रादिसङ्गतिः । विपयवाक्योदाहरणपूर्वकं सङ्गतिं विपयसंशयौ च सूचयति ।। **तदिति** ।। यदुदितमानन्दमयत्वं विष्णोस्तत्कस्यचित्प्राणस्य तद्वै त्वमिति वाक्ये महाभोगशब्देन प्रतीयते । यस्माद् ब्रह्मणो भोगान्करिष्यमाणः कुर्वाणोऽकार्पीश्च तस्मात् त्वं महाभोगोऽभवः । स्वस्य महाभोगाभावे परस्मै तद्दानानुपपत्तेः । यस्मात्पायुगुह्यैक्येन नवेन्द्रियाभिमानिनो देवानचेष्टयश्चेष्टयसि च चेष्टयिष्यसि च तस्मात्त्वं प्राणश्चाभव इति । तस्य च प्राणस्य विष्णोरन्यत्वेऽन्यस्यैवाऽऽनन्दमयत्वं स्यादित्ययं निर्णयो भवति । स प्राणोऽत्र विपयः । किं विष्णुरुत वायुरिति सन्देहः । महाभोगत्वं प्राणशब्दस्यान्यत्र प्रसिद्धिश्च सन्देहवीजमिति भावः । तत्र सयुक्तिकं पूर्वपक्षयति ।। **स चेति** ।। स प्राणो वायुर्भवेत् । प्राणशब्दस्य तस्मिन्प्रसिद्धेः । न च महाभोगत्वं श्रुतिवाधकम् । श्रुतितो लिङ्गस्य दौर्वल्यात् । न च सावकाशत्वादिना वाध्यवाधकभावः । महाभोगवत्त्वस्यैव वायौ सावकाशत्वात् । प्राणश्रुतेर्विष्णावनवकाशात् । न हि तावत् प्राणपदस्य तत्र रूढिरस्ति । नापि योगः सम्भवति । प्राणशब्दप्रवृत्तिनिमित्तजीवनकारणत्वस्यान्वयव्यतिरेकाभ्यां वायावेव दर्शनात् । 'यत्प्राप्तिर्यत्परित्याग उत्पत्तिर्मरणं तथा' इत्यादेः । तथा च निरवकाशप्राणश्रुत्या महाभोगत्वलिङ्गस्य सावकाशस्य सुतरां वाधोपपत्तेर्वायुरेवायं प्राणः प्रागुक्तानन्दमयश्च । प्राणशब्दस्य अन्यत्र वृत्तावपि 'मुखे मुख्यः प्रकीर्तितः' इति मुख्यवायावेव मुख्यत्वात्स एव प्राणो भवेदिति भावः । सिद्धान्तयति ।। **न चेति** ।। कुतो नैवमित्याशङ्कायां हेतुतया सूत्रं व्याचष्टे ।। **यत इति** ।। यतोऽयं प्राणो विष्णुरेवेति स एवानन्दमयोऽतो वायुरयं प्राण आनन्दमयश्चेत्येतन्न युक्तमित्यर्थः । कुतोऽयं प्राणो विष्णुरेव इत्यतः सौत्रं हेतुमुपादाय व्याचष्टे ।। **अत एवेति** ।। श्रीलक्ष्मीपतित्वादिविष्णुलिङ्गात् प्राणो विष्णुरेवेत्यर्थः । वक्षस्थलाश्रिता श्रीरिति सम्प्रदायविदः । कथं श्रुत्या पूर्वपक्षिते सति लिङ्गेन निर्णय इति चेत् लिङ्गस्य निरवकाशत्वात् प्राणश्रुतेर्विष्णावपि सावकाशत्वात् निरवकाशेन सावकाशस्य वाधोपपत्तेः । रूढियोगयोरभावात् कथं विष्णौ प्राणश्रुतेरवकाश इति चेन्न । 'ईशानः प्राणदः प्राणः' इत्यादिविद्वद्रूढेर्महायोगस्य च सत्वात् । न च जीवनस्य प्राणान्वयव्यतिरेकविरोधः । प्राणगतजीवनकारणत्वस्यापि भगवदधीनत्वात् । तथा च श्रुतिः -

(तत्त्वप्रकाशिका)

'न प्राणेन नापानेन मर्त्यो जीवति कश्चन ।
इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ' इति ।

**तस्मादाध्यात्मिकाशेपशब्दोपलक्षकप्राणशब्दवाच्यो हरिरेवेति (स्थितम्) सिद्धम् ॥ २३, अ. ९ ॥**

## गुर्वर्थदीपिका

अन्यत्राप्येवमित्यत्राधिकरणार्थनिर्णायकसूत्रस्यैव सर्वत्रापि प्राधान्यात्तस्यैव सर्वाधिकरणेष्वप्यादौ पाठः कार्य इति सूचयितुमित्यर्थः । तर्हि सर्वत्रापि तथैव पाठः कुतो न कृत इति चेत्सत्यं गङ्गोदकेन रथ्योदकानां नैर्मल्यकरणवन्मध्ये मध्ये सङ्कलय्य पठनेन स्ववचसां पवित्रीकरणायेति ब्रूमः । अत एव विष्णुलिङ्गादेव प्राणो विष्णुरिति यथास्थितसूत्रार्थस्यैवं न चेति पूर्वपक्षनिषेधहेतुत्वादर्शनाद्यस्मात्प्राणो विष्णुरिति निर्णीतस्तस्मादेवं प्राणोऽन्यो न चेति हेतुहेतुमद्भावं स्फोरयितुं यत्तच्छब्दावध्याहृत्य प्राक् सौत्रप्रतिज्ञां समाकृष्य पूर्वपक्षं तावन्निषेधति यत इति । प्राणस्य विष्णुत्वनिर्णीतिरेव कुत इत्यत अत एव विष्णुलिङ्गादेव प्राणो विष्णुरिति यथास्थितसूत्रं व्याख्याति **अत एवेति** ॥ एतदेवाभिप्रेत्योक्तं सौत्रं हेतुमुपादायेति । श्रीभूदुर्गाख्यरूपत्रयसम्भवेऽपि श्रीर्लक्ष्मीरिति च रूपद्वयाभावात्पत्न्याविति द्विवचनानुपपत्तिरिति शङ्का माभूदिति भावेनोक्तं **वक्षःस्थलेति** ॥ कथमन्यथा श्रीवत्स इत्येव भगवल्लिङ्गस्य नाम न तु लक्ष्मीवत्स इति भावः । 'को नाम विष्ण्वनुपजीवक आस यस्य नित्याश्रयादभिहिताऽपि रमा सदा श्रीः' इति तात्पर्यनिर्णये रमाऽपि यस्य वक्षसि नित्याश्रयात्सदा श्रीरित्याभिहितासेति सम्प्रदायप्रवर्तकश्रीमदाचार्यैरेव कथितत्वात्सम्प्रदायविद इत्युक्तम् । इति प्राणाधिकरणम् ॥

## भावबोधः

सू० ॥ ॐ अत एव प्राणः ॐ ॥ **सङ्गतिमिति** । श्रुत्यधिकरणसङ्गतिमित्यर्थः । अव्यवहितपूर्वाधिकरणसङ्गतिस्त्वत्राभ्यधिकाशङ्कानिवर्तकत्वेन, अत एवेति पूर्वोक्तहेत्वतिदेशात्, आतिदेशिकरूपा

अध्यात्ममन्वयव्यतिरेकतः ।
प्राणादिहेतुताद्दृष्टेरतिदेशो हि तादृशः ॥

इत्यनुव्याख्यान एवोक्ता । यद्वा, 'आकाशाद्वायुः' इति श्रुतिक्रमादाकाब्दविचारानन्तरमत्र वायुवाचकप्राण (प्रमाण) शब्दविचारद्वारा सङ्गतिः द्रष्टव्या । करिष्यमाणः प्राणो य इति प्रयोगवैचित्र्येण

(भावबोधः)

कालत्रयेऽपि तत्कर्तृत्वं श्रुत्यभिप्रेतमित्याशयेन कुर्वाण अकार्षीरिति चेष्टयसि चेष्टयिष्टसीति चोक्तमिति ज्ञेयम् ॥ **किमिति** ॥ अत्र प्राणः किं मुख्यवायुरुत विष्णुरिति चिन्ता । तदर्थं प्राणश्रुतिः किं श्रीपतित्वादिलिङ्गबाधिका, उत तद्बाध्येति । तदर्थं सा श्रुतिर्निरवकाशा उत सावकाशेति । तदर्थं तत्कल्पकान्वयव्यतिरेकौ किं मुख्यवायोरेवानन्यथासिद्धौ, उत विष्ण्वन्वयव्यतिरेकोपजीवित्वे-नान्यथासिद्धाविति । तदर्थं तयोस्तदुपजीवित्व एतत्कल्पकत्वेनाभिमतश्रीपतित्वादिलिङ्गस्य निरवकाशत्वे च प्रमाणं नास्त्युतास्तीति । जीवनकारणत्वस्यान्वयव्यतिरेकाभ्यामिति । अनेन पूर्वाधिकरणोदाहृत-न्यायविवरणगतजीवनान्वयव्यतिरेकेत्यंशो व्याख्यातो भवति ॥ **अन्यत्र प्रवृत्तावपीति** ॥ वायुवृत्ता-विन्द्रियेष्वपीत्यर्थः । स एव प्राणो भवेदिति । अन्यथा महाभोगत्वादिकं विरुद्धं स्यादिति भावः । **सम्प्रदायविद इति** ॥ अनेन श्रयत इति श्रीरिति श्रीशब्दनिर्वचनपूर्वकं लक्ष्मीशब्देन पौनरुक्त्यं परिहृतं भवति ॥ लक्ष्म्या अङ्कगतत्वप्रसिद्धेः ॥ **लिङ्गस्य निरवकाशत्वादिति** ॥ अनेनानन्यथासिद्धलिङ्गैरिति न्यायविवरणं पूर्ववद्विवृतं भवति । निरवकाशेन सावकाशस्य बोधोपपत्तेरिति । अनेन सन्दिग्धश्रुति-लिङ्गाभ्यामिति पूर्वमुदाहृतन्यायविवरणं पूर्ववद्व्याख्यातं भवति । 'प्रेरकोऽस्यापि यद्धरिः' इत्यनुव्याख्यानं मनसि निधायाऽऽह– **प्राणगतेति** ॥ ९ ॥

## भावदीपः

॥ ॐ अत एव प्राणः ॐ ॥ **अन्यत्राप्येवमिति** ॥ व्याख्येयसूत्रमेव सर्वत्राप्यादौ पाठ्यं पश्चाद्विषयादिकं वाच्यमिति सूचयितुमित्यर्थः । क्वचित् सङ्गत्यादिपूर्वकं तत्पाठस्तु श्रोतृबुद्धिसौकर्याद्याशयेनेति भावः । एतेन सङ्गतिपूर्वकत्वाभावान्नेदमधिकरणान्तरमिति चोद्यं प्रत्युक्तम् । एतेन छन्दःसूत्राद्यपि अधिकरणान्तरमेव न तु प्राचां रीत्या ज्योतिरधिकरणशेष । इति सूचितम् ॥ **सङ्गतिमिति** ॥ आनन्दमयाधिकरणतद्विषयवाक्याभ्याम् एतदधिकरणैतद्विषयवाक्ययोरित्यर्थः । सङ्गतिपरत्वने तावद्भाष्यं व्याकुर्वन् उक्तमित्यन्तस्यार्थोक्त्या तां व्यनक्ति ॥ **यदुदितमिति** ॥ भाष्ये यत्तदोः शेषः । परमानन्दत्वमित्यस्यार्थः ॥ **आनन्दमयत्वमिति** ॥ यत्परमानन्दत्वमुक्तं पूर्वत्र तन्महा-भोगशब्देन प्राणस्य प्रतीयत इति शेषोक्त्या योजना सूचिता । प्रतीयत इत्येतत् श्रुत्यर्थोक्त्या व्यनक्ति ॥ **यस्मादिति** ॥ श्रुतौ यत्तदोरावृत्तिरिति भावः । भुजः भोगान् । करिष्यमाण इत्यादिरुपलक्षणमिति मत्त्वाऽऽह ॥ **कुर्वाण इति** ॥ यद्देवान्प्राणयो न वेत्यस्यार्थः ॥ यस्मादित्यादि ॥ पूर्वभागार्थोक्त्यैव पूर्तौ शेषोक्तिरुत्तरत्रोपयोक्ष्यत इति भावः । ऐक्येन ऐक्यविवक्षया अनेन प्राणन्ति जीवन्ति अनेनेति

(भावदीपः)

प्राण इति नवदेवोपलक्षितसर्वजीवनहेतुत्वरूपः प्राणपदयोगः पूर्वपक्षाद्युपयोगाय दर्शितः । इतिशब्दस्य इति प्रतीयत इति पूर्वेणान्वयः । स चेत्यादिभाष्यभावमाह ॥ **तस्य चेति** ॥ **अन्यत्व इति** ॥ प्रसिद्धिबलाद्वायुत्व इत्यर्थः ॥ **अन्यस्यैवेति** ॥ विवक्षितनिरतिशयपूर्णानन्दत्वस्य द्वयोरेकमेवाद्वितीयं ब्रह्मेत्यादिश्रुतिविरोधेन अयोगादिति भावः । इत्ययमित्यत्र इतिशब्दो हेत्वर्थः । इति पूर्वाक्षेपरूपसङ्गतिसद्भावाद्धेतोरित्यर्थः । स इति पूर्वाक्षेपकमहाभोगत्वयुक्त इत्यर्थः । इति पूर्वाक्षेपरूपसङ्गतिसद्भावाद्धेतोरित्यर्थः । स इति पूर्वाक्षेपकमहाभोगत्वयुक्त इत्यर्थः । पूर्वपक्षतद्युक्तितत्फलपरत्वेनाप्येतद्भाष्यं व्याकुर्वन् स चेति भाष्यं तावदवतार्य व्याचष्टे ॥ **तत्रेति** ॥ वायुर्मुख्यप्राणो भवेदित्यर्थः । महाभोगत्वमित्युपलक्षणम् । श्रीलक्ष्मीपतित्वादिब्रह्मलिङ्गं चेत्यपि ज्ञेयम् ॥ **दौर्बल्यादिति** ॥ शब्दादेवेत्यत्र वक्ष्यमाणन्यायेनेति भावः । ननु निरवकाशलिङ्गेन सावकाशश्रुतिबाधः पूर्वमुक्तः । तथेहापि स्यादिति शङ्कते ॥ **न चेति** ॥ सत्यमेवं न तु इह निरवकाशलिङ्गमस्ति येन तन्न्यायविषयत्वमत्र स्यादिति भावेन सौत्रैवकारव्यावर्त्यमाह ॥ **महाभोगस्यैवेति** ॥ प्रजापत्युपलक्षितानां सर्वजीवानां सकलभोगकारणत्वमन्वयव्यतिरेकाभ्यां मुख्यस्य इति सुधोक्तदिशेति भावः । उपलक्षणमेतत् । श्रीपतित्वादेरद्भ्यः सम्भूत इत्यनुवाकान्तरे श्रवणेन भर्ता सन्नित्यनुवाकस्थप्राणनिष्ठत्वाभावेन वा श्रीलक्ष्म्यादिशब्दानामपि योगेन तत्प्राणभार्यापरत्वेन वा सावकाशत्वादित्यपि ध्येयम् । उक्तं च सुधायां न चात्र वाक्ये पूर्ववदनन्यथासिद्धं किमपीश्वरलिङ्गमस्ति येन श्रुतिबाधं प्रत्येष्याम इति । सुधायां गतार्थत्वमाशङ्क्याधिकाशङ्कोक्तिरपि वास्तवलिङ्गनिरवकाशत्वोपगमपक्ष एवेति ध्येयम् । एवं निर्बाधरूढप्राणश्रुत्यादिसिद्धेऽपि प्राणाश्रितपूर्वपक्षे तद्दार्ढ्यायाभ्युच्चयत्वेन श्रुतेर्निरवकाशत्वमप्याह ॥ **प्राणश्रुतेरिति** ॥ अत एव वक्ष्यति सुतरामिति ॥ **न तावदिति** ॥ लोकप्रयोगाभावादिति भावः । 'अध्यात्ममन्वयव्यतिरेकतः । प्राणादिहेतुताद‍ृष्टेः' इरित्यनुभाष्योक्तमेव हेतुमाह ॥ **प्राणशब्देति** ॥ **जीवनकारणत्वस्येति** ॥ यद्देवान् प्राणयो नव । तत्प्राण इति वाक्यशेषे तस्यैवोक्तेरिति भावः । एतदर्थमेव पूर्वं शेपस्याप्यर्थोक्तिः । ननु मुख्यवायोरतीन्द्रियत्वात् प्राणे सति जीवनं तदभावे तदभाव इति कथमन्वयव्यतिरेकाभ्यां जीवनहेतुत्वस्य मुख्यवायौ दर्शनमित्यतः प्रत्यक्षतोऽभावेऽपि शब्दात्स्यादेवेत्याह ॥ **यत्प्राप्तिरिति** ॥ श्रेष्ठश्चेत्यत्र द्वितीये भाष्योक्ता स्मृतिः । एतेनाध्यात्मगतशब्दानामन्वयव्यतिरेके विद्यमानेऽपीति न्यायविवरणांशो विवृतः । भाष्ये प्रसिद्धेरित्यस्य जीवनहेतुत्वरूपप्राणपदप्रवृत्तिनिमित्तस्य स्मृतिबलेन वायावेव प्रसिद्धेरित्यप्यर्थ उक्तो भवति । उक्तं च सुधायाम् । भाष्येऽप्यस्य सर्वस्य स्वीकारार्थं प्रसिद्धेरित्याहेति । तेनेयं प्रमेयाश्रिता शङ्का च भाष्यारूढैवेति ज्ञेयम् ॥ **महाभोगत्वेति** ॥ लिङ्गान्तरोपलक्षणम् ।

(भावदीपः)

उक्तमित्यन्तं फलपरं चेत्युपेत्य तात्पर्यमाह ॥ **प्रागुक्तानन्दमयश्चेति** ॥ **अन्यत्रेति** ॥ जडरूपप्राण-वृत्त्यादावित्यर्थः ।

'चेष्टायां बाह्यवायौ च मुख्यप्राणे च गीयते ।
प्राणशब्दस्त्रिषु ह्येषु मुखे मुख्यः प्रकीर्तितः' ॥

इति द्वितीये । न वायुक्रिये पृथगुपदेशादित्यत्र भाष्योक्तस्मृत्या 'हस्तचरणश्रवणत्वगादीन्प्राणान्' इति भागवते प्रयोगेण लोकप्रसिद्ध्या चेति भावः । मुख्यत्वादित्युपलक्षणम् । सुधोक्तदिशा वायुवृत्त्यादि-जडं प्रति त्वमेवमभव इत्युक्त्ययोगाच्च । ओषधे त्रायस्वैनमित्यादेरप्यभिमानिपरत्वादित्यपि ध्येयम् । हेतुत्वं व्यञ्जयन्नेव न चैवमिति साध्येनान्वयमाह ॥ **यतोऽयमिति** ॥ प्राणस्तत्त्वित्यस्यार्थः प्राणो विष्णुरेवेति ॥ **श्रीलक्ष्मीपतित्वादिति** ॥ यद्यपि तैत्तिरीये ह्रीश्च ते लक्ष्मीश्चेत्येव पाठः । तथाप्यत्र शाखान्तरस्थवाक्यान्यप्युदाहरणतया ग्राह्याणीति सूचयितुं श्रीश्च त इति शाखान्तरस्थवाक्यशेषो दर्शित इति भावः । तथा च वक्ष्यति दहरनये धृतेश्चेति सूत्रे टीकायाम् । अत्र स सेतुरिति वक्तव्ये एष सेतुरित्युक्तिः शाखान्तराणामप्यत्रोपसङ्ग्रहार्थम् ॥ **एवमन्यत्रापीति** ॥ एवं चात्र तत्समाख्यया ह्रीरपि श्रीरेवेति भावः । एतल्लिङ्गस्य अनुवाकान्तरस्थत्वेऽप्यनुवाकान्तरस्थप्राणनिष्ठत्वं च श्रीश्च त इति युष्मच्छब्दनिर्दिष्टस्यैव तद्वै त्वमिति निर्देशेन ऐक्यप्रत्यभिज्ञानबलेनेति ज्ञेयम् । अत एवोक्तं सुधायां सन्निहितवाक्ये श्रूयमाणस्य श्रीलक्ष्मीपतित्वस्येति । आदिपदेन तमेव मृत्युममृतं तमाहुस्तं भर्तारं तमु गोप्तारमाहुरिति । यस्तद्वेद ब्रह्मणैष रमत इत्यादेर्ग्रहः । इत्यादितल्लिङ्गादिति भाष्यस्य पूर्वप्रतिज्ञाया-न्वयमाह ॥ **प्राण इति** ॥ विष्णोरेकपत्नीकत्वप्रसिद्धेः पत्न्याविति कथमित्यतः स्थानभेदस्थरूपविशेषाभि-प्रायेण तथोक्तिरित्युपेत्य स्थानभेदमाह ॥ **वक्षःस्थलेति** ॥ लक्ष्मीस्त्वंकस्थितेति भावः । ननु कथमेवं तत्वप्रदीपे हि अङ्काश्रिता श्रीः वक्षसि लक्षणभूता लक्ष्मीरित्युक्तेरित्यतः स्वोक्तार्थे संमतिमाह ॥ **इति सम्प्रदायविद इति** ॥ तथा चोदाहरन्ति ।

तस्याः श्रियः स जगतो जनको जनन्या वक्षोधिवासमकरोत्परमं विभूतेः ।
श्रीः स्वाः प्रजाः सकरुणेन निरीक्षणेन यत्र स्थितैधयत साधिपतींस्त्रिलोकान् ।

इत्याद्यष्टमस्कन्धादिस्थानि वाक्यानि । ''लिङ्गं बलवदेव स्यात्'' इत्यनुभाष्ये सौत्रैवकारस्यानुवादेन बलवदिति व्याख्यानमिति सुधोक्तदिशा सौत्रेवकारेण लिङ्गस्य प्राबल्यमुक्तम् । तद्व्यक्तिपरमनन्यथासिद्ध-लिङ्गैर्भगवद्विषयत्वमेवेति न्यायविवरणांशं शङ्कापूर्वं विवृणोति ॥ **कथमिति** ॥ **निरवकाशत्वादिति** ॥

(भावदीपः)

लक्ष्म्यादिशब्दानामन्यत्राप्रयोगान्मुख्यार्थत्यागापातात् । अन्यपरत्वे नामानीतिवत् मानाभावात् नान्यत्र यौगिकतेति भावः । अत एव सुधायां श्रीलक्ष्मीपतित्वस्याप्यन्यत्राशक्यचिन्तनस्य बलवत्त्वादित्युक्तम् ।। **सावकाशत्वादिति** ।। वक्ष्यमाणदिशेति भावः । बाधोपपत्तेरित्यनेन प्रमाणाश्रिता शङ्काऽपास्ता । प्रमेयाश्रितामपि तामनूद्य 'अध्यात्मगैश्च प्राणाद्यैरेको मुख्यतयोदित' इत्याद्यनुभाष्योक्तदिशा निराह ।। **रूढीति** ।। ईशान इति सहस्रनामसु । आदिपदेन प्राणस्य प्राण इति तलवकारे प्राणस्य प्राणस्त्विति काण्वश्रुतौ प्राणबन्धनं हि सोम्य मन इति छान्दोग्यादौ च तत्र तत्र विष्णौ प्रयोगबाहुल्यादिति ग्राह्यम् । महायोगभावं व्यक्तीकर्तुमुक्तमनूद्य प्रेरकोऽस्यापि यद्धरिरित्यनुभाष्योक्तमाह ।। **न चेति** ।। **अधीनत्वादिति** ।। पृथग्भगवद्गतत्वाच्चेत्यपि ध्येयम् ।। **श्रुतिरिति** ।। काठके इतरेण तु जीवन्तीति तद्गतत्वं यस्मिन्नेतावित्यनेन तु प्राणगतस्य तदधीनत्वमुच्यत इति ज्ञेयम् । इतरेणेत्येतच्च विष्णुपरम् । पूर्वत्र मध्ये वामनमिति वामनशब्दात् उत्तरत्र च गुह्यं ब्रह्म सनातनमिति ब्रह्मशब्दात् येन जातानि जीवन्तीति समाख्यानाच्च । अत्र यद्यपि मुख्यप्राणरूपयोरेवेशाधीनत्वमुच्यते न तु तयोर्जग-ज्जीवनकारणत्वस्यापि । प्रत्युत न प्राणेनेति निषेधश्च । तथापि प्राणादिदमाविरासीत्प्राणो धत्त इति पञ्चवृत्त्यैतत्प्रवर्तते । प्राणो वाव पञ्चवृत्तिरिति । उत्क्रान्तप्राणान् शूलेन समासं व्यतिषन्दहेत् नैनं ब्रूयुः पितृहासीति । तथा प्राण उत्क्रमिष्यन्यथा सुहयः पट्वीशशङ्कून् सङ्खिदेदेवमितरान्प्राणान्समखिद-दित्यादि श्रुतिभिर्यप्राप्तिरित्यादिस्मृतिभिश्च मुख्यप्राणस्यापि जीवनहेतुत्वस्य प्रमितत्वेन प्राणेन स्वतन्त्रेण मर्त्यो न जीवतीत्येवंरूपेण तत्स्वान्त्र्यमात्रनिरासार्थत्वादेतच्छ्रुतेः । न केवलं प्राण एव चेतनानां विधारकः किन्तु विष्णुं समाश्रित्य प्राणो जीवान्बिभर्त्ययमिति काठकभाष्योक्तमहाकौर्मस्मृतौ तथैव व्याख्यानाच्च । अत एव सुधायां प्रेरकोऽस्यापीत्यत्रास्य जीवनादेः प्रेरको हरिरित्याद्यनेकार्थमभिधायोक्तम् । संवदतीमं सर्वमप्यर्थं श्रुतिर्न प्राणेन इत्येवं जातीयकेति । अत्रापि मुख्यत्वोपपादनं पूर्वत्रैवात्रानुवृत्तावधारण-लब्धं बोध्यम् । मुखे मुख्य इत्युक्तिस्तु प्राण एवाकरणस्तस्मान्मुख्यस्तस्मान्मुख्य इति श्रुतेश्चक्षुरादिकरणभूतप्राणापेक्षयैव । तदुक्तमैतरेयभाष्ये ।

> ''अन्यव्यपेक्षया वायौ मुख्यवृत्तिर्विधीयते ।
> तस्मात्प्राणादिशब्दाश्च विष्णावेव हि मुख्यतः''

इति । अत एवेति सौत्रांशार्थस्तस्मान्निरवकाशलिङ्गसत्त्वादिति । प्राणस्तत्त्वित्यस्यार्थ **आध्यात्मिकेति** । अध्यात्मगतशब्दानामिति न्यायविवणोक्तेरिति भावः । प्रधानत्वात् पूर्वाक्षेपलिङ्ग-

(भावदीपः)

युक्तत्वाच्च प्राणशब्दः साक्षात्सूत्र उपात्त इति भावः । यत्तु अत एवेति सौत्रेतच्छब्देन पूर्वोक्तकारणत्व-परामर्शस्यैव स्वारस्यात्तस्य च कतमा सा देवता प्राण इति होवाच इति छन्दोग्यवाक्यस्थप्राण एव श्रवणान्न तद्वै त्वं प्राण इति वाक्यं सूत्रानुगुणमिति । तत्तुच्छम् । पूर्वत्र परोवरीयस्त्वादिरूप-निरवकाशलिङ्गस्यैव हेतूकरणादिह चात एवेति सर्वनाम्ना निरवकाशलिङ्गस्यैव परामर्शात् । तस्य च तैत्तिरीयवाक्येऽपि भावात् तदेव लिङ्गमत्रापि परामर्ष्टव्यमित्यत्र हेत्वभावात् । तद्वाक्ये पूर्वपक्षानुदयस्य चन्द्रिकायां व्यक्तत्वाच्च यत्किञ्चिदेतत् ॥ २३ ॥ अ. ९ ॥

## अभिनवचन्द्रिका

अत एव प्राण इत्यस्य 'तद्वै त्वं प्राणो भव' इति श्रुत्युपक्रमत्वभ्रमं निवारयितुमाह– **अत्र सूत्रमिति ॥ प्राणनाम्न इति ॥** यद्यपि – 'यद्देवान्प्राणयो नवे' (तै.आ.३-१४)ति श्रुतेरस्य लिङ्गात्म-कत्वम्, तथापि नामात्मकत्वस्यापि भावात् प्राणनाम्न इत्युक्तम् । **विषय इति ॥** सङ्गतिमित्यनन्तरं दर्शयन्निति शेषः । एतेन सङ्गतेर्मुखत एवाभिधानात् सङ्गतिं सूचयतीत्यनुपपन्नमिति परास्तम् । सङ्गतिं दर्शयन् विषयसंशयौ सूचयतीत्यभिधानात् । यद्यपि प्राणशब्देन विषयो दर्शितः । तथापि विषयत्वं नोक्तमिति तत्सूचकत्वाभिधानमुपपन्नम् । प्राणपदं वायौ प्रसिद्धं परमानन्दत्वं विष्णुत्वेन सहचरितमिति विष्णुत्ववायुत्वकोटिस्मारकयोः परमानन्दप्राणशब्दयोरभिधानात् अस्य भाष्यस्य संशयसूचकत्वमुपपन्नमिति द्रष्टव्यम् । ननु परमानन्दत्वोक्तिमात्रेण कथं पूर्वाधिकरणेन सङ्गतिरुक्ता भवेत्, अतीताधिकरणप्रतिपाद्ये परमानन्दत्वाभावादित्यत आह– **यदुदितमिति ॥** अनेनानन्दमयाधिकरणै-तदधिकरणप्रतिपाद्ययोः आनन्दमयत्वरूपैकधर्माक्रान्तत्वं सम्बन्ध इत्युक्तं भवति । **तस्य च प्राणस्येति ॥** ननु तस्य च प्राणस्य विष्णोरन्यत्वे आनन्दमयत्वमन्यस्यैव प्रसज्यत इत्ययुक्तम् 'तद्वै त्व'मित्युक्तिबला-दन्यस्यानन्दमयत्ववत्, उक्तिबलादेव विष्णोरप्यानन्दमयत्वसम्भवत् । अन्यथा शुक्लः कम्बलः, शुक्लं वस्त्रमित्युक्ते यदि वस्त्रस्य कम्बलान्यत्वं स्यात्, तर्हि अन्यस्यैव शुक्लत्वं प्रसज्यत इति वस्त्रस्यापि कम्बलत्वं प्रसाध्यं स्यात् । यदि तत्रोक्तिबलादुभयोरपि शुक्लत्वम्, इहापि तथास्त्विति चेत्, सत्यम् इत्युक्तिबलादन्यत्रानेकेषामेकजात्यवाच्छिन्नधर्माक्रान्तत्वं सम्भवतीति बाधकाभावात् । न प्रकृते द्वयोरानन्दमयत्वं सम्भवति, आनन्दमयत्वस्य सर्वेश्वरत्वाविनाभूतत्वेन अनेकेश्वरत्वापातात् । न च तद्युक्तं जगद्विलयप्रसङ्गात् । ततश्च अवश्यमेकस्याऽऽनन्दमयत्वापलापे कर्तव्ये विष्णोरेव तदपलपनीयं विष्णोस्तत्पुच्छत्वोक्तेः । आनन्दमये ब्रह्मशब्दस्तु तदवयवस्य ब्रह्मत्वादुपचारेण नेय इति द्रष्टव्यम् ।

(अभिनवचन्द्रिका)

**लिङ्गदौर्बल्यादिति** ॥ यद्यपि पूर्वपक्षिणा वायुरेवायं प्राणः प्रागुक्तानन्दमयश्चेति वदता महाभोगत्वस्य विष्णुलिङ्गत्वानङ्गीकारात्, विष्णुलिङ्गमेव नेति वक्तव्यम् । दौर्बल्यं तु सर्वथा न वक्तव्यम् तथापि अङ्गीकारवादेनेति बोध्यम् । पूर्वाधिकरणेन गतार्थतापरिहाराय अभ्यधिकाशङ्कामाह – **नापीति** ॥ आकाशशब्दस्य विष्णौ योगः सम्भवति प्राणशब्दस्य तु योगोऽपि न सम्भवतीति आकाशशब्दविषयकशङ्कातः प्राणशब्दविषयकशङ्का बलवतीति भावः । **अन्वयव्यतिरेकाभ्यामिति** ॥ यद्यपि जीवनकारणत्वान्वयव्यतिरेकौ नास्मदध्यक्षसिद्धौ, तथापि – स्वस्वोत्तमत्वविषये प्राणेन सह विवदमानानामिन्द्रियाभिमानिदेवानां प्रत्यक्षसिद्धौ, अस्माकं तत्प्रत्यक्षत्वसिद्धिस्तु 'त्वमुक्थमसि त्वमिदं सर्वमसि तव वयं स्मस्त्वमस्माकमसी'(ऐ.णा.२-१-४)ति देवकर्तृकप्राणस्तुत्यन्यथानुपपत्त्या भवति । यद्वा कुलालादिशरीरस्य घटाद्यन्वयव्यतिरेकदर्शनमेव घटादिकं प्रति कुलालाद्यन्वयव्यतिरेकदर्शनमिति लोकैरभ्युपगतत्वादिहापि वायुविकारस्य तद्देहस्थानीयस्य जीवनान्वयव्यतिरेकदर्शनं वायोरन्वयव्यतिरेकदर्शनत्वेनोक्तमिति द्रष्टव्यम् । अत एव सुधायां – वायुविकारशरीरत्वान्मुख्यस्येत्युक्तम् । न केवलं जीवनहेतुत्वमन्वयव्यतिरेकगम्यम्, अपि तु आगमसिद्धं चेति भावेनाह– **यत्प्राप्तिरिति** ॥ यद्यप्यत्र तत्प्राप्तेरुत्पत्तिकारणत्वमेवोच्यते तथापि उत्पत्तिर्नाम प्राणशब्दाभिधेयेन्द्रियधारकदेहसम्बन्धः, 'जीव प्राणधारण' इति धातुव्याख्यानात् । जीवनकारणत्वं च प्राणधारणकारणत्वमेवेति उत्पत्तिकारणत्वेन जीवनकारणत्वलाभादेतदुदाहरणमर्थवत् । **लिङ्गस्य सावकाशस्येति** ॥ अङ्गीकारवादोऽयम् । विष्णुलिङ्गत्वमेव नेति हृदयम् । **मुख्यत्वादिति** ॥ उपलक्षणमेतत् । प्राणवृत्तावचेतनायां 'तद्वै त्वं प्राणो भव' इत्यादिनिर्देशानुपपत्तेश्चेत्यपि द्रष्टव्यम् । **सम्प्रदायविद इति** ॥ स्वमतन्तु, न केवलमङ्कगायाः श्रियोऽहमित्युक्तेः, अङ्काश्रिता श्रीः, वक्षसि लक्षणभूतत्वाल्लक्ष्मीरिति सिद्धत्वान्नोक्तम् । अत एव तत्वप्रदीपे अङ्काश्रिता श्रीः वक्षसि लक्षणभूता लक्ष्मीरित्युक्तम् । अङ्कवक्षस्थलाश्रितयोर्लक्ष्मीरूपयोरभिन्नत्वेन द्वयोरपि श्रीलक्ष्मीशब्दवाच्यत्वात् संप्रदायमतमपि प्रामाणिकत्वात् ग्राह्यम् । ननु – 'ईशानः प्राणदः प्राण' इति प्रमाणे परमेश्वरस्य प्राणदातृत्वाभिधानमयुक्तम् । अन्वयव्यतिरेकाभ्यां प्राणदातृत्वस्य मुख्यप्राणनिष्ठत्वावगमादित्याशङ्क्य निषेधति – **न चेति** ॥ ननु अयं निषेधोऽनुपपन्नः । अन्वयव्यतिरेकसिद्धस्य मुख्यप्राणगतप्राणदातृत्वस्य बाधकाभावेनाऽपलापायोगादित्यत आह– **प्राणगतेति** । न वयमन्वयव्यतिरेकसिद्धं प्राणदातृत्वं मुख्यप्राणेऽपलपामः, येनोक्तदोषः स्यात्, किं नाम मुख्यप्राणे अन्वयव्यतिरेकसिद्धं प्राणदातृत्वमभ्युपगम्य तत्परमेश्वराधीनमिति परमेश्वरः प्राणद इत्युच्यत इत्यर्थः ।

(अभिनवचन्द्रिका)

**पूर्वपक्षस्तु–** वायुरेवायं प्राणः । प्राणशब्दस्य तत्र रूढत्वात् । न च प्राणश्रुतेः विष्णौ सावकाशत्वं, रूढेरभावात् । यौगिकार्थस्य जीवनकारणत्वस्य अन्वयव्यतिरेकाभ्यां वायावेव दर्शनात् । तस्माद्वायुरेवायं प्राणः, प्रागुक्तानन्दमयश्चेति न ब्रह्मजिज्ञासा सम्भवतीति ।

**सिद्धान्तस्तु–** विष्णुरेवायं प्राणः निरवकाशश्रीलक्ष्मीपतित्वलिङ्गात् । 'ईशानः प्राणदः प्राण' (सहस्रनाम) इति विद्वद्रूढेर्महायोगस्य च विष्णौ सत्त्वेन श्रुतेः सावकाशत्वात्, प्राणगतजीवनान्वयव्यतिरेकस्यापि 'न प्राणेन नाऽपानेन मर्त्यो जीवति कश्चन' (का.उ.५-४) इति श्रुतेः भगवदधीनत्वात् । तस्मात्प्राणः प्रागुक्ताऽऽनन्दमयश्च विष्णुरेवेति युक्ता तज्जिज्ञासेति सिद्धम् । (९.अ.)

## वाक्यार्थमुक्तावली

ॐ अत एव प्राणः ॐ ॥ **अन्यत्राप्येवमिति** ॥ यत्रादौ सूत्रं नोदाहृतं तत्र सर्वत्राप्यादौ सूत्रानुसन्धानं कार्यम् । अन्यथा विषयानुपस्थित्या सङ्गत्यादिजिज्ञासाऽयोगादिति ज्ञापनार्थं सूत्रमादौ पठतीत्यर्थः ॥ **सङ्गतिरिति** ॥ अव्यवहितपूर्वाधिकरणसङ्गतिस्तु अत्राप्यधिकाशङ्कानिवर्तकत्वेनात एवेति पूर्वोक्तहेत्वतिदेशादातिदेशिकरूपा द्रष्टव्या । तदुक्तमनुव्याख्याने 'अध्यात्ममन्वयव्यतिरेकतः । प्राणादिहेतुताद्दष्टेरतिदेशो हि तादृश' इति । करिष्यमाणः प्राण राजति इति प्रयोगवैचित्र्येण कालत्रये तत्कर्तृत्वं श्रुत्यभिप्रेतमित्याशयेन कुर्वाणोऽकार्षीः चेष्टयसि चेष्टयिष्यसीति चोक्तमिति ज्ञेयम् ॥ **ऐक्येनेति** ॥ सामीप्येनैक्यविवक्षयेत्यर्थः ॥ **किं विष्णुरीति** ॥ किमयं प्राणो मुख्यवायुरुत विष्णुरिति चिन्ता । तदर्थं प्राणश्रुतिः तत्प्रवृत्तिनिमित्तं यद्देवान् प्राणय इत्युक्तं देवादिसर्वजीवनकारणत्वलिङ्गं च निरवकाशतया स्वभावतश्च बलवत्वात् श्रीलक्ष्मीपतित्वादिलिङ्गबाधकमुत स्वयं सावकाशं निरवकाशेन बाध्यमिति । तदर्थं श्रीलक्ष्मीपतित्वादिलिङ्गानां निरवकाशत्वे प्राणश्रुत्यादेः सावकाशत्वे च प्रमाणं नास्त्युतास्तीति । **महाभोगत्वस्यैवेति** ॥ 'सर्वं सपूतमश्नाति स्वधितं मातरिश्वना' इत्यादिश्रुत्या प्राणस्य सर्वात्तृत्वेन तज्जन्यपरमानन्दत्वोपपत्तेरिति भावः । स च प्राण इत्यत्र चशब्द एवार्थो वायुरेवेत्यन्वेतीति भावेन तद्व्यावर्त्यमाह **प्राणश्रुतेर्विष्णाविति** ॥ निरवकाशत्वमुपपादयति ॥ **न हि तावदिति** ॥ नामानि सर्वाणीति सामान्यरूढिरस्तीति चेन्न । वक्ष्यमाणबाधकेन सर्वशब्दसङ्कोचोपपत्तेः । न च तदधीनत्वादर्थवदिति न्यायावतारः । तस्यैवाभावस्य वक्ष्यमाणत्वादिति भावः ॥ **नोपयोग इति** ॥ तथापि किं प्रवृत्तिनिमित्तं साक्षाद्विष्णुगतमुत स्वामितासम्बन्धेन तद्गतम् । नाद्य इत्याह– **प्राणशब्देति** ॥ अन्वयेति ॥

(वाक्यार्थमुक्तावली)

प्राणे प्रपन्न उदतिष्ठत् । तत्प्राण उत्क्रान्तेऽपद्यतेति श्रौतान्वयव्यतिरेकाभ्यां प्राणप्रतिमाभूतश्वासोच्छ्वाससद्भावे जीवनं तदभावे तदभाव इति प्रात्यक्षिकान्वयव्यतिरेकाभ्यां वेत्यर्थः । दर्शनादित्यनेन प्रसिद्धेरित्येतत् प्राक् । प्राणश्रुतेस्तत्र प्रसिद्धेर्महायोगतल्लिङ्गस्यापि तत्रैव प्रसिद्धेरिति द्वेधा व्याख्यातमधुना प्राणपदप्रवृत्तिनिमित्तस्यापि तत्रैव प्रसिद्धेरिति द्वेधा व्याख्यातं भवति । नापि द्वितीय इत्याह **यत्प्राप्तिरिति** । तस्योत्पत्तिर्मृतिश्चैव कथं प्राणस्य युज्यत इत्युत्तरार्धमादिपदेन गृह्णाति । तथा च नास्यान्यः स्वामीति भावः ॥ **अन्यत्रेति** ॥ जडरूपवायुवृत्ताविन्द्रियतद्देवेष्वित्यर्थः ॥ **स एवेति** ॥ अन्यथा महाभोगत्वादेव जीवनकरत्वं जडं प्रति त्वमेवमभव इति च विरुद्धं स्यादिति भावः । सूत्रस्य न चैवं यत इति सम्बन्धभाष्येणान्वयमाह यतोऽयं प्राण इति सूत्रे तत्त्वित्यनुवर्तते । एवकारस्तु लिङ्गस्य निरवकाशतया प्राबल्यसूचक इत्यभिप्रेत्य सूत्रार्थमाह– **श्रीलक्ष्मीति** ॥ **सम्प्रदायविद इति** ॥ वक्षसि लक्षणभूता लक्ष्मीरिति तत्वप्रदीपोक्तत्वेऽपि स्वोपदेशकाचार्यसम्प्रदायोऽयमिति भावः । एतेनाङ्कस्थिता लक्ष्मीरिति ध्वन्यते । तेन स्थानभेदरूपविशेषापेक्षया पत्न्याविति द्विवचनमित्यपि ज्ञापितं बोध्यम् ॥ **निरवकाशत्वादिति** ॥ लिङ्गं बलवदेव स्यादित्यनुव्याख्यानोक्तदिशा शब्दादेव प्रमित इतिवल्लिङ्गप्राबल्यस्य सूत्रेऽवधारणेन सूचितत्वदिति भावः ॥ **प्राणगतेति** ॥ न केवलं साक्षादन्यगतस्यापीत्यर्थः । स्वातन्त्रेण न प्राणेन नापानेन कोऽपि जीवति । किन्तु प्राणादयः सर्वे इतरेणैव जीवन्तीति कुतः यस्मिन्नेतावुपाश्रितौ जीवनविषये तेनेतरेण तु विशिष्य जीवन्तीति भाष्यार्थः ।

## तत्त्वसुबोधिनी

ॐ अत एव प्राणः ॐ ॥ अन्यत्राप्येवं ज्ञापनार्थमिति । न केवलं आनन्दमयाधिकरणे प्रथमं सूत्रोदाहरणं सङ्गत्यादिजिज्ञासाजननार्थं किं त्वन्यत्रापि प्रथममुदाहरणं तत्प्रदर्शनार्थमेवेति ज्ञापयितुमित्यर्थः ॥ **सङ्गतिमिति** ॥ श्रुत्यधिकरणसङ्गतिमित्यर्थः । अव्यवहितपूर्वाधिकरणसङ्गतिस्तु अभ्यधिकाशङ्कानिरासपूर्वकं पूर्वोक्तहेत्वतिदेशात् आतिदेशिकी । यद्वा आकाशाद्वायुरिति श्रौतक्रमानुसारेणाधिकरणानां क्रमः । अप्रतीतार्थत्वात् विषयवाक्यार्थमाह ॥ **यस्मादिति** ॥ करिष्यमाणः प्राण एजति इति प्रयोगवैचित्र्येण कालत्रयेऽपि तत्कर्तृत्वं श्रुत्यभिप्रेतमित्याशयेन कुर्वाण अकार्षीरिति चेष्टयसि चेष्टयिष्यसीति चोक्तमिति ज्ञेयम् । ननु प्राणेन प्रजापतेः भोगदानेऽपि स्वस्य महाभोगत्वसिद्धिः कुत इत्यत आह ॥ **स्वस्येति** ॥ ननु महाभोगत्वलिङ्गस्य वायाववकाशवत् प्राणश्रुतेरपि विष्णाववकाशात् न मुख्यप्राणोऽत्र प्रतिपाद्यत इत्यत आह ॥ **प्राणश्रुतेरिति** ॥ कुतो नावकाश इत्यतो रूढिराहित्यादित्यत आह ।

(तत्त्वसुबोधिनी)

**न हि तावदिति ॥** विष्णौ प्राणपदस्य लोकप्रसिद्ध्यभावादिति भावः । तथापि प्रकर्षेण अणतीति प्राण इति योगेन विष्णुपरत्वं स्यादित्यत आह ॥ **नापीति ॥** कुतो जीवान्वयव्यतिरेकौ वायावेवेत्यतस्तत्र प्रमाणमाह ॥ **यत्प्राप्तिरिति ॥** ननु प्राणशब्दस्य वायाविव इन्द्रियेष्वपि वृत्तेस्तेषामेव ग्रहणं किं नेत्यत आह ॥ **प्राणशब्दस्येति ॥ वायुवृत्तावपीति ॥** वायुवृत्ताविन्द्रियेष्वपीत्यर्थः ॥ **स एवेति ॥** अन्यथा महाभोगत्वादिकं विरुद्धं स्यादिति भावः । ननु श्रीलक्ष्मीशब्दयोः पौनरुक्त्यमित्यत आह ॥ **वक्षस्थलेति ॥** अनेन श्रयत इति श्रीरिति श्रीशब्दनिर्वचनमित्युक्तं भवति । लक्ष्म्या अङ्कगतत्वप्रसिद्धेरिति भावः ॥

## वाक्यार्थविवरणम्

'लक्ष्म्या वक्षस्स्थितायाः' इति विष्णुस्तुतौ वक्षस्स्थलाश्रितत्वं लक्ष्म्यास्तत्त्वप्रदीपिकाकारैरुक्तमस्ति । अतः स्वसम्प्रदायमाह ॥ **वक्षस्स्थलेति ॥** समीपे स्थित्वा सेवादिकारिणी लक्ष्मीरित्युच्यते इति द्रष्टव्यम् ।

## वाक्यार्थमञ्जरी

अन्यत्राप्येवमिति ॥ **अत्रादाविति ॥** व्याख्येयसूत्रमेवादौ पाठ्यम् । अन्यथा सङ्गत्याकाङ्क्षानुदयात् । पश्चाद्विषयादिकं वाच्यमिति सूचयितुमित्यर्थः । कचित्सङ्गत्यादिपूर्वकतत्पाठस्तु श्रोतृबुद्धिसौकर्यायेति भावः ॥

ॐ अत एव प्राणः ॐ ॥ तद्वै त्वं प्राण इत्युक्तप्राणो विष्णुरेव । श्रीश्च ते लक्ष्मीश्च पत्न्याविति निरवकाशश्रीलक्ष्मीपतित्वलिङ्गादेवेत्यर्थः । लिङ्गनिरवकाशत्वमेवकारार्थः । यत्तच्छब्दयोरावृत्तिं मत्वा श्रुत्यर्थमाह ॥ **यस्मादिति ॥** अभव इत्यतीतार्थकलङ्घटनाय करिष्यमाण इत्येतदुप-लक्षणमित्या-शयेनाह ॥ **कुर्वाणोऽकार्षीश्चेति ॥** हेतुहेतुमद्भावं व्यनक्ति ॥ **स्वस्येति ॥** इन्द्रियाभिमानिदेवानां दशत्वादाह ॥ **पायुगुह्यैक्येनेति ॥** ऐक्यविवक्षयेत्यर्थः । द्वितीयाध्यायभाष्योदाहृतस्मृतिमुदाहरति ॥ **यत्प्राप्तिरिति ॥** यथाक्रममन्वयः ॥ **सुतरामिति ॥** स्वभावत एव बाधे निरवकाशत्वादिना किम्विति भावः । वायुरेवेत्यवधारणानुपपत्तिमाशङ्क्याह ॥ **प्राणशब्दस्येति ॥**

'चेष्टायां बाह्यवायौ च मुख्यवायौ च गीयते ।
प्राणशब्दस्त्रिषु ह्येषु मुखे मुख्यः प्रकीर्तितः' ॥

(वाक्यार्थमञ्जरी)

इति द्वितीयाध्यायभाष्योदाहृता स्मृतिः ॥ **श्रीलक्ष्मीरिति** ॥ यद्यपि ह्रीश्च त इति तैत्तिरेयाः पठन्ति तथापि शाखान्तरमप्यत्रोदाहर्तमित्याशयेन शाखान्तरस्थवाक्यमत्रोदाहृतमिति ध्येयम् । रमारूपविशेषयोः स्थानविशेषाकाङ्क्षायामाह ॥ वक्षस्थलाश्रिता श्रीरिति ॥ लक्ष्म्यास्त्वङ्कगतत्वं प्रसिद्धमिति भावः । ननु कथमयं निर्णयः । न च वाच्यं–

तस्याः श्रियः स जगतो जनको जनन्या
वक्षोधिवासमकरोत्परमं विभूतेः ।
श्रीः स्वाः प्रजाः सकरुणेन निरीक्षणेन
यत्र स्थितैधयत साधिपतींस्त्रिलोकान् ॥

इति भागवतवचनेन निर्णय इति । न केवलमङ्कगायाः श्रियोऽहमिति भगवत्पादैः श्रियोऽङ्कगतत्वोक्तेः । नापि श्रयते वक्षस्स्थलमिति श्रीरिति तन्निर्वचनेन तन्निर्णयः । श्रयतेऽङ्कमित्यपि सम्भवात् वक्षसि लक्षणभूता लक्ष्मीरिति तत्त्वप्रदीपोक्तनिर्वचनानुसारेण वैपरीत्यसम्भवाच्च । तस्मात्कथं श्रियो वक्षस्स्थलाश्रितत्वनिर्णय इत्यत आह ॥ **इति सम्प्रदायविद इति** ॥ तथा च सम्प्रदाय एवात्र निर्णायकप्रमाणमित्युक्तं भवति । अत एव श्रीवत्स इत्येव भगवल्लिङ्गस्य नाम न लक्ष्मीवत्स इति । व्यामिश्रोक्तिस्तु 'लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया' इति श्रीलक्ष्मीशब्दयोः पर्यायत्वाद्युक्ता । स्मरणीयमुरोविष्णोरिन्दिरावासमित्यादिवत् । या त्वङ्कश्रिता श्रीः वक्षसि लक्षणभूता लक्ष्मीरिति निरुक्तिः । सा रूपविशेषयोरभेदाभिप्रायेण वस्तुस्थितिकथनाय न स्थाननियमाभिप्रायेणेत्यर्थः । एतेनैव स्वोक्तार्थे भगवद्वाक्यरूपागममनभिधाय सम्प्रदायोक्तौ किं बीजम् । न च तयोरभेद एवेति वाच्यम् । आगमो ग्रन्थनिबन्धनं वाक्यम् । सम्प्रदायस्तूपदेशपरम्परामात्रमिति भेद इति प्रमेयदीपिकोक्तेरिति निरस्तम् । उक्तरीत्या भगवद्वाक्यस्य स्वोक्तार्थानिर्णायकत्वशङ्कानिरासाय सम्प्रदायग्रहणादिति ॥ **महायोगस्य चेति** ॥ प्राणशब्दप्रवृत्तिनिमित्तजीवनप्रदत्वस्य तत्रैव निरवधिकत्वादिति भावः ॥ न **प्राणेनेति** ॥ कश्चन मर्त्यो जीवः प्राणादिना न जीवति किन्तु यस्मिन्हरावेतौ प्राणापानावुपाश्रितौ तेनेतरेण हरिणा सर्वे जीवन्तीत्यर्थः ॥ **आध्यात्मिकेति** ॥ आत्माधिकाराख्यग्रन्थप्रतिपाद्यमत्यन्तात्माभिमानविषयान्तःकरणादिदेहपर्यन्तमध्यात्मं तद्गतमित्यर्थः । यथोक्तम् । 'आत्माभिमानाधिकारस्थितमध्यात्ममुच्यते । देहाद्बाह्यं विनातीवबाह्यत्वात्' इति ॥ ९ ॥

## विवृतिः

**अन्यत्राप्येवमिति ज्ञापनार्थमिति** ।। न केवलमानन्दमयाधिकरणे प्रथमं सूत्रोदाहरणं सङ्गत्यादिजिज्ञासाजननार्थं किं त्वन्यत्रापि प्रथममुदाहरणं तत्प्रदर्शनार्थमेवेति ज्ञापयितुमित्यर्थः ।। **सङ्गतिमिति** ।। श्रुत्यधिकरणसङ्गतिमित्यर्थः ।। अव्यवहितपूर्वाधिकरणसङ्गतिस्तु अभ्यधिकाशङ्कानिरासपूर्वकं पूर्वोक्तहेत्वतिदेशादातिदेशिकी ।। यद्वा आकाशाद्वायुरिति श्रौतक्रमानुसारेणाधिकरणानां क्रमः ।। अप्रतीतार्थत्वाद्विषयवाक्यार्थमाह ।। **यस्मादिति** ।। करिष्यमाणः प्राण इति प्रयोगवैचित्र्येण कालत्रयेऽपि कर्तृत्वं श्रुत्यभिप्रेतमित्याशयेन कुर्वाण अकार्षीरिति चेष्टयसि चेष्टयिष्यसीति चोक्तमिति ज्ञेयम् ।। ननु प्राणेन प्रजापतेर्भोगदानेऽपि स्वस्य महाभोगत्वसिद्धिः कुत इत्यत आह ।। **स्वस्येति** ।। ननु महाभोगत्वलिङ्गस्य वायाववकाशवत् प्राणश्रुतेरपि विष्णाववकाशान्न मुख्यप्राणोऽत्र प्रतिपाद्य इत्यत आह ।। **प्राणश्रुतेरिति** ।। कुतो नावकाश इत्यतो रूढिराहित्यादित्याह ।। **न हि तावदिति** ।। विष्णौ प्राणपदस्य लोकप्रसिद्ध्यभावादिति भावः ।। तथापि प्रकर्षेण अणतीति प्राण इति योगेन विष्णुपरत्वं स्यादित्यत आह ।। **नापीति** ।। कुतो जीवान्वयव्यतिरेकौ वायावेवेत्यतस्तत्प्रमाणमाह ।। **यत्प्राप्तिरिति** ।। तर्हि श्रुत्यादौ विष्णौप्राणशब्दप्रसिद्धिविरोध इत्यत आह ।। प्राणशब्दस्येति ।। वायुवृत्तावपीति ।। वायुवृत्ताविन्द्रियेष्वपीत्यर्थः ।। **स एवेति** ।। अन्यथा महाभोगत्वादिकं विरुद्धं स्यादिति भावः ।। ननु श्रीलक्ष्मीशब्दयोः पौनरुक्त्यमित्यत आह ।। **वक्षस्थलेति** ।। अनेन श्रयत इति श्रीरिति श्रीशब्दनिर्वचनमुक्तं भवति ।। लक्ष्म्या अङ्कगतत्वप्रसिद्धेरिति भावः ।।

।। इति प्राणाधिकरणम् ।।

## १०. ज्योतिरधिकरणम्

**'यो वेद निहितं गुहायाम्' (तै.उ. २-१) इत्युक्तम् । तच्च गुहानिहितम् । 'वि मे कर्णा पतयतो विचक्षुर्वी३दं ज्योतिर्हृदय आहितं यत् । वि मे मनश्चरति दूर आधीः किंस्विद्वक्ष्यामि किमु नू मनिष्य' (ऋ.सं. ६-९-६) इति ज्योतिरुक्तम् । तच्च ज्योतिरग्निसूक्तत्वात्प्रसिद्धेश्चाग्निरेवेति प्राप्तम् । अत आह—**

**।। ॐ ज्योतिश्चरणाभिधानात् ॐ ।। २४ ।।**

(सूत्रभाष्यम्)

**विष्णुरेव ज्योतिः । कर्णादीनां विचरणाभिधानात् । स हि 'परो मात्रया तन्वा वृधान' (ऋ.७-९९-१) इत्यादिना कर्णादिविदूरः ॥ २४ ॥**

## सत्तर्कदीपावली

ऐतरेये श्रूयते । वि मे कर्णा पतयत इत्यादि । अत्र परमात्मधर्मेण यो वेद निहितं गुहायामिति श्रुतिसिद्धेन विशिष्टं ज्योतिरुच्यते । इयं ज्योतिर्हृदय आहितं यदिति । अतो विचार्यते । किमयं ज्योतिःशब्दोऽग्निपरः उत विष्णुपर इति । ज्योतिःशब्दस्याग्निसूक्तगतत्वादग्नौ प्रसिद्धत्वात् तेनाग्निरेवोच्यत इत्येतत्पक्षं प्रतिक्षिप्तसूत्रमुपन्यस्य व्याचष्टे । **ज्योतिश्चरणाभिधानादित्यादिना ।** अत्र तावत्कर्णादीन्द्रियाणां विपतनं विचरणं अन्तर्ज्योतिर्विपरीतगमनमेव ज्योतिपश्च तद्विपरीतावस्थानं किं स्विद्वक्ष्यामि किमु नू मनिष्य इति वाक्यशेषादवगम्यते । अतो यन्मनसा न मनुत इत्यादिश्रुत्यन्तरसिद्धादिन्द्रियविदूरत्वाख्यविष्णुलिङ्गाद्धृदयाहितं ज्योतिर्विष्णुरेव हि मन आदिविदूरत्वं नाम मन आदिभिरपरिमेयत्वमेव । न तु सर्वथाऽग्राह्यत्वम् । श्रोतव्यो मन्तव्य इत्यादिश्रुतिविरोधापत्तेः । अप्रमेयत्वं च विष्णोरेव श्रुतम् । परो मात्रया तन्वा वृधानेत्यादिश्रुत्यन्तरेण । अत्र परशब्दस्यावध्यपेक्षत्वान्मात्राशब्दः पञ्चम्यन्तः कार्यः । ततश्च मात्राया मितेः परोऽपरिमेयप्रभावो मितिसाधनत्वेन मात्राशब्दोदितेन्द्रियगणपथातीतश्चेत्युक्तं भवति । (१।१।१०)

## तत्त्वप्रदीपिका

अत आहेति भाष्यस्यायमर्थः । इति पूर्वपक्षः प्राप्त इति यदत उत्तरं सूत्रमाह भगवान्बादरायण इति । अस्माकं तु भाष्यार्थमात्रान्वेषणपरिखिन्नात्मनामनवरतं भाष्यानुवादेऽप्यध्यासितालस्यानामत आहेत्यभिसूत्रं भाष्यानुकरणेऽपि प्रतिवाक्यमन्य एवाभिप्रायो निश्चेतव्यः । अतः पूर्वपक्षप्राप्तेः परिहारार्थं सूत्रमुदाहृत्य तस्य भाष्यमाह भगवानाचार्य इति । सूत्रग्रहणं पुनरत्र तद्भाष्यव्याचिख्यासितस्यागृहीतप्रतीकस्य सन्निधापकमिति भवति निरवद्यम् ।

ज्योतिश्चरणाभिधानात् । अस्मिन्नन्तर्भेदाधिकरणे गायत्रीविचारस्य बहुलयुक्तिसन्दब्धत्वेन महाविचारज्योतिर्विचारोऽवान्तरोऽवगन्तव्यः । एकं चेदमधिकरणमुत्तरानुबद्धत्वात्प्रथमविचारस्य । एतन्नान्तरीयत्वात्तस्य । अत एव चानुवर्तयति प्रथमविचारमुत्तरत्राग्निगायत्र्यादिभाष्ये ।

ननु किमनेनान्तर्भेदप्रतिपादनप्रयासेन । यावताऽत्र प्रथमसूत्र एव च्छन्दोगोपनिषदं ज्योतिरभिधायिनीमुदाहृत्याप्रकीर्णमेकमधिकरणमुत्प्रेक्षितुमुचितमौपनिषदानामिति । मैवम् । अग्निसूक्तमुदाहृत्य मन्त्रगोचरं

(तत्त्वप्रदीपिका)

विचारमारचयता परमवैदिकेनाऽऽचार्येण निखिलोऽपि वेदसमन्वयो विचारितो भवतीति भूयानयं लाभः । अपरथा पुनरुक्तिदोषं चावादिष्म ॥ क्लिष्टकल्पनायां पड्विधत्वस्यागतिकत्वं वा स्यात् । विष्णुरेव ज्योतिः । कर्णादीनां तद्विरुद्धचरणाभिधानात् । तथाहि श्रुत्यर्थः कर्णौ मे विरुद्धं पतयतः, चक्षुश्च मनश्च विरुद्धं चरति, तेषामत्यन्तविदूरत्वेनेदं ज्योतिः स्थितमत आ समन्ताद्दूरस्थबुद्धिरहं किं वक्ष्यामि, किं मनिष्ये वेति हृदयस्थं हीदं ज्योतिरुच्यते । तद्दर्शनविरुद्धं चरणम् । उक्तं च गीतासु मनश्चरणस्य तत्त्वनिष्ठा-विरोधित्वं 'चञ्चलं हि मनः कृष्ण' इति । स्पष्टत्वाय विचरणाभिधानादित्युक्तम् । मातृत्वादिन्द्रियं 'मात्रा', श्रोत्रादिवत् । तदतीतः परो मात्रयेत्युक्तः ।

## तत्त्वप्रकाशिका

अत्र लोकतोऽन्यत्र प्रसिद्धज्योतिर्नाम्नो ब्रह्मणि समन्वयप्रतिपादनादस्ति शास्त्रादिसङ्गतिः । श्रुत्यधि-करणसङ्गती विषयवाक्योदाहरणपूर्वकं विषयसंशयौ च सूचयति ॥ **यो वेदेति** ॥ यो वेद निहितं गुहायामित्यानन्दमयस्य हृदयगुहानिहितत्वमुक्तम् । मन्त्रवर्णोक्तस्यैवान्नमयादिशब्दैरुच्यमानत्वात् । तद्गुहानिहितत्वं 'वि मे कर्णा पतयत' इति कस्यचिज्ज्योतिषः प्रतीयते । मे कर्णौ ज्योतिषो विरुद्धं पततः । चक्षुश्च विरुद्धं पतति । यदिदं हृदय आहितं ज्योतिस्तदप्यत्यन्तं कर्णादिविरुद्धं वर्तते । मे मनश्चातीव विरुद्धं चरति । अतो व्याप्तबुद्धिरप्यहं किं नु वक्ष्यामि किं वेदानीं चिन्तयामीति । एतच्च यदि विष्णोरन्यत्तर्ह्यानन्दमयत्वं चान्यस्यैव प्रसज्येतेति निर्णेयं भवति । तज्ज्योतिरत्र विषयः । किं विष्णु-रुताग्निरिति सन्देहः । गुहानिहितत्वं ज्योतिःशब्दस्याग्नौ प्रसिद्धिश्च सन्देहबीजमिति भावः । तत्र सयुक्तिकं पूर्वपक्षयति ॥ **तच्चेति** ॥ तज्ज्योतिरग्निरेव भवेत् । एतत्सूक्तस्याग्निसूक्तत्वात् । न च वाच्यं प्रकरणादपि लिङ्गस्य बलीयस्त्वाद् गुहानिहितत्वलिङ्गेनास्य बाध इति । ज्योतिःश्रुतेरग्नावेव रूढत्वात् । न हि लिङ्गं श्रुतिप्रकरणापबाधने शक्तं यावता श्रुतित एव दुर्बलम् । श्रुतिः सावकाशेति चेन्न । जाठरजातवेदसि लिङ्गस्यापि सावकाशत्वात् । तथा च सावकाशलिङ्गमात्रात्सावकाशश्रुतिप्रकरणयोर्बलवत्त्वादग्निरेवेदं ज्योतिस्ततश्च गुहानिहितत्वमानन्दमयत्वं च तस्यैवेत्यर्थः । सिद्धान्तयत्सूत्रमवतारयति ॥ **अत इति** ॥ यस्मादिति प्राप्तमत आह सूत्रकार इत्यर्थः । सूत्रं व्याचष्टे ॥ **विष्णुरेवेति** ॥ विष्णुरेवेदं ज्योतिर्भवेत् । कर्णादीनामेतज्ज्योतिर्विरुद्धाचरणाभिधानात् । कर्णादिविदूरत्वलिङ्गादित्यर्थः । कर्णादिविदूरत्वाभिधानेऽपि कुतो विष्णुरिदं ज्योतिरित्यत आह ॥ **स हीति** ॥ मीयन्ते विषया अनेनेति मात्रा इन्द्रियगणस्ततस्त्वं परोऽसीत्यर्थः । न च प्रकरणविरोधः । लिङ्गेन प्रकरणबाधोपपत्तेः । न च श्रुतिविरोधः । श्रुतेर्विष्णावपि सावकाशत्वात् । महायोगविद्वद्रूढिसद्भावेन मुख्यत्वाच्च । निरवकाशलिङ्गेन सावकाशश्रुत्यादेर्बाधोपपत्तेः । अतो विष्णुरेवेदं ज्योतिरिति तस्यैव गुहानिहितत्वमानन्दमयत्वं चेति सिद्धम् ॥ २४, अ० १० ॥

## गुर्वर्थदीपिका

किं स्विद्वक्ष्यामीत्यत्र किं स्विदित्यस्य किं न्वित्यर्थः । नु इत्यस्येदानीमित्यर्थः इति विवेकः । पतनस्याऽऽदिमत्वेऽप्यमङ्गलत्वात्सूत्रकृता चरणमेव गृहीतमिति भावष्टीकाकारस्य । वस्तुतस्तु कर्णादि-निष्ठज्योतिर्विषयकविचरणहेतूकरणे हेतुसाध्ययोर्वैय्यधिकरणप्रसङ्गात्कर्णादीनां विषयेऽपि 'इदं ज्योतिर्हृदय आहितं यत्' इति यज्ज्योतिषो विचरणं श्रुतावुक्तं तस्याभिधानादिति ज्योतिर्निष्ठमेव विचरणं भाष्य-कृतोऽभिमतम् । एवं च सतीदं ज्योतिरित्यत्र क्रियाभावादध्याहारस्य बहिरङ्गत्वाच्छ्रौतमेव पतत इति पदमावर्तनीयं वा वाच्यं चरतीत्युत्तरपदमाकर्षणीयं वा स्यात् । तत्र च पतत इति द्विवचनान्तपदस्य विभक्तिव्यत्ययेनाऽऽवर्तने गौरवात्समानविभक्तिकं चरतीत्येव पदमाकर्षणीयम् । अतः 'चरणाभिधानात्' इति सूत्रे भाष्ये च चरणपदस्यैव ग्रहणं चोक्तं जायते । हेतोश्च सामानाधिकरण्याख्यगुणोऽपि जायते । अत इयमपि व्याख्या शतार्थकभाष्ये आदरणीया । वीत्युपसर्गे कम्पाल्लब्धमर्थमाह **अत्यन्तं कर्णादि-विरुद्धमिति** । 'वि मे मनश्चरति दूर' इत्यत्र दूरपदलब्धमर्थमाह **अतीव विरुद्धं चरतीति** । श्रुत्यनुसारित्वात्सूत्रेऽपि वीत्युपसर्गस्यासहपाठ इति ज्ञेयम् । 'त्रयोऽर्थास्सर्ववेदेषु' इति वचनान्मात्रा परिमाणमिन्द्रियगणश्चेति भावेनोक्तं **मीयन्त इति** । ज्यायसी ऊतिः व्याप्तिरैश्वर्यं वाऽस्येति ज्योतिः-पदयोगमभिप्रेत्योक्तं **महायोगेति** । चरणाभिधानात्पादाभिधानादिति केचित् । तदयुक्तम् । तथा सत्यल्पाक्षरत्वेन पादाभिधानादित्येव सूत्रं स्यात् । 'भूतादिपादव्यपदेशोपपत्तेश्चैवम्' इति सूत्रेण पौनरुक्त्यप्रसङ्गाच्च ॥

## भावबोधः

॥ ॐ ज्योतिश्चरणाभिधानात् ॐ ॥ ननु 'यो वेद निहितं गुहायाम्' इति वाक्यं नानन्दमय-प्रकरणगतम् । किन्तु 'ब्रह्मविदाप्नोति परम्' इति प्रकरणगतम् । तथा च कथं तेनानन्दमयस्य गुहा-निहितत्ववचनमित्यत आह– **मन्त्रवर्णोक्तस्यैवेति** । अनेनास्याधिकरणस्य मान्त्रवर्णिकसूत्रसङ्गत्या आनन्दमयाधिकरणेन सङ्गतिरित्युक्तं भवति । अव्यवहितपूर्वाधिकरणसङ्गतिस्तु ज्योतिश्शब्दस्याधिदैवाधि-भूताध्यात्मरूपत्रितयपरत्वेनान्तराद्यधिकरणत्रयेण परमात्मपरत्वसिद्धावपि 'पुनश्च प्रापकाद्धेतोस्तत्राधि-करणान्तरम्' इत्यनुव्याख्यानोक्तरीत्याग्निसूक्तत्वादिरूपप्रापकहेतुना तदधिकरणत्रयानन्तरमेवैतदधिकरणो-त्थानात् 'वायोरग्निः' इति श्रुतिक्रमाद्वेति ज्ञातव्यम् । 'विरुद्धं पततः' इत्यादौ विरुद्धमित्येतत् वीत्यस्यार्थ

(भावबोधः)

इति बोद्धव्यम् । अत्यन्तं कर्णादिविरुद्धमित्यत्र 'अत्यन्तम्' इति 'यदिदम्' इत्यत्र ह्यकम्पनार्थ इत्यवधेयम् । मनश्चातीवेत्यत्रातीवेति दूर इत्यस्यार्थः । दूर आधीरित्यस्यैकपदत्वेऽप्यवग्रहदर्शनाद् दूर इत्यस्य पृथक्कृत्य पूर्वत्रान्वयकरणमुपपद्यत इति भावः । आधीरित्याङोऽर्थो व्याप्तेति ॥ **किमिति** ॥ अत्र ज्योतिः किमग्निरुत विष्णुरीति चिन्ता । तदर्थं ज्योतिःश्रुतिः कर्णादिविदूरत्वलिङ्गबाधिका, उत तद्बाध्येति । तदर्थं श्रुत्युपोब्दलकमग्निसूक्तरूपमग्निप्रकरणं निरवकाशमुत सावकाशमिति । तदर्थं सूक्तस्य सावकाशत्वे तत्कल्पकत्वेनाभिमतस्य कर्णादिविदूरत्वलिङ्गस्य निरवकाशत्वे च प्रमाणं नास्त्युतास्तीति । कर्णादिविदूर इत्युत्तरभाष्यसङ्गतिपरिहारार्थमाह– **कर्णादिविदूरत्वेति** । अनुव्याख्यानन्यायविवरणयोरे-तदधिकरणार्थानुक्तिरग्निसूक्तत्वादिति भाष्य एवाभ्यधिकाशङ्कायाः प्रदर्शितत्वादित्यवधेयम् । अत एव सुधायां न्यायविवरणटीकायां च तथैवोक्तम् । यद्यप्यत्र ज्योतिः प्रति कर्णादीनां विरुद्धाचरणरूपं कर्णादिविदूरत्वं वक्तुं 'विचरणाभिधानात्' इति सूत्रयितव्यम् । तथाप्युपसर्गस्य द्योतकत्वमात्रं धातोरेव तु विचरणाभिधायकत्वमिति प्रदर्शनार्थं सूत्रस्य श्रुत्यनुगमप्रदर्शनार्थं च चरणाभिधानादित्युक्तम् । 'विचरणाभिधानात्' इत्युक्तौ हि श्रुतौ 'वि'इत्यनेन चरतीत्यस्य मे मन इति पदद्वयेन व्यवहितत्वात् श्रुत्यनुगमो न जायेतेति द्रष्टव्यम् ॥

## भावदीपः

॥ ॐ ज्योतिश्चरणाभिधानात् ॐ ॥ लोकत इत्यादि तु पूर्वपद् व्याख्येयम् । शेषोक्त्या सङ्गतिपरत्वेन तावद्भाष्यं व्यनक्ति ॥ **यो वेदेति** ॥ मन्त्रवर्णस्थलिङ्गस्य कथमानन्दमयस्थत्वमित्यतः प्रागुक्तं स्मारयति ॥ **मन्त्रवर्णेति** ॥ तच्च गुहानिहितमित्यादेर्ज्योतिरुक्तमित्यन्तस्य व्याख्यानं तदित्यादि प्रतीयत इत्युक्तं श्रुत्यर्थोक्त्या व्यनक्ति ॥ **म इति** ॥ वीत्युपसर्गस्य व्यवहिताश्चेति पाणिन्युक्तेर्धातु-नान्वयमुपेत्यार्थमाह ॥ **विरुद्धमिति** ॥ पतयत इति स्वार्थे णिजिति मत्वोक्तं पतत इति ॥ **कम्पार्थोऽ-त्यन्तमिति** ॥ दूर आधीरित्यस्यैकपदत्वेऽपि दुःखण्डत्वाद्दूर इत्यस्य पूर्वेणान्वयमाह ॥ **अतीवेति** ॥ पूर्वोक्तं हेतुत्वेनोपादायाधीरित्यादि व्याचष्टे ॥ **अत इति** ॥ तत्वप्रदीपे तु अत आ समन्ताद् दूरस्थबुद्धिरहमिति दूर आधीरित्येतदेकान्वयेनैव व्याख्यातमिति भाति । किंस्विदित्यस्यार्थः किं न्विति । नु इत्यस्यार्थ इदानीमिति । इति प्रतीयत इतीतिशब्दस्य पूर्वेणान्वयः । भाष्ये तच्च गुहानिहितं ज्योतिर्हृदय आहितं यदिति ज्योतिरुक्तमित्येव वाच्ये शेषोक्तिरर्थसङ्गत्यर्थं वा सिद्धान्तोपयोगार्थं वेति भावेन समग्रवाक्यार्थोक्तिः । तच्च ज्योतिरित्यादेर्भावमाह ॥ **एतच्चेति** ॥ गुहास्थं ज्योतिरग्निसूक्त-

(भावदीपः)

स्थत्वादिनां यद्यग्निरित्यर्थः । यो वेदेति वाक्यभावमाह **तर्हीति** । अत्रापीतिशब्दो हेतौ इति यतः अतः पूर्वाक्षेपरूपसङ्गतिसम्भवादित्यर्थः । ज्योतिरुक्तमित्याद्युक्तिसूचितविषयाद्याह ॥ **तज्ज्योतिरिति** ॥ एवमवश्यनिर्णेयं ज्योतिरित्यर्थः ॥ **अग्निरिति** ॥ ज्योतिश्शब्दस्य तमोविरोधिमात्रवृत्तावपि इह हृदयाहितत्वलिङ्गात्त्वामग्ने तमसीत्यग्निश्रुतेश्च नान्यस्य संशयविषयत्वमिति भावेन भाष्योक्त्यनुरोधादग्निरित्युक्तिः ॥ **प्रसिद्धिश्चेति** ॥ प्राबल्याद्यविवेकेनेति ध्येयम् । एकस्य निरवकाशत्वेनान्यस्य श्रुतित्वेन च प्राबल्याभिधानात् । पूर्वपक्षादिपरत्वेनापि भाष्यं व्याचष्टे ॥ **तत्रेति** ॥ प्रमाणाश्रयपूर्वपक्षमाह ॥ **अग्निसूक्तत्वादिति** ॥ प्रसिद्धेश्चेत्येतद्धेतुं व्यावर्त्यशङ्कापूर्वमाह ॥ **न च वाच्यमिति** ॥ प्रकरणात्सूक्तरूपात् ॥ **बाध इति** ॥ यथा द्युभ्वादिनयपूर्वपक्षे जायमानत्वलिङ्गेन द्वे विद्ये वेदितव्ये इति ब्रह्मप्रकरणस्य बाधस्तद्वदिति भावः ॥ **अग्नावेवेति** ॥ न तु विष्णावित्यर्थः । तमोविरोधिमात्रे रूढेः सत्त्वेऽपि प्रकृताशयेनैवमुक्तिः । यावतेति निपातो यस्मादित्यर्थे । तथा च श्रुत्यैव पूर्वपक्षे प्रकरणोक्तिरभ्युच्चयत्वेन । अत एव भाष्ये अग्निसूक्तत्वाच्चेति चशब्दो भिन्नक्रम इति सूचितम् । ननु ज्योतिःश्रुतिरग्निदेवतापरा चेदन्तर्नयन्यायेन विष्णुपरा जडपरा चेदाकाशनयन्यायेन विष्णुपरा सेत्स्यतीति भावेन शङ्कते ॥ **श्रुतिरिति** ॥ तथा च श्रुतेः सावकाशत्वे तद्युक्तस्यापि प्रकरणस्य सावकाशतया निरवकाशलिङ्गेन तयोर्बाधः स्यादिति भावः ॥ **सावकाशेति** ॥ सावकाशयोः श्रुतिप्रकरणयोरित्यर्थः । यद्वा उक्तदिशा श्रुतेः सावकाशत्वेऽपि इदमग्निसूक्तं न विष्णुसूक्तमित्यध्यापकप्रसिद्ध्यन्यथानुपपत्त्या सूक्तं निरवकाशम् । तथा च सावकाशत्वं श्रुतेरेव विशेषणम् । अत एव कर्णादिविदूरत्वमप्यनेकवैभवातिशयेनाग्नावेव कथञ्चिद्योज्यम् । श्रुतिप्रकरणयोर्बलवत्त्वादिति भावेन भाष्यमुपसंहरति ॥ **अग्निरेवेति** ॥ यो वेदेति भाष्यं फलपरमिति भावेन तत्तात्पर्योक्तिरानन्दमयत्वं चेति । ज्योतिस्तत्त्विति सौत्रप्रतिज्ञाभागमभिप्रेत्य भाष्यं व्याचष्टे ॥ **विष्णुरेवेति** ॥ स हीत्यग्रेतनभाष्यानुरोधाद्धेतुसाध्ययोः सामानाधिकरण्याय हेतोः पक्षनिष्ठतामाह ॥ **कर्णेति** ॥ सूत्रे वीत्युपसर्गस्यानुक्तिकृत्यं चन्द्रिकायां व्यक्तम् । श्रुतौ पतनस्यादित्वेऽपि तस्य स्पृहिगृहिपतिदयीति निर्दिष्टस्य पतगतावित्यस्य चुराद्यदन्ततया स्वार्थिकण्यन्तत्वेन पतनाभिधानादित्युक्तौ कर्णादिविदूरत्वस्य स्पष्टमप्रतीतेश्चरणस्य च ज्योतिःसान्निध्यात्प्रधानमनोन्वितक्रियात्वात्पतनार्थस्यात्राप्राप्तेश्च सूत्रादौ चरणेत्युक्तिः । जन्मादिसूत्रे मात्राया मितेरित्यर्थोक्तावपि इहोपयोगितया अर्थान्तरमाह ॥ **मीयन्त इति** ॥ श्रुतिप्रकरणाभ्यां कृतपूर्वपक्षस्य कथं लिङ्गमात्रेणापवाद इत्यतः सन्दिग्धश्रुतिलिङ्गाभ्यामपि युक्ताभ्यामसन्दिग्धयोः केवलयोरेव बलवत्त्वादिति न्यायविवरणमत्राप्याकृष्य विवृण्वँल्लिङ्गमुपलक्षणमुपेत्य शङ्कापूर्वं निर्णयमाह ॥ **न चेति** ॥ सन्दिग्धाभ्यां सावकाशाभ्यामित्यर्थात् ॥ **प्रकरणबाधेति** ॥

(भावदीपः)

अभिव्यक्तेरित्याश्मरथ्य इत्यादिवक्ष्यमाणन्यायेनाग्निसूक्तमित्यादिव्यवहारः तत्तत्सूक्तप्रतिपाद्यविष्ण्वधिष्ठान-निमित्तक औपचारिकः । इदं न विष्णुसूक्तमिति प्रसिद्धिस्तु विष्ण्वादिशब्दाभावादज्ञानमूलेति । न तस्य निरवकाशत्वमिति भावः ॥ **श्रुतेरिति** ॥ अन्तर्नयाद्युक्तन्यायादिति भावः । श्रुतेरग्नौ रूढत्वाद् विष्णावमुख्यतेत्यत आह ॥ **महायोगेति** ॥ ज्योतिःपदप्रवृत्तिनिमित्तस्य प्रकाशत्वादिरूपज्योतिष्ट्वस्य विष्णुगतत्वादन्यगतस्यापि 'तमेव भान्तमनुभाति सर्वम्' इत्यादिना तदधीनत्वाच्च महायोगस्य 'तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्' इति वाजसनेये । 'नारायणपरो ज्योतिः' इति तैत्तिरीये 'विष्णुरेव ज्योतिः' इत्यादिचतुर्वेदशिखादिश्रुतिषु 'ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते' इत्यादिस्मृतिषु च प्रयोगबाहुल्येन रूढेरपि सद्भावेनेत्यर्थः ॥ **अत इति** ॥ निरवकाशलिङ्गसद्भावादिति चरणाभिधाना-दित्यस्यार्थः । ज्योतिस्तत्त्वित्यस्योपसंहारो विष्णुरेवेत्यादि । अत्रापि पूर्वत्रोत्तरत्रेव च सर्वसूक्तगततत्त-च्छब्दोपलक्षितेति बोध्यम् । चरणाभिधानादित्यस्य तत्तत्सूक्तस्थनिरवकाशलिङ्गोपलक्षणत्वात् । आनन्दमयत्वं चेति फलपरभाष्यतात्पर्योपसंहारः यत्त्वत्र कश्चिदाह । चरणं हि प्रतिसम्बन्धिसापेक्षम् । न चेन्द्रियरूपप्रतिसम्बन्धि सूत्रे निर्दिष्टम् । चरणशब्दस्य पादपरत्वे तु ज्योतिष एव प्रतिसम्बन्धित्वे-नान्वयात् न दोष इति छान्दोग्यवाक्यमेव सूत्रानुगुणं न त्वग्निसूक्तगतमिति । तन्न । तद्वाक्ये चन्द्रिकाया-मनेकदोषोद्भावनात् । प्रतिसम्बन्धिनो विषयवाक्ये सन्निहितस्यार्थादन्वयसम्भवे कम्पनादित्यादाविव निर्देशस्यानपेक्षितत्वात् । चरणपदस्य पादपरत्वे पादेत्येव वाच्यत्वाच्चेति यत्किञ्चिदेतत् ॥ २४ ॥

## अभिनवचन्द्रिका

अत्र त्रीणि दर्शनानि – ज्योतिश्चरणाभिधानादित्यारभ्य चतुःसूत्री एकमधिकरणम् । तत्र आद्ये सूत्रे अग्निसूक्तगतज्योतिःशब्दसमन्वयः । छन्दःसूत्रे छान्दोग्यस्थज्योतिःशब्दसमन्वयः, 'भूतादिपाद' सूत्रे गायत्रीशब्दसमन्वयः । 'उपदेशभेदा'दिति सूत्रे गायत्रीज्योतिःशब्दयोरेकार्थत्वसमर्थनमित्येकं दर्शनम् । इदं च सत्तर्कदीपावलीकृतो दर्शनम् ।

तत्र 'ज्योतिश्चरणाभिधाना'दिति सूत्रमुदाहृत्य ऐतरेये श्रूयते 'वि मे कर्णा पतयत' (ऋ.६-९-६) इत्यादीति अग्निसूक्तस्थज्योतिर्वाक्यस्योदाहरणात् । तथा 'अथ यदतःपरो दिवो ज्योतिर्दीप्यते विश्वतः पृष्टेषु सर्वतः पृष्टेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमस्मिन्पुरुषे ज्योति'(छां.३-१३-७)रिति श्रुत्यन्तरादपि विष्णुरेव मुख्यज्योतिरिति प्रथमसूत्राभिप्रायं वर्णयित्वा, इदमेवाक्षिप्य समर्थयत्सूत्र-

(अभिनवचन्द्रिका)

मुपन्यस्य व्याचष्टे – **छन्दोऽभिधानादित्यादिनेति**। द्वितीयसूत्रस्य छान्दोग्यज्योतिषा विष्णुत्वमाक्षिप्य समाधानपरत्वाभिधानात् गायत्रीशब्दो विष्णुपर इत्येतत्प्रतिपादयत्सूत्रमुपन्यस्य व्याचष्टे – **'भूतादी'त्यादिनेति**। तृतीयसूत्रस्य गायत्रीशब्दसमन्वयपरत्वाभिधानात्। चतुर्थसूत्रस्य गायत्रीज्योतिःशब्दयोरेकार्थपरत्वमित्यर्थस्य 'न च वाच्यं अथ यदतःपर' इत्युक्तत्वात्, स्वर्गादिलोकात्परतो वैकुण्ठे दीप्यमानात्, ज्योतिःशब्दाद्विष्णोरन्यदेव 'पादोऽस्य सर्वा भूतानि त्रिपादस्याऽमृतं दिवी'त्यत्र स्वर्गस्थत्वेनोच्यत इति दिवीति शब्दस्य द्योतमानत्वयोगेन वैकुण्ठपरत्वा'दित्यादिना समर्थितत्वात्। चतुस्सूत्र्या एकाधिकरणत्व आद्यसूत्रमारभ्य चतुर्थसूत्रपर्यन्तं ज्योतिःशब्दविचारानुवृत्तिर्लिङ्गम्। आद्यसूत्रस्याग्निसूक्तस्थज्योतिःशब्दसमन्वयपरत्वाङ्गीकारे अग्निसूक्तस्थचरणाभिधानं सौत्रं ज्ञापकम्। भाष्यकारीयन्तु अग्निसूक्तस्थविषयवाक्योदाहरणं ज्ञापकम्.। द्वितीयसूत्रस्य छान्दोग्यज्योतिःशब्दसमन्वयपरत्वाङ्गीकारे तु 'छन्दोऽभिधाना'दिति छान्दोग्यवाक्यस्थपूर्वपक्षहेत्वभिधानं लिङ्गम्। तृतीयसूत्रस्य तु गायत्रीशब्दसमन्वयपरत्वे गायत्रीनिष्ठभूतादिपादत्वरूपविष्णुलिङ्गाभिधानं लिङ्गम्।

इदं चापरं दर्शनम् – तथा हि चतुःसूत्री एकमधिकरणं तत्र आद्ये सूत्रे अग्निसूक्तस्थज्येतिःशब्दस्य समन्वयः। द्वितीयसूत्रे छान्दोग्यस्थज्योतिःशब्दगायत्रीशब्दयोः समन्वयः। तृतीयसूत्रे गायत्रीशब्दस्य विष्णुपरत्वे हेत्वन्तराऽभिधानम्। चतुर्थसूत्रे तु गायत्रीज्योतिःशब्दयोरेकार्थत्वसमर्थनम्। अत्राधिकरणे ज्योतिर्गायत्रीशब्दयोः समन्वयाभिधानेऽपि गायत्रीविचारो महाविचारः। द्वितीयसूत्रोक्तगानत्राणकर्तृत्वलिङ्गाभ्यां तृतीयसूत्रोक्तभूतादिपादत्वरूपलिङ्गेन च सम्बन्धत्वेन बहुयुक्तिसम्बन्धात् ज्योतिर्विचारस्तु अवान्तरः। कर्णादिविदूरत्वरूपैकलिङ्गसम्बन्धत्वादिति। इदं च तत्वप्रदीपकारोक्तदर्शनम्। तत्र एकं चेदमधिकरणमित्युक्तत्वात्। आद्यसूत्रस्य ज्योतिःशब्दसमन्वयपरत्वेन व्याख्यानात्। 'अग्निगायत्र्यादिशब्दार्थरूपोऽसाविति भाष्यस्यायमर्थः – अग्न्यादितेजःशब्दानां गायत्र्यादिछन्दःशब्दानां चार्थः स्वरूपत्वेन निरूपणीयो विष्णुरेवेति बुध्यवधारणार्थं हि तच्छब्दैर्निगद्यते इति द्वितीयसूत्रे ज्योतिःशब्दवत् गायत्रीशब्दस्यापि समन्वेतव्यत्वसूचनात्। गायत्रीनिष्ठविष्णुलिङ्गप्रतिपादकस्य 'इयं वाव सा येयं पृथिवी'(छा.३-१२-२)त्यादिवाक्यस्य 'गायति त्रायति चे'त्यादिभाष्यस्थादिशब्दार्थत्वेनोपादानाच्च। यद्यपि द्वितीयसूत्रस्य 'ज्योतिःशब्दो न विष्णु'रित्येव पूर्वपक्षो दर्शितः, तथापि द्वितीयसूत्रे ज्योतिःशब्दस्यैव समन्वय इत्याशय इति न मन्तव्यम्। 'अग्निगायत्र्यादिशब्दार्थरूपोऽसा'विति भाष्यव्याख्यानावसरेऽपि उभयोः शब्दयोः समन्वेतव्यत्वसूचनात्, गायत्रीनिष्ठविष्णुलिङ्गप्रतिपादकेयं

(अभिनवचन्द्रिका)

वाव सेत्यादिवाक्योदाहरणाच्च । गायत्रीशब्दविषयकपूर्वपक्षस्तु शिष्यैरेवोह्यतामिति भावेन स न दर्शितः । तृतीयसूत्रे गायत्रीशब्दस्य विष्णुपरत्वे हेत्वन्तराभिधानमिति तु स्पष्टमेव । चतुर्थसूत्रस्यापि उक्तार्थत्वं स्पष्टम् । अस्मिन्नंतर्भेदाधिकरणे गायत्रीविचारस्य बहुयुक्तिसम्बन्धत्वेन महाविचारत्वात् ज्योतिर्विचारोऽवान्तरोऽवगन्तव्य इत्युक्तत्वात् गायत्रीविचारस्य महाविचारत्वं, ज्योतिर्विचारस्य अवान्तरविचारत्वं तदभिप्रेतमिति द्रष्टव्यम् । चतुःसूत्र्या एकाधिकरणत्वे ज्ञापकं तु प्रागेवोक्तम् । द्वितीयसूत्रस्य शब्दद्वयसमन्वयपरत्वे तु 'छन्दोऽभिधानान्नेति चे'दिति पूर्वोक्तमाक्षिप्य सूत्रकारीयं समाधानम् । 'तथा हि दर्शन'मिति सूत्रखण्डस्य 'गायति त्रायति चे' त्यादिभाष्यकारीयं गायत्रीनिष्ठलिङ्गपरतया व्याख्यानं च ज्ञापकम् ।

इदमन्यच्च दर्शनम् – 'ज्योतिश्चरणाभिदाना' दित्येकमधिकरणम् । त्रिसूत्री अधिकरणान्तरमिति । अत्र आद्याधिकरणे ज्योतिःशब्दसमन्वयः । द्वितीये गायत्रीशब्दसमन्वयः । इदं च टीकाकाराभिप्रेतम् । अत्र 'नित्यत्वादेव शब्दानाम्' इत्यनुव्याख्याने छन्दःसूत्रस्याऽभ्यधिकाशङ्काप्रदर्शनमधिकरणभेदे लिङ्गम् । द्वितीयाधिकरणे गायत्रीशब्दसमन्वय इत्यत्र 'तथा हि दर्शन'मिति सूत्रखण्डस्य, 'गायति त्रायति चेत्यादि' इति गायत्रीनिष्ठविष्णुलिङ्गप्रदर्शनपरतया व्याख्यानं लिङ्गम् । एवं च मतत्रयमपि विवक्षाभेदेन भाष्यकाराभिप्रेतम् । एवं च तत्रैकैकं गृहीत्वा टीकाकाराणां प्रवृत्तिरिति न विरोध इति ।

चन्द्रिकायां तु – ''ज्योतिश्चरणाभिधानात्'' अत्र त्रीणि दर्शनानि– ज्योतिरित्यादिचतुःसूत्री एकमधिकरणम् । विषयवाक्यं तु अग्निसूक्तस्थं 'ज्योतिर्हृदय आहितं य'दिति वाक्यमेवेत्येकं मतम् । इदं 'ज्योति'रित्यस्य सूत्रस्य अग्निसूक्तस्थवाक्यमेवोदाहृत्य 'इदं चैकमधिकरण'मिति वदतस्तत्वप्रदीपकृतोऽभिप्रेतम् ।

मतान्तरं तु चतुःसूत्र्या एकाधिकरणत्वेऽपि ''विषयवाक्यं ज्योतिरित्यस्यापि 'अथ यदतःपरो दिवो ज्योति'रिति छान्दोग्यवाक्यमेवेति । इदं च 'छन्दोऽभिधाना'दिति सूत्रव्याख्यानरूपम् । 'नित्यत्वादेव शब्दाना'मित्यनुव्याख्यानम् 'ज्योतिश्चरणाभिधाना'दित्यधिकरणं तात्पर्यतो विवृणोति'' इत्यवतार्य ज्योतिःसूत्रस्य छान्दोग्यवाक्यमेव उदाहरतः सन्न्यायरत्नावलीकारस्याभिप्रेतम् ।

मतान्तरं तु ज्योतिःसूत्रमेकमधिकरणं, 'छन्द' इत्यादि त्रिसूत्री अधिकरणान्तरमिति । इदं च टीकाकारस्याभिप्रेतमित्युक्तम् । अयं च केनचित् विदुपविज्ञातार्थस्य अनुवाद एव न तु वस्तुतो

(अभिनवचन्द्रिका)

दर्शनत्रयस्वरूपनिरूपणम् । अवश्यं चैतदेवं विज्ञेयम् । तत्वप्रदीपकृता छन्दःसूत्रे छान्दोग्यस्थज्योतिः-शब्दगायत्रीशब्दयोः समन्वयस्य, तृतीयसूत्रे गायत्रीशब्दसमन्वयदृढीकरणस्याऽभिप्रेतत्वेन छान्दोग्यस्थ-ज्योतिर्गायत्रीवाक्ययोः विषयवाक्यत्वप्राप्त्या इदमेव विषयवाक्यमित्यवधारणायोगात् कथमन्यथा 'भूतादिपाद' सूत्रव्याख्यानावसरे 'तावानस्ये'त्यनया ऋचा गायत्र्या भूतादयः चत्वारः पादा व्यपदिश्यन्ते । न च तस्य छन्दस्त्वे तदुपपद्यते । उपपद्यते च विष्णुत्व इत्यभिदध्यात् । तथा सन्न्यायरत्नावलीकृता सत्तर्कदीपावल्यां ज्योतिश्चरणाभिधानादिति सूत्रस्य ऐतरेये श्रूयते 'वि मे कर्णा पतयत' इत्यादीति अग्निसूक्तस्थज्योतिर्वाक्यस्य विषयवाक्यत्वेनोदाहरणात् ज्योतिःसूत्रस्य छान्दोग्यवाक्यमेव विषयवाक्य-मित्यभिधानायोगात् । सन्न्यायरत्नावल्यां तु 'छन्दोऽभिधाना'दिति सूत्रव्याख्यानरूपं 'नित्यत्वादेव शब्दाना'मित्यनुव्याख्यानमवतार्य छान्दोग्यवाक्यस्य उदाहृतत्वात् छन्दःसूत्रस्यैव तद्विषयवाक्यत्वमूह्यम् । ततश्च ज्योतिःसूत्रस्य छान्दोग्यवाक्यमेव विषयवाक्यमिति कल्पनं निर्मूलमिति । अत एव ज्योतिःसूत्रस्य छान्दोग्यमेव विषयवाक्यमित्युपपादनाय प्रवृत्तः चन्द्रिकाग्रन्थोऽप्यनुवाद एव न तु वास्तवार्थनिरूपणाय प्रवृत्त इति बोध्यम् । एवमेवंजातीयके सर्वत्र द्रष्टव्यम् । ततश्च न दोषित्वमिति ।

ननु – परं प्रति सिद्धार्थानुवादिनोऽपि दोषित्वमेव अयुक्तार्थवर्णनकृत्त्वात् । 'एवमसौ ब्राह्मणं हन्ति, एवमसौ सुरां पिबती'ति ब्राह्मणहन्तुः सुरां पिबतः प्रत्यवायदर्शनादिति चेत्, न वैषम्यात्, एवमसौ ब्राह्मणं हन्तीति ब्राह्मणहन्तुः ब्राह्मणहन्तृत्वादेव पातित्यं न तु अनुकरणात् । एवमसौ सुरां पिबतीति सुरां पिबतः सुरापानादेव पातित्यं न त्वनुकरणात् । अन्यथा एवमसौ ब्राह्मणं हन्तीति कदलीस्तम्भं छिन्दन्, प्रत्यवेयात् । एवमसौ सुरां पिबतीति पयःपिबन्नपि प्रत्यवेयादिति सुरापानाद्यनुकर्तुः दोषित्वमाशङ्क्य समाहितं महाभाष्ये 'यस्तु खल्वेवमसौ ब्राह्मणं हन्ति, एवमसौ सुरां पिबतीति तस्याऽनुकुर्वन् ब्राह्मणं हन्यात्, सुरां पिबेदिति तस्य अनुकुर्वन् ब्राह्मणं हन्यात्, सुरां पिबेदिति सोऽपि मन्ये पतितः स्यात् । विषमोऽयमुपन्यासः, यश्चैवं हन्ति, यश्चाऽनुहन्ति, उभौ तौ हतः । यश्च पिबति यश्चाऽनुपिबति उभौ तौ पिबतः, यस्तु खल्वेवमसौ ब्राह्मणं हन्ति, एवमसौ सुरां पिबति इति तस्य अनुकुर्वन् स्नाताऽनुलिप्तो माल्यगुणकण्ठः कदलीस्तम्भं छिन्द्यात् पयो वा पिबेत् न स मन्ये पतितः स्यादिति ।

**श्रुत्यधिकरणसङ्गती इति ॥** दर्शयन्निति शेषः । ननु 'यो वेदे'ति वाक्येन आनन्दमयस्य गुहानिहतत्वमुक्तमित्ययुक्तम् । अस्य वाक्यस्य 'ब्रह्मविदाप्नोति पर'(तै.उ.२-१)मिति प्रकरणस्थत्वे-

(अभिनवचन्द्रिका)

नानन्दमयप्रकरणगतत्वाभावादित्यत आह– **मान्त्रवर्णिकस्यैवेति ॥ ज्योतिषः प्रतीयत इति ॥** अनेनाऽऽनन्दमयाधिकरणप्रतिपाद्यैतदधिकरणप्रतिपाद्ययोर्गुहानिहितत्वेन प्रतीयमानत्वं सङ्गतिरित्युक्तमिति बोध्यम् । **एतच्चेति** ॥ यदीदं ज्योतिः विष्णोरन्यत्स्यात् तर्हि प्रागुक्तमानन्दमयत्वं तस्यैवेति बुद्धिः प्रसज्यत इति एतद्ज्योतिर्निर्णेयं भवतीत्यर्थः । ननु – ज्योतिषोऽन्यत्वे प्रागुक्तमानन्दमयत्वमन्यस्यैव प्रसज्यत इत्ययुक्तं हेत्वभावात् । न हि यथा ज्योतिषोऽग्नित्वे प्रकरणं रूढिश्च साधकमस्ति, तथा आनन्दमयस्याग्नित्वे साधकमस्ति । येन ज्योतिषोऽग्नित्वे आनन्दमयस्यान्यत्वबुद्धिः स्यात् । प्रत्युत आनन्दमयस्यैव विष्णुत्व एव साधकमुपलभ्यते । ततश्च आनन्दमयस्य विष्णोरन्यत्वबुद्धिः प्रसज्यत इत्युक्तमयुक्तमिति चेत्, उक्तम् – किमुक्तम्, य एवानन्दमयाधिकरणे अधिकारी स एव नात्राधिकारी । अधिकरणानामनेकवेदवाक्यविचाररूपत्वादवान्तरविद्यात्वेन पृथगाधिकारिकत्वादिति । तथा च योऽधिकारी आनन्दमयाधिकरणप्रमेयं निश्चित्य ज्योतिर्वाक्यविचारे प्रवर्तते, मा भूत् तस्य ज्योतिषो विष्ण्वन्यत्वबुद्धौ आनन्दमयस्यापि अन्यत्वबुद्धिः । यस्तु प्रथमत एव ज्योतिर्वाक्यविचारे प्रवर्तते तस्य ज्योतिषो विष्ण्वन्यत्वबुद्धौ आनन्दमयवाक्यदर्शने आनन्दमयोऽप्यन्य एवेति बुद्धिः भवेदेव । उभयत्रापि गुहानिहितत्वदर्शनात् । बाधकाभावेन तादात्म्यबुद्धेरनिवारणादिति । तदिदमुक्तं प्रसज्यत इति । एवमुत्तरत्रापि द्रष्टव्यम् । **ज्योतिःश्रुतेरिति** ॥ यद्यपि पूर्वपक्षिणा गुहानिहितत्वस्य विष्णुधर्मत्वानङ्गीकारात् नेदं विष्णुलिङ्गत्वमेवेति वक्तुं शक्यम्, तथाप्यङ्गीकारपक्षे नेदं समाधानमुक्तमिति बोध्यम् । अनभिमत-व्यावर्तक एवशब्दः । ततश्च अग्नावेव रूढत्वादित्यर्थः । एतेन ज्योतिःशब्दस्य अग्निसूर्यादितेजोमात्र-रूढत्वात् अग्नावेव रूढत्वादित्ययुक्तमिति परास्तम् । ननु ज्योतिःशब्दस्य सामान्यधर्मावच्छिन्नवाचकस्य अग्नौ शक्तिसद्भावेऽपि नाग्नित्वेन रूपेण तदुपस्थापकत्वं, किं तु ज्योतिष्ट्वेन रूपेणाग्न्युपस्थापकत्वं वाच्यम् । अग्नित्वेन तदुपस्थापकत्वे लक्षणाप्रसङ्गेन अग्नौ रूढत्वादिति उक्तयोगापातादिति चेत्, न – ज्योतिःश्रुत्याऽग्नित्वेनोपस्थित्यनङ्गीकारात् । किन्तु प्रकरणबलेन अग्नित्वेनोपस्थितिरङ्गीक्रियते । अयमत्र क्रमः – ज्योतिष्ट्वेनैव ज्योतिःशब्देनाप्युपस्थितौ, अयं ज्योतिशब्दार्थः अग्निर्भवेत्, अग्निसूक्तान्तर्गत-ज्योतिःशब्दार्थत्वादित्यनुमानेन अग्नित्वेन उपस्थितेः । अत एव अस्य सूक्तस्याऽग्निसूक्तत्वादित्युक्तम् । अन्यथा प्रसिद्धेरग्निर्भवेदित्येवाऽवक्ष्यत् । ननु प्रकरणेनैव पूर्वपक्षसम्भवात् श्रुत्युपन्यासो व्यर्थ इति चेत् न – प्रकरणस्य दुर्बलत्वात् । गुहानिहितत्वलिङ्गबाधेन तावन्मात्रस्य पूर्वपक्षहेतुत्वायोगात् । श्रुतिलक्षणसहकारिसंपत्तौ च तद्योग इति युक्तः श्रुत्युपन्यास इति । **जाठर इति** ॥ लिङ्गस्या-पीत्यङ्गीकारवादः । तथा चेत्युत्तरग्रन्थोऽङ्गीकारवादेन प्रवृत्त इति बोध्यम् । एतेन तस्य गुहानिहितत्वमानन्दमयत्वं चेति वदतः लिङ्गस्य सावकाशत्वेन दौर्बल्यकथनमयुक्तमिति परास्तम् ।

(अभिनवचन्द्रिका)

**पूर्वपक्षस्तु–** अग्निरेवेदं ज्योतिः । तस्य सूक्तस्य अग्निसूक्तत्वात् । न च लिङ्गात् प्रकरणस्य दुर्बलत्वेन गुहानिहित त्वलिङ्गात्प्रकरणबाधः । ज्योतिःश्रुतेरग्नौ निरूढत्वात्, विष्णोरत्तदभावात् । न च लिङ्गस्य निरवकाशत्वेन श्रुतिप्रकरणबाधकत्वमिति वाच्यम् । लिङ्गस्यापि जाठरजातवेदसि सावकाशत्वात् । अस्तु वा लिङ्गस्य निरवकाशत्वं, तथापि लिङ्गस्य निरवकाशत्वरूपमेकविधमेव प्राबल्यम् । श्रुतिप्रकरणयोस्त्वनेकत्वप्रयुक्तम् । श्रुतेश्च स्वभावत्वप्रयुक्तमपीति श्रुतिप्रकरणाभ्यामेव लिङ्गबाधो युक्तः । एवं च – अस्य ज्योतिषः अग्नित्वात् प्रागुक्तगुहानिहितत्वमानन्दमयत्वं च तस्यैवेति ॥

**सिद्धान्तस्तु–** विष्णुरेव ज्योतिः । कर्णादिविदूरत्वस्य विष्णुलिङ्गत्वात् । बहुत्वस्वभावबलवत्त्वरूपोभयविधप्राबल्यादपि निरवाकशत्वप्राबल्यस्य बलवत्त्वेन लिङ्गेन श्रुतिप्रकरणबाधोपपत्तेः । महायोगविद्वद्रूढिसद्भावेन श्रुतेर्विष्णावेव मुख्यत्वाच्च । तस्माद्विष्णुरेवेदं ज्योतिः । तस्यैव गुहानिहितत्वमानन्दमयत्वं चेति सिद्धम् । (अ.१०)

## वाक्यार्थमुक्तावली

ॐ ज्यातिश्चरणाभिधानात् ॐ । मान्त्रवर्णिकलिङ्गस्य कथमानन्दमयस्थत्वमित्यतः प्रागुक्तं स्मारयति **मन्त्रवर्णेति** । एतेन मान्त्रवर्णिकसूत्रसङ्गत्याऽनन्दमयाधिकरणेन सङ्गतिरित्युक्तं भवति । अव्यवहितसङ्गतिस्तु ज्योतिश्शब्दस्याग्निसूक्तगतत्वात्सूक्तानां चाधिदैवाध्यात्मादिभूतगताग्निप्रशंसकत्वेन त्रितयपरत्वादधिदैवाधिभूताध्यात्मविचारपराधिकरणत्रयानन्तरमभ्यधिकाशङ्कानिवर्तनायास्याधिकरणस्य प्रवृत्तिः । विशिष्याध्यात्मं हृदयगुहानिहितत्वाक्षेपात् प्राणविचारानन्तर्यमिति वीत्युपसर्गस्य व्यवहिताश्चेति पाणिन्युक्तेः कृपापदेनान्वय इत्याह **विरुद्धमिति** ॥ पतयत इति स्वार्थे णिजिति भावेनाह **पतत इति** ॥ वीदमित्यत्र कम्पार्थोऽत्यन्तमिति । किं शेषग्रहे कापि लज्जायां वा पुरातने । पृथक्त्वे धृष्यतायां च हरिणां संहितेरित इति ऋग्भाष्ये शेषग्रहार्थकत्वोक्तेरिहात्यन्तमशेषेन्द्रियदूरत्वमर्थ इति भावः । दूर इत्यस्यार्थोऽतीवेति । यद्यपि दूर आधीरित्येकं पदम् । तथाप्यवग्रहदर्शनात्तस्य पृथक्पदतुल्यत्वात् बुध्या विवेकेन मनश्च दूरे विचरतीति व्याख्यातम् । आधीरित्याङोऽर्थः व्याप्तेति । **किं विष्णुरिति** । अत्र ज्योतिः किमग्निरुत विष्णुरिति चिन्ता । तदर्थं ज्योतिः उपोद्धलकमग्निसूक्ताख्यं प्रकरणं च कर्णादिविदूरत्वलिङ्गबाधकमुत तद्बाध्यमिति । तदर्थं कर्णादिविदूरत्वं सावकाशमुत निरवकाशमिति । तच्च ज्योतिरिति भाष्यस्य गुहानिहितत्वाख्यविष्णुलिङ्गघटितमपि ज्योतिरित्यर्थः । अत एव वक्ष्यति जाठरजातवेदसलिङ्गस्यापि सावकाशत्वादिति ।

(वाक्यार्थमुक्तावली)

**ज्योतिःश्रुतेरग्नावेवेति** ।। ननु कथमग्नावेवेत्यवधारणं ज्योतिश्शब्दस्य तमोविरोधिमात्रे रूढत्वादिति चेन्न । एतत्सूक्तस्याग्निसूक्तत्वेन सामान्यशब्दस्य विशेषपर्यवसानात् । अग्निर्ज्योतिरिति द्वेधैवार्चिषः सम्प्रतिष्ठितिः । अग्निं गत्वा ज्योतिरेतीत्यादौ अग्नौ रूढत्वाच्चेति ज्ञेयम् । यावता यस्मात् । ननु यदि ज्योतिश्रुतिरग्निदेवतापरा तर्ह्यन्तर्नयन्यायेन विष्णुपरा सेत्स्यतीति भावेन शङ्कते श्रुतिरिति । सूत्रार्थमाह विष्णुरेवेति । सूत्रे तत्त्वित्यनुवर्तते । उपसर्गस्य धात्वर्थव्यञ्जकत्वाद्धातोरेव विचरणाभिधायकत्वमित्यभिप्रेत्य चरणाभिधानादित्युक्तं, ज्योतिरिति व्यस्तं ज्योतिश्चरणेति समस्तं च पदं ततश्च ज्योतिर्विष्णुरेव कर्णादीनां ज्योतिषो विरुद्धचरणाभिधानादिति सूत्रार्थः । अत्र स्पष्टं विचरणेति वाच्ये चरणेत्युक्तिस्तु श्रुत्यनुगमप्रदर्शनाय । विचरणेत्युक्तौ वीत्यस्य मे मन इति पदद्वयेन व्यवहितत्वात् श्रुत्यनुगमो न ज्ञायते । विपतनाभिधानादिति वाच्ये चरणेति चरमचरणग्रहणं तु प्रधानेन्द्रियक्रियात्वादिति बोध्यम् ।। **न च प्रकरणेति** ।। सूक्तस्थप्रकरणस्याग्नित्वव्यवस्थापनादन्यभेदमग्निसूक्तमिदं विष्णुसूक्तमिति सूक्तादिव्यवस्था न स्यादिति भावः ।। **प्रकरणबाधेति** ।। अभिव्यक्तिरिति वक्ष्यमाणत्वादिति भावः ।। **श्रुतेरिति** ।। अन्तरधिकरणन्यायेन सावकाशत्वादिति भावः ।। **महायोगेति** ।। ज्योतिःपदप्रवृत्तिनिमित्तस्य प्रकाशत्वादिरूपज्योतिष्ट्वस्य विष्णुगतत्वादन्यगतस्याप्यनुकृत्यधिकरणन्यायेन तदधीनत्वान्महायोगस्य तद्देवा ज्योतिषां ज्योतिः । नारायणपरो ज्योतिः । विष्णुरेव ज्योतिः । ज्योतिषामपि तज्ज्योतिरित्यादिरुढेरपि सद्भावेनेत्यर्थः ।

## तत्त्वसुबोधिनी

ॐ ज्योतिश्चरणाभिधानात् ॐ ।। ननु यो वेद निहितं गुहायामिति वाक्यं न आनन्दमयप्रकरणगतं किन्तु ब्रह्मविदाप्नोति परमिति प्रकरणगतं तथा च कथं तेनानन्दमयस्य गुहानिहितत्ववचनमित्यत आह ।। **मन्त्रवर्णोक्तस्यैवेति** ।। तथा चास्याधिकरणस्य मान्त्रवर्णिकसूत्रसङ्गत्या आनन्दमयाधिकरणेन सङ्गतिरिति भावः । इन्द्रादिशब्दानां विष्णुपरत्वेऽपि न ज्योतिःशब्दस्य तत्परत्वम् अग्निसूक्तस्थत्वरूप-विशेषहेतुना ज्योतिःशब्दस्य अग्निपरत्वादिति पूर्वाधिकरणवैषम्येण पूर्वपक्षोत्थानात् अनन्तरसङ्गतिरिति भावः । विरुद्धं पतत इत्यादौ विरुद्धमित्येतद्धि इत्यस्यार्थ इति बोद्धव्यम् । मनश्चातीवेत्यत्रातीवेति दूर इत्यस्यार्थः । दूर आधीरित्यस्यैकपदत्वेऽपि अवग्रहदर्शनाद्दूर इत्यस्य पृथक्कृत्य पूर्वत्रान्वयकरणमुपपद्यत इति भावः । आधीरित्याङोऽर्थो व्याप्तेति । ननु लिङ्गेन ज्योतिःश्रुतेः बाधः किं न स्यादित्य आह ।। **न हीति** ।। यावता कारणेन श्रुतितो दुर्बलमतः कारणान्न तद्बाधने शक्तमिति भावः । **विचरणाभि-**

(तत्त्वसुबोधिनी)

**धानादिति ॥** यद्यप्यत्र ज्योतिः प्रति कर्णादीनां विरुद्धाचरणरूपकर्णादिविदूरत्वं वक्तुं विचरणाभिधानादिति सूत्रयितव्यम् । तथाप्युपसर्गस्य द्योतकत्वमात्रं धातोरेव विचरणाभिधायकत्वमिति प्रदर्शनार्थं सूत्रस्य श्रुत्यनुगमप्रदर्शनार्थं च चरणाभिधानादिति उक्तम् । विचरणाभिधानादित्युक्तौ हि श्रुतौ वीत्यनेन चरतीत्यस्य मे मन इति पदद्वयेन व्यवहितत्वात् श्रुत्यनुगमो न ज्ञायेतेति द्रष्टव्यम् । मात्रया पर इत्यनेन अपरिच्छिन्नत्वमुच्यते न तु कर्णादिविदूरत्वम् । अतः कथं तत्र प्रमाणं इत्यत आह । **मीयन्त इति** ॥ १० ॥

## वाक्यार्थविवरणम्

ननु कर्णादेर्विरुद्धपतनेऽपि यत्र कर्णादिकमस्ति तत्र ज्योतिः स्वयमेवागत्य विषयो भवत्विति चेत्तत्राह । **यदिदमिति ॥** वैय्यधिकरण्यपरिहाराय स हि कर्णादिविदूर इति भाष्यानुरोधाय च व्याख्याति । **कर्णादिविदूरत्वलिङ्गादित्यर्थ इति ॥**

## वाक्यार्थमञ्जरी

ननु गुहानिहितत्वं मन्त्रवर्णे श्रूयते न त्वानन्दमयप्रकरणे । अतः कथं तदानन्दमयनिष्ठतयोच्यत इत्यतः प्रागुक्तं स्मारयति ॥ **मन्त्रवर्णेति** ॥ पततः चरतः । वीदमित्यत्र कम्पार्थोऽत्यन्तमिति । दूर इत्यस्यार्थो अतीवेति । आङोऽर्थो व्याप्तेति । दूर आधीरित्यस्यैकपदत्वेऽपि दुःखण्डदर्शनाद्दूर इत्येतत्पृथक्कृत्यास्य पूर्वत्रान्वयकरणमुपपन्नम् । नुशब्दार्थ इदानीमिति प्रकरणमात्रस्य लिङ्गतो दौर्बल्येऽपि श्रुतिसहितस्य प्राबल्यं सम्भवतीत्याशयेनाह ॥ **ज्योतिःश्रुतेरिति** ॥ यावता येन प्रकारेण ॥ ॐ ज्योतिश्चरणाभिधानात् ॐ ॥ ज्योतिर्हृदय इत्युक्तं ज्योतिर्ब्रह्मैव । वि मे कर्णेत्यादिना विरुद्धचरणोक्तेः । कर्णादिसर्वेन्द्रियदूरत्वलिङ्गादित्यर्थः । वैय्यधिकरण्यनिरासाय कर्णादिविदूर इत्युत्तरभाष्यानुसारेणाह ॥ **कर्णादिविदूरत्वेति** ॥ अत्र कर्णादिविदूरत्वं नाम इयदितिपरिच्छेदरहितवैभवत्वं बोध्यम् । यापयति ज्ञापयति ॥ **महायोगेति** ॥ निरवधिकप्रकाशवत्वात् अग्न्यादिनिष्ठप्रकाशनियामकत्वात् । ज्योतिषां ज्योतिः । नारायणपरो ज्योतिः । विष्णुरेव ज्योतिरित्यादिवैदिकप्रयोगबाहुल्याचेति भावः ॥ **निरवकाशलिङ्गेनेति** ॥ अग्निर्वै देवानामवम इत्यवमतया भीषाऽस्मादग्निस्तपतीति सभयतया परिह्वेनं म्रियन्ते विद्युद् वृष्टिश्चन्द्रमा आदित्योऽग्निरिति मरणादिमत्तया च श्रुतस्याग्नेरपरिच्छिन्नवैभवासम्भवादिति भावः ॥ १० ॥

## विवृतिः

ननु यो॰वेद निहितं गुहायामिति वाक्यं नानन्दमयप्रकरणगतं किन्तु ब्रह्मविदाप्नोति परमिति प्रकरणगतम् ॥ तथा च कथं तेनानन्दमयस्य गुहानिहितत्ववचनमित्यत आह ॥ **मन्त्रवर्णोक्तस्यैवेति** ॥ तथा चानन्दमयाधिकरणेन सङ्गतिरिति भाव॰ ॥ इन्द्रादिशब्दानां विष्णुपरत्वेऽपि न ज्योतिःशब्दस्य विष्णुपरत्वम् अग्निसूक्तस्थत्वरूपहेतुना ज्योतिःशब्दस्याग्निपरत्वादिति पूर्वाधिकरणवैषम्येण पूर्वपक्षोत्थानादनन्तरसङ्गतिरिति भावः ॥ **विरुद्धं यत इत्यादौ विरुद्धमेतद्धि इत्यस्यार्थ इति बोद्धव्यम्** ॥ मनश्चातीवेत्यत्रातीवेति दूरे इत्यस्यार्थः ॥ दूर आधीरित्यस्यैकपदत्वेऽपि अवग्रहणदर्शनाद्दूर इत्यस्य पृथक्कृत्य पूर्वत्रान्वयकरणमुपपद्यत इति भावः ॥ आधीरित्याङोऽर्थो व्याप्तेरिति ॥ ननु लिङ्गेन ज्योतिःश्रुतेर्बाधः किं न स्यादित्यत आह ॥ **न हीति** ॥

यावता कारणेन श्रुतितो लिङ्गं दुर्बलम् अतो न तद्बाधने शक्तमिति भावः । मात्रया पर इत्यनेनापरिच्छिन्नत्वमुच्यते न तु कर्णादिविदूरत्वमतः कथं तत्र प्रमाणमित्यत आह ॥ **मीयन्त इति** ॥

॥ इति ज्योतिरधिकरणम् ॥

## ११. गायत्र्यधिकरणम्

**॥ ॐ छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात्तथा हि दर्शनम् ॐ ॥ २५ ॥**

'अथ यदतः परो दिवो ज्योतिर्दीप्यत' (छां.३-१३-७) इत्युक्तस्य ज्योतिषो 'गायत्री वा इदं सर्वम्' इति (छां.३-१२-१) गायत्र्या समारम्भः कृतः । तस्मान्न विष्णुरिति चेन्न । तथा चेतोऽर्पणार्थं हि निगद्यते । अग्निगायत्र्यादिशब्दार्थरूपोऽसाविति चेतोऽर्पणार्थं हि निगद्यते । तथा हि दर्शनं 'गायति त्रायति च' (छां.उ.३-१२-१) इत्यादि ।

'सर्वच्छन्दोऽभिधो ह्येषः सर्वदेवाभिधो ह्यसौ ।
सर्वलोकाभिधो ह्येषः तेषां तदुपचारत' इति वामने ॥ २५ ॥

## सत्तर्कदीपावली

अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु इदं वा व तद्यदिदमस्मिन्नन्तःपुरुषे ज्योतिः इति श्रुत्यन्तरादपि विष्णुरेव मुख्यज्योतिः । इदमेवाक्षिप्य समर्थयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **छन्दोऽभिधानादित्यादिना** ॥ न च वाच्यं गायत्री वा इदं सर्वमिति गायत्रीच्छन्दःप्रारम्भात् नात्र ज्योतिःशब्दार्थो विष्णुरिति । गायति च त्रायति च तस्माद्गायत्रीनामेति गायत्रीशब्दस्य विष्णुपरत्वश्रुतेः सर्वच्छन्दोऽभिधो ह्येष इति पुराणवचनाच्चेत्यर्थः ।

## तत्त्वप्रदीपिका

छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात्तथा हि दर्शनम् ।

अथ यदतः परो दिवो ज्योतिर्दीप्यत इत्यत्र ज्योतिरुच्यते । तस्मिन्ब्राह्मणे गायत्रीशब्देनोपक्रमः कृतः । तस्य चानुपसञ्जातविरोधित्वेन बलवत्त्वात् ज्योतिश्शब्दस्य तद्विषयत्वोपपत्तिः । 'तेजो वै ब्रह्मवर्चसं गायत्री' इति श्रुतेः । अतोऽत्रापि न विष्णुर्ज्योतिरिति पूर्वः पक्षः । अग्निगायत्र्यादिशब्दार्थरूपोऽसाविति चेतोऽर्पणार्थं हि निगद्यत इत्यस्य स्वपदवर्णनरूपस्य भाष्यस्यायमर्थः । अग्न्यादितिजश्शब्दानां गायत्र्यादिछन्दश्शब्दानां चार्थस्वरूपत्वेन निरूपणीयो विष्णुरेवेति बुद्ध्यवतरणार्थं हि तच्छब्दैर्निगद्यते । कथमन्यविषयतया प्रसिद्धानामन्यस्यैव मुख्यार्थत्वमित्यत आह– **तथा हि दर्शनं गायति च त्रायति चेति** । 'इयं वाव सा येयं पृथिव्यस्यां हीदं सर्वं भूतं प्रतिष्ठितमेतामेव नातिशीयत' इत्यादिकगादिशब्दाद्द्रष्टव्यम् । 'पृथुत्वात्प्रथित्वाच्च पृथिवी विष्णुरुच्यते' । अग्रणीत्वादगनेतृत्वाददनाच्चाग्निः । ऊषणकरणत्वादुष्णिक् । स्वेच्छानुरोधेन स्तोभनादनुष्टुप् । त्रिभिर्वेदैः स्तूयत इति त्रिष्टुप् । छन्द्यत्वाच्छन्द इत्येवं द्रष्टव्यम् ।

## तत्त्वप्रकाशिका

अत्र सूत्रमेवादौ पठति ॥ **छन्दोऽभिधानादिति** ॥ लोकतोऽन्यत्रप्रसिद्धगायत्रीनाम्नोऽत्र हरौ समन्वयसमर्थनादस्ति शास्त्रादिसङ्गतिः । श्रुत्यादिसङ्गतिविषयवाक्यविषयसंशयपूर्वपक्षतत्फलानि सूचयन् सूत्रं व्याचष्टे ॥ **अथेति** ॥ हृदयनिहितं ज्योतिर्विष्णुरित्यभिहितं तच्च ज्योतिश्छन्दोगश्रुतौ श्रूयते । अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमस्मिन्पुरुषे ज्योतिरिति । एतच्च गायत्रीत्वेन पठ्यते । गायत्री वा इदं सर्वं भूतं यदिदं किञ्च वाग्वै गायत्री वाग्वा इदं सर्वमित्युपक्रमात् । इयं च गायत्री यदा विष्णोरन्या स्यात्तदिदं ज्योतिश्च सा स्यादिति गायत्रीनिर्णयोऽत्रावश्यापेक्षितः । सा गायत्री विषयः । किं विष्णुरुत छन्दोविशेष इति सन्देहः । ज्योतिःश्रुतिलोकप्रसिद्धिश्च सन्देहबीजम् ।

(तत्त्वप्रकाशिका)

तत्र गायत्री छन्दोविशेष एवेति पूर्वः पक्षः । गायत्रीशब्दस्य तत्रैव रूढत्वात् । वाग्वै गायत्रीति वाक्त्वविधानाच्च । न च ज्योतिःश्रुत्या गायत्र्यादिश्रुतिबाधः । श्रुतेः श्रुतिबाधकत्वायोगात् । न च सावकाशत्वादिना बाध्यबाधकभावः । गायत्र्यां 'तेजो वै ब्रह्मवर्चसं गायत्री' इति ज्योतिःशब्दानतिभिन्नार्थ-तेजःशब्दश्रवणेन ज्योतिःश्रुतेरेव सावकाशत्वात् । न च गायत्रीश्रुतिर्विष्णाववकाशवती रूढेरभावात् । योगस्य चामुख्यवृत्तित्वात् । न च गायत्र्या भगवदधीनत्वेन तस्मिन्नेव तच्छ्रुतेर्मुख्यत्वमिति वाच्यम् । गायत्र्या वेदविशेषत्वेन नित्यत्वात् । नित्यस्य च पराधीनताऽयोगात् । तस्मात् गायत्री न विष्णुरपि तु छन्दोविशेष एव । ततश्चेदं ज्योतिरानन्दमयश्च नासाविति भावः ।

सिद्धान्तयत्सूत्रांशमनुकरोति ॥ **नेति** ॥ स्वपदानि वर्णयति ॥ **अग्नीति** ॥ अत्र गायत्रीशब्देन विष्णुरेव निगद्यते । तस्माज्ज्योतिःशब्देनापि स एव निगद्यते । ततश्च स एवाऽऽनन्दमयः । न च गायत्र्यादिशब्दैरुच्यते तदभेदविधानार्थं किन्तु गायत्र्यादिशब्दार्थगुणस्वरूपत्वेनोपासनार्थमेवेति भावः । आदिपदेन वाचो ग्रहणम् । अधिकरणान्तरेऽप्येतन्न्यायस्यानुसन्धेयत्वं च हिशब्देन सूचयति । भवेज्ज्योतिषोऽपि विष्णुत्वं यदि गायत्रीयं विष्णुः स्यात्तदेव कुत इत्यत आह ॥ **तथा हीति** ॥ दर्शनं श्रुतिः । एतद्गायत्र्या गानत्राणकर्तृत्वलिङ्गश्रवणात्तस्य च छन्दस्यसम्भवाद्विष्णुरेव गायत्री ततो ज्योतिरपि स एवेति भावः । आदिपदेन 'या वै सा गायत्रीयं वाव सा येयं पृथिवी' इत्यादेः सङ्ग्रहः । ननु गायत्री-श्रुतेरन्यत्र निरूढत्वात्कथं लिङ्गमात्रेण विष्णुत्वनिश्चय इत्यत आह ॥ **सर्वेति** ॥ गायत्रीश्रुतेः पौराणिक-रूढ्या श्रुत्युक्तयोगेन गायत्र्या भगवदधीनत्वेन च विष्णावेव मुख्यवृत्त्या सावकाशत्वात् लिङ्गस्यामुख्य-वृत्त्याप्यन्यत्रानवकाशात् सावकाशश्रुतेः निरवकाशलिङ्गेन बाधोपपत्तेर्युक्तो लिङ्गमात्रेणायं निर्णय इति भावः । न च नित्यस्य पराधीनत्वायोगः ।

'स्वभावजीवकर्माणि द्रव्यं कालः श्रुतिः क्रिया ।
यत्प्रसादादिमे सन्ति न सन्ति यदुपेक्षया'

इति नित्यानामपि भगवदधीनत्वस्य श्रौतत्वात् । अत्र देवलोकपदाभ्याम् अग्निपृथिव्यादिशब्दानां च भगवत्परत्वमुच्यते ॥ २५ ॥

## गुर्वर्थदीपिका

सौत्रपदैरेव व्याख्यानात् अनुकरोतीत्युक्तम् । एतन्न्यायस्य तत्र तत्र समन्वीयमानपदविभाग-लभ्यस्याऽऽसमन्तात् प्रकाशनादिगुणवत्तया भगवति चेतोऽर्पणस्य । गायति स्वभक्तान्प्रति सामगानं करोति त्रायति मुक्तिं दत्वा तान् रक्षयतीति श्रुत्यर्थमभिप्रेत्योक्तं गानत्राणकर्तृत्वलिङ्गश्रवणादिति ।

# भावबोधः

।। ॐ छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात्तथा हि दर्शनम् ॐ ।। 'हृदयनिहितम्' इत्यनेनानन्तरसङ्गतिरुक्ता भवति ।। **किमिति** ।। अत्र गायत्री किं छन्द उत विष्णुरिति चिन्ता । तदर्थं गायत्रीश्रुतिर्गानत्राणकर्तृत्वादिविष्णुप्रापकबाधिका उत तद्बाध्येति । तदर्थं सा श्रुतिस्सदुपोद्बलकत्वेनाभिमतममृतं दिवीति परो दिव इत्युपदेशभेदविरोधादिकं च किं निरवकाशमुत सावकाशमिति । तदर्थं गायत्र्यादिशब्दप्रवृत्तिकारणं द्युस्थितत्वद्युपरत्वादिकं च हरेर्न सम्भवत्युत सम्भवतीति । तदर्थं हरेरनादिपदार्थतत्स्वभावनियामकत्वं द्युस्थितत्वद्युपरत्वोपदेशाविरोधापादकादिकं नास्त्युतास्तीति । तदर्थं तत्र तत्कल्पकत्वेनाभिमतस्य भूतादिपादत्वलिङ्गादेः विष्ण्वेकनिष्ठत्वरूपनिरवकाशत्वे च प्रमाणं नास्त्युतास्तीति । पूर्वाधिकरणेन गतार्थतां निरस्यति– **न च गायत्र्या इति** ।। कुत इत्यत आकाशादिशब्दप्रवृत्तिनिमित्तविवरत्वादेराकाशादिस्वभावत्वेऽपि तद्धर्मिण आकाशादेर्जन्यत्वेन धर्मिणा सह भगवदधीनत्वाद् भवतु तन्निमित्तकाकाशादिशब्दानां भगवति मुख्यत्वम् । वेदविशेषरूपगायत्र्या अनादित्वेन तत्स्वभावभूतगायत्रीशब्दप्रवृत्तिनिमित्तस्य तद्रीत्यापि भगवदधीनत्वाभावात् कथं गायत्र्यादिशब्दानां भगवति मुख्यत्वमिति ।

'नित्यत्वादेव शब्दस्य तत्स्वभावः कथं हरेः'

इत्यनुव्याख्यानोक्ताभ्यधिकाशङ्कामाह गायत्र्या वेदविशेषत्वेन नित्यत्वादिति । अनेन आकाशाधिकरणोदाहृतन्यायविवरणे बुद्ध्या विवेकेन नित्यत्वे विद्यमान इत्ययं भागो व्याख्यातो भवति । न्यायविवरणाक्षरयोजना तु– अधिभूताध्यात्माधिदैवगतशब्दानां भगवद्विषयत्वमेवेत्यन्वयः । भगवद्विषयत्वाभावे पूर्वपक्ष्यभिप्रेताचेतनत्वादिहेतूनामप्रयोजकत्वप्रदर्शनार्थमचेतनत्वजीवान्वयव्यतिरेकनित्यत्वेषु विद्यमानेष्वपीत्युक्तम् । अत एवापिशब्दः । अचेतनत्वेत्यतः पूर्वमाकाशाद्यधिभूतप्राणाद्यध्यात्मगायत्र्याद्यधिदेवानामिति शेषो वाऽधिभूतेत्यादिवाक्यादर्थतो लाभो वा द्रष्टव्य इति । अत्र नित्यत्वं नामानादित्वं विवक्षितम् । ध्वंसाप्रतियोगित्वमात्रत्वे तु जन्यत्वाविरोधेनेश्वराधीनत्वाविघटकत्वात् पूर्वपक्षयुक्तित्वं न स्यात् । अत एवोक्तं सुधायाम्– 'वेदस्य नित्यत्वादनादित्वाच्च' इति ।।

ननु कृतकक्रमविशिष्यवर्णसमुदायरूपस्य वेदस्य कथमनादित्वमिति चेत्, न; यतः स्वतन्त्रपुरुषपूर्वकत्वभूतभवद्भविष्यद्भिरखिलैरेकप्रकारेण पठ्यमानत्वमेवानादित्वं वेदस्य विवक्षितम् । अत एवोक्तं

(भावबोधः)

विष्णुतत्त्वनिर्णयटीकायाम्– 'स्वतन्त्रस्य वक्तुरभावादपौरुषेयत्वमुपपद्यते' इति । एतदेव चानादिनित्यत्वमिति च । एतावतैव शब्दस्वभावभूतपदार्थप्रतिपादनशक्तेः पराधीनत्वासम्भवेनेश्वराधीनत्वविघटनोपपत्तौ मुख्यानादित्वकल्पनावैयर्थ्यात् । न चैवंविधमनादित्वम् आकाशादीनामिति तदुक्तेरभ्यधिकाशङ्काप्रदर्शकत्वमिति भावः ।

ननु 'विकारशब्दान्नेति चेत्' इत्यनेन पूर्वमानन्दमयस्य 'जीवमुख्यप्राणलिङ्गान्नेति चेत्' इत्यादिनोत्तरत्र प्राणादीनां विष्णुत्वाक्षेपपरिहारवदत्राप्यग्निसूक्तोक्तं ज्योतिर्विष्णुर्न । अथ 'यदतः परो दिवो ज्योतिः' इत्युक्तस्यैव ज्योतिषस्तदुपक्रमे 'गायत्री वा इदं सर्वम्' इति गायत्रीरूपच्छन्दोविशेषत्वेनाभिधानादित्याक्षिप्य गायत्रीशब्दस्यापि विष्णुपरत्वान्नेयमनुपपत्तिरिति परिहारसम्भवेनेदमपि सूत्रं तथैव ज्योतिरधिकरणशेषत्वेनैव व्याख्यायताम् । एवं सत्यग्निगायत्र्यादीति भाष्येऽग्निशब्दोपादानं सूत्रे समन्वेतव्यशब्दानुक्तिराक्षेपसमाधानरूपत्वं च सङ्गच्छते । किमिति टीकायामधिकरणान्तरत्वेन व्याख्यानमस्येति चेत्, न; तथात्वे उदाहृतन्यायविवरणविरोधात् ॥

'नित्यत्वादेव शब्दस्य तत्स्वभावः कथं हरेः' ॥

इत्यनुव्याख्यानविरोधाच्च ॥ तथा हि– न्यायविवरणे अधिवेदस्य नित्यत्वेऽपि तद्गतस्य शब्दस्य विष्णुविषयत्वमित्युक्त्या वेदवाचकशब्दस्य समन्वेतव्यत्वं वेदगतनित्यत्वस्य पूर्वपक्षयुक्तित्वं चोच्यते । न च चतुःसूत्र्या एकाधिकरणत्वे तत्सम्भवति । तथात्व आकाशप्राणगताचेतनत्वजीवनान्वयव्यतिरेकयोरिवाग्निगतस्यैव कस्यचिद्धर्मस्य पूर्वपक्षयुक्तित्वेनाग्निवाचकस्यैव शब्दस्य समन्वेतव्यत्वेन च कथनं स्यात् । अनुव्याख्यानेऽपि 'नित्यत्वादेव शब्दस्य' इति वेदरूपशब्दस्याकाशप्राणादिवत् समन्वेतव्यशब्दवाच्यत्वोक्त्या तद्गतार्थप्रतिपादनशक्तेर्नित्यत्वस्याकाशगतविवरत्वस्वभावत्वस्येव पूर्वपक्षयुक्तित्वोक्त्याऽयमेवार्थोऽभिहितः । न च 'अथवाऽत्राप्यथ यतः परो दिवः' इति वाक्योक्तज्योतिषि सन्देह इत्यादि सुधाग्रन्थपर्यालोचनया ज्योतिश्शब्दस्यैव समन्वेतव्यत्वप्रतीतिरिति वाच्यम् । तथात्वेऽपि तदुक्तरीत्यैव 'अथ यदतः' इति वाक्यगतज्योतिश्शब्दस्य समन्वेतव्यत्वप्राप्तावप्यधिकरणैक्यालाभात् । एवञ्चाग्निगायत्र्यादिशब्दार्थरूपोऽसाविति भाष्ये ज्योतिश्शब्दपर्यायाग्निशब्दस्य प्रथमं तत्र पूर्वपक्षयुक्तित्वेन क्रमेणाशङ्कितयोर्गायत्रीवाक्शब्दयोरनन्तरमुपादानम् 'प्रणेता ज्योतिः इत्याद्यैः' इति सङ्क्षेपे आदिपदस्य तत्तदधिकरणन्यायसञ्चारविषयशब्दान्तरसङ्ग्राहकतया सावकाशत्वेन ज्योतिरितिवद् गायत्रीशब्दानुपादानं चात्राधिकरणैक्यज्ञापकम् । अधिकरणभेदेऽपि 'अथ यदतः' इति वाक्यगतज्योतिश्शब्दस्य

(भावबोधः)

समन्वेतव्यत्वपक्षमादाय भाष्ये प्राधान्याप्राधान्याभ्यामग्निगायत्र्यादिशब्दोपादानस्य सङ्क्षेपे प्रणेतेत्यनेन प्राणाधिकरणद्वयसङ्ग्रहवज्ज्योतिरित्यनेनैवेतदधिकरणद्वयसङ्ग्रहसम्भवेन गायत्रीशब्दानुपादानस्य चोपपत्तेः। ''ज्योतिश्चरणाभिधानात्' इति सूत्रोक्ताक्षेपसमाधानरूपत्वमस्याधिकरणान्तरत्वेऽप्यङ्गीकृतमेवेति नानुपपत्तिः। 'आनुमानिकमप्येकेषाम् इति चेत्' इत्यादिवत् समन्वेतव्यशब्दानुक्तिराक्षेपसमाधानरूपतया सूत्रविन्यासोऽप्युपपद्यते। भाष्येऽग्निशब्दग्रहणं तु गायत्रीशब्दसमन्वयकथनेन ज्योतिःशब्दस्य विष्णुपरत्वं समाहितमिति ज्ञापनार्थम्। अत एव टीकायां गायत्रीपदेन विष्णुरेव निगद्यते। तस्मात् ज्योतिश्शब्देनापि 'स एव निगद्यते' इति तयोर्हेतुहेतुमद्भावः प्रदर्शितः। तथा गायत्रीशब्दवाच्यत्वे विष्णोर्वाधकत्वेनोक्ते वाक्शब्दस्यापि विष्णुपरत्वं तत्समाधानार्थं वक्तव्यमित्यादिपदं प्रयुक्तम्। अत एव टीकायामादिपदेन वाचो ग्रहणमित्युक्तम्।

ननु तर्हि गायत्र्यग्न्यादिशब्दार्थरूप इति निर्देशः स्यादिति चेत्, सत्यम्; तथाप्यन्यत्र प्रसिद्धस्य गायत्रीशब्दस्य विष्णौ प्रयोगे प्रयोजनं सूचितमित्यपि ज्ञापनार्थमग्निगायत्र्यादीत्येवक्रमेण निर्देशः। अस्मिन् पक्षे, ''ज्ञानार्थमध्ययनार्थं गुणानां समुदीरणा' इति प्रमाणप्रसिद्धिद्योतको 'हि'शब्द इति ध्येयम्। **वाचो ग्रहणमिति**। 'वाग्वै गायत्री' इति श्रुतौ वाक्शब्दार्थगुणवत्तयोपासनार्थम् 'विष्णुर्वाक्' इत्युक्तम्। तथा च वाक्यमपि न विष्णुत्ववाधकमिति दर्शयितुं भाष्य आदिपदमित्यर्थः। अनुसन्धेयत्वं हिशब्देन सूचयतीति। एतदध्यायगतानन्दमयाद्यधिकरणेषु तत्तच्छब्दसमन्वयकथनं तत्तच्छब्दार्थयुक्तत्वेन हरेर्ध्यानार्थमुक्तमिति न्यायस्यानुसन्धेयत्वं चेतोऽर्पणार्थं हि निगद्यत इति भाष्यगत'हि'शब्देनाचार्यः सूचयतीत्यर्थः। प्रसिद्ध्यर्थको 'हि'शब्दोऽस्यार्थस्य सार्वत्रिकत्वं गमयतीति भावः। पृथिवी इत्यादेः सङ्ग्रह इति। 'या वै सा' इत्यादिना गायत्र्याः पृथिव्यभेदमुक्त्वा 'अस्यां हीदं सर्वं प्रतिष्ठितम्' इति पृथिव्याः सर्वाधारत्वमुक्तम्। तच्च विष्णोरेव गायत्रीपृथिव्यादिशब्दार्थत्वे युक्तं नान्यथेत्यर्थः॥ **लिङ्गस्येति**॥ अनेनानन्यथासिद्धलिङ्गैरिति न्यायविवरणं पूर्ववद्व्याख्यातं भवति॥ **सावकाशश्रुतेर्निरवकाशलिङ्गेनेति**॥ अनेन 'सन्दिग्धा' इत्यादिन्यायविवरणं पूर्ववद्व्याख्यातं भवति। उपलक्षणं चैतत्। सैद्धान्तिकश्रुतिलिङ्गानां वाहुल्यमपि प्राबल्यनिमित्तं द्रष्टव्यम्। अत एवोक्तमनुव्याख्याने 'बाहुल्यात् श्रुतिलिङ्गयोः' इति। न्यायविवरणे च पुरुष इत्यादीत्यादिपदेन श्रुतिबाहुल्यं 'लिङ्गैः' इति वहुवचनेन लिङ्गवाहुल्यं चोक्तम्। भाष्ये च 'गायति च त्रायति चेत्यादि' इत्यत्रादिपदेन लिङ्गबाहुल्यमुक्तम्।

## भावदीपः

।। ॐ छन्दोऽभिधानात् ॐ ।। **अन्यत्रेति** ।। वर्णसमावेशरूपमन्त्र इत्यर्थः । अध्याहारेण भाष्यस्योक्तार्थसूचकत्वं ।। **हृदयेति** ।। **छन्दोगेति** ।। तृतीयेऽध्याये ज्योतिरितीति श्रूयत इत्यन्वयः । सौत्रपदानां अर्थोऽग्रे व्यक्तः इति गायत्र्या समारम्भः कृतः तस्मादित्यन्तभाष्यस्यार्थ इत्युपक्रमादिति । विष्णुरित्यस्य तात्पर्यमाह ।। **इयं चेति** ।। **इदमिति** ।। पुरुषे ज्योतिरित्युक्तं पूर्वोक्तज्योतिश्चेत्यर्थः । एतेन भाष्येऽस्मिन्नर्थे ज्योतिश्चेति शेष इति भावः । इति पूर्वाक्षेपसङ्गतिसद्भावाद् गायत्रीनिर्णयोऽवश्यापेक्षित इत्यर्थः । एतेन सङ्गतिफलं सूचयन्निति विवृतम् । वागित्याद्यंशोक्तिरुत्तरार्था । छन्दोऽभिधानान्नेति चेदिति सौत्रशङ्काभागविवरणपरतयाऽपि भाष्यं व्यनक्ति ।। **तत्र गायत्रीति** ।। **न विष्णुरिति** ।। भाष्ये गायत्रीति पदस्येति शेषमुपेत्यान्वयमुखेनार्थकल्पनं कृत्वा तस्मादिति हेत्वंशं व्याचष्टे ।। **रूढत्वादिति** ।। पूर्वपक्षदार्ढ्याय कथं प्रसिद्धबहुलशब्दानामन्यथार्थतेत्यनुभाष्योक्तिलब्धमपि हेतुं तस्मादित्यस्यार्थत्वेनोपेत्याह ।। **वाग्वा इति** ।। ज्योतिःश्रुतेर्विष्णुपरत्वस्य पूर्वमुक्तत्वेन तद्विरोधान्नात्र पूर्वपक्षोदय इत्याशङ्कां निराह ।। **न च ज्योतिःश्रुत्येति** ।। तस्मादित्यत्यार्थान्तरमप्याह ।। **ज्योतिःश्रुतेरेव सावकाशत्वादिति** ।। गायत्रीश्रुतेर्निरवकाशत्वादित्यप्यर्थमुपेत्य निरवकाशत्वमुपपादयति ।। **न च गायत्रीश्रुतिरिति** ।। **योगस्येति** ।। गानत्राणकर्तृत्वरूपस्येत्यर्थः । प्रमाणाश्रितचोद्यमुक्त्वा प्रमेयाश्रितमपि तत् 'नित्यत्वादेव शब्दानां तत्स्वभावः कथं तत' इत्यनुभाष्योक्तं शङ्कापूर्वमाह ।। **न च गायत्र्या इति** ।। स्वातन्त्र्यं तत्र मुख्यं स्यादित्युक्तेराह ।। **मुख्यत्वमिति** ।। गायत्रीपदप्रवृत्तिनिमित्तस्य गायत्रीस्वभावत्वात्तस्या ईशाधीनत्वेन प्रवृत्तिनिमित्तस्यापि तथात्वमिति प्रवृत्तिनिमित्तस्येशाधीनत्वादौ युक्तिसूचनाय गायत्र्या इत्येवोक्तम् । तस्मादित्यस्यार्थान्तरं गायत्र्या नित्यत्वादिति ।। **नित्यस्य चेति** ।। अनादेरित्यपि ध्येयम् । जन्यभूताकाशस्वभावस्य विवरत्वादेः पदप्रवृत्तिनिमित्तस्य धर्मिणा सह जन्यत्वेनेशाधीनत्वेऽपि अनादिनित्ये तदभावादिति भावः । एतेनाऽधिवेदगतानामपि शब्दानां नित्यत्वे विद्यमानेऽपीति न्यायविवरणांशो व्याख्यातः । इदं चोपलक्षणम् । गायति त्रायति चेति वाक्यशेषोक्तं यदर्थाभिधानरूपगानकर्तृत्वं यच्चाध्येतॄणां पापाद्रक्षेत्यपि ध्येयम् । एवं च गायत्रीवागादिनिरूढनिरवकाशश्रुतिबलादन्यदपि विष्णुलिङ्गं गायत्र्यामेव योज्यमिति भावेनोक्तार्थं सर्वं भाष्यारूढं कुर्वन् तस्मान्न विष्णुरिति भाष्यमनूद्य फलितार्थं चाह ।। **तस्मादिति** ।। रूढत्वाद्वाक्त्वविधानाज्ज्योतिःश्रुतेः गायत्र्यां सावकाशत्वात् गायत्रीश्रुतेः विष्णावनवकाशात् गायत्रीप्रवृत्तिनिमित्तस्येशानधीनत्वादीशगतत्वा-

(भावदीपः)

भावाच्चेत्युक्तसर्वहेतुपरामर्शः । बुद्धिस्थाशेषार्थपरामर्शित्वात्तच्छब्दस्य प्रागुक्ताशेषार्थस्य भाष्यकर्तृबुद्धिस्थत्वादिति भावः । विष्णुर्न चेन्नैरर्थक्यं गायत्रीशब्दस्य स्यादित्यतः छन्दोविशेष एवेति फलितोक्तिः ॥ **इदं ज्योतिरिति** ॥ हृदयाहितत्वयुक्तम् । एतच्छान्दोग्यस्थं पूर्वोक्तमग्निसूक्तस्थं चेत्यर्थः । एतेन तस्मादुक्तहेतुसमुदायान्न विष्णुर्गायत्री तस्माद्गायत्र्यैक्याज्ज्योतिरादिशब्दवाच्यश्च न विष्णुरिति गायत्रीज्योतिःपदाध्याहारेण चावृत्त्या च भाष्यार्थो दर्शितः ॥ **नासाविति** ॥ अपि तु छन्दोविशेष एवेत्यनुषङ्गः । तस्यानन्दमयत्वं चाभिमानिद्वारेति भावः । एतेन पूर्वपक्षफलानि सूचयन्नित्यंशो विवृतः ॥ अग्रे व्याख्यानकरणादिदं किमित्यत आह ॥ **अनुकरोतीति** ॥ किञ्चिद्विवरणेनेति योज्यम् । यथान्यासस्य हि पुनरुच्चारणमनुकरणम् ॥ **स्वपदानीति** ॥

'सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुकारिभिः ।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः'

इत्युक्तेः । भाष्यत्वादिति भावः । नेन्नि नञो न विष्णुरित्यनुवृत्तेनान्वये सति फलितार्थमाह ॥ **विष्णुरेवेति** ॥ भाष्ये हि यस्मादित्यर्थ इत्युपेत्याह ॥ **तस्मादिति** ॥ **ज्योतिःशब्देनेति** ॥ अत्रत्येन पूर्वतनेन चेत्यर्थः । अयं च न विष्णुर्ज्योतिरिति चेन्नेति पूर्वभाष्येण ज्योतिःशब्दाध्याहारयुतेनान्वये सति सिद्धोऽर्थः । चेतोऽर्पणार्थमित्येद्व्यावर्त्यमाह ॥ **न चेति** ॥ सौत्रतथाशब्दार्थो गायत्र्यादीति ॥ **वाचोग्रहणमिति** ॥ वाग्वाव गायत्रीति गायत्र्या वाक्त्वोक्तिर्वाक्शब्दार्थगुणस्वरूपत्वेनोपासनार्थमेव नाभेदविधानार्थेति गायत्र्या विष्णुत्वे सापि न बाधिकेति भावेन भाष्ये आदिपदमिति भावः ॥ **सूचयतीति** ॥ आदिपदमिति विपरिणम्यानुषज्यत इति चन्द्रिकोक्तिः । हिशब्देन सूचयतीति तु पाठो न बहुकोशेषु दृश्यत इत्याहुः । पूर्वोत्तराधिकरणविषयवाक्येषु विष्णौ प्रसिद्धविष्णुनारायणादिपदप्रयोगमकृत्वा इन्द्राकाशाग्निज्योतिःप्राणादित्याक्षरादिशब्दप्रयोगस्तु तत्तच्छब्दार्थगुणस्वरूपत्वेन विष्णोरुपासनार्थमैश्वर्यादिगुणान् विष्णौ वक्तुमित्यनुसन्धेयत्वं सूचयति भाष्यस्थमादिपदमित्यर्थः । अत एव भाष्ये पूर्वनये त्वामग्ने तमसीति श्रुताग्निपदोपादानेन तत्किञ्चिद्विवृतम् । सूत्रे भाष्ये च हिर्हेतावित्युपेत्योक्तम् ॥ **श्रवणादिति** ॥ **तस्य चेति** ॥

तन्निःसृतत्वाद्वेदानां गायकस्त्राति चाखिलम् ।
अतो गायत्रिनामासौ वासुदेवः परः पुमान् ।

(भावदीपः)

इति स्मृत्या अखिलवेदोच्चारयितृत्वाखिलपालायितृत्वरूपस्य छन्दस्यसम्भवादित्यर्थः । इति चेन्नेति पूर्वेण भाष्येणान्वयमुपेत्यार्थमाह ।। **विष्णुरेवेति** ।। **या वै सेति** ।। या वै सा गायत्री इयं वाव सा येयं पृथिवी अस्यां हीदं सर्वं प्रतिष्ठितं एतामेव नातिशीयन्त इति वाक्ये गायत्र्याः पृथिवीशब्दितवस्त्वभेद-मुक्त्वा तस्य वस्तुनः सर्वाधारत्वं सर्वोत्तमत्वं चोच्यते । तच्च गायत्र्या विष्णुत्वं एव युक्तं नान्यथेत्यर्थः । एतेन पृथिव्यादिशब्दार्थोऽपि लिङ्गबलाद्विष्णुरूपमेवेति सूचितम् । एवं च पूर्वपक्ष एव पृथिव्यादितादात्म्यं बाधकम् । न सिद्धान्त इति भावः । अत एव स्मृतौ सर्वलोकाभिधो ह्यसावित्यंशोक्तिः । स्मृत्युक्तिमात्रेण कथमुक्तशङ्कानिरास इत्यतस्तद्धरेरेवेत्यनुव्याख्यानस्य तद्गायत्रीपदं हरेरेव वाचकं तत् गायत्रीपदप्रवृत्ति-निमित्तं हरेरेव तत् अन्यगतं च प्रवृत्तिनिमित्तं हरेरेवाधीनमिति सुधोक्तदिशाऽर्थत्रयमुपेत्य तत्रोक्तं व्यञ्जयन् स्मृत्युदाहर्तुर्भावमाह ।। **गायत्रीश्रुतेरिति** ।। **श्रुत्युक्तेति** ।। गायति त्रायति चेति श्रुत्युक्तेत्यर्थः । गायत्रीपदप्रवृत्तिनिमित्तस्य गायत्रीस्वभावत्वात् तस्या ईशाधीनत्वे तस्यापि तत्सिद्ध्यतीति गायत्र्या इत्येवोक्तम् । अधिवेदगतानामपि शब्दानां भगवद्विषयत्वमेवानन्यथासिद्धलिङ्गैरिति न्यायविवरणांशाभि-प्रायमाह ।। **लिङ्गस्येति** ।। **बाधेति** ।। सन्दिग्धश्रुतिलिङ्गाभ्यां युक्ताभ्यामप्यसन्दिग्धयोः केवलयोरेव बलवत्वादित्यन्यत्रोक्तेरिति भावः । अत्र यद्यपि बाहुल्यात् श्रुतिलिङ्गयोरित्यनुभाष्यसुधयोरुक्तदिशा अतो ज्यायांश्च पुरुषः यद्वै तद्ब्रह्म एतामेव ब्रह्मोपनिषदं वेदेति पुरुषब्रह्मश्रुतयः प्रागुक्तलिङ्गानि चेति लिङ्गबाहुल्यमस्ति निर्णायकं तथाप्यनन्यथासिद्धलिङ्गैर्भगवद्विषयत्वमेवेत्युक्तिस्वारस्यानुरोधेन लिङ्गस्य निरवकाशतयैव निर्णयः कृतः । न तु श्रुतिलिङ्गबाहुल्येन असन्दिग्धयोः केवलयोरेव बलवत्वादित्युक्तेः । ''तावानस्य महिमा ततो ज्यायांश्च पूरुष'' इत्यादिशब्दसहितलिङ्गैश्चेति न्यायविवरणोक्तिरभ्युच्चयत्वेनेति भावः । अत्रानुभाष्ये तादृशत्वाच्च तच्छक्तेरिति युक्तेरेवोक्तत्वात्समयपादीयानुभाष्योक्तां श्रुतिं स्वयमाह ।। **स्वभावेति** ।। उक्तं च गीताभाष्ये अनादौ च तत्सिद्धं द्रव्यं कर्म चेत्यादाविति द्वितीये । कर्माणि धर्माधर्मव्यक्तयः, क्रिया परिस्पन्दः, श्रुतिर्वेदः अस्मिन्नर्थे तादृशत्वाच्च तच्छक्तेरित्यनुभाष्यसुधयोरुक्ता युक्तिरपि । चन्द्रिकायाम्

अनादीनां गुणादीनां यथा गुण्यादितन्त्रता ।
तथाऽनादिश्रुतेरस्तु क्षेमायेश्वरतन्त्रता ।।

इत्यादिना विवृता । अत्र वेदस्यानादिनित्यत्वं नाम पुराणादेरिवानियतानुपूर्वीकत्वाभावादिरूपं ध्येयम् । आम्नायोऽनन्यथापाठादिति स्मृतेः । सर्वज्ञत्वादीश्वरस्य तद्बुद्धौ सर्वदा प्रतीयमानत्वादिति

(भावदीपः)

तत्वनिर्णयोक्तरीत्या विष्णुबुद्धिगतत्वमपेक्ष्य नित्या वेदा इत्यादि तत्वसङ्ख्यानटीकायां नित्यत्वं नाम कूटस्थतया आद्यन्तशून्यत्वमित्युक्तावपि 'नित्या वेदाः समस्ताश्च शाश्वता विष्णुबुद्धिगा' इत्येतत्तत्व-निर्णयटीकायां ''न हि वयं वेदस्य कूटस्थनित्यतां ब्रूम'' इति क्रमस्य कृतकत्वेऽपीति चोक्त्या नित्यविभूनां वर्णानाम् उच्चारणाधीनक्रमविशेषविशिष्टानामेव वेदत्वेन वर्णादिवन्मुखतोऽनादिनित्यत्वाभावात् । भाष्ये स्मृतिशेषोक्तेः फलमाह ॥ **अत्र देवलोकेति** ॥ पूर्वनयवाक्यस्थाग्नीत्यर्थः । पृथिव्यादीत्यादिपदेन ज्योतिःशब्दो वाऽन्तर्नयोक्तेन्द्रादिशब्दो वा ग्राह्यः ॥ २५ ॥

## अभिनवचन्द्रिका

अत्र द्वे दर्शने – 'अथ यदतः परो दिवो ज्योतिर्दीप्यत' (छा.३-१३-७) इति छान्दोग्यस्थं जोतिर्वाक्यं विषयः । अत्रोक्ते ज्योतिषि सन्देहः, किं ब्रह्म उताऽन्यदिति । उपक्रमे गायत्रीशब्दश्रवणात् अन्यदिति प्राप्ते विष्णुरिति सिद्धान्तः । पूर्वाधिकरणेऽग्निसूक्तोक्तज्योतिर्निर्णयः । इह तु – छान्दोग्योक्त-ज्योतिषः विस्पष्टविष्णुलिङ्गदर्शनेन गायत्रीश्रुत्या च अभ्यधिकाशङ्काप्राप्तौ निर्णय इति एकं दर्शनम् । छन्दोगाः पठन्ति 'गायत्री वा इदं सर्वं भूत'(छा.उ.३-१२-१)मिति । तत्र संशयः किं गायत्री ब्रह्म, उत वर्णमालारूपो मन्त्र इति । गायत्रीशब्दस्य छन्दोविशेषे प्रसिद्धेः छन्द इति प्राप्ते, विष्णुरिति सिद्धान्त इत्यपरं दर्शनम् । तत्राद्यं सुधाभिमतम् । तत्र सूत्रयोजना तु – 'उपक्रमे गायत्रीरूप-च्छन्दोऽभिधानात्, ज्योतिर्न विष्णुः, किन्तु छन्द एवेति चेत्, न – गायत्रीशब्दार्थत्वेन चेतोर्पणार्थो हि तथा निगद्यते । तथा हि दर्शनं, 'गायति त्रायति चे'त्यादीति । द्वितीयन्तु – सुधाटीकयोरभिप्रेतम् । द्वितीये भाष्ये – ज्योतिर्वाक्योपादानं पूर्वाधिकरणार्थाऽऽक्षेपप्रदर्शनार्थम् । सूत्रयोजना तु – 'गायत्रीशब्दस्य छन्दसि रूढत्वेन तेन छन्दसोऽभिधानात् प्रागुक्तं ज्योतिः आनन्दमयश्च छन्द एव न विष्णुरिति चेत्, न – 'गायत्रीशब्दार्थरूपोऽसा'विति विष्णोः चेतोर्पणं कार्यम्, इत्याशयेन गायत्रीशब्देन विष्णो-र्निगदात् विष्णुरेव प्रागुक्तं ज्योतिरानन्दमयश्च । भवेदेतत् यदीयं गायत्री विष्णुः स्यात् तदेव कुत इत्यत उक्तं– **तथा हि दर्शनमिति** । दर्शनं श्रुतिः । एतद्गायत्र्याः गानत्राणकर्तृत्वलिङ्गश्रवणात्, तस्य च लिङ्गस्य छन्दस्यसम्भवात् विष्णौ सम्भवात् विष्णुरेव गायत्रीति । नन्विदं सूत्रं नाधिकरणान्तरं सङ्गत्यादिष्वन्यतमस्य भाष्यकृताऽनिरूपणादित्यत आह– **श्रुत्यादीति** ॥ यद्यपि – श्रुत्यादिसङ्गत्यादिकं कण्ठतो भाष्यकृता नोक्तं, तथापि श्रुत्यादिसङ्गत्यादेः सूचनात् अधिकरणान्तरमिति भावः । एतेन अस्य गायत्रीशब्दसमन्वयपरत्वमुक्तम् । तथा सति 'छन्द इति चेन्न – तथा चेतोर्पणनिगदा'दित्येव

(अभिनवचन्द्रिका)

सूत्रं स्यात् न तु 'छन्दोऽभिधानान्नेति चेन्ने'ति गायत्र्या विष्णुत्वस्याऽप्रतिज्ञातत्वेनाऽप्रसक्तनिषेधप्रसङ्गादिति परास्तम् । पूर्वपक्षफलस्य पूर्वाधिकरणाऽऽक्षेपस्य दर्शनाय 'छन्दोभिधानान्नेति चे'दिति सूत्रकृतोक्त-मित्यङ्गीकारात् । अत्र भाष्ये 'ज्योतिषो गायत्र्याः समारम्भः कृत' इत्यनेन पूर्वाधिकरणश्रुत्यर्थस्य एतदधिकरणार्थस्य च ज्योतिःशब्दविषयत्वं सङ्गतिरिति सूचितम् । 'गायत्री वा इदं सर्व'मित्यनेन ज्योतिर्वाक्यस्योपक्रमस्थगायत्रीवाक्यं विषयवाक्यमिति सूचितम् । 'गायत्र्याः समारम्भः कृत' इत्यनेन गायत्री विषयः । तद्रूढिविषयछन्दोविशेष एव गायत्रीति पूर्वपक्षश्च सूचितः । अस्मिन्विषयवाक्ये छन्दसि निरूढगायत्रीशब्दं विष्णुपरत्वेनोक्तज्योतिःशब्दं च दर्शयता गायत्री छन्दोविशेषः, उत विष्णुरिति संशयः सूचितः । तस्मान्न विष्णुरिति पूर्वाधिकरणाक्षेपः पूर्वपक्षफलमिति सूचितमिति बोध्यम् । भाष्यकारसूचितं श्रुत्यादिसङ्गत्यादिकं स्वयमाह – **हृदयनिहितमित्यादिना** ॥ अथ यद्यपि – 'हृदयनिहितं ज्योतिर्विष्णुरित्यभिहित'मित्यनन्तरम् 'एतच्च गायत्रीत्वेन पठ्यते' इत्येव वक्तव्यम्, तथापि 'तज्ज्योतिर्न गायत्रीत्वेन पठ्यते, अपि तु तस्माद्भिन्नं ज्योतिः गायत्रीत्वेन पठ्यत' इति शङ्कापरिहाराय 'तज्ज्योतिः छन्दोगश्रुतौ श्रूयत' इत्यारभ्य 'पुरुषं ज्योति'रित्यन्तं वाक्यं प्रवृत्तम् । पूर्वसूत्रे अग्निसूक्तवाक्यस्योदाहरण-मात्रत्वात्, चरणाभिधानादिति हेतोरप्युदाहरणमात्रत्वात्, यावज्ज्योतिर्वाक्यसमन्वयः तदैव निगदित इति अग्निसूक्तगतमेव ज्योतिः छन्दोगश्रुतौ श्रूयते । तदेव गायत्रीत्वेन पठ्यत इति बोध्यम् । गायत्री-निर्णयस्याऽऽवश्यकत्वमाह– **इदं चेति** ॥ **अवश्यापेक्षित इति** ॥ वशं गतो वश्यः 'वशं गत' (पा.सू.४-४-७६) इति सूत्रेण यत्प्रत्ययः । न वश्यः अवश्यः, अवश्य इति हेतोरपेक्षित इत्यर्थः । यदि पूर्वाधिकरणन्यायेन गायत्रीनिर्णयो वशंगतः स्यात् तर्हि गायत्रीनिर्णयः सूत्रकृता न वक्तव्यः स्यात् । न चैवम् इति अभ्यधिकाशङ्कासद्भावात् । अतः सूत्रकृता गायत्रीनिर्णयोऽवश्यं कर्तव्य इति भावः । एतेन कृत्यप्रत्ययान्ते परतः विहितस्य मलोपस्य निष्ठाप्रत्ययान्ते परतोऽयोगात् अवश्यापेक्षित इति प्रयोगोऽनुपपन्न इति कस्यचिद्भ्रमो निरस्तः । **गानत्राणकर्तृत्वलिङ्गश्रवणादिति** ॥ अनेन 'गै शब्द' इत्यस्मात् 'श्याद्व्यधे'(पा.सू.३-१-१४१)ति सूत्रेण आकारान्तत्वात् णः 'आतो युक्चिण्कृतो'(पा.सू.७-३-३३)रित्यनेन युक्ति अजाद्यतष्टा(पा.४-१-४)बिति टापि गायेति रूपम् । 'त्रैङ् पालन' इत्यस्माद्धातोः औणादिकक्रिप्रत्यये 'कृदिकारादक्तिन' (गणसूत्रम्) इति ङीषि त्रीति रूपम् । एवं च गाया च सा त्री चेति विग्रहे पुंवद्भावे च गायत्रीति रूपं सूचितम् । ननु 'गै शब्द' इत्यस्माद्धातोः 'गस्थकन्, ण्युट्चे'(पा.सू.३-१-१४६,१४७)ति विशेषविहिताभ्यां थकन् ण्युड्भ्यां भवितव्यं, न तु णप्रत्ययेन, मैवं 'वासरूपोऽस्त्रिया'(पा.सू.३-१-९२)मिति अपवादस्य विकल्पेन

(अभिनवचन्द्रिका)

उत्सर्गबाधकत्वाभिधानात् । स्मृतौ सर्वदेवाभिधो ह्यसावित्यत्रत्येन वासुदेवशब्देनेव 'सर्वदेव' इत्यनेन शब्देन तथा सर्वलोक इत्यनेन शब्देन परमात्मा प्रतिपाद्यत इत्युच्यत इत्यन्यथाप्रतीतिनिरासाय स्मृतिं व्याचष्टे । **अत्र देवलोकेति** ॥

## वाक्यार्थमुक्तावली

ॐ छन्दोऽभिधानान्नेति चेन्न तथा नेतोऽर्पणनिगदात्तथा हि दर्शनम् ॐ ॥ **हृदयनिहितमिति** । अनेनानन्तरसङ्गतिरुक्ता भवति । ततश्चायं भाष्यार्थः हृदय आहितं यदितिसूक्ते हृदयगुहानिहितत्वेनोक्तस्य तस्यैव 'अथ यदतः परो दिवो ज्योतिर्दीप्यत' इत्युक्तस्य ज्योतिषो गायत्रीत्वेन पाठ इति । विषयवाक्यार्थस्तूत्तरत्र भविष्यति । **किं विष्णुरिति** । अत्र गायत्री छन्द उत विष्णुरिति चिन्ता । तदर्थं गायत्रीवाक्श्रुती तदुपोद्बलकोपदेशभेदश्च पूर्वपक्षे हेतुः गानत्राणकर्तृत्वभूतादिपादव्यपदेशलक्षणसिद्धान्तप्रापकबाधक उत तद्बाध्य इति । तदर्थं पूर्वपक्षश्रुतिरुपदेशभेदश्च स्वतन्त्र्यतद्गतत्वाख्यप्रवृत्तिनिमित्तविरहेण विरोधेन च निरवकाश उत तत्सत्वेनाविरोधेन च सावकाश इति । तदर्थं तत्कल्पकत्वेनाभिमतगानत्राणकर्तृत्वादेर्विष्ण्वेकनिष्ठत्वे प्रमाणं नास्त्युतास्तीति । न विष्णुरित्यतः पूर्वं शेषमाह । **गायत्री छन्दोविशेष एवेति** । 'एव'कारव्यवच्छेद्यप्रदर्शनपरं भाष्यमिति भावः । तस्मादिति हेत्वंशस्य प्रसिद्धगायत्र्या समारम्भस्य कृतत्वादित्यर्थं मत्वा व्याचष्टे । **गायत्रीशब्दस्येति** । वाक्ये तेजस्त्वविधानार्थं समारम्भः कृत इति सूचितम् । आग्निगायत्र्यादिशब्दार्थरूप इति सिद्धान्तभाष्ये आदिपदेन वाक्शब्दोपादानञ्च सूचितं युक्त्यन्तरमाह । **वागिति** । अव्यवहितपूर्वाधिकरणे ज्योतिःश्रुत्या गायत्रीश्रुतेर्बाधमाशङ्क्य परिहरति ॥ **न चेति** ॥ **ज्योतिःश्रुतेरेवेति** ॥ इदमप्यग्निगायत्र्यादीति भाष्यमहिम्ना लब्धमिति बोध्यम् । एवं तस्मादित्येतदध्याहृतगायत्री छन्द एवेत्येतदुपपादकतया व्याख्याय न विष्णुरित्येतत्सम्बन्धितया योजयति ॥ **न च गायत्रीश्रुतिरिति** ॥ **छन्दोऽभिधानादिति** ॥ प्रबलरूढ्युक्त्या ज्ञापितं योगायोगं दर्शयति योगस्येति । पूर्वाधिकरणेन गतार्थतां निरस्यन् छन्दश्शब्दसूचितं नित्यत्वादेव शब्दस्य तत्स्वभावः कथं तत इत्यनुव्याख्यानोक्तं पूर्वपक्षमाह । **न च गायत्र्या इत्यादिना** ॥ **नित्यस्येति** ॥ अनादिनित्यस्येत्यर्थः । इदमुक्तं भवति । आकाशादिशब्दप्रवृत्तिनिमित्तविवरत्वादेस्तत्स्वभावस्य तद्धर्मिण आकाशादेर्जन्यत्वेन धर्मिणा सह भगवदधीनत्वात् । भवतु तन्निमित्तकाकाशादिशब्दानां भगवति मुख्यत्वं गायत्र्यादिशब्दानां तु वेदविशेषरूपगायत्र्या अनादित्वेन तत्स्वभावरूपगायत्रीशब्दप्रवृत्तिनिमित्तस्य तद्रीत्यापि भगवदधीनत्वायोगेन कथमपि न भवति वृत्तिरिति । **स्वपदानीति** । स्वपदानि च वर्ण्यन्ते

(वाक्यार्थमुक्तावली)

भाष्यं भाष्यविदो विदुरिति स्वपदवर्णनस्य भाष्यलक्षणतयोक्तिरिति भावः । सूत्रे निगदान्नेति पञ्चम्यन्वयेऽपि समन्वयसाध्यपर्यवसानाय प्रवृत्तं निगद्यत इति भाष्यं साध्यप्रदर्शनपरतया फलित-प्रदर्शनपरतया च व्याचष्टे अत्र गायत्रीपदेनेत्यादिना । भाष्येऽग्निग्रहणं तत्समानार्थकज्योतिःपदोपलक्षण-मित्याशयेन ज्योतिःपदेनेत्युक्तम् । चेतोऽर्पणार्थमित्येतध्याहृत्यमाह ॥ **न चेति** ॥ किन्तु गायत्र्यादीति टीकायामादिपदेन ज्योतिरादिग्रहणम् । ननु ज्योतिश्शब्देनापि स एव निगद्यत इति टीकायां गायत्री-शब्दवाच्यत्वज्योतिश्शब्दवाच्यत्वयोर्हेतुसद्भावप्रदर्शनेन तदनुसारेण भाष्येऽपि गायत्र्यग्र्यादीति निर्देशः स्यादिति चेन्न । ज्योतिषा सह सङ्गतिसद्भावेन फलतया प्राधान्यादग्र्यादित्वेन ग्रहणोपपत्तेः । अत एवाग्निसूक्तसङ्गतिसद्भावेन तस्याप्याक्षेपसमाधानलाभायैतद्विषयवाक्यस्य ज्योतिःपदं परित्यज्य तत्समानार्थ-काग्निपदग्रहणं कृतम् ॥ **एतन्न्यायस्येति** ॥ आनन्दमयादिशब्दार्थगुणस्वरूपत्वेन चेतोऽर्पणार्थं निगद्यत इत्येतत् 'हि' सर्वाधिकरणेष्वपि प्रसिद्धं हीति तदर्थ इति भावः । सूत्रे भाष्ये च हिर्हेतावित्युपेत्योक्तं श्रवणादिति ॥ **असम्भवादिति** ॥ तन्निस्सृतत्वाद्वेदानां गायति त्राति चाखिलमिति । छान्दोग्यभाष्यदिशा गानत्राणकर्तृत्वस्याचेतनेऽयोगादिति भावः ॥ **पृथिवीत्यादेरिति** ॥ अत्रादिपदेन या वै सा पृथिवी इयं वाव सा यदिदमस्मिन्पुरुषे शरीरमित्यादेः सङ्ग्रहः । छन्दसः पृथिवीत्वाद्यनुपपत्तेः । एतामेव नातिशीयन्त इति वाक्योक्तसर्वोत्तमत्वायोगाच्च । विष्णोस्त्वाकाशाधिकरणन्यायेनाधिभौतिकशब्दवाच्यत्वस्यो-पपत्तेरिति भावः । ननु वामनपुराणे तेषां तदुपचारत इत्युक्तम् । विष्णाविव च्छन्दस्यपि रूढिसत्वादित्यत आह गायत्रीश्रुतेरित्यादिना । छन्दस्यत्ररूढिरत्र पौराणिकरूढिः तत्र रूढिमात्रमत्र श्रुतौ तु महायोगः । अन्यगतस्याल्पप्रवृत्तिनिमित्तस्यापि भगवदायत्तत्वमिति । अत्र परममुख्यवृत्तिस्तत्र तदपेक्षयाऽल्पमुख्य-वृत्तिरिति भावः । युक्तो लिङ्गमात्रेणेति । निरवकाशलिङ्गमात्रेणैव यदा निर्णयस्तदा किमु श्रुतियुक्ति-बहुलिङ्गैरिति भावः । अतो एवोक्तमनुव्याख्याने 'बाहुल्यात् श्रुतिलिङ्गयोः' इति । न्यायविवरणे च पुरुष इत्यादीत्यादिपदेन श्रुतिलिङ्गबाहुल्यं चोक्तम् । भाष्ये च गायति त्रायति चेत्यादीत्यादिपदेन श्रुतिलिङ्गबाहुल्यं युक्तम् ॥ **न च नित्यस्येति** ॥ यद्यपि क्रमस्य बुद्ध्युपाधिकत्वेन कृतकत्वात् क्रमविशिष्टवर्णानां सादित्वमेव । तथापि चन्द्रिकारीत्या ईश्वरबुद्धिघटितक्रमविवक्षयेयमुक्तिरिति ज्ञेयम् । यद्वा भूतभविष्यद्वर्तमानैरखिलैरेकप्रकारेण पठ्यमानत्वं कूटस्थनित्यत्वमिति भावबोधरीत्या वैवक्षिकेय-मुक्तिः । अथ वा स्वाभाविक एव वेदे क्रम इति मतेनेयमुक्तिः । **न सन्ति यदुपेक्षयेति** । न चैवं सञ्जिहीर्षाविंय्यर्थ्यमिति वाच्यम् । सञ्जिहीर्षायां ध्वंसः । उपेक्षायां शशविषाणवन्न सन्तीति विवक्षितत्वात् । न च शशशृङ्गादिवदसद्भूयादितीश्वरेच्छया सदसदिति वाच्यम् । उपेक्षामात्रेण तदसत्वोपपत्तेः । यद्वा

(वाक्यार्थमुक्तावली)

उपेक्षामात्रेण न सन्ति नश्यन्ति किं जिहीर्षायामिति विवक्षितत्वात् । सर्वदेवाभिध इत्यादेः प्रकृतोपयोगमाह । **अत्रेति ।** सूत्रे छन्द इति व्यस्तम् । छन्दोऽभिधानादिति समस्तं च पदम् । तत्वित्यनुवर्तते । छन्द इत्यनेन तुरन्वेति । गायत्रीति योग्यतया लभ्यते । गायत्री छन्द एव न विष्णुः गायत्रीपदेन छन्दस एव तत्राभिधानात् । यद्वा छन्दसि गायत्रीपदस्याभिधानात् । तस्य तत्र रूढत्वादिति यावत् । वाग्वै गायत्रीति गायत्र्या वाक्त्वाभिधानाच्च । न च ज्योतिःश्रुतिविरोधः । ज्योतिःपदेनापि छन्दस एवाभिधानात् । कुतः तेजो वै ब्रह्मवर्चसं गायत्रीति श्रुत्यन्तरं ज्योतिश्शब्दपर्यायतेजश्शब्दस्य छन्दस्यभिधानादिति चेन्न । कुतः तथाहि दर्शनम् । हि यस्मात्तथा तादृक् विष्णुत्वज्ञापकगानत्राणकर्तृत्वरूपलिङ्गप्रतिपादकं दर्शनं श्रुतिरस्ति । तस्माद्विष्णोरेवात्र गायत्रीवाग्ज्योतिःपदैर्निगदाच्च महायोगप्रवृत्त्या प्रतिपादनात् । पौराणिकरूढ्या च निगदान्न छन्दो गायत्री किन्तु विष्णुरेवेति योजना । नारायणादिपदं परित्यज्यान्यप्रसिद्धगायत्र्यादिपदेन ब्रह्मणो निर्देशे किमन्याभेदे बोधनप्रयोजनमित्यत उक्तं तथा चेतोर्पणेति । तथा तेन प्रकारेण गानत्राणकर्तृत्वादिगुणवैगुण्येन चेतोर्पणार्थमुपासनार्थमित्यर्थः । उपासनास्वरूपं वक्तुं चेतोर्पण इति उक्तम् । गुणानामेकबुध्यारोह एव ध्यानं स्यात् क्रियामानसवदिति वक्ष्यति ।

## तत्त्वसुबोधिनी

ॐ छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात्तथाहि दर्शनम् ॐ ॥ हृदयनिहितमित्यनेनानन्तरसङ्गतिरुक्ता भवति । **श्रुतेरिति** । समबलत्वादिति भावः । ननु रूढ्यभावेऽपि योगस्य सत्वात् मुख्यत्वमित्यत आह । **योगस्य चेति** ॥ पूर्वाधिकरणेन गतार्थतां निरस्यति ॥ **न चेति** ॥ कुत इत्यत आकाशादिशब्दप्रवृत्तिनिमित्तस्य विवरत्वादेः आकाशादिस्वभावत्वेऽपि तद्धर्मिणि आकाशादेः धर्मिणा सह भगवदधीनत्वाद्धवतु तेषां शब्दानां भगवति मुख्यत्वं वेदविशेषरूपगायत्र्यास्तु अनादिनित्यत्वेन न भगवदधीनत्वमित्याह ॥ **गायत्र्या इति** ॥ अत्र च नित्यत्वं नाम अनादिनित्यत्वमेवाभिमतं न तु ध्वंसाप्रतियोगित्वं तथा सति जन्यत्वाविरोधेन ईश्वराधीनत्वाविघटकत्वात् पूर्वपक्षयुक्तित्वं न स्यात् । अत एवोक्तं सुधायाम् । वेदस्य नित्यत्वादनादित्वाच्चेति । ननु कृतकक्रमविशिष्टवर्णसमुदायरूपवेदस्य न अनादित्वम् । उक्तं हि तत्वनिर्णयटीकायाम् । न हि वयं वेदस्य कूटस्थनित्यत्वं ब्रूम इति । क्रमस्य कृतकत्वेऽपि इति चेत् न । तत्वसङ्ख्यानटीकायां नित्यत्वं नाम कूटस्थतया आद्यन्तशून्यत्वं तच्च वेदानां नित्या वेदा समस्ताश्चेत्यादिप्रमाणसिद्धमित्युक्तत्वात् । युक्तं चैतत् क्रमस्य ईश्वरबुद्धिस्थत्वात् । अत एवोक्तं तत्वनिर्णये सर्वज्ञत्वात् ईश्वरस्य तद्बुद्धौ सर्वदा प्रतीयमानत्वात् इति । तट्टीकायां कौटस्थ-

(तत्त्वसुबोधिनी)

निषेधश्च अस्मदादिबुद्धिघटितक्रमाभिप्रायेणेति सर्वमनवद्यम् । केचित्तु स्वतन्त्रपुरुषपूर्वकत्वभूत-भवद्भविष्यद्भिरखिलैः एकप्रकारेण पठ्यमानत्वादिकमेवानादित्वं वेदस्य विवक्षितम् । अत एवोक्तं तत्वनिर्णयटीकायाम् स्वतन्त्रस्य वक्तुरभावात् अपौरुषेयत्वमुपपद्यत इति । एतदेव च अनादिनित्यत्वमिति च । एतावतैव शब्दस्वभावभूतपदार्थप्रतिपादनशक्तेः पराधीनत्वसम्भवेन ईश्वराधीनत्वविघटनोपपत्तौ मुख्यानादित्वकल्पनावैय्यर्थ्यात् । न चैवंविधमनादित्वम् आकाशादीनामिति तदुक्तेः अभ्यधिका-शङ्काप्रदर्शकत्वमित्याहुः । ननु विकारशब्दात् इत्यादौ आनन्दमयादेः विष्णुत्वाक्षेपपरिहारवदत्रापि अग्निसूक्तोक्तं ज्योतिः न विष्णुः । अथ यदत इत्युक्तस्य अस्यैव ज्योतिषः तदुपक्रमे 'गायत्री वा इदं सर्वं' इति गायत्रीरूपछन्दोविशेषत्वेनाभिधानात् इत्याक्षिप्य गायत्रीशब्दस्यापि विष्णुपरत्वान्नेय-मनुपपत्तिरिति परिहारसम्भवेनेदमपि सूत्रं तथैव ज्योतिरधिकरणशेषत्वेनैव व्याख्यायताम् । एवं सति अग्निगायत्र्यादीति भाष्ये अग्निपदं सूत्रे समन्वेतव्यशब्दानुक्तिश्च सङ्गच्छते तत्किमिति टीकायामधि-करणान्तरतया व्याख्यातमिति चेन्मैवम् । न्यायविवरणविरोधात् । न्यायविवरणे वेदस्य नित्यत्वेऽपि तद्गतशब्दस्य विष्णुविषयत्वोक्त्या वेदवाचकशब्दस्य समन्वेतव्यत्वेन वेदगतनित्यतायाः पूर्वपक्षयुक्तित्वेन प्रतिभासात् एकाधिकरणत्वे च अग्निगतस्यैव कस्यचिद्धर्मस्य तत्वेन अग्निशब्दस्यैव समन्वेतव्यत्वेन कथनं स्यात् । नित्यत्वादेव शब्दस्य इत्यनुव्याख्याने तट्टीकायां च अस्यैवार्थस्योक्तेः । भाष्ये अग्निशब्दो-पादानसमन्वेतव्यानुक्तेश्चान्यथासिद्ध्या न अधिकरणैकत्वमुक्तमिति दिक् । ननु न विष्णोः गायत्र्यादि-शब्दवाच्यत्वम् । वाग्वै गायत्रीति गायत्र्या वाक्त्वस्य विहितत्वादित्यत आह । **आदिपदेन वाचो ग्रहणमिति** । वाग्वै गायत्रीति श्रुतौ वाक्शब्दार्थगुणवत्तया उपासनार्थं विष्णुर्वागित्युक्तम् । तथा च वाक्त्वमपि न विष्णुत्वबाधकमिति दर्शयितुं भाष्ये आदिपदमित्यर्थः । अनुसन्धेयत्वं सूचयतीति । आदिपदमित्यनुषङ्गः । एतदध्यायगतानन्दमयाद्यधिकरणेषु तत्तच्छब्दसमन्वयकथनं तत्तच्छब्दार्थयुक्तत्वेन हरेः ध्यानार्थमुक्तमिति न्यायस्य अनुसन्धेयत्वं च गायत्र्यादीत्यादिपदेन सूचयत्याचार्य इत्यर्थः । अनुसन्धेयत्वं सूचयति हिशब्देनेति पाठे हिशब्देनाचार्य एतत्सूचयतीत्यर्थः । प्रसिद्ध्यर्थको हिशब्दोऽ-स्यार्थस्य सार्वत्रिकत्वं गमयतीति भावः । आदिपदेन पृथिवीत्यादेः सङ्ग्रह इति । या वै सेत्यादिना गायत्र्याः पृथिव्यभेदमुक्त्वा अस्यां हीदं सर्वं प्रतिष्ठितमिति पृथिव्याः सर्वाधारत्वमुक्तम् । तच्च विष्णोरेव गायत्रीपृथिव्यादिशब्दार्थत्वं युक्तं नान्यथेत्यर्थः । भाष्ये अग्निशब्दग्रहणन्तु गायत्रीशब्दसमन्वयकथनेन ज्योतिःशब्दस्य विष्णुपरत्वं समाहितमिति ज्ञापनार्थम् । न चैवं गायत्र्यग्न्यादिशब्दार्थरूप इति निर्देशः स्यात् इति वाच्यम् । अन्यत्र प्रसिद्धस्य गायत्रीशब्दस्य विष्णौ प्रयोगे प्रयोजनमत्र वदता

(तत्त्वसुबोधिनी)
सूत्रकृता पूर्वसूत्रे उत्तरत्र च अग्न्यादिशब्दानां विष्णौ प्रयोजनं सूचितमिति ज्ञापनार्थमिति भावः । समुदायार्थमाह ॥ **गायत्रीश्रुतेरिति** ॥

## वाक्यार्थमञ्जरी

ॐ छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात्तथा हि दर्शनं ॐ ॥ गायत्री वेत्युक्तगायत्री छन्दोविशेष एव स्यात् । गायत्रीपदेन छन्दसोऽभिधानात् तस्मान्न तद्ब्रह्मेति चेन्न । किन्तु ब्रह्मैव गायत्री कुतः, हि यस्मात्तथा दर्शनं गानत्राणकर्तृत्वलिङ्गबोधिका 'गायति त्रायति च' इति श्रुतिरस्ति तस्मादित्यर्थः । विष्ण्वादिप्रसिद्धपदानि विहायाप्रसिद्धगायत्रीपदेन तन्निर्देशे किं निमित्तमित्यत उक्तम् ॥ **तथेति** ॥ तथा गानादिकर्तृत्वगुणविशिष्टतया चेतसि अन्तःकरणे अर्पणार्थं ध्यानार्थम् उपासनार्थमिति यावत् । निगदात् गायत्री वा इदं सर्वमिति कथनादित्यर्थः ॥ **अथेति** ॥ अथ द्वारपोपास्तिकथनानन्तरं पुनर्भगवन्माहात्म्युच्यते । यच्छ्वेतद्वीपानन्तासनवैकुण्ठगतमूर्तित्रयं तत् । अतः बुद्धिस्थतया विवक्षिताया दिवः परः । ज्योतिः तेजोमयं विश्वतः मेरुवैजयन्तसत्यलोकाख्यब्रह्मसदनेभ्यः पृष्ठेषु क्रमेणोच्चेषु सर्वतः भूर्भुवःस्वरात्मकसर्वलोकेभ्यः पृष्ठेषु अनुत्तमेषु न विद्यत उत्तमो लोको येभ्यस्तेषु स्वयमेवोत्तमेषु अनन्तासनश्वेतद्वीपवैकुण्ठेषु दीप्यते प्रकाशते तत्सर्वलोकेषु दीप्यमानं तेजः इदं वा व इदं खलु इदं किं यदिदमस्मिन्नन्तः पुरुषे पुरुषहृदये ज्योतिरस्ति तदित्यर्थः ॥ **गायत्री वेति** ॥ अत्र भगवतः षड्विधरूपेषु गायत्रीनामकं स्त्रीरूपं हयशीर्षकं प्रथमरूपापेक्षया द्वितीयं रूपमुच्यते । यदिदं किञ्च भूबहौ बहुपूर्णतायामित्युक्तेः भूतं पूर्णं मत्स्यादि सर्वं सर्वान्तस्थितं च तदिदं सर्वं गायत्रीनामा भगवानेव । एवं च भूतशब्दाभिधेयं मत्स्यादि सर्वान्तःस्थितं द्वितीयं रूपमित्युक्तं भवति । अस्यैव तृतीयं रूपमाह ॥ वागिति ॥ गायत्रीनामा भगवान्वाग्वै वाक्संस्थो वचनाद्वाङ्नामा स्त्रीरूपो हयशीर्षाख्य एव । न तु तद्भिन्न इत्यर्थः । वाङ्नामकस्य भगवद्रूपत्वं कुत इत्यतस्तल्लक्षणयोगादित्यत आह ॥ **वाग्वेति** ॥ इदं सर्वं प्राणिजातं वाग्वै वाङ्नामकभगवदधीनमेव । वाचा हि प्रवर्तते निवर्तते च लोकः । सर्वलोकप्रवर्तकत्वं च भगवल्लक्षं च प्रसिद्धमेवेति ॥ **छन्दोविशेष एवेति** ॥ गायत्री छन्दोपेतमन्त्रविशेष इत्यर्थः ॥ **वाग्विधानाच्चेति** ॥ न शब्दात्मकस्य तत्सम्भवतीति भावः । तेजः कान्तिः । ब्रह्मवर्चसम् अध्ययनलब्धकान्तिविशेषः । तदुभयसाधनं गायत्रीत्यर्थः ॥ **योगस्येति** ॥ गायति वेदान् त्रायति चाध्यापकान् पापेभ्य इति निर्वचनादिति भावः ॥ **नित्यस्येति** ॥ अनादिनित्यस्येत्यर्थः । अन्यथोत्पत्तावीश्वराधीनत्वापरिहारात् । अत एव न्यायविवरणटीकायां वेदस्य

(वाक्यार्थमञ्जरी)

नित्यत्वेनानादित्वादित्युक्तम् । वेदस्य नित्यत्वादनादित्वाच्चेति सुधाग्रन्थाच्च । यद्यपि कृतकक्रमविशिष्टस्य वर्णात्मकस्य वेदस्य नानादित्वम् । तथापीश्वरबुद्धिघटितस्य तथात्वेन वा कृत्वा चिन्तया वा तदुक्तिरित्यदोषः । स्वपदानि स्वोक्तपदानि । ''सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुकारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः'' इत्युक्तेरिति भावः । **गायत्र्यादीति** ।। गायत्र्यादिशब्दार्थो गानत्राणकर्तृत्वादिः स एव गुणस्तत्स्वरूपत्वेनेत्यर्थः । आदिपदेन वाचो ग्रहणमिति । वाग्वै गायत्रीति श्रुतौ वाक्शब्दार्थगुणवत्तया उपासनार्थं विष्णुर्वागित्युक्तम् । तथा च वाक्त्वविधानं न विष्णुत्वपक्षे बाधकमिति भावः ।। **एतन्न्यायस्येति** ।। तत्तच्छब्दसमन्वयकथनं तदर्थगुणस्वरूपत्वेनोपासनार्थमिति न्यायस्येत्यर्थः ।। **या वै सेति** ।। चतुर्थरूपमनेनोच्यते । या वै गायत्री तत्संस्थं तन्नामा भगवान् सा इयं वाव इयं खलु । इयं केत्यपेक्षायामाह ।। **येयमिति** ।। पृथुत्वात्पृथिवीनामा पृथिवीसंस्थो भगवानित्यर्थः । तथा चात्र या वै सेत्यादिना गायत्र्याः पृथिव्यभेदमुक्त्वा अस्यां हीदं सर्वं प्रतिष्ठितमिति पृथिव्याः सर्वाधारत्वमुक्तम् । तच्च विष्णोरेव गायत्रीपृथिव्यादिशब्दार्थत्वं युक्तं नान्यथेति भावः ।। **श्रुत्युक्तेति** ।। गायतीति श्रुत्युक्तेत्यर्थः । कर्माणि पुण्यपापानि । क्रिया चेष्टा । स्मृतिविशेषोदाहरणप्रयोजनमाह ।। **अत्रेति** ।।

## विवृतिः

हृदयनिहितमित्यनेनानन्तरसङ्गतिरुक्ता भवति ।। **श्रुतेरिति** ।। समबलत्वादिति भावः । ननु रूढ्यभावेऽपि योगस्य सत्वान्मुख्यत्वमित्यत आह ।। **योगस्य चेति** ।। पूर्वाधिकरणेन गतार्थतां निरस्यति ।। **न चेति** ।। कुत इत्यत आकाशादिशब्दप्रवृत्तिनिमित्तविवरत्वादेर्भगवदधीनत्वेऽपि धर्मिणः आकाशादेः जन्यत्वेन धर्मिणा सह भगवदधीनत्वे तद्वत् तेषां शब्दानां मुख्यत्वं भगवति, वेदविशेषरूपगायत्र्यास्त्वनादिनित्यत्वेन न भगवदधीनत्वमित्याह ।। **गायत्र्यादेरिति** ।। ननु गायत्र्यादिशब्दैर्विष्णुवचने प्रयोजनान्तराभावेनाभेदविधानार्थमेवेदं वचनमिति स्यात् ।। तन्नायुक्तम् ।। श्रुत्यादिविरोधादित्यत आह ।। **न चेति** ।। ननु न विष्णोर्गायत्र्यादिशब्दवाच्यत्वं वाग्वै गायत्रीति गायत्र्या वाक्त्वविधानादित्यत आह ।। **आदिपदेन वाचोग्रहणमिति** ।। वाग्वै गायत्रीति श्रुतौ वाक्शब्दार्थगुणवत्तयोपासार्थं विष्णुर्वागित्युक्तं तथा च वाक्त्वमपि न विष्णुत्वबाधकमिति दर्शयितुं भाष्ये आदिपदमित्यर्थः ।। **अनुसन्धेयत्वं सूचयतीति** ।। आदिपदमित्यनुषङ्गः ।। एतदध्यायगतानन्दमयाद्यधिकरणेषु तत्तच्छब्धसमन्वयकथनं तत्तच्छब्दार्थयुक्तत्वेन हरेर्ध्यानार्थमुक्तमिति न्यायस्यानुसन्धेयत्वं चेतोर्पणार्थे गायत्र्यादीत्यादिपदेनानार्यः

(विवृतिः)

सूचयतीत्यर्थः ॥ यद्वाऽनुसन्धेयत्वं सूचयति ॥ हिशब्देनाचार्य एतत्सूचयतीत्यर्थः ॥ प्रसिद्ध्यर्थको हिशब्दोऽस्यार्थस्य सार्वत्रिकत्वं गमयतीति भावः ॥ ननु भाष्ये त्रायते चेत्यादीत्यत्रादिशब्दः किमर्थ इत्यत आह ॥ **आदिपदेन पृथिवी इत्यादेः सङ्ग्रह इति** ॥ या वै सेत्यादिना गायत्र्याः पृथिव्यभेदमुक्त्वा अस्यां हीदं सर्वं प्रतिष्ठितमिति पृथिव्याः सर्वाधारत्वमुक्तम् ॥ तच्च विष्णोरेव गायत्रीपृथिव्यादिशब्दार्थत्वं युक्तं नान्यथेत्यर्थः ॥ भाष्ये अग्निशब्दग्रहणं तु गायत्रीशब्दसमन्वयकथनेन ज्योतिःशब्दस्य विष्णुपरत्वं समाहितमिति ज्ञापनार्थम् ॥ न चैवं गायत्र्यादिशब्दार्थरूप इति निर्देशः स्यादिति वाच्यम् ॥ अन्यत्र प्रसिद्धस्य गायत्रीशब्दस्य, विष्णौ प्रयोगे प्रयोजनमत्र वदता सूत्रकृता पूर्वसूत्रे उत्तरत्र च अग्न्यादिशब्दानां विष्णौ प्रयोजनं सूचितमिति ज्ञापनार्थमिति भावः ॥ समुदायार्थमाह ॥ **गायत्रीश्रुतेरिति** ॥ कथं सर्वच्छन्द इति स्मृत्याऽग्निपृथिव्यादिशब्दानां भगवत्परत्वमित्यत आह ॥ **अत्रेति** ॥

## सूत्रभाष्यम्

**॥ ॐ भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॐ ॥ २६ ॥**

'**तावानस्य महिमा ततो ज्यायांश्च पुरुषः । पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि**' इति (छां.उ.३-१२-६) । '**सुवर्णं कोशं रजसा परीवृतम् । देवानां वसुधानीं विराजम् । अमृतस्य पूर्णां तामु कलां विचक्षते । पादं षड्ढोतुर्न किला विवित्से**' (तै.आ.३-११) इति श्रुतेः । पाद इति एकदेशपरिमितं चतुर्भागवल इतिवद्भिन्नं च । स हि पुरुषसूक्ताभिधेयः । यज्ञेन यज्ञमयजन्त (तै.आ.३-१२) इति यज्ञशब्दात् । 'यज्ञो (वै) विष्णुर्देवता' इति हि श्रुतिः ।

'तस्मिन्काले महाराज राम एवाभिधीयते ।
यता हि पौरुषे सूक्ते विष्णुरेवाभिधीयते ।' इति च स्कान्दे ॥ २६ ॥

## सत्तर्कदीपावली

**सैषा चतुष्पदेत्युक्त्वा तदेतदृचाभ्युक्तम् । पादोऽस्य सर्वा भूतानिति श्रुतेश्च गायत्रीशब्दो विष्णुपर इत्येतत्प्रतिपादयत्सूत्रमुपन्यस्य व्याचष्टे ॥ भूतादीत्यादिना ॥** न हि चतुर्विंशत्यक्षरा गायत्री एवंविधपादवती । न च विष्णोरपि सर्वभूतानि न पाद इति वाच्यम् । यज्ञदत्तचतुर्थांशोऽयं वलपरिमाणे देवदत्त इतिवत् विष्णोरत्यन्तभिन्नेष्वेव सर्वभूतेषु चतुर्थांशपरिमिताभिप्रायेण पादशब्दोपपत्तेः ।

(सत्तर्कदीपावली)
अत्यल्पत्वोपलक्षणं पादशब्दः । तथाहि श्रुत्यन्तरम् । अमृतस्य पूर्णां तासु कलां विचक्षते । पादं षड्ढोतुर्न किला विवित्स इति षड्ढोतुरिन्द्रियैः सारादनकर्तुः विष्णोरिदं सुवर्णाकाशरूपं मुक्तामुक्तजीवसहितं सुवर्णं ब्रह्माण्डं कलां विचक्षते कवयः यतोऽसौ सुवर्णकोशः पादं न विवित्स इति पादसाम्यं न लभत इत्यर्थः । न च पादोऽस्येति मन्त्रोऽन्यपरः शङ्कनीयः पुरुषसूक्तगतत्वात् । यज्ञेन यज्ञमयजन्तेति वाक्यशेषात्पुरुषसूक्ते विष्णुरेवाभिधीयत इति ज्ञायते । देवाः यज्ञं विष्णुमयजन्तेत्यर्थः । यज्ञो वै विष्णुरिति श्रुतेः । यज्ञो यज्ञपतिर्यज्वेति स्मृतेश्च । न च वाच्यम् अथ यदतः पर इत्युक्तत्वात् स्वर्गादिलोकात्परतो वैकुण्ठे दीप्यमानात् ज्योतिः शब्दार्थाद्विष्णोरन्यदेव पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवीत्यत्र स्वर्गस्थत्वेनोच्यत इति । दिवीति शब्दस्य द्योतमानत्वयोगेन वैकुण्ठपरत्वात् । अत एव क्वचित्सप्तलोकापेक्षया दिवः पर इति त्रिलोकापेक्षया दिवीत्युपदेशो युज्यते ।

## तत्त्वप्रदीपिका

भूतादिपादव्यपदेशोपपत्तेश्चैवमिति सूत्रं योजयति– **तावानस्येत्यादिना ।** प्रसिद्धार्थानां सूत्राणामपृथग्भाष्यकरणं यत्तल्लाघवाय । एषा हि श्रुतिः 'सैषा चतुष्पदा षड्विधा गायत्री' इति पूर्वप्रस्तुताया गायत्र्याष्षड्विधत्वमुक्तमनूद्य चतुष्पादत्वं विधाय तत्र प्रमाणमेतां ऋचमाह । 'तदेतदृचाऽभ्यनूक्तं तावानस्य' इति । अनया ह्यृचा गायत्र्याः भूतादयश्चत्वारः पादा व्यपदिश्यन्ते । न च तस्याश्छन्दस्त्वे तदुपपद्यते । उपपद्यते च विष्णुत्वे । पुरुष एवेदमित्यृचा यद्विष्णोस्सर्वेशानत्वमुक्तं तद्धि तावत्तावानिति परामृश्यते । न च तावानेव केवलमस्य महिमा, किन्तु ततोऽपि ज्यायानयं पुरुषः । अस्य ह्येकः पादः सर्वाणि भूतानि, त्रयोऽनन्तासनवैकुण्ठक्षीराब्धिषु दिवि स्थितेषु द्योतमानेषु । त्रयाणां समुद्रायस्त्रिपात् । स्वरूपांशत्वात्तदमृतमित्युक्तं, भिन्नांशविवक्षया भूतपादोक्तिः ।

त्रिभिस्स्वरूपपादैश्च भिन्नेनैकेन चैव हि ।
गायत्रीनामको विष्णुश्चतुष्पात्सम्प्रकीर्तितः ॥

भिन्नपादः सर्वजीवस्तस्यास्सादृश्यमात्रतः ।
स्वरूपपादा विष्णोस्तु त्रयो हि दिवि संस्थिताः ॥ इति सत्तत्वे ।

पादशब्दस्यार्थं विवृणोति सुवर्णं कोशमित्यादिना । सुवर्णमयमण्डकोशं सत्वरजस्तमोभिः परिवृतं देवानां द्रव्यनिधानस्थानं विशेषेण राजन्तं षड्होतुर्विष्णोः कलां विचक्षते । अमृतस्येति षष्ठी तृतीयार्थे, अमृतेन पूर्णामित्यर्थः । एकवचनं समुदायापेक्षया, 'अमृतस्यैष सेतुः' इतिवत् । न किल षड्होतुः पादत्वं स विवित्से अविन्दत । एतदुक्तं भवति । उदकादिनवावरणावृतं महतां देवानां वसुनिधानं हेमाण्डकोशं

(तत्त्वप्रदीपिका)

मुक्तजनेन व्याप्तं विष्णोः कलामात्रं वदन्ति पुरुषसूक्तागमाः पादवाचनेन । न किलात्र पादशब्देनाङ्घ्रिं वदन्ति । नापि चतुर्थांशं, किं तर्हि? एकदेशमात्रम् । एकदेशमात्रमित्येकदेशपरिमाणपरिमितमुच्यते, न तत्स्वरूपैकदेश इति । यथा मैत्रचतुर्भागवलश्चैत्र इत्युक्ते न मैत्रबलादेव चैत्रस्य चतुर्थांशो विवक्षितः । अपि तु तच्चतुर्थांशपरिमितं भिन्नं च ततश्चैत्रबलमिति । एवमिहापि शक्तिविवक्षया विष्णुशक्त्येकदेश-परिमितशक्तिर्मुक्तामुक्तविश्वसमुदाय इत्यभिप्रायः ।

स्यादेतदेवं, यद्यस्यामृचि विष्णुरभिधीयते, न तु तत्र प्रमाणमित्यत आह– **स हि पुरुषसूक्ताभिधेय इति ॥**

## तत्त्वप्रकाशिका

हेत्वन्तरेणापि गायत्र्या विष्णुत्वं समर्थयत्सूत्रमुपन्यस्य तद्गृहीतश्रुतिमेवोदाहरति ॥ **भूतादीति ॥** 'सैषा चतुष्पदा षड्विधा गायत्री' इति गायत्र्याः प्रागुक्तषड्विधत्वमनूद्य चतुष्पदत्वं व्यपदिश्य तत्रैव पुरुषसूक्तमन्त्रः संवादायोदाहियते 'तदेतदृचाभ्यनूक्तं तावानस्य' इति । अस्य पुरुषस्य तावन्पूर्वोक्तो महिमा न केवलमेतावान् किन्तु पुरुषः ततः पूर्वोक्तादपि महिम्नो ज्यायान् । कथं सर्वाणि भूतान्यस्यैकः पादः । अस्यामृतं स्वरूपभूतं पादत्रयं दिवि तिष्ठतीत्येवं गायत्र्या भूतादिपादव्यपदेशाच्च सा विष्णुर्भवेत् । भूतादिपादव्यपदेशस्य विष्णावेवोपपत्तेरन्यत्रानुपपत्तेश्चेति भावः । ननु भूतादिपादव्यपदेशो गायत्र्यामिव विष्णावपि नोपपद्यते तस्यापि भूतभिन्नत्वादित्यत आह ॥ **सुवर्णमित्यादि ॥** नायं पादशब्दोऽमृतपादत्रय-वद्भूतानामपि स्वरूपांशत्वाभिप्रायः किन्तु यज्ञदत्तस्य चतुर्भागवलो देवदत्त इतिवद्भिन्नमेव विश्वं तत्पादपरिमितसामर्थ्यं पादतयोच्यते । अतो भूतपादत्वं विष्णोरुपपद्यते । तर्हि विश्वचतुष्टयसमो हरिरित्या-गतमिति न मन्तव्यम् । यतोऽत्र पादपदेन विश्वं विष्णुसामर्थ्यैकदेशपरिमितमुच्यते न चतुर्थांशपरिमितम् । कुत एतत् । 'सुवर्णं कोशम्' इति श्रुतेरेवेत्यर्थः । सौवर्णब्रह्माण्डकोशं रजोगुणोपलक्षितावादिपरिवृतं ब्रह्मणः शरीरं देवानां वसुनिधानमञ्जूषां मुक्तैः पूर्णां तां षडिन्द्रियेषु विषयहोतुर्विष्णोरेकदेशपरिमितामाचक्षते पादपदेन पुरुषसूक्ताद्यागमाः । यतः सा चतुर्थभागसाम्यं न लेभे किलेत्यर्थः । न केवलं भूतादिपादत्वस्य विष्णावेवोपपत्तेस्तल्लिङ्गत्वं किन्तु पुरुषसूक्तोक्तत्वाच्च । भूतादिपादत्वस्य पुरुषसूक्तोक्तत्वेऽपि कुतो विष्णोर्लिङ्गत्वमित्यत आह– **स हीति ॥** यज्ञशब्दः कथं तन्निश्चायक इत्यत आह ॥ **यज्ञ इति ॥** अन्यप्रकरणेऽप्यन्यश्रुतिः प्रसङ्गिकीयं भवतु । भूतादिपादे तदभावादित्यतोऽत्र स्मृतिं चाह ॥ **तस्मिन्निति ॥** किञ्च पुरुषसूक्तोक्तत्वं गायत्र्या विष्णुत्व एव वा पृथग्युक्तिः समर्थ्यते ॥ **स हीति** ॥ २६ ॥

## गुर्वर्थदीपिका

यतो नवावरणोपेतब्रह्माण्डकोशाख्या सा देवानां वसुधानी सत्यकैलासस्वर्गादिलोकस्थितदेववसुनिधान-योग्या मञ्जूषा षड्ढोतुरनन्तजीवानां षडिन्द्रियेषु तत्तद्विषयसमर्पकस्य वैराग्यसम्पत्तौ सत्यां षडिन्द्रियेषु विषयहेतुर्वा विष्णोः पादं पादत्वं चतुर्थभागसाम्यम् आ ईषदपि न विवित्से किल न लेभे किल । एकैकजीवषडिन्द्रियेषु विषयहोमेऽप्यसमर्थब्रह्मादीनामनन्तांशसाम्यस्याप्यसम्भवेन चतुर्थभागसाम्यं तु सुतरां न सम्भवतीति सूचनाय षड्ढोतुरिति विशेषणम् । अतस्तां देवानां वासुधानीं षड्ढोतुर्विष्णोः कलामनन्तांशेषु चैकांशस्याप्येकदेशपरिमितामाचक्षते ज्ञानिन इति श्रुत्यर्थमभिप्रेत्याह सौवर्णमित्यादिना ।

## भावबोधः

सूत्रे एवशब्दः प्रतिज्ञाप्रदर्शकः । भूतादिपादव्यपदेशस्यैव हेतुत्वं तस्य निरवकाशत्वं वक्तुम् उपपत्तेरित्युक्तम् । 'च'शब्दस्य बुद्ध्या विवेकेन व्यपदेशपदेनान्वये पूर्वोक्तहेतुसमुच्चायकत्वम् । यथाश्रुत-सम्बन्धे त्वनुपपत्तिसमुच्चायकत्वमित्यभिप्रेत्य सूत्रं योजयति– **एवं गायत्र्या इत्यादिना ॥ सुवर्ण-मित्यादीति ॥** चतुर्भागबलवद्भिन्नं चेत्येतत्पर्यन्तग्रहणायादिपदप्रयोगः । भाष्य उपोद्घातसङ्गत्या श्रुतेरादावुदाहरणेऽपि स्वयमाकाङ्क्षाक्रमेणान्ते तस्या व्याख्यानं क्रियत इत्यदोषः । चतुर्भागबलवद्भिन्न-मित्यनुक्तौ पाद इत्येकदेशपरिमितमित्यनेन निवर्तनीयाशङ्कानुदयात् तयोर्वाक्ययोर्व्यत्यासेन व्याख्यानमिति द्रष्टव्यम् । 'कलाम्' इत्यस्यार्थ एकदेशपरिमितामिति ॥ **पादपदेनेति** ॥ अनेनाध्याहारेण पादपदमेकेन प्रकारेण व्याख्यातम् । आचक्षत इत्युक्तक्रियाकर्तृवाचकाध्याहारः । **पुरुषसूक्ताद्यागमा इति** ॥ प्रकारान्तरेण पदमित्येतद्व्याख्याति– **यतः सा चतुर्थभागसाम्यमिति** । अनेन पादमिति भावप्रधानमित्युक्तं भवति । अनेन पुरुषसूक्ताद्याः कला एव पादपदेनाचक्षत इत्यत्र हेतुरुच्यत इति भावः । किन्तु पुरुषसूक्तोक्त-त्वाच्चेति । अनेन सौत्रश्चशब्दः प्रकारान्तरेण व्याख्यातो भवति । विष्णुत्व एव वा पृथग्युक्तिरिति । गायत्रीशब्दवाच्ये 'एतावानस्य महिमा' इत्यादिना पुरुषसूक्तमन्त्रोदाहरणात् पुरुषसूक्तप्रतिपाद्यश्च यतो विष्णुरेवेति भाष्याभिप्राय इत्यर्थः । अनेन 'एतावानस्य महिमा । अतो ज्यायाँश्च पूरुषः' इत्यादिशब्द-सहितलिङ्गैश्चेति न्यायविवरणमुक्तार्थं भवति । अक्षरयोजना तु तावानस्य महिमा इत्यत्र पुरुषशब्द आदिपदेन पद्धे ततामेव ब्रह्मोपनिषदं वेदेति ब्रह्मशब्दएतत्सहितलिङ्गैर्लिङ्गानि च भूतादिपादत्वं पुरुषसूक्तोक्तत्वमेव नातिशीयन्ते इति सर्वोत्तमत्वम् इत्यादीनि । अत एव 'बाहुल्यात् श्रुतिलिङ्गयोः'

(भावबोधः)

इत्यनुव्याख्यानं तथैव सुधायां व्याख्यातम् । अत्राप्यनन्यथासिद्धत्वं ग्राह्यम् । अनन्यथासिद्ध-लिङ्गैरित्युक्तगानत्राणकर्तृत्वलिङ्गेन शब्दसहितलिङ्गैश्च भगवद्विषयत्वमेवाधिवेदगतगायत्रीशब्दस्येति । अनेन न्यायविवरणवाक्येन सूत्रगतः 'च'शब्दो न केवलं प्रायुक्तगानत्राणकर्तृत्वसमुच्चयार्थः । किन्तु सर्वोत्तमत्वलिङ्गपुरुषब्रह्मशब्दसमुच्चयार्थश्चेत्युक्तं भवतीति भावः ।

ननु सैद्धान्तिकश्रुतिलिङ्गानामनन्यथासिद्धत्वेऽपि पूर्वपक्षश्रुतिलिङ्गयोराकाशप्राणच्छन्दोविशेषेषु प्रसिद्धत्वात् कथं बाध्यबाधकभाव इत्यत उक्तं न्यायविवरणे–'सन्दिग्धश्रुतिलिङ्गाभ्यामुक्ताभ्यामप्य-सन्दिग्धयोः केवलयोरेव बलवत्त्वम्' इति सन्दिग्धपदं सावकाशपरम् । तत्रोक्ताभ्यामित्यनेनोक्तलोक-प्रसिद्धेरसाधकत्वे हेतुप्रदर्शनार्थमुक्तम् । श्रुतिलिङ्गाभ्यामिति जात्यपेक्षया द्विवचनम् । आकाशप्राणगायत्री-श्रुतयस्तावत्परमेश्वरेऽपि वाचकत्वशक्तियुक्तत्वेनात्र किम्परा इति सन्दिह्यते । अचेतनत्वजीवनान्वय-व्यतिरेकनित्यत्वानि च लिङ्गान्यनुव्याख्यानोक्तरीत्या नु मुख्या न्यायविद्या । तयालमिति सन्दिग्धा-न्युच्यन्ते । केवलश्रुतिलिङ्गयोः । इदमपि जात्यपेक्षया । आकाशप्राणाधिकरणयोः सिद्धान्तसाधकश्रुत्यभावेन केवलस्य लिङ्गस्येत्यस्यैव तत्रोपयोगः । समग्रस्य तु गायत्र्यधिकरण इति विवेकः । परोवरीयस्त्व-श्रीलक्ष्मीपतित्वगानत्राणकर्तृत्वपुरुषसूक्तोक्तत्वादिलिङ्गजातं पुरुषब्रह्मादिश्रुतिजातञ्च भगवदेकनिष्ठताद-सन्दिग्धमित्युच्यते । असन्दिग्धपदं निरवकाशपरम् । तच्च केवलयोरित्युक्तलोकप्रसिद्धिशून्ययोरेव बलवत्त्वे हेतुत्वेनोक्तम् । तथा च लोकतः प्रसिद्धाभ्यामपि श्रुतिलिङ्गाभ्यां तथा प्रसिद्धिशून्ययोरेव बलवत्त्वे हेतुत्वेनोक्तम् । तथा च लोकतः प्रसिद्धाभ्यामपि श्रुतिलिङ्गाभ्यां तथा प्रसिद्धिरहितयोरेव बलवत्त्वम् । यतोऽनयोर्विष्णुमात्रपरत्वेन प्रमितत्वादसन्दिग्धत्वलक्षणं निरवकाशत्वम् । पूर्वपक्षसम्बन्धिनोऽस्तु भूताकाशप्राणच्छन्दोविशेषाणां विशेषमात्रनिष्ठत्वे प्रमाणाभावाद् विष्णुनिष्ठत्वस्य निराकर्तुमशक्यत्वाच्च सन्दिग्धत्वलक्षणं सावकाशत्वमित्यर्थः । अत्र केवलयोरित्यङ्गीकारवादः । भाष्यपौराणिक-रूढेरप्युक्तत्वादिति ज्ञेयम् ।

## भावदीपः

॥ ॐ भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॐ ॥ **समर्थयदिति** ॥ अर्थ याञ्चायामिति चौरादिकस्यात्मने-पदित्वेन समर्थयमानं सूत्रमिति वक्तव्येऽपि चक्षिङ्व्यक्तायां वाचीत्यस्यानुदात्तत्वेन आत्मनेपदसिद्धौ ङित्वोक्तेरनुदात्त त्वनिबन्धनं कार्यमनित्यमिति ज्ञापनार्थं प्रार्थयन्ति शयनोत्थितं प्रिया इति रघुवंशादौ

(भावदीपः)

प्रयोगश्चेत्यादेः धातुवृत्तावेवोक्त्या समर्थयदिति साधु । एवमग्रेऽपि । साधयदिति क्वचित्पाठः । तदा तु न क्लेशः । भाष्योक्तमन्त्रस्य गायत्रीविषयत्वसूचनाय सङ्गतिमाह ॥ **सैषेति** ॥ **षड्विधत्वमिति** ॥ 'गायत्री वा' इति 'इदं सर्वं भूतम्' इति 'वाग्वै गायत्री' इति 'येयं पृथिवी'ति 'यदिदमस्मिन्शरीरम्' इति 'यदिदमस्मिन्हृदयमि'ति गायत्रीभूतवाक्पृथिवीशरीरहृदयभेदेन गायत्रीशब्दितस्य वस्तुतः स्वात्मना सहोक्तषाड्विध्यमनूद्येत्यर्थः । अनेन श्रुतौ सैषा षड्विधा गायत्री वक्ष्यमाणदिशा चतुष्पदेति योजना न तु परमत इव भूतपृथिवीशरीरहृदयरूपचतुष्पदेत्यनुवाद इति सूचितम् । इति शब्दान्तभाष्यस्यार्थोक्तिपूर्वं सौत्रैवंशब्दार्थविवरणपरत्वं तस्य स्फोरयन् सूत्रेणान्वयमाह ॥ **अस्येत्यादिना** ॥ इत्यन्तभाष्यस्यानुवादपूर्वं तद्व्याख्येयं सौत्रैवं पदमनुवदति ॥ **इत्येवमिति** ॥ एतेन सौत्रैवंशब्दो यथान्यासतया गायत्री विष्णुर्भवेदिति प्रतिज्ञार्पकः सन्नपि व्यपदेशे प्रकारार्पकतयाप्येवम्भूतादीति हेतुनाप्यन्वेतीति दर्शितम् । तथा चायमर्थः । एवं तावानस्य महिमेति मन्त्रोक्तप्रकारेण भूतादिपादव्यपदेशादेवं गायत्री विष्णुर्भवेदिति । यथा ''त्रयाणामेव चैवमुपन्यासः प्रश्नश्च'' इत्यत्रैवंशब्दस्त्रयाणां मध्ये प्रधानस्योपन्यासेन इति वक्तुं उपन्यासप्रकारोक्त्यर्थः तथाऽत्रापि पराभिप्रेतभूतपृथिव्यादिपदोपदेशव्यावृत्त्यर्थ इति ॥ **व्यपदेशाच्चेति** ॥ न केवलं गानत्राणकर्तृत्वश्रवणादिति चार्थः । उपपत्तेरित्येतद्भूतादिपादत्वरूपलिङ्गस्य निरवकाशत्वोपपादकमिति व्याकरिष्यन् व्यपदेशाच्चेति विच्छिद्य व्याचख्यौ । उपपत्तेरित्युक्तिलब्धमाह ॥ **अन्यत्रानुपपत्तेश्चेति** ॥ भिन्नं चेत्यन्तभाष्यग्रहणाय सुवर्णमितीति प्रतीकमनुपादाय सुवर्णमित्यादीत्युक्तम् । शङ्काबीजं विघटयन्नुक्तशङ्कानिरासकं पाद इत्यादिवाक्यं तावद् व्याचष्टे ॥ **नायमिति** ॥ **भिन्नमेवेति** ॥ भाष्ये भिन्नं चेति चोऽवधारण इति भावः । विश्वमिति शेषः । एकदेशपरिमितमित्यस्यार्थस्तत्पादेति । विष्णुपादेत्यर्थः । पाद इतीत्यस्यार्थः पादतयेति । उच्यत इति शेषः । अत इति फलोक्तिः । तर्हि भाष्ये पादपरिमित इत्यनुक्त्वा एकदेशेति कस्मादुक्तं इत्यतः तद्व्यावर्त्यमाह ॥ **तर्हीति** ॥ तत्र हेतुतया पाद इत्येकदेशपरिमितमित्येतदेव वाक्यं व्याचष्टे ॥ **यतोऽत्रेति** ॥ पादोऽस्येति श्रुतावित्यर्थः । विराजमित्यस्यार्थो ब्रह्मणः शरीरमिति । अमृतस्य मुक्तैः । कलां एकदेशपरिमिताम् । पादपदस्याऽऽवृत्त्या तां कलां पादमाचक्षत इत्यस्य पर्यवसितार्थं वदन् कर्त्राकाङ्क्षां पूरयति ॥ **पादेति** ॥ सेति शेषः । कलेत्यर्थः । पादमित्यस्यार्थः चतुर्भागसाम्यमिति । वक्ष्यति च सूत्रकार एव बुद्ध्यर्थः पादवदिति तृतीयेऽध्याये पाद इत्युक्तिर्बुद्ध्यारोहार्थेति । सौत्रचशब्दस्यार्थान्तरमुपेत्य स हीत्यादिभाष्यं प्रवृत्तमिति भावेनाऽऽह ॥ न **केवलमिति** ॥ **अन्येति** ॥ पुरुषपशुप्रकरण इत्यर्थः । यथा षट्प्रश्ने प्राणप्रकरणे हृदि ह्येष आत्मेति जीवश्रुतिः । यथा वा काण्वश्रुतौ नैवेह किञ्चनेति मृत्युप्रकरणे स एव प्राणस्त्रेधा

(भावदीपः)

विहित इति प्राणश्रुतिस्तथेति भावः ॥ **पृथग्युक्तिरिति** ॥ न केवलं भूतादिपादव्यपदेशात् किन्तु गायत्र्या प्रतिज्ञातचतुष्पादत्वस्य पुरुषसूक्तमन्त्रेणोपादानेन पुरुषसूक्तोक्तत्वाच्च एवं गायत्री विष्णुरिति भावेन तस्य विष्णुपरत्वसमर्थनपरं स हीति भाष्यमित्यर्थः ॥ २६ ॥

## अभिनवचन्द्रिका

**(सू.२७) विष्णुत्वं समर्थयदिति** ॥ यद्यपि अर्थधातोरनुदात्तेत्त्वात् आत्मनेपदेन भाव्यम्, तथापि – चक्षिङः अनुदात्तेत्त्वादेवाऽऽत्मनेपदे सिद्धे आत्मनेपदत्वाय ङित्करणेनाऽनुदात्तेत्त्वप्रयुक्तस्यात्मनेपदस्य अनित्यताया ज्ञापितत्वात् समर्थयदिति शत्रन्तप्रयोग उपपन्नः । अत्र गुणसूत्रम्, 'भूतादिपाद-व्यपदेशोपपत्तेश्चैव'मिति । अत्र भूतादिपादेति हेतुद्वयकथनं भूतपादत्वममृतपादत्वं चेति ॥ तेन भूतपादत्वमात्रस्य व्यभिचाराभावादादिपदं व्यर्थमिति परास्तम् । व्यपदेशादित्यसिद्धिवारणाय । अप्रयोजकत्वशङ्कानिरासाय उपपत्तिपदम् ।

पूर्वसूत्रे साध्यनिर्देशाभावात् तन्निर्देशाय एवमिति । ततश्चैवं सूत्रयोजना – यथा चरणाभिधानात् ज्योतिर्विष्णुः, एवं भूतपादत्वादमृतपादत्वाच्च गायत्री विष्णुरिति ।

## वाक्यार्थमुक्तावली

ॐ भूतादिपादव्यपदेशोपपत्तेश्चैवं ॐ ॥ **प्रागुक्तषड्विधत्वमिति** ॥ गायत्रीभूतवाक्पृथिवी-शरीरहृदयसंज्ञकषड्विधत्वमित्यर्थः । तावानस्य महिमा ततो ज्यायांश्च पुरुषः । पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि' इत्येवं गायत्र्या भूतामृतपादत्वव्यपदेशाच्चैवं गायत्री विष्णुरेव भूतादिपाद-व्यपदेशस्य विष्णावुपपत्तेरन्यत्रानुपपत्तेरिति सूत्रार्थमाह । पादत्रयं तिष्ठतीत्येवं गायत्र्या इत्यादिना । अनेनैवमिति द्विरावृत्तिः । एकस्य श्रौतव्यपदेशपरामर्शकत्वम् । अन्यस्य साध्यसमुच्चायकत्वम् । चशब्दो बुध्या विवेकेन व्यपदेशादित्यन्वेति । व्यपदेशस्य निरवकाशत्वप्रदर्शनायोपपत्तिपदमित्युक्तं भवति । तस्यापि भूतभिन्नत्वादिति पादशब्दस्य तदंशत्वप्रतिपादकत्वात् । भूतभिन्नस्य भगवतो भूतान्यंशा इति वक्तुमयुक्तत्वादिति भावः । पाद इत्येकदेशपरिमितमिति भाष्यार्थमाह– **किन्तु यज्ञदत्तस्येत्यादिना** ।

भिन्नमेवेत्युक्त्या चशब्दो अवधारणार्थ इत्युक्तं भवति । तत्पादपरिमितत्यनेन एकदेशेति पदं पादार्थकमित्युक्तं भवति । ततश्चायमर्थः । पाद इत्यनेन यज्ञदत्तचतुर्भागवलो देवदत्त इत्यनेनेव

(वाक्यार्थमुक्तावली)

भिन्नमेव विश्वं तत्पादपरिमितसामर्थ्यं पादतयोच्यते न तु स्वरूपांशत्वाभिप्रायेणेति । एकदेशपदस्वारस्याय व्यावर्त्यशङ्कापूर्वं पाद इत्येकदेशपरिमितमेवेत्येतत् प्रकारान्तरेण व्याचष्टे तर्हीत्यादिना । यद्यपि भिन्नपादः सर्वजीवास्तस्य सादृश्यमात्रत इति छान्दोग्यभाष्योक्तेर्भूतशब्दो जीवपरः तथापि सुवर्णं कोशमिति श्रुतौ मुक्तामुक्तजीवगर्भे सावरणब्रह्माण्डस्य जीवकलात्वोक्तेस्तदनुसारेण टीकायां विश्वमित्युक्तम् । श्रुतौ टीकायामपि सावरणब्रह्माण्डाभिमानिनस्तदन्तर्गता जीवा एव कलात्वेन विवक्षिता इत्यविरोधः । विराजमित्यस्यार्थो ब्रह्मणः शरीरमिति । अमृतस्य मुक्तेरिति । कलामित्यस्यैकदेशपरिमितमिति । पादपदेनेत्यध्याहारः । पादमित्यस्यार्थश्चतुर्भागसाम्यमिति । पादमिति भावप्रधानो निर्देश इति भावः । पुरुषसूक्तोक्तत्वाच्चेति । अनेन श्रौतश्चशब्दः प्रकारान्तरेण व्याख्यातो भवति ॥ **अन्यप्रकरण इति** ॥ पुरुषप्रश्नपरे पुरुषसूक्ते विष्णुपरपक्षश्रुतिः प्रासङ्गिकी भवत्वित्यर्थः । प्रासङ्गिकतयाऽप्यन्यश्रुतिसद्भावात्कथं तत्परत्वाभाव इत्यत उक्तम् ॥ भूतादिपाद इति ॥ यन्नश्रुतेर्भूतादिपादे अभावेनान्यस्यैव भूतादिपादत्वोपपत्तिरिति भावः । गायत्र्या उक्तचतुष्पदत्वस्य पुरुषसूक्ते समाख्यानाच्च गायत्रीशब्दवाच्यो विष्णुरित्युच्यते स हीत्यादिनेत्यभिप्रेत्याह **किं चेति** ॥ तदेतदृचाभ्युक्तम् । तावानस्येति गायत्र्याः पुरुषसूक्तोक्तत्वमुक्तम् । पुरुषसूक्तोक्तश्च विष्णुरेवातो गायत्र्याः पुरुषसूक्तोक्तश्च विष्णुरेवातो गायत्र्याः पुरुषसूक्तोक्तत्वाद्गायत्री विष्णुरेवेति मूलार्थमभिप्रेत्य वा वक्ति किं चेति ॥

## तत्त्वसुबोधिनी

**प्रागुक्तषड्विधत्वमिति** ॥ गायत्रीभूतवाक्पृथिवीशरीरहृदयलक्षणं षड्विधत्वमित्यर्थः ।

सूत्रे चशब्दः प्रतिज्ञाप्रदर्शकः । भूतादिपादव्यपदेशस्यैव हेतुत्वं तस्य निरवकाशत्वं वक्तुं उपपत्तेरित्युक्तम् । चशब्दस्य तु बुद्ध्या विवेकेन व्यपदेशपदेन अन्वये पूर्वोक्तहेतुसमुच्चायकत्वम् । यथा श्रुतसम्बन्धे तु अनुपपत्तिसमुच्चायकत्वम् इत्यभिप्रेत्य सूत्रं योजयति । एवं गायत्र्या इत्यादिना । **सुवर्णमित्यादीति** ॥ चतुर्भागवलवद्भिन्नं चेत्येतत्पर्यन्तग्रहणायादिपदप्रयोगः । भाष्ये उपोद्घातसङ्गत्या श्रुतेरादावुदाहरणेऽपि स्वयमाकाङ्क्षाक्रमेणान्ते तस्या व्याख्यानं क्रियते इत्यदोषः । चतुर्भागवलवद्भिन्नमित्यनुक्तौ पाद इत्येकदेशपरिमितमित्यनेन निवर्तनीयाशङ्कानुदयात् तयोः व्यत्यासेन व्याख्यानमिति द्रष्टव्यम् ॥ **पादपदेनेति** ॥ अनेन इति शब्दाध्याहारेण पादपदमेकेन प्रकारेण व्याख्यातम् । आचक्षत इत्युक्तक्रियाकर्तृवाचकाध्याहारः ॥ **पुरुषसूक्ताद्यागमा इति** ॥ प्रकारान्तरेण पादमित्येतत् व्याख्याति ॥

(तत्त्वसुबोधिनी)

**यतः सा चतुर्थभागसाम्यमिति** ॥ अनेन पादमिति भावप्रधानमित्युक्तं भवति । अनेन पुरुषसूक्ताद्याः कला एव पादपदेन आचक्षते इत्यत्र हेतुरुच्यते इति भावः ॥ **किन्तु पुरुपेति** ॥ अनेन सौत्रश्चशब्दः प्रकारान्तरेण व्याख्यातः ॥ **विष्णुत्वे एवेति** ॥ गायत्रीशब्दवाच्ये तावानस्य महिमा इत्यादिना पुरुषसूक्तमन्त्रोदाहरणात् पुरुषसूक्तप्रतिपाद्यश्च यतो विष्णुरेवेति भाष्याभिप्राय इत्यर्थः ।

## वाक्यार्थमञ्जरी

ॐ भूतादिपादव्यपदेशोपपत्तेश्चैवं ॐ ॥ एवं गायत्री ब्रह्मैव । 'पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिदि' इति गायत्रीधर्मतया व्यपदिष्टजीवामृताख्यरूपस्यांशकत्वस्य तस्मिन्नेवोपपत्तेरित्यर्थः ॥ **सैषेति** ॥ सैषा षड्विधा गायत्री भूतवाक्पृथिवीशरीरहृदयभेदेन षड्रूपा गायत्री चतुष्पदा भूतमूर्तित्रियाख्यांशवतीत्यर्थः । व्यपदिश्य विहित्वा । तत्रैव चतुष्पादत्व एव ॥ **तदेतदिति** ॥ तदेतद्भगवतश्चतुष्पादत्वम् ऋचां मन्त्रान्तरेण अभि कथमेतदिति शङ्कामभि तदुत्तरत्वेनेति यावत् । अनु आनुकूल्येनोक्तमित्यर्थः । ज्यायान् अधिकमहिमा भूतानि जीवाः । पादत्रयं नारायणवासुदेववैकुण्ठाख्यम् । दिवि अनन्तासनश्वेतद्वीपवैकुण्ठेषु । पादत्रयस्येव भूतानामपि स्वरूपांशत्वमुच्यत इति भ्रान्तः शङ्कते ॥ **नन्विति** ॥ भिन्नं चेत्यन्तग्रहणाय सुवर्णमित्यादीत्यादिशब्दः । भाष्यमाकाङ्क्षाक्रमेण योजयति ॥ **नायमिति** ॥ **विश्वचतुष्टयसम इति** ॥ विश्वबलचतुष्टयसामर्थ्यवानित्यर्थः । सा कला । उत्तरभाष्यं सङ्गमयितुमाह ॥ **न केवलमिति** ॥ तदभावात् यज्ञश्रुत्यभावात् । अध्याहारे गौरवात्प्रकारान्तरमाह ॥ **पुरुषसूक्तेति** ॥ पृथक् भूतादिपादत्वापेक्षया ॥

## विवृतिः

**प्रागुक्तषड्विधत्वमिति** ॥ गायत्री, भूत, वाक्, पृथिवी, शरीर, हृदय, लक्षण षड्विधत्वमित्यर्थः ॥ सूत्रे एवंशब्दः प्रतिज्ञाप्रदर्शकभूतादिपादव्यपदेशस्यैव हेतुत्वं तस्य निरवकाशत्वं वक्तुमुपपत्तेरित्युक्तम् । चशब्दस्य तु बुध्या विवेकेन व्यपदेशपदेनान्वये पूर्वोक्तहेतुसमुच्चायकत्वं, यथाश्रुतसम्बन्धे तु अनुपपत्तिसमुच्चायकत्वमित्यभिप्रेत्य सूत्रं योजयति ॥ एवं गायत्र्या इत्यादिना ॥ **सुवर्णमित्यादीति** ॥ चतुर्भागवलवद्भिन्नं चेत्येतत्पर्यन्तग्रहणायादिगदप्रयोगः ॥ भाष्ये उपोद्घातसङ्गत्या श्रुतेरादावुदाहरणेऽपि स्वयमाकांक्षाक्रमेणान्ते तस्य व्याख्यानं क्रियत इत्यदोषः ॥ चतुर्भागवलवद्भिन्नमित्युक्तौ पादमित्येकदेशपरिमितमित्यनेन निवर्तनीयशङ्कानुदयात्तयोर्व्यत्यासेन

(विवृतिः)

व्याख्यातमिति द्रष्टव्यम् ॥ **पादपदेनेति ॥** अनेनेति शब्दाध्याहारेण पादपदमेकेन प्रकारेण व्याख्यातम् ॥ आचक्षत इत्युक्तक्रियाकर्तृवाचकाध्याहारः । पुरुषसूक्ताद्यागमा इति प्रकारान्तरेण पादमित्येतद्व्याख्याति ॥ **यतः सा चतुर्भागसाम्यमिति ॥** अनेन पादमित्येतद्भावप्रधानमित्युक्तं भवति ॥ अनेन पुरुषसूक्ताद्याः कलामेव पादपदेनाचक्षत इत्यत्र हेतुरुच्यत इति भावः ॥ किं तु पुरुषेति ॥ अनेन सौत्रश्चशब्दः प्रकारान्तरेण व्याख्यातः ॥ विष्णुत्व एवं वेति ॥ गायत्रीशब्दवाच्ये तावानस्य महिमेत्यादिना पुरुषसूक्तोक्तमन्त्रोदाहरणात् ॥ पुरुषसूक्तप्रतिपाद्यश्च यतोऽतो विष्णुरेवेति भाष्याभिप्राय इत्यर्थः ॥

## सूत्रभाष्यम्

**॥ ॐ उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॐ ॥**

त्रिपादस्यामृतं दिवि (छां.३-१२-६) इति पूर्वोपदेशः । 'परो दिवः' (छां.३-१३-७) इति **पञ्चम्यन्तः पश्चिमः । तस्मान्नैकं वस्त्वत्रोच्यत इति चेन्न । त्रिसप्तलोकापेक्षयोभयस्मिन्नप्यविरोधात् ॥ २७ ॥**

## सत्तर्कदीपावली

इदमेव प्रतिपादयत्सूत्रमुपन्यस्य व्याचष्टे । **उपदेशेत्यादिना ॥** अतोऽत्र ज्योतिःशब्दार्थो विष्णुरिति सिद्धम् ।

## तत्त्वप्रदीपिका

**त्रिसप्तलोकापेक्षयेति ॥** त्रिलोकापेक्षया दिवीत्युपदेशः । तस्मादुभयस्मिन्नप्युपदेशे वस्त्वेकत्वाविरोधः । सर्वाधिज्योतिपाधिवेदोपलक्षणार्थौ ज्योतिर्गायत्रीशब्दौ ॥ इति ज्योतिर्गायत्र्यधिकरणम् ।

## तत्त्वप्रकाशिका

उक्तमाक्षिप्य समादधत्सूत्रमुपन्यस्याक्षेपांशं तावद्व्याचष्टे ॥ **उपदेशेति ॥** यदुक्तं गायत्री ज्योतिश्च विष्णुरिति तद्भवेद्यदि गायत्रीज्योतिःप्रसङ्गयोरेकं वस्तूच्यते । न चैवम् । 'त्रिपादस्यामृतं दिवि' इति गायत्र्या द्युस्थितत्वोक्त्या परो दिव इति ज्योतिषो दिवःपरत्वोक्त्या विरोधान्नैकं वस्त्वत्रोच्यते । अतः कथमुभयोः विष्णुत्वाध्यवसाय इत्यर्थः ।

(तत्त्वप्रकाशिका)

सिद्धान्तयत्सूत्रांशं व्याचष्टे ॥ **नेति** ॥ नात्र वस्तुद्वयमुच्यते येनोभयोर्विष्णुत्वाभावः किन्तूभयत्राप्येकमेव । विवक्षाभेदेन सप्तमीपञ्चम्योरेकार्थत्वेन विरोधाभावात् । तथा हि । भूर्भुवःसुवरिति लोकत्रयाभिप्रायेण लक्षयोजनोच्छ्रितान्तरिक्षोपरितनश्वेतद्वीपानन्तासनवैकुण्ठानां द्युत्वात्तद्गतरूपत्रयं दिवीत्युच्यते । सप्तलोकापेक्षया इन्द्रसदनस्य द्युत्वाद्वैकुण्ठस्य दिवःपरत्वम् । मेरोरपि द्युत्वात्तत्परानन्तासनस्य दिवःपरत्वम् । सूर्यमण्डलस्यापि द्युत्वेन तदुत्तरश्वेतद्वीपस्य दिवःपरत्वम् । तत्रस्थमूर्तित्रयस्य दिवःपरत्वं च युज्यते । अत उभयथोपदेशेऽपि विरोधाभावादुभयत्राप्येकमेव विष्ण्वाख्यं वस्तूच्यत इति भावः । एवं पृथिव्यन्तरिक्षस्वरात्मकसर्वलोकेभ्यः क्रमेणानन्तासनादीनामुच्चत्वेन सर्वतः पृष्ठत्वं तथा मेरुवैजयन्तसत्यलोकेभ्यो ब्रह्मसदनेभ्यः तेषां क्रमेणोच्चत्वात् विश्वतः पृष्ठत्वं च ज्ञातव्यम् । तस्माद् गायत्री विष्णुरेव स एव ज्योतिरानन्दमयश्चेति सिद्धम् ॥ २७, अ० ११ ॥

## गुर्वर्थदीपिका

'भूर्लोको विहितः पद्भ्यां भुवर्लोकस्तु नाभितः ।
स्वर्लोको विहितो मूर्ध्नि इति वा लोककल्पना'

इति भागवतोक्तेः त्रिसप्तलोकापेक्षयेति भाष्यम् । लक्षयोजनोच्छ्रितसूर्यकिरणप्रतिबन्धकलोकालोकपर्वतादपि क्रमोच्चघनोदकोपरिस्थितानन्तासनलोकस्य साधिकलक्षयोजनत्वस्य न्यायप्राप्तत्वाल्लक्षयोजनोच्छ्रितान्तरिक्षोपरितनेत्युक्तम् । यद्यपि मेरोरपि द्युलोकत्वेन तत्परसर्वलोकानामपि दिवःपरत्वं घटते । तथापि त्रयाणां द्युलोकत्वाख्यवस्तुस्थितिकथनाय सूर्येन्द्रसदनयोः पृथक् ग्रहणम् । अत एव लक्षयोजनप्रमाणसूर्यमण्डलाधिकत्वेनानन्तासनश्वेतद्वीपवैकुण्ठाख्यलोकत्रयस्य च दिवःपरत्वसम्भवेऽपि वस्तुस्थितिकथनप्रमाणानुसरणाय मेर्वाख्यदिवःपरत्वमनन्तसनस्योक्तम् । सूर्यमण्डलादीपत्परत्वसम्भवेऽपि षोडशसहस्रयोजनपर्यन्तं भुवोऽन्तर्निविष्टमहामेरोः यथेष्टं परत्वसम्भवाच्च मेरोर्द्युलोकत्वोक्तिरिति ज्ञेयम् । 'टुवोश्वगतिवृध्योः' इति धातुव्याख्यानाद्विशेषेणाभिवृद्धियुक्तब्रह्मसदनानि विश्वपदोक्तानीति भावेनोक्तं मेर्वित्यादि ॥

## भावबोधः

'लोकत्रयविवक्षायां परतो लक्षयोजनात् ।
सर्वं द्यौरिति विज्ञेयं ततस्ते दिवि संस्थिताः ॥
दिवःपरश्च भगवान् सप्तलोकविवक्षया' ॥

(भावबोधः)

इति स्मृत्यनुसारेण भाष्याभिप्रायमाह– **भूर्भुवःस्वरित्यादिना ॥ लक्षयोजनोच्छ्रितान्तरिक्षेति ॥** अत्र लक्षयोजनोच्छ्रितेत्यन्तरिक्षविशेषणं अनन्तासनस्य तस्मादुपरितनत्वप्रदर्शनार्थम् । तेन 'पृथिवीस्थेषु सर्वोच्चो लोकोऽनन्तासनात्मकः' इत्युक्तत्वादनन्तासनस्य नान्तरिक्षादुपरितनतेति शङ्का निरस्ता । तस्य पृथिवीस्थत्वेऽपि बहुलक्षयोजनोच्छ्रितत्वेनैकलक्षयोजनोच्छ्रितान्तरिक्षादुपरितनत्वोपपत्तेः । सर्वपृथिवी-स्थोच्चत्वोक्त्या तु नान्ययोगो व्यवच्छिद्यते; किन्त्वयोगः । इन्द्रसदनस्य द्युत्वादित्यादि ॥

''पृथिव्यां द्यौर्महामेरुराकाशे सूर्यमण्डलम् ।
दिवीन्द्रसदनं चैव तत्परे तु दिवः परे'' ॥

इति स्मृतिं मूलीकृत्योक्तम् । अत्र यद्यपि लोकत्रयविवक्षायामप्यनन्तासनादीनां मेरुसूर्यमण्डलपरत्वेन दिवःपरत्वसिद्धिः । स्वर्गलोकात् परत्वं त्वनन्तासनश्वेतद्वीपयोर्नास्ति ।

''यावानुच्चः स्वर्गलोकस्तावानुच्चतया स्थितः ।
श्वेतद्वीपो दिविष्ठोऽत'' ॥ इत्यादेः ।

तथापि वैकुण्ठस्य सर्वद्युपरत्वसिद्धये सप्तलोकविवक्षयोक्तिः । तदुक्तम्— 'द्व्यात्मकेभ्यश्च सर्वेभ्यो वैकुण्ठश्चोच्च उच्यते ।' इति । वैकुण्ठस्यापि स्वर्गलोकात् परत्वेनैव दिवःपरत्वसिद्धिर्यद्यपि भवति, तथापि तथा तस्य सर्वतः पृष्ठेष्वित्यनेनैवोक्तत्वाद्दिवः पर इत्यस्य वैयर्थ्यं मा भूदितीन्द्रसदनस्य द्युत्वोक्तिः ॥

नन्वेवं द्युशब्दस्यानेकार्थत्वं स्यात् । त्रिलोकापेक्षायामन्तरिक्षोपरितनसर्वलोकपरत्वस्य सप्तलोक-विवक्षायां मेरुसूर्यमण्डलेन्द्रसदनवाचकत्वस्याङ्गीकृतत्वादिति चेत्, न; अक्षादिशब्दवत् द्युशब्दस्यापि नानार्थत्वेनाङ्गीकारेणेष्टापादनत्वात् ॥

यद्वा चित्प्रकृत्यात्मकत्वेन द्योतमाने स्थानत्रये सप्तम्यन्तो यौगिकः । पञ्चम्यन्तस्तु स्वर्गादौ रूढ इत्यविरोधः । अयमपि सौत्राविरोधशब्दार्थ इति द्रष्टव्यम् । अयञ्च परिहारः-

'अनन्तशयनश्चैव तथाऽनन्तासनं हरेः ।
बहुलक्षोच्छ्रिते नित्ये विमाने संस्थिते यतः ।
चित्प्रकृत्यात्मनि ततो दिवीति कथितं श्रुतौ' ॥

इति छान्दोग्यभाष्ये सूचितः ॥

(भावबोधः)

पृथिवीस्थेषु सर्वोच्चो लोकोऽनन्तासनात्मकः ।
अन्तरिक्षात्मकेभ्यश्च श्वेतद्वीपे स्थितो हरिः ॥

द्वयात्मकेभ्यश्च सर्वेभ्यो वैकुण्ठश्चोच्च उच्यते ।
पृथिव्यां द्यौर्महामेरुराकाशे सूर्यमण्डलम् ।
दिवीन्द्रसदनं चैव तत्परे तु दिवः परे ॥

पृथिव्यां ब्रह्मणो मेरौ जयन्तं त्वन्तरिक्षगम् ॥

तृतीयं सत्यलोके च सदनं त्रिविधं स्मृतम् ।
तेभ्योऽनन्तासनाद्या यत्परतो विश्वतः परः ॥

इति स्मृत्यनुसारेण सर्वतः पृष्ठेषु विश्वतः पृष्ठेष्विति पदद्वयं व्याचष्टे– **एवं पृथिव्यन्तरिक्षेत्यादिना** । अत्राद्ये उपक्रमवाक्योक्तत्वेन समन्वीयमानशब्दप्रवृत्तिनिमित्तत्वेन च प्राधान्यात् गानत्राणकर्तृत्वरूपस्वपक्ष-साधकोक्तिः । द्वितीये उपसंहारे संवादितयोदाहृतमन्त्रोक्तलिङ्गोक्तिः । तृतीये बाधकोद्धार इति सूत्रक्रमः ॥

## भावदीपः

॥ ॐ उपदेशभेदात् ॐ ॥ उक्तमाक्षिप्येत्युक्तं व्यञ्जयन्भाष्यं व्याचष्टे ॥ **यदुक्तमिति** ॥ उभयस्मिन्नित्येतदुभयत्रेत्युक्तम् । तद्व्यनक्ति ॥ **सप्तमीति** ॥ सप्तम्यन्तपञ्चम्यन्तपदघटितवाक्ययोरित्यर्थः ।

लोकत्रयविवक्षायां परतो लक्ष्ययोजनात् ।
सर्वं द्यौरिति विज्ञेयं ततस्ते दिवि संस्थिताः ।
दिवःपरश्च भगवान्सप्तलोकविवक्षया ॥

इति छान्दोग्यभाष्यदिशा व्याचष्टे ॥ **भूरिति** ॥ **द्युत्वादिति** ॥ ननु द्वितीयस्कन्धतात्पर्ये षष्ठाध्याये–

अनन्तासनवैकुण्ठनारायणपुराणि तु ।
त्रीणि धामानि विष्णोर्वै त्रिलोकाद्बहिरेव हि ।

इति कथं वाह्यत्वोक्तिः । उच्यते । 'भुवः स्वर्गश्च कोट्यैव योजनानां प्रविस्तृतौ' इत्युक्तेः । ततो बहिर्देशस्थत्वेनेति । विस्तृतमेतत् चन्द्रिकाप्रकाशे ॥ **सप्तेति** ॥ भूर्भुवःसुवर्महर्जनस्तपःसत्यमिति सप्तेत्यर्थः ॥ **द्युत्वादिति** ॥

(भावदीपः)

'पृथिव्यां द्यौर्महामेरुराकाशे सूर्यमण्डलम् ।
दिवीन्द्रसदनं चैव तत्परे तु दिवः परे' ॥

इति तद्भाष्योक्तेरिति भावः । त्रिलोकविवक्षायां मेर्वादिपरत्वेन द्युपरत्वसिद्धावपि वैकुण्ठस्य सर्वद्युपरत्वसिद्धये सप्तलोकविवक्षोक्तिः । 'द्व्यात्मकेभ्यश्च सर्वेभ्यो वैकुण्ठश्चोच्च उच्यते' । इति तद्भाष्योक्तिः । विशेषस्तु चन्द्रिकायाम् । सर्वतःपृष्ठविश्वतःपृष्ठपदयोरपौनरुक्त्याय तद्भाष्यानुरोधे-नार्थभेदमाह ॥ **एवमिति** ॥ **तस्मादिति** ॥ गानत्राणकर्तृत्वादिनिरवकाशभगवल्लिङ्गानां भावात् । गायत्रीपदयोगरूढ्योर्विष्णौ भावाच्चेत्यर्थः । अधिवेदगतोष्णिग्बृहत्यनुष्टुबाद्यशेषनामोपलक्षकगायत्रीशब्दवाच्य इति प्रतिज्ञार्थो ध्येयः । सूत्रे गायत्रीनाम्नः साक्षादनुपादानात् टीकायामेवमनुक्तिः । उक्तं च तत्वप्रदीपे । सर्वाधिवेदोपलक्षणार्थो गायत्रीशब्द इति । विष्णौ गायत्रीत्यादिस्त्रीलिङ्गं तु प्रकृतिश्चेति वक्ष्यमाण-न्यायेनोपपद्यत इति भावः ॥ **स एवेति** ॥ तस्मादित्यनुवर्तते । तस्य च गायत्रीज्योतिषोरेकार्थत्वेन द्युस्स्थत्वदिवःपरत्वविरोधाभावादिति सर्वसूत्रार्थोपसंहारः ॥ **ज्योतिरिति** ॥ अत्रत्यं पूर्वोक्तसूक्तस्थं चेत्यर्थः । सूक्तस्थस्य चक्षुराद्यगोचरत्वोक्तावपि इह दृष्टत्वश्रुतत्वोक्तिः सुधोक्तदिशा अधिष्ठानादि-द्वारोपपन्नेति भावः । आनन्दमयश्चेति फलोक्तिः ।

यदत्राह कश्चिद्रामानुजीयः । छन्दःसूत्रे चेदिति शङ्काश्रवणान्नाधिकरणान्तरमुचितमिति । तन्न । भोक्त्रापत्तेरविभागश्चेदित्यादौ त्वयापि तथात्वोपगमात् । यदपि तथाशब्दस्य छन्दःसाधर्म्यमेवार्थः स्वरसो न गायत्रीशब्दार्थत्वरूपोऽर्थ इति । तदपि न । त्वदर्थस्य चन्द्रिकायां निरासात् । तथा हि दर्शनमिति सूत्रे शेषोक्तिपरत्वेन तथाशब्दस्वारस्यस्य टीकायां व्यक्तत्वाच्च । निगदादिति पाठोऽपपाठः । निगमादित्येव सुपाठ इति प्रजल्पनं तवार्वाचीनस्य निर्बीजम् । चेतोर्पणाय निगद इति विग्रहो न युक्तः । प्रकृतिविकारभावाभावादित्यप्यबद्धं सिद्धे शब्दार्थसम्बन्धे लोकतोऽर्थप्रयुक्ते शास्त्रेण धर्मनियम इत्यत्र महाभाष्ये पस्पशाग्रन्थे धर्माय नियम इति विग्रहस्य दर्शितत्वात् । यदपि तथाहि दर्शनमित्यस्य लिङ्गोक्तिपरत्वे लिङ्गादित्येव निर्देशः स्यादिति तदपि न । 'बाहुल्यात् श्रुतिलिङ्गयोः' इत्यनुभाष्यसुधादावुक्तदिशा 'अतो ज्यायांश्च पूरुषः' । 'यद्वै तद्ब्रह्म' 'एतामेव ब्रह्मोपनिषदम्' इत्यादिब्रह्मशब्दादिप्रदर्शकानेकवाक्योपादानाय गायत्रीपदप्रवृत्तिनिमित्तप्रदर्शनाय च तथाहि दर्शनमिति निर्देशात् । लिङ्गादित्यादिनिर्देशे च तदलाभात् । यदपि गायत्र्या विष्णुत्वे चतुष्पदेत्ययुक्तं टावृचीत्युक्तत्वादिति तदपि न । बहुश्रुतिलिङ्गादिबलेन विष्णुत्वे सिद्धे शब्दनिर्वाहस्य कथञ्चित्कार्यत्वात् ।

(भावदीपः)

पादोन्यतरस्यामित्यत्र ङीबभावपक्षे हलन्ताद्वेति टापि सति पदादेशे चतुष्पदेत्युपपत्तेः । एवमन्यदपि तदीयं दुर्वचनं दूरीकार्यम् ॥ २७ ॥ अ. ११ ॥

## अभिनवचन्द्रिका

अत्र गुणसूत्रम् 'उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधा'दिति । अयं योगः शक्योऽवक्तुम्, आक्षेपस्यैवायोगेन तत्परिहारस्य व्यर्थत्वात् । तथा हि – नोपदेशभेदो वस्तुभेदसाधकः । 'एतमस्यामेतं दिव्येतं वायावेत'(छा.३.१३)मित्यादौ उपदेशभेदेऽपि वस्तुभेदादर्शनात् । कालभेदेन एकस्यैव देवदत्तस्य पाटलिपुत्रस्थत्वतद्बहिस्थत्ववत्, एकस्यैव वस्तुनः द्युस्थत्व, दिवःपरत्वसम्भवाच्च । एककालावच्छेदेनापि आकाशस्य द्युस्थत्वदिवःपरत्ववत् ज्योतिषोऽपि तत्सम्भवाच्च । किंच अत्र स्थानभेदोऽपि न श्रूयते । तथा हि– 'त्रिपादस्यामृतं दिवी' (छा.३-१३)ति द्युस्थत्वेनोक्तज्योतिषः दिवःपरत्वमुच्यते । न तु दिवःपराधिकरणवृत्तित्वम्, येन स्थानभेदः स्यात् । द्युस्थस्य दिवःपरत्वं नाम न द्युलोकात्परलोकस्थत्वम्, किं नाम द्युस्थजनविलक्षणत्वं द्युशब्दस्य द्युस्थजनवाचित्वात् । एवं च – द्युस्थं ज्योतिः तत्स्थजनेभ्यः परो विलक्षणमित्यर्थः । परशब्दस्य पुल्लिङ्गत्वं छान्दसम् । तदुक्तं महाभाष्ये – ग्रामशब्दोऽयं बह्वर्थः, अस्ति शालासमुद्राये वर्तते, तद्यथा ग्रामो दग्ध इति । अस्ति वाटपरिक्षेपे वर्तते । तद्यथाग्रामं प्रविष्ट इति अस्ति जनेषु वर्तते, तद्यथा ग्रामो गतः ग्राम आगत इति, अस्ति सारण्यकेसस्थण्डिलकेससीमके वर्तते, तद्यथा – ग्रामो लब्ध इति' इति चेत्, न – स्थानभेदस्य भेदमन्तराऽयोगेन भेदसाधकत्वात् । स साध्यमानो भेदः न स्थानद्वयनिष्ठतयोच्यमाननिष्ठ एवेति नियमः । किन्तूत्सर्गः । प्रत्यभिज्ञादिना तन्निष्ठत्वबाधे कालनिष्ठः । तस्यापि बाधेऽवच्छेदकनिष्ठः । तस्यापि बाधे सम्बन्धनिष्ठ इत्यादि विज्ञेयम् । एवं च – गायत्रीज्योतिषोर्भिन्नस्थानगतत्वेनाऽभेदे प्रमाणाभावेन बाधकाभावात् तयोरेव भेदः सिद्ध्यति । 'एतमस्यामेत'मित्यादौ एतमिति प्रत्यभिज्ञानात् भिन्नस्थानगत्वं रूपभेदमेव ज्ञापयति । तथा देवदत्तस्य पाटलिपुत्रतद्बाह्यगतत्वप्रत्यभिज्ञानबाधितत्वेन देवदत्तभेदमपहाय कालभेदं गमयति । एवमाकाशस्य द्युस्थत्वदिवःपरत्वे तद्व्याप्तिग्राहकं प्रमाणबाधेन आकाशभेदमपहायांऽशभेदं गमयत इति न कश्चिद्दोषः । यदत्रोक्तं 'किं चात्र स्थानभेदो न श्रूयत' इत्यादि, तन्न – दिवःपर इत्यस्यैव स्थानभेदज्ञापकत्वात् । तथा हि – द्युशब्दस्तावल्लोके मुख्यो, जनेष्वमुख्यः 'मुख्यामुख्ययोर्मुख्ये संप्रत्यय' इति द्युशब्देन द्युलोकस्यैव ग्रहणम् । ततः परत्वं च सजातीयलोकान्तरस्यैव न्याय्यम् न तु विजातीयस्य ज्योतिषः । अस्माद्गोर्बलिष्ठोऽन्वेषणीय इत्युक्ते सजातीयस्यगोरेवान्वेषणदर्शनात् । एवं च – 'दिवःपरो ज्योतिर्दीप्यत'

(अभिनवचन्द्रिका)
इत्यस्य द्युलोकात्परलोकगतं ज्योतिर्दीप्यत इत्यर्थलाभात् स्थानभेदसिद्धिः । द्युशब्दः कुतो लोके मुख्यः जनेष्वमुख्य इति चेत्, इदं तावदयं प्रष्टव्यः – पाटलिपुत्रं गतमागतमित्युक्ते काशीस्थानां गमनागमन-संप्रत्ययः कुतो वा न भवतीति । पाटलिपुत्रशब्दो न जनमात्रवाची, किन्तु पाटलिपुत्रस्थितानामेवेति चेत्, अङ्गीकृतं तर्हि पाटलिपुत्रशब्दस्य जनेषु वृत्तिः नगराधीनेति पाटलिपुत्रशब्दस्य नगरे वृत्तिर्मुख्येति ग्रामशब्दोऽयं बह्वर्थ इति महाभाष्यमपि मुख्यामुख्यसाधारण्याभिप्रायेण प्रवृत्तमिति बोध्यम् । एवं च– शङ्काया उपपन्नत्वात् तत्परिहाराय सूत्रमिदमारम्भणीयम् । 'अथ यदतः परो दीप्यन' इत्यत्र द्वे दर्शने । दिवःपरत्वेनोच्यमानं वैकुण्ठगतमेकमेव रूपं, 'विश्वतः पृष्ठेषु सर्वतः पृष्ठे'ष्वित्यादिना वैकुण्ठस्य विश्वतः पृष्ठत्वादिबोधनाय वैकुण्ठगतत्वेनोच्यते । विश्वतः पृष्ठेष्वित्यादिबहुवचनं तु वैकुण्ठस्य महत्वज्ञापनाय । 'सुपां सुपो भवन्ती'ति स्मरणात् एकवचनार्थे वा । 'त्रिपादस्यामृतं दिवि इत्यत्र श्वेतद्वीपानन्तासनवैकुण्ठगतं रूपत्रयमुच्यते इत्येकं मतम् । इदं च – भाष्याभिमतम् । अत्र रूपत्रयस्य द्युस्थत्वोपपादनाय त्रिलोकविवक्षा । वैकुण्ठगतस्य दिवःपरत्वोपपादनाय सप्तलोकविवक्षेति । अत एव सत्तर्कदीपावल्यां 'न च वाच्यम् 'अथ यदतःपर' इत्युक्तत्वात् स्वर्गादिलोकात्परतो वैकुण्ठे दीप्य-मानाज्ज्योतिः शब्दार्थात् विष्णोः अन्यदेव 'पादोऽस्य सर्वा भूतानि । त्रिपादस्यामृतं दिवी' त्यत्र स्वर्गस्थत्वेनोच्यत इति दिवीति शब्दस्य द्योतमानत्वयोगेन वैकुण्ठपरत्वात् । अत एव क्वचित्सप्तलोकापेक्षया दिवःपर इति त्रिलोकापेक्षया दिवीत्युपदेशो युज्यते । इदमेव प्रतिपादयत्सूत्रमुपन्यस्य व्याचष्टे– उपदेशेत्यादिने'त्युक्तम् । अपरन्तु– 'अथ यदतः परो दिवो ज्योतिर्दीप्यते' इत्यत्र 'त्रिपादस्यामृतं दिवी'त्यत्रापि श्वेतद्वीपानन्तासनवैकुण्ठगतं रूपत्रयमुच्यत इति । इदं च छान्दोग्यभाष्याभिमतम् । अस्मिन्मते रूपत्रयस्य द्युस्थत्वोपपादनाय त्रिलोकविवक्षाऽभिमता । सप्तलोकविवक्षा तु नाऽभिमता । दिवःपरत्वोपपादनन्तु–

'पृथिव्यां द्यौर्महामेरुः आकाशे सूर्यमण्डलम् ।
दिवीन्द्रसदनं चैव तत्परे तु दिवः पर'

इति प्रमाणानुसारेण ज्ञेयम् । अत्र टीका तु – छान्दोग्यभाष्यश्रीमद्भाष्याभिमतमतद्वयं संकलय्य प्रवृत्ता । एतेन – 'पृथिव्यां द्यौ'रित्युक्तविवक्षयैव वैकुण्ठस्यापि दिवःपरत्वसिद्धेः सप्तलोकविवक्षा व्यर्थेति परास्तम् । **सप्तमीपञ्चम्योरिति** ॥ सप्तम्यन्तपञ्चम्यन्तपदोपेतवाक्ययोरित्यर्थः । भाष्यद्वयानु-सारेणाह– **भूर्भुवःस्वरितीति** ॥ सूत्रभाष्यानुसारेणाह– **सप्तलोकापेक्षयेति** ॥ छान्दोग्यभाष्यानुसारेणाह– **मेरोरपीति** ॥

(अभिनवचन्द्रिका)

'पृथिवीस्थेषु सर्वोच्चो लोकोऽनन्तासनात्मकः ।
अन्तरिक्षात्मकेभ्यश्च श्वेतद्वीपस्थितो हरिः ।
द्यात्मकेभ्यश्च सर्वेभ्यो वैकुण्ठश्चोच्च उच्यते'

इति प्रमाणानुसारेणाह– **एवमिति** ॥

'पृथिव्यां ब्रह्मणो मेरौ जयन्तं त्वन्तरिक्षगम् ।
तृतीयं सत्यलोके च सदनं त्रिविधं स्मृतम् ।
तेभ्योऽनन्तासनाद्या यत्परतो विश्वतः परः' ॥

इति प्रमाणानुसारेणाह– **तथा वै जयन्त इति** ॥

**पूर्वपक्षस्तु–** गायत्री छन्द एव । गायत्रीशब्दस्य तत्रैव रूढत्वात् । 'वाग्वै गायन्त्री'ति वाक्त्वविधानाच्च । न च गायत्र्या भगवदधीनत्वेन गायत्रीशब्दस्तत्रैव मुख्य इति वाच्यम् । गायत्र्या वेदविशेषत्वान्नित्यत्वेन पराधीनत्वाभावात् । तस्माद्गायत्री न विष्णुः, किन्तु छन्दोविशेष एव । ततश्चेदं ज्योतिरानन्दमयश्च नाऽसाविति ॥

**सिद्धान्तस्तु–** विष्णुरेव गायत्री । गानत्राणकर्तृत्वलिङ्गात् । न च लिङ्गेन श्रुत्युक्तयोगेन च तत्र मुख्यत्वात् ।

'स्वभावजीवकर्माणि द्रव्यं कालः श्रुतिः क्रिया ।
यत्प्रसादादिमे सन्ति न सन्ति यदुपेक्षये'ति

वचनात् नित्याया अपि गायत्र्या भगवदधीनत्वाच्च (सू.२६) । नन्वथापि गायत्री ज्योतिश्च विष्णुरित्ययुक्तम् । गायत्रीज्योतिःप्रकरणयोरुपदेशभेदेन भिन्नार्थत्वात् इति चेत्, मैवम् – विवक्षाभेदेन एकस्यैव द्युस्थत्वदिवःपरत्वयोः सम्भवेन भिन्नार्थत्वाभावात् । तस्माद्गायत्री विष्णुरेव स एव ज्योतिः आनन्दमयश्चेति सिद्धम् । (अ.११)

## वाक्यार्थमुक्तावली

ॐ उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॐ । **विवक्षाभेदेनेति** । सप्तमीपञ्चम्योः विवक्षाभेदेन प्रवृत्तः । अमृतं दिवीत्यादेरेकार्थत्वेन विरोधाभावादित्यर्थः । लोकत्रयविवक्षायां परतो

(वाक्यार्थमुक्तावली)

लक्षयोजनात् । सर्वं द्यौरिति विज्ञेयं ततस्ते दिवि संस्थिताः । दिवः परश्च भगवान् सप्तलोकविवक्षयेति छान्दोग्यभाष्यानुसारेण भाष्याभिप्रायमाह– **यथाहीत्यादिना** । लक्षयोजनोच्छ्रितेत्यन्तरिक्षविशेषणेनानन्तासनस्योपरितनत्वं दर्शितम् । तेन पृथिवीस्थेषु सर्वोच्चो लोकोऽनन्तासनात्मक इत्युक्तत्वादनन्तासनस्य नान्तरिक्षादुपरितनतेति शङ्का निरस्ता भवति ।

तस्य पृथिवीस्थत्वेऽपि बहुलक्षोच्छ्रिते इति वाक्येन बहुलक्षोच्छ्रितत्वावगमात् लक्षयोजनोच्छ्रितान्तरिक्षादुपरितनत्वोपपत्तेः । पृथिवीस्थेष्वित्यत्र पृथिवीस्थोच्चत्वोक्त्याऽयोग एव व्यवच्छिद्यते न त्वन्ययोग इति ज्ञेयम् ॥ **दिवीत्युच्यत इति** ॥ दिवि तिष्ठतीत्युच्यत इत्यर्थः । श्रुत्यनुसारेणेयमुक्तिः । **इन्द्रसदनस्येत्यादि** ॥ पृथिव्यां द्यौर्महामेरुराकाशे सूर्यमण्डलम् । दिवीन्द्रसदनं चैव तत्परे तु दिवः पर इत्युक्तेरिति भावः ।

नन्वत्र यावद्दिवःपरत्वं यत्किञ्चिद्दिवःपरत्वं वा विवक्षितम् । नाद्यः असम्भवात् । न द्वितीयः सर्वेषामपि मेरुपरत्वे विभज्यकथनवैय्यर्थ्यात् । सम्भावितयावद्दिवःपरत्वं विवक्षितमिति चेन्न । श्वेतद्वीपानन्तासनयोरुभयोरपि मेरुसूर्यमण्डलपरत्वेन विभज्यकथनानुपपत्तेः । इयमनुपपत्तिः क्रमेणानन्तासनादीनामुच्चत्वेनेत्यादावपि बोद्धव्येति । मैवम् । सम्भावितसजातीययावद्दिवःपरत्वस्य विवक्षितत्वात् । अनन्तासनस्य भूस्पृष्टत्वेन भूस्पृष्टमेरोस्सजातीयत्वं श्वेतद्वीपस्य किञ्चिदन्तरितत्वेन भूस्पर्शाभावाद्विजातीयत्वम् । न च किञ्चिदन्तरितत्वे मानाभावः । पृथिवीस्थेषु सर्वोच्चो लोकोऽनन्तासनात्मकः । अन्तरिक्षात्मकेभ्यश्च श्वेतद्वीपे स्थितो हरिरित्यस्यैव विद्यमानत्वात् । यद्यपि त्रिलोकविवक्षायामपि विष्णुलोकत्रयस्य मेरुसूर्यमण्डलपरत्वेन दिवःपरत्वसिद्धिः तत्रापि वैकुण्ठस्य सर्वद्युपरत्वसिध्यर्थं सप्तलोकविवक्षोक्तेः । तदुक्तं द्व्यात्मकेभ्यश्च सर्वेभ्यो वैकुण्ठश्चोच्च उच्यत इति । यद्यपि वैकुण्ठस्य स्वर्गलोकात्परत्वेनैव दिवःपरत्वसिद्धिर्भवति । तथापि तस्य सर्वतः पृष्ठेष्वित्यनेनैवोक्तत्वाद्दिवः पर इत्यस्य वैय्यर्थ्यं मा भूदितीन्द्रसदनस्य द्युत्वोक्तिः । नन्वेवं तर्हि द्युशब्दस्यानेकार्थत्वं स्यात् । त्रिसप्तलोकापेक्षायाऽन्तरिक्षोपरितनसर्वलोकपरत्वस्य मेर्वादिवाचकत्वस्य चाङ्गीकृतत्वादिति चेन्न । अनादिशब्दवन्नानार्थत्वाङ्गीकारेणेष्टापादनत्वात् । यद्वा चित्प्रकृत्यात्मकत्वेन द्योतमाने स्थानत्रये । सप्तम्यन्तो यौगिकः । पञ्चम्यन्तस्तु स्वर्गादौ रूढ इत्यविरोधः । अयमपि सौत्राविरोधपदार्थ इति ज्ञेयम् ॥ **मेरुवैजयन्तेति** ॥ पृथिव्यां ब्रह्मणो मेरौ जयन्तं त्वन्तरिक्षगम् । तृतीयं सत्यलोकं च त्रिविधं सदनं स्मृतमित्युक्तेरिति भावः । इदमन्तर्भेदाधिकरणमिति तत्वप्रदीपवाक्योदाहरणपूर्वं प्रपञ्चितमस्माभिः प्रमेयमुक्तावल्यामिति नेहोच्यते ।

(वाक्यार्थमुक्तावली)

तथा चायं सूत्रार्थः । गायत्री ज्योतिश्च द्युस्थत्वदिवःपरत्वरूपोपदेशभेदात् तद्ब्रह्म नेति चेन्न । उभयस्मिन्नप्युपदेशे विवक्षाभेदेनाविरोधादिति । अत्राद्ये उपक्रमवाक्योक्तत्वेन समन्वीयमानशब्द-प्रवृत्तिनिमित्तत्वेन च प्राधान्याद्गानत्राणकर्तृत्वरूपस्वपक्षसाधकोक्तिः । द्वितीये संवादितयोदाहृत-मन्त्रोक्तलिङ्गोक्तिः । तृतीये बाधकोद्धार इति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

दिवःपरश्च भगवान् सप्तलोकविवक्षयेति स्मृत्यनुसारेण भाष्याभिप्रायमाह ॥ **भूर्भुवःस्वरित्यादिना** ॥ लक्षयोजनोच्छ्रितेत्यन्तरिक्षविशेषणम् अनन्तासनस्य तस्मादुपरितनत्वप्रदर्शनार्थम् । तेन पृथिवीस्थेषु सर्वोच्चो लोकःऽनन्तासनात्मक इत्युक्तत्वात् अनन्तासनस्य नान्तरिक्षादुपरितनतेति शङ्का निरस्ता । तस्य पृथिवीस्थत्वेऽपि वहुलक्षयोजनोच्छ्रितत्वेन एकलक्षयोजनोच्छ्रितान्तरिक्षतादुपरितनत्वात् । तस्य पृथिवीस्थोच्चत्वोक्त्या नान्ययोगो व्यवच्छिद्यते । किन्तु अयोग एवेति भावः । इन्द्रसदनस्य द्युत्वादित्यादि । ''पृथिव्यां द्यौः महामेरुः आकाशे सूर्यमण्डलम् । दिवीन्द्रसदनं चैव तत्परे तु दिवः पर'' इति स्मृतिं मूलीकृत्योक्तम् । अत्र यद्यपि लोकत्रयविवक्षायामपि अनन्तासनादीनां मेरुसूर्यमण्डलपरत्वेन दिवःपरत्वसिद्धिः । स्वर्गात्परत्वन्तु अनन्तासनश्वेतद्वीपयोः नास्ति । 'यावानुच्चः स्वर्गलोकस्तावानुच्चतया स्थितः । श्वेतद्वीपो दिविष्ठोऽत' इत्यादेः । तथापि वैकुण्ठस्य सर्वद्युपरत्वसिद्ध्ये सप्तलोकविवक्षयोक्तिः । तदुक्तम् । द्व्यात्मकेभ्यश्च सर्वेभ्यो वैकुण्ठश्चोच्च उच्यत इति । यद्यपि वैकुण्ठस्यापि स्वर्गलोकात् परत्वेनैव दिवःपरत्वसिद्धिर्भवति । तथापि तस्य सर्वतः पृष्ठेष्वित्यनेनोक्तत्वात् दिवः पर इत्यस्य वैय्यर्थ्यं मा भूदिति इन्द्रसदनस्य द्युत्वोक्तिः । द्युशब्दश्चाक्षादिशब्दवत् नानार्थ इति ध्येयम् । यद्वा चित्प्रकृत्यात्मकत्वेन द्योतमाने स्थानत्रये सप्तम्यन्तो द्युशब्दो यौगिकः । पञ्चम्यन्तस्तु स्वर्गादौ रूढ इत्यविरोधः । अयमपि सौत्राविरोधशब्दार्थ इति ज्ञेयम् । अयञ्च परिहारो

अनन्तशयनं चैव तथाऽनन्तासनं हरेः ।
वहुलक्षोच्छ्रिते नित्ये आविमाने तु संस्थितं ।
चित्प्रकृत्यात्मनि ततो दिवीति कथितं श्रुतौ ।

इति छान्दोग्यभाष्ये सूचितः ।

(तत्त्वसुबोधिनी)

पृथिवीस्थेषु सर्वोच्चो लोकः अनन्तासनात्मकः ।
अन्तरिक्षात्मकेभ्यश्च श्वेतद्वीपे स्थितो हरिः ।

''द्यात्मकेभ्यश्च सर्वेभ्यो वैकुण्ठश्चोच्च उच्यते ।
पृथिव्यां ब्रह्मणो मेरौ जयन्तं त्वन्तरिक्षगम् ।
तृतीयं सत्यलोके च सदनं त्रिविधं स्मृतम् ॥
तेभ्योऽनन्तासनाद्या यत्परतो विश्वतः पर''

इति स्मृत्यनुसारेण सर्वतः पृष्ठेषु इति पदं व्याचष्टे । **एवं पृथिव्यन्तरिक्षेत्यादिना ।** आद्ये सूत्रे गानत्राणकर्तृत्वस्वरूपस्वपक्षसाधकोक्तिः । द्वितीये मन्त्रोक्तलिङ्गवचनम् । तृतीये बाधकोद्धार इति सूत्रक्रमः ॥ ११ ॥

## वाक्यार्थमञ्जरी

ॐ उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॐ ॥ गायत्रीज्योतिषोर्द्युस्थत्वदिवःपरत्वविरुद्धधर्मोपदेशात्तद्वयं ब्रह्माख्यैकं वस्त्वनुपपन्नमिति चेन्न । विवक्षाभेदेनोभयथोपदेशोपपत्त्या विरोधाभावादित्यर्थः । प्रसङ्गयोः प्रकरणयोः ॥ **विरोधादिति ॥** द्युस्थत्वदिवःपरत्वयोरेकत्र विरोधादित्यर्थः । सप्तमीपञ्चम्योस्तद्घटितवाक्ययोः ।

लोकत्रयविवक्षायां परतो लक्षयोजनात् ।
सर्वं द्यौरिति विज्ञेयं ततस्ते दिवि संस्थिताः ।
दिवः परश्च भगवान्सप्तलोकविवक्षया ॥

इति प्रमाणानुसारेणाह ॥ **भूरिति ॥** अन्तरिक्षस्य द्युत्वलाभाय लक्षयोजनोच्छ्रितत्वोक्तिः ॥ **सप्तेति ॥** भूः भुवः स्वः महः जनः तपः सत्यमिति सप्तेत्यर्थः ।

'पृथिव्यां द्यौर्महामेरुराकाशे सूर्यमण्डलम् ।
दिवीन्द्रसदनं चैव तत्परे तु दिवः परः' ॥

इति प्रमाणानुसारेणाह ॥ **इन्द्रसदनस्येत्यादि ॥** अत्र त्रिलोकविवक्षायामपि मेर्वादिपरत्वेन दिवःपरत्वसिद्धावपि वैकुण्ठस्य दिवःपरत्वसिद्धये सप्तलोकविवक्षोक्तिः । विशेषस्तु चन्द्रिकाभावबोधयोर्द्रष्टव्यः । पुनरुक्तिवारणाय सर्वतःपृष्ठविश्वतःपृष्ठशब्दौ व्याचष्टे ॥ **एवमिति ॥**

(वाक्यार्थमञ्जरी)

पृथिवीस्थेषु सर्वोच्चो लोकोऽनन्तासनात्मकः ।
अन्तरिक्षात्मकेभ्यश्च श्वेतद्वीपस्थितो हरिः ।
द्व्यात्मकेभ्यश्च सर्वेभ्यो वैकुण्ठश्चोच्च उच्यत ॥

इत्युक्तेरिति भावः ।

पृथिव्यां ब्रह्मणो मेरौ जंयन्तन्त्वन्तरिक्षगम् ।
तृतीयं सत्यलोके च सदनं त्रिविधं स्मृतम् ।
तेभ्योऽनन्तासनाद्या यत्परतो विश्वतः पर ।

इति प्रमाणानुसारेणाह ॥ **तथेति** ॥ ११ ॥

## विवृतिः

लोकत्रयविवक्षायां परतो लक्षयोजनात् ॥ सर्वं द्यौरिति विज्ञेयं ततस्ते दिवि संस्थिताः ॥ दिवः परश्च भगवान् सप्तलोकविवक्षयेति स्मृत्यनुसारेण भाष्याभिप्रायमाह ॥ भूर्भुवःस्वरित्यादिना ॥ लक्षयोजनोच्छ्रितेत्यन्तरिक्षविशेषणम् अनन्तासनस्य तदुपरितनत्वप्रदर्शनार्थम् ॥ इन्द्रसदनस्य द्युत्वादित्यादि । ''पृथिव्यां द्यौः महामेरुः आकाशे सूर्यमण्डलम् ॥ दिवीन्द्रसदनं चैव तत्परे तु दिवः पर'' इति स्मृत्यनुसारेणोक्तम् । यद्वा चित्प्रकृत्यात्मकत्वेन द्योतमाने स्थानत्रये सप्तम्यन्तो द्युशब्दश्च यौगिकः पञ्चम्यन्तस्तु स्वर्गादौ रूढ इत्यविरोधः ॥ पृथिवीस्थेषु सर्वोच्चो लोकोऽनन्तासनात्मकः ॥ अन्तरिक्षात्मकेभ्यश्च श्वेतद्वीपे स्थितो हरिः ॥ द्व्यात्मकेभ्यश्च सर्वेभ्यो वैकुण्ठश्चोच्च उच्यते ॥ पृथिव्यां ब्रह्मणो मेरौ जयन्तं त्वन्तरिक्षगम् ॥ तृतीयं सत्यलोके च सदनं त्रिविधं स्मृतम् ॥ तेभ्योऽनन्तासनाद्या यत्परतो विश्वतः पर इति स्मृत्यनुसारेण सर्वतः पृष्ठेषु विश्वतः पृष्ठेष्विति पदं व्याचष्टे ॥ एवं **पृथिव्यन्तरिक्षेत्यादिना** ॥ अत्राद्ये सूत्रे गानत्राणकर्तृत्वरूपस्वपक्षसाधकोक्तिः, द्वितीये मन्त्रप्रोक्तलिङ्गवचनं, तृतीये बाधकोद्धार इति सूत्रक्रमः ॥

॥ इति गायत्र्यधिकरणम् ॥

## १२. अन्तिमप्राणाधिकरणम्

प्राणो विष्णुरित्युक्तम् । तत्र 'ता वा एताः शीर्षन् श्रियः श्रिताश्चक्षुश्श्रोत्रं मनो वाक्प्राणः' (ऐ.आ. २-१-४) इत्यत्र प्राणस्य विष्णुत्वं न युज्यते । इन्द्रियैः सहाभिधानादिति । अत आह—

**॥ ॐ प्राणस्तथाऽनुगमात् ॐ ॥ २८ ॥**

'तं देवाः प्राणयन्त' (ऐ.आ. २-१-५) 'स एषोऽसुः स एष प्राणः' (ऐ.आ. २-१-८) 'प्राण ऋच इत्येव विद्यात्' (ऐ.आ. २-२-२) 'तदयं प्राणोऽधितिष्ठति' (ऐ.आ. २-३-८) इत्याद्यनुगमात् । अत्रापि प्राणो विष्णुरेव ।

'विष्णुमेवानयन्देवा विष्णुं भूतिमुपासते ।
स एव सर्ववेदोक्तस्तद्रथो देह उच्यत' इति स्कान्दे ।

ब्रह्मशब्दानुगमाच्च ॥ २८ ॥

## सत्तर्कदीपावली

ऐतरेये श्रूयते । ता वा एताः शीर्षच्छ्रियः श्रिताश्चक्षुः श्रोत्रं मनो वाक्प्राण इति । तत्र पूर्वं विष्णुविषयत्वेनोदितः प्राणशब्दः श्रूयमाणो विचार्यते किंविषयोऽयमिति । तत्र तावदयं प्राणो मुख्यप्राणो भवितुमर्हति न विष्णुः इन्द्रियपङ्क्तिगणितत्वात् । यथेन्द्रियपङ्क्तिगणितं चक्षुः न विष्णुरित्येतत्पक्षं प्रतिक्षिपत्सूत्रमुपन्यस्य व्याचष्टे । **प्राणस्तथेत्यादिना ।** अयमर्थः । परमात्मासाधारणधर्मयुक्तत्वेन अभ्यस्यमानत्वादत्र प्राणो विष्णुरेव । तथाहि । तं देवाः प्राणयन्तेत्यनेन तस्य प्रकृतस्य प्राणस्य सर्वब्रह्मादिदेवैः सर्वलोकेष्वानीतत्वमाहात्म्यस्यानेन प्रकृतत्वमुच्यते । स एषोऽसुः स एष प्राणः तं भूतिरिति देवा उपासांचक्रिर इत्यन्तेन तस्यैव प्राणस्यैश्वर्यवतः पद्मजादिदेवैरुपास्यत्वमुच्यते । स एषोऽसुः स एष प्राणः सर्वे वेदा सर्वे घोषाः एकैव व्याहृतिः प्राण एव । प्राण ऋच इत्येव विद्यादित्यनेन सर्वे वेदाः प्राणे प्राणस्यैव व्याहृतिः परस्परविरोधशून्यतया प्रतिपादका । ऋचः तस्य विशेषेण प्रतिपादका इत्युच्यते । अथ देवरथस्तस्य वागुद्धिः श्रोत्रे पक्षसी चक्षुषी युक्ते मनः सङ्ग्रहीता तदयं प्राणोऽधितिष्ठतीत्यनेन वागादिभीरथोपकरणत्वेन कल्पितैर्युक्तस्य देहाख्यस्य शरीरस्य मुख्याधिष्ठाता प्राण इत्युच्यते । तथाच स्कान्दवचनं विष्णुमेवानयन्निति । एतद्ब्रह्मैतत्सत्यम् । अयं पुरुषो ब्रह्मणो लोकः । तत्प्रपदाभ्यां प्रापद्यत

(तत्तर्कदीपावली)
ब्रह्मेममित्यादिब्रह्मशब्दाभ्यासादप्येतद्विद्याप्रतिपाद्यो विष्णुरिति ज्ञायते । तस्मादिक्ष्वाकुवंशराजावली-गणितदाशरथिरामवदिन्द्रियगणगणितोऽप्ययं प्राणो विष्णुरेवेति युक्तम् ।

## तत्त्वप्रदीपिका

अतीतप्राणाधिकरणे प्रवर्तनस्वातन्त्र्यस्य प्राणशब्दप्रवृत्तिहेतोर्विष्णौ भावाद्विष्णुरेव प्राण इत्युक्तम् । अत्र पुनः विष्णावसम्भाव्यैर्विशेषलिङ्गैः प्राणशब्दस्य मुख्यप्राणप्रसिद्धिरेव बलवती स्यादित्याशङ्क्य तेषां लिङ्गानां विष्णावेव सम्भवमुपलम्भयितुमयमारम्भः । विष्णुस्तासु श्रित इति ताः श्रियः । प्राणस्तथाऽनु-गमात् । तं देवाः प्राणयन्त ज्ञानसम्प्रदायप्रवर्तनेन ।

'तस्मात् श्रुत्वा परं ब्रह्म देवा नारायणाभिधम् ।
शिष्यप्रशिष्यादिषु च तेऽनयन्वायुनोदितम्' ॥

इत्यैतरेयसंहितायाम् । स एषोऽसुरसनशीलत्वात् ।

'असनाद्भगवान्सोऽसुस्सर्वस्यापि जनार्दनः ।
प्रकृष्टानन्दरूपत्वात्प्राण इत्यभिधीयत' इति च ॥

प्राणऋच इत्येव विद्यात् प्राणवाचकत्वेन वर्तन्ते ऋच इत्येव विद्यात् । तदयं प्राणोऽधितिष्ठतीति ॥ तद्रथरूपं शरीरं प्राणोऽधितिष्ठतीत्यर्थः । इत्यादिषु वाक्येषु यथा प्राणो विष्णुस्यात्तथा प्राणशब्दानुगमा-द्विष्णुरेव प्राणः । 'एतद् ब्रह्मैतत्सत्यं' 'तं प्रपदाभ्यां प्रापद्यत' 'अ इति ब्रह्म' इत्यादिब्रह्मशब्दानुगमाच्च विष्णुरेव प्राणः ।

## तत्त्वप्रकाशिका

अत्र लोकतोऽन्यत्र प्रसिद्धप्राणनाम्नो विष्णौ समन्वयप्रतिपादनादस्ति शास्त्रादिसङ्गतिः । श्रुत्यादि-सङ्गतिविषयवाक्यविषयसंशयसयुक्तिकपूर्वपक्षान् दर्शयति ॥ **प्राण इति** ॥ 'तद्वै त्वं प्राणः' इत्युक्तः प्राणो विष्णुरित्युक्तम् । ऐतरेयके च 'कश्चित्ता वा एता' इत्यारभ्य बहुषु स्थलेषु प्राणः श्रूयते । तस्य विष्णोरन्यत्वे प्राचीनोऽप्यन्य इति शङ्का स्यादित्ययमवश्यं विचार्यः । स प्राणोऽत्र विषयः । किं विष्णु-रुतान्य इति सन्देहः । पूर्वोक्तन्यायोऽन्यत्र प्रसिद्धिश्च सन्देहबीजम् ।

तत्र न प्राणो विष्णुः किन्तु वाय्वादिरेवेति पूर्वः पक्षः । एतत्प्राणस्येन्द्रियगणे गणितत्वात् । न चैतल्लिङ्गं विष्णाववकाशं लभते । उपपद्यते च मुख्यप्राणादिषु अतस्तेषामन्यतमस्यैतत्प्राणत्वात् ।

(तत्त्वप्रकाशिका)

प्राचीनप्राण आनन्दमयोऽप्यन्य एवेति भावः । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **अत इति ॥** तद्वै त्वं प्राण इति श्रुताविवात्रापि श्रुतः प्राणो विष्णुरेव । विष्णुलिङ्गानां देवतोपास्यत्वादीनामस्मिन्प्राणेऽनुगमादनुवृत्तेरभ्यासादित्यर्थः । तथाशब्दः समुच्चयार्थोऽतोऽत्रापीत्याह ॥ **तं देवाः प्राणयन्तेति ॥** तं प्राणं देवाः शिष्यादिषु सम्यक् नीतवन्तः । 'स एषोऽसुः स एष प्राणः स एष भूतिश्चाभूतिश्च तं भूतिरिति देवा उपासाञ्चक्रिरे' इति प्राणस्य भूतित्वेन देवोपास्यत्वमुच्यते । 'ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राण एव प्राणऋच इत्येव विद्यात्' इति तस्य सर्ववेदोक्तत्वमुच्यते । 'अथ देवरथस्तस्य वागुद्धिः श्रोत्रे पक्षसी चक्षुषी युक्ते मनः सङ्गृहीता तदयं प्राणोऽधितिष्ठति' इति तस्य देहरथत्वमुच्यते । स चासावयं चेति तदयम् । तदिति रथतयोक्तं शरीरं वा । लिङ्गव्यत्ययो वा । लिङ्गेन पूर्वपक्षिते कथं तेनैव सिद्धान्त इत्याशङ्कानुदयाय लिङ्गबाहुल्योक्तिः । बाहुल्यस्यापि प्राबल्यहेतुत्वात् । यदाहुः 'द्विविधं बलवत्त्वं च बहुत्वाच्च स्वभावतः' इति । ननु सैद्धान्तिकलिङ्गतोऽपि पूर्वपक्षलिङ्गमेव बलवत् । निरवकाशत्वात् । बाहुल्येन बलवतोऽपि स्वभावबलिनः प्राबल्यात् । यत आहुः । 'तयोः स्वभावो बलवान् उपजीव्यादिकश्च सः' इति । अतः कथं तैर्विष्णुत्वनिश्चय इत्यतो लिङ्गानामनन्यथासिद्धतां च स्मृत्या साधयति ॥ **विष्णुमेवेति ॥** एकप्रकारेण प्रबलात्प्रकारद्वयेनापि प्रबलस्याधिक्येन निर्णयोपपत्तिरिति भावः । अभ्युपेत्य चेदमुदितम् । यावता प्राणैः सह गतिणत्वस्यान्तर्यामिनिष्ठता सेत्स्यति । यदा प्रकारद्वयेनापि दुर्बललिङ्गस्योभयथा प्रबललिङ्गतो बाधसम्भवेन प्राणस्य विष्णुत्वसिद्धिस्तदा किं वाच्यमेतद्ब्रह्म 'ब्रह्मणो लोको' 'ब्रह्मेमं पुरुषम्' 'उदरं ब्रह्म' इत्यादिनिरवकाशब्रह्मशब्दाभ्यासादिति भावेनानुगमपदं प्रकारान्तरेण व्याचष्टे ॥ **ब्रह्मेति** ॥ २८ ॥

## गुर्वर्थदीपिका

प्राचीनप्राणाधिकरणे विष्णावत्यन्तानुपपद्यमानलिङ्गरहितस्थलीयनानाशाखास्थप्राणाद्याध्यात्मिकशब्दानां हरौ समन्वय उक्तः । अस्मिन्प्राणाधिकरणे तु विष्णावत्यन्तानुपपद्यमानलिङ्गस्थानीयप्राणादिशब्दानामपि हरौ समन्वयस्साधनीय इति दर्शनाय पुनरारम्भ इति भावेनोक्तम् इन्द्रियगणे गणितत्वादिति । 'भूतिश्चाभूतिश्च' इत्यत्र भूतिर्भक्तानामैश्वर्यदायकः । अभूतिरभक्तनामनैश्वर्यदायक इत्यर्थः । तत्र देवा भूतिशब्दार्थं ज्ञात्वोपासां चक्रिरे । ते ह पराबभूवुरित्यर्थः । 'ता वा एतास्सर्वा ऋच' इत्यत्रैकार्थप्रतिपादकत्वादेकैव व्याहृतिरित्युक्त्वा तमेवार्थं दर्शयितुं प्राण एव प्राणाख्यविषय एवेत्युक्तम् । तत्रापि विशिष्य ऋचः प्राणविषया इति प्रदर्शनाय प्राणऋच इत्युक्तम् । ऋचः प्राण एव विद्यादिति योजना । 'तस्य वागुद्धिः' इत्यत्रोद्धिपदेनाश्वबन्धनाय रथाग्रे रचितदारुविशेषः कथ्यते । पक्षसी पार्श्वद्वयस्थे रथचक्रे ।

(गुर्वर्थदीपिका)

युक्ते रथाग्रे बद्धावश्वौ । इन्द्रियाभिमानिदेवानामपि देहैकदेशस्थत्वेऽपि रथमध्ये रथिकवद्देहान्तर्हृत्पुण्डरीके प्राणोऽधिकृतत्वेन तिष्ठतीत्यर्थः । 'अथ देवरथ' इति पुल्लिङ्गेन प्रस्तावात्तदिति परामर्शो न घटत इत्यतः स चासावयं चेत्युक्तम् । स प्रसिद्धोऽयं प्राण इत्यर्थः ।

## भावबोधः

॥ ॐ प्राणस्तथाऽनुगमात् ॐ ॥ **श्रुत्यादिसङ्गतिमिति** । अव्यवहितपूर्वाधिकरणसङ्गतिस्तु निरन्तराधिकरणसिद्धान्तन्यायमुपजीव्याभ्यधिकाशङ्कया पूर्वपक्षोत्थानादिति सुधायामेवोक्ता । प्राचीनोऽप्यन्य इति शङ्का स्यादिति ।

नन्वत्र मुख्यप्राणेन्द्रजीवलिङ्गशब्दरूपविशेषप्रापकसद्भावेनाभ्यधिकाशङ्कया प्राणशब्दस्यान्यपरत्वाक्षेपः क्रियते । तथा चैतैः विशेषप्रापकैः ''ता वा एताः'' इत्यत्र वाक्ये प्राणस्याविष्णुत्वेऽपि ''तद्वै त्वम्'' इत्यत्र वाक्ये एतादृशहेत्वभावात् तत्रत्यप्राणो विष्णुर्भवत्विति वक्तुं शक्यत्वात्र तदाक्षेपः सम्भवतीति चेत्, न; अत्रेन्द्रादिशब्दात् प्राणशब्दस्येन्द्राद्यर्थत्वे निश्चिते ''तद्वै त्वं प्राणः'' इत्यत्रापि तदर्थत्वशङ्कामात्रस्य क्रियमाणत्वात् । अत एव निरवधारणान्यपदशङ्कापदप्रयोगः । अन्यथा अन्य एव स्यादित्यवक्ष्यत् ॥ **किं विष्णुरिति** ॥ अत्र प्राणः किं वाय्वादिरुत विष्णुरिति चिन्ता । तदर्थं वाय्विन्द्रजीवप्रापकश्रुतिलिङ्गवाक्यानि विष्णुप्रापकश्रुतिलिङ्गबाधकानि, उत तद्बाध्यानीति । तदर्थं तानि निरवकाशानि उत वाय्वाद्यन्तर्यामिनिष्ठत्वेन सावकाशानीति । **इन्द्रियगणे गणितत्वादिति** । उपलक्षण-मेतत् । प्राणसंवादादिवृत्रहन्तृत्वशतायुष्ट्वादिप्राणेन्द्रजीवलिङ्गानां प्राणेन्द्रपुरुषश्रुतीनां प्राणो वा इति वाक्यस्यापि पूर्वपक्षप्रापकत्वं द्रष्टव्यम् । अत एवानुव्याख्याने– 'बाहुल्ये श्रुतिलिङ्गयोरन्यस्य मुख्यवाच्यत्वम्' इत्युक्तम् । **न चैतल्लिङ्गं विष्णाववकाशं लभत इति** ।

ननु 'चेतोऽर्पणनिगदात्' इत्युक्तन्यायेनान्तराधिकरणोक्तप्रकारेण चात्रेतृत्वादिवरुणादिलिङ्गा-नामिवेन्द्रियगणगणितत्वादिलिङ्गस्यापि विष्णाववकाशानुपपत्तेः । सर्वोत्तमस्य विष्णोरपकृष्टचक्षुरादिभिः सह पाठायोगात् । 'उदासीनौ च तावास्तां केशवश्चाब्जसम्भवः' इत्युक्तत्वेन प्राणसंवादस्याप्यवकाशा-भावात् । वृत्रहन्तृत्वमहाव्रतयजमानत्वरूपेन्द्रलिङ्गस्यापि प्रसिद्धबाधेन तत्रानुपपत्तेः । शश्वदेकप्रकारस्य विष्णोः शतवर्षायुष्ट्वरूपजीवलिङ्गानुपपत्तेश्च । निरवकाशैतल्लिङ्गसमभिव्याहृतप्राणादिश्रुतिवाक्यानामप्यव-काशाभावात् । अत एवोक्तमवकाशं न लभत इति । अवकाशार्थं विचारितमपीति भावः । अन्यथा

(भावबोधः)
सावकाशमित्येव ब्रूयात् । **स चासावयं चेतीति** । अनेन तदिदं भिन्नं पदं सत् न रथपरामर्शकमित्युक्तं भवति । तथात्वे तमिति भवेदिति भावः । **अनन्यथासिद्धताञ्च स्मृत्येति** । स्मृतौ विष्णुमेवेत्याद्यवधारण-बलेन लिङ्गानां विष्णुमात्रनिष्ठत्वप्रतिपादनादिति भावः ।

ननु पूर्वपक्षीयलिङ्गस्यापि निरवकाशत्वात् कथं निरवकाशेनैव निरवकाशबाध इत्यत आह **एकप्रकारेण प्रबलादिति** । पूर्वप्रापकश्रुत्यादीनामपि बाहुल्यात्तेषामपि प्रकारद्वयेन प्राबल्यमित्यत आह । **अभ्युपेत्येति** । इदं निरवकाशत्वम् । यद्वा उभयोर्निरवकाशत्वं विरुद्धमित्यत आह– **अभ्युपेत्येति** । अन्यगतलिङ्गादीनामपि तद्गतभगवदपेक्षया युक्तेरिति न्यायविवरणं मनसि निधाय तस्य सावकाशत्वमाह ॥ **प्राणैः सहेति** ॥

## भावदीपः

॥ ॐ प्राणस्तथाऽनुगमात् ॐ ॥ **अन्यत्र प्रसिद्धेति** ॥ यद्यप्याकाशोऽर्थान्तरत्वादित्यत्राकाशशब्दस्येव प्राणशब्दस्याप्यत एव प्राण इत्यत्रोक्तन्यायेन विष्णावपि प्रयोगादुभयत्र प्रसिद्धता भाति । तथापि प्राचीनप्राणस्याप्यत्र पूर्वपक्षे विष्णुत्वाक्षेपेण तत्र विष्णौ प्रयोगस्यासम्प्रतिपत्तेः लोकतोऽन्यत्र प्रसिद्धे-त्युक्तम् । शेषं पूर्ववत् । सङ्गतीत्युक्त्वैव फलमपि लब्धमिति पूर्वपक्षतत्फलानीत्यनुक्त्वा पूर्वपक्षानित्ये-वोक्तम् । इत्यन्तभाष्यं सङ्गतिपरत्वेन तावदाकांक्षितपूर्त्या व्याचष्टे ॥ **तद्वै त्वमिति** ॥ इत्यत्रेत्यस्यार्थो वहुस्थलेष्विति । भाष्ये ता इति प्रतीकग्रहणमिति भावेनारभ्येत्युक्तम् । प्राणः श्रूयत इत्युक्त्या भाष्ये श्रुतस्य प्राणस्येति श्रुतपदशेषः सूचितः । प्राणस्येत्यादेरर्थस्तस्येति ॥ **अन्यत्व इति** ॥ वक्ष्यमाणयुक्त्या वाय्वादित्व इत्यर्थः । उक्तमित्यन्तस्य तात्पर्यं प्राचीनोऽपीति ॥ **शङ्केति** ॥ अत्र प्रबलानेकान्यप्रापकसत्त्वेन प्राणस्यान्यत्वनिश्चयेऽपि न प्राचीनस्य स युक्तः । तत्र प्रबलान्यलिङ्गानामभावात् प्रत्युत श्रीपतित्वादि-विपरीतलिङ्गमेव अस्तीति शङ्केत्येवोक्तम् । तावता प्राचीननिर्णयाक्षेपमात्रेण फलवत्त्वसम्भवात् ॥ **इत्ययमिति** ॥ इति सङ्गतिसम्भवादित्यर्थः ॥ **पूर्वोक्तन्याय इति** ॥ महायोगविद्वद्रूढिसत्वाद्विष्णुवाची प्राणशब्द इत्युक्तन्याय इत्यर्थः । तदेव भाष्यं पूर्वपक्षादिपरतयापि व्यनक्ति ॥ **तत्रेत्यादिना** ॥ प्राणस्य विष्णुत्वं न युज्यत इत्यस्यार्थः तत्र न प्राणो विष्णुरिति । एवं सन्देहे सतीत्यर्थः । विष्णुर्न चेन्निरर्थकः प्राणशब्दः स्यादित्यत उक्तं किन्तु वाय्वादिरेवेति । वाय्विन्द्रजीवा इत्यर्थः । इन्द्रियैरित्यादि-भाष्यार्थमाह एतदिति । अत एव भाष्ये चक्षुः श्रोत्रं मनो वागित्यंश उदाहृतः ॥ **न चैतदिति** ॥

(भावदीपः)

नीचैः चक्षुरादिभिः सह गणितत्वस्य सर्वोत्तमेऽनुपपत्तेरिति भावः ॥ **उपपद्यत इति** ॥ मुख्यस्य सर्वेन्द्रियस्वामित्वादिन्द्रस्य हस्ताधिष्ठातुरिन्द्रियत्वाज्जीवस्य च इन्द्रियजन्यफलाश्रयत्वादिति सुधोक्तदिशेति भावः । एतेन सिद्धान्ते श्रुतिलिङ्गबाहुल्येऽपि तेषामेकेनापि निरवकाशेन वाय्वादावेव सावकाशयितव्यत्वं तयोः स्वभावो बलवानित्युक्तेरिति सूचितम् । एवं सिद्धेऽपि पूर्वपक्षेऽनुभाष्यादौ श्रुतिलिङ्गबाहुल्योक्तिः पूर्वपक्षदार्ढ्यायेति भाष्याभिप्राय इति भावः ॥ **अत इति** ॥ निरवकाशलिङ्गादित्यर्थः । यद्वा अत इत्यस्य व्याख्या तेषामित्यादि । प्राणो विष्णुरित्युक्तमित्यस्य तात्पर्यं प्राचीनप्राण इति । अन्य इत्यन्वयः । सन्देहे उपसंहारे चान्य इत्युक्त्या तेषामन्यतमोऽयमेवेत्यनिर्णयेऽप्यन्यत्वेनावधारणं सम्भवतीति न सन्देहात्पूर्वपक्षस्याविशेष इति भावः । अन्य एवेत्यवधारणं तु प्रकृतप्राणबुध्या न तु प्राचीनप्राणबुध्या । तस्य विष्ण्वेकनिष्ठश्रीपतित्वादिलिङ्गेनान्य एवेति निर्णयायोगात् । प्रागुक्तशङ्कापदविरोधाच्च । यद्वा वक्ष्यमाणदिशा प्राणसंवादोत्क्रमणप्रवेशादीनां बहुत्वात् श्रुत्यनुगृहीतत्वात्साक्षात्प्राणविशेषणत्वाच्च । श्रीपतित्वादिलिङ्गानां तु वैपरीत्यात् तत्राप्यन्य एवेति निर्धारणं युक्तम् । पूर्वं शङ्केत्युक्तिः अभ्युपगमवादेन इति भावः ॥ **अत इतीति** ॥ अतोऽन्यप्राप्तिसद्भावादाह प्राणस्य विष्णुत्वं सूत्रकार इत्यर्थो भाष्यस्य प्रागुक्तदिशा सुज्ञान इति नोक्तः । एवमग्रेऽपि । सौत्रप्रतिज्ञाहेत्वोरर्थोक्तिपरभाष्यं व्युत्क्रमेण व्याख्याति ॥ **तद्वै त्वमिति** ॥ अपिपदार्थव्यक्तिरियम् । विष्णुमेवेत्यादिवक्ष्यमाणस्मृत्यनुरोधेन लिङ्गानि निष्कर्षयति ॥ **तं देवा इति** ॥ लिङ्गस्य प्राणस्थताभिव्यक्त्यैतं प्राणमिति व्याख्या

तस्माच्छ्रुत्वा परं ब्रह्म देवा नारायणाभिधम् ।
शिष्यप्रशिष्यादिषु च तेऽनयन्वायुनोदितम् ।

इति तद्भाष्योक्तेराह ॥ **शिष्येति** ॥ प्रेत्यस्यार्थस्सम्यगिति ॥ **प्राणस्य भूतित्वेनेति** ॥ भाष्ये तं भूतिरिति देवा इत्येव वाच्ये स एषोऽसुः स प्राण इति पूर्वांशोक्तिः तमिति परामृश्यमानं दर्शयितुमिति सूचितम् । ता वा एता इति श्रुत्यर्थं तु ज्योतिरुपक्रमादित्यत्र वक्ष्यति । भाष्ये प्राणऋच इत्येव विद्यादित्यंशोक्तिरपि ऋचस्तु विशेषत इन्द्रादिनामवतो विष्णोर्गुणानल्पज्ञानिनामपि प्रकाशयन्तीति प्राणो नारायण एवेति विद्यादिति तद्भाष्योक्तदिशा ऋचां तन्निष्ठत्वात्तदारण्यकस्यापि तन्निष्ठत्वस्य द्योतनायेत्याहुः । तदयमिति तच्छब्दपरामृष्टं दर्शयितुं पूर्वांशमाह ॥ **अथ देवरथ इति** ॥ देवस्य विष्णो रथः देवरथः वाग्देवतोमोद्धरणहेतुरज्जुः । श्रोत्रदेवते चन्द्ररोहिण्यौ पार्श्वस्थाश्वौ चक्षुर्देवत सूर्यतद्भार्ये युगवाहकपुरःस्थितावश्वौ । मनो रुद्रः । सङ्गृहीता प्रागुक्ताया उद्धेरित्यर्थः ॥ **स चासाविति** ॥

(भावदीपः)

सुप्सुपेति समासः । तेन लिङ्गोपपत्तिरिति भावः । कर्मकारकलाभाय भिन्नं पदं मत्त्वाऽऽह ॥ **तदितीति** ॥ विष्णुर्वायुश्च तं रथं प्रकृष्टानन्दरूपत्वात्प्राणाख्यावधितिष्ठत इत्यैतरेयभाष्योक्तेस्तदित्यस्य तमित्यर्थं मत्त्वाह ॥ **लिङ्गव्यत्ययो वेति** ॥ बाहुल्ये श्रुतिलिङ्गयोः । अन्यस्य मुख्यवाच्यत्वं नेत्यनुव्याख्यानुरोधेन तात्पर्यमाह ॥ **लिङ्गेनेति** ॥ इन्द्रियैः सहाभिधानादित्युक्तलिङ्गेनेत्यर्थः ॥ **लिङ्गबाहुल्येति** ॥ एतल्लिङ्गानामेवोक्तिस्तु वक्ष्यमाणस्मृतिगृहीतत्वादिति भावः ॥ यदाहुरिति ॥ विष्णुतत्वनिर्णयोक्तब्रह्मतर्कवचनकर्तार इत्यर्थः ॥ **तयोरिति** ॥ पूर्वोक्तस्य उत्तरार्धमेतत् । आदिपदेन निरवकाशत्वग्रहः ॥ **अनन्यथासिद्धतां चेति** ॥ न केवलं बाहुल्यमिति चार्थः । स्मृतावधारणोक्त्यै-तल्लाभ इति भावेन विष्णुमेवेत्यन्तप्रतीकोक्तिः । कथं तावतोक्तशङ्कानिरास इत्यतस्तात्पर्यमाह ॥ **एकेति** ॥ निरवकाशत्वप्रकारेणेत्यर्थः ॥ **प्रकारद्वयेनेति** ॥ बहुत्वनिरवकाशत्वरूपप्रकारद्वयेनेत्यर्थः । ''अत्रगस्य हि । विष्णोरेव तु लिङ्गानि प्राणस्थानि तु सर्वश'' इत्याद्यनुभाष्ये ''न च अनन्यथा-सिद्धत्वमन्यत्र श्रुतिलिङ्गादेः'' इत्यादिन्यायविवरणे च शास्त्रदृष्टिसूत्रदिशा सावकाशत्वोक्तेः तदनुरोधेन भाष्यभावमाह ॥ **अभ्युपेत्य चेति** ॥ इन्द्रियैः सह गणितत्वरूपपूर्वपक्षलिङ्गस्य निरवकाशत्वमभ्युपेत्येदं विष्णुलिङ्गानां बाहुल्यं निरवकाशत्वं चेत्यर्थः । अन्यथा एकस्य निरवकाशत्वोक्तौ वा तदनुक्तावपि सावकाशलिङ्गबाहुल्येन वा सावकाशैकलिङ्गबाधकसम्भवात् तद्बाहुल्यं तन्निरवकाशत्वं च न वाच्यमिति भावः । यावता यत इत्यर्थः । भाष्ये पूर्वमेवेत्यादिश्रुतिलिङ्गानुगमादित्यनुक्त्वा पृथग्ब्रह्मशब्दानुगमा-चेत्युक्तिरभ्युच्चयत्वाभिप्रायेणेति मत्त्वाऽऽह ॥ **यदा प्रकारद्वयेनेति** ॥ एकत्वसावकाशत्वरूपप्रकारद्वये-नेत्यर्थः । एतेनान्यत्रोक्तदिशा पूर्वपक्षे श्रुत्यादिबाहुल्येऽपि तेषां सावकाशत्वात् निरवकाशानेकश्रुत्यादिभिः बाध इत्यपि सूचितं ध्येयम् । तेषां सावकाशत्वं चाग्रे व्यक्तम् ॥ २८ ॥

## अभिनवचन्द्रिका

अयं योगः शक्योऽवक्तुम् । 'अत एव प्राण' (ब्र.सू.१-१-२३) इत्यत्रैव प्राणशब्दसमन्वयस्योक्त-त्वात् । न च – तत्र 'तद्वै त्वं प्राणोऽभव' (तै.आ.४) इति तैत्तिरीयगतप्राणशब्दसमन्वय उक्तः । इह तु 'ता वा एता' (ऐ.आ.२-१-४) इति ऐतरयगतप्राणशब्दसमन्वयाभिधानात् नाऽस्य योगस्य वैयर्थ्यमिति वाच्यम् । विषयवाक्यभेदेनाऽधिकरणभेदे शास्त्राऽऽनन्त्यप्रसङ्गात् । न च – 'अत एव प्राण' इत्यस्य 'तद्वै त्वं प्राण' इतिवत् 'ता वा एता' इत्यस्यापि विषयवाक्यत्वेन तत्रैव समन्वयसिद्धावपि अस्य प्राणस्य इन्द्रियगणे गणितत्वात् 'वाय्वादि'रिति वा इन्द्रेणात्मतयोपदेशात् इन्द्र एवायं प्राण

(अभिनवचन्द्रिका)

इति वा 'ता अहिंसते'(ऐ.अ.२)ति मुख्यप्राणलिङ्गात् मुख्यप्राण एवाऽयं प्राण इति वा'ऽऽभ्याधिका-शङ्कासद्भावात् तन्निरासायेदमधिकरणमिति वाच्यम् – तथा सति 'अत एव प्राण' इत्यनन्तरमेव 'न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन्, शास्त्रदृष्ट्या तूपदेशो वामदेववत्, जीवमुख्यप्राण-लिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगा'दिति सूत्रत्रयं प्रणेतव्यं स्यात् । लाघवं चैवं सति सूत्रकारस्य भवति 'प्राणस्तथाऽनुगमा'दिति सूत्रस्याऽप्रणेतव्यत्वात् । इन्द्रियगणे गणितत्वशङ्काया 'अत एव प्राण' इति सूत्रोक्तलिङ्गेनैव परिहारसम्भवादिति चेत्, सत्यम् 'अत एव प्राण' इत्यस्य आध्यात्मिकशब्दविचाररूपत्वादस्य तत्रैव समन्वयो भवति । अभ्यधिकाशङ्कानिरासकानि 'न वक्तु'रित्यादिसूत्राणि लाघवात्तत्रैव कर्तव्यानीति, तथापि श्रोतॄणां पुनःस्मरणेन फलाधिक्यं भवतीत्याशयेनाऽभ्यधिकाशङ्कानिरासाय पृथगधिकरणारम्भः कृतः । तदुक्तम्–

''संक्षेपविस्तराभ्यां च प्रवदन्ति मनीषिणः ।
बहुवारं स्मृतेस्तस्य फलबाहुल्यकारणात्''

इति द्रष्टव्यम् । भाष्ये 'प्राणो विष्णुरित्युक्त'मित्युक्तेः पूर्वाधिकरणसङ्गतिरेव विवक्षिता, न श्रुतिसङ्गतिरिति भ्रमं निवारयितुमाह – तद्वैत्वमिति ।। एतेन 'प्राणो विष्णुरित्युक्तमिती'ति भाष्यस्य सङ्गतिप्रतिपादनाक्षमत्वात् 'तद्वै त्वं प्राण' इत्युक्तप्राण इति प्राणविशेषणाऽभिधानमयुक्तमिति परास्तम् । **ऐतरेयके चेति** ।। तत्रेत्यस्य व्याख्यानम् ऐतरेयके चेति । भाष्ये 'मनो वाक्प्राण' इतीत्यतः-परमध्याहार्यवाक्यमाह– **आरभ्य बहुषु स्थलेषु श्रूयत इति** ।। ततश्चैवं भाष्यवाक्यपाठः– 'प्राणो विष्णुरित्युक्तं 'तत्र तावा एता शीर्षंछ्रियः श्रिताः चक्षुः श्रोत्रं मनो वाक्प्राण इत्यारभ्य बहुषु स्थलेषु प्राणः श्रूयत' इति । अनेन पूर्वाधिकरणैतदधिकरणप्रतिपाद्ययोः प्राणशब्दवाच्यत्वं सङ्गतिरित्युक्तं भवति । **पूर्वोक्तन्याय इति** ।। 'अत एव प्राण' इति पूर्वसूत्रम् अन्यत्र प्रसिद्धिश्च । उपलक्षणमेतत् अभ्याधिकाशङ्काप्रापकम् अन्यत्रप्रसिद्धिश्च प्राबल्याद्यविवेकदशायां सन्देहबीजमित्यर्थः । **तत्र न प्राण इति** ।। अत्र प्राणस्य विष्णुत्वं न विद्यत इति भाष्यस्थाऽत्रेत्यस्य व्याख्यानं तत्रेति । 'वायुरेवायं प्राणः, इन्द्र एवायं प्राणः, जीव एवायं प्राणः, मुख्यप्राण एवायं प्राण इति पूर्वपक्षान्संकलय्याह– **वादिभेदेति** ।। सर्वपक्षेष्वनुगतहेतुमाह– **इन्द्रियगणे गणितत्वादिति** ।। अस्य लिङ्गस्य विष्णावनवकाशमाह– **न चैतदिति** ।। सर्वोत्तमस्य इन्द्रियगणेषु पाठो न युक्त इति भावः । यथा विष्णावनवकाशं लिङ्गं तथा वाय्वादिष्वनवकाशमित्यत आह– **उपपद्यते चेति** ।। तथा च विष्णुवत्

(अभिनवचन्द्रिका)

वाय्वादीनां सर्वोत्तमत्वाभावात् लिङ्गमुपपद्यत इति भावः । वाय्वादिः प्राण इति एक एव पूर्वपक्ष इति न मन्तव्यमित्याह– **तेषामन्यतमस्यैवेति** ।। 'इन्द्र एवायं प्राणः, जीव एवायं प्राणः मुख्यप्राण एवायं प्राण' इति पूर्वपक्षेषु विशेषहेतुः सूत्रकृतैवोक्त इति अत्र नोक्तः । **अथ देवरथ इति** ।। तस्य देवरथस्य देहस्य । वाक् तदभिमानिनी उमा । ऋद्धिः उद्धरणरज्जु । श्रोत्रे तदभिमानिन्यन्द्रचन्द्रभार्ये । पक्षसी पार्श्वतो नियुक्ताश्वौ । चक्षुषी तदभिमानिसूर्यसूर्यभार्ये युक्ते अग्रतो नियुक्ताऽश्वौ । मनः=मनोभिमानी रुद्रः । सङ्ग्रहीता रथयन्तेत्यर्थः । ननु श्रुतौ 'तदयं प्राण' इत्यनुपपन्नं स इति पुल्लिङ्गेन भाव्यत्वादित्यतः तदयमित्येकं पदमिति भावेनाह– **स चासावयं चेति** ।। तच्छब्दस्य भिन्नपदत्वमङ्गीकृत्य तदुपपत्त्यै तदर्थमाह– **तदितीति** ।। तच्छब्दस्य प्राणपरत्वेऽपि भिन्नपदत्वं घटयितुमाह– **लिङ्गव्यत्ययो वेति** ।।

## वाक्यार्थमुक्तावली

ॐ प्राणस्तथाऽनुगमात् ॐ । नन्वत एव प्राण इत्येतद्गतार्थम् । ता वा एता इत्यादिवाक्यान्तर-विषयत्वान्नेति चेन्न । तथात्वे तदनन्तरमेवारम्भणीयत्वेन गायत्र्यधिकरणानन्तर्ये नियामकाभावादिति चेन्न । निरन्तराधिकरणसिद्धान्तन्यायोपजीव्याऽभ्यधिकाशङ्कयाऽत्र पूर्वपक्षोत्थानेन तदानन्तर्योपपत्तेः । पूर्वाधिकरणे ह्यनन्यथासिद्धश्रुतिलिङ्गबाहुल्येन गायत्री परमात्मेति निर्णीतम् । अस्ति चात्रापि परकीयानन्यथासिद्धश्रुतिलिङ्गबाहुल्यमिति पूर्वपक्षस्य सुधायां दर्शितत्वात् ।। **श्रुत्यादिसङ्गतिमिति** ।। अव्यवहितसङ्गतिस्तूक्तैवेति ।। **प्राचीनप्राण इति** ।। तद्यथा शालावंशे सर्वेऽन्ये वंशाः समाहिताः स्युरेवमस्मिन्प्राणे चक्षुः श्रोत्रं मनो वागिन्द्रियाणीतीन्द्रियनियामकतयोक्तप्राणस्यान्यत्वे यद्देवान्प्राणयो न वेत्युक्तोऽप्यन्यः स्यादित्यर्थः ।

नन्विदमधिकरणमभ्यधिकाशङ्कया प्रवृत्तम् । सा हि भवत् 'तद्वै त्वम्' इत्युक्तप्राणस्य विष्णुत्वं श्रीलक्ष्मीपतित्वादिलिङ्गात् । 'ता वा एता' इत्यैतरेयप्राणस्तु न विष्णुः । तादृशलिङ्गाभावात् । इन्द्रजीवमुख्यप्राणप्रापकश्रुतिलिङ्गबाहुल्याच्चेत्येवंरूपा । तथा चाभ्यधिकाशङ्कयास्य प्राणस्यान्यत्वे शङ्किते प्राचीनप्राणोऽप्यन्य एवेति तदाक्षेपो न युज्यत इति चेन्न । इन्द्रादिलिङ्गात्प्राणशब्दस्येन्द्राद्यर्थत्वे निश्चिते 'तद्वै त्वं प्राण' इत्यत्रापि तदर्थत्वशङ्कामात्रस्य क्रियमाणत्वात् । अत एव टीकायामन्य एव स्यादित्य-नुक्त्वा स्यादित्युक्तम् । यद्वाऽभ्यधिकाशङ्कयाऽत्र विष्णुप्रापकमप्युपमा प्रमाणशब्दस्य विष्ण्वन्यपरत्वे तन्न्यायेन पश्चात् । 'तद्वै त्वं' इत्यत्रापि विष्णुप्रापकश्रीपतित्वादिकं श्रीशब्दस्य वायुभार्यापरत्वेन

(वाक्यार्थमुक्तावली)

सावकाशत्वमङ्गीकृत्य तत्रोक्तविष्णुत्वाक्षेप उपपद्यत एव । अत एवात्र टीकायां लोकतोऽन्यत्र प्रसिद्ध-प्राणनाम्न इत्युक्तमन्यथा तत्र प्राणस्य विष्णुत्वसिद्धौ उभयत्र प्रसिद्धत्वप्रसङ्गेनान्यत्र प्रसिद्धेत्युक्त्य-योगादिति ॥ **किं विष्णुरिति** ॥ अत्र प्राणः किं मुख्यवाय्वादिरुत विष्णुरिति चिन्ता । तदर्थं वाय्विन्द्रजीवप्रापकश्रुतिलिङ्गवाक्यानि विष्णुप्रापकश्रुतिलिङ्गबाधकान्युत तद्बाध्यानीति । तदर्थं तानि किं निरवकाशान्युत वाय्वाद्यन्तर्यामिनिष्ठत्वेन सावकाशानीति । तदर्थं प्राणादिश्रुत्यादीनां सावकाशत्वेन तत्तुल्यविष्णुप्रापकब्रह्मशब्दादीनां निरवकाशत्वे च प्रमाणं नास्त्युतास्तीति ॥ **इन्द्रियगणेति** ॥ इन्द्रियगणे तदभिमानिनां गणनं युक्तम् । विष्णोस्त्विन्द्रियस्वामित्वेन भृत्यगणे गणनं न युज्यत इति भावः । उपलक्षणमेतत् । प्राणसम्पदादिवृत्रहन्तुत्वादिशतायुष्ट्वादिप्राणेन्द्रियजीवलिङ्गानां प्राणेन्द्रपुरुषश्रुतीनां प्राणो वा इति वाक्यस्यापि पूर्वपक्षप्रापकत्वं बोध्यम् । अत एवानुव्याख्याने 'बाहुल्ये श्रुतिलिङ्गयोः । अन्यस्य मुख्यवाच्यत्वम्' इत्युक्तम् । भाष्यटीकयोर्मुखतोऽनुक्तिस्तु जीवमुख्यप्राणलिङ्गादिति सूत्रकृतैवाशङ्क्यमानत्वादिति ज्ञेयम् ।

ननु चेतोऽर्पणनिगदादित्युक्तन्यायेनान्तराधिकरणोक्तदिशा वृष्ट्यादिवरुणलिङ्गानामिवेन्द्रियगण-गणितत्वादिलिङ्गस्यापि विष्णाववकाशसम्भवेन कथं पूर्वपक्षोदयो गतार्थत्वादित्याशङ्क्य परिहरति ॥ **न चैतल्लिङ्गमिति** ॥ गानत्राणकर्तृत्वानेतृत्वादीनां विष्णावुपासने बाधकाभावात्सावकाशत्वं सम्भवति । सर्वोत्कृष्टस्य विष्णोरपकृष्टैश्चक्षुरादिभिः सह परिगणनस्य तथोपासनार्थत्वेनोक्तौ तस्याप्यपकृष्ट-तयोपासनप्राप्त्या विष्णाववकाशाभावात् । अवकाशार्थं विचारितमप्यवकाशं न लभत इत्यर्थः । अन्यथा न चैतल्लिङ्गं विष्णौ सावकाशमित्येव ब्रूयात् । सूत्रे तथाशब्द उपमायां समुच्चये चेत्यभिप्रेत्य भाष्यार्थमाह । **तद्वै त्वमित्यादिना** । भाष्ये नापीत्यत्रत्यायमंश उत्सूत्रित इत्यत आह– **तथाशब्द इति** ॥ समुच्चायकतथाशब्दमहिम्नाऽत्रापीति लभ्यत इत्यर्थः ।

ननु रथशब्दस्य पुल्लिङ्गत्वात् कथं तदिति नपुंसकलिङ्गनिर्देश इत्यत आह **स चासाविति** ॥ एकप्रकारेण प्रबलादिति । यद्यपि पूर्वपक्षे श्रुतिलिङ्गबाहुल्यमस्ति । तथापि जीवमुख्यप्राणलिङ्गादिति सूत्रकृतैवाशङ्क्यमानत्वात्तदुत्थापनायैवमुक्तं ज्ञेयम् ॥ **अभ्युपेत्यैवमिति** ॥ निरवकाशत्वमभ्युपेत्येत्यर्थः । यावतेति यस्मादित्यर्थः । अनुगमपदं प्रकारान्तरेणेति । यद्यपि श्रुतिलिङ्गयोर्मध्ये श्रुतेः प्रबलत्वात् श्रुत्यभ्यासपरतया प्रथमं व्याख्येयम् । तथापि लिङ्गे उपपादनबाहुल्यात्प्रथमतो व्याख्यानमिति । सूत्रार्थस्तु तत्त्वित्यनुवृत्तिः सर्वत्र सिद्धा । तथा 'तद्वै त्वं प्राण' इत्यत्रेवात्रापि प्राणो विष्णुरेव । अनुगमादनुवृत्तेः लिङ्गाभ्यासाद् ब्रह्मशब्दाभ्यासाच्चेति ।

## तत्त्वसुबोधिनी

॥ ॐ प्राणस्तथाऽनुगमात् ॐ ॥ **श्रुत्यादिसङ्गतिमिति** ॥ निरन्तराधिकरणसिद्धान्तन्यायमुपजीव्य अभ्यधिकाशङ्कया पूर्वपक्षोत्थानादनन्तरसङ्गतिरिति भावः । नन्वन्तराधिकरणाद्युक्तन्यायेन इन्द्रियगणे गणितत्वादिरूपलिङ्गानां विष्णौ सावकाशत्वात् प्राणो विष्णुरेवेत्यत आह ॥ **न चैतदिति** ॥ **स एषोऽसुरिति** ॥ स एष भगवान् दैत्यनिरसनादसुनामा स एषः प्रकृष्टानन्दरूपत्वात् प्राणः सतां ज्ञानैश्वर्यादिभूतिदातृत्वात् भूतिः । असतां अज्ञानाद्यभूतिप्रदातृत्वात् अभूतिः । तं भगवन्तम् । बभूवुः ज्ञानैश्वर्यादिमन्तो बभूवुः । तस्माद्ध तस्मादेव । एतर्हि इदानीमपि । सुप्तः सुप्तेषु स्थितः मुख्यवायुः भूर्भूरित्येव भूतिः भूतिरित्येव प्रश्वसिति श्वासैः स्तौतीत्यर्थः । एकैव व्याहृतिः । एकप्रकारत्वं नाम सर्वेषां नाम्नां निर्दोषगुणपूर्तिवाचित्वात् एकप्रकारत्वं सर्वशब्दानाम् । कुत्रैकव्याहृतित्वं तदाह । प्राण एव प्राणनाम्नि नारायण एव ऋचः ऋङ्मात्राः प्राण एव विशेषतः प्राणवाचकाः इति विद्यात् जानीयादित्यर्थः । अथ देवरथः ॥ देवस्य विष्णोः वायोश्चाध्यात्ममधिदैवं च रथ उच्यते इति विशेषः । तस्मादध्यात्मदेहाख्यस्य रथस्य वाक् वागाख्या उमा उद्धिः उद्धारणरज्जुरूपा अधिदैव-विष्णुरथस्य उमा नागाकारा उद्धिः । श्रोत्रे दक्षवामश्रोत्रगतचन्द्रतद्भार्ये पक्षसी पार्श्वगयुक्ताश्वौ अन्यत्र चन्द्रस्तद्भार्या चाश्वरूपौ पार्श्वयोः युक्तौ चक्षुषी सूर्यः तद्भार्या च चक्षुर्गतौ प्रेरकौ न युक्तौ अग्रतो वियुक्ताश्वौ । अन्यत्र सूर्यः तद्भार्या च अग्रतो नियुक्ताश्वौ । मनः मनोभिमानी रुद्रः मनोगतः सङ्गृहीता सारथिः । उभयत्राप्येवम् । तद्देहाख्यं स्यन्दनम् अधिदैवस्यन्दनम् । अयं प्राणः प्राणशब्दवाच्यो विष्णुः वायुश्चाधितिष्ठतीत्यर्थः । स चासावयं चेति । अनेन तदिति भिन्नं पदं सत् रथपरामर्शकमित्युक्तं भवति । तथात्वे तमिति भवेदिति भावः । यद्वा तदिति भिन्नं पदं तर्हि पुल्लिङ्गस्य रथशब्दस्य नपुंसकेन परामर्शः कथमित्यत आह ॥ **तदिति रथतयोक्तं शरीरं वेति** ॥ तथापि न परामर्श-स्वारस्यमित्यत आह ॥ **लिङ्गव्यत्ययो वेति** ॥ व्यत्ययो बहुलमिति सूत्रादिति भावः । अनन्यथासिद्धतां च स्मृत्येति । स्मृतौ विष्णुमेवेत्यवधारणबलेन लिङ्गानां विष्णुमात्रनिष्ठत्वप्रतिपादनादिति भावः । चशब्देन पूर्वपक्षयुक्तलिङ्गानां सावकाशत्वस्य समुच्चयः । ननु पूर्वपक्षीयलिङ्गस्यापि निरवकाशत्वात् कथं निरवकाशेनैव निरवकाशबाध इत्यत आह ॥ **एकप्रकारेणेति** ॥ ननु पूर्वपक्षप्रापकश्रुत्यादीनामपि बाहुल्यात् तेषामपि प्रकारद्वयेन प्राबल्यमित्यत आह ॥ **अभ्युपेत्येति** ॥ इदं निरवकाशत्वम् । यद्वा उभयोः निरवकाशत्वं विरुद्धमित्यत आह ॥ **अभ्युपेत्येति** ॥ **प्रकारद्वयेनापीति** ॥ बहुत्वनिरवकाशत्वरूप-प्रकारद्वयेनापीत्यर्थः ।

## वाक्यार्थमञ्जरी

**तावा एता इति** ।। ता एताः श्रियः शीर्षं शिरः श्रिताः आश्रिताः । कास्ताः श्रिय इत्यत उक्तं चक्षुरित्यादि ।। **प्राचीनप्राण इति** ।। ननु श्रीपतित्वादिना तत्रत्यप्राणस्य विष्णुत्वात्कथमेतदिति चेत् । अत्रत्यलिङ्गानां वक्ष्यमाणरीत्या बलवत्वेन तद्विरुद्धश्रीपतित्वादीनामन्यथा योज्यत्वान्न तैर्विष्णुत्वनिश्चय इति भावः । पूर्वोक्तन्यायः महायोगविद्वद्रूढिसत्वात्प्राणशब्दो विष्णुवाचक इति न्यायः । वाय्वादिरेवेत्यादिशब्देनेन्द्रजीवयोर्ग्रहणम् ।। **न चैतदिति** ।। सर्वोत्तमस्य चक्षुरादिभिः सह पाठायोगादिति भावः ।। **उपपद्यते चेति** ।। मुख्यप्राणस्येन्द्रियस्वामित्वादिन्द्रस्य हस्तेन्द्रियाधिष्ठितत्वाज्जीवस्येन्द्रिय-फलभोक्तृत्वादिति भावः ।।

ॐ प्राणस्तथाऽनुगमात् ॐ ।। यथा तद्वै त्वं प्राण इत्ययं प्राणो विष्णुः तथैतरेये श्रुतः प्राणोऽपि विष्णुरेव । ब्रह्मशब्दादेवोपास्यत्वादितच्छ्रुतिलिङ्गानामस्मिन्प्रकरणेऽनुगमादनुवृत्तेरभ्यासादित्यर्थः । नीतवन्तः उपदिदिशुरिति यावत् । स एष भगवान् दैत्यनिरसनादसुनामा स एषः प्रकृष्टानन्दत्वात्प्राणः सतां ज्ञानैश्वर्यादिभूतिदातृत्वाद्भूतिः असतामज्ञानाद्यनैश्वर्यदातृत्वादभूतिः तं भगवन्तं देवा भूतित्वेनोपासनां चक्रिर इत्यर्थः ।। **ता वा इति** ।। ऋगादयः सर्वस्मिन् प्राणे परमात्मविषये एकैव व्याहृतिर्व्याहरणम् । एकमेव नाम निर्दोषगुणपूर्तिवाचित्वादेकप्रकारत्वम् । ऋचः विशेषेण प्राणपरा इति विजानीयादित्यैतरेय-भाष्योक्तदिशार्थः । टीकाकारास्तु । प्राण एवेत्यत्र प्राणशब्दस्य प्रथमान्तत्वमङ्गीकृत्य यास्ता एताः सर्वा ऋचस्तासामेकैव व्याहृतिरेकमेव व्याहरणं तच्च प्रतिपाद्यं प्राण एव । किं च ये सर्वे वेदास्तेषामपीश्वर एव प्रतिपाद्यः किमु ऋचाम् । अपि च ये समुद्रादिघोषास्तेषामपीश्वर एव प्रतिपाद्यः किमु वेदानाम् । ऋचस्तु विशेषेण प्राणप्रतिपादका इति जानीयादिति ज्योतिरुपक्रमादित्युत्तरत्र व्याकरिष्यन्ति ।। **अथ देवरथ इति** ।। देवाधीनो देहाख्यरथ उच्यते । तस्य देवरथस्य वाक् तदभिमानिनी उमा उद्धिः उद्धारणरज्जुः । श्रोत्रे तदभिमानिचन्द्रतद्धार्ये पक्षसी पार्श्वनियुक्ताश्वौ । चक्षुषी तदभिमानिसूर्यतद्धार्ये युक्ते अग्रतो नियुक्ताश्वौ । मनः मनोभिमानी रुद्रः सङ्गृहीता रथयन्ता प्राणस्तादृशं रथमधितिष्ठतीत्यर्थः । रथप्राणशब्दयोः पुंल्लिङ्गत्वात्तदिति परामर्शानुपपत्तिरित्यत आह ।। **स चासाविति** ।। आहुः ब्रह्मतर्के । तयोः बहुत्वस्वभावाभ्यां बलवतोर्मध्ये कोऽयं स्वभाव इत्यत उक्तम् ।। **उपजीव्येति** ।। सः स्वभाव उपजीव्यत्वनिरवकाशत्वादिरूप इत्यर्थः । अनन्यथासिद्धतां निरवकाशत्वम् अभ्युपेत्य पूर्वपक्षलिङ्गस्य निरवकाशत्वम् ।। **अन्तर्यामीति** ।। वाय्वादीनामिन्द्रियैः सह गणितत्वे तदन्तर्यामिणोऽपि तैः सह गणितत्वमिति भावः ।। **प्रकारद्वयेन** ।। एकत्वसावकाशत्वाभ्याम् ।।

# विवृतिः

**श्रुत्यादिसङ्गतिमिति** ॥ निरन्तराधिकरणसिद्धान्तन्यायमुपजीव्याभ्यधिकाशङ्कया पूर्वपक्षोत्थानादनन्तर-सङ्गतिरिति भावः ॥ नन्वन्तराधिकरणाद्युक्तन्यायेन इन्द्रियगणगणितत्वादिरूपलिङ्गानां विष्णौ सावकाशत्वात्प्राणो विष्णुरेवेत्यत आह ॥ **न चैतदिति** ॥ तथा च निरवकाशप्राणादिलिङ्गानां विद्यमान-त्वात् प्राणो विष्णुरिति भावः ॥ **स एषोसुरिति** ॥ स एष भगवान् दैत्यनिरसनादसुनामा स एषः प्रकृष्टानन्दरूपत्वात्प्राणः ॥ ज्ञानैश्वर्यादिभूतिदातृत्वाद्भूतिः ॥ अज्ञानाद्यभूतिदातृत्वादभूतिः ॥ तं भगवन्तम् । बभूवुः ज्ञानैश्वर्यादिमन्तो बभूवुः ॥ तस्माद्ध तस्मादेव एतर्हि इदानीमपि सुप्तः सुप्तेपु स्थितो मुख्यवायुर्भूर्भूरित्येव प्रश्वसिति श्वासैः स्तौतीत्यर्थः ॥ **एकैव व्याहृतिः** ॥ एकप्रकारत्वं सर्वेषां नाम्नां निर्दोषगुणपूर्णत्वरूपैकार्थवाचित्वात् ॥ कुत्रैकव्याहृतित्वं सर्वशब्दानां तदाह, प्राण एव, प्राणनाम्नि नारायण एव ऋचः ऋङ्मन्त्राः प्राण एव विशेषतः प्राणवाचका इति विद्याज्जानीयादित्यर्थः ॥ अथ देवरथः देवस्य विष्णोः वायोश्चाध्यात्ममधिदैवं च रथ उच्यत इति शेपः ॥ तस्याध्यात्मदेहाख्य-रथस्य वाक् वागाख्या उमा उद्धिः उद्धारणरज्जुरूपा ॥ अधिदैवं विष्णुरथस्य उमा नागाकारा उद्धिः श्रोत्रे दक्षवामश्रोत्रगतचन्द्रतद्भार्ये, पक्षसी पार्श्वनियुक्ताश्वौ अन्यत्र चन्द्रः तद्भार्या चाश्वरूपौ पार्श्वयोर्युक्तौ चक्षुषी सूर्यस्तद्भार्या च, चक्षुर्गतौ प्रेरकौ च युक्तौ अग्रतो नियुक्ताश्वौ, अन्यत्र सूर्यः सूर्यभार्या च अग्रतो नियुक्ताश्वौ, मनः मनोभिमानीरुद्रः मनोगतः सङ्गृहीता सारथिः ॥ उभयत्राप्येवं तद्देख्यं स्यन्दनम् अधिदैवस्यन्दनम् । अयं प्राणः प्राणशब्दवाच्यो विष्णुः वायुश्चाधितिष्टतीत्यर्थः ॥ **स चासावयश्चेति** ॥ अनेन तदिति भिन्नं पदं सत् रथपरामर्शकमित्युक्तं भवति तथात्वे तमिति भवेदिति भावः ॥ यद्वा तदिति भिन्नं पदम् ॥ तर्हि नपुंसकलिङ्गे कथं पुल्लिङ्गप्रकृतरथपरामर्श इत्यत आह ॥ **तदिति रथतयोक्तं शरीरं चेति** ॥ तथापि न परामर्शस्वारस्यमित्यत आह ॥ **लिङ्गव्यत्ययो वेति** ॥ व्यत्ययो बहुलमिति सूत्रादिति भावः ॥ अनन्यथासिद्धतां च स्मृत्येति ॥ स्मृतौ विष्णुमेवेत्यवधारणबलेन लिङ्गानां विष्णुमात्रनिष्ठत्वप्रतिपादनादिति भावः । चशब्देन पूर्वपक्षयुक्तलिङ्गानां सावकाशत्वस्य समुच्चयः । ननु पूर्वपक्षीयलिङ्गस्यापि निरवकाशत्वात्कथं निरवकाशेनैव निरवकाशबाध इत्यत आह ॥ **एकप्रकारेणेति** ॥ ननु पूर्वपक्षप्रापकश्रुत्यादीनामपि बाहुल्यात्तेषामपि प्रकारद्वयेन प्राबल्यमित्यत आह ॥ **अभ्युपेत्येति** ॥ इदं निरवकाशत्वम् ॥ यद्वा उभयोर्निरवकाशत्वं विरुद्धमित्यत आह ॥ **अभ्युपेत्येति** ॥ प्रकारद्वयेपीति ॥ बहुत्वनिरवकाशत्वरूपप्रकारद्वयेनापीत्यर्थः ॥

## सूत्रभाष्यम्

**॥ ॐ न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ॐ ॥ २९ ॥**

'प्राणो वा अहमस्म्यृपे' (ऐ.आ.२-२-३) इति वक्तुरात्मोपदेशादिन्द्र एवेति चेन्न, 'प्राणस्त्वं प्राणः सर्वाणि भूतानि' इति (ऐ.आ.२-२-३) बह्वध्यात्मसम्बन्धो ह्यत्र विद्यते ॥

## सत्तर्कदीपावली

न च वाच्यं तमिन्द्र उवाच प्राणो वा अहमस्मि ऋपे इति वचनादत्रेन्द्र एव प्राणशब्दार्थो विवक्षित इति । प्राणस्त्वं प्राणः सर्वाणि भूतानि प्राणो ह्येष य एष तपतीति सर्वान्तर्यामित्वेन प्राणव्यपदेशात् । न हीन्द्रस्य जीवविशेषस्य सर्वान्तर्यामित्वं युज्यत इत्येतत्प्रतिपादयत्सूत्रमुपन्यस्य व्याचष्टे । **न वक्तुरित्यादिना ।**

## तत्त्वप्रदीपिका

न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् । विश्वामित्रस्य बृहतीसहस्रवक्तुरर्थे वक्तेन्द्र आत्मानं प्राणमुपदिशति 'प्राणो वा अहमस्म्यृप' इत्यादिना । तस्मादिन्द्र एवात्र प्राणशब्देन प्रतिपाद्यत इति चेन्न । बह्वध्यात्मसम्बन्धो ह्यत्र विद्यते । अयमर्थः । अधिकात्मनः परमात्मनो जीवेषु सम्बन्धबाहुल्यं ह्यस्मिन्वाक्ये विद्यते । नान्यस्य, तस्य स्वातन्त्र्येण सर्वजीवसम्बन्धायुक्तेः । अथवा नात्रेन्द्रः प्रतिपाद्यः । परमात्मसम्बन्धो हि बहुलो ह्यस्मिन्विद्यते ॥

## तत्त्वप्रकाशिका

उक्तमाक्षिप्य समादधत्सूत्रं पठित्वाऽऽक्षेपांशं तावद्व्याचष्टे ॥ **नेति** ॥ यदुक्तं विष्णुरयं प्राण इति तदयुक्तम् । 'तमिन्द्र उवाच ऋपे प्रियं वै मे धामोपागा वरं ते ददामीति । स होवाच । त्वामेव जानीयामिति । तमिन्द्र उवाच । प्राणो वा अहमस्म्यृपे' इति बृहतीसहस्रवक्तुर्विश्वामित्रस्येन्द्रेण प्राणतया आत्मोपदेशात् । न चायमिन्द्रोऽपि विष्णुः । प्रसिद्धस्यैव 'इन्द्रो वै वृत्रं हत्वा' इत्यादौ महाव्रतयज्ञे यजमानत्वेन प्रकृतत्वात् । न चास्योपदेशस्य सावकाशत्वं चास्ति । अत इन्द्र एवायं प्राण इत्याशयः ।

नञध्याहारेण सिद्धान्तांशं व्याचष्टे ॥ **नेति** ॥ नेन्द्रोऽयं प्राणः किन्तु विष्णुरेव । प्रागुक्तप्रबलतमलिङ्गादेः । उपदेशविरोध इति चेत् । भवेदयं विरोधो यद्यत्रेन्द्रेण प्राणतयाऽऽत्मोपदेशः क्रियेत । नैतदस्ति ।

(तत्त्वप्रकाशिका)

यतोऽस्मिन्प्रकरणे स्वस्थितस्य प्राणो वा अहमस्मीति परमात्मत्वमुक्त्वा तस्यैव प्राणाख्यपरमात्मनः 'प्राणस्त्वं प्राणः सर्वाणि भूतानि' इत्यादिना बहुदेहसम्बन्धः सर्वगतत्वमेवेन्द्रेणोक्तं विद्यत इत्यर्थः । अथवेन्द्रे बहुपरमात्मसम्बन्धो विद्यते तदपेक्षयैवायमुपदेशो न स्वापेक्षया । कुतः । प्राणस्त्वमित्यादिनास्य प्राणस्याध्यात्मत्वेनान्तर्यामित्वेन सर्वगतत्वोक्तेः विद्यमानत्वात् । न चैतदिन्द्रे जीवविशेषे युक्तमित्यर्थः । अन्यथा त्वामेव जानीयामिति ज्ञातपूर्वेन्द्रस्य मुनेः प्रश्नस्यैवासम्भवात् । सम्भवे वा प्राणस्त्वमित्यादि-परिहारवाक्यासङ्गतेश्च । अस्मत्पक्षे तु तेजोबाहुल्यात् इन्द्रेऽन्योऽपि वर्तते । कोऽसौ विष्णुश्चेत् स च कीदृश इत्यभिप्रायद्वयेन प्रश्ने सति कस्त्वयीति प्रश्नस्य प्राणो वाऽहमिति परिहारः । कीदृशोऽसावित्यस्यो-त्तरतयोत्तरवाक्ययोजनोपपत्तेरिति ॥ २९ ॥

## गुर्वर्थदीपिका

'प्रियं वै मे धामोपागा' इत्यत्र धामपदेन भगवत्सन्निधानमात्रं बृहतीसहस्रमुच्यते । उपागाः उपपन्नतयाऽऽगाः गानमकरोरित्यर्थः । त्वामेव जानीयामिति प्रार्थितत्वादस्योपदेशस्येन्द्रियैस्सह गणनस्य नान्तर्यामिविषयत्वमिति भावेनोक्तं न चास्योपदेशस्येति । सर्वथाऽज्ञातस्यापि प्रश्नायोगादिति भावेनोक्तं तेजोबाहुल्यादिति ।

## भावबोधः

वक्तुर्बृहतीसहस्रं शंसितुर्विश्वामित्रस्येन्द्रेण स्वात्मोपदेशः क्रियत इति पक्षो निराकृतो हि भगवता सूत्रेष्विति ऐतरेयभाष्यं मनसि निधाय भाष्यं व्याचष्टे । **तमिन्द्र उवाचेत्यादिना** ॥ ननु विश्वामित्रं प्रत्युपदेष्टुः प्रसिद्धेन्द्रत्वेऽपि तदुपदेशगताहंशब्दस्याहेयत्वादहं नामेत्यादिना विष्णुपरत्वसम्भवात् तदुपदेशस्य विष्णुविषयत्वं स्यादित्यत आह । **न चास्योपदेशस्येति** । त्वामेव जानीयामित्युक्ते 'प्राणो वाऽहमस्मि' इत्युक्तत्वान्नास्याहंशब्दस्याहेयत्वनिमित्तकत्वं युक्तम् । किन्त्वस्मदादेशत्वमेवेति भावः । बह्वध्यात्मसम्बन्धो ह्यत्र विद्यत इत्यस्य नञा हेतुत्वेनान्वयायोगात् । नञर्थे प्रबलतमलिङ्गादेरिति हेतुवाक्याध्याहारमत्र च न चोपदेशविरोध इति मत्वा अध्याहारं च कृत्वा वाक्यं योजयति नेन्द्रोऽयमित्यादिना । 'प्राणो वाऽहमित्यादिनामसन्दर्भमुक्तवान्' इति स्मृतिं मूलीकृत्य बह्विति भाष्यं व्याचष्टे ॥ **यत इति** ॥ अनेन सूत्रभाष्यगत'हि'शब्दो हेत्वर्थको बहुष्वधिकात्मनः परमात्मनः सम्बन्धो बह्वध्यात्मसम्बन्ध इति विग्रह इत्युक्तं भवति । उक्तमित्यध्याहारः । सर्वगतत्वापेक्षया नपुंसकलिङ्गत्वमिति ज्ञेयम् । अध्यात्मसम्बन्धशब्देनावेशो विष्णोरिन्द्रे विवक्षितो भगवता । अन्येष्वन्तर्यामिरूपेण सम्बन्धोऽस्त्येव ।

(भावबोधः)

अस्मिन्निन्द्रे तु विशेषावेशस्तात्कालिकः । अधिकात्मनः परमात्मनः सम्बन्धो ह्यध्यात्मसम्बन्ध इति ऐतरेयभाष्यं मनसि निधाय तदेव भाष्यं प्रकारान्तरेण व्याचष्टे– **अथ वेति** । अनेनात्रेन्द्रे बहु अध्यात्मनः परमात्मनः सम्बन्धो विद्यत इत्यनन्तरं तदपेक्षयायमुपदेशो न स्वापेक्षयेत्यध्याहृत्य तत्र हेतुप्रदर्शकत्वेन हि यस्मात् प्राणः त्वं प्राणः सर्वाणि भूतानीति वाक्यमत्रोपदेशे विद्यत इति भाष्यं योजितं भवति । अनेन सूत्रे 'अस्मिन्' इतिपदं भाष्ये यथाक्रममस्मिन् प्रकरणे अस्मिन्निन्द्र इति व्याख्यातमित्युक्तं भवति । इन्द्रं तु जानात्येव हि विश्वामित्र इत्यैतरेयभाष्यं मनसि निधायाह– **अन्यथेति** ॥

'त्वां जानीयामिति प्रश्नं विश्वामित्रस्य कुर्वतः' ।
अभिप्रायद्वयं ह्यस्ति शक्राविष्टो न चापरः ।
हरेरिति तु मे तर्कस्तेजोबाहुल्यतोऽजनि ॥

तस्य तर्कस्य सत्यत्वं ज्ञातव्यं प्रथमं मम ।
द्वितीयं यदि विष्णुः स्याज्ज्ञातव्यो मे विशेषतः ॥

इत्यभिप्रायमस्यैव ज्ञात्वा विष्णुः सनातनः ।
अभिपायद्वयस्यापि परिहारं हरिर्ददौ ॥

प्राणो वा अहमित्यादि नामसन्दर्भमुक्तवान् ।
विशेषज्ञानसिद्ध्यर्थं नाम्नामुक्तिः परात्मनः ॥

इन्द्राविष्टः कोऽयमिति शङ्कानुत्यर्थमेव च ।
तपन्नेवास्मीत्यवदत्तपन्तं वेद सोऽपि हि ॥

इत्यैतरेयभाष्योदाहृतस्मृतिं मूलीकृत्याह– **अस्मत्पक्ष इत्यादि** ।

## भावदीपः

॥ ॐ न वक्तुरात्मोपदेशात् ॐ ॥ **तदयुक्तमिति** ॥ तेन सूत्रे प्राणो विष्णुरित्यनुवर्त्य नञाऽन्वयः कार्यः । इन्द्र एवेति भाष्यं फलितार्थमिति भावः । इन्द्रस्य प्राणत्वेनोपदेशे असाङ्गत्यनिरासाय तस्येन्द्रवाक्यत्वस्फोरणाय च पूर्ववाक्यमाह ॥ **तमिति** ॥ तं विश्वामित्रम् । प्रियं धाम स्वलोकम्

(भावदीपः)

उपागाः प्राप्तोऽभूः । शस्त्रशंसनेन धामप्राप्तिहेतुप्रसादं लब्धवानभूरित्यर्थः । अनन्यथासिद्धत्वनन्य-श्रुतिलिङ्गादेरिति न्यायविवरणोक्तमिन्द्रश्रुतेर्निरवकाशत्वमिन्द्र एवेति भाष्ये अवधारणसूचितमाह ॥ **न चायमिति** ॥ न चास्येति च ॥ **सावकाशत्वं वेति** ॥ सावकाशत्वं हि विरोचनं प्रति विरिञ्चेनेवेन्द्रेण विश्वामित्रं प्रति प्राणो वाऽहमिति वञ्चनार्थमुक्तत्वेन वा वास्तवत्वेऽपि अन्तर्याम्यपेक्षया वा । नाद्यः । वक्तुरित्युक्तेर्विशिष्टशस्त्रशंसितुर्विश्वामित्रस्य नेन्द्रोऽन्यथोपदेष्टुमर्हतीति सुधोक्त्या बृहतीसहस्रवक्तु-र्विश्वामित्रस्येन्द्रेण वञ्चनकरणायोगात् । नान्त्यः । मञ्चाः क्रोशन्तीत्यत्र मञ्चपदस्य मञ्चस्थपुरुषेष्विव लक्षणाप्रसङ्गात् । न च मुख्ये सम्भवति सा युक्तेति भावः । न प्राणो विष्णुः किन्त्विन्द्र एवाऽऽत्मोप-देशादिति शङ्कायाः सूत्रशेषेण न साक्षादुत्तरं लगतीत्यतस्तदुत्तरत्वेनेति चेन्नेत्यनन्तरं पूर्वसूत्रादनुगमादिति हेतुमनुवर्त्यार्थमाह ॥ **नेन्द्रोऽयमिति** ॥ बहुत्वनिरवकाशत्वादेः सत्त्वात्प्रबलतमेत्युक्तम् । सूत्रे अध्याहृत्य वाऽनुवृत्त्य वा उक्तस्य भाष्यस्थनञः प्राणो नेन्द्रः किन्तु विष्णुरेव अनुगमादित्येकोऽर्थ उक्तः । उपदेशविरोधो न इत्यर्थान्तरं चोक्त्वा तत्र हेतुत्वेन सूत्रखण्डभाष्यस्यार्थमाह ॥ **नैतदस्तीत्यादिना** ॥ हिशब्दार्थो यतः इति । अस्मिन्निति सौत्रपदानुवादोऽत्रेति भाष्यस्थपदं च विवृतं ध्येयम् । प्राणस्त्वमित्यतः पूर्वं किञ्चिदुपस्करोति ॥ **स्वस्थितस्येति** ॥ अध्यात्मसम्बन्धभूमेत्यस्य प्रतिपदं भाष्ये बह्वित्यादि । तस्यार्थो बहुदेहेति देहा इव देहाः इन्द्रविश्वामित्रादिचेतनाः तत्सम्बन्धः । फलितार्थमाह ॥ **सर्वगतत्वमेवेति** ॥ एतेन सूत्रेऽधिकात्मनः परमात्मनोऽध्यात्मसम्बन्धभूमा देहसम्बन्धबाहुल्यमित्यर्थः सूचितः । अध्यात्मसम्बन्धशब्देनावेशो हि विष्णोरिन्द्रे विवक्षितः इति अधिकात्मनः परमात्मनः सम्बन्धो हि अध्यात्मसम्बन्ध इति चैतरेयभाष्यदिशा बह्वित्यादिभाष्यमन्यथाऽपि व्याचष्टे ॥ **अथत्रेति** ॥ अस्मिन्निति सूत्रस्थस्य प्रतिपदं भाष्ये अत्रेति । तदनुवादेन अर्थोक्तिरत्रेन्द्र इति तत्र हेतुतयापि तदेव समग्रं भाष्यं योजयति ॥ **कुत इति** ॥ अध्यात्मत्वेनात्मनो जीवानधिकृत्य वर्तमानत्वेनान्तर्यामित्वेनेति यावत् । फलितार्थः सर्वगततयेति । अन्तर्यामित्वेनोक्तेर्विद्यमानत्वमेव कुतः यज्जीवविशेषे न युक्तमित्यत इन्द्रं तु जानात्येव विश्वामित्रः इत्यैतरेयभाष्योक्तं विपक्षे बाधकं तावदाह ॥ **अन्यथेति** ॥ स्वापेक्षयोप-देशपक्ष इत्यर्थः । एतदर्थं च प्राक् टीकायां वाक्यशेषोद्धार इति भावः । विशेषज्ञानार्थमस्तु प्रश्नः इत्यतः सम्भवं वेति पूर्वपक्षेऽपि विश्वामित्रादेः प्राणत्वाभावादिति भावः । सूत्रे भूमपदं द्वितीयव्याख्यानपरं ध्येयम् । अत्र प्राणस्यान्तर्यामित्वेनोक्तिरित्येतत्र केवलं विपक्षे बाधकाज्ज्ञायते । किन्तु वाक्य-योजनासमञ्जस्याच्च ज्ञायत इति भावेनाह ॥ **अस्मत्पक्षे त्विति** ॥ यद्वा । अयं च दोषो भवतामपि सम इत्यत आह ॥ **अस्मत्पक्षे त्विति** ॥ **अहमितीति** ॥ तर्हि प्राणो वा मयि अस्तीति स्यादिति तु निरसिष्यत इति भावः ॥ **उत्तर इति** ॥ प्राणस्त्वमित्यादिरित्यर्थः । अत्र यद्यपि ऐतरेयभाष्ये

(भावदीपः)

'त्वां जानीयामिति प्रश्नं विश्वामित्रस्य कुर्वतः ।
अभिप्रायद्वयं ह्यस्ति शक्राविष्टो न चापरः ।
हरेरिति तु मे तर्कस्तेजोबाहुल्यतोऽजनि ।
तस्य तर्कस्य सत्यत्वं ज्ञातव्यं प्रथमं मम ।
द्वितीयं यदि विष्णुःऽ स्याज्ज्ञातव्यो मे विशेषतः ।
इत्यभिप्रायमस्यैव ज्ञात्वा विष्णुः सनातनः ।
अभिप्रायद्वयस्यापि परिहारं हरिर्ददौ ।
प्राणो वाऽहमित्यादिनामसन्दर्भमुक्तवान् ।
विशेषज्ञानसिद्ध्यर्थं नाम्नामुक्तिः परात्मनः ।
इन्द्राविष्टः कोऽयमिति शङ्कानुत्यर्थमेव च ।
तपन्नेवास्मीत्यवदत्तपन्तं वेद सोऽपि हि' ।

इति । तथा 'अहेयत्वादहंनामाऽस्म्यसनान्मनुतेरपि' इत्यादिस्मृतौ न च प्राणो वाऽहमस्म्यृष इत्यादावस्म्यादिशब्दोऽस्मच्छब्दार्थ इत्यादिवाक्येषु चार्थपर्यालोचनया प्राणोऽहमस्म्यादिशब्दानां विष्णुनामत्वमुपेत्य कीदृश इति प्रश्नस्यायं परिहारः । कोऽयमिति प्रश्नस्य तपन्नेवास्मीत्ययं परिहार इत्युक्तं भाति । न त्वस्मीत्यस्य तिङन्तत्वमुपेत्य । न वा कोऽसावित्यस्य प्राणो वा अहमस्मीत्येतत्समाधानमुपेत्य व्याख्यातम् । तथा प्राणस्तथानुगमादिति च विष्णोरेव प्राणशब्दाभिधेयत्वमुक्तमित्यादिनैतत्सूत्राण्यपि तथैव तत्र व्याख्यातानि इति च भाति । तथाप्यस्मीत्यस्योत्तमपुरुषत्वाऽविघातेन प्राणस्येन्द्राद्यन्तर्याम्यैक्यरूपार्थान्तरपरतया श्रुतिसूत्रभाष्याण्यत्र योजितानि । अत एवान्तरनये सोऽहमस्मीत्यादि त्वन्तर्याम्यपेक्षयेत्यादि भाष्यम् । स्मृत्युक्तार्थस्त्वानन्दमयनयभाष्योक्तरीत्या तत्वप्रदीपोक्तरीत्या च सुज्ञान इति तमनुक्त्वोत्तरोपयोगित्वेनान्यार्थ उक्त इति ॥ २९ ॥

## अभिनवचन्द्रिका

(सू.२१) **उक्तमाक्षिप्येति** ॥ 'अत एव प्राण' इत्यनेन सूत्रेण 'तावा एता' इति वाक्यं विषयावाक्यं कृत्वा देवतोपदेश्यत्वलिङ्गमात्रेण प्रागुक्तं प्राणस्य विष्णुत्वमाक्षिप्य इत्येवार्थः, नतु 'प्राणस्तथाऽनुगमा'दित्यनेन 'तं देवाः प्राणयन्ते'ति सर्वदेवोपदेश्यत्व, भूतित्वेन देवोपास्यत्व, सर्ववेदोक्तत्व, देहरथित्वेभ्यो लिङ्गेभ्यः । ब्रह्मशब्दाभ्यासाच्चोक्तं प्राणस्य विष्णुत्वमाक्षिप्येत्यर्थः । इन्द्रेणात्मतयोपदेशस्य निरवकाशबहुबाधकत्वाऽयोगात् । एवमुत्तरत्रापि द्रष्टव्यम् ।

(अभिनवचन्द्रिका)

अत्रायं विवेकः – 'अत एव प्राण' इत्यनेनोक्ते प्राणस्य विष्णुत्वे चत्वारः आक्षेपकाः प्राप्नुवन्ति, इन्द्रियगणे गणितत्वम्, इन्द्रेणात्मतयोपदेशः, शतसंवत्सरत्वं, प्राणैः सह कलहश्चेति । तत्राद्यस्य 'प्राणस्तथानुऽगमा'दिति परिहारः – यद्यपि 'अत एव प्राण' इति पूर्वसूत्रादेव एतल्लिङ्गग्रहणसम्भावात्परिहारः सम्भवति, तथापि बहुवारं स्मृतेः फलबाहुल्यहेतुत्वेन 'अत एवे'त्यत्रैकमेव लिङ्गं गृहीतम् । इह तु बहुलिङ्गानि इति सूत्रं सार्थकम् । द्वितीयस्य 'न वक्तु'रित्यादि द्वे सूत्रे । तृतीयचतुर्थयो'-र्जीवमुख्यप्राणलिङ्गा'दिति परिहार इति ।

अत्र द्वे गुणसूत्रे – 'न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन्, शास्त्रदृष्ट्या तूपदेशो वामदेववत्'दिति । अथ किमर्थो योगविभागः । 'न वक्तुरात्मोपदेशादिति चेत् शास्त्रदृष्ट्या तूपदेशो वामदेववत्'दित्येव सूत्रं किं न क्रियते । एतावतैवोक्तशङ्कापरिहारादिति चेत्, न प्राणशब्दस्येन्द्रपरत्वशङ्कानिरासाय नात्र प्राणशब्देनेन्द्र उच्यते । अस्मिन्प्रकरणे सर्वगतत्वरूपाऽध्यात्मसम्बन्धस्याभिधानात् । तस्य चेन्द्रेऽसम्भवात् । यद्यपि इन्द्रस्य तत्वाभिमनित्वात् बहुस्थलसम्बन्धः सम्भवति, तथापि 'सर्वाणि भूतानी'त्युक्तपूर्वापरकल्पीयसर्वप्राणिषु मुक्तेषु लक्ष्म्यादिषु स्थित्यसम्भव एव । किन्तु इन्द्रान्तर्यामी विष्णुरेव प्राणशब्देनोच्यत इति वक्तुम् आद्यस्य समग्रयोगस्याऽपेक्षितत्वात् । अन्यथा 'शास्त्रदृष्ट्या तूपदेश' इत्युक्ते न शास्त्रदृष्ट्या किन्तु इन्द्रदृष्ट्यैवेत्युक्त्वा परोऽपि कृती स्यात् । ननु प्राणशब्दस्येन्द्रपरत्वे 'त्वं प्राणः सर्वाणि भूतानी'ति वक्ष्यमाणसर्वगतत्वायोगात् यथा प्राणशब्दो नेन्द्रपरः तथेन्द्रादिवाचकाऽहमादिशब्दसामानाधिकरण्यायोगात् न विष्णुपरोऽपीत्याशङ्कापरिहाराय अहमादिशब्दानामपि भगवत्परत्वमिति सदृष्टान्तं प्रतिपादनाय द्वितीययोगस्याप्यावश्यकत्वात् । तथा च आद्यसूत्रं प्राणस्यान्तर्यामिपरत्वप्रतिपादनाय, द्वितीयन्तु अहमादिशब्दानामिति विवेकः । **यतोऽस्मिन्प्रकरण इति** ॥ बह्वध्यात्मसम्बन्ध इत्यस्य तात्पर्यार्थः **बहुस्थलसम्बन्ध इति** ॥ आत्मानमधिकृत्य वर्तमानो देहः अध्यात्मशब्देनोच्यते । बहुदेहसबन्धश्च बहुस्थलसम्बन्धः । तदेव सर्वगतत्वं तच्च विष्णुलिङ्गं तदत्रोक्तं वर्तत इति । एतद्वाक्यप्रतिपाद्यो विष्णुरेवेति नोपदेशविरोध इति भावः । नञा 'नेन्द्रोऽयं प्राण' इति प्रतिज्ञातार्थे हेतुसमर्पकत्वेन भाष्यं व्याचष्टे – **अथवेति** ॥ पूर्वम् 'उपदेशविरोध इति चेन्न' इति साध्य मध्याहृत्य तदुत्तरत्वेन भाष्यं व्याख्यातम्, इदानीं सूत्रोक्तनञर्थसम्बन्धितया भाष्यं व्याख्यायत इति भेदः । अनेन पूर्वपक्षहेतोः आत्मोपदेशस्याऽसिद्धेः 'इन्द्र एवायं प्राण' इति न मन्तव्यमिति भाष्याशयो वर्णित इति बोध्यम् । प्राणस्य परमात्मत्वमेव कुतः येनेन्द्रबहुपरमात्मसम्बन्धं

(अभिनवचन्द्रिका)

प्रतीम इति पृच्छति **कुत इति** ।। तदुत्तरत्वेन 'प्राणस्त्वं, प्राणः सर्वाणि भूतानी'ति भाष्यांशं व्याचष्टे– **प्राणस्त्वमित्यादिनेति** ।। 'प्राणस्त्वं प्राणः सर्वाणि भूतानी' त्यत:परमध्याहर्तव्यं वाक्यं व्याकुर्वन्नेवाह– **अस्य प्राणस्येत्यादिना** ।। 'अस्याध्यात्मत्वेन सर्वगतत्वोक्तेः विद्यमानत्वात्' इति शेषोक्तिः । 'अस्ये'त्यस्य प्राणस्येति व्याख्यानम् । 'अध्यात्मत्वेने'त्यस्याऽन्तर्यामित्वेनेति व्याख्यानमिति विवेकः । 'विद्यमानत्वा'दित्यस्याऽध्याहृतेन 'प्राणः परमात्मे'ति साध्येन सम्बन्धः । श्रुतेः उक्तार्थकत्वं बाधकोपन्यासेन द्रढयति – **अन्यथेति** ।। अन्यथा प्राणशब्दस्याऽस्मदुक्तपरमात्मपरत्वमनङ्गीकृत्येन्द्र-परत्वङ्गीकारे प्रश्नस्यैवाऽसम्भवात्, परिहारवाक्याऽसङ्गतेश्च, प्राणशब्दस्य 'परमात्मपरत्वमेवे'त्यध्याहृत-साध्येनाऽन्वयाङ्गीकारात् । परमात्मपरत्वेऽपि प्रश्नासम्भवपरिहारासङ्गती दोषौ भवत इत्यत आह– **अस्मत्पक्ष इति** ।। **उत्तर इति** ।। परिहार इति शेषः ।

## वाक्यार्थमुक्तावली

ॐ न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ॐ ।। **विश्वामित्रस्येति** ।। अवक्तारं विश्वामित्रं प्रतीत्यर्थः ।। **न चायमिन्द्र इति** ।। अन्तस्थाधिकरणन्यायेन ब्रह्मेन्द्रमग्निमित्यादिवदिति भावः । ननु प्रकरणादुपदेष्टुः प्रसिद्धेन्द्रत्वेऽपि प्राणो वाऽहमस्मीत्युपदेशः 'अहेयत्वादहं नामा' इत्युक्तरीत्या इन्द्रान्तर्यामिणि सावकाशः इत्याशङ्क्य परिहरति– **न चेति** ।। त्वामेव जानीयामित्युक्ते प्राणो वाऽहमित्युक्तत्वात् अहेयत्वादहमित्याद्यर्थस्यानुपपत्तेरिति भावः । नञध्याहरेणेति ।। **नञनुवृत्त्ये-त्यर्थः** ।। बह्वध्यात्मसम्बन्धो ह्यत्र विद्यत इत्यस्य नञ् हेतुत्वेनान्वयायोगात् । नञर्थेऽपि प्रबलतमलिङ्गा-देरिति हेतुवाक्याध्याहारम् अत्र च न चोपदेशविरोध इति प्रतिज्ञाध्याहारं च कृत्वा वाक्यं योजयति नेन्द्रोऽयमित्यादिना । सूत्रे तदित्यनुवर्तते । प्राण इति च । इति चेदित्यतः परं न चेति । न त्विति प्राणोऽनुगमादिति पदपञ्चकमनुवर्तते । आत्मोपदेशादित्येतत् प्रथमान्ततया विपरिणम्यात्मोपदेश इति चानुवर्तते । न च नञः सम्बन्धः, हिशब्दो हेतौ ततश्च न प्राणो विष्णुः । वक्तुर्बृहतीसहस्रं वक्तुर्विशिष्टशस्त्रशंसकतया परमाप्तं विश्वामित्रं प्रतीन्द्रेण प्राणतयात्मोपदेशादिति चेन्नेन्द्रोऽयं प्राणः किन्तु विष्णुरेव अनुगमादिति प्रागुक्तप्रबलतमलिङ्गादेर्जागरूकत्वात् । न चोपदेशविरोधः । यतोऽस्मिन्प्रकरणेऽध्यात्मनः स्वान्तर्यामितयोक्तस्य प्राणाख्यस्याध्यात्मनोऽधिकात्मनः परमात्मनः अध्यात्मम् आत्मसु देहेषु सम्बन्धबाहुल्यं बहुदेहगतत्वं विश्वामित्रादिसर्वगतत्वमेवेन्द्रेणोक्तं वर्ततेऽतो नायमिन्द्रेण प्राणतयात्मोपदेशो येन विरोधः स्यादिति सूत्रार्थमभिप्रेत्य पूर्वपक्षांशस्य प्रागेव विवृतत्वात्

(वाक्यार्थमुक्तावली)

बह्वध्यात्मसम्बन्धसिद्धान्तभाष्यं विवृणोति नेन्द्रोऽयं प्राण इत्यादिना अध्यात्मसम्बन्धशब्देनावेशो विष्णोरिन्द्रे विवक्षित ऐतरेयभाष्यं मनसि निधाय भाष्यं प्रकारान्तरेण व्याचष्टे ।। **अथवेति** ।। कुतो न स्वापेक्षयाऽयमुपदेश इत्याक्षिपति । तत्परिहारत्वेन प्रकारान्तरेण व्याचष्टे । **प्राणस्त्वमित्यादिनेति** ।। तेन हि यस्मादस्मिन्निन्द्रेऽध्यात्मनोऽधिकात्मनः परमात्मनः सम्बन्धभूमा आवेशबाहुल्यमस्ति आविष्ट-भगवदपेक्षयैवायमुपदेशः न स्वात्मना उपदेशः । कुतो न स्वात्मोपदेशः हि यस्मादस्मिन्प्रकरणे प्राणस्याध्यात्मत्वेनान्तर्यामित्वेनाध्यात्मसम्बन्धभूमा विश्वामित्रादिसर्वदेहसम्बन्ध उक्तोऽस्ति तस्मान्न स्वापेक्षयायमुपदेशः । स्वस्य जीवविशेषस्य सर्वदेहगत्वायोगात् इति सूत्रभाष्यार्थ उक्तो भवति । इन्द्रे भगवदावेशबाहुल्यानङ्गीकारे बाधकमाह अन्यथेति । प्रश्नपरिहारप्रकरणस्येन्द्राविष्टपुरुषविशेषविषयत्व-मनङ्गीकृत्येन्द्रविषयत्वाङ्गीकार इत्यर्थः । **उत्तर इति** । प्राणस्त्वमित्युत्तरग्रन्थ इत्यर्थः ।

## तत्त्वसुबोधिनी

ननु विश्वामित्रं प्रति उपदेष्टुः प्रसिद्धेन्द्रत्वेऽपि तदुपदेशगताहंशब्दस्याहेयत्वादहं नामा इत्यादिना विष्णुपरत्वसम्भवात् तदुपदेशस्य विष्णुविषयत्वं स्यादित्यत आह ।। **न चास्योपदेशस्येति** ।। त्वामेव जानीयामित्युक्ते प्राणो वा अहमस्मीत्युक्तत्वात् नास्याहंशब्दस्याहेयत्वनिमित्तकत्वं युक्तं किन्तु अस्मदादेशत्वमेवेति भावः । बह्वध्यात्मसम्बन्धो ह्यत्र विद्यते इत्यस्य नञा हेतुत्वेनान्वयायोगात् नञर्थे प्रबलतमलिङ्गादेरिति हेतुवाक्याध्याहारमत्र च न चोपदेशविरोध इति मत्वा प्रतिज्ञाध्याहारं च कृत्वा वाक्यं योजयति ।। **नेन्द्रोऽयमिति** ।। **अथवेति** ।। अनेनात्र इन्द्रे बह्वध्यात्मनः परमात्मनः सम्बन्धो विद्यते इत्यनन्तरं तदपेक्षयायमुपदेशो न स्वापेक्षया इत्यध्याहृत्य तत्र हेतुप्रदर्शकत्वेन हि यस्मात्प्राणः त्वं प्राणः सर्वाणि भूतानीति वाक्यमत्रोपदेशो विद्यते इति भाष्यं योजितं भवति । अनेन सूत्रे अस्मिन्निति पदं भाष्ये यथाक्रममस्मिन्प्रकरणे अस्मिन् इन्द्र इति व्याख्यातमित्युक्तं भवति । अन्यथेति स्वापेक्षयायमुपदेशश्चेदित्यर्थः । ननु कथं भवत्पक्षे प्रश्नसम्भवः परिहारवाक्यसङ्गतिश्चेत्यत आह ।। **अस्मत्पक्षे त्विति** ।।

## वाक्यार्थमञ्जरी

ॐ न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ॐ ।। बृहतीसहस्रं वक्तुर्विश्वामित्रस्य तं प्रतीति यावत् । प्राणो वा अहमस्मि ऋष इतीन्द्रेण स्वात्मन एव प्राणतया अभिधानान्न प्राणो

(वाक्यार्थमञ्जरी)

ब्रह्मेति चेन्न अस्मिन्निन्द्रे अधिकात्मनः परमात्मनः सम्बन्धभूमा सम्बन्धबाहुल्यं हि यस्मादस्ति अतस्तदपेक्षया प्राणो वा अहमस्मि ऋष इत्युक्तिर्न स्वात्मापेक्षयेत्यर्थः ॥ **तमिन्द्र इति** ॥ विश्वामित्रोक्त-बृहतीसहस्रं श्रुत्वा तुष्ट इन्द्रो विश्वामित्रं प्रत्युवाच हे ऋषे मे धाम गृहं प्रत्यागाः आगच्छ ते प्रियं वरं ददामि । त्वां त्वदन्तर्यामिणम् । मयि स्थितः प्राणः प्रकृष्टचेष्टकत्वात्प्राण इति । अहेयत्वादहमिति । असनान्निरसनान्मनुतेर्ज्ञानाच्चास्मीति च नामवानित्यर्थः । बृहतीसहस्रं बृहतीछन्दोपेतम् ऋक्सहस्रम् । महाव्रताख्यो यज्ञः ॥ **न चेति** ॥ त्वामेव जानीयामिति पूर्ववाक्यविरोधादिति भावः ॥ **प्राणस्त्वमिति** ॥ प्राणस्त्वयि सर्वभूतेष्वपि वर्तत इत्यर्थः । आत्मशब्दस्य देहपरत्वमुपेत्य व्याख्याय जीवपरत्वमुपेत्य प्रकारान्तरमाह ॥ **अथवेति** ॥ **ज्ञातपूर्वेन्द्रेति** ॥ अन्यथा त्वामित्यनुवादानुपपत्तिरिति भावः । सामान्यज्ञानेऽपि विशेषजिज्ञासया प्रश्नः सम्भवतीत्यत आह ॥ **सम्भवे वेति** ॥ **असङ्गतेरिति** ॥ तेन स्वस्वरूपादेरपृष्टत्वादिति भावः ॥

## विवृतिः

ननु विश्वामित्रं प्रत्युपदेष्टुः प्रसिद्धत्वेऽपि तदुपदेशगताहंशब्दस्याहेयत्वादहं नामेत्यादिना विष्णु-परत्वसम्भवात्तदुपदेशस्य विष्णुविषयत्वं स्यादित्यत आह ॥ **न चास्योपदेशस्येति** ॥ त्वामेव जानीया-मित्युक्ते प्राणो वा अहमस्मीत्युक्तत्वान्नास्याहंशब्दस्याहेयत्वनिमित्तकत्वं युक्तं किं त्वस्मदादेशत्वमेवेति भावः ॥ बह्वध्यात्मसम्बन्धो ह्यत्र विद्यत इत्यस्य नञा हेतुत्वेनान्वयायोगान्नयर्थे प्रबलतमलिङ्गादेरिति हेतुवाक्याध्याहारमत्र च न चोपदेशविरोध इति प्रतिज्ञाध्याहारं च कृत्वा वाक्यं योजयति ॥ **नेन्द्रोऽय-मिति** ॥ **अथवेति** ॥ अनेनात्रेन्द्रे बहुः अध्यात्मनः परमात्मनः सम्बन्धो विद्यत इत्यनन्तरं तदपेक्षयाऽय-मुपदेशो न स्वापेक्षयेत्यध्याहृत्य तत्र हेतुप्रदर्शकत्वेन हि यस्मात्प्राणस्त्वं प्राणः सर्वाणि भूतानीति वाक्यमत्रोपदेशो विद्यते इति भाष्यं योजितं भवति ॥ अनेन सूत्रे अस्मिन्निति पदं भाष्ये यथाक्रम-मस्मिन्प्रकरणेऽस्मिन्निन्द्र इति व्याख्यातमित्युक्तं भवति ॥ **अन्यथेति** ॥ स्वापेक्षयाऽयमुपदेशश्चेदित्यर्थः ॥ ननु कथं भवत्पक्षे प्रश्नसम्भवः परिहारवाक्यसङ्गतिश्चेत्यत आह ॥ **अस्मत्पक्षे त्विति** ॥ कीदृशोऽसावित्यस्योत्तर इति ॥ उत्तरः । उत्तरग्रन्थः ॥ प्राणस्त्वं प्राणः सर्वाणीत्यर्थः ॥

## सूत्रभाष्यम्

**॥ ॐ शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॐ ॥ ३० ॥**

(सूत्रभाष्यम्)

शास्त्रमन्तर्यामी । 'संविच्छास्त्रं परं पदम्' इति हि भागवते ।

'तत्तन्नाम्नोच्यते विष्णुः सर्वशास्तृत्वहेतुतः ।
न क्वापि किञ्चिन्नामास्ति तमृते पुरुषोत्तमम्' इति (च) पाद्मे ।

'अहं मनुरभवं सूर्यश्च' (ऋ.४-२६-१) इत्यादिवत् ॥ ३० ॥

## सत्तर्कदीपावली

ननु प्राणो वा अहमस्मीत्यादिना इन्द्रादिभिरभेदः प्राणस्योच्यते न तु तदन्तर्यामित्वमिति चेन्नैवम् । 'अन्तः प्रविष्टः शास्ता जनानाम्' 'य आत्मानमन्तरो यमयति' इत्यादिश्रुतिविरोधात् । प्राणोऽहमिति व्यपदेशात् इन्द्रस्य प्राणत्वे ग्रहोऽहमिति व्यपदेशाद्ग्रहाविष्टपुरुषस्यापि ग्रहत्वप्रसङ्गः । अतः सिंहवेषधारिणि नटे सिंहो जातो नट इतिवत् सर्वाधिष्ठात्रा प्राणशब्दवाच्येन विष्णुना इन्द्राद्यभेदव्यपदेशो नानुपपन्नः । तथा च पाद्मवचनम् ॥ तत्तन्नाम्नेति ॥ दृष्टश्चान्तर्यामिविषयतया अहंशब्दः श्रुत्यन्तरे तद्धै तत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे । अहं मनुरभवं सूर्यश्चेत्यादौ । वामदेवस्याहं मनुसूर्यादित्वं देवदत्तस्येव विरुद्धमेव । अतो वामदेवाद्यहेयतया अहंनामको मनुसूर्यनियमनादियोगेन मनुसूर्यादिशब्दार्थः । तथा च प्रह्लादवचनम् । सर्वगतत्वादनन्तस्य स एवाहमवस्थित इति । एतत्प्रतिपादयत्सूत्रमुपन्यस्य व्याचष्टे । शास्त्रेत्यादिना ।

## तत्त्वप्रदीपिका

न चात्रेन्द्रस्वरूपोपदेशः । नापि सर्वात्मत्वोपदेश आशङ्कनीयः । यतः ''शास्त्रदृष्ट्या तूपदेशो वामदेववत्'' । 'संविच्छास्त्रं परं पदं,' सर्वज्ञं नियन्तृ च परं पदं, प्राप्तव्योत्तमम् । अन्तर्याम्यभिप्रायेणैवायमुपदेशः । 'अहं मनुरभवं सूर्यश्च' इत्यादिवामदेववाक्यवत् । अतः परमात्मेन्द्राविष्टः 'प्राणो वा अहमस्म्यृषे प्राणस्त्वम्' इत्यादिना स्वात्मानं तत्तदन्तर्यामिणमुपदिशतीत्यभिप्रायः । तस्मान्नात्रेन्द्रस्य स्वरूपोपदेशः । नापि सर्वात्मत्वोपदेशश्चाऽऽशङ्कनीयः । अहन्त्वमादिशब्दानामन्तर्यामिणि वृत्तेर्दर्शितत्वात् । 'सप्तसु प्रथमा' इति सूत्राच्च । तथा च ब्रह्माण्डे—

यावज्ज्ञानेन मोक्षस्स्यात्तावज्ज्ञात्वाऽपि कौशिकः ।
अधिकज्ञानलब्ध्यर्थं मोक्षेऽधिकसुखाप्तये ॥

जानीयां त्वामिति प्राह तस्मा आह स केशवः ।
इन्द्राविष्टः प्राणनाम तथाऽन्याश्चाभिधाः प्रभुः ॥

(तत्त्वप्रदीपिका)

प्रकृष्टानन्दरूपत्वात्प्राण इत्यभिधीयते ।
अहेयत्वादहंनामाऽस्म्यसनान्मिनुतेरपि ।
ततो वेत्तेति च त्वं स पूर्णत्वात्सर्वनामकः ।
सर्वाणि बहुरूपत्वात्सर्वरूपेषु पूर्तितः ॥

प्रभूतत्वाद्भूतनामा सर्वरूपप्रभूततः ।
बहुरूपस्स भूतानीत्युक्तो विष्णुस्सनातनः ॥

सर्वैश्वर्यस्वरूपत्वादेष इत्यभिधीयते ।
स एव सूर्यसंस्थस्सँल्लोकांस्तपति केशवः ॥ इत्यादि ।

महैतरेयोपनिषद्भाष्येऽपि भगवान्भाष्यकृदेवानयोरर्थविशेषं स्पष्टीचकार ॥ अध्यात्मसम्बन्धशब्देनाऽवेशो हि विष्णोरिन्द्रे विवक्षितो भगवता । अन्येष्वप्यन्तर्यामिरूपेण सम्बन्धोऽस्त्येव । अस्मिन्निन्द्रे तु विशेषस्तात्कालिकः । अधिकात्मनः परमात्मनः सम्बन्धो ह्यध्यात्मसम्बन्धः । न हि स्वात्मनस्स्वस्य सम्बन्धो भवति । यद्यध्यात्ममत्रोच्यत इति विवक्षितं तर्ह्यध्यात्मभूमेत्येव स्यात् । सम्बन्धशब्दो व्यर्थः । तस्मादिन्द्रादिजीवेभ्यो विष्णोर्भेद एवात्र भगवतो विवक्षितः शास्त्रदृष्ट्या तूपदेशो वामदेववदिति । शास्तुरन्तर्यामिणो विष्णोस्सर्वशरीरे स्थितत्वात्सर्वनामाभिधेयत्वं चोक्तम् । 'अहं मनुरभवं सूर्यश्च' इत्यादिवत् । न हि मनुसूर्यादिर्भवति वामदेवस्तेषां पक्षेऽपि । सर्वप्रवृत्तिहीनतां हि ते मोक्षं वदन्ति । अत्र च 'अहं भूमिमददामार्याय' इत्यादिना प्रवृत्तिरेवोच्यत इत्यादि सविस्तरम् ।

'अहेयत्वादहं विष्णुस्स तु सर्वान्तरत्वतः ।
अस्यस्मीत्यादिभिश्शब्दैरुच्यतेऽन्योऽपि जीवत' इति ब्रह्मवैवर्ते ॥

## तत्त्वप्रकाशिका

नन्वत्र यदि प्राणपदेनेन्द्रेणापि विष्णुरेव स्वात्मादिसर्वगततयोच्यते तर्हि मयि प्राण इत्यादिप्रयोगः स्यात् । विष्णावहमित्यादिरूपोपदेशायोगात् इत्याशङ्कां परिहरत्सूत्रं पठित्वा शास्त्रपदं सप्रमाणकं व्याचष्टे ॥ **शास्त्रेति** ॥ एतत्प्राणस्य विष्णुत्वेऽपि प्राणोऽहमित्युपदेशो युज्यते । यतोऽयमुपदेशोऽन्तर्यामिरूप-भगवदपेक्षयेति सूत्रार्थे स्थितेऽन्तर्यामिण्यप्यहमादिप्रयोगः कथं सम्भवतीत्याशङ्कायां स्मृतिमेवाह ॥ **तत्तदिति** ॥ अन्तर्यामिण्यप्यहमादिशब्दप्रयोगादर्शनात्तदयोग इत्यतः सूत्रोक्तं दृष्टान्तं विवृणोति ॥ **अहमिति** ॥ यथा अन्तर्यामिविवक्षया वामदेवोऽहंमन्वादिशब्दान्प्रयुयुजे तथाऽयमुपदेशो युक्त इति भावः । न च तत्रापि विवादः । वामदेवस्य मन्वादित्वाभावात् । चैतन्यैक्यविवक्षियोक्तिरिति चेन्न । किमत्र साक्षादैक्यमुच्यते लक्षणया वा । नाद्यः । विरोधात् । न द्वितीयः । लक्षणाया अमुख्यत्वात् । सममेतदिति चेन्न । 'तत्तन्नाम्नोच्यत' इति सर्वशब्दानामन्तर्यामिण्येव मुख्यत्वोक्तेः ॥ ३० ॥

## गुर्वर्थदीपिका

अहंपदस्य तत्तद्देहविशिष्टचैतन्यवाचकत्वाद्देहविशिष्टैक्यं साक्षादैक्यम् । जहदजहल्लक्षणया चैतन्यमात्रैक्यलक्षणयैक्यमिति भावेन पृच्छति किमत्र साक्षादिति ।

## भावबोधः

शास्तुरन्तर्यामिणो विष्णोः सर्वशरीरे स्थितत्वात् सर्वनामाभिधेयत्वमित्यैतरेयभाष्यं मनसि निधाय सूत्रार्थमाह **एतत्प्राणस्येत्यादिना** ॥ भाष्ये पदार्थमात्रस्योक्तत्वात् सूत्रवाक्यार्थमाह **यत इति** ॥ सूत्रगत'दृष्टि'पदार्थो भगवदपेक्षयेति । सूत्रगत'तु'शब्द उपदेशस्त्विति वाऽन्वितः । शास्त्रदृष्ट्यैवेत्यवधारणार्थो बोद्धव्यः । 'न हि मनुसूर्यादिर्भवति वामदेवस्तेषां पक्षेऽपि' इत्यैतरेयभाष्यं मनसि निधायाह वामदेवस्य मन्वादित्वाभावादिति ।

## भावदीपः

॥ ॐ शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॐ ॥ **इत्यादीति** ॥ त्वयि प्राण इत्यादिरादिपदार्थः ॥ इत्याशङ्कां परिहरदिति ॥

'तदैक्यवाचितच्छब्दाः अपि तद्गतववाचकाः ।
ऐक्यार्था नैव ते सर्वे भिन्नरूपा यतस्सदा' ।

सप्तसु प्रथमा यस्मात् ।

इति बृहद्भाष्योक्तसमाधौ सत्यपि समाध्यन्तरोक्त्या परिहरदित्यर्थः । भाष्ये अनुक्तेरन्यगतलिङ्गादीनामपि तद्गतभगवदपेक्षया युक्तेरिति न्यायविवरणोक्तं सूत्रांशार्थमाह ॥ **यतोऽयमिति** ॥ **स्मृतिमिति** ॥ स्मृतौ स्वातन्त्र्यनिमित्तेन तत्तदन्तर्यामी अहमादिपदैरुच्यत इत्युक्त्या लक्षणाप्रसङ्गो नेत्युक्तम् । न क्वापीत्युक्त्या परममुख्यवृत्त्येत्यपि गम्यते । कल्पनोपदेशादिति वक्ष्यमाणन्यायेनान्यत्र निगमनिघण्ट्वादिसिद्धमुख्यवृत्तेरभ्युपगमेन न क्वापीति सामान्यनिषेधायोगात् स्वातन्त्र्यं तत्र मुख्यं स्यादित्यनुव्याख्यानोक्त्या शास्तृत्वत इति स्वातन्त्र्यनिमित्तकत्वोक्तेश्च । कथमन्यत्र वृत्तिरित्यतः तमृत इति स्मृतिशेषः । तत्तच्छब्दपरममुख्यार्थे ईश्वरसम्बन्धात् अन्यत्र वृत्तिर्न तु स्वतः शारीररूपक-

(भावदीपः)

विन्यस्तगृहीतेरिति वक्ष्यमाणन्यायात् । न च तावताऽन्यत्रोपचारः शङ्क्यः । समाकर्षादित्यत्र परममुख्य-मुख्यभेदेन वृत्तिद्वयस्य उपपादयिष्यमाणत्वात् इति भावः । स्वातन्त्र्यस्य शब्दप्रवृत्तिनिमित्तत्वं तु तदधीनत्वादर्थवदित्यत्र सेत्स्यति । स्मृतौ शास्तृत्वत इति स्वातन्त्र्यरूपमहायोगोक्तिरूपलक्षणम् ।

अहंनामा हरिर्नित्यम् अहेयत्वात्प्रकीर्तितः ।
त्वं चासौ प्रतियोगित्वात् परोक्षत्वात् स इत्यपि ।
सर्वान्तर्यामिणि हरौ

इत्यादितत्वनिर्णयोक्तश्रुत्या

अहेयत्वादहंनामाऽस्म्यसनान्मिनुतेरपि ।
ततो वेत्तीति च त्वं सः पूर्णत्वात्सर्वनामकः ।

इत्याद्यैतरेयभाष्योक्तब्रह्माण्डस्मृत्याऽहेयत्वाऽऽभिमुख्यादिप्रवृत्तिनिमित्तकत्वेन तथा 'अ इति ब्रह्म' तत्रागतमहमिति तस्योपनिषदहमिति ततोऽहंनामाऽभवदित्यादिश्रुत्युक्तयोगेन चेत्यपि ज्ञेयम् । अहमादि-शब्दैरन्तर्याम्युक्तिप्रकारस्त्वहमादिशब्दाः प्रत्यगादिवाचकत्वेन तावत् प्रसिद्धाः । प्रत्यगादयः सर्वदा पिण्डीभूता एव । तत्राहेयत्वादिनिमित्तं अपराधीनमन्तर्यामिणि तत्प्रेरितानि जीवादौ । तदेवं मुख्यामुख्य-त्वाभ्यां पिण्डविषयं शब्दमविवेकिनो बाह्येषु जीवादिष्वेव प्रयुंजते । यथा दहतिशब्दं काष्ठे । प्राज्ञास्त्वमुख्यमंशमनादृत्य मुख्यार्थे हरौ प्रयुंजते । परैरप्यहंशब्दस्येदमनिदंरूपपिण्डार्थता अङ्गीकृता एवेति । तथाऽस्मदादिरूपपदेषू विहितानामस्मीत्यादितिङन्तपदानां तद्वृत्तौ वृत्तेः सुलभत्वात् इत्यादिना तत्वनिर्णयटीकोक्तरीत्या बोध्यः ॥ **अहमादीति** ॥ अहमादिशब्दप्रयोगादर्शनादित्यर्थः । स्मृतिगतोच्यत **इतिपदश्यावत्यं वक्तुं** न हि मनुसूर्यादिर्भवति वामदेव इत्याद्यैतरेयभाष्योक्तयुक्तिं किञ्चिद्विवरितुमाह ॥ **न च तत्रेति** ॥ **साक्षादिति** ॥ शुद्धचैतन्यलक्षणामनाश्रित्य विशिष्टयोरैक्यमित्यर्थः । एतत् अमुख्यत्वम् ॥ ३० ॥

## अभिनवचन्द्रिका

(सू.३०) **न च तत्रापीति** ॥ वामदेवप्रयुक्ताऽहमादित्वाभावादहमादिशब्दानामन्तर्यामिपरत्वाभावेऽहं मनुरित्यादिवाक्यानामप्रामाण्यं स्यादिति भावः । **चैतन्यैक्यविवक्षयेति** ॥ 'अहं मनु'रित्यादिवामदेवोक्तिः वामदेवादिचैतन्यैक्यविवक्षया प्रवृत्ता । तस्य च भावान्नाप्रामाण्यप्रसङ्ग इति भावः । **इति चेन्नेति** ॥

(अभिनवचन्द्रिका)

विकल्पाऽसहत्वादिति शेषः । **किमत्रेति** ॥ अहंमन्वादिशब्दानां तत्तच्चैतन्यमात्रवाचित्वमङ्गीकृत्य 'अहं मनु'रित्यादिना ऐक्यमुच्यत इत्यभ्युपगम्यते, उत अहमादिशब्दानां विशिष्टवाचित्वगङ्गीकृत्य चैतन्यलक्षणया ऐक्यमुच्यत इति पक्षोऽभ्युपगम्यत इति विकल्पार्थः । **विरोधादिति** ॥ व्युत्पत्तिविरोधादित्यर्थः ।

## वाक्यार्थमुक्तावली

ॐ शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॐ । शास्तुरन्तर्यामिणो विष्णोः सर्वशरीरे स्थितत्वात् सर्वनामाभिधेयत्वमित्यैतरेयभाष्यं मनसि निधाय सूत्रार्थमाह ॥ **एतत्प्राणस्येत्यादिना** ॥ तुशब्दोऽप्यर्थ इत्यभिप्रेत्योक्तं **विष्णुत्वेऽपीति** ॥ हेत्वर्थ इत्यभिप्रेत्योक्तं **यत इति** । सूत्रगतदृष्टिपदार्थो भगदपेक्षया एवेति । **कथं सम्भवतीति** ॥ प्रमाणाभावान्न कथमपीत्यर्थः ॥ **प्रयोगादर्शनादिति** ॥ न हि प्रमाणमात्रेण शक्तिनिश्चय इति भावः । **चैतन्यैक्यविवक्षयेति** ॥ आत्मैक्यविवक्षयेत्यर्थः ॥ **साक्षादैक्यमिति** ॥ मुख्यार्थविशिष्टयोरैक्यमित्यर्थः । यद्वा वामदेवस्य मन्वादित्वाभावादिति । विशिष्टयोरैक्यायोगादिति भावः ॥ **चैतन्यैक्येति** ॥ शुद्धचैतन्यैक्यविवक्षयेत्यर्थः । साक्षादिति । चैतन्यैक्यं वचनवृत्त्या चोच्यते उत विशिष्टपरशब्दस्य भागत्यागलक्षणया वेत्यर्थः । विरोधादिति । वचनवृत्या विशिष्यैक्यपरस्य शुद्धचैतन्यैक्यवाचकत्वविरोधात्सिद्धान्तविरोधाच्चेत्यर्थः । **सममेतदिति** । प्रयोगस्यापि लक्षणयैवोपपत्तेरिति भावः । सूत्रार्थस्तु टीकायामेव स्पष्टः ।

## तत्त्वसुबोधिनी

सूत्रगतदृष्टिपदार्थो भगवदपेक्षयेति । सूत्रगततुशब्दः उपदेशस्त्विति वा अन्वितः शास्त्रदृष्ट्यैवेत्यवधारणार्थो वा बोद्धव्यः ॥ **विरोधादिति** ॥ विरुद्धधर्माधिकरणत्वेन विशिष्टैक्यानुमानादिविरुद्धत्वादित्यर्थः । नन्वहंशब्दस्य स्वात्मनि रूढस्यान्तर्यामिपरत्वेऽमुख्यत्वं सममेवेति शङ्कते ॥ **सममेतदिति** ॥

## वाक्यार्थविवरणम्

भाष्ये 'संविच्छास्त्रं परं पदम्' इति भागवतोक्तं तत्र नारदेन ध्यातं भगवत्स्वरूपं संवित् स्वपरगताशेषविशेषविषयकज्ञानरूपं शास्त्रं सर्वान्तर्यामिपरम् उत्तमं मेयं पदं प्राप्यं च ॥

इति श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रभाष्येतत्त्वप्रकाशिकाटिप्पण्यां
श्रीनिवासतीर्थकृतायां प्रथमाध्यायस्य प्रथमपादः ।

## वाक्यार्थमञ्जरी

ॐ शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॐ ॥ तुरेव । शास्तीति शास्त्रमन्तर्यामिदृष्ट्या तदपेक्षयैवाहमित्युपदेशः । न तादात्म्येन । वामदेववत् वामदेवोपदेशवत् । यथा वामदेवान्तर्याम्यपेक्षया अहं मनुरभवं सूर्य इत्याह तद्वदित्यर्थः । भाष्ये सम्यङ्निर्दोषमात्मानं वेत्तीति संवित् । शास्त्रमन्तर्यामि । पद्यत इति पदम् उत्तमं प्राप्तव्योत्तममिति प्रथमभागवतार्थः । साक्षाद्विशिष्टयोरेव लक्षणया । विशिष्टांशत्यागेन चिन्मात्रलक्षणया वा ॥ **सममिति** ॥ अन्तर्यामिति लक्षणाङ्गीकारादिति भावः ॥

## विवृतिः

सूत्रगतदृष्टिपदार्थो भगवदपेक्षयेति ॥ सूत्रगततुशब्दः उपदेशस्त्विति वाऽन्वितः शास्त्रदृष्ट्यैवेत्यवधारणार्थो वा बोध्यः । **विरोधादिति** । विरुद्धधर्माधिकरणत्वेन विशिष्टैक्यानुमानादिविरुद्धत्वादिति भावः (अर्थः) । नन्वहंशब्दस्यात्मनि रूढस्यान्तर्यामिपरत्वेऽमुख्यत्वं सममेवेति शङ्कते ॥ **सममेतदिति** ॥

## सूत्रभाष्यम्

**॥ ॐ जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॐ ॥३१॥**

'तावन्ति शतसंवत्सरस्याह्नां सहस्राणि भवन्ति' (ऐ.आ.२-२-४) इति जीवलिङ्गम् । प्राणसंवादादिमुख्यप्राणलिङ्गम् । तस्मान्नेति चेन्न । अन्तर्बहिः सर्वगतत्वेनेत्युपासात्रैविध्यादिहाश्रितत्वाच्च । 'स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत' (ऐ.आ.२-४-३) । 'स एतेमव पुरुपं ब्रह्म ततममपश्यत्' (ऐ.आ.२-४-३) 'एतद्धस्म वै तद्विद्वानाह महिदास ऐतरेय' (ऐ.आ.२-१-८) इत्यादिना ।

'महिदासाभिधो जज्ञे इतरायास्तपोबलात् ।
साक्षात्स भगवान्विष्णुर्यस्तन्त्रं वैष्णवं व्यधात्' ॥

इति (च) ब्रह्माण्डे । तत्तदुपासनायोग्यतया च पुरुषाणाम् ।

'केपाञ्चित्सर्वगत्वेन केपाञ्चिद्धृदये हरिः ।
केपाञ्चिद्बहिरेवासावुपास्यः पुरुषोत्तम' इति ब्राह्मे ॥

(सूत्रभाष्यम्)

'अग्नौ क्रियावतां विष्णुर्योगिनां हृदये हरिः ।
प्रतिमास्वप्रबुद्धानां सर्वत्र विदितात्मनाम्' इति च ॥ ३१ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रभाष्ये प्रथमाध्यायस्य प्रथमः पादः ॥

## सत्तर्कदीपावली

ननु जीवोऽत्र प्राणो भवितुमर्हति । एष इमं लोकमभ्यार्चत्पुरुषरूपेण य एष तपति तं शतं वर्षाण्यभ्यार्चत् । तस्माच्छतं वर्षाणि पुरुषायुषो भवन्तीति प्रस्तुतस्य प्राणस्य शतवर्षायुष्ट्वश्रवणात् । इदमेव शतायुष्ट्वं जीवलिङ्गमनुसन्धीयते । तस्य वा एतस्य बृहतीसहस्रस्य सम्पन्नस्य षट्त्रिंशतमक्षराणां सहस्राणि भवन्ति तावन्ति शतसंवत्सरस्याह्नां सहस्राणि भवन्तीति । मुख्यप्राणो वात्र प्राणशब्देन प्रतिपाद्यः स्यात् । ता अहिंसन्त अहमुक्थ्यमस्मीति ता अब्रुवन् । हन्तास्माच्छरीरादुत्क्रामाम तद्यस्मिन्नुत्क्रान्त इदं शरीरं पत्स्यति तदुक्थं भविष्यतीत्यादिना प्रस्तुतस्य प्राणस्येन्द्रियैः संवादशरीरोत्क्रमणादिश्रवणात् । इदं च मुख्यप्राणलिङ्गत्वेन प्रसिद्धं श्रुत्यन्तरे । अथ ह प्राणा अहं श्रेयसि व्यूदिरे अहं श्रेयानस्मीत्यादावित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ **जीवेत्यादिना** ॥ यज्जीवादिलिङ्गमुक्तं तज्जीवमुख्यप्राणान्तर्यामिणि विष्णावेवोपपद्यते । तस्य नित्यस्याप्यस्मिन्देहे शतवर्षावस्थानसम्भवात् मुख्यप्राणद्वारा इन्द्रियसंवादशरीरोत्क्रमणादिसम्भवात् । अतो जीवाद्यन्तर्यामित्वेन स्थितो विष्णुरेव प्राणशब्दाभिधेयो न जीवादिः प्रतिपाद्यते स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यतेत्यादिना । अत्र जीवान्तर्यामिरूपेण अवताररूपेण सर्वगतरूपेण भगवान्विष्णुस्तत्तद्रूपोपासकयोग्यताभेदादित्यर्थः ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीमद्ब्रह्मसूत्रभाष्यटीकायां
श्रीपद्मनाभतीर्थभट्टारकविरचितायां सत्तर्कदीपावल्यां प्रथमाध्यायस्य प्रथमः पादः ॥

## तत्त्वप्रदीपिका

जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ।

'तावन्ति शतसंवत्सरस्य' इति जीवलिङ्गम् । 'शतायुर्वै पुरुष' इति श्रुतेः । तावन्ति पुरुषायुष इति चास्ति । प्राणसंवादस्तन्निर्गमे शरीरपातस्तत्प्रवेशे शरीरोत्थानमिति मुख्यप्राणलिङ्गं 'ता अब्रुवन्हन्तास्माच्छरीरादुत्क्रमाम' इत्यादिनोच्यते । तस्मान्न विष्णुरत्रोच्यत इति चेन्न । उपासात्रैविध्यस्य विद्यमानत्वात् । स एतमेव सीमानं विदार्येत्यादिनाऽन्तःप्रवेशवचनादन्तरुपासनं गम्यते । सीमा शिरोमध्यं, 'द्वाः'

(तत्त्वप्रदीपिका)
सुषुम्नानाडी। तस्मात्तस्यैव जीवमुख्यप्राणलिङ्गं, तद्भगवदधीनत्वात्तयोः। ततमं तततमम्। 'समाने लोप' इति सूत्रात्।

एवं स भगवान्विष्णुर्महिदासाभिधः प्रभुः।
जानन्नित्योदितज्ञानादाह देवीमिदं वचः॥ इति चैतरेयसंहितायाम्।

तत्तदुपासनायोग्यतया च पुरुषाणाम्। अयमर्थः, त्रिविधोपासनायोग्यतया पुरुषाणां च त्रैविध्यादुपासनात्रैविध्यमिहाऽश्रितं युज्यते। मनुष्याणां प्रायो बहिः, गन्धर्वादीनामन्तः, देवानां सर्वगतत्वेन। तस्माद्विष्णुरेव प्राण इति सिद्धम्॥

इति तत्त्वप्रदीपिकायां प्रथमाध्यायस्य प्रथमः पादः॥

## तत्त्वप्रकाशिका

पुनरुक्तमाक्षिप्य समादधत्सूत्रमुपन्यस्याऽऽक्षेपांशं तावद् व्याचष्टे॥ **जीवेति**॥ अथापि नात्रोक्तप्राणो विष्णुः। 'एष इमं लोकमभ्यार्चत्पुरुषरूपेण य एष तपति प्राणो वाव तदभ्यार्चत्प्राणो ह्येष य एष तपति तं शतं वर्षाण्यभ्यार्चत्तस्माच्छतं वर्षाणि पुरुषायुषो भवन्ति' इति प्राणस्योक्तशतायुष्ट्वस्योपर्यपि तावन्तीत्यादिना बहुस्थलेष्वनुसन्धानात्। शतायुष्ट्वस्य जीवलिङ्गत्वात्। शतायुर्वै पुरुष इत्यादिश्रुतेः। 'ता अहिंसन्ताऽहमुक्थमस्म्यहमुक्थमस्मि' इति प्राणस्येन्द्रियैः सह कलहश्रवणात्। 'प्राण उदक्रामत्तत्प्राण उत्क्रान्तेऽपद्यत प्राणः प्राविशत्तत्प्राणे (प्र) पन्न उदतिष्ठत्' इत्युत्क्रमणप्रवेशादिश्रुतेः। तथा 'प्राणो वंश इति स्थविरः शाकल्यस्तद्यथा शालावंशे सर्वेऽन्ये वंशाः समाहिताः स्युरेवमस्मिन्प्राणे चक्षुः श्रोत्रं मनो वागिन्द्रियाणि शरीरं सर्व आत्मा समाहितः' इति सर्वजीवेन्द्रियदेहधारकत्वोक्तेश्च। प्राणसंवादादीनां च मुख्यप्राणलिङ्गत्वेन 'अथ ह प्राणा अहं श्रेयसि व्यूदिरे' इत्यादिश्रुतिसिद्धत्वात्। उदासीनौ च तावास्तां केशवश्चाब्जसम्भव इति विष्णोः विवादादावौदासीन्योक्तेश्च। अतोऽत्र प्राणनिष्ठतया जीवमुख्यप्राणलिङ्गसद्भावात्तयोः प्राणत्वमिति भावः। परिहारांशं व्याचष्टे॥ **नेति**॥ विष्णुरेवायं प्राणो न जीवादि। लिङ्गानां तदन्तर्यामिभगवद्विषयतयोपपत्तेः। किमर्थमन्तर्यामिकथनमिति चेत् अन्तरादिभेदेन भगवदुपासनस्य त्रैविध्यादेतत्प्रकरणे तत्रैविध्यस्योक्तत्वाचेति भावः। अत्रोपासात्रैविध्यमुच्यते इत्यत्र किं लिङ्गमित्यत आह॥ **स इति**॥ स भगवानेतमेव मस्तकसीमानं विदार्यैतया द्वारा सुषुम्नया हृदयं प्राप्त इत्यन्तरुपासनायोच्यते। स प्रागन्तःस्थो भगवानेतं प्राप्तं पुरुषमात्मानं ततमं ब्रह्माऽपश्यदिति सर्वगतोपासनार्थमुच्यते। महिदास इति बहिरुपासनार्थमुच्यते। न च वाच्यमत्र स्वरूपमात्रमुच्यते

(तत्त्वप्रकाशिका)

**नोपासनार्थमिति** । उपासनं विनोक्तिप्रयोजनाभावात् । न हि महिदासो मुनितयोच्यते । वैयर्थ्यादेव । महिदासस्य विष्णुत्वं कुत इत्यत आह ॥ **महिदासेति** ॥ नन्वेकविधोपासनया सर्वेषां ब्रह्मापरोक्षसम्भवात् किमुपासात्रैविध्येन इत्यतः सूत्रशेषं व्याचष्टे ॥ **तत्तदिति** ॥ नैकविधोपासनया सर्वेषां ब्रह्मज्ञानम् । अन्तरादिविविधोपासनयोग्यत्वादित्यर्थः । कुतः पुरुषाणामुक्तानेकविधोपास्तियोग्यतेत्यत आह ॥ **केषाञ्चिदिति** ॥ अत्रैव विशेषप्रमाणमाह ॥ **अग्नाविति** ॥ अग्नौ प्रतिमास्विति बहिरुपासनोपलक्षणम् । अतोऽन्यलिङ्गानां तदन्तर्यामिविवक्षयोपपत्तेः विष्णुरेवायं प्राण आनन्दमयश्चेति युक्ता तज्जिज्ञासेति सिद्धम् ॥ (३१, अ०१२)

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्रभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां श्रीमत्तत्त्वप्रकाशिकायां प्रथमाध्यायस्य प्रथमः पादः ॥

## गुर्वर्थदीपिका

यद्यपि प्राणो वाव तदभ्यार्चदिति वाक्ये प्राणपदमप्यस्ति तथाऽपि शतायुष्ट्वलिङ्गबलात्तदपि जीवपरमेवेति भावः । स प्रागन्तस्थो भगवानित्यत्र सप्राक्पदाभ्यां जीवेन सहाऽऽगतोऽन्तर्यामी जीवान्तर्यामी एतं मुनीनामुपासनाय मूर्धद्वारा हृत्पुण्डरीकाभ्यन्तरे प्राप्तं पुरुषं पूर्णषड्गुणमात्मानं स्वामिनं 'तनु विस्तारे' इति धातोः डप्रत्यये कृते तः विस्तृतः अतिशयेन तः ततमः तं ततमं ब्रह्मापश्यदिति योजना । ननु भगवानेव स्वरूपान्तरं व्याप्तमपश्यदित्युच्यते । स च नोपासक इति चेत्सत्यम् । अन्ततस्तद्भक्तानामुपासार्थमेव तत्प्रसञ्जनमिति भावः । मुनितया ऐतरेयोपनिषद्द्रष्टृतयेत्यर्थः । कैरप्यनधीतपूर्वोपनिषदुपदेष्टुः तद्द्रष्टृत्वस्यापि सिद्धत्वेन तन्मात्रकथने वैयर्थ्यमेवेति भावेनोक्तं वैयर्थ्यादेवेति । अग्निप्रतिमयोः भगवदुपास्तिकथनेऽपि वहिःस्थितभगवद्रूपस्यैवोपासनायाः स्मृतावकथनात्प्रकृतासङ्गतिरिति शङ्कापरिहारायोक्तं बहिरुपासनोपलक्षणमिति । अत्र शतायुषः पुरुषस्य हृद्गते हरावपि शतायुष्ट्वसम्भवात्सर्वचेष्टके विवादकर्तृत्वस्यापि सम्भवादुभयविधजीवलिङ्गस्थलद्वयेऽपि तद्वाचकतया प्रसक्तप्राणपदं चान्तर्यामिहरिविषयकमेवेति भावेनोक्तम् । अतोऽन्यलिङ्गानामिति । युज्यन्त इति योगाः इत्यर्थः । तस्य च भावप्रधानत्वे तासूपासनासु योग्यत्वादित्यर्थसिद्धिमभिप्रेत्याह भगवान्भाष्यकारः 'तत्तदुपासनायोग्यतया' इति ।

इति श्रीमद्वादिराजपूज्यचरणविरचितायां गुर्वर्थदीपिकायां प्रथमाध्यायस्य प्रथमः पादः ।

# भावबोधः

भाष्योदाहृते तावन्ति शतसंवत्सरस्याह्नां सहस्राणि भवन्तीत्यत्र शतसंवत्सरत्वं प्राणनिष्ठं न भवति। बृहतीसहस्रवर्णानां शतसंवत्सरस्याह्नां च षट्त्रिंशत्सहस्रत्वेन संख्यासाम्यस्यैवोक्तेरित्यतः प्राणनिष्ठशतायुष्ट्वप्रतिपादकवाक्यं स्वयमुदाहरति– **एष इमं लोकमिति** ॥ तर्हि भाष्ये तत्किमर्थ-मुदाहृतमित्यत आह– उपर्यपि तावन्तीत्यादिना। **बहुस्थलेष्वनुसन्धानादिति**। उपनिषदः शतायुष्ट्वरूपजीवलिङ्गे तात्पर्यमस्तीति ज्ञापयितुं भाष्ये तदुदाहरणमिति भावः। **विवादादा-वौदासीन्योक्तेश्चेति**। तथा च प्राणसंवादादि विष्णोर्निरवकाशमिति भावः ॥ **जीवलिङ्गानामिति** ॥ अनेन अन्यगतलिङ्गानां तद्गतभगवदपेक्षया युक्तेरिति न्यायविवरणं व्याख्यातं भवति। भिन्नत्वशङ्का-व्यावृत्त्यर्थमाह– **आत्मानमिति**। ततममिति 'त'कारस्य व्याप्त्यभिधायकत्वादतिशयेन तः ततम इति वा। अतिशयेन तमप्प्रत्ययविधानादतिशयेन ततस्तततम इति वा ततमित्येतत्तततममित्यर्थकमिति भावः।

ननु 'एतद्ध स्म वै तद्विद्वानाह हिरण्यदन् बैद' इति हिरण्यदन् बैदवन् महिदासोऽपि ऋषित्वेनोच्यतामित्यत आह– **न हि महिदासो मुनितयोच्यत** इति ॥ **वैयर्थ्यादेवेति** ॥ अस्या उपनिषद ऐतरेयसंज्ञयैवेतरापुत्रस्य महिदासस्य ऋषित्वसिद्ध्या तदुक्तिनैष्फल्यादित्यर्थः।

अथ वा ऋषिमात्रत्वे महिदासस्य 'इतः प्रदाना ह्येत इतः सम्भृता' इत्यादिना देवतापद-प्रदातृत्वतत्पोषकत्वादीनामुपास्यब्रह्मधर्माणामुक्तिनैष्फल्यादित्यर्थः।

यद्वा महिदासस्य मुनित्वेनाप्युक्तिरिष्टा। मुनित्वेनोक्तिर्न तु ब्रह्मतयेति न युक्तम्। 'इतः प्रदाना ह्येत' इत्यादीनां ब्रह्मधर्मवाचिनां विरुद्धार्थत्वादित्यर्थः ॥ **विशेषप्रमाणमिति** ॥ पूर्वं केषाञ्चि-दित्येवोक्तत्वात् सामान्यत उपासकत्रैविध्ये प्रमाणम्। इदन्तु क्रियावतामित्याद्युक्त्या त्रिविधोपासके विशेषप्रमाणमित्यर्थः। नन्वग्रावित्यत्र बहिरुपास्तिर्नोच्यते। अग्नौ प्रतिमास्वित्यनेन तद्ग्रहणे सूर्यादौ विष्णूपास्तेर्बहिरुपास्तित्वं न स्यादित्यत आह– **बहिरुपासनोपलक्षणमिति** ॥

अत्राद्ये– ब्रह्मशब्ददेवोपास्यत्वादिरूपस्वपक्षसाधकोक्तिः। लिङ्गापेक्षया वाक्यस्य दुर्बलत्वेऽपि अस्मच्छब्दोत्तमपुरुषयुक्तत्वेन प्राणो वा अहमस्मीतीन्द्रप्रयुक्तवाक्यस्य निरवकाशतया प्राबल्यात् तन्न्यायेन इन्द्रादिप्रापकश्रुतिलिङ्गानामपि सावकाशत्वासिद्धेश्च। द्वितीये वाक्यरूपं बाधकमाशंक्य तस्यान्तर्यामिपरत्वेन

(भावबोधः)

सावकाशत्वोक्त्या तदुद्धारः । तृतीये तर्हि मयि प्राण इति प्रयोगः स्यादित्याशङ्कानिरासायान्तर्यामि-विवक्षयाऽहमादिशब्दप्रयोगस्य सदृष्टान्तमुपपादनम् । चतुर्थे तृतीयसूत्रोक्तरीत्याऽसिद्धसावकाशत्वानामपि जीवमुख्यप्राणलिङ्गानामन्तर्यामिविवक्षया तदुक्तौ, तदुक्तौ प्रयोजनं वक्तुं तद्रूपबाधकमाशङ्क्य तदुक्तौ प्रयोजनोक्तिः । तत्राप्यन्तर्यामिविवक्षया कथनस्यान्तरादिभेदेनोपासात्रैविध्यादिति प्रयोजनमुक्त्वा तदसिद्धिशङ्कापरिहाराय तत्साधकत्वेनान्तरत्वादित्रैविध्योक्त्यन्यथानुपपत्तिम् 'आश्रितत्वादिह' इत्यनेन उक्त्वा, नन्वेकविधोपासनयैवापरोक्षज्ञानसम्भवादित्युक्तेः स्वरूपकथनमात्रपरत्वेनाप्युपपत्तेः किमुपासनात्रैविध्येनेत्याशङ्कापरिहाराय तद्योगादित्युक्तमिति हेतूक्तिक्रम इति सूत्रक्रमः ।

अत्राद्यमधिकरणपञ्चकमध्यायपादपीठत्वेनैका पेटिका । तत्र आद्ये– ब्रह्मजिज्ञासाकर्तव्यत्वोक्तिः । द्वितीये– जिज्ञास्यब्रह्मणो जन्मादिकारणलक्षणत्वस्योक्तिः । तृतीये– तत्र प्रमाणोक्तिः । चतुर्थे– उक्तप्रमाणानामन्यपरत्वनिरासाय विष्णौ समन्वयोक्तिः । पञ्चमे– स एव अखिलवेदमुख्यार्थ इति समन्वयसूत्रीय 'तं'शब्दार्थसमर्थनम् । उत्तराधिकरणसप्तकमन्यत्र प्रसिद्धनामात्मकशब्दसमन्वय-प्रतिपादकत्वेनैका पेटिका । तत्राद्ये– गुणिसामान्यवाचकशब्दानां समन्वयोक्तिः । द्वितीये– वस्तुविशेष-निष्ठेन्द्रादिबहुनामसमन्वयसिद्धिफलकलिङ्गसमन्वयोक्तिः । तदुत्तराधिकरणचतुष्टयमतिदेशाधिकरणत्वेना-वान्तरपेटिका । तत्राऽऽद्ये– अधिभूतवाय्वाकाशादिशब्दानां, द्वितीये अध्यात्मवाचकप्राणादिशब्दानां, तृतीये सूत्रोक्तोपोद्बलितान्यपरत्वशङ्काविषयज्योतिरादिशब्दानां, चतुर्थे अधिदैवगतगायत्र्यादिशब्दानां समन्वयोक्तिः । अन्त्ये बहुश्रुतिलिङ्गप्रापितान्यपरत्वशङ्काविषयप्राणादिशब्दानां समन्वयोक्तिरिति ॥

**इति श्रीमद्रघुवर्यतीर्थपूज्यपादशिष्यरघूत्तमयतिकृते**
**श्रीमज्जयतीर्थचरणविरचिततत्त्वप्रकाशिकाभावबोधे प्रथमाध्यायस्य प्रथमः पादः ॥ १ ॥**

## भावदीपः

॥ ॐ जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥ **अथापीति** ॥ इन्द्रकृतोपदेशस्य सावकाशत्वेऽपीत्यर्थः । नेति चेदित्यत्र नेति प्रतिज्ञांशस्यार्थः ॥ **नात्रोक्तप्राणो विष्णुरिति** ॥ हेत्वंशं विवृण्वानः भाष्ये बृहतीसहस्रवर्णानां शतसंवत्सरस्यान्हां च षट्त्रिंशत्सहस्रत्वेन सङ्ख्यासाम्यस्यैवोक्तेः शतायुष्ट्वलिङ्गस्य प्राणस्थताभिव्यक्तये 'अभ्यार्चच्छतवर्षाणि' इत्याद्यनुभाष्योक्तं पूर्ववाक्यमाह ॥ **एष इति** ॥ लोकं ब्रह्मादिशरीरं पुरुषरूपेण अन्तर्यामिरूपेणाभ्यार्चत् प्राप्नोत् ।

(भावदीपः)

प्रविवेशेत्यर्थः । तदेव कार्यलिङ्गेन दर्शयति ॥ **य एष इति** ॥ सूर्यमण्डले स्थित्वा तपतीत्यर्थः । य एष इत्युक्तं व्यनक्ति **प्राणो वावेति** ॥ तं लोकम् । भाष्ये तावन्तीति वाक्योक्तेरुपयोगमाह ॥ **उपर्यपीति** ॥ तेनानन्यथासिद्धत्वं लभ्यते । तथा च बहुधाऽवृत्तजीवलिङ्गेन अन्यत्र प्रसिद्धस्यापि प्राणपदस्य जीवपरत्वमिति भावः । भाष्ये आदिपदोक्तलिङ्गान्याह ॥ **प्राण उदक्रामदित्यादिना** ॥ श्रुतेः श्रवणादित्यर्थः । प्राणवंशत्वमित्यपीत्यनुव्याख्यानसुधयोः प्राणवंशत्वस्य जीवलिङ्गत्वोक्तावपि वायुलिङ्गत्वं चोपेत्याह ॥ **तथेति** ॥ सर्व आत्मा सर्वो जीवः ॥ **इत्यादिश्रुतीति** ॥ छान्दोग्यश्रुतीत्यर्थः । आदिपदेन प्राणादिदमाविरासीत् प्राणो धत्ते प्राणे लयमभ्युपैतीत्यादिग्रहः ॥ **औदासीन्योक्तेश्चेति** ॥ ऐतरेयभाष्योक्तस्मृतावित्यर्थः । तेन लिङ्गस्यानन्यथासिद्धत्वमिति भावः । प्राणस्य विष्णुत्वे तस्यापि तैः सह विवादप्राप्तौदासीन्योक्तिविरोधात् । एतेन अनन्यथासिद्धत्वं अन्यत्र श्रुतिलिङ्गादेर्गति न्यायविवरणं लिङ्गांशे विवृतं ध्येयम् । तस्मान्नेत्यंशं तात्पर्योक्त्या व्यनक्ति ॥ **अत इति** ॥ तस्यैव व्यक्तिरत्र प्राणेत्यादि । उपासात्रैविध्यादित्यादेः साक्षादुक्तशङ्कानिवृत्तावक्षमत्वादन्यगतलिङ्गादीनामपि तद्गतभगवदपेक्षया युक्तेरिति न्यायविवरणोक्त्या नेत्यनन्तरं शास्त्रदृष्ट्येति पदमनुवर्त्यमित्युपेत्यार्थमाह ॥ **विष्णुरेवायमिति** ॥ **नञ्द्वयार्थ एवेति** । अत्रापि पूर्वत्रेव अनुगमादिति न च लिङ्गविरोध इति योजयित्वा लिङ्गानामित्यादि योज्यम् । उदासीनवदास्तां तावित्यौदासीन्योक्तिस्तु अन्तर्यामिभिन्नबाह्यरूपेण । न तु अन्तर्यामिरूपेणेति भावः । उक्तं च तृतीयस्कन्धतात्पर्यसप्तविंशेऽध्याये–

'यज्ञान्तःस्थः स्वयं पादौ विशन्नोत्थापयद्धरिः ।
शक्तोऽपि ब्रह्मवाय्वोस्तु बलज्ञप्त्यै जनार्दनः ।
तत्स्थ उत्थापयामास ब्रह्मदेहं विशन्प्रभुः' ।

इति । यज्ञो नामेन्द्रपुत्रस्तु जयन्त इति चोच्यत इति पञ्चमबृहद्भाष्योक्त्या यज्ञो जयन्तः । अब्जसम्भवस्यौदासीन्यं तु–

अंशेन सुप्तो ब्रह्मा तु अंशेन निरगात्प्रभुः ।
स्वदेहाद्वायुसहितो विष्णुना च जगत्प्रभुः ।

इत्यादितृतीयस्कन्धतात्पर्योक्तदिशा अंशेन निर्गतत्वेऽप्यंशेन देहे स्थितस्य निर्व्यापारत्वरूपं बोध्यम् । तेन–

(भावदीपः)

प्राणं विना न च ब्रह्मा तं विना प्राण एव च ।
अन्योन्यापाश्रयाच्छक्तौ स्थातुमन्ये कुतस्तत ।

इत्यादिना अष्टमे वाजसनेयभाष्ये प्राणनिर्गमने ब्रह्मणोऽवस्थान एव शक्त्यभावोक्तेः तद्विरोध इति प्रत्युक्तं बोध्यम् । सूत्रशेषभाष्यमवतार्य व्यनक्ति ॥ **किमर्थमिति** ॥ उपासनार्थं मन्वान आह ॥ **अन्तरादीति** ॥ इहेत्यस्यार्थस्तत्प्रकरण इति । श्रुतावयमावसथ इत्यक्षिकण्ठहृदयरूपस्थानत्रयोक्तेः प्रापद्यत इत्यस्य विवक्षितं कर्माऽऽह ॥ **हृदयं प्राप्त इति** ॥ **स प्रागन्तस्थ इति** ॥ तं प्रपदाभ्यां प्रापद्यतेत्यादिना प्रपदाभ्यां प्रविष्टो नारायण इत्यर्थः । एतमित्यस्यार्थः प्राप्तमिति । सुषुम्नया हृदयं प्राप्तं वासुदेवमात्मानं स्वात्मरूपम् । ततमं तततमं ब्रह्म गुणपूर्णमित्यर्थः ।

स सर्वगुणसम्पूर्णं सर्वगं नित्यमव्ययम् ।
एतेदव स्वरूपं स त्वपश्यदवतारगम् ।

इति तद्भाष्योक्तेः ॥ **नोपासनार्थमिति** ॥ आत्मानमेव लोकमुपासीतेतिवदुपासनापदाश्रवणादिति भावः ॥ **उक्तिप्रयोजनेति** ॥ साक्षादुपासनाश्रवणेऽपि तृतीय आध्यानाय प्रयोजनाभावादिति वक्ष्यमाण-न्यायेनान्यथानुपपत्त्या सर्वत्रोपासनालाभादिति भावः । एतद्ध स्म वै तद्विद्वानाह हिरण्यदन्बैद इत्यादिवत् महिदासोऽपि ऋषितयोच्यतामित्यत आह ॥ **न हीति** ॥ **वैयर्थ्यदिवेति** ॥ अस्या उपनिषद ऐतरेयसंज्ञयैव इतरापुत्रस्य महिदासस्य ऋषित्वसिध्या तदुक्तिवैयर्थ्यादिति भावः । अर्थान्तराणि त्वस्य चन्द्रिकायामुक्तानि । यत्त्वैतरेयभाष्ये प्रथमाध्याये आह महिदास ऐतरेय इति तु सर्वस्यैव वचनस्य तदीयत्वप्रदर्शनार्थम् । न तु सन्निहितस्यैव । यथेन्द्रकुत्स इत्यादि यथापूर्वं तु बादरायणो हेतु-व्यपदेशादित्यादीति मुनित्वोक्तिभाषणं तत्तु प्रसिद्धस्यापि मुनित्वस्य स्मारणार्थं श्रुतावुक्तेरावश्यकत्वेन मुनित्वस्याभिप्रेतत्वाभिप्रायम् । अत एव टीकायां मुनितयैव इत्यवधारणम् । तदिति परामृष्टमाह ॥ **अन्तरादीति** ॥ **विशेषेति** ॥ उपासके अधिष्ठाने च विशेषोक्तेरिति भावः । नन्वत्रोपासनाचतुष्टयमुच्यते बहिरुपासनं च नोच्यत इत्यत आह ॥ **अग्नाविति** ॥ भाष्योक्तस्मृतौ बहिरेवेति अग्नाविति प्रतिमास्विति चोक्तिर्बाहुल्याभिप्राया । द्वितीये बृहद्भाष्ये येषां बहिरुपासनेन मोक्षस्तेषां हृद्युपासनं किञ्चित् कर्तव्यमेव इत्युक्तेः । अत्र मिथ्योपास्तेः न प्रतीके न हि स इति चतुर्थाद्यपादे निरसिष्यमाणत्वात् । ततममिति व्याप्तत्वेनोक्तस्य शरीरहृदयस्थितेर्ब्रह्माण्डस्य सर्षपान्तःस्थितेरिव अवास्तवत्वात् त्रैविध्यमयुक्तमिति तूत्तराधिकरणे व्योमवदिति समाधास्यत इति भावः । अन्यगतलिङ्गादीनां तदन्तर्गतभगवदपेक्षया युक्तेरिति

(भावदीपः)

न्यायविवरणोक्तेः सबीजतां दर्शयन् अधिकरणार्थं फलोक्त्योपसंहरति ॥ **अत इति** ॥ निरवकाशानेकश्रुतिलिङ्गाभ्यास्यादित्यनुगमादित्यस्यार्थः । अन्यगतलिङ्गानाम् इत्युपलक्षणम् । प्राणो वा अहमस्मीत्युपदेशस्यापीत्यपि ध्येयम् । अयं च न वक्तुरित्यादिसूत्रत्रयार्थः । प्राणस्तथेति प्रतिज्ञांशार्थमाह ॥ **विष्णुरेवायं प्राण इति** ॥ बलवदन्यप्रापकलिङ्गोपेताशेषनामोपलक्षकेत्यपि ध्येयम् । आनन्दमयश्चेति फलोक्तिः । प्राचीनप्राणद्वारेति भावः । तज्जिज्ञासा विष्णुजिज्ञासा ॥ यत्तु प्राणोऽस्मि प्रज्ञात्माऽहं मामायुरमृतमुपास्वेति कौषीतकब्राह्मणवाक्यमेव अत्रोदाहार्यं न तु ऐतरेयवाक्यम् । तत्र प्राणस्त्वं प्राणस्सर्वाणि भूतानीति सर्वात्मकत्वरूपब्रह्मलिङ्गस्य श्रवणेन सन्देहादेरयोगादिति । तत्तु चन्द्रिकाप्रकाशे निरस्तं बोध्यम् ॥ ३१ ॥ अ.१२ ॥

इति श्रीमद्भाष्यटीकाभावदीपे राघवेन्द्रयतिकृते प्रथमाध्यायस्य प्रथमः पादः ॥

# अभिनवचन्द्रिका

(सू.३१) **पुनरुक्तमाक्षिप्येति** ॥ 'अत एव प्राण' इति पूर्वाधिकरणे, उक्तं प्राणशब्दसयन्वयमाक्षिप्येत्यर्थः । अत्र गुणसूत्रम् 'जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्' इति नाऽत्रोक्तप्राणो विष्णुः किन्तु जीवः, 'एष इम'मिति शतायुष्ट्वरूपजीवलिङ्गश्रवणादिति चेत्, मैवं मन्तव्यम् – जीवादिलिङ्गानां तत्तदन्तर्यामिभगवद्विषयतयोपपन्नत्वेन तत्साधकाभावात् । जीवाद्यन्तर्यामित्वेन कथनं किमर्थमिति चेत्, उपासनार्थमित्यवेहि । न चोपासनाभिधानाभावः 'स एतमेव सीमान'मित्यादिना उपासनाविधेरिहाऽऽश्रितत्वात् । तर्हि जीवलिङ्गित्वेन वा प्राणलिङ्गित्वेन वा उच्यताम् । उपासनाया एकविधत्वेनाऽनेकलिङ्गित्वेनोपदेशवैयर्थ्यादित्यत उक्तम् – **उपासात्रैविध्यादिति** ॥ अस्तु उपासात्रैविध्यम् । अनेकोपासनाभिधानं व्यर्थम् । एकोपासनाभिधानेनैव चारितार्थ्यादित्यत उक्तम् । **इह तद्योगादिति** ॥ इह त्रिविधोपासने तेषां तेषां योगात् । अधिकारिभेदेनाऽनेकोपासनकथनमर्थवदिति सूत्रार्थः । ननु भाष्ये 'तावन्ती'ति श्रुत्युदाहरणमयुक्तम् । तस्याः प्राणनिष्ठतया जीवलिङ्गाप्रतिपादकत्वादित्यत आह– **एष इममिति** ॥ एषः इमं लोकं शरीरं पुरुषरूपेण देहनियामकत्वेन अभ्यार्चत् प्रविवेश । एषः कः इत्यत उक्तम् – **य एष इति** ॥ य एषः सूर्यमण्डले स्थित्वा तपति, स एषः इमं लोकमभ्यार्चदिति पूर्वेण सम्बन्धः । प्राणो वाव=प्राण एव, तत्=लोकशब्दवाच्यं शरीरम्, अभ्यार्चत् = प्रविवेश । ननु – प्राक् 'य एष तपति स इमं लोकमभ्यार्च'दित्युक्तम् । इदानीं प्राण

(अभिनवचन्द्रिका)

इमं लोकमभ्यार्चदित्युच्यते । अतो विप्रतिषिद्धमित्यत उक्तम् – **प्राणो ह्येष इति** ॥ 'य एष तपती'त्यादिना उक्त एवार्थः 'प्राणो वाव तदभ्यार्च'दित्यादिना दार्ढ्यार्थं पुनरुच्यत इति न विप्रतिषिद्धमिति भावः । यस्मात् तं=लोकशब्दवाच्यं शरीरं, शतं वर्षाणि = अभ्यार्चत् प्रविश्य स्थितः, तस्मात्पुरुषायुषः पुरुषायूंषि, शतं वर्षाणि इति प्रसिद्धानि भवन्तीति श्रुत्यर्थः । यद्यपि भाष्यकृता 'एष इमं लोकमभ्यार्च'दिति वाक्यमेवोदाहर्त्तव्यम्, तथापि शिष्यबुद्धिशुद्धये मीमांसावतरणाय इदं वाक्यमुदाहृतम् । मीमांसाप्रकारस्तु – 'तावन्ती'ति भाष्योदाहृतवाक्ये न प्राणनिष्ठतया जीवलिङ्गं प्रतिपाद्यते, अपि तु बृहतीसहस्राक्षराणां शतसंवत्सराह्नाञ्च समसङ्ख्याकत्वमुच्यत इति एतद्वाक्योदाहरणम् । 'एष इमं लोक'मिति पूर्ववाक्यार्थपर्यालोचनया जीवलिङ्गमूह्यमिति सूचनायैव, न तु लिङ्गप्रतिपादनायेति । तावन्तीत्यादिनेति ॥ प्राणप्रकरणे बहुषु स्थलेषु तावन्तीत्यादिबहुवाक्यदर्शनिनाऽधिकारिणः प्राणस्योक्तशतायुष्ट्वस्मरणात् 'नात्रोक्तप्राणो विष्णु'रिति पूर्वेण सम्बन्धः । प्राणप्रकरणे बहुषु स्थलेषु तावन्तीत्यादिवाक्यदर्शनेन लिङ्गस्मरणं भवति । ततो मन्यामहे जीव एव प्राणप्रकरणे प्रतिपाद्य इति । अन्यथा पुनः जीवलिङ्गगस्मरणं न स्यादिति भावः । एतेन प्राणस्यैवोक्तशतायुष्ट्वस्यैवोपर्यपि अनुसन्धानादित्ययुक्तं 'तावन्ती'त्यादिवाक्यानां तदप्रतिपादकत्वादिति परास्तम् । अथाऽहं प्राणा इति ॥ प्राणाः=इन्द्रियाणि, अहं श्रेयसि=अहं श्रेयानिति अस्मिन्नर्थे, व्यूदिरे विवादं कृतवन्त इत्यर्थः । प्राणैः सह कलहश्रवणेऽपि विष्णुरेवायं प्राणः किं न स्यात् । विष्णोरपि कलहसम्भवादित्यत आह– **उदासीनाविति** ॥ पूर्वपक्षद्वयं युगपदुपसंहरति – **अत इति** । जीवलिङ्गश्रवणाज्जीव एवायं प्राण इत्येक उपसंहारः । अपरस्तु प्राणलिङ्गश्रवणात् मुख्य एवायं प्राण इति उपसंहार इति भावः ।

**पूर्वपक्षस्तु–** 'ता वा एता' (ए.आ.२-१-४) इत्युक्तप्राणो न विष्णुः । इन्द्रियगणे गणितत्वात् इन्द्र एवायं प्राणः, 'प्राणो वा अहमस्मृष' (ए.आ.३-२-३) इति इन्द्रेण प्राणस्य आत्मतयोपदेशात् । अथवा – जीव एवायं प्राणः 'एष इमं लोकमभ्यार्च'(ए.आ.२-२-४)दिति जीवलिङ्गात् । अथवा मुख्यप्राणोऽयं प्राणः 'ता अहिंसंते'(ए.आ.२-१-४)ति तल्लिङ्गात्, एवञ्चायं प्राणो न विष्णुरिति प्राचीनप्राण आनन्दमयोऽप्यन्य एवेति ॥

**सिद्धान्तस्तु–** विष्णुरेवायं प्राणः । देवतोपदेश्यत्व, भूतित्वेन सर्वदेवोपास्यत्व, सर्ववेदोक्तत्व, देहरथित्वलिङ्गेभ्यः । (२९. सू.) न चेन्द्रस्य प्राणतयाऽऽत्मोपदेशविरोधः । तस्याऽन्तर्यामिविवक्षया प्रवृत्तत्वात् । अन्यथा त्वं प्राणः सर्वाणि भूतानी'(ए.आ.२-२-३)ति व्यपदेशानुपपत्तिः । (सू.३०)

(अभिनवचन्द्रिका)

न च ईश्वरपक्षेऽप्यहमादिशब्दानुपपत्तिः – अहमादिशब्दानां शास्त्रदृष्ट्या प्रवृत्तत्वेन बाधकाभावात् । (३१. सू.) न च जीवमुख्यप्राणलिङ्गविरोधः । तस्यापि अन्तर्यामिभगवद्विषयतयोपपत्तेः । तस्मादयं प्राणो विष्णुरेवेति प्रागुक्तः प्राणः आनन्दमयश्च स एवेति युक्ता तज्जिज्ञासेति सिद्धम् । (अ.१२)

**इति श्रीमत्सत्यनिधितीर्थ श्रीचरणचरणाराधक श्रीमत्सत्यनाथतीर्थयतिविरचितायां तत्वप्रकाशिकाव्याख्याऽभिनवचन्द्रिकायां प्रथमाध्यायस्य प्रथमः पादः ।**

## वाक्यार्थमुक्तावली

ॐ जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॐ । ननु तावन्तीति वाक्ये शतायुष्ट्वस्य प्राणनिष्ठत्वं न भवति । बृहतीसहस्रवर्णानां शतसंवत्सरस्यान्हां च षट्त्रिंशत्सहस्रत्वेन संख्यासाम्यस्यैवोक्तेरित्यतः प्राणनिष्ठशतायुष्ट्वप्रतिपादकं वाक्यं स्वयमुदाहरति । तर्हि भाष्ये तत्किमर्थमुदाहृतमित्यत आह **उपर्यपीति** ।। शतायुष्ट्वलक्षणजीवलिङ्गे उपनिषदस्तात्पर्यमस्तीति ज्ञापयितुं तदुदाहरणमिति भावः । प्राणसंवादादीत्यादिपदार्थमाहप्राण– **उदक्रामदित्यादिना** ।।

ननु प्राणवंशत्वस्य मुख्यप्राणलिङ्गत्वकथनमनुव्याख्यानसुधाविरुद्धम् । तत्र अभ्यार्चच्छतवर्षाणि प्राणवंशत्वमित्यपीति । तथा तं शतवर्षाण्यभ्यार्चदिति शतायुष्ट्वं प्राणो वंश इति चक्षुरादीन् प्रति वंशत्वमिति जीवलिङ्गानीति प्राणवंशत्वस्य जीवलिङ्गतयोक्तत्वात् । न चेदं वाक्यमुभयलिङ्गपरमिति पूर्वपक्षिणो विवक्षितमतो न विरोध इति वाच्यम् । सर्व आत्मा समाहित इति सर्वजीवेन्द्रियधारकत्वस्य जीवेऽयुक्तत्वेन जीवलिङ्गत्वे बाधकसद्भावादिति चेन्न । अस्य ग्रन्थस्य प्राणो वंश इति स्थविरः शाकल्य इत्युदाहृतवाक्यविषयत्वात् । अनुव्याख्यानसुधयोस्तु अथानुव्यवहाराः प्राणो वंश इति विद्यादिति वाक्यान्तरविषयत्वात् । अत एव सुधायां चक्षुरादीन्प्रति वंशत्वमित्युक्तमिह तु सर्वजीवेन्द्रियेत्युक्तम् । यद्वा स्थविरशाकल्यवाक्यमेवोभयविषयं तत्र वागिन्द्रियाणीत्यन्तं जीवविषयम् । विशिष्टवाक्यन्तु वायुविषयमिति । सूत्रे इति चेदित्यतः परं तत्त्विति प्राण इति जीवमुख्यप्राणाविति शास्त्रदृष्ट्या तूपदेश इति पदानामनुवृत्तिमभिप्रेत्य व्याचष्टे । **विष्णुरेवेत्यादिना** । इत्यादिनेत्यादिपदेन 'तं प्रपदाभ्यां प्रापद्यन्ते ब्रह्मेमं पुरुषमेतमस्यामेतं दिव्येतमाकाशे ता इमाः प्रजा अर्कमभितो निविष्टा इममेवाग्निम्' इत्यादिग्रहणम् ।। **मुनितयैवेति** ।। एतद्ध स्म वै तद्विद्वानाह । हिरण्यदन् बैद इत्यादिवन्मुनितयैवोच्यते नोपास्यतयेत्यर्थः । मुनित्वं त्वस्या उपनिषद ऐतरेयसंज्ञयैव सुज्ञानत्वेन पुनस्तत्कथनवैयर्थ्यादित्यर्थः ।

(वाक्यार्थमुक्तावली)

यद्वा ऋषिमात्रत्वे महिदासस्य 'इतः प्रदाना ह्येत इतः सम्भृता' इति देवतापदप्रापकत्वादीना-मुपास्यब्रह्मधर्माणामुक्तिनैष्फल्यादित्यर्थः । यद्वा मुनितयैवोच्यते नोपास्त्यर्थमित्ययुक्तम् । उपास्त्यर्थत्वं विना मुनितयोक्तेः वैय्यर्थ्यात् । हयग्रीवादीनामपि मुनितयोपास्त्यर्थमेव तदुक्तमृषिणेत्यादौ तत्र तत्रोक्तेः । हिरण्यदन्वैदादीनां मुनितया स्मर्तव्यत्वेऽप्यभगवत्वान्न प्रतिपाद्यतयोपास्यत्वं महिदासस्य तु वाच्यवक्तृस्वरूपेणेति भेद इति भावः । **विशेषप्रमाणमिति ।** पूर्वं केषाञ्चिदिति सामान्येनोक्तत्वादिति भावः । नन्वत्रोपास्यचातुर्विध्यमुच्यते । अतोऽयुक्तमित्यत आह **अग्नाविति** । नन्वेवं सति सूर्यादौ विष्णूपास्तेर्बहिरुपास्तित्वं न स्यादित्यतो वाऽह ॥ **अग्नाविति ॥** सूत्रे पूर्वपक्षांशे प्राणस्तदित्यनुवर्तते । नेत्यनन्तरं तत्त्विति प्राण इति जीवमुख्यप्राणाविति शास्त्रदृष्ट्या तूपदेश इति पदपञ्चकमनुवर्तते । ततश्चायमर्थः जीवमुख्यप्राणलिङ्गान्न प्राणो विष्णुरिति चेद्विष्णुरेवायं प्राणो न जीवमुख्यप्राणौ । जीवमुख्यप्राणलिङ्गोपदेशस्तु तदन्तर्याम्यपेक्षया युज्यते । 'उदासीनौ च तावास्तां केशवश्चाब्जसम्भव इत्यादावौदासीन्यं तु बाह्यरूपेणेति भावः । किमर्थमन्तर्याम्युक्तिरित्यत उक्तम् । उपासेति । अन्तर्बहिस्सर्वगतत्वेनोपासात्रैविध्यादिह प्रकरणे स एतमेवेत्यादिना त्रैविध्यस्याश्रितत्वादुक्तत्वात्तस्यां तस्यामुपासायां तेषां पुरुषविशेषाणां योगाद्योग्यत्वादेकविधोपासने ब्रह्मापरोक्षासम्भवेन त्रैविध्यकथनस्य सफलत्वाच्च शास्त्रदृष्ट्या लिङ्गोपदेश इत्यन्वयः । अत्राद्ये स्वापक्षसाधकश्रुतिलिङ्गोक्तिः । द्वितीये प्राणो वा अहमस्म्यृष इति अस्मच्छब्दोत्तमपुरुष इत्युक्तत्वेन निरवकाशवाक्यरूपबाधकमाशङ्क्य तस्यान्तर्यामिणि सावकाशत्वोक्त्या स्वपक्षे बाधकोद्धारः । तृतीये प्रत्यक्चैतन्ये रूढस्य कथमहमादि-पदस्यान्तर्यामिपरत्वमित्याशङ्क्याहमादिपदस्यान्तर्यामिणी प्रयोगप्रदर्शनम् । चतुर्थे शास्त्रदृष्ट्येति न्यायेन जीवमुख्यप्राणलिङ्गयोरपि सावकाशत्वे सिद्धेऽप्यन्तर्यामिविवक्षया तदुक्तौ प्रयोजनं वक्तुं पुनः प्रबलबाधकमाशङ्क्य तदुद्धार इति सूत्रक्रमः । पादेष्वेतेषु सर्वेष्वव्यवहितपूर्वाधिकरणसङ्गत्यैवाधिकरणक्रमो बोध्यः । अत्राद्यमधिकरणपञ्चकमध्यायपादपीठरूपम् । आनन्दमयाधिकरणं मुखतो गुणसामान्यगुणवाचि-शब्दसमन्वयाय प्रवृत्तमप्यशेषशब्दसमन्वयार्थं चेति सुधायां व्यक्तम् । शिष्टमधिकरणषट्कमभ्यधिका-शङ्कापरिहाराय प्रवृत्तम् । देवानां तत्र शक्ततामित्यादिना प्रत्यधिकरणमभ्यधिकाशङ्काप्रदर्शनात् । आकाश इत्यादि चत्वार्यधिकरणान्यतिदेशाधिकरणानीति न्यायविवरणटीकायां व्यक्तम् । अन्तिमाधिकरणं तु पूर्वप्राणाधिकरणे अधिकाशङ्कया प्रवृत्तमित्यधिकरणपेटिका ज्ञेयेति सर्वमनवद्यम् ॥

इति श्रीमद्विठ्ठलाचार्यतनूजेन श्रीमत्तीर्थाचार्यचरणसेविना श्रीनिवासेन रचितायां तत्त्वप्रकाशिकावाक्यार्थमुक्तावल्यां प्रथमाध्यायस्य प्रथमः पादः समाप्तः ।

## तत्त्वसुबोधिनी

भाष्योदाहृते ''तावन्ति शतसंवत्सरस्याह्नां सहस्रानिण भवन्ति'' इत्यत्र शतसंवत्सरत्वं प्राणनिष्ठं न भवति । बृहतीसहस्रवर्णानां शतसंवत्सराह्नां च षट्त्रिंशत्सहस्रत्वेन सङ्ख्यासाम्यस्यैवोक्तेरित्यतः प्राणनिष्ठशितायुष्ट्वप्रतिपादकवाक्यं स्वयमुदाहरति । **एष इमं लोकमिति** । एष नारायण इमं लोकं ब्रह्मादिशरीरं च अभ्यार्चत् प्रविवेश पुरुषरूपेण अन्तर्यामिरूपेण यः सूर्ये स्थित्वा तपति स एष प्राणो वाव सूर्ये स्थित्वा तपत्प्राणनामा भगवान्वै तद्ब्रह्मादिशरीरं अभ्यार्चत् । प्राणो ह्येष य एष तपतीत्यनेन यत्प्राणनामा हरिरेव न तु सूर्य इत्यर्थः । तं ब्रह्मादिदेहं शतं वर्षाणि अभ्यार्चत् । यस्मात् तस्मात् पुरुषाः पुरुषायुषः शतं वर्षाणि भवन्तीत्यर्थः । तर्हि भाष्ये तत्किमर्थमुदाहृतमित्यत आह ॥ **उपर्यपि तावन्तीत्यादिनेति** ॥ उपनिषदः शतायुष्ट्वरूपजीवलिङ्गे तात्पर्यमस्तीति ज्ञापयितुं भाष्ये तदुदाहरणमिति भावः । ताः देवताः अहिंसत कलहमकुर्वन् । उक्थं श्रेष्टम् । विवादादावौदासान्योक्तेश्चेति । तथा च प्राणसंवादादि विष्णोर्निरवकाशमिति भावः । भिन्नत्वशङ्काव्यावृत्यर्थमाह ॥ **आत्मानमिति** ॥ **ततममिति** ॥ तकारस्य व्याप्त्यभिधायकत्वादतिशयेन तः ततम इति वा । अतिशयेन तमप्प्रत्ययविधानादतिशयेन ततः तततम इति वा । ततममित्येतत्तततममित्यर्थकमितिभावः । ननु एतद्ध स्म वै तद्विद्वानाह हिरण्यदन्वैद इति हिरण्यदन्वैदवन्महिदासोऽपि ऋषित्वेनोच्यतामित्यत आह । न हि महिदासो मुनितयोच्यत इति वैयर्थ्यादिति । अस्या उपनिषद ऐतरेयसंज्ञयैवेतरापुत्रस्य महिदासस्य ऋषित्वसिद्ध्या तदुक्तिनैष्फल्यादित्यर्थः । अथवा ऋषिमात्रत्वे महिदासस्य इतः प्रदाना ह्येत इतः सम्भृता इत्यादिना देवतापदप्रदातृत्वतत्पोषकत्वमित्यादीनामुपास्यधर्माणाम् उक्तिनैष्फल्यादित्यर्थः । यद्वा महिदासस्य मुनित्वेनाप्युक्तिरिष्टा । मुनित्वेनैवोक्तिः न तु ब्रह्मतयेति तु न युक्तम् । इतः प्रदाना ह्येत इत्यादीनां ब्रह्मधर्मवाचिनां विरुद्धार्थत्वादित्यर्थः ॥ **विशेषप्रमाणमिति** ॥ पूर्वं केषाञ्चिदित्युक्तत्वात् समान्यत उपासकत्रैविध्ये प्रमाणम् । इदं तु क्रियावतामित्याद्युक्त्या त्रिविधोपासके विशेषप्रमाणमित्यर्थः । नन्वग्रावित्यत्र बहिरुपास्तिर्नोच्यते । अग्रौ प्रतिमास्वित्यनेन तद्ग्रहणे सूर्यादौ विष्णूपास्तेः बहिरुपास्तित्वं न स्यात् इत्यत आह ॥ **वहिरुपासनोपलक्षणमिति** ॥ अत्र आद्ये सूत्रे ब्रह्मशब्दादिरूपस्वपक्षसाधकोक्तिः । द्वितीये बाधकोद्धारः । तृतीये अहमादिशब्दप्रयोगस्य अन्तर्यामिविवक्षया उपपादनम् । चतुर्थे प्रयोजनोक्तिः । पञ्चमे हेतूक्तिक्रम इति सूत्रक्रमः ॥

इति श्रीपाण्डुरङ्गि श्रीनिवासाचार्यविरचिततत्त्वप्रकाशिकाविवृतौ प्रथमाध्यायस्य प्रथमः पादः समाप्तः ।

## वाक्यार्थमञ्जरी

ॐ जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॐ ॥ शतायुष्ट्वादिजीवलिङ्गात्प्राणसंवादादिमुख्यप्राणलिङ्गाच्च न प्राणो विष्णुरिति चेन्न । यस्माज्जीवमुख्यप्राणलिङ्गोपदेशोऽन्तर्याम्यपेक्षयैव युक्त इति पूर्वसूत्रावृत्त्या योज्यम् । किमर्थमन्तर्याम्युक्तिरित्यत उक्तम् **उपासेति** ॥ अन्तर्व्याप्तत्वेन बहिश्चेति भेदेन ब्रह्मोपासनायास्त्रैविध्यात् । त्रैविध्यस्य चेह प्रकरणे स एवेत्यादिना आश्रितत्वादुक्तत्वादित्यर्थः । एकयैवोपासनयाऽलं किं त्रैविध्येनेत्यत उक्तम् ॥ **तद्योगादिति** ॥ तस्याधिकारित्रैविध्यस्याधिकारिभेदेन योगाद्युक्तत्वादित्यर्थः । तावन्तीत्यादिश्रुतौ शतायुष्ट्वस्य प्राणनिष्ठतयाऽनुक्तत्वादाह ॥ **एष इममिति** ॥ एष इमं लोकं ब्रह्मादिशरीरम् । पुरुषरूपेणान्तर्यामिरूपेण। अभ्यार्चत् प्रविवेश । तदेव कार्यलिङ्गेन दर्शयति । य एष आदित्ये स्थित्वा तपतीति । एतच्छब्दार्थं वदन्नेव दार्ढ्यायोक्तमेव पुनराह ॥ **प्राण इति** ॥ तत् शरीरम् । कः प्राण इत्यत उक्तं **प्राणो ह्येष य एष तपतीति** ॥ यस्मादयं प्राणस्तं देहं शतं वर्षाणि अभ्यार्चत् प्रविश्य स्थितः तस्मात्पुरुषायुषः आयूंषि शतं वर्षाणीति प्रसिद्धानि भवन्तीत्यर्थः । बृहतीसहस्रवर्णानां सहस्राणि यावन्ति षट्त्रिंशतिसंख्याकानि तावन्ति सहस्राणि शतसंवत्सरस्याह्नां भवन्तीत्यर्थः ॥ **ता इति** ॥ ताश्चक्षुरादिश्रियोऽहं श्रेष्ठोऽस्म्यहं श्रेष्ठोऽस्मीत्येवं कलहमकुर्वन्तेत्यर्थः ॥ **प्राण इति** ॥ प्राणो मुख्यवायुः विराड्देहादुत्क्रान्तः प्राण उत्क्रान्ते सति तच्छरीरं पतितं प्राणः पुनस्तच्छरीरं प्रविवेश । प्राणे प्राप्ते सति तच्छरीरमुत्थितमित्यर्थः ॥ **प्राणो वंश इति** ॥ प्राणो मुख्यवायुर्वंशः सर्वाश्रय इति स्थविरः शाकल्यमुनिराह । तद्यथा तृणादिनिर्मितगृहस्य प्रधानवेणाववान्तरवेणवः सम्यक् स्थापिता आश्रिताः । एवमस्मिन्प्राणे चक्षुरादीन्द्रियाणि शरीरं तदभिमान्यात्मा जीव इत्येते सर्वे समाहिता इत्यर्थः ॥ **अथेति** ॥ प्राणाः इन्द्रियाभिमानिदेवाः अहं श्रेयसी श्रेयानित्यर्थे कलहमकुर्वन्तेति छन्दोगवाक्यार्थः । एतल्लिङ्गानां निरवकाशत्वमैतरेयभाष्योदाहृतस्मृत्या दर्शयति ॥ **उदासीनाविति** ॥ ननु

प्राणं विना न च ब्रह्मा तं विना प्राण एव च
अन्योन्योपाश्रयाच्छक्तौ स्थातुमन्ये कुतस्तत

इति बृहद्भाष्ये प्राणं विना ब्रह्मणोऽनवस्थानोक्त्या कथं प्राण उत्क्रान्ते तस्मिञ्छरीरे ब्रह्मण औदासीन्येनावस्थानमिति चेदुच्यते ।

(वाक्यार्थमञ्जरी)

'अंशेन सुप्तो ब्रह्मा तु अंशेन निरगात्पुनः ।
स्वदेहाद्वायुसहितो विष्णुना च जगत्प्रभुः' ॥

इति तृतीयस्कन्धतात्पर्यानुसारेणांशेन निर्गतत्वेऽप्यंशेन देहस्थितस्य निर्व्यापाररूपौदासीन्याङ्गीकारात् ॥ **भगवद्विपयतयेति** ॥ बाह्यरूपेणौदासीन्योपपत्तेरिति भावः । लिङ्गं ज्ञापकं मस्तकसीमानं शिरोमध्यभागम् । स प्राणः । **अन्तःस्थ इति** ॥ तं प्रपदाभ्यां प्रापद्यतेत्यादिना प्रपदाभ्यां प्रविष्टो नारायण इत्यर्थः । एतमित्यस्यार्थः प्राप्तमिति । इण्गतावित्यस्माद्धातोः सुषुम्नया हृदयं प्राप्तवासुदेवमात्मानं स्वात्मस्वरूपं ततमम् अतिशयेन व्याप्तं ब्रह्म पूर्णमपश्यदित्यर्थः ॥ तकारस्य व्याप्त्यर्थत्वात् तमपश्चातिशयार्थत्वात्ततम-मित्येतत्तततममित्यर्थकमिति भावः ॥ **बहिरुपास्त्यर्थमिति** ॥ तस्य बहिष्ठमूर्तित्वादिति भावः ॥ **नोपासनार्थमिति** ॥ उपासनापदाश्रवणादिति भावः । एतद्ध स्म वै तद्विद्वानाह हिरण्यदन्वैद इत्यादिवन्महिदासोऽपि ऋषितयोच्यतां नोपासनार्थमित्यत आह ॥ **न हीति** ॥ एतदुपनिषद ऐतरेयसंज्ञयैवेतरापुत्रस्य महिदासस्य ऋषित्वसिद्ध्या तदुक्तिनैष्फल्यादित्यर्थः ॥ **विशेषप्रमाणमिति** ॥ पूर्वन्तु केषाञ्चिदित्येवोक्तत्वात् सामान्यप्रमाणमिति भावः । नन्वत्रोपासनाचतुष्टयमुच्यते बहिरुपासनं च नोच्यत इत्यत आह ॥ **अग्नाविति** ॥ १२ ॥

**इति श्रीमत्तत्त्वप्रकाशिकावाक्यार्थमञ्जर्यां शर्करा श्रीनिवासविरचितायां प्रथमाध्यायस्य प्रथमः पादः ॥ १ ॥**

## विवृतिः

भाष्योदाहृते तावन्ति शतसंवत्सरस्याह्नां सहस्राणि भवन्तीत्यत्र शतसंवत्सरत्वं प्राणनिष्ठं न भवति बृहतीसहस्रवर्णानां शतसंवत्सरस्याह्नां च, षट्त्रिंशत्सहस्रत्वेन संख्यासाम्यस्यैवोक्तेरित्यतः प्राणनिष्ठ-शतायुष्ट्वप्रतिपादकवाक्यं स्वयमुदाहरति ॥ **एष इमं लोकमिति** ॥ एष नारायणः इमं लोकं ब्रह्मादिशरीरम् अभ्यार्चत् प्रविवेश पुरुषरूपेण अन्तर्यामिरूपेण यः सूर्ये स्थित्वा तपति ॥ स एषः प्राणो वाव सूर्ये स्थित्वा तपन् प्राण नामा भगवान् वै तत् ब्रह्मादिशरीरम् अभ्यार्चत् ॥ प्राणो ह्येष य एष तपतीत्यनेन तपन् प्राणनामा हरिरेव न तु सूर्य इत्यर्थः ॥ तं ब्रह्मादिदेहं शतवर्षाणि अभ्यार्चत् यस्मात्तस्मात्पुरुषाः पुरुषायुषः शतं वर्षाणि भवन्तीत्यर्थः ॥

(विवृतिः)

तर्हि भाष्ये तत्किमर्थमुदाहृतमित्यत आह ।। **उपर्यपि तावन्तीत्यादिनेति** ।। उपनिषदः शतायुष्ट्व-रूपलिङ्गे तात्पर्यमस्तीति ज्ञापयितुं भाष्ये तदुदाहरणमिति भावः ।। ताः देवताः अहिंसन्त कलहमकुर्वन् । उक्थं श्रेष्ठम् । विवादादावौदासीन्योक्तेश्चेति ।। तथा च प्राणसंवादादि विष्णोर्निरवकाशमिति भावः ।। भिन्नत्वशङ्काव्यावृत्यर्थमाह ।। **आत्मा ततममिति** ।। तकारस्य व्याप्त्यभिधायकत्वादतिशयेन तः तम इति वा, अतिशायने तमप्प्रत्यय विधानादतिशयेन ततः ततम इति वा ततमित्येतत्ततममित्यर्थकमिति भावः ।। ननु एतद्ध स्म वै तद्विद्वानाह हिरण्यदन् वैद इति हिरण्यदन्वैदवतन्महिदासोऽपि ऋषित्वे-नोच्यतामित्यत आह ।। **न हि महिदासो मुनित्वेनोच्यत इति** ।। **वैयर्थ्यादेवेति** ।। अस्याउपनिषद ऐतरेयसंज्ञयैवेतरापुत्रस्य ऋषित्वसिद्ध्या तदुक्तिनैष्फल्यादिति भावः ।। अथवा ऋषिमात्रत्वे महिदासस्य इतः प्रदाना ह्येत इतःसम्भृता इत्यादिना देवतापदप्रदातृत्वं तत्पोषकत्वमित्यादीनामुपास्यधर्माणा-मुक्तिनैष्फल्यादित्यर्थः ।। यद्वा महिदासस्य मुनित्वेनाप्युक्तिरिष्टा, मुनित्वेनैवोक्तिर्न तु ब्रह्मतयेति तु न वक्तव्यम् ।। प्रदाना ह्येत इत्यादीनां ब्रह्मधर्मवाचिनां विराद्धार्थत्वादित्यर्थः ।। **विशेषप्रमाणमिति** ।। पूर्वं केषाञ्चिदित्युक्तत्वात्सामान्यत उपासकत्रैविध्ये प्रमाणं इदं तु क्रियावतामित्याद्युक्त्या त्रिविधोपासके विशेषप्रमाणमित्यर्थः ।। नन्वग्नावित्यत्र बहिरुपास्तिर्नोच्यते । अग्नौ प्रतिमास्वित्यनेन तद्ग्रहणे सूर्यादौ विष्णूपास्तेर्बहिरुपास्तित्वं न स्यादित्यत आह ।। **बहिरुपासनोपलक्षणमिति** ।। अत्राद्ये ब्रह्मशब्दादि-रूपस्वपक्षसाधकोक्तिः ।। द्वितीये बाधकोद्धारः ।। तृतीये अहमादिशब्दप्रयोगस्यान्तर्यामिविवक्षयो-पपादानम् ।। चतुर्थे प्रयोजनोक्तिः ।। पञ्चमे हेतूक्तिक्रम इति सूत्रक्रमः ।।

**इति पाण्डुरङ्गि केशवाचार्यविरचितश्रीतत्वप्रकाशिकाविवृतौ प्रथमाध्यायस्य प्रथमः पादः ।। १ ।।**

**।। इति पादान्त्यप्राणाधिकरणम् ।। १२ ।।**

## ।। इति प्रथमाध्यायस्य प्रथमः पादः ।।

# अथ द्वितीयः पादः

## १. सर्वगतत्वाधिकरणम्

॥ ॐ ॥ लिङ्गात्मकानां शब्दानां विष्णौ प्रवृत्तिं दर्शयत्यस्मिन्पादे प्राधान्येन । 'ब्रह्म ततममि'ति सर्वगतत्वमुक्तं विष्णोः । तच्च 'तस्यैतस्यासावादित्यो रसः' (ऐ.आ. ३-२-३) इत्यादिनाऽऽदित्यस्य प्रतीयत इत्यतोऽब्रवीत् ।

**॥ ॐ सर्वत्र प्रसिद्धोपदेशात् ॐ ॥ १ ॥**

'स यश्चायमशरीरः प्रज्ञात्मा' (ऐ.आ. ३-२-४) इत्यादिना सर्वत्रोच्यमानो नारायण एव । 'तदेव ब्रह्म परमं कवीनाम्' (म.ना.उ. १-६) । 'परमं यो महद्ब्रह्म' ।

'वासुदेवात्परः को नु ब्रह्मशब्दोदितो भवेत् ।
स हि सर्वगुणैः पूर्णस्तदन्ये तूपचारतः' ॥

इति तस्मिन्नेव प्रसिद्धब्रह्मशब्दोपदेशात् ॥ १ ॥

## सत्तर्कदीपावली

॥ हरिः ॐ ॥ अभिहितोऽर्थान्तरप्रसिद्धानां नाम्नां पूर्वं समन्वयो विष्णौ । अधुना लिङ्गवाचिनां बाहुल्येनार्थान्तररूढानामपि केपाञ्चिद्वैश्वानरादिशब्दानां सङ्गतिविशेषात्समन्वयोऽस्मिन्पाद इत्याह ॥ **लिङ्गेति ॥** गताधिकरणेनास्याधिकरणस्य सङ्गतिं दर्शयन् पूर्वपक्षं दर्शयति ॥ **ब्रह्मेति ॥** इदमाम्नायते । एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्त एतमग्नावध्वर्यव एतं महाव्रते च्छन्दोगा एतमस्यामेतं दिव्येतं वायावेमाकाश इति । पृथिव्यादिसर्वगतत्वेन मीमांस्यमानः तस्यैतस्यासावादित्यो रसः स यश्चायमशरीरः प्रज्ञात्मेत्युपक्रमवशादादित्यो भवेत् । अतश्च ब्रह्म ततममिति यत्ततमत्वं विष्णोरुक्तं तदप्येकवाक्यवशादादित्यस्यैव युक्तमित्येतं पक्षं प्रतिक्षेप्तुं सूत्रमुपन्यस्य व्याचष्टे सर्वत्रेत्यादिना । सर्वेपु भूतेष्वेतमेव ब्रह्मेत्याचक्षत इति ब्रह्मशब्दाभिधेयत्वश्रवणादत्र सर्वगतत्वेनोच्यमानो विष्णुरेव नादित्यः ॥ अशरीरः प्रज्ञात्मेत्युपक्रमाच । न चादित्ये ब्रह्मशब्दः शङ्कनीयः । 'तदेव ब्रह्म परमं' 'यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदा । परमं यो महद्ब्रह्म' इत्यादिवाक्येपु विष्णोरेव प्रसिद्धत्वात् नादित्यस्य मुख्यतो ब्रह्मत्वं युज्यते ।

## तत्त्वप्रदीपिका

सर्वगतत्वादिधर्मवाचिनां शब्दानां समन्वयः सम्प्रति समभिधीयते । महारूढ्या महायोगेन च वृत्तिः 'प्रवृत्तिरि'त्युच्यते । अन्यत्राङ्गरूढित्वादल्परूढिः । विद्वद्रूढित्वाद्विष्णौ महारूढिः । लौकिकप्रयोगाद्वैदिक-प्रयोगबाहुल्याच्च । योगश्चान्यत्र वृत्तिहेतुसामस्त्यस्वातन्त्र्याभावादल्पः । उभयसम्भवाद्विष्णौ महायोगः । वैश्वानराधिकरणे नामशब्दविचारात्प्राधान्येनेत्युक्तम् ॥

ब्रह्म ततममित्यादेरयमर्थः । ब्रह्म ततममित्यादिना यत् सर्वगतत्वमुक्तं विष्णोस्तत् ''तस्यैतस्या-सावादित्यो रसः'' ''तस्मात्पुरुषं पुरुषं प्रत्यादित्यो भवति'' ''सूर्य आत्मा जगतस्तस्थुषश्च'' ''एतं सर्वेषु भूतेषु'' इत्यादिना शाखाशेषेणाऽऽदित्यस्य प्रतीयते । अतः प्राणशब्दोऽपि कथञ्चिद-स्मिन्योज्येतेत्यत आह । सर्वत्र प्रसिद्धोपदेशात् ॥ ''स यश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्ये एकमेतदिति विद्यात्, तस्मात्पुरुषं पुरुषं प्रत्यादित्यो भवति'' इत्यादिना सर्वत्रोच्यमानो विष्णुरेव । तस्मिन्नेव प्रसिद्धस्य ब्रह्मशब्दस्य ''एतमेव ब्रह्मेत्याचक्षत'' इत्युपदेशात् ॥

## तत्त्वप्रकाशिका

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥ ॐ ॥ एतत्पादप्रतिपाद्यं दर्शयति ॥ **लिङ्गेति** ॥ लिङ्गात्मकानामिति धर्मविशिष्टधर्मिवाचिनामित्यर्थः । अन्यत्र प्रसिद्धानामिति संयोज्यम् । वैश्वानराधिकरणे नामसमन्वयसिद्धेः प्राधान्येनेत्युक्तम् । अत्र लोकतोऽन्यत्र प्रसिद्धाऽऽदित्य-श्रुतिसहपठितसर्वगतत्वलिङ्गात्मकशब्दस्य परब्रह्मणि समन्वयप्रतिपादनादुस्ति शास्त्रादिसङ्गतिः । श्रुत्यादिसङ्गतिं विषयसंशयौ च सूचयति ॥ **ब्रह्मेति** ॥ ब्रह्म ततममिति विष्णोः सर्वगतत्वमुक्तम् । तदेवैतरेयके 'एतं ह्येव बहृचा महत्युक्थे मीमांसन्ते । एतमग्नावध्वर्यवः । एतं महाव्रते च्छन्दोगा एतमस्यामेतं दिव्येतं वायावेतमाकाशे एतमप्स्वेतमोषधीष्वेतं वनस्पतिष्वेतं चन्द्रमस्येतं नक्षत्रेष्वेतं सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते' इत्याम्नायते । तद्यदि विष्णोरन्यस्य स्यात्तर्हि प्राचीनप्राणोऽप्यन्य एव स्यादेकप्रकरणत्वात् । अतोऽवश्यं विचार्यं भवति । तत्सर्वगतत्वं विषयः । विष्णोरन्यस्य वेति सन्देहः । ब्रह्म ततममित्युक्तिरादित्यश्रुतिश्च सन्देहबीजमिति भावः । तत्र सयुक्तिकं पूर्वपक्षयति ॥ **तच्चेति** ॥ तत्सर्वगतत्वमादित्यस्यैव भवेत् । 'तस्यैतस्यासावादित्यो रसः यश्चासावादित्यस्तस्मात्पुरुषं पुरुषं प्रत्यादित्यो भवती'त्यादिवह्वादित्यश्रुतेः । 'सूर्य आत्मा जगतः' इति सौरमन्त्रोदाहरणाच्च । एतमस्यामिति क्षित्यादिपूक्त्याऽऽदित्येऽऽस्यानुक्तत्व-लिङ्गाच्च । अन्यथैतमादित्य इत्युक्तिः स्यात् । सजातीयचन्द्रादावुदितत्वात् । अत एव न श्रुतेरन्तर्यामि-विषयत्वं युज्यते । सर्वजीवानां वा एतत्सर्वगतत्वमुच्यते । 'चक्षुर्मयः श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय

(तत्त्वप्रकाशिका)

आत्मे'ति तल्लिङ्गश्रवणात् । न च तल्लिङ्गमन्तर्यामिविषयम् । तस्यापरिच्छिन्नत्वेन सर्वेषु भूतेष्वि-त्युक्तात्यौकस्त्वायोगाच्चक्षुर्मयत्वाद्ययोगाच्च । अतो विष्णवन्यस्यैव सर्वगतत्वादन्यस्यैव प्राणत्वमानन्दमयत्वं चेति भावः । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **अत इति** ॥ स यश्चायमित्यादिना वाक्येन सर्वत्र पृथिव्यादिपूज्यमानो नारायण एव । 'एतमेव ब्रह्मेत्याचक्षत' इति सर्वगते ब्रह्मशब्दोपदेशात् । ब्रह्मशब्दस्य च श्रुत्यादौ नारायण एव प्रसिद्धत्वादित्यर्थः । तथा च श्रुतिः । तच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ।' इति । अत्र स यश्चायमिति वाक्योदाहरणं पूर्वं विषयवाक्यस्यानुदाहृतत्वात् कृतमशरीरत्वयुक्तिसूचनार्थं च । न हि नारायणेतरचेतनानां स्वतोऽशरीरता सम्भवति ॥ १ ॥

## गुर्वर्थदीपिका

ॐ ॥ सर्वगतत्वस्य भगवतोऽन्यत्र लोकतोऽपि प्रसिद्ध्यभावात्पादासङ्गतिरिति शङ्काऽपनोदाय लोकतोऽन्यत्र प्रसिद्धादित्यश्रुतिसहपठितेत्युक्तम् । एवमुत्तराधिकरणेऽपि लोकतोऽन्यत्र प्रसिद्धादितिनाम्ना सहपाठादत्तृत्वलिङ्गस्यान्यत्र प्रसिद्धिं वक्ष्यति ॥ सर्वजीवानां वैतत्सर्वगतत्वमुच्यत इत्यत्र मिलित्वा सर्वजीवानां वा प्रत्येकं सर्वजीवानां वेत्यर्थः । चक्षुर्विकारित्वादिरूपचक्षुर्मयत्वादिकं शतायुष्ट्वादिलिङ्ग-वन्नान्तर्यामिणि योजयितुं शक्यत इति भावेनोक्तं चक्षुर्मयत्वाद्ययोगादिति । ''एतं ह्येव बह्वृचा'' इति वाक्यमध्ये यद्यपि ''स यश्चायमशरीरः प्रज्ञात्मे''ति वाक्यं नास्ति तथाऽप्यस्यैव वाक्यस्याऽऽदिभागेऽ-स्तीत्यतस्तदपि विषयवाक्यान्तर्गमेवेति भावेनाऽऽह भाष्यकारः ''स यश्चायमशरीरः प्रज्ञात्मेत्यादिने''ति । तर्हि व्यवहितवाक्योदाहरणे को हेतुरित्यत उक्तं टीकाकृता अशरीरत्वयुक्तिसूचनार्थं चेति ।

## भावबोधः

ॐ सर्वत्र प्रसिद्धोपदेशात् ॐ ॥ अर्थस्य शब्दात्मकत्वाभावाच्छब्दस्य कथं लिङ्गात्मकत्वम् ? प्रतिपादकत्वविवक्षायामपि सर्वगतत्वमित्यादिलिङ्गवाचकशब्दानां विष्णुपरत्वायोग इत्यतो व्याचष्टे **धर्मविशिष्टधर्मिवाचिनामिति** । **श्रुत्यादिसङ्गतिमिति** । इहाश्रितत्वादित्यव्यवहितपूर्वसूत्रोपात्तसूत्रांशेन च सङ्गतिमित्यर्थः । तदेवैतरेयक इति ॥

ननु ब्रह्म ततममित्यनेन निरवधिकसर्वगतत्वमभिप्रेतम् । तादृशसर्वगतत्वोक्तेरेवोपासनोपयोगात् । एतमस्यामित्यत्र त्वर्भकौकस्त्वादित्युत्तरसूत्रानुसारेण भूतपदप्रयोगबलेन च भूतवृत्तित्वमात्रमुच्यते । अन्यथा

(भावबोधः)

सर्वेष्वित्युक्तत्वाद्भूतशब्दवैयर्थ्यं स्यात् । तथा च तयोरेकरूपत्वाभावात् कथं तदेवेत्युक्तमिति चेत्, न; तदेवेत्यस्य तदेकदेशरूपमित्यर्थात् । एवमपि पूर्वाक्षेपः सम्भवति । तथा हि– अत्रोक्तभूतगतत्वस्यैतमेवेत्यवधारणबलेनान्यमात्रनिष्ठत्वे विष्णोर्भूतगतत्वापगमने निरवधिकसर्वगतत्वं न स्यात् । निरवधिकसर्वगतत्वोपेतं च श्रुत्यादिसिद्धमिति ब्रह्म ततममित्युक्तसर्वगतत्वमपि एतद्वाक्यप्रतिपादितभूतस्यैव स्यादित्युपपादनसम्भवादिति भावः ।· **विष्णोरन्यस्य वेति** । अत्रैतमस्यामित्युक्तं सर्वगतत्वं किमादित्यादेरुत विष्णोरिति चिन्ता । तदर्थमादित्यादिप्रापकम् आदित्यादिश्रुतय आदित्यानुक्तिचक्षुर्मयत्वादीनि लिङ्गानि, अर्भकौकस्त्वसम्भोगप्राप्तिरूपपरपक्षानुपपत्तिश्चेत्येतत्, ब्रह्मशब्दश्रुतत्वादिलिङ्गसर्वशरीरस्थत्वकर्मकर्तृव्यपदेशानुपपत्तिरूपविष्णुप्रापकबाधकमुत तद्बाध्यमिति । तदर्थमादित्यश्रुत्यादिकं निरवकाशं ब्रह्मशब्दादिकं सावकाशमुत ब्रह्मशब्दादिकं निरवकाशम्, आदित्यश्रुत्यादिकं सावकाशमिति । तदर्थं ब्रह्मशब्दादेर्निरवकाशत्वे आदित्यश्रुत्यादेः सावकाशत्वे च प्रमाणं नास्त्युत आस्तीति । **वह्वादित्यश्रुतेरिति** ॥

ननु लोकतोऽन्यत्र प्रसिद्धस्याप्यादित्यशब्दस्यान्तराधिकरणन्यायेन विष्णुवाचित्वात् कथं तेन तदन्यस्य प्राप्तिरिति चेत्, न; संवत्सर एव प्रध्वंसयन् तस्यैतस्यासावादित्यो रस इति संवत्सराधिपतित्वरूपसंवत्सरसारत्वलिङ्गाद्यभावश्चासावादित्य इति प्रसिद्धार्थयच्छब्दोपबन्धात् तस्मात् पुरुषं पुरुषं प्रत्यादित्यो भवतीति सर्वपुरुषाभिमुख्यलिङ्गाच्चाऽऽदित्यशब्दस्य प्रसिद्धादित्यपरत्वात् । अत एव भाष्ये– तस्यैतस्यासावादित्यो रस इत्यादिनेति उक्तलिङ्गप्रतिपादकवाक्यमुदाहृतमित्यभिप्रेत्य तद्गतादिपदार्थत्वेन तल्लिङ्गप्रतिपादकं यश्चासावादित्यस्तस्मात् पुरुषं पुरुषं प्रत्यादित्यो भवतीति वाक्यमेव टीकायामुदाहृत्य बह्वादित्यश्रुतेरित्युक्तम् । अनेन बहवो ह्यत्रादित्यादिशब्दा इति न्यायविवरणमप्युक्तार्थं भवति । न्यायविवरणगतादिशब्दार्थमाह– सूर्य आत्मा जगत इतीति । अयमपि भाष्यगतस्याप्यादिशब्दस्यार्थ इति ज्ञेयम् । **क्षित्यादिधूक्त्वा आदित्येऽनुक्तिरित्यादिलिङ्गेनेति** । आदित्येऽनुक्तत्वलिङ्गादेवेत्यर्थः । अनेन लिङ्गेनादित्यशब्दस्यादित्यसंस्थितपरत्वादन्तर्यामिपरत्वे तद्विरुद्धमिति भावः । आदित्यादिलिङ्गं चेति न्यायविवरणगतादिपदार्थमाह । **चक्षुर्मय इति** ॥ पूर्वं चक्षुर्मयत्वादिकमन्तर्यामिण्यङ्गीकृत्याल्पौकस्त्वं न युक्तमित्युक्तम् । इदानीं जीवधर्मत्वात्तस्य तदपि न युक्तमित्याह । **चक्षुर्मयत्वाद्ययोगाच्चेति** । नित्यज्ञानवदन्तर्यामिणो ज्ञानकरणचक्षुरादिप्राचुर्यायोगाच्चेत्यर्थः । स यश्चायमशरीरः प्रज्ञात्मेत्यादिनेत्येतदादित्यो रस इत्यादिनेतिवद्युक्तिप्रदर्शकमात्रमिति भ्रमं वारयितुमाह । **स यश्चायमित्यादिना वाक्येनेति** ।

(भावबोधः)

अत एव वक्ष्यति स यश्चायमिति वाक्योदाहरणमिति सूचनार्थं चेति । **तथा च श्रुतिरिति** । अनेन भाष्ये नारायणशब्दप्रयोगाभिप्राय उक्तो भवति । **अशरीरत्वयुक्तिसूचनार्थं चेति** । विषयवाक्य-प्रदर्शनमात्रार्थत्वे तु "एवं ह्येवं बह्वृचा" इत्यादिना इत्यवक्ष्यत् । इयं युक्तिः "अनुपपत्तेस्तु न शारीर" इति सूत्रे शारीरपदं प्रयुञ्जानस्य सूत्रकृतोऽप्यभिप्रेता । अन्यथा जीव इत्येव ब्रूयादिति भावः । अशरीरत्वस्यादित्यादौ निरवकाशत्वमाह– **न हि नारायणेतरेति** । अनेन श्रीतत्त्वादौ व्यभिचारोऽपि परास्तः ।

## भावदीपः

॥ **सर्वत्र प्रसिद्धोपदेशात् ॐ** ॥ छित्रनयमात्रेण प्रवृत्तिं दर्शयतीत्यपि भाष्यार्थोपपत्त्या पादार्थत्वा-प्रतीतेराह ॥ **एतत्पादेति** ॥ शब्दादेवेत्यत्र वक्ष्यमाणदिशा असाधारणधर्मस्य लिङ्गत्वात्कथं तदात्मकत्वं शब्दानामित्यतो लिङ्गं धर्मः स आत्मेवात्मा प्रवृत्तिनिमित्तं येषां ते लिङ्गात्मकाः । स्वरूपार्थो वा आत्मशब्दो निमित्तनिमित्तिनोरभेदोपचारादिति सुधोक्तदिशा समासं मत्त्वाऽर्थमाह ॥ **धर्मविशिष्टेति** ॥ यौगिकानामित्यर्थः । प्राचीनानामपि प्रागुक्तदिशा यच्छब्दा योगवृत्तय इत्यणुभाष्योक्त्या च यौगिकत्वात् तद्व्यावृत्त्यर्थम् आपाततोऽपीति योज्यम् । भाष्ये प्रवृत्तिमित्यस्य महायोगविद्वद्रूढिभ्यां प्रकृष्टवृत्तित्वमिति तत्वप्रदीपोक्तेरत्रानुक्तिः । तृतीयादिसाङ्कर्यप्रसङ्गादाह ॥ **अन्यत्रेति** ॥ **नामसमन्वयेति** ॥ विश्व-जीवान्तरत्वाद्यैर्लिङ्गैः इत्यणुभाष्ये सिद्धान्त्यभिमतयौगिकत्वाभिप्रायेण वैश्वानरशब्दस्य लिङ्गत्वोक्तावपि श्रुतिर्लिङ्गाधिका परेति विषययुक्तिमालायां लोकरूढ्या नामत्वोक्तेरिति भावः ॥ **सर्वगतत्वलिङ्गेति** ॥ सर्वप्राणिहृदयगुहास्थत्वरूपसर्वगतत्वलिङ्गेत्यर्थः । तस्य च स्वतः सूर्ये अप्रसिद्धेराह ॥ **लोकतोऽन्यत्र प्रसिद्धेत्यादि** ॥ अर्भकौकस्त्वादितत्प्रसिद्धोपदेशादिपूर्वोत्तरपक्षयुक्तिसाहित्याल्लिङ्गमेव समन्वीयते न त्वादित्यनामेति भावः । एवमग्रेऽपि ॥ **शास्त्रादीति** ॥ पूर्वत्रेव सङ्गतित्रयोपपादकत्वं लोकत इत्यादि-पदानां ध्येयम् । एवमग्रेऽपि । इत्यन्तभाष्यं सङ्गतिसूचनपरत्वेनाकाङ्क्षितपूर्त्या व्याचष्टे ॥ **ब्रह्मेति** ॥ तच्चेत्यस्यार्थः **तदेवेति** । ततमत्वान्तःपात्येवेत्यर्थः । सर्वहृदयगुहास्थत्वरूपसर्वगतत्वस्य ततमत्वैकदेशत्वात् । यद्वा पूर्वपक्षे ततमत्वस्य सङ्कोचात्तदेवेत्युक्तिः । तदेवेत्यस्य इत्याम्नायत इत्यन्वयः । तच्चेत्यादेस्तात्पर्यम् ॥ **तद्यदीति** ॥ **अन्यस्येति** ॥ आदित्यश्रुत्यादिना आदित्यादेः स्यादित्यर्थः । उक्तमित्यन्तवाक्यस्य तात्पर्यम् ॥ **तर्हि प्राचीनेति** ॥ नन्वत्रत्यसर्वहृदयस्थत्वरूपं सर्वगतत्वमन्यस्य चेत्ततमत्वेनोक्तप्राणोऽपि कुतोऽन्य इत्यत आह ॥ **एकेति** ॥ ननु सर्वगतत्वाख्यसर्वहृदयस्थत्वरूपार्भकौकस्त्वं प्रागुक्तततमत्वरूप-

(भावदीपः)

व्याप्तत्वं चैकस्य विरुद्धमिति न शङ्क्यम् । ततमत्वस्यादित्यादौ सङ्कोचसम्भवादिति ।। **अतोऽवश्यमिति** ।। एतेनेत्यत इति भाष्यस्य इति सङ्गतिसम्भवादित्यर्थः सूचितः । एवमग्रेऽपि । तदेव भाष्यं पूर्वपक्षपरतयापि व्याचष्टे ।। **तत्र संशयादौ सतीति** ।। **आदित्यस्यैवेति** ।। तच्चेति चकारोऽवधारणार्थः सन्नादित्यस्येत्यत्रान्वेतीति भावः । तस्य चैतस्य संवत्सरस्य रसः सारोऽधिपतिः । अन्तर्नयन्यायेन श्रुतेः सावकाशत्वनिवृत्त्यर्थं निरवकाशसंवत्सरसारत्वरूपादित्यलिङ्गद्योतनाय रस इत्यन्तानुवादः । बहवो ह्यत्रादित्यशब्दाः क्षित्यादिषूक्त्वा आदित्येऽनुक्तिरित्यादिलिङ्गं चेति न्यायविवरणदिशा भाष्यस्थादिपदार्थमाह ।। **यश्चासाविति** ।। **अस्येति** ।। एतमिति प्रकृतस्येत्यर्थः ।। **अन्यथेति** ।। आदित्यादन्यस्य सर्वगतत्व इत्यर्थः ।। **अत एवेति** ।। विशिष्टादित्येऽनुक्तत्वरूपनिरकाशलिङ्गादेवेत्यर्थः । अत्र भाष्ये आदित्यस्येत्युक्तावप्यग्रे चक्षुर्मयत्वादेश्च जीव इत्युक्तेराह ।। **सर्वजीवानां वेति** ।। **न चेति** ।। आनन्दमयनयरीत्या मयट् प्राचुर्यार्थः । सम्पूर्णदर्शनादिशक्त्यादिमानिति तदर्थ इति भावः । तस्य सावकाशत्वमभ्युपेत्यार्भकौकस्त्वादिति सूत्रोक्तनिरवकाशलिङ्गेन जीवपक्षमुज्जीवयति ।। **तस्यापरिच्छिन्नत्वेनेति** ।। एष म आत्मा अन्तर्हृदये ज्यायानिति श्रुतेरिति भावः । भूतेष्वित्युक्त्या प्रतीतमेकदेशस्थत्वरूपमल्पौकस्त्वं सर्वगतसर्षपान्तस्स्थत्वं ब्रह्माण्ड इव न युक्तमित्यर्थः । नन्वेवं प्रागुक्तं ततमत्वमपि जीवानामेव वाच्यम् एकप्रकरणत्वात् । तथा च ततमेषु जीवेषु अल्पौकस्त्वायोगस्तुल्य इति चेन्मैवम् । जीवेषु ततमत्वस्य सङ्कोचसम्भवात् । न चान्तर्यामिणि तथा । ब्रह्मत्वव्याघातादिति भावः । कथं तर्हि भाष्ये तद्व्यपदेशाच्चेति सूत्रे च चक्षुर्मयत्वादिलिङ्गोक्तिरित्यतो हेत्वन्तरेण पूर्वपक्षे सति अभ्युच्चयत्वेन तदुक्तिरिति सुधोक्तदिशाऽर्भकौकस्त्वरूपानवकाशलिङ्गे सति प्रसिद्धचक्षुःकरणकत्वमेव चक्षुर्मयत्वादि स्यात् । तच्च नित्यज्ञानेऽन्तर्यामिणि न युक्तमिति भावेनाऽऽह ।। **चक्षुर्मयत्वेति** ।। अत एव सूत्रेऽर्भकौकस्त्वादित्युक्त्वैव तद्व्यपदेशादित्युक्तमिति भावः । भाष्यस्थेतिशब्दं हेत्वर्थं मत्वा ततममिति वाक्यस्य पूर्वाक्षेपरूपसङ्गतिपरत्वेन व्याख्यातस्यापि पूर्वपक्षफलपरतयापि तात्पर्यमाह ।। **अत इति** ।। निरवकाशश्रुतिलिङ्गसत्त्वादित्यर्थः । आदित्यजीवयोरन्यतरानिश्चयेऽपि अन्यत्वेन तन्निश्चयस्स्यादतो न पूर्वपक्षस्य सन्देहादविशेष इति भावेनोक्तम् । **विष्ण्वन्यस्यैवेति** ।। **सर्वगतत्वादिति** ।। सर्वहृत्स्थत्वरूपसर्वगतत्वादित्यर्थः ।। **प्राणत्वमिति** ।। एकप्रकरणत्वादिति भावः । असङ्कुचितसर्वगतत्ववति विष्णावल्पौकस्त्वायोगेऽपि अल्पौकस्त्ववत्यादित्यादौ ततमत्वेनोक्तप्राणत्वं युक्तम् । ततमत्वस्य यथायोगं सङ्कोचसम्भवादिति भावः । महाभोगत्वेनोक्तप्राणत्वं च प्राणत्वमित्यनेन गृह्यते । ततमत्वेन महाभोगत्वेन चोक्तयोर्द्वयोरपि लाभाय प्राणत्वमित्येव सामान्योक्तिः । एवं

(भावदीपः)

चानन्दमयत्वं चेत्याक्षेपः शिष्टो भवति । यत्त्वस्य पूर्वाक्षेपेण सङ्गतिमत्त्वे पादविभागभङ्गप्रसङ्ग इति । तन्न । प्रमेयभेदेन तदुपपत्तेरिति । भाष्ये स यश्चायमिति प्रतीकोपादानेन एतमस्यामित्यादि-वाक्यमेवाभिप्रेतमिति भावेनाह ॥ **इत्यादिना वाक्येन सर्वत्र पृथिव्यादिपूच्यमान इति** ॥ यद्वा आदित्यो रसः यश्चासावादित्य इति पूर्वोत्तरवाक्ययोरादित्यपदेनैवादित्यस्थस्य सर्वेन्द्रियमय इति वक्ष्यमाणस्मृत्या ग्रहणादुदाहरणमेवेदम् । सर्वत्रेति भाष्यपदानुवादः । उक्थादिष्विति वाच्ये पृथिव्यादिष्वित्युक्तिः सर्वभूताशयस्थित इति वक्ष्यमाणस्मृत्याद्यनुरोधेन । अत एव आदित्यादि-ष्वित्यप्यनुक्तिः स यश्चायमिति वाक्ये स्पष्टम् आदित्ये एप इत्यप्रतीतेश्चेति भावः । विशिष्टस्य हेतुत्वे प्रसिद्धपदव्यावर्त्याभावात्केवलब्रह्मशब्दस्यैव हेतुत्वे दोषाभावाच्च विभज्य भाष्यं हेतोः पक्षधर्मतां दर्शयन् व्याचष्टे ॥ **एतमेवेति** ॥ **सर्वगत इति** ॥ एतमित्यनेन पृथिव्यादिपु सर्वत्रोक्तस्य परामर्श इति भावः ॥ **प्रसिद्धत्वादिति** ॥ तथा चान्यस्योक्तौ प्रसिद्धिबाध इति भावः । स्मृतेश्चेति सूत्रे सर्वभूतेति स्मृतिसमाख्यानोक्त्या श्रुतौ भूतेष्वित्युक्त्या च भूतादन्यत्र नेति प्राप्तशङ्कानिरासाय भाष्ये नारायण एवेत्युक्तिः श्रुतिसमाख्यासूचनायेति मत्त्वाऽऽह ॥ **तथा च श्रुतिरिति** ॥ तैत्तिरीयोपनिप-दीत्यर्थः । तथा चेह नारायणस्यैव बहिरपि विद्यमानस्यैव च सर्वान्तःस्थत्वरूपसर्वगतत्वमिति भावः ॥ **कृतमिति** ॥ तर्हि एतं ह्येवेत्याद्येवोच्येतेत्यतो वा पूर्वगादित्यो रस इति विपयवाक्यस्योक्त-त्वादेतदुक्तिर्व्यर्थेत्यतो वाऽऽह ॥ **अशरीरत्वेति** ॥ तां निरवकाशतोक्त्या व्यनक्ति ॥ **न हीति** ॥ **स्वत इति** ॥ मुक्तानामपि सा तत्प्रसादादागतेति भावः । नारायणेतरेत्युक्त्या यस्य प्रसादादित्यादिश्रुतिः सूचिता । अत एवोत्तरसूत्रे शारीरपदेनैव जीवादित्ययोरुक्तिरिति भावः ॥ १ ॥

## अभिनवचन्द्रिका

**एतत्पादप्रतिपाद्यमिति** ॥ 'अध्यायस्यैकार्थत्वात् पादभेदः किंनिबन्धन इत्यतः समन्वयेऽप्यवान्तर-भेदेनेति भावेने'ति वर्तते । तस्यैतत्पादप्रतिपाद्यं दर्शयतीत्यनेन सम्बन्धः । **प्राधान्येनेत्युक्तमिति** ॥ यावदुक्तं भवति प्रायेणेत्यनेन, तावदुक्तं भवति प्राधान्येनेति । ततश्च प्रायःशब्देनेव प्राधान्यशब्देनापि कतिपयाधिकरणव्यावृत्तिर्भवतीति भावः । **लोकतोऽन्यत्र प्रसिद्धेति** ॥ एतदधिकरणस्य पादान्तर्भावसिद्धये सर्वगतत्वप्रतिपादकशब्दस्याऽन्यत्र प्रसिद्धत्वव्युत्पादनार्थम्, 'आदित्यश्रुतिसहपठित'ति विशेषणम् । सर्वगतत्वप्रतिपादकशब्दस्य स्वतोऽन्यत्रप्रसिद्धत्वाभावेऽपि आदित्यश्रुतिबलेनाऽन्यत्र प्रसिद्धत्वं सम्पाद्यत इति अस्याधिकरणस्य पादान्तर्भाव इति भावः । आदित्यश्रुतेः कथमन्यत्रप्रसिद्धिसम्पादकत्वमित्यतोऽन्यत्र

(अभिनवचन्द्रिका)

प्रसिद्धेति आदित्यश्रुतिविशेषणम् । आदित्यश्रुतेरपि केनान्यत्रप्रसिद्धिसम्पत्तिरित्यत उक्तम् – **लोकत इति** ॥ एतेन पादान्तर्भावसिद्धये समन्वेतव्यशब्दस्याऽन्यत्र प्रसिद्धत्वं वक्तव्यम् । आदित्यश्रुतेः लोकतोऽन्यत्र प्रसिद्धिकथनं तु व्यर्थमिति परास्तम् । **सर्वगतत्वलिङ्गात्मकशब्दस्येति** ॥ नन्वत्र विषयवाक्ये सर्वगतत्वरूपलिङ्गात्मकशब्दो न श्रूयते । न च – 'सर्वेषु भूतेष्वेत'मिति लिङ्गात्मकशब्द इति वाच्यम् तस्य वाक्यत्वेन धर्मविशिष्टधर्मिवाचकत्वरूपलिङ्गात्मकशब्दत्वायोगात् । न च तेन उन्नीतं सर्वगतमिति पदं लिङ्गात्मकमिति वाच्यम् । तस्य प्रागुक्ताऽऽदित्यश्रुतिसहपठितत्वायोगादिति चेत्, न ब्रूमो वयमत्र लिङ्गात्मकपदस्य समन्वयः प्रतिपाद्यत इति । येनोक्तदोषः स्यात् । किंनाम लिङ्गात्मकस्य शब्दस्येति । शब्दत्वं च वाक्यपदसाधारणम् । एवं च – 'एतं ह्येव बह्वृचामहत्युक्थ' इति लिङ्गात्मकस्य वाक्यस्य इहोच्यते । अस्य चाऽऽदित्यश्रुतिसहपाठश्चोपपद्यते । कथमस्य धर्मविशिष्ट-धर्मिवाचकत्वरूपं लिङ्गात्मकत्वं, वाचकत्वस्य पदधर्मत्वादिति चेत्, धर्मविशिष्टधर्मिवाचकत्वमित्यनेन वाक्यपदसाधारणस्य प्रतिपादकत्वस्यैव विवक्षितत्वात् । अत एव सत्तर्कदीपावल्याम्, 'एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्त, एतमग्नावध्वर्यव, एतं महाव्रते छन्दोगा; एतमस्यामेतं दिवि, एतं वायावेत'मित्यादिपृथिव्यादिगतत्वेन मीमांस्यमान' (ऐ.आ०) इति वाक्यप्रतिपाद्यस्यैव विषयत्वमुक्तम् ।

**सुधायां च** – 'एतमस्यामेतं दिवि' इत्यादिवाक्योक्तं सर्वगतत्वमेवात्र पादे प्रथमं परमेश्वरस्य समर्थ्यते' इत्युक्तम् ।

टीकायां च – 'स यश्चाय'मित्यादिना वाक्येन 'सर्वत्र पृथिव्यादिषूच्यमानो नारायण एवे'ति वक्ष्यते ।

नन्वन्तस्थत्वलिङ्गसमन्वयेनाऽऽदित्यनाम्नः समन्वयः सिद्धो न वा । आद्ये – पूर्वपक्षप्रापकाभावे-नाधिकरणवैयर्थ्यम् । द्वितीये आदित्यनामसमन्वय एवोच्यतां किं लिङ्गसमन्वयेन । नामसमन्वयेनैव लिङ्गसमन्वयसिद्धेरिति चेत्, न – अन्तस्थत्वलिङ्गसमन्वयेन तत्प्रकरणपठितानामिन्द्रादिनाम्नां समन्वय-सिद्धावपि अतत्प्रकरणपठितत्वेनाऽस्याऽऽदित्यनाम्नः समन्वयसिद्ध्यभावात् । नन्वेवं तर्हि आदित्यनाम्न एव समन्वय उच्यतां किं सर्वगतत्वलिङ्गसमन्वयेनेति वाच्यम् । अत्र हेतूक्रियमाणस्य ब्रह्मशब्दस्याऽऽदित्य निष्ठतयाऽप्रतीतेः एतद्वाक्यगतसर्वगतनिष्ठतया च स्पष्टं प्रतीतेः, सर्वगतत्वलिङ्गस्यैवाऽत्र समन्वय उक्तः । न चाऽऽनन्दमयाधिकरणेन गतार्थता, तत्रैवाऽत्रापि ब्रह्मशब्देनैव विष्णुपरत्वसाधनादिति वाच्यम्– ब्रह्माऽऽदित्यश्रुतीनां सौरमन्त्रोदाहरणस्य चाऽभ्यधिकाशङ्काप्रापकस्य भावात् ।

(अभिनवचन्द्रिका)

**श्रुत्यादिसङ्गतिमिति** ।। प्राणाधिकरणप्रतिपाद्यस्य, एतदधिकरणप्रतिपाद्यस्य च सर्वगतत्वेन प्रतीयमानत्वं सङ्गतिरिति सूचितमिति ज्ञेयम् । **प्राचीनप्राणोऽप्यन्य एव स्यादिति** ।। इतः परं टीकायां श्रूयमाणं 'एकप्रकरणत्वा'दिति वाक्यं प्रक्षिप्तम् । 'एतं ह्येव बह्वृचा' इति वाक्यप्रतिपाद्यस्य सर्वगतस्य प्राचीनप्राणस्य च विभिन्नारण्यकप्रतिपाद्यत्वेनैतत्प्रतिपादकयोरेकप्रकरणत्वाभावात् । अधिकरणान्तरेषु अन्य एव स्यादिति प्राचीनाधिकरणाक्षेपरूपपूर्वपक्षफलप्रदर्शनाऽन्तरं हेतोरनभिधानेन इह तदभिधाने विशेषकारणाभावाच्चेति द्रष्टव्यम् । **अन्यथेति** ।। सर्वगतस्याऽऽदित्यरूपत्वाभाव इत्यर्थः । **सजातीयेति** ।। 'चन्द्रमस्येत'मित्युक्त्वा 'एतमादित्य' इत्यनुक्तौ विशेषकारणाभावादिति भावः । **अत एवेति** ।। सौरमन्त्रोदाहरणस्य सूर्यपरत्वज्ञापकसद्भावादेवेत्यर्थः । **सर्वजीवानां वेति** ।। ननु – सर्वजीवानां वेति पूर्वपक्षान्तरकथनमयुक्तम् । तत्प्रापकस्य चक्षुर्मयत्वादिलिङ्गस्याऽऽदित्येऽपि सम्भवेनैक-पूर्वपक्षेणैवोपपत्तौ पूर्वपक्षान्तरकल्पनाऽयोगात् । अस्मिन् पक्षे आदित्यश्रुत्ययोगाच्च । किं चैवमाप्ततमो **भाष्यकारो** मन्यते – न चाऽऽदित्यशब्दाच्चक्षुर्मयत्वादेश्च जीव इति वाच्य'मित्यभिधानात् । अन्यथा आदित्यशब्दस्यैकपूर्वपक्षहेतुत्वेन चक्षुर्मयत्वादेश्च पूर्वपक्षान्तरहेतुत्वेन समुच्चयार्थकचशब्दो न स्यात् । जीवग्रहणवत् आदित्यग्रहणप्रसङ्गश्च । किं चैवमाप्ततमः **पद्मनाभतीर्थो** मन्यते – आदित्याख्यजीवविशेषो न विष्णुरिति चेदित्यभिधानात्' इति चेत् – सत्यम् – एकैनैव पूर्वपक्षेणोपपत्तिः । उक्तं च भाष्यकारेण एक एव पूर्वपक्ष इति । तथापि सूत्रभाष्याभ्यां सूचितोऽयमपरः पूर्वपक्षः टीकाकृता दर्शितः । तथा हि – यद्याऽऽदित्य एवायं सर्वगत इत्येक एव पूर्वपक्षः सूत्रकृतोऽभिमतः स्यात् तर्हि 'अनुपपत्तेस्तु नाऽऽदित्य' इत्येव सूत्रं विदध्यात् लघु चैवं सूत्रं भवति श्रुत्यनुसारि च । तथा भाष्यकारोऽपि 'न चाऽऽदित्यशब्दाच्चक्षुर्मयत्वादेश्च जीव इति वाच्य'मिति न ब्रूयात् । सूत्रस्थ-शारीरपदव्याख्यानायाऽऽदित्य इत्येव ब्रूतात्, तत्साधनाय आदित्यशब्दादित्येव ब्रूयात्,न तु चक्षुर्मय-त्वादेरिति । तस्याऽतिप्रसक्तत्वात्' न चैवं सूत्रकारभाष्यकारावाहतुः, किंनाम सूत्रकारः 'शारीर' इत्याह । भाष्यकारस्तु शारीरपदं जीव इति व्याचख्यौ । तेन मन्यामहे अनुपपत्तेरित्यनेन आदित्यः सर्वगत इति पक्षो यथा निरस्तः, तथा सर्वे जीवाः सर्वगता इति पक्षो निरस्त इति तयोरभिप्रेतमिति ।

नन्वथापि जीवेष्वादित्यशब्दाभावात् कथमस्य पूर्वपक्षस्योदय इति चेत्, न । जीवसमुदाये कस्यचित् आदित्यशब्दवाच्यत्वेन छत्रिन्यायेन सर्वत्राप्यादित्यशब्दोपपत्तेः । **सत्तर्कदीपावलीकृता** तु भाष्यकृता कण्ठोक्तपूर्वपक्षो दर्शित इति न तद्विरोधोऽपीति ध्येयम् ।

## वाक्यार्थमुक्तावली

श्रीहरये नमः । श्रीवेदव्यासाय नमः । लिङ्गात्मकानामित्यत्र लिङ्गं धर्मः प्रवृत्तिनिमित्तं स आत्मेवात्मा शरीरमिव उपकारकत्वात् येषां ते लिङ्गात्मकाः । स्वरूपार्थो वात्मशब्दः । निमित्त-निमित्तिनोरभेदोपचारादिति सुधोक्तदिशा विग्रहं मत्वाऽर्थमाह ॥ **धर्मेति** ॥ अवयवार्थविशिष्टधर्मिवाचिनां यौगिकानामित्यर्थः । आपाततोऽपीति ग्राह्यम् । प्राचीनानामपि यौगिकत्वात् । अत्र यौगिकानामित्यनुक्त्वा धर्मविशिष्टेत्याद्युक्तिस्तु वाक्यरूपधर्मसङ्ग्रहाय । अन्यथा यस्मिन् द्यौरित्यादेः लिङ्गात्मकशब्दत्वं न स्यादिति बोध्यम् । एतत्पादीयलिङ्गानां प्रायः साक्षादन्यत्र प्रसिद्ध्यभावात् । अन्यत्र प्रसिद्ध-श्रुत्यादिसाहित्येनैवान्यत्र प्रसिद्धिरिति भावेनाह ॥ **लोकत इति** ॥ **तदेवैतरेयक इति** ॥ ब्रह्म ततममित्यत्र ततमपदेन व्यापकत्वं तत्र तत्र स्थिततया तत्तच्छक्तिप्रबोधकत्वं च विवक्षितम् । तथोक्तं तद्भाष्ये ।

स एष भगवान् विष्णुः प्रादुर्भावात्मना पुनः ।
जातो मत्स्यादिरूपेण सर्वभूतेषु चाविशत् ।
तथा जीवेषु सर्वेषु प्रविष्टः प्रेरणेच्छया ।
स सर्वगुणसम्पूर्णं सर्वगं नित्यमव्ययम् ।
एतदेव स्वरूपं स त्वपश्यदवतारगम्

इति । ततमं परिपूर्णं ब्रह्म अपश्यदिति च । उभयस्याप्युत्तमाधिकारिभिरुपास्यत्वेन उपासात्रै-विध्यादित्यत्र सर्वगतत्वेनेति वदता भाष्यकृता व्यापकत्वपरतयाऽस्योदाहृतत्वात् उभयविवक्षाया अवर्जनीयत्वाच्च । एतदुभयविधमेव सर्वगतत्वम् एतमस्यामित्यादावुच्यते । तत्तच्छक्तिनियामकतया सर्वान्तर्गतत्वस्य स्पष्टमप्रतिभासात् । आकाशवदन्तर्बहिर्व्यापकत्वस्य 'एतमेवाखिलजगद्व्याप्तं पूर्णगुणात्मकम्' इति तद्भाष्यपर्यालोचनयावगमात् । अत एव टीकायामन्तर्बहिश्चेति श्रुतेरुदाहरिष्य-माणत्वात् । विवक्षितगुणोपपत्तेरित्यत्र स योऽत इत्युक्त्वा तत्त्वस्य विषयभूतसर्वगतत्वानतिरेकस्य टीकायां वक्ष्यमाणत्वाच्च । देशतः कालतश्चैव गुणतश्चातिपूर्तितः । अत इत्युच्यत इति तद्भाष्ये अतःपदेन निश्छिद्रतया व्यापकत्वस्योक्तत्वाच्च तदेवैतरेयके इति सुष्ठूक्तम् ।

ननु ब्रह्म ततममित्यत्र निरवधिकानन्तपदार्थान्तर्गतत्वमुक्तम् । एतमस्यामित्यादौ पृथिव्यादि-कतिपयान्तर्गतत्वम् । अन्यत्रार्भकौकस्त्वसूत्रे कतिपयगतत्वेनाल्पस्थानगतत्वाशङ्कानुपपत्तेः । सर्वेषु

(वाक्यार्थमुक्तावली)

भूतेष्वित्यत्र सर्वेष्वित्यनेन पूर्तौ भूतेष्विति भूतसर्ववृत्तित्वाभिप्रायेण सर्वभूतपदप्रयोगानुपपत्तेश्च । तथा च कथं तदेवेत्यधारणमिति चेन्न । एतमस्यामित्यादौ चेतनाचेतनसर्वगतत्वस्योक्तेः । सर्वेषु भूतेष्विति भूतपदस्य जीवपरत्वात् एतमेव ब्रह्मेत्यन्तस्य एतमेवाखिलजगद्व्याप्तं पूर्णगुणात्मकमिति व्याख्याततत्वात् । स एष संवत्सरसंमान इत्युत्तरवाक्ये

'संवसद्रतिदातृत्वात् ब्रह्मा संवत्सराभिधः ।
नियामकः स जीवानां सर्वेषां प्रभुरीश्वरः ।
अनन्तमूर्तिर्ब्रह्मासावनन्तजगदास्थितः ।
नियामकस्तस्य विष्णुः तावद्रूपेषु संस्थितः' ।

इति भाष्यदिशाऽनन्तपदार्थान्तर्गतत्वस्य स्पष्टप्रतिभासाच्च । स्मृतेश्चेत्युक्तगीतासमाख्यानाच्च । गीतायां गामाविश्येत्याद्युक्त्वा अहं वैश्वानरो भूत्वा प्राणिनां देहमास्थित इत्युक्त्या चेतनाचेतनसर्वगतत्वप्रतीतेः तदेवेत्येतदविरुद्धम् । अर्भकौकस्त्वशङ्का तु स्थूलसूक्ष्मतत्तत्पदार्थान्तर्गतत्वेन तत्तत्परिमाणत्वप्रसक्त्या विभूत्याक्षेपपरेत्यदोषः ।

भावबोधे तु यद्यप्येतमस्यामित्यादौ कतिपयगतत्वमेवोक्तम् । तथापि तदेवैतरेयक इत्यत्र तदेकदेश-मेवेत्यर्थः । न च पृथिव्यादिकतिपयगतत्वस्यान्यनिष्ठत्वे ब्रह्म ततममित्युक्तसर्वगतत्वस्य अन्यनिष्ठत्वं कुत इति वाच्यम् । पृथिव्यादिभूतगतत्वस्यान्यनिष्ठत्वे विष्णोः सर्वगतत्वानुपपत्या वाक्यस्य निर्विषयत्वापातेन भूतगतस्यैव तदितरसर्वगतत्वावश्यम्भावेन सर्वगतोऽन्य एव स्यादिति वर्णितम् ।

**॥ तद्यदीति ॥** एतमस्यामित्युक्तस्य सर्वगतस्य विष्णोरन्यत्वे ब्रह्म ततममित्युक्तस्यापि विष्णोरन्यत्वं स्यात् । ततमस्य विष्णोरन्यत्वे प्राचीनप्राणोऽप्यन्य एव स्यादित्यर्थः । ननु ततमस्य विष्णोरन्यत्वे प्राचीनप्राणस्य विष्ण्वन्यत्वं कुतः? ततमत्वस्य प्राचीनप्राणेऽश्रवणात् । प्राणस्य चतुर्थखण्डे श्रवणात् । ततमत्वस्य चतुर्थेऽध्याये त्रयोविंशतिखण्डे श्रवणादित्यत आह ॥ **एकप्रकरणत्वादिति ॥** प्रपदखण्डे हि प्राक्सृष्टदेवानां वासार्थं प्रपदप्रवेशद्वारा विष्णुवाय्वोः सर्वदेवपरिवृत्तयोः शरीरेऽवस्थानमुक्त्वा शिरसि दक्षिणाक्षिहृदयकण्ठेषु विशेषसन्निधानस्योक्तत्वात् । तथा चोपनिषत्स एतमेव सीमानं विदार्य एतया द्वारा प्रापद्यत । सैषा विदृतिर्नाम द्वाः । तदेतन्नान्दनम् । तस्य त्रय आवसथास्त्रयः स्वप्नाः । अयमावसथोऽयमावसथोऽयमावसथ इति । तथा च भाष्ये–

(वाक्यार्थमुक्तावली)

तस्मात्तेषां प्रवृत्यर्थं प्रवेक्ष्ये सह वायुना ।
इति मत्वा विरिञ्चस्य शरीरं प्रविवेश सः ।
मूर्धन्यनाड्या प्रथमं ब्रह्मवायुसमन्वितः ।
अग्न्यादयस्तु तत्पश्चात् प्रविष्टास्संनियोजिताः ।
प्रपदाभ्यां तथाऽन्येन रूपेण प्रविवेश ह ॥
बिभर्ति देहं तेनैव मूर्धानं च विचेष्टयन् ।
नारायणो वासुदेव इति द्वेधा व्यवस्थितः ।
मूर्धाविष्टो वासुदेवस्तस्य चावसथास्त्रयः ।
अक्षि कण्ठो हृदित्येवं त एव स्वप्ननामकाः ॥

इति । तथा च खण्डद्वयस्यैकप्रकरणत्वात् मूर्धाविष्टस्य ततमस्यान्यत्वे प्रपदाविष्टः प्राचीनप्राणोऽप्यन्य इत्युपपद्यत एव ।

ननु तृतीयानुवाके द्वितीयाध्याये प्रथमखण्डे प्राणो वंशः स्थविरः शाकल्य इत्युपक्रम्य तृतीये चत्वारः पुरुषा इत्यत्र एतमस्यामित्याद्याम्नायते । यद्ययं सर्वगतो विष्णिवतरः स्यात् तदा उपक्रमस्थप्राणो विष्णिवतरः स्यात् । तथा च जीवमुख्यप्राणलिङ्गादिति सूत्रे वंशप्राणस्य विष्णुत्वनिर्धारोऽयुक्तः स्यादिति साक्षादाक्षेपो युज्यत एव । किमर्थं ब्रह्म ततममिति वाक्यं मध्ये निधाय सङ्गतिप्रतिपादनमिति चेन्न । ब्रह्म ततममित्यस्यैकप्रकरणत्वेन ता वा एताः शीर्षन्नित्यनेन विषयवाक्येनैव साक्षात्सङ्गतिः । एतमस्यामित्यस्य वंशप्राणपरामर्शकस्य ता वा एता इति विषयवाक्योक्तप्राणस्य विष्णुत्वे बाधकत्वेनोदाहृतेन प्राणो वंश इति वाक्येन गुणसूत्रेण च सङ्गतिरिति साक्षाद्विषयाक्षेपलाभाय ब्रह्म ततममिति वाक्यद्वारा सङ्गत्युक्तिः । किं च तत्रानुगमपदेन हेतुतयोक्तो ब्रह्मशब्दः सर्वगते ततमेऽवश्रूयते । ब्रह्मश्रुत्युक्तोऽप्ययं यद्यन्यः स्यात् तदा प्राचीनप्राणोऽप्यन्य इति हेतुमुखेनाक्षेपाय चैवं सङ्गत्युक्तिः । न च वंशप्राणे ब्रह्मशब्दः श्रूयत इत्यलं विस्तरेण ॥

॥ **विष्णोरन्यस्य वेति** ॥ एतमस्यामित्युक्तं सर्वगतत्वं किमादित्यादेरुत विष्णोरिति चिन्ता । तदर्थमादित्यादिप्रापकम् आदित्यादिश्रुतिः आदित्यादिष्वनुक्तिः चक्षुर्मयत्वादिलिङ्गानि अर्भकौकस्त्वसम्भोगप्राप्तिरूपविष्णुप्रापकबाधकमुत तद्बाध्यमिति । तदर्थमादित्यश्रुत्यादिकं निरवकाशं ब्रह्मशब्दादिकं सावकाशमुत विपरीतमिति ॥ **वह्नादित्यश्रुतेरिति** ॥ नन्वादित्यशब्दस्यान्तराधिकरणन्यायेन

(वाक्यार्थमुक्तावली)

विष्णुवाचित्वात् कथं तेन तदन्यस्य प्राप्तिरिति चेन्न । संवत्सर एव प्रध्वंसयन् । तस्यैतस्यासावादित्यो रसः इति संवत्सराधिपतित्वरूपसंवत्सरसारत्वलिङ्गात् । यश्चासावादित्य इति प्रसिद्धिद्योतकेन यच्छब्देनादश्शब्देनोपसम्बन्धात् । तस्मात् पुरुषं पुरुषं प्रत्यादित्यो भवतीति सर्वपुरुषाभिमुख्यलिङ्गाच्चादित्यशब्दस्य प्रसिद्धादित्यपरत्वात् । अत एव भाष्येतस्यैतस्यासावादित्यो रसः इत्यादिना इति लिङ्गघटितवाक्यमुदाहृतमित्यभिप्रेत्य टीकायामादिशब्दार्थत्वेन लिङ्गघटिते वाक्ये उदाहृत्य बह्वादित्यश्रुतेरित्युक्तम् । आदिशब्दस्यार्थान्तरमाह ॥ **सूर्य इति** ॥ अर्थान्तरमाह ॥ **एतमस्यामिति** ॥ **अन्यथेति** ॥ आदित्यः सर्वगतो न चेदित्यर्थः ॥ **अत एवेति** ॥ आदित्येऽनुक्तत्वलिङ्गादेवेत्यर्थः । यद्यत्रादित्यश्रुतिलिङ्गानां तदन्तर्यामिनिष्ठत्वविवक्षा तर्हि अन्तर्गतत्वोक्तिप्रस्तावे सजातीयचन्द्रादावुक्त्वा आदित्य इत्युक्त्ययोगादिति भावः । अग्रे चक्षुर्मयत्वादेश्च जीव इत्युक्तेस्तदनुसारेणादित्यस्येत्येतदुपलक्षणं मत्वाऽऽह ॥ **सर्वजीवानामिति** ॥ **तच्चैतल्लिङ्गमिति** ॥ आनन्दमयाधिकरणे मनोमयप्राणमयादिशब्दानां तत्तत्कोशगततत्तन्नियामकब्रह्मचैतन्ये प्राचुर्यविवक्षया सावकशत्वस्योक्तत्वात् तन्न्यायेनेति वा । अन्तिमप्रकरणे उपासात्रैविध्यादित्युक्तन्यायेन चक्षुरादिप्रधानत्वेन एतल्लिङ्गमन्तर्यामिविषयमभ्युपेत्य विष्णुपक्षे प्रबलबाधकमाह ॥ **तस्येति** ॥ **सर्वेषु भूतेष्वित्युक्तेति** ॥ सर्वेषु भूतेषु इत्यन्तोक्तेत्यर्थः । एवं निरवकाशचक्षुर्मयत्वादिलिङ्गेन विष्णुत्वव्यावृत्तौ जीवत्वसिद्धौ च चक्षुर्मयत्वादिकमपि मयटो विकारार्थकत्वमादाय चक्षुरादिजन्यज्ञानत्वरूपमेव भवेत् । तच्च न विष्णौ युज्यत इत्यभ्युच्चययुक्तिमाह ॥ **चक्षुर्मयत्वादीति** ॥ तदुक्तं सुधायां ननु कथं तर्ह्यस्माकमपि चक्षुर्मयत्वादीनि पूर्वपक्षप्रापकानि? उच्यते हेत्वन्तरेण पूर्वपक्षे सति अभ्युच्चयमात्रत्वेन तेषामुपन्यास इति । सूत्रे तत्तु इत्यनुवर्तते । सर्वत्रेत्यावर्तते । आद्यस्य क्षित्यादिष्वित्यर्थः । द्वितीयस्य श्रुत्यादावित्यर्थः । तथा च सर्वत्र पृथिव्यादौ उच्यमानो नारायण एव । सर्वत्र श्रुत्यादौ तस्मिन्नेव प्रसिद्धब्रह्मशब्दस्यात्रोपदेशादिति सूत्रार्थमभिप्रेत्याह ॥ **सर्वत्र पृथिव्यादिष्वित्यादिना** । प्रत्यधिकरणमनुवृत्तस्य तदित्यस्य जिज्ञासासूत्रस्थब्रह्मपरामर्शकत्वात् ब्रह्मपदस्य च 'स विष्णुराह हि' 'तं ब्रह्मेत्याचक्षते' इति निरन्तरदेवमीमांसोक्तविष्णवर्थकत्वात् भाष्ये च सर्वत्र विष्णुरेवेत्यर्थोक्तावपि इह नारायणपदप्रयोगसूचितं प्रमाणमाह ॥ **तथा च श्रुतिरिति** ॥ भाष्ये नारायणपदोपादानन्तु भूतेष्वित्युक्त्या बहिर्व्याप्तिरत्र नोच्यत इति भ्रमनिरासायेति ज्ञातव्यम् । विषयवाक्यं पूर्वमेवोदाहर्तव्यम्, इहोदाहरणे किं कारणम् ? तथात्वे वा एतमस्यामित्यारभ्योदाहर्तव्यम्, न तु स यश्चायमित्यारभ्य इत्यत आह ॥ **अशरीत्वेति** ॥

## तत्त्वसुबोधिनी

ॐ सर्वत्र प्रसिद्धोपदेशात् ॐ ।। अर्थस्य शब्दात्मकत्वाभावात् शब्दस्य कथं लिङ्गात्मकत्वं ? प्रतिपादकत्वविवक्षायामपि सर्वगतत्वमित्यादिलिङ्गवाचकशब्दानां विष्णुपरत्वायोगः इत्यतो व्याचष्टे । **धर्मविशिष्टधर्मिवाचिनामिति** । लिङ्गात्मकानामित्येवोक्ते उभयत्र प्रसिद्धानां लिङ्गात्मकानामिति प्रतीतिः स्यात् । तथा चासङ्गतिरित्यत आह । **अन्यत्रेति** । **अत्रेति** । केवललिङ्गस्यान्यत्र प्रसिद्ध्यभावादित्यतः श्रुतिसहपठितेत्युक्तम् । **श्रुत्यादिसङ्गतिमिति** । इहाश्रितत्वादित्यव्यवहितपूर्वसूत्रोपात्तश्रुत्या तत्सूत्रांशेन च सङ्गतिमित्यर्थः । **तदैवैतरेयक इति** । ननु ब्रह्म ततममित्यत्र ततममित्यनेन निरवधिकसर्वगतत्वमभिप्रेतम् । तस्यैवापोसनोपयोगात् । एतमस्यामित्यत्र तु अर्भकौकस्त्वरूपं भूतवृत्तित्वमात्रमुच्यते । अन्यथा सर्वेष्वित्युक्तत्वेन भूतशब्दवैयर्थ्यं स्यात् । तथा च तयोरेकरूपत्वाभावात् कथं तदेवेत्युक्तम्, इति चेत् न । तदेवेत्यत्र तदेकदेशरूपमित्यर्थः । एवमपि पूर्वाक्षेपः सम्भवति । तथाहि अत्रोक्तभूतगतत्वस्य एतमेवेत्यवधारणबलेनान्यमात्रनिष्ठत्वे विष्णोः भूतगतत्वापगमने निरवधिकसर्वगतत्वं न स्यात् । निरवधिकसर्वगतत्वोपेतं च श्रुत्यादिसिद्धमिति ब्रह्म ततममित्याद्युक्तसर्वगतत्वम् एतद्वाक्यप्रतिपादितभूतगतस्यैव स्यादित्युपपादनसम्भवादिति भावः । एतं ह्येव एतमेव बह्वृचाः ऋग्वेदिनः । महत्युक्थे महत्युक्थनामकबृहतीसहस्रे मीमांसन्ते जानन्ति । अध्वर्यवः यजुर्वेदिनः छन्दोगाः सामवेदिनः महाव्रताख्यकर्माङ्गभूतस्तोत्रे । अस्यां पृथिव्याम् इति विषयवाक्यार्थः । **वह्नादित्यश्रुतेरिति** । न चान्तराधिकरणन्यायेन आदित्यश्रुतेः विष्णुपरत्वात् कथं पूर्वपक्षावतार इति वाच्यम् । संवत्सराधिपतित्वरूपसंवत्सरसारत्वादिवह्नादित्यादिलिङ्गानाम् अत्र सत्वेन पूर्वपक्षसम्भवादिति भावः । भाष्यगतादिपदार्थमाह । **सूर्य आत्मेति** । **क्षित्यादिपूक्त्वा** । सर्वगतस्थितिमिति शेषः । अस्य सर्वगतस्य । **अन्यथेति** । आदित्यस्य सर्वगतत्वाभावे इत्यर्थः । ननु सर्वेषु भूतेषु इत्यनेनैव आदित्ये सर्वगतस्य स्थितेः उक्तत्वात् पुनः नादित्ये एतमित्युक्तिरित्यत आह । **सजातीयेति** । अन्यथा चन्द्रमस्येतं इत्युक्तिरपि न स्यादिति भावः । अत एवेति । आदित्ये अनुक्तत्वलिङ्गादेवेत्यर्थः । अनेन लिङ्गेन आदित्यशब्दस्य आदित्यस्थितपरत्वावगमात् । अन्तर्यामिपरत्वे तद्विरुद्धमिति भावः । पूर्वं चक्षुर्मयत्वादिकमन्तर्यामिण्यङ्गीकृत्याल्पौकस्त्वं न युक्तमित्युक्तम् । इदानीं जीवधर्मत्वात् तस्य तदपि न युक्तमित्याह ।। **चक्षुर्मयत्वाद्ययोगाचेति** ।। नित्यज्ञानवदन्तर्यामिणो ज्ञानकारणचक्षुरादिप्राचुर्यायोगाच्चेत्यर्थः । स यश्चायमित्येतद्युक्तिमात्रप्रदर्शकमिति भ्रमं वारयितुमाह । **स यश्चायमित्यादिनेति** । अस्तु सर्वगते ब्रह्मशब्दोपदेशः ततः किमित्यत आह ।

(तत्त्वसुबोधिनी)

**ब्रह्मेति** । ननु भाष्ये नारायणशब्दः किमर्थं प्रयुक्त इत्यतः तैत्तिरीयश्रुतौ स्पष्टं नारायणे सर्वगतत्वस्य उक्तत्वात् तत्प्रयोग इति भावेन तैत्तिरीयश्रुतिमुदाहरति । **तथा च श्रुतिरिति** । **अशरीरत्वयुक्तिसूचनार्थं चेति** । विषयवाक्यप्रदर्शनमात्रार्थत्वे एतमस्यामित्यादिनेत्यवक्ष्यत् । इयं युक्तिरनुपपत्तेस्तु न शारीर इति सूत्रे शारीरपदं प्रयुञ्जानस्य सूत्रकृतोऽप्यभिप्रेता । अन्यथा जीव इत्येव ब्रूयादिति भावः । अशरीरत्वस्य आदित्यादावेवावकाशाभावमाह । **न हि नारायणेतरेति** । अनेन श्रौतत्वादौ व्यभिचारोऽपि परास्तः ।

## वाक्यार्थमञ्जरी

॥ श्रीगुरुभ्यो नमः ॥ शब्दानां लिङ्गात्मकत्वं नाम तत्स्वरूपत्वं वा तद्वाचकत्वं वा । नाद्यः । शब्दस्यार्थस्वरूपत्वापत्तेः । न द्वितीयः । लिङ्गवाचिनां सर्वगतत्वमित्यादीनां भगवति समन्वयानभिधानादित्यत आह ॥ **धर्मविशिष्टेति** ॥ **सहपठितेति** ॥ स्वतःप्रसिद्ध्यभावादियमुक्तिः । अत्र लिङ्गात्मकेति पादसङ्गतिः । शेषं पूर्ववत् ॥ **तदेवेति** ॥ तदेकदेशभूतमेवेत्यर्थः । एतमेवेत्यवधारणेन विष्णोरन्यस्यैव सर्वभूतगतत्वावगमात् विष्णौ भूतान्वयसत्वेऽपि न पूर्वोक्तनिरुपचरितसर्वगतत्वमिति भावः ॥ **एतं ह्येवेति** ॥ ऋग्वेदिन एतमेव परमात्मानं महदुक्थनामकबृहतीसहस्रे यजुर्वेदिनोऽग्नौ सामवेदिनो महाव्रताख्यकर्माङ्गभूतस्तोत्रे मीमांसन्ते विचारयन्ति । अस्यां पृथिव्याम् । वनस्पतिषु वृक्षेषु । भूतेषु प्राणेषु । ब्रह्म पूर्णम् । आचक्षते वदन्ति ॥ आम्नायते अभ्यस्यते अभिधीयत इति यावत् ॥ **एकप्रकरणत्वादिति** ॥ ब्रह्म ततमम् एतं ह्येवेत्यनयोरेकप्रकरणस्थत्वादित्यर्थः । ब्रह्म ततममपश्यदित्युक्तिः प्राणाख्यहरौ तेन वाक्येन सर्वगतत्वोक्तिः आदित्यश्रुतिरुपलक्षणम् । चक्षुर्मयत्वादिजीवलिङ्गं चेत्यपि ग्राह्यम् । तस्यैतस्यासावादित्यो रसः स यश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्य एकमेतदिति विद्यात् । तस्मात्पुरुषं पुरुषं प्रत्यादित्यो भवतीत्यस्यायमर्थः । तस्यैतस्य संवत्सरस्य सर्वस्यादित्वात्सर्वस्मिंस्ततत्वात्सर्वजीवनियामकत्वादादित्यनामाऽत्र प्रद्युम्नो रसः श्रेष्ठः । स यश्चायमशरीरः प्राकृतदेहरहितः । प्रज्ञात्मा ज्ञानात्मकोऽनिरुद्धः । यश्चासावादित्ये गतः प्रद्युम्नः एतत्स्थानद्वयगतं भगवद्रूपमेकमिति जानीयात् । तस्मात्पुरुषगतानिरुद्धस्यादित्यगतप्रद्युम्नस्य चैक्यादादित्य पुरुषं पुरुषं प्रतिपुरुषमभिमुखो भवतीति ॥ **सूर्य इति** ॥ सूरिभिः प्राप्यत्वात्सूर्यो हरिः जगतः जङ्गमस्य तस्थुषः स्थावरस्यात्मान्तर्नियामक इत्यर्थः । अत एव विशिष्यादित्येऽनुक्तत्वलिङ्गेनादित्यशब्दस्यादित्यानन्तर्गतपरत्वावगमेन तदन्तर्गतान्तर्यामिपरत्वकथनमयुक्तमिति भावः । छन्दोमयः वेदप्रचुरः ॥ **अल्पौक-**

(वाक्यार्थमञ्जरी)

**स्त्वेति ॥** अल्पम् ओकः स्थानं यस्य तस्य भाव अल्पौकस्त्वं तच्च सर्वगतस्यान्तर्यामिणो ब्रह्माण्डस्य सर्षपस्थत्वमिवायुक्तमित्यर्थः । **चक्षुर्मयत्वाद्ययोगाच्चेति ॥** नित्यज्ञानवदन्तर्यामिणो ज्ञानकरणचक्षुरादिप्राचुर्यायोगाच्चेत्यर्थः ॥

ॐ सर्वत्र प्रसिद्धोपदेशात् ॐ ॥ सर्वत्र पृथिव्यादिषूच्यमानं ब्रह्मैव । श्रुत्यादौ ब्रह्मण्येव प्रसिद्धब्रह्मशब्दस्य एतमेव ब्रह्मेत्याचक्षत इत्यादिना तत्रोपदेशादित्यर्थः । नारायणपदोपादानसूचितां श्रुतिमाह ॥ **तथा चेति ॥** यत् किञ्चिदल्पं यच्च सर्वं महज्जगत् प्रत्यक्षेण दृश्यते शब्देन ज्ञायतेऽपि च नारायणस्तत्सर्वमन्तर्बहिश्चाभिव्याप्य स्थित इत्यर्थः । स्वत इत्यनेन श्रीतत्त्वादौ व्यभिचारपरिहारः ॥

## विवृतिः

अर्थस्य शब्दात्मकत्वाभावाच्छब्दस्य कथं लिङ्गात्मकत्वं? प्रतिपादकत्वविवक्षायामपि, सर्वगतत्वमित्यादिलिङ्गवाचकशब्दानां विष्णुपरत्वायोग इत्यतो व्याचष्टे ॥ **धर्मविशिष्टधर्मिवाचिनामिति ॥** लिङ्गात्मकानामित्येवोक्ते उभय प्रसिद्धानां लिङ्गात्मकानामिति प्रतीतिः स्यात् । तथा च असङ्गतिरित्यत आह ॥ **अन्यत्रेति ॥ अत्रेति ॥** केवललिङ्गस्यान्यत्र प्रसिद्ध्यभावादित्यतः श्रुतिसहपठितेत्युक्तम् ॥ श्रुत्यादिसङ्गतिमिति ॥ इहाश्रितत्वादित्यव्यवहितपूर्वसूत्रोपात्तश्रुत्या तत्सूत्रांशेन च सङ्गतिमित्यर्थः ॥ **तदेवैतरेयक इति ॥** ननु ब्रह्म ततममित्यत्र ततममित्यनेन निरवधिकसर्वगतत्वमभिप्रेतं तस्यैवोपासनोपयोगात् ॥ एतमस्यामित्यत्र तु अर्भकौकस्त्वरूपं भूतवृत्तित्वमात्रमुच्यते । अन्यथा सर्वेष्वित्युक्तत्वेन भूतशब्दस्य वैयर्थ्यं स्यात् ॥ तथा च तयोरेकरूपत्वाभावात्कथं तदेवेत्युक्तमिति चेन्न ॥ तदेवेत्यत्र तदेकदेशरूपमित्यर्थः ॥ एवमपि पूर्वाक्षेपः सम्भवति । तथाहि अत्रोक्तभूतगतत्वस्यैतमेवेत्यवधारणवलेनान्यमात्रनिष्ठत्वे विष्णोर्भूतगतत्वापगमेन निरवधिकसर्वगतत्वं न स्यात् । निरवधिकसर्वगतत्वोपेतं च श्रुत्यादिसिद्धमिति । ब्रह्म ततममित्युक्तसर्वगतत्वमपि एतद्वाक्यप्रतिपादितंभूतगतस्यैव स्यादित्युपपादनसम्भवादिति भावः ॥ एतं ह्येव, एतमेव बह्वृचाः ऋग्वेदिनः महत्युक्थे महत्युक्थनामकबृहतीसहस्रे मीमांसन्ते जानन्ति ॥ अध्वर्यवः यजुर्वेदिनः, छन्दोगाः सामवेदिनो, महाव्रते महाव्रताख्यकर्माङ्गभूतस्तोत्रे । अस्यां पृथिव्यामिति विषयवाक्यार्थः । **बह्वादित्यश्रुतेरिति ॥** न चान्तराधिकरणन्यायेनादित्यश्रुतेर्विष्णुपरत्वात् कथं पूर्वपक्षावतार इति वाच्यम् ॥ संवत्सराधिपतित्वरूपसंवत्सरसारत्वादिबह्वादित्यलिङ्गानामत्र सत्वेन पूर्वपक्षसम्भवादिति भावः ॥ भाष्यगतादिपदार्थमाह ॥ सूर्य

(विवृतिः)

**आत्मेति** ॥ क्षित्यादिषूक्त्वा सर्वगतस्थितिमिति शेषः ॥ अस्य सर्वगतस्य ॥ **अन्यथेति** ॥ आदित्यस्य सर्वगतत्वाभावे इत्यर्थः ॥ ननु सर्वेषु भूतेष्वित्यनेनैवादित्ये सर्वगतस्य स्थितेरुक्तत्वात्पुनर्नादित्ये एतमित्युक्तिरित्यत आह ॥ **सजातीयेति** ॥ अन्यथा चन्द्रमस्येतमित्युक्तिरपि न स्यादिति भावः ॥ **अत एवेति** ॥ आदित्ये अनुक्तत्वलिङ्गादेवेत्यर्थः ॥ अनेन लिङ्गेनादित्यशब्दस्यादित्यसंस्थित-परत्वावगमादन्तर्यामिपरत्वे तद्विरुद्धमिति भावः ॥ पूर्वं चक्षुर्मयत्वादिकमन्तर्यामिण्यङ्गीकृत्याल्पौकस्त्वं न युक्तमित्युक्तम् । इदानीं जीवधर्मत्वात्तस्य तदपि न युक्तमित्याह ॥ **चक्षुर्मयत्वाद्ययोगाच्चेति** ॥ नित्यज्ञानवदन्तर्यामिणो ज्ञानकरणचक्षुरादिप्राचुर्यायोगाच्चेत्यर्थः ॥ स यश्चायमित्येतद्युक्तिमात्रप्रदर्शकमिति भ्रमं वारयितुमाह ॥ **स यश्चायमित्यादिनेति** ॥ अस्तु सर्वगते ब्रह्मशब्दोपदेशः ततः किमित्यत आह । **ब्रह्मेति** ॥ ननु भाष्ये नारायणशब्दः किमर्थं प्रयुक्त इत्यतः तैत्तिरीयकश्रुतौ स्पष्टं नारायणे सर्वगतत्वस्योक्तत्वात्तत्प्रयोग इति भावेन तैत्तिरीयश्रुतिमुदाहरति ॥ **तथा च श्रुतिरिति** ॥ अशरीरत्वयुक्तिसूचनार्थं चेति ॥ विषयवाक्यप्रदर्शनमात्रार्थत्वे एतमस्यामित्यादिनेत्यवक्षत् । इयं युक्तिरनुपपत्तेस्तु न शारीर इति सूत्रे शारीरपदं प्रयुञ्जानस्य सूत्रकृतोऽभिप्रेता ॥ अन्यथा जीव इत्येव ब्रूयादिति भावः ॥ अशरीरत्वस्य आदित्यादावेवावकाशाभावमाह ॥ **न हि नारायणेतरेति** ॥ अनेन श्रीतत्वादौ व्यभिचारोऽपि परास्तः ।

## सूत्रभाष्यम्

### ॥ ॐ विवक्षितगुणोपपत्तेश्च ॐ ॥ २ ॥

'स योऽतोऽश्रुत' (ऐ.आ.३-२-४) इत्यादि । स हि 'न ते विष्णो जायमान' (ऋ.सं. ७-९९-२) इत्यादिनाऽश्रुतत्वादिगुणकः । 'स सविता स वायुः स इन्द्रः सोऽश्रुतः सोऽदृष्टो यो हरिर्यः परमो यो विष्णुर्योऽनन्त' इत्यादि चतुर्वेदशिखायाम् ॥ २ ॥

## सत्तर्कदीपावली

हेत्वन्तरेणैतमर्थं साधयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **विवक्षितेत्यादिना** ॥ एतमस्यामेतं दिवीत्यादिना यः प्रस्तुतः तस्य उपरि अश्रुतत्वादिगुणा वक्ष्यन्ते । स योऽतोऽश्रुतोऽगतोऽमतोऽनतोऽदृष्टोऽविज्ञातोऽनादिष्टः श्रोता मन्ता द्रष्टाऽदेष्टा घोष्टा विज्ञाता प्रज्ञातेति । तत्र साकल्येन श्रोतुमशक्यत्वादयो युगपत्सर्वमन्तृत्वादयो गुणाः न हि विष्णुमन्तरेणान्यस्य सम्भाव्यन्ते । न ते विष्णो जायमानो न जातो देव महिम्नः

(सत्तर्कदीपावली)
परमन्तमाप । स सर्वविदित्यादिश्रुतेः । श्रोता मन्तेत्यादिना श्रवणमननादिषु जीवश्रोत्रादिव्यवस्थाभावश्च विष्णोः प्रतिपाद्यते । सर्वतः पश्यति सर्वतः शृणोति विश्वतश्चक्षुरित्यादिश्रुतेः ।

## तत्त्वप्रदीपिका

अतो व्याप्तः, अत सातत्यगमन इति धातोः । अन्यैरश्रुतः, अतः स्वयमेव स्वात्मानं स्वातन्त्र्येण शृणोति । ''न ऋते त्वत्क्रियत'' इत्यादिश्रुतेः । 'अगतः' अप्राप्तः । सर्वात्मन 'आदेष्टा' वक्ता, 'आघोष्टा' नियोक्ता ।

''देशतः कालतश्चैव गुणतश्चातिपूर्तितः ।
अत इत्युच्यते विष्णुस्सन्ततो ह्यत उच्यते ॥

तृतीयवर्णोऽतिशये यतस्तेनातिरेव वा ।
अत इत्युच्यते विष्णुस्सम्यक् श्रुत्याद्यशक्यतः ॥

पूर्णत्वाद्गगत्वान्विष्णुरश्रुतत्वादिनोदितः ।
समस्तसर्वेषु रूपेषु सर्वजीवनियामकः ।
इति विद्यात्परं विष्णुं मुच्यतेऽनेन संसृतेरि''त्यैतरेयसंहितायाम् ॥

विवक्षितगुणोपपत्तेश्चेति प्रसिद्धार्थत्वात्सूत्रभाष्ययोरेकीभावः । ये तु श्रुतीनां ब्रह्मगुणेषु तात्पर्याभावं वदन्ति तन्निरासाय विवक्षितपदमुपनिबबन्ध ॥ न हि प्रतिवाक्यमुदीर्यमाणा गुणा वेदैरविवक्षिता इति शोभते । द्रव्यादिपदैरपि हि गुणविशिष्टमेवाभिधीयते नाविशिष्टम् । अन्यथा द्रव्यत्वादीनामेवाभावप्रसङ्गात् । ब्रह्मादिशब्दाश्च पूर्णत्वादिविशिष्टवाचकाः । न च वाक्यार्थः क्वचिदविशिष्ट इति युक्तं, प्रमाणाभावात् । न च प्रामाण्यानुपपत्त्या सत्यादिवाक्यानामखण्डार्थत्वम् । सत्यादिगुणविशिष्टवाचकत्व एव सत्यादिवाक्यानां प्रामाण्योपपत्तेः । निर्गुणविषयत्वेऽनुपपत्तेश्च । 'प्रकृष्टप्रकाशश्चन्द्रमा' इत्यादिवत् । न हि तत्र स्वरूपमात्रं लक्ष्यते, तस्य पूर्वमेव सिद्धत्वात् । नक्षत्रादिवैलक्षण्यगुणस्यैव प्रष्टुर्बुभुत्सितत्वात् । तथा च तदनुक्तावसङ्गत-मुत्तरवाक्यं स्यादिति ॥

## तत्त्वप्रकाशिका

युक्त्यन्तरेण विष्णोरेवात्रोक्तसर्वगतत्वं प्रतिपादयत्सूत्रमुपन्यस्य तदुपात्तश्रुतिमेवोदाहरति ॥ **विवक्षितेति** ॥ स योऽतोऽश्रुतोऽगतोऽमतोऽनतोऽदृष्टोऽविज्ञातोऽनादिष्टः श्रोता मन्ता द्रष्टाऽऽदेष्टाऽऽघोष्टा विज्ञाता प्रज्ञाता सर्वेषां भूतानामन्तरपुरुष इति सर्वगते अश्रुतत्वादिगुणश्रवणात् । तेषां च विष्णोरेव

(तत्त्वप्रकाशिका)

**योग्यत्वेन तस्मिन्नेवोपपत्तेः अन्यत्रानुपपत्तेश्च विष्णुरेवायं सर्वगत इति भावः । विवक्षिता इति वक्तुं योग्याः । नन्वेतद्गुणानां कुतो विष्णुनिष्ठत्वमित्यत आह ॥ स हीति ॥ ते महिम्नः परमन्तं कोऽपि श्रोत्रादिना नापेत्यर्थः । अत्र मुख्यतोऽश्रुतत्वादिकं विष्णोर्न श्रूयत इत्यतः स्पष्टश्रुतिं चाऽऽह ॥ स इति ॥ अत्रातत्वस्यादिमत्त्वेऽपि तस्य सर्वगतत्वानतिरिक्तत्वेन साध्यत्वादश्रुतत्वादीनामेव ग्रहणम् ॥ २ ॥**

# गुर्वर्थदीपिका

उपनिषदेकगम्यपरमात्मगुणानामन्तगमनं श्रोत्रेण श्रुत्वा वा श्रोत्रानुगृहीतमनसा मत्वा वा स्यादित्यतः श्रोत्रादिनेत्युक्तम् । अतत्वस्याऽऽदिमत्वेऽपीत्यत्र ''अत सातत्यगमन'' इति धातोः पचाद्यचि कृतेऽतः सर्वगतस्तस्य भावोऽतत्वं तस्याऽऽदिमत्वे ''स योऽतोऽश्रुत'' इति वाक्यस्याऽऽदिमत्वेऽपीत्यर्थः ।

# भावबोधः

विष्णोरेव योग्यत्वेनेत्युक्तस्योत्सूत्रितत्वशङ्कानिरासायाऽऽह । **विवक्षिता इति वक्तुं योग्या इति ॥** अनेनादित्यग्रहणे तेषां साकल्येन श्रुतत्वाश्रुतत्वादिगुणानां वक्तुं योग्यत्वेन ''स योऽतोऽश्रुत'' इति वाक्यम् अयोग्यार्थाभिधायकत्वेन प्रमाणं न स्यात् । सर्वगतत्वेन विष्णुग्रहणे तु तस्य साकल्येन श्रुतत्वाद्यभावात् अश्रुतत्वादिसम्भवेन नैवमिति सूत्रतात्पर्यम् । अन्यथा अश्रुतत्वादिगुणोपपत्तेरित्येव वक्तव्यं, स्पष्टार्थकश्चैवं सति सूत्रं भवति । नाविवक्षितपदप्रयोग इत्युक्तं भवति । सूत्रे उपपत्तेरित्यनेन विशेषणीभूतत्वस्यैव स्वर्गी ध्वस्त इत्यादिवदन्वपर्यवसानमित्यपि सूचितं भवति । न ते विष्णिवत्यस्या-श्रुतत्वादिप्रतिपादकत्वलाभाय तद्वाक्यं श्रोत्रादिनेत्यध्याहृत्य योजितम् । **सर्वगतत्वानतिरिक्तत्वेनेति ।** ''अत सातत्यगमने'' इति धातोः सन्ततो ह्यत उच्यत इति वचनाच्चाऽतत्त्वं सर्वगतत्वानतिरिक्तमित्यर्थः । अत्र विष्णुरेवैतमस्यामिति वाक्योक्तसर्वगतः तन्निष्ठतयोक्ताश्रुतत्वादिगुणयोग्यत्वादित्यनुमानमभिप्रेतं विष्णोरेव साध्यत्वे साध्याविशिष्टताशङ्का स्यात् । अत्र तदनुदयात् । अत एवानुपदमेव अश्रुतत्वादिलिङ्गैश्च विष्णुः सर्वगत इति सर्वगतत्वस्यैव साध्यत्वं दर्शयिष्यति । **अश्रुतत्वादीनामेव ग्रहणमिति** इत्यादिनाऽश्रुतत्वादिगुण इति भाष्य इत्यर्थः ।

# भावदीपः

ॐ विवक्षितगुणोपपत्तेश्च ॐ ॥ **युक्त्यन्तरेणेति ॥** सौत्रचशब्दः पूर्वसमुच्चय इति भावः ।

(भावदीपः)

एवमग्रेऽपि ॥ **अत्रोक्तेति** ॥ सर्वशरीरस्थत्वरूपेत्यर्थः । भाष्यस्य सूत्रेणान्वयं मत्त्वा योजयति ॥ **स योऽत इत्यादिना** ॥ अतः व्याप्तः

'देशतः कालतश्चैव गुणतश्चापि पूर्तितः ॥
अत इत्युच्यते विष्णुः सन्ततो ह्यत उच्यत'

इति तद्भाष्योक्तेः । अत सातत्यगमने पचाद्यच् । अश्रुतः साकल्येन । अगतोऽप्राप्तः. अमतो मननाविषयः अनतः स्वतन्त्रः । अनादिष्टः साकल्येनानुपदिष्टः आदेष्टा वक्ताऽऽघोष्टा नियोक्ता अन्तरपुरुषः अन्तःस्थपुरुषः । शिष्टं स्पष्टम् । उपपत्तेरित्युक्तिलभ्यमाह ॥ **अन्यत्रेति** ॥ अयोग्यत्वेनेति भावः । अत एव श्रुतावन्येषां साकल्येन श्रुतत्वादिकमेव विद्यत इति वक्तुं श्रोता मन्तेत्याद्युक्तिः । सर्वत्रेति तत्त्विति चानुवृत्त्याऽर्थमाह ॥ **विष्णुरेवेति** ॥ योग्यत्वेनेति प्रागुक्तं तत्कस्यार्थ इत्यत आह ॥ **विवक्षिता इति** ॥ वक्तुं योग्ये हि विवक्षा भवतीति भावः । तत्वप्रदीपे तु विवक्षितास्तात्पर्यविषया इत्यर्थ उक्तः । जन्मादिसूत्रे यथाश्रुतस्यैवार्थोक्तावपीहोपयोगितयाऽध्याहृत्यार्थमाह ॥ **श्रोत्रादिनेति** ॥ **स्पष्टश्रुतिं चेति** ॥ अश्रुतत्वादिकं विष्णोर्न सर्वात्मना किं त्वपरिच्छिन्नत्वात् कात्स्‍न्र्येनैवेति दर्शयितुं श्रुतावनन्त इत्युक्तिः । भाष्ये इत्यादीत्यादिना अतत्वादिगुण इति वाच्येऽश्रुतत्वादिगुण इत्युक्तिस्तथा सोऽश्नुत इत्यादिश्रुत्युक्तिश्च कुत इत्यत आह ॥ **अत्रेति** ॥ स योऽत इति श्रुतावित्यर्थः ॥ **साध्यत्वादिति** ॥ साध्यकोटिनिविष्टत्वात् सन्दिग्धत्वादिति यावत् ॥ **ग्रहणमिति** ॥ भाष्य इत्यर्थः ॥

## अभिनवचन्द्रिका

(सू.२) **युक्त्यन्तरेणेति** ॥ अत्रोक्तसर्वगतत्वं विष्णोरेवेति युक्त्यन्तरेण प्रतिपादयत्सूत्रमित्यर्थः । एतेन 'विष्णोरत्रोक्तं सर्वगतत्व'मित्येतावता पूर्णत्वेन एवकारवैयर्थ्यमिति परास्तम् । सूत्रार्थानुवादपरेऽस्मिन् ग्रन्थे एवशब्दस्याऽपेक्षितत्वात् । **स योऽतोऽश्रुत इति** ॥ सः यः प्रकृत परमात्मा, अतः=व्याप्तः, अत्यधिक इति वा । अश्रुतः=सर्वात्मना श्रोतुमशक्यः पूर्णत्वात्, अगतः=सर्वात्मनाऽज्ञातः । अमतः= सर्वात्मना मननाविषयः । अनतः=स्वतन्त्रः । अदृष्टः=प्रत्यक्षेण, अविज्ञातः=विशेषण सर्वात्मना । अनादिष्टः=अनुपदिष्टः सर्वात्मना । स्वयं सर्वस्य श्रोता, मन्ता, द्रष्टा, उपदेष्टा, **घोष्टा** शब्दं कुर्वन्, विज्ञाता प्रज्ञाता सर्वेषां भूतानामन्तरपुरुषः अन्तर्यामीति श्रुत्यर्थः । विवक्षितेति सूत्रपदार्थाप्रतीतेः प्रतीकमुपादाय व्याचष्टे । **विवक्षिता इति** ॥ अत्र टीकायां 'श्रोत्रादिना नापेत्यर्थः' इत्यनन्तरं

(अभिनवचन्द्रिका)

'अत्रातत्वस्यादिमत्वेऽपि तस्य सर्वगतत्वानतिरिक्तत्वेन साध्यत्वात् अश्रुतत्वादीनामेव ग्रहणम्' इति लेखकदोषात् 'स सविते'ति श्रुतिप्रतीकग्रहणानन्तरं पतितं द्रष्टव्यम् । अवश्यं चैतदेवं विज्ञेयम्– 'स हि न ते विष्णो जायमान इति अश्रुतत्वादिगुण' इत्ययुक्तम् । अतत्वगुणस्याऽऽदिमत्वेन 'अतत्वादिगुण' इति वक्तव्यत्वादित्याशङ्कापरिहारकवाक्यस्य अत्रैवोचितत्वात् ।

## वाक्यार्थमुक्तावली

ॐ विवक्षितगुणोपपत्तेश्च ॐ ।। सूत्रे तत्त्वित्यनुवर्तते । सर्वत्र गत इति च । असम्भवातिव्याप्तिपरिहारायोपपत्तिपदम् । तदुपपादकं विवक्षितपदम् । तथा च विवक्षितानां श्रुतिस्मृतिभिस्तस्मिन् विष्णावेव विवक्षितानां वक्तुमुचितानाम् अन्यत्र वक्तुमयोग्यानां गुणानामश्रुतत्वादीनाम् अस्मिन्नुपपत्तेरन्यत्रानुपपत्तेर्विष्णुरेव सर्वगत इति सूत्रार्थमभिप्रेत्याह ।। **स योऽत इत्यादिना ।।** विवक्षितानां तात्पर्यविषयाणामिति वा । वक्तुं योग्यानां वक्ष्यमाणानामुपसंहारस्थानामिति वाऽर्थः ।। **मुखत इति ।।** अध्याहारेण विनेत्यर्थः । **सर्वगतत्वानतिरिक्तत्वेनेति ।।** देशतः कालतश्चैव गुणतश्चातिपूर्तितः । अत इत्यच्युत इति तद्भाष्योक्तेरन्यथा साध्याविशिष्टता स्यादिति भावः ।

## तत्त्वसुबोधिनी

स य इत्यस्य अयमर्थः । अतः व्याप्तः अश्रुतः सर्वात्मना श्रोतुमशक्यः । अगतः सर्वात्मनाऽज्ञातः । अमतः मननाविषयः अनतः स्वतन्त्रः अदृष्टः सर्वात्मना । अनादिष्टः अनुपदिष्टः सर्वात्मना । आदेष्टा उपदेष्टा । आघोष्टा शब्दं कुर्वन् । अन्तरपुरुषः अन्तर्यामी पूर्णश्च । विष्णोरेव योग्यत्वेन इत्युक्तस्य उत्सूत्रितत्वशङ्कानिरासायाह । **विवक्षिता इति वक्तुं योग्या इति ।** अनेन आदित्यग्रहणे तेषां साकल्येन श्रुतत्वाश्रुतत्वादिगुणानां तेषु वक्तुं योग्यत्वेन स योऽत इति वाक्यम् अयोग्यार्थाभिधायकत्वेनाप्रमाणं स्यात् । सर्वगतत्वेन विष्णुग्रहणे तु तस्य साकल्येन श्रुतत्वाद्यभावात् अश्रुतत्वादिसम्भवेन नानुपपत्तिः । अन्यथा अश्रुतत्वादिगुणोपपत्तेरिति वक्तव्यमिति भावः । न ते विष्णो इत्यस्य अश्रुतत्वादिप्रतिपादकत्वलाभाय तद्वाक्यं श्रोत्रादिनेत्याध्याहृत्य योजितम् । ननु प्रथमश्रुतमतत्वं परित्यज्य अश्रुतत्वादि कुतो गृह्यत इत्यत आह । **अतत्वस्येति । सर्वगतत्वानतिरिक्तत्वेनेति ।** अत सातत्यगमने इति धातोः सन्ततो ह्यत उच्यत इति वचनाच्चातत्वं सर्वगतत्वानतिरिक्तमित्यर्थः । न चानन्दमयोऽभ्यासादित्यत्रेव सर्वगतः विष्णुः अतत्वादिति प्रयोगे कथमतत्वस्य साध्यत्वमिति वाच्यम् । अत्र विष्णुः

**(तत्त्वसुबोधिनी)**
एतमस्यामिति वाक्योक्तसर्वगतः तन्निष्ठतयोक्ताश्रुतत्वादिगुणयोग्यत्वादिति प्रयोगोऽभिप्रेत इति नानुपपत्तिः । विष्णुं पक्षीकृत्य सर्वगतत्वस्य साध्यत्वे अतत्वस्य हेतुत्वे च साध्याविशेषः स्यादिति भावः । **अश्रुतत्वादीनामेव ग्रहणमिति ।** इत्यादिनाऽश्रुतत्वादिगुण इति भाष्ये इत्यर्थः ।

## वाक्यार्थविवरणम्

**अतत्त्वस्येति ।** 'अत सातत्यगमन' इति धातोः व्याप्तत्वस्येत्यर्थः ।

## वाक्यार्थमञ्जरी

ॐ विवक्षितगुणोपपत्तेश्च ॐ ॥ विवक्षितानां वक्तुं योग्यानां वक्ष्यमाणानामुपसंहारे श्रुतानां गुणानामश्रुतत्वादिधर्माणामुपपन्नत्वाच्च सर्वगतं ब्रह्मैव नादित्यादिः तेषां तत्रानुपपत्तेरित्यर्थः ॥ **स योऽत इति ॥** यो भगवानतो व्याप्तः अन्यैः साकल्येनाश्रुतः अगतः अप्राप्तः । अमतः अविचारितः । अनतः स्वतन्त्रः । अदृष्टः प्रत्यक्षेण । अविज्ञातः विशेषज्ञानाविषयः । अनादिष्टः उपदेष्टुमशक्यः । स्वयं च साकल्येन श्रोता मन्ता विचारयिता द्रष्टा आदेष्टोपदेष्टा आघोष्टा शब्दकर्ता । विज्ञाता विशेषेण ज्ञाता प्रज्ञाता प्रकर्षेण ज्ञाता सर्वेषां भूतानामन्तरपुरुषः अन्तर्यामी पूर्णश्चेत्यर्थः । ज्ञानावान्तरविशेषसद्भावान्नात्र पुनरुक्तिः शङ्क्या ॥ **विवक्षिता इति** ॥ अस्येति शेषः ॥ **वक्तुं योग्या इति** ॥ इत्यर्थः इति शेषः । मुखतः कण्ठतः श्रोत्रादिनेति पूरणीयत्वादिति भावः । अश्रुतत्वादिकं साकल्येनैव न सर्वात्मनेति सूचयितुं भाष्येऽनन्त इत्युक्तम् ॥ **सर्वगतत्वानतिरिक्तत्वेनेति ॥** अत सातत्यगमन इति धातोः सन्ततो ह्यत उच्यत इति वचनाच्चातत्वं सर्वगतत्वानतिरिक्तमित्यर्थः । अन्यथा साध्याविशेषप्रसङ्ग इति भावः ।

## विवृतिः

**स य** इत्यस्यायमर्थः ॥ **अतः** व्याप्तः, **अश्रुतः** सर्वात्मना श्रोतुमशक्यः, अगतः सर्वात्मना अज्ञातः, **अमतः** मननाविषयः, **अनन्तः** स्वतन्त्रः अदृष्टः सर्वात्मना, अनादिष्टः अनुपदिष्टः सर्वात्मना देष्टा उपदेष्टा, घोष्टा शब्दं कुर्वन् अन्तरपुरुषः अन्तर्यामी पूर्णश्च विष्णोरेव योग्यत्वेन इत्युक्तस्य उत्सूत्रितत्वशङ्कानिरासायाह ॥ **विवक्षिता इति ॥ वक्तुं योग्या इति** ॥ अनेनादित्यग्रहणे तेषां साकल्येन श्रुतत्वादिनाऽश्रुतत्वादिगुणानां तेषु वक्तुमयोग्यत्वेन स योऽत इति वाक्ये अयोग्यार्थाभि-

(विवृति।)

धायकत्वेनाप्रामाण्यं स्यात् । सर्वगतत्वेन विष्णुग्रहणे तु तस्य साकल्येन श्रुतत्वाद्यभावादश्रुतत्वादिसम्भवेन नानुपपत्तिः । अन्यथा अश्रुतत्वादिगुणोपपत्तेरिति वक्तव्यमिति भावः । न ते विष्णो इत्यस्य अश्रुतत्वादि-प्रतिपादकत्वालभाय तद्वाक्यं श्रोत्रादिनेत्यध्याहृत्य योजितम् । ननु प्रथमश्रुतमतत्वं परित्यज्य अश्रुतत्वादि कुतो गृह्यत इत्यत आह ॥ **अत्रातत्वस्येति** ॥ **सर्वगतत्वानतिरिक्तत्वेनेति** ॥ अत सातत्यगमन इति धातोः सन्ततोद्गत उच्यत इति वचनाच्च अतत्वं सर्वगतत्वानतिरिक्तमित्यर्थः । न चानन्द-मयोऽभ्यासादित्यत्रैव सर्वगतः विष्णुः अतत्वादिति प्रयोगे कथमतत्वस्य साध्यत्वमिति वाच्यम् ॥ अत्र विष्णुः एतमस्यामिति वाक्योक्तसर्वगतः तन्निष्ठतयोक्ताश्रुतत्वादिगुणयोग्यत्वादिति प्रयोगोऽभिप्रेत इति नानुपपत्तिः । विष्णुं पक्षीकृत्य सर्वगतत्वस्य साध्यत्वे अतत्वस्य हेतुत्वे च साध्याविशेषः स्यादिति भावः । **अश्रुतत्वादीनामेव ग्रहणमिति** ॥ 'इत्यादिनाऽश्रुतत्वादिगुण' इति भाष्य इत्यर्थः ॥

## सूत्रभाष्यम्

**न चाऽदित्यशब्दाच्चक्षुर्मयत्वादेश्च जीव इति वाच्यम् ॥**

**॥ ॐ अनुपपत्तेस्तु न शारीरः ॐ ॥ ३ ॥**

**एकस्य सर्वशरीरस्थत्वानुपपत्तेरेव ॥ ३ ॥**

## सत्तर्कदीपावली

नन्वेतमस्यामित्यादिना प्रस्तुतस्य चक्षुर्मयत्वादिजीवलिङ्गं श्रूयते । चक्षुर्मयः श्रोत्रमय इति । अतोऽत्र सर्वगतत्वेनोच्यमानो जीवः स्यात् । तस्यैतस्यासावादित्यो रस इत्युपक्रमात् आदित्याख्यजीवविशेषो न विष्णुरिति चेन्नैवम् । सर्वेषु भूतेष्वेतमेवेति सर्वशरीराधिष्ठितत्वश्रवणाज्जीवस्य तदनुपपत्तेः । तदाह ॥ **न चेति ॥**

## तत्त्वप्रदीपिका

न चेत्यादेः स्पष्टोऽर्थः । अन्योऽप्यर्थः कल्प्यते । उक्तयुक्तेरेव ब्रह्मणोऽत्र प्रतिपाद्यत्वादादित्यशब्दा-च्चक्षुर्मयत्वादेश्च जीवस्यापि परित्यागायोगाच्च, जीवश्च ब्रह्मैव स्यादिति न वाच्यम् ॥ अनुपपत्तेस्तु न शारीरः ॥ ब्रह्मणा एकस्य जीवस्य तत्तच्छरीराभिमानानुपपत्तेरेव । यद्यभिमन्येत तर्हि ब्रह्मणोऽपि दुःखित्वं स्यात् । स्यादेतत् । स्याच्चेत्स्यान्नाम, किं नश्छिन्नं? ब्रह्मैव संसरति ब्रह्मैव मुच्यत इति हि ब्रूमः । अत्र

(तत्त्वप्रदीपिका)

ब्रूमः, एकमुक्तौ सर्वमुक्तिप्रसङ्गादिति । अनेकाभावान्नायं दोष इति चेत् किं स एकस्त्वमेवासि, आहोस्विदाचार्यः । अहमेव स एक इति चेदितः पूर्वं मोक्षाभावाद्भविष्यतीत्याशामात्रं स्यात् । श्रुतिप्रामाण्याद्भविष्यत्येवेति चेन्न । उपदेष्ट्रभावात् । उपदेष्टारं स्वाप्नमिवाऽप्रवानि, तदुपदिष्टज्ञानात्फलमपि तस्मादिव भवेदिति चेत्तदपि दुराशामात्रम् । भवानेव स्वाप्नवदिति वादिनि तत्ववादिनि तस्मिन्ननुपदेष्टरि का निवारणयुक्तिः । त्वदज्ञानपरिकल्पितं सर्वमिति तदुक्तिरेव युक्तिरिति चेत्त्वमपि तर्हि शिष्यायोपदिशन्निदमस्मदादिकं त्वदज्ञानपरिकल्पितमित्युपदिशसि । अतश्शिष्याज्ञानपरिकल्पितत्वाद्भत तव मोक्षं प्रति प्रयत्नो मोघ आसीत् । सर्वथा मोहमयस्य रज्जुसर्पवदपवर्गायोगात् । किञ्च तादृगाचार्यादुपदेशस्य भ्रममात्रत्वात्तदुद्भूतस्तत्त्वोपलम्भोऽपि भ्रमान्तर्भावी । अतश्चातत्वं दृष्टं तत्वं मन्वानस्य हन्त मुक्तत्वमपि भ्रान्तिमात्रं स्यात् । सत्यमेवं वदामि, तदानीमेव मुक्तत्वमपि भ्रान्तिमात्रमिति, नित्यमुक्तत्वादिति चेत्, संवदसे तर्हि ज्ञानमन्तरेण सर्वदा मुक्तत्वं सत्यं, ज्ञानान्मुक्तत्वमसत्यमित्यहो बहुविरुद्धप्रलापिनो मातृमुखस्य निर्लज्जता । अथ यदि स एक एवाऽचार्यस्तर्हि स्यात्, मुक्तावशेषनिवृत्तिमीक्षमाणो न शिष्यबोधने धुरं धारयीतेत्यास्तामयं विस्तरः । अथान्योऽर्थः, नात्र जीवः प्रतिपाद्यः ।। एकजीववादे तावदेकस्य सर्वशरीरस्थत्वानुपपत्तिः । तत्तद्गतसुखदुःखाद्यनुसन्धानादर्शनात् । किं वक्तव्यं बहुजीववादे । न च योगिनोऽपि सर्वशरीरस्थत्वं स्वातन्त्र्येण युज्यते ।। छ ।।

## तत्त्वप्रकाशिका

ननु यथा ब्रह्मशब्दादश्रुतत्वादिलिङ्गैश्च विष्णुः सर्वगत इत्युच्यते तथा आदित्यशब्दात्सर्वजीवलिङ्गाच्च आदित्यः सर्वजीवा वा किं न स्युरित्यत आह ।। **न चेति ।।** जीवः सर्वगत इति शेषः । तत्र हेत्वाकाङ्क्षायां सूत्रमुपन्यस्य प्रतिज्ञांशस्य सम्बन्धभाष्येणैव व्याख्यातत्वाद्धेत्वंशमेव व्याचष्टे ।। **अनुपपत्तेरिति ।।** भवेदन्यस्य सर्वगतत्वं यद्यन्यस्मिन्नुपपद्येत । न च उपपद्यते । तथा हि । किं मिलितसर्वजीवानां सर्वगतत्वम् उत प्रत्येकमुच्यते । नाद्यः । तत्कथनवैयर्थ्यात् । स्वस्वदेहस्थितमात्रस्य सिद्धत्वात् । न द्वितीयः । सर्वशरीरगतसुखदुःखादिप्राप्त्यैकस्य सर्वशरीरस्थत्वानुपपत्तेः । अतोऽन्यप्रापकसद्भावेऽपि तस्य सर्वगतत्वानुपपत्तेरेव न जीवोऽयं सर्वगत इत्याशयः । तुशब्द एवार्थः । न च वाच्यं स्वकर्मनिर्मितमेवास्य भोगायतनमिति न भोगाव्यवस्था व्रीह्यादिगतजीवान्तरवदिति । अनादितः सर्वेषां सर्वशरीरस्थत्वे कर्मभेदस्यापि साधयितुमशक्यत्वात् । न चाऽदित्यस्यास्तु सर्वशरीरस्थत्वं भवदभ्युपगमादिति वाच्यम् । तस्यापि ब्रह्मादिसर्वशरीरस्थत्वानुपपत्तेः ।। ३ ।।

## गुर्वर्थदीपिका

व्रीह्यादिगतजीवान्तरवदित्यत्र मातृयोनिं प्राप्तुं स्वर्गादर्वागागमनविशिष्टपान्थजीववदित्यर्थः । भवदभ्युपगमादित्यत्र तत्तच्चक्षुरभिमानितया भवद्भिरपि सूर्यस्य सर्वगतत्वाभ्युपगमादित्यर्थः । ब्रह्माण्डान्तर्गत ब्रह्मवायुसरस्वतीशिवादिदेहेषु चतुर्विंशतितत्त्वदेवानां च प्रवेशसम्भवेऽपि महदव्यक्ताहन्तत्वस्थब्रह्मादिदेहेषु ततोऽप्यर्वाग्भागस्थितचक्षुर्मात्रव्यापिसूर्यस्य प्रवेशायोगादिति भावेनोक्तं **तस्यापीति** ।

## भावबोधः

**तुशब्द इति** । तेनानुपपत्तेरपरिहार्यत्वमुक्तमिति भावः । **व्रीह्यादिगतजीवान्तरवदिति** । स्वर्गाच्च्युतः स्थूलशरीरसम्बन्धार्थं पित्रादिशरीरप्रवेशायान्यकर्मनिर्मितव्रीह्यादिगतो जीवो जीवान्तरशब्दार्थः ।

## भावदीपः

ॐ अनुपपत्तेस्तु न शारीरः ॐ ॥ अत्रैव न चेत्यादिशङ्कोत्पत्तौ बीजं वदन् आदित्य इति शेषोक्तिपूर्वं भाष्यमवतारयति ॥ **ननु यथेति** ॥ जीव इति भाष्यस्थैकवचनं शारीर इति सूत्रानुरोधात्समुदायाभिप्रायम् । एवेत्यत्र हेत्वभावाद्वक्ष्यमाणदोषायोगाच्चेति भावेनोक्तम् ॥ **सर्वजीवा वेति** ॥ **सम्बन्धेति** ॥ आदित्यो जीवो वा सर्वगतो न चेत्यवतारिकारूपभाप्येणेत्यर्थः । आदित्यशब्दाच्छारीर आदित्यस्सर्वगत इति न । जीवलिङ्गाच्छारीरो जीवः सर्वगतो नेति प्रापकभेदाच्छारीरपदमप्यावृत्त्या योज्यमिति सूत्रे शारीरावित्यनुक्त्वा शारीर इत्येकवचनोक्तिरिति भावः । एवकारतात्पर्यं व्यनक्ति ॥ **भवेदित्यादिना** ॥ सम्भावितः प्रतिज्ञाया अर्थः साध्येत हेतुना । न तस्य हेतुभिस्त्राणमुत्पतन्नेव यो मृतः इति न्यायेन तस्य तत्र जीवादौ योग्यत्वे सति भवेत्प्रापकबलेनान्यस्य सर्वगतत्वम् । न च तदन्यस्य योग्यमित्यर्थः ॥ **अनुपपत्तेरेवेति** ॥ असम्भावितत्वादेवेत्यर्थः । किं तत्र युक्त्यन्तरान्वेषणेनेत्येवकारार्थः ॥ भाष्यस्थैवकारव्याख्येयमाह ॥ **तुशब्द इति** ॥ सौत्र इत्यर्थः ॥ **व्रीह्यादीति** ॥ स्वर्गाच्च्युतः स्थूलशरीरसम्बन्धार्थं पित्रादिदेहप्रवेशायान्यकर्मनिर्मितव्रीह्यादिगतो यो जीवस्तादृशजीवान्तरवदित्यर्थः । वक्ष्यति चैतत् अन्याधिष्ठिते पूर्ववदभिलापादित्यत्र ॥ **भवदिति** ॥ वयमेतद्वाणमवष्टभ्य विधारयाम इति श्रुत्या तत्वाभिमानितया सर्वदेहेष्ववस्थितेरङ्गीकार्यत्वादित्यर्थः ॥ **ब्रह्मादीति** ॥ उत्तमेषु नियमनाभावात्तदर्थत्वेनैवेह शरीरस्थत्वस्याभिमतत्वादिति भावः । यद्वा ब्रह्मादीनां यानि

(भावदीपः)
सर्वशरीराणि तत्स्थत्वानुपपत्तेरेवेत्यर्थः । सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयदिति प्रतिकल्पमादित्यादेर्भेदादिति भावः ॥ ३ ॥

## अभिनवचन्द्रिका

(सू.३) **किं न स्युरिति** ॥ जीवा वा स्युरिति किं नोच्यत इत्यर्थः । एतेन–यथा–विष्णुः सर्वगत इत्युच्यते तथा–जीवा वा किं न स्युरित्यसङ्गतमिति परास्तम् ।

ननु– 'अनुपपत्तेस्तु न शारीरः' इति सूत्रे तद्भाष्ये च साध्यावैशिष्ट्यम् । सर्वगतत्वानुपपत्त्या सर्वगतत्वाभावसाधनात्, अस्य सर्वगतत्वमनुपपन्नं, सर्वगतत्वं नास्ति' इत्यनयोरेकार्थत्वादित्यत आह– **भवेदन्यस्येत्यादिना** ॥ भवेदन्यस्य सर्वगतत्वं यदि तस्य सर्वगतत्वमुपपत्ति सहं स्यात् । न च तदस्तीत्यर्थः । उपपत्त्यसहत्वेन सर्वगतत्वाभावः साध्यत इति न साध्यावैशिष्ट्यमिति भावः । सर्वजीवानां सर्वगतत्वस्य परेणोक्तत्वात् एकस्य सर्वशरीरस्थत्वासम्भवव्युत्पादनं छलोत्तरमित्याशङ्कानुत्तये विकल्पेन पृच्छति– **किं मिलित इति** ॥ द्वितीयपक्षं परिशेषयितुमाह– **नाद्य इति** ॥ आद्यपक्षः श्रुत्यर्थत्वेन वक्तुं न युक्त इत्यर्थः । **न द्वितीय इति** ॥ द्वितीयः प्रत्येकं सर्वजीवानां सर्वगतत्वरूपोऽर्थः नास्ति । सर्वगतसुखदुःखादिप्राप्तिप्रसङ्गबाधकेनोपपत्त्यसहत्वादित्यर्थः । एतेन सूत्रे अनुपपत्त्या सर्वगतत्वरूपार्थाभावस्यैव साधितत्वेन 'न द्वितीयः' इत्यादिद्वितीयपक्षस्य अङ्गीकारानर्हत्वोपपादकतया 'अनुपपत्ते'रिति सूत्रपदव्याख्यानमयुक्तमिति परास्तम् । **अतोऽन्यत्रेति** ॥ बाधकाभावसहकृतस्यैव प्रापकस्य अर्थव्यवस्थापकत्वादिति भावः । **न चाऽऽदित्यस्येति** ॥ आदित्यस्य तत्वाभिमानित्वेन सर्वशरीरस्थत्वस्य भवद्भिरङ्गीकृतत्वात् तत एव तस्य सर्वशरीरस्थत्वानुपपत्तिर्नास्तीति भवद्भिरेव वक्तव्यत्वात् आदित्यस्य सर्वगतत्वेन 'एतमस्यामेत'मिति श्रुतिप्रतिपाद्यत्वमङ्गीक्रियतामिति न वाच्यमित्यर्थः । **तस्यापीति** ॥ आदित्यस्यापि मुक्तत्वप्रसङ्गेन मुक्तब्रह्मादिसर्वशरीरस्थत्वानुपपत्तेः सत्वादित्यर्थः ।

## वाक्यार्थमुक्तावली

ॐ अनुपपत्तेस्तु न शारीरः ॐ ॥ न चादित्यशब्दादिति भाष्ये जीवपदेन जीवविशेष आदित्यो जीवसमुदायश्च विवक्षित इति भावेन आदित्यः सर्वजीवा वेत्युक्तम् । तत्र जीवपक्षप्रतिक्षेपकत्वेन भाष्यं व्याख्यातुं विकल्पेन पृच्छति । **मिलितसर्वजीवानामित्यादिना** ॥ **व्रीह्यादीति** ॥ स्वर्गात् च्युतः स्थूलशरीरसम्बन्धार्थं पित्रादिदेहप्रवेशाय अन्यकर्मनिर्मितव्रीह्यादिदेहगतः तद्देहापादककर्मणः

(वाक्यार्थमुक्तावली)

स्वानर्जितत्वात् तदीयदुःखादिकमभुञ्जन्नेव वर्तत इति । 'स्वर्गादवाग्गतो देही व्रीह्यादीतरदेहगः । अभुञ्जंस्तु क्रमेणैव' इति वक्ष्यति, तादृशजीवान्तरवदित्यर्थः ॥ **अनादीति** ॥ यानि सर्वेषामुत्तरोत्तर-देहापादककर्मसाधनीभूतानि पूर्वपूर्वशरीराणि तेषु सर्वेष्वनादितः सर्वेषां सत्त्वेन कर्मभेदस्यापि साधयितु-मशक्यत्वादित्यर्थः । आदित्यनिरासकत्वेन भाष्यं व्याचष्टे ॥ **न चेति** ॥ **ब्रह्मादीति** ॥ सेवारूपेण सत्त्वेऽप्यत्र विवक्षितनियामकत्वेन तवावस्थानाभावादित्यर्थः । यद्वा ब्रह्मादीनां यानि सर्वाणि शरीराणि तत्स्थत्वानुपपत्तेः । सूत्रे सर्वत्रेत्यनुवर्तते । तुरवधारणे । शारीर इत्येकवचनसामर्थ्यात् एकस्येति लभ्यते । शारीरः तत्तज्जीवः प्रत्येकं सर्वगतो न एकस्य सर्वत्र गतत्वानुपपत्तेरेवेत्यर्थः । शारीरः आदित्योऽपि न सर्वगतः । एकस्य ब्रह्मादिसर्वशरीरगतत्वानुपपत्तेरेवति सूत्रार्थः । एवशब्देनानुपपत्तेर-सम्भावनयैव न शारीरः किं तत्र युक्त्यन्तरान्वेषणेनेत्याचष्टे । अनुपपत्तेरपरिहार्यत्वं वा सूचयति । नेतर इति वाच्ये शारीर इत्युक्तिः स यश्चायमशरीर इति श्रुताशरीरत्वानुपपत्तिमादित्ये जीवे च सूचयितुमिति ज्ञेयम् ।

## तत्त्वसुबोधिनी

**तत्कथनवैय्यर्थ्यादिति** । मिलितसर्वजीवानां सर्वगतत्वकथनस्य व्यर्थत्वादित्यर्थः । कुतो व्यर्थत्वमित्यत आह ॥ **स्वस्वदेहेति** । तथा च सिद्धकथनं व्यर्थमिति । **तुशब्द इति** । तेनानुपपत्तेर-परिहार्यत्वमुक्तमिति भावः । **व्रीह्यादिगतजीवान्तरवदिति** । स्वर्गाच्च्युतः स्थूलसशरीरसम्बन्धार्थं पित्रादिशरीरप्रवेशायान्यकर्मनिर्मितव्रीह्यादिगतो जीवः जीवान्तरशब्दार्थः ।

## वाक्यार्थविवरणम्

**भवदभ्युपगमादिति** । तत्त्वाभिमानित्वाङ्गीकारादित्याशयः । **ब्रह्मादीति** । अत्र ब्रह्मशब्देन पुन्नामकब्रह्मणो ब्रह्माण्डाद्बहिष्ठस्य महत्तत्त्वाभिमानिनो ग्रहणम् । सूर्यस्य तावत्पर्यन्तं व्याप्तिर-सम्भावितेत्याशयः । अतो विराड्देहे सूर्यस्य सत्त्वात् कथमेतदिति चोद्यानवकाशः ।

## वाक्यार्थमञ्जरी

**सम्बन्धभाष्येण** सूत्रसङ्गतिप्रदर्शकप्राचीनभाष्येण ॥ ॐ अनुपपत्तेस्त न शारीरः ॐ ॥ शारीरः शरीरसम्बन्धिरादित्यो जीवो न सर्वगतः सर्वगतत्वानुपपत्तेरेवेत्यर्थः । प्रत्येकमेकैकस्य ॥ **तुशब्द इति** ॥

(वाक्यार्थमञ्जरी)

तेनानुपपत्तेरपरिहार्यत्वं किं तत्र युक्तिगवेषणयेति सूचितमिति भावः । उपपत्तिमाशङ्क्य निराकरोति ॥ **न चेति** ॥ स्वर्गादवाग्गतस्य स्थूलशरीरसम्बन्धार्थं व्रीह्यादिशरीरगतस्यापि जीवान्तरस्य छेदादिना दुःखाभावात्स्वकर्मनिर्मितशरीरमेव भोगसाधनमङ्गीकार्यं न च सर्वशरीराण्येककर्मनिर्मितानि येन तस्य सर्वशरीरजन्यदुःखादिप्रसङ्ग इत्यर्थः । कर्मभेदस्य अस्यैवेदं कर्म नैतस्येति विवेकस्य, दृष्टान्ते तु पौर्वापर्यसत्वान्नैवमिति भावः ॥ **भवदभ्युपगमादिति** ॥ तस्य तत्त्वाभिमानित्वादिति भावः ॥ **ब्रह्मादीति** ॥ ननु तद्देहस्यापि चतुर्विंशतितत्त्वात्मकत्वेनास्त्येव तत्र सूर्यप्रवेशः । अन्यथा विराड्देहे तत्त्वाभिमानिनां प्रवेशनिर्गमाभ्यां वायुश्रेष्ठत्वनिश्चयानुपपत्तिरिति चेन्न । अत्र भूतानामन्तरपुरुषः सूर्य आत्मेत्यादिनाऽदित्यस्य प्रेरकत्वश्रवणेन ब्रह्मादिशरीरे प्रेरकत्वेन तत्प्रवेशायोगस्योक्तत्वात् बहिस्स्थपुन्नामकब्रह्मदेहस्य महत्तत्त्वमात्रात्मकत्वेन तत्प्रवेशाभावाच्च । तदेतदाह । **सर्वशरीरेति** ॥

## विवृतिः

**तत्कथनवैयर्थ्यादिति** ॥ मिलितसर्वजीवानां सर्वगतत्वकथनस्य व्यर्थत्वादित्यर्थः । कुतो व्यर्थत्वमत आह ॥ **स्वदेहेति** ॥ तथा च सिद्धकथनं व्यर्थमिति भावः ॥ **तुशब्द इति** ॥ तेनानुपपत्तेरपरिहार्यत्वं युक्तमिति भावः । व्रीह्यादिगतजीवान्तरवदिति ॥ स्वर्गात् च्युतः स्थूलशरीरसम्बन्धार्थं पित्रादि-शरीरप्रवेशायान्यकर्मनिर्मितव्रीह्यादिगतो जीवो जीवान्तरशब्दार्थः ॥

## सूत्रभाष्यम्

**॥ ॐ कर्मकर्तृव्यपदेशाच्च ॐ ॥ ४ ॥**

'आत्मानं परस्मै शंसती'(ऐ.आ.३-२-३)त्यादि ॥

## सत्तर्कदीपावली

हेत्वन्तरेणात्र सर्वगतत्वेन प्रतिपाद्यमानत्वं जीवस्य निषेधयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **कर्मेत्यादिना** ॥ अत्र सर्वगतत्वेन प्रतिपाद्यमानस्यात्मनः कर्मत्वं जीवस्य कर्तृत्वम् एकस्यां शंसनक्रियायां श्रूयते । आत्मानं परस्मै शंसतीति । तत्र यदि जीवः सर्वगतात्मत्वेन प्रतिपाद्येत तर्ह्येकस्यां क्रियायां कर्तृकर्मभावः स्यात् । न हि तथाविधः कर्तृकर्मभावो असति बाधके युज्यते । न चान्यदन्यथासिद्धं जीवपरमात्मभेदस्य बाधकप्रमाणमुपलभ्यत इत्यर्थः ।

## तत्त्वप्रदीपिका

इतश्च न जीवो ब्रह्म । ''आत्मानं परस्मै शंसति'' इत्यादिकर्मकर्तृव्यपदेशाच्च । न ह्येकस्य कर्तृकर्मता युज्यते तन्मते । न च जीवब्रह्मैक्यपक्षे तत्त्ववस्तुनः कर्मभावः कर्तृभावश्चेष्यते । इह च सर्वत्रोच्यमानमात्मशब्देनोक्त्वा कर्मत्वेन व्यपदिशति । न चाऽत्मशब्दो जीवे मुख्यः । ''द्युभ्वाद्यायतनं स्वशब्दादि''त्यादिना निषिद्धत्वात् । चकारात्परस्मायिति सम्प्रदानव्यपदेशाच्चेत्यभिप्रायः । न हि ब्रह्मत्वे जीवानां मिथो भेदोपदेशोपपत्तिः । आदिशब्दात् ''यस्तित्याज सचिविदं सखायमि''त्यादि च । भिन्नयोर्हि कर्तृकर्मभाव औत्सर्गिकः । न चात्रापवादः । न च स्वयमेव स्वात्मानं तत्याजेति शोभते ।

''कर्मसञ्चयवेत्तारं त्यजेन्नारायणं हि यः ।
प्रीत्यैकदेशसंस्थत्वात्सखायमिति चोदितम् ॥

न विद्यायाः फलं तस्य श्रुतं च नरकावहम् ।
नैव प्राप्नोति सुकृतं सन्त्यागात्परमात्मनः ॥

मुख्यत्यागो हरेरेष यन्नास्तीति वदेदमुम् ।
तत्समं वाऽधिकं वापि ब्रूयादैक्यमथापि वा'' ॥ इत्याद्यैतरेयसंहितायाम् ॥

## तत्त्वप्रकाशिका

युक्त्यन्तरेण जीवस्यात्रोक्तसर्वगतत्वं पराकुर्वत्सूत्रं पठित्वा तदुपात्तश्रुतिमेवोदाहरति ॥ **कर्मेति ॥** अत्रोक्तसर्वगतस्य आत्मानमिति कर्मत्वेन व्यपदेशाज्जीवस्य च शंसतीति कर्तृत्वेन व्यपदेशादेकस्यां क्रियायां कर्मकर्त्रोरुत्सर्गतो भिन्नत्वनियमादत्र चापवादकारणाभावाच्च नायं सर्वगतः शारीर इति भावः । न चैकः सर्वगतो जीवः सर्वगतं जीवान्तरं शंसतीति योज्यम् । सर्वगततया सर्वजीवाग्रहणापातात् । तथा प्रतीत्यभावेन क्लिष्टकल्पनत्वाच्च । आदिपदेन 'आत्मानं वेद' इत्यस्य ग्रहणम् ॥ ४ ॥

## गुर्वर्थदीपिका

यथा मण्यादिप्रतिबन्धेऽदाहकोऽप्यग्निः स्वभावतो दाहक एव । एवमपवादे सत्यभेदकोऽपि कर्तृकर्मभावः स्वभावतो भेदक एवेति भावेनोक्तम् । **उत्सर्गतो भिन्नत्वनियमादिति** । एकः सर्वगतो जीव इत्यत्र चक्षुर्मयत्वादिलिङ्गैः सर्वगततया प्राप्तसर्वजीवानां मध्ये एकः सर्वगतो जीवः आत्मानं सर्वगतं जीवान्तरं परस्मै सर्वगतजीवान्तराय शंसतीति वाक्यं न योज्यमित्यर्थः । कुतो न योज्यमित्यत

(गुर्वर्थदीपिका)

आह । **सर्वगततयेति** । आत्मानमित्येकस्यैव जीवस्य सर्वगततयोपदेशाच्छिष्यस्य सर्वगततया सर्वजीवाग्रहणापातात् । यदि चाऽऽत्मानमिति जात्यैकवचनं तथाप्युपदेष्टुः स्वस्य तत्र प्रवेशे स्वांशे कर्तृकर्मविरोधापरिहारात् । अप्रवेशे पूर्ववच्छिष्यस्य सर्वगततया सर्वजीवाग्रहणापातात् । यदि चैकः सर्वगतः सर्वगतं जीवान्तरमुपदिशति सोऽप्येनमुपदिशति एवमन्योऽप्यन्यमुपदिशतीत्यर्थः कथ्यते तथाऽप्युपदेश्यस्य शिष्यस्य सर्वगतत्वे सोऽप्युपदेशं विना सर्वगतत्वादेव सर्वं जानीयात् । न ह्यसावन्धः । अत उपदेशसार्थक्याय सोऽसर्वगतो वाच्यः । एवं चोपदेश्यस्य शिष्यस्य सर्वगतत्वेनाग्रहणात्सर्वगततया सर्वजीवाग्रहणापातादित्यर्थः ।

## भावबोधः

'कर्मकर्त्रोरुत्सर्गतो भिदा' इत्यनुव्याख्यानं मनसि निधायाऽऽह । **एकस्यामिति** । सर्वगततया सर्वजीवाग्रहणापातादिति । स य एवमेतं संवत्सरसंमानमित्याद्यात्मानमित्यन्तशब्दैः शंसनक्रियाकर्मत्वेन कस्यचिदेकस्य जीवस्य ग्रहणे एतमस्यामिति वाक्ये सर्वगततया तस्यैव जीवस्य ग्रहणं स्यात् । न तु सर्वजीवानाम् । एतमस्यामित्युक्तस्यैव स य एवमेतमित्यादिद्वितीयान्तशब्दैः परामर्शेन तयोर्वाक्ययोरेक-विषयत्वात् । तथा च पूर्वपक्षे सर्वजीवानां वै तत्सर्वगतत्वमिति सर्वगततया सर्वजीवग्रहणं न स्यादिति भावः । **तथा प्रतीत्यभावेनेति** । शंसनक्रियाकर्तृकर्मीभूतचेतनयोर्जीवविशेषरूपत्वज्ञापकाभावात् तयोरेकजीवत्वेन प्रतीत्यभावेनेत्यर्थः ।

## भावदीपः

॥ ॐ कर्मकर्तृव्यपदेशाच्च ॐ ॥ भाष्यस्य सूत्रेणान्वयं मत्वाऽर्थमाह ॥ **अत्रोक्तसर्वगतस्येति** ॥ मामहं जानामीत्यादौ व्यभिचारादाह ॥ **उत्सर्गत इति** ॥ बली सोऽप्यनपोदित इत्यनुभाष्योक्तेराह ॥ **अत्र चेति** ॥ चक्षुर्मयत्वादिकं तु नापवादहेतुरिति वक्ष्यत इति भावः । प्रतिज्ञांशानुवृत्तिं मत्त्वाऽऽह ॥ **नायमिति** ॥ हेतोरन्यथोपपत्तिं निराह ॥ **न चेति** ॥ **सर्वगततयेति** ॥ सर्वेऽपि जीवाः एतमस्यामित्यादौ सर्वगततयोच्यन्त इति पक्षो भग्नः स्यात् । एतमस्यामित्यादावुक्तस्यैवात्मानमिति कर्मत्वेन निर्देशात् । कर्तृभूतस्य च तदभावादित्यर्थः । मास्तु सर्वे जीवा इति पक्षः कर्तृभिन्नजीवानामेवास्तु कर्मत्वं सर्वगततया पूर्ववाक्यप्रतिपाद्यत्वं च । को दोष इत्यत आह ॥ **तथेति** ॥ कर्मभूतात्मविशेषणेन चक्षुर्मयत्वादिना जीवसामान्यलिङ्गेनात्मानमिति जीवमात्रस्यैव प्रतीतेरित्यर्थः ॥ ४ ॥

## अभिनवचन्द्रिका

(सू.४) **सर्वगततयेति** ॥ 'एतमस्यामेत'मिति श्रुत्या सर्वगततया प्रतिपादनाय सर्वजीवानामग्रहणं स्यात् सर्वजीवानामेतद्वाक्यविषयत्वं न स्यादिति यावत् । 'आत्मानं परस्मै शंसती'ति वाक्यस्य यावान्विषयः तावानेवास्य वाक्यस्य विषय इत्यङ्गीकारस्यैवोचितत्वादिति भावः ।

## वाक्यार्थमुक्तावली

ॐ कर्मकर्तृव्यपदेशाच्च ॐ ॥ सर्वगतो न शारीर इत्यनुवृत्तिं कर्मकर्त्रिति भावप्रधानत्वं चाभिप्रेत्य **सूत्रार्थमाह** ॥ **अत्रोक्तेति** ॥ देवदत्तो गच्छति देवदत्तं बध्नातीत्यत्र क्रियाभेदेन कर्मकर्त्रैक्यदर्शनात् एकस्यां क्रियायामित्युक्तम् । मामहं जानामीत्यादौ व्यभिचारपरिहारायोत्सर्गत इति ॥ **सर्वगततयेति** ॥ स य एवमेतं संवत्सरसंमानमित्यारभ्यात्मानं परस्मै शंसतीत्यन्तशब्दैः शंसनक्रियाकर्मत्वेन कस्यचिदेकस्य ग्रहणे एतमस्यामिति वाक्ये तस्यैव सर्वगततया ग्रहणं स्यात् न तु सर्वजीवानाम् । एतमस्यामित्युक्तस्यैव स य एतमित्यादिद्वितीयान्तशब्दैः परामर्शेन तयोर्वाक्ययोरेकविषयत्वात् । तथा च पूर्वपक्षे सर्वजीवानां तत्सर्वगतत्वमिति सर्वगततया सर्वजीवानामेतमात्मानमिति वाक्येन ग्रहणापातस्तथा चैतमिति परामर्शविरोध इति भावः । **तथा प्रतीत्यभावेनेति** ॥ शंसनक्रियाकर्मभूतयोः चेतनयोर्जीवविशेषरूपत्वे ज्ञापकाभावात् तयोरैकैकजीवत्वेन प्रतीत्यभावेनेत्यर्थः ।

## तत्त्वसुबोधिनी

कर्मकर्तृत्वव्यपदेशमेव प्रकटयति । **अत्रोक्तेति** । **सर्वगततया सर्वजीवाग्रहणापातादिति** । सर्वगतत्वाभावे सर्वगतवाक्ये सर्वगततया ये सर्वजीवाः प्रकृताः तेषां स य एवमेतमात्मानमिति कर्मभूतात्मविशेषणेन एतच्छब्देन ग्रहणं न स्यात् ग्रहणे सर्वजीवानां कर्मत्वापत्तेः । तथा च एतच्छब्दस्य प्रकृतसर्वपरत्वसम्भवे तदेकदेशपरत्वमयुक्तमित्यर्थः । यद्वा एतमित्यनेन सर्वजीवानामनिर्देशात् एतच्छब्द-स्वारस्यार्थं सर्वगतवाक्येऽपि सर्वगततया सर्वेषां ग्रहणं न स्यात् । तथा च सर्वे जीवाः सर्वगता इति यत्पूर्वपक्षिणा गृहीतं तद्धीयेतेत्यर्थः । **तथा प्रतीत्यभावेनेति** । कर्मीभूतात्मविशेषणेन चक्षुर्मयत्वादिना जीवसामान्यलिङ्गेन जीवमात्रस्यैव प्राप्तेः जीवविशेषयोरैकैकत्वेन प्रतीत्यभावेनेत्यर्थः ।

## वाक्यार्थमञ्जरी

ॐ **कर्मकर्तृव्यपदेशाच्च** ॐ ।। एतमस्यामित्यादिना सर्वत्रोच्यमानस्यात्मानमिति कर्मत्वेन शारीरस्य शंसतीति कर्तृत्वेनाभिधानाच्च न शारीरः सर्वगत इत्यर्थः । घटज्ञाने कर्तुरेव देवदत्तं यज्ञदत्तो जानातीत्यत्र कर्मत्वदर्शनादाह ।। **एकस्यां क्रियायामिति** ।। मामहं जानामीत्येकस्यां क्रियायामेकस्योभयदर्शनादाह ।। **उत्सर्गत इति** ।। बाधकैकापोद्यत्वमुत्सर्गः । सति बाधके नियमस्य संकोचोऽप्यस्ति तत्र तु तयोरभेदेन साक्षिसिद्धत्वमेव बाधकमिति भावः । तर्ह्यत्रापि बाधकेनैव संकोचोऽस्त्वित्यत आह ।। **अत्रेति** ।। व्यभिचरितनियमस्य कथं साधकत्वमिति चेद्यथा न हिंस्यात्सर्वा भूतानीत्यौत्सर्गिकभूतहिंसा-निषेधोऽग्नीषोमीयपशुहिंसाविधिनाऽपोद्यते । भवति चानपोदिते ब्रह्महिंसाद्यकरणीयत्वे प्रमाणं तथाऽत्रापीति भावः ।। **सर्वगततयेति** ।। एतमस्यामिति वाक्यमात्मानमिति वाक्यं चैकविषयमिति तावदविवादम् । एतमस्यामित्युक्तस्यैवैतमात्मानमिति परामर्शात् । तत्र यद्यात्मानमित्यत्रैको जीवः कर्मतया स्वीक्रियेत तर्ह्येतमस्यामित्यत्रापि स एव सर्वगततयोच्यमानः स्यान्न सर्वे जीवाः । तथा च यत्पूर्वपक्षे सर्वजीवानां वैतत्सर्वगतत्वमिति सर्वगततया सर्वजीवग्रहणं तन्न स्यादित्यर्थः ।। **तथा प्रतीत्यभावेनेति** ।। कर्मीभूतात्मनो जीवविशेषविषयत्वेन प्रतीत्यभावेनेत्यर्थः । आत्मविशेषणेन चक्षुर्मयत्वादिना जीवसामान्यलिङ्गेन जीवमात्रत्वप्राप्तेरिति भावः ।।

## विवृतिः

कर्मकर्तृव्यपदेशमेव प्रकटयति ।। **अत्रोक्तेति** ।। **सर्वगततया सर्वजीवाग्रहणापातादिति** ।। सर्वजीवानां कर्मत्वाभावे सर्वगतवाक्ये सर्वगततया ये सर्वजीवाः प्रकृताः तेषां स य एवमेतमात्मानमिति कर्मभूतात्मविशेषणेन तच्छब्देन ग्रहणं न स्यात् ग्रहणे । सर्वजीवानां कर्मत्वापत्तेः । तथा च एतच्छब्दस्य प्रकृतसर्वपरत्व सम्भवे तदेकदेशपरत्वमयुक्तमित्यर्थः । यद्वा एतमित्यनेन सर्वजीवानामनिर्देशे एतच्छब्दस्वारस्यार्थम् सर्वगतवाक्येऽपि सर्वगततया सर्वेषां ग्रहणं न स्यात् । तथा च सर्वे जीवाः सर्वगता इति यत्पूर्वपक्षिणा गृहीतं तद्धीयेतेत्यर्थः ।। **तथा प्रतीत्यभावेनेति** ।। कर्मीभूतात्मविशेषणेन चक्षुर्मयत्वादिना जीवसामान्यलिङ्गेन जीवमात्रस्यैव प्राप्तेः जीवविशेषपर्यैरैकैकत्वेन प्रतीत्यभावेनेत्यर्थः ।।

## सूत्रभाष्यम्

॥ ॐ शब्दविशेषात् ॐ ॥ ५ ॥

'एतमेव ब्रह्मेत्याचक्षत' (ऐ.आ.३-२-३) इति । न हि जीवमेव ब्रह्मेत्याचक्षते । 'एष उ एव ब्रह्मैष उ एवात्मैष उ एव सवितैष उ एवेन्द्र एष उ एव हरिर्हरति परः परानन्द' इति चेन्द्रद्युम्नशाखायाम् ॥ ५ ॥

## सत्तर्कदीपावली

एतमेव ब्रह्मेत्यवधारणबलेनोक्तमर्थं साधयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **स्मृतेरित्यादिना** ॥ अहमात्मेति भगवत्स्मृतिसंवादादप्यत्र सर्वगत्वेनोक्तो विष्णुरेव । इतिहासपुराणाभ्यां वेदं समुपबृंहयेदिति भगवद्वचनादित्यर्थः । यज्जीवनिवारणेन विष्णोः सर्वगतत्वप्रतिपादनं तयोरपारमार्थिकभेदाभिप्रायमिति कस्यचित्कल्पनं तत्प्रमाणशून्यत्वादुपेक्षणीयमित्याह ॥ **न चेति** ॥ ५-६ ॥

## तत्त्वप्रदीपिका

शब्दविशेषात् । एतं सर्वभूतस्थमेव ब्रह्मेत्याचक्षते नान्यमिति ब्रह्मशब्दस्य सावधारणत्वविशेषाच्च न जीवो ब्रह्म । न हि जीवमेव ब्रह्मेत्याचक्षत इति श्रुत्यर्थो मन्तव्यः । ''सर्वेषु भूतेष्वि''ति वचनात् । न च सर्वभूतस्थस्य सर्वभूतत्वम् । न हि गृहस्थो गृहं भवति । अपि च न हि जीवमेव ब्रह्मेत्याचक्षते विद्वांसः । प्रत्युतेश्वरमेव ब्रह्मेत्याचक्षते । तस्यैव पूर्णत्वात् । न हि मायिनोऽपि जीवमेव ब्रह्मेत्याचक्षते, विपरीतबोधकत्वानभ्युपगमात् । अभ्युपगमे ब्रह्मणो दुःखित्वापातात् । ब्रह्माभावप्रसङ्गाच्च । ब्रह्मत्वे च सति सविशेषत्वापाताज्जीवव्यतिरेकेणेश्वराभ्युपगमाच्च तन्मतेऽपि ॥

## तत्त्वप्रकाशिका

यदुक्तं ब्रह्मशब्दाद्विष्णुरेव सर्वगत इति तदयुक्तम् । ब्रह्मशब्दस्य जीवेष्वपि सम्भवात् । न चासौ जीवेऽमुख्य इति तदग्रहः । अमुख्यार्थस्यापि चक्षुर्मयत्वादिबाधेन ग्रहणोपपत्तेः । न चाश्रुतत्वादिगुणानुपपत्तिः । 'श्रुत्वाऽप्येनं वेद न चैव कश्चित्' इति जीवस्याप्यश्रुतत्वादिस्मरणात् । न चानुपपत्तेरित्युक्तदोषः । विष्णावपि तस्य साम्यात् । न च कर्मकर्तृव्यपदेशाच्चेत्यभिहितदोषप्राप्तिः । चक्षुर्मयत्वादिबाधकेनैकस्यैव कर्मकर्तृत्वोपपत्तेरित्याशङ्कां परिहरत्सूत्रमुपन्यस्य तदुपात्तश्रुतिमेवोदाहरति ॥ **शब्देति** ॥ नानेन ब्रह्मशब्देन जीव उच्यते । ब्रह्मशब्दस्यैतमेवेत्यवधारणाख्यविशेषवत्वादित्यर्थः । ब्रह्मशब्दस्य सावधारणत्वेऽपि

(तत्त्वप्रकाशिका)

कुतो न जीवे वृत्तिरित्यत आह ॥ **न हीति** ॥ सावधारणब्रह्मशब्दवाच्यत्वे मुख्यब्रह्मत्वं स्यात् । न च तज्जीवस्योपपद्यत इति भावः । विष्णावपि सावधारणब्रह्मशब्दश्रुतिः कुत इत्यत आह ॥ **एष इति** ॥

## गुर्वर्थदीपिका

यद्यप्यादिसूत्रे शब्दविशेषादिति सूत्रे च "एतमेव ब्रह्मेत्याचक्षत" इति श्रुतिरेव सिद्धान्तसाधिका । तथाऽपि तत्र ब्रह्मशब्दस्य विष्णौ मुख्यत्वान्मुख्ये सम्भवत्यमुख्यायोगाद्विष्णुरेव सर्वगत इति ब्रह्मशब्दमात्रेण सिद्धान्तितम् । इह तु चक्षुर्मयत्वादिजीवलिङ्गैः मुख्यासम्भवेनामुख्यजीवग्रहणमित्यभ्यधिकाशङ्कया पुनराक्षेपे सावधारणब्रह्मशब्दस्यान्यत्रासम्भवात्प्रबलेन शब्देन लिङ्गस्यैव बाधनमिति न पौनरुक्त्यम् । "एष उ एव ब्रह्म"त्यादौ "उकारेणोच्चमुच्यत" इति वचनात् उ उत्कृष्टं ब्रह्मैव उ एवेत्यादियोजना ।

## भावबोधः

**अवधारणाख्यविशेषवत्त्वादिति** । अवधारणाख्यान्ययोगव्यवच्छेदस्य ब्रह्मशब्दार्थब्रह्मत्वसम्बन्धाद् ब्रह्मशब्दस्यावधारणत्वं बोद्धव्यम् । यद्वा अवधारणार्थकैवशब्दाख्यविशेषवत्त्वादित्यर्थः । अनेन बहुलिङ्गसहितश्रुतेरपि सावकाशाया निरवकाशश्रुत्यादीनामेव बलवत्त्वमिति । तथा च निरवकाशा एतमेवेत्यवधारणादय इति न्यायविवरणमपि व्याख्यातं भवति । अत्र प्रथमवाक्ये बहुलिङ्गपदेन संवत्सरपतित्वादिलिङ्गानां श्रुतिपदेनादित्यशब्दस्य ग्रहणम् । श्रुत्यादीनामित्यस्य ब्रह्मशब्दादिपदोक्ताश्रुतत्वादिगुणानामित्यर्थः । अवधारणादय इत्यत्रादिपदेनाशरीरत्वादीनामेव ग्रहणमिति ज्ञातव्यम् ।

## भावदीपः

ॐ शब्दविशेषात् ॐ ॥ **स्मरणादिति** ॥ गीतायां द्वितीये इत्यर्थः । तत्र हि अथ चैनं नित्यजातमित्यादिना प्रकृतस्य जीवस्यैनमिति परामर्शादिति भावः । श्रुत्वेत्युपलक्षणम् । "आश्चर्यवत्पश्यति कश्चिदेनमाश्चर्यवद्वदति तथैव चान्यः । आश्चर्यवच्चैनमन्यः शृणोती"ति पूर्ववाक्ये उक्तेः द्रष्टा वक्तेत्यपि ध्येयम् । ईश्वरसरूपत्वादिनाऽऽत्मद्रष्टा दुर्लभ इति भाव इति गीताभाष्यटीकयोर्व्यक्तमेतत् । भाष्यस्य सूत्रेणान्वयं मत्वा योग्यसाध्यमध्याहृत्य योजनामाह ॥ **नानेनेति** ॥ सूत्रे विशेषो विशेषणं शब्दविशेषादवधारणरूपाद्ब्रह्मशब्दविशेषादित्यस्य फलितार्थो ब्रह्मशब्दस्येति । एतमेवेत्युक्तोद्देश्यान्वितैवकारसाहित्यादित्यर्थः ॥ **मुख्येति** ॥ उद्देश्यान्वितैवकारस्य विधेये अन्ययोगव्यवच्छेदकत्वात् ।

(भावदीपः)

ब्रह्मशब्दस्य जीवरूपामुख्यब्रह्मार्थकत्वे मुख्यस्य ब्रह्मणो विष्णोरमुख्यस्य जात्यादेश्च सत्त्वेनान्ययोग-निवारणायोगेनैवकारायोगात् । विष्णुरूपमुख्यब्रह्मार्थत्वे चान्यस्य मुख्यब्रह्मणोऽभावेनान्ययोगनिवारण-सम्भवादिति भावः । एतेन तथापि निरवकाशा एतमेवेत्यवधारणादय इति न्यायविवरणोक्तं निरवकाशत्व-मुपपादितं भवति । तथा चाश्रुतत्वादिकमपि ब्रह्मश्रुतिवन्निरवकाशम् । प्रागुक्तश्रुतेः । श्रुत्वाऽप्येनमिति स्मृतिः ईश्वरपरा आश्चर्यो भगवानेवेत्याह आश्चर्यवदितीति गीतातात्पर्योक्तेः । ईश्वरस्यापि अव्यक्तोऽयम् अचिन्त्योऽयमिति प्रकृतत्वात् । जीवपरत्वेऽपि प्रतिबिम्बस्यापि जीवस्य द्रष्टा दुर्लभः । किं तद्ब्रह्मसामर्थ्यं वर्णनीयमिति तट्टीकाद्युक्तरीत्या अश्रुतत्वादेः ईश्वर एव मुख्यत्वात् । चक्षुर्मयत्वादेरर्भक-सूत्रेऽनुपपत्तिदोषसाम्यस्य सम्भोगसूत्रे निरस्यत्वात् । अत एव न कर्मकर्तृभावोऽपवादवानिति न प्रागुक्तचोद्यावकाश इति भावः ॥ ५ ॥

## अभिनवचन्द्रिका

(सू.५) **अमुख्यार्थस्यापीति** ॥ ब्रह्मशब्दमुख्यार्थग्रहणे चक्षुर्मयत्वादिबाधकसद्भावेनामुख्यार्थस्यापि जीवस्य ग्रहणोपपत्तेरित्यर्थः । **विष्णावपीति** ॥ विष्णोः यथा दोषः परिहरणीयः तथा जीवेऽपि परिहरणीय इत्यर्थः । **अवधारणाख्यविशेषत्वादिति** ॥ ननु अवधारणेन एतच्छब्द एव विशेषितः न ब्रह्मशब्दः । 'एतमेव ब्रह्मे'ति पाठात् । अन्यथा– 'ब्रह्मैवेत्याचक्षत' इति पाठः स्यात् । एवं च ब्रह्मशब्दस्य एतमेवेत्यवधारणाख्यविशेषवत्त्वादित्ययुक्तमिति चेत् न ब्रूमो वयमयमेवशब्दः एतच्छब्दविशेषणमिति । किं तर्हि 'ब्रह्माणि जीवाः सर्वेऽपि परब्रह्माणि मुक्तिगा' इत्यादौ परादिशब्दा इव ब्रह्मशब्दविशेषणमेवेति । एवं च एतं सर्वगतमेव ब्रह्मेत्याचक्षते ज्ञानिन इत्यर्थः सम्पद्यते । तदुक्तम्– 'न हि जीवमेव ब्रह्मेत्याचक्षत' इति । तस्यार्थः– 'ब्रह्माणि जीवाः सर्वेऽपी'त्यत्र जीवस्य एव ब्रह्मशब्दवाच्यत्वविधानेऽपि ब्रह्मशब्दवाच्यत्वं नाचक्षते । तस्य तत्राभियुक्तप्रयोगाभावादिति । अवश्यं चैतदेवं विज्ञेयम् । अन्यथा 'एष उ एव ब्रह्मे'ति श्रुतौ एवशब्दार्थकं उशब्दपञ्चकं व्यर्थं स्यादिति । **सावधारणब्रह्मशब्दवाच्यत्व इति** ॥ 'एव ब्रह्म' शब्दवाच्यत्व इत्यर्थः ।

## वाक्यार्थमुक्तावली

ॐ शब्दविशेषात् ॐ ॥ अश्रुतत्वादिश्रवणादित्यत्रादिपदेनादृष्टत्वादेर्ग्रहणम् । श्रुत्वाऽप्येनमित्ये-तद्वाक्यपूर्वशेषे आश्चर्यवत् पश्यति कश्चिदेनमाश्चर्यवद्वदति तथैव चान्यः । आश्चर्यवच्चैनमन्यः शृणोति

(वाक्यार्थमुक्तावली)

इति तच्छ्रोतृदुर्लभत्वस्योक्तत्वादिति ज्ञेयम् । सूत्रे न शारीर इत्यनुवर्तते । सर्वत्र प्रसिद्धोपदेशादिति सूत्रात् विपरिणम्योपदिश्यत इत्यन्वेति । ततश्च शारीरो जीवो न ब्रह्मशब्देनोच्यते । शब्दस्य ब्रह्मशब्दस्य एतमेव सर्वगतमेव ब्रह्मेत्याचक्षते नान्यमित्यवधारणाख्यविशेषवत्वादिति सूत्रार्थः । अवधारणस्यैतच्छब्दान्वितत्वेऽपि तेन ब्रह्मशब्दस्य सर्वगतमात्रवृत्तितया सदसाधारण्यस्य अन्यगतत्वाभावस्य चाज्ञापितत्वेनैवकाराख्यविशेषणवत्वं तस्य सम्भवत्येवेति आशयेनाह ॥ **नानेन ब्रह्मशब्देनेत्यादिना** ॥ ब्रह्मशब्दस्य सावधारणत्वेऽपीति ॥ उक्तरीत्या साधारण्यज्ञापकतयाऽवधारणाख्यविशेषवत्वेऽपीत्यर्थः ॥ **न हीति** ॥ भाष्यस्य सर्वगतत्वं जीवस्याङ्गीकृत्य एतमेवेत्यत्र एतच्छब्देन तत्परामर्शमभ्युपगम्य ब्रह्मशब्दस्य तत्र वृत्यङ्गीकारे जीवमेव ब्रह्मेत्याचक्षते नान्यमिति वाक्यार्थः स्यात् तन्न ह्युपपद्यत इत्यर्थः । कुतो नोपपद्यत इत्यतो भावमाह ॥ **सावधारणेति** ॥ उक्तरीत्याऽवधारणाख्यविशेषणयुक्तब्रह्मशब्दवाच्यत्वे जीवमेव ब्रह्मेत्याचक्षते नान्यमिति लभ्यते तच्चायुक्तम् । बृह जातिजीवकमलासनशब्दराशि-ष्वित्यादि-विरोधात् । अतः एतमेव ब्रह्मेत्याचक्षत इति वाच्यम् । तथा च मुख्यब्रह्मत्वं स्यात् । न च जीवस्योपपद्यत इति भावः । एष उ एव ब्रह्मेति श्रुतौ उ उच्च एष एव ब्रह्मेत्यादियोजना ।

## तत्त्वसुबोधिनी

**तस्येति** । एकस्य सर्वशरीरस्थत्वानुपपत्तिरूपदोषस्येत्यर्थः । **अवधारणाख्यविशेषवत्वादिति** । अवधारणाख्यान्ययोगव्यवच्छेदस्य ब्रह्मशब्दार्थब्रह्मत्वसम्बन्धात् ब्रह्मशब्दस्यावधारणत्वं बोद्धव्यम् । यद्वा अवधारणार्थैकैवशब्दाख्यविशेषवत्वादित्यर्थः । **न च तदिति** । भाष्योक्तश्रुत्यादिना विष्णोरेव ब्रह्मशब्दमुख्यार्थत्वादिति भावः ।

## वाक्यार्थमञ्जरी

गीतावाक्यमुदाहरति । **श्रुत्वेति** । एनम् अथ चैनं नित्यजातमित्यनेन प्रकृतं जीवं सामान्येन श्रुत्वाऽपि विशेषतः कश्चिदपि न वेदेत्यर्थः ॥ **साम्यादिति** ॥ तस्यापि सर्वशरीरस्थत्वेन तद्गतदुःखादिप्रसङ्गसाम्यादित्यर्थः । बाधकेन विष्णुरूपभिन्नग्रहणे । तथा चापवादकारणाभावोऽसिद्ध इति भावः । **इत्याशङ्कामिति** ॥ ब्रह्मशब्दस्य जीवेऽपि सम्भवादित्याशङ्काम् । शिष्टपरिहारोऽग्रे भविष्यतीति भावः ॥ ॐ शब्दविशेषात् ॐ ॥ शब्दस्य ब्रह्मशब्दस्य विशेषादेतमेवेति साधारणत्वरूपविशेषोपेतत्वान्न तेनेतरग्रहणमित्यर्थः । मुख्यब्रह्मत्वं पूर्णत्वरूपम् । एतमेवेत्युक्तेऽन्येषामपि

(वाक्यार्थमञ्जरी)

तद्वाच्यत्वात्कथमेतदिति शङ्कापरिहाराय मुख्यतोऽस्य वाच्यत्वमन्येषाममुख्यत इत्यवश्यं वक्तव्यत्वादिति भावः । श्रुतावुशब्दोऽवधारणे । ब्रह्मैवेत्याद्येवकारसम्बन्धः ॥

## विवृतिः

**तस्येति** ॥ एकस्य सर्वशरीरस्थत्वानुपपत्तिरूपदोषस्येत्यर्थः ॥ अवधारणाख्यविशेषवत्वादिति ॥ अवधारणाख्यान्ययोगव्यवच्छेदस्य ब्रह्मशब्दार्थब्रह्मत्वसम्बन्धाद् ब्रह्मशब्दस्यावधारणवत्वं बोध्यम् ॥ यद्वा अवधारणार्थैवशब्दाख्यविशेषवत्वादित्यर्थः ॥ न च तदिति ॥ भाष्योक्तश्रुत्यादिना विष्णोरेव ब्रह्मशब्दमुख्यार्थत्वादिति भावः ॥

## सूत्रभाष्यम्

**॥ ॐ स्मृतेश्च ॐ ॥ ६ ॥**

'अहमात्मा गुडाकेश सर्वभूताशयस्थितः' (भ.गी. १०-२०) ।

'गामाविश्य च भूतानि धारयाम्यहमोजसे' (भ.गी. १५-१३) त्यादि । न चाप्रामाणिकं कल्प्यम् ॥ ६ ॥

## तत्त्वप्रदीपिका

स्मृतेश्च । इतश्च न सर्वेषु भूतेषूच्यमानः परमात्मनोऽन्यः । नापि जीवः स परमात्मा । यतः स्मृतौ सर्वभूतहृदयस्थत्वं सर्वाधारत्वं च परमात्मन उक्तम् । ये तु जीवपरयोर्व्यावहारिकभेदवादीनि सूत्राण्येतानि योजयन्ति तद्व्यपोहार्थमाह— **न चाप्रमाणकं कल्प्यमिति** । व्यावहारिकभेदस्य मिथ्यात्वे त्वसद्भेदवाचित्वादप्रमाणानि सूत्राणीत्युक्तं स्यात् । न चानिर्वाच्यं कल्प्यम् । तस्याप्रमाणकत्वेन निरस्तत्वात् । सत्यत्वेऽपसिद्धान्तः । न च भेदभ्रान्तिः क्वापि सत्यभेदसद्भावं विना सम्भवति । न हि कुहचिदप्यवितथकलधौतं विना वितथकलधौतप्रतीतिस्सम्भवति । न चौपाधिको भेदो ब्रह्मणः कल्प्यः । निरंशत्वादेकदेशसम्बन्धासम्भवादुपाधेः । कृत्स्नग्रासे सत्यनुपहितोपहितविभागासम्भवात् । अतोऽप्रमाणकमिदं मतं सूत्रार्थत्वेन न कल्पनीयम् । सूत्रनिषेध्यत्वात् ॥

## तत्त्वप्रकाशिका

स्मृतिसमाख्ययाऽपि विष्णोरत्रोक्तसर्वगतत्वं साधयत्सूत्रं पठित्वा तां स्मृतिमुदाहरति ॥ **स्मृतेश्चेति** ॥ न च वाच्यं स्मृतेरपि स्ववचनत्वेन कथं विप्रतिपन्नं प्रति सूत्रकारस्तामुपादत्त इति । तस्याः परोक्तानुवादरूपत्वात् ।

एवं सूत्राणि व्याख्याय परकृतापव्याख्यां प्रत्याख्याति ॥ **न चेति** ॥ ईश्वर एव मनोमयत्वादिगुणो न जीव इति प्रतिपादिते जीवेश्वरयोरैक्यात्कथमेतदित्याशंक्य केनचिदुक्तम् । नायं पारमार्थिको भेदः किं त्वत्र मिथ्याभूत एव सूत्रकृता विवक्षित इति तद्भेदस्य मिथ्यात्वं न कल्प्यम् । भेदमिथ्यात्वे मानाभावादित्यर्थः । जीवेशभेदो मिथ्या भेदत्वात् । चन्द्रभेदवत् इत्यनुमानं मानमिति चेन्न । मिथ्येत्यस्यासत्त्वाभिप्राये अपसिद्धान्तात् । अनिर्वाच्यत्वाभिप्राये अप्रसिद्धविशेषणत्वात् । सत्त्वाभावसाधने तत एवासत्त्वापत्तेः । बाध्यत्वसाधनेऽप्यन्यथाज्ञातस्य सम्यग्ज्ञातत्वं चेद्बाध्यत्वं तत्सिद्धसाधनम् । त्रिकाले स्वरूपनिषेधविषयत्वं चेदसत्त्वापत्तिः । प्रतीतस्य इति चेदसदपरोक्षतया प्रतीयते वाच्यत्वादित्यसतोऽपि प्रतीतिसिद्धेः । भेदाभावे भेदत्वसामान्यस्याप्यसिद्धेश्च । व्यक्त्यभावेन सामान्यायोगात् । भेदत्वहेतोरविद्यानिवृत्तिरूपमोक्षात्मभेदे व्यभिचाराच्च । न चासावपि भेदो मिथ्येति युक्तं मोक्षनिवृत्त्यापातात् । मिथ्याभूतस्याप्यनिवर्त्यत्वे प्रकृतभेदस्यापि तथात्वं नानिष्टम् । न चात्ममोक्षयोर्भेदाभावः । आत्मनोऽनादिनित्यतया तदभिन्नमोक्षस्य ज्ञानसाध्याविद्यानिवृत्तिरूपत्वानुपपत्तेः । द्वा सुपर्णेत्यादिश्रुतिविरोधाच्च । अन्यतरचन्द्रस्यैवाऽऽरोपितत्वेनाऽऽरोपितानारोपितभेदस्य सत्यत्वाच्च । अतो न भेदमिथ्यात्वे मानमित्यलम् ॥ ६ ॥

## गुर्वर्थदीपिका

असदपरोक्षतया प्रतीयते वाच्यत्वादित्यत्र यद्यपि शशविषाणादिशब्दा योग्यताविरहाच्छब्दाभासा एव । असन्मिथ्यादिशब्दाश्चासत्त्वात्यन्ताभावादावेव शक्ताः । शशविषाणादिकं तु मुख्ययाऽमुख्यया वा वृत्त्या न पदार्थ इति मतम् । तथाऽपि यादृशतादृशशब्दजन्यज्ञानविषयत्वमेवेह वाच्यत्वं विवक्षितम् । अतो न हेतोरसिद्धिः । धर्माधर्मादिकमपीश्वरस्य प्रत्यक्षमिति न व्यभिचारश्चेति ज्ञेयम् । मोक्षनिवृत्त्यापातादित्यत्र निवृत्तिरभावः । मिथ्याभूतभेदस्याभावावश्यम्भावेन ब्रह्मभिन्नमोक्षस्याप्यभावापातादित्यर्थः । मिथ्याभूतस्याप्यनिवर्त्यत्व इत्यत्र मिथ्याभूतस्याऽऽत्ममोक्षभेदस्यानिवर्त्यत्वेऽभावाप्रतियोगित्वे प्रकृतभेदस्य जीवेश्वरभेदस्यापि तथात्वं मिथ्यात्वं नानिष्टम् । अभावासम्पादकत्वेन भवत्पारिभाषिकमिथ्यात्वान्मम नानिष्टमिति भावः । तर्हि ब्रह्माभिन्न एव मोक्षोऽस्त्विति शङ्कां परिहरति । **न चेति** । अरोपितानारोपितभेदस्येत्यत्र आरोपितप्रतियोगिकानारोपितधर्मिकभेदस्येत्यर्थः ॥ १-२-१ ॥

## भावबोधः

**वाच्यत्वादिति ।** धर्माधर्मादेरपि ईश्वरादिप्रत्यक्षत्वेन केवलान्वयित्वान्न व्यभिचार इति भावः । अत्र यद्यपि प्रतीतस्येति चेदित्युक्तत्वात् परोक्षप्रतीतिरेव साधनीया; तथापि अपरोक्षतया प्रतीतस्येति पुनः परेणोक्तेऽपरोक्षप्रतीतेरपि साधने गौरवं स्यादिति तादृशप्रतीतिरेव साधिता । अत एव प्रकृताभिप्रायेण प्रतीतिसिद्धिरित्येवोक्तम् । प्रतिज्ञां दूषयित्वा हेतुं दूषयति– **भेदाभात्रेनेति । अन्यतरचन्द्रस्यैवारोपितत्वेनेति ।** तथा च साध्यविकलो दृष्टान्त इति भावः । चन्द्रे आरोपितभेदस्य दृष्टान्तत्वे तस्यासत्त्वेन साधनवैकल्यापत्त्या आरोपितानारोपितचन्द्रभेद एव निदर्शनीय इत्यभिप्रायेणान्यतरचन्द्रस्यैवेत्युक्तम् । एतेन चन्द्रभेदारोपमात्रेण द्वित्वप्रतीत्युपपत्तौ चन्द्रान्तरस्यारोपाङ्गीकारे गौरवम् । तर्हि शुक्तिकायां रजताभेदारोपमात्रेणेदं रजतमिति प्रतीत्युपपत्तौ रजतारोपाङ्गीकारो व्यर्थ इति, चेत् न; तत्राधिष्ठानस्य रजतत्वेन रजतोपस्थित्यर्थं रजतारोपाङ्गीकारात् । रजतानुपस्थितौ रजतारोपासम्भवात् । न चैवं प्रकृते । अधिष्ठानस्य चन्द्रत्वादिति चोद्यमपि निरस्तम् ।

## भावदीपः

ॐ स्मृतेश्च ॐ ॥ **परोक्तेति** ॥ कृष्णार्जुनसंवादानुवादरूपत्वादिति भावः । पररीत्याऽर्थमनुवदति ॥ **ईश्वर इति** ॥ स क्रतुं कुर्वीत मनोमयः प्राणशरीरो भारूप इत्यादिच्छान्दोग्यवाक्ये मनोमयत्वादिनोपास्यो जीव इति प्राप्ते ईश्वर एवेत्युपपादिते सतीत्यर्थः । ''मिथ्यैव भेदो विमतो भेदत्वात् चन्द्रभेदवत्'' इत्यनुभाष्योक्तं शङ्कते ॥ **जीवशेति** ॥ स्वपरपक्षरीत्या हृदि विकल्प्य दूषयति ॥ **मिथ्येत्यस्येति** ॥ ''यदि सन्नपसिद्धान्तः स एवासन्नितीरित'' इत्याद्युक्तेरिति भावः ॥ **सिद्धसाधनमिति** ॥ ''विज्ञातस्यान्यथा सम्यग्विज्ञानं ह्येव तन्मतमि''त्याद्यनुभाष्योक्त्या मिथ्यात्वादिनाऽऽन्यथा विज्ञातस्य सत्यत्वादिना विज्ञानाङ्गीकारादिति भावः । ''नासीदस्ति भविष्यच्च तदिति ज्ञानमेयता । यदि बाधस्तदाऽसत्त्वं तेनैवाङ्गीकृतं पुन''रित्यनुभाष्योक्तमाह ॥ **त्रिकालेति** ॥ **प्रतीतस्येति** ॥ प्रतीतत्वे सति त्रिकाले स्वरूपनिषेधधीविषयत्वं मिथ्यात्वमित्यर्थः । इदं च नासत्त्वम् । असतोऽप्रतीतेरिति भावः । अप्रतीतेरित्यत्र प्रतीतिः किं परोक्षा उत अपरोक्षा । नाद्यः । ''प्रतीतिर्नासत इति वदन्नङ्गीकरोति ता''मित्यनुभाष्योक्तदिशा ''अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि'' इति त्वदीयमण्डनोक्त्या व्याघातेन तन्निषेधायोगात् । नान्त्यः । असतोऽपि सत्त्वादिति भावेन वदन्नङ्गीकरोति तामित्युक्तिलब्धमेवाह ॥

(भावदीपः)

**असदिति** ॥ धर्माधर्मादिरीश्वराद्यपरोक्षत्वान्न व्यभिचार इति भावः । तथा चैवंरूपमपि मिथ्यात्वम् असत्त्वमेवेति मत्त्वा हेतुमपि निराह ॥ **भेदेति** ॥ **श्रुतीति** ॥ स्वतःप्रमाणश्रुतिप्राप्तस्य मिथ्यात्वायोगादिति भावः । दृष्टान्तं च निराह ॥ **अन्यतरेति** ॥ **सत्यत्वाच्चेति** ॥ तथा च साध्यवैकल्यमिति भावः ॥

## अभिनवचन्द्रिका

(सू.६) **न च वाच्यमिति** ॥ सूत्रस्येव स्मृतेरपि परं प्रत्यविश्वसनीयत्वात् सूत्रकारः अर्थनिर्णयाय कथं तामुपादत्ते । तदुपादानमनुचितमिति न वाच्यमित्यर्थः । **तस्या इति** ॥ परस्य उक्तं उच्चारणं तस्यानुवादो अनूच्चारणं तद्विषयत्वात् । अत्र परोक्तानुवादशब्देन वेद उच्यते । स्मृतेस्तद्रूपत्वात्, तत्सदृशत्वात्, अपौरुषेयत्वादिति यावत् । इदमुक्तं भवति – न स्मृतयः सूत्रवत् स्ववचनानि । येनोक्तदोषः स्यात् । किन्तु यथा वेदो अपौरषेयः तथा स्मृतयोऽप्यपौरुषेयाः । 'सर्गे सर्गेऽन्यथैव तु । क्रियन्तेऽतस्त्वनित्यानी'ति पारिभाषिकानित्यत्वोक्तेः । 'अन्यथैव क्रियन्ते' इत्यन्यथाशब्देन अन्यथा-भावोक्तेः । वस्त्वैक्ये प्रकारभेदमात्रे सति अन्यथाभाव इति सुप्रसिद्धत्वात् । अन्यथा 'सर्गे सर्गेऽन्यानि क्रियन्त' इति अवक्ष्यत् । व्यासोपज्ञताप्रसिद्धिस्तु काठकं कालापकमित्यादिप्रसिद्धिवत् सम्प्रदाय-प्रवर्तकत्वादुपपन्ना । इयांस्तु विशेषः कठादीनां सम्प्रदायप्रवर्तकत्वमात्रं, व्यासस्य तु पुराणेषु सम्प्रदाय-प्रवर्तकत्वं क्रमव्यत्यासकारित्वं चेति । एतेन परोक्तानुवादत्वस्य प्रामाण्यनिश्चायकत्वाभावात् तदुपन्यासो व्यर्थः । अन्यथा परोक्तजीवब्रह्मैक्यानुवादकग्रन्थस्यापि तदैक्ये प्रामाण्यं स्यादिति परास्तम् । **ईश्वर एवेति** ॥ सूत्रकृता 'सर्वत्र प्रसिद्धोपदेशात्' इति सूत्रेण ईश्वर एव मनोमयत्वादिगुणः, 'अनुपपत्तेस्तु न शारीरः' इति सूत्रेण न जीवो मनोमयत्वादिगुण इति प्रतिपादिते सति केनचिन्मायावादिना सूत्रकारमते जीवेश्वरयोरैक्यात्कथमेतत्प्रमेयं घटत इत्याशङ्क्योक्तं समाधानमुक्तमित्यर्थः । किमुक्तमित्यत आह– **नायमिति** ॥ **मिथ्येत्यस्येति** ॥ ननु – अनिर्वचनीयत्वं प्रतिज्ञाय, तत्सिद्धयेऽनुमानस्योपन्यस्तत्वात् मिथ्येत्यस्यानिर्वचनीयत्वाभिप्रायकत्वं सिद्धमेवेति अप्रसिद्धविशेषणत्वमेव दूषणं वाच्यम् । न तु असत्त्वाभि-प्रायेण अपसिद्धान्त इत्यादि दूषणं वाच्यमिति चेत्, उच्यते परेणाऽनिर्वचनीयत्वं प्रतिज्ञायाऽनुमान-स्योपन्यस्तत्वात् अनिर्वचनीयत्वं साध्यत इति सम्भाव्यते । चन्द्रारोपितस्य चन्द्रप्रतियोगिकस्याऽत्यन्तासतो भेदस्य दृष्टान्तीकरणात्, असत्त्वं साध्यत इति सम्भाव्यते । सत्त्वासत्त्वानधिकरणत्वरूपानिर्वचनीय-शब्दार्थैकदेशस्यासत्त्वाभावस्य विवादानास्पदत्वात् सत्त्वाभावमात्रं साध्यत इति सम्भाव्यते । तथा परसिद्धान्ते मिथ्येति व्यवहारविषये बाध्यमिति व्यवहारात् बाध्यत्वं साध्यत इति सम्भाव्यते । न

(अभिनवचन्द्रिका)

चाऽन्यतरपक्षनिर्णयो दृश्यते । युक्तमेव परो ब्रवीतीति नियमाभावाच्च विकल्पेन दूषणमुक्तम् । अपसिद्धान्तादित्युपलक्षणम् । अर्थान्तरत्वाच्चेत्यपि द्रष्टव्यम् । **तत एवेति** ॥ सत्त्वाभावसाधकादेवासत्त्वापत्तेरित्यर्थः । सत्त्वासत्त्वयोर्भावाभावरूपत्वेन सत्त्वनिषेधस्यैवाऽसत्वरूपत्वात्, सत्त्वाभावसाधनेऽसत्त्वापत्तिरिति भावः । बाध्यत्वशब्दस्याप्यनेकार्थत्वात् विकल्पेन दूषणमाह– **बाध्यत्वेति** ॥ साधनेऽपीत्यतः परं यत इति शेषः । बाध्यत्वसाधनपक्षेऽपि यतः सिद्धसाधनम्, असत्त्वापत्तिश्च प्राप्नोति अतोऽनुमानं न मानमिति पूर्वेण सम्बन्धः । कथमेतद्दूषणद्वयमित्यत उक्तम्– **अन्यथेत्यादि** ॥ चेच्छब्दो यद्यर्थे । यदि साध्यमानं बाध्यत्वम्, 'अन्यथाविज्ञातस्य सम्यग्विज्ञातत्वं तत्, तदा सिद्धसाधनं प्राप्नोति । क्षणिकत्वादिना विज्ञातस्य जीवेशभेदस्य अस्माभिरपि सम्यक् ज्ञातत्वाङ्गीकारात् । यदि च साध्यमानं बाध्यत्वं त्रिकाले स्वरूपनिषेधविषयत्वं तदा भेदस्याऽसत्त्वापत्तिरिति विवेकः । **प्रतीतस्येति** ॥ प्रतीतस्योक्तरूपं बाध्यत्वं साध्यत इति नासत्त्वापत्तिरित्यर्थः । इदमुक्तं भवति – यत्र त्रैकालिकस्वरूपनिषेधविषयत्वं तत्राऽसत्त्वमिति सामान्यव्याप्तिः, यत् अपरोक्षतया प्रतीयते तन्नासदिति विशेषव्याप्तिः । तथा च विशेषव्याप्तिमता अपरोक्षत्वलिङ्गेन बाधान्नोक्तरूपबाध्यत्वेन न सत्त्वापत्तिरिति । इति चेदित्यनन्तरं नेति शेषः । **असत इति** ॥ असतोऽपि अपरोक्षत्वस्य प्रमाणसिद्धत्वात् यदपरोक्षं तन्नासदिति व्याप्तिरेव नास्तीति भावः । **भेदाभावेनेति** ॥ दृष्टान्तीकृतस्य चन्द्रारोपितस्य चन्द्रप्रतियोगिकस्य भेदस्याऽभावेन पक्षदृष्टान्तानुगतस्य हेतूकृतस्य भेदत्वसामान्यस्याप्यभावेनाऽसिद्धेश्चेति नानुमानं मानमिति पूर्वेण सम्बन्धः । **व्यक्त्यभावेनेति** ॥ बाष्पारोपितधूमाभावेन बाष्पारोपितधूमे सद्धूमे चानुगतधूमत्वायोगवत् अनुगतभेदत्वस्याप्ययोगादित्यर्थः । **भेदत्वहेतोरिति** ॥ मोक्षात्मभेदे मोक्षात्मके आत्मप्रतियोगिकभेदे त्वदभिमताऽनिर्वचनीयत्वरूपमिथ्यात्वस्यापि अङ्गीकर्तुमशक्यत्वेन व्यभिचारादित्यर्थः । कुतो न युक्तमित्यत आह– **मोक्षेति** ॥ मोक्षात्मकभेदनिवृत्तेरेव मोक्षनिवृत्तित्वादिति भावः । मोक्षे आत्मप्रतियोगिकस्य भेदस्यैवासत्वे तत्र व्यभिचारचोदनमयुक्तमिति भावः । **द्वा सुपर्णेत्यादीति** ॥ वस्तुस्वरूपमानस्य तत्सत्यत्वे मानत्वनियमात् । भेदमानस्य 'द्वासुपर्णे'ति वाक्यस्य तत्सत्यत्वेऽपि मानत्वात् मिथ्यात्वानुमानस्य तद्विरोध इत्यर्थः । आदिशब्देन 'सत्यं भिदे'ति श्रुतिग्रहणम् । **अन्यतरेति** ॥ अन्यतरचन्द्रस्यैवारोपितत्वेन तद्भेदं तस्य सत्त्वं चाऽङ्गीकुर्वता मया मिथ्यात्वानङ्गीकारेण दृष्टान्ताभावाच्चाऽनुमानं न युक्तमिति भावः ।

## वाक्यार्थमुक्तावली

ॐ स्मृतेश्च ॐ ॥ स्मृतिसमाख्यानाच्च विष्णुरेव सर्वगत इति सूत्रार्थः । **ईश्वर एवेति** । सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिंल्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वन्त मनोमयः प्राणशरीरो भारूप इति छान्दोग्ये सर्वात्मको मनोमयत्वादिगुणतयोपास्यः किं जीव उतेश्वर इति सन्देहे मनोमयत्वादिगुणकः सर्वात्मकतयोच्यमानः प्रत्यगात्मैव न ब्रह्म सकलहेयप्रत्यनीककल्याणैकतानस्य ब्रह्मणः सर्वहेयाकारसर्वतादात्म्यायोगात् मनोमयत्वाद्ययोगाच्चेति पूर्वपक्षे प्राप्ते सर्वत्र प्रसिद्धोपदेशात् सर्वत्र सर्वात्मकत्वेनोच्यमानो मनोमयत्वादिगुण ईश्वर एव न जीवः । यतो वा इमाः सन्मूलाः सोम्येमाः सर्वाः प्रजा इत्युपदेशात् सर्वात्मकत्वं च यः पृथिव्यां तिष्ठन् इत्यादेः शरीरात्मभावेनैवेति सिद्धान्तिना प्रतिपादिते सतीत्यर्थः । पररीत्या समग्रसूत्रार्थस्तु ग्रन्थगौरवभयान्न लिख्यते ॥ **प्रतीतत्वे सतीति** ॥ प्रतीतत्वे सति त्रिकाले स्वरूपधीविषयत्वं मिथ्यात्वमित्यर्थः । इदं च नासत्त्वमसतोऽप्रतीतेरिति भावः । अप्रतीतेरित्यत्र प्रतीतिः किं परोक्षा अथापरोक्षा । नाद्यः । 'प्रतीतिर्नासत इति वदन् अङ्गीकरोति ताम्' इत्यनुभाष्योक्तदिशा अत्यन्तासत्यपिज्ञानमर्थे शब्दः करोति हीति तदीयमण्डनोक्त्या व्याघातेन तन्निषेधायोगात् । नान्त्यः असत्यपि सत्त्वादिति भावेनाह ॥ **असदिति** ॥ धर्माधर्मादिर्योग्यापरोक्षसिद्धत्वान्न व्यभिचार इति भावः । हेतुं दूषयति ॥ **भेदेति** ॥ पक्षीकृतभेदाभावेन भेदत्वादित्युक्तभेदत्वसामान्यस्यापि असिद्धिरेवेत्यर्थः । यद्वा किमनिर्वचनीयभेदत्वं हेतुः उत पारमार्थिकम् । नोभयमपि अन्यतरासिद्धेः । उभयानुगतं भेदत्वसामान्यं हेतुरिति चेत् तत्राह ॥ **भेदाभावेनेति** ॥ उक्तरीत्याऽनिर्वचनीयपारमार्थिकभेदयोरुभयरीत्या अभावेन तदुभयानुगतं भेदत्वसामान्यमप्यसिद्धमित्यर्थः ॥ **मोक्षनिवृत्तीति** ॥ भेदिनोस्सतोः भेदनिवृत्तेर्वक्तुमशक्यत्वेनात्मनिवृत्तेश्च बाधितत्वेनैक्यस्य निराकरिष्यमाणत्वेन मोक्षनिवृत्यापातादिति भावः । चन्द्रभेदवदित्यत्र चन्द्रभेदो नाम चन्द्रे आरोपितभेदो वा आरोपितानारोपितचन्द्रयोर्भेदो वा ? नाद्यः । तस्यासत्त्वेन तत्र भेदत्वाभावेन साधनवैकल्यात् । तदुक्तमुपाधिखण्डनटीकायाम् । अङ्गुल्यवष्टम्भादिना चन्द्रभेदाध्यासदर्शनादित्यादिना । द्वितीये साध्यवैकल्यमाह ॥ **अन्यतरचन्द्रस्येति** ॥ ननु चन्द्रे भेदारोपमात्रेण द्वित्वप्रतीत्युत्पत्तौ चन्द्रान्तरारोपकल्पनं व्यर्थम् । न चैवं सति रजततादात्म्यारोपमात्रेण पूर्तौ रजतारोपवैयर्थ्यमिति वाच्यम् । वैषम्यात् । तत्राधिष्ठानस्यारजतत्वेन रजतोपस्थित्यर्थं रजतारोपाङ्गीकारात् । रजतानुपस्थितौ इदं रजतमिति प्रत्ययायोगात् । न चैवं प्रकृतेऽधिष्ठानस्य चन्द्रत्वादिति चेन्न । इमौ चन्द्रौ भिन्नाविति भेदारोपस्य चन्द्रान्तरारोपेण विनाऽयोगादिति । अतो न ग्रन्थान्तरविरोधः ।

## तत्त्वसुबोधिनी

**तस्या इति** । तथा च विष्णोः सर्वगतत्वसाधनाय तदुदाहरणं युक्तमिति भावः । **तत एवेति** । सत्वाभावादेवेत्यर्थः । ननु त्रिकालप्रतीतस्य स्वरूपेण निषेधविषयत्वं विवक्षितम् । तथा च असतः प्रतीत्यभावेन तत्र एतादृशमिथ्यात्वावगमनान्न सत्वापत्तिरित्याशयेन शङ्कते । **प्रतीतस्येति चेदिति** । **वाच्यत्वादिति** । धर्मादेरपि ईश्वराद्यपरोक्षत्वान्न व्यभिचार इति भावः । अत्र यद्यपि प्रतीतस्येति चेदित्युक्तत्वादसतः प्रतीतिरेव साधनीया । तथापि अपरोक्षतया प्रतीतस्येति पुनः परेणोक्ते अपरोक्षप्रतीतेरपि साधने गौरवं स्यादिति प्रतीतिरेव साधिता । अत एव प्रकृताभिप्रायेण प्रतीतिसिद्धेरित्येवोक्तम् । प्रतिज्ञां दूषयित्वा हेतुं दूषयति । **भेदाभावेनेति** । ननु भेदाभावेऽपि भेदत्वसामान्यासिद्धिः कुत इत्यत आह । **व्यक्त्यभावेनेति** । समानानां व्यक्तीनां भावः धर्मः इति हि सामान्यशब्दार्थः । तथा च व्यक्त्यभावे सामान्यासिद्धिरिति भावः । **मोक्षनिवृत्यापातादिति** । न च एतद्युक्तम् । भेदमिथ्यात्वे उक्ते मोक्षनिवृत्यापादनस्यासङ्गतत्वादिति चेत् न । भेदस्य धर्मिस्वरूपत्वेन भेदमिथ्यात्वे मोक्षस्यापि मिथ्यात्वेन तन्निवृत्यापादनस्य युक्तत्वादिति भावः । यद्वा यन्निरूपितस्य यस्य यद्भवति तन्निरूपकस्यापि तद्भवतीति परेणाङ्गीकृतत्वात् मोक्षनिरूपितस्य भेदस्य मिथ्यात्वे मोक्षस्यापि मिथ्यात्वात् तन्निवृत्तिरापाद्या । न चैवं जीवब्रह्मनिरूपितस्य भेदस्य मिथ्यात्वे जीवब्रह्मणोरऽपि मिथ्यात्वं स्यादिति वाच्यम् । चैतन्यमात्रस्य भेदाभावेन जीवत्वब्रह्मत्वविशिष्टयोः एव भेदो मिथ्या । तथा च तत्रापि निरूपकयोः मिथ्यात्वात् नापादनानुपपत्तिरिति भावः । यद्वा मोक्षे भेदस्य निवृत्त्यापातात् इत्यर्थः । तथा च मुक्तत्वव्यवहारानुपपत्तिरिति भावः । **अन्यतरचन्द्रस्यैवारोपितत्वेनेति** । तथा च साध्यविकलोऽयं दृष्टान्त इति भावः । चन्द्रे आरोपितभेदस्य दृष्टान्तत्वे तस्यासत्त्वेन साधनवैकल्यापत्या आरोपितानारोपितचन्द्रभेद एव निदर्शनीय इत्यभिप्रायेण अन्यतरचन्द्रस्यैवेत्युक्तम् ।

## वाक्यार्थविवरणम्

**मोक्षनिवृत्त्यापातादिति** । मोक्षात्मनोः भेदस्य मिथ्यात्वे मिथ्याभूतस्य निवृत्तिरिति नियमादात्मप्रतियोगिकमोक्षधर्मिकभेदस्य मोक्षस्वरूपत्वेन तन्निवृतौ मोक्षस्यैव निवृत्तिः स्यादिति भावः । स्वमताभिप्रायेणेदं दूषणं द्रष्टव्यम् । **आत्मन इति** । परस्परविरुद्धयोरिति न्यायेन भेदाभावे आत्ममोक्षयोरभेदस्यैव प्राप्तेरित्यर्थः । जीवेशभेदमिथ्यात्वे श्रुतिविरोधमाह ॥ **द्वा सुपर्णेति** । **निवृत्ति-**

(वाक्यार्थविवरणम्)

**रूपत्वेति** । अविद्यानिवृत्तिरूपमोक्षस्य ज्ञानसाध्यत्वानुपपत्तेरिति यावत् । **आरोपितानारोपितेति** । साध्यहीनो दृष्टान्त इत्याशयः । अत्रानारोपिते आरोपितप्रतियोगिकभेद एव विवक्षितः, न त्वारोपिते अनारोपितप्रतियोगिकः । तेनास्मन्मते भेदस्य धर्मिस्वरूपत्वात् कथमेतदिति शङ्कानवकाशः । न च आरोपितचन्द्रभेद एव दृष्टान्त इति वाच्यम् । तत्र भेदत्वरूपहेतोरभावेन साधनवैकल्यापातात् । न हि व्यक्त्यभावे सामान्यं सम्भवतीति ध्येयम् ॥

## वाक्यार्थमञ्जरी

ॐ स्मृतेश्च ॐ ॥ विष्णोः सर्वगतत्वप्रतिपादकस्मृतिसत्वाच्च स एव सर्वगत इत्यर्थः । स्मृतौ गुडाकेशः अर्जुनः ॥ **भूताशयेति** ॥ भूताख्याश्रयेत्यर्थः ॥ **परोक्तेति** ॥ तस्याः कृष्णार्जुनसंवादरूपत्वादिति भावः ॥ **इति प्रतिपादित इति** ॥ स क्रतुं कुर्वीत मनोमयः प्राणशरीरो भारूपः सत्यसंकल्प इति वाक्ये मनोमयत्वादिनोपास्यो जीवो वा ब्रह्म वेति सन्देहे जीवस्यैव मनःप्राणसम्बन्धात्तस्यैव वाङ्मनोमयत्वादिनोपास्यत्वमिति प्राप्ते ब्रह्मैवात्र मनोमयत्वादिनोपास्यं न जीवः सत्यसंकल्पादितल्लिंगादिति प्रतिपादित इत्यर्थः। अप्रामाणिकत्वमुपपादयितुं भेदेऽनुमानमाशङ्क्य निराकरोति । **जीवेशभेद इत्यादिनाऽलमित्यन्तेन** । अत्र मिथ्यात्वम् असत्त्वं वा अनिर्वचनीत्वं वा सत्त्वाभावो वा बाध्यत्वं वेति विकल्पान् क्रमेण दूषयति ॥ मिथ्येत्यस्येत्यादिना ॥ **अपसिद्धान्तादिति** ॥ सदसद्विलक्षणत्वाङ्गीकारादिति भावः ॥ **अप्रसिद्धविशेषणत्वेति** ॥ तस्य मां प्रति कुत्राप्यप्रसिद्धत्वादिति भावः । तत एव सत्वाभावादेव । चतुर्थमपि विकल्पपूर्वकं दूषयति ॥ **बाध्यत्वसाधन इत्यादिना** ॥ अन्यथाज्ञातस्य अन्यधर्मावच्छिन्नतया ज्ञातस्य स्वधर्मावच्छिन्नतया ज्ञातत्वमित्यर्थः ॥ **सिद्धसाधनमिति** ॥ मिथ्यात्वेन ज्ञातस्य भेदस्य सत्यत्वेन ज्ञातत्वाङ्गीकारादिति भावः ॥ **त्रिकालेति** ॥ नास्ति नासीन्न भविष्यतीति बोध्यमानाभावप्रतियोगित्वमित्यर्थः । प्रतीतस्येत्यनन्तरं त्रिकालेत्याद्यनुवर्तते । तथा चासतः प्रतीत्यभावान्नोक्तदोष इति भावः ॥ **वाच्यत्वादिति** ॥ धर्माधर्मादिरपीश्वरादिप्रत्यक्षगोचरत्वेन न तत्र व्यभिचार इति भावः । अत्र यद्यपि प्रतीतस्येति चेदित्युक्तत्वादसतः प्रतीतिरेव साधनीया तथाप्यपरोक्षतया प्रतीतस्येति पुनः परेणोक्तेऽपरोक्षप्रतीतेरपि साधने गौरवं स्यादित्यपरोक्षप्रतीतिरेव साधिता । अत एव प्रकृताभिप्रायेण प्रतीतिसिद्धेरित्येवोक्तम् । उक्तबाध्यत्वसाधनेऽपसिद्धान्तं सूचयित्वा दोषान्तरमाह ॥ **भेदाभावेनेति** ॥ भेदप्रयोजकविरुद्धधर्मस्फुरणायाविद्यानिवृत्तिरूपेति मोक्षस्वरूपनिरूपणम् ॥ अविद्यास्तमयो मोक्ष इत्युक्तेरिति भावः । मिथ्याभूतो भेदः किं निवर्तते उत न । नाद्य इत्याह ॥ **मोक्ष-**

(वाक्यार्थमञ्जरी)

**निवृत्तीति** ॥ भेदनिवृत्तिर्हि भेदिनिवृत्तिनियता ॥ भेदिनोऽसत्वे भेदस्याप्यनुपपत्तेः । तत्र नात्मा निवर्तते सत्यत्वात् । अतो मोक्षस्यैव निवृत्तिर्वक्तव्येत्याशयः । द्वितीये त्वाह ॥ **मिथ्याभूतेति** ॥ तथात्वम् अनिवृत्त्यविरोधिमिथ्यात्वम् ॥ **न चेति** ॥ तथा च कुत्र व्यभिचार इति भावः । बाधकमप्याह ॥ **द्वा सुपर्णेति** ॥ न चात्र भेदमात्रं श्रूयते न तत्सत्यमिति वाच्यम् । स्वतः प्रमाणश्रुत्या सत्यस्यैव प्रतिपादनात् । अन्यथा तत्प्रतिपादितब्रह्मणोऽपि मिथ्यात्वं स्यादिति भावः । यद्यपि प्रमाणविरुद्धार्थप्रतिज्ञा प्रतिज्ञाविरोध इति बाधस्य प्रतिज्ञादोषत्वावगमात् प्रतिज्ञादूषणसमय एवेदं वाच्यम् । तथापि हेतुदोषत्वमङ्गीकुर्वतां नैयायिकानां रीतिमाश्रित्योक्तिरविरुद्धा । साध्यवैकल्येन दृष्टान्तमपि दूषयति ॥ **अन्यतरचन्द्रस्यैवेति** ॥ नन्वनारोपिते चन्द्रे भेदमात्रारोपेणेमौ चन्द्राविति द्वित्वमात्रप्रतीत्युपपत्तौ चन्द्रान्तरारोपो व्यर्थः । न चैवं शुक्तिकायां रजतभेदमात्रारोपेणेदं रजतमिति प्रतीत्युपपत्तौ रजतारोपांगीकारोऽपि व्यर्थः स्यादिति वाच्यम् । तत्राधिष्ठानस्यारजतत्वेन रजतोपस्थित्यर्थं रजतारोपाङ्गीकारात् । रजतानुपस्थितौ रजताभेदारोपायोगात् । न चैवं प्रकृते अधिष्ठानस्य चन्द्रत्वादिति चेन्न । अनारोपितचन्द्रे आरोपितभेदस्यैव दृष्टान्तत्वे तस्यारोपितत्वेनात्यन्तासत्वात्तत्र हेतुवृत्त्यसम्भवेन साधनवैकल्यापातात् । तदेतदाह ॥ **अन्यतरचन्द्रस्यैवारोपितत्वेनेति** ॥ **सत्यत्वादिति** । अत्रारोपितप्रतियोगिकानारोपितधर्मिक एक एव भेदो विवक्षितो न त्वनारोपितप्रतियोगिकारोपितधार्मिकः । भेदस्य धर्मिस्वरूपत्वेनारोगितधर्मिस्वरूपभेदस्य सत्यत्वायोगात् । यद्वाऽसद्घटो नेत्यबाधितप्रतीतिबलादसद्धर्मिकोऽपि भेदोऽस्त्येव । न चोक्तदोषः । असत्वात्मकत्वसम्भवात् । न च वैषम्यम् । यथा न्यायमते अत्यन्ताभावादेः प्रतियोगिविरोधित्वेऽप्यन्योन्याभावस्य प्रतियोगितावच्छेदकविरोधित्वं तथा सद्धर्मिकान्योन्याभावस्य धर्मिस्वरूपत्वेऽप्यसद्धर्मिकान्योन्याभावस्य धर्मितावच्छेदकस्वरूपत्वे विरोधाभावादिति । किं च प्रातिभासिकत्वमुपाधिः । स च न पक्षे साधयितुं शक्यः व्यावहारिकत्वाङ्गीकारविरोधात् । अभेदो मिथ्याऽभेदत्वाद्देहात्माभेदवदित्याभाससमानयोगक्षेमत्वम् । न च दृष्टान्तस्य साध्यवैकल्यं तथात्वेऽन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्येति भाष्यस्योन्मत्तप्रलापितत्वप्रसंगादित्येतद्धृदि निधायाह ॥ **अलमिति** ॥

## विवृतिः

**तस्या इति** ॥ तथा च विष्णोः सर्वगतत्वसाधनाय तदुदाहरणं युक्तमिति भावः ॥ **तत एवेति** ॥ सत्वाभावादेवेत्यर्थः ॥ ननु त्रिकाले प्रतीतस्य स्वरूपेण निषेधविषयत्वं विवक्षितम् । तथा चासतः प्रतीत्यभावेन तत्रैतादृशमिथ्यात्वागमनान्न सत्वापत्तिरित्याशयेन शङ्कते ॥ **प्रतीतस्येति चेदिति** ॥

(विवृतिः)

**वाच्यत्वादिति** ।। धर्मादेरपीश्वराद्यपेक्षत्वान्न व्यभिचार इति भावः ।। अत्र यद्यपि प्रतीतस्य चेदित्युक्तत्वादसतः प्रतीतिरेव साधनीया ।। तथाप्यपरोक्षतया प्रतीतस्येति पुनः परेणोक्तेऽपरोक्षप्रतीतेरपि साधने गौरवं स्यादिति तादृशप्रतीतिरेव साधिता । अत एव प्रकृताभिप्रायेण प्रतीतिसिद्धेरित्येवोक्तम् ।। प्रतिज्ञां दूषयित्वा हेतुं दूषयति ।। **भेदाभावेनेति** ।। ननु भेदाभावेऽपि भेदत्वसामान्यसिद्धिः कुत इत्यत आह ।। **व्यक्त्यभावेनेति** ।। समानानां व्यक्तीनां भावः धर्म इति हि सामान्यशब्दार्थः ।। तथा च व्यक्त्यभावे सामान्यासिद्धिरिति भावः ।। **मोक्षनिवृत्यापातादिति** । न चैतदयुक्तम् ।। भेदमिथ्यात्वे उक्ते मोक्षनिवृत्यापादनस्यासङ्गतत्वादिति चेन्न ।। भेदस्य धर्मिस्वरूपत्वेन भेदमिथ्यात्वे मोक्षस्यापि मिथ्यात्वेन तन्निवृत्यापादनं युक्तमिति भावः ।। यद्वा यन्निरूपितस्य यद्भवति तन्निरूपकस्यापि तद्भवतीति परेणाङ्गीकृतत्वात् मोक्षादिनिरूपितस्य भेदस्य मिथ्यात्वे मोक्षस्यापि मिथ्यात्वात् तन्निवृत्तिरापादद्या । न चैवं जीवब्रह्मनिरूपितस्य भेदस्य मिथ्यात्वे जीवब्रह्मणोरपि मिथ्यात्वं स्यादिति वाच्यम् । चैतन्यमात्रस्य भेदाभावेन जीवत्वब्रह्मत्वविशिष्टयोरेव भेदो मिथ्या । तथा च तत्रापि निरूपकयोर्मिथ्यात्वान्नापादनानुपपत्तिरिति भावः ।। **अन्यतरचन्द्रस्यैवारोपितत्वेनेति** ।। तथा च साध्यविकलो दृष्टान्त इति भावः ।। चन्द्रे आरोपितभेदस्य दृष्टान्तत्वे, तस्यासत्वेन साधनवैकल्यापत्या आरोपितानारोपितचन्द्रभेद एव निदर्शनीय इत्यभिप्रायेणान्यतरचन्द्रस्यैवेत्युक्तम् ।।

## सूत्रभाष्यम्

**।। ॐ अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॐ ।। ७ ।।**

सर्वेपु भूतेष्वित्यल्पौकस्त्वाच्चक्षुर्मयत्वादिना जीवव्यपदेशाच्च नेति चेन्न । अर्भकौकस्त्वेन चक्षुर्मयत्वादिरूपेण च तस्यैव विष्णोर्निचाय्यत्वात् । सर्वगतत्वेऽप्यल्पौकस्त्वं च युज्यते व्योमवत् ।

'सर्वेन्द्रियमयो विष्णुः सर्वप्राणिपु च स्थितः ।<br>सर्वनामाभिधेयश्च सर्ववेदोदितश्च स' इति स्कान्दे ।। ७ ।।

## सत्तर्कदीपावली

यच्चक्षुर्मयत्वादिजीवलिङ्गवचनं तस्य विष्णौ गतिं दर्शयत्सूत्रमुपन्यस्य व्याचष्टे ।। **अर्भकेत्यादिना** ।।

## तत्त्वप्रदीपिका

अर्भकौकस्त्वादित्यादि । सर्वेषु भूतेष्वित्यल्पौकस्त्वमुच्यते । सर्वजीवहृदयसुषिराणामल्पत्वात् । चक्षुर्मयत्वादिनाऽऽदित्यशब्देन च जीवव्यपदेशश्चास्ति । तदत्रेश्वराभ्युपगमे का गतिरिति चेदल्पस्थानस्थत्वेन चक्षुर्मयत्वादिरूपेण चाऽदित्यादिशब्दवाच्यत्वेन च तस्यैव विष्णोर्निचाय्यत्वमित्यभिप्रायः ।

''ब्रह्मणस्सारभूतस्तु प्रद्युम्नो भगवान्हरिः ।
स एवादित्यसंस्थश्च स ह्यादिर्जगतो विभुः ॥

ततश्च सर्वभूतेषु जीवानां विनियामकः ।
स एवाऽदित्यगो विष्णुर्यः प्रद्युम्नाभिधो हरिः ॥

स एव सर्वदेहेषु चानिरुद्धतनुः स्थितः ।
सङ्कर्षणो वासुदेव इत्येकः स चतुर्विधः ॥

प्रतिपूरुषमेतस्मात्स्थितो विष्णुर्नियामकः ।
आदित्यादिषु च स्थित्वा द्योतकोऽसौ प्रति प्रति ।
स चेतनतमत्वाद्धि चित्रमित्यभिधीयते ॥

आपूरयन्सर्वलोकान्प्रकाशेन जनार्दनः ।
आदानात्सर्वजीवानामतृत्वात्प्रलयेऽपि च ।
आत्मेत्युक्तस्स भगवाञ्जगतः स्थावरस्य च ॥''

इत्यैतरेयसंहितायाम् ।

'पूर्णदर्शनशक्तित्वाच्चक्षुर्मय इतीरितः ।
तादृक्श्रवणशक्तित्वात्तथा श्रोत्रमयः स्मृतः ।
छन्दोमयस्सत्यकामो मन्तृवक्तृबलात्मक' इति च ॥

## तत्त्वप्रकाशिका

उक्तार्थमाक्षिप्य समादधत्सूत्रं पठित्वाऽऽक्षेपांशं तावद्व्याचष्टे ॥ **अर्भकेति** ॥ यदुक्तं सर्वत्रोच्यमानो नारायण एवेति । तदयुक्तम् । यथा खलु जीवप्रापकसद्भावेऽप्यनुपपत्त्या तस्य सर्वगतत्वाभावस्तथेश्वर-प्रापकसद्भावेऽपि बाधकसद्भावात् । सर्वेषु भूतेष्वित्यस्याल्पस्थानस्थितिकथनात् । चक्षुर्मयत्वादिरूपेण

(तत्त्वप्रकाशिका)

**जीवलिङ्गकथनाच्च आदित्यश्रुतेश्च । न ह्यपरिच्छिन्नस्य सर्वजीवधर्मरहितस्य भगवतोऽर्भकौकस्त्वादिकथनं युज्यते । अतः पक्षद्वयेऽपि समसाधकबाधके न विष्णुरेवायं सर्वगत इति पक्षपातो युक्त इति भावः । परिहारांशं व्याचष्टे ॥ नेति ॥ न पक्षद्वयस्यापि साम्येन विष्णोस्सर्वगतत्वाभाव इति युक्तम् । बाधका-भावात् । तथा हि । किमपरिच्छिन्नादिरूपस्यार्भकौकस्त्वादिकथनमप्रयोजनमयुक्तं वा । आद्यं दूषयति ॥ अर्भकेति ॥ अपरिच्छिन्नस्य जीवविलक्षणस्यापि हरेरर्भकौकस्त्वेन चक्षुर्मयत्वादिरूपेण चोपास्यत्वान्न तदुक्तिर्व्यर्थेति भावः । द्वितीयेऽपि सर्वगतस्याल्पौकस्त्वं तावन्नायुक्तमित्याह ॥ सर्वगतत्वेऽपीति ॥ नापि जीवविलक्षणस्य चक्षुर्मयत्वाद्ययुक्तम् । 'सर्वेन्द्रियमयः' इति स्मृत्या सर्वप्राणिगतेन्द्रियस्वामित्वेन चक्षुर्मयत्वादेरुक्तत्वादित्याशयेनाऽऽह ॥ सर्वेति ॥ सर्वनामाभिधेयश्च इत्यनेनैवादित्यशब्दस्येश्वरवाचित्वं चोक्तं भवति । न चाऽदित्येऽनुक्तिविरोधः । सर्वप्राणिषु च स्थितः सर्वनामाभिधेय इति स्मृत्याऽऽदित्यादिगतस्यैवाऽऽदित्यादिनामवत्त्वोक्तेः ॥ ७ ॥**

## भावबोधः

चक्षुर्मयत्वादिनेति भाष्यगतादिपदार्थमाह । **आदित्यश्रुतेश्चेति** । **इन्द्रियस्वामित्वेनेति** । प्राणा इन्द्रियाण्येषां सन्तीति व्युत्पत्तिबलात् प्राणिषु च नियामकत्वेन स्थित इत्यनेन चायमर्थो लब्ध इति द्रष्टव्यम् । **आदित्यादिगतस्यैवादित्यादिनामवत्त्वोक्तेरिति** । तथा च यश्चासावादित्य इत्यनेनैवादित्येऽप्युक्तिर्लब्धेति भावः ।

## भावदीपः

ॐ अर्भकौक. ॐ ॥ नेति चेदित्यत्र नेति प्रतिज्ञार्थः इति यदुक्तं न तद्युक्तमिति हेत्वंशं तात्पर्योक्त्या व्यनक्ति ॥ **यथेति** ॥ अत्रैवैतच्छङ्कोत्पत्तौ बीजं वदन् बाधकसद्भावरूपहेतूपपादकत्वेन सूत्रभाष्ये योजयति ॥ **सर्वेष्विति** ॥ जीवेत्युपलक्षणं भाष्य इति मत्वा आदिपदेन लिङ्गान्तरवत् श्रुतिमप्याह ॥ **आदित्येति** ॥ उक्तहेतोरप्रयोजकत्वं निराह ॥ **न हीति** ॥ अदृश्यत्वादिनये नित्यं विभुं सर्वगतमित्यादिनोक्तापरिच्छिन्न(त्व)स्यानन्दनयेऽदृश्येऽनात्म्य इत्यत्र जीवगुणरहित इत्युक्तदिशा जीवधर्मरहितस्येत्यर्थः । यद्वा वक्ष्यमाणस्मृत्याऽनित्याल्पज्ञानादिरहितस्येत्यर्थः । बाधके सतीति शेषः ॥ **न विष्णुरेवेति** ॥ तथा च यथा जीवादिर्न सर्वगत इत्युच्यते तथा विष्णुरपि बाधकवशादत्रोक्तसर्वगतो न स्यादिति तात्पर्यार्थः । वाक्यस्य निर्विषयत्वं तु गत्यभावात्स्यादेवेति भावः । न विष्णुः सर्वगत इति पूर्वपक्षसाध्यस्य सिद्धान्तनकारेणान्वयमुपेत्यात्र पूर्वपक्ष इवात्रापि हेत्वन्तरमध्याहृत्य तदुपपादकत्वेन सूत्रशेषभाष्यं व्याचष्टे ॥ **न पक्षद्वयस्येत्यादिना** ॥ **नायुक्तमित्याहेति** ॥ एतच्च

(भावदीपः)

'महतोऽल्पत्वमपि हि व्योमवत्प्राह वेदराट् ।
यद्यल्पदेशसंस्थानं न सर्वत्रापि नो भवेत् ।
स्थितस्य ह्यल्पदेशेषु सर्वगत्वं भवेद्ध्रुवम् ।
एकत्राप्यनवस्थस्य कुत एवाखिलस्थता''

इति वैशेषिकनयानुभाष्ये सुधायां च विवृतमिति भावः । व्योमवैषम्यशङ्का तु दहरनयेऽल्पश्रुतेरित्यत्र निरसिष्यते । स्मृतौ सर्वप्राणिषु च स्थित इत्यस्य तात्पर्योक्तिः सर्वप्राणिगतेन्द्रियस्वामित्वेनेति । ''तत्र तत्र स्थितो विष्णुस्तत्तच्छक्तिप्रबोधक'' इत्यनुभाष्योक्त्या प्राणिषु स्थितेः प्राणादिप्रेरणार्थत्वात् । प्राणिषु स्थित इत्यनेन स्मृताविन्द्रियमयत्वे तत्स्वामित्वं हेतुरुक्त इति भावः । तथा च सर्वप्राणिषु प्राणादिप्रेरकत्वेन स्थितत्वात् सर्वेन्द्रियमयो विष्णुरिति योजना दर्शिता । मयटो विकारादिरिव स्मार्तत्वात् स्वामित्वमप्यर्थ इति दर्शितम् । वक्ष्यते चैतज्ज्योतिराद्यधिष्ठानं तु तदामननादित्यत्र विष्णोरिन्द्रियस्वामित्वं द्वितीयान्त्यपादे ।। उपलक्षणमेतत् ।

'पूर्णदर्शनशक्तित्वात् चक्षुर्मय इतीरितः ।
तादृक्श्रवणशक्तित्वात्तथा श्रोत्रमयः स्मृत'

इत्यैतरेयभाष्योक्तं च ध्येयम् । सर्वप्राणिषु च स्थित इत्यस्य काकाक्षिन्यायेनोत्तरत्राप्यन्वयं मत्त्वाऽर्थमाह ।। **सर्वप्राणिष्विति** ।। उक्तं चैतरेयभाष्ये ।। ''ब्रह्मणः सारभूतस्तु प्रद्युम्नो भगवान्हरिः । स एवादित्यसंस्थश्च स ह्यादिर्जगतो विभु''रित्यादि । एतेन संवत्सरसारत्वं च समाहितं बोध्यम् । संवत्सरपदस्य विरिंचार्थत्वात्तत्र संवत्सरं नाम ब्रह्माणमित्यादेः ।। ७ ।।

## अभिनवचन्द्रिका

(सू.७) **बाधकसद्भावादिति** ।। यतस्तस्यापि सर्वगतत्वाभाव इति शेषः । यतः परमेश्वरसाधकसद्भावेऽपि बाधकवशात् जीववत् सर्वगतत्वाभावः, अतो न तद्युक्तमित्यर्थः । एतेन यथा जीवस्य सर्वगतत्वाभाव इत्युक्तत्वात् तथा सर्वगतत्वाभाव इति वक्तव्यम् । तदभावात् न्यूनतेति परास्तम् । बाधकसद्भावो नासिद्ध इत्याह– **सर्वेष्विति** ।। श्रुतेश्चेत्यनन्तरं बाधकसद्भावो नाऽसिद्ध इति शेषः । भाष्ये– **सर्वगतत्वेऽपीति** ।। ननु सर्वगतस्याल्पौकस्त्वं किं सामस्त्येन युज्यते उत एकदेशेन । द्वितीये अल्पौकस्त्वं विना सर्वगतत्वायोगेनाल्पौकस्त्वस्य अवश्यं वाच्यत्वेनायोगशङ्काभावात् व्योमवदिति

(अभिनवचन्द्रिका)

दृष्टान्तकथनं व्यर्थम् । आद्ये तु व्योमदृष्टान्त एवाऽयुक्तः । तस्य सामस्त्येनाल्पौकस्त्वाभावादिति चेत्, न । अव्याकृताऽऽकाशस्य सामस्त्येनाल्पौकस्त्वाभावेऽपि तदंशस्य सामस्त्येनाल्पौकस्त्वसद्भावात्, तस्य चाऽऽकाशात्यन्ताभिन्नत्वेन तस्यापि अल्पौकस्त्वं प्राप्तमेवेति दृष्टान्तत्वसम्भवात् । तदिदमुक्तं नाऽयुक्तमित्याहेति ॥ **इन्द्रियस्वामित्वेनेति** ॥ जयस्वामित्वेन राज्ञो जयित्वदर्शनादिन्द्रियस्वामित्वेन चक्षुर्मयत्वादिकं नायुक्तमिति भावः । **न चाऽऽदित्य इति** ॥ 'यश्चासावादित्य' (ऐ.आ.३-२) इति पूर्ववाक्ये तस्याऽऽदित्यगतत्वस्योक्तत्वादनुक्तेरसिद्धत्वेन तद्विरोधो नेति भावः । इतः परं टीकायां श्रूयमाणं 'सर्वनामाभिधेय इति स्मृत्या आदित्यादिगतस्यादित्यादिनामवत्वोक्ते'रिति वाक्यं प्रक्षिप्तम् । अवश्यं चैतदेवं विज्ञेयम्'एतमस्यामेत'मिति श्रुतिप्रतिपाद्यस्य सर्वगतस्यादित्येऽनुक्तत्वलिङ्गं, विष्णुपक्षे बाधकमिति शङ्किते तत्परिहाराय अस्यामेव श्रुतौ पूर्वं 'यश्चासावादित्य' इति आदित्यस्थत्वस्योक्तत्वेनाऽऽदित्येऽनुक्तत्वलिङ्गमसिद्धमित्येव वक्तव्यत्वात् । न हि श्रुतावादित्यगतत्वं नोक्तमित्युक्ते स्मृतावुक्तमिति वचनं युक्तिमत् । नापि एतद्वाक्यप्रतिपाद्यस्य सर्वगतस्य चन्द्रादिस्थत्ववत् आदित्यस्थत्वं विशिष्य नोक्तमिति शङ्किते, स्मृतौ 'सर्वप्राणिषु च स्थित' इति सामान्यमुखेन विष्णोरादित्यस्थत्वकथनं युक्तिमत् । नापि 'आदित्यादिगतस्याऽऽदित्यादिनामवत्वोक्तेरिति वचनं युक्तिमत् । येनेदं टीकावाक्यमिति प्रतीमः ।

## वाक्यार्थमुक्तावली

॥ ॐ अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॐ ॥ सूत्रे सर्वत्र तदिति पदद्वयानुवृत्तिमभिप्रेत्य व्याचष्टे ॥ **यदुक्तमिति** ॥ एवमिति सिद्धान्तांशगतं पूर्वपक्षेऽप्यन्वेतीति भावेन तदर्थमाह ॥ **यथा खल्वित्यादिना** ॥ व्यपदेशपदसन्निधानात् अर्भकौकस्त्वादित्यस्य अर्भकौकस्त्वव्यपदेशादित्यर्थ इत्यभिप्रायेणाह ॥ **सर्वेष्विति** ॥ तद्व्यपदेशादित्यस्य तत् श्रुतेरित्यर्थान्तरमभिप्रेत्य भाष्ये चक्षुर्मयत्वादिनेत्यादिपदं प्रयुक्तमित्याशयेन व्याचष्टे ॥ **आदित्यश्रुतेश्चेति** ॥ विपक्षे हेतूच्छित्तिं बाधकमाह ॥ **न हीति** ॥ अपरिच्छिन्नस्याल्पस्थानगतत्वं जीवधर्मरहितस्य चक्षुर्मयत्वादिकं भगवत आदित्यत्वं न हि युज्यत इत्यर्थः । इति चेन्नेत्यत्र चेच्छब्दो यदित्यर्थे इत्यभिप्रेत्य इति यदुक्तं तन्नेति सूत्रार्थमाह ॥ **न पक्षद्वयस्यापीति** ॥ एवमित्यस्य एवंरूपेण निचाय्यत्वादित्यर्थमभिप्रेत्याह ॥ **अपरिच्छिन्नस्येति** ॥ अर् इत्यनेन हरेरप्यादित्यशब्दप्रवृत्तिनिमित्तमुख्यगुणमात्रत्वेनादित्यशब्दवाच्यत्वेनोपास्यत्वादित्युच्यत इति ज्ञेयम् । व्योमवच्चेति सूत्रे एवमिति

(वाक्यार्थमुक्तावली)

देहलीदीपन्यायेनान्वेति । चोऽप्यर्थः । अर्भकौकस्त्वादित्येतत् प्रथमान्ततया विपरिणम्यार्भकौकस्त्व-मित्यन्वेति इति भावेन सर्वगतत्वेऽप्यल्पौकस्त्वमिति भाष्यं प्रवृत्तमित्याशयेन व्याचष्टे । **द्वितीय इत्यादिना ।** सौत्रश्चशब्दश्चक्षुर्मयत्वादिलिङ्गस्यादित्यश्रुतेश्च हरावयुक्तनिरासकः स्मृतिसमुच्चायकश्चेति भावेनावतारयति ॥ **नापीति** ॥ **इन्द्रियस्वामित्वेनेति** ॥ प्राणा इन्द्रियाण्येषां सन्तीति व्युत्पत्तिबलात् प्राणिषु नियामकत्वेन स्थित इत्यनेनायमर्थो लब्ध इति द्रष्टव्यम् । सर्वप्राणिषु च स्थित इत्यस्योत्तरत्राप्यन्वयाभिप्रायेणाह ॥ **सर्वप्राणिष्विति** ॥ उक्तं ह्यैतरेयभाष्ये–

'ब्रह्मणः सारभूतस्तु प्रद्युम्नो भगवान् हरिः ।
स एवादित्यसंस्थश्च स ह्यादिर्जगतो विभुः ॥'

इत्यादि । ततश्च यश्चासावदित्ये इत्यनेनैवादित्येऽप्युक्तिर्लब्धा इति भावः । एतेन संवत्सरसमानत्वं समाहितं ज्ञेयम् । संवत्सरशब्दस्य चतुर्मुखपरत्वात् । तथा चायं सूत्रार्थः । सर्वत्र तत्त्विति पदद्वयमनुवर्तते । एवमित्यनुकृष्यते । अर्भकमल्पमोकः स्थानं यस्य तस्य भावः तत्त्वं तस्मात् । यथा बाधकवशात् सर्वत्रोच्यमानो न शारीरः एवं सर्वेषु भूतेष्विति सर्वप्राणिहृदयगुहास्थत्वरूपार्भकौकस्त्वव्यपदेशात्तस्य शारीरस्य चक्षुर्मयत्वादिधर्मस्यादित्यस्थत्वव्यपदेशाच्च बाधकान्न सर्वत्र ब्रह्मैवोच्यत इति चेन्न । कुत इति चेत् किं ब्रह्मणोऽल्पौकस्त्वाद्युक्तिर्व्यर्थाऽयुक्ता वा । नाद्य इत्याह निचाय्यत्वादेवमिति । अर्भकौकस्त्व चक्षुर्मयत्वादिरूपेणोपास्यत्वयोर्वैयर्थ्याभावोऽत्रेत्यर्थः । द्वितीयं निराह ॥ एवं **व्योमवच्चेति** ॥ एवश्चैवमपि सर्वगतत्वेऽपि अल्पौकस्त्वं व्योमवद्युज्यते । यथा व्याप्तस्यापि व्योम्नः एकदेशेनाल्पस्थानावस्थितिः तथा ब्रह्मणोऽपि भूताशयादौ स्थितिर्युक्तेति ।

## तत्त्वसुबोधिनी

**बाधकसद्भावादिति** । ईश्वरस्य सर्वगतत्वे इति शेषः । किं तद्बाधकं आह । सर्वेष्विति । अस्य सर्वगतस्य । चक्षुर्मयत्वादिनेति भाष्यगतादिपदार्थमाह । **आदित्यश्रुतेश्चेति** । नन्वेतत्कथं ब्रह्मपक्षे बाधकमत आह । **न ह्यपरिच्छिन्नस्येति** । **इन्द्रियस्वामित्वेनेति** । प्राणा इन्द्रियाण्येषां सन्तीति व्युत्पत्तिबलात् प्राणिषु च नियामकत्वेन स्थित इत्यनेनायमर्थो लब्ध इति द्रष्टव्यम् । **आदित्यादि-गतस्यैवेति** । तथा च यश्चासावादित्य इत्यनेनैवादित्येऽप्युक्तिर्लभ्यत इति भावः ।

## वाक्यार्थमञ्जरी

ॐ अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॐ ॥ **सर्वेषु भूतेष्विति** ॥ सर्वप्राणिहृदयगुहाख्याल्पस्थानस्थत्वव्यपदेशात्तद्व्यपदेशात्तस्य शारीरस्यादित्यश्रुतिचक्षुर्मयत्वादिना व्यपदेशाच्च न सर्वगतं ब्रह्मेति चेन्न । किं ब्रह्मणोऽल्पौकस्त्वाद्युक्तिर्व्यर्था अयुक्ता वा । नाद्य इत्याह ॥ **निचाय्यत्वादिति** ॥ अर्भकौकस्त्वेन चक्षुर्मयत्वादिनोपास्यत्वान्न व्यर्थेत्यर्थः । अन्त्य आह ॥ **व्योमवदिति** ॥ यथा व्याप्तस्याप्याकाशस्यैकदेशस्थत्वं तथा ब्रह्मणोऽपि युक्तेत्यर्थः । उपास्यत्वात् अधिकारिविशेषैः ॥ **इन्द्रियस्वामित्वेनेति** ॥ तथा च सर्वप्राणिषु प्रेरकत्वेन स्थितत्वात्सर्वेन्द्रियमयः । मयटो विकारादेरिव स्मार्तत्वात्स्वामित्वमप्यर्थ इत्युक्तं भवति । सर्वप्राणिषु संस्थित इत्यस्य हेतुगर्भत्वमाह ॥ **आदित्यादिगतस्यैवेति** ॥ तथा च यश्चासावादित्य इत्यनेनैवादित्येऽप्युक्तिर्लब्धेति भावः ॥

## विवृतिः

**बाधकसद्भावादिति** ॥ ईश्वरस्य सर्वगतत्वे इति शेषः ॥ किं तद्बाधकमत आह ॥ **सर्वेष्विति** । अस्य सर्वगतस्य ॥ **चक्षुर्मयत्वादिनेति** ॥ भाष्यगतादिपदार्थमाह ॥ **आदित्यश्रुतेश्चेति** ॥ नन्वेतत्कथं ब्रह्मपक्षे बाधकमत आह ॥ **न ह्यपरिच्छिन्नस्येति** ॥ **इन्द्रियस्वामित्वेनेति** ॥ प्राणा इन्द्रियाणि एषां सन्तीति व्युत्पत्तिबलात्प्राणिषु च नियामकत्वेन स्थित इत्यनेन अयमर्थो लब्ध इति द्रष्टव्यम् ॥ **आदित्यादिगतस्यैवेति** ॥ तथा च यश्चासावादित्य इत्यनेनैवादित्येऽप्युक्तिर्लभ्यत इति भावः ॥

## सूत्रभाष्यम्

**॥ ॐ सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॐ ॥ ८ ॥**

जीवपरयोरेकशरीरस्थत्वे समानभोगप्राप्तिरिति चेन्न । सामर्थ्यवैशेष्यात् । उक्तं हि गारुडे—

> 'सर्वज्ञाल्पज्ञताभेदात्सर्वशक्त्यल्पशक्तितः ।
> स्वातन्त्र्यपारतन्त्र्याभ्यां सम्भोगो नेशजीवयोरि'ति (च) ॥

## सत्तर्कदीपावली

जीवात्यन्तभिन्नस्यापि परमात्मनः सर्वशरीरेषु वसतस्तन्निमित्तभोगो जीववत्किं न स्यादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ **सम्भोगेत्यादिना** ॥ यथाऽग्निस्तम्भनसामर्थ्यवानग्नौ प्रतिक्षिप्तपाणिर्नाग्निना दह्यते एवं समर्थत्वाच्छरीरेषु वसतोऽपि न तन्निमित्तदुःखादिसम्बन्धो जीववद्विष्णोः शङ्कनीयः । यथा चोक्तं भागवते ।

> यत्तदीशनमीशस्य प्रकृतिस्थोऽपि तद्गुणैः ।
> न युज्यते सदात्मस्थैर्यथाबुद्धिस्तदाश्रयेति ।

अतोऽत्र सर्वगतत्वेन प्रतिपाद्यमान आदानयोगादादित्यनामको विष्णुरिति सिद्धम् । (१।२।१)

## तत्त्वप्रकाशिका

पुनरुक्तमाक्षिप्य समादधत्सूत्रमुपन्यस्याऽऽक्षेपांशं तावद्व्याचष्टे ॥ **सम्भोगेति** ॥ यदुक्तमेकस्य सर्वशरीरस्थत्वं सर्वसमानभोगप्राप्तेरयुक्तमिति तदीश्वरपक्षेऽपि सममेव । जीवपरयोरेकशरीरस्थत्वे परस्यापि जीवसमानभोगप्राप्तेः । न हि दह्यमानगेहगतयोरन्यतरस्यैव दाह इति युक्तम् । तथा चेश्वरपक्षस्यापि दोषित्वान्नायं सर्वगत इति भावः । परिहारांशं व्याचष्टे ॥ **नेति** ॥ न जीवेशयोरेकशरीरस्थत्वेऽपि समानभोगप्राप्तिः । ईश्वरस्य तदप्राप्तौ जीवादपि सामर्थ्यवैशेष्यात् । अग्निस्तम्भनवतो दाहाभाववदिति भावः । किं तत्सामर्थ्यवैशेष्यं येन समानभोगाप्राप्तिरित्यत आह ॥ **उक्तमिति** ॥ प्राप्तपरिहाराय सत्यपि सामर्थ्ये प्राप्तिस्तु भवत्येव । सापि भगवति न सम्भवति । तस्य सार्वज्ञ्येनैष्यत्परिहारसम्भवादिति भावेन सार्वज्ञोक्तिः । एवमीश्वरपक्षे विरोधाभावात् यद्ब्रह्मशब्दस्यामुख्यार्थग्रहणम् अश्रुतत्वादीनां भाक्तत्वकल्पनं समानभोगप्राप्तेः प्रतिबन्द्या परिहरणं कर्मकर्तृभेदन्यायस्यापवादनं तत्सर्वमपि परास्तं भवति । तस्माज्जीव-प्रापकाणां सावकाशत्वेनासाधकत्वात् बाधकसद्भावाच्च न जीवः सर्वगतः । किं नाम बाधका-भावात्साधकसद्भावाच्च विष्णुरेवेति प्रागुक्तप्राण आनन्दमयश्च स एवेति सिद्धम् ॥ ८ ॥ अ० १ ॥

## भावबोधः

अत्र सूत्रक्रमस्तु अत्राद्ये जातिप्रबलविषयवाक्यगतश्रुतिरूपस्वपक्षसाधकोक्तिः । द्वितीये तदुत्तरवाक्योक्तलिङ्गरूपसाधकोक्तिः । तृतीये सर्वगतत्वानुपपत्तेः समन्वीयमानलिङ्गसम्बन्धित्वेनान्तरङ्गतया जीवस्वरूपभूताणुत्वविरोधिसम्बन्धितया च प्राबल्यात् तद्रूपपरपक्षानुपपत्त्युक्तिः । चतुर्थे वाक्यशेषोक्त-

(भावबोधः)

बहिरङ्गकर्मकर्तृव्यपदेशानुपपत्तिरूपपरपक्षानुपपत्त्युक्तिः । पञ्चमे ब्रह्मशब्दादीनाममुख्यत्वादिना सावकाशत्वाशङ्कापरिहाराय तन्निरवकाशत्वसाधकोक्तिः । षष्ठे बहिरङ्गसमाख्यारूपस्वपक्षसाधकोक्तिः । सप्तमे सर्वेष्विति 'सर्वभूताशयस्थितः' इति विषयवाक्यसमाख्यास्मृत्योरुक्तस्याल्पौकस्त्वस्यापरिच्छिन्न-परमात्मरूपविरोधित्वेन आदित्यादिश्रुत्याद्यपेक्षया प्राबल्यात् प्रथमं तदाशङ्क्य विषयवाक्यगतादित्यादिश्रुतिं चक्षुर्मयत्वादिलिङ्गमनन्तरमाशङ्क्य तेषां सावकाशत्वोक्तिः । अष्टमे बहिरङ्गसम्भोगबाधकमाशङ्क्य तदुद्धार इति ॥ १ ॥

## भावदीपः

ॐ सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॐ ॥ सिद्धान्तनञः पूर्वभाष्येणान्वयमाह ॥ **न जीवेशयोरिति** ॥ सर्वशक्त्युक्त्यैव प्रकृतशङ्कानिरासात्सार्वज्ञोक्तेर्वैयर्थ्यमित्यत आह ॥ **प्राप्तेति** ॥ एतेनेश्वरस्य सर्वज्ञत्वादेव जीवस्येव सुखदुःखाद्यनुभवरूपभोगः स्यात् । अन्यथा सार्वज्ञं न स्यादिति प्रतिकूलमेव सार्वज्ञमिति प्रत्युक्तम् । अस्य चोद्यस्य तत्रापि च तद्व्यापारादविरोध इति तृतीयाद्यपादे नीचोच्चतैव दुःखादेर्भोग इत्यभिधीयत इति निरसिष्यमाणत्वात् । शब्दविशेषादित्येतदवतारिकायां कृतचोद्य-मनूद्य प्रत्याह ॥ **एवमिति** ॥ निचाय्यत्वादित्युक्तरीत्या इत्यर्थः । बहुलिङ्गसहितश्रुतेरपि सावकाशाया निरवकाशश्रुत्यादीनामेव बलवत्त्वमिति न्यायविवरणं तात्पर्यतो विवृण्वन् तत्र साधकभावाभावावुपलक्ष्याविति मत्वा सर्वसूत्रार्थमुपसंहरति ॥ **तस्मादिति** ॥ तदेव व्यनक्ति ॥ **जीवेति** ॥ आदित्येत्यपि ध्येयम् । अर्भकसूत्रार्थोऽयम् ॥ **बाधकेति** ॥ अनुपपत्तेरित्यादिसूत्रद्वयार्थः । आदित्यपक्षे कर्मकर्तृभेदबाधकस्या-लग्नाज्जीव इत्येवोक्तिः । सर्वगतः अत्रोक्तसर्वशरीरान्तःस्थ इत्यर्थः । समुदायाशयमेकवचनम् । जीवा इत्यर्थः । बाधकेति अर्भकेत्यादिसूत्रद्वयशेषार्थः । साधकेति प्रसिद्धोपदेशात् शब्दविशेषात् विवक्षितगुणोपपत्तेश्च स्मृतेश्चेति सूत्रचतुष्टयार्थः । विष्णुरेव सर्वगत इत्यनुषङ्गः । सर्वत्र तत्त्विति प्रतिज्ञांशार्थोऽयम् । प्रागुक्तेत्यादिफलोक्तिः । तद्वै त्वं प्राण इत्युक्तप्राणोऽप्यत्र प्रागुक्तपदेन ग्राह्यः । तेन विष्णुरेवाऽऽनन्दमयश्चेति ऋजुः ॥ ८ ॥ अ० १ ॥

## अभिनवचन्द्रिका

(सू.८) **ईश्वरस्येति** ॥ अत्र जीवादपीति प्रक्षिप्तम् । ततश्चैवं टीकावाक्यपाठः– 'ईश्वरस्य तदप्राप्तौ सामर्थ्यवैशेष्या'दिति । ईश्वरस्य सम्भोगाप्राप्तिविषये सामर्थ्यवैशेष्यान्न समानभोगप्राप्तिरित्यर्थः ।

(अभिनवचन्द्रिका)

एतेन सामर्थ्यवैशेष्यस्यावधिनिरूप्यत्वाभावात् अवधिनिरूपणं, समुच्चयाभावात् अपिशब्दश्च व्यर्थ इति परास्तम् । 'जीवादपी'त्यस्य प्रक्षिप्तत्वाङ्गीकारात् । **अग्निस्तम्भनवत इति** ॥ ननु विषमोऽयं दृष्टान्तः । अग्निस्तम्भनवतो दाहयोग्यत्वात् । विष्णोस्तु कर्मबन्धनविधुरत्वेन भोगायोग्यत्वात् । तस्मात् दह्यमान-गेहान्तर्गताऽऽकाशवदित्येवोदाहार्यमिति चेत्, सत्यम् ईश्वरस्य आकाशवदेव दुःखाप्राप्तिरिति आकाश एवोदाहर्तव्यः, तथापि कैमुत्यप्रदर्शनायाऽयं दृष्टान्त उपात्तः । यदा दाहयोग्यस्यापि अग्निस्तम्भन-शक्तिमात्रेण दाहाभावः, तदा किमु वाच्यं दुःखायोग्यस्य शक्तिविशेषवतश्च तदभाव इति ।

**एष्यत्परिहारसम्भवादिति** ॥ ननु एष्यत्प्राप्तिपरिहारो नाम वर्तमानतत्प्रापकपरिहार एव वाच्यो गत्यन्तराभावात् । ईश्वरस्य दुःखप्रापकं च दुःखिदेहान्तर्गतत्वमेव न त्वन्यत् । अयोगादनभ्युपगमाच्च । न च एष्यद्दुःखप्रापकं जीवदुष्कर्मलिप्तत्वं, तत्परिहारः सर्वज्ञत्वादुपपद्यत इति वाच्यम् । भगवति दुःखवत् कर्मलेपप्राप्तेरप्ययोगात् । ततश्च तत्प्रापकं जीवेन सह एकदेशावस्थानमेव वक्तव्यम् । एवं च तत्परिहारे सर्वगतत्वमेव परित्यक्तं स्यादिति चेत्, मैवम्–

अशक्तोऽत्र समाधानं वक्तुं यद्यपि संस्मृतेः ।
गुरूणामधुना वक्ष्ये येनात्मा सम्प्रसीदति ॥

त्रिविधः खलु एष्यत्परिहारः । वर्तमान एष्यदनिष्टसाधनस्य विध्वंसः । तद्यथा– 'कृतब्रह्महत्यादि-पापस्य सेतुदर्शनादिना विध्वंसः । अपरस्तु एष्यदनिष्टसाधनाननुष्ठानम् । अन्यस्तु – अलेपकरणम् । तद्यथा ज्ञानोत्तरदुष्कर्मादिः । एवं च इह एष्यदनिष्टपरिहारो नाम एष्यदनिष्टसाधनकर्मलेपाभावो विवक्षितः । स च सार्वज्ञ्यादुपपद्यते । ज्ञानस्यैवालेपप्रयोजकत्वात् । 'तद्यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यत (छा.४-१३-३) इति श्रुतेः, उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यप-देशात् (ब्र.सू.४-१-१३) इति सूत्राच्च । नन्वस्तु भगवदितरेषां ज्ञानेनाऽलेपादि । भगवतस्तु कथमिति चेत्, अन्येषामिव तस्यापि ज्ञानेनैवालेपादित्यङ्गीकारात् । इयांस्तु विशेषः अन्येषां तु कादाचित्कमेव ज्ञानमिति अलेपाद्यपि कादाचित्कं, भगवतस्तु अनादिसिद्धं ज्ञानमिति अलेपाद्यपि अनादिकालीनमेव । तदुक्तं बृहदारण्यके– 'तदाऽऽत्मानमेवावेदहं ब्रह्मास्मि' (१-४-१०) इत्यादिना ॥

**पूर्वपक्षस्तु**– आदित्य एवायं सर्वगतो भवेत् । 'तस्यैतस्यासावादित्यो रसः' (ऐ.३-२-३) इत्यादि बह्वादित्यश्रुतेः । 'सूर्य आत्मे'(ऐ.३-२)ति सौरमन्त्रोदाहरणाच्च । 'एतमस्यामेत'(ऐ.३-

(अभिनवचन्द्रिका)

२)मिति क्षित्यादिषूक्ता, आदित्येऽनुक्तत्वलिङ्गाच्च । अथवा सर्वजीवानामेतत्सर्वगतत्वम् । चक्षुर्मयत्वादिलिङ्गात् । न च चक्षुर्मयत्वादिलिङ्गमन्तर्यामिविषयमिति वाच्यम् । तस्यापरिच्छिन्नत्वेन 'सर्वेषु भूते' इत्युक्ताऽल्पौकस्त्वायोगात् । तस्माद्विष्ण्वन्यस्यैव सर्वगतत्वात् तस्यैव प्रागुक्तप्राणत्वम्, आनन्दमयत्वं चेति ॥

**सिद्धान्तस्तु**– विष्णुरेव सर्वगतः 'एतमेव ब्रह्मेत्याचक्षत' (ऐ.अ. ३-२) इति ब्रह्मशब्दात् 'स योऽतोऽश्रुतोऽगत' इत्यादिना श्रुतानामश्रुतत्वादिगुणानां तस्मिन्नेवोपपत्तेश्च । न च यदि विष्णुप्रापकब्रह्मशब्दाऽश्रुतत्वादिलिङ्गैर्विष्णुः सर्वगतः, तर्हि आदित्यसर्वजीवप्रापकाऽऽदित्यशब्दसर्वजीवलिङ्गाभ्याम्, आदित्यः, सर्वजीवा वा किं न स्युरिति वाच्यम् । एकस्य जीवस्य आदित्यस्य वा सर्वशरीरस्थत्वे सर्वसुखदुःखादिभोगप्राप्त्या सर्वगतत्वायोगेन श्रुतेर्बाधितविषयत्वप्रसङ्गात् । 'आत्मानं परस्मै शंसती'(ऐ.३-२)ति कर्तृत्वेनोक्तस्य जीवस्य कर्मत्वायोगाच्च । न च ब्रह्मशब्दस्य जीवे प्रयोगात् न ब्रह्मशब्दबलाद्विष्णुत्वनिर्णय इति वाच्यम् । ब्रह्मशब्दस्य विष्णावेव मुख्यत्वेन मुख्याऽमुख्ययोर्मुख्यस्यैव ग्राह्यत्वात् ब्रह्मशब्दमात्रस्य कथंचिज्जीवे सम्भवेऽपि हेतुत्वेन विवक्षितस्य एव ब्रह्मशब्दस्य जीवे सर्वथाऽसम्भवाच्च । अहमात्मा गुडाकेश (भ.गी.१०-१९) इति स्मृतेश्च । ननु 'सर्वेषु भूतेषु' इति अल्पस्थाने साकल्यस्थितिकथनात्; जीवधर्मव्यपदेशाच्च जीव एव सर्वगतः, न विष्णुः । अपरिच्छिन्ने जीवधर्मरहिते च तस्मिन् तदुभयव्यपदेशाऽयोगादिति चेत्, न – अत्र वक्तव्यम् । अपरिच्छिन्नादिरूपस्य अर्भकौकस्त्वादिकथनम्, अप्रयोजनम्, उताऽयुक्तम् । नाद्यः । तेन रूपेणोपास्यत्वेन व्यपदेशस्य सप्रयोजनत्वात् । न द्वितीयः । सर्वगतस्यापि व्योम्नः अंशस्य साकल्येनाऽल्पौकस्त्वदर्शनेन तदभेदादाकाशस्याऽल्पौकस्त्ववत् भगवतोऽपि साकल्येनाल्पौकस्त्वोपपत्तेः । ईश्वरस्य सर्वेन्द्रियस्वामित्वेन चक्षुर्मयत्वादेरप्युपपत्तेः । न चाऽऽदित्येऽनुक्तत्वलिङ्गविरोधः । 'यश्चासावादित्य' (ऐ.अ.३-२) इति पूर्ववाक्ये आदित्यस्थत्वस्योक्तत्वेनाऽनुक्तत्वस्याऽसिद्धत्वात् । न च विष्णोरपि सर्वगतत्वे जीववत्सम्भोगप्राप्तिरिति वाच्यम् । तस्य सर्वज्ञत्वेन सर्वशक्तित्वेन च कर्मालिप्ततया सम्भोगाप्राप्तेः । ततश्च विष्णुरेव सर्वगतः, प्रागुक्तप्राणः, आनन्दमयश्चेति सिद्धम् । (अ.१)

## वाक्यार्थमुक्तावली

ॐ सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॐ ॥ समानभोगः सम्भोगः । व्योमवदेकदेशेनार्भकौकस्त्व

**(वाक्यार्थमुक्तावली)**

इत्यन्वेति । जीवपरयोरेकशरीरस्थत्वे जीवसमानभोगप्राप्तिस्तस्येति चेन्न । सामर्थ्यविशेष्यादिति सूत्रार्थः ॥ **सार्वज्ञोक्तिरिति** ॥ स्वातन्त्र्योक्तिशक्तिसार्वज्ञोपपादनाय । यथोक्तमूस्वतन्त्रत्वात् सुखसज्ज्ञानशक्तिगुणैः पूर्ण इतीति भावः । अत्राद्यं सूत्रद्वयं स्वपक्षसाधकम् । तत्र श्रुतिलिङ्गयोः श्रुतेः प्रबलत्वात् विषयवाक्य-गतत्वाच्च तदुक्तिः । लिङ्गस्य ततो दुर्बलत्वात् उत्तरवाक्यगतत्वाच्च द्वितीये तदुक्तिः । तृतीयं चतुर्थं चेति सूत्रद्वयं परपक्षे बाधकोपन्यासाय प्रवृत्तम् । तत्रापि समन्वयानुपपत्तेः समन्वीयमानलिङ्गसम्बन्धितया जीवस्वरूपभूताणुत्वविरोधितया चान्तरङ्गत्वेन तृतीये तदुक्तिः । चतुर्थे वाक्यशेषोक्तबहिरङ्गकर्मकर्तृ-व्यपदेशानुपपत्त्युपन्यासः । ननु शब्दविशेषादित्याद्यसूत्रोक्तश्रुतेः सावकाशत्वनिरासकं तदनन्तरं भवितव्यम् । स्मृतेश्चेति सूत्रं स्वपक्षे स्मृतिसमाख्यापरं स्वपक्षसाधकलिङ्गोक्तिपरद्वितीयसूत्रानन्तरं पठितव्यम् । किं व्यवधाने कारणमिति चेन्न । शब्दविशेषादिति सूत्रस्य ब्रह्मशब्दवदश्रुतत्वादिलिङ्गस्यापि सावकाशत्व-परिहारायानुपपत्तेरित्याद्युक्तानुपपत्तेः । प्रतिबन्दीमोचनाय कर्मकर्तृव्यपदेशस्यापि जीवे उपपत्या सावकाशत्व शङ्कापरिहारायावतारितत्वेन पञ्चमत्वोपपत्तेः । आद्यद्वितीययोः श्रुतिलिङ्गयोरुपन्यस्तयोः न्यायसाम्येन पूर्वपक्षिणा न चादित्यशब्दादित्यादिभाष्यदिशा प्रत्यवस्थाने कृते परपक्षेऽनुपपत्त्युपन्यासस्याभ्यर्हितत्वेन सावकाशत्वशङ्कापरिहारकस्य शब्दविशेषादित्यस्य समाख्यासूत्रस्य पश्चात्तनत्वोपपत्तेश्च । श्रुतिलिङ्ग-विचारस्य पञ्चमान्तमनुवृत्तत्वेन समाख्यायाः तदानन्तर्यौचित्याच्च । सप्तमे समाख्योक्तस्याप्याक्षेपेण तत्सन्निध्यौचित्याच्च । सप्तमाष्टमे स्वपक्षे बाधकोद्धाराय प्रवृत्ते । तत्रापि सप्तमे सर्वेष्विति सर्वभूताशयस्थित इति विषयवाक्यसमाख्ययोरुक्तस्याल्पौकस्त्वस्यापरिच्छिन्नपरमात्मस्वरूपविरोधित्वमादित्यश्रुतिविरोधं चक्षुर्मयत्वादिलिङ्गविरोधं चाशङ्क्य सावकाशत्वोक्तिः । अष्टमे बहिरङ्गसम्भोगरूपबाधकमाशङ्क्य तदुद्धार इति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

स्मृतौ सार्वज्ञोक्तेः प्रयोजनमाह । **प्राप्तपरिहारायेति** । अत्राद्ये सूत्रे श्रुतिरूपस्वपक्षसाधकोक्तिः । द्वितीये लिङ्गरूपसाधकोक्तिः । तृतीये एकस्य सर्वशरीरस्थत्वानुपपत्तिरूपपरपक्षे बाधकोक्तिः । चतुर्थे कर्मकर्तृव्यपदेशरूपपरपक्षे बाधकोक्तिः । पञ्चमे ब्रह्मशब्दानां निरवकाशत्वोक्तिः । षष्ठे समाख्यारूप-स्वपक्षसाधकोक्तिः । सप्तमे परपक्षसाधकादित्यादिश्रुतेः सावकाशत्वोक्तिः । अष्टमे सम्भोगरूपबाधकोद्धार इति सूत्रक्रमः ।

## वाक्यार्थमञ्जरी

ॐ सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॐ ॥ समानो भोगः सम्भोगः । ब्रह्मणः सर्वजीवशरीरस्थत्वे तत्समानभोगप्रसङ्ग इति चेन्न । वैशेष्यात् सामर्थ्यातिशयादित्यर्थः ॥ **अग्निस्तम्भनवत इति** ॥ मणिमन्त्रादिना अग्निदाहनिरोधशक्तिमत इत्यर्थः । भवत्वेवं प्राप्तव्याज्ञानदशायाम्, इदानीं शब्दविशेषादिति सूत्रावतारिकाग्रन्थोक्तमतिदेशेन दूषयति ॥ **एवमिति** ॥ भाक्तत्वकथनम् अमुख्यत्वकथनम् । जीवनिष्ठश्रुतत्वस्यौपचारिकत्वादिति भावः ॥ १ ॥

## विवृतिः

ननु स्मृतौ सार्वज्ञोक्तिः कुत इत्यत आह ॥ **प्राप्तपरिहारायेति** ॥ अत्राद्ये सूत्रे श्रुतिरूपस्वपक्ष-साधकोक्तिः ॥ द्वितीये लिङ्गरूपसाधकोक्तिः, तृतीये एकस्य सर्वशरीरस्थत्वानुपपत्तिरूपपरपक्षे बाधकोक्तिः, चतुर्थे कर्मकर्तृव्यपदेशरूपपरपक्षे बाधकोक्तिः, पञ्चमे ब्रह्मशब्दादीनां निरवकाशत्वोक्तिः, षष्ठे समाख्यारूपस्वपक्षसाधकोक्तिः, सप्तमे परपक्षसाधकादित्यादिश्रुत्यादेः सावकाशत्वोक्तिः, अष्टमे सम्भोगरूपबाधकोद्धार इति सूत्रक्रमः ॥

॥ इति सर्वगतत्वाधिकरणम् ॥

## २. अत्तृत्वाधिकरणम्

'जन्माद्यस्य यत' (ब्र.सू.१-१-२) इत्युक्तम् । तत्रात्तृत्वं 'स यद्यदेवासृजत तत्तदत्तु-मध्रियत । सर्वं वा अत्तीति तददितेरदितित्वमि' (बृ.उ.३-२-५)त्यदितेः प्रतीयते । 'स यद्यदेवासृजते'ति पुल्लिङ्गं च 'कूटस्थोऽक्षर उच्यत' (भ.गी.१५-१६) इतिवत् । अत्रोच्यते

**॥ ॐ अत्ता चराचरग्रहणात् ॐ ॥ ९ ॥**

न हि चराचरस्य सर्वस्यात्तृत्वमदितेः ।

'स्रष्टा पाता तथैवात्ता निखिलस्यैक एव तु ।
वासुदेवः परः पुंसामितरेऽल्पस्य वा न वे'ति स्कान्दे ।

(सूत्रभाष्यम्)

'एकः पुरस्ताद्य इदं बभूव यतो बभूव भुवनस्य गोपाः ।
यमप्येति भुवनं साम्पराये स नो हरिर्घृतमिहायुपेऽत्तु देवः'
इति (घृत.सू.) श्रुतिः ॥ ९ ॥

## सत्तर्कदीपावली

बृहदारण्यके श्रूयते । स यद्यदेवासृजत तत्तदत्तुमध्रियत सर्वं वा अत्तीति तददितेरदितित्वमिति । तत्र जन्माद्यस्य यत इति परमेश्वरधर्मत्वेनोक्तं सर्वसंहर्तृत्वापरपर्यायं सर्वात्तृत्वं प्रतीयमानं विचार्यते । तत्रेदं तावददितेः प्रतिभाति तददितेरदितित्वमिति श्रवणात् । स इति पुल्लिङ्गनिर्देशोऽदितिविषयः कथमिति वाच्यम् । कूटस्थोऽक्षर उच्यत इति प्रकृतिविषयप्रयोगवदुपपद्यते इत्येतं पक्षं प्रतिक्षिपत्सूत्रमुपन्यस्य व्याचष्टे ॥ **अत्तेत्यादिना** ॥ स यद्यदेवेत्यादिनोक्तो विष्णुरेव । नादितिः । सर्वं वा अत्तीति सर्वात्तृत्वश्रवणात् । नहि सचराचरविश्वं दक्षपुत्र्यदितिरत्ति । विष्णुरेव सर्वात्तेत्यत्र श्रुत्यन्तरं प्रमाणमाह ॥ **एक इति** ॥ स एको भुवनगोप्ता पुरस्तादादौ बभूव यत इदं विश्वं बभूव यं च सांपराये प्रलयकाले निगीर्णोदनवत्समस्त-भुवनमप्येति प्रविशति । स देवो हरिरिह यज्ञे नोऽस्माकमायुरर्थं घृतमत्त्विति मन्त्रार्थः । तथाच श्रुत्यन्तरं यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्थावेद यत्र सः इति ।

## तत्त्वप्रदीपिका

जन्माद्यस्य यत इति विष्णोस्सर्वकर्तृत्वात्तृत्वायुक्तम् । तत्रात्तृत्वमन्यस्य स्याददितिशब्दवाच्यस्येत्या-शङ्क्य परिहरति । स यद्यदेवासृजत— स संवत्सरो यद्यदेवासृजत, स संवत्सरस्रष्टाऽऽत्मा तत्तदत्तुं मनोऽध्रियत । ॐ अत्ता चराचरग्रहणात् ॐ । एकः पुरस्तादित्यस्यायमर्थः । योऽस्य जगतः पुरस्तादेक एव, यत इदं जगद्बभूव, यश्च भुवनस्य गोपा बभूव ॥ साम्पराये प्रलये मुक्तौ च ॥

## तत्त्वप्रकाशिका

अत्र लोकतोऽन्यत्र प्रसिद्धादितिशब्देन सहोक्तात्तृत्वलिङ्गस्य हरौ समन्वयप्रतिपादनादस्ति शास्त्रादि-सङ्गतिः । श्रुत्यादिसङ्गतिं विषयवाक्यमुदाहृत्य विषयसंशयौ सयुक्तिकं पूर्वपक्षं च सूचयति ॥ **जन्मेति** ॥ 'जन्माद्यस्य यतः' इति सूत्रे जन्मादिकारणत्वं विष्णोरुक्तम् । तन्मध्यपतितं संहर्तृत्वापरपर्यायवाच्यमत्तृत्वं बृहदारण्यके कस्यचित् श्रूयते । सोऽदितिर्यद्यदसृजत तत्तदत्तुं मनोऽध्रियतादच्च । कुतः सर्वात्त्री सा सर्वमत्तीति यत्तदेव हि अदितेरदितित्वं अदितिशब्दप्रवृत्तिनिमित्तम् । अन्यथा तत्र स्याददिति । तच्च यदा हरेरितरस्य स्यात्तदा प्रागुक्तलक्षणस्यातिव्याप्तिप्रसङ्गादवश्यं निर्णेयमेव । तदत्तृत्वं विषयः । किं

(तत्त्वप्रकाशिका)

विष्णोरन्यस्य वेति सन्देहः । लक्षणसूत्रमदितिश्रुतिश्च सन्देहबीजम् । अदितेरेव तदत्तृत्वमिति पूर्वः पक्षः । तददितेरित्यदितिश्रुतेः । न च श्रुतिर्विष्णुविषया किं न स्यादुक्तन्यायादिति वाच्यम् । अदितित्वलिङ्गात् । न ह्यदितिभिन्नस्यादितित्वं सम्भवति । अतो न प्रागुक्तं ब्रह्मलक्षणं युक्तमिति भावः । नन्वेतदत्तृत्वमदितेश्चेत्कथं स इति पुल्लिङ्गं युक्तं स्यादतस्तेन श्रुत्यादिबाध इत्यत आह ॥ **स इति** ॥ यथा रमायां पुंशक्तिमत्त्वात् पुल्लिङ्गप्रयोगः 'कूटस्थोऽक्षर उच्यते' 'सोऽहं वायुं दिशां वत्सं वेद' इत्यादौ तथा अत्रापि सम्भवतीति भावः । यदाहुः 'पुल्लिङ्गेनोच्यते स्त्री च पुंवच्छक्तिमती क्वचित्' इति । ननु स इति प्रकृतसंवत्सरपरामर्शान्नैतच्चोद्यावकाशः । मैवम् । 'स तया वाचा तेन आत्मनेदं सर्वमसृजत' इत्युक्तस्यैव 'स यद्यदेव' इत्यनुवादात् । तत्र च विरिञ्चस्य तृतीयया प्रकृतत्वाददित्याख्यमृत्योरेव प्रथमया प्रकृतत्वात् । तथा च सोऽदितिः संवत्सरेण यद्यदसृजतेति योजनायामस्ति चोद्यावकाशः । सिद्धान्तयत्सूत्रमवतारयति ॥ **अत्रेति** ॥ विष्णुरेवात्ताऽत्रोच्यते । सर्वं वा अत्तीति चराचरस्याद्यतया ग्रहणादिति सूत्रार्थः । चराचरणग्रहणेऽपि कुतो नादितेरत्तृत्वमित्यत आह ॥ **न हीति** ॥ चराचरस्येति सूत्राक्षराण्यनूद्य श्रुत्यनुसारेण सर्वस्येति व्याख्यानम् । सूत्रस्य श्रुतिविसंवादप्रतीतिनिरासोऽस्य प्रयोजनम् । चराचरात्तृत्वं विष्णोरपि कुत इत्यत आह ॥ **स्रष्टेति** ॥ अस्वातन्त्र्येणाल्पस्य भवन्ति स्वातन्त्र्यापेक्षया न वा । य एकोऽस्य पुरस्ताद्बभूव सृष्टाविदं जगद्यतो बभूव । यश्च भुवनस्य गोप्ता यं च मुक्तिप्रलययोर्भुवनं प्रविशति स हरिर्न आयुरर्थे घृतमाहुतिरूपमत्त्वित्यर्थः । न च वाच्यं श्रुतिलिङ्गाभ्यां पूर्वपक्षे कथं लिङ्गमात्रेण निर्णय इति । लिङ्गस्योक्तरीत्या निरवकाशत्वात् । अदितिश्रुतेर्विष्णावपि सावकाशत्वात् । लिङ्गस्य चादितिशब्दवाच्यत्वमदितित्वमिति सावकाशत्वात् । सावकाशश्रुतिलिङ्गाभ्यां निरवकाशलिङ्गमात्रस्य प्राबल्यात् ॥ ९ ॥

## गुर्वर्थदीपिका

घटशब्दप्रवृत्तिनिमित्तघटत्वजातेरिवादितेरदितित्वमित्यत्रोक्तादितिशब्दप्रवृत्तिनिमित्तादितित्वजातेः देवमातर्येव स्थितत्वान्नादितिश्रुतिः सर्वनामवत्यपि विष्णौ नेतुं शक्यत इति भावेनोक्तम् । **अदितित्वलिङ्गादिति** । ''स तया वाचे''ति सरस्वत्या सहोक्तस्य ''तेनाऽऽत्मने''ति प्रागुक्तब्रह्मण एव संवत्सराभिमानितया ततोऽप्यादौ संवत्सरपदेनापि प्रस्तुतत्वात् संवत्सरेणेत्युक्तम् । एवं च प्राक्प्रथमान्तपदेनोक्तोऽपि संवत्सरः उत्तरसृष्टिवाक्ये आत्मेनेति तृतीयान्तपदोक्तब्रह्मात्मकत्वात्तदनुवादरूपे ''स यद्यदेवे''ति वाक्ये न प्रथमान्तपदेन वक्तुं शक्यः । किं त्वनुवादस्य वादानुसारित्वात्संवत्सरेणेति तृतीयान्तपदेनोपग्राह्यः । प्रथमान्तपदेन त्वदितिरेवेति शङ्कितुरभिप्रायः । स यद्यदेवेत्यत्र यद्यत्तद्दिति स्थलद्वयेऽपि वीप्साबलाच्छ्रौतः सर्वशब्दो न सङ्कोचार्ह इति सूचनाय सूत्रे चराचरग्रहणम् । चरा न

(गुर्वर्थदीपिका)

भवन्तीत्यचराः स्थिरजीवा जडाश्च । सावकाशत्वादित्युपलक्षणम् । सर्वं वा अत्तीति यत्तदेवादितित्वमिति निर्वदन्त्या श्रुत्या अखण्डजातेरगृहीतत्वान्नादितावनवकाश इत्यपि द्रष्टव्यम् । न च वाच्यमदितेरित्यत्रादितित्वजातेः प्राप्तिरिति । अत्राप्यदितिशब्दवाच्यस्य हरेरित्येवार्थस्य ग्रहणान्निरुपचरितसर्वात्तृत्वप्रस्तावादेवमातुरदितेः सर्वथा ग्रहणायोगात् ॥ १-२-२ ॥

## भावबोधः

ॐ अत्ता चराचरग्रहणात् ॐ ॥ ९ ॥ श्रुत्यादिसङ्गतिमिति ।

अत्र सर्वगतत्वं तु प्रथमं प्रविचार्यते ।
एतद्भावाभिधं लिङ्गं क्रियालिङ्गं ततः परम् ॥

इत्यनुव्याख्यानानुसारेण सत्तां विना क्रियाकर्तृत्वासम्भवात् प्रथमं सत्तामभिधाय तदनन्तरं तत्सापेक्षक्रियानिरूपणात् ॥

''तत्र तत्र स्थितो विष्णुस्तत्तच्छक्तिप्रबोधकः ॥''

इत्यनुव्याख्यानानुसारेण प्रथमं स्थितिकर्तृत्वं विचार्यानन्तरं संहर्तृत्वविचाराद्वा न्यायविवरणटीकारीत्या भवत्वादित्यादिश्रुत्यादिनां विष्णाववकाशोऽदितिस्वरूपत्वरूपादिति लिङ्गस्यादितिभिन्ने विष्णौ सर्वथाऽसम्भवेन तत्सहितादितिश्रुतेर्विष्णावनवकाश इति पूर्वाधिकरणवैषम्येण पूर्वपक्षोत्थानाद्वा अव्यवहितपूर्वाधिकरणसङ्गतिरपि द्रष्टव्या । प्रागनुक्तत्वेनासिद्धस्यादनकर्तृत्वस्य ''सर्वं वा अत्ती''ति कथमनुवाद इत्यत आह– आदश्चेति । किं विष्णोरिति । अत्रात्तृत्वं किं देवमातुरदितेरुत विष्णोरिति चिन्ता । तदर्थमदितिश्रुत्यदितित्वलिङ्गे किं विष्णुप्रापकलिङ्गप्रकरणबाधके उत तद्बाध्ये इति । तदर्थं श्रुतिलिङ्गे निरवकाशे, लिङ्गप्रकरणे तु सावकाशे उत विपरीतमिति । वाक्यगः सर्वशब्दः किं सङ्कुचितार्थ उत चराचररूपाशेषार्थक इति । वाक्यं किं प्रसिद्धार्थे शब्दान्वयाख्यापिकमुताप्रसिद्धार्थे योगोक्त्या ''तत्तदत्तुमध्रियत'' इति प्रतिज्ञाते सर्वात्तृत्वे हेतुपरमिति । तदर्थमदितिश्रुत्यदितित्वलिङ्गे लोकप्रसिद्धादितिस्वरूपत्वरूपाभ्याम् अदितिभिन्ने विष्णावनवकाशे उत वैदिकप्रसिद्धिक्रियास्वरूपत्वरूपाभ्यां सावकाशे । तदर्थं तयोर्निरवकाशत्वे प्रकरणस्यानन्यपरत्वेन तद्विरोधो न प्राप्नोत्युत तस्य विष्णुपरत्वेन तद्विरोधः प्राप्नोतीति । तदर्थमत्र प्रकरणे 'नैवेह किञ्चन' इत्यादिनोक्तं प्रलयावस्थानाप्सम्भवसंवत्सरसृष्टिकर्तृत्वादिक-

(भावबोधः)

मन्यस्य सम्भवत्युत विष्णोरेवेति । तदर्थं तस्य विष्णुमात्रनिष्ठत्वे प्रमाणं नास्त्युतास्तीति । **उक्तन्याया-दिति** । न चान्तराधिकरणविषयवाक्ये सवित्रादिशब्दवददितिशब्दस्याभावात् तत्रादितिशब्दस्य समन्वयोऽ-सिद्ध इति वाच्यं; तत्र श्रुतेन्द्रादिशब्दानामधिदैवगतसकलशब्दोपलक्षकत्वाङ्गीकारेणास्यापि शब्दस्य तन्न्यायविषयत्वादिति भावः ।

**अदितित्वलिङ्गादिति** ।। ननु कथमेतल्लिङ्गमिति चेत्, उच्यते— अत्रादितेरदितित्वमिति हि श्रूयते । 'त्व'प्रत्ययश्च जातेर्वाचकः । यथा पृथिवीत्वं गोत्वमित्यादौ । तदसम्भवे स्वरूपस्यैव । यथाकाशत्वं चन्द्रत्वमित्यादौ । न चादितित्वं नाम जातिः सम्भवति । व्यक्तेरभावात् । ततोऽदितित्व-मदितेः स्वरूपमेव न चान्यदिति स्वरूपभूतमदितित्वमीश्वरस्य न भवति । अत्यन्तभिन्नत्वादित्यर्थः । तथा च निरवकाशैतल्लिङ्गसाहचर्याददितिश्रुतिरपि निरवकाशेति न विष्णुविषयेति भावः । अनेन 'सन्दिग्धा श्रुतिर्लिङ्गं चादितिशब्दोऽदितित्वं च' इति न्यायविवरणं व्याख्यातं भवति । **इति योजनाया-मस्ति चोद्यावकाश इति** । यद्यपि 'स यद्यदेव' इत्यत्र 'स' इत्यस्य संवत्सराख्यचतुर्मुखपरत्वमेव बृहदारण्यकभाष्य उक्तम् ।।

"यद्यत् ब्रह्मासृजत् पूर्वं तत्तदत्ति जनार्दनः ।।"

इति स्मृतेः । उत्तरत्र 'सोऽकामयत, भूयसा यज्ञेन भूमो यजेयेति' इत्यादौ चतुर्मुखपरत्वदर्शनाच्च । पूर्वत्रापि 'स तया वाचा तेनात्मना' इति प्रथमान्तोक्तमृत्युतोऽपि तृतीयान्तोक्तसंवत्सरस्य व्यवधानेन प्रकृतत्वाच्च । संवत्सरसृष्टमत्तुमेव मृत्योः संवत्सरादनानिवृत्ततया संवत्सरस्यैव स्रष्टृत्वोचितत्वाच्च । कर्तुरपि संवत्सरस्य भगवत्स्वातन्त्र्यविवक्षया 'तेन' इति करणत्वेन निर्दिष्टस्यापि 'स' इति कर्तृत्वेन निर्देशोपपत्तेश्च । तथापि समानविभक्तिकत्वं परामर्शे तन्त्रमिति भ्रमेण स इत्यनेन आदित्याख्यमृत्योरेव परामार्श इति पूर्वपक्षे पुंल्लिङ्गानुपपत्तिचोद्यावकाशोऽस्त्येवेति भावः । अत एव योजनायामित्युक्तम् । अल्पस्य वा न वेत्येतद्विरुद्धमित्यतो व्याचष्टे । **अस्वातन्त्र्येणाल्पस्येति** । अनेन निखिलस्यैक एवेत्यत्र स्वतन्त्र एवेत्यर्थ इति सूचितं भवति । य एक इत्यस्यामिदंशब्दस्य द्वितीयबभूवशब्देनान्वयं साम्पराय-शब्दस्य मुक्तिप्रलयोभयार्थत्वमभिप्रेत्यैकः पुरस्तादिति वाक्यं व्याचष्टे । एक इत्यादिना । **अदितिशब्दवाच्यत्वमिति** । भावे हि 'त्व'प्रत्ययः स्मर्यते । तद्धि भावशब्दप्रवृत्तिनिमित्तं; तच्च कचिज्जातिः, कचित् क्रिया, कचित् गुणः, कचित् द्रव्यम्, कचित् स्वरूपम् । तत्र यत् सर्वात्तृत्वं तददितित्वमदितिशब्दप्रवृत्तिनिमित्तमिति क्रियाशब्दत्वमस्योच्यते । अत एव श्रुतिः सर्वमत्तीति ।

(भाववोधः)

क्रियाकर्तृत्वस्य प्रवृत्तिनिमित्तत्वं विधत्ते । एवञ्चादितिशब्दवाच्यत्वमदितित्वं न त्वदितिस्वरूपत्वम् । अदितिशब्दवाच्यत्वं चादितिभिन्नस्यापि विष्णोरदनक्रियाकर्तृत्वेनापि सम्भवतीत्यदितित्वलिङ्गस्य सावकाशत्वादिति भावः ।

## भावदीपः

ॐ अत्ता चराचरग्रहणात् ॐ ॥ प्रतीयत इत्यन्तं भाष्यं सङ्गतिपरत्वेन व्याचष्टे ॥ **जन्माद्यस्येति** ॥ तत्रेत्यस्यार्थः तन्मध्यपतितेति ॥ **अपरपर्यायेति** ॥ ''अद्यतेऽत्ति च भूतानि'' । ''स सर्गकाले तु करोति सर्वं संहारकाले तु तदत्ति भूय'' इत्यादेः विष्णोः संहर्तृत्वस्योर्णनाभ्यादिवदेवात्तृत्वरूपत्वादिति भावः । एतच्च पूर्वाक्षेपलाभायोक्तम् । अन्यथाऽतृत्वस्यान्यनिष्ठत्वे जन्मादिसूत्रोक्तसंहर्तृत्वरूपलक्षणाक्षेपो न स्यादिति भावः ॥ **श्रूयत इति** । तृतीयाध्याये । आदद्येति शेषोक्तिः । अभक्षयच्चेत्यर्थः । तत्र हेतुत्वेन श्रुतिशेषं योजयति ॥ **कुत इति** ॥ सेति शेषः । तदर्थः सर्वात्त्रीति । तदेव सर्वात्तृत्वमेवादितित्व-निमित्तम् अदितिपदवाच्यत्वे निमित्तमित्यर्थः । अन्यथा सर्वात्तृत्वाभावे तत् अदितिपदवाच्यत्वम् अदितिर्देवतामयीत्यादौ न स्यात् । अस्ति च तत् । अतोऽदितिर्देवतामयीत्यादौ अदितिपदवाच्यत्वमेव सर्वात्तृत्वे हेतुरित्यर्थः । इति श्रूयते इत्यन्वयः । तेन भाष्ये इतिशब्दानन्तरं श्रूयत इति तच्चेति शेष इति दर्शितम् । अदितेः प्रतीयत इत्यस्य तात्पर्यमाह ॥ **तच्च यदेति** ॥ उक्तमित्यन्तस्य तात्पर्यं प्रागुक्तेति ॥ **अतिव्याप्तीति** ॥ विष्णोरिवान्यस्यापि असङ्कुचितसर्वात्तृत्वस्य कालभेदेन वाच्यत्वादित्यर्थः । भाष्येऽत्तृत्वमदितेरिति प्रतिज्ञांशमनुवदति ॥ **अदितेरेव तदत्तृत्वमिति** ॥ प्रतीयत इत्यत्र हेत्वाकाङ्क्षायां सन्दिग्धा श्रुतिर्लिङ्गं चादितिशब्दोऽदितित्वं चेति न्यायविवरणोक्तमाह ॥ **तददितेरितीति** ॥ सन्दिग्धपदोक्तं सावकाशत्वं श्रुतेराशङ्क्य लिङ्गेनोज्जीवयति ॥ **न चेति** ॥ **उक्तेति** ॥ आधिदैविकसर्वशब्दसमन्वयोक्तिपरान्तर्नयोक्तन्यायादित्यर्थः । तत्र सर्वदेवगतशब्दानां महायोगविद्वद्रूढिभ्यां हरौ मुख्यत्वस्योक्तत्वादिति भावः । लिङ्गस्य निरवकाशत्वमाह ॥ **न हीति** ॥ अदितित्वस्यादित्य-साधारणधर्मस्यादितिस्वभावत्वात् । तद्भिन्नस्य विष्णोरनश्नन्निति श्रुतेरत्तृत्वस्यायोगादित्यर्थः । उक्तमित्यन्तस्य तात्पर्यमाह ॥ **अत इति** ॥ विष्णुभिन्नस्यैवात्तृत्वादिति भावः । भाष्यस्थादिपदार्थमाह ॥ **सोऽहमिति** ॥ छान्दोग्ये तृतीयाध्याये दिङ्नामकचतुर्दिक्षुस्थितभगवद्बाहूनामित्यर्थः । सोऽहं वत्सं ततो जातं वायुं मुख्यप्राणं वेद जानामीति लक्ष्मीवाक्यम् । तद्भाष्योक्तमेव वचनं पठति ॥ **यदाहुरिति** ॥ यद्यद्ब्रह्माऽसृजदिति बृहद्भाष्यदिशा शङ्कते ॥ **नन्विति** ॥ **इति योजनायामिति** ॥ परामर्शे

(भावदीपः)

समानविभक्त्यन्तपदेन प्रकृतत्वं तन्त्रमिति भ्रान्तस्य पूर्वपक्षिणो योजनायामित्यर्थः । मृत्युनैवेदमावृतमासीत् अशनाया हि मृत्युरिति पूर्वत्र मृत्युपदस्यापि अदित्यां प्रयोगे पुल्लिङ्गसमाधानमेवमेव ध्येयमिति भावेन प्रागदित्याख्यमृत्युरित्युक्तम् ॥ भाष्येऽनुक्तेः स्वयमाह ॥ **विष्णुरेवेति** ॥ तत्त्वित्यनुवृत्त-स्यार्थोऽयम् ॥ **अस्येति** ॥ सर्वस्येति व्याख्यानस्य । अल्पस्य वा न वेति व्याहृतमत आह ॥ **अस्वातन्त्र्येणेति** ॥ **अस्येति** ॥ इदंपदस्य विपरिणामेनात्राप्यन्वयः । क्वचित्तु अथ यश्च भुवनस्येति पाठः । य इत्यनुवृत्तिः । साम्पराये मुक्तिप्रलययोः । स्पष्टार्थत्वाद्भाष्ये स्मृतेः पूर्वमुक्तिः । एतेन सर्वमत्तीति श्रुतं सर्वात्तृत्वलिङ्गं हरेरन्यत्रानवकाशमिति दर्शितम् । सन्दिग्धश्रुतिलिङ्गाभ्यां निश्चित-लिङ्गप्रकरणयोरेव बलवत्त्वमिति न्यायविवरणवाक्यं भाष्ये सङ्गमयितुं तद्व्यावर्त्यशङ्कामाह ॥ **न चेति** ॥ **विष्णावपीति** ॥ या प्राणेन संविशत्यदितिर्देवतायमीति काठकादौ प्रयोगादिति भावः । अदिति-शब्दवाच्यत्वमदितिशब्दप्रवृत्तिनिमित्तम् अदनकर्तृत्वरूपमदितित्वमिहाभिप्रेतं तद्विष्णावपि युक्तम् । ''स्रष्टा पाता तथैवात्ता'' इति स्मृतेः । अनशनश्रुतिगतेस्तूत्तरनये वक्ष्यमाणत्वादिति भावः ॥ ९ ॥

## अभिनवचन्द्रिका

**कस्यचित् श्रूयत इति** ॥ जन्माधिकरणे (१-१-२) विषयवाक्योक्तजगज्जन्मादिकारणत्वान्तर्गत-संहर्तृत्वापरपर्यायवाच्यात्तृत्वस्य, एतदधिकरणप्रतिपाद्याऽदितिनिष्ठतया प्रतीतिरेव पूर्वाधिकरणतच्छ्रुतिभ्यां सङ्गतिरिति भावः । ननु– 'अत्तृत्वं कस्यचित् श्रूयत' इत्ययुक्तम् । अत्तृत्वाश्रवणादित्यतः श्रुतिं व्याचष्टे– **सोऽदितिरिति** ॥ यद्यपि स मृत्युरिति वक्तव्यम्, तस्यैव प्रकृतत्वात्, तथापि 'मृत्युरेवाऽदिति'रिति मनसि कृत्वा सोऽदितिरित्युक्तम् । यद्यपि– 'यद्यद्ब्रह्माऽसृजत्पूर्वं तत्तदत्ति जनार्दन' इति प्रमाणपर्यालोचनया स इति पदं संवत्सरपरम्, तथापि– 'स तया वाचा तेनाऽऽत्मनेदं सर्वमसृजते'(बृ.३-२-५)ति तच्छब्देन मृत्योः प्रकृतत्वात्, अत्रापि तस्य परामर्श इति पूर्वपक्षी मन्यत इति द्रष्टव्यम् । 'आदद्ये'ति शेषोक्तिः । अदनं कुतोऽभ्युपगम्यत इति पृच्छति– **कुतः सर्वात्त्री सेति** ॥ उत्तरमाह– **सर्वमत्तीति यदिति** ॥ सर्वमत्तीति यत् तदेवाऽदितेः अदितित्वे अदितिशब्दवाच्यत्वे निमित्तम् । अत्तृत्वाऽनङ्गीकारे बाधकमाह – **अन्यथेति** ॥ अत्तृत्वानङ्गीकारे अदितिशब्दवाच्यत्वं न स्यादिति भावः । **अतिव्याप्तिप्रसङ्गादिति** ॥ अतिव्याप्तिबुद्धिप्रसङ्गादित्यर्थः । एतेनाऽत्तृत्वस्य हरेरितरगामित्वस्यैवाऽतिव्याप्तित्वात् 'हरेरितरस्य स्यात् तदाऽतिव्याप्ति-प्रसङ्गा'दित्ययुक्तमिति परास्तम् । अतिव्याप्ति बुद्ध्यापादनस्यैव इहाभिमतत्वात् । **किं विष्णोरिति** ॥

(अभिनवचन्द्रिका)

यद्यपि प्राक् लक्षणस्याऽतिव्याप्तिप्रसङ्गादित्यभिधानात् किं विष्णोरेव उताऽन्यस्यापि वेति सन्देहो वक्तव्यः, तथापि सूत्रस्याऽनेकसंशयनिरासकत्वद्योतनाय 'विष्णोरन्यस्य वे'ति संशयो दर्शितः । **तददितेरिति** ॥ बृहदारण्यकोक्तमत्तृत्वम्, अदितेरेवेति भावः । **उक्तन्यायादिति** ॥ योगेन सावकाशत्वरूपादुक्तन्यायादित्यर्थः । **अदितित्वलिङ्गादिति** ॥ 'तददिते;' इति अदितिशब्दोक्तादितित्वरूपधर्मश्रवणादित्यर्थः । न तु 'अदितेरदितित्व'मिति वाक्यान्तर्गताऽदितित्वशब्दोक्ताऽदितित्वलिङ्गादित्यर्थः । एतेन श्रुत्यैव ''सर्वं वा अत्तीति यत् तदेवाऽदितेः अदितित्वम्'' इति सर्वाऽत्तृत्वाऽदितित्वयोरैक्याभिधानात् विष्णोरेव सर्वात्तृत्वमिति वदन्तं प्रति सर्वात्तृत्वरूपाऽदितित्वलिङ्गेन अदितिश्रुतेः विष्णुविषयत्वाऽभावसाधनमयुक्तमिति परास्तम् । सर्वात्तृत्वात्मकाऽदितित्वभिन्नेन अदितिशब्दोक्तेन रूढिप्रवृत्तिनिमित्तेनाऽदितित्वरूपधर्मेण श्रुतेः विष्णुविषयत्वाभावसाधनात् । **न हीति** ॥ यथा दुःखिबद्धादिभिन्नस्य हरेः स्वातन्त्र्यादिना प्रवृत्तिनिमित्तेन तच्छब्दवाच्यत्वेऽपि यथा दुःखादिकं न सम्भवति तथा रूढिविषयादितिभिन्नस्य रूढिप्रवृत्तिनिमित्तमदितित्वं न सम्भवतीत्यर्थः । स्त्रियः पुल्लिङ्गशब्दवाच्यत्वमेव नेति मन्वानः शङ्कते – **नन्वेतदत्तृत्वमिति** ॥ **तथाऽत्रापीति** ॥ यद्यपि – 'यद्यद्ब्रह्माऽसृजत्पूर्व'मिति उदाहृतप्रमाणानुसारेण स इति तच्छब्दः संवत्सरपरः । स्त्रीपु च पुल्लिङ्गाः शब्दाः बहवो दृश्यन्त इति पुल्लिङ्गानुपपत्तेरभावात् समाधानं कर्तव्यम् तथापि अङ्गीकारवादेन समाहितमिति द्रष्टव्यम् । अत्र टीकायां पुंवच्छक्तिमती क्वचि'दिति प्रमाणोदाहरणानन्तरं 'नन्वि'त्यारभ्य 'अस्ति चोद्यावकाश' इत्यन्तानि न टीकावाक्यानि । अपि तु व्याख्यातृवाक्यानि । अवश्यं चैतदेवं विज्ञेयम् । मृत्योः प्रथमतया प्रकृतत्वदिति मृत्योः प्रकृतत्वाभिधानवैयर्थ्यात् । 'स' इत्यनेन संवत्सरपरामर्शे पुल्लिङ्गचोद्यानवकाशवत्, मृत्युपरामर्शपक्षेऽपि चोद्यानवकाशसाम्यात् । स मृत्युः यद्यदेवाऽसृजत्तत्तदत्तुमध्रियते'(बृ.३-२-५)ति योजनासम्भवात् । तथा 'सोऽदितिः संवत्सरेणे'त्युत्तरवाक्यस्य अनुपपन्नार्थत्वात् । न हि 'सः संवत्सरेण यद्यदसृजते'ति योजनाप्रयुक्तः चोद्यावकाशः । येनेदं वाक्यं उपपन्नार्थं प्रतीमः किं तु – स इति पुल्लिङ्गस्याऽदितिपरत्वाभ्युपगमप्रयुक्तः । किं च– यदीदं टीकावाक्यं स्यात् 'अस्ति चोद्यावकाश' इत्यनन्तरं 'ततश्च तन्निवृत्तये भाष्यवाक्यं चेदमर्थव'दिति दृश्येत । न च दृश्यते येनेदं सर्वं वाक्यं टीकावाक्यमिति प्रतीमः । नन्वत्र सूत्रे चराऽचरग्रहणस्योक्तं हेतुत्वं न युज्यते । 'देवदत्तोऽन्नमश्नाति पश्यत्येव चराचर' मित्यादौ चराचरग्रहणेऽपि अत्तुर्विष्णुत्वाभावेन व्यभिचारात् । किं च विष्णुः चराचराऽत्तृत्वादित्यनुमानपर्यवसाने साध्यावैशिष्ट्यमित्यतः सूत्रं योजयति– **विष्णुरेवात्ताऽत्रोच्यत इति** ॥ **चराचरस्येतीति** ॥ 'श्रुत्यनुसारेणे' त्यतः परं 'व्याख्यानाय प्रवृत्तानी'ति

(अभिनवचन्द्रिका)

शेषः । ततश्चैवं योजना– 'स यद्यदेवासृजते'ति श्रुत्यनुसारेण सर्वपदव्याख्यानाय प्रवृत्तानि सूत्राक्षराणि चराचरेत्यनूद्य, सर्वस्येति व्याख्यानं व्याख्येयप्रदर्शनं कृतमिति । एतेन चराचरेत्यस्य सर्वस्येति व्याख्यानं निष्फलं, सूत्रस्य श्रुतिविसंवादशङ्कानिरासकत्वाभावात् । श्रुतौ चराचरपदस्य सर्वस्येत्यव्याख्याततत्वात् श्रुत्यनुसारेणेत्यप्यनुपपन्नमिति परास्तम् । श्रौतसर्वपदस्य व्याख्यानं सौत्रचराचरपदमित्यङ्गीकारात् । अत्र 'सूत्रपदमनूद्ये'ति वक्तव्ये 'सूत्राक्षराणी'ति वचनं, सूत्रे चराचरस्येति षष्ट्यन्तस्याऽश्रवणात् अन्यथाऽनुवादः कृत इति शङ्कानिरासाय । नेदं सूत्रपदानुवादरूपं येन विसंवादशङ्का स्यात्, किं तु– प्रातिपदिकैकदेशानुवाद इति भावः । **अदितिश्रुतेरिति** ॥ अदितिशब्दरूढेरपि 'यो देवानां नामधे'ति श्रुतिबलेन विष्णावपि सावकाशत्वादित्यर्थः । **लिङ्गस्य चेति** ॥ चशब्दोऽप्यर्थे । लिङ्गस्यापि रूढिप्रवृत्ति-निमित्तस्याऽदितित्वलिङ्गस्यापि सावकाशत्वादित्यन्वयः । कथं सावकाशत्वमित्यत उक्तम्– **अदिति-शब्दवाच्यत्वमदितित्वमितीति** ॥ इतिशब्दो हेतौ । यस्मात् अदितिशब्दवाच्यत्वं अदितिशब्दरूढि-विषयत्वम्, अदितित्वप्रयुक्तम्, अतः सावकाशत्वमिति भावः । इदमुक्तं भवति – अस्ति तावत्परमेश्वर-स्याऽदितिशब्दरूढिविषयता । महायोगसद्भावात् । महायोगस्य रूढ्यविनाभावात् । न चाऽदितिशब्द-रूढिविषयत्वं अदितित्वमन्तरा सम्भवतीति अदितिशब्दरूढप्रवृत्तिनिमित्तमदितित्वमपि विष्णावस्तीति ।

## वाक्यार्थमुक्तावली

ॐ अत्ता चराचरग्रहणात् ॐ ॥ **श्रुत्यादिसङ्गतिमिति** ॥ अन्यवहितसङ्गतिस्तु पूर्वाधिकरणे सत्तामभिधायात्र तत्सापेक्षक्रियानिरूपणात् । तदुक्तं ''सर्वगत्वं तु प्रथमं प्रविचार्यते । एतद्भावाभिधं लिङ्गं क्रियालिङ्गे ततः परम्'' इत्यनुव्याख्याने । यद्वा तत्र तत्र स्थितो विष्णुः तत्तच्छक्तिप्रबोधक इत्यनुव्याख्यानानुसारेण प्रथमं स्थितिकर्तृत्वं विचार्यानन्तरं संहर्तृत्वविचारात् । यद्वा न्यायविवरणटीकारीत्या भवत्वादित्यादिश्रुतीनां विष्णाववकाश इति पूर्वाधिकरणवैषम्येन पूर्वपक्षोत्थानादिति द्रष्टव्यम् । प्रागनुक्तत्वेनासिद्धस्यादनकर्तृत्वस्य सर्वं वा अत्तीति कथमनुवाद इत्यत आह ॥ **आदद्येति** ॥ अभक्ष-यद्येत्यर्थः । तदेव सर्वात्तृत्वमेव । अदितिशब्दप्रवृत्तिनिमित्तम् अदितिपदवाच्यत्वे निमित्तमित्यर्थः । अन्यथा सर्वात्तृत्वाभावे तत् अदितिपदवाच्यत्वम् अदितिर्देवतामयी इत्यादौ न स्यादित्यर्थः । अस्ति च तदतस्तद्वाक्येऽदितिपदवाच्यत्वमेव सर्वात्तृत्वे हेतुरित्यर्थः । **विष्णोरिति** ॥ अत्रात्तृत्वं किमदितिश्रुतेः, तन्निरवकाशत्वोपपादकादितित्वलिङ्गाच्च किं देवमातुरुत चराचरात्तृत्वलिङ्गप्रकरणाभ्यां विष्णोरिति चिन्ता । तदर्थं श्रुतिलिङ्गयोर्निरवकाशत्वं लिङ्गप्रकरणयोः सावकाशत्वम् उत वैपरीत्यं चेति ॥ नन्वन्तःस्थत्वाधि-

(वाक्यार्थमुक्तावली)

करणेऽधिदैवसकलशब्दसमन्वयस्योक्तत्वात् तन्न्यायेनादितिश्रुतेरपि सावकाशत्वमिति गतार्थतामाशङ्क्याह ॥ **न चेति** ॥ **आदितित्वलिङ्गादिति** ॥ अयं भावः । अदितित्वमिति श्रूयते । किं तददितित्वं सर्वं वा अत्तीति निर्वचनबलात् अत्तृत्वमेव वा उत जातिः अथाकाशत्वचन्द्रत्वादिवत् उपाधिरूपः स्वरूपधर्मः? आद्यं दूषयति ॥ **न हीति** ॥ अदितेश्चेज्जीवत्वात् पिप्पलं स्वाद्वत्तीत्युक्तात्तृत्वं युज्यते । अदितिभिन्नस्य त्वनश्नन्नित्यादिश्रुतिविरोधात् नात्तृत्वरूपमदितित्वं सम्भवतीत्यर्थः । न द्वितीयः । आदितेरेकत्वेन व्यक्त्यभेदरूपजातिबाधकवशात् जातित्वानुपपत्तेः । अङ्गीकृत्याह ॥ **न हीति** ॥ घटभिन्ने घटत्वाभाववत् अदितिभिन्ने नादितित्वजातिः सम्भवतीत्यर्थः । तृतीयं दूषयति ॥ **न हीति** ॥ अदितिस्वरूपधर्मस्यादितिभिन्ने नावकाश इत्यर्थः । न चादितिशब्दो भगवत्पर इति अनुपपत्त्यभावः । अदितित्वेनादितिशब्दस्य तत्र विधित्सितत्वेनानुवादानुपपत्तेः । अन्यथाऽन्योन्याश्रयप्रसङ्गादिति भावः ॥ **प्रकृतिसंवत्सरेति** ॥ यद्यद् ब्रह्माऽसृजत्पूर्वं तत्तदत्ति जनार्दन इति बृहद्भाष्यरीत्या इत्यर्थः । इति **योजनायामिति** ॥ स यद्यदेवासृजतेत्यत्र स तया वाचा तेनात्मनेत्यनुसारेण सोऽदितिः तेन संवत्सरेणेत्यनुवृत्या योजनायामित्यर्थः । बृहद्भाष्यवाक्यं तु स्वतन्त्रकर्तृभगवदपेक्षया करणत्वेन निर्दिष्टस्यापि तदधीनकर्तृत्वं चास्तीति भावेनानुवृत्तस्य तेनात्मनेत्यस्य यद्यत् ब्रह्मेति प्रथमान्तेनानुवादपरं न तु स इत्यर्थपरम् ।

भावबोधे तु पूर्वपक्षरीत्या टीकायामियमर्थोक्तिरिति उक्तम् । तन्त्वित्यनुवृत्तिमभिप्रेत्य सूत्राक्षरार्थमाह ॥ **विष्णुरेवेति** । अनुवृत्त्यनुसारेणात्तृत्व इति वक्तव्ये पुल्लिङ्गनिर्देशः स तया वाचा तेनात्मनेत्यादौ स इति पुल्लिङ्गेन प्रकृतमृत्युरेव निर्णयश्रुतावुच्यत इति ज्ञापनाय सर्वग्रहणादिति वक्तव्ये सूत्रे चराचरेत्युक्तिः सर्वशब्दस्यार्थसङ्कोचाभावसूचनार्था । व्याहृतिनिरासाय इतरेऽल्पस्य वा न वा इत्येतद्व्याचष्टे ॥ **स्वातन्त्र्येणेति** ॥ **अदितिशब्दवाच्यत्वमिति** ॥ अदितिशब्दवाच्यतावच्छेदकतत्प्रवृत्तिनिमित्तादनक्रियाकर्तृत्वमित्यर्थः । भावे हि त्वप्रत्ययः स्मर्यते । तद्धितभावश्च शब्दप्रवृत्तिनिमित्तम् । तच्च क्वचिज्जातिः क्वचित् क्रिया क्वचिद्गुणः क्वचिद्द्रव्यं क्वचित् स्वरूपम् । अयं च क्रियाशब्दः । श्रुत्यैव तथोक्तत्वात् । एवं चादितिशब्दवाच्यत्वम् अदितिभिन्नस्यापि विष्णोः अदनक्रियाकर्तृत्वेन सम्भवतीति अदितित्वलिङ्गस्य सावकाशत्वमनश्नन्निति श्रुतेर्गतिरत्र भविष्यतीति भावः ।

## तत्त्वसुबोधिनी

ॐ अत्ता चराचरग्रहणात् ॐ ॥ अत्र पूर्ववैषम्यप्रदर्शनेन पूर्वपक्षोत्थानात् अनन्तरसङ्गतिः ।

(तत्त्वसुबोधिनी)

विषयवाक्यार्थमाह । **सोऽदितिरिति** । प्रागनुक्तत्वेनासिद्धस्यादनकर्तृत्वस्य सर्वं वा अत्तीति कथमनुवाद इत्यत आह । **आदत्तेति** । **उक्तन्यायादिति** । अन्तराधिकरणोक्तन्यायादित्यर्थः । न चान्तराधिकरणविषयवाक्ये सवित्रादिशब्दवददितिशब्दस्याभावात् तत्रादितिशब्दस्य समन्वयोऽसिद्ध इति वाच्यम् । तत्र इन्द्रादिशब्दानां अधिदैवगतसकलशब्दोपलक्षितत्वाङ्गीकारेणास्यापि शब्दस्य तन्न्यायविषयत्वादिति भावः । ननु लिङ्गमपि सावकाशमत आह । **न ह्यदितिभिन्नस्येति** । अत्रादितेरदितित्वमिति श्रूयते । त्वप्रत्ययश्च जातेर्वाचकः । यथा पृथिवीत्वमिति । तदसम्भवे स्वरूपस्यैव । यथा आकाशत्वमिति । न चादितित्वं नाम जातिः सम्भवति । व्यक्तेरभेदात् । ततोऽदितित्वम् अदितेः स्वरूपमेव । न चादितिस्वरूपभूतम् अदितित्वम् ईश्वरस्य सम्भवति । अत्यन्तभिन्नत्वादित्यर्थः । तथा च निरवकाशैतल्लिङ्गसाहचर्याददितिश्रुतिरपि निरवकाशेति न विष्णुविषयेति भावः । ननु स तयेत्यत्रापि प्रथमया संवत्सरपरामर्शात् प्रकृतेऽपि तस्यैव परामर्श इत्यत आह । **तत्र विरिञ्चस्येति** । **इति योजनायामस्ति चोद्यावकाश इति** । यद्यपि स यद्यदेव इत्यत्र स इत्यस्य संवत्सराख्यचतुर्मुखपरत्वमेव बृहदारण्यकभाष्ये उक्तम् । यद्यद् ब्रह्मासृजत् पूर्वं तत्तदत्ति जनार्दन इति स्मृतेः । उत्तरत्र सोऽकामयत भूयसा यज्ञेन यजेयेत्यादौ चतुर्मुखपरत्वदर्शनाच्च । पूर्वत्रापि स तया वाचा तेनात्मनेति प्रथमान्तोक्तमृत्युतोऽपि तृतीयान्तोक्तसंवत्सरस्याव्यवधानेन प्रकृतत्वाच्च । संवत्सरसृष्टमत्तुमेव मृत्योः संवत्सरादनान्निवृत्ततया संवत्सरस्यैव स्रष्टृत्वस्यैवोचितत्वाच्च । कर्तुरपि संवत्सरस्य भगवत्स्वातन्त्र्यविवक्षया तेनेति करणत्वेन निर्दिष्टस्यापि स इति कर्तृत्वेन निर्देशोपपत्तेश्च । तथापि समानविभक्तिकत्वं परामर्शे तन्त्रमिति भ्रमेण स इत्यनेनादित्याख्यमृत्योरेव परामर्श इति पूर्वपक्षे पुल्लिङ्गानुपपत्तिचोद्यावकाशोऽस्त्येव । न च तथापि स ऐक्षत इत्यादौ पुल्लिङ्गेनैव तच्छब्देन मृत्युनेति मृत्युशब्देन च प्रस्तुततया गुरोः दाराः पूज्या इतिवत् पुल्लिङ्गोपपत्तिरिति वाच्यम् । दारादिशब्देषु पुल्लिङ्गस्त्रीलिङ्गादेः शब्दसाधुतैव । न त्वर्थसाधुता । न चार्थसाधुत्वे सम्भवति शब्दसाधुत्वमात्रं युक्तम् । एवं चादितेः पुल्लिङ्गो मृत्युशब्दोऽप्ययुक्तः । परमपुरुषे तु स्त्रीलिङ्गोऽप्यदितिशब्दः प्रकृत्यधिकरणन्यायेन युक्तः । तथा चास्ति चोद्यावकाशः । नन्वेवं व्याख्यानस्य किं प्रयोजनमत आह । **सूत्रस्येति** । अल्पस्य वा न वा इत्येतद्विरुद्धमित्यतो व्याचष्टे । **अस्वातन्त्र्येणाल्पस्येति** । अनेन निखिलस्यैक एवेत्यत्र स्वतन्त्र एवेत्यर्थः इति सूचितम् । यत इत्यस्यावृत्तिम् इदंशब्दस्य द्वितीयबभूवशब्देनान्वयं साम्परायशब्दस्य मुक्तिप्रलयोभयार्थत्वमभिप्रेत्य एकः पुरस्तादिति वाक्यं व्याचष्टे । एक इत्यादिना । **उक्तरीत्येति** । स्रष्टा पाता इत्यादिभाष्योक्तरीत्येत्यर्थः । तर्हि अदितिश्रुतेः का गतिरत आह ॥ **अदितिश्रुतेरिति** । लिङ्गस्यापि

(तत्त्वसुबोधिनी)

सावकाशत्वमाह ।। **लिङ्गस्य चेति** । **अदितिशब्दवाच्यत्वमिति** । भावे हि त्वप्रत्ययः स्मर्यते । तद्धि तद्धितभावश्च शब्दप्रवृत्तिनिमित्तम् । तच्च कचिज्जातिः कचित् क्रिया कचिद्गुणः कचिद्द्रव्यं कचित्स्वरूपम् । तत्र यत्सर्वात्तृत्वं तददिति त्वम् अदितिशब्दप्रवृत्तिनिमित्तमिति क्रियाशब्दत्वमस्योच्यते । अत एव श्रुतिः सर्वं वा अत्तीति । क्रियाकर्तृत्वस्य प्रवृत्तिनिमित्तत्वं विधत्ते । एवं चादितिशब्दवाच्यत्वमदितित्वं न तु अदितिस्वरूपत्वम् । अदितिशब्दवाच्यत्वं च अदितिभिन्नस्यापि विष्णोः अदनक्रियाकर्तृत्वेनापि सम्भवतीति अदितित्वलिङ्गस्य सावकाशत्वादिति भावः । ननु सैद्धान्तिकलिङ्गस्य निरवकाशत्वप्रयुक्त-प्राबल्यवत्पूर्वपक्षीयलिङ्गस्यापि बहुत्वप्रयुक्तप्राबल्यमस्तीति प्रविरोधः स्यादत आह । **सावकाशेति** ।

## वाक्यार्थविवरणम्

**अदितित्वलिङ्गादिति** ।। अदितिस्वरूपलिङ्गादित्यर्थः । एतदुपपादनं न्यायविवरणटीकातोऽव-गन्तव्यम् ।।

## वाक्यार्थमञ्जरी

अत्तुं भक्षणार्थम् । अध्रियत दधार । आदच्चेति शेषोक्तिः । अभक्षयदित्यर्थः । कुत इति प्रश्नोत्तरमाह ।। **सर्वमिति** ।। अदितित्वम् अदितिशब्दवाच्यत्वं हि यस्मादतः सा सर्वात्त्रीत्यर्थः । अन्यथा सर्वात्तृत्वाभावे तत् अदितित्वम् अदितेः देवमातुः । उक्तन्यायात् अन्तर्यामिपरत्वादिरूपात् । अदितित्वं अदितिस्वरूपत्वं त्वप्रत्ययस्य व्यक्त्यभेदेन जातिपरत्वायोगे आकाशत्वमित्यादाविव स्वरूप-परत्वस्यैव वक्तव्यत्वादिति भावः ।। **बाध इति** ।। वक्ष्यमाणरीत्या लिङ्गस्यापि सावकाशत्वादिति भावः । पुंशक्तिः पुरुषशक्तिः ।। **सोऽहमिति** ।। सोऽहं दिशा दिङ्नामकचतुर्दिगवस्थितभगवद्रूपाणां वत्सं पुत्रं वायुमेवमुक्तरीत्या वेदेति रमावाक्यम् । आहुः छान्दोग्यभाष्ये ।। **प्रकृतेति** ।। स संवत्सरोऽ-भवदिति संवत्सरशब्देन प्रकृतचतुर्मुखपरामर्शादित्यर्थः ।। तृतीयान्ततया तृतीयान्ततेनेतिशब्देन प्रथमान्तस इत्यनेन इति योजनायाम् ।। **अस्ति चोद्यावकाश इति** ।। यद्यपि बृहद्भाष्ये स यद्यदेवेत्यत्र स इत्यस्य संवत्सराख्यचतुर्मुखपरत्वमेवोक्तम् । तथापि समानविभक्तिकत्वं परामर्शे तन्त्रमिति भ्रमेण स इत्यनेनादित्याख्यमृत्योरेव परामर्श इति पूर्वपक्षे पुल्लिङ्गानुपपत्तिचोद्यावकाशोऽस्तीति भावः । अत एवेति योजनायामित्युक्तम् ।। ॐ अत्ता चराचरग्रहणात् ॐ ।। सर्वं वाऽत्तीत्यत्रोक्तोऽत्ता संहर्ता विष्णुरेव । नादितिः सर्वमिति चेतनाचेतनजातस्य भक्ष्यतया ग्रहणादभिधानादिति यावत् ।। **विसंवादेति** ।। श्रुतौ चराचरेत्यश्रवणादिति भावः । अस्य व्याख्यानस्य व्याहतिं परिहरति ।। **अस्वातन्त्र्येणेति** ।।

(वाक्यार्थमञ्जरी)

आयुरर्थे आयुष्यार्थम् । **उक्तरीत्येति** । स्रष्टा पातेति भाष्योक्तरीत्या । **सावकाशत्वादिति** । या प्राणेन संविशत्यदितिर्देवतामयीति तत्रापि प्रयोगादिति भावः ॥ **अदितिशब्दवाच्यत्वमिति** ॥ पाचकत्वमित्यादाविवादनक्रियाकर्तृत्वमेवादितित्वं तद्धितभावश्च शब्दप्रवृत्तिनिमित्तमिति भावः ॥

## विवृतिः

अत्र पूर्ववैषम्यप्रदर्शनेन पूर्वपक्षोद्धारादनन्तरसङ्गतिः ॥ विषयवाक्यार्थमाह ॥ **सोऽदितिरिति** ॥ प्रागनुक्तत्वेनासिद्धस्यादनकर्तृत्वस्य सर्वं वा अत्तीति कथमनुवाद इत्यत आह ॥ **आदच्चेति** ॥ **उक्तन्यायादिति** ॥ अन्तराधिकरणोक्तन्यायादित्यर्थः ॥ न चान्तराधिकरणविषयवाक्ये सवित्रादिशब्दवददितिशब्दस्याभावात्तत्रादितिशब्दस्य समन्वयोऽसिद्ध इति वाच्यम् ॥ तत्रेन्द्रादिशब्दानामधिदैवगतसकलशब्दोपलक्षणत्वाङ्गीकारेण अस्यापि शब्दस्य तन्न्यायविषयत्वादिति भावः ॥ ननु लिङ्गमपि सावकाशमत आह ॥ **न ह्यदितिभिन्नस्येति** ॥ अत्रादितेरदितित्वमिति श्रूयते त्वप्रत्ययश्च जातेर्वाचकः । यथा पृथिवीत्वम् । तदसम्भवे स्वरूपस्यैव । यथाऽकाशत्वम् ॥ न चादितित्वं नाम जातिः सम्भवति ॥ **व्यक्तेरभेदात्** ॥ ततोऽदितित्वमदितेः स्वरूपमेव ॥ न चादितिस्वरूपमदितित्वमीश्वरस्य सम्भवति ॥ अत्यन्तभिन्नत्वादित्यर्थः ॥ ननु स तयेत्यत्रापि प्रथमया संवत्सरपरामर्शात् प्रकृतेऽपि तस्यैव परामर्श इत्यत आह ॥ **तत्र विरिञ्चस्येति** ॥ **इति योजनायामस्ति चोद्यावकाश इति** ॥ यद्यपि स तयेत्यत्र स इत्यस्य संवत्सराख्यचतुर्मुखपरत्वमेव बृहदारण्यकभाष्य उक्तम् ॥ यद्यद् ब्रह्मासृजत्पूर्वं तत्तदत्ति जनार्दन इति स्मृतेः ॥ उत्तरत्र सोऽकामयत भूयसा यज्ञेन यजेयेत्यादौ चतुर्मुखपरत्वदर्शनाच्च ॥ पूर्वत्रापि स तया वाचा तेनात्मनेति प्रथमान्तोक्तमृत्युतोऽपि तृतीयान्तोक्तसंवत्सरस्याव्यवधानेन प्रकृतत्वाच्च । संवत्सरसृष्टमत्तुमेव मृत्योः संवत्सरादनान्निवृत्ततया संवत्सरस्यैव स्रष्टृत्वस्यैवोचितत्वाच्च । कर्तुरपि संवत्सरस्य भगवत्स्वातन्त्र्यविवक्षया तेनेति करणत्वेन निर्दिष्टस्यापि स इति कर्तृत्वेन निर्देशोपपत्तेश्च ॥ तथापि समानविभक्तिकत्वं परामर्शे तन्त्रमिति भ्रमेण स इत्यनेनादित्याख्यमृत्योरेव परामर्श इति पूर्वपक्षे पुल्लिङ्गानुपपत्तिचोद्यावकाशोऽस्त्येव । न च तथापि स ऐक्षत इत्यादौ पुल्लिङ्गेनैव तच्छब्देन मृत्युनेति मृत्युशब्देन च प्रस्तुततया गुरोर्दाराः पूज्या इतिवत्पुल्लिङ्गनिर्देशोपपत्तिरिति वाच्यम् ॥ दारादिशब्देषु पुल्लिङ्गस्त्रीलिङ्गादेः शब्दासाधुतैव न त्वर्थसाधुता ॥ न चार्थसाधुत्वे सम्भवति शब्दसाधुत्वमात्रं युक्तम् ॥ एवं चादितौ पुल्लिङ्गो मृत्युशब्दोऽप्ययुक्तः ॥ परमपुरुषे तु स्त्रीलिङ्गोऽप्यदितिशब्दः प्रकृत्यधिकरणन्यायेन युक्तः ॥ तथा चास्ति चोद्यावकाशः ॥ नन्वेवं व्याख्यानस्य किं प्रयोजनमत आह ॥

(विवृतिः)

**सूत्रस्येति** ॥ अल्पस्य वा न वेत्येतद्विरुद्धमित्यतो व्याचष्टे ॥ **अस्वातन्त्र्येणाल्पस्येति** ॥ अनेन निखिलस्यैक एवेत्यर्थ स्वतन्त्र एवेत्यत्र इति सूचितम् ॥ यत इत्यस्यावृत्तिम् इदंशब्दस्य द्वितीयबभूवशब्देनान्वयं साम्परायशब्दस्य मुक्तिप्रलयोभयार्थत्वमभिप्रेत्यैकः पुरस्तादिति वाक्यं व्याचष्टे ॥ **य एक इत्यादिना** ॥ **उक्तरीत्येति** ॥ स्रष्टा पातेत्यादिभाष्योक्तरीत्येत्यर्थः ॥ तर्हि अदितिश्रुतेः का गतिरत आह ॥ **अदितिश्रुतेरिति** ॥ लिङ्गस्यापि सावकाशत्वमत आह ॥ **लिङ्गस्य चेति** ॥ **अदिति-शब्दवाच्यत्वमिति** । भावे हि त्वप्रत्ययः स्मर्यते ॥ तद्धितभावश्च शब्दप्रवृत्तिनिमित्तम् ॥ तच्च क्वचिज्जातिः, क्वचित्क्रिया, क्वचिद्गुणः, क्वचिद्द्रव्यं, क्वचित्स्वरूपं, तत्र यत्सर्वातृत्त्वं तददितित्वमदिति-शब्दप्रवृत्तिनिमित्तमिति क्रियाशब्दत्वमस्योच्यते । अत एव श्रुतिः सर्वं वा अत्तीति । क्रियाकर्तृत्वस्य प्रवृत्तिनिमित्तत्वं विधत्ते ॥ एवं चादितिशब्दवाच्यत्वमदितित्वं न त्वदितिस्वरूपत्वम्, अदितिशब्दवाच्यत्वं चादितिभिन्नस्यापि विष्णोरदनक्रियाकर्तृत्वेनापि सम्भवतीति अदितित्वलिङ्गस्य सावकाशत्वादिति भावः ॥ ननु भवदीयलिङ्गस्य निरवकाशत्वप्रयुक्तं प्राबल्यं, मदीयस्य तु बहुत्वप्रयुक्तं प्राबल्यमिति प्रतिरोधः स्यादत आह ॥ **सावकाशेति** ॥

## सूत्रभाष्यम्

**॥ ॐ प्रकरणाच्च ॐ ॥ १० ॥**

अप्संवत्सरसृष्ट्यादिना तत्प्रकरणाच्च ।

'नेहाऽऽसीत्किञ्चनाप्यादौ मृत्युरासीद्धरिस्तदा
सोऽत्मनो मनसाऽस्राक्षीदप एव जनार्दनः ॥

शयानस्तासु भगवान्निर्ममेऽण्डं महत्तरम् ।
तत्र संवत्सरं नाम ब्रह्माणमसृजत्प्रभुः ॥

तमत्तुं व्याददादास्यं तदाऽसौ विरुराव ह ॥
अथ तं कृपया विष्णुः सृष्टिकर्मण्ययोजयत् ।
सोऽसृजद्भुवनं विश्वमद्यार्थं हरये विभुः ॥ इति ब्रह्मवैवर्ते ॥ १० ॥

## सत्तर्कदीपावली

हेत्वन्तरेणोक्तार्थं साधयत्सूत्रमुपन्यस्य व्याचष्टे ॥ प्रकरणादित्यादिना ॥ विष्णोरेव प्रकृतत्वात्स यद्यदेवेत्यादिना स एवादनाददितिशब्दोक्तः सर्वात्तोच्यते । न प्रसिद्धादिति । यो मृत्युर्मृत्युत्वेन प्रसिद्धो विष्णुस्तत्परमेवेदं प्रकरणमित्यत्र पुराणवाक्यान्युदाहरति । नेहासीदिति । (१।२।२)

## तत्त्वप्रदीपिका

प्रकरणाच्च । ''नैवेह किंचनाग्र आसीत् मृत्युनैवेदमावृतमासीदि''त्यारभ्य ''तस्यार्चत आपोऽजायन्त तद्यदपां शर आसीत् तत्समहन्यत सा पृथिव्यभवत् तद्यद्रेत आसीत्संवत्सरोऽभवत्तज्जातमभिव्याददात् स भाणमकरोत्सैव वागभवदि''ति अप्संवत्सरसृष्ट्यादिनोच्यमानेन तत्प्रकरणत्वावगमाच्च विष्णुरेवात्तेति निश्चीयते ॥

## तत्त्वप्रकाशिका

एवं निरवकाशलिङ्गबलात्सावकाशश्रुतिलिङ्गयोर्बाधोपपत्तेर्विष्णुरेवात्तेति सिद्ध्यति किं पुनर्निरवकाशप्रकरणेन चेत्यर्थं प्रतिपादयत्सूत्रं पठित्वा व्याचष्टे ॥ प्रकरणाच्चेति ॥ 'नैवेह किंचनाग्र आसीन्मृत्युनैवेदमावृतमासीदशनायया अशनाया हि मृत्युस्तन्मनोऽकुरुतात्मन्वी स्यामिति । सोऽर्चन्नचरत्तस्यार्चत आपोऽजायन्त । तद्यदपां शर आसीत्तत्समहन्यत । सा पृथिव्यभवत्तस्यामश्राम्यत्सोऽकामयत । द्वितीयो म आत्मा जायेतेति । स मनसा वाचा मिथुनं समभवदशनाया मृत्युस्तद्यद्रेत आसीत्स संवत्सरोऽभवत्तं जातमभिव्याददात्स भाणमकरोत्सैव वागभवत्स ऐक्षत यदि ह् वा इममभिमंस्ये कनीयोऽन्नं करिष्य इति स तया वाचा तेनात्मनेदं सर्वमसृजत' इत्यस्मिन्प्रकरणे मृत्युमात्रावशेषाप्संवत्सरसृष्टिसंवत्सरादनोद्यमादिश्रवणादेतत्प्रकरणस्य वैष्णवत्वं ज्ञायते । अतो निरवकाशप्रकरणबलाच्च विष्णुरेवात्तेत्याशयः । नन्वप्संवत्सरसृष्ट्यादिनात्रोच्यमानेनापि कथमस्य विष्णुप्रकरणत्वनिश्चय इत्यतोऽप्संवत्सरसृष्ट्यादेर्विष्णुलिङ्गत्वादिति भावेन तत्र स्मृतिमाह ॥ नेहासीदिति ॥ तस्माद्विष्णोरेवेदमत्तृत्वमिति युक्तमेव लक्षणमिति स्थितम् ॥ १० ॥ अ.२॥

## भावबोधः

**किं पुनर्निरवकाशप्रकरणेनेति ।** एवं निरवकाशलिङ्गादिति पूर्वसहितेनानेन सन्दिग्धश्रुतिलिङ्गाभ्यां निश्चितलिङ्गप्रकरणयोरेव बलवत्त्वमिति न्यायविवरणमुक्तार्थं वेदितव्यम् । तत्र सन्दिग्धनिश्चितपदाभ्यां सावकाशत्वनिरवकाशत्वयोर्विवक्षितत्वादिति । अत्राद्ये स्वपक्षसाधकलिङ्गस्य, द्वितीये तदपेक्षया दुर्बलतदुपोद्बलकप्रकरणस्योक्तिरिति सूत्रक्रमः ॥ २ ॥

## भावदीपः

ॐ प्रकरणाच्च ॐ ॥ सूत्रे चशब्दादाह ॥ **किं पुनरिति** ॥ मृत्युना विष्णुना इदं नित्यरूपं जगत् आत्मन्वी जगदाख्यदेहवान् अर्चन् आत्मानं पूजयन् शरः घनीभूतं मण्डं समहन्यत संहतमभवत् । तस्यां पृथिव्यां श्वेतद्वीपे अश्राम्यत् अशेत । आत्मा चतुर्मुखः मनसा स्वेच्छया । वाचं वेदाभिमानिनीं श्रियम् । संवत्सरः सम्यक् वत्सभूतान् देवादीन् रमयतीति चतुर्मुखः अभि प्रति व्याददात् आस्यं विवृतमकरोदित्यर्थः । स ब्रह्मा भाणं भाणिति वाचं वाक्सरस्वती । अभिमंस्ये लीनं करिष्ये चेत् वाचा सरस्वत्या आत्मना ब्रह्मणा ॥ **एतत्प्रकरणस्य वैष्णवत्वमिति** ॥ श्रुतिलिङ्गवाक्यानामुपक्रमादितोऽन्यत्रश्रुतत्वं चेत्प्रकरणनिश्चायकत्वेन लिङ्गत्वमिति शब्दादेवेत्यत्र वक्ष्यमाणदिशा प्रकरणस्य विष्णुपरत्वं ज्ञायत इत्यर्थः । प्रतिज्ञांशमनुवर्त्याऽर्थमाह ॥ **विष्णुरेवेति** ॥ स्मृतौ सोऽत्मनः । स आत्मन इत्यर्थः । मन्त्रेष्वाङ्यादेरात्मन इत्याकारलोपः । तस्मान्निरवकाशलिङ्गप्रकरणभावादित्यर्थः ॥ १० ॥ अ.२ ॥

## अभिनवचन्द्रिका

(सू.१) **नैवेह किञ्चिनेति** ॥ अग्रे=प्रलये । इह=अस्वतन्त्रवर्गे । किञ्चिन=जीवजडरूपं, नैवासीत् । अनादित्वात् जीवानां तदा सत्त्वात् कथमेवमुक्तिरित्यत आह – **मृत्युनैवेति** ॥ मृत्युनैवेदं जीवादिकम्, आवृतमासीत् । अश्यत इत्यशनं जगत्, तद्यापयतीत्यशनाया, तया आवृतमासीत् । ननु – 'मृत्युनैवावृतमासी'दिति पूर्वमुक्तम् अशनायया आवृतमासीदित्युच्यते । अतो विप्रतिषिद्धमेतदित्यत उक्तम् – **अशनाया हि मृत्युरिति** ॥ या अशनाया स एव मृत्युरिति न विप्रतिषिद्धमिति भावः । तत्=मृत्युलक्षणं ब्रह्म, आत्मन्वी=आत्मवान् जगद्रूपशरीरवान् स्यामिति, मनोऽकुरुत=ऐच्छदित्यर्थः । स=मृत्युः, अर्चन्=आत्मानं पूजयन्, अचरत्=सञ्चचार । तस्य=अर्चतः मृत्योः सकाशात्, पूजासाधनभूता आपोऽजायन्त । तत्राप्सु, यत्=यः, अपांशरः=फेनरूपो मंड आसीत् तत्=स शरः, मृत्युना समहन्यत=घनीभावं प्रापितः । स घनीभूतो मण्डः पृथिव्यभवत्, ब्रह्माण्डमभवत् । तस्यां पृथिव्यां मृत्युः अश्राम्यत्=शिश्ये । 'यतो हरेः श्रमो नाम शयनं सम्प्रकीर्तित'मिति वचनात् । सः मृत्युः, मे=मम, वाग्व्यपेक्षया द्वितीय आत्मा पुत्रः, जायेतेत्यकामयत । सः=मृत्युः, मनसा=स्वेच्छया, वाचं–श्रियं प्रति, मिथुनं=द्वन्द्वभावं समभवत् । 'स' इत्युक्तो मृत्युः क इत्यत आह– **अशनायां इति** ॥ बिन्दुः छान्दसः । या अशनाया सैव मृत्युरित्यर्थः । तत्=तेन मिथुनीभावेन

(अभिनवचन्द्रिका)

यद्रेतः आसीत्, तस्मात्, सः=प्रसिद्धः, आत्मनः वत्सभूतान् देवान् सम्यक् रमयतीति संवत्सराऽभिधः चतुर्मुखः, समभवत् । तं जातमात्रमभिवीक्ष्य, अत्तुं मृत्युः स्वं मुखं व्याददात्=विददार ॥ सः संवत्सरः, भयात् भारूपो णरूपश्चेति भगवान् भाण् ज्ञानानन्दरूप इति यावत् । एतदर्थकं भाण् शब्दमकरोत्, सैव प्रसिद्धा वाक् सरस्वती भाणशब्दाभिमानितया अभवत् । सः=मृत्युः, ऐक्षत– 'यदि इमं संवत्सरं अभिमंस्ये लीनं करिष्ये चेत् तर्हि कनीयोऽन्नं करिष्येऽत्यल्पमन्नं भुक्तवान्' स्यामिति ऐक्षत । एवमीक्षानन्तरं, सः मृत्युः, तया वाचा सरस्वत्या तेनात्मना संवत्सरनामकेन ब्रह्मणा इदं सर्वं असृजतेत्यर्थः ॥

**पूर्वपक्षस्तु–** 'स यद्यदेवे'ति वाक्योक्तमत्तृत्वमदितेः । 'तददिते'रित्यदितिश्रुतेः, अदितित्वलिङ्गाच्च । न च योगबलाददितिश्रुतिः विष्णुविषया किं न स्यादिति वाच्यम् । अदितित्वलिङ्गस्य निरवकाशत्वात् । न च– स इति पुल्लिङ्गानुपपत्तिः – पुंशक्तित्वेन 'कूटस्थोऽक्षर उच्यत' इत्यादिवदुपपत्तेः । अतः अदितेरेतद्वाक्यप्रतिपाद्यत्वेन सर्वात्तृत्वं तस्या एवेति न प्रागुक्तं लक्षणं युक्तमिति ॥

**सिद्धान्तस्तु–** विष्णोरेवोक्तात्तृत्वम् । अद्यत्वेन चराचरस्य ग्रहणात् । न चाऽदितिश्रुतिविरोधः । 'यो देवानां नामधे'ति श्रुतिबलेनाऽदितिश्रुतेः विष्णुपरत्वस्य वक्तुं शक्यत्वात् । न चाऽदितित्व-रूपाखण्डधर्माविरोधः । विष्णोरपि विद्वद्रूढिविषयत्वेनाऽदितित्वरूपाखण्डधर्मस्यापि तत्राऽवर्जनीयत्वात् । अन्यथा देवमातुरपि अदितित्वं न स्यात् । अप्संवत्सरसृष्ट्यादिना अस्य प्रकरणस्य वैष्णवत्वाच्च । तस्माद्विष्णोरेवैतद्वाक्यप्रतिपाद्यत्वेनाऽत्तृत्वात् न पूर्वोक्तलक्षणस्याऽतिव्याप्तिरिति युक्तमेव लक्षणमिति सिद्धम् । (अ०२)

## वाक्यार्थमुक्तावली

ॐ प्रकरणाच्च ॐ ॥ आत्मन्वी जगदाख्यदेहवान् । शरः घनीभूतं मण्डं येनेति यावत् । समहन्यत संहत्य दृढमभवत् तस्यां पृथिव्यां श्वेतद्वीपे अश्राम्यदशयत् । आत्मा चतुर्मुखः मनसा स्वेच्छया वाचं वेदाभिमानिनीं श्रियम्, अशमश्यं जगन्नयतीति अशनाया संवत्सरश्चतुर्मुखः अभि प्रति व्याददात् । आश्यं विवृतमकरोत् । अत्तुमिति शेषः । भाणं भाणिति वाच्यं वाक् सरस्वती । अभिमंस्ये लीनं करिष्ये चेत् । आत्मना ब्रह्मणा । स्मृतौ त्मन इत्यात्मन इत्यर्थः । प्रकरणाच्च विष्णुरेवात्तेति सूत्रार्थः । अत्राद्ये प्रबललिङ्गोक्तिः । द्वितीये ततोऽपि दुर्बलतदुपोद्बलकप्रकरणोक्तिरिति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

नैवेत्यस्यायमर्थः । इह अस्वतन्त्रवर्गे अस्य ब्रह्मत्यंश तत्र अस्तीति अशनाया । तत एव मनः इच्छां अकरोत् आत्मवान्स्यां शरीरवान् स्याम् इत्यर्थः । स मृत्युः अर्चन् आत्मानं पूजयन् शरः मण्डः निबिडः तत्समहन्यत संहतो भवेत् । तस्यां पृथिव्याम् । आश्राम्यत् शिश्ये स विष्णुः मे द्वितीयः आत्मा ब्रह्मा जायेत इति अकामयत । सः मनसा स्वेच्छया वाचं वागभिमानिनीं श्रियं मिथुनं समभवत् । अशनायामिति द्वितीया प्रथमार्थे । मृत्युरशनायेत्यर्थः । तत्रस्यां देव्यां सम्यक् वत्सान्देवादीन्रमयतीति संवत्सरो ब्रह्मा तं ब्रह्माणम् अत्तुं मुख्यं व्याददात् व्यदारयत् । भाणं स्तुतिरूपं एवं वाक् वागभिमानिनी सरस्वती चतुर्मुखादभवत् । अभिमंस्ये लीनं करिष्ये । कनीयः अल्पम् । अत्राद्ये सूत्रे लिङ्गरूपस्वपक्षसाधकोक्तिः । द्वितीये तदुपोद्बलकप्रकरणस्योक्तिरिति सूत्रक्रमः ।

## वाक्यार्थमञ्जरी

ॐ प्रकरणाच्च ॐ ॥ अप्संवत्सरसृष्ट्यादिना वैष्णवत्वेन निश्चित्ते नैवेह किंचनेत्यादिप्रकरणबलाच्चात्ता विष्णुरेवेत्यर्थः ॥ **नैवेह किंचनेति** ॥ अग्रे प्रलये । इह अस्वतन्त्रवर्गे । किंचन जीवजडरूपं नैवासीत् अनादिसिद्धजीवादेः सत्वात्कथमेतदित्यत उक्तम् ॥ **मृत्युनैवेति** ॥ पृथङ्नासीदिति भावः । मृत्योरावरकत्वे हेतुः ॥ **अशनायेति** ॥ अश्यत इत्यशं जगत् तत् नयतीत्यशनाया । अन्यत्र नेतृत्वप्रतीतावपि श्रुतिषु प्रसिद्धेः स एव नेतर इत्याह ॥ **अशनाया हीति** ॥ मृत्युरशनाया हीति श्रुत्यादिप्रसिद्धमित्यर्थः । यस्मान्मृत्युः स्वयमेवासीदन्यन्नैवासीत्तस्मादात्मन्वी आत्मवान् जगद्रूपशरीरवान् स्यामिति मनोऽकुरुत ऐच्छत् । स मृत्युः शरीररूपजगत्सिसृक्षया सृष्ट्यर्थं मनोऽकुरुतेति शेषः । तदनन्तरं स मृत्युरर्चयन् आत्मानं पूजयन् अचरत् चचार । तस्य अर्चयतः पूजयतः मृत्योः सकाशात् पूजासाधनभूता आपोऽजायन्त इत्यर्थः ॥ **तद्यदिति** ॥ तत् तत्राप्सु । य अपां शरः फेनरूपो मण्ड आसीत् । स शरः मृत्युना स्वरेत सा समहन्यत । सङ्घातत्वं घनीभावमिति यावत् । प्रापितः यः सङ्घातः सा पृथिवी ब्रह्माण्डरूपाऽभवत् । मृत्युनामा जनार्दनः तस्यां पृथिव्यामश्राम्यत् शिश्य इत्यर्थः । सोऽकामयतेति स मृत्युनामा भगवान् मे ममात्मा ब्रह्मा द्वितीयो वाय्वपेक्षया जायेतेत्यकामयत् ऐच्छत् । तत् तदनन्तरम् । अशनायां द्वितीया प्रथमार्थे । सर्वाशननेता मृत्युर्मनसा स्वेच्छयैव वाचं वेदाभिमानिनीं श्रियं मिथुनं द्वन्द्वभावं समभवत् । तत्तेन मिथुनीभावेन यद्रेत आसीत्स तदुपादानकदेहवान् संवत्सरः । सम्यगात्मनो वत्सान्पुत्रान् देवादीन् रमयतीति संवत्सरनामा चतुर्मुखोऽभवदित्यर्थः ॥ तं

(वाक्यार्थमञ्जरी)

**जातमिति ॥** मृत्युः जातं तं संवत्सरमभि अभिलक्ष्य अत्तुमिति यावत् । व्याददात् स्वमुखं विददार । स संवत्सरो भयात् भाणं भाणिति वाचम् अकरोत् निःसारितवान् । यद्भणिति वचः सैव तदभिमानी सरस्वत्यभवत् । अभिमन्यमानशब्दोच्चारणकाल एवाभिमानिनी देव्यभवदिति यावत् ॥ **स इति ॥** स मृत्युः कृतनवं कुमारमालोक्य ऐक्षत् विचारमकरोत् । किमिति यदीमं जातं संवत्सरम् अभिमंस्ये लीनं करिष्ये तदा कनीयोऽल्पमन्नं करिष्ये अतो बह्वन्नं भवत्वित्यालोच्य स मृत्युस्तया पूर्वोत्पन्नया वाचा गायत्र्या तेनात्मना चतुर्मुखेन चेदं सर्वमसृजत् जनयामासेत्यर्थः । स्मृतौ सोत्मनः स आत्मनः मन्त्रेष्वाङ्चादेरात्मन इत्याकारलोपः ॥ २ ॥

## विवृतिः

नैवेहेत्यस्यायमर्थः ॥ इह गगने । अश्यत इत्यशं तन्नयतीति अशनाया, तत् तत एकं मनः इच्छाम् अकरोत् ॥ **आत्मन्वी स्यामिति ॥** आत्मवान् शरीरवान् स्यामित्यर्थः ॥ स मृत्युः अर्चन् आत्मानं पूजयन् । शरः, मण्डः निबिडः तत्समहन्यत समहतोऽभवत् । तस्यां पृथिव्यामश्राम्यत् शिश्ये । सः विष्णुः मे द्वितीयः आत्मा ब्रह्म जायेत इति अकामयत । सः मनसा स्वेच्छया वाचं वागभिमानिनीं श्रियं मिथुनं समभवत् प्राप्तवान् । अशनायामिति द्वितीयाप्रथमार्धे मृत्युरशनायेत्यर्थः ॥ तत् तस्यां देव्यां सम्यक् वत्सान् देवादीन् रमयतीति संवत्सरो ब्रह्मा । तं ब्रह्माणम् अत्तुं मुखं, व्याददात्, व्यदारयत्, भाणं स्तुतिरूपं रावम् । **वाक्** वागभिमानिनी सरस्वती चतुर्मुखादभवत् । **अभिमंस्ये** लीनं करिष्ये । **कनीयः** अल्पम् । अत्राद्ये सूत्रे लिङ्गरूपस्वपक्षसाधकोक्तिः । द्वितीये तदुपोद्बलकप्रकरणस्योक्तिरिति सूत्रक्रमः ॥

॥ इति अत्तृत्वाधिकरणम् ॥

## ३. गुहाधिकरणम्

**सर्वात्तैकः पर उक्तः । 'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे । छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिनाचिकेताः'** । (क.उ.१-३-१) इति पिबन्तौ प्रतीयेते । **तौ काविति । उच्यते ।**

**॥ ॐ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॐ ॥ ११ ॥**

(सूत्रभाष्यम्)

गुहां प्रविष्टौ पिबन्तौ विष्णुरूपे एव । 'घर्मा समन्ता त्रिवृतं व्यापतुस्तयोर्जुष्टिं मातरिश्वा जगामे' (ऋ.सं.१०-११४-१) त्यादिना तद्दर्शनात् ।

'आत्माऽन्तरात्मेति हरिरेक एव द्विधा स्थितः ।
निविष्टो हृदये नित्यं रसं पिबति कर्मजम्' ॥ इति बृहत्संहितायाम् ।

'शुभं पिबत्यसौ नित्यं नाशुभं स हरिः पिबेत् ।
पूर्णानन्दमयस्यास्य चेष्टा न ज्ञायते क्वचित्' ॥ इति पाद्मे ॥

'यो वेद निहितं गुहायामि'(तै.उ.२-१)त्यादिना प्रसिद्धं हिशब्देन दर्शयति ॥ ११ ॥

## सत्तर्कदीपावली

यदुक्तं विष्णोः सर्वात्तृत्वं तत्र कर्मफलसारभोक्तृत्वापरपर्यायं पातृत्वं श्रूयते । ऋतं पिबन्तौ सुकृतस्य लोक इति कठवल्याम् । तत्रात्तृत्वं विष्णोर्न युज्यते । पिबन्ताविति द्विवचनासम्भवादित्येतं पक्षं प्रतिक्षिपत्सूत्रमुपन्यस्य व्याचष्टे ॥ गुहामित्यादिना ॥ एकस्मिन्द्विरूपाभिप्रायेण विष्णौ द्विवचननिर्देशो युज्यते । तथाहि निर्दिश्यते श्रुत्यन्तरे घर्मेति । घर्मा घृष्टौ दीप्तौ । एतयोः सेवां प्रति मुख्यत्रायुर्गतवानित्यर्थः । मुख्यवायुसेव्यत्वादेव द्विरूपो विष्णुर्निर्दिश्यते । ऋतं पिबन्तावित्यस्य शुभऋतपातृद्विरूपविष्णुपरत्वे आगमवाक्यसंवादमाह ॥ **आत्मेति** ॥ गुहां प्रविष्टौ परम इति विशेषितत्वात् ऋतं पिबन्तौ विष्णुरूपे एव भवितुमर्हतः । सत्यं ज्ञानमनन्तं ब्रह्म । यो वेद निहितं गुहायां परमे व्योमन्नित्यादिगुहानिहितत्वेन प्रसिद्धत्वादित्येतदुक्तं सूत्रगतहिशब्देनाह ॥ **यो वेदेति** ॥

## तत्त्वप्रदीपिका

''ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे । छायातपौ ब्रह्मविदो वदन्ती''ति काठके कथ्यते । ऋतं शास्त्रविहितकर्मभिरागतं फलम् । 'सुकृतस्य लोकः' सुकृतनिर्मितं शरीरम् । 'परमं' ब्रह्मावासत्वात् । 'परार्धं' परस्य स्थानं, परस्यान्यस्य जीवस्य, अभिमन्यमानत्वात् । ''स हाऽयस्तः पितुरर्धमेयाये''ति हि श्रुतिः । अत्र पिबन्तौ द्वौ प्रतीयेते तौ काविति संशयं द्योतयति । न च जीवे समन्वयोऽभिधीयत इत्युत्तरवचनात्पूर्वपक्षोऽपि सूचितः । अत्रैष संग्रहः । तौ किं जीवपरावुत पररूपे एवेति संशयः । जीवपराविति पूर्वः पक्षः । पातृत्वात् । नहि परस्यापिपासोः परमार्थतः पातृत्वोपपत्तिः । जीवपरपक्षे तु च्छत्रिन्यायेनोपपत्तिः । न च परपक्षे द्विवचनं युज्यते । छायारूपत्वं च ज्योतिरात्मनस्तस्य

(तत्त्वप्रदीपिका)

न स्यात् । जीवस्य तु तमस्सम्पृक्तत्वाद्युक्तमेव तादृग्रूपत्वम् । एवं तौ काविति मीमांसायां सिद्धान्तमारभते । ॐ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॐ । गुहां प्रविष्टाविति हेतुगर्भं विशेषणम् । विष्णोरेव हि गुहाप्रवेशस्तत्र तत्र श्रुतिषु प्रसिद्ध इति हिशब्दव्याख्याने दर्शयति । 'घर्मौ' घृष्टत्वेन घर्षकत्वेन च मितौ । 'समन्तौ' सम्पूर्णौ । प्रकृतिपुरुषकालव्यापिनौ यौ देशतः कालतः गुणतः शक्तितश्च । तयोः सेवां मातरिश्वा जगाम । द्युदेव्या वायुपत्न्याः स्तन्यं 'पयो' 'दिधिषाणाः' पिपासन्तो 'देवा' द्विरूपं तमेक'मवेपन्' अवनमैच्छन्, अन्वैच्छन्निति वा । विदुश्च तम् 'अर्कम्' अरं कंरूपं, 'सहसामानं' सहवायुम् । ''एष उ एव सामे''ति हि श्रुतिः । ''वागेवर्क्छुतौ प्रोक्ता प्राणस्सामेति कीर्तित'' इति तार्तीये । तद्दर्शनात् उक्तविशेषणैर्निर्णीते विष्णौ द्विवचनदर्शनात्, 'एकस्सुपर्णः स समुद्रमाविवेशे''त्यादिना च तच्छब्देनैकवचनेन परामर्शदर्शनात्, तस्यैव समुद्रनिवेशिनोऽखिलभुवनदर्शिनो''ऽपश्यमन्तित'' इति गुहाप्रविष्टत्वदर्शनाच्च, तमेव 'सुपर्णं' सुष्ठु परमानन्दरूपमेकं सन्तं 'विप्रा' विशेषेण प्रकृष्टज्ञानिनो 'वचोभिर्बहुधा कल्पयन्ती'त्येकस्यैव बहुनामरूपत्वदर्शनाच्च पिबन्तौ विष्णुरूपे एव ।

''चतुश्शिखण्डां तु रमां द्विरूपो भगवान्हरिः ।
परमानन्दरूपत्वात्सुपर्ण इति नामकः ॥

रमयामास तस्यां च निषण्णस्सर्वदैव सः ।
एक एव च विष्णुस्स प्रविष्टः क्षीरसागरम् ॥

सर्वं पश्यत्यसौ देवः पूर्णाकुण्ठेन चेतसा ।
परिपक्वेन मनसाऽपश्यमित्याह तं त्वजः ॥

मातेव व्यञ्जकत्वात्तं प्राणस्थं वाक्सरस्वती ।
लिहते लिह्यत इव प्राणस्तेन तु सा सदा ॥

स्वयं तु भगवान्विष्णुर्वाक्पतेर्ब्रह्मणोऽपि हि ।
नित्यः पिता स्वतन्त्रश्च नास्य माता पिताऽपि वा ॥'' इति ऋग्वेदसंहितायाम् ।

न च ''अनश्नन्नन्य'' इति श्रुतिविरोधः । न ह्यत्र पराधीनतया भोगः, नाप्यप्रियभोगः । न च तन्निमित्तोच्चनीचता विष्णोः । किन्तु जीवसमवेते भोगे स्वीकारमात्रमुच्यते । अतो न पातृत्वविरोधश्च ।

## तत्त्वप्रकाशिका

अत्र लोकतोऽन्यत्र प्रसिद्धस्य कर्मफलभोक्तृत्वलिङ्गस्य विष्णौ समन्वयसमर्थनादस्ति शास्त्रादिसङ्गतिः ।

(तत्त्वप्रदीपिका)

श्रुत्यादिसङ्गतिं विषयवाक्योदाहरणपूर्वकं विषयं च सूचयति ।। **सर्वेति** ।। सन्देहप्रकारं दर्शयति ।। **ताविति** ।। अत्ता चराचरग्रहणादिति सर्वात्तृत्वमेकस्य हरेरुक्तम् । तन्मध्यपतितं कर्मफलात्तृत्वं पातृशब्द-वाच्यं काठके कयोश्चित्प्रतीयते । यौ सुकृतनिर्मितशरीरे हृदयगुहां प्रविष्टौ । तत्रापि सर्वजीवोत्तमेऽतिपूर्णे वायौ प्रविष्टौ सुकृतफलं भुञ्जानौ । तौ ब्रह्मविदः पञ्चमहायज्ञवन्तो युपर्जन्यादिपञ्चाग्निविद्यानिष्ठा वा । त्रिवारकृत नाचिकेताः । छायातपौ वदन्तीति । तयदा विष्णोरन्यस्यैव स्यात्तदा न तस्य सर्वात्तृत्वं यदि चान्यस्यापि भवेत्तदा लक्षणस्यातिव्याप्तिरित्यवश्यं निर्णेयमेव । तत्कर्मफलभोक्तृत्वं विषयः । किं विष्णोरन्यस्य वेति सन्देहः । सर्वात्तृत्वोक्तिरन्यत्र प्रसिद्धिश्च सन्देहबीजम् । न परमात्मन एवेदं कर्मफलभोक्तृत्वमुच्यतेऽपि तु जीवसहितस्येति पूर्वः पक्षः । पिबन्ताविति द्विवचनश्रुतेः । न च सर्वात्तृत्वेन तद्बाधः । श्रुतेर्निरवकाशत्वात् । कर्मबन्धविधुरस्य ईश्वरस्य कर्मफलभोगायोगाच्च । अनश्नन्नन्य इत्यादिश्रुतेः । न चैवं जीवेशग्रहणेऽप्यनुपपत्तिः । जीवस्य भोक्तृत्वेन तत्सहितेश्वरे छत्रिन्यायेन भोगोपचारोपपत्तेः । न च सर्वात्तृत्वोक्तिविरोधः । कर्मफलभोगं विनाऽपि संहर्तृत्वमात्रेण तदुपपत्तेः । तथापि जीवेशत्वे को हेतुः । एकस्य जीवत्वं पातृत्वान्यथानुपपत्त्या ग्राह्यम् । न च द्वितीयोऽचेतनः । सजातीयग्रहणस्यैव न्याय्यत्वात् । न च द्वावपि जीवौ युक्तौ । एकस्मिन्नेव शरीरे भोक्तृजीवद्वयायोगात् । अतः पातृत्वं जीवस्यैव द्वयोरप्युपचार इति नेश्वरस्यैव सर्वात्तृत्वम् । तथा च लक्षणमयुक्तमिति भावः । अथ सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ।। **उच्यत इति** ।। यौ पिबन्तौ प्रतीतौ तौ विष्णुरूपे एव । गुहाप्रविष्टत्वलिङ्गादित्यर्थः । विष्णू इति वक्तव्ये विष्णुरूपे एवेत्युक्त्या द्विवचनं द्विरूपाभिप्रायेण सावकाशम् इत्युक्तं भवति । ननु विष्णोः सर्वशरीरेष्वेकैकरूपेण प्रवेशात्कथं रूपद्वयाभिप्रायेणापि द्विवचनोपपत्तिरित्यतः सूत्रसूचितश्रुतिमुदाहरति ।। **घर्मेति** ।। दीप्तौ व्याप्तौ भगवन्तौ तेजोबन्नात्मकं शरीरं विशेषेण गुहास्थाने प्राप्तौ तयोः सेवां कर्तुं मातरिश्वाऽपि त्रिवृतं जगामेति द्विरूपतया हरेः शरीरे स्थित्युक्तेर्युक्तं रूपद्वयाभिप्रायेण द्विवचनमिति भावः । अस्तु द्विरूपतया विष्णुर्देहनिष्ठस्तथापि तस्य कर्मफलभोगाभावान्नैतद्वाक्यप्रतिपाद्यत्वमित्यत आह ।। **आत्मेति** ।। तथा च गीतासु ।

> 'श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ।
> अधिष्ठाय मनश्चायं विषयानुपसेवत' इति ।

ननु किमीश्वरो दुःखं सुखं वा कर्मफलं भुक्ते नोभयमपि पूर्णानन्दत्वादित्यत आह ।। **शुभमिति** ।। पूर्वार्धेनाऽऽद्यपक्षमनभ्युपगमेन परिहृत्य द्वितीयमभ्युपैति । उत्तरार्धेन तु पूर्णानन्दस्याप्यचिन्त्यैश्वर्यबलेन सुखभोगोपपत्तिरिति द्वितीयपक्षदूषणं परिहरति । विष्णोर्भोक्तृत्वाभ्युपगमेऽनश्नन्नन्य इत्यादिश्रुतिविरोध इत्यतो वाऽऽह ।। **शुभमिति** ।। अशुभभोगाभावविषयं तद्वाक्यमिति भावः । तथा हि वाक्यशेषः । 'तस्येदाहुः पिप्पलं स्वाद्वग्रे तन्नोऽनशद्यः पितरं न वेद' इति । ननु कथं गुहानिविष्टत्वलिङ्गात्पिबतोर्विष्णुत्वनिश्चयो

(तत्त्वप्रदीपिका)

**जीवेऽपि तद्युक्तेरित्यत आह ॥ यो वेदेति ॥ लिङ्गस्य जीवे सम्भवेऽपि श्रुत्यादिप्रसिद्धमेव ग्राह्यमिति भावः । इत्यादिना प्रसिद्धं हिशब्देन दर्शयतीति । विष्णोरेव गुहानिविष्टत्वमित्यादिना वाक्येन प्रसिद्धमितीममर्थं सूत्रकारो हिशब्देन दर्शयतीत्यर्थः ॥ ११ ॥**

## गुर्वर्थदीपिका

आ समन्तादृद्धः अर्द्धः । परमतिशयेनार्द्धः परार्ध इति व्युत्पत्तिमाश्रित्यैवोक्तम् अतिपूर्ण इति । छायातपावित्यत्र सतां छायास्थानीयौ संसारधर्मश्रमहरावित्यर्थः । असतामातपावातपस्थानीयौ सन्तापकारिणावित्यर्थः । यद्यप्यन्यस्य कर्मफलमात्रभोक्तृत्वे सर्वात्तृत्वलक्षणस्य नातिव्याप्तिः । तथाऽपि स्वातन्त्र्येणैकैकात्तृत्वमपि भगवतो लक्षणम् । तस्यातिव्याप्तिरिति भावेनोक्तं लक्षणस्यातिव्याप्तिरिति । यद्वा सकलजीवकृतसत्कर्मफलभोक्तृत्वमपि भगवतो लक्षणं तस्यातिव्याप्तिरिति भावेनोक्तं लक्षणस्यातिव्याप्तिरिति । यद्वा सकलजीवकृतसत्कर्मफलभोक्तृत्वमपि भगवतो लक्षणमिति भावः । द्वयोरुपचार इत्यत्र द्वयोरपीति यच्छ्रूयते स उपचार इत्यर्थः । यस्माद्गुहां प्रविष्टौ तस्मादात्मानौ भगवद्रूपे एव । नाडीस्थितस्य जीवस्य गुहाप्रविष्टत्वायोगादित्यर्थमभिप्रेत्योक्तं गुहाप्रविष्टत्वलिङ्गादिति । अत एव गुहां प्रविष्टावित्यस्य हेतुगर्भविशेषणत्वात्साक्षाद्धर्मिनिदर्शनाय ''ऋतं पिबन्ता''विति भाष्यम् । विष्णुरूपे एवेति तु ''सर्वं वाक्यं सावधारण''मिति न्यायेन परपक्षव्यवच्छेदेन स्वपक्षस्थिरीकरणार्थम् । व्याप्तावित्यत्र समन्ताद्विद्यमानाविति योग्यपदाध्याहारेण श्रुतेरर्थमभिप्रैति । स्वादु यत्पिप्पलं कर्मफलं तदग्रे तस्यैतस्यैव परमात्मन एवाऽऽहुर्ज्ञानिनः । यः पितरं परमात्मानं न वेद स जीवः तत्सुखमग्रे नोऽनशन्नाश्नादिति श्रुतेरर्थः । लिङ्गस्य जीवे सम्भवेऽपीत्यभ्युगम्योक्तम् । वस्तुगत्या जाग्रत्स्वप्नयोः नाडीस्थस्य सुषुप्तौ च हरेः कुक्षिं प्रविष्टस्य न कदाचिद्गुहानिविष्टत्वमिति विज्ञेयम् ।

## भावबोधः

ॐ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॐ ॥ **श्रुत्यादिसङ्गतिमिति** । अव्यवहितपूर्वाधिकरणोपात्त 'स यद्यदेवासृजत' इति श्रुतितदधिकरणाभ्यामित्यर्थः ॥

'आत्माऽन्तरात्मेति हरिरेक एव द्विधा स्थितः ।
स विष्णुः परमे वायौ परेभ्योऽप्यृद्धरूपके ॥
शुभान् पिबति भोगान् स छायेव विदुषां प्रभुः ।
आतपः पापिनाम्' ॥

(भावबोधः)

इति स्मृतिं मनसि निधाय लोकपदस्य शरीरार्थत्वं षष्ठ्या जन्यजनकभावसम्बन्धार्थत्वं परमे परार्धे इत्यत्र वायावित्यध्याहारं चाभिप्रेत्य 'ऋतं पिबन्तौ' इति वाक्यं योजयति– **यौ सुकृतेत्यादिना।** तद्यदा विष्णोरन्यस्यैवेत्यादेरयमर्थः कर्मफलभोक्तृत्वस्य विष्ण्वन्यमात्रनिष्ठत्वे विष्णौ तदभावप्राप्त्या एकदेशवैकल्ये सर्ववैकल्येन सर्वात्तृत्वरूपलक्षणासम्भवः। कर्मफलभोक्तृत्वस्य विष्णोरन्यत्रापि विद्यमानत्वे गुहान्तर्निष्ठवायुनिष्ठत्वब्रह्मविद्वचनक्रियाकर्मत्वादेरपि प्राप्तौ सर्वात्तृत्वस्यापि तस्मिन् विष्ण्वन्यस्मिन् सम्भावयितुं शक्यत्वेन सर्वात्तृत्वस्यातिव्याप्तिप्राप्तिरिति। चन्द्रिकायां तु पूर्वत्र सर्वात्तृत्वं लक्षणत्वेनोक्तम्। ब्रह्मणि चाशुभभोक्तृत्वस्यासम्भवेऽपि शुभपातृत्वरूपं शुभभोक्तृत्वं सिद्धान्तरीत्या सम्भवति। तत्र च पिबतोर्जीवेश्वरत्वमुपेत्य जीवे पातृत्वं मुख्यमीश्वरे त्वमुख्यमिति स्वीकारेऽसम्भवः। उभयोरपि मुख्यमिति स्वीकारे तु जीवस्यापि शुभभोक्तृत्वेनेश्वरवत् सर्वात्तृत्वस्यापि प्रसङ्गादतिव्याप्तिरिति॥ तथा च द्वयोरपि पातृत्वं मुख्यमिति पूर्वपक्षोऽप्यत्राभिप्रेत इति द्रष्टव्यम्। यद्वा गुहाप्रविष्टत्वादिब्रह्मलिङ्गसहितस्यापि ऋतपातृत्वस्यासम्भवोऽतिव्याप्तिर्वा यदा तदा तत्सहचरितस्य पूर्वोक्तातृत्वस्यासम्भवोऽतिव्याप्तिर्वा स्यादिति। तथा च लक्षणमयुक्तमिति। यद्यपि सर्वसंहर्तृत्वरूपलक्षणं ब्रह्मण्येवेति पूर्वपक्षिणापि स्वीकृतम्। अत एव टीका– कर्मफलभोगं विना संहर्तृत्वमात्रेण तदुपपत्तेरिति। तथापि सिद्धान्त्यभिप्रेतं संहर्तृत्वविशेषात्मकं भक्षयितृत्वरूपं लक्षणमयुक्तमिति भाव इत्युक्तम्। **किं विष्णोरिति।** अत्र पिबन्तौ किं जीवेश्वरावुत विष्णुरूपविशेषाविति चिन्ता। तदर्थं द्विवचनान्तश्रुतिकर्मफलभोगच्छायातप-त्वादिकं किं गुहाप्रविष्टत्वब्रह्मशब्दादिबाधकमुत तद्बाध्यमिति। तदर्थं द्विवचनश्रुत्यादिकं भेदभोक्तृत्व-श्रुतिविरोधाज्ञानादिप्राप्त्या विष्णावनवकाशमुत विशेषाशुभभोगाभावविद्वदविद्वत्सुखहेतुत्वादिना विष्णौ सावकाशमिति। तदर्थमेतद्वाक्योक्तब्रह्मशब्दगुहाप्रविष्टत्वादिलिङ्गं च किं जीवादिसाधारणमुत विष्णुमात्र-निष्ठमिति। तदर्थं द्विवचनश्रुत्यादेः सावकाशत्वे गुहाप्रविष्टत्वलिङ्गस्य ब्रह्मशब्दादेश्च निरवकाशत्वे प्रमाणं नास्त्युतास्तीति॥

ननु जीवस्यैव मुख्यतः पातृत्वम् ईश्वरस्य तु उपचरितं तदित्यङ्गीकारे युगपद् वृत्तिद्वयविरोधप्रसङ्ग इत्यत आह– **द्वयोरिति।** द्वित्वावच्छेदेनोभयत्राप्युपचार इत्यर्थः। अत एव पूर्वं तादृश एव छत्रिन्याय उदाहृतः। **गुहाप्रविष्टत्वलिङ्गादित्यर्थ इति।** अनेन सूत्रे ''गुहां प्रविष्टावि''ति हेत्वर्थगर्भविशेषणमिति 'हि'शब्दो यस्मादित्यर्थेऽपि वर्तत इति वा सूचितमिति बोद्धव्यम्॥

ननु सूत्रे समन्वेतव्यलिङ्गप्रदर्शनाय पिबन्तावित्येव वक्तव्यम्। श्रुत्यनुसारात्। स्पष्टत्वाच्च।

(भावबोधः)

आत्मानाविति किमर्थमिति चेत्, न; समन्वेतव्यलिङ्गस्यात्मान्तरात्मेति स्मृतिसमाख्यायाश्च प्रदर्शनायात्मग्रहणात् । भवति हि पिबच्छब्दवदात्मशब्दोऽपि आदेयं कर्मफलं मात्यनुभवतीति व्युत्पत्त्या कर्मफलभोक्तृत्वलिङ्गप्रतिपादक इति भावः । 'तत्तु समन्वयात्' इत्यत अनुवर्तमानस्य 'तत्' इत्यस्य ''किन्तु विष्णुरेव सर्वत्रोच्यमानो नारायण एवे''त्यत्र लिङ्गव्यत्यासेन व्याख्यानवदत्रापि वचनव्यत्यासेनापि विष्णू इति व्याख्यानोपपत्तिमभिप्रेत्य रूपपदप्रयोगप्रयोजनमाह– **विष्णू इति** । अनेन द्विवचनश्रुतेरपि बलं निरवकाशत्वं नास्ति । विष्णोरेव द्विरूपत्वादिति न्यायविवरणमुक्ततात्पर्यं भवति । भगवन्ताविति विशेष्यपदस्य श्रुतावध्याहारः । **'वि'** इत्यस्यार्थो विशेषेण गुहास्थान इति । **अशुभभोगाभावविषयमिति** । अत एवाथर्वणभाष्ये जीवाद्यमेव नाश्नाति । न तु नाश्नात्येवेत्युक्तम् । **वाक्यशेष इति** । योऽग्रे श्रेष्ठस्तस्यैव स्वादु पिप्पलमाहुः । यः उत् उत्कृष्टं पितरं न वेद अत एव अनशत् नाशवान् । तस्य स्वादु पिप्पलं नेति वाऽत्र शेषार्थो ज्ञेयः । **श्रुत्यादिप्रसिद्धमिति** । ब्रह्मशब्दात्मशब्दादेर्जीवे प्रयोगेऽपि श्रुत्यादिप्रसिद्ध्यभावात् आनन्दमयाधिकरणादौ यथा तस्य हेतुत्वेनोपादानं तथा प्रकृतेऽपि गुहानिविष्टत्वस्य श्रुत्यादिना विष्णावेव प्रसिद्धस्य हेतुत्वेनोपादानमित्यर्थः । नन्वयमर्थो मूलान्नावगम्यत इत्यत आदौ विष्णोरेव निविष्टत्वमिति प्रसिद्धमित्यनन्तरम् 'इति'शब्दमध्याहृत्य व्याख्येयम् । सोदाहरणपूर्वकं 'यो वेद' इति मूलवाक्यं व्याख्याति– **य इत्यादिना प्रसिद्धमित्यादिना** ।

## भावदीपः

ॐ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॐ ॥ **लोकतोऽन्यत्रेति** ॥ अत्रापि पूर्वोत्तरनयेष्विव द्विवचनश्रुतिरूपान्यसाहित्येनैवान्यत्र प्रसिद्धिर्वाच्या तथापि स्वत एव तस्याः सम्भवे त्यागायोगादेवमुक्तम् । प्रतीयेते इत्यन्तं भाष्यं सङ्गतिपरतया व्याचष्टे ॥ **अत्तेति** ॥ उक्त इत्यनन्तरं तत्रेति पूर्वसङ्गतिभाष्यादनुवृत्तिं वा शेषं वा मत्वा तन्मध्यपतितेत्युक्तम् । पिबन्तावित्यत्र प्रातिपदिकार्थः **कर्मफलेति** । द्विवचनप्रत्ययार्थः **कयोश्चिदिति** । तत्कथमित्यतः विष्णुः स परमे वायौ परेभ्योऽप्यृद्धरूपक इत्यादितद्भाष्यानुरोधेनार्थोक्त्या व्यनक्ति ॥ **याविति** ॥ **पञ्चेति** ॥ पञ्च वा एते महायज्ञा इत्यादितैत्तिरीयोक्तदेवयज्ञपितृयज्ञभूतयज्ञमनुष्ययज्ञब्रह्मयज्ञरूपपञ्चयज्ञवन्तो वा । स एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोम इत्यैतरेयोक्तपञ्चमहायज्ञवन्तो वा ॥ **द्युपर्जन्येति** ॥ असौ वाव लोको गौतमाग्निरिति छान्दोग्यपञ्चमाध्यायादौ उक्तद्युपर्जन्यपृथिवीपुरुषयोषिद्रूपपञ्चाग्नीत्यर्थः । नाचिकेताः नाचिकेतनामकेष्टकचितवन्त इत्यर्थः ॥ यौ तावित्युक्त्या छायातपत्वं विधेयम् अन्यदनुवाद्यम् इति दर्शितम् ।

(भावदीपः)

सदसतां छायातपाविवेत्यर्थोऽग्रे परमतापाकृतिप्रस्तावे व्यक्त इति पदद्वयं न व्याकृतम् । इति प्रतीयत इत्यन्वयः । भावमाह ॥ **तद्यदेति** ॥ **न तस्येति** ॥ तथा च लक्षणमसम्भवीत्यर्थः । एकदेशवैकल्यात् ॥ **अतिव्याप्तिरिति** ॥ ईश्वरवज्जीवस्यापि स्वातन्त्र्येण कर्मफलभोक्तृत्वे सर्वात्तृत्वस्यापि प्रसङ्गेनातिव्याप्तिरित्यर्थः इति सङ्गतिसम्भवादित्यर्थः । विष्णोरन्यस्य वेत्यनन्तरं विष्णोरेव वेति सिद्धान्तकोटेः शेषः । तेन सन्देहस्य न पूर्वपक्षाद्यननुगुण्यम् । सिद्धान्ते विष्णुरूपे एव इत्युक्त्या सूचितां पूर्वपक्षकोटिमाह ॥ **न परमात्मन एवेति** ॥ उच्यते ऋतं पिबन्ताविति श्रुतावित्यर्थः । पिबन्तौ प्रतीयेते इति भाष्ये द्विवचनानुवादेन सूचितं हेतुमाह ॥ **पिबन्तावितीति** ॥ द्विवचनश्रुतेरपि बलं निरवकाशत्वमिति न्यायविवरणोक्तं सौत्रद्विवचनान्तात्मपदव्यावर्त्यं निरवकाशत्वं व्यावर्त्यशङ्कापूर्वमाह ॥ **न चेति** ॥ प्राग्विष्णौ समन्वितसर्वात्तृत्वान्तःपतितकर्मफलात्तृत्वलिङ्गेन प्रातिपदिकोक्तेन द्विवचनश्रुतेर्बाध इत्यर्थः ॥ **श्रुतेरिति** ॥ निर्भेदविष्णौ द्वित्वस्यायोगेन द्व्येकयोर्द्विवचनैकवचने इति द्वित्ववाचिद्विवचनस्य तत्र वृत्तेरयोगात् । अन्यथा द्वा सुपर्णेत्यादावपि द्वित्वेन भेदो न सिद्ध्येदिति भावः । अङ्गीकृत्येदमुक्तं वस्तुतस्तु सर्वात्तृत्वमध्यपतितं कर्मफलात्तृत्वं न विष्णुनिष्ठमपि । येन श्रुतिबाधः स्यादित्याह ॥ **कर्मबन्धविधुरस्येति** ॥ अत्र हेतुरीश्वरस्येति । उक्तं हि गीताभाष्ये । यः कर्मापि नियमयति कथं तत्तं बध्नातीति । अन्यत्र धर्मादन्यत्राधर्मादित्यादिश्रुतेश्चेति भावः । अत एव भाष्ये पिबन्ताविति प्रातिपदिकांशोऽप्युदाहृतः । अन्यथा द्वौ प्रतीयेते इत्येवावक्ष्यत् । अत एव च पिबन्ताविति प्रातिपदिकप्रत्ययोक्ताभ्यां पूर्वपक्षकोटिसाधकाभ्यां पूर्वपक्षसम्भवाद्भाष्ये द्विवचनश्रुतेः निरवकाशत्वानुक्तिः । अन्यत्र तदुक्तिस्तु पूर्वपक्षदाढ्र्याय । गुहाप्रविष्टत्वं तु द्वयोरपि युक्तमिति भावः ॥ **छत्रीति** ॥ छत्र्यछत्रिसमुदाये छत्रिणो गच्छन्तीति यथोक्तिस्तथेत्यर्थः ॥ **भोक्तृजीवेति** ॥ व्यवस्थिततत्तज्जीवकर्मार्जितशरीरे तस्य तस्यैव भोक्तृत्वादनेकभोक्तृत्वेऽन्योन्यनियमनायोगेन शरीरोन्मथनादिप्रसङ्गादिति भावः । वैद्यादिदेहेषु च बलवता निमित्तेन भोक्तृद्वयसमावेशः काचित्को हरीच्छया युक्तः । जीवस्यैव चेत्कथं पिबन्ताविति द्वयोरप्युक्तिः अत आह ॥ **द्वयोरिति** ॥ द्वयोरप्युक्तिरूपचारबुद्ध्येत्यर्थः ॥ **नेश्वरस्यैवेति** ॥ जीवस्यापि स्वातन्त्र्येण कर्मफलभोक्तृत्वे सर्वात्तृत्वस्यापि प्रसङ्गादिति भावः ॥ **अथेति** ॥ अथ केन प्रयुक्तोऽयमित्यादाविवार्थान्तरेऽयमथशब्दः । ताविति पदमनुवर्त्य तस्यार्थं वदन् प्रतिज्ञांशं व्याचष्टे ॥ **याविति** ॥ **लिङ्गादिति** ॥ सूत्रे गुहां प्रविष्टाविति हेतुगर्भमिति भावः । द्विवचनश्रुतेरपि बलं निरवकाशत्वं नास्ति विष्णोरेव द्विरूपत्वादिति न्यायविवरणोक्त्यनुरोधेन रूपपदभावमाह ॥ **विष्णू इतीति** ॥ अत्रोपपत्तिस्तु ''द्वित्वं चैकस्य युज्यत'' इत्यनुव्याख्यान-

(भावदीपः)

सुधाचन्द्रिकासु व्यक्ता । क्रमेण पदानामर्थमाह ॥ **दीप्ताविति** ॥ भगवन्ताविति शेषः । निविष्टो हृदय इति स्मृत्यनुरोधात् । व्यापतुरित्यत्रोपसर्गार्थं व्यनक्ति ॥ **गुहास्थान इति** ॥ जुष्टिं सेवां जुषी प्रीतिसेवनयोः ॥ **आत्मेतीति** ॥ आत्मा देहस्थः । अन्तरात्मा जीवहृदयस्थः । कर्मफलादनस्येन्द्रिय-साध्यत्वात् हृदयनिविष्टस्य कथं तदित्यत आह ॥ **तथा च गीतास्विति** ॥ अर्थबाहुल्याद्बहुवचनम् । यच्चाप्युत्क्रामतीश्वर इति पूर्वत्र पश्यन्ति ज्ञानचक्षुष इत्युत्तरत्र च श्रवणादिदं वाक्यमीश्वरपरमिति भावः । विवृतमेतच्छान्दोग्यभाष्ये भुङ्क्ते गुणान्षोडश षोडशात्मकस्सोऽलङ्कृषीष्ट भगवान्वचांसि म इत्यादौ भगवत एव स्वकीयैरिन्द्रियैर्भोगोक्तेश्चत्यादिना । तथा स एतैरिन्द्रियैर्विष्णुर्भोगाननुभवत्यजः । स्वरूपेणैव शक्तोऽपि जीवदेहस्थितो हरिः । भुङ्क्ते तदिन्द्रियैर्भोगाञ्छुरितैरिन्द्रियैः स्वकैरित्यादिना चाष्टमे व्यक्तमेतत् ॥ **अशुभभोगेति** ॥ कुत एवं सङ्कोचः श्रुतेरित्यतोऽसद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषादिति वक्ष्यमाणन्यायेन वाक्यशेषोक्तभोगान्यथानुपपत्त्या ईशभोगस्याशुभविषयकत्वं नेत्येवानशनश्रुतेरर्थ इति मत्वाऽऽह ॥ **तथा हीति** ॥ आथर्वणे अस्याश्रुतावपि ऋक्शाखायामस्ति श्रवणं यः अग्रे अग्र्यः श्रेष्ठः तस्यैव स्वादु पिप्पलं कर्मफलमाहुः । यः पितरं विष्णुमुत् उत्कृष्टं न वेद अत एव नशत् नाशवान् तस्य स्वादुः पिप्पलं नेति वाक्यशेषार्थो ध्येयः । जीवाद्यमेव नाश्नाति न तु नाश्नात्येव तस्येदाहुः पिप्पलं स्वाद्वग्र इत्युक्तत्वादित्याथर्वणभाष्ये वाक्यशेषे जीवानद्यस्वाद्वदनोक्त्याऽन्यः पिप्पलं स्वाद्वत्तीति पूर्ववाक्येऽस्वाद्वेव स्वादुत्वेन जीवेनाद्यमानमनश्नन्निति निषिध्यत इति तद्विविक्तसारांशभोक्तृत्वं तु विद्यत एवेत्यर्थान्तरमुक्तम् । प्रविविक्ताहारभुग्यस्माच्छारीरादात्मन इति श्रुतेः । तथा स्वातन्त्र्येणैव भोक्तृत्वाद् दुःखाभोगाच्च सर्वदा । अभोक्ता चैव भोक्ता चेति परतन्त्रभोगदुःखरूपाशुभ-भोगनिषेधरूपार्थान्तरद्वयमुक्तम् । ''एकस्तयोः खादति पिप्पलान्नमन्यो निरन्नोऽपि बलेन भूयानिति'' एकादशस्कन्धतात्पर्ये । अत्तिं विनाप्यदौर्बल्यात्तथा नात्तिर्हरेर्भुज इत्यादिना जीववदुपजीवनार्थाशनं नेत्यर्थान्तरमनशनश्रुतेरुक्तम् । वक्ष्यते चैतदेव स्थित्यदनाभ्यां चेति सूत्रे । तथा च गीताभाष्येऽपि स्थूलभोगाभावादिपरतयाऽपि सप्तमे विवृतमेतत् । ऋतं पिबन्तावित्यत्र ऋतशब्दः ऋतं सत्यं तथा धर्म इति गीताभाष्योक्त्या धर्ममात्रपर इति भावः ॥ **प्रसिद्धमेवेति** ॥ शीघ्रमुपस्थितेः । न हि मैथिल इत्युक्ते यः कश्चिन्मिथिलाभवो भासते । किन्तु यस्तद्भवः तदधिपः स एवेति भावः । भाष्ये इत्यादिना प्रसिद्धमित्यस्यान्वयाप्रतीतेरपेक्षितपूर्त्याऽन्वयमाह ॥ **इत्यादिनेति** ॥ आदिपदेन गुहाहितं गह्वरेष्ठं पुराणम् । गुहां प्रविश्य तिष्ठन्तमित्यादि ग्राह्यम् ॥ ११ ॥

## अभिनवचन्द्रिका

**अत्र लोकतोऽन्यत्रप्रसिद्धस्येति** ॥ यद्यप्ययं पादः श्रुतिलिङ्गाभ्यामन्यत्रप्रसिद्धलिङ्गात्मकशब्दसमन्वयार्थः, तथापि – पादार्थानां प्रायिकत्वेन लोकतोऽन्यत्रप्रसिद्धलिङ्गसमन्वयोक्तिरुपपन्नेति भावः । **तन्मध्यपतितेति** ॥ एतदधिकरणप्रतिपाद्यस्य पूर्वाधिकरणतच्छ्रुति प्रतिपाद्यैकदेशत्वमेव ताभ्यां सङ्गतिरिति भावः । **त्रिवारकृतनाचिकेता इति** ॥ त्रिवारकृतनाचिकेताख्ययज्ञवन्त इत्यर्थः । **अन्यस्यापीति** ॥ ननु पूर्वपक्षे जीवस्यैव पातृत्वमिति वक्ष्यमाणत्वात् तन्निरासाऽऽवश्यकत्वाय प्रागुक्ताऽसम्भवव्युत्पादनमेवोचितं, युक्तं च । एकात्तृत्वाभावे सर्वात्तृत्वाभावस्यावर्जनीयत्वात्, न तु 'यदि चान्यस्यापि भवेत् लक्षणस्यातिव्याप्ति' रिति अतिव्याप्तिवर्णनं युक्तम् । पूर्वपक्षे अन्यस्यापीत्यनभिधानात् । अलक्ष्यत्वाभिमते जीवे पातृत्वमात्रसद्भावेऽपि लक्षणत्वाभिमतस्य सर्वात्तृत्वस्याऽऽभावात् । किं च – कर्मफलभोक्तृत्वमन्यस्यैव । अन्यस्यापि वाऽस्तु तथापि न दोषः, दुष्कर्मफलभोगस्य अन्यमात्रनिष्ठत्वेऽप्यसम्भवाभाववत्, इहापि असम्भवाभावसम्भवात् । अन्यथा असम्भवपरिहाराय सत्कर्मफलपातृत्वसमर्थनवत् असत्कर्मफलपातृत्वमपीश्वरस्य समर्थनीयं स्यात् । न च – सर्वमत्तीत्यनेन दुष्कर्मफलात्तृत्वस्य लक्षणत्वेनाऽविवक्षितत्वात्, तस्याऽन्यमात्रवृत्तित्वं न दोषायेति वाच्यम् । एवं हि सत्कर्मफलात्तृत्वस्याऽपि 'सर्वमत्ती' त्यनेनाऽविवक्षितत्वेन एतस्याप्यन्यमात्रगामित्वं न दोष इत्यस्तु । न च– 'सर्वमत्ती'त्यनेन सत्कर्मफलभोक्तृत्वं विवक्षितम् । असकत्र्मफलभोक्तृत्वं न विवक्षितमित्यत्र किञ्चिन्नियामकमस्ति । 'अनश्नन्नन्यो अभिचाकशीती' त्यशननिषेधस्योभयत्रापि तुल्यत्वात् । न च– 'रसं पिबति कर्मजं'मिति बृहत्संहितोक्तेः, 'शुभं पिबत्यसौ नित्यं नाऽशुभं स हरिः पिबे'दिति पाद्मोक्तेश्च शुभपातृत्वमेव लक्षणत्वेन विवक्षितम् । नाशुभपातृत्वमिति वाच्यम् । कर्मलेपप्रसङ्गात् । इदमेव हि कर्मलिप्तत्वं यत् तत्फलभोक्तृत्वम् । न च तदिष्टम् । तस्यासङ्गत्वाङ्गीकारादिति चेत्, उच्यते– असम्भवनिरासवत् अतिव्याप्तिनिरासस्याप्यावश्यकत्वात् । अनेनाधिकरणेन तदुभयमपि सूत्रकृता निराक्रियत इति द्योतनायाऽसम्भवनिरासायेवाऽतिव्याप्तिनिरासायैतदधिकरणमावश्यकमित्युक्तम् । एकस्यैव पूर्वपक्षस्य प्रदर्शनं तु अपरः पूर्वपक्षः शिष्यैरेवोह्यतामित्यभिप्रेत्य, न तु तदभावाभिप्रायेण । यदत्रोक्तम्– अलक्ष्यात्वाभिमते जीवे पातृत्वमात्रसद्भावेऽपि लक्षणत्वाभिमतस्य सर्वात्तृत्वस्याऽभावात् अतिव्याप्तिवर्णनमयुक्तमिति । अत्र वक्तव्यम्– किं पूर्वपक्षिणः अस्वातन्त्र्येण पातृत्वमन्यनिष्ठतयाऽभिमतम् उत स्वातन्त्र्येण । नाद्यः– अस्माकमप्रतिपक्षत्वप्रसङ्गात् । द्वितीये स्वातन्त्र्यसद्भावेन कर्मफलात्तृत्ववत्

(अभिनवचन्द्रिका)

सर्वात्तृत्वस्यापि प्रसङ्गात् कथं नातिव्याप्तिः । न हि स्वतन्त्रस्य कर्मफलात्तृत्वं सम्भवति, अन्यत्र सम्भवतीति सम्भवति । अन्यथा ईश्वरस्यापि तदभावप्रसङ्गः । यदत्रोक्तम्– 'किञ्चेत्यादिनाऽसत्कर्मफलभोक्तृत्वस्याऽन्यमात्रनिष्ठत्ववत् सत्कर्मफलभोक्तृत्वस्यापि अन्यमात्रनिष्ठत्वमन्यनिष्ठत्वं वा न दोषाय । अन्यथा तस्याप्यसम्भवापादकत्वं स्या'दित्यादि । तत्र– वैषम्यात् । असत्कर्मफलभोक्तृत्वस्य पूर्णत्वविरोधिनः लक्षणत्वेनाविवक्षितत्वात् । अस्य तु लक्षणत्वेन विवक्षितत्वात् । न चेश्वरस्य कर्मफलभोक्तृत्वे तल्लेपप्रसङ्गः । तत्कर्मफलभोगस्यैव तल्लेपत्वादिति वाच्यम् । नियोगतः फलभोगस्यैव लेपत्वेन फलभोगमात्रस्यैवालेपत्वात् । इदमेव हि ईश्वरस्याऽलिप्तत्वं नाम यन्नियोगतो भोगानर्हत्वम् । पूर्णस्य कुतः फलभोग इति चेत्, किं प्रमाणं पृच्छसि आहोस्वित् प्रयोजनम् । आद्ये – 'शुभं पिबत्यसा'विति स्मृतिरित्युत्तरम् । द्वितीयेऽपि किं स्वप्रयोजनं पृच्छसि, आहोस्वित् परप्रयोजनम् । आद्ये– नास्तीत्युत्तरम् । द्वितीये अस्तीत्युत्तरम् । परं तु तत्प्रयोजनविशेषं स्थूलदृश्वानो नोत्प्रेक्षितुं प्रभवामः । तदुक्तम्– 'चेष्टा न ज्ञायते क्वचि' दिति । जानन्नपि भाष्यकारः तच्छ्रवणे मन्दानामनधिकारात् तत्प्रयोजनविशेषं नाऽवादीदिति द्रष्टव्यम् । **किं विष्णोरिति** ।। 'ऋतं पिबन्तौ'' इति द्विवचनश्रुतेः, 'पिबन्तौ प्रतीयेते तौ कौ' इति भाष्योक्तेश्च पिबन्तौविषयौ तौ किं जीवपरौ, उत विष्णू एवेति संशयो वक्तव्यः, न तु भोक्तृत्वं विषयः किं विष्णोरन्यस्य वेति सन्देह इति वक्तव्यम् । अथवा – पिबतोः छायाऽऽतपत्वस्य श्रुतावेवोक्तत्वेन संशयानुदयात् छायातपयोरेव संशयो वक्तव्यः । किमिमौ छायातपौ जीवेश्वरौ उतेश्वरावेवेति । अथवा– द्वावपि जीवौ उत विष्णू इति संशयो वक्तव्यः, उभयोरपि सिद्धान्ते विष्णुत्वसमर्थनात् । अन्यथा– अन्यतरस्यैव विष्णुर्नेति संशयविषयत्वेनोभयोस्तत्साधनमयुक्तं स्यादिति चेत्, उच्यते – भाष्ये प्रत्यधिकरणं एकैकसंशयस्य प्रदर्शनात्, एक एव संशयः सूत्रनिरस्य इति न मन्तव्यम्, अपि तु – यथासम्भवं सूत्रनिरस्या बहवः संशया द्रष्टव्या इति सूचनाय टीकाकृता 'कर्मफलभोक्तृत्वं विषयः, किं विष्णोरन्यस्य वे'ति संशयो दर्शितः । पूर्वोक्तसंशयानां टीकाकृतोऽभिमतत्वात् तेऽपि सूत्रनिरस्यत्वेन शिष्यैरूह्याः । यद्यपि– 'पिबन्ता'विति द्विवचनं श्रुतं तथापि समन्वेतव्यलिङ्गं कर्मफलभोक्तृत्वमेकमेवेति द्योतनाय 'कर्मफलभोक्तृत्वं विषय' इति उक्तमिति द्रष्टव्यम् । **न परमात्मन एवेति** ।। यद्यपि नेदं कर्मफलभोक्तृत्वं परमात्मनः, अपि तु जीवस्यैवेति पूर्वपक्षो वक्तव्यः, तथापि संशयकोट्यवलम्ब्यैव पूर्वपक्षः सूत्रनिरस्य इति न मन्तव्यम्, अपि तु अन्योऽपि पूर्वपक्षः सूत्रनिरस्य इति द्योतनाय सर्वात्तृत्वान्तर्गतमिदं कर्मफलभोक्तृत्वम् । 'ऋतं पिबन्ता'विति श्रुत्या न परमात्मन एवोच्यते, अपि तु जीवसहितस्योच्यत इति पूर्वपक्षः

(अभिनवचन्द्रिका)

प्रदर्शितः । एतेन – उच्यत इति पदं व्यर्थमिति परास्तम् । **न चेति** ॥ 'ऋतं पिबन्ता'विति श्रुतौ विशेषानुक्तेः सर्वकर्मफलाऽत्तृत्वस्यैव लाभात्, तस्य च विष्णुलिङ्गात्, तेन च एतद्वाक्यप्रतिपाद्यत्वं विष्णोरेव न जीवस्येति सिद्धेः, द्विवचनश्रुतिसाध्यस्य द्वयोः प्रतिपाद्यत्वरूपसाध्यस्य बाध इत्यर्थः । एतेन श्रुतौ सर्वात्तृत्वस्याऽश्रवणात् तेन श्रुतिबाधाभिधानमयुक्तम्, असिद्धस्य बाधकत्वायोगादिति परास्तम् । सर्वात्तृत्वशब्देन 'ऋतं पिबन्ता'विति श्रुत्युक्तसर्वकर्मात्तृत्वस्य विवक्षितत्वात् । **श्रुतेर्निरवकाशत्वादिति** ॥ भवेत् द्विवचनश्रुतिसिद्धस्य उभयोः प्रतिपाद्यत्वरूपसाध्यस्य लिङ्गेन बाधः, यद्येकस्य प्रतिपाद्यत्वपक्षे श्रुतिः कथंचिदुपपन्ना स्यात्; न चैवमिति न श्रुतिसिद्धसाध्यापहार इत्यर्थः । अङ्गीकृत्य चेदमुक्तम् । वस्तुतस्तु न सर्वकर्मफलात्तृत्वमीश्वरलिङ्गम् । ततश्च न तेन श्रुतिसिद्धसाध्यापहार इत्याह – **कर्मबन्धेति** ॥ न केवलं कर्मबन्धवैधुर्येण कर्मफलात्तृत्वस्येश्वरधर्मत्वाभावः सिद्ध्यति अपि तु श्रुत्या चेति भावेनाह– **अनश्नन्निति** ॥ **न चैवमिति** ॥ यथा ईश्वरस्यैकस्य प्रतिपाद्यत्वपक्षे द्विवचन-श्रुत्यनुपपत्तिः, एवमुभयोः प्रतिपाद्यत्वपक्षेऽप्यनुपपत्तिरस्ति, पिबत्प्रातिपदिकोक्तकर्मफलात्तृत्वस्येश्वरांशेऽ-भावेन श्रुत्यप्रामाण्यप्रसङ्गादिति न वाच्यमित्यर्थः । **उपचारोपपत्तेरिति** ॥ पिबन्तावित्यस्योपचारत्वेन श्रुतिप्रामाण्योपपत्तेरित्यर्थः । तात्पर्याविषयीभूतार्थाभाव एवाप्रामाण्यम् । ईश्वरस्य पातृत्वं न श्रुतितात्पर्य-विषय इति तदभावो नाऽप्रामाण्यहेतुरित्यर्थः । ननु 'अनश्न'न्निति श्रुतिबलेनेश्वरस्य कर्मफलभोक्तृत्वा-भावसाधनमयुक्तम्, 'सर्वं वा अत्ती'ति सर्वात्तृत्वाभिधायकश्रुतिविरुद्धत्वादित्याशङ्क्य निषेधति – **न चेति** ॥ **तदुपपत्तेरिति** ॥ श्रुत्युक्तसर्वात्तृत्वोपपत्तेरित्यर्थः । ननु– अस्तु द्विवचनश्रुतिबलात् द्वियोरेतच्छ्रुतिप्रतिप्रतिपाद्यत्वम् तथापि एको जीवः अपरस्तु ईश्वर इति कुतोऽभ्युपगन्तव्यम् । द्वावप्यचेतनौ किं न स्यातां पिबन्तावित्यस्य सिंहो माणवक इत्यादिवत् उपचारेण नेतुं शक्यत्वादित्याशयेन पृच्छति– **तथापीति** ॥ **पातृत्वान्यथानुपपत्त्येति** ॥ एकस्य जीवत्वमङ्गीकृत्य पिबन्तावित्यस्य तत्र स्वार्थसमर्पकत्वोपपत्तौ सर्वथा अर्थसमर्पणतात्पर्यवैधुर्यस्याऽन्याय्यत्वादिति भावः । ननु – उभावपि एतच्छ्रुत्युक्तौ जीवावेव 'पिबन्ता' वित्यत्र छत्रिन्यायस्याऽनुसर्तव्यत्वादित्याशङ्क्य निषेधति– **न च द्वावपीति** ॥ **एकस्मिन्नेव शरीर इति** ॥ 'सुकृतस्य लोक' इत्युक्तेर्ब्रह्मशरीरे भोक्तृजीवद्वयायोगादिर्थः । द्वात्रिंशल्लक्षणोपेते देहे जीवोत्तमहिरण्यगर्भातिरिक्तस्य भोक्तृत्वमयुक्तमिति भावः । एतेन रावणादिशरीरे द्वयोः, द्रौपदीशरीरे पञ्चानां भोक्तृत्वदर्शनेन भोक्तृजीवद्वयायोग इति परास्तम् । वरशापादिनिमित्तान्तरेण तत्र तथासम्भवेऽपि ब्रह्मशरीरे जीवद्वयायोग इत्यर्थस्य युक्तत्वात् । उपसंहरति – **अत इति** ॥ जीवेश्वरयोर्द्वयोरपि प्रतिपादनाय प्रवृत्तः पिबन्ताविति शब्दः, उपचारः छत्रिन्यायेन प्रवृत्त इति हेतोः

(अभिनवचन्द्रिका)

पातृत्वं जीवस्यैव नेश्वरस्य । ततश्च एकदेशापगमात् लक्षणत्वेनाभिमत सर्वात्तृत्वंईश्वरस्यैव लक्ष्यस्यैव नास्तीति लक्षणमयुक्तं असम्भवीत्यर्थः । एतेन – पातृत्वं जीवस्यैवेति जीवस्य पातृत्वमभिधाय द्वयोरप्युपचार इत्यभिधानमयुक्तमिति परास्तम् । **तस्येदाहुरिति** ।। यः परमात्मा । अग्रे = अग्र्यः, तस्येत्, इच्छब्द एवार्थे, तस्यैव । स्वादु पिप्पलं, आहुः= ज्ञानिन इति शेषः । यस्तु जीवः उत् = उत्कृष्टं परमात्मानं न वेद तस्य जीवस्य; तत्र= स्वादुफलं न । अत एव – नशत् नाशवान् इति वाक्यशेषार्थः । ननु – गुहानिहितत्वलिङ्गस्य न विष्णुत्वनिश्चायकत्वं जीवनिष्ठत्वादित्याशङ्का 'यो वेद निहितं गुहाया'मित्यादिना भाष्येण न परिहृतेत्याशङ्कापरिहाराय आदौ तद्भावमाह – **लिङ्गस्येति** ।। सत्यमस्ति गुहानिहितत्वं जीवेऽपि तथापि सूत्रकृता ईश्वरनिष्ठस्य गुहानिहितत्वस्य लिङ्गत्वेनोपादानात् तेन विष्णुत्वनिश्चयो युज्यते । न च – सूत्रकृता विष्णुनिष्ठमेव गुहानिहितत्वं हेतुत्वेनोपात्तम् न जीवनिष्ठमिति कुतो निश्चय इति वाच्यम् । 'अजस्य नाभौ' इति श्रुतौ प्रसिद्धत्वा न्नाभ्यर्पि(र्हि)त-प्रसिद्धपद्मस्यैव ग्रहणमिति निर्णयवत्सूत्रकृतापि प्रसिद्धमेव लिङ्गत्वेन विवक्षितमिति ग्राह्यत्वादिति भावः । ननु – गुहाप्रविष्टत्वलिङ्गस्य कण्ठत एवोक्तत्वेन पुनः 'हिशब्देन दर्शयती'ति हिशब्दस्य तत्प्रदर्शकत्वाभिधानमयुक्तम् । पौनरुक्त्यापातादित्यत आह – **इत्यदिना प्रसिद्धमिति** ।। हिशब्दः लिङ्गनिष्ठप्रसिद्धत्वरूपधर्मस्यैव प्रदर्शकः, न तु लिङ्गस्यैवेति न पौनरुक्त्यमिति भावः ।

## वाक्यार्थमुक्तावली

ॐ गुहां प्रविष्टावात्मनौ हि तद्दर्शनात् ॐ । यद्यप्यस्मिन् पादे समन्वीयमानलिङ्गानां लोकतोऽन्यत्र प्रसिद्धश्रुतिलिङ्गसाहित्येनैवान्यत्र प्रसिद्धिः न साक्षाल्लोकतः । तथापि साक्षाल्लोकतः प्रसिद्ध्यभावेपि तदनुसारेणाप्यत्र साक्षात्प्रसिद्धिभावादेवमुक्तम् ।

आत्माऽन्तरात्मेति हरिरेक एव द्विधा स्थितः ।
विष्णुः स परमे वायौ परेभ्योऽप्युद्धरूपके ।
शुभान् पिबेद्धि भोगान् स छायेव विदुषां प्रभुः ।
आतपः पापिनां नित्यं

इति काठकभाष्यं मनसि निधाय लोकपदस्य शरीरार्थत्वं षष्ठ्या जन्यजनकभावसम्बन्धार्थत्वं चाभिप्रेत्य विषयवाक्यार्थमाह ।। **यौ सुकृतेत्यादिना** ।। **पञ्चेति** ।। पञ्च वा एते महायज्ञा इत्यादिना

(वाक्यार्थमुक्तावली)

तैत्तिरीयोक्तदेवपितृभूतमनुष्यब्रह्मयज्ञरूपपञ्चयज्ञेत्यर्थः । स एष यज्ञः पञ्चविधः । अग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोम इत्यैतरेयोक्तपञ्चमहायज्ञा इति वार्थः ॥ **द्युपर्जन्येति** ॥ असौ वाव लोको गौतमाग्निरित्यादि छान्दोग्योक्तदिशा द्युपर्जन्यपृथिवीपुरुषयोषिद्रूपपञ्चाग्नीत्यर्थः । **नाचिकेता इति** । नाचिकेताग्निहोमा इत्यर्थः ॥ **तद्यदा विष्णोरिति** ॥ कर्मफलभोक्तृत्वमात्रस्य विष्ण्वन्यमात्रनिष्ठत्वे विष्णौ तदभावप्राप्त्या एकदेशवैकल्ये सर्ववैकल्येन सर्वात्तृत्वरूपलक्षणासम्भवः । कर्मफलभोक्तृत्वस्य विष्णोरन्यत्रापि विद्यमानत्वे गुहान्तर्निविष्टवायुनिष्ठत्वब्रह्मविद्वचनस्तुत्यत्वादेरपि प्राप्त्या सर्वात्तृत्वस्यापि तस्मिन् सम्भावयितुं शक्यत्वेनातिव्याप्तिरित्यर्थः । यद्वा ईश्वरवत् जीवस्यापि स्वातन्त्र्येण कर्मफलभोक्तृत्वे सर्वात्तृत्वस्यापि प्रसङ्गेनातिव्याप्तिरित्यर्थः । यद्वा एकददेशपातृत्वस्य विष्ण्वेकनिष्ठत्वाभावे सर्वसारभोक्तृत्वं तदेकनिष्ठं न स्यात् । लक्षणस्य तदेकनिष्ठत्वाभावो ह्यतिव्याप्तिः इति भावः ॥ **किं विष्णोरिति** ॥ अत्र पिबन्तौ जीवेश्वरौ, उत विष्णुरूपौ इति चिन्ता । तदर्थं द्विवचनश्रुतिः, कर्मफलभोगछायातपत्वादिकं किं गुहाप्रविष्टत्वब्रह्मशब्दादिबाधकमुत तद्बाध्यमिति । तदर्थं द्विवचनश्रुत्यादिकं भेदभोक्तृत्वश्रुतिविरोधाज्ञानादिप्राप्त्या विष्णावनवकाशमुत विशेषाशुभभोगाभावविद्वदविद्वत्सुखादिहेतुत्वेन विष्णौ सावकाशमिति । बहुरूपत्वाच्चेत्यानन्दमयाधिकरणन्यायेन द्विवचनश्रुतेः सावकाशत्वाद्गतार्थमिति चेन्मैवं । न हि तत्र द्विवचनं बहुवचनं वा शङ्कितम् । तदभावात् । किं नाम संज्ञाधिकरणन्यायेनान्नमयप्राणमयेत्यादि-संज्ञाभेदेनान्नमयादीनां भेदे शङ्किते रूपभेदेन संज्ञाभेदोक्तेः । किञ्चाभ्यधिकपूर्वपक्षाच्च न गतार्थतेति भावेन हेत्वन्तरमाह ॥ **कर्मबन्धविधुरस्येति** ॥ छत्र्यछत्रिसमुदाये छत्रिणो गच्छन्तीति यथोक्तिः तथेत्यर्थः ॥ **संहर्तृत्वमात्रेणेति** ॥ अत्तेत्यस्य सर्वसंहर्तेत्यर्थोपपत्तेरिति भावः ॥ **अचेतन इति** । बुद्ध्याख्य इत्यर्थः ॥ **जीवद्वयायोगादिति** ॥ तयोरन्योन्यनियमने शरीरोन्मथनादिप्रसङ्गादिति भावः । चैद्यादिशरीरे भोक्तृद्वयसमावेशः काचित्को हरीच्छया युज्यते इति भावः । एककर्मनिर्मितशरीरे भोक्तृ-जीवद्वयायोग इति वा । चैद्यादिशरीरं तूभयकर्मनिर्मितमिति भावः । ननु जीवस्यैव मुख्यतः पातृत्वम् ईश्वरस्य तूपचारतस्तदङ्गीकारे युगपद्वृत्तिद्वयप्रसङ्ग इत्यत आह ॥ **द्वयोरिति** ॥ वृत्तिद्वयविरोधेन उभयत्राप्युपचार इत्यर्थः । यद्वा जीवस्यैव चेत् कथं पिबन्ताविति द्वयोरप्युक्तिरित्यत आह ॥ **द्वयोरपीति** ॥ एकत्र मुख्यो द्वयोरप्युपचारः । एकसत्वेऽपि द्वयं नास्तीति प्रतीत्या द्वित्वावच्छिन्नयोरुपचार इत्यर्थः । सूत्रे गुहां प्रविष्टाविति हेतुगर्भविशेषणम् । हिशब्दो वा यस्मादित्यर्थेऽपि भवति । तत्त्वित्येतत् लिङ्गवचनव्यत्ययेन तावित्यनुवर्तते । आत्मानावित्येतत् आदेयमुपादेयं शुभं कर्मफलं मात्यनुभवतीति व्युत्पत्या ऋतं पिबन्ताविति समन्वेतव्यशब्दसूचकम् । पिबन्तावित्येव वक्तव्ये एत्रमुक्तिस्तु

(वाक्यार्थमुक्तावली)

आत्मान्तरात्मेति स्मृतिसूचनार्था । ततश्चात्मानौ ऋतं पिबन्तावेवात्मान्तरात्माख्यविष्णुरूपे एव । गुहां प्रविष्टत्वलिङ्गात् । गुहाप्रविष्टत्वस्यासिद्धिं व्यभिचारं च परिहर्तुं हीत्युक्तम् । रूपद्वयेन गुहास्थत्वस्यासिद्धिं परिहर्तुं तद्दर्शनादिति तस्यात्मनो गुहास्थत्वस्य धर्मा समन्तादिति श्रुत्युक्तत्वादित्यर्थमभिप्रेत्य सूत्रभाष्यार्थमाह ॥ **यौ पिबन्तावित्यादिना** ॥ **विष्णू इति वक्तव्ये इति** ॥ ऋतं पिबन्ताविति श्रुत्यनुसारेण तत्त्वित्यस्य लिङ्गवचनव्यत्ययेन विष्णू इत्यर्थे वक्तव्ये इत्यर्थः ॥ **दीप्ताविति** ॥ घृक्षरादीप्योः । भगवन्ताविति शेषः । वीत्यस्यार्थो विशेषेण गुहास्थान इति । हृदयाविष्टेश्वरस्य कर्मफलसुखभोक्तृत्वं च तत्तदिन्द्रियविषयभोगद्वारेति भावेनाह ॥ **तथा चेति** ॥ अर्थबाहुल्याद्वा अतीतानागतविवक्षया वा बहुवचनम् ॥ **नोभयथेति** ॥ कर्मसाध्यमीश्वरः सुखं भुङ्क्ष इत्युक्तम् । आगमिष्यत्सुखानुभवस्यापि सर्वदा पूर्णत्वेनाभिनवतया तद्भोगायोगात् । किञ्च यथा लोके आकण्ठपूर्ति भुक्तवतः पुनर्भोजनमशक्यमेवं परिपूर्णानन्दस्य पुनर्भोगशक्तिरेवायुक्तेति भावः । **अचिन्त्यैश्वर्येति** ॥ एतेन चेष्टा भोगक्रियाशक्तिर्न ज्ञायतेऽचिन्त्येत्यर्थ उक्तो भवति ॥ तस्य स्वादु आहुरित्यस्यायमर्थः । य अग्रे अग्र्यः श्रेष्ठः तस्यैव स्वादु पिप्पलं कर्मफलमाहुः । यः पितरम् उत् उत्कृष्टं न वेद अत एव नशत् नाशवान् तस्य स्वादु पिप्पलं नेति ॥ **प्रसिद्धमेवेति** ॥ ब्रह्मशब्दादेर्जीवे प्रयोगेऽपि श्रुत्यादौ मुख्यप्रसिद्ध्यभावात् तस्यैवानन्दमयस्य विष्णुत्वे हेतुत्वेनोपादानं तथा श्रुत्यादौ विष्णावेव प्रसिद्धस्य गुहानिहितत्वस्यात्रापि हेतुत्वेनोपादानमित्यर्थः । भाष्ये प्रसिद्धमित्यस्यान्वयाप्रतीतेः शेषोक्त्याऽन्वयमाह ॥ **इत्यादिनेति** ॥

## तत्त्वसुबोधिनी

ॐ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॐ ॥ पूर्वत्रादितिप्रदिपादकश्रुतिबलादन्यत्र प्रसिद्धक्रियालिङ्गसमन्वयः उक्तः । अत्र पिबन्ताविति प्रत्यक्षश्रुतिबलात् अन्यत्र प्रसिद्धक्रियालिङ्गसमन्वय उच्यते इति अवान्तरसङ्गतिः । **श्रुत्यादिसङ्गतिमिति** । अव्यवहितपूर्वाधिकरणोपात्त स यद्येवासृजत इति श्रुतितदधिकरणाभ्यामित्यर्थः । लोकपदस्य शरीरार्थत्वं षष्ठ्या जन्यजनकभावसम्बन्धार्थत्वं परमे परार्ध इत्यत्र वायावित्यध्याहारं चाभिप्रेत्य ऋतं पिबन्ताविति वाक्यं योजयति । **यौ सुकृतेत्यादिना** । तद्यदा **विष्णोः अन्यस्यैव स्यादित्यादि** । पूर्वत्र सम्भवात्सर्वात्तृत्वं लक्षणत्वेनोक्तम् । ब्रह्मणि चाशुभभोक्तृत्वस्यासम्भवेऽपि शुभपातृत्वरूपं शुभभोक्तृत्वं सिद्धान्तरीत्या सम्भवति । तत्र च पिबतोः जीवेश्वरत्वं उपेत्य जीवे पातृत्वं मुख्यं ईश्वरे त्वमुख्यमिति स्वीकारेऽसम्भवः । उभयोरपि मुख्यमिति स्वीकारे तु

(तत्त्वसुबोधिनी)

जीवस्यापि शुभभोक्तृत्वेनेश्वरवत् सर्वात्तृत्वस्यापि प्रसङ्गादतिव्याप्तिरित्यर्थः । यद्वा गुहाप्रविष्टत्वादिब्रह्मलिङ्गसहितस्यापि ऋतपातृत्वासम्भवोऽतिव्याप्तिर्वा यदा तदा तत्सहचरितस्य पूर्वोक्तात्तृत्वस्यासम्भवोऽतिव्याप्तिर्वा स्यादित्यर्थः । तथा च द्वयोरपि पातृत्वं मुख्यमिति पूर्वपक्षोऽप्यत्राभिमत इति द्रष्टव्यम् । अथवा कर्मफलभोक्तृत्वस्य विष्ण्वन्यमात्रनिष्ठत्वे विष्णौ तदभावप्राप्त्या एकदेशवैकल्येन सर्वात्तृत्वरूपलक्षणासम्भवः । कर्मफलभोक्तृत्वस्य विष्णोरन्यत्रापि विद्यमानत्वे गुहाप्रविष्टात्वादेरपि प्राप्तौ सर्वात्तृत्वस्यापि विष्ण्वन्यस्मिन्सम्भावयितुं शक्यत्वेन सर्वात्तृत्वस्यातिव्याप्तिरित्यर्थः । ननु बहुरूपत्वस्यानन्दमयाधिकरण उक्तत्वात् द्विवचनश्रुतिः रूपद्वयाभिप्रायेण सावकाशेत्यतो हेत्वन्तरमाह । **कर्मबन्धविधुरस्येति** । ननु कर्मबन्धविधुरत्वेऽप्यस्तु कर्मफलभोग इत्यत आह । **अनश्नन्नन्य इत्यादिश्रुतेरिति** । अन्यथा एतच्छ्रुतिविरोधः स्यादिति भावः । न चैवमित्यत्र ईश्वरपक्षे अनुपपत्त्यभिधाने इत्येवंशब्दार्थः । ननु जीवस्य मुख्यतः पातृत्वम् ईश्वरस्य तूपचारेण तदित्यङ्गीकारे युगपत् वृत्तिद्वयविरोधप्रसङ्ग इत्यत आह । **द्वयोरिति** । द्वित्वावच्छेदेन उभयत्राप्युपचार इत्यर्थः । अत एव पूर्वं तादृश एव छत्रिन्याय उदाहृतः । तथा च लक्षणमयुक्तमिति । यद्यपि सर्वसंहर्तृत्वरूपं लक्षणं ब्रह्मण्येवेति पूर्वपक्षिणा स्वीकृतम् । अत एव टीका कर्मफलभोगं विनापि संहर्तृत्वमात्रेण तदुपपत्तेरिति । तथापि सिद्धान्त्यभिप्रेतं संहर्तृत्वविशेषात्मकं भक्षयितृत्वरूपं लक्षणमयुक्तमिति भावः । **गुहाप्रविष्टत्वलिङ्गादित्यर्थ इति** । अनेन सूत्रे गुहां प्रविष्टाविति हेतुगर्भं विशेषणं हिशब्दो यस्मादित्यर्थेऽपि वर्तत इति सूचितमिति बोद्धव्यम् । न च समन्वेतव्यलिङ्गप्रदर्शनाय पिबन्ताविति वक्तव्यं श्रुत्यनुसारादिति वाच्यम् । आत्मशब्दस्यापि आदेयं कर्मफलं माति अनुभवतीति व्युत्पत्या कर्मफलभोक्तृत्वलिङ्गप्रतिपादकत्वेन स्मृतिसमाख्याप्रदर्शनाय तद्ग्रहणात् । तथा च आत्मशब्दग्रहणेन उभयमपि प्रयोजनं सिद्ध्यतीति भावः । रूपपदप्रयोगप्रयोजनमाह । **विष्णू इति** । घर्मेत्यस्यार्थो दीप्ताविति । समन्तेत्यस्यार्थो व्याप्ताविति । भगवन्ताविति विशेष्यपदस्य श्रुतावध्याहारः । वीत्यस्यार्थो विशेषेण गुहास्थान इति । **वाक्यशेष इति** । य अग्रे श्रेष्ठः तस्यैव स्वादु पिप्पलमाहुः । यः उत् उत्कृष्टं पितरं न वेद । अत एवानशत् नाशवान् । तस्य स्वादु पिप्पलं नेत्यर्थः । **तद्युक्तेरिति** । गुहानिविष्टत्वयोगादित्यर्थः । **श्रुत्यादिप्रसिद्धमिति** । ब्रह्मशब्दादेः जीवे प्रयोगेऽपि श्रुत्यादिना विष्णावेव प्रसिद्धस्य हेतुत्वेन उपादानमित्यर्थः । नन्वयमर्थः मूलान्नावगम्यत इत्यत आदौ विष्णोरेव गुहानिविष्टत्वमिति प्रसिद्धमित्यनन्तरमितिशब्दमध्याहृत्य व्याख्येयम् । सोदाहरणपूर्वकं यो वेदेति मूलवाक्यं व्याख्याति । **य इत्यादिना प्रसिद्धं हीत्यादिना** ।

## वाक्यार्थविवरणम्

फलभोक्तृत्वं नाम कर्मानुसारेण प्राप्तशुभविषयभोक्तृत्वमेव विवक्षितम् । अत एव 'विषयानुपसेवत' इति गीतावाक्यमुदाहृतम् । कर्मफलभूतसुखभोक्तृत्वविवक्षायाम् एतद्वाक्योदाहरणमसङ्गतं स्यादिति ध्येयम् ॥

## वाक्यार्थमञ्जरी

एकस्येत्येदद्विवचनानुपपत्तिस्फुरणायोक्तं कर्मफलात्तृत्वं न प्रतीयत इत्यत आह ॥ **पातृत्वशब्द-वाच्यमिति** ॥ षष्ठ्यर्थो जन्यजनकभावसम्बन्ध इत्याह ॥ **सुकृतनिर्मित इति** ॥ आ ऋद्धः अर्द्धः परेभ्योऽप्यर्द्धः परार्ध इत्याशयेन परार्धशब्दार्थमाह ॥ **अतिपूर्णेति** ॥ **पञ्चमहायज्ञेति** ॥ देवपितृभूतमनुष्य-ब्रह्मयज्ञरूपपञ्चमहायज्ञा इत्यर्थः । यद्वा दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोम इति पञ्चमहायज्ञा इत्यर्थः ॥ **द्युपर्जन्येति** ॥ द्युपर्जन्यपृथिवीपुरुषयोषिद्रूपपञ्चाग्निविद्येत्यर्थः । नाचिकेताः नाचिकेत-नामकेष्टिवन्तः । छायातपौ विद्वदविद्वत्सुखदुःखकरौ । अन्यस्यैव द्वयोर्बुद्धिजीवत्वपक्षे न तस्य सर्वात्तृत्वं तथा चासम्भव इति भावः । अन्यस्यापि द्वयोर्जीवेश्वरत्वपक्षे गुहां प्रविष्टत्वादिविष्णुलिङ्गसहचरितकर्मफल-भोगवतः सर्वात्तृत्वस्यापि सम्भावयितुं शक्यत्वादिति भावः ॥ **विष्णोरन्यस्य वेति** ॥ किं विष्णोरेवातोऽ-न्यस्यापीत्यर्थः ॥ **निरवकाशत्वादिति** ॥ तद्वाच्यद्वित्वस्य निर्भेदे हरौ कथमपि घटयितुमशक्यत्वादिति भावः । बहुरूपत्वाच्चेत्यानन्दमयनयोक्तरीत्या द्विवचनश्रुतिः सावकाशेत्यतो निमित्तान्तरमाह ॥ **कर्मेति** ॥ हरिः कर्मफलाभोक्ता तद्बन्धविधुरत्वाद् घटवदिति युक्तिविरोधमभिधाय श्रुतिविरोधं चाह ॥ **अनश्नन्निति** ॥ जीवादन्यो हरिः पिप्पलं कर्मफलम् अनश्नन्नेवाभिचाकशीतीत्यर्थः । **छत्रिन्यायेनेति** ॥ छत्र्यछत्रिसमुदाये यथा छत्रिणो गच्छन्तीत्यौपचारिकप्रयोगः एवं भोक्त्रभोक्तृसमुदायेऽप्यौपचारिक-पिबन्ताविति प्रयोग इत्यर्थः । विरोध ईश्वरस्य भोगानङ्गीकारे को हेतुरिति प्रश्नस्योत्तरमाह ॥ **एकस्येति** ॥ **न्याय्यत्वात्** । अस्य गौरिति वक्ष्यमाणरीत्या ॥ **भोक्तृजीवद्वयेति** ॥ तच्छरीरजन्यकर्मफलभोक्तृजीव-द्वयेत्यर्थः । तेन पिशाचावेशवत्किं न स्यादिति निरस्तम् । ननु जीवस्यैव मुख्यतः पातृत्वमीश्वरस्य तूपचारतस्तदङ्गीकारे युगपद्वृत्तिद्वयप्रसङ्ग इत्यत आह ॥ **द्वयोरपीति** ॥ द्वित्वावच्छेदेनोभयत्राप्युपचार इत्यर्थः । अत एव पूर्वं तादृश एव छत्रिन्याय उदाहृतः ॥ ॐ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॐ ॥ कर्मफलभोक्तारावात्मानावेव । आत्मान्तरात्माख्यभगवद्रूपविशेषावेव न जीवेश्वरौ । कुतः हि यस्माद्गुहां प्रविष्टो गुहाप्रविष्टत्वं च यो वेद निहितं गुहायामित्यादिना तत्रैव प्रसिद्धमित्यपि हिशब्दार्थः ।

(वाक्यार्थमञ्जरी)

रूपद्वयस्य गुहास्थत्वं कुत इत्यत उक्तं तद्दर्शनात् तस्यात्मनो गुहास्थत्वस्य घर्मा समन्तेत्यादि-श्रुत्युक्तेरित्यर्थः । वीत्युपसर्गार्थो विशेषेण गुहास्थान इति आवृत्तिं मत्वाह ॥ **त्रिवृतमिति** ॥ आत्मा देहस्थः । अन्तरात्मा जीवस्थः । कर्मफलभोगस्येन्द्रियसाध्यत्वाद्धृदयप्रविष्टस्य कथं तदित्यत आह ॥ **तथा चेति** ॥ अर्थबाहुल्याद्बहुवचनम् । अधिष्ठाय तत्र स्थित्वा । उपसेवते भुङ्क्ते ॥ **पूर्णानन्दत्वादिति** ॥ पूर्णानन्दत्वेन दुःखावकाशाभावात् । प्राप्तव्यसुखापेक्षाभावाच्चेति भावः । शुभाशुभशब्दौ सुखदुःखपरौ । अन्तरङ्गज्ञापकं चाह ॥ **तथा हीति** ॥ यो भगवानग्रे अग्र्यः सर्वतः श्रेष्ठः तस्येत् तस्यैव पिप्पलं कर्मफलं स्वादु शुभमाहुः । यस्तु जीवः पितरं जगज्जनकं भगन्तम् उत् उत्कृष्टत्वेन न वेद । अत एव नशत् नरकाद्यनर्थरूपं नाशं प्राप्नुवानो पुरुषार्थनाशवान्वा तस्य पिप्पलं न स्वाद्वाहुरित्यर्थः । इत्यादिनेत्याद्यनुवादः । विष्णोरेवेत्यादि व्याख्या ॥

## विवृतिः

पूर्वत्रादितिप्रतिपादकश्रुतिबलादन्यत्रप्रसिद्धक्रियालिङ्गसमन्वय । उक्तः अत्र तु पिबन्ताविति प्रत्यक्षश्रुतिबलादन्यत्र प्रसिद्धक्रियालिङ्गसमन्वय उच्यते इत्यवान्तरसङ्गतिः ॥ **श्रुत्यादिसङ्गतिमिति** ॥ अव्यवहितपूर्वाधिकरणोपात्त 'स यद्यदेवासृजत' इतिश्रुतितदधिकरणाभ्यामित्यर्थः । लोकपदस्य शरीरार्थत्वं षष्ठ्या जन्यजनकभावसम्बन्धार्थत्वं, परमेपरार्ध इत्यत्र वायावित्यध्याहारं चाभिप्रेत्य ऋतं पिबन्ताविति वाक्यं योजयति ॥ **यौ सुकृतेत्यादिना** ॥ तद्यदा विष्णोरन्यस्यैव स्यादित्यादि पूर्वत्र सम्भवात्सर्वात्तृत्वं लक्षणत्वेनोक्तम् । ब्रह्मणि चाशुभभोक्तृत्वस्यासम्भवेऽपि शुभपातृत्वरूपं शुभभोक्तृत्वं सिद्धान्तरीत्या सम्भवति । तत्र च पिबतोर्जीवेश्वरत्वमुपेत्य जीवे पातृत्वं मुख्यम् ईश्वरे त्वमुख्यमिति स्वीकारेऽसम्भवः । उभयोरपि मुख्यमिति स्वीकारे तु जीवस्यापि शुभभोक्तृत्वेनेश्वरवत्सर्वात्तृत्वस्यापि प्रसङ्गात् इति ॥ आत्मशब्दस्यापि आदेयं कर्मफलमनुभवतीति व्युत्पत्या कर्मफलभोक्तृत्वलिङ्गप्रतिपादकत्वेन स्मृतिसमाख्याप्रदर्शनाय तद् ग्रहणात् । तथा चात्मशब्दग्रहणेनोभयमपि प्रयोजनं सिध्यतीति भावः । रूपपदप्रयोगप्रयोजनमाह ॥ **विष्णू इति** ॥ घर्मेत्यस्यार्थो दीप्तौ **व्याप्ताविति** ॥ भगवन्ताविति विशेष्यपदस्य श्रुतावध्याहारः ॥ वीत्यस्यार्थो विशेषेण गृहस्थ इति ॥ **वाक्यशेप इति** ॥ य अग्रे श्रेष्ठस्तस्यैव स्वादु पिप्पलमाहुः ॥ यः पितरं न वेद अत एव नशत् नाशवान् स्वादुपिप्पलं नेत्यर्थः ॥ **तद्युक्तेरिति** ॥ गृहानिविष्टत्वयोगादित्यर्थः ॥ **श्रुत्यादिप्रसिद्धमिति** ॥ ब्रह्मशब्दादेर्जीवप्रयोगेऽपि श्रुत्यादिप्रसिध्यभावादानन्दमयाधिकरणादौ यथा तस्य हेतुत्वोपपादनं तथा प्रकृतेऽपि गुहानिविष्टत्वस्य

(विवृतिः)

श्रुत्यादिना विष्णावेव प्रसिद्धस्य हेतुत्वेनोपादानमित्यर्थः ॥ नन्वयमर्थो मूलान्नावगम्यत इत्यतः आदौ विष्णोरेव गुहानिविष्टत्वं प्रसिद्धमित्यनन्तरमितीतिशब्दमध्याहृत्य व्याख्येयम् सोदाहरणपूर्वकं यो वेदेति मूलवाक्यं व्याख्याति ॥ इत्यादिना प्रसिद्धं हीत्यादिना ॥

## सूत्रभाष्यम्

**॥ ॐ विशेषणाच्च ॐ ॥ १२ ॥**

'यः सेतुरीजानानामक्षरं ब्रह्म तत्परमि' (क.उ. १-३-२) ति ।

'पृथग्वक्तुं गुणास्तस्य न शक्यन्तेऽमितत्वतः ।
यतोऽतो ब्रह्मशब्देन सर्वेषां ग्रहणं भवेत् ॥

एतस्माद्ब्रह्मशब्दोऽयं विष्णोरेव विशेषणम् ।
अमिता हि गुणा यस्मान्नान्येषां तमृते वि(प्र)भुम् ॥' इति ब्राह्मे ।

**न च जीवे समन्वयोऽभिधीयते ।** 'सत्य आत्मा सत्यो जीवः सत्यं भिदा सत्यं भिदा सत्यं भिदा मैवाऽरुवण्यो मैवाऽरुवण्यो मैवाऽरुवण्य' इति पैङ्गिश्रुतिः । 'आत्मा हि परमस्वतन्त्रोऽधिगुणो जीवोऽल्पशक्तिरस्वतन्त्रोऽवर' इति भाल्लवेयश्रुतिः ।

'यथेश्वरस्य जीवस्य भेदस्सत्यो विनिश्चयात् ।
एवमेव हि मे वाचं सत्यां कर्तुमिहार्हसि ॥

यथेश्वरश्च जीवश्च सत्यभेदौ परस्परम् ।
तेन सत्येन मां देवास्त्रायन्तु सहकेशवाः ॥'

इत्यादेर्नासत्यो भेदः ॥ १२ ॥

## सत्तर्कदीपावली

अक्षरं ब्रह्म तत्परमिति ब्रह्मशब्देन विशेषितत्वादपि ऋतपातृत्वं द्विरूपविष्णोरित्येतत्प्रतिपादयत्सूत्रमुपन्यस्य व्याचष्टे ॥ विशेषणादित्यादिना ॥ ब्रह्मशब्दस्य विष्ण्वेकपरत्वं पुराणवचनेन प्रतिपादयति ॥ **पृथगिति** ॥ गुहां प्रविष्टाविति जीवपरमात्मानावभिधीयेते इति वदन्तं प्रत्याह । **न च जीवे समन्वय**

(सत्तर्कदीपावली)

**इति ।** ननु जीवस्य परमात्माभिन्नत्वेन परमात्मवज्जीवेऽपि श्रुतिसमन्वयप्रतिपादनं न पूर्वासङ्गतमित्याशङ्क्य श्रुतिपुराणवचनैः परिहरति । सत्य इत्यादिना । आरुर्त्रणापरपर्यायः । स्वदोषदर्शिभिः आरुभिः वन्यो वननीयो भजनीयो नैव भवति । विष्णोर्निरवद्यस्य स्वदोषज्ञानिषु प्रीत्यभावात् । अतो दोषिभ्यो जीवेभ्यो अत्यन्तभिन्नतया जानद्भिरेव विष्णुर्भजनीयो नान्यथेत्यर्थः । (१।२।३)

## तत्त्वप्रदीपिका

**विशेषणाच्च ।** ''यस्सेतुरि''त्यादिना यजमानानामाश्रयत्वेन ब्रह्मशब्देनैकवचनेनाक्षरशब्देन च **विशेषणाच्च** पिबन्तौ विष्णुरूपे एव ।

''अक्षयाद्प्रतिरूपत्वादक्षेषु रमणादपि ।
अक्षरं भगवान्विष्णुरोमित्युच्चत्वहेतुत'' इति तार्तीये ॥

ये त्वत्र जीवपरयोस्समन्वयं ब्रुवते तन्नेत्याह— **न च जीवे समन्वयोऽभिधीयत इति ।** तदेव ब्रह्म समन्वयादवगम्यत इति प्रतिज्ञातत्वात् । यत्नूक्तं जीवपरपक्षे छत्रिन्यायेनोपपत्तिरिति । तदसत् । एकत्र विद्यमानं हि च्छत्रित्वमन्यत्रोपचर्यते । न चात्र जीवस्य पातृत्वं मुख्यं संवदसे । मिथ्यान्तः-करणसम्बन्धकृतत्वाभ्युपगमात् । संवदसे चेज्जीवस्य मुख्यतस्तदभिन्ने परमात्मनि किं वदसे । तस्मान्नात्र च्छत्रिन्यायानुप्रवेशः । अस्मत्पक्षे तु पानस्वातन्त्र्यान्मुख्यत एव परः पातेत्युच्यते । अन्यस्थाने पिबन्तावित्युक्तेश्च न जीवपरपक्षोऽत्र युक्तः ।

यत्पुनरिदमवादि, छायारूपत्वं परस्य नोपपन्नमिति । नायं दोषः । अमरासुराणां छायातपाविति योजनायोगात् । अमराणामाह्लादकौ, असुराणां तापकावित्यर्थः । जीवस्य च्छायारूपत्वं परस्याऽतप-रूपत्वमभ्युपगच्छन्परस्परविरुद्धलक्षणयोस्तयोरभेदवार्तां नानुवर्तेत । न च जीवस्य तमःसम्पर्काच्छाया-रूपत्वमिति वाच्यम् । तस्य तथात्वे तदभेदिनः परस्यापि तथात्वप्रसङ्गात् । व्यावहारिकमेव जीवस्य तमःसम्पृक्तत्वमिति चेदस्तु तर्हि परस्यापि व्यावहारिकमेव । तस्य व्यावहारिकमपि नास्तीति चेन्न । ब्रह्मैवाज्ञानात्संसरतीति व्यवहारदर्शनादित्यलं प्रपञ्चेन ।

नन्वविद्यात्मकासत्यभेदनिराकरणेन ब्रह्मैक्यप्रतिपादनात्मको जीवसमन्वयोऽस्तीत्यत आह— **सत्य आत्मेत्यादि ।** सत्यं भिदा सत्यं तयोर्भेद एव नाभेदः । आत्मजीवयोः पृथक् सत्यत्ववचनेनैव स्वरूपभेदस्य सत्यत्वमुक्तम् । पुनः सत्यं भिदेति शपथावृत्तिः दुर्दर्शनप्रतीताभेदनिरासतात्पर्यार्थेति निश्चीयते । मैत्राऽरुवण्य इति विपक्षे दूषणं चाभीक्ष्णमभिधत्ते श्रुतिः । आसमन्तादरशीला आरवः, तैर्वन्यो वननीयो

(तत्त्वप्रदीपिका)
नैव भवति परमात्मा । महातमःप्रापकपरमात्माभेदनिर्गुणत्वजगन्मिथ्यात्वादिभावनादोषशीलैर्मायिभिर्नैव भजनीय इत्यर्थः ।

"द्वौ भूतसर्गौ लोकेऽस्मिन्दैव आसुर एव च ।
दैवो विस्तरशः प्रोक्तः आसुरं पार्थ मे शृणु ॥
असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्"

इत्यारभ्य—

"तानहं द्विषतः क्रूरान्संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु" इति भगवद्वचनम् ॥

"असत्यमप्रतिष्ठं ये जगदाहुरनीश्वरम् ।
त आसुराः स्वयं नष्टा जगतः क्षरकारिण" इति व्याससमृतिः ॥

"इन्द्रासोमा तपतं रक्ष उब्जतं न्यर्पयतं वृषणा तमोवृधः ।
पराभृणीतमचितो न्योषतं हतं नुदेथां निशिशीतमत्रिणः ॥"

"इन्द्रा सोमा वर्तयतं दिवस्पर्यग्नितप्तेभिर्युवमश्महन्मभिः ।
तपुर्वधेभिरजरेभिरत्रिण" इत्यादिका च श्रुतिः ॥

येषां जगदीश्वरजीवत्रयं नास्ति ते 'अत्रिणः' ।

"स्वाज्ञानकल्पितजगत्परमेश्वरत्व-
जीवत्वभेदकलुषीकृतभूमभावे"ति हि मायिनो वदन्ति ॥

"आच्छाद्य विक्षिपति संस्फुरदात्मतत्त्वं
जीवेश्वरत्वजगदाकृतिभिर्मृषैवे"त्यादि च ॥

"त्रिर्यातुधानः प्रसितिं त एत्वृतं योऽग्ने अनृतेन हन्ति ॥
वाचा स्तेनं शरव ऋच्छन्तु मर्मन् विश्वस्यैतु प्रसितिं यातुधानः"

"अथ ज्ञानोपसर्गा" इत्यारभ्य "अथ ये चान्ये मिथ्यातर्कैर्दृष्टान्तैः कुहकेन्द्रजालैर्वैदिकेषु परिस्थातुमिच्छन्ति तैस्सह न संवसेत् प्रकाश्या ह्येते तस्करा अस्वर्ग्या" इत्यादिश्रुतिशतैरन्धन्तम एव मायिनां गतिरिति निश्चीयते ॥ तथा च स्कान्दे—

(तत्त्वप्रदीपिका)

''सर्वब्रह्मत्ववेत्तारो जीवब्रह्मत्ववेदिनः ।
अन्यसाम्यविदो विष्णोर्विष्णुद्वेष्टार एव च ॥
सर्वे यान्ति तमो घोरं न तेषामुत्थितिः क्वचिदि''ति ॥

यथेश्वरस्य जीवस्येति पाद्मे । यथेश्वरश्च जीवश्चेति स्कान्दे ॥

## तत्त्वप्रकाशिका

एवं निरवकाशलिङ्गस्य सावकाशश्रुतितोऽपि प्राबल्याद्विष्णोर्भोक्तृत्वसम्भवाच्च स एव पातेति सिद्ध्यति किमु निरवकाशश्रुत्यापीत्यर्थं प्रतिपादयत्सूत्रं पठित्वा तदभिप्रेतश्रुतिमेवोदाहरति ॥ **विशेषणाच्चेति** ॥ यः सेतुरिति पिबतोरेकवचनेन विशेषणात् । एक एव पाता । स च ब्रह्मत्वविशेषणाच्च विष्णुरेवेति भावः । ब्रह्मशब्दस्य भगवदेकवाचित्वं स्मारयति ॥ **पृथगिति** ॥ तस्य गुणा अमितत्वतो विविच्य यतो वक्तुं न शक्यन्तेऽतस्तस्मिन् ब्रह्मशब्दः प्रयुज्यते । यतो ब्रह्मशब्देन सर्वगुणानां ग्रहणं भवेत् ।

एवं सर्वगुणवाची यतो ब्रह्मशब्द एतस्माद्विष्णोरेव वाचको नान्येषां तस्यैवामितगुणत्वात् । तं विनाऽन्येषां तदभावादित्यर्थः । एवं सूत्रद्वयं व्याख्याय परकृतापव्याख्यां निराकरोति ॥ **न चेति** ॥ अत्र प्रतीतौ पिबन्तौ किं बुद्धिजीवौ जीवेश्वरौ वेति सन्देहे बुद्धिजीवाविति प्राप्ते सिद्धान्तितम् । जीवेश्वरावेतौ भवतोऽन्यतरस्य पातृत्वेन जीवत्वे सिद्धे द्वितीयस्य चेतनतयैव भाव्यत्वात् । अस्य गौर्द्वितीयोऽन्वेष्टव्य इत्यादौ सजातीयग्रहणस्यैव लोके दर्शनादिति व्याख्यानमयुक्तम् । समन्वयासङ्गतत्वात् । न ह्यस्मिन्नध्याये जीवे समन्वयोऽभिधीयते । येन जीवेश्वरावेताविति साधनं सङ्गतं स्यादतो नासौ व्याख्या युक्तेति भावः । न च छायातपत्वविशेषणादेतत्कल्प्यम् । विद्वदविदुषोः सुखदुःखकारणत्वेन तदुपपत्तेः । न हि छायातपशब्दौ विद्याविद्यावद्वाचकौ । किं च पिबतोर्बुद्धिजीवत्वे किं छिन्नं किं वा जीवेश्वरत्वे लब्धम् । परेणापि जीवे तदभ्युपगमात् । ईश्वरे समन्वयसिद्धिरिति चेन्न । ईश्वरे लिङ्गस्यौपचारिकत्वाभ्युपगमात् । एवं च जीव एव समन्वयः साधितः स्यात् ततश्च किं पूर्वपक्षिणाऽपराद्धम् । तेनापि पातृत्वस्य बुद्धौ लाक्षणिकत्वाभ्युपगमात् । नात्र जीवे समन्वयकथनमसङ्गतं जीवेशभेदस्यासत्यत्वादित्यत आह ॥ **सत्य इति** ॥ सत्यं सत्या । आरुवण्यो दोषिभिर्भजनीयः । यता सत्यभेदौ तथैव ज्ञातेन तेन सत्येन कारणेन । अतो हरिरेव सुकृतफलभोक्तेति न तस्य सर्वात्तृत्वलक्षणायोग इति स्थितम् ॥ १२ ॥ अ.३ ॥

## गुर्वर्थदीपिका

एकवचनेन विशेषणादित्युपलक्षणम् । ईजानानां ''एजृ कम्पन'' इति धातोः चेष्टावतां जीवानां सेतुराधार इति जीवेभ्योऽप्युत्तमत्वेन विशेषणादित्यपि द्रष्टव्यम् । तस्य गुणा अमितत्वतो विविच्य यतो

(गुर्वर्थदीपिका)

न वक्तुं शक्यन्ते अतो ब्रह्मशब्देन सर्वेषां गुणानां ग्रहणं भवेदिति यथास्थितवाक्ययोजना ब्रह्मशब्दस्य सर्वगुणवाचित्वाभावेऽसम्बद्धेव भाति । अवाचकपदेन ग्रहणे विष्णुपदेनापि ग्रहणसम्भवात् । तेन ब्रह्मशब्दस्य सकलगुणवाचित्वं स्फोरयितुं टीकाकृता अतो ब्रह्मशब्दः तस्मिन्नेव प्रयुज्यते ''अथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन्गुणा'' इत्यादिश्रुतौ प्रयुज्यत इति मध्येऽध्याहारं कृत्वा यत एवं ब्रह्मशब्देन सर्वेषां ग्रहणं भवेदिति पुनर्यतः शब्दावृत्त्या तदेवानूद्य पुनश्च हेत्वोः सामानाधिकरण्याय एवं सर्वगुणवाची यतो ब्रह्मशब्द इति फलितमुक्त्वा एतस्मादुक्तविधया ब्रह्मशब्दस्य सर्वगुणवाचित्वात्तदयं ब्रह्मशब्दः विष्णोरेव विशेषणमितरव्यावर्तकतया प्रतिपादकमित्युक्तम् । जीवानामपि सर्वगुणपूर्णत्वे कथमेतदित्याशङ्क्य यस्मात्तं विभुमृते अन्येषाममितगुणा नहि तस्मात्तस्यैव विशेषणमिति पुनः समाधानं कृतम् । न च छायातपत्वविशेषणादेतत् कल्पनमित्यत्र छायापदेनाविद्याविशिष्टो जीवः आतपपदेन सर्वज्ञेश्वर इति पराभिप्रायं सूचयति । आरुवण्य इत्यत्र अरसम्बन्धी आर एव ताच्छील्यादारुः तेन वण्यो भजनीयः । ''वन सम्भक्तौ''विति धातुः । नणयोरभेद इति वचनान्नकारस्य णकारः । ज्ञातेन तेन सत्येनेत्यत्र ज्ञातेन तेन सत्येन तेन भेदेन कारणेनेति योजना । भेदसत्यत्वज्ञानाख्यकारणेनेत्यर्थः ॥ १-२-३ ॥

## भावबोधः

**यः सेतुरिति पिबतोरेकवचनेन विशेषणादित्यादि–** ''विशेषणाच्चेति'' सूत्रं यः सेतुरित्यादि-भाष्येणैकवचनेन विशेषणाद् ब्रह्मशब्देन विशेषणाच्चेति द्विधा व्याख्यातम् । अन्यथा अक्षरं ब्रह्म तत्परमित्यस्यैतावत एवोदाहरणं स्यात् । न तु यः सेतुरिति पूर्वभागस्येति भावः । अप्रतिपत्तिपरिहारार्थं पृथग्वक्तुमिति स्मृतिं व्याचष्टे । **तस्य गुणा अमितत्वत इत्यादिना** । पृथगित्यस्यार्थो विविच्येति । अत इत्यनन्तरं तस्मिन् ब्रह्मशब्दः प्रयुज्यत इति शेषोक्तिः । अमितत्वतो विविच्य वक्तुमशक्यत्वेऽपि कुतो ब्रह्मशब्दप्रयोग इत्याशङ्कापरिहारार्थं ब्रह्मशब्देन सर्वेषां गुणानां ग्रहणं भवेदित्याशयेन यत इत्यावृत्या तद्योजितम् । ब्रह्मशब्दस्य सूत्राभिप्रेतहेतुत्वसमर्थनार्थमेतस्मादित्यादि प्रवृत्तमित्यभिप्रेत्य 'यतोऽतो ब्रह्मशब्देन सर्वेषां गुणानां ग्रहणं भवेत्' । इत्येतदत्रापि हेतुवाक्यत्वेन संयोज्य तद्व्याख्यातम् । तत्र विशेषण-मित्यस्यार्थो वाचक इति । 'नान्येषां तमृते विभुम्' इत्युक्तहेतोः साध्यप्रदर्शनार्थमेवकारार्थविवरणं कृतम् । **तं विनाऽन्येषामिति** । **सुखदुःखकारणत्वेनेति** । छायातपशब्दयोः क्रमेण सुखदुःख-कारणार्थत्वादिति भावः । **विद्याविद्यावद्वाचकाविति** । छायातपशब्दाभ्याम् अनयोर्यथायोग्यं सम्बन्धो, न तु यथाक्रमम् । अल्पाच्तरमिति विद्यापदस्य पूर्वं प्रयोग इति बोद्धव्यम् । जीवेश्वरभेदसत्यत्वस्य स्वरूपसतः कथं त्राणकारणत्वमतिप्रसङ्गादित्यत आह । **तथैव ज्ञातेनेति** ।

(भाववोधः)

अत्राद्येविषयवाक्यस्थलिङ्गरूपसाधकोक्तिः । द्वितीये तदुत्तरवाक्यगतश्रुतिरूपसाधकोक्तिः । ''द्वित्वञ्चैकस्य युज्यते'' तथा ''यः सेतुरिति चैकत्ववचनेन विशेषणादि''त्यनुव्याख्यानरीत्या द्विवचनश्रुतेः सावकाशत्वोपपादकस्य चोक्तिरिति सूत्रक्रमः ॥ ३ ॥

## भावदीपः

ॐ **विशेषणाच्च** ॐ ॥ उक्तसमुच्चये सौत्रचशब्द इति व्यञ्जयन्नवतारयति ॥ **एवमिति** ॥ **स एवेति** ॥ न तु जीवसहित इत्येवार्थः । द्विवचनान्तं रूपपदं त्यक्त्वा पातेत्युक्तैकवचनान्तस्य तात्पर्यलब्धस्यानुवादस्तु एकवचनेन विशेषणादिति हेत्वन्वयायेति भावः । भाष्यस्य सूत्रेणान्वयं मत्वा यः सेतुरिति चैकत्ववचनेन विशेषणादित्यनुभाष्यदिशाऽर्थमाह ॥ **यः सेतुरिति** ॥ पृथगित्यादिस्मृत्यनुरोधात् ब्रह्म तत्परम् इत्यन्तवाक्योदाहरणाच्चार्थान्तरं चाऽऽह ॥ **ब्रह्मत्वेति** ॥ ब्रह्मशब्दस्यान्यथासिद्धिशङ्काया बीजनिरासेनानुदयादत्र भाष्ये केवलब्रह्मशब्दस्यैव स्मृत्या निरवकाशताप्रदर्शनाच्च ब्रह्मशब्दस्य परत्वविशेषणाच्चेत्यपि व्याख्यानं न कृतम् । अत एव स्मारयतीत्युक्तिः न तु साधयतीति । यद्वोक्तदिशा तदपि व्याख्यानं सुज्ञानमिति भावः ॥ **स्मारयति** ॥ स्मृत्या दर्शयतीत्यर्थः । स्मृतौ यतो वक्तुं न शक्यन्ते अत सर्वेषां ब्रह्मशब्देन ग्रहणं भवेदित्यस्य साक्षादनन्वयादेतस्मादित्यनेन परामृश्यमानहेतोरप्रतीतेश्च अत इत्यस्य साध्यमध्याहृत्य योजयति ॥ **तस्येति** ॥ पृथक् विविच्य । यत इत्यस्याऽऽवृत्तिं मत्वाऽऽह ॥ **यतो ब्रह्मशब्देनेति** ॥ तस्य पर्यवसितार्थमाह ॥ **एवमिति** ॥ पृथगित्यादिनोक्तप्रकारेण । एतेन पूर्वार्धमेतस्मादिति हेतूपपादकत्वेन उत्तरार्धैकदेशस्तु एतस्मादित्यस्य विषयं दर्शयितुं प्रवृत्तमिति दर्शितम् । एतस्मादित्यर्धोपपादकत्वेन तदुत्तरार्धमिति भाष्यसूचितयोग्यसाध्यहेतू अभिधाय तदुपपादकतया न चेत्यादिभाष्यं योजयितुमाह ॥ **अत्रेति** ॥ **न च च्छायेति** ॥ अविद्याश्रयत्वप्रकाशवत्त्वरूपच्छायातपत्वेत्यर्थः ॥ **विद्वदिति** ॥ छायेव विदुषां प्रभुः । आतपः पापिनामिति काठकभाष्योक्तस्मृतेरिति भावः ॥ **विद्याविद्येति** ॥ यथायोगमन्वयः । यद्यप्यष्टमस्कन्धतात्पर्यनिर्णये पञ्चमेऽध्याये छाया त्वविद्या सम्प्रोक्ता जन्यविद्याऽऽतपः स्मृत इत्युक्तं तथापि तद्वत्त्वार्थकत्वं त्वप्रामाणिकमिति भावः । भाष्ये न च जीवेश्वरयेरिति वाच्ये जीव इत्येकवचनोक्त्या सूचितं दोषमाह ॥ **किं चेति** ॥ ननु भेदस्य सत्त्वे कुतो न जानन्ति केचिदित्यतो भाष्ये मैवारुवण्य इत्युक्तम् । तदर्थमाह । **दोपीति** । अरा दोषाः तद्वन्तः आरवः वन सम्भक्ताविति धातुः । शपथत्वेन त्रिरुक्तिरिति भावः । तेन सत्येन इत्यत्र तच्छब्दपरामृष्टं दर्शयंस्तस्य तत्र हेतुत्वं घटयति ॥ **यथेति** ॥ सत्येन भेदेनेति योज्यम् ।

(भावदीपः)

सत्येन भेदज्ञानेन कारणेनेत्यर्थः । ऋतं पिबन्तावित्यत्र विवक्षितऋतशब्दार्थं वदन्नुपसंहरति ॥ **अत इति** ॥ अतो निरवकाशश्रुतिलिङ्गभावादनशनश्रुतिद्विवचनश्रुत्यविरोधाच्चेत्यर्थः । ऋतशब्दः सुकृतमात्रपरो न तु सुकृतदुष्कृतसाधारणकर्ममात्रपरः । सुकृतस्य लोक इति सान्निध्यात् । ऋतं सत्यं तथा धर्मः सुकृतं चाभिधीयत इति स्मृतेश्चेति भावेनोक्तम् ॥ **सुकृतफलभोक्तेति** ॥ इतिशब्दो हेत्वर्थः । शेषेण फलोक्तिः । यदत्र केनचिदत्तेत्यादिविशेषणांश्चेत्यन्तसूत्राणामैकाधिकरण्यमुपेत्याधिकरणभेदे दोषोद्भावनं तच्चन्द्रिकायां निरस्तम् । यदपि सूत्राक्षरास्वारस्यवर्णनं तदपि तन्त्रदीपिकायां प्रतिपदं स्वारस्यवर्णनान्निरस्तं ध्येयम् ॥ १२ ॥ अ.३ ॥

## अभिनवचन्द्रिका

ननु – विष्णो र्न लिङ्गेन पातृत्वनिर्णयो युज्यते । सम्भावितस्यैव साधनार्हत्वादित्यत आह – (सू.१२) **भोक्तृत्वसम्भवाच्चेति** ॥ अचिन्त्यैश्वर्यबलेन असम्भावनाया निरस्तत्वादिति भावः । **निरवकाशश्रुत्यापीति** ॥ ब्रह्मशब्दरूपनिरवकाशश्रुत्यापीत्यर्थः । भाष्ये – **यः सेतुरीजानानामिति** ॥ ईजानानां विष्णुयाजिनां, यः सेतुरिव सेतुराश्रय इत्यर्थः । 'मर्यादा विष्णुयाजिनां, संसारस्य च पारस्थः स विष्णुर्द्धिःस्वरूपक' इति वचनात् । **अपव्याख्या(–)नमिति** ॥ यद्यपि – पूर्वपक्ष-निराकरणेनैवापव्याख्या निराकृता, तथापि जीवेश्वरावेव पातृत्वेनोच्येते इति सूत्रकृतैव निर्णीतत्वात् ईश्वरस्य पातृत्वाऽभिधानमयुक्तमिति शङ्कानिरासायाऽपव्याख्यानिराकरणमर्थवदिति भावः । **समन्वय-सिद्धिरितीति** ॥ पिबतोः जीवेश्वरत्वप्रतिपादनस्य फलमिति शेषः ॥

**पुर्वपक्षस्तु–** 'ऋतं पिबन्ता'(का.१-३-१)विति वाक्योक्तौ जीवपरावेव न त्वेकः परमेश्वरः । द्विवचनश्रुतेः । एकस्मिन् द्विवचनाऽयोगात् । एवं च हरिवत् जीवस्यापि स्वातन्त्र्येण पातृत्वात्तद्वदेव सर्वाऽत्तृत्वमपि । स्वतन्त्रस्य तदनङ्गीकारे कारणाभावात् । ततश्चाऽतिव्याप्तिरित्येकः । अथवा – जीवपरौ 'ऋतं पिबन्ता'विति वाक्योक्तौ । द्विवचनश्रुतेः । एवमपि जीव एव पाता न विष्णुः । कर्मबन्धविधुरस्य कर्मफलाऽत्तृत्वायोगात् । न च – 'सर्वं वा अत्ती'(बृ.३-२-५)ति सर्वाऽत्तृत्वोक्ति-विरोधः । 'अनश्नन्नन्य' (आ.२-१-१) इति श्रुतिविरोधेन सङ्कोचसम्भवात् । कथं तर्हि पिबन्ताविति द्वयोः पातृत्वोक्तिरिति चेत्, न – छत्रिन्यायेन पातृत्वोपचाराऽङ्गीकारात् । तथापि – जीवेशपरत्वे को हेतुरिति चेत् न – एकस्य पातृत्वाऽन्यथानुपपत्त्या जीवत्वे सिद्धे द्वितीयस्य सजातीयस्यैव

(अभिनवचन्द्रिका)

ग्राह्यत्वात् । न च द्वावपि जीवौ युक्तौ । एकस्मिन्शरीरे भोक्तृजीवद्वयायोगात् । तस्माज्जीवेशावेव ग्राह्यौ । तथा च – जीवस्यैव पातृत्वेन न तस्य लक्षणत्वाभिमतं सर्वाऽत्तृत्वमित्यसम्भव इत्यपरः । अथवा – पुनरस्तु द्वावपि जीवौ । न चैकस्मिन् शरीरे भोक्तृजीवद्वयायोगः । व्रीह्यादिशरीरे उत्पत्स्यमानजीवस्य प्रमाणान्तरसिद्धत्वात् । ननु – न तस्य भोक्तृत्वमिति चेत्, न – तच्छरीरावच्छेदेन पातृत्वाऽभावेऽपि वस्तुतः पातृत्वसद्भावात् । एवं चेश्वरस्य कर्मफलाऽत्तृत्वाभावेनाऽऽसम्भव एवेति ।

**सिद्धान्तस्तु–** अस्मिन्वाक्ये यौ पिबन्तौ प्रतीतौ तौ विष्णुरूपे एव । गुहाप्रविष्टत्वलिङ्गात् । न चैतल्लिङ्गं जीवेऽप्यस्तीति न विष्णुत्वनिर्णायकमिति वाच्यम् । ''यो वेद निहितं गुहाय'' (तै.उ.२-१) इति गुहानिहितत्वस्येश्वरे प्रसिद्धत्वेन प्रसिद्धस्यैव ग्राह्यत्वात् । न च द्विवचनश्रुतिविरोधः । रूपद्वयाभिप्रायेण सावकाशत्वात् । न च एकैकेनैव रूपेण शरीरे प्रवेशेन रूपद्वयाभावः ''धर्मा-समन्ता''(ऋ.स.८-६-१६)दिति प्रमाणेनैकस्मिन्नपि शरीरे रूपद्वयस्यैव सिद्धत्वात् । न च विष्णोः पातृत्वाङ्गीकारे 'अनश्नन्नन्य' इत्यादिश्रुतिविरोधः – 'शुभं पिबत्यसा'विति प्रमाणेन विष्णोः पातृत्वस्य सिद्धत्वेन तस्या अशुभभोगाभावविषयत्वात् । न च – पूर्णस्य कर्मबन्धविधुरत्वेन कर्मफलभोगानुपपत्तिः । नियोगतः भोगासम्भवेऽपि स्वेच्छया तत्सम्भवात् । (१२ सू) न केवलं गुहाप्रविष्टत्वलिङ्गबलादेव पिबन्तौ विष्णुरूपे, किन्तु 'यः सेतुरीजानाना'मिति श्रुतौ ब्रह्मशब्देन विशेषणादपि । एवं च विष्णोरेव पातृत्वात्सर्वात्तृत्वलक्षणस्य नासम्भवो नाप्यतिव्याप्तिरिति सिद्धम् । (अ.३)

## वाक्यार्थमुक्तावली

ॐ विशेषणाच्च ॐ । 'यः सेतुरिति चैकत्ववचनेन विशेषणात्' इत्यनुव्याख्यानानुसारेणावृत्य साध्याध्याहारानुवृत्तिपूर्वं सूत्रभाष्ययोरर्थमाह ॥ **यस्सेतुरिति ॥ स एव चेति ॥** एक एव पातेत्यर्थः । एतेनात्मानौ ऋतं पिबन्तौ एक एव एकवचनेन विशेषणात् । एकश्च स पाता विष्णुरेव ब्रह्मशब्देन विशेषणाच्चेति सूत्रार्थः । पृथगित्यस्यार्थो **विविच्येति** ॥ न शक्यन्त इत्यतःपरं टीकायां भाष्ये च कार्यं च सर्वगुणप्रतिपादनमित्यध्याहार्यम् । अमितत्वतो विविच्य वक्तुमशक्यत्वेऽपि कुतो ब्रह्मशब्दप्रयोग इत्याशङ्कापरिहारार्थं ब्रह्मशब्देनेत्याद्युक्तमित्याशयेन यत इत्यावृत्या योजितम् । ब्रह्मशब्दस्य हेतुत्वसमर्थनार्थम् एतमस्यामित्यादि प्रवृत्तम् इत्यभिप्रेत्यैवमित्यादिना पूर्वोक्तं हेतूकृत्य व्याख्यातम् । तत्र विशेषणमित्यस्यार्थो **वाचक इति ॥ विद्वदविदुपोरिति** ॥ छायेव विदुषां प्रभुः । आतपः

(वाक्यार्थमुक्तावली)
पापिनां नित्यमिति स्मृतेरिति भावः । नन्वशब्दार्थत्वादमुख्यमित्यतः परपक्षेऽपि तुल्यमित्याह ॥ **न हीति** ॥ विद्याविद्येति यथायोगमन्वयः । अल्पाचूतरम् इति विद्यापदस्य पूर्वप्रयोगः । भाष्ये जीवश्वरयोरिति भाष्ये जीव इत्येकवचनोक्त्या सूचितं शेषमाह ॥ **किञ्चेति** ॥ ननु भेदसत्यत्वे कुतो न जानन्ति केचित् इत्यतो मैवारुवण्य इत्युक्तं तदर्थमाह ॥ **दोषीति** ॥ अरा दोषास्तद्वन्त आरवः । वन षण सम्भक्ताविति धातुः । शपथत्वेन निरुक्तिः । भेदसत्यत्वस्य स्वरूपसतः कारणत्वाप्रतीतेराह ॥ **तथैवेति** ॥ ऋतशब्दार्थमाह ॥ **सुकृतफलेति** ॥ सुकृतस्य लोक इति सान्निध्यात् । ऋतं सत्यं तथा धर्मः सुकृतं चाभिधीयते इति गीताभाष्योपात्तस्मृतेश्चेति भावः ।

सूत्रक्रमस्तुयद्यपि श्रुतिलिङ्गयोः श्रुतेः प्राबल्यात् आत्मानौ विशेषणात् गुहां प्रविष्टौ हि तद्दर्शनात् इति क्रमेण भवितव्यम् । तथापि लिङ्गस्य विषयवाक्यगतत्वात् आद्ये तदुक्तिः । श्रुतेरुत्तरवाक्यगतत्वात् द्वितीये तदुक्तिः । विशेषणादिति सूत्रस्य द्विवचनश्रुतेः सावकाशत्वेन बाधकस्य परिहार्यत्वाच्च द्वितीयत्वमिति ।

## तत्त्वसुबोधिनी

**यः सेतुरिति पिबतोरेकवचनेन विशेषणादित्यादि** । विशेषणाच्चेति सूत्रं यः सेतुरिति भाष्येणैकवचनेन विशेषणात् ब्रह्मशब्देन विशेषणाच्चेति द्विविधा व्याख्यातम् । अन्यथाऽक्षरं ब्रह्म तत्परं इत्येतावत एव उदाहरणं स्यात् । न तु यः सेतुरिति पूर्वभागस्येति भावः । अप्रतिपत्तिविप्रतिपत्ति-परिहारार्थं पृथग्वक्तुम् इति स्मृतिं व्याचष्टे । **तस्य गुणा इत्यादिना** । पृथगित्यस्यार्थो विविच्येति । अत इत्यनन्तरं तस्मिन्ब्रह्मशब्दः प्रयुज्यत इति शेषोक्तिः । अमितत्वतो विविच्य वक्तुमशक्यत्वेऽपि कुतो ब्रह्मशब्दप्रयोगः इत्याशङ्कापरिहारार्थं ब्रह्मशब्देन सर्वेषां गुणानां ग्रहणं भवेदित्युक्तमित्याशयेन यत इत्यावृत्या तद्योजितम् । ब्रह्मशब्दस्य सूत्राभिप्रेतहेतुत्वसमर्थनार्थमेतस्मादित्यादि प्रवृत्तमित्यभिप्रेत्य 'यतोऽतो ब्रह्मशब्देन सर्वेषां गुणानां ग्रहणं भवेत्' इत्येतदत्रापि हेतुवाक्यत्वेन संयोज्य तद्व्याख्यातम् । तत्र विशेषणमित्यस्यार्थो वाचक इति । नान्येषां तमृते विभुमित्युक्तहेतोः साध्यप्रदर्शनार्थमेवकारार्थविवरणं कृतं तं विनाऽन्येषामिति । **एतत्कल्प्यमिति** । जीवेश्वरयोः पातृत्वं कल्प्यमित्यर्थः । छायातपत्व-विशेषणस्यान्यथा सिद्धत्वात् न तेन तयोः पातृत्वं कल्प्यमित्यत आह ॥ **विद्धदिति** ॥ छायातपशब्दयोः क्रमेण सुखदुःखकारणार्थत्वादिति भावः । ननु छायाशब्देन जीवस्याविद्यावतो ग्रहणम् आतपशब्देन

(तत्त्वसुबोधिनी)

ज्ञानवत्त्वात् ईश्वरग्रहणमेव युक्तमित्याशङ्क्य निषेधति । **न चेति** । छायातपशब्दयोः विद्याअविद्यावद्वाचकत्वे अभिधानाभावात् नैतद्युक्तमिति भावः । छायातपशब्दाभ्यामनयोः यथायोग्यं सम्बन्धो न तु यथाक्रमम् । अल्पाच्तरमिति विद्यापदस्य पूर्वं प्रयोग इति बोद्धव्यम् । जीवेश्वरभेदस्य स्वरूपसतः कथं त्राणकारणत्वमतिप्रसङ्गादित्यत आह ॥ **तथैव ज्ञातेनेति** । अत्राद्ये सन्निहित-लिङ्गरूपसाधकोक्तिः । द्वितीये श्रुतिरूपसाधकस्य द्विवचनश्रुतेः सावकाशत्वस्य चोक्तिरिति सूत्रक्रमः ।

## वाक्यार्थमञ्जरी

ॐ विशेषणाच्च ॐ ॥ एकवचनसेतुत्वब्रह्मत्वादिना पिबतोर्विशेषितत्वाच्च तावात्मानावेव न जीवेशावित्यर्थः । **स्मारयति** स्मृत्या दर्शयति । अत इत्यनन्तरमपेक्षितं पूरयति । **तस्मिन्ब्रह्मशब्दः प्रयुज्यत इति ॥ यत इति ॥** अनेन यतःशब्दावृत्तिर्दर्शिता । अत्र काठके ॥ **समन्वयासङ्गतत्वादिति ॥** समन्वयाभिधायकैतदध्यायासङ्गतत्वादित्यर्थः ॥ **छायातपत्वविशेषणादिति ॥** तयोः क्रमेण विद्याविद्या-वद्वाचकत्वेन तादृशयोश्च जीवेशान्यत्वायोगादिति भावः । विनिगमनाविरहादुक्तमेवास्त्वित्यत आह ॥ **न हीति ॥** अनुशासनाभावात् अस्मत्पक्षे तु छायेव विदुषां प्रभुः आतपः पापिनामिति विनिगमकमस्त्येवेति भावः । न केवलमेतदसङ्गतं किन्तु व्यर्थं चेत्याह ॥ **किं चेति ॥** समन्वयसिद्धिरित्यनन्तरं लब्धेति लिङ्गव्यत्ययेनानुवर्तते । एवम् एवं सति । मयेश्वरे लिङ्गस्यौपचारिकत्वाङ्गीकारेण जीवमात्रे समन्वयसिद्धावपि तन्मते कथमित्यत आह ॥ **तेनापीति ॥** शङ्कते ॥ **नात्रेति ॥** तथा च जीवे समन्वय ईश्वर एव सिद्ध्यतीति भावः । अराः दोषाः तद्वन्तः आरवः । स्वरूपसतः कारणत्वायोगादाह ॥ **तथैव ज्ञातेनैवेति** ॥ ३ ॥

## विवृतिः

''यः सेतुः'' इति पिबतोरेकवचनेन विशेषणादित्यादिविशेषणाच्चेति सूत्रं यः सेतुरित्यादिभाष्येणैक-वचनेन विशेषणात् ब्रह्मशब्देन विशेषणाच्चेति द्विधा व्याख्यातम् । अन्यथा अक्षरं ब्रह्म तत्परमित्येतावत एवोदाहरणं स्यात् । ननु यः सेतुरिति पूर्वभागस्येति भावः । अप्रतिपत्तिविप्रतिपत्तिपरिहारार्थं ''पृथग्वक्तुम्'' इति श्रुतिं व्याचष्टे ॥ **तस्य गुणा इत्यादिना** ॥ पृथगित्यस्यार्थो विच्येति । अत इत्यनन्तरं ''तस्मिन् ब्रह्मशब्दः प्रयुज्यते'' इति शेषोक्तिः । अमितत्वतो विविच्य वक्तुम् अशक्यत्वेऽपि कुतो ब्रह्मशब्दप्रयोग इत्याशङ्कापरिहारार्थं यतो ब्रह्मशब्देन सर्वेषां ग्रहणं भवेदित्युक्तमित्याशयेन यत

(विवृतिः)

इत्यावृत्य तद्योजितम् । ब्रह्मशब्दस्य सूत्राभिप्रेतहेतुत्वसमर्थनार्थमेतस्मादित्या प्रवृत्तमित्यभिप्रेत्य, ''यतोऽतो ब्रह्मशब्देन सर्वेषां ग्रहणं भवेत्'' इत्येतदत्रापि हेतुवाक्येन संयोज्य तद्व्याख्यातम् । तत्र विशेषणमित्यस्यार्थो वाचक इति । नान्येषां तमृते विभुम्'' इत्युक्तहेतोः साध्यप्रदर्शनार्थमेवकारार्थविवरणं कृतं **नान्येषामिति** ॥ **एतत्कल्प्यमिति** ॥ जीवेश्वरयोः पातृत्वं कल्प्यमित्यर्थः ॥ छायातपत्वविशेषणस्यान्यथासिद्धत्वात्तेन तयोः पातृत्वं कल्प्यमित्याह **विद्वदिति** ॥ तयोः क्रमेण सुखदुःखकारणत्वादिति भावः । नन्वत्र छायातपशब्दौ प्रयुक्तौ तत्र च्छायाशब्देन जीवो गृह्यते, आतपशब्देन ईश्वरो गृह्यते, तयोरन्धकारप्रकाश-वाचकत्वेन, जीवस्याविद्यारूपान्धकारवत्वेन ईश्वरस्य च प्रकाशरूपज्ञानवत्वेन ताभ्यां तयोर्गृहणमिति न दोष इत्याशङ्क्य निषेधति ॥ **न चेति** ॥ च्छायातपशब्दयोर्विद्याऽविद्यावद्वाचकत्वेऽभिधाना-भावान्नैतद्युक्तमिति भावः । छायातपशब्दाभ्यामनयोः सम्बन्धो यथायोग्यं नतु यथाक्रमम् । अल्पाच्तरमिति विद्याशब्दस्य पूर्वं प्रयोग इति बोद्धव्यम् ॥ जीवेश्वरभेदस्य स्वरूपसतः कथं त्राणकारणत्वमतिप्रराङ्गादित्यत आह **तथैव ज्ञातेनेति** ॥ अत्राद्ये सन्निहितलिङ्गरूपसाधकोक्तिः द्वितीये श्रुतिरूपसाधकस्य, द्विवचनश्रुतेः सावकाशत्वस्य चोक्तिरिति सूत्रक्रमः ॥

॥ इति गुहाधिकरणम् ॥

## ४. अन्तराधिकरणम्

आदित्ये विष्णुरित्युक्तम् । 'य एप आदित्ये पुरुषः सोऽहमस्मि स एवाहमस्मी'-(छां.उ.४-११)त्यादावग्नीनामेवाऽऽदित्यस्थत्वमुच्यते । अतोऽक्ष्यादित्ययोरैक्याद् 'य एषोऽन्तरक्षिणि पुरुषो दृश्यत' (छां.उ.४-१५) इत्यत्राप्यग्निरेवोच्यते । अत'स्तद्यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यत' (छां.उ.४-१४) इत्यग्निज्ञानादेव सर्वपापाश्लेषान्मोक्षोपपत्तिरिति । अतोऽब्रवीत् ।

**॥ ॐ अन्तर उपपत्तेः ॐ ॥ १३ ॥**

**चक्षुरन्तःस्थो विष्णुरेव । 'त्रिपादस्यामृतं दिवी'** (ऋ.सं.१०-९०-३) **त्यादिना तस्यैवा-मृतत्वाद्युपपत्तेः । ब्रह्मशब्दाद्युपपत्तेश्च । सोऽहमस्मीत्यादि त्वन्तर्याम्यपेक्षया ।**

(सूत्रभाष्यम्)

'अन्तर्यामिणमीशेषमपेक्ष्याहं त्वमित्यपि ।
सर्वे शब्दाः प्रयुज्यन्ते सति भेदेऽपि वस्तुपु' इति महाकौर्मे ॥ १३ ॥

## सत्तर्कदीपावली

इदमाम्नायते । य एपोऽन्तरक्षिणि पुरुपो दृश्यत एप आत्मेति । अत्रात्मेतिशब्दनिर्दिष्टोऽक्षिस्थपुरुपः कोऽयमिति विचार्यते । अत्राधस्तनवाक्यादादित्यस्थः पुरुपः तावदग्निरेवावगम्यते । 'अथ हैनं गार्हपत्योऽनुशशास' 'य एप आदित्ये पुरुषो दृश्यते सोऽहमस्मीति स एवाहमस्मीति' स यथा चन्द्रस्थ-पुरुपोऽह्निविशेषावगतोऽथ हैनमन्वाहार्यपचनोऽनुशशास य एप चन्द्रमसि पुरुपो दृश्यते सोऽहमस्मीति' । आदित्यस्थपुरुषस्य वाऽक्षिस्थपुरुपत्वेनाक्ष्यादित्यैक्यस्यानेकश्रुतिसिद्धत्वादग्निरेवायमक्षिस्थपुरुपः स्यात् । अतश्च यश्चासावादित्य इत्यादिना यदादित्याधिष्ठातृत्वमुक्तं विष्णोस्तदप्यग्नेरेव समायात् । यद्विष्णुज्ञानमेव मोक्षसाधनं प्रतिपादितम् । 'तमेवं विद्वानमृत इह भवति । नान्यः पन्था' इत्यादिना तदपि न सिद्ध्यति अक्षिस्थपुरुपाग्निविदो मोक्षश्रवणात् । 'एवमेवंविदि पापं कर्म न श्लिष्यत' इत्येवं पूर्वपक्षयति ॥ **आदित्य इति** ॥ अत्र सूत्रमवतार्य व्याचष्टे ॥ **अन्तरित्यादिना** ॥ अक्षिस्थपुरुपोऽयं विष्णुरेव एप आत्मेति होवाच एतदमृतमेतदभयमेतद्ब्रह्मेति श्रूयमाणत्वात् । अमृतत्वादिकं विष्णोरेव श्रूयते त्रिपादस्यामृतं दिवीत्यादिश्रुत्यन्तरे । न च विष्णुवदग्नेरप्यमृतत्वं शङ्कनीयम् । 'तमेताः पञ्चदेवताः परिम्रियन्ते विद्युद् वृष्टिश्चन्द्रमा आदित्योऽग्निः' भयादग्निः तपतीत्यादिश्रुतिविरोधात् । एतद्वाक्यमग्निप्रापकमुक्तं तदन्यथोपपन्नमित्याह ॥ **सोऽहमिति** ॥

## तत्त्वप्रदीपिका

''यश्चासावादित्ये'' ''अन्तरादित्ये मनसा चरन्तमि''त्यादावादित्ये विष्णुरित्युक्तम् । ''य एप आदित्ये पुरुपो दृश्यते सोऽहमस्मि स एवाहमस्मि,'' ''य एप चन्द्रमसि पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मि,'' ''य एप विद्युति पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मी''त्यग्नीनां गार्हपत्यान्वाहार्य-पचनावहनीयानामुपकोसलोपदेष्टृणामादित्यादिस्थत्वमुच्यते । अतोऽक्षीन्द्रियप्रेरकादित्ययोरैक्यात् 'य एपोऽन्तरक्षिणि पुरुपो दृश्यत'' इत्यत्र सत्यकामवाक्येऽप्यक्ष्यभिमान्यन्तस्थोऽग्निरेवोच्यते । 'एवमेवंविदि पापं कर्म न श्लिष्यत' इति प्रकृताग्निज्ञानफलत्वेन सर्वपापाश्लेपवचनादग्निज्ञानादेव मोक्षोपपत्तिः । अतः फलवत्त्वादग्नौ समन्वयो युक्तोऽस्य प्रकरणस्येति पूर्वपक्षाभिप्रायः । अतो यावदत्र ब्रह्मणस्समन्वयो न निर्णीतः, ताव''यश्चसावादित्य'' इत्यादावप्यतिसुनिर्णयो न स्यात् । अतः सर्ववेदार्थनिर्णये प्रत्यधिकरणनिर्णयास्सुदृढा भवन्तीति ज्ञापयन्नधिकरणसङ्गतिमदीदिशत् ।

(तत्त्वप्रदीपिका)

ॐ अन्तर उपपत्तेः ॐ । अन्तरशब्देनान्तस्थो रतिरूपो विवक्ष्यते । तथा चोक्तमाचार्यवर्येणैवानुव्याख्याने—

''अन्तः स्थित्वा रमणकृदन्तरस्समुदाहृतः ।
रमणं चाऽत्मशब्देनाऽदेयं मातीति चोच्यत'' इति ॥

चक्षुरभिमान्यन्तस्थो विष्णुरेव । ''त्रिपादस्यामृतं दिवि'' ''अमृतैवैषा देवता'' ''आत्माऽजरोऽमृतोऽभयो ब्रह्मे''त्यादिना तस्यैवामृतत्वाभयत्वलिङ्गोपपत्तेः । ब्रह्मात्मशब्दोपपत्तेश्च । ''एष आत्मेति होवाचैतदमृतमभयमेतद् ब्रह्मे''ति ह्यत्रोक्तम् ।

''दृश्यते ज्ञानदृष्ट्या यस्सूर्ये चक्षुषि चैकराडि''ति हि मानसे । ''सोऽहमस्मि स एवाहमस्मी''त्यन्तर्याम्यपेक्षयैवोच्यते । अत्र चोक्तं छन्दोगोपनिषद्भाष्ये भगवतैव– ''स एवाहमस्मी''त्यन्तर्यामिणोस्सर्वविशेषाभावज्ञापनार्थम् । पूर्वं ''सोऽहमस्मी''त्यभेदे तात्पर्याधिक्यज्ञापनाय । जीवैक्यपक्ष आदित्ये पुरुषश्चन्द्रमसि विद्युतीति भेदव्यपदेशो न युक्त इति ॥

''यस्सूर्यसोमविद्युत्सु तत्तन्नामा हरिः परः ।
अहेयत्वादहंनामा गार्हपत्यादिसंस्थितः ॥'' इति च तत्त्वसंहितायाम् ॥

## तत्त्वप्रकाशिका

अत्राग्निश्रुतिसाहित्येनान्यत्र प्रसिद्धस्य चक्षुरन्तःस्थत्वलिङ्गस्य परब्रह्मणि समन्वयसमर्थनादस्ति शास्त्रादिसङ्गतिः । श्रुत्यादिसङ्गतिं विषयवाक्यं विषयसंशयौ सयुक्तिकं पूर्वपक्षं च दर्शयति ॥ आदित्य इति ॥ 'यश्चासावादित्य' इत्यानन्दमयस्याऽऽदित्यस्थत्वमुक्तम् । ततश्चार्थादक्षिस्थत्वमप्युक्तम् । तदक्षिस्थत्वं छन्दोगश्रुतौ कस्यचित्प्रतीयते । य एषोऽन्तरक्षिणि पुरुषो दृश्यते एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति । तच्च यद्यन्यस्य स्यात्तदाऽऽदित्यस्थत्वमानन्दमयत्वं चान्यस्यैव प्रसज्येतेत्यवश्यं निर्णेयमेव । तदक्षिस्थत्वं विषयः । विष्णोरग्नेर्वेति सन्देहः । यश्चासावादित्ये इत्युक्तिरग्निश्रुतिश्च सन्देहबीजम् । य एषोऽन्तरक्षिणीति वाक्येऽग्निरेवाक्षिस्थत्वेनोच्यत इति पूर्वः पक्षः । यतो य एष आदित्ये पुरुषः सोऽहमस्मि स एवाहमस्मीत्यग्नेरेवाऽऽदित्यस्थत्वमुच्यते । न च वाच्यमग्नेरादित्यस्थत्वेऽपि कुतोऽक्षिस्थत्वमिति । आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशदिति श्रुतेरक्ष्यादित्ययोरेकविधत्वादादित्यस्थितत्वेनाग्नेरक्षिस्थत्वसिद्धेः । एतस्मिन्प्रकरणेऽथ हाग्नयः समूदिरे गार्हपत्योऽनुशशासेत्यादिबहग्निश्रुतिसद्भावाच्च । न च वाच्यमग्नेरादित्यस्थत्वकथनमौपचारिकं किं न स्यात् । यश्चासावादित्य इति श्रुतिविरोधादिति । सोऽहमस्मि स एवाहमस्मीत्यभ्यासात् । अभ्यासस्य च समाख्यातो बलवत्त्वात् । न च विष्णुग्रहणेऽपूर्वतयाऽभ्यासस्यापि

(तत्त्वप्रकाशिका)

बाधः । स य एतदेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकीभवति सर्वमायुरेतीत्यर्थवादात् । अर्थवादस्य चापूर्वतायाः प्रावल्यात् । अतोऽक्ष्यादित्यस्थोऽग्निरेवेति स एवानन्दमयोऽपीति भावः । न केवलमग्नेरक्षिस्थत्वसिद्धावानन्दमयत्वप्राप्तिः किं तु यद्विष्णुज्ञानादेव मोक्ष इति मतं तदपि बाधितं स्यादित्याह ॥ अत इति ॥ यतोऽग्निरक्षिस्थोऽतस्तज्ज्ञानान्मोक्षोऽपि भवेत् । तद्यथेति तज्ज्ञानात् सर्वपापाश्लेषोक्तेः । तज्ज्ञानात्सर्वपापाश्लेषे च मोक्षस्यापि तदन्यथाऽनुपपत्त्यैवोपपत्तेरित्यर्थः । अत्राऽऽदित्यस्थत्वलिङ्गस्यापि विष्णौ समन्वयसिद्ध्यर्थं वक्रसङ्गत्याऽधिकरणारम्भ इति ज्ञातव्यम् । अग्नीनामिति बहुवचनमादिपदद्वयं च बह्वग्निश्रुतिसूचनाय प्रयुक्तम् । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ अत इति ॥ विष्णुरेव चक्षुरन्तरः । एतदमृतमभयमित्यमृतत्वाभयत्वोक्तेः । अमृतत्वादेश्च विष्णावेवोपपत्तेः । 'त्रिपादस्यामृतं दिवि' 'अभयं तितीर्षतां पारम्' इति श्रुतेः । न चाग्नेरमृतत्वाद्युपपद्यते । 'परि ह्येनं म्रियन्ते विद्युद्वृष्टिश्चन्द्रमा आदित्योऽग्निः' 'भीषाऽस्मादग्निश्चेन्द्रश्च' इत्यादिश्रुतेरिति भावः । यदेवं निरवकाशत्वानेकत्वाभ्यां वलवल्लिङ्गवलाच्चक्षुरन्तःस्थस्य विष्णुत्वनिश्चयः किमु तदोभयथापि वलवच्छ्रुतितोऽपीति भावेन सूत्रांशं प्रकारान्तरेण व्याचष्टे ॥ ब्रह्मेति ॥ नन्वेवं वलवच्छ्रुतिलिङ्गवलाद्विष्णुरेव चेदक्षिस्थस्तदादित्यस्थोऽपि स एव स्यात् तर्हि सोऽहमस्मि स एवाहमस्मीति श्रुतेः का गतिरित्यत आह ॥ सोऽहमिति ॥ अन्तर्यामिण्यहमादिशब्दवृत्तिं स्मारयति ॥ अन्तर्यामिणमिति ॥ एवं श्रुतेः सावकाशत्वेन तदनुयायिनोऽभ्यासार्थवादयोरपि सुतरां सावकाशत्वम् ॥ १३ ॥

## गुर्वर्थदीपिका

अक्ष्यादित्ययोरैक्यादित्यत्र प्रमाणीक्रियमाणश्रुतावादित्यपदेनाऽऽदित्यमण्डलं तद्गतं तेन तदभिमानी सूर्यश्च चक्षुःपदेन चक्षुरिन्द्रियं तदभिमानी देवः अक्षिणीत्यनेन चक्षुर्गोळकं च गृह्यते । तामेव श्रुतिं प्रमाणीकुर्वता भाष्यकारेणाप्यक्ष्यादित्यपदाभ्यां त्रिकत्रिकं गृह्यते । एवमतिसाम्ये हि तत्र स्थितस्यात्रापि स्थितिराशङ्कितुं शक्या । नो चेत्पशुत्वेनेषद्वोसदृशे महिषेऽपि सास्नादिकं स्यात् । तत्राभिमानिमात्रस्यैक्यसम्भवेऽपि तेजोमण्डलयोश्चैक्यायोगात् एकविधत्वादित्युक्तम् । अत्राक्ष्यन्तस्थस्य विष्णोरन्यत्वे ''तद्यथा पुष्करपलाश आपो न श्लिष्यन्त'' इत्याद्युक्तविधया तज्ज्ञानान्मोक्षस्यापि प्राप्तेर्जन्मादिसूत्रोक्तं सृष्ट्याद्यष्टकर्तृत्वं न भगवत इति सङ्गतिसम्भवेऽपि कुतो वक्रमुद्राश्रयणमिति शङ्कां परिहरति । अत्रेति ।

## भावबोधः

ॐ अन्तर उपपत्तेः ॥ ॐ ॥ अग्निश्रुतिसाहित्येनेति । 'ब्रह्मेन्द्रमग्निम्' इति वाक्यगताग्निशब्दस्य विष्णुपरत्वेऽपि नैतत्प्रकरणगताग्निशब्दस्य विष्णुपरत्वम् । उपकोसलं प्रति विद्योपदेष्टृत्वादिना तस्य

(भावबोधः)

प्रसिद्धाग्निपरत्वावगमादिति भावः । **श्रुत्यादिसङ्गतिमिति** । अव्यवहितपूर्वाधिकरणसङ्गतिस्तु अत्र ''अन्तर्याम्यन्तरश्चेति क्रियाभावाख्यमुच्यत'' इत्यनुव्याख्याने ततः परमित्यस्यानुवृत्तौ तदनुसारेण क्रिया-प्रधानकभावरूपविशिष्टविचाराद् विशेषणाच्चेति सूत्रगृहीताक्षरं ब्रह्म''भयं तितीर्षतां पार''मिति श्रुत्युक्तपानकर्तृविशेषणरूपब्रह्मत्वाभयत्वेनेवात्रापि एतदमृतमभयमेतद्ब्रह्मेति श्रुतिग्राहकोपपत्तेरित्यनेन सिद्धान्तकरणाद्वेति द्रष्टव्यम् । **अर्थात् अक्षिस्थत्वमिति** । अक्ष्यादित्ययोरेकविधत्वादिति वक्ष्यमाणन्यायेनेति भावः । **विष्णोरिति** । अत्राक्षिस्थत्वं किमग्नेरुत विष्णोरिति चिन्ता । तदर्थम् 'अथ हाग्नयः समूदिरे' इत्यादिबह्वग्निश्रुतयः, ''सोऽहमस्मि स एवाहमस्मी''ति सावधारणाभ्यासः स य एतदेवमित्यर्थवादः उपकोसलैषा सोम्य तेऽस्मद्विद्यात्मविद्या चेति विद्याभेदोक्तिरित्येतदग्निप्रापकं ब्रह्मात्मशब्दामृतत्वाभयत्वस्वसम्बन्धनिमित्तकचक्षुरसङ्गत्वापादकत्वलिङ्गप्रकरणरूपविष्णुप्रापकबाधकमुत तद्बाध्यमिति । तदर्थमग्निश्रुत्यादेर्निरवकाशत्वेन ब्रह्मशब्दादेः सावकाशत्वम् उत ब्रह्मशब्दादे-र्निरवकाशत्वेनाग्निश्रुत्यादेः सावकाशत्वमिति । तदर्थमग्निश्रुत्यादेः सावकाशत्वकल्पकमक्षिस्थस्याग्नित्वे बाधकं ब्रह्मशब्दादेर्निरवकाशत्वे प्रमाणञ्च नास्त्युतास्तीति । अग्नेरादित्यस्थत्वम् उच्यते । **अत एवेति** । अग्नेरादित्यस्थत्वस्योच्यमानत्वादेवेत्यर्थः । अनेन 'अतो अक्ष्यादित्ययोरैक्यात्' इति भाष्यस्थः 'अतः'शब्दः सन्निहितेनैक्यादित्यनेनान्वेति । प्रकृतस्यात इत्यनेन परामृष्टस्यादित्यस्थत्वस्यैक्ये हेतुत्वायोगात् । किन्तु व्यवहितेनात्राप्यग्निरेवोच्यत इत्यनेनान्वेतीत्युक्तं भवति ।

नन्वक्ष्यादित्ययोरैक्यादिति कथम् ? आदित्यमण्डलाक्ष्णोः परस्परभिन्नत्वेन प्रमितत्वात् । न च वाच्यमादित्याक्षिपदाभ्यां चेतनग्रहणेन ऐक्योपपत्तिरिति । 'स्थानादिव्यपदेशाच्च' इति सूत्रानानुगुण्यात् । तत्र हि स्थानत्वेनोक्ताक्ष्णोर्जडत्वेनाभिप्रेतत्वात् । 'य एष आदित्ये पुरुषः' 'स एषोऽन्तरक्षिणि पुरुष' इति वाक्यद्वये आदित्याक्षिगतस्य पुरुषपदेन चेतनत्वोक्त्या तयोर्जडत्वेनाभिप्रेतत्वाच्चेत्यत आह– **अक्ष्यादित्ययोरेकविधत्वादिति** । 'स आदित्यस्त्रिवृत् त्रिवृदिति लोहितशुक्लकृष्णं कनीनिका' इति श्रुत्यनुसारेण जडभूतादित्यमण्डलाक्ष्णोरेव त्रिवृत्त्वधर्मयुक्तत्वेन एकविधत्वात् 'आदित्यश्चक्षुः' इति श्रुतौ आदित्यचक्षुःपदयोश्चेतनपरत्वेनाऽऽदित्यमण्डलस्थचेतनस्य जडाक्षिप्रवेशोक्त्या जडाक्ष्यादित्यमण्डलयोरेक-चेतनाधिष्ठितत्वरूपधर्मेणैकविधत्वाद्वेत्यर्थः ॥ अनेनैतदपि परास्तम् । यदादित्याक्ष्णोरेकविधत्वे तयोर्भेदादादित्यस्थत्वेऽक्षिस्थत्वासिद्धिरित्यत आह आदित्यस्थत्वेनाक्षिस्थत्वसिद्धिरिति । ऐक्याभिप्राये आदित्यस्थितत्वमेवाक्षिस्थत्वं यत इत्यवक्ष्यत् । गार्हपत्योऽनुशशासेत्यादीति । आदित्यपदेनाथ

(भावबोधः)

हैनमन्वाहार्यपचन अथ हैनमाहवनीय इत्यादिग्रहणम् । एतत्प्रकरणेत्यादिना अपूर्वतायाः प्रबलत्वादित्यन्तेन ग्रन्थेन 'सोऽहमस्मि' 'स एवाहमस्मि' इत्याद्यभ्यासार्थवादसहितबहुश्रुतिभ्योऽपीति न्यायविवरणं व्याख्यातं भवति । न्यायविवरणे सहितशब्दस्वारस्येन श्रुतीनामेव पूर्वपक्षसाधकत्वम्, अभ्यासार्थवादयोस्तु श्रुतिबाधकसमाख्यादिबाधकत्वेन श्रुत्युपोद्बलकत्वं प्रतीयते । अन्यथा तद्वैयर्थ्यं स्यादित्यभिप्रेत्य श्रुतिसद्भावाच्चेत्युक्त्वा तदुपमर्दकत्वेन समाख्यामाशङ्क्य तद्बाधकत्वेनाभ्यासमभिधाय तद्विघटकत्वेनापूर्वतामुत्थाप्य तन्निरासकत्वेनार्थवाद उक्त इत्यवधेयम् । न्यायविवरणगतादिपदेन 'उपवयं तं भुञ्जाम' इति 'कुशलं नः पर्यचचारीद्धन्तास्मै प्रब्रवाम' 'उपवयं तं भुञ्जाम' इत्याद्यभ्यासान्तरग्रहणम् । **यतो अग्निरक्षिस्थोऽतस्तज्ज्ञानान्मोक्षोऽपि भवेदित्यादि** । अनेन भाष्येऽतोऽग्निज्ञानादेव मोक्ष इत्यपि सम्बन्धः । 'अतः' इति बलात् 'यतः' इत्यादेरर्थतो लाभः । तयोर्हेतुहेतुमद्भावसमर्थनार्थं तद्यथेत्यादि समग्रं भाष्यमित्युक्तं भवति । **मोक्षस्यापि तदन्यथानुपपत्त्यैवेति** । मोक्षं विना सर्वपापाश्लेषासम्भवादिति भावः । **वक्रसङ्गत्येति** । 'य एष आदित्ये पुरुषः' 'य एषोऽन्तरक्षिणि पुरुष' इत्यनयोर्वाक्ययोरादित्यश्चक्षुर्भूत्वेति श्रुत्या एकार्थत्वमुपपाद्य 'य एष आदित्यः' इति वाक्यस्य 'यश्चासावादित्य' इति वाक्येन सङ्गत्या तदर्थार्थिकं य एषोऽन्तरक्षिणि इति वाक्यस्यापि तेन सङ्गतिरित्येवं वक्रसङ्गत्यर्थः । आदित्यस्थत्वलिङ्गसमन्वयसिद्ध्यप्रयोजकत्वे 'नेतरोऽनुपपत्तेः' इत्यादौ विष्णुज्ञानान्मोक्ष इत्युक्तः । स मोक्षस्तद्यथा पुष्करपलाश इति वाक्येन य एषोऽन्तरक्षिणि इत्युक्ताक्षिस्थज्ञानात् प्रतीयत इति ऋजुसङ्गत्यैवाधिकरणमारभ्यत इति भावः ॥

ननूक्तरीत्या ऋजुसङ्गत्याऽधिकरणारम्भेऽपि पूर्वपक्षेऽग्नेरेव अक्षिस्थत्वे आदित्यस्थत्वस्य हेतुत्वेनोपादाने सिद्धान्ते तस्य विष्णुनिष्ठत्वस्य समर्थनीयत्वात् तस्यापि समन्वयसिद्धिरिति चेत्, न; पूर्वपक्षहेतोः सिद्धान्तिना सावकाशत्वाद्युक्त्या विरोधस्य वक्तुं शक्यत्वेन समन्वय एव वक्तव्य सति नियमाभावात् । न हि सावकाशत्वमेव समन्वयः; तस्य लक्षणादिवृत्त्यन्तरेणापि सम्भवेन समन्वयरूपत्वाभावादिति भावः । अत एव समन्वयसिद्ध्यर्थमित्युक्तम् ॥

ननु भाष्ये 'य एष आदित्ये पुरुषः' इत्यग्नेरेव आदित्यस्थत्वमुच्यत इति वक्तव्यम् । अक्ष्यादित्ययोरैक्यादिति आदित्यस्थत्वस्यैवाक्षिस्थत्वसाधकत्वेनाभिमततया तदुक्तेरेव प्रकृतसङ्गतत्वात् । आदिपदद्वयं बहुवचनञ्च व्यर्थम् । न च 'अथ हैनमन्वाहार्यपचनः' 'अथ हैनमाहवनीयः' इति वाक्यद्वयसङ्ग्रहाय प्रथमादिपदमन्वाहार्यपचनाहवनीययोः सङ्ग्रहायाग्नीनामेवेति बहुवचनम् । चन्द्रविद्युतोः

(भावबोधः)

सङ्ग्रहार्थं द्वितीयादिपदमिति वाच्यम् । चन्द्रविद्युतोरक्ष्णैकविधत्वाभावेनाऽन्वाहार्यपचनाऽहवनीय-योरन्तःस्थत्वाक्षिस्थत्वसाधकाभावेन प्रकृतानुपयुक्तत्वादित्यत आह **अग्नीनामिति बहुवचनमादिपदद्वयं चेति** । अग्नेरक्षिस्थत्वसाधकत्वेन 'अथ हाग्नयः' इत्येतत्प्रकरणगतगार्हपत्यान्वाहार्यपचनाहवनीयादि-रूपबह्वग्निश्रुतीनां सूचनार्थमेव बहुवचनादिपदद्वयप्रयोगः, न तूक्ताभिप्रायेणेति भावः । एतदमृतमभय-मितीति भाष्ये उपपत्तेर्निरवकाशत्वोक्त्यैव पक्षनिष्ठत्वं लभ्यत इति तत्रोक्तमिति ज्ञातव्यम् । दिवीत्यादि-पदोक्तश्रुत्युदाहरणमभयं तितीर्षतां पारमिति । **तस्यैवेत्येवकारार्थविवरणं** न चाग्नेरमृत्वाद्युपपद्यत इत्यादि । निरवकाशोपपत्तेरेव प्राबल्यमिति न्यायविवरणे उपपत्तेरेव किमु निरवकाशब्रह्मात्मशब्दसहिताया इति कैमुत्यप्रदर्शनार्थमेवकार इत्यभिप्रेत्य तदनुसारेण ब्रह्मात्मशब्दाद्युपपत्तेरिति भाष्यमवतारयति– **यदैवमित्यादिना । किमु तदोभयथापीति** । श्रुतेर्जात्या प्राबल्यमपिशब्दार्थः । एष आत्मेत्यात्मशब्दमादाय श्रुतेरुभयथार्पात्यनेन सूचितमनेकत्वं द्रष्टव्यम् । अत एव भाष्ये ब्रह्मशब्दादीत्यादिपदं प्रयुक्तम् । ब्रह्मात्मशब्दयोर्निरवकाशत्वं तु प्रागेव तत्र तत्रोपपादितमिति भावः । अन्तर्यामिणमिति स्मृतौ ईशेश-मित्यन्तर्यामित्वोपपादनम् । सति भेदेऽपि वस्तुष्वित्यनेन अहमादिपदप्रयोगेणाभेदो निमित्तमित्यु-पपादितमिति ज्ञातव्यम् ।

## भावदीपः

ॐ अन्तर उपपत्तेः ॐ ॥ **अग्निश्रुतीति** ॥ सा चानेकरूपाऽग्रे व्यक्ता । उच्यत इत्यन्तं भाष्यं सङ्गतिपरतत्वेन व्याचष्टे ॥ **यश्चेति** ॥ अक्ष्यादित्ययोरैक्यादित्युक्तिलब्धमर्थमाह ॥ **ततश्चेति** ॥ **अर्थादिति** ॥ द्वयोरेकदेवताधिष्ठानत्वेनाऽऽदित्यस्थस्यैवाक्षिस्थत्वादेकत्रोक्तावन्यत्राप्युक्तिरार्थिकीत्यर्थः । इत्यत्राप्यग्निरेवोच्यत इत्यस्य तात्पर्योक्तिश्छन्दोगेति । चतुर्थेऽध्याय इति योज्यम् । कस्यचित् अग्नेः । कुत्रेत्यतो य एष आदित्य इत्यादिपूर्वभाष्यमिति मत्वा तदुदाहरति ॥ **य एष इति** ॥ दृश्यते दिव्य-दृष्ट्या ज्ञानिभिरित्यर्थः । उवाच उपकोसलाय सत्यकामः । भाष्ये दृश्यत इत्यन्तोक्तावपि शेषोक्तिः सिद्धान्तोपयोगित्वायेति भावः । कथं प्रतीयत इत्याकाङ्क्षायां य एष आदित्य इत्यादिवाक्येन तत्प्रकारोक्ति-र्वक्ष्यमाणादिशा सुज्ञानेति । य एष इत्यादेरैक्यादित्यन्तस्य तात्पर्यमाह ॥ **तच्चेति** ॥ य एषोऽन्तरक्षिणीति वाक्योक्तमक्षिस्थत्वं च य एष इत्यादिभाष्यवाक्यलब्धादग्नेरक्षिस्थत्वेनोच्यमानत्वाद्धेतोर्यद्यग्नेः स्यादित्यर्थः । उक्तमित्यन्तवाक्यतात्पर्यमाह ॥ **तदेति** ॥ इति सङ्गतिसम्भवादवश्यं निर्णेयमित्यर्थः । ननु पूर्वत्र यश्चासावादित्य इत्यादित्यस्थत्वं नाम विष्णोरादित्यदेवतास्थत्वम् । यदाहुस्तद्भाष्ये "स विष्णुरस्सर्वजीवेषु

(भावदीपः)

नृषु देवेषु च स्थितः । एक एवे''त्यादि । उक्तं च प्राग्भेदव्यपदेशाच्चेत्यत्र स यश्चायमित्यानन्दमयस्यापकृष्टोत्कृष्टजीवेषु पुरुषादित्यपदोपलक्षितेषु स्थितिकथनादिति । तथा चार्थादापद्यमानमक्षिस्थत्वमप्यक्षिदेवतास्थत्वमेव स्यात् । अत्र चाक्षिस्थत्वं नामाक्षिगोलकस्थत्वं य एष आदित्य इत्यादित्यस्थत्वमप्यादित्यमण्डलस्थत्वमेवेति अक्ष्यादित्ययोरेकविधत्वादित्यादिवक्ष्यमाणटीकावाक्यादेवावसीयते । तथा च कथमन्यस्याक्षिस्थत्वे प्राचीनमप्यन्यत्स्यादिति पूर्वपक्षे तदाक्षेपः सिद्धान्ते चात्राक्षिस्थत्वं विष्णोश्चेत् प्राचीनमपि विष्णोरेवेति समाधानं चेति चेदत्राहुः । वक्ष्यमाणदिशा वामनिभामनिशब्दोक्तसर्वस्त्रीपुंसप्रेरकत्वेनाग्नेस्तत्तदक्षिस्थत्वे स एव पूर्वत्राप्युक्तादित्यमण्डलस्थ आपन्न इति तेनैवोपपत्तौ तत्रस्थतया किमीश्वरेण इत्याक्षेपे वक्ष्यमाणयुक्तिभिरन्यस्य केवलस्य प्रेरकत्वानुपपत्त्या चाक्षिस्थस्य विष्णुत्वे प्रागादित्यमण्डलस्थोऽप्यक्ष्यादित्यदेवतास्थोऽपि स एवेति सिद्ध्यतीति । अन्ये तूपनिषद्भाष्यादावादित्यादेरभिमानिदेवतात्वोपगमेन तत्स्थत्वार्थोक्तावप्यत्र भाष्ये सर्वश्रुतावादित्यादिपदेन मण्डलादिजडमेव पूर्वोत्तरपक्षयोरुपेत्याऽऽक्षेपसमाधी । यथोत्तरनये य आत्मनि तिष्ठन्नित्यादावात्मादिशब्दस्य तदभिमानिचतुर्मुखरूपार्थस्य बृहद्भाष्योक्तत्वेऽपीह भाष्ये जीवार्थत्वमेवोपेत्य जीवान्तर्यामिणो भेदोक्तिः भेदेनैनमिति सूत्रे तथाऽत्रापि । पूर्वटीका तु पुरुषपदोक्तजीवाभिप्राया । अत एव तत्र स यश्चायं पुरुष इत्येव भाष्योक्तिरित्याहुः । चन्द्रिकायां तु तत्वप्रदीपादिप्राचीनटीकारीत्या आदित्यादिपदानाम् आदित्यादिदेवतार्थत्वमेवोपेत्य अग्नेरक्षिदेवतास्थत्वे प्राचीनादित्यदेवतास्थोऽपि स एवेत्याक्षेपे अक्षिदेवतास्थस्य विष्णुत्वादादित्यदेवतास्थोऽपि स एवेति समाधिरिति सङ्गतिरुपपादिता । सङ्गतिपरतया व्याख्यातमेव भाष्यं पूर्वपक्षतद्युक्तितत्फलोक्तिपरतयाऽपि व्याकुर्वन् तत्राप्यग्निरेवोच्यत इति प्रतिज्ञार्थं तावदाह ॥ **य एषोऽन्तरक्षणीति** ॥ कुत इत्यत आदित्यस्थत्वादिति भावेन प्रवृत्तस्य य एष आदित्य इत्यादेरत इत्यन्तस्य भाष्यस्यात इत्युक्ता यत इत्यध्याहृतार्थमाह ॥ **यत इति** ॥ भाष्ये युक्तिसूचनायाग्नीनामित्युक्तावप्याकाङ्क्षाक्रमेण तद्व्याख्यातुं श्रौताहमादिपदस्थैकवचनानुरोधेनाग्नेरित्युक्तम् । श्रुतौ स एवेत्युक्तेरग्नेरेवेत्युक्तम् ॥ **अत एवेति** ॥ अग्नेरादित्यस्थत्वादेवेत्यर्थः । अक्ष्यादित्ययोरैक्यादिति वाक्यमक्षिस्थोऽग्निरित्यत्रादित्यस्थत्वस्यैव हेतुत्वोपपादकत्वेन व्यावर्त्यशङ्कापूर्वं व्याचष्टे ॥ **न च वाच्यमिति** ॥ आदित्यः आदित्यमण्डलाभिमानी चक्षुः रूपान्तरेण चक्षुर्देवता भूत्वा अक्षिणी गोलके प्राविशदित्यैतरेयश्रुतावादित्यमण्डलस्य यद्देवताकत्वं चक्षुर्गोलकस्यापि तद्देवताकत्वरूपैकविधत्वोक्तेरित्यर्थः । भाष्यस्थैक्यपदमेकविधत्वपरम् । अक्ष्यादित्यपदे तु जडपरे इति भावः । तत्वप्रदीपे तु तयोस्तदभिमानिचेतनत्वमुपेत्यैक्यपदं तद्देवतैक्यपरत्वेन यथाश्रुतमेव व्याख्यातम् । अस्त्वग्नेरेवादित्यस्थत्वं तथाप्याग्निशब्द

(भावदीपः)

एव विष्णुपरोऽस्त्वित्यतस्तस्याग्निपरत्वे सोऽहमस्मि स एवाहमस्मीत्याद्यभ्यासार्थवादसहितबहुश्रुतिभ्य इति न्यायविवरणमनुसृत्याग्नीनामिति भाष्यस्थबहुवचनसूचितयुक्तिमाह ॥ **एतस्मिन्निति** ॥ बहुश्रुतिभ्य इत्यत्र बहुवचनान्तश्रुतिभ्यो बह्वग्निश्रुतिभ्य इत्यर्थद्वयमुपेत्य भाष्यमपि तथा द्व्यर्थमिति मत्वा अग्नाय इति गार्हपत्य इति चोदाहृतम् । बह्वग्नीत्यपि बहुवचनान्ताग्निश्रुतिसद्भावाद्गार्हपत्यादिबह्वग्निश्रुति-सद्भावादित्यपि द्वेधा व्याख्येयम् । आदिपदेनाग्नीन्परिचचार । कुशलं नः पर्यचचारीत् । उप वयं तं भुञ्जाम इत्यादि पूर्वत्र । अथ हैनमन्वाहार्यपचनोऽनुशशास य एष चन्द्रमसि पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीत्युत्तरत्र वाक्यं गृह्यते । अत एव भाष्ये य एष चन्द्रमसि य एष विद्युतीत्यादि वाक्य-द्वयोपादानाय चन्द्रादित्यस्थत्वोपादानाय चादिपदद्वयं तदुक्तिस्तु यथान्वाहार्यपचनाहवनीययोश्चन्द्र-विद्युत्स्थत्वं तथाऽस्यापि गार्हपत्यस्याऽऽदित्यस्थत्वमिति दृष्यान्तत्वेनेति बोध्यम् । भाष्ये द्विरुक्तिसूचितां न्यायविवरणे कण्ठोक्तामभ्यासरूपयुक्तिं व्यावर्त्यशङ्कापूर्वमाह ॥ **न चेति** ॥ **अग्नेरादित्यस्थत्वकथन-मिति** ॥ आदित्यस्थत्ववति विष्णावग्निप्रयुक्ताहंशब्द औपचारिक इत्यर्थः । शास्त्रदृष्ट्येत्युक्तमुख्यत्वाच्छा-दनेनेयमुक्तिः अन्तर्यामिणमित्यग्रे स्मृत्युक्तेः तद्व्यावर्त्योक्त्यर्था । अत एव स्मारयतीति वक्ष्यति ॥ **यश्चेति** ॥ स यश्चायं पुरुषे यश्चसावादित्ये स एक इति तैत्तिरीये विष्णोरेवाऽऽदित्यस्थत्वोक्तेरिति भावः ॥ **बलवत्त्वादिति** ॥ स्थानान्तरस्थसमाख्यापेक्षया एकस्थानस्य शीघ्रोपस्थितिकत्वादिति भावः ॥ न्यायविवरणोक्तमर्थवादसाहित्यं व्यावर्त्यशङ्कापूर्वमाह ॥ **न चेति** ॥ **अपूर्वतयेति** ॥ अत्यलौकिक-विष्णुग्रहणे अग्निग्रहणादप्यपूर्वं लभ्यत इत्यपूर्वतयेत्युक्तम् । अपहते अपहति वस्तुतः फलवत्त्वमेव फलं न फलस्योक्तिः । सा तु अर्थवाद इति मत्वाऽर्थवाद इत्युक्तम् । एवंरूपाल्पफलेन स्तुतिर्ब्रह्मणि न युक्तेति भावः ॥ **प्राबल्यादिति** ॥ तद्बीजस्य समन्वयसूत्रेऽभिधानादिति भावः । इत्यत्राप्यग्निरेवोच्यत इति प्रतिज्ञातार्थमुपसंहरति ॥ **अत इति** ॥ अभ्यासार्थवादसहितबह्वग्निश्रुतिसत्त्वादित्यर्थः । इत्यत्रापीति भाष्यस्थापिपदार्थोक्तिरादित्येति । एतत्प्रकरणानन्दमयप्रकरणयोर्विद्यमानत्वादित्यर्थः । तेनोक्तमित्यन्तभाष्यवाक्यस्यापि फलपरत्वेन तात्पर्यमुक्तं ध्येयम् । तद्यथेति वाक्ये विष्णुलिङ्गश्रवणात् विष्णुरेवाक्षिस्थः किं न स्यादित्यतो वा अग्नौ समन्वये फलाभावादित्यतो वा प्रवृत्तमतस्तद्यथेत्यादिभाष्यम् । इदमेवैतत्पूर्वपक्षफलमिति भ्रान्तिं निरस्यन्नवतारयति ॥ **न केवलमिति** ॥ **इति मतमिति** ॥ ''जन्माद्यस्य यतः'' ''तन्निष्ठस्य मोक्षोपदेशात्'' ''नेतरोऽनुपपत्तेः'' इत्यादिसूत्रेष्वभिमतमित्यर्थः ॥ **मोक्षोऽपीति** ॥ न केवलमानन्दमयत्वमित्यपेरर्थः । अनुक्तस्योपपादनायोगादुपपत्तिरित्युक्त्या ज्ञानान्मोक्षो भवेदिति लभ्यते । आदित्ये विष्णुरित्युक्तमित्यनेनाग्नेरानन्दमयत्वप्राप्तिरूपफलस्य सूचनादपीति लब्धमिति भावः ।

(भावदीपः)

इदानीं यथान्यासं भाष्यं योजयति ॥ तद्यथेतीति ॥ ननु विष्णुज्ञानान्मोक्ष इति प्रागुक्तमयुक्तम् । तद्यथेत्यत्राक्षिस्थाग्निज्ञानान्मोक्षश्रवणादिति ऋजुसङ्गत्या एतदारम्भसम्भवात् आनन्दमयस्य आदित्यस्थत्वमुक्तं ततश्चार्थादक्षिस्थत्वमप्युक्तं तदक्षिस्थत्वं च्छान्दोग्ये अग्नेः श्रूयत इति प्रागुक्तमादित्यस्थत्वम् आनन्दमयत्वं च तस्यैवेति वक्रसङ्गत्या एतदारम्भः किमर्थ इत्यत आह ॥ अत्रेति ॥ वक्राश्रयणे हि अत्राक्षिस्थत्वसमन्वये प्राचीनमादित्यस्थत्वमपि विष्णोरेव सिद्ध्यति नान्यथेत्यर्थः । अधिकं चन्द्रिकायाम् । आदित्यस्थत्वलिङ्गस्यापि विष्णौ समन्वयसिद्ध्यर्थमित्युपलक्षणं पूर्वपक्षोत्थानार्थं चेत्यपि ध्येयम् । आदित्यवाक्य इवाक्षिवाक्ये पूर्वपक्षप्रापकस्यापि अभानात् भाष्ये अग्नीनामिति बहुवचनम् आदिपदद्वयं त्रायाणामग्नीनामक्षिस्थत्वप्रदर्शनार्थमुक्तमिति भ्रान्तिं निराह ॥ अग्नीनामितीति ॥ अथ हैनं गार्हपत्योऽनुशशास । य एष आदित्ये पुरुष इत्यादेः, अथ हैनमन्वाहार्यपचनोऽनुशशास । य एष चन्द्रमसि पुरुष इत्यादेः, अथ हैनमाहवनीयोऽनुशशास य एष विद्युति पुरुष इत्यादेः श्रवणात् गार्हपत्यादीनां त्रयाणां क्रमेणादित्यादित्रयस्थत्वमुच्यते तथा च प्रसिद्धगार्हपत्त्यस्यैवादित्यस्थत्वादक्षिस्थत्वमिति प्रदर्शनार्थं न तु त्रयाणामप्यादित्यस्थत्वद्वाराऽक्षिस्थत्वोक्त्यर्थमित्यर्थः ॥ छ ः॥

भाष्ये विप्रतिपन्नचक्षुरन्तःस्थत्वमात्रस्यान्तरक्षिणीति श्रुत्यनुरोधेन चक्षुरन्तःस्थ इत्युक्तावपि सूत्रे ''अन्तःस्थित्वा रमणकृदन्तरः समुदाहृतः । रमणं चात्मशब्देनादेयं मातीति चोच्यत'' इत्यनुभाष्योक्तदिशाऽऽत्मशब्दार्थसङ्ग्रहाय अन्तर इत्युक्तम् । अत एव भाष्ये अमृतत्वादीत्येव हेतूक्तिरिति मत्वा सूत्रभाष्ययोरर्थमाह ॥ विष्णुरेव चक्षुरन्तर इति ॥ भाष्येऽप्यन्तस्थो रमणकृदित्यपि योज्यमिति भावः । यद्वाऽनुभाष्येंऽतर इत्यस्यान्तःस्थित्वा रमणकृदित्यर्थोक्तावपीह भाष्येऽग्रे ब्रह्मशब्दादीत्यादिपदेनात्मशब्दस्यापि हेतूकरणायान्तरत्वमन्तःस्थत्वमात्रं विवक्षितम् । चक्षुरन्तःस्थ इति भाष्यसूत्राविसंवादाय टीकायां विष्णुरेव चक्षुरन्तर इति व्याख्येयं दर्शितं ज्ञेयम् । अत एव सङ्क्षेपभाष्ये पूर्णानन्दोंऽतर इत्यन्तरनयार्थेऽन्तर इत्युक्तिः । तत्वप्रदीपे तु अन्तरशब्देन अन्तःस्थो विवक्षित इत्याद्युक्तम् । सूत्रे भाष्ये च लिङ्गादित्यनुक्त्वा उपपत्तेरित्युक्तिर्लिङ्गनिरवकाशत्वाय । न चानुक्तस्य लिङ्गस्य तदुक्तिर्युक्तेति तल्लब्धं हेतुमाह ॥ एतदमृतमिति ॥ तन्निरवकाशत्वोक्तिपरतया सूत्रशेषभाष्यं व्याचष्टे ॥ अमृतत्वादेश्चेति ॥ इत्यादिनेत्यादिपदोक्तं दर्शयन् हेतावियं तृतीयेत्याह ॥ त्रिपादिति ॥ पूरुषसूक्ते । अभयमिति काठके । भाष्ये तस्यैवेत्युक्तिलब्धमन्यत्रानवकाशत्वं व्यनक्ति ॥ न चेति ॥ तत्र हेत्वाकाङ्क्षायाम् इत्यादिनेति भाष्यस्थादिपदेनोपात्तं वाक्यं म्रियन्ते पश्वदेवता इति ऋग्भाष्यं हृदि

(भावदीपः)

कृत्वा प्रकारान्तरेणाऽऽह ॥ **परिम्रियन्त इति** ॥ ऐतरेयब्राह्मणे तमेताः परीति । लक्षणे कर्मप्रवचनीयः तेन कार्यब्रह्मणा निमित्तेनेत्यर्थः । ऋग्भाष्यटीकायाम् एष वै ब्रह्म योऽयं पवते तमेता इति पूर्ववाक्योदाहरणेन वायुपरतया व्याख्यानात् । भीषेति तैत्तिरीये भीषा भयेन अस्मादस्य । भायादस्याग्निरिति श्रुत्यन्तरात् । एतेनाभ्यासार्थवादसहितश्रुतिभ्यो निरवकाशोपपत्तेरेव प्राबल्यमिति न्यायविवरणोक्तं लिङ्गनिरवकाशत्वं विवृतं ध्येयम् । नन्वेवं तद्विरोधोऽग्रेतनभाष्यस्येत्यतो निरवकाशोपपत्तेरेव प्राबल्यमित्येवकारार्थं व्यञ्जयन्नवतारयति ॥ **यदेति** ॥ **उभयथापीति** ॥ निरवकाशत्वानेकत्वाभ्यामित्यर्थः । निरवकाशत्वं च प्रागेवोक्तमित्याशयः । आदिपदेनात्मशब्दो ग्राह्यः । किमित्येवकारार्थोक्त्या तद्विरोधोऽपास्त इति भावः । श्रुतितोऽपीत्युक्त्या जात्यापि प्राबल्यं सूचयति ॥ **बलवच्छ्रुतीति** ॥ कुशलं न इत्यादाविव वक्तरि स्वरसस्याहंशब्दस्यान्यपरत्वमन्याय्यमिति शङ्कानुत्तये हेत्वंशानुवादः । आदित्यस्थत्वलिङ्गस्यापि समन्वयार्थमित्युत्तरवाक्यसङ्गत्यर्थमनुवादेन व्यनक्ति ॥ **तदादित्यस्थोऽपीति** ॥ श्रुतेरग्निप्रयुक्ताहंशब्दस्य शास्त्रदृष्टिसूत्र एवोक्तत्वादाह ॥ **स्मारयतीति** ॥ स्मारणं च पूर्वोक्ताज्ञानेनौपचारिकमिति शङ्कितत्वात्कृतम् । स्मारयति स्मृत्या दर्शयतीति वाऽर्थः । स्मृतावीशेशमिति स्वातन्त्र्यरूपनिमित्तोक्तिः । सर्वशब्दाः भूतानि विष्णुर्भुवनानि विष्णुः प्राणः सर्वाणि भूतानि मनुरभवमित्यादिस्थभूतमन्वादिशब्दाः नाभेदनिमित्तेनेत्याह ॥ **सतीति** ॥ एतेन निरवकाशोपपत्तेरेवेत्युक्तिलब्धमभ्यासार्थवादयोः सावकाशत्वं भाष्ये व्यक्तीकृतमनुवादेन दर्शयति ॥ **एवं श्रुतेरिति** ॥ अग्निप्रयुक्ताहंशब्दस्येत्यर्थः । सोऽहमस्मीत्यादिभाष्यस्थादिपदार्थोऽभ्यास इत्यादि । एतत्प्रकरणश्रुताग्निगार्हपत्यादिशब्दानां प्रसिद्धाग्निपरत्वेऽप्यग्निप्रयुक्ताहंशब्दस्याग्न्यन्तर्यामिपरत्वेनाग्निश्रुतित्वाभावात् तद्धटितोऽभ्यासोऽर्थवादश्च तदन्तर्यामिनिष्ठ इत्यर्थः । अहमादिपदानामन्तर्यामिणि प्रवृत्तिप्रकारं प्रागेवावोचाम ॥ १३ ॥

## अभिनवचन्द्रिका

**किमुदाहरणम्** । किं चक्षुरन्तस्थत्वम्, आहोस्वित् रमणकर्तृत्वमपि । किं चान्तः, यद्याऽऽद्यः तर्हि श्रुत्यनुसारित्वाय अन्तरुपपत्तेरित्येवं सूत्रं स्यात् । लघु चैवं सति सूत्रं भवति 'अन्तः स्थित्वा रमणकृदन्तरः समुदाहृत' इत्यनुव्याख्यानविरोधश्च । अत्र अन्तस्थत्वमिव रमणकर्तृत्वस्याप्युदाहरणत्वोक्तेः । अथ द्वितीयः – तर्हि अन्तर इत्यस्य ढ्रलोपे पूर्वस्य दीर्घोऽणः (पा.सू.६-३-१११) इति दीर्घः प्राप्नोति । रमणकर्तृत्वस्य श्रुतावनुपलम्भश्च दोषो भवति । 'य एषोऽन्तरक्षिणी' (छ.१-४-१५)ति विषयवाक्ये अन्तस्थत्वरूपभावस्यैवाऽभिधानेन रमणकर्तृत्वानभिधानादिति चेत् – अत्र द्वे

(अभिनवचन्द्रिका)

दर्शने – अत्राधिकरणे अन्तस्थत्वरूपभावसगन्वयोऽभिधीयत इत्येकम् । अन्तः स्थित्वा रमणकर्तृत्वं समन्वीयत इत्यपरम् । आद्यं भाष्याभिमतम् 'चक्षुरन्तस्थो विष्णुरेवे'त्यभिधानात् । यद्यपि 'य एषोऽन्तरक्षिणि पुरुषो दृश्यत' इति श्रुतौ अन्तःशब्द एवास्ति न त्वन्तरशब्दः, तथापि अन्तःशब्द-मात्रस्याऽसमन्वेतव्यत्वात् 'य एषोऽन्तरक्षिणि पुरुषो दृश्यत' इति समुदायलभ्यस्याऽन्तस्थत्वलिङ्गस्य वाचकः अन्तरशब्दः सूत्रे निर्दिष्टः । अन्तःशब्दोपपदादस्तेः क्विपि निर्वचनत्वाद्धातुसमाकारलोपे अन्तर इति रूपम् । द्वितीयं तु – अनुव्याख्यानाभिमतम् ।

'अन्तःस्थित्वा रमणकृदन्तरः समुदाहृतः' इत्यभिधानात् । अत्र च यद्यपि श्रुतौ रमणकर्तृत्वं स्पष्टं न प्रतिभाति, तथापि आत्मशब्देन तदुक्तमिति न श्रुतावनुपलम्भदोषः । तदुक्तम् – 'रमणं चाऽऽत्मशब्देनाऽऽदेयं मातेति चोच्यत' इति । आङ्पूर्वाद्ददातेर्मन्यतेश्च क्विप् । द्वयोः क्विपोः सर्वापहारिलोपः । तत्र ददातेराकारलोपः दकारस्य तकारो निर्वचनत्वात् । एवं च आत् आदेयं सुखं, सुखसाधनं च मन्यते अनुभवतीत्यात्मेति रमणकर्तृत्वमात्मशब्दार्थ इति द्रष्टव्यम् । सौत्रत्वान्निर्देशस्य 'अन्तर उपपत्ते'रित्यत्र ढ्रलोप इति दीर्घाभावः । **अर्थादिति** ॥ आदित्यस्याक्षिस्थत्वात् आदित्यस्थत्वोक्तौ अक्षिस्थत्वमप्युक्तं भवति । यथा 'मञ्जूषायां मणिमाले'त्युक्त्या गृहस्थत्वमुक्तं भवतीति भावः । अनेन आनन्दमयाधिकरणप्रतिपाद्यैतदधिकरणप्रतिपाद्ययोः अक्षिस्थत्वेन प्रतीयमानत्वं अस्याधिकरणस्य पूर्वाधिकाणतच्छ्रुतिभ्यां सङ्गतिरित्युक्तं भवति । **तच्च यद्यन्यस्य स्यादिति** ॥ यदि – छान्दोग्योक्तं अक्षिस्थत्वमन्यस्य स्यात्तदा तैत्तिरीयश्रुत्युक्तमादित्यस्थत्वम्, आनन्दमयत्वं चाऽन्यस्यैव प्रसज्यत इति बुद्धिः स्यादित्यर्थः । ननु भाष्ये 'य एष आदित्ये पुरुष' (छा.४-११) इति श्रुत्युक्ताऽऽदित्य-स्थस्याग्नित्वेन पूर्वपक्षाभिधानमयुक्तम् । अक्षिस्थस्य विषयत्वेन, आदित्यस्थस्य विषयत्वाभावादित्यत आह– **य एषोऽन्तरक्षिणीति** ॥ कुतस्तर्हि भाष्ये 'य एष आदित्ये पुरुषः' इति अग्नीनामादित्य-स्थत्वाभिधानमित्यत आह – **यत इति** ॥

अक्षिस्थस्य अग्नित्वसिद्धौ आदित्यस्थत्वं हेतुरिति भावेन 'य एष' इति वाक्ये अग्नेरादित्यस्थत्वेन प्रतिपाद्यत्वकथनमिति भावः । नन्वेवं तर्हि भाष्ये अग्नेरादित्यस्थत्वादित्युक्त्या भवितव्यम् । लिङ्गस्य पञ्चम्यन्तशब्देनैव प्रतिपादनीयत्वादित्यत उक्तम् – **यतोऽत एवेति** । इदमुक्तं भवति – भाष्ये – अतः शब्दः श्रूयते । तेन यत इति लभ्यते, अग्नीनामादित्यस्थत्वमित्यस्य हेतुत्वं लभ्यत इति हेतुत्वद्योतक-पञ्चमीप्रयोगाभावो न दोषाय । 'यतो धूमस्ततो वह्नि'रित्युक्ते पञ्चम्यन्तयत्तच्छब्दसमभिव्याहारबलेन

(अभिनवचन्द्रिका)

धूमादिति पञ्चमीप्रयोगफलदर्शनादिति भाव इति । अप्रयोज कत्वमाशङ्क्य निषेधति – **न च वाच्यमिति । आदित्यश्चक्षुर्भूत्वेति** ॥ अत्र टीकायां 'अक्ष्यादित्ययोरेकविधत्वा'दिति न पाठः, अपि तु एकत्वादिति पाठः । अवश्यं चैतदेवं विज्ञेयम् – 'आदित्यश्चक्षुर्भूत्वे'(ऐ.आ.२-४)ति गोलकान्तर्गताक्षिशब्दवाच्यदेवतातादात्म्ये प्रमाणस्योदाहृतत्वात् । अन्यथा – अक्ष्यादित्ययोरेकविधत्वे किञ्चित्प्रमाणमुदाहरेत् । ततश्चैवं योजना – 'आदित्यश्चक्षुर्भूत्वा अक्षिणी प्राविश'दिति प्रमाणबलेन आदित्यस्य अक्ष्यन्तर्गतचक्षुषा तादात्म्यादादित्यस्थितत्वेन लिङ्गेन अग्नीनामक्षिस्थितत्वं सिध्यति । अत्रायं प्रयोगो द्रष्टव्यः – अग्नयः अक्ष्यन्तर्गताः, अक्ष्यन्तर्गतचक्षुःशब्दाभिधेयाऽऽदित्यान्तर्गतत्वात् । यो यदन्तर्गतान्तर्गतः स तदन्तर्गतः । यथा गृहान्तर्गतमञ्जूषाऽन्तर्गतो मणिः गृहान्तर्गत इति । एतेन – अक्ष्यादित्ययोरैक्यादिति भाष्योक्तेः, 'अक्षीन्द्रियप्रेरकादित्ययोः ऐक्या'दिति तत्वप्रदीपोक्तेश्च, 'अक्ष्यादित्ययोरैक्यस्यानेकश्रुतिसिद्धत्वा' दिति सत्तर्कदीपावल्युक्तेश्च, विरुद्धत्वात् अक्ष्यादित्ययोरेकविधत्वाभिधानमयुक्तमिति परास्तम् । 'एकविधत्वा'दिति पाठस्य लेखकप्रमादप्रयुक्तत्वेन टीकाकृता एकविधत्वानभिमानात् । अत एवाक्ष्यादित्ययोरेकविधत्वेऽपि अक्षिस्थस्याग्न्यन्यत्वसम्भवात्, अग्नेरादित्यस्थत्वमप्रयोजकमिति परास्तम् । ननु – भवेदग्नेरादित्यस्थत्वेन अक्षिस्थत्वसिद्धिः । यदि – 'य एष आदित्ये पुरुष' इत्यत्राग्निरादित्यस्थत्वेनोच्यत इति । स्यात्, तदेव कुत इत्यत आह – **तस्मिन्प्रकरण इति** ॥ अत्र सद्भावाच्चे'ति चशब्दः प्रक्षिप्तः । सद्भावादित्यनन्तरम् 'अग्निरादित्यस्थत्वेनोच्यत' इति शेषः । ततश्च – 'य एष आदित्ये पुरुष' इत्येतस्मिन्प्रकरणे 'अथाग्नयः समूदिरे गार्हपत्योऽनुशशास पृथिव्यन्नमादित्य (छा.४-१९) इति बह्वग्निश्रुतिसद्भावादग्निरादित्यस्थ इत्यर्थः । यद्यपि – अग्नीनामादित्यान्तर्गतत्वेनाऽऽत्मोपदेशादुपदेशकपराणामप्यग्निश्रुतीनामादित्यान्तर्गतस्याग्नित्वनिर्णायकत्वमिति तदुपन्यासः कृतः । अवश्यं चैतदेवं विज्ञेयम् । अक्षिस्थप्रकरणे 'अथाग्नयः समूदिर' इति वाक्याभावेन अग्नेरक्षिस्थत्वसिद्धये बह्वग्निश्रुतिसद्भावस्य हेत्वन्तरत्वाभिधानायेगात् । **न च वक्तव्यमिति** ॥ अत्र 'औपचारिकं किं न स्या'दिति प्रक्षिप्तम् । कथनमित्यनन्तरं अयुक्तमिति ग्राह्यम् । ततश्चैवं टीकावाक्यपाठः – 'न च वक्तव्यम् । अग्नेरादित्यस्थत्वकथनमयुक्तं 'यश्चासावादित्य' इति श्रुतिविरोधादिति'ति । अस्यार्थः – 'य एष आदित्ये पुरुप' इति वाक्ये अग्निरेवोच्यत इत्ययुक्तं 'यश्चासावादित्य' इति समाख्याबलेन विष्णोरेवादित्यस्थतया ग्राह्यत्वात् । अन्यथा – समाख्याविरोधः स्यादिति । अवश्यं चैतदेवं विज्ञेयम् – समाख्याश्रुतेः एतद्वाक्यस्य विष्णुपरत्वनिर्णायकत्वेनाऽग्निपरत्वाङ्गीकारविरोधित्वात् । न ह्यग्नेरौपचारिकधर्मप्रतिपादकत्वपक्षे अस्य वाक्यस्याऽग्निपरत्वं विहन्यते । येन विष्णुपरत्वनिर्णायकसमाख्याविरोधो न

(अभिनवचन्द्रिका)

स्यादिति । **सोऽहमस्मीति** ।। अग्निपराहंशब्दस्यादित्यान्तर्गतेऽभ्यासादित्यर्थः । **न च विष्णुग्रहण इति** ।। दूरेण दिवा धूमस्तावत् दृश्यते नाग्निः । एवं रात्रौ अग्निरेव दृश्यते न धूम इत्यविवादम् । तदन्यथानुपपत्त्या 'आदित्यः सायमग्निं प्रविशति । अग्निस्तु उद्यन्तमादित्यं दिवा प्रविशती'ति सिद्धमिति अग्निपक्षे अपूर्वत्वाभावः । विष्णुपक्षे विष्णोरादित्यस्थत्वस्य प्रमाणान्तरेणासिद्धत्वादपूर्वत्वमिति भावः । **अत इति** ।। उक्तहेतुभ्य आदित्यस्थोऽग्निः तस्मादक्षिस्थोऽग्निः । ततश्च स एवानन्दमय इत्यर्थः । अत्र टीकायां – 'तदन्यथानुपपत्त्यैवोपपत्तेरित्यर्थ' इत्यनन्तरम् 'अत्रादित्यस्थत्वलिङ्गस्यापि विष्णौ समन्वयसिद्ध्यर्थं वक्रसङ्गत्याऽधिकरणारम्भ' इति ज्ञातव्यम् । 'अग्नीनामिति बहुवचनम्, आदिपदद्वयं च, बह्वग्निश्रुतिसूचनाय प्रयुक्तमिति ज्ञातव्य'मिति वाक्यद्वयं प्रक्षिप्तम् । अवश्यं चैतदेवं विज्ञेयम् – आद्यं वाक्यं तावत्प्रक्षिप्तम्, आदित्ये विष्णुरित्युक्तमिति भाष्योक्तसङ्गतौ वक्रत्वाभावेन वक्रसङ्गत्याऽधिकरणारम्भाभावात्, 'यश्चसावादित्य' इति श्रुतौ विष्णोरादित्यस्थत्वमुक्तम् । ततश्चार्थादक्षिस्थत्वमुक्तमित्यस्य ऋजुत्वेन वक्रत्वाभावात् । आदित्यस्थत्वलिङ्गस्य विष्णौ समन्वयसिध्यर्थं सूत्रकृतैव प्रयतितव्यत्वेन भाष्यकृताऽप्रयतितव्यत्वात् न हि भाष्यकारः समन्वयार्थं प्रवृत्तः किंतु समन्वयाद्यर्थसूत्रव्याख्यानायैव प्रवृत्तः । न्यायसाम्यस्यैव समन्वयसाधकत्वेन लिङ्गसमन्वयस्य वक्रसङ्गत्याऽधिकरणारम्भफलत्वाभावाच्च । यस्य तु छान्दोग्योक्तादित्यस्थत्वलिङ्गस्य विष्णौ समन्वयोऽभिलाषितः तस्य सङ्गतावप्रवेशात् । यस्य तु आनन्दमयप्रकरणस्थस्यादित्यस्थलिङ्गस्य सङ्गतौ प्रवेशः तत्समन्वयस्यानभिलषितत्वाच्च । द्वितीयमपि वाक्यं प्रक्षिप्तम् – 'सोऽहमस्मि स एवाहमस्मि' इत्यादाविति प्रथम 'आदि'शब्दस्य 'य एष चन्द्रमसि पुरुषो दृश्यते य एष विद्युति पुरुषो दृश्यते' इति वाक्यग्राहकत्वेन बह्वग्निश्रुतिसूचकत्वाभावात् । एवं 'आदित्यादिस्थत्वमुच्यत' इति द्वितीय 'आदि'पदस्यापि चन्द्रविद्युत्प्रकरणत्वेन बह्वग्निश्रुतिसूचकत्वाभावात् । एवमग्नीनामिति बहुवचनस्यापि गार्हपत्यान्वाहार्यपचनाहवनीयसंज्ञकानां त्रयाणामग्नीनाम्, आदित्यचन्द्रविद्युदन्तर्गतत्वप्रतिपादनार्थत्वेन बह्वगिश्रुतिसूचकत्वाभावात् । एकैनैव सूचनसम्भवे त्रयाणामुपादानवैयर्थ्याच्च । **तदादित्यस्थोऽपि स एव स्यादिति** ।। तदा तर्हि 'स एतदेवं विद्वानुपास्ते अपहते पापकृत्यां लोकीभवती'ति विष्णुलिङ्गश्रवणादिति भावः । **तर्हीति** ।। तथा सतीत्यर्थः ।

## वाक्यार्थमुक्तावली

ॐ अन्तर उपपत्तेः ॐ ।। **अग्निश्रुतिसाहित्येनेति** ।। ब्रह्मेन्द्रमग्निमिति वाक्यगतस्याग्निशब्दस्य विष्णुपरत्वेऽपि नैतत्प्रकरणगतस्याग्निशब्दस्य विष्णुपरत्वम् । उपकोसलं प्रति विद्योपदेष्टृत्वादिना तस्य

(वाक्यार्थमुक्तावली)

प्रसिद्धाग्निपरत्वावगमादिति भावः । **श्रुत्यादिसङ्गतिमिति** ।। अव्यवहितपूर्वाधिकरणसङ्गतिस्तु "एतद्भावाभिधं लिङ्गं क्रियालिङ्गे ततः परम् । अन्तर्याम्यन्तरश्चेति क्रियाभावाख्यमुच्यते" इत्यनुव्याख्यानोक्तरीत्या क्रियाप्रधानकभावरूपविशिष्टनिरूपणस्यैकैकविचारानन्तरं विशिष्टविचार इति । यद्वा एतदमृतमभयमेदद्ब्रह्मेत्युक्तमन्तःस्थं यदि विष्णोरन्यत् स्यात् तदा "यः सेतुरीजानानामक्षरं ब्रह्म तत्परम् । अभयं तितीर्षतां पारम्" इत्युक्तं गुंहास्थमपि विष्णोरन्यत् स्यात् इत्याक्षेपिकी सङ्गतिरिति ।। **अर्थादिति** ।। अक्ष्यादित्ययोरेकविधत्वादिति वक्ष्यमाणत्वादिति भावः ।। **विष्णोरिति** ।। अत्राक्षिस्थत्वम् अथ हाग्नयः समूदिर इत्यादिबह्वग्निश्रुतेः सोऽहमस्मि स एवाहमस्मि इति सावधारणाभ्यासात् । स य एतदेवमित्यर्थवादात् । अस्मद्विद्याऽऽत्मविद्येति विद्याभेदोक्तेश्च किमग्नेः ब्रह्मात्मशब्दामृतत्वाभयत्वादिबलात् किं विष्णोरिति चिन्ता । तदर्थमग्निप्रापकं विष्णुप्रापकबाधकमुत तद्बाध्यम् इति । तदर्थमग्निप्रापकस्य निरवकाशत्वेन विष्णुप्रापकस्य सावकाशत्वमुत विपरीतत्वमिति । भाष्ये अग्नीनामेवादित्यस्थत्वमुच्यत इत्यस्य यतोऽग्नीनामादित्यस्थत्वमुच्यते अत एव य एषोऽतरक्षिणि पुरुषो दृश्यत इत्यत्राग्निरेवोच्यत इत्यन्वयमभिप्रेत्य व्याचष्टे ।। **य एषोऽतरक्षिणीत्यादिना अत एवेत्यन्तेन** ।। अक्ष्यादित्ययोरैक्यादित्यन्तरितं वाक्यमवतार्य व्याचष्टे । **न च वाच्यमिति** ।। अक्ष्यादित्यमण्डलयोरैक्यायोगादाह ।। **एकविधत्वादिति** ।। एकाभिमानिकत्वादित्यर्थः । आदित्यमण्डलाभिमानी चक्षुर्भूत्वा तन्नामकरूपान्तरेणाक्षिणी गोलके प्राविशदिति श्रुत्यर्थः । सोऽहमस्मीत्यादित्यस्थतयोच्यमानोऽग्निरिति कुत इत्यत आह ।। **एतस्मिन् प्रकरण इति** ।। चशब्दस्तु एतदाशङ्कापरिहारसमुचितस्यैवाक्ष्यादित्ययोरेकविधत्वलिङ्गस्य विवक्षितसाधकत्वादिति बोध्यम् । यद्वा अग्नेरक्षिस्थत्वे लिङ्गमुक्त्वा श्रुतिमप्याह ।। **एतस्मिन् प्रकरण इति** । बह्वग्निश्रुतीत्यस्य बहुवचनान्ताग्निश्रुतेरित्यस्य बह्वी या अग्निश्रुतिः तस्याः सद्भावादित्यर्थः । अत एव अथ हाग्नय इति, गार्हपत्योऽनुशशास इत्यादि चोक्तम् । आदिपदेन अथ हैनमन्वाहार्यपचनः अथ हैनमाहवनीय इत्यादेर्ग्रहणम् । न चाक्षिस्थप्रकरणे नाग्निश्रुतिरिति वाच्यम् । आदित्याक्षिप्रकरणयोरैक्यादित्युक्तत्वादिति भावः । नन्वादित्ये पुरुषो विष्णुरेव यश्चासावादित्य इत्यानन्दमयशब्दितस्य विष्णोरादित्यस्थत्वोक्त्या तत्समाख्यानात् । आदित्ये पुरुषः सोऽहमस्मीत्यग्नेरादित्यस्थपुरुषत्वोक्तिस्तु आदित्यस्थपुरुषेणातिप्रीतिवशेनौपचारिकी । ममात्मा भद्रसेन इतिवदित्याशङ्क्य निषेधति ।। **न च वक्तव्यमित्यादिना** ।। अग्नेरादित्यस्थत्वं नाम अग्न्यन्तर्यामिण आदित्यस्थत्वमित्यौपचारिकमित्यप्याहुः ।। **विष्णुग्रहणस्यापूर्वतयेति** ।। ननु अग्निग्रहणेऽप्यपूर्वतासाम्यमिति चेन्न । अग्निशब्दस्य प्रसिद्धाग्निपरत्वमभ्युपेत्य तस्यादित्यस्थत्वकथनादपि अग्निशब्दस्य तदन्तर्गतभगवत्परत्वं

(वाक्यार्थमुक्तावली)

**शास्त्रदृष्टचेति** न्यायेनाङ्गीकृत्य तस्यादित्यस्थत्वे ततोऽप्यपूर्वतालाभात् । किञ्च दिवाऽग्निप्रभाया अदर्शनेनादित्यप्रवेशस्य अनुमानसिद्धत्वात् । अत्यलौकिकब्रह्मग्रहणेऽग्निग्रहणादपि अपूर्वतालाभ इत्यर्थः ॥ **अर्थवादादिति ॥** ज्ञानिनः फलप्रतिपादनेऽपि ज्ञेयस्य फलहेतुत्वरूपस्तुत्यर्थवादोऽप्ययं भवतीति भावः । नन्वग्निशब्दस्य तन्नामकविष्णुविषयत्वेऽर्थवादोऽपि तद्विषयो भविष्यतीति चेन्न । अग्निशब्देन तदन्तर्गत-विष्णुग्रहणे अग्नेरादित्यस्थत्वे सिद्ध्यविरोधेनार्थवादस्य विष्णुविषयत्वकल्पनावैयर्थ्यात् । एतेन भाष्ये अग्नीनामित्यनेन बह्वग्निश्रुतिः सोऽहमस्मि स एवाहमस्मीत्यभ्यासः अग्नीनामेवेत्यनेनैवकारेण न समाख्यानुसारेण विष्णोरिति समाख्याप्रतिषेधः । इत्यादावित्यादिपदेन अथ हैनमन्वाहार्यपचनोऽथ हैनमाहवनीय इति वाक्यवत् तच्छेषभूतं स य एतदेवं विद्वानुपास्त इत्यर्थवादपरं वाक्यत्रयं च सङ्गृह्यत इति व्याख्यातं भवति ॥ **मोक्ष इति मतमिति ॥** नेतरोऽनुपपत्तेरित्यत्रेति शेषः । ननु नेतरोऽनुपपत्तेरित्यत्र विष्णुज्ञानान्मोक्ष इत्युक्तं तद्युक्तम् । तद्यथेत्यक्षिस्थज्ञानात् मोक्षश्रवणादिति ऋजुसङ्गत्यैवाधिकरणारम्भे कर्तव्ये, आनन्दमयो विष्णुरित्युक्तम् । तस्य चादित्यस्थत्वमर्थादक्षिस्थत्वं चाक्ष्यादित्ययोरेकविधत्वात् । तच्च य एषोऽतरक्षिणीत्यग्नेः प्रतीयते इति वक्रसङ्गत्याऽधिकरणारम्भः किमर्थमित्यत आह ॥ **अत्रेति ॥** ननु ऋजुसङ्गत्याऽधिकरणारम्भेऽपि पूर्वपक्षे अग्नेरेवाक्षिस्थत्वे आदित्यस्थत्वस्य हेतुत्वेनोपादाने तस्य विष्णुनिष्ठत्वस्य सिद्धान्ते समर्थनीयत्वात् तस्यापि समन्वयसिद्धिरिति चेन्न । तस्य सिद्धान्तिना सावकाश-त्वाद्युक्त्या अविरोधकत्वस्य वक्तुं शक्यत्वेन समन्वय एव वक्तव्य इति नियमाभावात् । न हि सावकाशत्वमेव समन्वयः । तस्य लक्षणादिवृत्यन्तरेणापि सम्भवेन समन्वयरूपताभावादिति भावः । अत एव समन्वयसिद्ध्यर्थमित्युक्तम् । भाष्ये स एवाहमस्मीत्यादावित्यादिपदेन चन्द्रमसि विद्युतीति वाक्यग्रहणम् । आदित्यादिस्थत्वमित्यादिपदेन चन्द्रविद्युतोर्ग्रहणम् । अग्नीनामिति बहुवचन-मन्वाहार्याहवनीययोः सङ्ग्रहायेति प्रतीयते । तथात्वे चन्द्रविद्युतोरक्ष्णा एकविधत्वाभावेनान्वाहार्यादेः तत्स्थत्वस्याक्षिस्थत्वसाधकत्वाभावेन प्रकृतानुपयुक्तत्वादित्यत आह ॥ **अग्नीनामिति ॥** सूत्रे तत्तु इत्यनुवृत्तिः सिद्धा । उपपत्तेरित्यावर्तते । आद्यस्य लिङ्गादित्यर्थः । द्वितीयस्य उक्तलिङ्गस्य तत्रैवोपपत्तेः अन्यत्रानुपपत्तेरिति । ततश्च विष्णुरेवान्तरश्चक्षुरन्तःस्थित्वा रममाणो नाग्निः उपपत्तेः एतदमृत-मभयमित्युक्तामृतत्वाभयत्वलिङ्गात् । ब्रह्मात्मपुरुषश्रुतिलक्षणतात्पर्यलिङ्गाच्च । तेषां तत्रैवोपपत्तेरिति सूत्रार्थमाह ॥ **विष्णुरेवेत्यादिना** । य एषोऽन्तरक्षिणीत्यत्राक्षिस्थत्वमात्रोक्तावपि "अन्तःस्थित्वा रमणकृदन्तरः समुदाहृतः । रमणं चात्मशब्देनादेयं मातीति चोच्यते" इत्यनुव्याख्यानोक्तेरात्मशब्देन रमणं लभ्यत इति ज्ञेयम् । नन्वेवमात्मशब्दस्य हेतुतयोपादानमिति चेन्न । यौगिकतया समन्वेत-

(वाक्यार्थमुक्तावली)

व्यलिङ्गसमर्पकत्वेऽपि रूढत्वेन सूचितया हेतुत्वोपपत्तेः । यद्वा भाष्ये आदिपदेन पुरुषशब्दमात्रस्य ग्रहणोपपत्तेरिति ॥ **उभयथापीति** ॥ निरवकाशत्वानेकवाक्यमित्यर्थः ॥ **स्मारयतीति** ॥ शास्त्रदृष्टिसूत्रोक्तमित्यर्थः ॥ **एवं श्रुतेरिति** ॥ नन्वग्निशब्देन तदन्तर्गतविष्णुग्रहणेऽपि अग्नेरादित्यस्थत्वं प्राप्तमिति चेन्न । अग्निभिः स्वान्वयं विनैव स्वान्तर्यामिणः आदित्यस्थत्वोक्तेः । अहं मनुरभवमित्यादौ वामदेवस्य मन्वाद्यन्तर्यामित्वाभावात् । तदुक्तमृग्भाष्ये ''एषा विष्णोः केवलाप्येवमन्वा अयोग्यायामन्यदेवेषु सम्यक्'' इति ।

## तत्त्वसुबोधिनी

ॐ अन्तर उपपत्तेः ॐ ॥ अत्र य एषोऽन्तरक्षिणीत्युक्तस्य चक्षुरन्तस्थस्याभयस्याग्नित्वादभयं तितीर्षतां पारमिति पूर्वोक्ताभयोऽप्यग्निर्न तु विष्णुरिति पूर्वपक्षोत्थानादनन्तरसङ्गतिः । **अग्निश्रुतिसाहित्येनेति** । ब्रह्मेन्द्रमग्निमिति वाक्यगताग्निशब्दस्य विष्णुपरत्वेऽपि नैतत्प्रकरणगताग्निशब्दस्य विष्णुपरत्वम् । उपकोसलं प्रति विद्योपदेष्टृत्वादिना तस्य प्रसिद्धाग्निपरत्वावगमादिति भावः । **अर्थादक्षिस्थत्वमिति** । अक्ष्यादित्ययोरेकविधत्वादिति वक्ष्यमाणन्यायेनेति भावः । अग्नेरादित्यस्थत्वमुच्यते **अत एवेति** । अग्नेरादित्यस्थत्वस्य उच्यमानत्वादेवेत्यर्थः । अनेन अतोऽक्ष्यादित्ययोरैक्यादिति भाष्यस्थोऽतःशब्दः सन्निहितेन ऐक्यादित्यनेनान्वेति । प्रकृतस्य अत इत्यनेन परामृष्टस्य आदित्यस्थत्वस्यैक्ये हेतुत्वायोगात् । किन्तु व्यवहितेनात्राप्यग्निरेवोच्यते इत्यनेनान्वेतीत्युक्तं भवति । ननु अक्ष्यादित्ययोरैक्यादिति कथम् । आदित्यमण्डलाक्ष्णोः परस्परभिन्नत्वेन प्रमितत्वात् । न च वाच्यम् आदित्याक्षिपदाभ्यां चेतनग्रहणेनैक्योपपत्तिरिति । स्थानादिव्यपदेशाच्च इति सूत्रानानुगुण्यात् । तत्र हि स्थानत्वेनोक्ताक्ष्णोर्जडत्वेनाभिप्रेतत्वात् । य एष आदित्ये पुरुषः य एषोऽन्तरक्षिणि पुरुष इति वाक्यद्वये आदित्याक्षिगतस्य पुरुषपदेन चेतनत्वेनोक्त्या तयोः जडत्वेनाभिप्रेतत्वाच्चेत्यत आह । **अक्ष्यादित्ययोः एकविधत्वादिति** । असावादित्यस्त्रिवृत् त्रिवृदिव वै चक्षुः शुक्लं कृष्णं कनीनिकेति श्रुत्यनुसारेण जडभूतादित्यमण्डलाक्ष्णोरेव त्रिवृत्त्वधर्मयुक्तत्वेनैकविधत्वात् । आदित्यः चक्षुरिति श्रुतौ आदित्यचक्षुःपदयोः चेतनपरत्वेन आदित्यमण्डलस्थचेतनस्य जडाक्षिप्रवेशोक्त्या जडाक्ष्यादित्यमण्डलयोरेकचेतनाधिष्ठितत्वधर्मेण एकविधत्वाद्वेत्यर्थः । **गार्हपत्योऽनुशशासेत्यादि इति** । आदिपदेन 'अथ हैनमाहवनीय' इत्यादिग्रहणम् । नन्वस्तु अभ्यासस्तथापि समाख्ययैव तद्बोधो भविष्यतीत्यत आह । **अभ्यासस्य चेति** । तस्याः षष्ठप्रमाणत्वेन दुर्बलत्वादिति भावः । तथापि अग्नेः आदित्यस्थत्वस्य प्राप्तत्वात् विष्णुपक्षे अपूर्वता

(तत्त्वसुबोधिनी)

लभ्यत इत्यत आह । **न चेति** । स य एतदेवं विद्वान् इत्यस्यायमर्थः । स यः कश्चिदेवं यथोक्तं गार्हपत्याग्निमुपास्ते अपहते विनाशयति पापकृत्यां पापकर्म लोकीभवति अस्मदीयेन लोकेन आग्नेयेन तद्वान्भवति सर्वं वयः शतायुः मोक्षं प्राप्नोति ज्योक् उज्वलं जीवति नाप्राख्यात आस्ते इत्यर्थः । नास्य अवराश्च ते पुरुषाश्चास्य विदुषः सन्ततिर्जात इत्यर्थः । क्षीयन्ते सन्तत्युच्छेदो न भवतीत्यर्थः । किञ्च तमुपासकं वयमुपभुञ्जामः पालयामः अस्मिन्लोके जीवन्तम् अमुष्मिन्परे लोकेऽपीति । नन्वस्तु अर्थवादः ततः किमित्यत आह । **अर्थवादस्य चेति** । उपसंहरति । **अत इति** । **यतोऽग्निरक्षिस्थ इति** । अनेन भाष्ये अतोऽग्निज्ञानादेव मोक्ष इत्यपि सम्बन्धः । अत इति बलाद्यत इत्यादेरर्थतो लाभः । तयोः हेतुहेतुमद्भावसमर्थनार्थं तद्यथेति भाष्यमित्युक्तं भवति । भाष्ये पुष्करपलाश इत्यत्र कमलपत्र इत्यर्थः । **मोक्षस्यापीति** । मोक्षं विना सर्वपापाश्लेषासम्भवादिति भावः । **वक्रसङ्गत्या अधिकरणारम्भ इति** । यद्यपि विष्णुज्ञानात् मोक्ष इत्युक्तम् । तदयुक्तम् । तद्यथेत्यक्षिस्थस्याग्नेः ज्ञानान्मोक्षश्रवणादिति ऋजुसङ्गत्यैवाधिकरणमारभ्याग्नेरेवाक्षिस्थत्वमिति पूर्वपक्षे आदित्यस्थत्वं हेतूकर्तुं शक्यं पूर्वपक्षे तस्य हेतूकरणं च वक्रसङ्गत्याऽधिकरणारम्भेऽपि समम् । तथापि यथा सिद्धान्ते आदित्यदेवताया आदित्यमण्डलस्थत्वेऽपि इदम् अक्षिस्थत्वममृतत्वादिहेतुभिः ब्रह्मणः तथा पूर्वपक्षे अग्नेः आदित्यस्थत्वेऽपि अक्षिस्थत्वं ब्रह्मण एवेति आदित्यस्थत्वस्य विष्णौ समन्वयो न सिद्ध्येत् । आदित्यस्थो विष्णुस्ततश्च अर्थादक्षिस्थोऽपि स एवेत्यानन्दमयाधिकरणोक्तमादित्यदेवतास्थत्वादिकमयुक्तम् अग्नेरेव अक्ष्यादित्यदेवतास्थत्वादिति वक्रसङ्गत्या अधिकरणारम्भे तु पूर्वोक्तस्य विष्णोः आदित्यदेवतास्थत्वस्येह पूर्वपक्षे आक्षेपात् तन्निरासस्य विष्णोरेवादित्यस्थत्वमिति सिद्धान्ताभिप्रायं विनाऽसिद्धेस्तत्समन्वयः सिद्ध्यतीति भावः । यद्वा आदित्यस्थत्वस्य पूर्वपक्षे हेतुमात्रत्वेनोक्तौ पूर्वपक्षहेतुरपि सिद्धान्तिना समन्वेतव्य इति नियमाभावात् न तत्समन्वयसिद्धिः उत्तरादित्यस्थत्वाक्षेपमुखेन तु पूर्वपक्षे सिद्धान्ते तत्समन्वयोऽपि कर्तव्य इति । य एष आदित्ये पुरुषो दृश्यते इति वाक्यमपि ब्रह्मणि समन्वितं भवति इति भावः । ननु भाष्ये य एष आदित्ये पुरुष इत्यग्नेरेव आदित्यस्थत्वमुच्यत इति वक्तव्यम् । अक्ष्यादित्ययोरैक्यादिति आदित्यस्थत्वस्यैवाक्षिस्थत्वसाधकत्वेनाभिमततया तदुक्तेरेव प्रकृतसङ्गतत्वात् । आदिपदद्वयं बहुवचनं च व्यर्थम् । न चाथ हैनमन्वाहार्यपचनोऽथ हैनमावहनीय इति वाक्यद्वयसङ्ग्रहाय प्रथमादिपदम् अन्वाहार्यपचनाहवनीययोः सङ्ग्रहाय अग्नीनामेवेति बहुवचनम् । चन्द्रमाविद्युतोः सङ्ग्रहाय द्वितीयादिपदम् इति वाच्यम् । चन्द्रविद्युतोः अक्ष्णैकविधत्वाभावेन अन्वाहार्यपचनाहवनीययोः अन्तःस्थत्वस्याक्षिस्थत्वसाधकत्वाभावेन प्रकृतानुपयुक्तत्वात् इत्यत आह ।

(तत्त्वसुबोधिनी)

**अग्नीनामिति** । अथ हाग्रय इत्येत्प्रकरणगतान्वाहार्यादिरूपब्रह्माग्निश्रुतिसूचनार्थमेव बहुवचनादिप्रयोगो न तूक्ताभिप्रायेणेति भावः । एतदमृतम् अभयमिति भाष्ये उपपत्तेः निरवकाशत्वोक्त्यैव पक्षनिष्ठत्वं लभ्यत इति तत्रोक्तमिति ज्ञातव्यम् । अमृतत्वादीति भाष्यगतादिपदार्थमाह । **अभयमिति** । **उभयथापीति** । श्रुतेः जात्या आत्मशब्दमादायानेकत्वेन चेत्यर्थः । नन्वभ्यासार्थवादयोः का गतिरत आह । **एवं श्रुतेः सावकाशत्वेनेति** ।

## वाक्यार्थमञ्जरी

**अर्थादिति** ॥ अक्ष्यादित्ययोरेकविधत्वादिति वक्ष्यमाणरीत्येति भावः ॥ **य एष इति** ॥ य एषोऽन्तरक्षिण्यन्तःपुरुषो दिव्यदृष्ट्या दृश्यते एष आत्मा वामनाख्यः परमात्मेति होवाच एतद्भगवद्रूपमगृतं स्वत एव मरणरहितम् । अभयं स्वत एव भयरहितम् । एतद् ब्रह्म गुणपूर्णमित्यर्थः ॥ **अग्निश्रुतिरिति** ॥ अथ हाग्नयः समूदिर इत्यादाविति शेषः ॥ **य एष आदित्ये पुरुष इति** ॥ आदित्ये सूर्ये य एष पुरुषः पूर्णषड्गुणो भगवान्दिव्यदृष्ट्या दृश्यते सोऽहमहेयत्वादहंनामा गार्हपत्याग्निस्थोऽस्मि । आदित्यस्थस्य मदन्तर्यामिणश्च न विदुरधर्मादिवदभेदः किं तु न कोऽपि विशेष इत्यत आह ॥ **स एवेति** ॥ गार्हपत्याग्निनोपकोसलं प्रत्युपदिश्यते ॥ **आदित्य इति** ॥ आदित्यः आदित्यमण्डलाभिमानी । चक्षुर्भूत्वा रूपान्तरेण चक्षुर्देवता भूत्वाऽक्षिणी गोलके प्राविशदित्यैतरेयभाष्यश्रुतावादित्यमण्डलस्य यद्देवताकत्वं चक्षुर्गोलकस्यापि तद्देवताकत्वरूपैकविधत्वोक्तेरित्यर्थः । तथा च भाष्ये एकपदमेकचेतनाधिष्ठितत्वरूपैकविधत्वपरम् । अक्ष्यादित्यपदे तु जडपर इति भावः ॥ समूदिरे ऊचुः । औपचारिकम् आदित्यस्थविष्ण्वाश्रयत्वेन ॥ **श्रुतीति** ॥ आनन्दमयस्यादित्यस्थत्वप्रतिपादकसमाख्याश्रुतीत्यर्थः ॥ **बलवत्त्वादिति** ॥ स्थानान्तरस्थसमाख्यापेक्षया एकस्थानस्थाभ्यासस्य शीघ्रोपस्थितिकरत्वादिति भावः ॥ **अपूर्वतयेति** ॥ लोकप्रसिद्धाग्नित्यागेनात्यलौकिकब्रह्मग्रहणेऽपूर्वतेत्यर्थः ॥ **बाध इति** ॥ एकत्रानेकवारोक्तिरूपतया ज्ञातज्ञापकाभ्यासादपि प्रमाणान्तराप्रापकत्वरूपापूर्वतायाः प्राबल्यादिति भावः ॥ **स य एतमिति** ॥ योऽधिकारी एतदग्न्यन्तर्यामिरूपमेवं विद्वान् जानन्नुपास्ते । स पापकृत्याम् अपहते विनाशयति लोकी भगवल्लोकी भवति सर्वमायुर्मोक्षमाप्नोतीत्यर्थः ॥ **प्राबल्यादिति** ॥ अपूर्वतापेक्षयोद्देश्यत्वेनाधिकफलापेक्षया करणाकरणयोरिष्टानिष्टकथनरूपार्थवादस्यापूर्वतायाः प्राबल्यस्य सुतरां सिद्धेरिति भावः । यद्यपि अपहते पापहते पापकृत्यमिति फलं तथापि स्तुतिरूपार्थवादित्वमप्यस्तीति वा । वस्तुतः फलवत्त्वं फलं फलोक्तिस्त्वर्थवाद इति वाऽभिप्रेत्यैवमुक्तिरिति ध्येयम् । भाष्ये पलाशे पत्रे ॥ **तदन्यथानुपपत्त्यैवेति** ॥

(वाक्यार्थमञ्जरी)

मोक्षं विना सर्वपापाश्लेषासम्भवादिति भावः । ननु नेतरोऽनुपपत्तेरित्यादौ विष्णुज्ञानान्मोक्ष इत्युक्तम् । स मोक्षस्तद्यथा पुष्करपलाश इति वाक्येन य एषोऽन्तरक्षिणीत्युक्ताक्षिस्थज्ञानात्प्रतीयत इति ऋजुसङ्गत्यैवै-तदधिकरणारम्भसम्भवे य एष आदित्ये पुरुषः य एषोऽन्तरक्षिणि पुरुष इत्यनयोर्वाक्ययोरादित्यश्चक्षुर्भूत्वेति श्रुत्यैकार्थत्वमुपपाद्य य एष आदित्य इति वाक्यस्य यश्चासावादित्य इति वाक्येन सङ्गत्या तदर्थार्थक य एषोऽन्तरक्षिणीति वाक्यस्यापि तेन सङ्गतिरिति वक्रसङ्गत्याऽधिकरणारम्भे किं निमित्तमित्यत आह ॥ **अत्रादित्येति ॥** यद्यप्युक्तरीत्या ऋजुसङ्गत्याऽधिकरणारम्भेऽपि पूर्वपक्षेऽग्नेरेवाक्षिस्थत्वे आदित्यस्थत्वस्य हेतुत्वेनोपपादने सिद्धान्ते तस्य विष्णुनिष्ठत्वस्य समर्थनीयत्वात्तस्यापि समन्वयसिद्धिस्तथापि पूर्वपक्षहेतोः सिद्धान्तिना सावकाशत्वोक्त्याप्यविरोधकत्वस्य वक्तुं शक्यत्वेन समन्वय एव वक्तव्य इति नियामकाभावात्तदर्थमेतदिति भावः । ननु भाष्ये प्रथमादिपदम् अथ हैनमन्वाहार्यपचनोऽनुशशास य एष चन्द्रमसि पुरुषो दृश्यते सोऽहमस्मि अथ हैनमाहवनीयोऽनुशशास य एष विद्युति पुरुषो दृश्यते सोऽहमस्मीत्यनयोर्वाक्ययोः सङ्ग्राहकम् । द्वितीयादिपदं च चन्द्रविद्युतोः सङ्ग्राहकम् । बहुवचनं चान्वाहार्यपचनाहवनीययोर्वाक्यसङ्ग्राहकमिति प्रतीयते । इदं चानुपपन्नं चन्द्रविद्युतोरक्ष्णैकविधत्वाभावे-नान्वाहार्यपचनाहवनीययोस्तदुभयस्थत्वस्याक्षिस्थत्वसाधकत्वाभावेन प्रकृतानुपयोगात् । अतो य एष आदित्ये पुरुष इत्यग्नेरादित्यस्थत्वमुच्यत इत्येव वक्तव्यं शिष्टं तु व्यर्थमित्यत आह ॥ **अग्नीनामिति बहुवचनमादिपदद्वयं चेति ॥** अग्नेरक्षिस्थत्वसाधकत्वेनाथ हाग्नयः समूदिर इत्येतत्प्रकरणगताग्निगार्हपत्या-न्वाहार्यपचनाहवनीयादिरूपब्रह्मग्निश्रुतीनां सूचनार्थमेव बहुवचनप्रयोगो न तूक्ताभिप्रायेणेति भावः ॥ ॐ अन्तर उपपत्तेः ॐ ॥ अन्तरः चक्षुरन्तःस्थित्वा रममाणो विष्णुरेव । एतदमृतमभयमेतद्ब्रह्मेत्युक्ता-मृतत्वाभयत्वब्रह्मशब्दानां तत्रैवोपपत्तेरित्यर्थः । अभयं भयरहितम् । तितीर्षतां संसारतरणेच्छावताम् । पारं सेतुरिवाधारम् ॥ **पर्येनमिति ॥** एनं परमात्मानं परि प्रति एतेनेति यावात् । विद्युदादयो म्रीयन्त इत्यर्थः ॥ **भीषेति ॥** अस्मादस्य हरेः भीषा भयेनाग्न्यादयः स्वस्वव्यापारं कुर्वन्तीत्यर्थः ॥ **तदनुयायिनोरिति ॥** श्रुतिबलेन लब्धार्थ एव तयोर्वाक्यतात्पर्यज्ञापकत्वादिति भावः ॥

## विवृतिः

अत्र य एषोऽन्तरक्षिणि, इत्युक्तस्य चक्षुरन्तस्थस्याभयस्याग्नित्वादभयं तितीर्षतां पारमिति पूर्वोक्ता-भयोऽप्यग्निः नतु विष्णुरिति पूर्वपक्षोत्थानादनन्तरसङ्गतिः ।

(विवृतिः)

**अग्निश्रुतिसाहित्येनेति** ॥ ब्रह्मेन्द्रमग्निमिति वाक्यगतस्याग्निशब्दस्य विष्णुपरत्वेऽपि नैतत्प्रकरण-गताग्निशब्दस्य विष्णुपरत्वम्, उपकोसलं प्रति विद्योपदेष्टृत्वादिना तस्यप्रसिद्धाग्निपरत्वावगममादिति भावः । **अर्थादक्षिस्थत्वमिति** ॥ अक्ष्यादित्ययोरेकविधत्वादिति वक्ष्यमाणन्यायेनेति भावः । **अग्नेरादित्यस्थत्वमुच्यत एवेति** ॥ अग्नेरादित्यस्थत्वस्योच्यमानत्वादेवेत्यर्थः । अनेन 'अतोऽक्ष्यादित्ययोरैक्यात्'' इति भाष्यस्थोऽतःशब्दः सन्निहितेनैक्यादित्यनेनान्वेति । प्रकृतस्यातद्धति परामृष्टस्यादित्यस्थत्वस्यैक्ये हेतुत्वायोगात् किन्तु व्यवहितेनात्राप्यग्निरेको वोच्यत इत्यनेनान्वितं भवतीत्युक्तम् । नन्वक्ष्यादित्ययोरैक्यादिति कथं आदित्यमण्डलाक्ष्णोः परस्परं भिन्नत्वेन प्रमितत्वात् । नच वाच्यं आदित्याक्षिपदाभ्यां चेतनग्रहणेनैक्योपपत्तिरिति । स्थानादिव्यपदेशाच्चेति सूत्रानानुगुण्यात् । तत्रहि स्थानत्वेनोक्ताक्ष्णोर्जडत्वेनाभिप्रेतत्वात् । 'य एष आदित्ये पुरुषः' 'य एषोऽन्तरक्षिणि पुरुषः' इति वाक्यद्वये आदित्याक्षिगतस्य पुरुषपदेन चेतनत्वोक्त्या तयोर्जडत्वेनाभिप्रेतत्वाच्चेत्यत आह ॥ **अक्ष्यादित्ययोरेकविधत्वादिति** ॥ 'असावादित्यस्त्रिवृदिव वै, चक्षुः शुक्लं कृष्णं कनीनि का' इतिश्रुत्यनुसारेण जडभूतादित्यमण्डलाक्ष्णोरेव त्रिवृत्त्वधर्मयुक्तत्वेनैकविधत्वात् । आदित्यश्चक्षुरिति श्रुतावादित्यचक्षुःपदयोश्चेतनपरत्वेनादित्यमण्डलस्थचेतनस्य जडाक्षिप्रवेशोक्त्या जडाक्ष्यादित्यमण्डलयोरेक-चेतनाधिष्ठितत्वधर्मेणैकविधत्वाद्वेत्यर्थः ॥

**गार्हपत्योऽनुशशासेत्यादीति** ॥ आदिपदेन 'अथहैनमन्वाहार्यपचन अथ हैनमाहवनीय इत्यादि ग्रहणम् । नन्वस्त्यभ्यासः समाख्ययैव तद्बोधो भविष्यतीत्यत आह ॥ **अभ्यासस्य चेति** ॥ तस्य षष्ठप्रमाणत्वेन दुर्बलत्वादिति भावः । तथाप्यग्नेरादित्यस्थत्वस्य प्राप्तत्वाद्विष्णुपक्षेऽपूर्वता लम्यत इत्यत आह ॥ **न चेति** ॥ स य एतदेवं विद्वानित्यस्यायमर्थः सयः कश्चिदेवं यथोक्तं गार्हपत्यमग्निमुपास्ते सोऽपहते विनाशयति पापकृत्यां पापकर्म लोकीभवति अस्मदीयेन लोकेनाग्नेयेन तद्वान् भवति सर्वं वर्षशतमायुरेति प्राप्नोति ज्योक् उज्वलं जीवति नाप्रख्यात आस्त इत्यर्थः । नास्य अवराश्च ते पुरुषाश्चास्य विदुषः सन्ततिर्जात इत्यर्थः । क्षीयन्ते सन्तत्युच्छेदो न भवतीत्यर्थः । किं च तमुपासकं वयं उपभुञ्जामः पालयामः अस्मिन् लोके जीवन्तममुष्मिन् परे लोकेऽपीति । नन्वस्त्वर्थवादः ततः किमित्यत आह ॥ **अर्थवादस्यचेति** ॥ उपसंहरति ॥ **अत इति** ॥ यतोऽग्निरक्षिस्थ इत्यनेन भाष्ये अतोऽग्निज्ञानादेव मोक्ष इत्यपि सम्बन्धः ॥ **अत इति** ॥ **यतोऽग्निरक्षिस्थ इति** ॥ अत इति बलाद्यत इत्यादेरर्थतो लाभः ॥ तयोर्हेतुहेतुमद्भावसमर्थनार्थं तद्यथेति भाष्यमित्युक्तं भवति ॥ भाष्ये

(वितृतिः)

पुष्करेत्यादेः कमलपत्र इत्यर्थः । **मोक्षस्यापीति** ।। मोक्षं विना सर्वथा पापाश्लेषासम्भवादिति भावः । **वक्रसङ्गत्याऽधिकरणारम्भ इति** ।। यद्यपि विष्णुज्ञानान्मोक्ष इत्युक्तम् । तद्युक्तम् । तद्यथेत्यत्राक्षिस्थस्याग्नेर्ज्ञानान्मोक्षश्रवणादिति ऋजुसङ्गत्यैवाधिकरणमारभ्याग्नेरेवाक्षिस्थत्वमिति पूर्वपक्षे आदित्यस्थत्वं हेतूकर्तुं शक्यम् । पूर्वपक्षे तस्य हेतूकरणं च वक्रसङ्गत्याऽधिकरणारम्भेऽपि समम् । तथापि यथा सिद्धान्ते आदित्यदेवताया आदित्यमण्डलस्थत्वेऽपि इदमक्षिस्थत्वममृतत्वादिहेतुभिः ब्रह्मण एव तथा पूर्वपक्षे अग्नेरादित्यस्थत्वेऽपि अक्षिस्थत्वं ब्रह्मणएवेत्यादित्यस्थत्वस्य विष्णौ समन्वयो न सिध्येत् । एवञ्चादित्यस्थो विष्णुस्ततश्चार्थादक्षिस्थोऽपि स एवेति आनन्दमयाद्यधिकरणोक्तमादित्यदेवतास्थत्वमयुक्तं, आदित्यस्थोऽग्निः तथाचाक्षिस्थोऽप्यग्निरेव, आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशदिति श्रुत्याऽक्ष्यादित्ययोरेकविधत्वादिति वक्रसङ्गत्याधिकरणारम्भेतु पूर्वोक्तस्य विष्णोरादित्यदेवतास्थत्वस्येह पूर्वपक्षे आक्षेपात्तन्निरासस्य विष्णोरेवादित्यस्थत्वमिति सिद्धान्ताभिप्रायं विनाऽसिद्धेः तत्समन्वयः सिद्ध्यतीतिभावः । यद्वा आदित्यस्थत्वस्य पूर्वपक्षे हेतुमात्रत्वेनोक्तौ पूर्वपक्षहेतुरपि सिद्धान्तिना समन्वेतव्य इति नियमाभावान्न तत्समन्वयसिद्धिः । उक्तादित्यस्थत्वाक्षेपमुखेनतु पूर्वपक्षे सिद्धान्ते तत्समन्वयोऽपि कर्तव्य इति य एष आदित्ये पुरुषो दृश्यत इति वाक्यमपि ब्रह्मणि समन्वितं भवतीति भावः ।

ननु भाष्ये य एष आदित्ये पुरुष इत्यग्नेरेवादित्यस्थत्वमुच्यत इति वक्तव्यम् । अक्ष्यादित्ययोरैक्यादित्यादित्यस्थत्वस्यैवाक्षिस्थत्वसाधकत्वेनाभिमततया तदुक्तेरेवप्रकृतसङ्गतत्वादादिपदद्वयं बहुवचनं च व्यर्थम् । नचाथ हैनमन्वार्यपचनाहवनीययोः सङ्ग्रहायाग्नीनांवेति बहुवचनं चन्द्रमाविद्युतोः सङ्ग्रहाय द्वितीयमादिपदमिति वाच्यम् । चन्द्रविद्युतोरक्ष्णैकविधत्वाभावेन प्रकृतानुपयुक्तत्वादित्यत आह **अग्नीनामिति** ।। अथाग्नय इत्येत्प्रकरणगतान्वाहार्यादिरूपबह्वग्निश्रुतिसूचनार्थमेव बहुवचनादिप्रयोगो नतूक्ताभिप्रायेणेति भावः । एतदमृतमभयमिति भाष्ये उपपत्तेर्निरवकाशत्वोक्त्यैव पक्षनिष्ठत्वं लभ्यत इति तन्त्रोक्तमिति ज्ञातव्यम् । अमृतत्वादिति भाष्यगतादिपदार्थमाह **अभयमिति** ।। **उभयथापीति** ।। श्रुतेर्जात्याऽत्मशब्दमादायानेकत्वेन चेत्यर्थः । श्रुतेर्निरवकाशत्वं प्रागुपपादितम् । नन्वभ्यासार्थवादयोः का गतिरत आह ।। **एवं श्रुतेः सावकाशत्वेनेति** ।।

## सूत्रभाष्यम्

**।। ॐ स्थानादिव्यपदेशाच्च ॐ ।। १४ ।।**

(सूत्रभाष्यम्)

'तद्यदस्मिन् सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छती'(छां.उ. ४-१५)त्यादि-स्थानशक्तिः वामनिर्भामनिरित्याद्यात्मशक्तिश्चोच्यते । तस्य ह्येतल्लिङ्गम् । 'स ईशः सोऽसपत्नः स हरिः स परः स परोवरीयान् यदिदंचक्षुषि सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति स वामनः स भामनः स आनन्दः सोऽच्युत' इति चतुर्वेदशिखायाम् ।

'यत्स्थानत्वादिदं चक्षुरसङ्गं सर्ववस्तुभिः ।
स वामनः परोऽस्माकं गतिरित्येव चिन्तयेदि'ति वामने ॥ १४ ॥

## सत्तर्कदीपावली

इतोऽप्यक्षिस्थपुरुषो विष्णुरेवेत्येतत्प्रतिपादकं सूत्रमुपन्यस्य व्याचष्टे ॥ **स्थानादीत्यादिना ॥** अयमर्थः । असङ्गो विष्णुरेव अक्षिस्थपुरुष इति ज्ञापयितुं स्थानस्य चक्षुषोऽसङ्गत्वं निर्दिश्यते । 'चक्षुषि सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति' इति तथा 'एष उ एव वामनिरेष हि सर्वाणि वामानि नयति एष उ एव भामनिरेष हि सर्वेषु लोकेषु भाति' इत्यक्षिस्थः पुरुषः परमात्मधर्मविशिष्टत्वेनोच्यते । अयमुक्तलक्षणो विष्णुरेवेत्यत्र श्रुत्यन्तरं दर्शयति ॥ **स ईश इति ॥**

## तत्त्वप्रदीपिका

ॐ स्थानादिव्यपदेशाच्च ॐ । 'वामं' सौन्दर्यं, 'भामं' तेजः, सौन्दर्यतेजःप्रधानत्वात्त्रीपुरुषा वामभामशब्दशब्दिताः । तन्नेता वामनिर्भामनिश्च । भानाद्वा भामनिः । यदिदं चक्षुषीत्यादिश्रुतेरयमर्थः । यस्माद्धरेस्सन्निहितादस्मिंश्चक्षुषि सर्पिर्वोदकं वा किञ्चित्सिञ्चति चेत्तद्वर्त्मनी एव गच्छति स भामनः स वामन इति ॥

## तत्त्वप्रकाशिका

युक्त्यन्तरेण विष्णोश्चक्षुरन्तःस्थत्वं साधयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **स्थानादीति ।** अत्राक्षिस्थपुरुष-सम्बन्धादक्ष्णोरसङ्गत्वाख्यशक्तिर्व्यपदिश्यते 'तद्यदस्मिन्सर्पिर्वोदकं वे'ति । 'एतं संयद्वाम इत्याचक्षत एतं हि सर्वाणि वामान्यभिसंयन्ति । एष उ एव वामनिरेष हि सर्वाणि वामानि नयति एष उ एव भामनिरेष हि सर्वेषु लोकेषु भाति' इति चक्षुरन्तस्स्थस्य संयद्वामत्वादिस्वरूपशक्तिश्चोच्यते । एतदुभयबलात् चक्षुरन्तःस्थो विष्णुरेवेत्यर्थः । यस्मादयं पुरुषोऽक्षिणि विद्यते तत् तस्मात् अस्मिन् चक्षुषि यदि सर्पिर्वोदकं वा कश्चित् सिञ्चति तर्हि वर्त्मनी प्रत्येव गच्छति न चक्षुः स्पृशतीत्यर्थः । एतल्लिङ्गद्वयसद्भावेऽपि

(तत्त्वप्रकाशिका)

कुतोऽक्षिस्थस्य विष्णुत्वनिश्चय इत्यत आह ॥ **तस्येति** ॥ एतदिति स्वसम्बन्धेनाक्ष्णोरसङ्गत्वापादकत्वम् । कुत एतत्तस्य लिङ्गमिति तत्राह ॥ **स इति** ॥ यद्यस्माद्यस्य प्रभावात् । इदंचक्षुपीति समस्तम् ॥ १४ ॥

## गुर्वर्थदीपिका

भगवत्सम्बद्धेऽपि लगुडादौ काले पङ्कादर्शनादसम्भावनापरिहाराय आद्य एव लिङ्गे भरो भाष्यकारस्येति भावेनाऽऽह । **कुत एतदिति** । अत्र सम्बन्धपदेन सान्निध्यविशेषो विवक्षित इति भावः ।

## भावबोधः

तद्यदस्मिन्निति श्रुतौ तच्छब्दयच्छब्दयोर्व्यत्यासेनान्वयमभिप्रेत्यापेक्षितांशं पूरयन् व्याचष्टे– **यस्मादयं पुरुषोऽक्षणीत्यादिना** । वर्त्मनीत्यस्य कर्मद्वितीयात्वसम्भवादाह– **वर्त्मनी प्रत्येवेति** । श्रुतावेवकारेणाक्ष्णोरसङ्गत्वं लभ्यत इत्यभिप्रेत्याह– **न चक्षुरिति** ।

नन्वात्मशक्तेर्विष्णुनिष्ठत्वेन तल्लिङ्गत्वेऽपि स्थानशक्तेः चक्षुर्निष्ठत्वेन कथं विष्णुलिङ्गत्वोक्तिरित्यत आह । **एतदिति स्वसम्बन्धेनेति** । स ईश इत्यादितच्छब्दस्य यच्छब्दसापेक्षत्वाद्यदिदंचक्षुषीत्यत्र यच्छब्दं तदर्थत्वेन व्याचष्टे– **यद् यस्मात्** यस्य **प्रभावादिति** । इदंशब्दस्य सर्पिर्वेत्यत्र सम्बन्धे वैयर्थ्याद् विषयवाक्यगततद्यदस्मिन्निति वाक्यसमानार्थत्वलाभायाह– **इदंचक्षुपीति समस्तं पदमिति** ॥

## भावदीपः

ॐ स्थानादिव्यपदेशाच्च ॐ ॥ अपूर्वहेतुसमुच्चायकसौत्रचशब्दानुरोधादाह ॥ **युक्त्यन्तरेणेति** ॥ भाष्ये सौत्रस्थानादिपदाभ्यां स्थानात्मकशक्त्युक्तेः कथं विष्णोश्चक्षुरन्तःस्थोपपादकत्वमित्यतोऽसङ्गभगवत्स्थानत्वाच्चक्षुषोऽसङ्गत्वमुच्यत इति छान्दोग्यभाष्यानुरोधेन यत्स्थानत्वादिति स्मृत्यनुरोधेन च भाष्यं व्याचष्टे ॥ **अत्रेति** ॥ एतच्छुतावित्यर्थः । उक्तं हेतुं श्रुतौ दर्शयितुं शेषमुपादत्ते ॥ **तद्यदस्मिन्निति** ॥ इत्याद्यात्मशक्तिरित्यत्रादिपदार्थं वक्तुं सर्ववाक्यं पठति ॥ **एतमिति** ॥ वामानि सुन्दराणि । वामनिः सौन्दर्यप्रधानस्त्रीनेता । भामनिः तेजःप्रधानपुरुषनेता । सर्वलोकेषु भातीति भामनिः । संयद्वामत्वादीत्यादिपदेन वामनिभामनिशब्दितस्त्रीपुंसनेतृत्वग्रहः । भाष्ये शेषोक्तिरेतदुभयेति । श्रुतौ तदित्यस्य परामर्शविषयं दर्शयन्नर्थमाह ॥ **यस्मादिति** ॥ तदित्यनुवादेन तस्मादिति व्याख्या । असङ्गपुरुषाश्रयत्वादित्यर्थः । अस्मिन्नित्यनुवादः । यदित्यस्यार्थो यदीति । एवकारार्थो न चक्षुरिति । असङ्गत्वोक्तेः

(भावदीपः)

श्रुतावस्फुटत्वात्तां व्याचख्यौ । संयद्वामवाक्यं तु स्फुटत्वान्न व्याख्यातम् । दुर्गमत्वात्स्थानशक्तेः विष्णुलिङ्गत्वं व्यनक्ति ॥ **एतदितीति** ॥ फलितोक्तिर्यस्य प्रभावादिति । स वामन इत्यन्वयः । वामभामशब्दौ सौन्दर्यतेजोवाचिनौ तत्प्रधानत्वात् स्त्रीपुंसौ वामभामशब्दोक्तौ तन्नियामको वामनो भामन इति तत्वप्रदीपोक्तार्थः । एकदेशविकृतम् अनन्यवद्भवतीति न्यायेन वामनवामन्यादि-शब्दानामेकार्थत्वात् । उक्तार्थे श्रुतिरियं ध्येया । लिङ्गस्य विष्णुस्थत्वोक्त्यर्थं स हरिरित्यादिपूर्वशेषोक्तिः । भाष्यादावक्ष्यन्तःस्थ इति वाच्ये चक्षुरन्तःस्थ इत्यसकृदुक्तिः भाष्योक्तस्मृत्यनुरोधेन ॥ १४ ॥

## अभिनवचन्द्रिका

ननु – 'चक्षुषी'ति सप्तम्यन्तत्वादस्मिन्निति वक्तव्यम्, इदमिति प्रथमानिर्देशः कथमित्यत आह – (सू.१४) **इदंचक्षुषीति समस्तपदमिति** ॥

## वाक्यार्थमुक्तावली

ॐ स्थानादिव्यपदेशाच्च ॐ ॥ स्थानमक्ष्यादिपदात् तत्तदधिष्ठाता उच्यते । ताभ्यां च तच्छक्तिरुप-लक्ष्यते । तत्सङ्गेनासङ्गत्वाख्यस्थानशक्तेः संयद्वामत्ववामनिपदोक्तसौन्दर्यनियामकत्वभामनिपदोक्त-सर्वलोकभानरूपात्मशक्तेश्च व्यपदेशाच्च चक्षुरन्तःस्थो विष्णुरेवेति सूत्रार्थमाह ॥ **अत्राक्षिस्थेत्यादिना** ॥ ननु तद्यदस्मिन्नित्यत्र अस्मिन् चक्षुषि सर्पिर्वोदकं वा सिञ्चति तद्वर्त्मनी एव गच्छतीत्येवोच्यते न त्वक्षिस्थपुरुषसम्बन्धादितीत्यतो व्याचष्टे ॥ **यस्मादयं पुरुष इति** ॥ एतेन यदित्यस्य यस्मादित्यर्थः । अयं पुरुष इति प्रकृतपरामर्शः । अस्मिन्नित्यधिकरणसप्तमीबलात् चक्षुषि विद्यत इति लभ्यते । **तदिति** । यस्मात् तस्मादित्यर्थः । अस्मिन्नित्यस्य व्यावृत्तिः **यत्तदिति** । यदि तर्हीत्यर्थतया वर्तत इत्यर्थः । वर्त्मनीत्यस्य कर्मद्वितीयात्वासम्भवादाह ॥ **वर्त्मनी प्रत्येवेति** ॥ नन्वात्मशक्तेः संयद्वामत्वादेः विष्णुलिङ्गत्वेन तेन विष्णोरक्षिस्थत्वसिद्धावपि स्थानगतेनासङ्गत्वलिङ्गेन विष्णोः कथमक्षिस्थत्वमात्मशक्तिरेव । तथापि स्थाननिरूपितत्वात् स्थानशक्तिरित्युक्तम् । यदित्यस्यार्थो यस्मादिति । तद्विवरणं यस्य प्रभावादिति । तच्चक्षुषि सर्पिर्वोदकं वा सिञ्चति इदं वर्त्मनी एवेति व्याख्याते स वामन इत्यादेरनन्वयप्रसङ्गात् एवं व्याख्यानमिति भावः । तर्हीदमिति सर्पिरादिविशेषणं व्यर्थमित्यत आह ॥ **इदं चक्षुषीति** ॥ अस्मिन् भगवत्सन्निधिमति चक्षुषि इत्यर्थः ।

## तत्त्वसुबोधिनी

तद्यदस्मिन्निति श्रुतौ तच्छब्दयच्छब्दयोः व्यत्यासेनान्वयमभिप्रेत्यापेक्षितांशं पूरयन्व्याचष्टे । **यस्मादयं पुरुषोऽक्षणीत्यादिना** । वर्त्मनीत्यस्य कर्मद्वितीयात्वासम्भवादाह । **वर्त्मनी प्रत्येवेति** । श्रुतावेव-कारेणाक्ष्णोरसङ्गत्वं लभ्यत इत्यभिप्रेत्याह । **न चक्षुरिति** । नन्वात्मशक्तेः विष्णुनिष्ठत्वेन तल्लिङ्गत्वेऽपि स्थानशक्तेश्चक्षुर्निष्ठत्वेन विष्णुलिङ्गत्वासम्भवात् कथं भाष्ये एतच्छब्देनोभयं परामृश्य तस्य विष्णुलिङ्गत्वोक्तिरित्यत आह । **एतदिति स्वसम्बन्धेनेति** । स ईश इत्यादितच्छब्दस्य यच्छब्दसापेक्षत्वात् यदिदंचक्षुषीत्यत्र यच्छब्दं तदर्थत्वेन व्याचष्टे । **यस्मादिति** । इदंशब्दस्य सर्पिर्वेत्यत्र सम्बन्धे वैयर्थ्यात् विषयवाक्यगततद्यदस्मिन्निति वाक्यसमानार्थत्वलाभायाह । **इदंचक्षुषीति समस्तं पदमिति** ।

## वाक्यार्थमञ्जरी

ॐ स्थानादिव्यपदेशाच्च ॐ ।। स्थानमक्ष्यादिपदात्तदधिष्ठाता उच्यते । तच्छक्त्युपलक्षकमेतत् । तथा चासङ्गत्वाख्यस्थानशक्तेः संयद्वामत्वाद्यधिष्ठातृशक्तेः व्यपदेशाच्चक्षुरन्तस्स्थो विष्णुरेवेत्यर्थः । सर्पिर्घृतम् ।। एतं संयद्वाम इति ।। एतं चक्षुरन्तस्स्थं भगवन्तं संयद्वामः प्रकृष्टसौन्दर्य इत्याचक्षते विद्वांसः । कुतः हि यस्मादेतं सर्वाणि वामानि सौन्दर्याणि अभिसंयन्ति प्रविशन्तीत्यर्थः ।। **एष इति** ।। एष एव चक्षुरन्तस्स्थो भगवान्वामनिः सौन्दर्यनेतेत्युच्यते सूरिभिः । कुतः हि यस्मादेष एव सर्वाणि वामानि रमादिगतसौन्दर्याणि प्रापयतीत्यर्थः ।। **एष इति** ।। एष चक्षुरन्तस्स्थो भगवान्भामनिः प्रकाशमान इत्युच्यते । कुतः हि यस्मादेष एव सर्वेषु लोकेषु भाति दीप्यत इत्यर्थः ।। ननु आत्मशक्तेर्विष्णुनिष्ठत्वेन तल्लिङ्गत्वेऽपि स्थानशक्तेश्चक्षुर्निष्ठत्वेन विष्णुलिङ्गत्वासम्भवात्कथं भाष्य एतच्छब्देनोभयं परामृश्य तस्य विष्णुलिङ्गत्वोक्तिरित्यत आह ।। **एतदिति स्वसम्बन्धेनेति** ।। अस्य तात्पर्यमाह ।। **यस्य प्रभावादिति** ।। श्रुतावसपत्नो विरोधरहितः ।। **समस्तमिति** ।। इदं च तच्चश्रुश्चेदंचक्षुस्तस्मिन्नित्येकं पदम् । तेनास्मिन्नित्युपपन्नमिति भावः ।।

## विवृतिः

तद्यदस्मिन्नितिश्रुतौ तच्छब्दयच्छब्दयोः व्यत्यासेनन्वयमभिप्रेत्यापेक्षितांशं पूरयन् व्याचष्टे ।। **यस्मादयं पुरुषोऽक्षिणीत्यादिना** ।। वर्त्मनी इत्यस्य कर्मद्वितीयात्वासम्भवादाह ।। **वर्त्मनी प्रत्येवेति** ।

(विवृतिः)

श्रुतावेवकारेणाक्ष्णोरसङ्गत्वं लभ्यत इत्यभिप्रेत्याह ॥ **न चक्षुरिति** ॥ नन्वात्मशक्तेर्विष्णुनिष्ठत्वेन तल्लिङ्गत्वेऽपि, स्थानशक्तेश्चक्षुर्निष्ठत्वेन विष्णुलिङ्गत्वासम्भवात्कथं भाष्ये एतच्छब्देनोभयं परामृश्य, तस्य विष्णुलिङ्गत्वोक्तिरित्यत आह ॥ **एतदिति** ॥ **स्वसम्बन्धेनेति** ॥ स ईश इत्यादितच्छब्दस्य यच्छब्दसापेक्षत्वाद्यदिदंचक्षुषीत्यत्र यच्छब्दं तदर्थत्वेन व्याचष्टे ॥ **यद्यस्मादिति** ॥ इदंशब्दस्य सर्पिर्वेत्यत्र सम्बन्धेवैयर्थ्याद्विषयवाक्यगततद्यदस्मिन्निति वाक्यसमानार्थत्वलाभायाह ॥ **इदं चक्षुषीति** ॥

## सूत्रभाष्यम्

**॥ ॐ सुखविशिष्टाभिधानादेव च ॐ ॥ १५ ॥**

'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मे'ति, (छां.उ. ४-१०) 'विज्ञानमानन्दं ब्रह्म', (बृ.उ.५-९-२८) 'आनन्दो ब्रह्मेति व्यजानादि'(तै.उ. ३-६) त्यादेस्तस्यैव हि तल्लक्षणम् ।

'लक्षणं परमानन्दो विष्णोरेव न संशयः ।
अव्यक्तादितृणान्तास्तु विप्रुडानन्दभागिन' इति ब्रह्मवैवर्ते ।

न च मुख्ये सत्यमुख्यं युज्यते ॥ १५ ॥

## सत्तर्कदीपावली

'कं ब्रह्म खं ब्रह्म' इति यो बृहत्सुखज्ञानः परमात्मा प्रकृतः स एवाक्ष्यन्तरपुरुषोऽभिधीयते । अतोऽपि नाग्निरत्रोच्यत इत्येवं व्याचष्टे ॥ **सुखेति** ॥ सूत्रमुपन्यस्य बृहत्सुखो विष्णुरेवेत्येतद्वाक्यान्तरैर्द्रढयति । विज्ञानमित्यादिना । नन्वग्नेरीषत्सुखात्मकत्वसम्भवात्तत्परित्यागः कथमित्यत आह ॥ **न चेति** ॥

## तत्त्वप्रदीपिका

ॐ सुखविशिष्टाभिधानादेव च ॐ ॥ कं ब्रह्म खं ब्रह्मेति विशिष्टसुखाभिधानादेव केवलं चक्षुरन्तस्थ ईश्वर इत्यवसीयते । चकाराद्विशिष्टज्ञानाभिधानादेव च । सुखविशिष्टाभिधानादिति व्युत्पत्त्यर्थमुक्तम् । अनयोर्हि श्रौतयोः कं खमिति शब्दयोः स्वतः पूर्णसुखज्ञानवाचिनोर्ब्रह्मपदसमानाधिकृतयोः सङ्कोचकारणाभावाद्विशिष्टं पूर्णं सुखं ज्ञानं चैवार्थ इत्यभिप्रायेण न च मुख्ये सत्यमुख्यं युज्यत इत्याह ॥

## तत्त्वप्रकाशिका

प्रकरणवलाच्च चक्षुरन्तःस्थत्वं विष्णोः प्रतिपादयत्सूत्रमुपन्यस्य तदुपात्तश्रुतिमेवोदाहरति ॥ **सुखेति** ॥ अत्रोपक्रमे प्राणो ब्रह्मेति मुख्यप्राणस्याखिलजीवेभ्यः पूर्णत्वमुक्त्वा कं ब्रह्म खं ब्रह्मेति सुखसंविदोरपि पूर्णत्वमुच्यते । तथा चास्य प्रकरणस्योपक्रमे पूर्णसुखाभिधानादेव वैष्णवत्वं सिद्ध्यति किमुत पूर्णज्ञानाभिधानादपि । ततः प्रकरणवलाच्च चक्षुरन्तःस्थो विष्णुरेवेति भावः । उपक्रमे पूर्णसुख-संविदभिधानेऽपि कुतोऽस्य प्रकरणस्य वैष्णवत्वमित्यत आह ॥ **विज्ञानमिति** ॥ पूर्णानन्दसंवित्त्वस्य ब्रह्मलक्षणत्वादुपक्रमे तदभिधाने ब्रह्मैवोपक्रान्तं स्यादिति भावः । श्रौतमपि विज्ञानादिपदं पूर्णज्ञानादिवाचि । ननु सकलचेतनानामपि पूर्णानन्दत्वात् कथमेतद्विष्णुलक्षणमित्यत आह ॥ **लक्षणमिति** ॥ अन्येषा-मापेक्षिकमेव पूर्णसुखत्वं न ब्रह्मवन्निरवधिकम् इति भावः । नन्वग्र्यादिसुखस्यापेक्षिकतयापि पूर्णत्वसद्भावा-त्तेषां किं न स्यादित्यत आह ॥ **न चेति** ॥ मुख्ये निरवधिकपूर्णत्वे सति सम्भवति नामुख्यमापेक्षिकं पूर्णत्वं युज्यत इत्यर्थः । न चोपक्रमे प्राणस्यापि श्रुतत्वेन प्राकरणिकत्वम् । श्रुतिलिङ्गादिवाधकसद्भावात् ॥ १५ ॥

## गुर्वर्थदीपिका

''सुखविशिष्टाभिधानादि''त्यत्र अग्र्याहितादिवद्विशिष्टं पूर्णं सुखं सुखविशिष्टम् । नेदं ब्रह्मपदं पूर्वोक्तप्रमाण इव सावधिकपूर्णत्वपरमिति सूचनाय अल्पाक्षरमपि पूर्णपदमुपेक्ष्य विशिष्टपदं प्रयुक्तम् । सर्वेभ्यस्सुखेभ्य उपरीति सूचनायोत्तरनिपातश्च । सुखेन विशिष्टतयाऽव्यवहितसम्बन्धितया स्वपदेनोक्त-ज्ञानमपि ध्वनिना सूचयितुं विशिष्टपदमुत्तरनिपातश्च । ''कं ब्रह्मे'ति श्रुत्यनुसारित्वाच्च ब्रह्मपदव्याख्यान-रूपविशिष्टपदस्योपरि निपात इति च ज्ञेयम् । अन्यथा ''सुखपूर्णाभिधाना''दित्यवक्ष्यत् । अत एव गूढाभिसन्धिर्भाष्यकारः तमिममर्थं मनसि निधाय न पूर्णपदेन ब्रह्मपदं व्याख्यातवान् । किन्तु श्रुतिमात्रमुदाहृत्य सूत्रेणैव स्ववाक्यं पूरितवानिति ज्ञेयम् । ''विज्ञानमानन्दं ब्रह्मे''त्यादौ विज्ञानादीनां ब्रह्मात्मकत्वमेवोच्यते इह तु पूर्णत्वं तेन विज्ञानादीनां पूर्णतां कथं सिद्ध्येदित्यत आह । **श्रौतमिति** । ''मुख्यस्य निर्विशेषेण शब्द'' इति न्यायेन विज्ञानादिपदमेव पूर्णत्वाभिधायीति भावष्टीकाकारस्य । वस्तुतस्तु श्रुतेरनेकार्थत्वादेतच्छ्रुतिसमाख्यया विज्ञानं ब्रह्म पूर्णम्, आनन्दं ब्रह्म पूर्णमित्येवार्थो भाष्य-कृतोऽभिप्रेतः । अन्यथा अस्यामपि श्रुतौ कपदेन स्वपदेनैव पूर्तेर्ब्रह्मपदं व्यर्थं स्यात् । ब्रह्मपदेनात्र पूर्णत्वमुक्त्वोदाहृतश्रुतौ ज्ञानानन्दपदाभ्यामेव पूर्णत्वाभिधाने दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यं च स्यात् ।

(गुर्वर्थदीपिका)

अतः सम्भवदर्थान्तरमेव टीकाकृतोक्तमिति ज्ञेयम् । आपेक्षिकमेव पूर्णसुखत्वमित्यत्र जलपूर्णो घट इति स्वयोग्यतापेक्षयोच्यमानं पूर्णत्वमित्यर्थः । अमुख्यपूर्णत्वमेवात्रास्त्विति वदन्तं प्रति मुख्यविद्यमानत्वस्य विप्रतिपन्नत्वात् सति सम्भवतीत्युक्तम् ।

## भावबोधः

''अपरं ब्रह्म स प्राणः साक्षाद्यो बलदेवता ।
ज्ञानानन्दात्मकः पूर्णः परं ब्रह्म स्वयं हरिः ॥''

इति स्मृत्यनुसारेण भाष्याभिप्रायमाह । **अत्रोपक्रम इत्यादिना** । सूत्रगतैवकाराभिप्रायमाह । **किमु पूर्णज्ञानविधानादपीति** । अत एव भाष्ये खं ब्रह्मेत्येतदप्युदाहृतमिति भावः ।

ननु पूर्णज्ञानत्वादेर्विष्णुलक्षणत्वे तदभिधायकमेव प्रमाणमुदाहर्तव्यम्; न तु विज्ञानमानन्दमित्यादि । तत्रानन्दादेः पूर्णत्वानभिधानादित्यत आह । **श्रौतमपि विज्ञानादिपदमिति** । निरुपपदानन्दादिपदेन पूर्णानन्दादेरेवाभिधानादिति भावः । श्रुतौ ब्रह्मपदोक्तं सुखादेः पूर्णत्वं सूत्रे विशिष्टपदेन सङ्गृहीतम् । सूत्रे विग्रहस्तु सुखेन विशिष्टस्याभिधानादिति वा । विशिष्टं च तत्सुखं चेति वा । तत्राऽऽद्ये सुखेन श्रैष्ठ्यं विना नेति सुखस्यापि तत्सिद्धिः । द्वितीये– 'कडाराः कर्मधारय' इति विशिष्टशब्दस्य परनिपातः । अत एवोक्तमनुव्याख्याने–

''विशिष्टसुखवत्वाच्च ब्रह्मत्वं च विशिष्टता ॥'' इति ।

भाष्ये प्राणो ब्रह्मेत्यंशोदाहरणस्य प्रयोजनमाह– **न चोपक्रम इत्यादिना** ।

## भावदीपः

ॐ सुखविशिष्टाभिधानादेव च ॐ ॥ भाष्यस्य सूत्रेणान्वयं मत्वा ''विशिष्टसुखवत्त्वाच्च ब्रह्मत्वं च विशिष्टते''त्यनुभाष्यदिशा भाष्यार्थमाह ॥ **अत्रेति** ॥ श्रुतावित्यर्थः ॥ **पूर्णत्वमिति** ॥ तद्भाष्ये तु ''अपरं ब्रह्म स प्राणः साक्षाद्यो बलदेवता । ज्ञानानन्दात्मकं पूर्णं परब्रह्म हरिः स्वयम्'' इति कंखंपदयोरेव पूर्णसुखादिवाचित्वात् विज्ञानं ब्रह्मेत्यादाविव पूर्णानन्दं पूर्णज्ञानं च परं ब्रह्मेत्यर्थान्तरमुक्तम् । अत्र प्राणो ब्रह्मेत्येतदंशोदाहरणं च श्रुतेति सूत्रे कगतीति कशब्देन प्राणब्रह्मणोस्तन्त्रेणोपादानस्य वक्ष्यमाणत्वात् । कं ब्रह्मेति कशब्देन ब्रह्मण इव प्राणस्यापि प्राणो ब्रह्मेति प्रकृतत्वमस्ति । अन्यथा

(भावदीपः)

स एनान् ब्रह्म गमयतीति श्रुतौ स इति तच्छब्दश्रवणेन प्राणपरामर्शो न स्यादित्युत्तरार्थत्वेनेति भावः । श्रुतिलिङ्गवाक्यानामुपक्रमोपसंहारयोः श्रुतत्वे तन्निश्चायकतया लिङ्गत्वमिति शब्दादेवेत्यत्र वक्ष्यमाणदिशा पूर्णानन्दादिरूपलिङ्गमुपक्रमे श्रुतं सत् उपक्रमस्य वैष्णवत्वनिर्णायकतया अस्य प्रकरणस्य विष्णौ तात्पर्यवत्त्वरूपं वैष्णवत्वमनुमापयतीति सूत्रार्थमाह ॥ **तथा चेति** ॥ **पूर्णसुखेति** ॥ कडाराः कर्मधारय इति विशिष्टपदस्य परनिपात इति भावः । सौत्रैवकारार्थमाह ॥ **किमुतेति** ॥ एतेन भाष्ये खं ब्रह्मेत्युक्तेरुपयोगो दर्शितः । ननु विज्ञानमित्यादौ पूर्णत्ववाचिपदाभावात्कथं पूर्णानन्दसंवित्त्वस्येत्युक्तिरित्यत आह ॥ **श्रौतमपीति** ॥ न केवलं कमित्यादिपदमित्यपेरर्थः ॥ मुख्यस्य निर्विशेषेणेति न्यायात् । पूर्णज्ञानादेरेव मुख्यत्वात् अन्यथा लक्षणस्यातिव्याप्त्यापत्तेरिति भावः । **अन्येषामापेक्षिकमेवेति** ।

''यथोदश्चनकुम्भादेः सरित्सागरयोरपि ॥
अल्पेन महता वापि पूर्तिर्योग्यतया भवेत् ॥
एवं नरादिब्रह्मान्तजीवानां साधनैरपि ॥
अनादिसिद्धैर्भक्त्याद्यैः पूर्तिर्योग्यतया भवेत् ॥
अल्पैः पूर्तिस्तथाल्पानां महद्भिर्महतामपि''

प्रथमाध्याये बृहद्भाष्ये व्यक्तमेतत् । विवरिष्यते चात्रापि भूम्नः क्रतुवज्ज्यायस्त्वमित्यादौ तृतीयेऽध्याये । यद्वा तथापि पूर्णानन्दत्वममुक्तानां व्यपेक्षयेति पञ्चमे बृहद्भाष्योक्तदिशा आपेक्षिकमित्यर्थः । अथवा एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीत्यादेर्भगवदायत्तमित्यर्थः । एतेन सूत्रे पूर्णसुखेत्यनुक्त्वा विशिष्टसुखेत्युक्तिरापेक्षिकपूर्णत्वस्य जीवेष्वपि सत्त्वेन व्यभिचारात्सर्वव्यावृत्तपूर्णत्वलाभायेति सूचितम् । प्रकरणित्वं प्रकरणप्रतिपाद्यत्वम् ॥ **श्रुतिलिङ्गादीति** ॥ पुरुष आत्मा ब्रह्मेति श्रुत्यमृतत्वादिलिङ्गब्रह्मप्रकरणरूपबाधकेत्यर्थः ॥ १५ ॥

## अभिनवचन्द्रिका

ननु – सूत्रे सुखविशिष्टाभिधानादित्यभिधानात्, भाष्ये 'कं ब्रह्मेत्येवोदाहर्तव्यं न तु खं ब्रह्म' इति । प्रयोजनाभावदित्यत आह – **अत्रोपक्रम इति** ॥ सौत्रैवकारार्थकैमुत्यप्रदर्शनाय तदुदाहरणमिति भावः । ननु 'विज्ञानमानन्दं ब्रह्मेति श्रुत्यदाहरणमयुक्तम् । तत्र पूर्णज्ञानादिवाचकपदाभावेन, तथा पूर्णज्ञानादेर्विष्णुलक्षणत्वासिद्धेरित्यत आह – **श्रौतमपीति** ॥ पूर्णत्वावाचकविशेषणराहित्येन श्रौतमपि विज्ञानादिपदं पूर्णानन्दवाचि, निरुपपदविज्ञानादिपदस्य पूर्णज्ञानादिवाचकत्वस्वाभाव्यादित्यर्थः । तेषां

(अभिनवचन्द्रिका)

**किं न स्यादिति ॥** अग्न्यादीनामेव सुखं 'कं ब्रह्म खं ब्रह्मे'त्युपक्रमे प्रतिपाद्यत इति किं न स्यादित्यर्थः । **मुख्य इति ॥** मुख्यस्य प्रतिपाद्यत्वे सम्भवति नामुख्यं प्रतिपाद्यं युज्यत इति भावः ।

## वाक्यार्थमुक्तावली

ॐ सुखविशिष्टाभिधानादेव च ॐ ॥ श्रुतौ ब्रह्मपदोक्तं पूर्णत्वं सूत्रे विशिष्टपदेन सङ्गृहीतम् । विशिष्टं च तत् सुखं च सुखविशिष्टम् । कडाराः कर्मधारय इति परनिपातः । विष्णुरेवान्तर इत्यनुवर्तते इत्यभिप्रेत्य सूत्रार्थमाह ॥ **पूर्णसुखाभिधानादिति ॥** तदुक्तमनुव्याख्याने ''विशिष्टसुखवत्त्वाच्च ब्रह्मत्वं च विशिष्टता'' इति । एवकाराभिप्रायमाह ॥ **किमुतेति ॥** उपक्रमस्य साक्षात् प्रकरणनिर्णायकत्वात् अस्य प्रकरणस्य वैष्णवत्वमिति मध्ये साध्यमुक्तम् । तथा चोपक्रमे पूर्णसुखसंविदोरभिधाने तत्प्रकरणस्य वैष्णवत्वाच्च प्राकरणिकश्चक्षुरन्तरो विष्णुरेवेति मथितोऽर्थः । ननु विज्ञानमानन्दं ब्रह्मेत्यादौ ब्रह्मपदस्य विशेष्यार्पकत्वात् आनन्दादेः पूर्णत्वं केनोच्यत इत्यत आह ॥ **श्रौतमपीति ॥** तेषां निरुपपदत्वादिति भावः ॥ **आपेक्षिकमिति ॥** जलपूर्णो घट इतिवत् स्वयोग्यतापेक्षयेति भावः । भाष्ये प्राणो ब्रह्मेत्यंशोदाहरणसूचिताक्षेपपरिहारं व्यनक्ति ॥ **न चोपक्रम इत्यादिना ॥**

## तत्त्वसुबोधिनी

सूत्रगतैवकाराभिप्रायमाह । **किमुत पूर्णज्ञानाभिधानादपीति ।** ननु पूर्णज्ञानत्वादेः विष्णुलक्षणत्वेन तदभिधायकमेव प्रमाणमुदाहर्तव्यम् । न तु विज्ञानमित्यादि । तत्रानन्दादेः पूर्णत्वानभिधानादित्यत आह । **श्रौतमपीति ।** निरुपपदानन्दादिपदेन पूर्णानन्दादेरेवाभिधानादिति भावः । श्रुतौ ब्रह्मपदोक्तं सुखादेः पूर्णत्वं सूत्रे विशिष्टपदेन सङ्गृहीतम् । भाष्ये प्राणो ब्रह्मेत्यंशोदाहरणस्य प्रयोजनमाह । **न चेति ।**

## वाक्यार्थमञ्जरी

ॐ सुखविशिष्टाभिधानादेव च ॐ ॥ विशिष्टं पूर्णं च तत्सुखं च सुखविशिष्टम् । कडाराः कर्मधारय इति परनिपातः । कं ब्रह्म खं ब्रह्मेत्युपक्रमे पूर्णसुखाभिधानाच्चक्षुरन्तःस्थो ब्रह्मैवेत्यर्थः । उक्त्वा ब्रह्मशब्देन । कं सुखं खं ज्ञानम् । सौत्रैवकारार्थमाह ॥ **किमुतेति ॥** प्रकृतोपयोगमाह ॥ **श्रौतमपीति ॥** निरपवादेऽमुख्यग्रहणायोगादिति भावः । **आपेक्षिकं** सावधिकम् । स्मृतौ विप्लुट् अल्पम् ॥

## विवृतिः

सूत्रगतैवकाराभिप्रायमाह ॥ **किमुत पूर्णज्ञानाभिधानादपीति** ॥ ननु पूर्णज्ञानत्वादेर्विष्णुलक्षणत्वेन तदभिधायकमेव प्रमाणमुदाहर्तव्यं नतु विज्ञानमित्यादि । तत्रानन्दादेः पूर्णत्वानभिधानादित्यत आह ॥ **श्रौतमपीति** ॥ निरुपपादानन्दादिपदेन पूर्णानन्दादेरेवाभिधानादिति भावः । श्रुतौ ब्रह्मपदोक्तं सुखादेः पूर्णत्वं सूत्रे विशिष्टपदेन गृहीतम् । भाष्ये प्राणो ब्रह्मेत्यंशोदाहरणस्य प्रयोजनमाह ॥ **नचेति** ॥

## सूत्रभाष्यम्

**॥ ॐ श्रुतोपनिषत्कगत्यभिधानाच्च ॐ ॥ १६ ॥**

'स एनान्ब्रह्म गमयती'ति (छां.उ. ४-१५) । न ह्यन्यविद्यया अन्यगतिर्युक्ता ॥ १६ ॥

## सत्तर्कदीपावली

स एनान् ब्रह्म गमयतीति अक्षिस्थपुरुषज्ञानाद् ब्रह्मगमनश्रवणादप्यसौ विष्णुरेव नाग्निः । न ह्यग्निविद्यया विष्णुगतिर्युज्यते । यान्ति देवव्रता देवान् पितॄन् यान्ति पितृव्रताः । भूतानि यान्ति भूतेज्याः यान्ति मद्याजिनोऽपि मामिति भगवद्वचनविरोधादित्येतमर्थं सूत्रेण दर्शयति ॥ **श्रुतेत्यादिना** ॥

## तत्त्वप्रदीपिका

श्रुतोपनिषत्कगत्यभिधानाच्च । ''स एनान्ब्रह्म गमयती''ति श्रुतोपनिषत्कानां श्रुतोपनिषद्व्रतोपासनानां ब्रह्मगत्यभिधानाच्चान्तरो विष्णुरेव । अस्यामुपनिषण्णं ब्रह्मेत्युपनिषदुपासना, अनया ब्रह्मोपनिषीदतीति वा । ब्रह्मोपासकस्यैव हि ब्रह्मगतिः । तदेतदाह । **न ह्यन्यविद्ययेति** ॥

## तत्त्वप्रकाशिका

नैवमुपक्रमेऽप्यक्षिस्थप्रकरणस्य वैष्णवत्वं युक्तम् । 'प्राणो ब्रह्म' 'कमिति विद्यां' 'य एष आदित्ये पुरुष' इत्यादिविद्यां चोक्त्वा अग्निभिरुपकोसलैषा सोम्य तेऽस्मद्विद्याऽऽत्मविद्या चेत्युक्तत्वेनाद्यविद्याया विष्णुविषयत्वस्य द्वितीयविद्याया अग्निविषयत्वस्यैव युक्तत्वादक्षिस्थविद्यायाश्चादित्यस्थविद्ययैकार्थत्वात् । न चोपक्रमविरोधः । ह्ययाम्यग्निमित्यादावविवोपपत्तेः । न चास्मद्विद्येत्यन्तर्यामिविषयतया योज्यं तथा सत्यात्मविद्येति पृथगुक्त्ययोगात् । तस्मादग्निविषयत्वमेव चक्षुरन्तःस्थविद्याया इत्याशङ्कां परिहरत्सूत्रं पठित्वा

(तत्त्वप्रकाशिका)

तदुपात्तश्रुतिमेवोदाहरति ॥ **श्रुतेति ॥** नैतद्विद्याया अग्निविषयत्वं युक्तमपि तु विष्णुविषयत्वमेव । 'अथ यदु चैवास्मिंच्छव्यं कर्म कुर्वन्ति यदु च नाऽर्चिषमेवाभिसम्भवन्त्यर्चिषोऽहरन्ह आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासांस्तान्मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषो मानवः स एनान्ब्रह्म गमयती'ति श्रुतैतद्विद्यानां ब्रह्मगत्यभिधानादिति भावः । श्रुतपदं मननिदिध्यासनोपलक्षकम् । कगतिरिति ब्रह्मगतिः । कं ब्रह्मेति प्रकृतत्वात् । केन वायुना गतिरिति वा । 'को वायुरिति शब्दितः' इत्यभिधानात् । अथवा श्रुतोपनिषदमुपकोसलं प्रति एतद्विद्याफलत्वेन कगत्यभिधानादिति । न च वाच्यमत्र कगतिकथनमेव श्रूयते न तद्विद्याफलत्वेनेति । सर्वेषु लोकेषु भाति य एवं वेदेति फलश्रुतिसामीप्यात् । अन्यथा असङ्गतेश्च । अस्त्वेतद्विद्याया ब्रह्मप्राप्तिः फलं तथापि कुतो नाग्निविषयत्वमित्यत आह ॥ **न हीति ॥** यदीयमग्निविद्या तर्ह्येतद्विद्ययाऽग्निप्राप्तिरेव फलत्वेनोच्येत न ब्रह्मप्राप्तिः । 'देवान्देवयजो यान्ति मद्भक्ता यान्ति मामपि' इत्यादेरन्यविषयाऽन्यगतेरयुक्त्वात् । अतो ब्रह्मप्राप्तिफलैतद्विद्याया ब्रह्मपरत्वमेवेति भावः । न चास्मद्विद्येत्युक्तिविरोधः । तस्य अन्तर्यामिविषयत्वोपपत्तेः । श्रुतेरपि निरवकाशत्वोपपत्तेः प्राबल्यात् । न चात्मविद्येति पृथगुक्तिविरोधः । तस्याः सर्वगतात्मविद्यात्वाभिधायकत्वात् । तस्यैव ब्रह्मत्वात् ॥ १६ ॥

## गुर्वर्थदीपिका

यद्यप्यस्मद्विद्या आत्मविद्या चेति श्रौतपदक्रमानुरोधेनाऽऽद्यविद्याया एवाग्निविद्यात्वमुचितं, तथाऽपि प्राचीनविद्यायां सूत्रकृतैव पूर्णसुखत्वाख्यबाधकस्योक्तत्वात् द्वितीयविद्यैवाग्निविद्येति भावेनोक्तम् । **द्वितीयविद्याया इति ।** क्रमस्त्वविवक्षित इति भावः । तर्ह्यक्षिस्थविद्यायामपि ''अन्तर उपपत्ते''रिति बाधकस्योक्तत्वात्कथमग्निविद्यात्वमित्यत उक्तम् । **अक्षिस्थविद्यायाश्चेति ।** ह्वयाम्यग्निमित्यत्र 'ह्वयाम्यग्निं प्रथमं स्वस्तय' इति प्रागग्निमुक्त्वा ''ह्वयामि मित्रावरुणाविहावस'' इति तत्रैव मित्रावरुणयोरप्युक्तत्वादित्यर्थः । स्वश्रोतारं प्रत्येतद्विद्योपासकस्य फलकथनात् श्रुतेत्यत्र मननादेरसङ्ग्रह इति भावेनोक्तम् । **अथवेति ।** उक्तविद्याप्रस्तावे यत्किञ्चिद्गतिकथनस्यासङ्गतत्वादेतद्विद्याफलत्वेनोच्यत इति भावेनाह । **अन्यथेति ।** अत एव चशब्दः । श्रुतेरपीत्यत्र अस्मदित्यग्निवाचकपदश्रुतेः सकाशादित्यर्थः । तस्यैव ब्रह्मत्वादित्यत्र ''अत सातत्यगमन'' इति धातोः ब्रह्मशब्दसमानार्थकाऽऽत्मशब्दवाच्यत्वादित्यर्थः ।

## भावबोधः

**आत्मविद्या चेति ।** प्राणो ब्रह्म कं ब्रह्मेति प्रागुक्तविद्येत्यर्थः । नन्वग्निभिः स्वात्मविद्यात्वेनोक्त-

(भावबोधः)

विद्यायाः आदित्यस्थविद्यात्वादक्षिस्थविद्यायाः कथमग्निविषयत्वमित्यत आह– **अक्षिस्थविद्यायाश्चेति** ॥ **ह्वयाम्यग्निमित्यादिवदिति** । यथा 'ह्वयाम्यग्निं प्रथमं स्वस्तये' इत्यत्राग्नेरुपक्रमेऽपि 'सवितारमूतये हिरण्मयेन सविता रथेन' इत्यादिसवितृलिङ्गादिना तत्प्रकरणं सावित्रं तथा अत्रापि ब्रह्मण उपक्रमेऽपि अस्मद्विद्येत्यग्निभिरुक्तत्वादग्नीनामेवेदं प्रकरणमित्यर्थः । **श्रुतैतद्विद्यानां ब्रह्मगतीति** । अनेन श्रुतोपनिषदामधिकारिणां कस्य ब्रह्मणो गतिरिति सूत्रे विग्रहः प्रदर्शितो भवति । **मनननिदिध्यासनोपलक्षकमिति** । श्रवणमात्रेण ब्रह्मप्राप्त्यसम्भवादिति भावः । **अन्यथाऽसङ्गतेश्चेति** । फलकथनरूपत्वाभावे ब्रह्मप्राप्तिकथनस्य प्रकारान्तरेण प्रकृतोपयोगाभावादित्यर्थः ।

''अस्मच्छब्दोदितोऽन्तःस्थ आत्मा व्याप्तो जनार्दनः ।
अग्नयो द्विविधं विष्णुमवोचन्नुपकोसले ॥''

इति प्रमाणं मनसि निधायाऽऽह । **तस्यान्तर्यामिविषयतयोपपत्तेरित्यादि** । श्रुतेरपीति । अस्मच्छब्दरूपाया इत्यर्थः ॥

ननु 'कं ब्रह्म' 'खं ब्रह्म' इत्युक्ताद्यविद्याया ब्रह्मशब्दोपेतत्वेन ब्रह्मविद्यात्वात् कथमात्मविद्येत्युक्तसर्वगतविद्यात्वमित्यत आह– **तस्यैव ब्रह्मत्वादिति** । सर्वगतस्यैवेत्यर्थः ।

## भावदीपः

ॐ श्रुतोपनिषत्कगत्यभिधानाच्च ॐ ॥ शङ्कते ॥ **नैवमिति** ॥ प्राणो ब्रह्मेत्येतदंशानुवादस्तु विद्यात्रैविध्यशङ्कानिरासायात्मविद्यात्वेन सङ्ग्रहार्थमित्येके । केचित्तु प्राणोपक्रमेऽपि बाधकात् यथा न प्राणविद्यात्वं सर्वस्य तथा ब्रह्मोपक्रमेऽप्यग्नीनामादित्यस्थत्वोक्तिबाधकेन न ब्रह्मविद्यात्वं किन्तु अग्निविद्यात्वमेवेति दृष्टान्तार्थं प्राणो ब्रह्मेत्यंशानुवादः । अत एव प्राक् श्रुतिलिङ्गादिबाधकसद्भावान्न प्रकरणित्वं प्राणस्येत्युक्तमित्याहुः । श्रुतौ सान्निध्यमनुरुध्य व्युत्क्रमेणोक्तावपि स्वयं यथाक्रममन्वयमाह ॥ **आद्येति** ॥ कं ब्रह्मेत्युक्तविद्याया इत्यर्थः । तावता अक्षिस्थो विष्णुरित्यत्र किमायातमत आह ॥ **अक्षिस्थेति** ॥ ह्वयाम्यग्निं प्रथमं स्वस्तय इत्यत्राग्नेरुपक्रमेऽपि सवितारमूतये हिरण्मयेन सविता रथेनेत्यादिसवितृश्रुतिलिङ्गादिना तत्प्रकरणं सावित्रं ह्वयाम्येकादशसावित्रमित्यनुक्रमणिकोक्तेः । तथाऽत्राप्यस्मद्विद्येत्यग्निभिरुक्तत्वादग्निप्रकरणमित्यर्थः । एतेन प्राणस्य न प्रकरणित्वमित्येतदुपपादितं बोध्यम् । इति पृथगुक्तीति । एतेन न्यायविवरणे सोऽहमस्मि स एवाहमस्मीत्याद्यभ्यासेत्यत्रास्मद्विद्या

(भावदीपः)

आत्मविद्येति विद्याशब्दाभ्यासोऽप्यादिपदेन गृहीत इति दर्शित इत्याहुः । भाष्यस्य सूत्रेणान्वयं दर्शयन् स एनानिति पदद्वयपरामृष्टं वक्तुं कृत्स्नवाक्यमुपाददानः सूत्रार्थमाह ॥ **नैतदिति** ॥ अन्तरो विष्णुरेवेत्यनुवृत्तस्य तात्पर्योक्तिरियम् । श्रवणमात्रस्य ब्रह्मप्राप्त्यहेतुत्वाद्य एवं वेदेत्यपरोक्षस्याप्युक्तेरिति भावेनाह ॥ **उपलक्षकमिति** ॥ **इति वेति** ॥ प्राणो ब्रह्मेति तस्यापि प्रकृतत्वादिति भावः । पूर्वमेनानित्युक्तबहुवचनान्तपरत्वेनार्थ उक्तः । अधुना आचार्यस्तु ते गतिं वक्तेति अहं तु ते तद्वक्ष्यामीति युष्मच्छब्देन प्रकृतश्रोतृपरत्वेनार्थमाह ॥ **अथवेति** ॥ तदा नोपलक्षणमिति भावः ॥ **एतदिति** ॥ एतद्विद्योपासनाफलत्वेनेत्यर्थः ॥ **अन्यथेति** ॥ एतद्विद्याप्रस्तावे यत्किञ्चित्फलरूपगत्युक्तेरसङ्गतेरिति भावः । हिशब्दसूचितमाह ॥ **देवानिति** ॥ इत्यादेः गीतायामित्यर्थः । "ज्ञात्वा परत्वं विष्णोस्तु पृथग्देवान्यजन्नरः । याति देवांस्तदज्ञात्वा तम एव प्रपद्यत" इति तात्पर्यं ज्ञेयम् । तेन येऽप्यन्यदेवताभक्ता इत्यादि विरोधि नेति ध्येयम् ॥ **अत इति** ॥ अन्यविद्यया अन्यगतेरयुक्तत्वादित्यर्थः । अस्मच्छब्दोदितोऽन्तस्थ आत्मा व्याप्तो जनार्दनः । अग्नयो द्विविधं विष्णुमब्रुवन् उपकोसले इति छान्दोग्यभाष्यदिशा सोऽहमस्मीत्यादि त्वन्तर्याम्यपेक्षयेति भाष्यस्थादिपदेनास्मद्विद्येत्युक्तिरपि ग्राह्येति भावेनोत्तरमाह ॥ **तस्या इति** ॥ उपपत्तेरित्युक्त्या सौत्रोपपत्तेरित्यस्य न केवलं श्रुतिलिङ्गोपपत्तेरित्यर्थः । किन्तु सोऽहमस्मीत्याद्युक्ताहंशब्दार्थवादानाम् अस्मद्विद्येत्युक्तेश्चान्तर्याम्यपेक्षयोपपत्तेरिति वृत्त्यन्तरं भाष्ये चोपपद्यत इति शेष इति सूचितमित्याहुः । ननु वक्तरि स्वरसस्यास्मच्छब्दस्य कुतोऽन्यपरत्वम् इत्यतो निरवकाशोपपत्तेरेव प्राबल्यमिति न्यायविवरणोक्तहेतुमाह ॥ **श्रुतेरपीति** ॥ अस्मदिति श्रुतेरपीत्यर्थः ॥ **निरवकाशेति** ॥ प्रागुक्तदिशाऽनेकेत्यपि ग्राह्यम् ॥ **उपपत्तेरिति** ॥ अमृतत्वाभयत्वरूपलिङ्गस्येत्यर्थः । पुरुषात्मब्रह्मशब्दानामुपलक्षणमेतत् । यद्वा निरवकाशश्रुतिलिङ्गोपपत्तेरित्यर्थः ॥ **सर्वगतात्मेति** ॥ तत्रैव भाष्ये अस्मच्छब्दोदितोऽन्तस्थ आत्मा व्याप्तो जनार्दनः इत्युक्तेरिति भावः । ननु श्रुतौ क आत्मेत्यश्रवणात् ब्रह्मेत्येव श्रवणादस्मद्विद्या ब्रह्मविद्या चेत्येव वाच्यमित्यत आह ॥ **तस्यैवेति** ॥ सर्वगतात्मन एवेत्यर्थः । ब्रह्मात्मशब्दयोः पर्यायत्वादिति भावः । कमानन्दरूपं ब्रह्म परं ब्रह्मेति तद्भाष्योक्तार्थमुपेत्येयमुक्तिः । "ब्रह्मत्वं च विशिष्टते"त्यनुभाष्योक्तदिशा सुखादिस्थपूर्णत्ववाचित्वेन कमित्यादेर्विशेषणत्वे तस्यैव ब्रह्मत्वादित्युक्त्ययोगात् ॥ १६ ॥

## अभिनवचन्द्रिका

शङ्कते (१६-५) **नैवमुपक्रमेऽपीति** ॥ 'कं ब्रह्म खं ब्रह्मे'त्युपक्रमेऽपि अक्षिस्थप्रकरणस्य

(अभिनवचन्द्रिका)

वैष्णवत्वं न सिध्यतीति भावः । **आद्यविद्याया इति** ॥ अस्मद्विद्याऽऽत्मविद्येत्युक्तत्वेऽपि यथासम्भव-मात्मादिविद्यात्वस्य ग्राह्यत्वादिति भावः । ननु अस्मदित्युक्तिबलेन द्वितीयविद्याया अग्निपरत्वसम्भवेऽपि अक्षिस्थविद्याया वैष्णवत्वं किं न स्यादित्यत आह – **अक्षिस्थविद्यायाश्चेति** ॥ **ह्वयाम्यग्निमित्यादाविवेति** ॥ यथा – 'ह्वयाम्यग्निं प्रथमं स्वस्तये' (ऋ.स.१-३-६) इत्यग्ने रुपक्रमेऽपि 'सवितारमूतये,' हिरण्ययेन सविता रथेने'त्यादि सवितृश्रुतिलिङ्गादिना तत्प्रकरणं तथाऽत्रापि ब्रह्मण उपक्रमेऽपि अस्मद्विद्येति अग्निविद्यात्वस्योक्तत्वादग्नीनामेवेदं प्रकरणमित्यर्थः । **अथ यदु चैवेति** ॥ अस्मिन् – ज्ञानिनि मृते, अथ अनन्तरं, यदुचेति निपातसमुदायो यद्यर्थे यद्येव, शव्यं शवसम्बन्धि कर्म दाहादिकं कुर्वन्ति ज्ञातयः, यदुच यदि न कुर्वन्ति तथापि ज्ञानिनः अर्चिषं=अग्निलोकम् । अभिसंविशन्ति = प्रविशन्ति अर्चिषः अहर्लोकं प्रविशन्ति । अह्नः आपूर्यमाणपक्षं शुक्लपक्षाभिमानिलोकं प्रविशन्ति । तस्मात् मासान् षण्मासान् आदित्यः उदगेति उत्तरदिशं गच्छन्ति तान्मासान्प्रविशन्ति उत्तरायणाभिमानि-देवतालोकं प्रविशन्तीति यावत् । मासेभ्यः संवत्सरलोकं, तस्मादादित्यलोकं तस्माच्चन्द्रलोकं, चन्द्रलोकाद्विद्युतं भारतीलोकं प्रविशन्ति । तस्माद्वायुलोकं प्रविशन्तीति ग्राह्यम् । तत्पुरुषः = विद्युत्पतिः, स मानवो वायुः, एनान् = ज्ञानिनः, ब्रह्म गमयतीति श्रुत्यर्थः । **श्रुतपदमिति** ॥ ब्रह्मप्राप्तेः श्रवण-मात्रफलत्वाभावादिति भावः । **अथवेति** ॥ अभिधानादित्यस्य 'एतद्विद्याया विष्णुविषयत्वमेवे'ति पूर्वेण सम्बन्ध इति भावः । **अन्यथेति** ॥ गतिकथनस्य एतद्विद्याफलत्वाभावे अत्र तत्कथनमसङ्गतं स्यादिति भावः । ननु 'सोऽहमस्मी'त्यग्निपराहंशब्दविरोध इत्यत आह – **श्रुतेरपीति** ॥ अग्निपराहं-शब्दादपि निरवकाशब्रह्मप्राप्तिरूपोपपत्तेः प्राबल्यादित्यर्थः । ननु – यदि इयमात्मविद्या कथं तर्हि 'कं ब्रह्म खं ब्रह्मे'ति उपक्रमे ब्रह्मशब्द इत्यत आह – **तस्यैवेति** ॥ 'ब्रह्मशब्देनोपक्रमो नानुपपन्न' इति शेषः ।

## वाक्यार्थमुक्तावली

ॐ श्रुतोपनिषत्कगत्यभिधानाच्च ॐ ॥ नन्वादित्यस्थविद्यायाः सोऽहमस्मीत्यस्मात् श्रुत्याऽग्निविषय-त्वेऽपि कुतोऽक्षिस्थविद्यायाः तद्विषयत्वमित्यत आह ॥ **अक्षिस्थेति** ॥ **ह्वयामीति** ॥ ह्वयाम्यग्निं प्रथमं स्वस्तय इत्यत्राग्नेरुपक्रमेऽपि सवितारमूतये, हिरण्मयेन सविता रथेनेत्यादिसवितृश्रुतिलिङ्गबलात् तत्प्रकरणं सावित्रम् । ह्वयाम्येकादश सावित्रमित्यनुक्रमणिकोक्तेः । तथाऽत्राप्यस्मद्विद्येत्यग्निश्रुत्येदमग्नि-प्रकरणमित्यर्थः । अस्य सूत्रस्य प्रकरणस्याग्नेयत्वशङ्कानिवर्तकत्वात् साक्षात् परमसाध्यविष्णोरक्षिस्थत्वे

(वाक्यार्थमुक्तावली)

युक्त्यन्तरपरत्वाभावात् साध्यमध्याहरति । **नैतद्विद्याया इति** ॥ एतत्प्रकरणस्येत्यर्थः । श्रवणमात्रस्य ब्रह्मप्राप्तिहेतुत्वाभावेन श्रुतौ य एवं वेदेत्यपरोक्षस्याप्युक्तेः । सूत्रे तु श्रुत पदमपरोक्षान्तसाधनोपलक्षण-मित्याह ॥ **श्रुतपदमिति** ॥ **कं ब्रह्मेति प्रकृतत्वादिति** ॥ सुखस्य पूर्णत्वाभिधानेन लक्षणमुखेन प्रकृतत्वादित्यर्थः ॥ **केन वायुनेति** ॥ प्राणो ब्रह्मेति तस्य श्रुत्या प्रकृतत्वादित्यर्थः ॥ श्रुतोप-निषत्कत्वमधिकारिविशेषणमिति व्याख्यायोपकोसलविशेषणत्वेन व्याख्याति ॥ **अथवेति** ॥ **असङ्गतेरिति** ॥ फलकथनरूपत्वाभावे ब्रह्मप्राप्तिकथनस्य प्रकारान्तरेण प्रकृतोपयोगाभावादित्यर्थः ॥ **देवयज इति** ॥ भगवत्परिवारतया देवपूजका इत्यर्थः ॥ **श्रुतेरिति** ॥ अस्मच्छब्दरूपाया अग्निश्रुतेरित्यर्थः ॥ **तस्याः सर्वगतात्मेति** ॥

अस्मच्छब्दोदितोऽन्तःस्थ आत्मा व्याप्तो जनार्दनः ।
अग्नयो द्विविधं विष्णुमवोचन्नुपकोसले ॥

इति वचनादिति भावः । ननु श्रुतौ कमात्मेत्यश्रवणात् अस्मद्विद्या ब्रह्मविद्येत्येव वाच्यमित्यत आह ॥ **तस्यैवेति** ॥ ब्रह्मात्मशब्दयोः पूर्त्यभिधायकत्वेनोपयोगित्वादिति भावः । ततश्चायं सूत्रार्थः । न केवलमुपक्रमबलात् प्रकरणस्य वैष्णवतया प्राकरणिकश्चक्षुरन्तःस्थो विष्णुः । किन्तु श्रुतोपनिषदा-मधिकारिणां श्रुतोपनिषदमुपकोसलं प्रति तद्विद्याफलत्वेन केन वायुना कस्य विष्णोः गत्यभिधानलिङ्गाच्च प्रकरणस्य वैष्णवतया अन्तरो विष्णुरेवेति । चशब्दः प्रकरणस्य वैष्णवत्वे उपक्रमातिरिक्तलिङ्गसमुच्चायक इति बोध्यम् ।

## तत्त्वसुबोधिनी

**आत्मविद्येति** । प्राणो ब्रह्म कं ब्रह्मेति प्रागुक्तविद्येत्यर्थः । नन्वग्निभिः आत्मविद्यात्वेनोक्तविद्यायाः आदित्यस्थविद्यात्वात् अक्षिस्थविद्यायाः कथम् अग्निविषयत्वमत आह । **अक्षिस्थविद्यायाश्चेति** । ननूपक्रमे ब्रह्मण उपक्रान्तत्वात् कथमस्मद्विद्यायाः अग्निविषयत्वम् । अन्यथा उपक्रमविरोधः स्यादित्या-शङ्क्य निषेधति । **न चोपक्रमेति** । **ह्वयाम्यग्निमित्यादाविति** । यथा ह्वयाम्यग्निं प्रथमं स्वस्तये इत्यत्र अग्नेरुपक्रमेऽपि सवितारमूतये हिरण्मयेन सविता रथेन इत्यादिसवितृलिङ्गादिना तत्प्रकरणं सावित्रम् । तथा अत्रापि ब्रह्मण उपक्रमेऽपि अस्मद्विद्येत्यग्निभिरुक्तत्वादग्नीनामेवेदं प्रकरणमित्यर्थः । अथ यदु चैवेत्यस्यायमर्थः । अथेदानीं यदु च यद्यपि अस्मिन् ज्ञानिनि मृते शव्यं शवसम्बधि

(तत्त्वसुबोधिनी)

दहनादिकर्म कुर्वन्ति यद्यपि न कुर्वन्ति तथापि ते ज्ञानिनः अर्चिषमेवाभिसंविशन्ति । अर्चिरभिमानिनीं देवतां प्रतिपद्यन्त इत्यर्थः । आर्चिषोऽर्चिर्देवतायाः अहरहःर्दैवताम् अन्ह आपूर्यमाणपक्षं शुक्लपक्षं ततः आपूर्यमाणपक्षाद्यान् षण्मासान् उदङ् उत्तरां दिशमेति सविता षण्मासानुत्तरायणदेवतां तेभ्यो मासेभ्यो संवत्सरं संवत्सरदेवतां ततः संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं ततस्तस्याः पुरुषः मानवो वायुः ब्रह्म परिपूर्णं गमयति प्रापयतीति । **श्रुतैतद्विद्यानामिति** । अनेन श्रुतोपनिषदा-मधिकारिणां कस्य ब्रह्मणो गतिरिति सूत्रे विग्रहः प्रदर्शितो भवति । कं ब्रह्मेति । कशब्दस्य वायुवाचकत्वं कुत इत्यत आह । **को वायुरिति** । **अन्यथाऽसङ्गतेश्चेति** । फलकथनरूपत्वाभावे ब्रह्मप्राप्तिकथनस्य प्रकारान्तरेण प्रकृतोपयोगाभावादिति भावः । ननु श्रुतेः प्रबलत्वेन कथमुपपत्त्यनुसारेण तस्यान्तर्यामिविषयत्वम् अंत आह । **श्रुतेरपीति** । अस्मच्छब्दरूपाया इत्यर्थः । स्वभावप्रयुक्त-प्राबल्यापेक्षया निरवकाशत्वप्रयुक्तप्राबल्यस्य बलवत्वादिति भावः । **तस्या इति** । पृथगुक्तेरित्यर्थः । सर्वगतो य आत्मा तद्विद्यात्वाभिधायकत्वादित्यर्थः । ननु कं ब्रह्मेत्युक्ताद्यविद्यायाः ब्रह्मशब्देनोपेतत्वेन ब्रह्मविद्यात्वात् कथमस्मद्विद्येत्युक्तसर्वगतविद्यात्वमित्यत आह । **तस्यैवेति** । सर्वगतस्यैवेत्यर्थः ।

## वाक्यार्थमञ्जरी

शङ्कते । **नैवमिति** ॥ **उपकोसलेति** ॥ हे सौम्योपकोसल ते तुभ्यम् एषाऽस्मद्विद्याऽन्तर्यामिविद्या आत्मविद्या सर्वगतात्मविद्या चोपदिष्टेत्यर्थः । नन्वग्निभिरात्मविद्यात्वेनोक्तविद्याया आदित्यस्थविद्यात्वा-दक्षिस्थविद्यायाः कथमग्निविषयत्वमित्यत आह ॥ **अक्षिस्थविद्यायाश्चेति** ॥ उक्तरीत्याऽक्ष्यादित्ययोरेक-विधत्वादिति भावः ॥ ह्वयाम्यग्निमित्यादाविवेति ॥ यथा ह्वयाम्यग्निं प्रथमं स्वस्तय इत्यत्राग्नेरुपक्रमेऽपि सवितारमूतये हिरण्मयेन सविता रथेनेत्यादिसवितृपरश्रुतिलिङ्गादिना तत्प्रकरणं सूर्यपरमत एवोक्तमनु-क्रमिकायाम् । ह्वयाम्येकादश सावित्रमिति । तथाऽत्रापि ब्रह्मण उपक्रमेऽप्यस्मद्विद्येत्यग्नेरुक्तत्वादग्नि-प्रकरणमेवेति भावः ॥ **तथा सतीति** ॥ अन्तर्यामिण एवात्मत्वादिति भावः ॥ ॐ श्रुतोपनिषत्कगत्यभि-धानाच्च ॐ ॥ श्रुतोपनिषदाम् अधीतैतद्विद्यानां पुंसां केन वायुना कस्य ब्रह्मणो गतेः प्राप्तेः स एनान् ब्रह्म गमयतीत्यभिधानाच्च चक्षुरन्तरो विष्णुरेवेत्यर्थः ॥ **अथेति** ॥ अथेत्यर्थान्तरे । यदु च यद्यप्यस्मिन् ज्ञानिनि मृते शव्यं शवसम्बन्धि कर्म कुर्वन्त्येव तदीयाः यदु च नैव कुर्वन्ति तथापि ते ज्ञानिनः सर्वथा स्वज्ञानप्रसन्नभगवत्सामर्थ्याद्धृदयाग्रप्रज्वलनप्रकाशितद्वारेण ब्रह्मनाड्या देहादुत्क्रान्ता अर्चिषमर्चिर्नामकमूर्ध्वलोकं संविशन्त्येव प्राप्नुवन्त्येव तत्र कञ्चन कालं स्थित्वा ततोऽर्चिष अर्चिलोका-

(वाक्यार्थमञ्जरी)

दतिवाहिकाख्यवायुलोकद्वारा अहरहरभिमानिदेवतालोकं प्राप्नुवन्ति । अह्नः अहर्लोकादापूर्यमाणपक्षं शुक्लपक्षाभिमानिदेवतालोकम् आपूर्यमाणपक्षादुद्गच्छन् यान् षण्मासानुदङेत्यादित्यस्तान्मासा-नुत्तरायणाभिमानिदेवतालोकं मासेभ्यस्तेभ्यः संवत्सरं संवत्सराभिमानिदेवतालोकं संवत्सरात्तद्द्वारेण प्रजापतिप्राप्तिद्वाराऽऽदित्यमादित्याच्चन्द्रमसं चन्द्रमसो वैश्वानरेन्द्रध्रुवद्वारा विद्युतं विद्युत्राम्नीं भारतीं प्राप्नुवन्ति ततस्तस्याः पुरुषो भर्ता मानवो मननान्मनुर्भगवांस्तस्यायं प्रियभृत्यो मानवो मुख्यवायुस्तं गच्छन्ति । स वायुरेनान् स्वप्राप्तान् प्रतीकालम्बनान्कार्यं ब्रह्म अप्रतीकालम्बनान् परं ब्रह्म गमयतीत्यर्थः ॥ **मनननिदिध्यासनोपलक्षणमिति** ॥ श्रवणमात्रस्य ब्रह्मप्राप्तिहेतुत्वासम्भवादिति भावः । वायुः क इति शब्दित इति सम्बन्धः ॥ **अथवेति** ॥ तथा च नोपलक्षणमिति भावः ॥ **सामीप्यादिति** ॥ श्रुतौ तद्विद्याफलाभिधायकैतद्वाक्यानन्तरमेव यदु चैवेत्यादिश्रवणादिति भावः । **अन्यथा** कगतिकथन-स्यैतद्विद्याफलकथनरूपत्वाभावे । यजः याजकाः कृष्णवाक्यमिदम् । 'अस्मच्छब्दोदितोऽन्तःस्थ आत्मा व्याप्तो जनार्दनः । अग्नयो द्विविधं विष्णुमवोचन्नुपकोसले' इति प्रमाणानुसारेणाह ॥ **तस्यान्तर्या-मीत्यादि** ॥ श्रुतेरस्मादित्यस्याः सकाशात् उपपत्तेः एतद्विद्याफलत्वेन कगत्यभिधानरूपायाः । ननु कं ब्रह्म खं ब्रह्मेत्युक्तविद्यायाः ब्रह्मशब्दोपेतत्वेन ब्रह्मविद्यात्वात्कथमात्मविद्येत्युक्तसर्वगतविद्यात्वमित्यत आह ॥ **तस्यैवेति** ॥ सर्वगतस्यैवेत्यर्थः ॥

## विवृतिः

**आत्मविद्या चेति** ॥ प्राणो ब्रह्म कं ब्रह्मेति प्रागुक्तविद्येत्यर्थः । नन्वग्निभिरात्मविद्यात्वेनोक्तविद्याया आदित्यस्थविद्यात्वादक्षिस्थविद्यायाः कथमग्निविषयत्वमत आह ॥ **अक्षिस्थविद्यायाश्चेति** ॥ ननूपक्रमे ब्रह्मण उपक्रान्तत्वात्कथमस्मद्विद्याया अग्निविषयत्वमन्यथोपक्रमविरोधः स्यादित्याशङ्क्य निषेधति ॥ **नचोपक्रमेति** ॥ **ह्वयाम्यग्निमित्यादाविवेति** ॥ यथा ह्वयाम्यग्निं प्रथमं स्वस्तय इत्यग्नेरुपक्रमेऽपि सवितारमूतये, हिरण्ययेन सविता रथेनेत्यादिसवितृश्रुतिलिङ्गादिना तत्प्रकरणं सावित्रं, तथाऽत्रापि ब्रह्मण उपक्रमेऽपि अस्मद्विद्येत्यग्नेरुक्तत्वादग्नीनामेवेदं प्रकरणमित्यर्थः । अथ यदुचैवेत्यस्यायमर्थः – अथेदानीं यदु च यद्यपि, अस्मिन् ज्ञानिनि मृते शव्यं, शवदाहादिकर्म कुर्वन्ति । यद्यपि न कुर्वन्ति तथापि ते ज्ञानिनः अर्चिषमेवाभिसम्भवन्ति । अर्चिरभिमानिनीं देवतां प्रतिपद्यन्त इत्यर्थः ॥ अर्चिषोऽर्चिर्देवताया अहरभिमानिदेवतां, अह्न आपूर्यमाणपक्षं शुक्लपक्षं तत आपूर्यमाणापक्षाद्यान् षण्मासान् उदङ् उत्तरां दिशमेति सविता षण्मासान् उत्तरायणदेवतां तेभ्यो मासेभ्यः संवत्सरं संवत्सरदेवतां

(विवृतिः)

ततः संवत्सरादादित्यं आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्रस्यान् पुरुषः मानवो वायुः ब्रह्म परिपूर्णं गमयति प्रापयति, इति श्रुतै तद्विद्यानामित्यनेन श्रुतोपनिषदां अधिकारिणां कस्य ब्रह्मणो गतिरिति सूत्रे विग्रहः प्रदर्शितो भवति । **श्रुतपदमिति** ॥ श्रवणमात्रेण ब्रह्मप्राप्त्यसम्भवादिति भावः । कशब्देन ब्रह्मग्रहणं कुत इत्यत आह ॥ **कं ब्रह्मेतीति** ॥ कशब्दस्य वायुवाचकत्वं कुत इत्यत आह ॥ **को वायुरिति** ॥

**अन्यथाऽसङ्गतेश्चेति** ॥ फलकथनरूपत्वाभावे ब्रह्मप्राप्तिकथनस्य प्रकारान्तरेण प्रकृतोपयोगाभावादिति भावः । ननु श्रुतेः प्रबलत्वेन कथमुपपत्त्यनुसारेण तस्य अन्तर्यामिविषयत्वमत आह ॥ **श्रुतेरपीति** ॥ अस्मच्छब्दरूपाया इत्यर्थः । स्वभावप्रयुक्तप्राबल्यापेक्षया निरवकाशत्वप्रयुक्तप्राबल्यस्य बलवत्त्वादिति भावः । **तस्या इति** ॥ पृथगुक्तेरित्यर्थः । सर्वगतो य आत्मा तद्विद्यात्वाभिधायकत्वादित्यर्थः । ननु कं ब्रह्मेत्युक्ताद्यविद्याया ब्रह्मशब्दोपेतत्वेन ब्रह्मविद्यात्वात्कथमात्मविद्येत्युक्तायाः सर्वगतविद्यात्वमित्यत आह ॥ **तस्यैवेति** ॥ सर्वगतस्यैवेत्यर्थः ॥

## सूत्रभाष्यम्

**॥ ॐ अनवस्थितेरसम्भवाच्च नेतरः ॐ ॥ १७ ॥**

जीवस्य जीवान्तरनियामकत्वेऽनवस्थितेः, साम्यादसम्भवाच्च न जीवः । नियमे प्रमाणाभावात् । अनीश्वरापेक्षत्वाच्च ॥ १७ ॥

## सत्तर्कदीपावली

युक्त्यन्तरबलादप्यादित्येऽक्षिणि च नियामकत्वेन स्थितो यः चक्षुपि तिष्ठन्नित्यादिश्रुत्यन्तरे सिद्धो नाग्निरित्येतत्प्रतिपादयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **अनवस्थितेरित्यादिना** ॥ अस्यार्थः । यथा जनपद-नियोजितस्य तत्प्रजानां च नियम्यनियामकभावः क्षितिपत्यधीनः । एवमग्न्यादित्यादीनां जीवानां परस्पर-नियामकभावश्चेदसौ सर्वेशाऽऽज्ञाधीन एव भवेत् । अन्यथैकस्य जीवस्यान्येन जीवेन नियम्यत्वे तस्याप्यन्येन जीवेन नियम्यत्वं तस्याप्यन्येनेत्यनवस्था स्यात् । जीवत्वाविशेषान्नियम्यनियामकभावासम्भवश्च स्यात् तेषाम् । न चेश्वराज्ञानिरपेक्षत्वेन कस्यचित् जीवस्य नियम्यत्वं कस्यचित् नियामकत्वमित्यत्र प्रमाणमस्ति । अत उक्तहेतुभ्यां मुख्यनियामकस्य पुरुषोत्तमान्यस्यासम्भवात् । असावेव दिव्यदृष्टिगोचरोऽक्ष्यन्तरपुरुष इति सिद्धम् ॥ (१।२।४)

## तत्त्वप्रदीपिका

ॐ अनवस्थितेरसम्भवाच्च नेतरः ॐ ॥ जीवत्वसाम्यादनवस्थितिः ॥ परतन्त्रत्वसाम्यादसम्भवः । नियमप्रमाणाभावोऽनीश्वरापेक्षत्वं चोभावुभयत्रापि हेतू ॥

## तत्त्वप्रकाशिका

एवमुपपत्त्यादियुक्तिभिर्विष्णोरक्षिस्थत्वं प्रतिपाद्य विपक्षे बाधकेनापि समर्थयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **अनवस्थितेरिति ॥** नायं चक्षुरन्तःस्थोऽग्निर्भवेत् । अस्य तत्तत्प्रेरकत्वेन तत्तच्चक्षुस्थितेरभिप्रेतत्वात् । न चाग्नेरन्यप्रेरकत्वं युक्तम् । जीवत्वात् । जीवस्य तस्य जीवान्तरनियामकत्वे तस्यापि जीवान्तरं नियामकमित्यनवस्थानात् । पूर्वपूर्वचेष्टासिद्धावुत्तरोत्तरचेष्टासिद्धिरिति मूलक्षतेः । अभ्युपगम्य चेदमुदितम् । अग्नेरपि प्रेर्येण सह जीवत्वसाम्यात्प्रेरणासम्भवाच्चेत्यर्थः । जीवप्रेरकाग्नेः स्वातन्त्र्याभ्युपगमान्नानवस्थेत्यत आह ॥ **नियमेति ॥** अग्नेः स्वतन्त्रत्वे जीवान्तरस्यापि तत् स्यात् । अन्यथाऽग्नेरपि तन्न स्यात् । जीवत्वसाम्येऽप्यग्नेरेव स्वातन्त्र्यं नान्येषामिति नियमे प्रमाणाभावात् । अतोऽग्नेः स्वातन्त्र्यायोगात्सुस्थै-वानवस्थेति भावः । अस्तु अग्नेः अस्वातन्त्र्यं तथापि तत्प्रेरकस्येश्वरस्य स्वातन्त्र्यसम्भवान्नानवस्थेत्यत आह ॥ **अनीश्वरेति ॥** त्वयेश्वरानभ्युपगमान्नैवमनवस्थापरिहार इत्यर्थः । ईश्वराभ्युपगमे स एव अक्षिस्थतया युक्त्यादिप्राप्तः किमपोद्यते । ननु जीवत्वसाम्येऽपि नीचोच्चभाववन्नियम्यनियामकभावसम्भवः किं न स्यादित्यतो वाऽऽह ॥ **नियमेति ॥** नियामकविशेषे प्रमाणाभावात् न दृष्टान्तमात्रेण नियम्य-नियामकभावसम्भव इति भावः । ननु भवताप्यग्न्यादिजीवानां जीवान्तरनियामकत्वाभ्युपगमात् कथं तदसम्भव इत्यतो वाऽऽह ॥ **अनीश्वरेति ॥** यथा सति राज्ञि मण्डलेशो प्रजानां तच्छक्त्या नियम्यनियामकभावः सम्भवति न त्वराजके लोके तथाऽस्मत्पक्षे जीवानामीश्वरशक्त्या जीवान्तर-नियामकत्वमुपपद्यते न परपक्षे । परमेश्वरानङ्गीकारादिति भावः । तस्माद्विष्णुरेव अक्ष्यादित्यस्थो दिव्यदृष्टिगोचरोऽतः स एवानन्दमयस्तज्ज्ञानादेव मोक्ष इति सिद्धम् ॥ १७ ॥ अ० ४ ॥

## गुर्वर्थदीपिका

तस्यापीत्यत्र तस्य नीयामकतयोक्तस्यास्याग्नेरपीत्यर्थः । पूर्वपूर्वचेष्टासिद्धावित्यत्र अग्निमारभ्य अग्नेः पूर्वं पूर्वं काप्यवस्थितिरहिता या नियामकपरम्परोक्ता । तत्र पूर्वपूर्वनियामकासिद्धावुत्तरोत्तरचेष्टाऽसिद्धिरित्य-नवस्थामूलीभूताग्नेरपि चेष्टाऽसिद्धिः । अतोऽस्यापि नियामकत्वानुपपत्तेरिति मूलक्षतिरिति भावः । यद्यपि वाय्वादीनां स्वावरजीवनियामकत्वे ''वायुना वै गौतमसूत्रेणे''त्याद्या श्रुतिरेव प्रमाणमस्ति । तथाऽपि ''न

(गुर्वर्थदीपिका)

ऋते त्वत्क्रियते किञ्चनारे'' इत्यादिश्रुत्या तेषामपि प्रेरकहरिणा सह स्थितौ सत्यामेव तदधीनकर्तृत्व-स्यैवोक्तत्वादक्ष्यादावपि स्वातन्त्र्येण हरेरेव स्थितिमङ्गीकुरु । गणपते इन्द्रियगणपते गणेष्विन्द्रियगणेषु निषुसीदेति हि तस्या एव श्रुतेः पूर्वार्धे श्रवणात् । ईश्वरविषयिणी श्रुतिर्न मान्या चेत्सुतरां जीवविषयिणीति भावेनोक्तं नियामकविशेषप्रमाणाभावादिति । अस्यां श्रुतौ नियम्यतेऽनेनेति व्युत्पत्त्या नियमपदं नियामकपरमिति ज्ञेयम् । दृश्यत इति श्रुत्यंशोपपादनायोपसंहारेऽपि दिव्यदृष्टिगोचर इत्युक्तम् ॥

## भावबोधः

**तत्तत्प्रेरकत्वेनेति** । श्रुतौ वामनिभामनिशब्दाभ्यां स्त्रीपुरुषसर्वप्रेरकतया उक्तत्वात् । उक्तं हि तत्त्वप्रदीपे– वामं सौन्दर्यं, भामं तेजः । तत्प्रधानत्वात् स्त्रीपुरुषा वामभामशब्दशब्दिताः । तन्नेता वामनिर्भामनिश्चेति । 'यश्चक्षुरन्तरो यमयति' इति श्रुत्यन्तरसमाख्यानाच्चेति । अनेन''अन्तर्याम्यन्तरश्चेति क्रियाभावाख्यमुच्यत'' इत्यनुव्याख्यानोक्तक्रियाभावात्मकत्वमप्यस्य लिङ्गस्य समर्थितं भवति । **दिव्यदृष्टिगोचर इति** । ततश्च श्रुतौ 'य एषोऽन्तरक्षिणि पुरुषो दृश्यते' इति दृश्यत्वोक्तिर्युक्तेति भावः ॥

अत्राऽऽद्यसूत्रे विषयवाक्यस्थश्रुतिलिङ्गरूपसाधकोक्तिः । द्वितीयेतदुत्तरवाक्यगतलिङ्गोक्तिः । तृतीयेप्रकरणरूपस्वपक्षसाधकस्य वैष्णवत्वसिद्ध्यर्थं तदुपक्रमवाक्यगतलिङ्गोक्तिः । चतुर्थेविष्णूपक्रमसत्त्वेऽपि न प्रकरणस्य वैष्णवत्वम्; अक्षिस्थविद्याया अग्निभिरस्मद्विद्येत्युक्तत्वेन अग्निविद्यात्वावगमादित्या-शङ्कापरिहारायाक्षिस्थविद्याया अग्निविषयत्वाभावे विष्णुविषयत्वे च हेतूक्तिः । पञ्चमेपरपक्षे बाधकोक्तिरिति सूत्रक्रमः ॥ ४ ॥

## भावदीपः

ॐ अनवस्थितेरसम्भवाच्च नेतरः ॐ ॥ उपपत्त्यादीत्यादिपदेन स्थानादिशक्तिसुखविशिष्टाभि-धानादिग्रहः । न जीव इत्यास्यार्थो नायमिति । अन्तर इत्यनुवर्तत इति भावः । भाष्योक्तापादकस्या-सिद्धिनिरासाय परिष्करोति ॥ **अस्य तत्तत्प्रेरकत्वेनेति** ॥ वामनिभामनिशब्दाभ्यां सर्वस्त्रीपुंसनेतृत्वस्याक्षिस्थे श्रुतौ प्रतीतेरिति भावः । भाष्ये नाग्निरिति वाच्ये जीवपदोक्त्या सूचितां युक्तिमाह ॥ **जीवत्वादिति** ॥ जीवस्येत्यादेरर्थो जीवस्येति । असम्भवादित्यस्य पूर्वोक्तेन व्याघातनिरासायाह ॥ **अभ्युपगम्येति** ॥ प्रेरकत्वमित्यर्थः । इदम् अनवस्थानम् । अनवस्थानिरासायाग्नेः स्वातन्त्र्यशङ्कनादग्नेरेवेति नियमदूषण-मसङ्गतमित्यतो व्याचष्टे ॥ **अग्नेरिति** ॥ त्वया पूर्वपक्षिणा ॥ **नैवमिति** ॥ तेन प्राणाभावादित्यनेन

(भावदीपः)

समुच्चयार्थश्चशब्द इति भावः ॥ **नीचोच्चेति** ॥ वृद्धिह्रासभाक्त्वमन्तर्भावात् यावदधिकारमवस्थिति-राधिकारिकाणाम् इयदामननात् नाविशेषादित्यादिसूत्रैरानन्दस्य मीमांसा भवति । वाग्वाव नाम्नो भूयसीत्यादिभिश्चाङ्गीकृततरतमभाववदित्यर्थः । नियमशब्दार्थो नियामकेति । यद्यपि इन्द्रो वै देवानामोजिष्ठो रुद्रो वाव लोकाधारः वायुना वै गोतम सूत्रेणायं च लोक इत्यादिश्रुतिः, ''रुद्रं समाश्रिता देवा'' ''रुद्रो ब्रह्माणमाश्रित'' इत्यादिस्मृतिश्चास्ति । तथापि ''न ऋते त्वत्क्रियते किञ्चनार'' इत्यादौ तेषामपि स्वतन्त्रेश्वराधीनतावगतेरिति भावः ॥ **भवताऽपीति** ॥ ''कत्येव देवाः प्रजा विधारयन्त'' इत्यादिप्रमाणैः स्वामिनः फलश्रुतेरित्यादिसूत्रैश्च सिद्धान्तिना तथोपगमादिति भावः । प्रतीतानुपपत्तिनिरासेन फलोक्त्याऽधिकरणार्थमुपसंहरति ॥ **तस्मादिति** ॥ उपपत्तिस्थानादिशक्ति-पूर्णसुखाद्यभिधानश्रुतोपनिषद्ब्रह्मगत्यभिधानरूपसाधकानवस्थारूपविपक्षबाधकहेतूनां तद्भावादित्यर्थः । अन्तरस्तत्त्वित्यस्यार्थो विष्णुरेवेत्यादि ॥ **आदित्येति** ॥ अत्र पूर्वत्र च विद्यमानादित्यस्थ इत्यार्थिकोऽर्थः । आदित्यादिस्थ इत्यादिपदेनाग्निग्रहः । नन्वेवं कथं तर्हि अक्षणि पुरुषो दृश्यत इत्युक्तिः । तदव्यक्तमाह हीति तस्याव्यक्तैकस्वभावत्वादित्यत आह ॥ **दिव्येति** ॥ दृश्यते ज्ञानदृष्ट्या यः सूर्ये चक्षुषि चैकराडिति प्रथमाध्यायछान्दोग्यभाष्योक्तेरिति भावः । अतो विष्णोरेवाऽऽदित्यस्थत्वादित्यर्थः ॥ **मोक्ष इति** ॥ तद्यथा पुष्करपलाश इत्यादिनोक्त इत्यर्थः । यत्त्वत्र केनचित्सूत्राणां भाष्यटीकार्थेऽस्वरसादिदूषणमुद्भावितं तत्तु भाष्यटीकारीत्या सूत्रार्थाभिमर्शिनां न चमत्कारावहमिति नात्र तदुद्धारः प्रपञ्चितोऽस्माभिः

॥ १७ ॥ अ० ४ ॥

## अभिनवचन्द्रिका

(सू.१७) **एवमुपपत्त्यादियुक्तिभिरिति** ॥ 'उपपत्ते'रित्युपपत्तिशब्दोक्तामृतत्वादिलिङ्गानां तस्मिन्नेवोपपन्नत्वादियुक्तिभिरित्यर्थः । **अभ्युपगम्य चेदमुक्तमिति** ॥ अग्नेः जीवप्रेरकत्वसम्भावितत्व-मभ्युपगम्य चक्षुरन्तस्थत्वनिराकरणाय अनवस्थितेरिति दूषणमुक्तम् । वस्तुतस्तु – अग्नेः प्रेरकत्वस्याऽ-सम्भावितत्वादेव चक्षुरन्तस्थत्वनिरासो भवतीति भावः । एतेन – अभ्युपगम्य चेदमुक्तमित्ययुक्तम्, अभ्युपगमविषयाऽदर्शनात् । न च – जीवप्रेरकत्वमभ्युपगम्य अनवस्थोक्तिरिति युक्तम् । अभ्युपगम्य तन्निराकरणायोगेन अनवस्थित्यभिधानायोगप्रसङ्गादिति निरस्तम् । सम्भावितत्वमभ्युपगम्य दूषण-मुक्तमित्यङ्गीकारात् । **दिव्यदृष्टिगोचर इति** ॥ परमेश्वरस्य दिव्यदृष्टिगोचरत्वात् 'य एषोऽन्तरक्षिणि पुरुषो दृश्यत' इति दृश्यत्वोक्तिर्न बाधिकेति भावः ।

(अभिनवचन्द्रिका)

**पूर्वपक्षस्तु**– य एषोऽन्तरक्षिणी'ति वाक्योक्तोऽग्निरेवाक्षिस्थो भवेत् । 'य एष आदित्ये पुरुषः सोऽहमस्मि स एवाहमस्मी'त्यग्नेरेवादित्यस्थत्वाभिधानात् । न च वाच्यमग्नेरादित्यस्थत्वेऽपि कुतोऽक्षिस्थत्वमिति । आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशदिति श्रुतेः, अक्ष्यादित्ययोरेकत्वादादित्यस्थितत्वेनाऽग्नेरक्षिस्थत्वसिद्धेः । ननु 'सोऽहमस्मी'त्युपदेष्टा अग्निः कुतः । येनाग्नेरादित्यस्थत्वं प्रतीयेत इति चेत्, न – अस्मिन् उपदेशके 'अथाग्नयः समूदिरे, गार्हपत्योऽनुशशास' (छा.४-१०,११) इत्यादिबह्वग्निश्रुतिसद्भावात् । न च – 'यश्चासावादित्य' इति समाख्याबलात् विष्णुरेवादित्यस्थो न त्वग्निरिति वाच्यम् । सोऽहमस्मीत्यभ्यासात् । अभ्यासस्य च समाख्यातो बलवत्वात् । न च विष्णुग्रहणेऽपूर्वतयाऽभ्यासस्यापि बाधः । स च 'य एवंविद्वानुपास्ते अपहते पापकृत्यां लोकीभवति सर्वमायुरेती'त्यर्थवादात् । अर्थवादस्याऽपूर्वतायाः प्राबल्यात् । अत आदित्यस्थोऽग्निः ततः अक्षिस्थः आनन्दमयोऽपि स एवेति तज्ज्ञानादेव मोक्ष इति ॥

**सिद्धान्तस्तु**– विष्णुरेव चक्षुरन्तरः 'एतदमृतमभय'(छा. ४-१५)मिति अमृतत्वाभयत्वादिलिङ्गात् । किं च – 'सर्पिर्वा उदकं वा सिञ्चति वर्त्मनी एव गच्छति स वामनिः स भामनि'(छा.४-१५)रिति स्थानशक्तिः स्वरूपशक्तिश्चोच्यते । तयोश्चान्यत्रासम्भवात् । किं चोपक्रमे 'कं ब्रह्म खं ब्रह्मे'(छा.४-१०)ति श्रवणेन प्रकरणस्य वैष्णवत्वात् प्रकरणबलेन विष्णुरेव चक्षुरन्तस्थो युक्तः । किं च 'श्रुतोपनिषदः का गतिरुच्यते तेनास्य प्रकरणस्य वैष्णवत्वं ज्ञायते । अन्यविद्यया अन्यप्राप्त्ययोगात् । ननु सोऽहमस्मीत्याद्युपदेशानां अन्तर्यामिविषयत्वकल्पनया किं विष्णोरक्षिस्थत्वाऽऽग्रहेण उपदेशबलेन अग्नेरपि जीवत्वेन नियामकत्वासम्भेवन चक्षुर्गतत्वसम्भावनाविरहात् । अस्तु वा कथञ्चित् सम्भावना तथापि नासौ चक्षुरन्तरोऽभ्युपगन्तव्यः । अनवस्थितेः । अग्नेरपि जीवत्वेन तत्प्रेरणाय जीवान्तरस्य भाव्यत्वात्, तस्याप्येवं तस्याप्येवमित्यनवस्थितेः । तस्माद्विष्णुरेवाक्ष्यादित्यस्थो दिव्यदृष्टिगोचरः । अतः स एवानन्दमयः । तज्ज्ञानादेव मोक्ष इति सिद्धम् । (अ. ४)

## वाक्यार्थमुक्तावली

ॐ अनवस्थितेरसम्भवाच्च नेतरः ॐ ॥ **उपपत्यादियुक्तिभिरिति** ॥ उपपत्तिश्रुतिप्रकरणैरित्यर्थः ॥ **तत्प्रेरकत्वेनेति** ॥ श्रुतौ वामनिभामनिशब्दाभ्यां स्त्रीपुरुषसर्वप्रेरकताया उक्तत्वात् । उक्तं हि तत्त्वप्रदीपे वामं सौन्दर्यं भामं तेजः तत्प्रधानत्वात् स्त्रीपुरुषा वामभामशब्दिताः । तन्नेता वामनिर्भामनिश्चेति ।

(वाक्यार्थमुक्तावली)

यश्चक्षुरन्तरो यमयतीति समाख्यानाच्चेति भावः । अनेन अन्तर्याम्यन्तरश्चेति क्रियाभावाख्यमुच्यते इत्यनुव्याख्यानोक्तक्रियाभावाख्यत्वमपि अस्य लिङ्गस्य समर्थितं भवति । भाष्ये नाग्निरिति वाच्ये जीव इत्युक्त्या सूचितां युक्तिमाह ॥ **जीवत्वादिति** ॥ **पूर्वपूर्वस्येति** ॥ पूर्वपूर्वस्य प्रेरकान्तरस्यासिद्धौ उत्तरोत्तरस्य प्रेरकस्यासिद्धेः प्रेरकपरम्परामूलभूतस्याक्षिप्रेरकस्यैवाप्रामाणिकत्वात् मूलक्षतिरिति भावः । इदम् अग्नेः प्रेरकत्वमभ्युपगम्येदमनवस्थानमुक्तम् । व्याप्याङ्गीकारे व्यापकानिष्टप्रसङ्गस्यैव तर्कत्वात् व्याप्यं परोक्तमङ्गीकृत्यानवस्थानमुक्तमित्यर्थः । तदुक्तम् । परसिद्धेर्दूषणमतो न दूषणेऽपसिद्धान्तादीति । वस्तुतस्तु अग्निप्रेरकत्वस्य प्रेर्येण जीवत्वसाम्येन स्वन्यायविरुद्धत्वात् अङ्गीकारार्हमेव न भवति व्याघातावधिकत्वादाशङ्काया इति भावेनाह ॥ **अग्नेरपीति** ॥ यद्यप्यनवस्थाप्रसञ्जनस्य विपर्यये पर्यवसान-गर्भत्वात् व्याप्याभ्युपगम एव नास्ति । तथाप्यनिष्टप्रसञ्जनायापाततोऽङ्गीकरणमपि स्वन्यायव्याहतिर्न सहत इति भावः । अनवस्थितेः अग्नेरेव स्वातन्त्र्यं नान्येषामिति अवस्थापकप्रमाणाभावाच्च तन्मते ईश्वरानपेक्षणेनेशस्वातन्त्र्यासम्भवाच्चानवस्थितेरपरिहारात् नेतर इति सूत्रस्य वृत्यन्तरपरतया नियमे प्रमाणा-भावाच्चेति भाष्यमवतार्य **व्याचष्टे जीवप्रेरकाग्नेरित्यादिना । दिव्यदृष्टीति** ॥ तथा च य एषोन्तरक्षिणि पुरुषो दृश्यते इत्यत्र दृश्यत इत्युक्तिः युज्यत इति भावः । अन्तर इतरोऽग्निर्न किन्तु तद्ब्रह्मैव कुतः अनवस्थितेः जीवस्याग्नेर्जीवान्तरनियामकत्वेऽनवस्थितेः अग्नेरपि प्रेर्येण जीवत्वसाम्येनासम्भवाच्चेति सूत्रार्थः । नन्वग्नेरेव स्वातन्त्र्येणाग्निप्रेरकेशस्वातन्त्र्येण वा नानवस्थेति चेन्न । जीवत्वसाम्येऽप्यग्नेरेव स्वातन्त्र्यं न जीवस्येत्यत्रानवस्थितेः अवस्थापकस्य नियामकस्य प्रमाणस्याभावात् त्वन्मतेऽनीश्वरा-पेक्षत्वेनेशस्वातन्त्र्यासम्भवाच्चेति वाऽर्थः । ननु जीवत्वसाम्यादसम्भव इत्ययुक्तम् । जीवत्वसाम्येऽपि नीचोच्चभाववत् नियम्यनियामकभावोपपत्तेः भवद्भिः तथाऽङ्गीकाराच्चेति चेन्न । अनवस्थितेर्नियामक-प्रमाणस्याभावेन दृष्टान्तमात्रस्यासाधकत्वात् । अस्माभिरिवेशानङ्गीकारेण तदाज्ञाशक्त्याऽस्मन्मत इव नियम्यनियामकभावासम्भवाच्चेति वा सूत्रार्थः । अत्राद्ये विषयवाक्यस्थ श्रुतिलिङ्गरूपसाधकोक्तिः । द्वितीये तदुत्तरवाक्यगतलिङ्गोक्तिः । तृतीये स्वपक्षे प्रकरणरूपसाधकोपन्यासायोपक्रमस्य वैष्णवत्वेन लिङ्गोक्तिः । चतुर्थे प्रकरणस्यान्यपरत्वशङ्कायां प्रकरणस्यान्यपरत्वाभावे विष्णुपरत्वे च निरवकाशहेतूक्तिः । पञ्चमे परपक्षे बाधकोक्तिरिति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

**तत्प्रेरकत्वेनेति ।** श्रुतौ वामनिभामनिशब्दाभ्यां स्त्रीपुरुषसर्वप्रेरकताया उक्तत्वात् । उक्तं हि तत्वप्रदीपे

(तत्त्वसुबोधिनी)

वामं सौन्दर्यम् । भामं तेजः तत्प्रधानत्वात् स्त्रीपुरुषा वामभामशब्दशब्दिताः । तन्नेता वामनिः भामनिश्चेति । ननु नेयमनवस्था दूषणं मूलक्षयकरत्वाभावादत आह । **पूर्वपूर्वेति** । **अभ्युपगम्य चेदमुक्तमिति** । इदमनवस्थानादिकम् । अग्नेः प्रेरकत्वमङ्गीकृत्योक्तमित्यर्थः । **दिव्यदृष्टिगोचर इति** । ततश्च श्रुतौ य एषोऽन्तरक्षिणि पुरुषो दृश्यते इति दृश्यत्वाद्युक्तिः युक्तेति भावः । अत्राद्ये सूत्रे विषयवाक्यगतश्रुतिलिङ्गरूपसाधकोक्तिः । द्वितीये उत्तरवाक्यगतलिङ्गोक्तिः । तृतीये प्रकरणरूप-साधकोक्तिः । तत्र च सुखेन विशिष्टस्याभिधानादिति वा विशिष्टं च तत् सुखं चेति वा सुखे विशिष्ट इति वा विग्रहः । आद्ये सुखेन श्रैष्ठ्यं सुखस्य श्रैष्ठ्यं विना न युक्तमिति सुखस्यापि तत्सिद्धिः । द्वितीये 'कडाराः कर्मधारय' इति विशिष्टशब्दस्य परनिपातः । तृतीये योगविभागात्समासः । चतुर्थे अक्षिस्थ-विद्यायाः अग्निविषयत्वाभावे विष्णुविषयत्वे च हेतूक्तिः । पञ्चमे परपक्षे बाधकोक्तिरिति सूत्रक्रमः ।

## वाक्यार्थमञ्जरी

ॐ अनवस्थितेरसम्भवाच्च नेतरः ॐ ॥ चक्षुरन्तस्थ इतरोऽग्निर्न अनवस्थितेः । जीवस्याग्ने-र्जीवान्तरप्रेरकत्वे तस्यापि प्रेरकान्तरेण भाव्यम् । एवं तस्यापीत्यनवस्थानात् अग्नेरपि प्रेर्येण जीवत्वसाम्येन प्रेरणासम्भवाच्चेत्यर्थः ॥ **तत्तत्प्रेरकत्वेनेति** ॥ यश्चक्षुरन्तरो यमयतीति श्रुत्यन्तरसमाख्यानादिति भावः । नेयमनवस्था बीजाङ्कुरपरम्परानवस्थावन्मन्तव्येत्यत आह ॥ **पूर्वपूर्वेति** ॥ अत्राग्नेर्जीवप्रेरकत्वं मूलं तदर्थमेवोत्तरोत्तरानुसरणात् । तथा च प्रयोजकत्वेन कल्पितानां व्युत्क्रमेण पूर्वपूर्वप्रेरकानमसिद्धौ प्रयोज्यानामुत्तरोत्तरप्रेरकत्वानामप्यसिद्धिरित्यग्नेरपि प्रेरकत्वासिद्धेरित्यर्थः । अभ्युपेत्य प्रेरकत्वम्, इदमनवस्थानम् ॥ **स्वातन्त्र्येति** ॥ तथा च न तत्प्रेरकोऽपेक्षित इति भावः ॥ **दिव्यदृष्टिगोचर इति** ॥ ततश्च श्रुतौ य एषोऽन्तरक्षिणि पुरुषो दृश्यत इति दृश्यत्वोक्तिर्युक्तेति भावः ॥ ४ ॥

## विवृतिः

**तत्प्रेरकत्वेनेति** ॥ श्रुतौ वामनिभामनिशब्दाभ्यां स्त्रीपुरुपसर्वप्रेरकताया उक्तत्वात् । उक्तंहि तत्वप्रदीपे वामं सौन्दर्यं भामं तेजः तत्प्रधानत्वात् स्त्रीपुरुपशब्दाः वामभामशब्दशब्दिताः तन्नेता वामनिर्भामनिश्चेति । ननु नेयमनवस्था दूषणं मूलक्षयकरत्वाभावादत आह ॥ **पूर्वेपूर्वेति** ॥ **अभ्युपगम्य चेदमुदितमिति** ॥ इदमनवस्थादिकं अग्नेः प्रेरकत्वमङ्गीकृत्योक्तं इदानीन्तु तत्प्रेरणैव न सम्भवतीत्यर्थः । **दिव्यदृष्टिगोचर इति** ॥ ततश्च श्रुतौ य एषोऽन्तरक्षिणि पुरुषो दृश्यते, इति दृश्यत्वाद्युक्तिर्युक्तेति भावः । अत्राद्ये

(विवृतिः)

सूत्रे विषयवाक्यगतलिङ्गरूपसाधकोक्तिः । द्वितीये उत्तरवाक्यगतलिङ्गोक्तिः । तृतीये प्रकरणरूपसाधकोक्तिः । तत्र सुखेन विशिष्ट इति वा विशिष्टं च तत्सुखं चेतिवा सुखे विशिष्ट इति वा विग्रहः । आद्ये सुखेन श्रैष्ठ्यं विना न युक्तमिति सुखस्यापि तत्सिद्धिः । द्वितीये कडाराः कर्मधारय इति पूर्वनिपातः । तृतीये सप्तमीति योगविभागात्समासः । चतुर्थे अक्षिस्थविद्याया अग्निर्विषयत्वाभावे, विष्णुविषयत्वेच हेतूक्तिः । पञ्चमे परपक्षे बाधकोक्तिरिति सूत्रक्रमः ।

॥ इति अन्तराधिकरणम् ॥

## ५. अन्तर्याम्यधिकरणम्

'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृत' (बृ.उ.५-७-३) इत्यादिनाऽन्तर्याम्युच्यते । तत्र च 'एतदमृतमि'(छा.उ.४-१५-१)त्युक्तममृतत्वमुच्यते । स च 'यस्य पृथिवी शरीरमि'त्यादिना सर्वात्मकत्वात्प्रकृतिस्तत्तज्जीवो वा युक्तः । न हि विष्णोः पृथिव्यादिशरीरत्वमङ्गीक्रियत इत्यत आह–

**॥ ॐ अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॐ ॥ १८ ॥**

'पृथिवी न वेद' 'यः पृथिव्या अन्तर' (बृ.उ.५-७-३) इत्यादिना अधिदैवादिषु तद्धर्मव्यपदेशाद्विष्णुरेवान्तर्यामी । स हि 'न ते विष्णो जायमानो न जातः' (ऋ.सं.७-९९-२) 'स योऽतोऽश्रुतोऽगतोऽमतोऽनतोऽदृष्टोऽविज्ञातोऽनादिष्टः सर्वेषां भूतानामन्तरपुरुष' (ऐ.आ.३-२-४) इत्यादिनाऽविदितोऽन्तरश्च ॥ १८ ॥

## सत्तर्कदीपावली

एतदमृतमभयमिति यदक्ष्यन्तरपुरुषस्य विष्णुत्वसाधकममृतत्वमुक्तं तदन्तर्यामिणः श्रूयते । एष त आत्माऽन्तर्याम्यमृत इति अन्तर्यामी विष्णोरन्यः प्रतीयत इत्याशङ्क्य विष्णुरेवान्तर्यामीति प्रतिपादयितुमुत्तराधिकरणमारभ्यते । **यः पृथिव्यां तिष्ठन्निति** । यं पृथिवी न वेद पृथिवीदेवता न वेदेत्यर्थः । उभयेऽपीति काण्वाः माध्यन्दिनायनाश्चान्तर्यामिणः सकाशाज्जीवं भेदेनाधीयत इत्यर्थः । यस्य पृथिवी शरीरमित्यादिषु शरीरशब्दो न भोगायतनादित्याभिप्रायः किन्तु यौगिक इत्याह ॥ **शीर्यत इति**

॥ १८,१९,२० ॥ (१।२।५)

## तत्त्वप्रदीपिका

''यः पृथिव्यां तिष्ठन्नि''त्यादीति प्रथमा सप्तम्यर्थे, तृतीयार्थे वा। यः पृथिव्यां तिष्ठन्पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृत'' इत्यादि-वाक्येष्वन्तर्याम्युच्यते। तत्र च वाक्येषु तस्मिन्नन्तर्यामिण्येतदमृतमभयमित्यक्षिपुरुषस्योक्तममृतत्वं ''एष त आत्माऽन्तर्याम्यमृत'' इत्युच्यते। स च यस्य पृथिवी शरीरमित्यादिना सर्वात्मकत्वात्प्रकृति-रित्यादेरयमर्थः। स चान्तर्यामी जडप्रकृतिर्युज्यते। यस्य पृथिवी शरीरमिति शरीरशब्दस्य स्वरूपवाचकत्वात्। सर्वोपादानत्वेन सर्वात्मकत्वाच्च तस्याः। चित्प्रकृतिर्वा, सर्वाभिमानेन सर्वशरीरत्वात्। सर्वादानेन सर्वव्याप्त्या च सर्वात्मकत्वाच्च तस्याः। तत्तदभिमानी जीवो वा। नहि विष्णोः पृथिव्यादिरूपत्वं तदभिमानित्वं वाऽस्ति, येन तच्छरीरत्वमुच्येतेत्यत आह– **अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्॥** विष्णुरेवान्तर्यामी, अधिदैवाधिभूताध्यात्मप्रकरणेष्वन्तर्यामिणोऽविदि-तत्वान्तरत्वादिविष्णुधर्मव्यपदेशात्। ''यः पृथिव्यां तिष्ठन्नि''त्याद्यधिदैवम्। ''यस्सर्वेषु भूतेषु तिष्ठन्नि''त्याद्यधिभूतम्। ''यः प्राणेषु तिष्ठन्नि''त्याद्यध्यात्मम्॥

## तत्त्वप्रकाशिका

अत्र पृथिव्यादिशरीरत्वलिङ्गसाहित्येन अन्यत्र प्रसिद्धान्तर्यामित्वलिङ्गस्य विष्णौ समन्वयप्रतिपादनादस्ति शास्त्रादिसङ्गतिः। विषयवाक्योदाहरणपूर्वकं विषयं दर्शयति॥ **य इति॥** श्रुत्यादिसङ्गतिं दर्शयति॥ **तत्रेति॥** एतदमृतमभयमित्यक्षिस्थपुरुषस्यामृतत्वमुक्तम्। तत् काण्वमाध्यन्दिनश्रुत्योरन्तर्यामिणः कस्यचित् श्रूयते 'एष त आत्माऽन्तर्याम्यमृतः' इति। स चान्तर्यामी यदि विष्णोरितरः स्यात्तदाऽमृतत्वं चान्यनिष्ठं नाक्षिस्थस्य विष्णुत्वसाधकं स्यादित्यवश्यं निर्णेतव्य एव। तदन्तर्यामित्वमत्र विषयः। किं विष्णोरन्यस्य वेति सन्देहः॥ अमृतत्वं पृथिव्यादिशरीरत्वं च सन्देहबीजमिति भावः। सयुक्तिकं पूर्वपक्षयति॥ **स चेति॥** सोऽन्तर्यामी प्रकृतिर्भवेत्। यस्य पृथिवी शरीरं यस्यापः शरीरमित्यादि-नाऽन्तर्यामिणः पृथिव्यादिशरीरत्वस्य श्रवणात्। तस्य च प्रकृतावुपपत्तेः शरीरशब्दस्य स्वरूपेऽपि प्रयोगात्। प्रकृतेश्च पृथिव्यादिसर्वात्मकत्वात्। न च यः पृथिव्यां तिष्ठन्नित्यादेरनुपपत्तिः। 'व्याप्तं कार्येषु कारणम्' इत्यादिना कारणस्य कार्यस्थत्वोक्तेः। पृथिवीं यमयतीत्येतदप्युपचारेण नेतव्यम्। पृथिव्यादिजीवस्यैव तदन्तर्यामित्वम्। पृथिव्यादिशरीरत्वादेस्तस्मिन्नति सुघटत्वादिति भावः। ननु यथा प्रकृत्यादिलिङ्गेन तेषामन्तर्यामित्वं तथाऽमृतत्वलिङ्गेन विष्णोः किं न स्यादित्यत आह॥ **न हीति॥** विद्यमानेऽपि विष्णुलिङ्गे न तस्यान्तर्यामित्वम्। पृथिव्यादिशरीरत्वस्य कयाऽपि विधयाऽवकाशाभावात्। तस्य पृथिव्यादिभिन्नत्वचिच्छरीरत्वोरीकारेण पृथिव्यादिशरीरत्वानङ्गीकारात्। अमृतत्वस्य च कथञ्चि-

(तत्त्वप्रकाशिका)

त्प्रकृत्यादावपि सावकाशत्वात् । सावकाशस्य च निरवकाशेन बाधोपपत्तेः । अतोऽन्तर्यामी न विष्णुरपि तु प्रकृत्यादय एवेति नामृतत्वमक्षिस्थस्य विष्णुत्वसाधकमिति भावः । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **अत इति ॥** अन्तर्यामी विष्णुरेव । अन्तर्यामिणः पृथिव्याद्यविदितत्वतदन्तरत्वाख्यधर्मव्यपदेशात् । अविदितत्वादेश्च विष्णुधर्मत्वात् । न च वाच्यं पृथिव्यादीनां जडत्वेन तदज्ञेयत्वं सर्वस्यापि सम्भवतीति । पृथिव्यादीनामधिदैवत्वेन जडत्वाभावादिति भावः । चक्षुरादीनां जडत्वेऽप्यत्रोक्तस्यैव तत्र कथनान्न विरोधः । अविदितत्वादेः कुतो विष्णुधर्मत्वमित्यत आह ॥ **स हीति ॥** न च पृथिव्यादिजीवाविदितत्वं प्रकृतेः पृथिव्यादिजीवस्य वोपपद्यते ॥ १८ ॥

## गुर्वर्थदीपिका

शरीरशब्दस्य स्वरूपेऽपि प्रयोगादित्यत्र व्याप्तिशरीरप्रविष्टत्वाल्लक्षणशरीरप्रविष्टत्वादित्यादौ स्वरूपेऽपि शरीरशब्दस्य प्रयोगादित्यर्थः । अत्रोक्तस्यैवेत्यत्र ''आदित्यश्चक्षुर्भूत्वे''त्यादि-श्रुतेरत्राधिदैवमण्डले प्रोक्तादित्यादिदेवानामेव तत्र चक्षुराद्यध्यात्ममण्डलेऽप्युक्तत्वादित्यर्थः ।

## भावबोधः

ॐ अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॐ ॥ **श्रुत्यादिसङ्गतिमिति** । अव्यवहितपूर्वाधि-करणोपात्तश्रुत्यादिनेत्यर्थः । यद्वा 'रमणं नातियत्नस्य विक्षेपादेव युज्यते' इत्यनुव्याख्यानोक्तरीत्या रमणकर्तृत्वेन चक्षुरादिनियामकतया चक्षुरन्तस्थत्वं रमणनियमनयोः परस्परं व्याहतत्वेन न सम्भवतीत्युक्तसमन्वयलिङ्गाक्षेपेण पूर्वपक्षोत्थानादनन्तरसङ्गतिरिति द्रष्टव्यम् । **किं विष्णोरिति** । अन्तर्यामित्वं किं प्रकृतिजीवयोरुत विष्णोरिति चिन्ता । तदर्थं प्रकृतिजीवयोः तत्साधकत्वेनाभिमत-मन्तर्यामिणो यस्य पृथिवी शरीरमित्यादिनोक्तं पृथिव्यादिशरीरत्वं विष्णुत्वसाधकं पृथिव्याद्यविदितत्वादि-लिङ्गबाधकमुत तद्बाध्यमिति । तदर्थं पृथिव्यादिशरीरत्वं निरवकाशं पृथिव्याद्यविदितत्वादिकं सावकाशमुत विपरीतमिति । यं पृथिवी न वेदेत्यादिवाक्यगतपृथिव्यादिशब्दाः जडपरा उत देवतापराः । तदर्थं पृथिव्याद्यविदितत्वं किं रूढं पृथिव्यादिशरीरत्वं च यौगिकमिति । तदर्थं पृथिव्यादिशरीरत्वस्य यौगिकत्वकल्पके परपक्षबाधकसावकाशत्वे तत्साधकपृथिव्याद्यविदितत्वनिरवकाशत्वे पृथिव्यादिशब्दानां देवतापरत्वे च प्रमाणं नास्त्युतास्तीति । **तस्य प्रकृतावुपपत्तेरिति** । यद्यपि यस्य दिशः शरीरं यस्यात्मा शरीरमित्युक्तं दिगादिशरीरत्वं प्रकृतौ न मुख्यम् । पृथिव्यादेः प्राकृतत्वेऽपि दिगादेरप्राकृतत्वात् । तथापि गौणं तदस्तु । ब्रह्मणस्तु पृथिव्यादिशरीरत्वमपि न मुख्यम् । न च नित्ये दिगादिके ब्रह्म-

(भावबोधः)

प्रतिशीर्यमाणत्वादिरूपयौगिकमपि शरीरत्वमस्तीति भावः । भाष्ये यः पृथिवीमन्तरो यमयतीत्यंशोदाहरण-प्रयोजनमाह– **न च य इति ।** कारणस्य कार्यस्थत्वोक्तेरिति । न च प्रागुक्तपृथिव्याद्यात्मकत्वासम्भव इति वाच्यम्; कार्यकारणयोर्भिन्नाभिन्नत्वेनाभेदेन तदात्मकत्वस्य भेदेन तत्स्थत्वस्य चाविरुद्धत्वादिति भावः । **उपचारेण नेतव्यमिति ।** कार्यस्य कारणाधीनत्वादिति भावः । न चात्मानं यमयतीत्युक्तात्म-नियामकत्वानुपपत्तिः, आत्मप्रकृतेः शरीरद्वारा प्रकृत्यधीनत्वेन तदुपपत्तेः । नापि यमात्मा न वेदेत्युक्तात्माविदितत्वानुपपत्तिः, अप्रतर्क्यमविज्ञेयमित्यादिना प्रकृतेर्दुर्ज्ञानत्वेन तस्याप्युपपत्तेरिति भावः । **अतिसुघटत्वादिति ।** जीवानां पृथिव्याद्यभिमानित्वेन तच्छरीरत्वतन्नियामकत्वादीनामुपपादन-निरपेक्षत्वादित्यर्थः । **अमृतत्वस्य कथञ्चिदिति ॥** प्रकृत्यादेः स्वरूपनाशरहितत्वेनेत्यर्थः । उपलक्षणञ्चैतत् । यं पृथिवी न वेदेत्युक्तं पृथिव्याद्यविदितत्वं च पृथिव्यादीनां जडत्वादभिमानिन्यपि युक्तम् । यमात्मा न वेदेति चेतनस्य पृथगुक्तेः पृथिव्यादिशब्दो नाभिमानिचेतनपरः । यः पृथिव्या अन्तर इत्युक्तमन्तरत्वं यदि भिन्नत्वं यदि वाऽन्तःस्थत्वं तदायमपि पृथिव्यादिशरीरकेऽभिमानिन्यपि युक्तम् । आत्मानं यमयतीत्येतदपि तत्त्वाभिमानिनामस्मदाद्यात्मनियामकत्वाद्युक्तम् । यमात्मा न वेदेति त्वभिमानिजीवानां दुर्ज्ञानत्वाद्युक्तमिति भावः । **पृथिव्याद्यविदितत्वतदन्तरत्वाख्येति ।** यं पृथिवी न वेदेत्यादिश्रुत्युदाहरणादविदितोऽन्तरश्चेत्युत्तरभाष्यबलात् तद्धर्मव्यपदेशादिति भाष्यमेवं व्याख्यातमिति बोद्धव्यम् । **अधिदैवत्वेन जडत्वाभावादिति ।** यं पृथिवी न वेदेत्यादौ पृथिव्यादेर्जडत्वे जडस्य ज्ञानमात्राभावेन विशिष्य यमित्यस्य वैयर्थ्यमप्रसक्तप्रतिषेधापत्तिः, यमात्मा न वेदेति प्रायपाठानुपपत्तिश्चेति भावः । **प्रकृतेर्जीवस्य वोपपद्यत इति ।** तथा च तेन पृथिव्यादिजीवेन साकल्येनावेद्यत्वं हरेरेवेति भावः ।

अन्तरत्वं च—

"बाह्यापेक्षां विना यस्तु रमते सोऽन्तरः स्मृतः ।
अतिप्रियत्वाच्च हरेरन्तरत्वमुदाहृतम्" ॥

इत्युक्तम् । स्वतो नित्यतृप्तत्वात् 'तदेतत्प्रेयः पुत्रात्' इत्यादिश्रुत्या परमप्रेयोरूपाच्च ब्रह्मणोऽन्यत्र न युक्तम् । किञ्च 'दिव्यो देव एको नारायणः' इत्युपक्रम्य 'यस्य पृथिवी शरीरम्' 'यः पृथिवीमन्तरे सञ्चरन् यं पृथिवी न वेद' इत्याद्युक्त्वा 'एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः' इत्युपसंहारान्नारायणोऽन्तर्यामीति ।

## भावदीपः

ॐ अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॐ ॥ इत्यन्तभाष्यं सङ्गतिपरत्वेन व्याकुर्वन्नेतदमृतमित्युक्तमिति वाक्यं व्याचष्टे ॥ **एतदिति** ॥ उभयेऽपीति सूत्रोक्त्यनुरोधात्तत्र चामृतत्वमुच्यत इत्यंशार्थमाह ॥ **तत्काण्वेति** ॥ यः पृथिव्यामित्यादिवाक्यस्य काण्वमाध्यन्दिनशाखयोरेकरूपत्वादिति भावः । उच्यते पञ्चमेऽध्याये अन्तर्यामिणः कस्यचिदित्यनेन तत्रेत्यस्यान्तर्यामिणीत्यर्थो दर्शितः । कस्यचित्प्रकृत्यादेः । किं तदमृतत्वोक्तिपरं वाक्यमित्यतः तत्रेति परामृष्टवाक्यशेषमाह ॥ **एष त इति** ॥ अत एव भाष्ये आत्माऽन्तर्यामीत्येव वाच्ये अमृत इत्यंशोऽप्युक्त इति भावः । यस्य पृथिवी शरीरमित्यंशोक्तिः पूर्वपक्षयुक्तेः यं पृथिवी न वेद यः पृथिव्यामन्तर इत्यंशोक्तिः सिद्धान्तयुक्तेः यः पृथिवीमन्तर इत्यंशोक्तिर्भेदाध्ययनस्य सूचनायेत्याशयः । स च यस्य पृथिवीत्यादिवाक्यतात्पर्यम् ॥ **स चेति** ॥ अन्तर्याम्यमृत इति वाक्योक्त इत्यर्थः । स च इत्यस्यार्थोऽन्तर्यामीति । प्रकृतिर्जीवो वेत्यस्यार्थः इतर इति । सर्वात्मकत्वादित्युक्तयुक्त्येत्यर्थः । तत्र चेत्यादेरुच्यत इत्यन्तस्य तात्पर्यमाह ॥ **तदेति** ॥ **इत्यवश्येति** ॥ इति सङ्गतिसम्भवादित्यर्थः ॥ **अन्यस्य वेति** ॥ जडप्रकृत्यादेरित्यर्थः । द्रष्टा श्रोतेति द्रष्टृत्वादेः श्रवणात् न प्रकृतेरत्रावकाश इति तु अक्षरनये निरस्तप्रायं भविष्यतीति भावः । भाष्ये प्रकृतिर्जीवो वेत्युक्तावप्यन्यस्येत्युक्तिः प्रकृतिजीवान्यतरानिश्चयेऽपि विष्ण्वन्यत्वेन पूर्वपक्षेऽवधारणं युक्तमिति दर्शयितुम् । सङ्गतिपरतया व्याख्यातमेव भाष्यं पूर्वपक्षतद्युक्तितत्फलोक्तिपरत्वेन व्याकुर्वन् स चेति वाक्यं तावदवतारयति ॥ **सयुक्तिकमिति** ॥ व्यवहितत्वादन्वयोक्त्या प्रतिज्ञांशं व्याचष्टे ॥ **स इति** ॥ आदिपदार्थोक्तिपूर्वं हेत्वंशं व्याचष्टे ॥ **यस्येति** ॥ उपपत्तेरित्युक्तं व्यनक्ति ॥ **शरीरेति** ॥ पूर्वपक्षस्य शरीरमित्यादौ स्वरूपेऽपि प्रयोगादित्यर्थः ॥ एवं परिष्कृत्य भाष्यस्थं हेतुं सङ्गमयति ॥ **प्रकृतेश्चेति** ॥ उपादानत्वात्प्रकृतेः उपादानोपादेययोः ''खण्डितं रूपमेवात्र विकारोऽपि विकारिण'' इत्युक्तेरभेदादिति भावः । यस्य दिशः शरीरं यस्यात्मा शरीरमित्यादि तु ब्रह्मपक्षेऽपि न स्वरसमिति भावः ॥ **इत्यादिनेति** ॥ पञ्चमे कारणेषु स्थितं कार्यं व्याप्तं कार्येषु कारणमिति गीतातात्पर्योक्तस्मृत्येत्यर्थः ॥ **कार्यस्थत्वेति** ॥ खण्डितं रूपमेवेति तत्वविवेकोक्त्या भेदस्यापि सत्त्वेन पटे तन्तव इत्यादिवदुपपत्तेरिति भावः ॥ **उपचारेणेति** ॥ कार्यस्य कारणायत्तत्वात् प्रकृत्यधीनत्वेन नेयमित्यर्थः । एवं न च स्मार्तमिति सूत्रव्यावर्त्यमुक्त्वा शारीरश्चेति सूत्रव्यावर्त्यं तत्तज्जीवो वेति भाष्योक्तं पूर्वपक्षमाह ॥ **पृथिव्यादीति** ॥

(भावदीपः)

भाष्ये प्रकृतिपक्षे सर्वात्मकत्वादिति हेतूक्तिवज्जीवपक्षे हेत्वनुक्तेरभिप्रायमाह ।। **अतिसुघटत्वादिति भाव इति** ।। पृथिव्याद्यभिमानिजीवान्प्रति पृथिव्यादेः स्थूलशरीरत्वादिति भावः । आदिपदेन यः पृथिव्यां तिष्ठन् यः पृथिव्यामन्तरो यमयतीत्यादिर्गृह्यते ।। **तेषामिति** ।। पूर्वं जीवो वेति सूत्राभाष्यदिशा जीव इत्येकवचनोक्तावपि तत्तदभिमानिनां बहुत्वेन तेषामित्यनुवादः । एकैकस्याभिमानिनः पृथिव्याद्यनेक-शरीरकत्वायोगादिति भावः ।। **कयापीति** ।। पृथिव्याद्यात्मकत्वेन तत्तद्देहत्वेन वा सिद्धान्ते वक्ष्यमाणदिशा स्मर्यमाणत्वरूपयोगेन वेत्यर्थः । तद्व्यनक्ति ।। **तस्येति** ।। जन्मादिसूत्रे यो नः पितेति वाक्योक्त्या भाष्ये कर्तृत्वमेव ब्रह्मणो नोपादानत्वमित्युक्तेर्भिन्नत्वमिति भावः ।। **चिच्छरीरेति** ।। विकरणत्वान्नेति चेत्तदुक्तमित्यत्रारूपवदेव हीति नये आह च तन्मात्रमिति सूत्रे च तथोक्तेरिति भावः । योगाद्रूढे-र्बलवत्त्वेनेत्यपि ग्राह्यम् । एतेन पृथिव्यादिशरीरत्वं निरवकाशमिति न्यायविवरणोक्तं निरवकाशत्वं विवृतं ध्येयम् । कथञ्चित् स्वरूपनित्यत्वेन एव पृथिव्याद्यविदितत्वमपि । अप्रतर्क्यमविज्ञेयमित्यादिना कथञ्चिन्नेयमिति । भाष्यस्थैकवचनेन परमत इव एक जीव इति भ्रान्तिं निरस्यन्नुपसंहरति ।। **अतो निरवकाशलिङ्गादिति** ।। **प्रकृत्यादय इति** ।। अत एव भाष्ये तत्तज्जीव इत्युक्तिरिति भावः । तत्र चेत्यादिभाष्यं फलपरमिति भावेन तत्तात्पर्यमाह ।। **नामृतत्वमिति** ।। इत्याद्यन्तर्याम्युच्यत इति भाष्ये इत्यादीति प्रथमा सप्त्यमर्थे तृतीयार्थे वा । सप्तसु प्रथमेति सूत्रात् । क्रियाविशेषणं वा । इत्यादिवाक्येषु इत्यर्थः इति तत्वप्रदीपे व्याख्यातम् । सूत्रक्रममनुरुध्य व्युत्क्रमेण भाष्यं व्याचष्टे ।। **अन्तर्यामीति** ।। तद्धर्मेत्यत्र तच्छब्धार्थोऽन्तर्यामिण इति ।। **अन्तरत्वेति** ।। ''बाह्यापेक्षां विना यस्तु रमते सोऽन्तरस्स्मृतः । अतिप्रियत्वाच्च हरेरन्तरत्वमुदाहृतमिति'' बृहद्भाष्योक्तरूपान्तरत्वेत्यर्थः । एतच्च यः पृथिवीमन्तरो यमयतीति वाक्योक्तमन्तरत्वं ज्ञेयम् । न तु पृथिव्या अन्तरमित्युक्तान्तरत्वं तस्यान्तरो विविक्त इति वाक्यमेवाभिप्रेतम् । यद्वा पृथिव्या अन्तर इति पृथिव्या अन्तरोऽन्तस्स्थ इत्यन्तस्स्थरूपान्तरत्वस्येत्यर्थः । क्वचित्तदन्त(र)स्थत्वाख्येति पाठः । अन्तरस्थो देवतानां च न विदुर्यं च देवता इति काण्वभाष्योक्तेः । अन्तरो विविक्त इत्युक्तिस्तु अर्थान्तरमुपेत्येति ज्ञेयम् । तद्धर्मेति तच्छब्दस्यार्थान्तरमाह ।। **विष्णु-धर्मत्वादिति** ।। एतेन तस्य विष्णोरविदितत्वादिधर्मस्य तत्रान्तर्यामिणि व्यपदेशादिति सूत्रार्थो दर्शितः । अधिदैवादिष्वित्युक्तेरुपयोगं व्यावर्त्यपूर्वमाह ।। **न चेति** ।। **अधिदैवत्वेनेति** ।। देवैः साकल्येनावेद्यत्वं विष्णोरेव लिङ्गमित्यर्थः । जडत्वेऽप्रसक्तनिषेधः स्यादित्यर्थः । परमं तं नाप श्रोत्रादिनेति ज्योतिर्नये व्याख्यातत्वान्नात्र श्रुतिं व्याचख्यौ । स योऽत इति श्रुत्यर्थस्तूक्तोऽस्माभिर्विवक्षितगुणेत्यत्र ।। **चक्षुरादीनामिति** ।। पूर्वत्र य एषोऽन्तरक्षिरीत्यादावक्ष्यादित्यचन्द्रविद्युतां जडत्वेऽपि अत्राधि-

(भावदीपः)

दैवाध्यात्मादिप्रकरणेषु उक्तस्य पृथिव्यादिचक्षुरादिदेवतास्थस्यैव । तत्र पूर्वत्राक्ष्यादावुक्तेरमृतत्वमुखेन पूर्वाक्षेपसमाध्यविरोध इत्यर्थः । श्रुतौ लिङ्गस्यान्ययोगव्यवच्छेदानुक्तेः स्वयमाह ॥ **न चेति ॥** अप्रतर्क्यमविज्ञेयमित्यादि तु दुर्ज्ञानत्वादिपरम् । ''सूक्ष्मत्वादप्रसिद्धत्वाद्गुणबाहुल्यतस्तथा । अनिर्देश्यौ तथाऽव्यक्तावचिन्त्यौ श्रीश्च माधव'' इति द्वादशे गीतातात्पर्योक्तेः । श्रुत्वाऽत्मानं वेद न चैव कश्चिदिति तु व्याख्यातं सर्वत्र प्रसिद्धेत्यादिनय इति भावः । अन्तरत्वं च बाह्यापेक्षां विना रममाणत्वरूपं वा । पृथिव्यादिदेवतान्तःस्थत्वरूपं वा । द्वेधापि विष्णोरन्यत्रानवकाशमिति विवक्षितगुणोपपत्ते-रित्यत्रोक्तप्रायमिति भावः ॥ १८ ॥

## अभिनवचन्द्रिका

**भाष्ये – यः पृथिव्यां तिष्ठन्निति ॥** यः **पृथिव्यां**=गरुडे तिष्ठन्, 'पृथुं नारायणं वाति तमादायैव पक्षिराट् । अतः स पृथिवीत्युक्त' इति स्मृतेः । **पृथिव्याः**=गरुडात्, **अन्तरो** = विलक्षणः । यं च पृथिवी न वेद यस्य पृथिवी **शरीरं** शरीरवत्, यः पृथिवीम् अन्तरः सन् प्रेरयति एषः परमात्मा **ते** त्वया पृष्टोऽन्तर्यामी **अमृतो**=नाशरहित इति सिद्धान्तरीत्या श्रुत्यर्थः । पूर्वपक्षिमते तु – पृथिवीशब्दः प्रसिद्धपृथिवीपरः । अन्यत्समानम् । **अन्तर्यामिणः कस्यचिदुच्यत इति ॥** एतदधिकरणप्रतिपाद्य-स्यामृतत्वेनोक्तत्वं पूर्वाधिकरणतच्छ्रुतिभ्यां सङ्गतिः । तत्प्रतिपाद्यस्यापि अमृतत्वेनोक्तत्वादिति भावः । **उपचारेण नेतव्यमिति ॥** कार्यस्य कारणाधीनत्वादिति भावः । **तस्येति ॥** शरीरशब्दो हि स्वरूपे शरीरे च वर्तते । पृथिवी च नेश्वरस्वरूपम् । **नापि तच्छरीरमिति ॥** पृथिवीशरीरशब्दो न तस्मिन् घटत इति भावः । ननु प्रकृतिर्नान्तर्यामी अन्तर्यामिणि श्रुतस्याऽमृतत्वलिङ्गस्य तत्रानवकाशादित्यत आह । **अमृतत्वस्य चेति ॥** कथञ्चिदमृतत्वस्य श्रुत्युक्तगौणामृतत्वस्य प्रकृत्यादौ सावकाशत्वादित्यर्थः । इदमुक्तं भवति – भवेदमृतत्वस्य प्रकृत्यादावनवकाशः, यदि श्रुतावन्तर्यामिणो मुख्यामृतत्वमुच्यत इति स्यात् । न चैवम् – पीयूषस्यैव मुख्यामृतत्वात् । तदन्यस्य नाशराहित्यरूपस्य गौणामृतत्वात् । न च पीयूषत्वं अन्तर्यामिणः सम्भवतीति नाशराहित्यरूपं गौणामृतत्वमेव श्रुत्योच्यत इति अभ्युपेयम् । तच्च विष्णोरिव प्रकृत्यादावस्तीति । एतेन प्रकृत्यादौ कथञ्चिदमृतत्वसद्भावेऽपि मुख्यामृतत्वाभावादन्यधर्मेण मुख्यामृतत्वेन अक्षिस्थस्य विष्णुत्वसाधनसम्भवात्, नाऽमृतत्वमक्षिस्थस्य विष्णुत्वसाधकमित्युपसंहारो न युक्त इति परास्तम् । पूर्वपक्षिणा विष्णुवदेव प्रकृत्यादीनाममृतत्वाङ्गीकारात् । **अन्तर्यामी विष्णु-रेवेति ॥** अनेन अधिदैवादिषु अधिदैवादिप्रतिपादकेषु 'यः पृथिव्यां तिष्ठन्' इत्यादिवाक्येषु उच्यमानोऽन्त-

(अभिनवचन्द्रिका)

र्यामी विष्णुरेव पृथिव्याद्यविदितत्वान्तरत्वाख्यधर्मव्यपदेशादिति सूत्रयोजनोक्ता भवति । ननु सूत्रे अन्तर्यामी तद्धर्मव्यपदेशादित्येवास्तु, अधिदैवादिष्विति व्यर्थमित्याशङ्कां परिहर्तुं तदुपोद्घातमाह – **न च वाच्यमित्यादिना** ॥ यदर्थमुपोद्घातः तदाह – **पृथिव्यादीनामिति** ॥ पृथिव्यादीनां चेतनत्वसूचनाय सूत्रे तत्पदमिति भावः ।

## वाक्यार्थमुक्तावली

ॐ अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॐ ॥ **किं विष्णोरिति** ॥ अत्रान्तर्यामित्वं किं पृथिव्यादिशरीरत्वलिङ्गेन प्रकृतिजीवयोः उतामृतत्वपृथिव्याद्यविदितत्वरूपस्वपक्षसाधकेन त्रिगुणोपादानत्वदुःखित्वादिप्रधानजीवधर्मानभिलपनलक्षणेन साधकाभावेन जीवान्तर्यामिणो भेदोक्तिरूपबाधकेन च किं विष्णोरिति । तदर्थं पृथिव्यादिशरीरत्वादेः विष्णावनवकाशः अमृतत्वाविदितत्वादेः प्रकृत्यादौ सावकाशत्वमुत अमृतत्वाविदितत्वादेः अन्यत्र निरवकाशत्वं पृथिव्यादिशरीरत्वादेः विष्णौ सावकाशत्वमिति ॥ **तस्य प्रकृतावुपपत्तेरिति** ॥ ननु यस्य दिशः शरीरं यस्यात्मा शरीरम् इत्यातत् कथं प्रकृतावुपपद्यत इति चेन्न । दिशो मूर्तसंयोगादावात्मनः शरीरसंयोगादौ प्रकृतिपरतन्त्रत्वेन शरीरवच्छरीरमिति गौण्योपपत्तेः । ब्रह्मणस्तु पृथिव्यादिशरीरत्वं किमपि न मुख्यम् । न च शीर्यते नित्यमेवास्मात् इत्युक्तयोगेन तन्मुख्यमिति वाच्यम् । अस्य योगस्यात्मदिगादावनवकाशात् । पृथिव्याद्या देवतास्तु देहवद्यद्वशत्वतः । इति बृहद्भाष्योक्तगौण्योपपत्तेरेव सर्वत्र स्वीकार्यत्वात् ॥ **स्वरूपेऽपीति** ॥ व्याप्तिशरीरलक्षणमित्यादावित्यर्थः । भाष्ये यः पृथिव्यां तिष्ठन् पृथिवीमन्तरो यमयतीत्यंशोदाहरणस्य प्रयोजनमाह ॥ **न चेत्यादिना** ॥ **कारणस्येति** ॥ अनुपचितप्रकृतिभागस्येत्यर्थः । उपचितप्रकृतिभागस्येत्यर्थः इत्यप्याहुः । अस्मिन् पक्षे प्रागुक्तपृथिव्याद्यात्मकत्वासम्भव इति न वाच्यम् । कार्यकारणयोर्भिन्नाभिन्नत्वेनाभेदेन तदात्मकत्वस्य भेदेन तत्स्थत्वस्य चाविरोधात् आत्मनि तिष्ठन्निति जडस्य चेतनाधीनत्वाद्वा आवरकतया सम्बन्धाद्वा सावकाशम् । दिशि तिष्ठन् विभुत्वात् ॥ **उपचारेणेति** ॥ कार्यस्य कारणाधीनत्वादिति भावः । न च आत्मानं यमयतीत्युक्तात्मनियामकत्वानुपपत्तिः । आत्मप्रवृत्तेः प्रकृत्यधीनत्वेन शरीरद्वारा तदुपपत्तेः । दिशो यमयतीत्युक्तिरपि मूर्तसंयोगादेः प्रकृत्यधीनत्वेन विशिष्टविवक्षया । न च यमात्मा न वेद इत्युक्तात्माविदितत्वानुपपत्तिः । अप्रतर्क्यमविज्ञेयमित्यादिना प्रकृतेर्दुर्ज्ञानत्वेन तस्याप्युपपत्तेरिति भावः । जीवपक्षे हेत्वनुक्तेरभिप्रायमाह ॥ **सुघटत्वादिति** ॥ जीवानां शरीराद्यभिमानित्वेन वा तद्देहवत्त्वेनेत्यर्थः ॥ **कथञ्चिदिति** ॥ पृथिव्यादेः स्वरूपनाश-

(वाक्यार्थमुक्तावली)

रहितत्वेनेत्यर्थः । अधिदैवादिष्वन्तर्यामीति भाष्येऽन्वयः ॥ **तदन्तरत्वाख्येति** ॥ तस्याः पृथिव्याः अन्तरङ्गत्वं परमस्नेहविषयत्वमित्यर्थः । अन्तर्यामित्वमिति वा । अन्तरपुरुष इति भाष्योदाहृतश्रुतेः उभयार्थत्वसम्भवात् ।

अत्र केचित्इदं चान्तरत्वं यः पृथिवीमन्तरो यमयतीत्यत्रोक्तम् । न तु पृथिव्या अन्तर इत्युक्तम् । तस्यान्तरो विविक्त इति भेदार्थत्वस्य वक्ष्यमाणत्वादित्याहुः । वस्तुतस्तु पृथिव्या अन्तर इत्यादिना अधिदैवादिषु तद्धर्मव्यपदेशादित्युक्त्या पृथिव्या अन्तर इत्युक्तमेवात्र विवक्षितम् । न च तस्य भेदार्थकत्वोक्तिविरोधः । अतिप्रियत्वभेदलक्षणार्थद्वयपरत्वाङ्गीकारात् । भेदार्थकत्वस्य वक्ष्यमाणत्वात् । अतिप्रियार्थकत्वस्य अतिप्रियत्वाच्च हरेरन्तरत्वमुदाहृतम् इति बृहद्भाष्यसिद्धत्वात् । तदुक्तं व्यासतीर्थीये । पृथिव्या अन्तर अद्भ्योऽन्तर इत्यन्तरशब्दार्थमाह ॥ **अतिप्रियत्वाच्चेति** ॥ अन्तरो यमयतीत्युक्तमन्तरत्वमपि अत्र विवक्षितम् । सोऽन्तरः स्ववशत्वतः । बाह्यापेक्षां विना यस्तु रमते सोऽन्तरः स्मृतः इति व्याख्यातत्वात् । तदप्युक्तं व्यासतीर्थीये । यः पृथिवीमन्तरो यमयतीत्यन्तरशब्दार्थमाह । **सोऽन्तर इति** । अन्तरशब्देन स्ववशत्वं कथं लब्धमित्यत आह । **बाह्येति** । अधिदैवादिष्वित्युक्तेरुपयोगं व्यावर्त्यशङ्कापूर्वमाह ॥ **न चेति** ॥ **अधिदैवत्वेनेति** ॥ प्रकरणान्ते इत्यधिदैवमित्युक्तत्वात् । जहत्वेन वेदनप्रसक्तेरभावेन वेदेत्युक्त्ययोगात् । 'पृद्धं नारायणं वाति समादायैव पक्षिराट् । अतः स पृथिवीत्युक्त' इत्यादिव्याख्यारूपप्रमाणाच्चेति भावः । ननु चक्षुरादीनां जडत्वे बाधकाभावात् ज्ञानकरणतया वेदनप्रसक्तिसद्भावाच्च करणे कर्तृत्वोपचारेण न वेदेत्युक्तिसम्भवात् तदविदितत्वं सर्वस्य सम्भवतीति तत्रोक्तान्तर्यामिणो विष्णुत्वविरोध इत्यत आह ॥ **चक्षुरादीनामिति** ॥ चक्षुरादीनां जडत्वेऽपि कथञ्चित्तदविदितत्वस्य सर्वत्रोपपत्तावपि न विष्णोरन्तर्यामित्वविरोधः । कुतः, अत्र पृथिव्यादौ उक्तस्यैव तत्र चक्षुरादौ कथनात् । अन्यथा अन्तर्यामिणं ब्रूहीति सर्वान्तर्यामिण एकस्य प्रश्ने एष आत्माऽन्तर्याम्यमृत इत्यधिदैवादिप्रकरणत्रये तदवान्तरस्थानेष्वपि भिन्नभिन्नान्तर्यामिप्रतिपादनमसङ्गतं स्यात् । एष त आत्माऽन्तर्यामीति एकात्मत्वोक्त्ययोगाच्च । अतस्तस्यैकस्य पृथिव्याद्यविदितत्वलिङ्गेन विष्णुत्वसिद्धौ चक्षुराद्यन्तर्यामित्वमपि तस्य सिद्ध्यतीति भावः । विस्तरस्तु प्रमेयमुक्तावल्यामनुसन्धेयः ।

अन्ये तु– पृथिव्यादेर्देवतात्वे पूर्वाक्षेपसमाध्ययोगमाशङ्क्याह ॥ **चक्षुरादीनामिति** ॥ पूर्वं य एषोऽन्तरक्षिणीत्यादौ अक्ष्यादित्यविद्युतां जडत्वेऽपि अत्राधिदैवादिप्रकरणेषु उक्तस्य पृथिव्यादिचक्षुरादिदेवतास्थस्यैव पूर्वत्राक्ष्यादावुक्तेरमृतत्वमुखेन पूर्वाक्षेपसमाध्यविरोध इत्यर्थमाहुः ।

(वाक्यार्थमुक्तावली)

ततश्चायं सूत्रार्थ:अधिदैवादिप्रकरणेष्वन्तर्यामितयोक्तो विष्णुरेव । तस्य विष्णोरविदितत्वान्तरत्वाख्यधर्मव्यपदेशादिति ।

## तत्त्वसुबोधिनी

ॐ अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॐ ॥ अत्र चक्षुरन्तस्थस्य ब्रह्मत्वे हेतूकृतामृतत्वाक्षेपेण पूर्वपक्षोत्थानादनन्तरसङ्गतिरिति भाष्य एव उक्तम् । अन्तर्यामिणि पृथिव्यादिशरीरत्वश्रवणेऽपि प्रकृतेः अन्तर्यामित्वं कथमायातमिति अत आह । **प्रकृतेश्चेति** । पृथिव्याद्यात्मकत्वरूपं तत्प्रकृतावुपपद्यत एव । ननु शरीरत्वं कथं घटत इत्यत उक्तम् । **शरीरशब्दस्येति** । इदं पूर्वपक्षे शरीरमित्यादौ शरीरशब्दस्य स्वरूपेऽपि प्रयोगात् प्रकृतेरपि पृथिव्यादिशरीरत्वं सम्भवतीति भावः । यद्यपि दिगादिशरीरत्वं प्रकृतौ न मुख्यम् । दिगादेरप्राकृतत्वात् । तथापि गौणं तदस्तु । ब्रह्मणस्तु पृथिव्यादिशरीरत्वमपि न मुख्यम् । न नित्ये दिगादिके ब्रह्मप्रतिशीर्यमाणत्वादिरूपयौगिकमपि शरीरत्वमस्तीति भावः । भाष्ये यः पृथिवीमन्तरो यमयतीत्यंशोदाहरणस्य प्रयोजनमाह । **न च य इति । कारणस्येति ।** न च प्रागुक्तपृथिव्याद्यात्मकत्वासम्भवः । कार्यकारणयोः भिन्नाभिन्नत्वेन अभेदेन तदात्मकत्वस्य भेदेन तत्स्थत्वस्य वाऽविरुद्धत्वादिति भावः । तथापि प्रकृतेः जडत्वेन पृथिव्यादिनियामकत्वमनुपपन्नमत आह । **पृथिवीमिति** । कार्यस्य कारणाधीनत्वादिति भावः । आत्मनियामकत्वाविदितत्वादिकं तु आत्मप्रकृतेः शरीरद्वारा प्रकृत्यधीनत्वेन, अप्रतर्क्यम् अविज्ञेयमित्यादिना प्रकृतेः दुर्ज्ञानत्वेनोपपन्नमिति भावः । **अतिसुघटत्वादिति** । जीवानां पृथिव्याद्यभिमानित्वेन तच्छरीरत्वतन्नियामकत्वादीनामुपपादननिरपेक्षत्वादित्यर्थः । **अमृतत्वस्य कथञ्चिदिति** ॥ प्रकृत्यादेः स्वरूपनाशरहितत्वेनेत्यर्थः । उपलक्षणं चैतत् । यं पृथिवी न वेद इत्युक्तं पृथिव्याद्यविदितत्वं पृथिव्यादीनां जडत्वात् पृथिव्याद्यभिमानिन्युपपत्तेः । यमात्मा न वेदेति चेतनस्य पृथगुक्तेरिति द्रष्टव्यम् । **पृथिव्याद्यविदितत्वतदन्तरत्वाख्येति** । यं पृथिवी न वेद इत्यादिश्रुत्युदाहरणादौ अविदितोऽन्तरश्च इत्युत्तरभाष्यबलात् तद्धर्मव्यपदेशादिति भाष्यमेवं व्याख्यातमिति बोद्धव्यम् । **अधिदैवत्वेन जडत्वाभावादिति** । यं पृथिवी न वेद इत्यादौ पृथिव्यादेः जडस्य ज्ञानमात्राभावेन विशिष्य यमित्यस्य वैयर्थ्यमप्रसक्तप्रतिषेधापातः यमात्मा न वेदेति प्रायपाठानुपपत्तिश्चेति भावः । **प्रकृतेरिति** । तथा च तेन पृथिव्यादिजीवेन साकल्येनावेद्यत्वं हरेरेवेति भावः ।

## वाक्यार्थविवरणम्

शरीरशब्दस्य स्वरूपे प्रयोगश्च इदं पूर्वपक्षशरीरमित्यादौ दृष्टम् ।

## वाक्यार्थमञ्जरी

॥ **काण्वमाध्यन्दिनेति** ॥ यः पृथिव्यां तिष्ठन्नित्यादिवाक्यस्योभयत्रापि पाठादेवमुक्तम् । यो भगवान्पृथिव्यां पृथिव्यभिमानिदेवतायां तिष्ठन्पृथिव्या अन्तरोऽविविक्तः यमन्तर्यामिणं पृथिवी न वेद यस्य पृथिवी शरीरम् । तद्वशत्वादेः । न केवलं तत्र स्थितिमात्रं किन्तु यो अन्तरो बाह्यापेक्षां विना रमत इति वा रमयति वाऽन्तरः । पृथिवीं यमयति य एष भगवांस्ते तव आत्मा नियामकः । अमृतो नित्योऽन्तर्यामीति गौतमं प्रति याज्ञवल्क्यवचनं तदेवोपपादयति ॥ **शरीरशब्दस्येति** ॥ इदं पूर्वपक्षशरीरमित्यादाविति शेषः ॥ **न चेति** ॥ पृथिव्यभिन्नायाः पृथिवीस्थत्वायोगादिति भावः ॥ **इत्यादिनेति** ॥ कारणेषु स्थितं कार्यं व्याप्तं कार्येषु कारणमिति गीतातात्पर्यस्मृत्येत्यर्थः । तयोर्भिन्ना-भिन्नत्वेन भेदस्यापि सत्वादिति भावः । नन्वथापि पृथिवीं यमयेदित्युक्तपृथिवीनियामकत्वं कथमित्यत आह ॥ **पृथिवीमिति** ॥ कार्यस्य कारणाधीनत्वादिति भावः ॥ अतिसुघत्वादिति । पृथिव्याद्यभिमानित्वेन तच्छरीरत्व तन्नियामकत्वादीनामुपपादकनिरपेक्षत्वादित्यर्थः । कयापि विधयेत्येतदेवाह ॥ **तस्येति** ॥ उररीकारेण अङ्गीकारेण ॥ **कथञ्चिदिति** ॥ प्रकृत्यादेः स्वरूपनाशरहितत्वेनेत्यर्थः ॥ ॐ अन्तर्या-म्यधिदैवादिषु तद्धर्मव्यपदेशात् ॐ ॥ अधिदैवादिपदेन तत्प्रकरणं लक्ष्यते । अन्तर्यामी विष्णुरेव । अधिदैवाधिभूतादिप्रकरणेषु तस्यान्तर्यामिणः सम्बन्धितया तस्य ब्रह्मणो धर्मस्य पृथिव्याद्यविदितत्वादे-र्व्यपदेशादित्यर्थः । अधिदैवत्वेन अभिमानिदेवत्वेन । अन्यथा जडे ज्ञानाप्रसक्त्या यं पृथिवी न वेदेत्यादेः अप्रसक्तप्रतिषेधकत्वापत्तिरिति भावः ॥ **न चेति** ॥ धरायाः प्रकृतिस्वस्वरूपज्ञत्वादिति भावः ॥

## विवृतिः

अत्र चक्षुरन्तस्थस्य ब्रह्मत्वे हेतूकृतामृतत्वाक्षेपेण पूर्वपक्षोत्थानादनन्तरसङ्गतिरिति भाष्य एवोक्तम् । अन्तर्यामिणि पृथिव्यादिशरीरत्वश्रवणेऽपि प्रकृतेरन्तर्यामित्वं कथमागतमित्यत आह ॥ **तस्य चेति** ॥ ननु पृथिव्यादिशरीरत्वं कथं प्रकृतावित्यत आह ॥ **प्रकृतेश्चेति** ॥ पृथिव्याद्यात्मकत्वरूपं तत्प्रकृतेरप्युपपद्यत एव । ननु शरीरत्वं कथं घटत इत्यत उक्तं **शरीरशब्दस्येति** ॥ इदं पूर्वपक्षे शरीरमित्यादौ शरीरशब्दस्य स्वरूपेऽपि प्रयोगात्प्रकृतेरपि तत्सम्भवतीति भावः । यद्यपि दिगादिशरीरत्वं प्रकृतौ न मुख्यं दिगादेर-

(विवृतिः)

प्राकृतत्वात् । तथापि गौणं तदस्तु ब्रह्मणस्तु पृथिव्यादिशरीरत्वमपि न मुख्यमिति भावः । भाष्ये यः पृथिवीमन्तरो यमयमयतीत्यंशोदाहरणस्य प्रयोजनमाह ॥ **न च य इति ॥ कारणस्येति** ॥ न च प्रागुक्तपृथिव्याद्यात्मकत्वासम्भवः । कार्यकारणयोर्भिन्नाभिन्नत्वेनाभेदेन तदात्मकत्वस्य भेदेन तत्स्थत्वस्य चाविरुद्धत्वादिति भावः ॥ तथापि प्रकृतेर्जडत्वेन पृथिव्यादिनियामकत्वमनुपपन्नमत आह ॥ **पृथिवीमिति** ॥ कार्यस्य कारणाधीनत्वादिति भावः । आत्मनियामकत्वाविदितत्वादिकन्तु आत्मप्रवृत्तेः शरीरद्वारा प्रकृत्यधीनत्वेन अप्रतर्क्यमविज्ञेयमित्यादिना प्रकृतेर्दुर्विज्ञेयत्वेनोपपन्नमिति भावः । **अतिसुघटत्वादिति** ॥ जीवानां पृथिव्याद्यभिमानित्वेन तच्छरीरत्व, तन्नियामकत्वादीनामुपपादन-निरपेक्षत्वादिति भावः । नन्वमृतत्वं प्रकृतौ कथमित्यत आह ॥ **अमृतत्वस्येति** ॥ प्रकृत्यादेः स्वरूपनाशराहित्येनेत्यर्थः । उपलक्षणमेतत् । पृथिव्याद्यभिमानित्वादिकमप्युपपन्नमिति बोध्यम् । **पृथिव्याद्यविदितत्वतदन्तरत्वाख्येति** ॥ यं पृथिवी न वेदेत्यादिश्रुत्युदाहरणादाव-विदितोऽन्तरश्चेत्युत्तरभाष्यबलात् तद्धर्मव्यपदेशादिति भाष्यमेवं व्याख्यातमिति बोध्यम् । **अधिदैवत्वेन जडत्वाभावादिति** ॥ यं पृथिवी न वेदेत्यादौ पृथिव्यादेर्जडत्वे जडस्य ज्ञानमात्राभावेन विशिष्य यमित्यस्य वैयर्थ्यं अप्रसक्तप्रतिषेधापत्तिः । यमात्मानं वेदेति प्रायपाठानुपपत्तिश्चेति भावः ॥ **प्रकृतेरिति** ॥ तथाच तेन पृथिव्यादिजीवेन साकल्येनावेद्यत्वं हरेरेवेति भावः ।

## सूत्रभाष्यम्

**॥ ॐ न च स्मार्तमतद्धर्माभिलापात् ॐ ॥ १९ ॥**

**त्रिगुणत्वादिप्रधानधर्मानुक्तेर्न स्मृत्युक्तं प्रधानमन्तर्यामि ॥ १९ ॥**

## तत्त्वप्रदीपिका

**ॐ न च स्मार्तमतद्धर्माभिलापात् ॐ । त्रिगुणत्वजडत्वाद्यभिलापाभावान्न प्रधानमत्रोक्तम् । कपिल-स्मरणमात्रपरिकल्पितं न श्रुतियुक्त्युपेतमिति स्मृत्युक्तमित्युक्तम्ः। आत्मत्वामृतत्वादृष्टत्वद्रष्टृत्वाद्यतद्धर्माभि-लापाच्च ॥**

## तत्त्वप्रकाशिका

एवं निरवकाशलिङ्गेन विष्णोरन्तर्यामित्वं समर्थ्य यदुक्तं प्रकृतेरन्तर्यामित्वमिति तदपाकुर्वत्सूत्रमुपन्यस्य व्याचष्टे ॥ **न चेति** ॥ स्मार्तं कापिलस्मृतौ पृथिव्याद्यात्मकतयोक्तं प्रधानं नान्तर्यामि अविदि-

(तत्त्वप्रकाशिका)
तत्वाद्यनन्यथासिद्धविष्णुधर्मवत् त्रिगुणत्वोपादानत्वादिप्रधानधर्मोक्त्यभावादित्यर्थः । चशब्दो विष्णुरेवान्तर्यामी न तु प्रधानमिति तुशब्दार्थः ॥ १९ ॥

## भावदीपः

ॐ न च स्मार्तमतद्धर्माभिलापात् ॐ ॥ स्मार्तमित्युक्तिः पूर्वपक्षयुक्तिसूचनायेति भावेन व्याचष्टे ॥ **स्मार्तमिति** ॥ सौत्रपदानुवादोऽयम् । कापिलेत्यादि भाष्यपदव्याख्या । सूत्रे तदिति स्मार्तं परामृश्यते ततोऽन्यदेतत् ब्रह्म तद्धर्माभिलापादित्युक्तौ पूर्वेण पौनरुक्त्यं मत्वा भाष्ये अतदिति नञः प्रसज्यप्रतिषेधार्थतयाऽभिलापपदेनान्वयमुपेत्य अनुक्तेरित्युक्तमिति भावेन व्याचष्टे ॥ **अविदितत्वेति** ॥ अकर्तरि च कारके संज्ञायाम् इत्यादाविव नञः समास इति भावः । शरीरत्वं च सावकाशयिष्याम इति भावः । जीवसमुच्चायक इति भ्रान्तिं निराह ॥ **चशब्द चेति** ॥ तत्वप्रदीपे तु आत्मत्वामृतत्वादृष्टत्वद्रष्टृत्वाद्यतद्धर्माभिलापाच्चेति सूत्रोक्तांशस्य वृत्त्यन्तरमुक्तं न च पौनरुक्त्यम् । आद्यसूत्रोपात्तलिङ्गाल्लिङ्गान्तराणामेवात्र गृहीतेरिति भावः ॥ १९ ॥

## अभिनवचन्द्रिका

अत्र गुणसूत्रम् – 'न च स्मार्तमतद्धर्माभिलापा'दिति । कथमिदं विज्ञायते । तद्धर्माभिलापाभावादिति आहोस्वित् तद्विरुद्धधर्माभिलापादिति । किं चातः । यदि विज्ञायते तद्धर्माभिलापाभावादिति तर्ह्यसिद्धिः प्राप्नोति । पृथिवी शरीरमित्यादिना पृथिव्याद्यात्मकत्वरूपतद्धर्माभिलापात् । यदि विज्ञायते तद्विरूद्धधर्माभिलापादिति तर्हि पूर्वसूत्रेण गतार्थता प्राप्नोति । तत्रैव विरुद्धधर्माभिलापस्योक्तत्वादिति चेत्, उच्यते – एतदेवं विज्ञायते तद्धर्माभिलापाभावादिति । ननु चोक्तमसिद्धिः प्राप्नोतीति । नैष दोषः – पृथिव्यादिशरीरत्वादीनां सावकाशत्वेनाऽतद्धर्मत्वात् । तदुपदेशेऽपि असाधारणधर्माभिलापाभावेनासिद्धेरभावात् । तदुक्तं – भाष्यकृता – 'त्रिगुणत्वादिप्रधानधर्मानुक्ते'रिति । **चशब्दो विष्णुरेवेति** ॥ 'न च स्मार्तमतद्धर्माभिलापा'दिति सूत्रगतश्चशब्दः 'विष्णुरेवान्तर्यामी न तु प्रधान'मिति अभियुक्तप्रयोगान्तर्गततुशब्दार्थाभिधायक इत्यर्थः । यथा तत्र तुशब्दः सम्भावितत्वरूपविशेषवाचकः तथाऽत्रापीति भावः । एवं च स्मार्तं तु सम्भावितं प्रधानं नान्तर्यामि तद्धर्माभिलापाभावादिति योजनोक्ता भवतीति द्रष्टव्यम् । एतेन तुशब्दस्य विष्णुरेवान्तर्यामी न तु प्रधानमित्ये तावदर्थानभिधायकत्वात् विष्णुरेवान्तर्यामीत्यस्य पूर्वसूत्रार्थत्वात् न प्रधानमित्यस्य न स्मार्तमिति पदलभ्यत्वात् सर्वस्यैतस्य तुशब्दार्थत्वमभिधाय तदर्थाभिधायित्यकथनमयुक्तमिति परास्तम् ।

(अभिनवचन्द्रिका)

**पूर्वपक्षस्तु–** प्रकृतिरेवान्तर्यामी । 'यस्य पृथिवीशरीर'(बृ.५-७-३)मित्यादिना पृथिव्यादिशरीरत्वव्यपदेशात् । शरीरशब्दस्य स्वरूपेऽपि प्रयोगदर्शनेन तस्य तत्रोपपत्तेः । न च 'यः पृथिव्यां तिष्ठ'(बृ.५-७-३)न्नित्यादिपृथिव्यादिस्थत्वोक्तिविरोधः । व्याप्तं कार्येषु कारण'मिति तस्य तत्रोपपत्तेः । न च प्रकृतेरचेतनत्वेन पृथिव्यादिनियामकत्वायोगः । कार्यस्य कारणाधीनत्वेन अचेतनप्रकृतेरपि नियामकत्वोपचारोपपत्तेः । न चामृतत्वाविरोधः । तस्य विष्णाविव अत्रापि योगेनोपपत्तेः । तत्तज्जीवानां वा एतदन्तर्यामित्वं, पृथिव्यादिशरीरत्वादेः तेष्वतिसुघटत्वात् । ततश्च प्रकृत्यादेरेवान्तर्यामित्वेन तत्र श्रुतममृतत्वं नाक्षिस्थस्य विष्णुत्वसाधकमिति ।

**सिद्धान्तस्तु–** विष्णुरेवान्तर्यामी । तस्य पृथिव्यादिदेवताऽविदितत्वान्तरत्वाख्यधर्मव्यपदेशात्, न प्रकृतिजीवौ । विष्ण्वसाधरणपृथिव्या अविदितत्वादिधर्मोपदेशवत् प्रकृतिजीवासाधारणात्रिगुणत्वसांसारिकत्वादिधर्मानभिलापात् । काण्वमाध्यन्दिनाभ्यां 'आत्मनोऽन्तर इति' विज्ञानादन्तर, (बृ.५-७) इति च जीवस्य भेदेन व्यपदेशाच्च । अतोऽन्तर्यामी विष्णुरेवेति स एवामृतोऽक्षिस्थश्चेति सिद्धम् ॥

## वाक्यार्थमुक्तावली

ॐ न च स्मार्तमतद्धर्माभिलापात् ॐ ॥ प्रधानमिति वक्तव्ये पूर्वपक्षे युक्तिं सूचयितुं स्मार्तमित्युक्तमित्यभिप्रेत्याह ॥ **कापिलस्मृताविति** ॥ शरीरत्वोक्तिः स्वरूपत्वाभिप्रायेणेत्येतत् प्रमापयितुं पृथिव्याद्यात्मकतयोक्तमित्युक्तम् । सूत्रे चस्त्वर्थे । अन्तर्यामीत्यनुवर्तते । स्मार्तं कापिलस्मृतौ पृथिव्यादिशरीरतयोक्तं प्रधानं तु नान्तर्यामि । कुतः । अतद्धर्माभिलापात् । तस्य स्मार्तस्य धर्माणां त्रिगुणत्वादीनाम् अभिलापाभावादिति सूत्रार्थः ।

## तत्त्वसुबोधिनी

चशब्दः तुशब्दार्थ इत्यन्वयः । तदेवाह ॥ **विष्णुरेवेति** ॥

## वाक्यार्थमञ्जरी

ॐ न च स्मार्तमतद्धर्माभिलापात् ॐ ॥ स्मार्तं प्रधानं नान्तर्यामि । त्रिगुणत्वादितद्धर्मानभिधानादित्यर्थः । पृथिवीशरीरत्वादितद्धर्माभिलापात्कथमतद्धर्माभिलाप इत्यत उक्तम् ॥ **अनन्यथासिद्धेति** ॥ तस्य त्वन्यथासिद्धिं वक्ष्यतीति भावः ॥

## विवृतिः

चशब्दस्तुशब्दार्थ इत्यन्वयः । तदेवाह ॥ विष्णुरेवेति ॥

## सूत्रभाष्यम्

**॥ ॐ शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॐ ॥ २० ॥**

'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः' (बृ. माध्यन्दिनपाठः) 'यो विज्ञाने तिष्ठन् विज्ञानादन्तरो यं विज्ञानं न वेद यस्य विज्ञानं शरीरम्' (बृ. ५-७-२२) इत्युभयेऽपि हि शाखिनो भेदेनैनमधीयते ।

'शीर्यते नित्यमेवास्माद्विष्णोस्तु जगदीदृशम् ।
रमते च परो ह्यस्मिन् शरीरं तस्य तज्जगत्' ॥

इति वचनान्न शरीरत्वविरोधः ॥ २० ॥

## तत्त्वप्रदीपिका

ॐ शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॐ । अतद्धर्माभिलापादेव तत्तज्जीवाशङ्कायां निरस्तायां योगिजीवमन्तर्यामिणमाशङ्क्यमानं विशेषयुक्त्या निराकरोति । उभयेऽपि हि शाखिनो माध्यन्दिनाः काण्वाश्चाविशेषितं जीवमन्तर्यामिणो भेदेनाधीयत इति । चकारात् ''यस्तेजसि तिष्ठन्'' ''यस्तमसि तिष्ठन्'' इत्यादिश्रीदुर्गारूपायाश्चित्प्रकृतेश्च भेदेनाधीतत्वान्न चित्प्रकृतिरन्तर्यामिणीत्यभिप्रायः ॥ इत्यन्तर्याम्यधिकरणम् ।

## तत्त्वप्रकाशिका

यज्जीवोऽन्तर्यामीत्युक्तं तदपि संसारित्वाद्यतद्धर्माभिलापादिना निरस्तमपि विशेषयुक्त्या पराकुर्वत्सूत्रमुपन्यस्य व्याचष्टे ॥ **शारीरश्चेति** ॥ चशब्दान्नञः समाकर्षः । 'आत्मनोऽन्तर' इति माध्यन्दिनाः 'विज्ञानादन्तर' इति काण्वाश्च जीवमन्तर्यामिणः सकाशाद्भेदेनाधीयते हि यस्मादतो न शारीरश्चान्तर्यामीत्यर्थः । आत्मनः सकाशादन्तरो विविक्तः । विज्ञानपदेन शारीरः कुत इति चेत् । उदाहृतश्रुतिसमाख्यानादेव । ननु विष्णावसम्भाव्यमानपृथिव्यादिशरीरत्वस्य प्रधानादिधर्मस्यात्रोक्तेः कथं

(तत्त्वप्रकाशिका)

**विष्णोरन्तर्यामित्वम् । कथं च प्रधानादिधर्मानभिलाप इत्यत आह ॥ शीर्यत इति ॥ यद्यपि त्रिष्णौ नोक्तप्रकारद्वयेन पृथिव्यादिशरीरत्वोपपत्तिः तथापि योगवृत्त्या तस्मिन् पृथिव्यादिशरीरत्वव्यपदेशोपपत्तेः न तद्विरोधो विष्ण्वन्तर्यामित्वस्य । नाप्यतद्धर्माभिलापोक्तेः विरोध इति भावः । यद्यपि योगाद्रूढेः प्राबल्यं तथापि निरवकाशाविदितत्वादिलिङ्गबलेन योगाङ्गीकारो युज्यते । अतोऽन्तर्यामी विष्णुरेवेति स एव अमृतोऽक्षिस्थश्चेति सिद्धम् ॥ २० ॥ अ. ५ ॥**

# गुर्वर्थदीपिका

'भेदेनैनमधीयत' इति भेदस्य श्रुतौ पठ्यमानत्वकथनादन्तरशब्दोऽत्र भेदवाचीति भावेनोक्तम् । **अन्तरो विविक्त इति ।** 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये' इत्यभिधानादन्तरः अन्तरवान्भिन्न इत्यर्थः । केवलभेदवाचित्वे पुल्लिङ्गं न स्यादिति भावः ॥

# भावबोधः

**संसारित्वाद्यतद्धर्माभिलापादिनेति ।** अनेन 'च स्मार्तम्' इति सूत्रे स्मार्तपदं शरीरोपलक्षणमिति सूचितं भवति । आत्मनोऽन्तर इत्येतज्जीवस्यान्तर्गत इत्यन्यथाप्रतीतिनिरासाय व्याचष्टे । **आत्मनः सकाशादन्तरो विविक्त इति ।**

नन्वात्मविज्ञानपदाभ्यामविशेषितजीवग्रहणे आत्मा विज्ञानमिति च सर्वजीवाभिमानवान् ब्रह्मैवोक्त इति बृहदारण्यकभाष्यविरोध इति चेत्, न; पूर्वपक्षे यमात्मनीत्यादौ आत्मादिशब्दस्याभिमानिपरत्वे, यः पृथिव्यामित्यादौ पृथिव्यादिशब्दस्यापि प्रायपाठेन तदभिमानिपरत्वापातेन यः पृथिव्यामित्यादेरेव भेदप्रतिपादकत्वप्रसङ्गात्, पूर्ववादिना पृथिव्यादिशब्दानां जडपरता, आत्मविज्ञानशब्दयोस्तु शरीरपरता वाच्या । न चतुर्मुखपरतेत्यन्तं प्रति आत्मनीत्यादेस्तेनान्तर्यामितया शङ्कितशरीरस्याऽन्तर्यामिणः सकाशाद् भेदप्रमाणत्वेनोक्तत्वादिति भावः । **निरवकाशाविदितत्वादिलिङ्गबलेनेति ।** अनेन पृथिव्यादिशरीरत्वं च न निरवकाशम् । यौगिकशरीरत्वोपपत्तेर्विष्णोरपीति न्यायविवरणं व्याख्यातं भवति । **योगाङ्गीकारो युज्यत इति ।** न चायं योग आत्मविज्ञानपदोक्ते चेतने दिगाद्यचेतने च सम्भवतीति वाच्यम्; चेतनस्यापि देहद्वारा दिगादेरप्यवान्तराभिमानिदेहादिद्वारा शीर्णताया विद्यमानत्वादिति भावः । अत्राऽऽद्ये स्वपक्षसाधकोक्तिः । द्वितीये– परपक्षसाधकाभावोक्तिः स्मार्तमित्यन्तरं शारीरश्चेत्युत्तरसूत्रादाकर्षणात्, तृतीये– जीवपक्षे बाधकोक्तिरिति सूत्रक्रमः ॥

## भावदीपः

ॐ शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॐ ॥ **निरस्तमपीति** ॥ शारीरश्चेत्यपि पूर्वत्राकृष्य व्याख्येयमिति भावः ॥ **विशेषेति** ॥ तेन न पौनरुक्त्यमिति भावः । विशेषयुक्त्या निराकरणं च योगिजीवस्यान्तर्यामि(त्व)शङ्कानिरासार्थमित्युक्तं तत्वप्रदीपे । तथा चकारात् यस्तेजसि तिष्ठन्नित्यादि-भेदाध्ययनाच्चित्प्रकृतिर्नान्तर्यामीति समुच्चयार्थ इत्यप्युक्तम् । भाष्योक्तकृत्स्नवाक्ये भेदोक्त्यंशं दर्शयन् सूत्रभाष्ययोरर्थमाह ॥ **आत्मन इति** ॥ हीति सौत्रानुवादेन यस्मादिति व्याख्या । पूर्वमन्तर इत्यस्यान्तरत्वाख्यलिङ्गार्पकतया व्याख्यानेऽपि इह आत्मानमन्तर इत्यस्यापि उक्तत्वेन अपौनरुक्त्या-याऽऽत्मन इत्यादिपञ्चम्युपपत्तये साक्षाद्भेदोक्तिलाभाय चार्थमाह ॥ **विविक्त इति** ॥ अद्भ्योऽन्तर इत्यादिप्रकरणबलात् पञ्चम्यन्तत्वेऽपि स्पष्टत्वात् सकाशादित्युक्तम् । अन्तरशब्दस्योदरमन्तरं कुरुत इत्यादाविव भेदार्थत्वेऽपि धर्मधर्म्यभेदाद्वा अर्शआद्यच्प्रत्ययान्तत्वेन वा विविक्त इत्युक्तम् । अन्यथान्तर-मवकाशावधिपरिधानान्तर्धिभेदसादृश्य इत्यमरोक्तेः पुल्लिङ्गं न स्यात् । भाष्ये समग्रवाक्योक्तिः शाखयोरैकरूप्येण समाख्यात्वसिद्ध्या विज्ञानपदमात्मपदवत् जीवार्थकमिति दर्शनाय वा । आत्मनि तिष्ठन्नित्यादिना सर्वेणाप्याधाराधेयभावकर्मकर्तृभावशरीरशरीरिभावादिना भेदाध्ययनसूचनाय वा । अत एव समाख्यानादिति वक्ष्यतीत्याहुः । पूर्वमधिदैवेत्युक्त्या पृथिव्यादेश्चेतनत्वावगमेन पृथिव्या अन्तर इति प्राथमिकवाक्योक्त्यापि जीवान्तर्यामिणोर्भेदसिद्धौ चेतनत्वेनोभयसंमतत्वादात्मनीति वाक्यमुक्तं भाष्ये । आत्मा विज्ञानमिति च सर्वजीवाभिमानवान् ब्रह्मैवोक्त इति बृहद्भाष्ये तु सर्वजीवनियामकाद्धिरिञ्चादपि भिन्नोऽन्तर्यामी किमु जीवादिति कैमुत्यायार्थान्तरमुक्तम् । अत एव तत्रैव षष्ठे यो विज्ञाने तिष्ठन्य आत्मनि तिष्ठन्नित्याद्युभयोर्जीवाभिप्रायेण पाठ इत्यप्युक्तम् । अधिकं चन्द्रिकायाम् । कथं शीर्यत इति वचनेनोक्तशङ्कानिरासः । तदात्मकत्वतद्देहत्वयोरन्यतरस्यापि विष्णावसमाधानादित्यतः पृथिव्यादि-शरीरत्वमपि न निरवकाशम् । यौगिकशरीरत्वोपपत्तेर्विष्णोरपीति न्यायविवरणरीत्या भावमाह ॥ **यद्यपीति** ॥ **उक्तप्रकारेति** ॥ तदात्मकत्वतद्देहकत्वप्रकारद्वयेनेत्यर्थः । आत्मादेरपि देहादिद्वारा शीर्यताऽ-स्त्येवेति यस्यात्मा शरीरमित्याद्युपपत्तिरिति भावः । बृहद्भाष्ये तु पृथिव्याद्या देवतास्तु देहवद्वशत्वतः । शरीरमिति चोच्यन्ते यस्य विष्णोर्महात्मन इति यत् गौणशरीरत्वरूपं समाध्यन्तरमुक्तं तत्तु पुराणादौ जगतो ब्रह्मकायत्वाद्युक्तेरपि निर्वाहार्थम् । तत्र शीर्यतारूपयोगासम्भवादिति ज्ञेयम् । तथापीत्याद्यङ्गी-कारवादः । वस्तुतस्त्वङ्गरूढ्यपेक्षया स्मृत्युक्तयोगप्राबल्यस्य कम्पनादित्यत्र व्युत्पादयिष्यमाणत्वात् ।

(भावदीपः)

स्मार्तयोगादेव पौराणिकरूढेरपि भावाच्च । अत एव भाष्ये इति च्यवनादिति योगस्य वाचनिकत्वमुक्तम् ॥ **निरवकाशेति** ॥ जन्मादिनयरीत्येति भावः ॥ **अत इति** ॥ निरवकाशानेकलिङ्गसत्वात् परपक्षे साधकाभावाद्बाधकभावाच्चेति सूत्रत्रयोक्तहेत्वंशार्थः । स एवेति फलोक्तिः ॥ २० ॥ अ० ५ ॥

## वाक्यार्थमुक्तावली

ॐ शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॐ ॥ **निरस्तमपि विशेषयुक्त्येति** ॥ साधकाभावेन निरस्तमपि बाधकरूपविशेषयुक्त्येत्यर्थः । पूर्वसूत्रे जीवनिरासश्च स्मार्तपदस्य शारीरोपलक्षणया वा शारीरश्चेत्युत्तरसूत्रानुकर्षणेन वेति बोध्यम् । नन्वात्मविज्ञानपदाभ्यामविशेषितजीवग्रहणे आत्मा विज्ञानमिति च सर्वजीवाभिमानी ब्रह्मैवोक्त इति बृहदारण्यकभाष्यविरोध इति चेन्न । पूर्वपक्षरीत्याऽऽत्मविज्ञानपदयोः अविशेषितजीवपरत्वमङ्गीकृत्य भेदव्यपदेशोपपत्तेरिति भावबोधकृतां पक्षः । समाधानान्तरं तु प्रमेयमुक्तावल्याम् अस्माभिर्निपुणतरं विभावितमनुसन्धेयम् । सूत्रार्थं स्पष्टमाह ॥ **चशब्दान्नञः समाकर्प इत्यादिना** ॥ **योगाङ्गीकारो युज्यत इति** ॥ अयं च योग आत्मविज्ञानपदोक्तचेतने दिगाद्यचेतने च कथं घटते इति चेन्न । चेतनस्य देहद्वारा दिगादेरपि अवान्तराभिमानिदेहद्वारा शीर्यतोपपत्तेरिति भावः । अत्राद्ये स्वपक्षे साधकोक्तिः द्वितीये परपक्षे साधकाभावोक्तिः, तृतीये जीवपक्षे बाधकोक्तिरिति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

**संसारित्वादीति** ॥ अनेन न च स्मार्तमिति सूत्रे स्मार्तपदं शरीरोपलक्षणमिति सूचितं भवति । अत्मनोऽन्तर इत्येतत् जीवस्यान्तर्गत इत्यन्यथाप्रतीतिनिरासाय व्याचष्टे ॥ **आत्मनः सकाशादिति** ॥ **उदाहृतेति** ॥ य आत्मनि तिष्ठन्निति उदाहृतश्रुतिव्याख्यानादित्यर्थः । **उक्तप्रकारद्वयेनेति** । पृथिव्याद्यात्मकत्वं वा पृथिव्यादेरेव शरीरत्वमित्युक्तप्रकारद्वयेनेत्यर्थः ॥ **नाप्यतद्धर्माभिलापोक्तेरिति** ॥ तद्धर्माभिलापाभावोक्तेरित्यर्थः । शीर्यते इति भाष्ये शीर्यते तच्छरीरमन्ते अस्मिन्निति रम् । शरी च तत् रं च शरीरमिति विग्रहः सूचितः ॥ **यद्यपीति** ॥ योगापेक्षया रूढेर्बलवत्वात् रूढेरेव पृथिव्यादिशरीरत्वं ग्राह्यम् । तच्च विष्णावनुपपन्नम् इति भावः । **योगाङ्गीकार इति** ॥ न चायं योग आत्मविज्ञानपदोक्ते चेतने एवं दिगाद्यचेतने च न सम्भवतीति वाच्यम् । चेतनस्यापि देहद्वारा दिगादेरप्यवान्तराभिमानिदेहादिद्वारा शीर्णतायाः विद्यमानत्वादिति भावः । आद्ये सूत्रे स्वपक्षविषयवाक्यगतलिङ्गरूपसाधकोक्तिः । द्वितीये परपक्षसाधकाभावोक्तिः । तृतीये जीवपक्षे बाधकोक्तिरिति सूत्रक्रमः ।

(तत्त्वसुबोधिनी)

सूत्राक्षरार्थस्तु अन्तर्यामी विष्णुरेव । अधिदैवादिप्रकरणेऽन्तर्यामिनिष्ठत्वेन पृथिव्याद्यविदितत्वादि-धर्मव्यपदेशादित्यर्थः । न चैवं लक्षणापातः वैय्यर्थ्यादपि तस्य ज्यायस्त्वात् प्रकरण इत्यनेन अभ्यास-द्योतनात् ॥ ५ ॥

## वाक्यार्थविवरणम्

**उक्तप्रकारद्वयेनेति** ॥ प्रकृतेः पृथिव्यादिसर्वात्मकत्वेन पृथिवीशरीरत्वं, तदभिमानिजीवस्य पृथिव्यादिशरीरत्वमतिसुघटमिति प्रकारद्वयेनेत्यर्थः ॥ १, २, ५ ॥

## वाक्यार्थमञ्जरी

ॐ शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॐ ॥ शारीरो जीवश्च नान्तयामी हि यस्मादेनं जीवमुभये माध्यन्दिनकाण्वशाखाः प्रकृतान्तर्यामिणः सकाशाद्भेदेन प्रतिपादयन्ति तस्मादित्यर्थः ॥ आत्मनोऽन्तर इत्येतज्जीवस्यान्तर्गत इति प्रतीतिनिरासाय व्याचष्टे ॥ **आत्मन इति** ॥ **उदाहृतेति** ॥ य आत्मनीत्युदाहृतेत्यर्थः । भाष्ये शीर्यते विदार्यते ॥ **युज्यत इति** ॥ सति बाधके मुख्यार्थत्यागस्य न्याय्यत्वादिति भावः ॥ ५ ॥

## विवृतिः

**संसारित्वादीति** ॥ अनेन, नच स्मार्तमिति सूत्रे स्मार्तपदं शरीरोपलक्षणमिति सूचितं भवति । आत्मनोऽन्तर इत्येतज्जीवस्यान्तर्गतमित्यन्यथाप्रतीतिनिरासाय व्याचष्टे ॥ **आत्मनः सकाशादिति** । **उदाहृतेति** ॥ य आत्मनि तिष्ठन्नित्युदाहृतश्रुतिसमाख्यानादित्यर्थः । **उक्तप्रकारद्वयेनेति** ॥ पृथिव्याद्यात्मकत्वं वा, पृथिव्यादेरेव शरीरत्वमित्युक्तप्रकारद्वयेनेत्यर्थः । **नाप्यतद्धर्माभिलापोक्तेरिति** । तद्धर्माभिलापाभावोक्तेरित्यर्थः ॥ शीर्यत इति भाष्ये शीर्यते तच्छरीरि रमतेऽस्मिन्निति रं शरीरि चतद्रश्चेति विग्रहः सूचितः । **यद्यपीति** ॥ योगापेक्षया रूढेः प्रबलत्वाद्रूढमेव पृथिव्यादिशरीरत्वं ग्राह्यं तच्च विष्णावनुपपन्नमिति भावः । **योगाङ्गीकार इति** ॥ न चायं योग आत्मविज्ञानपदोक्तचेतने दिगाद्यचेतने च न सम्भवतीति वाच्यम् । चेतनस्यापि देहादिद्वारा, दिगादेरप्यभिमानिदेहादिद्वारा शीर्णताया विद्यमानत्वादिति भावः ॥ अत्राद्ये सूत्रे स्वपक्षे विषयवाक्यगतलिङ्गरूपसाधकोक्तिः । द्वितीये परपक्षे साधकाभावोक्तिः । तृतीये जीवपक्षे बाधकोक्तिरिति सूत्रक्रमः । सूत्राक्षरार्थस्तु अन्तर्यामी

(विवृतिः)
विष्णुरेव अधिदैवादिप्रकरणेऽन्तर्यामिनिष्ठत्वेन पृथिव्याद्यविदितत्वादिधर्मव्यपदेशादित्यर्थः ।। न नैवं लक्षणापातः । वैयर्थ्यादपि तस्या ज्यायस्त्वात् प्रकरण इत्यनेनाभ्यासद्योतनात् ।।

।। इति अन्तर्याम्यधिकरणम् ।।

## ६. अदृश्यत्वाधिकरणम्

अदृश्यत्वादिगुणा विष्णोरुक्ताः । तत्र 'यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम् । नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीरा' (मुं.उ. १-१-६) इत्युक्त्वा, 'यथोर्णनाभिस्सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति । यथा सतः पुरुषात्केशलोमानि तथाऽक्षरात्सम्भवतीह विश्वम्' (मुं.उ.१-१७) इत्युक्त्वा तस्माच्च 'अक्षरात्परतः पर' (मुं.उ.३-१-२) इति परः प्रतीयत इत्यतोऽब्रवीत् ।

**।। ॐ अदृश्यत्वादिगुणको धर्मोक्तेः ॐ ।। २१ ।।**

पृथिव्यादिदृष्टान्तमुक्त्वा 'अक्षरात्सम्भवतीह विश्वम्' (मुं.उ.१-१-७) इत्यतः परं तत्परतः पराभिधानात्, 'कूटस्थोऽक्षर उच्यत' (भ.गी.१५-१६) इति स्मृतेश्च प्रकृतेः प्राप्तिः । ब्रह्मशब्दात्तत्परतः पराभिध्यानादेव च हिरण्यगर्भस्य । 'तमेवं विद्वानमृत इह भवति' (तै.आ.३-१२-७) । 'तत्कर्म हरितोषं यत्सा विद्या तन्मतिर्यया' 'अथ द्वे वाव विद्ये वेदितव्ये परा चैवापरा च । तत्र ये वेदा यान्यङ्गानि यान्युपाङ्गानि यानि प्रत्यङ्गानि साऽपरा । अथ परा यया स हरिर्वेदितव्यो योऽसावदृश्यो निर्गुणः परः परमात्मा' इत्यादिना तद्धर्मत्वेनावगतपरविद्याविषयत्वोक्तेर्विष्णुरेवादृश्यत्वादिगुणकः ।। २१ ।।

## सत्तर्कदीपावली

अदृश्येऽनात्म्ये इत्यादिना अदृश्यत्वादिगुणा विष्णोरुक्तास्ते चाथर्वणे अक्षरस्योच्यन्ते । यत्तदद्रेश्यमग्राह्यमिति । न चैतदक्षरं विष्णुः । तस्य तस्मात्परत्वेन श्रूयमाणत्वात् । अक्षरात्परतः पर इति । एवं प्राप्ते सूत्रमवतारयति ।। **अदृश्यत्वेति** ।। अदृश्यत्वादिगुणकमक्षरं विष्णुरेव न प्रकृतिहिरण्यगर्भाविति प्रतिपिपादयिषया प्रसक्तिं दर्शयति ।। **पृथिव्यादीत्यादिना** ।। अस्यार्थः । पृथिवीदृष्टान्तेन ह्यक्षरमुच्यमानं प्रकृतिर्भवेत् । कूटस्थोऽक्षर उच्यते । उत्तमः पुरुषस्त्वन्यः इति स्मृत्या प्रकृतेरक्षरत्वेनोच्यमान-

(सत्तर्कदीपावली)
त्वात्। 'ब्रह्मा देवानां प्रथमः सम्बभूव' 'विश्वस्य कर्ता भुवनस्य गोप्ता' 'स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामाथर्वाय ज्येष्ठपुत्राय प्राह' इत्युपक्रम्य श्रूयमाणमदृश्यत्वादिगुणकमक्षरं हिरण्यगर्भो वा भवेत्। तस्मिन्नपि ब्रह्मशब्दसम्भवात् पुरुषोत्तमस्त्वेतदक्षरं न भवत्येव। तस्मात्परत्वेनोपरि श्रूयमाणत्वादित्येतन्निषेधति। तमेवमित्यादिना। अस्यार्थः। अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमिति परविद्याविषयत्ववचनाद्विष्णुरेवादृश्यत्वादिगुणकोऽक्षरः। परविद्याविषयत्वस्य तमेवं विद्वानमृत इह भवतीत्यादिवाक्यान्तरेषु विष्ण्वेकनिष्ठत्वेन तद्धर्मत्वेनोक्तत्वात्। वेदानामपरविद्याविषयत्वं यज्ञाद्यर्थान्तरविषयत्वविवक्षया तेषामेव परविद्याविषयत्वं विष्णुविषयत्वविवक्षयेत्यवगन्तव्यम्। तदुक्तं परमसंहितायाम्।

ऋगाद्या अपरा विद्या यदा विष्णोर्न वाचकाः।
ता एव परमा विद्या यदा विष्णोस्तु वाचका॥ इति।

## तत्त्वप्रदीपिका

अदृश्यत्वादिगुणा इत्यादेरयमर्थः। 'अदृश्येऽनात्म्ये' 'सहैव सन्तं न विजानन्ति देवाः' 'स योऽतोऽश्रुत' इत्यादिनाऽदृश्यत्वादिगुणा विष्णोरुक्ताः। श्रुत्यन्तरे तु 'अथ परा यया तदक्षरमधिगम्यते, यत्तदद्रेश्यमग्राह्यमगोत्रम्' इत्याद्युक्त्वा उत्तरत्र अक्षरात्परतः पर इति वचनात् तस्माददृश्यत्वादिगुणकादक्षरात्परतः परः कश्चिदस्तीति प्रतीयत इति। अनेन भाष्येणाधिकरणसङ्गतिरगादि॥ विषयवाक्यं चोदाहारि। संशयस्थानं चोदभावि। पूर्वपक्षबीजं चासूचि।

ॐ अदृश्यत्वादिगुणको धर्मोक्तेः ॐ॥ तमेव पूर्वपक्षं सहेतुकमिह वर्णयति। ''यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयस्सम्भवन्ति। यथा सतः पुरुषात्केशलोमानि तथाऽक्षरात्सम्भवतीह विश्वम्'' इत्यूर्णनाभिपृथिव्यादिदृष्टान्तेनाक्षरस्य जगदुपादानत्वमुक्त्वोपरि तस्माच्चाक्षरात्परतः परस्याभिधानाज्जडप्रकृतिरदृश्यत्वादिगुणकमक्षरमिति पूर्वपक्षः॥ 'कूटस्थोऽक्षर उच्यत' इति स्मृतेश्चित्प्रकृतिर्वा। 'ब्रह्मा देवानां प्रथमस्सम्बभूव' 'विश्वस्य कर्ता भुवनस्य गोप्ता' 'स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठाम्' इत्यादि ब्रह्मशब्दात्, तस्मात्परस्याः प्रकृतेः परस्य हरेरभिधानादेव च हिरण्यगर्भो वेति। तमेवं विद्वानित्यादिना परिहरति। विष्णुधर्मत्वेन स्पष्टं श्रुत्यन्तरसिद्धं परविद्याविषयत्वब्रह्मत्वामृतत्वादि, तदत्राप्युच्यते, 'अथ परा' 'तदेतदक्षरं ब्रह्म' 'पुरुष एवेदं विश्वं' 'कर्म तपो ब्रह्म परामृतम्' इत्यादिना॥ अतोऽदृश्यत्वादिगुणको विष्णुरेव। आयुर्वेदो धनुर्वेदो गान्धर्वं स्थापत्यं चोपाङ्गानि। शिष्टाः कला विद्याः प्रत्यङ्गानि।

## तत्त्वप्रकाशिका

अत्राऽक्षरशब्दसाहित्येन अन्यत्र प्रसिद्धादृश्यत्वादिलिङ्गानां ब्रह्मणि समन्वयप्रतिपादनादस्ति शास्त्रादि-

(तत्त्वप्रकाशिका)

सङ्गतिः । श्रुत्यादिसङ्गतिं विषयवाक्योदाहरणेन विषयसंशयौ सयुक्तिकं पूर्वपक्षं च सूचयति ॥ **अदृश्यत्वादीति** ॥ 'अदृश्येऽनात्म्य' इत्यानन्दमयस्य अदृश्यत्वादिगुणा उक्ताः । ते चाथर्वणे कस्यचिदक्षरस्योच्यन्ते । 'अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः । यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति । यथा सतः पुरुषात्केशलोमानि तथाऽक्षरात्सम्भवतीह विश्वम्' इति । तेषां च विष्ण्वन्यनिष्ठत्वे प्रागुक्तानन्दमयत्वं चान्यस्यैव स्यादित्यवश्यं निर्णेतव्यता । तददृश्यत्वादिलिङ्गजातमत्र विषयः । विष्णोरन्यस्य वेति सन्देहः । आनन्दमये श्रुतत्वमक्षरशब्दश्च सन्देहबीजम् । न विष्णोरदृश्यत्वादीति तावत्पूर्वः पक्षः । अदृश्यत्वादिगुणकेऽक्षरात्सम्भवतीह विश्वमित्यक्षरशब्दश्रवणात् । तस्य च विष्णौ निरवकाशत्वात् । यतोऽस्मादप्यक्षरादुत्तरवाक्ये परः प्रतीयते ।

'दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः ।
अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः'

इति । न हि विष्णोरपि परोऽस्तीत्यतो न विष्णुरदृश्यत्वादिगुणक इति नानन्दमयोऽपीति भावः ।

सिद्धान्तयत्सूत्रं तावदवतारयति ॥ **अत इति** ॥ अदृश्यत्वादिकं न विष्णोश्चेत्तर्हि वाक्यस्य निर्विषयतयाऽप्रामाण्यं स्यादित्यतः पूर्वपक्षं विशदयति ॥ **पृथिव्यादीति** ॥ अदृश्यत्वादिकं जडप्रकृतेर्भवेत् । अस्याः पृथिव्यादिदृष्टान्तेन उपादानतया जगत्कारणत्वोक्तेः । न चायं कारणत्वमात्रे दृष्टान्त इति वाच्यमित्यतो वाक्यादनन्तरम् अक्षरात्परतः पर इति तस्मात्परतः पराभिधानात् । चेतनप्रकृतेर्वाऽदृश्यत्वादिकम् । तस्यामक्षरशब्दस्य स्मृतिसिद्धत्वात् । न चासौ शब्दः परमात्मन्यपि सम्भवतीति वाच्यम् । तत्परतः पराभिधानात् । तच्च तस्यामक्षरात्परतः पर इति सामानाधिकरण्येनोपपन्नम् । विकारित्वेन जगत्कारणत्ववचनं तस्या विकाराभिमानित्वाद्युज्यते । हिरण्यगर्भस्य वाऽदृश्यत्वादिकम् । स ब्रह्मविद्यामित्यादिब्रह्मशब्दात् । न च ब्रह्मशब्दो विष्णौ मुख्य इति तद्ग्रहणम् । तत्परतः पराभिधानात् । रुद्रस्य वैतददृश्यत्वादिलिङ्गजातम् । कर्तारमीशमिति ईशशब्दश्रवणात् । न च ईशशब्दो विष्णावपि सम्भवतीति तद्ग्रहः । तत्परतः पराभिधानादेवेति भावः । एवं प्राप्तं पूर्वपक्षं प्रतिक्षेप्तुं सूत्रं व्याचष्टे ॥ **तमेवमिति** ॥ अदृश्यत्वादिगुणको विष्णुरेव । अथ परा यया तदक्षरमधिगम्यत इत्यदृश्यत्वादिगुणकस्य परविद्याविषयत्वोक्तेः । परविद्याविषयत्वस्य च श्रुतिस्मृतिभिः विष्णुधर्मत्वेनावगतत्वादित्यर्थः । तमेवमिति श्रुतौ मोक्षसाधनविद्याविषयत्वोक्त्या विष्णोः परविद्याविषयत्वमुक्तं भवति । मोक्षसाधनविद्यायाः परविद्यात्वात् । तत्कर्मेति स्मृतौ च सैव परविद्या यया हरेर्ज्ञानं भवतीति तस्य परविद्याविषयत्वमुच्यते । द्वे विद्ये इत्यत्र च यदा वेदाद्यन्यविषयतया योज्यते तदा तस्याऽपरविद्यात्वम् । यदा पुनरेतैः स हरिर्वेद्यो भवति तदा परविद्यात्वमिति हरेः परविद्याविषयत्वमुच्यते । तदुक्तं

(तत्त्वप्रकाशिका)

'ऋगाद्या अपरा विद्या यदा विष्णोर्न वाचकाः ।
ता एव परमा विद्या तदा विष्णोस्तु वाचकाः' इति ॥ २१ ॥

## गुर्वर्थदीपिका

तस्य च विष्णौ निरवकाशत्वादित्यत्र निरवकाशत्वं विष्णावेवावकाशरहितत्वमित्यर्थः । रुद्रपक्षे त्वक्षराद्रुद्रात्परत उत्तमाच्चतुर्मुखात्पर उत्तम इति पुम्मात्रविवक्षयाऽर्थो द्रष्टव्यः ।

## भावबोधः

ॐ अदृश्यत्वादिगुणको धर्मोक्तेः ॐ ॥ **श्रुत्यादिसङ्गतिमिति** ॥ अदृश्यत्वादिगुणा विष्णोरुक्ता इति भाष्योक्तरीत्या प्रागुक्तपृथिव्याद्यविदितत्वाक्षेपाद् ''अदृश्यत्वाद्यभावाख्यम्'' इत्यनुव्याख्याने ततः परमित्यस्यानुवृत्तौ सत्यां तदुक्तरीत्याऽभावनिरूपणस्य भावनिरूपणानन्तरत्वेनाधिकरणपञ्चकेन भावरूपधर्मविचारं कृत्वात्राभावरूपधर्मविचाराद्वाऽनन्तरसङ्गतिर्द्रष्टव्या ॥ **विष्णोरन्यस्य वेति** ॥ अत्रादृश्यत्वादि किं प्रकृतिविरिञ्चादेरुत विष्णोरिति चिन्ता । तदर्थमदृश्यत्वादिगुणके प्रतीताः पृथिव्यादिदृष्टान्तपूर्वकजगत्कारणत्वप्रतिपादकवाक्याक्षरब्रह्मेशशब्दाः किं जडाजडप्रकृतिविरिञ्चरुद्रविषया उत न इति । तदर्थं तत्समानाधिकरणमक्षरात्परतः परत्वं विष्णौ न सम्भवत्युत सम्भवतीति । तदर्थमक्षरात्सम्भवतीत्युक्तमक्षरमेवाक्षरात्परत वाक्यगताक्षरशब्देनोच्यते, उतान्यदक्षरमिति । तदर्थमवधिवाचकाक्षरशब्देन प्रकृतादृश्यत्वादिगुणकविश्वयोनिपरित्यागेनाप्रकृताक्षरान्तरग्रहणे कारणमदृश्यत्वादिगुणकस्य विष्णुत्वसाधकं प्रकृतिविरिञ्चादित्वे बाधकञ्च नास्त्युतास्तीति । तदर्थं परविद्याविषयत्वादेर्विष्णुमात्रनिष्ठत्वे प्रमाणं नास्त्युतास्तीति । तस्य विष्णौ निरवकाशत्वादित्यादिना न हि विष्णोरपि परोऽस्तीत्यन्तेनाक्षरात् परतः पर इति श्रुतेरपि नाक्षरात् सम्भवतीत्यस्याः निरवकाशत्वमिति न्यायविवरणम् 'नञम्' 'अपि'पदञ्च विना उक्ततात्पर्यकं भवतीति द्रष्टव्यम् ॥ **पृथिव्यादिदृष्टान्तेनेति** ॥ श्रुतावूर्णनाभिदृष्टान्तस्य प्राथम्येऽपि तत्र सृजत इत्यनेन कर्तृत्वप्रतीतेर्भाष्ये पृथिव्यादीत्युक्तमिति भावः । अत एव स्वयमुपादानतयेत्युक्तम् ॥ **न च कारणत्वमात्रे दृष्टान्त इति** ॥ तथा च विष्णुग्रहणे नेयमनुपपत्तिरिति भावः । इत्यतो **वाक्यादनन्तरमिति** । उपलक्षणं चैतत् । कारणत्वमात्रस्य सम्भवतीह विश्वमित्यनेनैव सिद्ध्या दृष्टान्तकथनवैयर्थ्यात् । बाधकाभावेऽन्तरङ्गस्योपादानत्वस्य त्यागायोगाच्च इत्यपि द्रष्टव्यम् । **सामानाधिकरण्येनेति** ॥ चित्प्रकृतेरुत्तमादुत्तमस्याभावेनाक्षरात् परत इति पञ्चम्योर्वैय्यधिकरण्यायोगादिति भावः ॥

(भावबोधः)

**तत्परतः पराभिधानादिति** ॥ उपलक्षणं चैतत् । पूर्वत्र 'ब्रह्मा देवानां प्रथमः सम्बभूव' इत्युत्तरत्र 'तस्मादेतद् ब्रह्मनामरूपमन्नञ्च जायत' इति जायमानत्वलिङ्गेन चतुर्मुखपरेण ब्रह्मशब्देन सह दृष्टस्य स ब्रह्मविद्यामिति ब्रह्मशब्दस्यान्यपरत्वायोगादित्यपि द्रष्टव्यम् । ईशशब्दप्राप्तोऽपि न रुद्र इति वक्ष्यमाणानुरोधादाह– **रुद्रस्य वा एतदिति** ॥ अत एवोक्तमिति भाव इति । परविद्याप्रतिपादकैतत्प्रकरणगतवाक्यस्य भाष्येऽनुदाहृतत्वात् तदुदाहरति– **अथ परा यया तदक्षरमधिगम्यत इति** ॥ ययेति तृतीयान्तपदं वेदादिव्यतिरिक्तपरमिति भ्रमं वारयितुं सप्रमाणकं श्रुत्यर्थमाह– **यदा वेदादीत्यादिना** ॥ ब्रह्ममीमांसाशास्त्रव्युत्पादितन्यायानुपकृतं वेदादीत्यर्थः ॥ **एतैरिति** ॥ तद्व्युत्पादितन्यायोपकृतैर्वेदादिभिरित्यर्थः । तथा चानुव्याख्याने परमाख्याविद्येति ब्रह्ममीमांसायाः परविद्यात्वोक्तिरुपपन्नेति ज्ञातव्यम् ।

## भावदीपः

ॐ अदृश्यत्वादिगुणको धर्मोक्तेः ॐ ॥ इत्यन्तभाष्यं सङ्गतिपरत्वेन व्याचष्टे ॥ **अदृश्य इति** ॥ अदृश्यत्वादीत्यादिपदेनानात्म्यपदोक्तजीवगुणराहित्यं स्वामिराहित्यमित्यादिग्रहः । तत्रेत्यस्य तात्पर्यं ते चेति । विश्वमित्युक्त्वेत्यन्तस्य तात्पर्यम् आथर्वण इत्यादि । कुत्रोच्यन्त इत्यतो यत्तदिति भाष्यं प्राप्तमित्युपेत्य तत्पठति ॥ **अथेति** ॥ गुणानामक्षरनिष्ठताप्रदर्शनाय वा सिद्धान्तहेतुप्रदर्शनार्थं तदुपयोगितया वा पूर्वशेषोक्तिः । भाष्ये विच्छिद्य पाठात् सङ्गत्याद्युक्त्यर्थम् अक्षरद्वयैक्यसूचनाय समग्रोक्तिः । दृष्टान्तोक्तेरप्युपन्यासस्य कृत्यमग्रे व्यक्तम् । अद्रेश्यं चक्षुरादिना अदृश्यम् । अग्राह्यं मनसा । अवर्णं ब्राह्मण्यादिवर्णहीनम् । संहर्तृत्वमधिकं वदन् भूतयोनिमित्युक्तकारणत्वं स्पष्टयति ॥ **यथोर्णनाभिरिति** ॥ कारणत्वं कर्तृत्वरूपमिति वक्तुमाद्यः । अङ्कुरजनने पृथिवीबीजमिव विश्वसृष्टौ तत्तत्कर्मापेक्षत इति वक्तुं द्वितीयः । अनायासेन तत्सृष्टिरिति वक्तुं तृतीयो दृष्टान्तः । सतो जीवतः पुरुषाद्देहात् । शिरस्थाः केशाः । अन्यानि लोमानि । सर्वस्य तात्पर्यमाह ॥ **तेषामिति** ॥ अक्षरश्रुत्या दृष्टान्तपूर्वमुक्तोपादानत्वयुक्त्या तस्मादक्षरादिति भाष्यशेषोक्तदिशा विष्णावयोगे चान्यनिष्ठत्व इत्यर्थः । उक्ता इत्यन्तवाक्यस्य तात्पर्यं प्रागुक्तेति ॥ **इतीति** ॥ पूर्वाक्षेपरूपसङ्गतिसम्भवाद्धेतोरित्यर्थः ॥ **निर्णेतव्यतेति** ॥ तेषामित्यनुकर्षः । भाष्ये गुणा इति बहुवचनोक्तेराह ॥ **जातमिति** ॥ पादसङ्गत्यर्थं लिङ्गंति । तदेव भाष्यं पूर्वपक्षतद्युक्तितत्फलपरत्वेन व्याकर्तुं परः प्रतीयत इत्युक्तिलब्धप्रतिज्ञामाह ॥ **न विष्णोरिति** ॥ विष्णोर्न चेन्निर्विषयं वाक्यमित्यत उक्तं तावदिति । अन्यस्य तु पश्चाद्विवरिष्याम इत्यर्थः । कुत

(भावदीपः)

इत्यतस्तत्रेत्याद्यक्षरात्सम्भवतीह विश्वमित्युक्त्वेत्यन्तपूर्ववाक्यं प्राप्तमिति मत्वाऽऽह ॥ **अदृश्यत्वादिगुणक इति** ॥ भाष्यस्थतत्रेत्यस्यार्थोऽयम् । तथापि कुतो न विष्णुरित्यतः अक्षरात्परतः पर इति श्रुतेरपि नाक्षरात्सम्भवतीत्यस्याः निरवकाशत्वमिति न्यायविवरणोक्तदिशाऽक्षरशब्दस्य विष्णौ निरवकाशत्वं वक्तुं प्रवृत्तं तस्माच्चेत्यादिभाष्यवाक्यशेषं मत्वाऽऽह ॥ **तस्य चेति** ॥ तत्र हेतुत्वेन भाष्यशेषं व्याचष्टे ॥ **यत इति** ॥ तस्मादित्यस्य व्यवहितयत्किञ्चित्परामर्शित्वभ्रमनिरासायास्मादप्यक्षरादिति व्याख्या । भाष्ये इत्यतः परमित्यग्रेतनभाष्यानुरोधादिहापीतिशब्दानन्तरं वाक्य इति शेषः । अस्मादप्यक्षरात् अक्षरात्सम्भवतीति वाक्यादुत्तरवाक्येऽस्मादप्यक्षरात्परः प्रतीयत इत्यर्थः । एतेन भाष्ये तस्मादिति पूर्ववाक्यमक्षरं च परामृश्यत इति दर्शितम् । इत्युक्त्वा प्रवृत्ते उत्तरवाक्य इति योजनात् क्त्वाश्रुत्युपपत्तिः । तत्किमुत्तरवाक्यमित्यतोऽक्षरात्परतः पर इत्येतत् प्रवृत्तमिति मत्वा परो विष्णुरित्यत्र लिङ्गानि वक्तुं शेषपूर्वकमाह ॥ **दिव्यो हीति** ॥ दिव्योऽत्यद्भुतः । अमूर्तो नियतपरिच्छिन्नपरिमाणरहितः । किन्तु बाह्यः आभ्यन्तरश्च । अप्राणो ह्यमना इति षोडशकलाराहित्यमुच्यते । शुभ्रः शुद्ध इति कर्मनिर्णयटीकोक्तार्थो बोध्यः ॥ **न हीति** ॥ सैव हि सत्यादय इत्यादौ तस्यैकस्यैव परत्वोक्तेः । सा काष्ठा सा परा गतिरित्यादेरिति भावः । एतेनाक्षरात्सम्भवतीति वाक्यस्थाक्षरशब्दस्य निरवकाशत्व-मित्यर्थो दर्शितः ॥ **अत इति** ॥ निरवकाशाक्षरशब्दादित्यर्थः । उक्त्वेत्यन्तवाक्यतात्पर्यमदृश्यत्वादीति अद्रेश्यवाक्ये अदृश्यवाक्ये च श्रुतेत्यर्थः ॥ प्रकृतेः प्राप्तिरिति प्रकृतिपदस्य जडपरत्वं तावदुपेत्य भाष्यं व्याचष्टे ॥ **जडेति** ॥ **अस्येति** ॥ अदृश्यत्वादिगुणकाक्षरस्येत्यर्थः । यथोर्णनाभिरित्यत्र स्फुटमुपादानत्वाप्रतीतेः पृथिव्यादीत्युक्तम् । भाष्यटीकयोर्यथोर्णनाभिरित्युक्तिस्तु सिद्धान्ते उपयुज्यत इति भावः । प्रागुक्तन्यायविवरणानुरोधेनाक्षरादित्युत्तरभाष्यं लिङ्गनिरवकाशतोक्त्यर्थं प्रवृत्तमिति मत्वाऽवतारयति ॥ **न चेति** ॥ तथा च विष्णावपि तद्युक्तमिति भावः । दृष्टान्तवैय्यर्थ्ये सत्यपि इत्यतः परमिति भाष्योक्तं दोषान्तरं व्यनक्ति ॥ **इत्यतो वाक्यादिति** ॥ तच्छब्दार्थस्तस्मादिति । कारणत्वेनोक्ताक्षरादित्यर्थः । विष्णोः परत्वोक्तेः तदवध्यक्षरत्वमयुक्तम् । जडत्वे तु ततः परतः श्रौतत्वात्परो विष्णुरिति युक्तमिति उपादानत्वं जडप्रकृतेरेव दृष्टान्तवैय्यर्थ्यं च नेति भावः । एतेनाक्षरात्सम्भवतीत्यस्याः निरवकाशत्वमिति न्यायविवरणोक्तम् इत्यन्तस्योपादानस्य निरवकाशत्वमित्यर्थान्तरं दर्शितम् । कूटस्थेत्यादि व्याचष्टे ॥ **चेतनेति** ॥ न्यायविवरणमनुरुध्य पूर्वोक्तदिशा अक्षरशब्दनिरवकाशत्वोक्तिपरतया पूर्वभाष्यमेव शङ्कापूर्वं योजयति ॥ **न चेति** ॥ अक्षरन्यायनयेनेति भावः । चित्प्रकृतौ वा कथं युक्तम् अन्तराले कस्यचिदभावेन परत इत्युक्त्ययोगात् । अत आह ॥

(भावदीपः)

**तच्चेति** ॥ युज्यत इति ॥ विष्णाववविकारित्वादतदभिमानित्वाच्च न युज्यत इति भावः । ब्रह्मेत्यादि व्याचष्टे ॥ **हिरण्यगर्भस्य वेति** ॥ **तत्परत इति** ॥ परावधित्वेनोक्ताक्षरत्वायोगान्न विष्णुग्रहणमित्यर्थः । विरिञ्चस्याक्षरत्वे तु परतः श्रीतत्वात् परो विष्णुरिति भावः । तदुक्तं तत्वप्रदीपे । तस्मात् परस्याः प्रकृतेः परस्य हरेरभिधानादिति । ईशपदप्राप्तोऽपि न रुद्र इत्यग्रे भाषणान्निरवकाशत्वोक्तिसौकर्याय अत्रैवाह ॥ **रुद्रस्येति** ॥ **विष्णावपीति** ॥ अन्तर्नयन्यायेनेति वा शब्दादेवेत्यत्रेशशब्दपर्यायेशानशब्दस्य समन्वेष्यमाणत्वाद्वेति भावः ॥ **तत्परत इति** ॥ रुद्रस्याक्षरत्वे तु परतश्चतुर्मुखात्परो विष्णुरिति युक्तम् । अस्मिन्पक्षे श्रीतत्वमीश्वरकोटिनिविष्टमिति भावः । भाष्यं व्युत्क्रमेण व्याचष्टे ॥ **अदृश्यत्वेति** ॥ तत्त्वित्यनुवृत्त्यस्यार्थो विष्णुरेवेति । हेतुक्तिपरं वाक्यं दर्शयंस्तद्धर्मत्वेनावगतपरविद्येति भाष्यमाकाङ्क्षानुरोधेन विच्छिद्य व्याकुर्वन् सूत्रखण्डार्थमाह ॥ **अथ परेति** ॥ तमेवेत्यादेरर्थः श्रुतीति । श्रुती च स्मृतिश्च ताभिरित्यर्थः । हरेर्ज्ञानमिति । अनेन तन्मतिरिति परामर्शप्रदर्शनाय पूर्वपादोक्तिरिति सूचितम् । परापरविद्ययोर्भेदभ्रान्तिं निरस्यन् परापरविषयत्वरूपोपाधिकृतभेदमाह ॥ **यदेति** ॥ **अन्येति** ॥ कर्मादि-विषयतया ॥ **तदुक्तमिति** ॥ आथर्वणभाष्य इत्यर्थः । यथैकमेव कर्माभिसन्धिभेदात्प्रवृत्तं निवृत्तमिति चोच्यते तथेति भावः । एतेन ऋगाद्यपरविद्याविषये शास्त्रयोनौ हरौ न तद्विरुद्धपरविद्याविषयत्वमिति निरस्तम् । भाष्ये यान्यङ्गानीति शिक्षादीनि षडङ्गान्युच्यन्ते । आयुर्वेदो धनुर्वेदो गान्धर्वः स्थापत्यं चोपाङ्गानि शिष्टा कला विद्याः प्रत्यङ्गानीति तत्वप्रदीपोक्तार्थः ॥ २१ ॥

## अभिनवचन्द्रिका

गुणग्रहणं किमर्थम्? गुणग्रहणमदृश्यत्वादीनां गुणत्वप्रतिपत्त्यर्थम् । अक्रियमाणे गुणग्रहणेऽ-दृश्यत्वादीनामभावरूपत्वेन गुणत्वप्रतिपत्तिर्न स्यात् । नन्वादिग्रहणं व्यर्थम् । आनन्दमयाद्यधिकरणेषु आनन्दमयादिशब्दाना मुदाहरणत्वेनान्नमयादिशब्दग्रहणवदिहापि अदृश्यत्वशब्दस्याप्युदाहरण-त्वेनाऽग्राह्यत्वादीनां ग्रहणसम्भवादिति चेत्, सत्यम् – अदृश्यत्वग्रहणस्योदाहरणतया अग्राह्यत्वादीनां ग्रहणं भवतीति, तथाप्यादिशब्देन तेषां ग्रहणं युज्यते । अग्राह्यत्वादीनां गुणत्वज्ञापनाख्यप्रयोजनसद्भावात् । अन्यथा – दृश्यत्वान्योऽदृश्यः तस्य भावः अदृश्यत्वमिति अदृश्यत्वशब्देन अन्योन्याभावाभिधानेन अन्योन्याभावस्य धर्मिस्वरूपत्वेन भावत्वाद्गुणत्वान्वयबुद्धिः स्यात् – न तु अगोत्रत्वादेः । न विद्यते गोत्रं यस्येति अगोत्रपदेनात्यन्ताभावरूपधर्मवत्त्वाभिधानात् । अत्यन्ताभावस्य भावरूपत्वाभावेन न गुणत्वान्वयधीः स्यात् । आदिग्रहणे पुनः क्रियमाणे न दोषो भवति । साक्षादेव तेषां गुणत्वाभिधानात् ॥

(अभिनवचन्द्रिका)

नन्वेतद्व्याख्यानं सुधाविरुद्धम् – गोत्रादिसंसर्गाभावो ब्रह्मधर्म इत्यर्थस्य सुधानभिमतत्वात् । यथा हि दण्डो देवदत्तस्य विशेषणं तथा गोत्राद्यभावोऽपि ब्रह्मणो विशेषणम् । न च श्रुतिविरोधः । दण्डित्ववदभाववत्त्वस्य धर्मत्वेन विवक्षितत्वादित्यादिना गोत्राद्यभाववत्ताया एव गुणत्वाभिधानादिति चेत्, उच्यते सुधायाः गोत्राद्यभावो न ब्रह्मगुणः किन्तु गोत्राद्यभाववत्त्वमेवेति नाभिप्रायः । किं तर्हि 'एवं धर्मान् पृथक् पश्य(का०२-४-१४)न्निति ब्रह्मधर्माणामभेदमभिधात्र्याः श्रुतेः द्वित्वादिवद्गोत्राद्यभावो न विषयः, किं तु – गोत्राद्यभाववत्त्वमेव विषय इति अभिप्रायः । अवश्यं चैतदेवं विज्ञेयम् – यथा हि दण्डो देवदत्तस्य विशेषणं तथा गोत्राद्यभावोऽपि ब्रह्मणो विशेषणमिति स्वयमेव धर्मत्वाभिधानात् । यस्तु सुधायाः गोत्राद्यभावो न ब्रह्मधर्म इत्याशय इति मन्यते स प्रष्टव्यः – गोत्राद्यभावः ब्रह्मगतो न वा । नेतिपक्षे कथं गोत्राद्यभाववत्त्वमपि ब्रह्मधर्मः स्यात् । आद्ये गोत्राद्यभावः कथं न ब्रह्मधर्मः । न हि प्रतिनिधिना विशेषेण घटमानो धर्मधर्मिभावो । न भेदेनेति साम्प्रतम् । इयांस्तु विशेषः – अभिन्ना धर्मा विष्णोः स्वलक्षणानि, भिन्ना धर्मास्तु तटस्थलक्षणानि । इममेवाभिप्रायं मनसि निधाय भागवते जगज्जन्मादिकारणत्वस्य गोत्राभावादिवत्तटस्थलक्षणत्वव्यावृत्तये 'स्वलक्षणैर्लक्षितभावलक्षण'-(निवृत)मिति स्वलक्षणत्वमुक्तम् । सम्मतं चैतद्भाष्यकृतः । तन्त्रसारे तटस्थानामपि चक्रादीनां केशवादिलक्षणत्वाभिधानात् । **कस्यचिदक्षरस्योच्यन्त इति** ॥ एतदधिकरणप्रतिपाद्यधर्मस्य आनन्दमयधर्मत्वेन प्रतीयमानत्वम्, आनन्दमयाधिकरणतच्छ्रुतिभ्यां सङ्गतिरिति भावः । **नानन्दमयोऽपीति भाव इति** ॥ अदृश्यत्वादिगुणकस्याक्षरस्य विष्ण्वन्यत्वाददृश्यत्वगुणकतया अक्षराभिन्नत्वेन प्रत्यभिज्ञायमानः तैत्तिरीयश्रुत्युक्तानन्दमयोऽपि न विष्णुरिति भावः । एतेन अदृश्यत्वस्यान्यत्वेपि सर्वोत्तमत्वेनाभिमतस्य विष्णोरानन्दपूर्णत्वापलापे कारणाभावात् न विष्णुरानन्दमयोऽपीत्ययुक्तमिति परास्तम् । विष्णोरानन्दपूर्णत्वमङ्गीकृत्य विष्णुभिन्नतया निश्चितादक्षरादृश्यत्वधर्मवशेनाभिन्नतया प्रत्यभिज्ञायमानः तैत्तिरीयश्रुत्युक्तानन्दमयो न विष्णुरित्यभिधानात् । **पृथिव्यादिदृष्टान्तेनेति** ॥ ननु– ऊर्णनाभिदृष्टान्तस्य प्राथमिकत्वादूर्णनाभ्यादिदृष्टान्तेनेति वक्तव्यम् । यदि ऊर्णनाभेश्चेतनत्वेनाऽनुपादानत्वात् तद्विहाय पृथिव्यादिग्रहणम्, हन्त तर्हि पृथिव्यादिग्रहणमपि न कर्तव्यम् । किं कारणम्, अनुपादानत्वात् । कथमनुपादानत्वम् 'पृथिव्यामोषधय' (मु.१-७) इत्यत्र पृथिव्यामिति सप्तम्या अधिकरणत्वप्रतीतेः । **तयोर्विशेषदर्शनाच्च** ।

एवं पुरुषोऽपि न केशलोम्नामुपादानम्, किं तर्हि अपादानाम् । पुरुषादिति पञ्चम्या

(अभिनवचन्द्रिका)

अपादानत्वश्रवणात् । अस्तु वा पृथिवीपुरुषयोरुपादानत्वम् । एवमपि सन्देहः प्राप्नोति । किमूर्णनाभिदृष्टान्तबलेनाक्षरस्य निमित्तत्वं ग्राह्यम्, आहोस्वित् पृथिव्यादिदृष्टान्तेनोपादानत्वमिति । ततश्च साधकाभावेन न जडप्रकृतेरक्षरत्वमिति पूर्वपक्षो युक्त इति चेत्, न – पृथिवीशब्दः पृथिव्यंशौपध्युपादानबीजपरः । एवं पुरुषशब्दोऽपि केशलोमाद्युपादानभूतदेहांशमांसपरः । उपादाने चेयं पञ्चमी, ततश्च – पृथिव्यां बीजे समवेताः सन्तः ओषधयो भवन्तीति यथा पृथिव्यामिति वाक्येनोच्यते, यथा सतः पुरुषादिति वाक्येनापि उपादानभूता देहभागा एव केशलोमानि भवन्तीत्युच्यत इति पूर्वपक्षी मन्यत इत्यङ्गीकारात् । यदपि ऊर्णनाभिदृष्टान्तदर्शनेन सन्देहो भवतीति तन्न – तदाच्छादनेन पूर्वपक्षस्य प्रवृत्तत्वात्। **न चायं कारणत्वमात्र इति** ॥ दृष्टान्त इत्यनन्तरं 'विष्णुरेवादृश्यत्वादिगुण' इति शेषः । अस्तु कारणत्वमात्रे दृष्टान्तः, एवमपि – **नाक्षरस्येश्वरत्वं सम्भवति** । उत्तरवाक्ये अक्षरात् परतः पराभिधानात् । न च तद्विष्णाववकाशमर्हति इत्याशयेन समाधत्ते इत्यतो वाक्यादिति ॥ **तस्मात्परत इति** ॥ परमात्मनः पर एव नास्ति । कुतः परतः परस्मादिति भावः । ननु परतः पराभिधानं यथा विष्णुपक्षे बाधकम्, एवं प्रकृतिपक्षेऽपि बाधकमित्यत आह – **त चेति** ॥ तस्यां प्रकृतौ तत्परतः पराभिधानं 'परतः अक्षरा'दिति सामानाधिकरण्येन योजनायामुपपन्नं भवतीत्यर्थः । **सब्रह्मविद्यामित्यादीति** ॥ अक्षरविद्यायां ब्रह्मविद्यापदप्रयोगात् अक्षरे ब्रह्मशब्दो लब्ध इति भावः । एतेनाक्षरविषयकेण ब्रह्मशब्देन अक्षरस्य ब्रह्मत्वसाधनमयुक्तमिति परास्तम् । **परविद्याविषयत्वोक्तेरिति** ॥ यद्यप्यत्र परविद्याविषयत्वं न श्रूयते, तथापि अक्षरप्रतिपादकविद्यायाः परत्वोक्तौ अक्षरस्य परविद्याविषयत्वमर्थाल्लभ्यत इति भावः । ननु किं परविद्याविषयत्वस्य श्रुतिस्मृतिबलेन विष्णुधर्मत्वं प्रसाध्य तेनाऽदृश्यत्वादिगुणकस्य विष्णुत्वसाधनप्रयासेन । ब्रह्मशब्देनैव विष्णुत्वसाधनसम्भवात् । सूत्रं चैवं सति लघु स्यात् 'अदृश्यत्वादिगुणकः शब्दा'दिति । यदि परतः पराभिधानात् न ब्रह्मशब्दो विष्णुत्वसाधकः हन्त तर्हि तत एव परविद्याविषयत्वमपि न तथा स्यात् इति चेत्, सत्यमेव । तथापि ब्रह्मशब्दस्यापि यौगिकत्वेन धर्मवचनत्वज्ञापनाय धर्मोक्तेरित्युक्तम् । भाष्यकृता तु ब्रह्मशब्दोक्तगुणपूर्णत्वधर्मोक्तिः सूत्रार्थतया शिष्यैरेव ज्ञातुं शक्येत्यभिप्रेत्य परविद्याविषयत्वरूपधर्म एव निगदितः । **तमेवेति श्रुताविति** ॥ नन्वत्र विद्याशब्देन ज्ञानसाधनत्वं विवक्षितम् । 'अथ परा यया तदक्षरमधिगम्यत' (आ.१-५) इति वचनात् । एवं चास्यां श्रुतौ तमेवं विद्वानमृतो भवतीत्यनेन मोक्षसाधनीभूत ज्ञानविषयत्वलाभेऽपि विद्याविषयत्वस्यालाभात् नैतच्छ्रुत्युदाहरणमुचितमिति चेत्, न – 'एवं विद्वा'नित्यत्र एवंशब्दस्य विद्योक्तप्रकारेणेत्यर्थकत्वेन विद्याविषयत्वस्य स्पष्टं प्रतिभासनात् । **यदा वेदाद्यन्यविषयतयेति** ॥ ननु–

(अभिनवचन्द्रिका)

यदा वेदाद्यन्यविषयतया योज्यते तदा अपरविद्यात्वमित्युक्तं, योजनामात्रेण परविद्याया अपर-विद्यात्वायोगादिति चेत्, न – नात्र परविद्यात्वमपरविद्यात्वमखण्डं, किं तर्हि परविषयकप्रबोधजनकत्वमेव परविद्यात्वम्, एवं तदन्यप्रबोधजनकत्वमपरविद्यात्वम् । एवं तदन्य प्रबोधजनकत्वमपरविद्यात्वम् । तदुभयं च तत्र योजनारूपसहकारिसम्पत्त्या एकस्या एव विद्याया उपपद्यते । एकस्यैव चतुरस्य देवत्तस्य सहकारिभेदेन विचित्रकार्यजनकत्वदर्शनात् । **यदा विष्णोर्न वाचका इति** ।। यदा विष्णुवाचकत्वेनाननुसंहिताः अन्यवाचकत्वेनानुसंहिताः तदाऽन्यबोधजनकत्वात् अपरविद्याः । यदा भगवद्वाचकत्वेनानुसंहिताः तदा परप्रबोधजनकत्वात् परविद्या इत्यर्थः । एतेन वाचकत्वस्य स्वाभाविकत्वेन सदातनत्वात् 'यदा वाचकाः, यदा न वाचका' इत्युक्तिरयुक्तेति परास्तम् ।

## वाक्यार्थमुक्तावली

ॐ अदृश्यत्वादिगुणको धर्मोक्तेः ॐ ।। **अक्षरशब्दसाहित्येनान्यत्र प्रसिद्धेति** ।। ननु अक्षर-शब्दोऽविनाशित्वसाम्यात् उभयत्र प्रसिद्ध इति वक्ष्यति । कथं तत्साहित्येनापि अदृश्यत्वादेरन्यत्र प्रसिद्धत्वमिति चेन्न । विष्णौ यौगिकत्वात् । चित्प्रकृतौ कूटस्थोऽक्षर उच्यते इति रूढत्वात् रूढ्योभयत्र प्रसिद्ध्यभावात् । योगेन प्रसिद्धावपि तत्परतः पराभिधानेन त्यागोपपत्तेः । एतेनाक्षराधिकरणेऽक्षर-समन्वयेऽभिहितेऽदृश्यत्वमपि सिद्ध्यति किमनेनाधिकरणेनेति निरस्तम् । अक्षरात्परतः परत्वानुपपत्तेः तत्रापरिहारादिति ।। ननु अव्यक्तात् पुरुषः पर इति वाक्यवत् अक्षरात् परतः पर इति वाक्यस्यापि भगवदुत्कर्षविरोधित्वेन न्यायैक्यादानुमानिकाधिकरणन्यायेनैतद्गतमिति चेन्न । तत्र विरोधमङ्गीकृत्य तदधीनत्वादर्थवदिति समाधानात् । अत्र पुनरस्त्यक्षराभिधानेन विषयभेदमङ्गीकृत्य विरोधस्यापाततोऽपि अनवकाशोक्तेरिति ।। **श्रुत्यादिसङ्गतिमिति** ।। अव्यवहितसङ्गतिस्तु अदृश्यत्वादिगुणा विष्णोरुक्ता इति भाष्ये यं पृथिवी न वेद इत्यादावित्यपि विवक्षितत्वेनाविदितत्वरूपादृश्यत्वाक्षेपादिति बोध्यम् ।। **विष्णोरन्यस्य वेति** ।। अत्रादृश्यत्वादिकं पृथिव्यादिदृष्टान्तपूर्वकं जगत्कारणत्वप्रतिपादकवाक्याक्षर-ब्रह्मशब्देशशब्दबलात् किं जडाजडप्रकृतिविरिञ्चरुद्राणाम् उत परविद्याविषयत्वादिहेतुबलात् विष्णोरिति ।। तदर्थं पूर्वपक्षप्रापकाणां विष्णौ निरवकाशत्वमुत सावकाशत्वमिति । तदर्थमक्षरादिश्रुतीनां पृथिव्यादिवत् कारणत्वस्य च विष्णुविषयत्वे अक्षरात्परतः पराभिधानं बाधकं भवत्युत न भवतीति । तदर्थमक्षरात् सम्भवतीत्युक्तमेवाक्षरात् परत इति वाक्यगताक्षरपदेनोच्यते उतान्यदिति । तदर्थं परविद्याविषयत्वादिकं सावकाशमुत निरवकाशमिति ।। **अनात्म्य इति** ।। अनेन भाष्ये आदिशब्दस्यानात्म्यपदोक्तजीवगुणराहित्यं

(वाक्यार्थमुक्तावली)

स्वामिराहित्यमित्यादिकमर्थ इति दर्शितम् । अद्रेश्यं चक्षुरादिना । अग्राह्यं मनसा हस्ताभ्यां वा । अवर्णं ब्राह्मणादिवर्णहीनम् । भूतयोनिमित्युक्तयोनित्वं प्रपञ्च्यते ॥ **यथेति** ॥ कारणत्वं कर्तृत्वमिति विवेक्तुमाद्यः । मन्दं प्रति कारणत्वं बुध्यारूढं कर्तुं कारणत्वमात्रे द्वितीयः । अनायासेन सृष्ट्युपपादनाय तृतीयो दृष्टान्तः । सतो जीवतः पुरुषात् देहात् । गुणानामक्षरनिष्ठताप्रतिपादनाय वा सिद्धान्तोपयोगितया वा अथेति पूर्वशेषोक्तिः । भाष्ये विच्छिद्य पाठात् । अक्षराद्वा ऐक्यसूचनाय सङ्गतिप्रदर्शनाय वा समग्रोक्तिरिति ध्येयम् । दृष्टान्तोपन्यासकृत्यमग्रे व्यक्तम् । परः प्रतीयते इत्युक्तिलभ्यतात्पर्यमाह ॥ **न विष्णोरिति** ॥ विष्णोर्न चेत् निर्विषयं वाक्यं स्यादित्यत उक्तम् ॥ **तावदिति** ॥ विषयान्तरं वक्ष्यतीति भावः ॥ **पृथिव्यादिदृष्टान्तेनेति** ॥ श्रुतौ ऊर्णनाभिदृष्टान्तस्यादित्वेऽपि तत्र सृजते इत्यत्र कर्तृत्वप्रतीतेः भाष्यटीकयोः पृथिव्यादीत्युक्तम् । प्रथमस्तु सिद्धान्ते उपयोज्यते इति भावः । अतःपरमित्यस्यार्थमाह ॥ **अतो वाक्यादनन्तरमिति** ॥ उपलक्षणमेतत् । कारणत्वमात्रस्य सम्भवतीह विश्वमित्यनेनैव सिद्ध्या दृष्टान्तकथनवैय्यर्थ्यात् । बाधकाभावेऽन्तरङ्गस्योपादानस्य त्यागायोगाच्चेत्यपि द्रष्टव्यम् । जडप्रकृतिपक्षे तु ततः परतः श्रीतत्वात् परो विष्णुरित्युक्तमिति भावः ॥ **न चासौ शब्द इति** ॥ अविनाशित्वसाम्यादिति भावः । ननु चित्प्रकृतेरक्षरत्वग्रहणेऽपि तत्परतः पराभिधानं सम्भवति । हरेरेकस्यैव परत्वेन तत्परतः परस्याभावादित्यत आह ॥ **तच्चेति** ॥ तत्परतः पराभिधानमित्यर्थः ॥ **तस्यामिति** ॥ अक्षरशब्दगृहीतायामिति शेषः ॥ **सामानाधिकरण्येनेति** ॥ परतोऽक्षरादिति विशेषणविशेष्यभावेनेत्यर्थः ॥ स ब्रह्मविद्यामित्यादिब्रह्मशब्दादिति ॥ आदिपदेन ब्रह्मा देवानां प्रथमः सम्बभूव । तस्मादेतद् ब्रह्मनाम रूपमन्नं च जायते इति पूर्वोत्तरवाक्यस्थब्रह्मशब्दग्रहणम् ॥ **तत्परतः पराभिधानादिति** ॥ उपलक्षणमेतत् । सम्बभूव जायत इति जायमानत्वलिङ्गविरोधाच्चेति ज्ञेयम् ।

अत एव सन्दंशन्यायेन मध्यस्थब्रह्मशब्दस्य सावकाशस्य सन्दिग्धस्य भगवत्परत्वं व्यावर्तयितुं तदुपादानम् । विरिञ्चस्याक्षरत्वे तु तत्परतः पराभिधानं परतः श्रीतत्वात् परो विष्णुरिति सुघटमिति भावः । ईशशब्दप्राप्तोऽपीति वक्ष्यमाणानुसारेणाह ॥ **रुद्रस्य चेति** ॥ रुद्रस्याक्षरत्वे तु परतो हिरण्यगर्भात् पर इति पुंविवक्षया योज्यमिति भावः । सूत्रे तत्त्वित्यनुवर्तते । धर्मोक्तेरिति यथाश्रुतं धर्मत्वोक्तेरिति भावप्रधानं च विवक्षितम् । ततश्चादृश्यत्वादिगुणको विष्णुरेव अदृश्यत्वादिगुणस्य अथ परा यया तदक्षरमधिगम्यते इति परविद्याविषयत्वरूपधर्मोक्तेस्तस्य च धर्मस्य श्रुतिस्मृतिषु विष्णुधर्मत्वोक्तेरिति सूत्रार्थमाह ॥ **अदृश्यत्वादिगुणा इत्यादिना** ॥ **परविद्यात्वादिति** ॥ याथार्थ्यस्य विद्यापदेन लाभेन

(वाक्यार्थमुक्तावली)

फलत एव परत्वस्य विवक्षितत्वादिति भावः । यद्यपि तत्कर्म हरितोषं यत् सा विद्या तन्मतिर्यया इति स्मृतौ तन्मतेः परविद्यात्वं नोक्तम् । तथापि यया तन्मतिः सा विद्या इत्यसाधारण्योक्त्या परत्वं लभ्यत इति भावेन सैव परविद्या इत्युक्तम् । ननु वेदादीनां हरिवेदकत्वात् कथमपरविद्यात्वमुच्यत इत्यत आह ॥ **द्वे विद्येत्यत्र च यदा वेदाद्यन्यविषयतयेति** ॥ ब्रह्ममीमांसाशास्त्रानुपकृतं वेदादीत्यर्थः ॥ **एतैरिति** ॥ तद्व्युत्पादितन्यायोपकृतैर्वेदादिभिरित्यर्थः । परापरविषयत्वरूपोपाधितो वेदादेरेव द्वैविध्यम् । यथैकमेव कर्माभिसन्धिभेदात् प्रवृत्तं निवृत्तं चोच्यत इति भावः । भाष्ये अङ्गानि शिक्षादीनि षडङ्गानि । उपाङ्गानि गान्धर्वो स्थापत्यं चोपाङ्गानि । शिष्टाः कला विद्या प्रत्यङ्गानीति तत्त्वप्रदीपोक्तेः ।

## तत्त्वसुबोधिनी

ॐ अदृश्यत्वादिगुणको धर्मोक्तेः ॐ ॥ अन्तर्यामिणो ब्रह्मत्वे हेतूकृतस्य 'यं पृथिवी न वेद' इत्युक्तस्य अदृश्यत्वस्याक्षेपेण पूर्वपक्षोत्थानात् अनन्तरसङ्गतिः । तावत्पूर्वपक्षे इत्यत्र तावच्छब्दः अग्रे पूर्वपक्षविशदीकरणाभिप्रायः । तत्र हेतुमाह ॥ **अदृश्यत्वादीति** ॥ अस्त्वक्षरशब्दश्रवणं ततः किमित्यत आह ॥ **तस्य चेति** ॥ अक्षरशब्दस्य विष्णाववकाशाभावादित्यर्थः । 'निर्विकारोऽक्षरः शुद्ध' इत्यादौ विष्णौ अक्षरशब्दस्य श्रवणात् कथं तस्य तत्रावकाशाभाव इत्याशङ्क्य अस्तु तत्राक्षरशब्दः विष्णोः तथापि प्रकृते बाधकात् नास्य तत्रावकाश इत्याह । **यतोऽस्मादित्यादिना** ॥ **तावदवतारयतीति** ॥ सूत्रावतारिकामात्रं क्रियते व्याख्यां तु अग्रे करिष्यतीति भावः । **पृथिव्यादिदृष्टान्तेनेति** । श्रुतावूर्णनाभि-दृष्टान्तस्य प्राथम्येऽपि तत्र सृजत इत्यनेन कर्तृत्वप्रतीतेः भाष्ये पृथिव्यादीत्युक्तम् । अत एव स्वयमुपादा-नतयेत्युक्तम् ॥ **न च कारणत्वमात्र इति** ॥ तथा च विष्णुग्रहणे नेयमनुपपत्तिरिति भावः । **इत्यतो वाक्यादिति** । उपलक्षणं चैतत्– कारणत्वमात्रस्य सम्भवतीह विश्वमित्यनेनैव सिद्ध्या दृष्टान्तकथनवैय्यर्थ्यात् । बाधकाभावेऽन्तरङ्गस्योपादानत्वस्य त्यागायोगाच्चेत्यपि द्रष्टव्यम् ॥ **तस्यामिति** ॥ नन्वेतत्प्रकृतावपि कथमुपपन्नमत आह ॥ **सामानाधिकरण्येनेति** । चित्प्रकृतेः उत्तमादुत्तमस्या-भावेनाक्षरात्परत इति पञ्चम्योः वैय्यधिकरण्यायोगादिति भावः । नन्वुपादानतया जगत्कारणत्ववचनं चित्प्रकृतौ कथं घटत इत्यत्राह ॥ **विकारित्वेनेति** ॥ **तत्परत इति** ॥ उपलक्षणं चैतत् । पूर्वं ब्रह्मा देवानां प्रथमः सम्बभूवेत्युत्तरत्र तस्मादेतद् ब्रह्मनामरूपमन्नं च जायत इति जायमानत्वलिङ्गेन चतुर्मुखपरेण ब्रह्मशब्देन च सह दृष्टस्य स ब्रह्मविद्यामिति ब्रह्मशब्दस्यान्यपरत्वायोगाच्चेत्यपि द्रष्टव्यम् । ईशशब्दप्राप्तोऽपि न रुद्र इति वक्ष्यमाणानुरोधात् आह ॥ **रुद्रस्य चेति** ॥ परविद्याविषयत्व-

(तत्त्वसुबोधिनी)

प्रतिपादकवाक्यस्य भाष्ये अनुदाहृतत्वात्तदुदाहरति ॥ **अथ परेति** ॥ अस्तु परविषयत्वोक्तिः ततः किमत आह ॥ **परेति** ॥ **ययेति** ॥ तृतीयान्तपदं वेदादिव्यतिरिक्तपरमिति भ्रमं वारयितुं श्रुत्यर्थमाह। यदा वेदादीत्यादिना ब्रह्ममीमांसाशास्त्रव्युत्पादितन्यायानुपकृतवेदादीत्यर्थः ॥ **एतैरिति** ॥ तद्व्युत्पादितन्यायोपकृतैः वेदादिभिरित्यर्थः ।

## वाक्यार्थमञ्जरी

**अथेति** ॥ अथापरविद्यानिरूपणानन्तरं परापरविद्या निरूप्यत इति शेषः । यया विद्यया तत्प्रसिद्धमक्षरमक्षरशब्दाभिधेयं ब्रह्म अधि अधिकत्वेन गम्यते अवगम्यते सा परविद्येत्यर्थः । प्रसिद्धाक्षरव्यावृत्तये तत्स्वरूपं निरूपयति ॥ **यत्तदद्रेश्यमित्यादिना** ॥ यत्पूर्वोक्तमक्षरमद्रेश्यमदृश्यम् अग्राह्यं केनापि गृहीतुमशक्यम् । अगोत्रं भारद्वाजादिगोत्ररहितम् । अवर्णं प्राकृतवर्णरहितं ब्राह्मणादिवर्णरहितं वा । अचक्षुःश्रोत्रं चक्षुःश्रोत्रोपलक्षितप्राकृतज्ञानेन्द्रियरहितम् । अपाणिपादं पाणिपादोपलक्षितप्राकृतकर्मेन्द्रियरहितम् । यद्वाऽचक्षुःश्रोत्रं चक्षुःश्रोत्रोपलक्षितसमस्तेन्द्रियरहितम् अपाणिपादं पाणिपादोपलक्षितप्राकृतदेहरहितम् । नित्यस्वरूपतो देहतश्चाविनाशि । विभुं समर्थं सर्वगतं सर्वत्र व्याप्तं सुसूक्ष्मं जीवादप्यतिशयेन सूक्ष्मम् अव्ययं ह्रासरहितम् । नन्वेवमक्षरस्यादृश्यत्वेऽधिगम्यत इति दृश्यत्वोक्तिः कथमित्यत आह ॥ **यद्भूतयोनिमिति** । भूतयोनिं जगत्कारणं यदक्षरं तद्धीराः पण्डिताः परिपश्यन्ति । स्वयोग्यतानुसारेण जानन्ति ॥ अनेनाधीराणामदृश्यमित्युक्तं भवति । लोके पितुरन्यस्यैव मारकत्वदर्शनात्र तथेहान्यस्य संहर्तृत्वं मन्तव्यमिति भावेन स्रष्टृत्वं संहर्तृत्वं च सदृष्टान्तमुपपादयति ॥ **यथेति** ॥ स दृष्टान्तो यथा ऊर्णनाभिस्तन्तुवायकः स्वभुक्तमन्नादिकं तन्त्वाद्याकारेण सृजते पुनर्गृह्णते संहरति च तथाऽक्षरशब्दोक्तो भगवानपि पूर्वकल्पे भुक्तं जगत्सृजते संहरति च । किमनुसृत्य सृजत इत्यतो दृष्टान्तेनाह ॥ **यथेति** ॥ यथा पृथिवी शाल्यादिनानाबीजान्यपेक्ष्य तत्तदङ्कुरान् जनयति तथा चेतनानां विविधकर्माण्यपेक्ष्य तत्सृजतीत्युक्तं भवति । कुलालवन्नाक्षरस्य क्लेशेन स्रष्टृत्वम् इति सदृष्टान्तमाह ॥ **यथेति** ॥ सतश्चेतनाधिष्ठितात्पुरुषदेहाच्छिरसि विद्यमानाः केशाः देहे विद्यमानानि लोमानि अनायासेन भवन्ति । तथाऽक्षरादिहास्वतन्त्रवर्गे विश्वं सर्वमनायासेन भवत्युत्पद्यत इत्यर्थः । प्रकृत्यादीनामप्यदृश्यत्वं वक्ष्यामीति तावच्छब्दः ॥ **दिव्य इति** ॥ दिव्योऽलौकिकः । अमूर्तः अपरिच्छिन्नपरिमाणः पुरुषः पूर्णषड्गुणः बाह्याभ्यन्तरः बहिरन्तश्च नियामकतया स्थितः अजः उत्पत्तिरहितः ॥ **अप्राणो ह्यमना इति** ॥ षोडशकलारहितः शुभ्रः शुद्धः अक्षराज्जडप्रकृतेः पराच्छ्रीतत्वात्परः उत्तम इत्यर्थः ॥ ॐ

(वाक्यार्थमञ्जरी)

अदृश्यत्वादिगुणको धर्मोक्तेः ॐ ॥ अदृश्यत्वम् आदि येषाम् अग्राह्यत्वादीनां तेऽदृश्यत्वादयः अदृश्यत्वादयो गुणा यस्यासौ अदृश्यत्वादिगुणः स एवादृश्यत्वादिगुणकः स च विष्णुरेव ॥ अथ परेति ऋगादिपरविद्याविषयत्वरूपतद्धर्माभिधानादित्यर्थः । वाक्यस्य यत्तदद्रेश्यमित्यादेः ॥ **न चेति** ॥ तथा च विष्णुग्रहणोपपत्तेरिति भावः । इत्यत इत्यनुवादस्तस्मात्परतः अदृश्यत्वादिगुणकाक्षरात्परत एवमग्रेऽपि ॥ **सामानाधिकरण्येनेति** ॥ परतः ब्रह्माद्युत्तमादक्षरादित्यक्षरपरशब्दयोश्चित्प्रकृतिरूपैकार्थ-प्रतिपादकत्वेनेत्यर्थः ॥ **स ब्रह्मेति** ॥ स ब्रह्मविद्यामथर्वाय ज्येष्ठपुत्राय प्राहेत्यत्रेत्यर्थः ॥ **कर्तारमिति** ॥ कर्तारमीशं पुरुषं ब्रह्मयोनिमित्यत्रेत्यर्थः । श्रुत्यादौ परविद्याविषयत्वपरशब्दाभावात्कथं तदुदाहरण-मित्यतस्तदुपपादयति ॥ **तमेवेत्यादिना** ॥ भाष्येऽङ्गानि शिक्षादीनि षट् उपाङ्गानि आयुर्वेदादीनि पञ्च शिष्टाः कला विद्याः प्रत्यङ्गानीति तत्त्वप्रदीपानुसारेण ध्येयम् ॥ **अन्येति** ॥ कर्मादीत्यर्थः । तदुक्तमाथर्वणभाष्ये । एतदर्थश्च ब्रह्ममीमांसाशास्त्रव्युत्पादितन्यायानुपकृतवेदादयो विष्णोरवाचकास्तदुप-कृतास्तद्वाचका भवन्तीति सुधानुसारेण ध्येयः ॥

## विवृतिः

अत्रान्तर्यामिणो ब्रह्मत्वे हेतूकृतस्य यं पृथिवी न वेदेत्युक्तस्यादृश्यत्वस्याक्षेपेण पूर्वपक्षोत्थानादनन्तर-सङ्गतिः । तावत्पूर्वपक्ष इत्यत्र तावच्छब्दः अग्रे पूर्वपक्षविशदीकरणाभिप्रायः । तत्रहेतुमाह ॥ **अदृश्य-त्वादीति** ॥ अस्त्वक्षरशब्दश्रवणं, ततः किमत्राह । **तस्य चेति** ॥ अक्षरशब्दस्य विष्णाववकाशा-भावादित्यर्थः । ननु निर्विकारोऽक्षरः शुद्ध इत्यादौ विष्णावक्षरशब्दस्य श्रवणात् कथं तस्य तत्रावकाशाभाव इत्याशङ्क्य अस्तुवाऽक्षरशब्दो विष्णौ तथापि प्रकृते बाधकान्नास्य तत्रावकाशशा इत्याह ॥ **यतोऽस्मादित्यादिना** ॥ **तावदवतारयतीति** ॥ सूत्रावतारिकामात्रं क्रियते व्याख्यां त्वग्रे करिष्यतीति भावः । **पृथिव्यादिदृष्टान्तेनेति** ॥ श्रुतौ ऊर्णनाभिदृष्टान्तस्य प्राथम्येऽपि तत्र सृजत इति कर्तृत्वप्रतीतेः भाष्ये पृथिव्यादीत्युक्तम् । **न चायं कारणत्वमात्र इति** ॥ तथा च विष्णुग्रहणेनेयमुपपत्तिरिति भावः । **इत्यतो वाक्यादिति** ॥ उपलक्षणं चैतत् । कारणत्वमात्रस्यापि सम्भवतीह विश्वमित्यनेनैव सिध्या दृष्टान्तकथनवैयर्थ्यात् । बाधकाभावेऽन्तरङ्गस्योपादानत्वस्य त्यागायोगाच्चेत्यपि द्रष्टव्यम् । **तस्यामिति** ॥ नन्वेत्प्रकृतावपि कथमुपपन्नमत आह ॥ **सामानाधिकरण्येनेति** ॥ चित्प्रकृतेरुत्तमा-दुत्तमस्याभावेनाक्षरात्पर इति पञ्चम्योर्वैयधिकरण्यायोगादिति भावः । ननु उपादानतया जगत्कारणत्ववचनं चित्प्रकृतौ कथं घटत इत्यत्राह ॥ **विकारित्वेनेति** ॥ तत्परत इति ॥ उपलक्षणं चैतत् । पूर्वत्र

(विवृतिः)

ब्रह्मा देवानां प्रथमः सम्बभूवेत्युत्तरत्र तस्मादेतद् ब्रह्मनामरूपमन्नं च जायत इति जायमानत्वलिङ्गेन चतुर्मुखपरेण ब्रह्मशब्देन च सह दृष्टस्य ब्रह्मविद्यामिति ब्रह्मशब्दस्यान्यपरत्वायोगाच्चेत्यपि द्रष्टव्यम् । ईशशब्दप्राप्तोऽपि न रुद्र इति वक्ष्यमाणानुरोधादाह । **रुद्रस्येति** ॥ परविद्याविषयत्वप्रतिपादके भाष्ये करणगतवाक्यस्यानुदाहृतत्वात्तदुदाहरति ॥ **अथ परेति** ॥ अस्तु परविद्याविषयत्वोक्तिः ततः किमित्यत आह ॥ **परेति** ॥ ययेति तृतीयान्तपदं वेदादिव्यतिरिक्तपरमिति भ्रमं वारयितुं श्रुत्यर्थमाह ॥ **यदा वेदादीत्यादिना** ॥ ब्रह्ममीमांसाशास्त्रव्युत्पादितन्यायानुपकृतं वेदादीत्यर्थः ॥ **एतैरिति** ॥ तद्व्युत्पादितन्यायोपकृतैर्वेदादिभिरित्यर्थः ॥

## सूत्रभाष्यम्

**॥ ॐ विशेषणभेदव्यपदेशाभ्याञ्च नेतरौ ॐ ॥**

'यस्सर्वज्ञस्सर्वविद्यस्य ज्ञानमयं तप' (मुं.उ. १-१-९) इति विशेषणान्न प्रकृतिः । 'तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायत' (मुं.उ. १-१-९) इति भेदव्यपदेशान्न विरिञ्चः ।

'अपरं त्वक्षरं या सा प्रकृतिर्जडरूपिका ।
श्रीः परा प्रकृतिः प्रोक्ता चेतना विष्णुसंश्रया ॥
तामक्षरं परं प्राहुः परतः परमक्षरम् ।
हरिमेवाखिलगुणमक्षरत्रयमीरितम्' ॥

इति स्कान्दे त्र्यक्षराभिधानादक्षरात्परतः पर इत्यपि विशेषणमेव । 'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोक' (मुं.उ.३-१-२) इति भेदव्यपदेशादीशपदप्राप्तोऽपि न रुद्रः ॥ २२ ॥

## सत्तर्कदीपावली

विष्णुरेवादृश्यत्वादिगुणकाक्षरं न प्रकृतिहिरण्यगर्भावित्येतद्धेत्वन्तरेण सूत्रमुपन्यस्य साधयति ॥ **विशेषणेत्यादिना** ॥ यः सर्वज्ञ इत्यादिवदक्षरात्परतः पर इति विशेष्यमाणत्वादप्यदृश्यत्वादिगुणकाक्षरं विष्णुः । विश्वयोन्यक्षरस्यावरत्वासम्भवात् । अक्षरात्परतः पर इत्यवधित्वेनोच्यमानं क्षरं तस्मादन्यदेव । तदेतदाह । **अपरमिति** ॥ न च कर्तारमीशमिति विशेष्यमाणत्वाददृश्यत्वादि गुणकमक्षरं रुद्र इति वाच्यम् । यदा पश्यत्यन्यमीशमित्यज्ञप्रसिद्धेशादन्यस्य विष्णोरेव विवक्षितत्वादित्याह ॥ जुष्टमिति ॥

(सत्तर्कदीपावली)

विष्णुरेवात्रोच्यत इत्येतद्युक्त्यन्तरेण साधयत्सूत्रमुपन्यस्य व्याचष्टे ॥ रूपेत्यादिना ॥ प्राकृताकार-रहितत्वेनावर्णमचक्षुःश्रोत्रमित्युक्तोऽप्यप्राकृतरूपवत्वेन मुख्यरूपवान्विष्णुरेवात्रोच्यत इत्यर्थः ॥ २२,२३ ॥
(१-२-६)

## तत्त्वप्रदीपिका

ॐ विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॐ ॥ सर्वत्र विद्यत इति सर्ववित् । विद सत्तायामिति धातोः । यस्य ज्ञानमयमालोचनं न संशयात्मकम् ॥

## तत्त्वप्रकाशिका

यदुक्तं प्रकृतिविरिञ्चयोरदृश्यत्वादिगुणकत्वमिति तदर्थान्निराकृतमपि विशेषयुक्त्या पराकुर्वत्सूत्रं पठित्वा व्याचष्टे ॥ **विशेषणेति** ॥ 'तपसा चीयते ब्रह्म' इत्यत्राज्ञानप्रतीतौ तन्निरासाय 'यस्य ज्ञानमयं तपः' इत्युक्तार्थे हेतुतयाऽदृश्यत्वादिगुणकस्य सार्वज्ञविशेषणोक्तेर्नाचेतनप्रकृतेरदृश्यत्वादिगुणकत्वम् । तस्मादक्षरादे-तद्ब्रह्म चतुर्मुखाख्यं जायत इति विरिञ्चस्य तज्जन्यतया तस्माद्भेदव्यपदेशान्नासावप्यदृश्यत्वादिगुणक इत्यर्थः । ज्ञानवेदनयोः सामान्यविशेषतयाऽर्थान्तरत्वम् । विदॢ्लाभे विदोत्पत्तावित्यतो वा । न विष्णोरदृश्यत्वादि-गुणकत्वम् । परतःपराभिधानेन अक्षरशब्दस्य विष्णौ निरवकाशत्वादित्यतः सूत्रखण्डस्यार्थान्तरमाह ॥ **अपरमिति** ॥ भवेदक्षरश्रुतेर्विष्णाववकाशाभावो यद्यक्षरात्परतः पर इत्यत्र प्रकृताक्षरमवधीकृत्य कस्य-चित्परत्वमुच्यते । नैतदस्ति । किन्तु प्रकृताक्षरस्यैवाक्षरात्परतःपरत्वविशेषणमुच्यते । न चाक्षरस्याक्षरा-त्परतःपरत्वं विरुद्धमिति वाच्यम् । त्र्यक्षराभिधानादक्षरान्तरादस्याक्षरस्य परत्वोपपत्तेरिति भावः । ईशशब्दाद-दृश्यत्वादिगुणको रुद्र इत्यस्योत्तरतयापि सूत्रशेषं व्याचष्टे ॥ **जुष्टमिति** ॥ अस्याक्षरस्यान्यमीशमिति प्रसिद्धेशाद्रुद्राद्भेदव्यपदेशान्न रुद्रोऽदृश्यत्वादिगुणक इत्यर्थः । यदपि पृथिव्यादिदृष्टान्तेन जगत्कारणत्ववचनं तत्कारणत्वमात्रतात्पर्यम् । ब्रह्माक्षरेशशब्दास्तु विष्णावेव मुख्याः । बाधकाभावस्योक्तत्वात् ॥ २२ ॥

## गुर्वर्थदीपिका

तपसा चीयते ब्रह्मेत्यत्र तपोरूपकर्मणा चीयते 'चिञ् चयन' इति धातोः ज्ञानादिगुणैरभिवृद्धिं प्राप्नोतीत्यर्थग्रहणे प्रागस्मदादिवदज्ञानप्राप्तिरिति भावः । विदोत्पत्तावित्यत्रान्तर्णीतणिचूत्वात् सर्वं वेदयत्युत्पादयतीति सर्ववित् सर्वं विद्यते अस्मादिति वा सर्वविदित्यर्थः । अक्षरान्तरादित्यत्र अक्षरादित्यत्रोक्ताक्षराद्भिन्नादित्यर्थः । अनेन भेदव्यपदेशादित्यंशस्याप्यधममध्यमोत्तमतयाऽक्षराणामन्योन्यं भेदव्यपदेशादित्यर्थस्सूचितः । यथाऽन्यः सन्यासीत्युक्ते सन्यासिन एवान्यः सन्यासीति सिद्ध्यति तथा अन्यमीशमित्युक्ते प्रसिद्धेशादेवायमीशोऽन्य इति सिद्ध्यतीति भावेनाह । **अस्याक्षरस्येति** ।

## भावबोधः

**अर्थान्निराकृतमपीति** ॥ परविद्याविषयत्वस्य विष्णोरन्यत्र निरवकाशत्वान्यथानुपपत्त्येत्यर्थः ॥ **अज्ञानप्रतीताविति** ॥ तप आलोचन इति धातुः । आलोचनं चाज्ञस्यैवेति भावः । **उक्तार्थे हेतुतयेति** । यस्य ज्ञानमयं तप इत्युक्ततपसो ज्ञानस्वरूपत्वरूपेऽर्थे तपस आलोचनात्मकत्वं सन्तापात्मकत्वं वाऽस्तु ज्ञानस्वरूपत्वं कुत इत्याशङ्कापरिहारार्थं हेतुतयेत्यर्थः ॥ **सार्वज्ञविशेषणोक्तेरिति** ॥ उपलक्षणं चैतत् । तपसः सन्तापात्मकत्वाभावे हेतुतया सर्ववित्त्वमपि ग्राह्यम् । सर्वं चैतत् कर्मनिर्णयटीकायां स्पष्टमुक्तम् । यस्माद्यस्य तपो ज्ञानस्वरूपं न त्वालोचनात्मकं सन्तापात्मकत्वं वा तस्मात् । अज्ञो ह्यालोचयते ॥ **अनाप्तकामस्तपस्यतीति** ॥ तपस आलोचनात्मकत्वात् अत्रस्यैवालोचने तपसेत्यनेन ज्ञानप्रतीतौ यस्य ज्ञानमयं तप इति तपसो ज्ञानस्वरूपत्वमुक्तम् । तपस आलोचनात्मकत्वमेवास्तु । किं ज्ञानस्वरूपत्वग्रहणेनेत्याशङ्कापरिहारार्थमुक्तार्थे हेतुतया सार्वज्ञविशेषणोक्तेरित्यर्थः ॥ **नाचेतनप्रकृतेरिति** ॥ उपलक्षणं चैतत् । निरुपचरितसार्वज्ञस्य विशेषणाचेतनप्रकृतेरपि नादृश्यत्वादिगुणकत्वमित्यपि द्रष्टव्यम् । **विद्लृ लाभे विदोत्पत्तावित्यतो वेति** । तथा च सर्वविदित्यस्याप्तकामः सर्वोत्पादक इत्यर्थद्वयमभिहितं भवति ॥ **सूत्रखण्डस्येति** ॥ 'विशेषणभेदव्यपदेशाभ्याम्' इत्यस्येत्यर्थः । तथा च न केवलं सूत्रेऽदृश्यत्वादिगुणकस्य सर्वज्ञत्वविशेषणविरिञ्चिरुद्रभेदव्यपदेशाभ्यामित्यर्थः । किन्तु श्रुतावप्यक्षरात् परतः पर' इत्यनेनादृश्यत्वादिगुणकाक्षरस्याक्षरात् परतः परत्वरूपविशेषणव्यपदेशात् तदपि विष्णावेवावकाशवत् । न च तद्व्याहतम्; स्कान्देऽक्षरत्रयमस्त्वित्यक्षराणां भेदव्यपदेशादिति न्यायविवरणमपि उक्ततात्पर्यकं भवति ॥ **सूत्रशेषमिति** ॥ भेदव्यपदेशान्नेतर इति हेतुप्रतिज्ञाभागमित्यर्थः ।

## भावदीपः

ॐ विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॐ ॥ ननु पूर्वं कयापि युक्त्या प्रकृत्यादेरनिरासाद्विशेषण-भेदव्यपदेशाभ्यां चेति कथं चशब्द इत्यत आह ॥ तदर्थादिति ॥ धर्मोक्तेरिति हेतोः स्वपक्षसाधन इव विष्णुरेवेत्यवधारणव्यावर्त्यपूर्वपक्षकोटिनिरासेऽपि व्यापारादिति भावः ॥ **तपसेति** ॥ चीयते सम्बध्यते ब्रह्म परं ब्रह्मेत्यर्थः । ज्ञानमयं ज्ञानात्मकं न त्वालोचनात्मकमित्युक्तार्थ इत्यर्थः । विवृतमेतत् कर्मनिर्णयटीकायाम् । सर्वज्ञत्वात् सर्वविच्छब्दितात्पकामत्वाद्यस्य तपो ज्ञानस्वरूपं न त्वालोचनात्मकं सन्तापात्मकं वा । अज्ञो ह्यालोचयति । अनाप्तकामस्तपस्यति । स तपस्तत्वा इदं सर्वमसृजत

(भावदीपः)

इत्यस्य व्याख्यानमेतदिति वा ॥ **नाचेतनेति** ॥ चित्प्रकृतिनिषेधस्तु नानेन सम्भवति । तस्या अत्रोक्ताक्षरत्वे विश्वकर्तृत्वप्राप्त्या सार्वज्ञस्यापि शक्यशङ्कत्वात् । श्रुतेः सङ्कुचितसार्वज्ञपरत्वसम्भवाच्च जडप्रकृतिमात्रनिषेधे हेतुरयमिति भावः । एतद्ब्रह्म चतुर्मुख इति तद्भाष्यदिशाऽर्थमाह ॥ **तस्मादिति** ॥ चतुर्मुखाख्यमिति नामरूपान्नाभिमानीति योज्यम् । पूर्ववाक्ये तपसा चीयते ब्रह्मेति ब्रह्मपदेन परब्रह्मोक्तावप्यत्र जायत इत्युक्तिबाधकादन्योक्तिर्युक्तेति भावः । तथा च न ह्येकशब्देन द्विरुक्तेन भेदश्रुतिं विना वस्तुद्वयं कुत्रचिदुच्यत इति तार्तीयगीताभाष्यस्थवाक्याविरोध इति ध्येयम् ॥ **विद्लृ लाभ इति** ॥ सर्वं विदत इति वा सर्वं वेदयति उत्पादयतीति वा सर्ववित् । आप्तकामः सर्वोत्पादको वेत्यर्थः ॥ **सूत्रखण्डस्यार्थान्तरमिति** ॥ परतः परत्वरूपविशेषणादक्षरव्यक्तीनां भेदव्यपदेशा-दित्यर्थान्तरमित्यर्थः । आकाङ्क्षामनुरुध्य भाष्यमेवकारव्यावृत्तिं वदन् व्याचष्टे ॥ **भवेदिति** ॥ त्र्यक्षरोक्तावपि कथं विशेषणमित्यतोऽक्षरात्परतः परस्याक्षरान्तरत्ववचनादिति न्यायविवरणोक्तं संयोजयति ॥ **अक्षरान्तरादिति** ॥ अक्षरद्वयोक्तावपि पूर्तौ त्र्यक्षरोक्तिरक्षराज्जडप्रकृतेः परतः श्रीतत्वात्परो विष्णुरिति वैय्यधिकरण्येन परतोऽक्षरात् श्रीतत्वादिति सामानाधिकरण्येन चान्वयायेत्याहुः ॥ **अन्यमीशमितीति** ॥ अन्यो मार्गम् इत्युक्ते प्रसिद्धमार्गादन्यत्ववत् अन्यमीशमित्युक्ते प्रसिद्धेश्वराद्रुद्रादन्यत्वप्रतीतेरिति भावः । एतदर्थान्तरमुपेत्योक्तमिति कृत्वा आनन्दमयनयोक्त्या द्युभ्वादिनये वक्ष्यमाणेन जीवादन्यः स्वतन्त्रोऽय-मित्याथर्वणभाष्येण च न विरोधः । न चानेकार्थत्वं दोषः वचनेनैव प्रतीयमानत्वादर्थस्य कल्पना-भावादित्यदिना कर्मनिर्णये निरासात् ॥ **कारणत्वमात्रेति** ॥ विवृतमेतत्प्रकृतिनयानुव्याख्याने । न चोर्णनाभिजनितॄणां च विकारितेत्यादिना ॥ २२ ॥

## अभिनवचन्द्रिका

(सू.२२) **उक्तार्थेहेतुतयेति** ॥ 'यस्य ज्ञानमयं तप' इत्यनेनोक्ते तपसो ज्ञानरूपत्वरूपेऽर्थे हेतुतया अदृश्यत्वादिगुणकस्य 'यः सर्वज्ञः सर्ववि'दिति पूर्वभागेन सार्वज्ञरूपविशेषणोक्तिः नाऽचेतन-प्रकृतेरदृश्यत्वादिकमित्यर्थः । 'यः सर्वज्ञः सर्ववि'(आ.१-९)दित्यनयोरर्थभेदमाह – **ज्ञानवेदनयोरिति** ॥ **विद्लृलाभ इति** ॥ 'यः सर्वज्ञ' इत्यनेन सार्वज्ञमुक्तं, 'सर्ववि'दित्यनेन सर्वलाभत्वं वा, सर्वोत्पादकत्वं वा, उच्यत इति नानयोरेकार्थत्वमिति भावः ।

## वाक्यार्थमुक्तावली

ॐ विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॐ ॥ **अर्थादिति** ॥ स्वपक्षसाधनाय परविद्याविषयत्वरूप-लिङ्गोक्तावपि परपक्षे तद्बाधकं च भवतीति तन्निराकरणमार्थिकं जातमित्यर्थः ॥ **अज्ञानप्रतीताविति** ॥ तपसा आलोचनेन चीयते सम्बध्यते इत्युक्त्या ब्रह्माज्ञमिति प्रतीयते । अज्ञस्यैव आलोचनसम्भवादिति भावः ॥ **उक्तार्थहेतुतयेति** ॥ ज्ञानरूपमेवेह तपःशब्देन विवक्षितम् । न त्वालोचनारूपं तस्य सर्वज्ञत्वादित्युक्ततपश्शब्दार्थघटकतयेत्यर्थः । अचेतनप्रकृतिरित्युपलक्षणम् । निरुपचरितसार्वज्ञस्य विशेषणत्वेन चेतनप्रकृतिरित्यपि बोध्यम् ॥ **विद्लृ लाभ इति** ॥ अनेन सर्ववित् आप्तकामः सर्वोत्पादको वा इत्यर्थः उक्तो भवति । पूर्वव्याख्यानं तपश्शब्दस्यालोचनपरत्वं नेति उक्तार्थे हेतुतायां घटनीयम् । इदं तु तपसा सन्तापेन चीयते इति तपश्शब्दस्यासन्तापार्थकत्वं नेति उक्तार्थे हेतुतयेति बोध्यम् ॥ **सूत्रखण्डस्येति** ॥ विशेषणभेदव्यपदेशाभ्यामिति सूत्रांशस्येत्यर्थः ॥ **अर्थान्तरमिति** ॥ परतः परत्वरूपविशेषणात् । अक्षरव्यक्तीनां भेदव्यपदेशात् इत्यर्थान्तरमित्यर्थः ॥ **सूत्रशेषमिति** ॥ भेदव्यपदेशा-न्नेतर इति हेतुप्रतिज्ञाभागमित्यर्थः । महिदासस्त्वैतरेयः कृष्णोऽन्यो देवकीसुतः इत्यत्र प्रसिद्धमहिदासः कृष्णापेक्षया अन्यो गम्यते तथाऽत्रापीति भावेनोक्तम् ॥ **प्रसिद्धेशादिति** ॥ ततश्चायं सूत्रार्थः । अदृश्यत्वादिगुणकावित्यस्ति । रुद्रविरिञ्चयोश्चेतनत्वेनैकीकारेण जडप्रकृतेरचेतनत्वविवक्षया चेतनाविति द्विवचनेन त्रयाणां ग्रहणम् । इतरौ जडचेतनौ न अदृश्यत्वादिगुणकौ यः सर्वज्ञ इति सार्वज्ञविशेषण-व्यपदेशात् । तस्य चाचेतने ज्ञानमात्रशून्येऽयोगात् । चेतनयोश्च विरिञ्चिरुद्रयोः अदृश्यत्वादिगुणकात्तस्मात् एतद्ब्रह्मान्य ईश इति भेदव्यपदेशात् स्वस्य स्वभेदायोगादिति । यद्वा न विष्णोरदृश्यत्वादिगुणकाक्षरत्वम् । अक्षरात् परतः पर इति तदुत्तरवाक्ये तस्मादप्यक्षरात् परोऽन्यः प्रतीयते । न हि विष्णोरपि परोऽस्तीति विष्णुपक्षेऽपि प्राप्तबाधकोद्धाराय विशेषणभेदव्यपदेशाभ्यां चेत्ययमंशः प्रवृत्तः । विष्णुरेवादृश्यत्वादिगुणक इति वर्तते । स्कान्दे त्र्यक्षराणां भेदव्यपदेशात् अक्षरात् परतः पर इत्यत्र प्रकृताक्षरस्यैव अक्षरात्परतः परत्वरूपविशेषणव्यपदेशात् बाधकाभावात् भवत्येव विष्णुरदृश्यत्वादिगुणक इति ।

## तत्त्वसुबोधिनी

**अर्थान्निराकृतमपीति** ॥ परविद्याविषयत्वस्य विष्णोरन्यत्र निरवकाशत्वान्यथानुपपत्त्येत्यर्थः ॥ **उक्तार्थे हेतुतयेति** । तपसा चीयत इत्यत्रालोचनार्थेन तपःशब्देन ज्ञानप्रतीतौ तन्निरासाय यस्य ज्ञानमयं तपः इत्यनेनोक्ते पूर्णज्ञानत्वे तपस आलोचनात्मकत्वं वा सन्तापात्मत्वं वाऽस्तु पूर्णज्ञानत्वं कुत इत्याशङ्कानिरासार्थं हेतुतया सार्वज्ञविशेषणोक्तिरित्यर्थः । उपलक्षणं चैतत् । तपसः सन्तापात्मकत्वा-

(तत्त्वसुबोधिनी)

भावे हेतुतया सर्ववित्त्वमपि ग्राह्यम् ॥ **नाचेतनप्रकृतेरिति** ॥ उपलक्षणं चैतत् । निरुपचरितसार्वज्ञस्य विशेषणत्वात् चेतनप्रकृतेरपि नादृश्यत्वादिगुणकत्वमित्यपि द्रष्टव्यम् । विरिञ्चस्यापि नादृश्यत्वादिगुणकत्व-मित्याह ॥ **तस्मादिति** ॥ यः सर्वज्ञ इति श्रुतौ सर्वज्ञ इत्यनेनैव ज्ञानस्योक्तत्वात् सर्वविदित्येतत् व्यर्थमित्यत आह ॥ **ज्ञानेति** ॥ विदॢ लाभे विदोत्पत्तावित्यतो वेति । तथा च सर्वविदित्यस्याप्तकामः सर्वोत्पादक इत्यर्थद्वयमभिहितमिति नैकस्यापि वैय्यर्थमिति भावः । निरवकाशत्वात् अवकाशाभावात् ॥ **सूत्रखण्डस्येति** ॥ विशेषणभेदव्यपदेशाभ्यामित्यस्येत्यर्थः । सूत्रे विशेषणशब्दस्य न केवलं सर्वज्ञत्व-विशेषणादित्येवार्थः । किन्तु परतःपरत्वविशेषणादित्यप्यर्थः । एवं भेदव्यपदेशादित्यस्य हिरण्यगर्भात् रुद्राद्वा भेदमात्रं नार्थः । किं त्वक्षरव्यक्तीनां भेदोऽपि । तथा चाक्षराणां भेदव्यपदेशात् अक्षरात्परतः परत्वमक्षरस्यैव विशेषणमित्यपि सूत्रयोजनेति भाष्यार्थः इत्यर्थः ॥ **प्रकृताक्षरमिति** ॥ अदृश्यत्वादि-गुणकत्वे प्रकृतमित्यर्थः ॥ **सूत्रशेषमिति** ॥ भेदव्यपदेशान्नेतर इति हेतुं प्रतिज्ञाभागं चेत्यर्थः । उपादानतया जगत्कारणत्ववचनस्य का गतिरत आह ॥ **यदपीति** ॥ निरवकाशपरविद्याविषयत्वादि-बाधकसद्भावादित्यर्थः । हिरण्यगर्भादिवाचिशब्दानां का गतिरत आह ॥ **ब्रह्मेति** ॥ **बाधकाभावस्येति** ॥ परतःपरत्वरूपबाधकाभावस्येत्यर्थः ।

## वाक्यार्थमञ्जरी

**अर्थादिति** ॥ परविद्याविषयत्वस्य विष्णोरन्यत्र निरवकाशत्वान्यथानुपपत्येत्यर्थः ॥ ॐ विशेषणभेद-व्यपदेशाभ्यां च नेतरौ ॐ ॥ इतरौ चेतनप्रकृतिचतुर्मुखौ नादृश्यत्वादिगुणकौ यः सर्वज्ञ इति सर्वज्ञत्व-रूपविशेषणव्यपदेशात् । अदृश्यत्वादिगुणकभेदव्यपदेशाच्चेत्यर्थः । चीयते सम्बध्यते तपो कुरुतेति यावत् ॥ **अज्ञानप्रतीताविति** ॥ तप आलोचन इति धातुः । आलोचनं चाक्षस्यैवेति भावः ॥ **ज्ञानमयमिति** ॥ यस्य ब्रह्मणस्तपो ज्ञानमयं ज्ञानस्वरूपमेव । न त्वालोचनात्मकं कुतः अज्ञो ह्यालोचयति न चायं तथा यत; सर्वज्ञ इति हेतुतयेत्यर्थः । सामान्यविशेषवस्तुगतसामान्यविशेषाकार-विषयतया सर्वैर्ज्ञेया धर्माः सामान्यधर्माः । सर्वाज्ञेयाः विशेषधर्माः क्रमेण तदुभयविषयकत्वेन सामान्य-विशेषज्ञानत्वयोरवान्तरविशेष इति न पुनरुक्तिरिति भावः । स्फुटमेतन्मनोविज्ञानशब्दयोरपुनरुक्ति-प्रतिपादकानन्दमयसुधायाम् ॥ **विदॢ लाभ इति** ॥ तथा च सर्वं विन्दते लभत इति वा सर्वं वेदयते उत्पादयतीति वा सर्ववित्सत्यकामः सर्वोत्पादको वेत्यर्थ उक्तो भवति । **सूत्रखण्डस्य** । विशेषणव्यपदेशादित्यस्य । प्रकृताक्षरम् अदृश्यत्वादिगुणकम् ॥ **सूत्रशेषमिति** ॥ भेदव्यपदेशान्नेतर इत्यंशम् ॥ **अन्यमीशमिति** ॥ अन्यो मार्ग इत्युक्ते प्रसिद्धमार्गादन्यत्वप्रतीतिवदिति भावः ॥

## विवृतिः

**अर्थान्निराकृतमपीति** ॥ परविद्याविषयत्वस्य विष्णोरन्यत्र निरावकाशत्वान्यथानुपपत्त्येर्थः । **उक्तार्थेहेतुतयेति** ॥ तपसा चीयत इत्यत्रालोचनार्थेन तपःशब्देन ज्ञानप्रतीतौ तन्निरासाय यस्य ज्ञानमयं तप इत्यनेनोक्ते पूर्णज्ञानत्वे तपस आलोचनात्मकत्वं वा, सन्तापात्मकत्वं वाऽस्तु पूर्णज्ञानत्वं कुत इत्याशङ्कानिरासार्थं हेतुतया सार्वज्ञविशेषणोक्तेरित्यर्थः । उपलक्षणं चैतत् ॥ निरुपचरितसार्वज्ञस्य, विशेषणत्वाच्चेतनप्रकृतेरपि नादृश्यत्वादिगुणकत्वमित्यपि द्रष्टव्यम् । विरिञ्चस्यापि नादृश्यत्वादिगुणकत्वमित्याह ॥ **तस्मादिति** ॥ यः सर्वज्ञ इति श्रुतौ सर्वज्ञ इत्यनेनैव ज्ञानस्योक्तत्वात्सर्वविदित्येतद्व्यर्थमित्यत आह ॥ **ज्ञानेति** ॥ **विदलृ लाभे विद् उत्पत्तावित्यतो वेति** ॥ तथा च सर्वविदित्यस्य आप्तकामः सर्वोत्पादक इत्यर्थद्वयमुक्तं भवतीति नैकस्यापि वैयर्थ्यमिति भावः । निरवकाशत्वात् अवकाशाभावात् ॥ **सूत्रखण्डस्येति** ॥ विशेषणभेदव्यपदेशाभ्यामित्यस्येत्यर्थः । सूत्रे विशेषणशब्दस्य न केवलं सर्वज्ञत्वविशेषणादित्येवार्थः किन्तु परतः परत्वविशेषणादित्यप्यर्थः ॥ एवं भेदव्यपदेशादित्यस्य हिरण्यगर्भाद्रुद्राद्वा भेदमात्रं नार्थः किन्त्वक्षरव्यक्तीनां भेदोऽपि ॥ तथाचाक्षराणां भेदव्यपदेशादक्षरात्परतः परत्वमक्षस्यैव विशेषणमित्यपि सूत्रयोजनेति भाष्यार्थ इत्यर्थः ॥ **प्रकृताक्षरमिति** ॥ अदृश्यत्वादिगुणकत्वेन प्रकृतमित्यर्थः ॥ उपादानतया जगत्कारणत्ववचनस्य कागतिरित्यत आह ॥ **यदपीति** ॥ निरवकाशपरविद्याविषयत्वादिबाधकसद्भावादित्यर्थः ॥ हिरण्यगर्भादिवाचकानां पदानां का गतिरत आह ॥ **ब्रह्मेति** ॥ बाधकाभावस्येति ॥ परतः परत्वरूपबाधकाभावस्येत्यर्थः ॥

## सूत्रभाष्यम्

**॥ ॐ रूपोपन्यासाच्च ॐ ॥ २३ ॥**

**'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्'** (मु.उ. ५-१-३) **इति । 'एको नारायण आसीन्न ब्रह्मा न च शङ्करः । स मुनिर्भूत्वा समचिन्तयत् । तत एते व्यजायन्त विश्वो हिरण्यगर्भोऽग्निर्यमो वरुणरुद्रेन्द्रा इति । तस्य हैतस्य परमस्य नारायणस्य चत्वारि रूपाणि शुक्लं रक्तं रौक्मं कृष्णमिति । स एतान्येतेभ्योऽभ्यचीक्लृपत् । विमिश्राणि व्यमिश्रयत् । अत एतादृगेतद्रूप'मिति तस्यैव हि रूपाण्यभिधीयन्ते ॥ २३ ॥**

## तत्त्वप्रदीपिका

ॐ रूपोपन्यासाच्च ॐ ॥ पश्यो जीवः । स मौनी भूत्वा सृजानीति समचिन्तयत् । विश्वो वायुः । एतानि विमिश्राणि कृत्वा तेभ्यो ह्यचीक्लृपत् । तानि विमिश्राणि पुनरपि व्यमिश्रयत् ॥

## तत्त्वप्रकाशिका

युक्त्यन्तरेण विष्णोरेवादृश्यत्वादिगुणकत्वं साधयत्सूत्रमुपन्यस्य तदुपात्तश्रुतिमेवोदाहरति ॥ रूपेति ॥ द्रष्टा जीवो यदा रुक्मवर्णं हिरण्यगर्भकारणं जगत्कर्तारं पश्यति तदाऽसौ विद्वाननिष्टं पुण्यं पापं च विहाय निर्लेपः पूर्णानन्दत्वादिसाम्यं प्राप्नोतीत्यदृश्यत्वादिगुणकस्य रुक्मरूपोपन्यासाच्चासौ विष्णुरेवेत्यर्थः । ननु ब्रह्मादीनामपि रूपसद्भावात् कुतो रूपोपन्यासेनास्य विष्णुत्वनिश्चय इत्यत आह ॥ एक इति ॥ विश्वो वायुर्विमिश्राण्येतेभ्योऽभ्यचीक्लृपत् । व्यमिश्रयदिति मानुषादौ विशेषेण मिश्रीचकारेत्यर्थः । स एतानि व्यमिश्रयत् । विमिश्राणि चैतेभ्योऽभ्यचीक्लृपदिति वा । तस्य हैतस्येत्यादेरेवात्रोपयुक्तत्वेऽप्येतान्येतेभ्य इत्यस्यार्थप्रतीत्यर्थमन्यांशोदाहरणम् । तस्माद्विष्णोरेव अदृश्यत्वादिगुणकत्वमिति स एवाऽऽनन्दमय इति सिद्धम् ॥ २३ ॥ (अ.६)

## गुर्वर्थदीपिका

स एतान्येतेभ्य इति वाक्यस्यायमर्थः । विमिश्राणि शुक्ले ईषत्कृष्णं कृष्णे ईषद्रक्तं रक्ते ईषत्पीतं पीते चेषच्छुक्लमित्यादिरूपेण विमिश्राणि लोके विद्यमानानि प्राकृतरूपाण्यप्राकृतानि नानावर्णजीवचिन्निष्ठरूपाणि च स्वशुद्धरूपप्रतिबिम्बभूतान्येतेभ्यः विश्वहिरण्यगर्भादिदेवेभ्यः अर्थेऽभ्यचीक्लृपत् । अभितः कृतवानित्यर्थः । व्यमिश्रयत् मानुषादिदेहादिषु देवादिदेहादपि विशेषेण मिश्रितानि चकार । स्वयं त्वन्योन्यामिश्रितदिव्यरूप एव बभूवेति । एवं च रुग्मवर्णमित्यत्रोक्तभगवद्रूपस्य लोकविलक्षणरूपत्वेन रूपोपन्यासाद्भगवानेवात्र ग्राह्य इति भावः । अन्यांशोदाहरणं 'तत एते व्यजायन्त' इत्याद्यन्यांशोदाहरणं एतेभ्य इति सामान्येनोक्तदेवानां स्पष्टीकरणायेति भावः ॥

## भावबोधः

'पुण्यपापे विधूय' इत्यनेन पौनरुक्त्यपरिहारार्थं निरञ्जन इत्यस्यार्थमाह– निर्लेप इति ॥ अत्राद्ये स्वपक्षसाधकोक्तिः । द्वितीये– परपक्षबाधकोक्तिः । विशेषणभेदव्यपदेशाभ्यामित्यंशेनैवाक्षरात् परतः परत्वस्य सावकाशत्वोक्तिश्च । तृतीये– यः सर्वज्ञ इत्यादिपरपक्षबाधकप्रतिपादकाद्वाक्याद् उत्तरवाक्यगतस्वपक्षसाधकपरपक्षबाधकरूपविष्णुधर्मोक्तिरिति सूत्रक्रमः ॥

# भावदीपः

ॐ रूपोपन्यासाच्च ॐ ॥ सूत्रे चशब्दादाह ॥ **युक्त्यन्तरेणेति** ॥ सिद्धान्तहेतोः परपक्षनिरासेऽपि व्यापारोऽस्तीति वा लिङ्गस्य निरवकाशत्वव्यक्त्यर्थं वा विष्णोरेवेत्युक्तम् । भाष्यस्य सूत्रेणान्वयं मत्त्वाऽऽर्थमाह ॥ **द्रष्टेति** ॥ पश्यतीति पश्यो द्रष्टा । प्राघ्राध्माधेट्दृशः श इति शप्रत्यये पश्यादेशः । ब्रह्मयोनिं हिरण्यगर्भकारणम् । अत एव कर्तारं तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैतीति शेषार्थोक्त्याऽऽकाङ्क्षां पूरयति ॥ **तदेति** ॥ अप्रकृतत्वभ्रान्तिं निराह ॥ **असौ विद्वानिति** ॥ पुण्यपापमनिष्टमिति तद्भाष्योक्तेराह । अनिष्टमनपेक्षमिति सञ्चितपुण्यपापे इत्यर्थः । अपौनरुक्त्या निरञ्जनपदार्थमाह ॥ **निर्लेप इति** ॥ तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशाविति वक्ष्यमाणदिशा ज्ञानानन्तरभाविपापकृताशुचित्वादिलेपरहित इत्यर्थः । परमशब्दार्थः पूर्णेति । ईशशब्दस्य रुद्रपरत्वशङ्कनात्तस्य वैष्णवत्वाय तत्रैव वाक्येऽनेकविष्णुलिङ्गप्रदर्शनाय समग्रवाक्यार्थोक्तिरित्याहुः । 'धिया निगृह्यमाणोऽपि भ्रुवोर्मध्यात्प्रजापतेः । सद्योऽजायत तन्मन्युः कुमारो नीललोहित' इति तृतीयस्कन्धाद्युक्त्या रुद्रस्य ब्रह्मजातत्वेन ब्रह्मयोनित्वाद्ययोगादिति । यद्वा पश्यतीति पश्यो जीवः । संसारेऽपि साम्यसत्वात् परममिति । अभिव्यक्तमिति यावत् । अत्र पुण्यपापे विधूय निरञ्जन इति मुक्तलिङ्गमिति तत्वोद्योतटीकायां मुक्तभेदपरतया व्याख्यानेऽपि इह जुष्टं यदेति प्राणो ह्येष सर्वभूतैरिति पूर्वोत्तरवाक्यमनुरुध्य जीवन्मुक्तपरतया व्याख्यानाय समग्रवाक्यार्थोक्तिः । एतेभ्य इति चतुर्थी वायुप्रभृत्युक्तदेवतानामर्थ इत्यर्थः ॥ **अन्यांशेति** ॥ तर्हि तत एते व्यजायन्तेत्यादिनैव पूर्येत । मैवम् । पूर्वशेषोक्तेरपि तत इत्यस्यार्थप्रतीत्यर्थत्वादिति भावः । फलोक्त्योपसंहरति ॥ **तस्मादिति** ॥ निरवकाशानेकलिङ्गसत्वात् परपक्षे बाधकभावाच्चेति सूत्रत्रयहेत्वंशार्थः । अदृश्यत्वादिगुणकस्तत्त्विति प्रतिज्ञार्थः । विष्णोरेवेत्यादि नेतरावित्युक्तप्रधानादयो नेत्यस्यार्थः । एवेति अद्रेश्यवाक्योक्तम् अदृश्यवाक्योक्तं चादृश्यत्वादिकमित्यर्थः । यत्त्वत्र केनचिदुक्तं पञ्चकोटिकसंशयो नेतराविति सूत्रोक्तकोटिद्वयविरुद्ध इति । तन्न । चन्द्रिकायामेव संमाधानात् । यदपि प्रथमदृष्टान्तमुल्लङ्घ्य द्वितीयदृष्टान्तानुरोधेन प्रधानपूर्वपक्षोक्तिरयुक्तेति तदपि न । प्रथमदृष्टान्तस्यापि मायावादिरीत्या उपादानत्व एव सम्भवात् । स्पष्टत्वार्थं टीकादौ द्वितीयोक्तेः । ईशश्रुत्या रुद्रप्राप्तिरप्ययुक्ता । ब्रह्मयोनित्वादि-लिङ्गविरोधित्वादित्यपि न । ब्रह्मयोनित्वादेर्बहुव्रीह्याश्रयणेन सावकाशत्वोपपत्तेः । रुद्रप्राप्तेश्चन्द्रिकाया-मुपपादनाच्च । एवमन्यदपि तदीयं दुर्वचनं निरस्यम् ॥ २३ ॥ (अ.६)

## अभिनवचन्द्रिका

(सू.२३) भाष्ये – **एको नारायण आसीदिति** ॥ प्रलयकाले एकः नारायणः आसीत् । न ब्रह्मा न च शङ्करः । उपलक्षणमेतत्, अन्येऽपि देवाद्या नाऽभवन् । सः=नारायणः, मुनिः=मौनीभूत्वा, सृष्ट्यर्थं समचिन्तयत् । ततः=चिन्तामात्रात्, विश्वो=वायुः, हिरण्यगर्भः=ब्रह्मा, अग्निः, यमः वरुणरुद्रेन्द्राश्च, बहुवचनमाद्यर्थे, ब्रह्मरुद्रेन्द्राद्या व्यजायन्त । तस्य हैतस्य नारायणस्य शुक्लं रक्तं रौग्मं कृष्णमिति चत्वारि रूपाणि । ननु – ब्रह्मादीनामपि शुक्लादिरूपसद्भावात् चत्वारि रूपाणि नारायणस्येति असाधरण्योक्तिः कथमित्यत उक्तम् – **स एतानीति** ॥ सः=परमात्मा, एतानि= शुक्लादीनि, चत्वारि रूपाणि, एतेभ्यः=प्रागुत्पन्नेभ्यो देवेभ्यः, विमिश्राणि=रूपान्तरेण मिश्राणि, अभ्यचीक्लृपत्=कल्पयामास । न तु स्वकीयशुक्लादीनि रूपाणीव शुद्धशुक्लादिरूपाणि दत्तवान् । मानुषादौ यानि रूपाणि दत्तवान्, तानि देवरूपेभ्यः । 'विशेषेण व्यमिश्रयत् रूपान्तरेणे'ति शेषः ॥

यद्वा – एतानि=देवेभ्यो दीयमानानि रूपाणि । आदौ परस्परं व्यमिश्रयत्, मिश्राणि कृत्वा, पश्चादेतेभ्यो देवेभ्योऽभ्यचीक्लृपत् 'अस्येदं रूपं अस्येदं रूप'मिति विभज्य दत्तवान् । अतः देवादिरूपाणां शूद्धशुक्लत्वाभावात् एतादृक्=शुद्धं शुक्लादि, एतद्रूपं=विष्णोरेवरूपमिति श्रुत्यर्थः ॥

**पूर्वपक्षस्तु–** 'यत्तदद्रेश्य'(आ.१-६)मित्युक्तादृश्यत्वादिगुणको न विष्णुः किंतु जडप्रकृतिः । अक्षरशब्दश्रवणात् । न च अक्षरशब्दो विष्णावपि सावकाश इति वाच्यम् । 'तत्परतः पराभिधानात् । न च विष्णोः परोऽस्ति पृथिव्यादिदृष्टान्तेनोपादानतया जगत्कारणत्वाभिधानाच्च । चित्प्रकृतेर्वैतददृश्य-त्वादिकम् । तस्यामक्षरशब्दस्य स्मृतिसिद्धत्वात् । विकारित्वेन जगत्कारणत्ववचनं विकाराभिमानि-त्वाद्युज्यते । 'अक्षरात्परत' इत्येतदपि 'परतोऽक्षरा'दिति सामानाधिकरण्येनोपपद्यते । हिरण्यगर्भस्य वा एतददृश्यत्वादिकम् । 'स ब्रह्मविद्या'(आ.१-२)मित्यादि ब्रह्मशब्दात् । रुद्रस्य वा एतददृश्यत्वादिकम् । 'कर्तारमीश'(आ.३-१-२)मिति ईशशब्दश्रवणादिति ।

**सिद्धान्तस्तु–** अदृश्यत्वादिगुणको विष्णुरेव । 'अथ परा यया तदक्षरमधिगम्यत' (आ.१-५) इति अदृश्यत्वादिगुणकस्य परविद्याविषयत्वाभिधानात् । न च विष्णुप्रापकपरविद्याविषयत्ववत् जडाजडप्रकृतिविरिञ्चरुद्रप्रापकरणामपि भावात् । त एव अदृश्यत्वादिगुणकाः किं न स्युरिति वाच्यम् । जडाऽजडप्रकृतित्वविरोधिसार्वज्ञविशेषणस्य 'तस्मादेतद्ब्रह्मनामरूपमन्नं च जायत' इति विरिञ्चत्वविरोधि-

(अभिनवचन्द्रिका)

भेदव्यपदेशस्य च, 'जुष्टं यदा पश्यत्यन्यमीश'(आ.३-१-२)मिति रुद्रत्वविरोधि भेदव्यपदेशस्य च भावेनासम्भवात् । न च परतः पराभिधानान्न विष्णुरिति वाच्यम् । त्र्यक्षराभिधानेन परतो मध्यमाक्षरात् परत्वसम्भवेनाऽविरोधात् । 'यदाऽपश्यः पश्यते रुग्मवर्ण'(आ.३-१-३)मित्यादिना विष्ण्वसाधारण-रुग्मवर्णादिरूपोपन्यासाच्चाऽदृश्यत्वादिगुणको विष्णुरेव स एवानन्दमय इति सिद्धम् । (अ.६)

## वाक्यार्थमुक्तावली

ॐ रूपोपन्यासाच्च ॐ ॥ पुण्यपापे विधूयेत्यनेनापौनरुक्त्याय निरञ्जनपदार्थमाह **निर्लेप इति** । साम्यस्येदानीमपि सत्वादित्यतः परममुत्तममित्युक्तम् । तदर्थमाह ॥ **पूर्णेति** ॥ अलम्बुद्धिगोचरत्वमिह पूर्णत्वं विवक्षितम् । एतेभ्यो विश्वादिदेवेभ्यः । अत एवेषां रूपमेतादृक् मिश्रितम् ॥ **अन्यांशेति** ॥ तर्हि तत एते व्यजायन्त इत्येतावतैव पूर्यते । मैवं पूर्वशेषोक्तेरपि तत इत्यस्यार्थप्रतीत्यर्थत्वादिति । अदृश्यत्वादिगुणकस्य रुग्मरूपोपन्यासात् शुद्धरुग्मादिरूपस्य वैष्णवत्वोपन्यासाच्चादृश्यत्वादिगुणको विष्णुरेवेति सूत्रार्थः । अत्राद्ये विषयवाक्यस्य परविद्याविषयत्वरूपस्वपक्षसाधकोक्तिः । द्वितीये परपक्षे बाधकस्य स्वपक्षे बाधकाभावस्य चोक्तिः । तृतीये विशेषणव्यपदेशरूपात् यः सर्वज्ञ इत्यादिपरपक्ष-बाधकात् वाक्यादुत्तरवाक्यगतस्वपरपक्षबाधकोक्तिरिति ।

## तत्त्वसुबोधिनी

पुण्यपापे विधूय इत्यनेन पौनरुक्त्यपरिहारार्थं निरञ्जन इत्यस्यार्थमाह ॥ **निर्लेप इति** ॥ **विमिश्राणीति** ॥ स्वस्य त्वेतानि शुक्लादीनि शुद्धानि अन्येषां तु मिश्राणीति भावः । एतेभ्यः विश्वादिभ्यः व्यचीक्लृपत् चकार । अर्थान्तरमाह ॥ **एतानीति** ॥ ननु तस्य हैतस्येत्यारभ्य व्यमिश्रयत् इत्यन्तमेवोदाहर्तव्यं तत्रैव रूपोपन्याससत्त्वेन तस्यैव प्रकृतोपयुक्तत्वात् । एको नारायण इत्यारभ्य विश्वो हिरण्यगर्भ इत्यन्तमनुपयुक्तं किमर्थमुदाहृतमित्याशङ्क्य एतेभ्य इत्यस्य विश्वादिभ्य इत्यर्थः । पूर्वं प्रकृतत्वादिति दर्शयितुं तदुदाहरणमित्याह ॥ **तस्य हैतस्येत्यादेरेवेति** ॥ अत्राद्ये सूत्रे स्वपक्षे लिङ्गरूपसाधकोक्तिः । द्वितीये परपक्षबाधकस्य स्वपक्षे बाधकाभावस्य चोक्तिः । तृतीये रूपोपन्यासरूपस्वपक्षसाधकस्य परपक्षबाधकस्य चोक्तिरिति सूत्रक्रमः ॥ ६ ॥

## वाक्यार्थविवरणम्

एतेभ्यो ब्रह्मादिभ्यः । अचीक्लृपन् दत्तवानित्यर्थः ।

## वाक्यार्थमञ्जरी

ॐ रूपोपन्यासाच्च ॐ ॥ **रुग्मवर्णमिति** ॥ रुग्मरूपाभिधानाच्चादृश्यत्वादिगुणको विष्णुरेवेत्यर्थः ॥ पश्यतीति पश्य इत्याशयेनोक्तं द्रष्टेति । तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैतीति शेषार्थोक्त्याऽकाङ्क्षां पूरयति ॥ **तदेति** ॥ पुण्यनाशस्यापुरुषार्थत्वादाह ॥ **अनिष्टपुण्यमिति** ॥ अपरोक्षज्ञानात्पूर्वभाविपुण्यं द्विविधं काम्यमकाम्यं च तत्राकाम्यमपरोक्षज्ञानाय भवति । काम्यं च द्विविधम् । इष्टमनिष्टं च । तत्रेष्टमप्रारब्धमपि न नश्यति । इष्टनाशस्यापुरुषार्थत्वात् । अनिष्टं तु नश्यतीति चतुर्थ एवोत्तरत्र स्पष्टम् । पुण्यपापे विधूयेत्यनेन पौनरुक्त्यवारणाय निरञ्जनशब्दार्थमाह ॥ निर्लेप इति ॥ ज्ञानोत्तरकालीनानिष्टपुण्यपापलेपरहित इत्यर्थः ॥ **पूर्णेति** ॥ योग्यतानुसारेणेदम् । एतेभ्यः विश्वादिभ्यः । अभ्यचीक्लृपत् दत्तवान् । विशेषेण विश्वादिगतरूपापेक्षया ॥ **भाष्ये अत एतदिति** ॥ अतः देवादिरूपाणां शुद्धत्वाभावादेतच्छुद्धं शुक्लादि एतद्रूपम् एतस्य हरे रूपमित्यर्थः ॥ ६ ॥

## विवृतिः

पुण्यपापे विधूयेत्यनेन पौनरुक्त्यपरिहारार्थं निरञ्जन इत्यस्यार्थमाह ॥ **निर्लेप इति । विमिश्राणीति** ॥ स्वस्य त्वेनानि शुक्लादीनि शुद्धानि अन्येषान्तु मिश्राणीति भावः ॥ एतेभ्यो विश्वादिभ्यो व्यचीक्लृपत् चकार ॥ अर्थान्तरमाह ॥ **एतानीति** ॥ ननु तस्यैवेत्यारभ्य व्यमिश्रयदित्यंतमेवोदाहर्तव्यं तत्रैव रूपोपन्याससत्वेन तस्यैव प्रकृतोपयुक्तत्वात् । एको नारायण इत्यारभ्य विश्वो हिरण्यगर्भ इत्यन्तमनुपयुक्तं वाक्यं किमर्थमुदाहृतमित्याशङ्क्य एतेभ्य इत्यस्य विश्वादिभ्य इत्यर्थः ॥ विश्वादीनां पूर्वं प्रकृतत्वादिति दर्शयितुं तदुदाहरणमित्याह ॥ **तस्य हैतस्येत्यादेरेवेति** ॥ अत्राद्ये सूत्रे स्वपक्षे लिङ्गरूपसाधकोक्तिः । द्वितीये परपक्षे बाधकस्य स्वपक्षे बाधकाभावस्य चोक्तिः । तृतीये रूपोपन्यासादिति स्वपक्षसाधकस्य परपक्षबाधकस्य चोक्तिरिति सूत्रक्रमः ॥

॥ इति अदृश्यत्वाधिकरणम् ॥

## ७. वैश्वानराधिकरणम्

**अदृश्यत्वादिगुणेषु सर्वगतत्वं 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्त' (छां.उ.५-१८-१) इति वैश्वानरस्योक्तमित्यत आह—**

(सूत्रभाष्यम्)

॥ ॐ वैश्वानरः साधारणशब्दविशेषात् ॐ ॥ २४ ॥

अग्नाविष्ण्वोः साधारणस्य वैश्वानरशब्दस्य विष्णावेव प्रसिद्धात्मशब्देन विशेषणाद्वैश्वानरो विष्णुरेव ॥ २४ ॥

## सत्तर्कदीपावली

गताधिकरणेनोत्तराधिकरणस्याक्षेपिकीं सङ्गतिं दर्शयति ॥ **अदृश्यत्वेति** ॥ नित्यं विभुं सर्वगतमिति यत्सर्वगतत्वमुक्तं तन्न विष्णोरेव । श्रुत्यन्तरे वैश्वानरस्योच्यमानत्वात् । अभितो विगतमानत्वेनाभिविमानमात्मानं वैश्वानरमिति वैश्वानराग्नाविव विष्णावपि स एष वैश्वानरो विश्वरूप इत्यादिना प्रयुक्तत्वात्साधारणो न विष्णोरेवावगमक इति प्राप्ते सूत्रं पठित्वा व्याचष्टे । **वैश्वानर इत्यादिना** ।

## तत्त्वप्रदीपिका

एवं तावत् श्रुतिलिङ्गानामन्यत्रप्रसिद्धानां ब्रह्मणि समन्वयं प्रदर्शयता पादद्वयार्थनिगमनाय सर्वनाम्नां सर्वलिङ्गानां च समन्वयदृढीकरणात्मकोऽखिलगुणोदीरणपरतया गुणविरहवादनिराकरणाकृतिः परमकारुणिकेनामरगणगुरुणाऽयमधिकरणराज आरभ्यते । 'यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मम्'' इति मुण्डकश्रुतावदृश्यत्वादिगुणेषु सर्वगतत्वमुक्तम् । तदत्र छन्दोगश्रुतावभिविमानशब्देनोच्यते । अभितो विगतं मानमस्येति 'अभिविमाः' । ॐ ज्वलनजनार्दनयोः साधारणस्य वैश्वानरशब्दस्य विष्णावेव प्रवृत्तिदर्शनेनोभयत्रप्रसिद्धोभयविधपदकदम्बकसमन्वयोपन्यासावसरसूचनामाचरत्यग्नाविष्ण्वोरित्यादिना । प्रादेशमात्रत्वमधिकार्यपेक्षया । ''प्रादेशमात्रं पुरुषं वसन्तम्'' इति च भागवते ॥

## तत्त्वप्रकाशिका

अत्र लोकतोऽन्यत्र प्रसिद्धवैश्वानरनाम्नः पाचकत्वाद्यनेकलिङ्गसमन्वयसिद्धये ब्रह्मणि समन्वयप्रतिपादनादस्ति शास्त्रादिसङ्गतिः । श्रुत्यादिसङ्गतिं विषयवाक्योदाहरणपूर्वकं विषयादिकं च सूचयति ॥ **अदृश्यत्वादीति** ॥ गताधिकरणेऽदृश्यत्वादिगुणा विष्णोरुक्तास्तेषु सर्वगतत्वं चोक्तं 'नित्यं विभुं सर्वगतम्' इति । तददृश्यत्वादिगुणेषूक्तं सर्वगतत्वं च छन्दोगश्रुतावभिविमानपदेन वैश्वानरस्योक्तम् । अभितो विगतं मानं मर्यादा यस्येति । 'मानं ज्ञानं लयश्चैव मर्यादा चैव (चापि) कथ्यते' इत्यभिधानात् । तस्य च वैश्वानरस्य विष्णोरितरत्वे सर्वगतत्वमप्यन्यस्य प्रसज्येतेत्यवश्यनिर्णेयत्वम् । स वैश्वानरो विषयः ।

(तत्त्वप्रकाशिका)

**किं विष्णुरन्यो वेति संशयः । सर्वगतत्वमन्यत्र प्रसिद्धिश्च सन्देहबीजम् । नायं वैश्वानरो विष्णुः किन्त्वग्निदेवता तेजोभूतं वा स्यादिति पूर्वः पक्षः । वैश्वानरश्रुतेः । न च वाच्यं सर्वगतत्वलिङ्गाद्वैश्वानरो विष्णुरिति । लिङ्गस्य श्रुतितो दुर्बलत्वात् । न च लिङ्गस्य निरवकाशत्वेन प्राबल्यात् श्रुतिबाधकत्वमिति मन्तव्यम् । श्रुतेरपि प्रसिद्धितो निरवकाशत्वात् । श्रुतेः विष्णुविषयत्वेऽग्न्यादिविषयतया लोकप्रसिद्धिबाधाद् वैदिकविद्याभेदव्यवहारविरोधाच्च । न हि वैश्वानरश्रुतेरग्न्यादिविषयत्वाभावे व्यवहारस्य गत्यन्तरमस्ति । अतः प्रसिद्धिलिङ्गयोरुभयोरपि निरवकाशत्वेन वैश्वानरश्रुतेरग्नाविष्ण्वोः साधारण्यमेव स्यान्न तु लिङ्गेन विष्णुपरतानिश्चयः । अतो न वैश्वानरो विष्णुरिति न सर्वगतत्वं तस्येति भावः । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ अत इति ॥ अयं वैश्वानरो विष्णुरेव । आत्मानं वैश्वानरमित्यात्मशब्दात् । न चोक्तरीत्या साधारणवैश्वानरश्रुतिसद्भावादनिर्णय इति वाच्यम् । साधारणस्यापि वैश्वानरशब्दस्य 'आत्मशब्दः परे विष्णौ नान्यत्र क्वचिदिष्यते' इत्यादौ विष्णावेव प्रसिद्धत्वेनान्यत्रानवकाशात्मशब्दसामानाधिकरण्येन विष्णुपरत्वस्य सम्भवात् । प्रसिद्ध्यादेरन्यथापि सिद्ध्या सावकाशत्वस्य वक्ष्यमाणत्वादिति भावः ॥ २४ ॥**

## भावबोधः

ॐ वैश्वानरः साधारणशब्दविशेषात् ॐ ॥ लोकतोऽन्यत्र प्रसिद्धवैश्वानरनाम्न इति न च सूत्रभाष्ययोः साधारणशब्देनास्योभयत्र प्रसिद्धत्वप्रतीतेर्नान्यत्र प्रसिद्धतेति वाच्यम्; सूत्रभाष्ययोरग्नौ वैश्वानरशब्दस्य लोकप्रसिद्धेर्विषयवाक्योक्तसर्वगतत्वादिविष्णुलिङ्गानाञ्च निरवकाशत्वेन तुल्यबलतया वैश्वानरशब्द-स्याग्नाविष्ण्वोः साधारण्यस्यैवाभिप्रेतत्वान्नोभयत्र प्रसिद्धतेति भावः । अत एव वक्ष्यति । अतः प्रसिद्धिलिङ्गयोरपि निरवकाशत्वेन वैश्वानरश्रुतेरग्नाविष्ण्वोः साधारण्यमेव स्यादिति । नापि 'विश्वजीवान्तर-त्वाद्यैः लिङ्गैः' इत्यणुभाष्ये वैश्वानरशब्दस्य लिङ्गात्मकत्वोक्त्या तद्विरोधः, वैश्वानरशब्दस्य सिद्धान्ते यौगिकत्वदर्शनार्थं अवयवार्थकथने तात्पर्यात् । अन्यथा वैश्वानरत्वाद्यैरित्यवक्ष्यत् । वैश्वानरशब्दस्य समन्वयेनान्तःप्रतिष्ठानादिरूपलिङ्गानां यः समन्वयः सिद्धः तत्प्रदर्शनपरत्वाद्वा । अन्यथा विश्वनर-सम्बन्धित्वाद्यैरित्यवक्ष्यत् । अत एवानुव्याख्याने 'श्रुतिर्लिङ्गाधिका परा' इत्युक्तम् । भाष्ये वैश्वानर-शब्दस्येत्यस्य संमुग्धत्वेऽपि प्राक् प्राधान्येनेत्येतन्निरवकाशमिति भावः । **पाचकत्वाद्यनेकलिङ्ग-समन्वयसिद्धय इति** ॥ तेन पादसङ्गतिरुपपन्नेति भावः । अनन्तरसङ्गतिः टीकायामेव स्पष्टा ॥ **किं विष्णुरन्यो वेति** ॥ अत्र वैश्वानरः किमग्निरुत विष्णुरिति चिन्ता । तदर्थमग्निश्रुतिलिङ्गसमानाधिकृतत्व-लोकप्रसिद्धिवैदिकसूक्तविद्याव्यवहारनियमविरोधबलेन वैश्वानरशब्दः किमग्निदेवताभूतपर उत आत्मशब्दसामानाधिकरण्यगीतासमाख्यादिबलाद्विष्णुपर इति । तदर्थमग्निश्रुत्यादीनां निरवकाशत्वं

(भावबोधः)

प्रसिद्धिव्यवहारयोर्गत्यन्तराभावः, आत्मशब्दादीनां सावकाशत्वमुतं विपरीतमिति । तदर्थमात्मशब्दादीनां निरवकाशत्वेऽग्निश्रुत्यादीनां सावकाशत्वे प्रसिद्धिव्यवहारयोर्गत्यन्तरे च प्रमाणं नास्त्युतास्तीति । तेजोभूतं वा स्यादिति । अनेन अग्नाविष्ण्वोरित्यादिभाष्येऽग्निशब्देनात एव न देवताभूतं चेत्युत्तरसूत्रानुरोधेन तेजोभूतमपि विवक्षितमित्युक्तं भवति ॥ **साधारण्यस्यापि वैश्वानरशब्दस्येति** ॥ अनेन श्रुतिसाधारण्ये विशेषश्रुत्यादेर्निश्चय इति न्यायविवरणमुक्तार्थं भवति । तत्रादिपदेन स्मर्यमाणमित्यादिसूत्रोक्तसमाख्यादेर्ग्रहणमिति बोद्धव्यम् ।

## भावदीपः

ॐ वैश्वानरः साधारणशब्दविशेषात् ॐ ॥ **नाम्न इति** ॥ श्रुतिर्लिङ्गाधिका परेत्यनुभाष्योक्तेः । आपाततोऽन्यत्र रूढत्वात् । विश्वजीवान्तरत्वाद्यैरित्यणुभाष्योक्तिस्तु सिद्धान्तदिशा ब्रह्मणि यौगिकत्वाभिप्रायेणेति भावः । कथं तर्ह्यत्र पादे निवेश इत्यतः फलतः पादसङ्गतिरन्तर्नय इवेत्याह ॥ **पाचकत्वेति** ॥ तद्यद् भक्तं प्रथममागच्छेत् तद्धोमीयमिति वैश्वानरे तद्धुतं भवतीत्यादिना पाचकत्वहोमाधारत्वगार्हपत्याद्यङ्गकत्वादिश्रवणादिति भावः । यद्यपि पाचकत्वं कर्मेति वक्ष्यति । तथापि लिङ्गत्वमप्यस्तीति वा तदन्यलिङ्गापेक्षया वा एवमुक्तिः । अधिकं चन्द्रिकायाम् । इत्यन्तं भाष्यं सङ्गतिपरत्वेन तावद्व्याकर्तुं परिष्करोति ॥ **गतेति** ॥ भाष्यं व्याचष्टे ॥ **अदृश्यत्वादिगुणेपूक्तमिति** ॥ यस्त्वेतमित्यादेरर्थः ॥ **छन्दोगेति** ॥ पञ्चमे वैश्वानरविद्यायामित्यर्थः । प्रथमबृहद्भाष्योक्तमाह ॥ **मानमिति** ॥ भावमाह ॥ **तस्येति** ॥ वक्ष्यमाणन्यायेनेतरत्व इत्यर्थः । इति सङ्गतिसम्भवादिति हेत्वर्थोऽत्रेतिशब्दः ॥ **किं विष्णुरिति** ॥ किं विष्णुरेव वाऽन्योऽपि वा इत्यर्थः । विष्णुरेव वेति सिद्धान्तकोटेः शेषो वा तदेव भाष्यं पूर्वपक्षतद्युक्तितत्फलोक्तिपरत्वेन व्याचष्टे ॥ **नायमिति** ॥ विष्णुरित्यस्य विष्णुरेवेत्यर्थः । अत एव न देवता भूतं चेति सूत्रमनुरुध्याऽऽह ॥ **किं त्विति** ॥ विष्णुरित्यप्यनुकर्षः । वैश्वानरस्येति भाष्यसूचितं तावदाह ॥ **वैश्वानरेति** ॥ अग्नाविष्ण्वोः साधारणस्येति भाष्योक्तं साधारण्यमग्नाविष्ण्वोः विवरिष्यन् श्रुतिलिङ्गयोस्तुल्यबलत्वं वक्तुमाह ॥ **न चेति** ॥ **प्राबल्यादिति** ॥ अन्तरादिनयन्यायेनेति भावः । श्रुतेरपीत्युक्तमेव साक्षादपीति सूत्रव्यावर्त्यं व्यनक्ति ॥ **श्रुतेरिति** ॥ **लोकप्रसिद्धीति** ॥ लोकव्यवहाराभावापातादित्यर्थः । नैष्फल्यं स्यादिति भावः । एतेनान्तरादिनयेष्वपि निरवकाशलिङ्गेनोक्तेः श्रुतिबाधो न संमत इति पूर्वोक्तसर्वाक्षेपो दर्शितः । अभिव्यक्तेरित्यादिसूत्राणां व्यावर्त्यचोद्यमाह ॥ **वैदिकेति** ॥ अग्न्यादिसर्वशब्दानां विष्णौ मुख्यत्वे

(भावदीपः)

सर्वस्य विष्णुविद्यात्वेनेयमग्निविद्या इयमात्मविद्येति भेदव्यवहारो न स्यात् । अस्ति च व्यवहारः । तेन तेषामग्न्यादिवाचित्त्वं सिद्धमिति तद्विरोधान्न वैश्वानरादिशब्दानां विष्णुविषयत्वमित्यर्थः । व्यवहारस्य निरवकाशत्वं व्यनक्ति ॥ **न हीति** ॥ एवं च सिद्धं साधारण्यमित्याह ॥ **अत इति** ॥ व्यवहारस्याग्न्यादिविषयत्वं विना गत्यन्तराभावादित्यर्थः । अग्नाविष्ण्वोरिति देवताद्वन्द्वे चेत्यनङादेशः । अन्तर्नय इवोभयबाधेनैक्यं तु नाऽऽशङ्क्यम् । भूतसाधारणश्रुत्या प्राप्तं जडेनाभेदायोगात् । कथं तर्हि वैश्वानरस्योक्तमिति भाष्यमित्यतो भावमाह ॥ **अत इति** ॥ श्रुतेः साधारण्यादित्यर्थः । सर्वगतत्वमित्यन्तवाक्यस्य तात्पर्यं न सर्वेति । विष्णुरितीत्यनन्तरं तस्येतीत्यनन्तरं च निश्चय इत्यनुषङ्गः ॥ व्युत्क्रमेण भाष्यं व्याचष्टे ॥ **अयमिति** ॥ श्रुतिसाधारण्ये विशेषश्रुत्यादेः निश्चय इति न्यायविवरणदिशा हेत्वंशं व्याचष्टे ॥ **आत्मानमिति** ॥ विशेषणपदकृत्यं व्यावर्त्यपूर्वमाह ॥ **न चेति** ॥ वक्ष्यमाणत्वात् साक्षादपीत्यादि सूत्रेष्विति भावः ॥ २४ ॥

## अभिनवचन्द्रिका

साधारणग्रहणं किमर्थम् ? साधारणग्रहणं वैश्वानरशब्दस्योभयत्र प्रसिद्धत्वज्ञापनार्थम् । न चैवं सति अस्याधिकरणस्य तृतीयपादप्रवेशापत्तिः । लोकतोऽन्यत्र प्रसिद्धत्वात् । लोकतोऽन्यत्रप्रसिद्धस्योभयत्रप्रसिद्धत्वं विरुद्धमिति चेत्, उक्तम्, किमुक्तम् – अन्यत्र प्रसिद्धत्वेन प्रतिपन्नत्वमन्यत्रप्रसिद्धत्वम् । उभयत्र प्रसिद्धत्वेन प्रतिपन्नत्वमुभयत्रसिद्धत्वम् । तदुभयमपि एकस्यैव शब्दस्याऽधिकारिभेदेनोपपन्नमित्युक्तम् । अत एवेदमधिकरणं पादद्वयसन्धौ निवेशितम् । अत एवाऽनुव्याख्याने वैश्वानराधिकरणस्य प्रथमद्वितीयतृतीयपादशेषत्वज्ञापनाय एतदधिकरणारम्भात्प्रागेव ।

'बहुलिङ्गसमायुक्तैर्बहुभी रूढनामभिः ।
प्रसिद्धैरन्यगत्वेन वाच्यः साक्षाज्जनार्दनः'

इत्यनेन पादद्वयार्थोपसंहारः कृतः । एवं च सति द्वितीयपादार्थोपसंहारानन्तरम् एतदधिकरणव्याख्यानात् तृतीयपादशेषत्वं ज्ञायते, तृतीयपादनिरूपणात्प्राग्व्याख्यानात् द्वितीयपादशेषत्वं ज्ञायते । द्वितीयपादार्थोपसंहारे कर्तव्ये प्रथमपादार्थोपसंहारात् अस्याधिकरणस्य प्रथमपादशेषत्वमपि भाष्यकाराभिमतमिति ज्ञायते । **शास्त्रादिसङ्गतिरिति** ॥ अस्याधिकरणस्य शास्त्राध्यायाभ्यां निरूपिता अतन्र्भावलक्षणा सङ्गतिः पादे, न तु औपोद्घातिकी सङ्गतिरिति विवेकः । एतेन – वैश्वानराधिकरणव्यावृत्त्यर्थं प्राधान्येनेत्युक्तत्वात् पुनरस्याऽधिकरणस्य पादान्तर्भावाङ्गीकारे तद्विरोध इति परास्तम् ।

(अभिनवचन्द्रिका)

वैश्वानरस्योक्तमिति ॥ अदृश्यत्वाधिकरणप्रतिपाद्यस्य एतदधिकरणप्रतिपाद्यस्य च सर्वगतत्वेन प्रतीयमानत्वं पूर्वाधिकरणतच्छ्रुतिभ्यां सङ्गतिरिति भावः । **नायं वैश्वानर इति** ॥ साधकशून्यत्वादिति शेषः । ननु किं वाक्यं, तर्हि निरर्थकमेवेति पृच्छति – **किंत्विति** ॥ न निरर्थकं वाक्यं वैश्वानरशब्दस्य अग्नौ तेजोभूते च प्रसिध्दिसद्भावात् अग्निर्वा तेजोभूतं वा स्यात् । किं तद्विचारेणेत्याह – **अग्निदेवतेति** ॥ एतेन – पूर्वपक्षिणा अग्निदेवतैव, तेजोभूतमेवेति वा, अवधारणीयत्वेन 'अग्निदेवता, तेजोभूतं वा स्या'दिति अनास्थयाऽभिधानमयुक्तमिति परास्तम् । पूर्वपक्षिणः विष्णुर्नेत्याग्रहेण अग्निदेवतादिपक्षपरिग्रहे आग्रहाभावात् ॥ साधकशून्यत्वरूपहेतोरसिद्धिमाङ्क्य परिहरति – **न चेति** ॥ श्रुतेः प्रसिद्धतो निरवकाशत्वं दर्शयति – **श्रुतेरिति** ॥ भवेच्छ्रुतेः सावकाशत्वं यद्यग्न्यादिविषयकत्वप्रसिद्धः काचन गतिः स्यात् । न चैवं, किंतु वैश्वानरश्रुतेः विष्णुविषयत्वे अग्न्यादिविषयतया लोकप्रसिद्धेः भ्रममूलकत्व-लक्षणो बाध एव प्राप्नोतीति निरवकाशत्वमेवाऽभ्युपेयमिति भावः । हेत्वन्तरेण श्रुतेर्निरवकाशत्वमाह – **वैदिकेति** ॥ वैदिकविद्याव्यवहरस्य भ्रममूलत्वलक्षणविरोधप्रसङ्गाच्च श्रुतेर्निरवकाशत्वमिति भावः । **गत्यन्तरमस्तीति** ॥ भ्रममूलकत्वकल्पनैव गतिर्नान्या गतिरस्तीति भावः **अत इति** ॥ अत इत्यस्य विवरणं – **प्रसिद्धिलिङ्गयोरुभयोरपि निरवकाशत्वेनेति** ॥ वैश्वानरश्रुतेः अग्नाविष्ण्वोः ज्ञापकशून्यत्वेन साधारण्यमेव स्यादित्यर्थः । त्वयोपन्यस्तं सर्वगतत्वलिङ्गं वैश्वानरशब्दस्य अग्निपरत्वनिर्णायकश्रुतेः निर्णयप्रतिबन्धायैवोपयुज्यते न तु विष्णुपरत्वनिर्णयायालमिति भावः । **अत इति** ॥ साधकशून्यत्वलिङ्गस्याऽसिद्धेरभावादित्यर्थः । नात्मशब्दो वैश्वानरशब्दस्य विष्णुत्वनिर्णायकः । वैश्वानरश्रुतेरुभयत्रप्रसिद्धत्वेन प्रसिद्धिबललब्धाऽग्निपरत्व निवारकत्वाभावात् । ततश्चाऽनिर्णय इत्याशङ्क्य निषेधति – **न चोक्तरीत्येति** ॥ साधारणवैश्वानरश्रुतिसद्भावात् । वैश्वानरश्रुतेः अग्नाविष्ण्वोः साधारण्य-सद्भावात्, उभयत्रप्रसिद्धत्वादिति यावत् । आत्मशब्दरूपसाधकोपन्यासेऽपि उक्तरीत्या साधकाभावात् 'नायं नैश्वानरो विष्णु'रिति पूर्वपक्ष्युक्तरीत्या अग्निपरत्वे बाधकाभावात् तदनिर्णय इति वक्तुं शक्यत्वाद-निर्णय एवेति न वाच्यमित्यर्थः । **साधारणस्यापीति** ॥ वैश्वानरशब्दस्य अग्निपरत्वनिरासाय साधकान्तरं मृग्यम् । विष्णुपरत्वनिर्णयायोपन्यस्तस्य आत्मशब्दसामानाधिकरण्यस्यैव तत्र बाधकत्वादिति भावः । नन्वेवं वैश्वानरशब्दस्योभयत्र प्रसिध्यङ्गीकारेण पूर्वत्र पूर्वपक्षनिरासेऽपि न प्रथमपूर्वपक्षनिरासः । तदुक्तान्यत्रप्रसिद्ध्यादेर्निरवकाशत्वादित्यत आह– **प्रसिद्धेरिति** ॥

## वाक्यार्थमुक्तावली

ॐ वैश्वानरः साधारणशब्दविशेषात् ॐ ॥ **लोकतोऽन्यत्र प्रसिद्धवैश्वानरनाम्न इति** ॥ न च सूत्रे साधारणपदप्रयोगात् उभयत्र प्रसिद्धत्वमिति वाच्यम् । प्रसिद्धलिङ्गाभ्यां साधारण्यस्य तत्र विवक्षितत्वेनोभयत्र प्रसिद्ध्या साधारण्यस्यानभिप्रेतत्वात् । अत एव वक्ष्यति अतः प्रसिद्धिलिङ्गयोरुभयोरपि निरवकाशत्वेन वैश्वानरश्रुतेरग्नाविष्ण्वोः साधारण्यमेव स्यादिति ॥ न च विश्वजीवान्तरत्वाद्यैः लिङ्गैरिति सङ्ग्रहभाष्ये वैश्वानरशब्दस्य लिङ्गत्वोक्तिविरोधः । वैश्वानरशब्दस्य सिद्धान्ते यौगिकत्वेन प्रवृत्तिनिमित्तधर्मविवक्षया लिङ्गत्वोक्त्यविरोधात् । अन्यथा वैश्वानरत्वाद्यैरित्यवक्ष्यत् । अत एवानुव्याख्याने श्रुतिर्लिङ्गाधिका परा इत्युक्तम् । विस्तरन्तु आनन्दमालावाक्योदाहरणपूर्वम् अस्माभिरन्यत्र कृतोऽनुसन्धेयः ॥ **पाचकत्वायनेकलिङ्गसमन्वयसिद्धय इति** ॥ तेन पादान्तर्भावाभावेऽपि औपोद्घातिक्या सङ्गत्याऽत्र निवेश इति भावः ॥ **किं विष्णुरन्यो वेति** ॥ अत्र वैश्वानरः किमग्निरुत विष्णुरिति चिन्ता । तदर्थमग्निश्रुतिलिङ्गसमानाधिकृतत्वलोकप्रसिद्धवैदिकसूत्रविद्याव्यवहारनियमविरोधबलेन वैश्वानरशब्दः किमग्निदेवताभूतपरः उतात्मशब्दसामानाधिकरण्यगीतासमाख्यादिबलात् विष्णुपर इति । तदर्थमग्निश्रुत्यादीनां निरवकाशत्वप्रसिद्धव्यवहारयोर्गत्यन्तराभावः आत्मशब्दादीनां सावकाशत्वमुत विपरीतमिति । अत एव न देवता भूतं चेत्युक्ततत्सूत्रानुसारेणाग्नाविष्ण्वोरित्यादिभाष्येऽग्निशब्देनाभिमन्यमानं च विवक्षितमित्यभिप्रेत्याह ॥ **तेजोभूतं वा स्यादिति** ॥ भाष्योक्तं साधारण्यमग्नाविष्ण्वोः विवरिष्यन् श्रुतिलिङ्गयोस्तुल्यबलत्वं वक्तुमाह ॥ **न चेति** ॥ साक्षादिति सूत्रव्यावर्त्यमाह ॥ **श्रुतेरिति** ॥ **लोकप्रसिद्धीति** ॥ लोकव्यवहाराभावापातादित्यर्थः । एतेनान्तरादिनयेष्वपि निरवकाशलिङ्गेनोक्तश्रुतिबाधो न सम्मत इति पूर्वोक्तसर्वाक्षेपो दर्शितः । अभिव्यक्तेरित्यादिसूत्राणां व्यावर्त्यचोद्यमाह ॥ **वैदिकेति** ॥ अग्न्यादिसर्वशब्दानां विष्णुविषयत्वे सर्वस्य विष्णुविद्यात्वेनेयं वैश्वानरविद्याऽऽत्मविद्या प्राणविद्या वायुसूक्तमग्निसूक्तमित्यादिव्यवहारविरोधादित्यर्थः । अतो न वैश्वानरो विष्णुरिति निश्चय इत्यनुवर्तते । सूत्रे वैश्वानरो विष्णुरेवेति साध्ये साक्षाद्धेत्वनुक्तेः शब्दविशेषादित्येतच्छब्दादिति बुद्ध्या विवेकेन सम्बध्यत इत्याह ॥ **आत्मानं वैश्वानरमिति** ॥ अनिर्णयेन कृतपूर्वपक्षव्यवच्छेदकतया साधारणस्यापि वैश्वानरशब्दस्य शब्देनात्मशब्देन विशेषणात् समानाधिकृतत्वात् । ततश्च विष्ण्वेकवाचितया विशेषणात् विशेषितत्वादग्नेर्व्यावर्तितत्वात् विष्णुरेव वैश्वानर इति सूत्रार्थमभिप्रेत्याह ॥ **न चोक्तरीत्येति** ॥

## तत्त्वसुबोधिनी

ॐ वैश्वानरः साधारणशब्दविशेषात् ॐ ॥ यद्यपि वैश्वानरनाम्नः सूत्रभाष्ययोः अग्नाविष्ण्वो साधारण्यस्योक्त्योभयत्र प्रसिद्धता तथापि वैश्वानरशब्दस्य श्रुत्यन्तरे अग्नौ प्रयोगात् विषयवाक्ये अग्निशब्दसामानाधिकरण्याद्वा अन्यत्र प्रसिद्धत्वं नाभिप्रेतं येन श्रुत्यन्तरे विष्णावपि प्रयोगादुभयत्र प्रसिद्धता स्यात् किन्तु लोकतः । अत एव टीकायां लोकतोऽन्यत्र प्रसिद्धेत्युक्तम् । सूत्रादावुक्तसाधारण्यम् अन्यत्र प्रसिद्धेः विष्णुलिङ्गानां च निरवकाशत्वेन तुल्यबलतया न तु वैश्वानरशब्दस्य उभयत्र प्रसिद्धेरिति टीकायामेवोक्तम् । 'विश्वजीवान्तरत्वाद्यैर्लिङ्गैः' इति भाष्यकारीयलिङ्गत्वोक्तिस्तु सिद्धान्ते वैश्वानरशब्दस्य यौगिकत्वदर्शनार्थम् अवयवार्थकथने तात्पर्यात् । अन्यथा 'वैश्वानरत्वाद्यैः' इत्यवक्ष्यत् । अनन्तरसङ्गतिस्तु गताधिकरणोक्तसर्वगतत्वाक्षेपेण पूर्वपक्षोत्थानात् इति भाष्य एवोक्ता । पाचकत्वाद्यनेकलिङ्गसमन्वय इति । तेन पादसङ्गतिरुपपन्नेति भावः । ननु अभिविमानपदेन सर्वगतत्वं कथं लभ्यत इत्यत आह । अभित इति । तेजोभूतं वास्यादिति । अनेन अग्नाविष्ण्वोरिति भाष्ये अग्निशब्देन 'अत एव न देवता भूतं च' इत्युत्तरसूत्रानुरोधेन तेजोभूतमपि विवक्षितमित्युक्तं भवति । नन्वन्यत्र प्रसिद्धिरस्तु तथाप्यस्तु श्रुतेः विष्णुविषयत्वमित्यत आह ॥ **श्रुतेरिति** ॥ **वैदिकेति** ॥ अन्यविद्याया अपि विष्णुविषयत्वे वैदिकानां योऽयं विद्याभेदव्यवहारः इयमग्निविद्येत्यादि तल्लोपाद्विरोधः स्यादित्यर्थः । ननु व्यवहारः प्रकारान्तरेण भविष्यतीत्यत आह । न हीति । साधारणस्यापि वैश्वानरशब्दस्य विष्णुपरत्व-सम्भवादित्यन्वयः । तत्र हेतुः अनवकाशात्मशब्देति । आत्मशब्दस्यानवकाशत्वं कुत इत्यत उक्तम् आत्मशब्दः परे विष्णाविति । तर्हि प्रसिद्धेः का गतिः अत आह ॥ **प्रसिद्धेरिति** ॥ अन्यथापि अभिव्यक्तेः इत्यादि वक्ष्यमाणन्यायेनेति भावः ।

## वाक्यार्थमञ्जरी

**अन्यत्र प्रसिद्धेति** ॥ न च सूत्रभाष्ययोरस्याग्नाविष्ण्वोः साधारण्योक्त्योभयत्र प्रसिद्धत्वमिति वाच्यम् । वैश्वानरशब्दीयान्यत्र प्रसिद्धिसर्वगतत्वाख्यविष्णुलिङ्गयोरुभयोरपि निरवकाशत्वेन तुल्यबलत्वाभिप्रायेणैव तत्र साधारण्योक्त्योभयत्र प्रसिद्ध्यभिप्रायेण तदनभिधानादिति भावः ॥ **वैश्वानरनाम्न इति** ॥ न च विश्वजीवान्तरत्वाद्यैर्लिङ्गैरित्यणुभाष्येऽस्य लिङ्गत्वोक्त्या कथं नामत्वमिति वाच्यम् । तस्य सिद्धान्ते वैश्वानरशब्दस्य यौगिकत्वप्रदर्शनायावयवार्थकथन एव तात्पर्येण लिङ्गत्वकथने

(वाक्यार्थमञ्जरी)

तात्पर्याभावात् । अन्यथा वैश्वानरत्वाद्यैरिति ब्रूयादिति भावः । पादसङ्गत्यर्थमाह ॥ पाचकत्वाद्यनेक-लिङ्गसमन्वयसिद्ध्यर्थम् इति ॥ यद्यपि पाचकत्वं कर्मेति वक्ष्यति तथापि लिङ्गत्वमप्यस्तीतीयमुक्तिः ॥ **अभिविमानपदेनेति** ॥ न च प्रादेशत्वमात्रोक्तिविरोधः । व्योमवच्चेति वक्ष्यमाणत्वात् । तेजोभूतं भूताग्निः । प्रसिद्धितः लौकिकवैदिकप्रसिद्धितः । तदेव क्रमेणोपपादयति ॥ श्रुतेरित्यादिना ॥ **वैदिकेति** ॥ वेदप्रसिद्धो योऽयं विद्याभेदव्यवहारः इयं वैश्वानरविद्यानेयमित्यादिरूपस्तस्माद्विरोधादित्यर्थः । देवताद्वन्द्वे चेत्यनङादेशेऽग्नावैष्णवं चरुमित्यादिवदग्नाविष्ण्वोरित्युपपन्नम् ॥ ॐ वैश्वानरः साधारणशब्दविशेषात् ॐ ॥ वैश्वानरमुपास्ते इत्याद्युक्तवैश्वानरो विष्णुरेव । अग्निविष्णुसाधारणवैश्वानरशब्दस्यात्मशब्देन विशेषणादित्यर्थः । वैश्वानरशब्दस्य विष्णुपरत्वसम्भवादित्यन्वयः । कुत इत्यत उक्तम् ॥ **आत्मशब्दसामानाधिकरण्येनेति** ॥ आत्मानं वैश्वानरमिति सामानाधिकरण्येनेत्यर्थः । तस्याप्यन्यपरत्वं किं न स्यादित्यत उक्तम् ॥ **अन्यत्रानवकाशेति** ॥ तत्कुत इत्यत उक्तम् ॥ **आत्मशब्द इति** ॥

## विवृतिः

यद्यपि वैश्वानरनाम्नः सूत्रभाष्ययोः अग्नाविष्ण्वोः साधारण्यस्योक्ततया उभयत्र प्रसिद्धता तथापि वैश्वानरशब्दस्य श्रुत्यन्तरेऽग्नौ प्रयोगाद्विषयवाक्ये अग्निशब्दसामानाधिकरण्याद्वाऽन्यत्रप्रसिद्धत्वं नाभिप्रेतम् । येन श्रुत्यन्तरे विष्णावपि प्रयोगादुभयत्र प्रसिद्धता स्यात् । किन्तु लोकतः । अत एव टीकायां लोकतोऽन्यत्र प्रसिद्धेत्युक्तम् । सूत्रादावुक्तसाधारण्यन्तु अन्यत्रप्रसिद्धेर्विष्णुलिङ्गानां च निरवकाशत्वेन तुल्यबलतया ननु वैश्वानरशब्दस्यान्यत्रप्रसिद्धेरिति टीकायामेवोक्तम् । विश्वजीवान्तरत्वाद्यैर्लिङ्गैरिति भाष्यकारीया लिङ्गत्वोक्तिस्तु सिद्धान्ते वैश्वानरशब्दस्य यौगिकत्वदर्शनार्थमवयवार्थे तात्पर्यकथनात् । अन्यथा वैश्वनरत्वाद्यैरित्यवक्ष्यत् । अनन्तरसङ्गतिस्तु गताधिकरणोक्तसर्वगतत्वाक्षेपेण पूर्वपक्षोत्थानादिति भाष्य एवोक्ता । **पाचकत्वाद्यनेकलिङ्गसमन्वयेति** ॥ तेन पादसङ्गतिरुपपन्नेति भावः । नन्वभिमानविपदेन सर्वगतत्वं कथं लभ्यत इत्यत आह ॥ **अभित इति** ॥ **तेजोभूतं वा स्यादिति** ॥ अतो नाग्निविष्ण्वोरिति भाष्येऽग्निशब्देन 'अत एव न देवताभूतं च' इत्युत्तरसूत्रानुरोधेन तेजोभूतमपि विवक्षितमित्युक्तं भवति । नन्वन्यत्र प्रसिद्धिरस्तु तथापिश्रुतेर्विष्णुविषयत्वमस्तु इत्यत आह ॥ **श्रुतेरिति** ॥ **वैदिकेति** ॥ अन्यविद्याया अपि विष्णुविषयत्वेवै दिकानां शब्दानां योऽयं विद्याभेदव्यवहारः इयमग्निविद्येत्यादितद्विरोधः स्यादित्यर्थः ॥ ननु व्यवहारः प्रकारान्तरेण भविष्यतीत्यत आह ॥ **नहीति** ॥ साधारणस्यापि वैश्वानरशब्दस्य विष्णुपरत्वसम्भवादित्यन्वयः । तत्र हेतुरनवकाशात्मशब्देति ॥ आत्मशब्दस्यानवकाशत्वं कुत इत्यत

(विवृतिः)

उक्तम् । **आत्मशब्दः परे विष्णविति** ।। तर्हि प्रसिद्धेः का गतिरत आह ।। **प्रसिद्धेरिति** ।। अन्यथाऽभिव्यक्तेरित्यादिवक्ष्यमाणन्यायेनेति भावः ।

## सूत्रभाष्यम्

**।। ॐ स्मर्यमाणमनुमानं स्यादिति ॐ ।। २५ ।।**

**'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रित' (भ.गी.१५-१४) इति स्मर्यमाणमत्रापि स एवोच्यत इत्यस्यानुमापकम् । समाख्यानात् । इतिशब्दः समाख्याप्रदर्शकः ।। २५ ।।**

## सत्तर्कदीपावली

वैश्वानरशब्दप्रतिपाद्यो विष्णुरेवेत्येतद्भगवद्वाक्यसंवादेन दर्शयत्सूत्रं पठित्वा व्याचष्टे ।। **स्मर्यमाणमित्यादिना** ।। समाख्यानं व्याख्यानम् ।

## तत्त्वप्रदीपिका

**ॐ स्मर्यमाणमनुमानं स्यादिति ॐ** ।। अहं वैश्वानरो भूत्वेत्यत्र वैश्वानर इति विष्णुविषयतयैव निर्णीतं स्मर्यमाणमनेन सन्दिह्यमानेन वैश्वानरशब्देन समाख्यानमत्रापि स एवोच्यत इत्यस्यार्थस्यानुमापकम् ।।

## तत्त्वप्रकाशिका

नन्वात्मशब्दस्यामुख्यवृत्तिमभ्युपेत्याग्न्यादीनामेव वैश्वानरत्वं किं न स्यादित्याशङ्कां परिहर्तुं हेत्वन्तरेण वैश्वानरस्य विष्णुत्वं निश्चाययत्सूत्रमुपन्यस्य व्याचष्टे ।। **स्मर्यमाणमिति** ।। 'अहं वैश्वानरो भूत्वा' इति स्मृत्युक्तं विष्णोः वैश्वानरत्वमत्र वैश्वानरविद्यायामपि सः गीतोक्तो भगवानेव वैश्वानरपदेनोच्यत इत्यस्यार्थस्यानुमापकं भवति । स्मृतौ विष्णोर्वैश्वानरत्वोक्तेर्वैश्वानरविद्यायामप्यसावुच्यत इति भावः । स्मृत्युक्तवैश्वानरस्य विष्णुत्वेऽप्यत्रोक्तस्य कुतो विष्णुत्वं इत्यत आह ।। **समाख्यानादिति** ।। समाख्यानयुक्तिर्न सूत्रितेत्यत आह ।। **इतीति** ।। अनेनेति स्मर्यमाणमित्यन्वयः सूचितो भवति ।।२५।।

## भावदीपः

ॐ स्मर्यमाणमनुमानं स्यादिति ॐ ।। सूत्रे चशब्दाभावाच्छङ्कानिवर्तकत्वेन सूत्रमवतारयति ।। **नन्विति** ।। **अग्न्यादीनामेवेति** ।। अग्निदेवतातेजोभूतविष्णूनां त्रयाणामेवेत्यर्थः । यद्वोपलक्षित-

(भावदीपः)

विद्यान्तराभिप्रायेण बहुवचनोक्तिः । वैश्वानरत्वमित्युपलक्षणम् । इन्द्राकाशप्राणगायत्रीत्यादिकमित्यर्थः । स्मृतिसमाख्याप्युपलक्षणं 'यो देवानां नामधा एक एव' 'नामानि सर्वाणि' इत्यादेरिति भावः । क्रमेण भाष्यपदानामर्थमाह ॥ **अहमिति** ॥ **इत्यन्वय इति** । सूत्र इति योज्यम् । भाष्ये "अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रित" इति स्मर्यमाणमित्युक्तेरिति भावः । तथा च वैश्वानरो विष्णुरेव । अहं वैश्वानर इति गीतायां स्मर्यमाणत्वादिति भावः । एतेन न्यायविवरणोक्तस्य विशेषश्रुत्यादेरित्यादिपदस्य समाख्यानमित्यर्थः । तत्कृत्यं च दर्शितं भवति ॥ २५ ॥

## वाक्यार्थमुक्तावली

ॐ स्मर्यमाणमनुमानं स्यादिति ॐ ॥ सूत्रे चशब्दाभावात् शङ्काव्यावर्तकत्वेन सूत्रमवतारयति ॥ **नन्वित्यादिना** ॥ **अग्न्यादीनामिति** ॥ देवताभूतविष्णूनामित्यर्थः ॥ **इति स्मर्यमाणमिति** ॥ इति श्रुत्युक्तप्रकारेण स्मर्यमाणम् । इति शब्दस्य पूर्वसूत्रानुषक्तेन विष्णुर्वैश्वानर इत्यनेनान्वय इति बोध्यम् । सूत्रे वैश्वानरो ब्रह्मेत्यस्ति । तेनेतिशब्दान्वयः । अनुमीयतेऽनेनेत्यनुमानं ब्रह्म वैश्वानर इति स्मर्यमाणं विष्णोर्वैश्वानरत्वमत्रापि स एव वैश्वानर इत्यस्यानुमापकं स्यादित्यर्थः ।

## वाक्यार्थमञ्जरी

ॐ स्मर्यमाणमनुमानं स्यादिति ॐ ॥ इत्यहं वैश्वानरो भूत्वेत्येवं स्मर्यमाणं गीतास्मृत्युक्तं विष्णोरेव वैश्वानरत्वमेतत्स्मृत्युक्तवैश्वानरस्य विष्णुत्वस्यानुमानमनुमापकम् । समाख्यारूपेण साधकं स्यादित्यर्थः ॥ **समाख्यानादितीति** ॥ निर्णीतस्थले समानोक्तिरूपसमाख्याया इदं वाक्यमेतत्परमेतत्समाख्यावत्वादित्यनुमानरूपेण वाक्यतात्पर्यनिर्णायकत्वादिति भावः ॥ **इति स्मर्यमाणेति** ॥ स्मृतेर्बुद्धिस्थत्वादिति भावः ।

## सूत्रभाष्यम्

**॥ ॐ शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात्पुरुषविधमपि चैनमधीयते ॐ ॥ २६ ॥**

**'अयमग्निर्वैश्वानरः'** (बृ.उ.७-११-१) **'वैश्वानरमृत आजातमग्निम्'** (ऋ.सं.६-७-१) इत्यादिशब्दः । **'वैश्वानरे तद्धुतं भवति'** (छां.उ.५-२४-४) **'हृदयं गार्हपत्यो

(सूत्रभाष्यम्)

मनोऽन्वाहार्यपचन आस्यमाहवनीयः' (छां.उ.५-१८-२) इत्याद्यग्निलिङ्गमादिशब्दोक्तम् । 'येनेदमन्नं पच्यते' (बृ.उ.७-११-१) 'तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयम्' (छां.उ.५-१९-१) इत्यादिना पाचकत्वेनान्तःप्रतिष्ठानं च प्रतीयते । तस्मान्न विष्णुरिति चेन्न । 'अथ हेममात्मानमणोरणीयांसं परतः परं विश्वं हरिमुपासीतेति । सर्वनामा सर्वकर्मा सर्वलिङ्गः सर्वगुणः सर्वकामः सर्वधर्मः सर्वरूप' इति । 'स य एतमेवमात्मानं विश्वं हरिमारादरमुपास्ते तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेषु देवेषु सर्वेषु वेदेषु कामचारो भवति' इति तत्तन्नामलिङ्गादिना तस्यैव दृष्ट्युपदेशान्महोपनिषदि ।

अनात्तत्वादनात्मान ऊनत्वादुगुणराशितः ।
अब्रह्माणः परे सर्वे ब्रह्मात्मा विष्णुरेव हि ॥

इत्यादिना 'को न आत्मा किं ब्रह्म' (छां.उ.५-११-१) इत्यारम्भाच्चा अन्येषामसम्भवाद्विष्णुरेव वैश्वानरः । 'चन्द्रमा मनसो जातश्चक्षोस्सूर्यो अजायत'— (तै.आ.३-१२) इत्यादिना यः पुरुषाख्यो विष्णुरभिहितस्तद्विधमेवात्र 'मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वत्मा' (छां.उ.५-१८-२) इत्यादिनैनं वैश्वानरमधीयते । चशब्देन सकलवेदतन्त्रपुराणादिषु विष्णुपरत्वं पुरुषसूक्तस्य दर्शयति । तथा च ब्राह्मे—

'यथैव पौरुषं सूक्तं नित्यं विष्णुपरायणम् ।
तथैव मे मनो नित्यं भूयाद्विष्णुपरायणम्' इति ॥

चतुर्वेदशिखायां च 'सहस्रशीर्षा पुरुषस्सहस्राक्षस्सहस्रपात्' इति । 'एष ह्येवाचिन्त्यः परः परमो हरिरादिरनादिरनन्तोऽनन्तशीर्षोऽनन्ताक्षोऽनन्तबाहुरनन्तगुणोऽनन्तरूप' इति । बृहत्संहितायां च—

'यथा हि पौरुषं सूक्तं विष्णोरेवाभिधायकम् ।
न तथा सर्ववेदाश्च वेदाङ्गानि च नारद' इत्यादि ॥

'यस्माद्यज्जायते चाङ्गाल्लोकवेदादिकं हरेः ।
तन्नामवाच्यमङ्गं तद्यथा ब्रह्मादिकं मुखम्' ॥

इति नारदीयवचनान्नाभेदोक्तिविरोधः ॥ २६ ॥

## सत्तर्कदीपावली

उक्तार्थमाक्षिप्य समर्थयत्सूत्रं पठित्वा व्याचष्टे ॥ **शब्देत्यादिना** ॥ अस्यार्थः । आत्मानं वैश्वानरमित्यात्मशब्देन विशेषितोऽप्ययं वैश्वानरविद्याप्रतिपाद्यो न विष्णुः 'अयमग्निर्वैश्वानरः वैश्वानरमृत आजातमग्निम्' इत्यादिनाऽग्निशब्देन विशेष्यमाणत्वात् । लिङ्गवशादप्यग्निरेवात्र वैश्वानरः । तथाहि । वैश्वानरे तद्धुतं भवतीति हविराधारत्वमात्मनो वैश्वानरस्येत्यारभ्य हृदयं गार्हपत्ये इत्युच्यमानमप्यग्निलिङ्गम् 'अयमग्निर्वैश्वानरो येनेदमन्नं पच्यते तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयं प्रथममाहुतिं जुहुयात्तां जुहुयात्प्राणाय स्वाहा' इत्यादिशरीरान्तः स्थिताग्निधानान्येते युज्यन्ते । अथ हेममात्मानमित्यादि महोपनिषद्वाक्ये अग्न्यादिनामभिः पाचकत्वादिधर्मैर्विष्णूपास्तेरुपदिष्टत्वेनात्र वह्न्यादिप्रापकशब्दलिङ्गाभावात् । अरमत्यन्नमित्यर्थः । को न आत्मा किं ब्रह्मेत्युपक्रम्य निरूप्यमाणत्वादयं वैश्वानरो विष्णुरेव नाग्निः । अनात्तत्वादिवाक्येन आत्मब्रह्मशब्दयोः विष्ण्वन्यत्रासम्भावितत्वस्य कथनात्पुरुषसूक्तसंवादादप्यत्र वैश्वानरशब्देन विष्णुरेवोच्यते । तथाहि । 'चन्द्रमा मनसो जातः चक्षोस्सूर्यो अजायत' इत्यादिपुरुषसूक्तवाक्येन यः सहस्रशीर्षा पुरुष उक्तः स एवात्र प्रत्यभिज्ञायते आत्मनो वैश्वानरस्य 'मूर्धैव सुतेजाः चक्षुः विश्वरूप' इत्यादिना । पुरुषसूक्तस्य विष्ण्वेकपरत्वं सकलवेदेतिहासादिषु अविगानसिद्धं तथा ह्युक्तम् । 'यथैव पौरुषम्' इत्यादिभिः । पुराणवाक्यैः पुरुषावयवेभ्यो भेदेन निर्दिष्टानां द्युलोकादीनां वैश्वानरमूर्धादिभिरभेदेन व्यपदेशस्य गतिरुच्यते यस्मादित्यनेन । यस्माद्यस्माद्विष्ण्वङ्गाद्यद्यल्लोकादिकं जायते तत्तन्नाम्ना तज्जनकमङ्गमुच्यते । अतो मूर्धैव सुतेजा इत्यादि व्यपदेशो घटते । यथा 'ब्राह्मणोऽस्य मुखमासीद् बाहूराजन्यः कृत' इत्यादौ ब्राह्मणादिजनकेषु मुखादिषु ब्राह्मणादिपदव्यपदेशः । न ह्यत्र पुरुषोत्तममुखादिभिरभेदो ब्राह्मणादीनामुच्यते । पद्भ्यां शूद्रो अजायन्त इत्यादिवाक्यशेषविरोधात् । अर्थान्तरशब्दानां भगवदवयवेषु वृत्तिः विद्वद्रूढ्या योगवृत्त्या वा अवगन्तव्येत्यर्थः ।

## तत्त्वप्रदीपिका

ॐ शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात्पुरुषविधमपि चैनमधीयते ॐ । अयमग्निर्वैश्वानरो योऽयमन्तः पुरुष'' इति वाजसनेयके । वैश्वानरस्याग्नित्वे श्रुतिः प्रमाणम् ॥ ''मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरम्'' इत्यादेरयमर्थः । 'दिवो मूर्धानं' मूर्धन्वन्तं विष्णोरङ्गाङ्ग्यभेदात् । 'पृथिव्या' अरतिमन्तम्, अरं ततिर्येन सोऽरतिः पाद इत्यर्थः । विश्वनरस्थम् । ऋते वेदे आसमन्ताद्यक्तमङ्गनेतारं सम्यग्राजन्तं सर्वानतिशय्य स्थितं पातारं जनानामास्य 'आ' समान्ताद्यज्ञयाश्चक्रुरग्न्यादिदेवाः । वैश्वानरे तद्धुतं भवतीत्यादि च श्रुत्यन्तरे हुतस्थानत्वमग्निलिङ्गम् । हृदयं गार्हपत्य इत्यादौ हृदयस्थो गार्हपत्यपदवाच्य इत्याद्यवगन्तव्यम् । ''येनेदमन्नं पच्यते यदिदमद्यत' इति वाजसनेयके । पाचकत्वेनान्तः

(तत्त्वप्रदीपिका)

प्रतिष्ठानं प्रधानलिङ्गत्वेनाभिमतत्वात्पृथगुक्तम् । सर्वकर्मा ''न ऋते त्वत्क्रियत'' इत्यादेः । वज्रधरत्वादीनि सर्वाणि लिङ्गानि चास्यैवेति सर्वलिङ्ग एषः । तदिच्छयैव सर्वमिति सर्वकामः गुणा ज्ञानानन्दादयः । धर्माः सर्वज्ञत्वादयः । भेदसंयोगविभागादिधर्मास्तदधीना इति वा 'सर्वधर्मा' । सर्वत्र रूपमस्येति सर्वरूपः । सर्वमस्य रूपं प्रतिमेति वा । विश्वं पूर्णम्, आरादन्तिके, अरं सम्यक् ॥ अनात्तत्वादनात्मान इत्यादिनाऽसम्भवादिति सूत्रावयवं व्याचष्टे । को न आत्मा किं ब्रह्मेति मीमांसमानैर्महाशालैर्महामुनिभि-रुद्दालकोद्दिष्टैस्तद्युक्तैः परिपृष्टो राजाऽश्वपतिर्वैश्वानरमुपदिदेश ॥ न च विष्णोरन्येषामात्मत्वं ब्रह्मत्वं च सम्भवति । अनात्तत्वादित्यादिवचनात् । तस्माद्विष्णुरेव वैश्वानरः । ''तस्य ह वा एतस्य आत्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्म सन्दोहो बहुलो वस्तिरेव रैः पृथिव्येव पादौ'' इत्यादेरर्थस्तु–

''क्रीडात्मकत्वाद्द्यौश्चैव सुतेजाश्चातितेजसा ।
स्वर्गाधारं शिरो विष्णोः सर्वरूपातिदर्शनात् ॥

चक्षुस्तु विश्वरूपाख्यमादानादायुपामपि ।
आदित्याख्यं च सूर्यस्याप्याश्रयं सर्वदा स्मृतम् ॥

वाय्वादिप्राणशक्यं न यत्तत्कर्ता हरिर्यतः ।
प्राणस्तेन पृथग्वर्त्मा वायुज्ञानायुरूपतः ॥

वायोरप्याश्रयो नित्यं बहुत्वाद्बहुलः स्मृतः ।
आकाशनामा त्वादीप्तेः मध्यदेहो रमापतेः ॥

व्याप्तत्वादाप इत्युक्तो रै रतिकरत्वतः ।
वस्तिराकाशवाय्वोश्च तावाधारौ प्रकीर्तितौ ॥
प्रथनात्पृथिवीनामा प्रतिष्ठा च प्रतिष्ठितेः ।

पादौ भगवतो विष्णोः पृथिव्याश्रय एव च'' इत्याद्यायां वैश्वानरविद्यायां विभिद्य निवेद्यते । यस्मा-दङ्गाद्यजायते यदाश्रित्य तिष्ठति च यत्र लीयते च तद्धरेरङ्गं तन्नामवाच्यम् । यथा ''ब्राह्मणोऽस्य मुख-मासीत्'' इत्यादौ ब्राह्मणादिजनकानि हरेर्मुखादीनि ब्राह्मणादिनामान्युच्यन्त एवमितरत्रापीति । अतो न भगवदङ्गेभ्यस्त्रिदिवदिनकरादीनां भिन्नानां तदभेदोक्तिनिमित्तो विरोध आशङ्कनीयः । उक्तभङ्गया तदभावात् ।

## तत्त्वप्रकाशिका

वैश्वानरस्य विष्णुत्वमाक्षिप्य समादधत्सूत्रमुपन्यस्याऽऽक्षेपांशं तावद्व्याचष्टे ॥ **शब्दादिभ्य इति** ॥ यदुक्तमात्मशब्दविशेषणात् समाख्यानाच्च वैश्वानरस्य विष्णुत्वनिश्चय इति तदयुक्तम् । यथा खलु वैश्वानरस्य विष्णुत्वनिश्चायकात्मशब्दादि विद्यते तथाऽग्नित्वनिश्चायकस्यापि विद्यमानत्वात् । तथाहि । वैश्वानरशब्दस्याऽऽत्मशब्दसमानाधिकृतत्ववदग्निशब्दसमानाधिकृतत्वं च श्रूयते 'अयमग्निः' इति बृहदारण्यके 'वैश्वानरम्' इत्यस्यामृचि च । तथाऽग्निलिङ्गं च वैश्वानरे होमाधिकरणत्वं गार्हपत्याद्यङ्गत्वं च श्रूयते 'वैश्वानरे तद्धुतम्' इत्यादौ । तथा वैश्वानरे पाचकत्वाख्यमग्निकर्म च श्रूयते । 'अयमग्निर्वैश्वानरो योऽयमन्तःपुरुषे येनेदमन्नं पच्यते यदिदमद्यते' इति बृहदारण्यके । 'तद्यद्भक्तम्' इति छान्दोग्ये च । तस्माद्वैश्वानरस्य विष्णुत्वज्ञापकवदग्नित्वज्ञापकस्यापि सत्वान्न विष्णुरेवायमिति निश्चयो युज्यत इत्यर्थः । अत्र सर्ववैश्वानरविद्यानां विचार्यत्वात्तत्तद्वाक्योद्धारो युक्त एव समाख्यारूपेण वा । मूर्धानं दिव इति मन्त्रार्थः । दिवः कारणभूतं मूर्धानं पृथिव्याः कारणभूतं पादं जनानां सम्यग्ज्ञानायाभिव्यक्तं सर्वज्ञमखण्डेशमत्यन्नं जनानां पातारं वैश्वानरमग्निं देवाः स्वास्यतयाऽकुर्वन् इति । गतिसाधनत्वादरतिः पादः । 'ऋताय जातम्' इति समाख्यानात्सप्तमी तादर्थ्ये । 'अन्नं धम्' इति हि श्रुतिः । 'अग्निर्देवानां मुखम्' इति च । वैश्वानरे तद्धुतं भवतीति वाक्यार्थः । एवंविद् यद्यपि चाण्डालायोच्छिष्टं प्रयच्छेदात्मनि हैवास्य तद्वैश्वानरे हुतं स्यादिति वाक्यादवगन्तव्यः । भक्तमन्नम् । परिहारसूत्रांशं व्याचष्टे ॥ **नेति** ॥ उभयत्र श्रुत्यादिसाम्याद्वैश्वानरस्य विष्णुत्वनिश्चयायोग इति न युक्तम् । उभयत्र श्रुत्यादिसाम्येऽपि सावकाशत्वनिरवकाशत्वबलान्निश्चयोपपत्तेः । तत्र यदग्निनाम लिङ्गं कर्म च वैश्वानरे श्रूयते तद्विष्णौ सावकाशम् । 'अथ हेममात्मानम्' इत्यग्न्यादिनामलिङ्गकर्मत्वेन विष्णोरुपासनोपदेशात् । न चात्मशब्दादे-रन्यत्रास्त्यवकाशः । अतो निरवकाशेन सावकाशबाधोपपत्तेः युज्यते वैश्वानरस्य विष्णुत्वनिश्चय इति भावः । न च वाच्यमुपासनार्थमुक्तत्वादेव 'योषितमग्निं ध्यायीत' इत्यादाविवाऽसत्वम् । नाविद्यमानं ब्रुवते वेदा ध्यातुं न वैदिका इत्यादिवचनात् । वाक्यान्तरस्याविरोधेन योऽर्थः स्थाप्यते तदर्थत्वाच्च । विश्वं पूर्णम् । आरात् समीपे स्वहृदये । प्रथमेतिशब्दो विधिसमाप्तौ । द्वितीयस्येत्युपासीतेत्यन्वयः । प्रकरण-बलाच्च वैश्वानरस्य विष्णुत्वनिश्चयो भवतीत्याह ॥ **अनात्तत्वादिति** ॥ 'को न आत्मा किं ब्रह्म' इति विचारपूर्वकं वैश्वानरविद्याया आरभ्याधीतत्वेन विष्णुप्रकरणत्वाच्च वैश्वानरो विष्णुरेवेति निश्चयो भवति । 'अनात्तत्वात्' इति वचनेन विष्णोरन्येषाम् आत्मत्वाद्यसम्भवादित्यर्थः । श्रुतिसमाख्यया च वैश्वानरस्य विष्णुत्वमुपपादयति ॥ **चन्द्रमा इति** । यः पुरुषाख्यो विष्णुः पुरुषसूक्ते 'शीर्ष्णो द्यौः समवर्तत' 'चक्षोः सूर्यो अजायत' 'प्राणाद्वायुरजायत' 'पद्भ्यां भूमिरजायत' इत्यादिना वाक्येन द्युभ्वादि-जनकशीर्षादिमानभिहितस्तद्विधमेवात्र वैश्वानरं चाधीयते छन्दोगाः 'मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः

(तत्त्वप्रकाशिका)

**पृथग्वर्त्मा पृथिव्येव पादौ' इत्यादिना वाक्येन । अतः पुरुषसूक्तसमाख्ययाऽपि विष्णुरेव वैश्वानर इत्यर्थः । ननु पुरुषसूक्तस्य विष्णुपरत्वे भवेत्तत्समाख्ययैतद्विद्याया विष्णुपरत्वं तदेव कुत इत्यत आह ॥ चशब्देनेति ॥ विष्णुपरत्वं पुरुषसूक्तस्य प्रसिद्धमिति सूचयतीत्यर्थः । अपिपदेनैवोभयसमुच्चयसिद्धेर्नान्यत्रोपक्षीणश्चशब्दः । किं तद्वेदादीत्यतस्तदुदाहरति ॥ तथा चेति ॥ श्रुतेः प्रथमप्रतिज्ञानेऽपि तस्याः पुरुषसूक्तमुपन्यस्य विष्णुपरतया व्याख्यात्र्याः साक्षात्प्रतिज्ञातार्थासाधकत्वान्न प्रथममुदाहरणम् । प्रतिज्ञा त्वाधिक्यक्रमाभिप्राया । परो विलक्षणः । आदिपदेन 'सर्वतः पौरुषे सूक्ते गुणा विष्णोरुदीरिताः' इति ब्रह्मतर्कादिग्रहणम् । ननु पुरुषसूक्ते द्युभ्वादिजनकशीर्षादिमत्त्वं पुरुषस्योच्यते वैश्वानरविद्यायां पुनर्वैश्वानरस्य तदभेदोऽतो विरुद्धार्थत्वान्नेयं समाख्येत्यत आह ॥ यस्मादिति ॥ वैश्वानराङ्गानां सूर्याद्यभेदोक्तावपि न पुरुषसूक्तवैश्वानरविद्ययोर्विरोधोऽभेदोक्तेरपि तज्जन्यजनकभावविवक्षावत्त्वादिति भावः ॥**

## गुर्वर्थदीपिका

अस्यते अनेनेत्यासन् आस्यं मुखं मकारस्य नकारादेशः यलोपश्च छान्दस इति भावेनोक्तम् आस्यतयेति । ''ऋ गतौ'' इति धातोः करणार्थे औणादिकेऽतिप्रत्यये गुणे च कृते अर्यते गम्यतेऽनेनेति व्युत्पत्तिमाश्रित्योक्तं गतिसाधनत्वादरतिः पादः इति । अत्यतिशयितं थमन्नमस्येति व्युत्पत्तिमाश्रित्यातिथिशब्दस्यार्थकथनम् अत्यन्नमिति । ''तृतीयोऽतिशय'' इति वचनाच्छ्रौतातिथिपदेनाकारस्य इकारः । वाक्यान्तरस्येत्यत्र ''नाविद्यमानं ब्रुवत'' इति वाक्यस्याविरुद्धः कुपितायाः पतिव्रतायाः कुलदाहकत्वेनाग्निसदृशत्वरूपो योऽर्थः ''योषितमग्निं ध्यायीत'' इति श्रुतेः तदर्थपरत्वाच्च नेयं श्रुतिरुपास्यमानस्याविद्यमानत्वे दृष्टान्त इति भावः । 'मूर्धैव सुतेजा' इति श्रुतेरयमर्थः । सुष्ठु तेजोरूपत्वात्सुतेजाः द्युलोकः । विश्वं रूपयति प्रकाशयतीति विश्वरूपः सूर्यः । सुषुप्तिदशायामपि नाडीषु वायोः सञ्चरणात्सर्वेन्द्रियाभिमानिदेवेभ्यः पृथग्वैलक्षण्येन वर्त्म यस्येति व्युत्पत्त्या पृथग्वार्त्मा वायुः प्राण इति । पुरुषसूक्तमुपन्यस्येत्यस्य पुरुषसूक्तोपक्रममुपन्यस्येत्यर्थः । साक्षात्प्रतिज्ञातार्थासाधकत्वादित्यस्य साक्षात्प्रतिज्ञातस्य मूर्धैव सुतेजा इत्याद्यर्थस्याप्रतिपादकत्वादित्यर्थः । सकलपुरुषसूक्तस्य विष्णुपरतां प्रतिपादयन्त्याः स्मृतेस्तु ''शीर्ष्णो द्यौः समवर्तत, चक्षोः सूर्यो अजायत, प्राणाद्वायुरजायत'' इति सुतेजोमूर्धत्वादीनामपि विष्णुधर्मत्वेन व्याख्यानात्साक्षादुपयोग इति भावः । न चैवं सति श्रुतेरनुपयोग इति शङ्क्यम् । उपक्रमानुसारेण सर्वस्यापि सूक्तस्य योजनीयत्वेन श्रुतेरपि युक्त्या स्वार्थसाधकत्वादित्यनुसन्धेयम् ।

## भावबोधः

वैश्वानरे होमाधिकरणत्वं गार्हपत्याद्यङ्गत्वं चेति । सूत्रे शब्दादिभ्य इति बहुवचनं लिङ्गबाहुल्याभिप्रायेणेति भाष्ये बहुलिङ्गप्रतिपादकवाक्योदाहरणमिति भावः । अग्निकर्म भाष्ये पाचकत्वेनान्तःप्रतिष्ठानमित्युक्तमिति भावः । अत एव सर्वकर्मा सर्वलिङ्ग इति श्रुतावपि पृथगुपादानम् । सर्ववैश्वानरविद्यानां विचार्यत्वादिति । तथा च यस्त्वेवमिति विषयवाक्येऽग्निशब्दाभावेऽपि बृहदारण्यकादौ तत्सद्भावाच्छब्दादिभ्य इति सौत्राक्षेपोपपत्तिरिति भावः । **समाख्यारूपेण वेति** । अनेन 'स्मर्यमाणमनुमानं स्यात्' इत्युक्तरीत्या विष्णुपक्षेऽग्निसमाख्यावदग्निपक्षेऽपि समाख्या प्रदर्शिता भवति । **जनानां सम्यग्ज्ञानायेति** । जनानामित्येतद्दतायजातमित्यत्रापि सम्बध्यत इत्युक्तं भवति । सम्यगित्याङोऽर्थः । आसन्नित्यस्यार्थः स्वास्यतयेति । जनयन्तेत्यस्य द्वितीयाङ्योगमभिप्रेत्याह **अकुर्वन्निति** । उपसर्गस्य धात्वर्थबाधकत्वादेवमुक्तम् । गतिसाधनत्वादरतिः पाद इति । करणसाधनात् ऋगतौ इत्यस्माद् अति प्रत्यये गुणे च सति निष्पन्नोऽरतिशब्दः पादवाचक इत्यर्थः । **उभयत्र श्रुत्यादिसाम्येऽपि इति** । अनेनोभयत्र विशेषश्रुत्यादौ पुनः सावकाशत्वनिरवकाशत्वबलान्निश्चय इति न्यायविवरणं व्याख्यातं भवति ।

ननु योषितमग्निं ध्यायीतेत्यादावेवाविद्यमानोपासनस्योक्तत्वात् कथं वेदाद्याः ध्यानार्थं नाविद्यमानं ब्रुवत इत्यत आह– **वाक्यान्तरस्याविरोधेनेति** ॥

''अङ्गारसदृशी नारी घृतकुम्भसमः पुमान्''

इत्यादिप्रमाणबलादग्निसादृश्यस्य योषिति प्रमाणाविरुद्धत्वात्तदर्थत्वं योषितमित्यादिवाक्यान्तरस्येत्यर्थः । विश्वं पूर्णमिति । अनेन विश्वमित्यनेन प्रपञ्चरूपत्वमुच्यते । अत एव सर्वनामेत्यादिना तदुपपादकमुक्तमिति परकीयं व्याख्यानमयुक्तमिति सूचितम् । तथात्वे 'परतः परम्' इत्याद्ययोगादिति भावः । श्रुतावरमित्यस्यालमित्यर्थः । को न आत्मा किं ब्रह्मेति विचारपूर्वकमित्यादिना आत्मत्वाद्यसम्भवादित्यन्तेनानात्तत्वादित्यादिभाष्यमेवं योजितं भवति– को न आत्मा किं ब्रह्मेत्यारम्भाच्च विष्णुरेव वैश्वानरः । ब्रह्मात्मशब्दयोर्वैश्वानरविद्योपक्रमे श्रवणेऽपि कुतस्तदुक्तस्य विष्णुत्वमित्यत अनात्तत्वादित्यादिना प्रमाणेन विष्णोरेव आत्मब्रह्मशब्दार्थव्याप्तत्वगुणपूर्णत्वयोः सम्भवेन अन्येषामसम्भवादिति । उपक्रमे श्रुतश्रुत्यादेः प्रकरणनिश्चायकत्वमित्यभिप्रेत्यारम्भादित्यस्य तात्पर्यमुक्तम् ॥ **विष्णुप्रकरण-**

(भावबोधः)

**त्वादिति ॥** प्राक् प्रकरणबलाच्चेति च द्रष्टव्यम् । भाष्यगतादिशब्दद्वयोपात्तश्रुत्यंशोदाहरणपूर्वकं पुरुषसूक्तस्य समाख्यारूपत्वं स्पष्टमाह शीर्ष्णो द्यौरित्यादिना । सिद्धमिति सूचयतीत्यर्थः इति । सिद्धमित्यस्याभावे मूलपदानामन्वयाप्रतीतेश्च शब्दस्य उक्तार्थप्रतिपादकत्वप्रदर्शकत्वाभावादिति भावः ॥ **उभयसमुच्चयसिद्धेरिति ॥** तथा दृष्ट्युपदेशादसम्भवादित्युभयसमुच्चयसिद्धेरित्यर्थः । साक्षात् प्रतिज्ञातार्थासाधकत्वादिति । अर्थात् तत्साधकत्वं पुरुषसूक्तस्य विष्णुपरत्वेन व्याख्यानकरणादेव सिध्यतीति भावः ॥ **परो विलक्षण इति ॥** तथा च न परम इत्यन्तेन न पौनरुक्त्यमिति भावः । **आदिपदेनेति ॥** सकलवेदतन्त्रपुराणेष्वित्यादिपदेनेत्यर्थः ।

## भावदीपः

ॐ शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात् पुरुषविधमपि चैनमधीयते ॐ ॥ उभयत्र विशेषश्रुत्यादौ पुनः सावकाशत्वनिरवकाशत्वप्राबल्यान्निश्चय इति न्यायविवरणोक्तमुभयत्र विशेषश्रुत्यादिकं व्यञ्जयन् तदनुरोधेन भाष्यं व्याचष्टे ॥ **यदुक्तमित्यादिना ॥ समाख्यानाच्चेति ॥** विशेषश्रुत्यादावित्यत्रादिपदार्थोक्तिः । छान्दोग्ये अग्निपदाभावादाह ॥ बृहदारण्यक इति ॥ सप्तमाध्याय इत्यर्थः । तस्याप्यत्र विषयत्वमित्यग्रे व्यक्तं भाष्ये । नामलिङ्गादिनेत्यादिपदात्सर्वकर्मेत्यग्रेतनस्मृत्यनुरोधादाह ॥ **कर्मेति ॥** तथा चास्य क्रियारूपत्वाल्लिङ्गसङ्ग्राहकादिपदेनैवानुक्त्वाऽन्तःप्रतिष्ठानादिति सूत्रे पृथगुक्तिर्युक्तेति भावः । तत्वप्रदीपे तु प्रधानलिङ्गत्वात्पृथगुक्तिरित्युक्तम् । अन्तःप्रतिष्ठानव्यक्त्यर्थं पूर्वशेषमाह ॥ **अयमिति ॥** आगच्छेदास्यं छान्दोग्ये च पचनरूपाग्निकर्म श्रूयत इत्यर्थः । तस्मादिति भाष्यपदमनूद्यार्थमाह ॥ **तस्मादिति ॥** उक्तहेत्वन्वयाय न विष्णुरित्येतत् सावधारणं व्याचष्टे ॥ न विष्णुरेवेति ॥ **समाख्येति ॥** तत्तद्वाक्योद्धार इत्यनुषङ्गः । सिद्धान्ते अहं वैश्वानरो भूत्वेति यथा समाख्या तथा वैश्वानरोऽग्निरित्यत्राप्यस्ति । अयमग्निरिति समाख्येति वक्तुमित्यर्थः ॥ इति मन्त्रेति ॥ ''मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आजातमग्निम् । कविं सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः'' । इति मन्त्रस्यार्थ उच्यत इत्यर्थः । पुरुषसूक्तेनैकार्थत्वायार्थोक्तिः । ऋते सम्यग्ज्ञानाय । सम्यगित्याङोऽर्थः । जनानामित्यत्राप्याकर्षः । जातं जनीप्रादुर्भावे अभिव्यक्तमित्यर्थः । कविमित्यादेरर्थः सर्वज्ञमित्यादि । पात्रं पातारम् । आसन् आस्ये । आस्यतयेति यावत् । आजनयन्त आकुर्वन् ॥ **गतीति ॥** लोके गमनेनारतिदर्शनाद्रतिविरुद्धगतिसाधनत्वात् पादोऽरतिशब्दार्थ इत्यर्थः ॥ **तादर्थ्य इति ॥** चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरमित्यादाविवेति भावः ॥ **एवंविदिति ॥** वैश्वानरज्ञानी । यद्यपी

(भावदीपः)

यदि । तस्मान्न विष्णुरितीत्यन्तभाष्यमनुवर्त्य तेन नञोऽन्वयमुपेत्यार्थमाह ।। उभयत्रेति ।। कुत इत्याकाङ्क्षायां तस्यैव दृष्ट्युपदेशादिति भाष्यस्य साक्षादनन्वयान्यायविवरणोक्तं हेतुं संयोज्य तदुपपादकत्वेन भाष्यं योजयति ।। **उभयत्रेति** ।। एवं च गायत्रीनये तथा चेतोऽर्पणेत्यनेन गायत्र्याद्यप्रसिद्धशब्दस्य विष्णौ प्रयोगे प्रयोजनोक्तिरिह तु वैश्वानरनामादेः सावकाशत्वोक्तिरित्यपौनरुक्त्यमिति भावः ।। **न चेति** ।। अनात्तत्वादनात्मान इत्यादेरिति भावः । बलादित्युक्तिलब्धमाह ।। **अत इति** ।। उपासना हि ज्ञानादन्या अर्थहीनाऽपि स्यादित्याशङ्कापनुत्तये सूत्रभाष्ययोः दृष्टीत्युक्तं तद्व्यनक्ति ।। न च वाच्यमिति ।। नाविद्यमानमिति तैत्तिरीयभाष्योक्तस्मृतिः । आदिपदेन न च रमंत्यहो असदुपासनया' इत्यादि गृह्यते ।। **वाक्यान्तरस्येति** ।। अहं वैश्वानरो भूत्वेति समाख्यात्वेनोक्तवाक्यान्तरस्याविरोधेन योऽर्थः स्थाप्यते तदर्थत्वाच्चास्य वाक्यस्य नासदर्थकत्वमित्यर्थः । यद्वा ननु मूर्धैव सुतेजा इत्यादिना द्रव्यादितादात्म्यमविद्यमानमुच्यत इत्यत आह ।। **वाक्यान्तरस्येति** ।। शीर्ष्णो द्यौः समवर्ततेत्यस्य । विवरिष्यते चैतदग्रे । यद्वा हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन इत्यादिना वैश्वानराङ्गानां गार्हपत्याद्यैक्यमविद्यमानमेवोच्यत इत्यत आह ।। **वाक्यान्तरस्येति** ।। मूर्धैव सुतेजा इत्यादेरविरोधेन यस्तादात्म्यादन्योऽर्थः यस्माद्यज्जायते चाङ्गादित्यादिना स्थाप्यते तदर्थत्वाच्च हृदयमित्यादेरिति नासदर्थकत्वमित्यर्थः । कोऽर्थस्तर्हि योषितमग्निमित्यस्येत्यतोऽपि ।। **वाक्यान्तरस्येति** ।। तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वन्तीति वाक्यान्तरस्य योऽर्थः रेतोरूपाहुत्याधारत्वं तदर्थत्वाच्च योषितमिति वाक्यस्येति प्रकृतश्रुत्यैक्यार्थाय स्वहृदय इत्युक्तिः । श्रुतौ सर्वकर्मा न ऋते त्वत्क्रियत इत्यादेः । वज्रधरत्वादीनि सर्वाणि लिङ्गानि चास्यैवेति सर्वलिङ्गः । तदिच्छयैव सर्वमिति सर्वकामः । गुणाः ज्ञानादयः । धर्माः सर्वज्ञत्वादयः । संयोगवियोगादिधर्माः तदधीना इति वा सर्वधर्मः । सर्वत्र रूपमस्येति वा सर्वमस्य रूपं प्रतिमेति वा सर्वरूपः । अलं सम्यगिति अवशिष्टपदार्थस्तत्वप्रदीपोक्तः । शब्दादेवेत्यत्र श्रुत्यादेरुपक्रमोपसंहारयोः श्रुतत्वे तन्निश्चायकतया लिङ्गत्वमिति वक्ष्यमाणदिशा अन्तरनय इवात्मब्रह्मशब्दयोरुपक्रमे श्रुतत्वेन तस्य वैष्णवत्वं निश्चाययदात्मादिशब्दद्वयं प्रकरणस्य वैष्णवत्वं निर्धार्य तत्रस्थवैश्वानरनाम्नो विष्ण्वर्थत्वमवधारयतीति भावेनासम्भवादिति सूत्रखण्डभाष्यं व्यनक्ति ।। **प्रकरणबलाच्चेति** ।। न केवलमात्मशब्दस्मृतिसमाख्याभ्यामिति चार्थः । भाष्ये इत्यादिनेत्यस्यान्येषामसम्भवादित्यनेनान्वयः । आरम्भाच्चेत्यस्य विष्णुरित्यादिनाऽन्वयमुपेत्य व्याचष्टे ।। को न इति ।। आरम्भाच्चेत्यस्यार्थः आरभ्य उपक्रम्याधीतत्वेन ।। प्रकरणत्वाच्चेति ।। तेन सूत्रे अग्रेतनापिपदमसम्भवीत्यत्राप्याकृष्यत इति सूचितम् । वचनेनेत्यनेनेत्यादिना वचनेनेत्यस्य भाष्यस्यार्थः सूचितः ।। श्रुतीति ।। तथा च न स्मर्यमाणमित्यनेन पौनरुक्त्यमिति भावः ।

(भावदीपः)

समाख्याचात्रार्थतः । न तु जिज्ञासानयोक्तपरो दिवेति समाख्यावच्छब्दत इति ज्ञेयम् । चन्द्रमा इति भाष्यं वाक्यप्रतीकमिति मत्वाऽनुरूपवाक्यानि पठति ॥ **शीर्ष्ण इति** ॥ सुतेजा इत्यादेर्द्योदिरर्थो बोध्यः । भावार्थमाह ॥ **अत इति** ॥ समाख्ययाऽपीत्यनेन सूत्रे पुरुषविधमपीत्यपिशब्दः असम्भवादित्युक्त-प्रकरणसमुच्चय इति दर्शितम् । अनन्वयादाह ॥ **प्रसिद्धमितीति** ॥ उक्तसमुच्चयार्थोऽयमेतमर्थं कथं सूचयेदित्यत आह ॥ **अपीति** ॥ प्रकरणसमाख्यारूपोभयेत्यर्थः । दृष्ट्युपदेशादित्यस्य तु श्रुत्यादिसाव-काशत्वरूपहेतुसाधकत्वेन साक्षात्प्रकृतसाध्ये हेतुत्वाभावादुभयेत्युक्तम् । परः परम इत्यनयोरपौनरुक्त्या-याऽऽह ॥ **पर इति** ॥ पुराणादिष्विति भाष्यस्थादिपदार्थमाह ॥ आदिपदेनेति ॥ ब्रह्मतर्केति ॥ तृतीये पुरुषविद्यायामित्यत्र भाष्योक्तमेतद्वाक्यं स्मृतौ तत्तज्जनकत्वेन तत्तन्नामवत्वोक्तावपि श्रुतावभेदोक्तेः कस्समाधिरुक्त इत्यतोऽभिप्रायमाह ॥ **वैश्वानराङ्गानामिति** ॥ तज्जन्येति ॥ सुतेजः प्रभृतिशब्दोक्तद्यु-प्रभृतिजनकत्वं वक्तुं तदभेदः श्रुतावुच्यते । तथा चैकार्थ्यं श्रुत्योरित्यर्थः । छान्दोग्यभाष्ये तु क्रीडात्मकत्वाद् व्याख्यं च सुतेजाश्चातितेजसा । स्वर्गाधारं शिरो विष्णोः सर्वरूपातिदर्शनात् । चक्षुस्तु विश्वरूपाख्यमित्यादिना स्वर्गाद्याधाराङ्गविशेषस्यातितेजस्त्वादिनिमित्तेन सुतेजःप्रभृतिशब्दवाच्यत्वमुक्तम् । तत्राधाराधेयभावविवक्षाजन्यजनकभावविवक्षाया अप्युपलक्षणम् । यतो जनिस्तत्रैव स्थितिलयाविति प्रसिद्धेः । अत एवात्र तत्वप्रदीपे यस्मादङ्गाद्यज्जायते तदाश्रित्य तिष्ठति लीयते चेत्यादिनाऽप्याधाराधेय-भावादिविवक्षाऽप्युपलक्षिता ।

## अभिनवचन्द्रिका

ननु – 'प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्त' (छा.५-१ ८-१) इति विषयवाक्यस्थ-वैश्वानरशब्दस्य विष्णुपरत्वनिर्णयविघटनाय तस्मिन् वैश्वानरे अग्न्यादिशब्दाः प्रदर्शनीयाः । बृहदारण्यकाद्युक्तवैश्वानरशब्दस्याऽग्निशब्दादि सामानाधिकरण्यप्रदर्शनमयुक्तम् । तस्य वैश्वानरशब्दस्याग्नि शब्दादिसामानाधिकरण्येऽपि अस्य वैश्वानरशब्दस्य आत्मशब्दसमानाधिकरणस्य विष्णुपरत्वनिश्चय-सम्भवादित्यत आह – (सू.२६) **अत्र सर्वेति** ॥ सर्वस्यापि वैश्वानरशब्दस्य विचार्यत्वात् तद्वाक्ये अग्निशब्दादिप्रदर्शनं युक्तमिति भावः । **समाख्यारूपेण वेति** ॥ समाख्यारूपतद्वाक्योदाहरणं तत्रच अग्निपरत्वसन्देहव्युदासायाऽग्निशब्दादिप्रदर्शनमिति भावः । 'मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आजातमग्निम् । कविं संम्राजमतिथिं जनाना मासन्नापात्रं जनयन्त देवा' (ऋ.स.६-८-१) इति ऋचं व्याचष्टे – **दिव इति** ॥ दिवः कारणीभूतमूर्धानं = मूर्धात्मकं, पादं = पादात्मकं, ऋते

(अभिनवचन्द्रिका)

इत्यस्य अर्थः **सम्यग्ज्ञानायेति** ॥ **आजातमित्यस्यार्थः अभिव्यक्तमिति** ॥ अतिथिमित्यस्यार्थः । **अत्यन्नमिति** ॥ पात्रमित्यस्यार्थः – **पातारमिति** ॥ आसन्नेत्यस्यार्थः – **स्वास्यतयेति**॥ ननु – अरतिशब्दस्य कथं पादार्थकत्वमित्यत आह – **गतिसाधनत्वादिति** ॥ ऋतृगतावित्यस्माद्धातोः 'वहिवस्यर्तिभ्यश्चित्' (५००) इत्यनेन औणादिकेऽतिप्रत्यये गुणे कृते अरतिरिति सिध्यति । 'ऋत आजात'मित्यस्य ज्ञानायाऽभिव्यक्तमित्यर्थं घटयति – **अग्निरिति** ॥ 'इति चे'त्यनन्तरं 'यस्मादरति-शब्दोक्तनिर्वचनं सप्तम्याः तादर्थ्ये समाख्यानं, थशब्दस्य अन्नवाचित्वश्रुतिः, अग्न्यन्तर्गतस्य अग्निशब्दवाच्यस्य विष्णोः, देवास्यत्वे समाख्यानं चास्ति । अतः उक्तव्याख्यानमुपपन्नमिति वाक्यशेषः । दृष्टान्तासिद्धेश्च अग्निलिङ्गानामसत्त्वं न वाच्यमित्याह – **वाक्यान्तरस्येति** ॥ ननु – 'अग्निस्तु प्रमदा नाम घृतकुम्भसमः पुमान् । सुतामपि रहो जह्यादन्यदा यावदर्थकृत्' इति भागवतानुसारेण योऽर्थः स्थाप्यते, 'योषितमग्निं ध्यायीत' इति वाक्यस्य तदर्थत्वात् दृष्टान्तोऽसिद्ध इति भावः । ननु चशब्दस्य समुच्चयाभिधानोपक्षीणत्वात् उक्तसूचकत्वकथनमयुक्तमित्यत आह– **अपिपदेनैवेति**॥ अपिपदेनैव पूर्वोक्तहेतुभ्यां सह 'अधीयत' इत्यनेन समुच्चयसिद्धेः, नान्यत्रोपक्षीणश्चशब्द इत्यर्थः ।

## वाक्यार्थमुक्तावली

ॐ शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात्पुरुषविधमपि चैनमधीयते ॐ ॥ सूत्रे शब्दादिभ्यः इति बहुवचनं लिङ्गबाहुल्याभिप्रायेणेति भावेन भाष्ये लिङ्गबाहुल्यप्रतिपादक-वाक्योदाहरणमिति भावेनाह ॥ **तथाऽग्निकर्म चेत्यादिना** ॥ अग्निकर्म चेत्यस्य लिङ्गत्वेऽपि क्रियारूप-लिङ्गत्वेन ब्राह्मणपरिव्राजकन्यायेन सूत्रे अन्तःप्रतिष्ठानादिति पृथगुक्तम् । भाष्ये इत्यादिशब्द इत्यादिपदेन वैश्वानराय मीळ्हुषे सजोषाः कथादांशोमाग्नये बृहध्यै इत्यादि गृह्यते । इत्याद्यग्निलिङ्गमित्यादिपदेन उर एव वेदिर्लोमानि बर्हिरित्यादितत्पूर्ववाक्योक्तलिङ्गस्य ग्रहणम् । यद्वा नाभिं यज्ञानां सदनं रयीणां महामाहावमभि सं नवन्त । वैश्वानरं रथ्यमध्वराणां यज्ञस्य केतुं जनयन्त देवा इत्यादिवाक्योक्तानां ग्रहणम् । अत एतत्सूत्रे शब्दादिभ्य इति लिङ्गबाहुल्यवचनम् । **तद्यद्भक्तमिति छान्दोग्ये चेति** ॥ तदास्यं प्रति यद्भक्तमन्नं प्रथममागच्छेत् तद्धोमीयमिति वैश्वानरस्य हुताहुतिपाचकत्वोक्तेरिति भावः । ननु विषयवाक्येऽग्न्यादिशब्दाभावात् आक्षेपो न युक्त इत्यत आह ॥ **तत्रेति** ॥ **समाख्येति** ॥ तथा च सिद्धान्त इव पूर्वपक्षेऽपि समाख्या वर्तत इति भावः । ऋचिजनानामित्यावर्तनीयम् । ऋते इत्यस्यार्थः ज्ञानायेति । आङोऽर्थः सम्यगिति । जातमित्यस्याभिव्यक्तमित्यर्थः । जनी प्रादुर्भावे ।

(वाक्यार्थमुक्तावली)

आसन् आस्ये आस्यतयेति यावत् । आस्यविवक्षया आसन् इति छान्दसः प्रयोगः । आजनयन्त अकुर्वन्नित्यप्याङोऽर्थः । ऋगतावित्यस्मात् कर्तरि औणादिकतिप्रत्ययो गुणश्चेति भावः । यद्वा रतिविरोधिगतिसाधनत्वात्पादोऽरतिशब्दवाच्य इत्यर्थः । यद्वा अरतम् अरतिर्येन सोऽरतिः पाद इत्यर्थः इति तत्वप्रदीपानुसारेणार्थः ॥ **अन्नं थमिति** ॥ अतिशयितं थं यस्येति विग्रहः । तृतीयोऽतिशय इतीकार इति भावः । आस्यतयाऽग्निमकुर्वन् इत्यत्र प्रमाणमाह ॥ **अग्निर्वै देवानामिति** ॥ **वैश्वानर इति** ॥ अनेवंविदोऽपि होमसाम्यात् एवंविदिति विशेषणात् यथा फलाभिप्रायकं तद्वाक्यं तद्वदिदमपि वाक्यं ज्ञानिनो होमफलाभिप्रायेण प्रवृत्तमिति भावः । यथा तत्र चण्डालायोच्छिष्टदाननिषेधे तात्पर्यं तथात्राप्यपवित्रभोजननिषेधे तात्पर्यमिति भावः । भाष्ये तस्यैव दृष्ट्युपदेशादित्यस्य साक्षान्नञाऽनन्वयात् न्यायविवरणं संयोज्य तदुपपादकत्वेन भाष्यं योजयति ॥ **उभयत्र श्रुत्यादिसाम्येऽपीत्यादिना** ॥ नन्वग्निपदस्यापि भगवत्परत्वेऽयमग्निर्वैश्वानर इति विशेषणानर्थक्यमिति चेन्नाग्निनामात्मकत्वेनोपासनार्थत्वेन तस्य व्यावर्तकत्वाभावादिति भावेनाह ॥ **अथ हेममिति** ॥ एवञ्च गायत्रीनये तथा चेतोऽर्पणेत्यनेन गायत्र्याद्यप्रसिद्धशब्दस्य विष्णौ प्रयोगे प्रयोजनोक्तिः । इह तु वैश्वानरविशेषणाग्निश्रुत्यादेः विष्णुव्यावर्तकत्वाभावे वैयर्थ्यपरिहाराय प्रयोजनोक्तिरित्यपौनुरुक्त्यमिति भावः । अविद्यमानज्ञानं विधिर्न सम्भवति उपासनाविधिस्तु तस्याज्ञानान्यत्वात् सम्भवतीति शङ्कानुत्तये तस्या ज्ञानविशेषत्वं वक्तुं सूत्रभाष्ययोर्दृष्टीत्युक्तं तद्व्यनक्ति ॥ **न चेति** ॥ **वाक्यान्तरस्येति** ॥ अहं वैश्वानर इति समाख्या-वाक्याविरोधेन योऽर्थः स्थाप्यते तदर्थत्वान्मूर्धैव सुतेजा इत्यादेर्नासदर्थकत्वम् । उक्तविधया मूर्धैव सुतेजा इत्यादिवाक्याविरोधेन योऽर्थस्तादात्म्यादन्यार्थः यस्माद्यज्जायते चाङ्गादित्यादिना स्थाप्यते तदर्थत्वाद्धृदयं गार्हपत्य इत्यादीनां च नासदर्थकत्वमित्यर्थः । कोऽर्थस्तर्हि योषितमग्निं ध्यायीतेत्यस्येत्यत आह ॥ **वाक्यान्तरस्येति** ॥ वाक्यान्तरस्य योषितमग्निमित्यादेः ।

तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वन्तीति वाक्यान्तराविरोधेन रेतोरूपाहुत्याधारत्वलक्षणो योऽर्थः स्थाप्यते तदर्थत्वादित्यर्थः । यद्वा नाविद्यमानमिति वाक्यान्तराविरोधेन पतिव्रताया ध्याताया स्पृष्टाया अग्निवत् कुलदाहकत्वलक्षणः तदर्थत्वादित्यर्थः । यद्वा अङ्गारसदृशी नारी घृतकुम्भसमः पुमान् इति प्रमाणबलात् अग्निसादृश्यलक्षणो योऽर्थः स्थाप्यते तदर्थत्वादित्यर्थः । विश्वमित्युक्तपूर्तिमुपपादयितुं सर्वनामेत्यादि । सर्वाणि शब्दजातानि नामानि यस्य स सर्वनामा नाम्नां कर्मद्रव्यगुणादियोगप्रवृत्ति-निमित्तकत्वात् अनन्तनामवाच्यत्वम् । कालीयमर्दनाद्यनन्तकर्मवत्त्वं चक्रधरत्वाद्यनन्तलिङ्गवत्त्व-

(वाक्यार्थमुक्तावली)

मानन्दादिसर्वगुणवत्त्वं च लभ्यत इति भावेन सर्वकाम इत्युक्तम् । अणुर्महानित्यादिशब्दवाच्यतया परिमाणाद्यनन्तधर्मवत्त्वं च लभ्यत इति भावेन सर्वधर्म इत्युक्तम् । सहस्राक्षचतुर्मुखविलोचनादि-नामवाच्यतया सर्वाकारवत्त्वं लभ्यत इति भावेन सर्वरूप इति । अरम् अलं सम्यक् । इदमेव भाष्य-मस्माभिः प्रमेयमुक्तावल्यां रीत्यन्तरेण व्याख्यातं बोध्यम् । वामनाधिकरणे श्रुत्यादेरुपक्रमोपसंहारयोः श्रुतत्वे प्रकरणनिश्चायकत्वमिति वक्ष्यमाणत्वात् । आत्मब्रह्मशब्दयोरत्रोपक्रमे श्रुतत्वेन तस्य वैष्णवत्वं निश्चाय यदात्मादिशब्दद्वयं प्रकरणस्य वैष्णवत्वं निर्धार्य तत्रस्थवैश्वानरनाम्नः विष्णुपरत्वमवतारयतीति भावेनासम्भवादिति सूत्रखण्डभाष्यमवतारयति ॥ **प्रकरणबलाच्चेति** ॥ अनात्तत्वात् सर्वोत्तमत्वेनास्वीकृत-त्वात् । इत्यादिना अन्येषामसम्भवादिति भाष्येऽन्वयः । सुतेजाः द्यौः विश्वरूपः सूर्यः । पृथग्वर्त्मा वायुः ॥ प्रकरणसमाख्ययोः परस्परसमुच्चये चापिशब्दाविति चशब्दस्योभयसमुच्चये उपलक्ष्यमाशङ्क्य निषेधति ॥ **अपिपदेनैवेति** ॥ गत्यन्तराभाव एव चापिशब्दयोरुभयोरपि परस्परसमुच्चयार्थस्य वर्णनीयत्वादिति भावः । यद्वा श्रुत्यादीनां सावकाशत्वेन तथा दृष्ट्युपदेशादित्युक्तबाधकाभावस्य अयं भावादित्युक्तप्रकरणस्य समुच्चयार्थं चशब्दः । प्रकरणसमाख्ययोः समुच्चयार्थमपिशब्द इति चशब्दस्या-न्यत्रोपक्षय इत्यत आह ॥ **आदिपदेनैवेति** ॥ बाधकाभावप्रकरणयोरेकः समुच्चयः । प्रकरणसमाख्ययोरपरः समुच्चय इत्युभयेत्यर्थः । साक्षादिति हि स्मृताविव पौरुषं सूक्तं विष्णुपरमिति श्रुतावनुक्तत्वादिति भावः ॥ **आधिक्यक्रमाभिप्रायेणेति** ॥ अपौरुषेयत्वादिति भावः । यद्वा सामान्यतो विष्णुपरत्वमिति कथनात् विष्णुपरत्वेन व्याख्यानं प्रबलमिति भावः । आदिपदेन । पुराणादीत्यादिपदेन । ततश्चायं सूत्रार्थः । अत्र तदिति वैश्वानर इति पदद्वयमनुवर्तते । शब्दादिभ्यः अग्निशब्दहोमाधारत्वगार्ह-पत्याद्यङ्गत्वलिङ्गेभ्यः वाचकत्वेनान्तः प्रतिष्ठानाच्च वैश्वानरो न विष्णुरिति चेन्न कुतः? तथा अग्न्यादिनाम-लिङ्गकर्मवत्त्वेन दृष्ट्युपदेशात् उपासनोपदेशात् तेषां सावकाशत्वेन बाधकत्वाभावात् । को न आत्मा किं ब्रह्मेत्युपक्रमोक्तात्मब्रह्मशब्दयोरन्यत्रासम्भवात् उपक्रमस्य वैष्णवतया निरवकाशप्रकरणाच्च । यत एनं वैश्वानरं पुरुषविधं पुरुषसूक्तोक्तः पुरुषो यद्विध अभिधीयते छन्दोगा अतः समाख्यानादपि वैश्वानरो विष्णुर्नेति न युक्तम् । चशब्दः पुरुषसूक्तस्य वैष्णवत्वे प्रमाणसमुच्चायक इति ।

## तत्त्वसुबोधिनी

न केवलम् अग्निशब्दसामानाधिकरण्यं वैश्वानरशब्दस्य श्रूयते अपि तु अग्निलिङ्गं चेत्याह ॥ **तथाऽग्निलिङ्गं चेति** ॥ सूत्रे ''शब्दादिभ्य'' इति बहुवचनं लिङ्गबाहुल्याभिप्रायेणेति भाष्ये बहुलिङ्ग-

(तत्त्वसुबोधिनी)

प्रतिपादकवाक्योदाहरणमिति भावः । **अग्निकर्म चेति** । अस्यापि लिङ्गत्वेऽपि ब्राह्मणपरिव्राजकन्यायेन सूत्रे अन्तः प्रतिष्ठानादिति पृथगुक्तमित्यभिप्रेत्य भाष्ये पाचकत्वेन अन्तःप्रतिष्ठानमुक्तमिति भावः । ननु बृहदारण्यकादिवाक्योद्धारः किमर्थमित्यत आह ॥ **अत्र सर्वेति** ॥ तथा च यस्त्वेतमिति विषयवाक्ये अग्निशब्दाभावेऽपि बृहदारण्यकादौ तत्सद्भावात् शब्दादिभ्य इति सौत्राक्षेपोपपत्तिरिति भावः ॥ **समाख्यारूपेण वेति** ॥ अनेन स्मर्यमाणमनुमानं स्यादित्युक्तसमाख्यावदग्निपक्षेऽपि समाख्या दर्शिता भवति । ऋत आजातमित्यस्यार्थः सम्यक् ज्ञानायाभिव्यक्तमिति । सम्यगिति आङोऽर्थः । जनानामित्यन्तं अत्रापि सम्बध्यते । अतिथिमित्यस्यार्थोऽत्यन्नमिति । आसन्नित्यस्यार्थः स्वास्यतयेति । जनयन्तेत्यस्य द्वितीयाङः अडर्थमभिप्रेत्याह । **अकुर्वन्निति** । उपसर्गस्य धात्वर्थबाधकत्वादेवमुक्तम् । अरतिशब्देन पादमिति व्याख्या कस्मान्निमित्तादत आह । गतिसाधनत्वादरतिः पाद इति । लोके गमनेनारतिदर्शनाद् रतिविरुद्धगतिसाधनत्वात् पादोऽरतिशब्दार्थः इत्यर्थः । यद्वा करणसाधनादृगतावित्यस्मादतिप्रत्यये गुणे च सति निष्पन्नोऽरतिशब्द पादवाचक इत्यर्थः । ननु ऋत इति सप्तम्याः चतुर्थ्यर्थत्वं कथमित्यतः श्रुत्यन्तरसमाख्यानादित्याह ॥ **ऋतायेति** ॥ थशब्दस्यान्न वाचकत्वं कुत इत्यतः तत्र प्रमाणमाह ॥ **अन्नमिति** ॥ देवा अग्निं स्वमुखत्वेनाकुर्वन्नित्युक्तम् । तत्र मानमाह । **अग्निर्वा इति** ॥ अग्निनामलिङ्गादेः कथं सावकाशत्वमतः दर्शयति ॥ **तत्र यदित्यादिना** ॥ आत्मशब्दादेरपि अन्यत्र सावकाशोऽस्त्येवेत्यत आह ॥ **न चेति** ॥ तस्य निरवकाशत्वादेरुपपादितत्वादिति भावः । अग्निनामलिङ्गादेः उपासनार्थम् उक्तत्वात् विष्णोस्तदभावः स्यादित्याशङ्क्य निषेधति ॥ **न च वाच्यमिति** ॥ ननु 'सर्वनामा सर्वलिङ्ग' इति श्रुतौ सर्वशब्दस्य सङ्कोचेन जीवगतदुष्कर्मादि दुःखादिकमपि कुतो न ग्राह्यमित्यत आह । **वाक्यान्तरस्येति** ॥ 'निरनिष्टो निरवद्य' इत्यादिवाक्यान्तराविरोधेन योऽर्थः स्थाप्यते सर्वनामलिङ्गादिमत्वादिरूपोऽर्थः स्थाप्यते तदर्थत्वात् सोऽर्थो यस्यासौ तदर्थः तस्य भावः तत्त्वं तस्मादित्यर्थः । तथा च वाक्यान्तराविरुद्ध एव सर्वनामेत्यादिश्रुत्यर्थो वक्तव्यः । दुःखित्वादिरूपार्थस्य च 'निरनिष्टो निरवद्य' इत्यादिश्रुतिविरुद्धत्वात् न सोऽर्थः श्रुतेरिति भावः । ननु योषितमग्निं ध्यायीतेत्यादावविद्यमानस्योक्तत्वात् वेदाद्याः ध्यानार्थं नाविद्यमानं ब्रुवते इति कथमित्यत आह । **वाक्यान्तरस्येति** ॥ अङ्गारसदृशी नारी घृतकुम्भसमः पुमान् इत्यादिप्रमाणबलात् अग्निसादृश्यस्य योषिति प्रमाणाविरुद्धत्वात्तदर्थत्वं योषितमित्यादिवाक्यान्तरस्येत्यर्थः । **विश्वं पूर्णमिति** । श्रुतावरमित्यस्यालमित्यर्थः । को न आत्मा किं ब्रह्म इत्यादिना आत्मत्वाद्यसम्भवादित्यर्थ इत्यन्तेन अनात्तत्वादिति भाष्यमेवं योजितम् भवति । को न आत्मा किं ब्रह्म इत्यारम्भाच्च विष्णुरेव वैश्वानरः ।

(तत्त्वसुबोधिनी)

ब्रह्मात्मशब्दयोः वैश्वानरविद्योपक्रमे श्रवणेऽपि कुतः तदुक्तस्य विष्णुत्वमित्यत अनात्तत्वादित्यादिना प्रमाणेन विष्णोरेवात्मब्रह्मशब्दार्थव्याप्तत्वगुणपूर्णत्वयोः सम्भवेन अन्येषाम् असम्भवादिति । भाष्यगतादि-शब्दद्वयोपात्तश्रुत्यंशोदाहरणपूर्वकं पुरुषसूक्तस्य समाख्यारूपत्वं स्पष्टमाह । शीर्ष्णो द्यौरित्यादिना । मूर्धैवेत्यस्यायमर्थः । सुतेजाः शोभनं तेजो यस्यासौ सुतेजाः द्युलोकः मूर्धैव मूर्धवसकाशाज्जातः विश्वरूपः आदित्यश्च चक्षुषो जातः पृथक् नाना वर्त्मानि मार्गा यस्यासौ पृथग्वर्त्मा वायुः प्राणः **प्राणात् बहुलः** शरीरसन्दोहो मध्यं शरीरं तस्माद्रयिः धनं बस्तिः मूत्रसंहारस्थानं तस्माज्जातमित्यर्थः ॥ इतरत् स्पष्टम् । **अपिपदेनैवेति** । सूत्रेषु पुरुषविधमित्यनेनैव उच्यमानायाः श्रुतिसमाख्यायाः द्वितीय-सूत्रोक्तश्रुतिसमाख्याया असम्भवशब्दोक्तप्रकरणेन समन्वयस्यापि शब्देनैव सिद्धेः चशब्दः शङ्कानिवृत्यर्थः सन् भाष्योक्तस्यैव सूचक इत्यर्थः । ननु श्रुतेः प्रथमप्रतिज्ञातत्वात् सैव प्रथममुदाहार्या स्मृतिः कुत उदाहियत इत्यत आह । **श्रुतेरपीति** । साक्षादिति । अर्थात्तत्साधकत्वं तु पुरुषसूक्तस्य विष्णुपरत्वेन व्याख्यानकरणादेव सिध्यतीति भावः । तर्हि श्रुतेः प्रथमं प्रतिज्ञानं कुत इत्यत आह । **प्रतिज्ञा त्विति** । आधिक्यक्रम एवाभिप्रायो यस्याः सा तथेत्यर्थः । परो विलक्षण इति । तथा च न परम इत्यनेन पौनरुक्त्यमिति भावः । **आदिपदेनेति** । सकलवेदतन्त्रपुराणादिषु इत्यत्रादिपदेनेत्यर्थः । **तदभेद इति** । द्युभ्वाद्यभेद इत्यर्थः ।

## वाक्यार्थविवरणम्

आत्मन्निितिवत् आसन्निति सप्तमी । तथा च 'आसन् जनयन्त' इत्यस्य तात्पर्यतो व्याख्यानं स्वास्यतयाऽकुर्वन्निति । ननु 'पद्दन्नोमासि' इति सूत्रे आसनेत्यस्यासन्नित्यादेशो विहितः । ततश्चासन-शब्दस्य प्रसिद्धासनवाचित्वेन मुखवाचित्वाभावात् कथमास्यतया इति व्याख्यानम् इति चेत् । अत्र व्याकरणसम्प्रदायाभिज्ञाः प्राहुः । सूत्रे आसन्निति य आदेशो विहितः स आसनेत्यस्य न भवति, किन्त्वास्येत्यस्यैव । पाददन्तनासिकामासहृदयदोषयकृत् शकृत् आसनेति यः प्रक्रियाकारेण स्थानिनिर्देशः कृतः स प्रामादिकः । किं त्वास्येत्येव स्थानिनिर्देशः कार्य इति । यथोक्तं पदमञ्जर्याम् । नात्रासनशब्दः पठितव्यः किन्त्वास्यशब्द इति सप्तमीति । ऋत आजातमिति सप्तमीत्यर्थः । ननु 'अन्नं थं' 'अग्निर्वै देवानाम्' इति उपपत्तिष्टीकाकारैः कस्मात्क्रियत इति चेदुच्यते । भगवत्पादैरस्याः श्रुतेः कुत्राप्यव्याख्या-तत्वेन स्वैरेव व्याख्यास्यमानत्वात्तत्रोपपत्तिः क्रियत इति ध्येयम् ।

# वाक्यार्थमञ्जरी

ॐ शब्दादिभ्योऽन्तः प्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात्पुरुषविधमपि चैनमधीयते ॐ ॥ अग्न्यादिशब्दात् आदिपदोक्तहोमाधिकरणत्वाद्यग्निलिङ्गेभ्यः अन्तःप्रतिष्ठानादन्तःप्रविश्य पचनरूपाग्निव्यापाराच्च वैश्वानरोऽग्निरेव न विष्णुरिति चेन्न तेषां हरौ सावकाशत्वात् । कथमग्न्यादि-नामलिङ्गकर्मवत्त्वेन रूपेण दृष्ट्युपदेशात् विष्णोरुपासनोपदेशात् असम्भवात् को न आत्मा किं ब्रह्मेत्युपक्रमोक्तब्रह्मशब्दस्याग्नावसम्भवाच्च । नासौ वैश्वानरः अग्निः । अपि च मूर्धैव सुतेजा इत्यादिना छन्दोगाः एनं वैश्वानरं पुरुषविधं शीर्ष्णो द्यौः समवर्ततेति पुरुषसूक्तोक्तगुणवन्तमधीयते प्रतिपादयन्ति अतस्तत्समाख्याबलादपि विष्णुरेव वैश्वानरो नाग्निरित्यर्थः । समानाधिकृतत्वं सामानाधिकरण्यम् । ऋचि ऋग्वेद वैश्वानरे श्रूयत इति सम्बन्धः ॥ **गार्हपत्याद्यङ्गत्वमिति** ॥ वैश्वानरस्य गार्हपत्याग्निर्हृदयम् अन्वाहार्यपचनाग्निर्मन आहवनीयाग्निरास्यमिति तदर्थादिति भावः ॥ **अग्निकर्म चेति** ॥ अस्य लिङ्गत्वेऽपि ब्राह्मणपरिव्राजकन्यायेन पृथगुक्तिः ॥ **अयमग्निरिति** ॥ योऽयं प्रसिद्धोऽन्तः पुरुषे पुरुषस्यान्तर्वर्तते अयमग्निर्जाठराग्निस्थो भगवान्वैश्वानरो विश्वगुणवत्त्वाद्विश्वः आ सम्यङ् न रीयते न क्षीयत इत्यानरः वैश्वश्चासावानरश्चेति वैश्वानरः तस्य व्यापारमाह ॥ **येनेति** ॥ यदिदं प्रसिद्धं पुरुषैरद्यते इदमन्नं येन पच्यत इत्यर्थः । ननु छान्दोग्यवैश्वानरविचारपरेऽस्मिन्नधिकरणे बृहदारण्यकादिवाक्योदाहरणं कथमित्यत आह ॥ **अत्रेति** ॥ अत्र सूत्राणां विश्वतोमुखत्वादिति भावः ॥ **समाख्यरूपेणेति** ॥ तत्प्रयोजनं च विष्णुपक्षवदग्निपक्षे समाख्यास्तीति भावः ॥ **मूर्धानं दिव इति** ॥ मूर्धानं दिवोऽरतिं पृथिव्या वैश्वानरमृत आजातमग्निम् । पृथिव्या वैश्वानरमृत आजातमग्निम् । कविं सम्राजमतिथिं जनानामासन्नापात्रं जनयन्त देवा इति मन्त्रस्येत्यर्थः । दिव इत्यादिषष्ठ्यर्थो जन्यजनकभाव इत्याशयेनाह ॥ **दिवः कारणभूतेत्यादि** ॥ **जनानां सम्यग्ज्ञानायेति** ॥ जनानामित्येतद्दत आजातमित्यत्रापि सम्बध्यत इत्युक्तं भवति ॥ सम्यङित्याङोऽर्थः । अरतिशब्दस्य पादमिति, ऋत इति सप्तम्यन्तस्य ज्ञानायेति, थशब्दस्यान्नमिति, आसन्नित्यस्य मुखमिति च व्याख्यानानि क्रमेण समर्थयति ॥ **गतिसाधनत्वा-दित्यादिना** ॥ लोके गमने नारतिदर्शनाद्रतिविरुद्धगतिसाधनत्वात्पादो अरतिशब्दार्थ इत्यर्थः । यद्वा करणसाधनाद्दगतावित्येतस्मादति प्रत्यये गुणे च सति निष्पन्नो रतिशब्दः पादवाचक इत्यर्थः ॥ **तादर्थ्यमिति** ॥ चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरमित्यादाविवेति भावः । इति वाक्यार्थ इति वाक्यादवगन्तव्य इति सम्बन्धः । तथाहि तस्माद्वैश्वानरज्ञानस्य सर्वपापक्षयहेतुत्वादेव एवंवित् उक्तरीत्या

(वाक्यार्थमञ्जरी)

वैश्वानरज्ञानी यद्यपि चाण्डालाय स्मरणायोग्यायापि स्वोच्छिष्टं दद्यान्न तत्तस्य पापहेतुः किं तु तद्दत्तमुच्छिष्टमस्य चण्डालस्यान्तर्यामिणि वैश्वानरे आत्मन्येव हुतं स्यादिति हि छान्दोग्यवाक्यार्थः । तदनुसारेण वैश्वानरे तद् हुतं भवतीत्यस्यापि यदि वैश्वानरज्ञानी यस्मै कस्मैचिदन्नं दद्यात्तर्हि तदन्तर्गतवैश्वानर एव हुतं भवतीति व्याख्यानं कार्यमिति । छान्दोग्यवाक्यस्थभक्तशब्दार्थमाह ॥ **अन्नमिति** ॥ ततश्च तत्तदा भोजनवेलायां यद्भक्तमन्नं प्रथममास्यं प्रत्यागच्छेत्तद्धोमीयं होमद्रव्यमिति तद्वाक्यार्थः । योषितं स्त्रियं वैदिकाः वेदानुकूलग्रन्थवचनात् तैत्तिरीयभाष्ये । वाक्यान्तरस्य योषितमित्यादेः योऽर्थ इति । अङ्गारसदृशी नारी घृतकुम्भसमः पुमानित्यादिप्रमाणान्तरसिद्धाग्निसादृश्यरूपार्थेत्यर्थः ॥ प्रकृतश्रुत्यर्थैक्याय स्वहृदय इत्युक्तिः । श्रुतौ गुणाः ज्ञानादयः धर्माः सर्वज्ञत्वादयः अरमित्यस्यालमित्यर्थः रलयोरेकार्थत्वात् । अत एव तत्वप्रदीपेऽरमित्यस्य सम्यगित्यर्थ इत्यभिहितम् । आरभ्य उपक्रम्य । अधीतत्वेन पठितत्वेन शीर्ष्णः शिरसः । सकाशात् समवर्तत अजायत । प्राणात् श्वासात् तद्विधं तत्प्रकारम् ॥ **मूर्धेवेति** ॥ सुतेजाः शोभनकान्तिमान् द्युलोकः मूर्धा स्वसमाननामवद्भगवच्छिरसो जातः विश्वरूपः सर्वरूपादिदर्शनाद्विश्वरूपाख्यः सूर्यश्चक्षुः स्वसमाननामोपेतभगवच्चक्षुषो जातः पृथग् विलक्षणो मार्गो यस्यासौ वायुः प्राणः स्वसमाननामोपेतभगवत्प्राणाज्जातः पृथ्वी पादौ स्वसमाननामोपेतभगवत्पादजातेत्यर्थः । ननु समाख्यासमुच्चयोपक्षीणचशब्दस्य कथं प्रसिद्धिसूचकत्वमित्यत आह ॥ **अपिपदेनेति** ॥ **उभयेति** ॥ प्रकरणसमाख्यारूपोभयेत्यर्थः ॥ **परो विलक्षण इति** ॥ तेन न परम इत्यनेन पुनरुक्तिरिति भावः ॥ **आदिपदेनेति** ॥ सकलवेदतन्त्रपुराणादिष्वित्यत्रत्यादिपदेनेत्यर्थः । तदभेदः द्युम्वाद्यभेदः ॥

## विवृतिः

न केवलमग्निशब्दसामानाधिकरण्यं वैश्वानरशब्दस्य श्रूयते अपि त्वग्निलिङ्गञ्चेत्याह ॥ **तथाग्निलिङ्गञ्चेति** ॥ सूत्रे शब्दादिभ्य इति बहुवचनं लिङ्गबाहुल्याभिप्रायेणेति भाष्ये बहुलिङ्गप्रतिपादकवाक्योदाहरणमिति भावः । **अग्निकर्म चेति** ॥ अस्यापि लिङ्गत्वेऽपि ब्राह्मणपरिव्राजकन्यायेन सूत्रे अन्तःप्रतिष्ठानादिति पृथगुक्तमित्यभिप्रेत्य भाष्ये पाचकत्वेनान्तःप्रतिष्ठानमित्युक्तमिति भावः । ननु बृहदारण्यकादिस्थवाक्योद्धारः किमर्थ इत्यत आह । **अत्र सर्वेति** ॥ तथा च यस्त्वेतमिति विषयवाक्येऽग्निशब्दाभावेऽपि बृहदारण्यकादौ तत्सद्भावात् शब्दादिभ्यः इति सौत्राक्षेपोपपत्तिरिति भावः ॥ **समाख्यारूपेण वेति** ॥ अनेन स्मर्यमाणमनुमानं स्यादित्युक्तसमाख्यावदग्निपक्षेऽपि समाख्याप्रदता

(विवृतिः)

भवति ॥ ऋत आजातमित्यस्यार्थः सम्यज्ज्ञानायाभिव्यक्तमिति । **सम्यगित्याङोऽर्थः** ॥ जनानामित्यन्तमत्रापि सम्बन्ध्यते । अतिथिमित्यस्यार्थोऽत्यन्नमिति ॥ आसन्नित्यस्यार्थः स्वास्यतयेति । जनयन्तेत्यस्य द्वितीयाङोऽडागममभिप्रेत्याह ॥ **अकुर्वन्निति** ॥ उपसर्गस्य धात्वर्थबाधकत्वादेवमुक्तम् । अरतिशब्देन पादमिति व्याख्या कस्मान्निमित्तादत आह **गतिसाधनत्वादरतिः पाद इति** ॥ लोके गमनेनारतिदर्शनाद्रतिविरुद्धगतिसाधनत्वात्पादो अरतिशब्दार्थ इत्यर्थः । यद्वा करणसाधनात् ऋगतावित्यस्मादतिप्रत्यये गुणेचसति निष्पन्नोऽरतिशब्दः पादवाचक इत्यर्थः । ननु ऋत इति सप्तम्याः चतुर्थीत्वं कथमित्यतः श्रुत्यन्तरसमाख्यानादित्याह ॥ **ऋतायेति** ॥ थशब्दस्यान्नवाचकत्वं कुत इत्यतस्तत्र प्रमाणमाह ॥ **अन्नमिति** ॥ देवा अग्निं स्वमुखत्वेनाकुर्वन् इत्युक्तं तत्र मानमाह ॥ **अग्निर्वा इति** ॥ अग्निनामलिङ्गादेः कथं सावकाशत्वमित्यतस्तद्दर्शयति ॥ **तत्र यदित्यादिना** ॥ आत्मशब्दादेरप्यन्यत्रावकाशोऽस्त्येवेत्यत आह ॥ **न चेति** ॥ तस्य निरवकाशत्वादेरुपपादितत्वादिति भावः अग्निनामलिङ्गादेस्तदुपासनार्थमुक्तत्वाद्विष्णोस्तदभावः स्यादित्याशङ्क्य निषेधति ॥ **न च वाच्यमिति** ॥ ननु सर्वनामा सर्वलिङ्ग इति श्रुतौसर्वशब्दस्य सङ्कोचेन जीवगतदुष्कर्मादि दुःखादिकमपि कुतो न ग्राह्यमित्यत आह ॥ **वाक्यान्तरस्येति** ॥ निरनिष्टो निरवद्य इति वाक्यान्तरविरोधेन योऽर्थः स्थाप्यते सर्वनामलिङ्गादिमत्वरूपोऽर्थः तदर्थत्वात् सोऽर्थो यस्यासौ तदर्थः तस्य भावस्तत्वं तत्स्यादित्यर्थः । तथा च वाक्यान्तराविरुद्ध एव सर्वनामेत्यादिश्रुत्यर्थो वक्तव्यः दुःखित्वादिरूपार्थस्य च निरनिष्टो निरवद्य इत्यादिश्रुतिविरुद्धत्वान्न सोऽर्थः श्रुतेरिति भावः । ननु योषितमग्निं ध्यायीतेत्यादावेवाविद्यमानस्योक्तत्वाद्वेदाद्याः ध्यानार्थं नाविद्यमानं ब्रुवत इति कथमित्यत आह ॥ **वाक्यान्तरस्येति** ॥

अङ्गारसदृशी नारी घृतकुम्भसमः पुमान् इत्यादिप्रमाणबलादग्निसादृश्यस्य योषिति प्रमाणाविरुद्धत्वात्तदर्थत्वं योषितमिति वाक्यस्येत्यर्थः । विश्वमित्यनेन प्रपञ्चरूपत्वं हरेरुच्यत इत्यन्यथाप्रतीतिनिरासायाह ॥ **विश्वं पूर्णमिति** ॥ श्रुतावरमित्यस्यालमित्यर्थः । को न आत्मा किं ब्रह्मेत्यादिना आत्मत्वाद्यसम्भवादित्यर्थ इत्यनेन अनात्तत्वादिति भाष्यमेव योजितम् । कोऽन आत्मा किं ब्रह्मेत्यारम्भाच्च विष्णुरेव वैश्वानरः । ब्रह्मात्मशब्दयोर्वैश्वानरविद्योपक्रमे श्रवणेऽपि कुतस्तदुक्तस्य विष्णुत्वमित्यतः अनात्तत्वादित्यादिना प्रमाणेन विष्णोरेवात्मशब्दार्थव्याप्तत्वगुणपूर्णत्वयोः सम्भवेनान्येषामसम्भवादिति भाष्यगतादिशब्दद्वयोपात्तश्रुत्यंशोदाहरणपूर्वकं पुरुषसूक्तस्य समाख्यारूपत्वं स्पष्टमाह ॥ **शीर्ष्णो द्यौरित्यादिना** ॥ मूर्धैवेत्यस्यायमर्थः । सुतेजाः शोभनं तेजः यस्यासौ सुतेजाः द्युलोकः मूर्धैव मूर्धः

(विवृतिः)

सकाशाज्जातः विश्वरूप आदित्यः चक्षुर्जातः पृथक् नाना वर्त्मानि मार्गाः यस्यासौ वायुः प्राणः प्राणात् बहुलः शरीरसन्दोहो मध्यदेहः तस्माद्रयिः धनं बस्तिः मूत्रसंहारस्थानं तस्माज्जातमित्यर्थः । इतरत् स्पष्टम् । सिद्धमिति सूचयतीत्यर्थ इति ॥ सिद्धमित्यभावे मूलपदानामन्वयाप्रतीतेश्चशब्दस्योक्तार्थ-प्रतिपादकत्वरूपप्रदर्शकत्वाभावादिति भावः ॥ **अपिपदेनैवेति ॥** सूत्रे पुरुषविधमित्यनेनैवोच्यमानायाः श्रुतिसमाख्यायाः द्वितीयसूत्रोक्तस्मृतिसमाख्यांया असम्भवशब्दोक्तप्रकरणेन च समुच्चयस्यापिपदेनैव सिद्धेश्चशब्दः शङ्कानिवृत्यर्थः सन् भाष्योक्तस्यैव सूचक इत्यर्थः । ननु श्रुतेः प्रथमं प्रतिज्ञातत्वात्सैव प्रथममुदाहार्या स्मृतिः कुत उदाहियत इत्यत आह ॥ **श्रुतेरपीति ॥ साक्षादिति ॥** अर्थात्तत्साधकत्वन्तु पुरुषसूक्तस्य विष्णुपरत्वेन व्याख्यानकरणादेव सिध्यतीति भावः ॥ तर्हि श्रुतेः प्रथमं प्रतिज्ञानं कुत इत्यत आह ॥ **प्रतिज्ञात्विति ॥** आधिक्यक्रम एवाभिप्रायो यस्याः सा तथेत्यर्थः । **परो विलक्षण इति ॥** तथा च परम इत्यनेन पौनरुक्त्यमिति भावः । श्रुतिविरोधादिरूपप्रागुक्तानुपपत्तिरेव व्यवहारस्थाभिव्यक्त्यादिनिमित्तकत्वेनोपचरितत्वाङ्गीकारे हेतुरित्यर्थः ॥

## सूत्रभाष्यम्

**॥ ॐ अत एव न देवता भूतं च ॐ ॥ २७ ॥**

**अग्निवैश्वानरादिशब्दस्तेजसि भूते अग्निदेवतायां च प्रसिद्धोऽप्यतः पूर्वोक्तहेतुत एवात्र न सा तच्चाभिधीयते ॥ २७ ॥**

## सत्तर्कदीपावली

अग्निवैश्वानरादिशब्दानां याऽर्थान्तरे प्रसिद्धिः सा सूत्रोक्तहेतुना बाध्यते इत्येतत्प्रतिपादकं सूत्रं पठित्वा व्याचष्टे ॥ **अत एवेत्यादिना ॥**

## तत्त्वप्रदीपिका

अत एव न देवता भूतं च । प्रसिद्धोऽपि यद्यपि प्रसिद्धस्तथाऽपीत्यर्थः ॥

## तत्त्वप्रकाशिका

ननु वैश्वानरशब्दस्य देवताभूतयोः प्रसिद्धत्वादत्राप्यसौ तत्परः किं न स्यादित्याशङ्कां परिहरत्सूत्र-

(तत्त्वप्रकाशिका)

**मुपन्यस्य व्याचष्टे ॥ अत एवेति ॥** यद्यपि वैश्वानरशब्दोऽन्यत्र प्रसिद्धस्तथापि नात्र तेनान्यदभिधीयते। आत्मशब्दादिहेतोरेव तस्य चान्यत्र निरवकाशत्वादिति भावः। अत्राग्न्यादिग्रहणं विद्यान्तरोपलक्षणार्थम् ॥ २७ ॥

## गुर्वर्थदीपिका

अग्न्यादिग्रहणं विद्यान्तरोपलक्षणार्थमित्यत्र अग्नेरादौ ग्रहणं प्रक्रमानुसारेण। वैश्वानरपदस्याऽदौ ग्रहणसम्भवेऽप्यप्रस्तुताग्निपदस्यादौ ग्रहणं साक्षादग्निपदस्यैव प्रक्रमवतां ''अग्निमीळे'' इत्यादि-सूक्तान्तराणामप्युपलक्षकमित्यर्थः। यद्यपि प्रथमसूत्रे विष्णुरेव वैश्वानरो न त्वग्निर्देवता नाऽप्यग्निर्भूतमिति च आकाशो विष्णुरेवेत्यादाविव सूत्रमर्यादयैव लभ्यम्। तथाऽपि पृथिवीवाय्वादिसूक्तानामप्यधिकरणान्तरा-भावादनयैव दिशा तत्तद्देवताभूतपरत्वाच्चेत्यतिदेशसूचनाय ''न देवता भूतं च'' इति सामान्यतः सूत्ररचना। प्रकृतानुसारेण भाष्यटीकयोः प्रवृत्तिरिति ज्ञेयम्।

## भावबोधः

अग्निवैश्वानरादिशब्द इति भाष्ये यथाश्रुतेऽन्वयासम्भवादत्र तेनेति तदद्वयमध्याहृत्य तद्व्याचष्टे– **यद्यपि वैश्वानरशब्द इत्यादिना**। अत्र यद्यपि तथापीत्येतत्पदद्वयमपिशब्दमिति द्रष्टव्यम्। अत्राग्न्यादिग्रहणमिति। अग्निवैश्वानरादीति भाष्येऽग्निशब्दादिशब्दयोर्ग्रहणमित्यर्थः। उपलक्षणत्वाभि-प्रायाभावे वैश्वानरशब्दस्यैव समन्वेतव्यत्वाद्वैश्वानरशब्द इत्येवावक्ष्यदिति भावः।

## भावदीपः

ॐ अत एव न देवता भूतं च ॐ ॥ प्रसिद्धोऽपीति भाष्यस्थापिपदार्थं व्यनक्ति ॥ **यद्यपीति ॥** तेजसीत्यादेरर्थोऽन्यत्रेति। अत्र न सेत्यादेरर्थो नात्रेति। तेनेति शेषोक्तिः। अत इत्यादेरर्थ आत्मेति। अत एव प्राण इत्यत्रेव शब्दादेवेत्यत्रेव चैवकारो निरवकाशत्ववाचीत्युपेत्याह ॥ **तस्य चेति ॥** अत्राग्न्यादीति ॥ अग्निवैश्वानरादीति भाष्यस्थाग्निशब्दादिशब्दयोर्ग्रहणं वि मे कर्णा पतयतो विचक्षुरिति अग्निसावित्रबार्हस्पत्येन्द्रवरुणगायत्रीप्राणाकाशाक्षरादिविद्यास्वप्यग्न्यादिशब्दानामप्यन्यत्र प्रसिद्धिर्विद्याभेद-व्यवहारविरोधमाशङ्क्य तत्र तत्र स्थितनिरवकाशविष्णुश्रुत्यादिना देवताभूतादिपरत्वं निरसनीयं वक्ष्यमाणन्यायैश्च सूक्तभेदो विद्याभेदश्च समर्थनीय इति सूचनार्थमित्यर्थः ॥ २७ ॥

## अभिनवचन्द्रिका

अत्र गुणसूत्रम् । 'अत एव न देवता भूतं चे'ति पूर्वपक्षिणा वैश्वानरशब्दस्य देवता-भूतपरत्वानङ्गीकारात् 'विष्णुर्न वैश्वानरो ज्ञापकाभावा'दित्यङ्गीकारात्, पूर्वग्रन्थेन विष्णुपरत्वाभावनिरासेन विष्णुपर इति सिद्धान्तोऽभिहितः । अधुना 'अग्निदेवता, तेजोभूतं वा, वैश्वानरशब्दोक्तमिति पूर्वपक्षान्तरनिरासायेदं सूत्रमिति द्रष्टव्यम् ।

## वाक्यार्थमुक्तावली

ॐ अत एव न देवता भूतं च ॐ ॥ भाष्ये यथाश्रुते अन्वयादर्शनात् अत्र तेनेति पदद्वयमध्याहृत्य व्याचष्टे ॥ **यद्यपीत्यादिना** ॥ यद्यपि तथापीत्युभयं भाष्यगतापिशब्दार्थकथनम् । यद्यपि प्रधानसूत्रे वैश्वानरो विष्णुरेव न देवता नापि भूतमिति आकाशो विष्णुरेवेत्यादाविव सूत्रमर्यादया लभ्यते । तथापि अतिप्रसिद्धलौकिकवैदिकप्रसिद्धिबलात् वैश्वानरोऽग्निरपि किं न स्यादिति आक्षेपमिषेण पादद्वये समन्वितानां वाय्वादितत्तत्सूक्तगतानां शब्दानां प्रसिद्धिबलात् अन्यपरत्वशङ्कायां निरवकाशश्रुत्यादिबलात् प्रसिद्धस्यापि त्याग इति अत्र समाधीयते । अस्याधिकरणस्य पादद्वयशेषत्वस्य पण्डिताचार्यप्रभृतिभि-र्व्यवस्थापितत्वात् । अत एवाग्निग्रहणमादिग्रहणं च विधान्तरोपलक्षणमित्युक्तं टीकायाम् । सूत्रे वैश्वानर इत्यनुवर्तते । चशब्दः समुच्चये । यद्यपि तथापीत्यपिशब्दार्थश्च । यद्यपि देवता भूतं च वैश्वानरः प्रसिद्धः तथापि अत एव निरवकाशात्मशब्दादिहेतोरेव अत्र देवता भूतं च न वैश्वानर इत्यर्थः ।

## तत्त्वसुबोधिनी

अग्निवैश्वानरादिशब्द इति भाष्ये यथाश्रुते अन्वयासम्भवात् अत्र तेनेति तदद्वयमध्याहृत्य तद्व्याचष्टे । यद्यपि वैश्वानरशब्द इत्यादिना । अत्र यद्यपि तथापीत्येतत् पदद्वयमपिशब्दलब्धमिति द्रष्टव्यम् । **अत्राग्न्यादिग्रहणमिति** ॥ अग्निवैश्वानरादीति भाष्ये अग्निशब्दादिशब्दयोर्ग्रहणमित्यर्थः । उपलक्षणत्वाभि-प्रायाभावे वैश्वानरशब्दस्यैव समन्वेतव्यत्वात् वैश्वनरशब्द इत्येवावक्ष्यदिति भावः ।

## वाक्यार्थमञ्जरी

ॐ अत एव न देवता भूतं च ॐ ॥ आत्मशब्दादिहेतोरेवाग्निदेवता तेजोभूतं च वैश्वानरो न

(वाक्यार्थमञ्जरी)

भवतीत्यर्थः । ननु वैश्वानरशब्दसमन्वयस्यैव प्रकृतत्वादग्न्यादिशब्दग्रहणमनर्थकमित्यत आह ॥ **अत्राग्न्यादिग्रहणमिति** ॥ अग्निशब्दादित्यशब्दयोर्ग्रहणमित्यर्थः ॥

## सूत्रभाष्यम्

**॥ ॐ साक्षादप्यविरोधं जैमिनिः ॐ ॥ २८ ॥**

**नाग्न्यादयः शब्दा अग्न्यादिवाचकास्तथापि साक्षादेवानन्ययोगेन ब्रह्मवाचकैश्शब्दैः व्यवहारार्थमनभिज्ञानाच्चान्यत्र व्यवहरन्तीत्यभ्युपगमेऽविरोधं जैमिनिर्वक्ति ।**

'व्यासचित्तस्थिताकाशादवच्छिन्नानि कानिचित् ।
अन्ये व्यवहरन्त्येतान्यूरीकृत्य गृहादिवत् ॥' इति ।

स्कान्दवचनान्न मतानां परस्परविरोधः ॥ २८ ॥

## सत्तर्कदीपावली

इतोऽप्यग्न्यादिशब्दैरभिधेयो विष्णुः मुख्यार्थत्वात् । अगनेता ह्यग्निः । विश्वनरनेतृत्वाद्वैश्वानरः । स च मुख्यतो विष्णुरेव । न हि असति बाधके मुख्यार्थः परित्यज्यते इत्येतत्प्रतिपादकं सूत्रमनूद्य व्याचष्टे **साक्षादित्यादिना** ॥ अर्थान्तराव्यवधानेन विष्णुवाचिनामग्न्यादिशब्दानां ज्वलनादिष्वेव प्रयोगस्तु मुख्यार्थविष्णवपरिज्ञानात् । मुख्यार्थज्ञानिनस्तु अजामिलश्चरमसुते नारायणशब्दवत् अग्न्यादिशब्दान् ज्वलनादिषु व्यवहारार्थं प्रयुञ्जत इत्यर्थः । साक्षादप्यविरोधं जैमिनिरित्यादिमतानुवादः स्वमतैकदेशत्वेन क्रियते न पूर्वपक्षत्वेन अनिराकृतत्वात् । तथाहि पुराणवचनम् ॥ **व्यासेति** ॥ आकाशवद्व्याप्तस्य प्रकाशमानस्य वेदव्यासस्य मतस्यैकदेशान् स्वस्वमत्या व्यवच्छेद्येदं मदीयमिदं मदीयमित्यन्ये जैमिन्यादयो व्यवहरन्ति । यथा गृहमठाद्याकाशप्रदेशानवच्छिद्य अयं मदीयप्रदेशोऽयं मदीयप्रदेश इति जना व्यवहरन्ति इत्यर्थः ।

## तत्त्वप्रदीपिका

सर्वशब्दानां ब्रह्मवाचकत्वे किमर्थमन्यत्र व्यवहरन्तीत्यत आह– ॐ साक्षादप्यविरोधं जैमिनिः ॐ । नाग्निरिन्द्र इत्यादिशब्दा अग्न्यादिमुख्यवाचकाः । किन्तु ब्रह्मण एव । तथाऽपि साक्षादेवान्यत्र योगाभावेन ब्रह्मणि सम्यग्योगेन ब्रह्मवाचकैरपि तैर्विद्वांसो हानादिव्यवहारार्थमन्यत्राग्न्यादौ व्यवहरन्ति, अविद्वांसस्त्वनभिज्ञानाद्व्यवहारार्थं चेत्यभ्युपगमे विरोधाभावं जैमिनिर्वक्ति ॥

## तत्त्वप्रकाशिका

ननु अग्न्यादिशब्दानामग्न्यादिवाचित्वाभावे ब्रह्मैकवाचित्वे च प्रसिद्धिविरोधः स्यात् । तस्याः कारणान्तराभावात् । अतः प्रसिद्ध्यन्यथानुपपत्त्याऽन्येषां वाचित्वमित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ **साक्षादिति** ॥ यद्यपि अग्न्यादिशब्दा नाग्न्यादिवाचकाः किन्तु ब्रह्मवाचका एव तथापि न प्रसिद्धिविरोधः । अनन्ययोगेन ब्रह्मवाचकैरपि तैर्ज्ञानिनो हानादिसिद्ध्यर्थमन्यत्राग्न्यादौ व्यवहरन्ति । तदन्ये तु ज्ञानाभावादेवेत्यभ्युपगमात् । एवमभ्युपगमे च प्रसिद्धेरन्यथोपपत्तिसिद्धेर्न तद्विरोध इति जैमिनिराचार्यो वक्तीत्यर्थः । ननु जैमिन्यादिमतानां भगवन्मताविरोधित्वे जैमिन्यादिग्रहणवैयर्थ्याद्विरोधित्वे च कथं विरुद्धराद्धान्तेन परिहार इत्यत आह ॥ **व्यासेति** ॥ जैमिन्यादिमतानां न व्यासमतविरोधस्तथापि तन्मतैकदेशोररीकाराभिप्रायेण जैमिन्यादिग्रहणोपपत्तिरिति भावः । चित्तस्थिताकाशादिति चित्तस्थितज्ञानाख्याकाशात् । बहुवचनं वक्ष्यमाणमतविवक्षया ॥ २८ ॥

## गुर्वर्थदीपिका

हानादिसिद्ध्यर्थमित्यस्य पाकादौ कर्तव्येऽन्यस्य जलादेर्हानम् अग्नेरुपादानम् । एवं तृणादावग्नेर्हानं जलस्योपादानम् । औषधादेरातपपाके कर्तव्ये सत्यग्नेर्हानं सूर्यस्योपादानमित्यादिरूपेण हानादिसिद्ध्यर्थमित्यर्थः । व्यासचित्तस्थिताकाशात् व्यासचित्तस्थितबहुविधज्ञानाख्याऽऽकाशात् गृहादिवत् महाकाशावच्छिन्नगृहाकाशादिवदवच्छिन्नान्येतानि ब्रह्मसूत्रादौ तत्र तत्र कथितानि कानिचित् प्रमेयान्यूररीकृत्य अन्ये जैमिन्याद्या व्यवहरन्तीति स्मृतेर्योजना ।

## भावबोधः

**साक्षादपीति** ॥ सौत्रापिशब्दस्य ब्रह्मवाचकैरपीति सम्बन्धः स्पष्ट इति तथापीत्येव भाष्ये व्याख्यात इत्यभिप्रेत्य टीकायां द्वेधाऽपि योजित इत्यवधेयम् ॥ **बहुवचनमिति** ॥ न मतानामिति बहुवचनमित्यर्थः ।

## भावदीपः

ॐ साक्षादप्यविरोधं जैमिनिः ॐ ॥ **प्रसिद्धीति** ॥ व्यवहारविरोधः स्यादित्यर्थः । काङ्क्षितपूर्त्या भाष्यं व्याचष्टे ॥ **यद्यपीति** ॥ सौत्रसाक्षात्पदार्थोऽनन्ययोगेनेति । वाच्यार्थधीव्यवहितलक्षणादिकं विना मुख्यवृत्त्येत्यर्थः । यद्यपीत्यादिना विवृतं सौत्रापिपदमनुवदति ॥ **ब्रह्मवाचकैरपीति** ॥ ज्ञानिन इति

(भावदीपः)

तदन्य इति च भाष्यशेषोक्तिः । चस्त्ववधारण इति भावः । हानादिसिद्ध्यर्थमग्न्यादौ व्यवहरन्तीत्यनुषङ्गः ॥ **अन्यथेति** ॥ ज्ञानिनां हानादिप्रयोजनोपाधिनाऽन्येषां तु विष्णौ मुख्यत्वाज्ञाने-नेत्यर्थः ॥ **बहुवचनमिति** ॥ मतानामिति अन्ये इति च बहुवचनमित्यर्थः ।

## अभिनवचन्द्रिका

(सू.२८) **नाग्न्यादिवाचका इति** ॥ परममुख्यवृत्त्येति शेषः । **अनन्ययोगेनेति** ॥ अनन्याधीनयोगेन ब्रह्ममात्रवाचकैस्तैः शब्दैः हानादिव्यहारसिध्यर्थं पराधीनप्रवृत्तिनिमित्तयोगेन अग्न्यादौ अग्न्यादि शब्दान् व्यवहरन्ति । अज्ञानिनस्तु परममुख्यवृत्तिज्ञानाभावात् मुख्यवृत्तिविषये अग्न्यादिशब्दान् अग्न्यादिषु व्यवहरन्ति । व्यवहारनिमित्ता च प्रसिद्धिः । ततश्च – तदन्यथानुपपत्त्या नाऽग्न्यादिषु परममुख्यवृत्तिसिद्धिरिति जैमिनिराचार्यो वक्तीति भावः । (१८-सू) **नन्विति** ॥ जैमिन्यादिमतस्य भगवन्मतविरोधित्वे जैमिन्यादिग्रहणवैयर्थ्यात् विरुद्धत्वं वाच्यम्, कथं विरुद्धराद्धान्तेन परिहार इत्यर्थः । **तन्मतैकदेशेति** ॥ व्यासमतैकदेशो जैमिन्यादिभिः स्वीकृत इति ज्ञापनाय जैमिन्यादिग्रहणमिति भावः ।

## वाक्यार्थमुक्तावली

ॐ साक्षादप्यविरोधं जैमिनिः ॐ ॥ नन्वग्न्यादिशब्दानामग्न्यादिवाचकत्वाभाव इति ॥ ननु न सिद्धान्तिनाऽग्न्यादिशब्दानामग्न्यादिवाचित्वाभाव उक्तः । किन्तु विद्याविशेषेऽग्न्यादीनां नावकाश इति । तत्कथमाक्षेपः? मैवम् । सिद्धान्तिना सर्वशब्दानां सर्वत्र च श्रुतानां ब्रह्मण्येव शक्तितात्पर्ये । अन्यथा तत्तत्प्राकरणिकगुणासिद्धेः । अतः सर्वत्रापि भगवानेव वाच्यः । प्रसिद्धिस्तु वक्ष्यमाणरीत्योपपन्ना । यादृशतादृश्या अपि प्रसिद्ध्या विद्याविशेषस्य तत्तत्तात्पर्यकत्वमिति शङ्कायां निरवकाशविष्णुश्रुतिलिङ्गबलात् वैश्वानरादिविद्यासु नावकाशोऽन्येषां वाच्यत्वाभावे प्रसिद्धिविरोधः । प्रसिद्धिशब्दितव्यवहारस्य वाच्यत्वमूलकत्वादिति शङ्कितु इति काऽनुपपत्तिः । यद्यपि सिद्धान्तिनाऽन्यत्रामुख्यवचनवृत्तिरङ्गीकृता । तथापि तत्प्रकटनार्थमेव मुख्यतो वाच्यत्वं नेत्यस्माभिर्विवक्षिते विवक्षामज्ञात्वा वाच्यत्वमेव नेत्युक्तमिति शङ्कोपपत्तिरिति ज्ञेयम् । सूत्रे अपीत्यस्य यद्यपि तथापीत्यर्थः । न देवता भूतं च वैश्वानरः किन्तु तदेवेत्यनुवर्तते । ततश्च यद्यपि देवता भूतं च न वैश्वानराग्न्यादिशब्दवाच्यं किन्तु ब्रह्मैव तथापि साक्षादेवानन्ययोगेनान्यसम्बन्धं विना वाच्यार्थव्यवहितलक्षणादिवृत्यन्तरं विना मुख्यवृत्त्यैव ब्रह्मवाचकानामपि शब्दानाम् अन्यत्र व्यवहाराविरोधं जैमिनिर्मन्यत इति सूत्रार्थः । कथमविरोध

(वाक्यार्थमुक्तावली)

इत्यतो भाष्येऽज्ञव्यवहारस्याज्ञानमूलत्वेन ज्ञानिव्यवहारस्य हानादिसिद्ध्यर्थं सङ्केतितत्वेनोपपत्तेरित्युक्तमित्यभिप्रेत्य व्याचष्टे ॥ **यद्यपीत्यादिना** ॥ **हानादीति** ॥ प्राधान्येन हानं परिवारतयोपादानमित्यर्थः । अथवाऽग्न्यानयनादिप्रवृत्त्यर्थमित्यर्थः । ज्ञानाभावादेवेति विपरीतज्ञानस्याप्युपलक्षणम् । अत एवाज्ञानादिमूलत्वेनेति वक्ष्यते । बहुवचनं मतानामिति बहुवचनम् । व्यासचित्तस्थिताकाशादित्यादेरयमर्थः व्यासचित्तस्थितज्ञानाख्याकाशादवच्छिन्नानि विषयीकृतानि तत्त्वानि तेषु मध्ये कानिचिदेवोररीकृत्य ज्ञात्वाऽन्ये व्यवहरन्ति यथा महाकाशगतानन्तप्रदेशेषु गृहादय एकदेशानेवावच्छिद्य गृहाकाशो मठाकाश इत्यादिव्यवहारहेतवो भवन्ति इति । सत्तर्कदीपावल्यामर्थान्तरमुक्तं प्रमेयमुक्तावल्यामनुसन्धेयम् ।

## तत्त्वसुबोधिनी

**साक्षादपीति** । सौत्रापिशब्दस्य ब्रह्मवाचकैरपीति सम्बन्धः स्पष्ट इति तथापीत्येव भाष्ये समाख्यात इत्यभिप्रेत्य टीकायां द्वेधापि योजित इत्यवधेयम् । **बहुवचनमिति** । न मतानामिति बहुवचनमित्यर्थः ।

## वाक्यार्थमञ्जरी

ॐ साक्षादप्यविरोधं जैमिनिः ॐ ॥ साक्षात् अन्यवाचकत्वत्यागेन ब्रह्मणो वैश्वानरादिशब्दवाच्यत्वेऽप्यन्यत्र व्यवहाराविरोधं जैमिनिराहेत्यर्थः । नाग्न्यादिवाचकाः परममुख्यवृत्त्या । किं ज्ञानिप्रसिद्धिविरोध उताज्ञानिनाम् । आद्य आह ॥ **अनन्ययोगेनेति** ॥ अनन्यवाचकत्वं विनेत्यर्थः । द्वितीये त्वाह ॥ **तदन्यत्वे त्विति** ॥ **न तद्विरोध इति** ॥ ज्ञानिप्रसिद्धेरौपचारिकत्वादज्ञानि-प्रसिद्धेरज्ञानमूलत्वेन तद्विरोधस्याकिञ्चित्करत्वादिति भावः । भाष्ये अवच्छिन्नानि परिच्छिन्नानि ऊरीकृत्य अङ्गीकृत्य गृहादिवत् यथा यथा महागृहवत् परिच्छिन्नान्यवान्तरगृहाणि महानसादिशब्दैर्व्यहीयन्ते तथेत्यर्थः । प्रसिद्धाकाशोक्तेः प्रकृतासङ्गतत्वादाह ॥ **ज्ञानेति** ॥ आकाशवज्ज्ञानस्यापरिच्छिन्नत्वादेवमुक्तिः ॥

## सूत्रभाष्यम्

**॥ ॐ अभिव्यक्तेरित्याश्मरथ्यः ॐ ॥ २९ ॥**

तत्र तत्र प्रसिद्धावप्यग्न्यादिपु ब्रह्मणोऽभिव्यक्तेरग्न्यादिसूक्तनियम इत्याश्मरथ्यः ॥ २९ ॥

## सत्तर्कदीपावली

छान्दोग्यादिवैश्वानरविद्यावदग्न्यादिसूक्तानां विष्णुपरत्वमभ्युपगतं 'विश्वे देवा अनवः सन् अभियानः त्वमग्ने त्वमसि तस्थिवांसम्'। 'न किरिन्द्र त्वदुत्तरो न ज्यायाम् अस्ति वृत्रहन्' इत्यादि विष्णुलिङ्गादेव। सर्वोत्तमत्वादिधर्माणामिन्द्रादिष्वसम्भवात्। एवं सति सर्वं विष्णुसूक्तमेव स्यात्। न त्वग्निसूक्तमिदमिदमिन्द्रसूक्तमित्याशङ्कां परिहरति। **अभिव्यक्तेरित्यादिना**। अग्न्यादिसूक्तेषु मुख्यतो विष्णोः अभिधेयत्वसिद्धावपि अग्न्यादिसूक्तोपास्यमानस्याग्न्यादिषु प्रादुर्भूयमानत्वात् अग्न्यादिष्वनुस्मर्यमाणत्वात् अग्न्यादिसूक्तैरग्न्याद्यधिष्ठित विष्णूपासकस्याग्न्याद्यधिष्ठितविष्णुप्राप्तेरग्न्यादिसूक्तव्यवस्थेत्यर्थः।

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीमद्ब्रह्मसूत्रभाष्यटीकायां पद्मनाभतीर्थभट्टारकविरचितायां सत्तर्कदीपावल्यां प्रथमाध्यायस्य द्वितीयः पादः।

## तत्त्वप्रदीपिका

तर्हि कथमग्निसूक्तमिदमिदं वायुसूक्तमिति नियम इत्यत आह– ॐ अभिव्यक्तेरित्याश्मरथ्यः ॐ॥ तत्र तत्र सूक्ते ब्रह्मण एव वाच्यत्वेन प्रसिद्धावप्यग्न्यादिसूक्तोपासकानामग्न्यादिषु ब्रह्मणोऽभिव्यक्तेरग्न्यादिसूक्तनियम इत्याश्मरथ्यः॥

## तत्त्वप्रकाशिका

ननु लौकिकप्रसिद्धेरज्ञानादिमूलत्वेनान्यथोपपत्तावपि वैदिकाग्न्यादिसूक्तविद्यादिप्रसिद्ध्यन्यथानुपपत्त्याऽग्न्यादीनां वाच्यत्वं स्यात्। तत्राज्ञानादिमूलत्वकल्पनाऽयोगेनान्यथोपपत्त्यभावात्। नापि व्यवहारार्थत्वेनान्यथोपपत्तिरनादित्वादित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे॥ **अभिव्यक्तेरिति**॥ न वैदिकाग्न्यादिसूक्तादिप्रसिद्ध्यन्यथानुपपत्त्याऽन्येषां सूक्तादिप्रतिपाद्यत्वम्। तत्र तत्र सूक्तादौ परब्रह्मण एव प्रतिपाद्यत्वेऽग्न्यादीनामप्रतिपाद्यत्वेऽप्यग्न्यादिसूक्तादिभिर्ब्रह्मोपास्तावग्न्यादिष्वेव स्वेच्छया ब्रह्मणोऽभिव्यक्तिनियमात्तदभिप्रायेण प्रसिद्धेरुपपत्तेरित्याश्मरथ्याचार्यो वक्तीत्यर्थः॥ २९॥

## भावदीपः

ॐ अभिव्यक्तेरित्याश्मरथ्यः ॐ॥ **अज्ञानादीति**॥ अन्यत्र मुख्यत्वभ्रान्तिरादिपदार्थः॥ व्यवहारेति॥ इदं सूक्तमत्रोपादेयं इदमत्र हेयमित्यादिव्यवहारार्थत्वेनेत्यर्थः। तत्र तत्र प्रसिद्धावपीत्युक्तिलब्धमाह॥ **वैदिकेति**॥ तत्र तत्रेत्यादिभाष्यस्योत्तरवाक्येन साक्षादन्वयायापिपदसमुच्चयं

(भावदीपः)
वदन्नर्थमाह ॥ तत्र तत्रेति ॥ कर्माधीनत्वं वा अन्यत्राभिव्यक्तावशक्तत्वं वा निराह ॥ स्वेच्छयेति ॥ वक्तीति पदमनुवृत्त्यान्वयमाह ॥ वक्तीत्यर्थ इति ॥

## अभिनवचन्द्रिका

(सू.२९) **वाच्यत्वं स्यादिति** ॥ परममुख्यवृत्त्येति शेषः । वैदिकप्रसिद्धिमूलव्यवहारस्याऽज्ञानादि-मूलत्वेनैवोपपत्तेः न व्यवहारमूलप्रसिध्द्यन्यथानुपपत्त्या अग्न्यादीनां परममुख्यया वृत्त्या वाच्यत्वसिद्धिरित्यत आह– **तत्रेति** ॥ यद्यपि – अज्ञानादिमूलकत्वकल्पनायोगादिति वक्तव्यं, तथापि अग्न्यादिशब्दानां भगवन्निवृत्त्यज्ञानमात्रं नाग्न्यादौ व्यवहारे मूलम्, किंतु अग्न्यादिनिष्ठवृत्तिज्ञानसहितमेव व्यवहारे मूलमिति द्योतनाय अज्ञानादीत्यादिशब्दः । 'अभिव्यक्तेरित्याश्मरथ्य' इति सूत्रे, 'तत्र तत्रे'ति भाष्ये च, साध्यानुक्तेर्न्यूनतापरिहाराय वाक्यशेषमाह – **न वैदिकेति** ॥ भाष्यं व्याचष्टे – तत्र **तत्रेति** ॥ 'प्रसिद्धावपी'त्यपिशब्दस्य अपि प्रसिद्धाविति क्रमव्यत्ययमभिप्रेत्य 'अपिशब्दार्थं माह' – **अग्न्यादिसूक्तादिभिरिति** ॥ उपास्तावित्यन्तं प्रसिद्धावित्यस्य व्याख्यानं द्रष्टव्यम् । अनेन – 'तत्र तत्रे'ति भाष्यस्य 'तत्र=सूक्तादौ, अपि=यद्यपि, अग्न्यादीनामप्रतिपाद्यत्वम्; तथापिप्रसिद्धौ=विद्योक्त-प्रकारेण ब्रह्मोपास्तौ, स्वेच्छया अग्न्यादिषु ब्रह्मणोऽभिव्यक्तेः, अग्न्यादिसूक्तनियमः उपपन्नः । ततश्च – तदन्यथानुपपत्त्या नाग्न्यादीनां सूक्तप्रतिपाद्यत्वं मन्तव्यम् इत्याश्मरथ्याचार्यो मन्यत इति योजनोक्ता भवति ।

## वाक्यार्थमुक्तावली

ॐ अभिव्यक्तेरित्याश्मरथ्यः ॐ ॥ **वैदिकाग्न्यादिसूक्तेति** ॥ अग्न्यादेरग्न्यादिपदवाच्यत्वाभावे विष्णोरेव वाच्यत्वे सर्वस्यापि विष्णुसूक्तत्वेन अग्निसूक्तमिदं वायुसूक्तमिदं वैश्वानरविद्येयं प्राणविद्येति च वैदिकसूक्तादिव्यवहारो न स्यात् । वैदिकव्यवहारस्य वाच्यार्थाज्ञानमिथ्याज्ञानमूलकत्वेनान्यथो-पपत्त्यायोगादिति भावः ॥ **नापि व्यवहारार्थत्वेनेति** ॥ यथाग्निर्वायुरित्यादिज्ञानिव्यवहारस्य देवता-भूतविषयहानादिप्रवृत्त्यर्थं सङ्केतितत्वेन वाच्यत्वं विनाप्युपपत्तिरित्युक्तम् । न तथा वैदिकसूक्तादिव्यवहारस्य हानादिव्यवहारार्थत्वेन सङ्केतितत्वेनोपपत्तिर्वक्तुं युक्ता । सूक्तादिव्यवहारस्यानादित्वेनेदंप्रथमताभावेन सङ्केतायोगात् । सूक्तादिव्यवहारस्य सङ्केतं विनापि केवलं शब्दसङ्केतमात्रेण हानाद्युपपत्तेश्चेति भावः । अत्र सूत्रे साक्षादपीत्यनुवर्तत इति भावेन भाष्ये तत्र तत्र प्रसिद्धावपीत्युक्तम् । तद्व्याचष्टे ॥ तत्र

(वाक्यार्थमुक्तावली)

**तत्रेति** ॥ अर्थात्यंशं प्रकारान्तरेण व्याचष्टे ॥ **अग्न्यादीनामिति** ॥ अर्भात्यस्यार्थः स्वेच्छयेति ॥ अविरोध इति चानुवर्तत इति भावेन भाष्येऽग्न्यादिसूक्तनियम इत्युक्तम् । ततश्च तत्र तत्र अग्निवाय्वादिसूक्तादौ साक्षात् मुख्यतो ब्रह्मण एव प्रतिपाद्यत्वेऽपि अग्न्यादिसूक्तादिभिः ब्रह्मोपासनौ अग्न्यादिष्वेवाभिव्यक्तो भवानीति स्वसङ्कल्पवशेनाग्न्यादिष्वेव ब्रह्मणोऽभिव्यक्तिनियमात् तदभिप्रायेण प्रसिद्धेः इदमग्निसूक्तमिदं वायुसूक्तमिति नियमाविरोध इति आश्मरथ्याचार्यः इति सूत्रार्थः ।

## तत्त्वसुबोधिनी

ननु वैदिकाग्न्यादिप्रसिद्धेरज्ञानमूलकत्वेनान्यथोपपत्तिः किं न स्यादत आह । तत्राज्ञानेति ।

## वाक्यार्थमञ्जरी

**अनादित्वादिति** ॥ वैदिकत्वादेवेति भावः ॥ ॐ अभिव्यक्तेरित्याश्मरथ्यः ॐ ॥ अग्न्यादिसूक्तादिभिः ब्रह्मोपास्तावग्न्यादिष्वेव तस्याभिव्यक्तेरग्न्यादिसूक्तादिनियमः सम्भवतीत्याश्मरथ्यो मन्यत इत्यर्थः । अव्यक्तस्य कथं व्यक्तिरित्यत उक्तम् ॥ **स्वेच्छयेति** ॥ इच्छारूपप्रसादेनेत्यर्थः ॥

## सूत्रभाष्यम्

**॥ ॐ अनुस्मृतेर्बादरिः ॐ ॥ ३० ॥**

तत्र तत्रोक्तस्य विष्णोरग्न्यादिष्वनुस्मर्यमाणत्वात्तन्नियम इति बादरिः ॥ ३० ॥

## तत्त्वप्रदीपिका

**ॐ अनुस्मृतेर्बादरिः ॐ** ॥ तत्र तत्राग्न्यादिसूक्तेपूक्तस्य विष्णोरग्न्यादिषु तत्तदन्तर्यामितयाऽनुस्मर्यमाणत्वात्सूक्तनियम इति बादरिः बादरायणात्मजः शुक इत्यर्थः ॥

## तत्त्वप्रकाशिका

प्रकारान्तरेण सूक्तादिनियमस्यान्यथोपपत्तिं वदत्सूत्रमुपन्यस्य व्याचष्टे ॥ **अनुस्मृतेरिति** ॥ विष्णोरेव अग्न्यादिविद्याप्रतिपाद्यत्वेऽपि तस्य तत्तत्सूक्ताद्युपासकैरग्न्यादिष्वेव प्रतिपत्तव्यत्वाभिप्रायेणाग्न्यादिसूक्तादिनियमोपपत्तेर्न तदन्यथानुपपत्त्याऽन्येषां वाच्यत्वं वाच्यमिति बादरिराचार्यो वक्तीत्यर्थः ॥ ३० ॥

## भावदीपः

ॐ अनुस्मृतेर्बादरिः ॐ ॥ तत्र तत्रोक्तस्य विष्णोरित्यस्यार्थः ॥ **विष्णोरेवेति** ॥ अग्न्यादीनाम-प्रतिपाद्यत्वेऽपीत्येवार्थः ॥ ३० ॥

## वाक्यार्थमुक्तावली

ॐ अनुस्मृतेर्बादरिः ॐ ॥ अत्रापि साक्षादप्यविरोध इत्यनुवर्तते । पूर्वसूत्रादितिशब्दश्च इति भावेन सूत्रभाष्यार्थमाह ॥ **विष्णोरेवेति** ॥ **प्रतिपत्तव्यतयेति** ॥ अन्तर्यामित्वेन प्रतिपत्तव्यतयेत्यर्थः । तदुक्तं तत्त्वप्रदीपे । अत्राग्न्यादिसूक्तेषूक्तस्य विष्णोरग्न्यादिष्वन्तर्यामितया अनुस्मर्यमाणत्वात् सूक्तनियम इति बादरिर्बादरात्मजः शुक इत्यर्थः ।

## तत्त्वसुबोधिनी

**तस्येति** ॥ विष्णोरित्यर्थः ।

## वाक्यार्थमञ्जरी

ॐ अनुस्मृतेर्बादरिः ॐ ॥ तत्तत्सूक्ताद्युपासकैरग्न्यादिष्वेव ब्रह्मणोऽनुस्मृतेर्ध्यातत्वात्तत्तत्सूक्तादि-व्यवस्थेति बादरिर्मन्यत इत्यर्थः । **प्रतिपत्तव्येति** ॥ ध्यातव्येत्यर्थः ॥

## सूत्रभाष्यम्

**॥ ॐ सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति ॐ ॥ ३१ ॥**

**साक्षादप्यविरोधं वदन् जैमिनिः सूक्तादिनियममग्न्यादिसम्प्राप्त्या मन्यते । 'तं यथा यथोपासते तदेव भवति' इति दर्शयति ॥ ३१ ॥**

## तत्त्वप्रदीपिका

**ॐ सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति ॐ । साक्षात्परममुख्यतया ब्रह्मवाचकत्वेऽपीतरत्र व्यवहारे प्रयोजनं तत्र व्यवहाराभावे केषाञ्चिद्धेतुं च वदन् जैमिनिस्सूक्तमन्त्रादिनियममग्न्यादिसूक्तादिभिर्भगव-दुपासकानामग्न्यादि सम्प्राप्त्या मन्यते । तदेव भवति तथैव भवति, यत्प्रकारेणोपास्ते तत्प्रकारेण भवति । अतोऽग्न्यादावुपासकोऽग्न्यादौ सम्पद्यते ॥ ३१ ॥**

## तत्त्वप्रकाशिका

**रीत्यन्तरेण सूक्तादिनियमस्यान्यथोपपत्तिं कथयत्सूत्रमुपन्यस्य व्याचष्टे ॥ सम्पत्तेरिति ॥** अग्न्यादि-सूक्तादिषु परब्रह्मण एव प्रतिपाद्यत्वेऽप्यग्न्यादिसूक्तादिभिरग्न्यादौ भगवदुपास्तावग्न्यादिप्राप्त्यभिप्रायेण सूक्तादिनियमोपपत्तेर्न तदन्यथानुपपत्त्यांऽन्येषां वाच्यत्वं मन्तव्यमिति जैमिनिराचार्यो मन्यत इत्यर्थः । जैमिनिमतं किमर्थं पुनरुच्यते इति मन्दाशङ्कानिवृत्त्यर्थं लौकिकव्यवहारे साक्षाद्ब्रह्मवाचकत्वेऽपि शब्दानामविरोधं वदन् जैमिनिः सूक्तादिव्यवहारस्याग्न्यादिप्राप्त्याऽन्यथोपपत्तिं वर्णयतीत्युक्तम् । नन्वग्न्यादिषु भगवदुपास्तावग्न्यादिप्राप्तिर्भवतीत्येतत् कुत इत्यतः सूत्रसूचितां श्रुतिमुदाहरति ॥ **तमिति ॥** तदेव भवति **प्राप्नुवन्ति** । अत्र व्यवहारस्योपचरितत्वाङ्गीकारे प्रागुक्तैवानुपपत्तिः ॥ ३१ ॥

## गुर्वर्थदीपिका

अग्नावभिव्यक्तिपक्षेऽग्नावनुस्मरणपक्षेऽग्निलोकप्राप्तिपक्षे च अग्निसम्बन्धेनैवाग्निसूक्तत्वस्य पर्यवसितत्वात् शीतलजलसम्बन्धेन घटशैत्यव्यवहारवदग्न्यादिपदेन विष्णुव्यवहारस्योपचरितत्वमिति न मन्तव्यम् । उक्तविधया निरवकाशविष्णुविषयकबहुतरश्रुतिलिङ्गसद्भावेन तस्यैव मुख्यत्वात् । अग्न्यादिसन्निधानं तु स्वेच्छयैव न तु स्वस्याग्निसूक्तप्रतिपाद्यत्वनिर्वाहाय । अगं गमनासमर्थं जगन्नयतीति व्युत्पत्त्या अग्निसम्बन्धाभावेऽप्यग्निपदवाच्यत्वेनैव तत्सूक्तप्रतिपाद्यत्वोपपत्तेरिति भावेनाह **अत्र व्यवहारस्येति ॥** अत्र विष्णौ व्यवहारस्य अग्न्यादिपदव्यवहारस्य ॥

**इति श्रीमद्वादिराजतीर्थविरचितायां तत्त्वप्रकाशिकाटीकायां**
**गुर्वर्थदीपिकायां प्रथमाध्यायस्य द्वितीयः पादः ॥**

## भावबोधः

ननु भाष्ये साक्षादप्यविरोधं वदन् इति किमर्थमुक्तमित्यत आह ॥ **मन्दाशङ्कानिवृत्त्यर्थमिति ॥** सम्पत्तेरिति शब्दार्थज्ञानवतामुक्तशङ्कानुदयादिति भावः । भवति प्राप्नुवन्तीति । उपासत इत्युक्तत्वात् प्राप्नुवन्तीति बहुवचनोक्तिः ॥

ननु साक्षादपीति सूत्रे लौकिकव्यवहारस्योपचरितत्वमङ्गीकृत्याग्न्यादिशब्दानां परमात्मवाचकत्वं समर्थितम् । तथा सूत्रव्यवहारस्याप्युपचरितत्वमङ्गीकृत्य सूत्राणां विष्णुपरत्वं व्यवस्थाप्यताम् । किमर्थमेतैः सूत्रैः सूक्तादिव्यवहारस्य मुख्यत्वसमर्थनमित्यत आह– **अत्र व्यवहारस्येति ॥** अत्र सूक्तादिविषय

(भावबोधः)

इत्यर्थः । प्रागुक्तैवानुपपत्तिः । नापि व्यवहारार्थत्वेनान्यथोपपत्तिरनादित्वादिति । प्रागनुपपत्तिरुक्तैव । न पुनर्वक्तव्येत्यर्थः ।

## भावदीपः

ॐ सम्पत्तेरिति जैमिनिः ॐ ॥ तत्र तत्रोक्तस्य विष्णोरित्येतदनुवृत्त्यार्थमाह ॥ **अग्न्यादीति ॥ परब्रह्मण एवेति** ॥ अग्न्यादीनामप्रतिपाद्यत्वेऽपीत्यर्थतयाऽवधारणोक्तिः । अर्थभेदस्य स्पष्टत्वान्मन्दाशङ्केत्युक्तम् ॥ **प्राप्नुवन्तीति** ॥ भूप्राप्ताविति धातोः परस्मैपदमेकवचनं च छान्दसमिति भावः । ननु मञ्चक्रोशनमिति व्यवहारस्य क्रोशनवत्पुरुषसम्बन्धादुपचरितत्वमिव अग्निसूक्तमित्यादिव्यवहारस्य सूक्तवत्पुरुषाभिव्यक्त्यनुस्मृतिसम्पत्यधिष्ठानत्वादुपचरितत्वमिव अग्निसूक्तमित्यादिव्यवहारस्य सूक्तवत्पुरुषाभिव्यक्त्यनुस्मृतिसम्पत्यधिष्ठानत्वादुपचरितत्वमुक्तं तदयुक्तं निर्बीजत्वात् । अग्न्यादिप्रतिपादकत्वरूपमुख्यार्थेऽनुपपत्त्यभावादित्यत आह ॥ **अत्रेति** ॥ तथाहि वामनशब्दादिरूपनिरवकाशश्रुत्यादेरन्यत्रानुपपत्त्या अन्यत्यागेन विष्णुमेवोपेत्याङ्गुष्ठमात्रत्वमङ्गुष्ठपरिमितहृदयाकाशे स्थितत्वेन हेतुनोपचरितमिति हृद्यपेक्षया तु मनुष्याधिकारत्वादित्यत्र वक्ष्यते तथा तत्र तत्र सूक्तेषु अग्न्यादेरेव प्रतिपाद्यत्वे निरवकाशविष्णुश्रुतिलिङ्गादेः सर्वनामा सर्वकर्मेत्यादिश्रुत्यादेश्चानुपपत्तिरेव सूक्तस्य विष्णुपरत्वं मुख्यमुपेत्यव्यवहारस्योपचरितत्वाङ्गीकारे बीजमित्यर्थः । यत्तु ऋग्भाष्ये ''पृथग्रूपाणि विष्णोस्तु देवतान्तरगाणि च । अग्न्यादिसूक्तवाच्यानि नाम्ना सूक्तभिधा भवेत्'' इत्यग्न्यादिशब्दयोगः सूक्तादिव्यवस्थापक इत्युक्तम् । तत्तु सौरसावित्रविष्णुवामनादिसूक्तव्यवस्थार्थमपीति ज्ञेयम् ॥ ३१ ॥

## अभिनवचन्द्रिका

ननु – किमग्न्यादीनामग्न्यादिशब्दवाच्यत्वमभ्युपगम्य, विष्णौ परममुख्यवृत्त्युपपादनप्रयासेन विष्णोरेव वाच्यत्वमङ्गीकृत्य, लोके शब्दानामुपचार एव किं नाङ्गीक्रियते इत्यत आह – (सू.३१) अत्र **व्यवहारस्येति** ॥ लोके व्यवहारमत्र उपचरितत्वाङ्गीकारे प्रागुक्तैवाऽनुपपत्तिः । विष्णोरशब्दत्वाङ्गीकारे 'ईक्षतेर्नाशब्द'मित्यत्र याऽनुपपत्तिरुक्ता सैवेत्यर्थः ।

## वाक्यार्थमुक्तावली

ॐ सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति ॐ ॥ अत्रापि साक्षादप्यविरोध इत्यनुवर्तते इति

(वाक्यार्थमुक्तावली)

भावेन व्याचष्टे ॥ **अग्न्यादीति** ॥ **मन्दाशङ्केति** ॥ प्राग्जैमिन्याचार्येण अग्निमानयेत्याद्यज्ञव्यवहारस्य वाच्यत्वं विनाप्यनभिज्ञानमूलत्वेन ज्ञानिव्यवहारस्य हानादिप्रवृत्त्यर्थं सङ्केतमूलत्वेन गतिरुक्ता । इह तु सूक्तव्यवस्थाया गतिरुच्यत इति स्पष्टत्वाद्भेदस्येति भावः ॥ **लौकिकव्यवहार इति** ॥ अग्निमानयेत्यादि ज्ञानिलोकसम्बन्धिव्यवहार इत्यर्थः ॥ **तदेव भवतीति** ॥ तं यथा यत्प्रकारेण यदधिष्ठानकत्वेन यद्गुणवैशिष्ट्येनोपासते तदेव सामान्ये नपुंसकम् । तदधिष्ठानं तादृशगुणादिकं वा भवति । व्यत्ययो बहुलमिति वचनात् भवन्ति प्राप्नुवन्ति । भू प्राप्ताविति धातोरिति भावः । ननु सूक्तादिवैदिकव्यवहारस्याभिव्यक्त्यादिनिमित्तत्वेनौपचारिकत्वं कुतो वाङ्गीकार्यम् । साक्षादग्न्यादिप्रतिपादकत्वेन मुख्यता किं न स्यात् उपचारबीजमुख्यार्थानुपपत्त्यभावादित्यत आह ॥ **अत्र व्यवहारस्येति** ॥ सूक्तादिव्यवहारस्याभिव्यक्त्यादिनिमित्तकत्वेनोपचरितत्वाङ्गीकारे हेतुभूता मुख्यार्थानुपपत्तिः प्रागेवोक्ता । सर्वनामेत्यादिश्रुतिविरोधस्यात्मशब्दादेर्निरवकाशत्वस्योक्तत्वादिति भावः । भावबोधे तु ननु साक्षादपीति सूत्रे लौकिकव्यवहारस्योपचरितत्वमङ्गीकृत्य सूक्तानां विष्णुपरत्वं व्यवस्थाप्यताम् । किमर्थमेतैः सूत्रैः सूक्तादिव्यवहारस्य मुख्यत्वसमर्थनमित्यत आह ॥ **अत्र व्यवहारस्येति** ॥ अत्र सूक्तादिव्यवहारविषये इत्यर्थः ॥ **प्रागुक्तैवानुपपत्तिः** ॥ नापि व्यवहारार्थत्वेनान्यथोपपत्तिः अनादित्वादिति प्रागनुपपत्तिरुक्तैव न पुनर्वक्तव्येत्यर्थ इति ।

## तत्त्वसुबोधिनी

ननु भाष्ये साक्षादप्यविरोधं वदन् इति किमर्थमुक्तमित्यत आह ॥ **मन्दाशङ्कानिवृत्त्यर्थमिति** ॥ संपत्तेरिति शब्दार्थं जानतामुक्तशङ्कानुदयादिति भावः । शब्दानां साक्षादनन्ययोगेन ब्रह्मवाचकत्वेऽपि लौकिकव्यवहारे अविरोधं वदन् जैमिनिरित्यन्वयः । भवति प्राप्नुवन्तीति । उपासत इत्युक्तत्वात् प्राप्नुवन्तीति बहुवचनोक्तिः । ननु अग्न्यादिसूक्तव्यवहारस्याग्न्यादौ मुख्यत्वमेव किं नाङ्गीक्रियते इत्यत आह ॥ **अत्र व्यवहारस्येति** ॥ प्रागुक्तैवानुपपत्तिरिति वैदिकस्याग्न्यादिसूक्तादिव्यवहारस्याग्न्यादि प्रतिपादकत्वेन उपचरितत्वाङ्गीकारे हेतुरिति अर्थः । ननु साक्षादपीति सूत्रे लौकिकव्यवहारस्य उपचरितत्वमङ्गीकृत्य अग्न्यादिशब्दानां परमात्मवाचकत्वं समर्थितम् । तथा सूक्तादिव्यवहारस्याप्युपचरितत्वमङ्गीकृत्य सूक्तानां विष्णुपरत्वं व्यवस्थाप्यताम् । किमर्थं एतैः सूत्रैः सूक्तादिव्यवहारस्य मुख्यत्वसमर्थनमित्यत आह ॥ **अत्र व्यवहारस्येति** ॥ अत्र सूक्तादिनियम इत्यर्थः । प्रागुक्तैवानुपपत्तिः नापि व्यवहारार्थत्वेनान्यथोपपत्तिरनादित्वादिति प्रागनुपपत्तिरुक्तैव न पुनर्वक्तव्येत्यर्थः इति भावबोधे ।

## वाक्यार्थविवरणम्

**शङ्केति ॥** ब्रह्मोपासकस्याग्न्यादिप्राप्तिः कथमिति शङ्का इत्यर्थः । ननु विश्वनरशब्दात् 'तस्येदमिति' अणप्रत्यये 'अचो ञ्णिति' इति आदिवृद्धौ 'वैश्वनर' इति चेत् । उच्यते । विश्वस्य वसुराटोः मित्रेचर्षेनरे संज्ञायाम् विश्वशब्दस्य वसुराट्शब्दयोः परतः मित्रशब्दपरे नरशब्दे च परे दीर्घःस्यात् इति विश्वावसुः विश्वाराट् विश्वानरः विश्वामित्रः इत्याद्युदाहरणम् एवं च प्रकृते विश्वानरशब्दादेवाणप्रत्यये णित्वादिवृद्धौ वैश्वानर इति भवतीति द्रष्टव्यम् ॥ १,२,७ ॥

**इति श्रीनिवासतीर्थ विरचिततत्त्वप्रकाशिकावाक्यार्थविवरणे**
**प्रथमाध्यायस्य द्वितीयः पादः समाप्तः ॥**

## वाक्यार्थमञ्जरी

ॐ सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति ॐ ॥ अग्न्यादिसूक्ताद्युपासकानामग्न्यादिप्राप्तेर्निमित्तात्तत्सूक्तादिनियम इति जैमिनिर्मन्यते । तदुपास्तौ तत्प्राप्तिः कुत इत्यत उक्तम् ॥ **तथा हि दर्शयतीति ॥** हि यस्मात्तं यथा यथेति श्रुतिर्जैमिनेर्मतं यथा तथा दर्शयतीत्यर्थः ॥ **मन्दाशङ्केति ॥** सम्पत्तेरिति शब्दार्थं जानताम् उक्तशङ्कानुदयादिति भावः ॥ **उपासत इति ॥** बहुवचनात्प्राप्नुवन्तीति बहुवचनोक्तिः ननु यथा साक्षादप्यविरोधं जैमिनिरिति सूत्रे लौकिकव्यवहारस्यौपचारिकत्वमङ्गीकृत्य अग्न्यादिशब्दानां भगवद्वाचकत्वं समर्थितम् । तथा सूक्तादिव्यवहारस्याप्युपचरितत्वमङ्गीकृत्य सूक्तानां विष्णुपरत्वं व्यवस्थाप्यतां किमनेनैतैः सूत्रैः सूक्तादिव्यवहारस्य मुख्यार्थत्वसमर्थनेनेत्यत आह ॥ **अत्र व्यवहारस्येति ॥** सूक्तादिविषये इत्यर्थः । प्रागुक्तैवानुपपत्तिः नापि व्यवहारार्थत्वेनान्यथोपपत्तिरनादित्वादिति प्रागुपपत्तिरुक्तैव न पुनर्वक्तव्येत्यर्थः ।

## विवृतिः

ननु साक्षादपीति सूत्रे लौकिकव्यवहारस्योपचरितत्वमङ्गीकृत्याग्न्यादिशब्दानां परमात्मवाचकत्वं समर्थितं तथा सूक्तादिव्यवहारस्याप्युपचरितत्वमङ्गीकृत्य सूक्तानां विष्णुपरत्वं व्यवस्थाप्यतां किमर्थमेतैः सूत्रैः सूक्तादिव्यवहास्य मुख्यत्वसमर्थनमित्यत आह ॥ **अत्र व्यवहारस्येति ॥** अत्र सूक्तादिविषय इत्यर्थः । प्रागुक्तैवानुपपत्तिः नापि व्यवहारार्थत्वेनान्यथोपपत्तिः । अनादित्वादिति प्रागुक्तानुपपत्तिरुक्तैव न पुनर्वक्तव्येत्यर्थ इति भावबोधे ।

## सूत्रभाष्यम्

न ह्यन्योपासकोऽन्यं प्राप्नुत इति युज्यत इत्यत आह–

॥ ॐ आमनन्ति चैनमस्मिन् ॐ ॥ ३२ ॥

एनं विष्णुमस्मिन्नग्न्यादावामनन्ति । 'योऽग्नौ तिष्ठन्' (बृ.उ.५.७.५) 'य एष एतस्मिन्नग्नौ तेजोमयोऽमृतमयः पुरुष' (बृ.उ.४-५-३) इत्यादिना ॥ ३२ ॥ इति वैश्वानराधिकरणम् ॥ ७ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रभाष्ये
प्रथमाध्यायस्य द्वितीयः पादः ॥

## तत्त्वप्रदीपिका

तामेव भगवतस्तत्र तत्र स्थितिं स्पष्टयत्यतिशङ्कां परिहरन्– ॐ आमनन्ति चैनमस्मिन् ॐ ॥ नैकत्रैवामनन्ति वाजसनेयिनः । चकारादन्यत्र च ''यश्चायमस्मिन्'' इत्यादौ । अन्ये चाऽमनन्ति ''य एष एतस्मिन्'' इत्यादौ । अन्ये चाऽमनन्ति ''एतमस्यामेतं दिवि'' इत्यादि ॥ अन्ये च ''तत्सृष्ट्वा तदेवानुप्राविशत्'' इत्यादि ॥ स्मरन्ति च ''यच्चन्द्रमसि यच्चाग्नौ'' इत्यादि ॥

इति तत्वप्रदीपिकायां प्रथमाध्यायस्य द्वितीयः पादः ॥

## तत्त्वप्रकाशिका

यदुक्तम् अग्न्यादिसूक्तादिभिर्ब्रह्मोपासकस्याग्न्यादिप्राप्तिरिति तच्छुत्युक्तमपि न युक्तम् । 'मद्भक्ता यान्ति मामपि' इत्यादेरन्योपासकस्यान्यप्राप्तेरयोगात् । 'श्रुतोपनिपत्कगत्यभिधानाच्च' इत्यादौ तदनभ्युपगमाच्चेति भावेनाऽऽशङ्क्य तत्परिहाराय सूत्रमवतार्य व्यचष्टे ॥ न हीति ॥ न विष्णूपासकस्याग्न्यादिप्राप्त्युक्तिरयुक्ता । अग्न्यादिप्राप्तिपदेन तदन्तर्गतभगवत्प्राप्तेर्विवक्षितत्वात् । यतोऽग्न्यादावपि विष्णुमामनन्ति श्रुतय इति भावः । चशब्दः शङ्काव्यावर्तकः । अतोऽयं वैश्वानरो विष्णुरेवेति तस्यैव सर्वगतत्वमिति सिद्धम् ॥ ३२ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्रभाष्यस्य
टीकायां जयतीर्थमुनिविरचितायां श्रीमत्तत्वप्रकाशिकायां
प्रथमाध्यायस्य द्वितीयः पादः ॥

## भावबोधः

तदनभ्युपगमाच्चेति भावेनेति । न ह्यन्यविषयोपासनयाऽन्यगतिर्युक्तेति यत्तत्र सिद्धान्तयुक्तित्वेनोक्तं तस्यैव न ह्यन्योपासकोऽन्यं प्राप्नुत इत्युपन्यासादिति भावः ।

अत्राद्ये– श्रुतिरूपस्वपक्षसाधकोक्तिः । द्वितीये– समाख्यारूपतदुक्तिः । तृतीये– वैश्वानरशब्दसामानाधिकरण्येनान्तरङ्गाग्निश्रुत्यादिबाधकोद्धाराय हेतूक्ता तेषां सावकाशत्वोक्तिः । तत्राग्निश्रुत्यादीनां दृष्ट्युपदेशादित्यनेन सावकाशत्वमुक्त्वा तत्कल्पकात्मशब्दस्यासम्भवादिति निरवकाशत्वमुक्त्वा तस्याप्यमुख्यत्वशङ्कानिरासाय पुरुषविधमिति सावकाशतानर्हपुरुषसूक्तसमाख्योक्ता । चतुर्थे तृतीयसूत्रांशोक्तात्मशब्दनिरवकाशत्वाद्यतिदेशेन परपक्षनिरासः । पञ्चमे सूचीकटाहन्यायेनाग्न्यादिशब्दानां भूतादौ बहिरङ्गलोकप्रसिद्धेर्गत्युक्तिः । षष्ठे मोक्षावश्यकत्वसाधनाय वैदिकाग्न्यादिसूक्तव्यवहारनियमस्य गत्युक्तिः । सप्तमे तदनन्तरमप्यनुवर्तमानसाधनापेक्षया तस्यैव गत्यन्तरोक्तिः । अष्टमे मोक्षरूपफलापेक्षया तस्यैव गत्युक्तिः । नवमे अष्टमोक्तगतिबाधकोद्धार इति सूत्रक्रमः ॥ अत्र–

''एतद्भावाभिधं लिङ्गं क्रियालिङ्गे ततः परम् ।
अन्तर्याम्यन्तरश्चेति क्रियाभावाख्यमुच्यते ॥
अदृश्यत्वाद्यभावाख्यं श्रुतिर्लिङ्गाधिका परा'' ॥

इत्यनुव्याख्याने– ''सर्वगोऽत्ता नियन्ता च दृश्यत्वाद्युज्झितः सदा ।
विश्वजीवान्तरत्वाद्यैर्लिङ्गैः सर्वैर्युतः स हि ॥''

इति सङ्क्षेपे चोक्तरीत्या आद्यमधिकरणं सर्वगतत्वरूपभावाख्यलिङ्गप्रतिपादकमेका पेटिका । द्वितीयतृतीयाधिकरणद्वयमत्तृत्वाख्यक्रियारूपलिङ्गप्रतिपादकतयैका पेटिका । तत्राद्ये सर्वात्तृत्व रूपसामान्यस्य, द्वितीये तद्विशेषकर्मफलभोक्तृत्वस्योक्तिः । चतुर्थपञ्चमाधिकरणद्वयं नियामकतयान्तरावस्थानलक्षणक्रियाभावाख्यलिङ्गप्रतिपादकतया एका पेटिका । तत्राद्ये– नियामकतया चक्षुरन्तःस्थत्वोक्तिः । द्वितीये– सर्वसत्तादिनियामकत्वरूपान्तर्यामित्वोक्तिः । षष्ठमधिकरणम्– अदृश्यत्वाद्यभावाख्यलिङ्गप्रतिपादकत्वेनैका पेटिका । सप्तमं– बहुलिङ्गसमन्वयफलकवैश्वानरनाम-समन्वयप्रतिपादकतयैका पेटिकेति द्रष्टव्यम् ॥

इति श्रीमद्रघुवर्यतीर्थपूज्यपादशिष्यरघूत्तमयतिकृते तत्त्वप्रकाशिकाभावबोधे
प्रथमाध्यायस्य द्वितीयः पादः ॥

## भावदीपः

ॐ आमनन्ति चैनमस्मिन् ॐ ॥ तदनभ्युपगमाच्चेति ॥ न ह्यन्यविषयाऽन्यगतिर्युक्तेति कगत्यन्यथानुपपत्त्या एव प्रकरणित्वाभ्युपगमादिति भावः । सौत्रचशब्दार्थमाह ॥ न विष्णिवत्यादिना ॥ उपपादकत्वेन सूत्रखण्डभाष्यं व्याचष्टे ॥ यत इति ॥ आमनन्ति नामनन्ति चेति भ्रान्तिनिरासायाऽऽह ॥ चशब्द इति ॥ यद्वा समुच्चेयाभावाद्व्यर्थोऽयं चशब्द इत्यत आह ॥ चशब्द इति ॥ तत्प्रकारः प्राग्विवृत इति भावः । तत्वप्रदीपे तु नैकत्रैवामनन्ति वाजसनेयिनः । चकारादन्यत्र च यश्चाय-मस्मिन्नित्यादौ अन्ये चामनन्ति एतमस्याम् एतं दिवीत्यादि अन्यत्र तत्सृष्ट्वा तदेवानुप्राविशदित्यादि स्मरन्ति च यच्चन्द्रमसि यच्चाग्नौ इत्यादीत्युक्तम् ॥ अत इति ॥ आत्मशब्दश्रुतिस्मृतिसमाख्या-प्रकरणरूपसाधकभावात् । परकीयश्रुतिलिङ्गविद्याभेदव्यवहारविरोधादिबाधकाभावाच्चेति सर्वसौत्रहेतुभागार्थः । वैश्वानरो विष्णुरिति साध्यभागार्थः । एवेति अत एव न देवता भूतं चेति सूत्रार्थः । वाजसनेयेत्यादि-वाक्यस्याप्यत्र प्रागुक्तत्वात्तत्रत्यस्य विष्णुत्वोपसंहारे तत्र तत्र सर्वगतत्वाभावेन सर्वगतत्वाक्षेपसमाध्य-योगादयमित्युक्तम् । छान्दोग्यस्थ इत्यर्थः । सर्वगतत्वमिति फलोक्तिः । अत्राभिविमानपदोक्तं पूर्वत्र ततमपदोक्तं सर्वगतत्वमित्यर्थः । प्रादेशमात्रत्वं तु सर्वगतस्याप्यङ्गुष्ठमात्रत्वमिव अधिकार्याद्यपेक्षया हृद्यपेक्षया त्वित्यत्र समाहितं भविष्यति । केचित्स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तमित्यादि-स्मृतेरिति भावः । यत्त्वत्र केनचिद्वैश्वानरो भूत्वेत्यत्र वैश्वानराग्र्यभेदादिविकल्पपूर्वं दूषणमुक्तं तन्न । वैश्वानरनामको वैश्वानररूपविशेषो भूत्वेत्यर्थोक्तौ दोषाभावात् । यच्च तृतीये प्रकरणादित्येव वाच्ये असम्भवादित्युक्तिरयुक्तेति तच्च न । प्रकरणस्य निरवकाशत्वोक्त्यर्थत्वात्तथोक्तेः । यच्च पुरुषसूक्तवैश्वानरविद्ययोर्भिन्नार्थत्वेन वैश्वानरस्य पुरुषविधत्वायोग इति । तन्न । टीकायामेव पूर्वं समाधानात् । यदपि शब्दानां ब्रह्मणि समन्वयेऽप्यन्यत्रवृत्तेः सूत्रे प्रतिषिद्धत्वाभावेनान्यत्र व्यवहार-विरोधशङ्कानुदयात्तत्समाधानार्थं साक्षादित्यादिपञ्चसूत्री व्यर्थेत्यादि । तदप्यसारम् । प्रतिनयं तत्त्वित्य-ध्याहारेणान्यत्रवृत्तेः प्रतिषिद्धत्वात् । अतो यथाभाष्यटीकायामुक्त एव सूत्रार्थः समञ्जस इति ॥ ३२ ॥

इति श्रीमद्भाष्यटीकाभावदीपे राघवेन्द्रयतिकृते प्रथमाध्यायस्य द्वितीयः पादः ॥

## अभिनवचन्द्रिका

(सू.३२) **चशब्दः शङ्काव्यावर्तक इति ॥** 'आमनन्ति चे'ति चशब्दः न केवलं 'योऽग्नौ तिष्ठ'न्नित्यादिना अग्न्यादावेनमामनन्ति, अपितु – अग्नौ विष्णुसन्निधानाभावे स्वकार्यादौ प्रवृत्त्युपपत्तेः, तदन्यथानुपपत्तिरूपं प्रमाणान्तरं चास्तीति सूचयन् प्रागुक्तशङ्काव्यावर्तकः । प्रमाणसंप्लवस्य शङ्कानिवर्तत्वात् चशब्दसूचित प्रमाणेन सह सूत्रोपात्तवचनं शङ्कां निवर्तयतीति भावः ।

**पूर्वपक्षस्तु**– नायं वैश्वानरो विष्णुः । साधकशून्यत्वात् । न च सर्वगतत्वलिङ्गात् वैश्वानरो विष्णुरिति वाच्यम् । अन्यत्रप्रसिद्ध वैश्वानरश्रुत्या बाधितत्वात् । न च लिङ्गस्य निरवकाशत्वात् लिङ्गेन श्रुतिबाधः । श्रुतेरपि निरवकाशत्वात् । एवं च वैश्वानरश्रुतेः निर्बाधसाधकशून्यत्वेन अग्नाविष्णोः साधारण्यात्, वैश्वानरोऽग्निरित्यनिश्चयात् विष्णुरित्यनिश्चय एवेति । अतो न वैश्वानरो विष्णुरिति न सर्वगतत्वं तस्येति ।

**सिद्धांतस्तु**– अयं वैश्वानरो विष्णुरेव । 'आत्मानं वैश्वानर'मिति आत्मशब्दात् । 'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रित' (गी.१५) इति स्मृतिसमाख्यानाच्च । ननु – नायं वैश्वानरो विष्णुरिति निश्चयो घटते विष्णुनिश्चायकवत् अग्निनिश्चायकसद्भावात्, 'वैश्वानर आजातमग्नि'मित्यग्निशब्दस्य 'वैश्वानरे तद्धुतं भवति, हृदयं गार्हपत्यो, मनोऽन्वाहार्यपचन, आस्यमावहनीय' इत्यग्निलिङ्गस्य 'येनेदमन्नं पच्यते' इत्यादिना पाचकत्वेनान्तप्रतिष्ठानस्य च श्रवणात्, एतेषां विष्णावनवकाशादिति चेत्, न – 'सर्वनामसर्वकर्मे'त्यादिना महोपनिषदि तत्तन्नामलिङ्गवत्त्वेन दृष्ट्युपदेशात्, 'कोन आत्मा किं ब्रह्मे'(छा.५)ति विष्णोरेवाऽऽरम्भात्, 'चन्द्रमा मनसो जात' (छा.८,५) इत्यादिना वैश्वानरस्य तद्विधत्वाभिधानाच्च । न च – अग्न्यादि श्रुतिलिङ्गसद्भावात् अग्निदेवता, तेजोभूतं वा किं न स्यादिति वाच्यम् । निरवाकाशाऽऽत्मशब्दश्रवणात् । ननु अग्न्यादिशब्दानां ब्रह्मवदग्न्याद्यवाच्यत्वेऽपि अग्न्यादिज्ञानार्थममिज्ञैरन्यत्र व्यवहारात्, अनभिज्ञैस्तु परममुख्यार्थभगवदज्ञानादेव मुख्यार्थ अग्न्यादावेव प्रयोगेण प्रसिध्द्युपपत्तेः । नन्वत्रापि अग्निसूक्त-मित्यादिवैदिकप्रसिध्द्यन्यथानुपपत्त्या अग्न्यादीनां वाच्यत्वं वाच्यमिति चेत्, न – अग्न्यादिसूक्तैरुपासकानां अग्न्यादौ च भगवदभिव्यक्त्या सूक्तनियमसम्भवात् । अथवा – अग्न्यादिसूक्तैरुपासकानामग्न्यादौ विष्णोः स्मर्तत्वात्, सूक्तनियमः । यद्वातत्र सूक्तोपासकानाम् अग्र्यंर्गतभगवत्प्रास्या सूक्तनियमोऽभ्युपगन्तव्यः । अतोऽयं वैश्वानरो विष्णुरेवेति तस्यैव सर्वगतत्वं सिद्धम् (अ.७)

इति श्रीमत्सत्यनिधितीर्थ श्रीमच्चरणाराधक श्रीमत्सत्यनाथयतिविरचितायां तत्वप्रकाशिकाव्याख्याऽभिनवचन्द्रिकायां प्रथमाध्यायस्य द्वितीयः पादः ।

# वाक्यार्थमुक्तावली

ॐ आमनन्ति चैनमस्मिन् ॐ इत्यादौ तदनभ्युपगमाच्चेति ॥ अन्योपासकस्यान्य-प्राप्तेरनभ्युपगमादित्यर्थः । यथोक्तं तद्भाष्ये– न ह्यन्यविद्ययाऽन्यगतिर्युक्तेति ॥ **चशब्द इति ॥** विष्णूपासकस्याग्न्यादिप्राप्तिर्युक्तेति येयमेतत्सूत्रव्यावर्त्याशङ्का तस्या निषेधसमुच्चायक इत्यर्थः । ततश्च एनं विष्णुमस्मिन् देवता भूतं चेति प्रकृतेऽग्न्यादौ यतः श्रुतय आमनन्ति अतः उक्तशङ्का न युक्तेति सूत्रार्थः । अत्राद्यं सूत्रद्वयं स्वपक्षसाधकम् । तत्राप्याद्ये स्वपक्षे श्रुतिरूपसाधकोक्तिः । द्वितीये स्मृतिसमाख्योक्तिः । तृतीये परपक्षे साधकशङ्कायां तेषां तथा दृष्ट्युपदेशादिति सावकाशत्वोक्त्या तदभावोक्तिः । अत एव स्वपक्षे साधकोद्धारश्च । यद्यप्यसम्भवात् पुरुषविधमपीत्युक्तप्रकरणश्रुतिसमाख्ययोः स्वपक्षसाधकत्वात् परपक्षे साधकाभावोक्तेः पूर्वमेव तदुपन्यासः कार्यः । तथापि परोपन्यस्ताग्निश्रुत्यादीनां सावकाशत्वं विष्णुपक्षे निरवकाशप्रकरणादिबलात् कल्प्यते इति भावेन पश्चात्तदुपन्यासः । चतुर्थे अत एवेत्यतिदेशसौकर्यार्थं च । चतुर्थे तु परपक्षेऽप्रसिद्धिलक्षणं साधकमाशङ्क्य तृतीयसूत्रांशोक्तात्मशब्दनिरवकाशत्वाद्यतिदेशेन प्रसिद्धेरपि प्रकृतेऽपवादोक्त्या तन्निरासः । साक्षादपीत्यादिसूत्रपञ्चकेन लौकिकव्यवहारवैदिकसूक्तादिप्रसिद्ध्यन्यथानुपपत्तिं परपक्षे साधकं तद्विरोधं स्वपक्षे साधकमाशङ्क्य निरासः । तत्राद्ये सूचीकटाहन्यायेनाग्न्यादिशब्दानां भूतादौ बहिरङ्गलोकप्रसिद्धेर्गत्युक्तिः । देवतासु भगवतः प्रथममभिव्यक्तिः तदनन्तरमनुस्मृत्याऽपरोक्षः । अव्यक्तस्वभास्यानुस्मरणापरोक्षयोरयोगात् । अनन्तरं सम्पत्तिक्रमविवक्षया षष्ठसप्तमाष्टमसूत्रक्रमः । नवमे त्वष्टमोक्तगतिबाधकोद्धार इति । अत्र पादे भावलिङ्गसमन्वयानन्तरमभावलिङ्गसमन्वयावसर इति भावेन भावलिङ्गसमन्वयपरस्याधिकरणपञ्चकस्य प्राथम्यं तदनन्तरमभावसमन्वयस्य सप्तमस्य पादद्वयशेषत्वात् पादद्वयान्ते निवेशः । अधिकरणपञ्चकेऽपि सत्तापूर्वकत्वात् क्रियायाः सत्तावाचिशब्दसमन्वय आद्यद्वितीय तृतीये क्रियासत्ताख्योभयविधलिङ्गप्रतिपादकत्वाच्चतुर्थपञ्चमयोरेकैकनिरूपणानन्तर्यम् । तत्र क्रमनियामकत्वं तु तत्रैवोक्तमित्यधिकरणक्रमो ज्ञेयः ।

**इति श्रीमद्विठ्ठलाचार्यतनूजेन श्रीमत्तीर्थाचार्यचरणसेविना श्रीनिवासेन रचितायां श्रीमत्तत्त्वप्रकाशिकावाक्यार्थमुक्तावल्यां प्रथमाध्यायस्य द्वितीयः पादः ।**

## तत्त्वबुबोधिनी

तदनभ्युपगमच्चेति भावेनेति । न ह्यन्यविद्यया अन्यगतिर्युक्तेति यत्तत्र सिद्धान्तयुक्तित्वेन उक्तं तस्यैव न हि अन्योपासकोऽन्यं प्राप्नुत इत्युपन्यासादिति भावः । अत्र चाद्ये सूत्रे स्वपक्षे श्रुतिरूप-साधकोक्तिः । द्वितीये समाख्यारूपसाधकोक्तिः । अत्रेति शब्दस्याद्यसूत्रानुषक्तेन विष्णुः वैश्वानरः इत्यनेनान्वयः । तथा च विष्णुः वैश्वानर इति गीतायां स्मर्यमाणं विष्णोः वैश्वानरत्वम् । अत्रापि विष्णुरेव वैश्वानर इत्यस्यानुमापकमिति सूत्राक्षरार्थः । तृतीये वैश्वानरशब्दमात्रविषयासाधारणबाधकभावस्य पुरुषसूक्तसमाख्यायाश्चोक्तिः । चतुर्थे परमतनिरासः । पञ्चमे लौकिकस्य वैदिकस्य चान्यत्र व्यवहारस्य गत्युक्तिः । वाच्यार्थधाव्यवहितैः लक्षणादिकं विना साक्षान्मुख्यवृत्त्या ब्रह्मणः शब्दार्थत्वेऽपि व्यवहारविरोध इति चास्याक्षरार्थः । षष्टसप्तमाष्टमेषु वैदिकाग्न्यादिसूक्तनियमस्य गत्युक्तिः । नवमे अष्टमोक्तगतिबाधकोद्धार इति सूत्रक्रमः । यद्यपि अनुस्मृत्यनन्तरं अभिव्यक्तिः अभिव्यक्त्यनन्तरं सम्पत्तिः तथापि अभिव्यक्त्यनन्तरमपि संपत्तेः प्राक् अनुस्मृतिरपेक्षितेति दर्शयितुमनुस्मृतेः मध्ये उक्तिरिति भावः ।

इति पाण्डुरङ्गी श्रीनिवासाचार्यविरचिततत्त्वप्रकाशिकाविवृतौ
प्रथमाध्यायस्य द्वितीयः पादः समाप्तः ॥

## वाक्यार्थमञ्जरी

अन्तरङ्गानुपपत्तिं चाह ॥ श्रुतेति ॥ तत्र द्वितीयाविद्यापरिज्ञानेन ब्रह्मप्राप्तेरुक्त्या ब्रह्मण एव तद्विद्याविषयत्वं नाग्नेरिति वदताऽन्यज्ञानेनान्यप्राप्तेरनभ्युपगमादित्यर्थः ॥ ॐ आमनन्ति चैनमस्मिन् ॐ ॥ एनं विष्णुम् अस्मिन्नग्नौ योऽग्नौ तिष्ठन्नित्यादिश्रुतय आमनन्ति प्रतिपादयन्तीत्यर्थः । व्यावर्तकः व्यावृत्तिसमुच्चायकः एतदाशङ्कानिरासकसमुचितस्यैवोक्तहेतोः स्वार्थसाधकत्वादिति भावः ॥ ७ ॥

इति श्रीमत्तत्त्वप्रकाशिकावाक्यार्थमञ्जर्यां शर्करायां श्रीनिवासविरचितायां
प्रथमाध्यायस्य द्वितीयः पादः ॥

# विवृतिः

**तदनभ्युपगमाच्चेति भावेनेति** ॥ नह्यन्यविद्ययाऽन्यगतिर्युक्तेति यत्तत्र सिद्धान्तयुक्तित्वेनोक्तं तस्यैव ह्यन्योपासकोऽन्यं प्राप्नुत इत्युपन्यासादिति भावः । अत्र चाद्ये सूत्रे स्वपक्षे श्रुतिरूपसाधकोक्तिः । द्वितीये समाख्यारूपसाधकोक्तिः । अत्रेतिशब्दस्याद्यसूत्रानुषक्तेन विष्णुर्वैश्वानर इत्यनेनान्वयः ॥ तथा च विष्णुर्वैश्वानर इति गीतायां स्मर्यमाणं विष्णोर्वैश्वानरत्वं अत्रापि विष्णुर्वैश्वानर इत्यस्यानुमापकमिति सूत्राक्षरार्थः । तृतीये वैश्वानरशब्दमात्रविषयसाधारणबाधकाभावस्य पुरुषसूक्तसमाख्यायाश्चोक्तिः । चतुर्थे परमतनिरासः । पञ्चमे लौकिकस्य वैदिकस्य चान्यत्र व्यवहारस्य गत्युक्तिः । वाच्यार्थधीव्यवहित-लक्षणादिकं विना साक्षान्मुख्यवृत्त्या ब्रह्मणः शब्दार्थत्वेऽपि व्यवहारविरोध इति चास्याक्षरार्थः । षष्ठसप्तमाष्टमेषु वैदिकाग्न्यादिसूक्तनियमस्य गत्युक्तिः । नवमे अष्टमोक्तगतिबाधकोद्धार इति सूत्रक्रमः । यद्यप्यनुस्मृत्यनन्तरमभिव्यक्तिरभिव्यक्त्यनन्तरं सम्पत्तिः तथापि अभिव्यक्त्यनन्तरमपि सम्पत्तेः प्रागनुस्मृतिरपेक्षितेति दर्शयितुमनुस्मृतेर्मध्ये युक्तिरिति भावः ॥ इति पाण्डुरङ्गि केशवाचार्यविरचितश्रीतत्व-प्रकाशिकाविवृतौ प्रथमाध्यायस्य द्वितीयश्चरणः ।

॥ इति वैश्वानराधिकरणम् ॥

## ॥ इति प्रथमाध्यायस्य द्वितीयः पादः ॥

## ॥ ब्रह्मसूत्रभाष्योदाहृत प्रमाणवचनानि ॥

अल्पाक्षरमसन्दिग्धम् । -स्कान्दम्
अथातः शब्दपूर्वाणि -गारुडम्
अन्त्यजा अपि ये भक्ताः -व्योमसंहिता
अजस्य नाभावध्येकम् -ऋ.सं.१०.८२.६
अजस्य नाभाविति यस्य नाभेः -स्कान्दम्
अशब्दमस्पर्शमरूपमव्ययम् -क.उ.१.३.१५
अवचनेनैव प्रोवाच -बाष्कलश्रुतिः
अतर्क्यं तर्क्यमज्ञेयम् -गारुडम्
अनात्मन्यात्मशब्दस्तु -वामनपुराणम्
अयमात्मा ब्रह्म -मां.उ.१.२, बृ.उ.४.५.१९
अतर्के हि कुतस्तर्कस्त्वप्रमेये -बृ.सं.
अनन्योऽप्यन्यशब्देन -ब्रह्माण्डम्
अदृश्येऽनात्मे -तै.उ.२.७
अहं ब्रह्मास्मि -बृ.उ.३.४.१०
असर्वः सर्व इत्यपि -तुरश्रुतिः
अन्तः प्रविष्टं कर्तारमेतम् -तै.आ.३.११
अस्य लोकस्य का गतिः -छां.उ.१.९
अनन्तो भगवान् ब्रह्म -ब्राह्मम्
अथ यदतः परो दिवः -छां.उ.३.१३.७
अहं मनुरभवं सूर्यश्च -ऋ.स.४.२३.१
अग्नौ क्रियावतां -ब्राह्मम्
अहमात्मा गुडाकेश (भ.गी. अ.१०.२०)
अन्तर्यामिणमीशेशम् -महाकौर्मम्
अथ परा यया -मुं.उ.१.५
अपरं त्वक्षरं या सा -स्कान्दम्
अहं वैश्वानरो भूत्वा -भ.गी. १५.१४
अयमग्निर्वैश्वानरः -बृ.उ.७.९
अनन्तत्वादनात्मानः -छां.उ.५.११.१
अद्यतेऽत्ति च भूतानि -तै.उ.२.२
अनिलयनेऽभयं प्रतिष्ठां विन्दते तै.उ.२.७
अन्तस्समुद्रे मनसा चरन्तम् -तै.आ.३.११.१
अयनं तस्य ताःपूर्वं -व्यासस्मृतिः
अहं तत्तेजोरश्मीन् जातमग्रतः -चतुर्वेदशिखा
आत्मा वा अरे द्रष्टव्यः श्रोतव्यः -बृ.उ.६.५.६
आत्मन्येवात्मानं पश्येत् -बृ.उ.६.४.२३
आत्मानं परस्मै शंसति -ते.आ.३.२.३
आत्मान्तरात्मेति हरिः -बृ.सं.
आनन्दो ब्रह्मेति व्यजानात् -तै.उ.३.६
इदं हि विश्वं भगवानिवेतरो -भाग.१.५.२०
इन्द्रस्यात्मानिहितः पञ्च होता -तै.आ.३.११
उपक्रमोपसंहारौ -बृ.सं.
उत्पत्तिस्थितिसंहारा -स्कान्दम्
ॐकारश्चाथशब्दश्च -गारुडम्
औपनिषदः पुरुषः -प्रमाणवचनम्
ऋतं पिबन्तौ सुकृतस्य लोके -कठ.उ.१.३.१
ऋग्यजुः सामाथर्वाश्च -स्कान्दम्

एषमोहं सृजाम्याशु -वाराहम्
एको देवः सर्वभूतेषु गूढः -श्वेता.उ.६.११
एतमानन्दमयमुपसंक्रामति -तै.उ.२.८
एतद्ब्रह्म वै तद्विद्वान् आह -ऐ.आ.२.१.८
एतमेव ब्रह्मेत्याचक्षते -ऐ.आ.३.२.३
कर्मणात्वधमः प्रोक्तः -नारदीयम्
को ह्येवान्यात् कः -तै.उ.२.७
केषाञ्चित्सर्वगत्वेन -ब्राह्मम्
कूटस्थोऽक्षर उच्यते -भ.गी.१५.१६
को न आत्मा -छां.उ.५.११.१
गायति त्रायति च -छां.३.१२.१
गामाविश्य च भूतानि गी.१५.१३
चतुर्भिस्साकं नवतिं च -ऋ.सं.१.१५५.६
चेतनस्तु द्विधा प्रोक्तः -पाद्मम्
चन्द्रमा मनसो जातः -तै.आ.३.१२
जुष्टं यदा पश्यत्यन्यमीशम् -मुं.उ. ३.१.२
तमेवं विद्वान् अमृत इह -तै.आ.३.१२
तन्नो विष्णुः -म.ना.उ.३.१६
तमेवैकं जानथ आत्मानम् -मुं.उ.२.२.५
तदेव ब्रह्म परमं कवीनां -म.ना.उ.१.६
तमेवं विद्वानमृत इह भवति -तै.आ.३.१२
ते ये शतं प्रजापतेरानन्दाः -तै.उ.२.७
तद्वै त्वं प्राणोऽभवः -तै.आ.३.१४
तावानस्य महिमा -छां.उ.३.१२.६
तस्मिन् काले महाराज -स्कान्दम्
त्रिपादस्यामृतं दिवि -छां.उ.३.१२.६
ता वा एताः शीर्षन् -ऐ.आ.२.१.४
तं देवाः प्राणयन्त -ऐ.आ.२.१.५
तत्तन्नाम्नोच्यते विष्णुः -पाद्मम्
तावन्ति शतसंवत्सरस्याह्ना -ए.आ.२.२.४
तदेव ब्रह्म परमं कवीनां -म.ना.उ.१.६
तस्मादेतद्ब्रह्म -मां.उ.११.९
तद्यथा पुष्करपलाशे -छां.उ.४.१४
तद्यस्मिन् सर्पिर्वा उदकं वा -छां.उ.३.४.१५
दत्तं दुर्वाससं सोमम् -भाग.४.१.१५
नारायणाद् विनिष्पन्नम् -स्कान्दम्
नामानि विश्वा अभि -भाल्लवेय श्रुतिः
नाहं न च शिवोऽन्ये च -ब्रह्मवैवर्तम्
नावेदविन्मनुतेदं बृहन्तम् -तै.ब्रा.३.१२.९
न तदीदृगिति ज्ञेयं -गारुडम्
न च तत्वमसि -छां.उ.६.८
नामानि सर्वाणि यमाविशन्ति -भाल्लवेयश्रुतिः
नैषा तर्केण मतिरापनेया -कठ.उ.२.९
न ते विष्णो जायमानो -ऋ.सं.७.९९.२
नेहासीत्किञ्चनाप्यादौ -ब्रह्मवैवर्तम्
परीक्ष्य लोकान् कर्मचितान् -मुं.उ.१.२.१२
प्रियो हि ज्ञानिनोऽत्यर्थम् -गीता.७.१७
परो दिवा पर एना -ऋ.सं.१०.८२.५
परो मात्रया तन्वा वृधान -ऋ.सं.७.९९.१
पूर्वोत्तराविरोधेन -कौर्मम्

पूर्णमदः पूर्णमिदं -बृ.उ.५.१.१

प्रोच्यते भगवान् विष्णुः -ब्रह्माण्डम्

पादं षड्गोतुर्नकिलाविवित्स्ये -वित्तीवल्ली

प्राणो वा अहमस्मृषे -ऐ.आ.२.२.३

प्राणः सर्वाणि भूतानि -ऐ.आ.२.२.३

पृथग्वक्तुं गुणास्तस्य -ब्राह्मम्

प्राणो ब्रह्म कं ब्रह्म. -छां.उ.४.१०

ब्रह्मेति परमात्मेति -भाग.१.२.११

ब्रह्म पुच्छं प्रतिष्ठा -तै.उ.२.५.२

ब्रह्मशब्दः परे विष्णौ

ब्रह्म विदाप्नोति परं -तै.उ.२.१

ब्रह्मैव सन् -बृ.उ.६.४

ब्रह्म ततमम् -ऐ.आ.२.४.३

भेददृष्ट्याभिमानेन -भाग. ३.३३.१२

मन्दमध्योत्तमत्वेन -भागवत तन्त्रम्

मां विधत्तेऽभिधत्ते मां -भाग.११.२१.४३

मम योनिर्महद्ब्रह्म -भ.गी.१४.३

मुक्तिर्हित्वान्यथारूपं -भाग.२.१०.६

महिदासाभिदो जज्ञे -ब्रह्माण्डम्

यमेवैष वृणुते -कठ.२.२३

यस्य देवे परा भक्तिः -श्वेता.उ.६.२३

यत्रानवसरोऽन्यत्र पदं तत्र -बृ.सं.

यमन्तःसमुद्रे कवयो वदन्ति -महा.ना.उ.१.३

यो देवानां नामधा एक एव -ऋ.सं.१०.७२.३

यं कामये तं तमुग्रं कृणोमि -१०.१२५.५

यतो वा इमानि -तै.उ.३.१

य उ त्रिधातु पृथिवीम् -ऋ.सं.१.१५४.५

यो नः पिता जनिता -ऋ.सं.१०.८२.३

यतो वाचो निवर्तन्ते -तै.उ.२.४.२२

यद्वाचाऽनभ्युदितम् -के.उ.१

यो गुणैः सर्वतो हीनः -वामनम्

यस्यानुवित्तः प्रतिबुद्ध आत्मा -बृ.उ.६.४.१३

येऽन्नं ब्रह्मोपासते -तै.उ.२.२

यथा कामाऽनुमा -स्कान्दम्

यस्याण्डकोशं शुष्ममाहुः -तै.उ.३.११.४

यो वेद निहितं गुहायां -तै.उ.२.१

यज्ञो वै विष्णुर्देवता -श्रुत्यन्तरम्

यो वेद निहितं गुहायां -तै.उ.२.१

यः सेतुरीजानानां -क.उ.१.३.२

य एष आदित्ये पुरुषः -छा.उ.४.११

य एषोन्तरक्षिणि पुरुषो दृश्यते -छां.उ.४.११०

यत्स्थानत्वादिदं चक्षुः -वामनम्

यः पृथिव्यां तिष्ठन् -बृ.उ.५.७.३

यः पृथिव्या अन्तरः -बृ.उ.५.६.२

य आत्मनि तिष्ठन् -बृ.उ.माध्यन्दिन पाठः

यो विज्ञाने तिष्ठन् -बृ.उ.५.७.२२

यद्भूतयोनिं परिपश्यन्ति धीराः -मुं.उ.१.१.६

यः सर्वज्ञः सर्ववित् -मुं.उ.१.९.४.९

यदा पश्यः पश्यते -मुं.उ.३.१.३

यथैव पौरुषं सूक्तम् -ब्राह्मम्

व्यासचित्तस्थिताकाशात् -स्कान्दम्
योऽग्नौ तिष्ठन् -बृ.उ.५.७.५
य एष एतस्मिन्नग्नौ -बृ.उ.४.५.३
रेतो धातुर्वटकणिका -मोक्षधर्मवचनम्
लक्षणं परमानन्दो -ब्रह्मवैवर्तम्
वेदे रामायणे चैव पुराणे भारते तथा -हरिवंशेषु
वेदैश्च सर्वैरहमेव वेद्यः -भ.गी.१५.१५
विष्णोर्नुकं वीर्याणि प्रवोचं -ऋ.सं.१.१५४.१
वि मे कर्णा पतयतो -ऋ.सं.६.९.६
विष्णुमेवानयन्देवा -स्कान्दम्
वासुदेवात्परः को नु ब्रह्मशब्दोदितो भवेत्
विज्ञानमानन्दं ब्रह्म -बृ.उ.५.९.२८
वैश्वानरमृत आजातं -ऋ.सं.६.७.१
वैश्वानरे तद्धुतं भवति -छां.उ.५.२४.४
शान्तो दान्तः उपरतः -बृ.उ.६.४.२३
श्वपचादपि कष्टत्वं -स्कान्दम्
शिरो नारायण पक्षो -बृ.सं.
श्रीश्च ते लक्ष्मीश्च पत्न्यौ -तै.आ.३.१३
शुभं पिबत्यसौ नित्यं -पाद्मम्
शीर्यते नित्यमेवास्मात् -प्रमाण.व.
सर्वत्र शक्यते कर्तुमागमं -वाराहम्
स एतस्माज्जीवधनात्परात्परं -प्र.उ.५.५
सर्वे वेदा यत्पदमामनन्ति -क.उ.२.१५
स आत्मन आत्मानमुद्धृत्य
सर्वे वेदा युक्तयः स प्रमाणाः -पैङ्गिश्रुतिः

संविच्छास्त्रं परं पदम् -भागवतम्
सर्वच्छन्दोभिदो ह्येषः -वामनम्
सत्यं भिदा सत्यंभिदा -भाल्लवेयश्रुतिः
सयश्चायमशरीरः -ऐ.आ.३.२.४
स योऽतोऽश्रुतः -ऐ.आ.३.२.४
स वा एष -तै.उ.२.२
सर्वान्तर्यामिको विष्णुः -मोक्षधर्मः
सोऽश्नुते सर्वान् कामान् -तै.उ.२.१
स च इन्द्रो राजा -तै.आ.३.११.६
सप्त युञ्जन्ति -तै.आ.३.११.७
समुद्रेऽन्तः कवयो विचक्षते -तै.आ.३.११.११
सोऽभिध्याथ शरीरात्सिसृक्षुः -व्यासस्मृतिः
स एष परोवरीयानुद्गीथः -छां.उ.१.९
सर्वच्छन्दोऽभिधो ह्येषः -वामनम्
सुवर्णकोशं रजसा परीवृतम् -तै.आ.३.११
स सविता स वायुः स इन्द्रः -चतुर्वेदशिखा
सर्वेन्द्रियमयो विष्णुः -स्कान्दम्
सर्वज्ञाल्पज्ञताभेदात् -गारुड पु.
स यद्यदेवासृजत् -बृ.उ.३.२.५
स्रष्टा पाता तथैवात्ता -स्कान्दम्
स एनान् ब्रह्म गमयतीति -छां.उ.४.१५
सर्वेषां भूतानां अन्तःपुरुषः -ते.आ.३.२.४

---